# सुश्रुत-संहिता।

## महर्षिसुश्रुताचार्य्यविरचिता
## महामुनिनागार्ज्जुनप्रतिसंस्कृता च।



महामहोपाध्याय-श्रीडल्लनाचार्य्यकृतनिबन्धसंग्रहाख्य-
टीकया समलङ्कृता।




कविराज श्रीनृपेन्द्रनाथसेनगुप्तेन
कविराज श्रीबलाइचन्द्रसेनगुप्तेन च
सम्पादिता संशोधिता प्रकाशिता च।


---

**पूर्व्वभागः।**

सूत्र-निदान-शारीर-चिकित्सितस्थानचतुष्टयसमन्वितः।


प्रथमं संस्करणम्।

सि, के, सेन एण्ड कोम्पानी लिमिटेड्।
२९ नं कलुटोलाष्ट्रीट, कलिकाता।

कलिकातानगर्य्यां
कलुटोलावर्त्मावस्थितसप्ततिसंख्यकभवनस्थ-
धन्वन्तरि-वैद्युतिक-यन्त्रे
श्रीविनयकृष्णचक्रवर्त्तिना
मुद्रिता।

१८५९तमशकाब्दीय-चैत्रकृष्णै[illegible]।

# विज्ञप्तिः।

इह खलु श्रुतिस्मृतिदर्शनपुराणादि-शेवधिप्रसूतौ पुण्यभूमौ भारतवर्षे कलिकलुषसमाक्रान्त-क्षीणपुण्यधर्म्मार्थकाममोक्षपरिपन्थि-विविधव्याधिनिपीड़ितमनुजकुलं समवेक्ष्याशेषगुणगणनिधानो महर्षिसुश्रुतः करुणापूरितमानसो भुवनहिताय पितुर्विश्वामित्रस्यादेशात् ऋषिदारकसमन्वितः साष्टाङ्गमथर्व्ववेदस्योपाङ्गमायुर्व्वेदमध्येतुं मुख्यतः शल्यज्ञानार्थं शल्यतन्त्रप्रधानायुर्व्वेदविदां वरिष्ठं वाराणसीपुराधीशदिवोदासधन्वन्तरिमाचार्य्यमुपागमत्। अथ गच्छता कालेन तत्रभवतो भगवतो धन्वन्तरेरुपदेशेन सविंशाध्यायशतसम्पन्नामिमां संहितां स्वनाम्ना प्रणिनाय। ततस्तु बौद्धधर्म्मप्रादुर्भावसमये तन्मतानुसारिणा रासायनिकप्रवरेण प्रथितनामधेयेन सिद्धनागार्ज्जुनेन सूत्रादिपञ्चस्थानेषु विभज्य अनुक्तसंग्रहार्थं परिशिष्टभूतमनुपममुत्तरतन्त्रं संयोज्य संहितेयं प्रतिसंस्कृता। एवं सर्व्वावयवसम्पन्नेयं सुश्रुतसंहितेति गीयते सुधीभिः।

अस्याः सर्व्वगुणसम्पन्नायाः सुश्रुतसंहितायाः पठन-पाठनादि स्मरणातीतकालात् प्रचरति। कविराज-राजीमुकुटमणि-श्रीहर्षप्रादुर्भावसमयेऽप्यस्या बहुलप्रचार आसीदिति तत्प्रणीतनैषधीयचरिते समधिगम्यते। कालप्रभावाद् बलवीर्य्यमेधसामल्पतया व्याख्याग्रन्थस्य साहाय्यं विनाध्ययनाध्यापनादिकं सुष्ठु न प्रवर्त्तते। विद्यार्थिनश्च गुरुमुखात् सकृदाकर्णितं सम्यक् स्मरणाय न प्रभवन्ति। एतदर्थं शिष्यवत्सला आयुर्व्वेदनिष्णाताः पूर्व्वाचार्य्याः पठन-पाठनसौकर्य्यार्थमायुर्व्वेदग्रन्थानां दुर्ब्बोध्यस्थानं व्याख्यातवन्तः। साम्प्रतमालोच्यसुश्रुतसंहिताया व्याख्यानग्रन्थरूपं यट्टीकाद्वयं समुपलभ्यते, तत्र भानुमतीटीकाया असम्पूर्णलब्धत्वात् महामहोपाध्याय-डल्लनाचार्य्यकृतनिबन्धसंग्रहाख्यटीकायाः सम्पूर्णत्वात् सुकुमारमतिविद्यार्थिवृन्दाधिगम्यमानत्वाच्चास्माभिर्हस्तलिखितविभिन्नस्थानमुद्रितपुस्तकानि आदर्शरूपेणादाय तेषां साहाय्येन यथामति पर्य्यालोच्य सर्व्वदेशीयायुर्व्वेदविदामुपयोगितया नागराक्षरेण सटीक-सुश्रुतसंहितेयं मुद्रयित्वा प्रकाशिता।

एतन्निबन्धसंग्रहाभिधेयटीकाप्रणेत्रायुर्व्वेदपारावारसन्तरणनिपुणेन श्रीमता डल्लनाचार्य्येण कदेयं विद्वज्जनप्रसविनी भारतभूमिः समुद्भासितेति निर्णेतुमशक्नुवद्भिरप्यस्माभिरेवं वक्तुं शक्यते—यदयं सुरगुरुकल्पो मनीषी माथुर-

भूभागसमीपस्थाङ्कोलानामकस्थाने अवनिपतिमान्यानां प्रथितयशसां विशुद्ध-चरितानां सूर्य्योपासकानां भूदेवानां कुले समजनि। सहायपालदेवनृपति सभायां सत्कृतश्चासीदिति तत्प्रणीतटीकातो विज्ञायत इति।

साम्प्रतमियं पत्राणां मसृणतयाक्षराणां स्पष्टतयावयववैशिष्ट्येन च पाठक-नयनमनोहारिणी सम्वृत्तापि सुधीजननयनगोचरात् प्राक् सर्व्वाङ्गसम्पन्नेति वक्तुं न शक्यते। यदि चास्याः सुश्रुतसंहितायाः कुत्रचित् कुत्रचिद् मुद्रणं समपादि, तथापि तेषु मुद्रितपुस्तकेषु केषाञ्चिदशुद्धिवाहुल्यात् केषाञ्चित् मूल्याधिक्यात् केषाञ्चित् डल्लनकृतटीकाविहीनत्वाच्च सर्व्वजनोपादेयत्वं नाभवत्। बहुभिरनु-रुध्यमानैरस्माभिर्लोकादरपरिपन्थिकारणनिकरनिरसनाय सम्यक् चेष्टितम्। ग्रन्थस्यास्य विपुलावयवत्वात् पूर्व्वापरार्द्धरूपेण भागद्वयं कल्पितम्। तत्र सूत्र-शारीरनिदानचिकित्सात्मकः पूर्व्वभागः। कल्पोत्तरतन्त्रात्मकः अपरो भागः।

यद्यप्यस्या विशुद्धयर्थं सर्व्वथा प्रयासः स्वीकृतः, तथाप्यादर्शपुस्तकानां पाठावैषम्य-सम्यग्विशुद्धेरभावात् मनुजसुलभप्रमादात् मुद्राकराणामनव-धानात् सीसकाक्षराणां त्रुटनाच्च क्वचित् क्वचिद् यदनिच्छाकृतदूषणजातमधि-गन्तव्यं, तत् सदसद्विवेचनकुशलैर्मनीषिभिः क्षन्तव्यम्। सम्पादनेऽस्या अस्माभिर्यो महानसुव्ययो वसुव्ययश्चाङ्गीकृतः, स सम्यक् सफलतामियाद् यद्यनेनायुर्व्वेदविनोदिनां कथञ्चिदुपकारो भवेत्।

परिशेषेऽवश्यमेतत् स्वीकर्त्तव्यं, यदस्मदायुर्व्वेदविद्यालयाध्यापकेनायुर्व्वेद-विशारदेन पूज्यपादश्रीयुक्तचन्द्रशेखरकविरत्नकाव्यचुञ्चुमहोदयेन आयुर्व्वेदगहन-पञ्चाननेन भिषग्वरिष्ठेन श्रीयुक्तकुञ्जविहारिकाव्यतीर्थधन्वन्तरिमहोदयेन स्मृति-मीमांसादर्शनादिशास्त्राध्यापकेन श्रीयुक्तसुरेन्द्रनाथकाव्यस्मृतितीर्थसिद्धान्त-भूषण-महोदयेन चास्याः संशोधनसम्पादनादिविषये महान् प्रयासोऽङ्गीकृतः। अन्यथा एवम्भूतदुरूहकार्य्यं सुसम्पन्नं नासीत्, अतस्तेषां कृतज्ञा वयम्।

अस्याः संस्करणेऽस्मिन् कविराजगरिष्ठेन श्रीयुक्तकार्त्तिकचन्द्रगुप्तकवि-भूषणेनापि महान् श्रमः कृतः। तस्मात् तमपि कृतज्ञाः स्मरामः। अस्मद्-भ्रातरोऽप्यायुर्व्वेदनिष्णाताः परिश्रममत्र कृतवन्त इत्यतीव परितोषमनुभवामः

| | |
|---|---|
| १८५९तमशकाब्दः | कविराज-श्रीनृपेन्द्रनाथसेनगुप्तः। |
| चैत्री पूर्णिमा। | कविराज-श्रीबलाइचन्द्रसेनगुप्तः। |

# सुश्रुत-संहितायाः

## सूत्रस्थानस्य सूचीपत्रम् ।

## षोड़शोऽध्यायः।



## सप्तदशोऽध्यायः।

## षट्चत्वारिंशोऽध्यायः ।

सूत्रस्थानस्य सूचीपत्रं समाप्तम्।

# निदानस्थानस्य सूचीपत्रम्।

## प्रथमोऽध्यायः।

सूत्रस्थानस्य सूचीपत्रं समाप्तम्।

## निदानस्थानस्य सूचीपत्रम्।

### प्रथमोऽध्यायः।

## पञ्चमोऽध्यायः।



## षष्ठोऽध्यायः।

## दशमोऽध्यायः ।



## एकादशोऽध्यायः ।

निदानस्थानस्य सूचीपत्रं समाप्तम्।

# शारीरस्थानस्य सूचीपत्रम्।

## तृतीयोध्यायः।

## शारीरस्थानस्य सूचीपत्रं समाप्तम्।

---

# चिकित्सितस्थानस्य सूचीपत्रम्।

## द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः।

## चतुर्थोऽध्यायः ।

## दशमोऽध्यायः।



## एकादशोऽध्यायः।



## द्वादशोऽध्यायः।



## त्रयोदशोऽध्यायः।

## पञ्चविंशोऽध्यायः।

## पञ्चविंशोऽध्यायः।

## त्रयस्त्रिंशोऽध्यायः ।

## चतुस्त्रिंशोऽध्यायः।



## पञ्चत्रिंशोऽध्यायः।

## षट्त्रिंशोऽध्यायः ।



## सप्तत्रिंशोऽध्यायः ।

## अष्टात्रिंशोऽध्यायः।

समाप्तमिदं चिकित्सितस्थानस्य सूचीपत्रम्।

# सुश्रुत-संहिता।

## सूत्रस्थानम्।

### प्रथमोऽध्यायः।

नमो ब्रह्मप्रजापत्यश्विवलभिद्धन्वन्तरिसुश्रुतप्रभृतिभ्यः।

अथातो वेदोत्पत्तिं नामाध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः सुश्रुताय॥ १॥

अथ खलु भगवन्तममरवरमृषिगणपरिवृतमाश्रमस्थं काशिराजं दिवोदासं धन्वन्तरिमौपधेनववैतरणौरभ्रपौष्कलावतकरवीर्य्यगोपुररक्षितसुश्रुतप्रभृतय ऊचुः।

सहस्राक्षं गणाधीशं स्वगुरुञ्च सरस्वतीम्।
जनकं जनयित्रीञ्च शास्त्रादौ प्रणमाम्यहम्॥

समस्तजनपदतिलककल्पे श्रीभादालकदेशे नगरीवरमथुरासमीपे अङ्कोलानामकं वैद्यस्थानमस्ति। यत्र सौरवंशजा ब्राह्मणाः समस्तभूमिपतिमान्या अश्विनीकुमारसमानाः पार्व्वणचन्द्ररुचियशःप्रसाधितदिङ्मण्डला वैद्याश्चाभुवन्। तदन्वये गोविन्दनामा चिकित्सकशिरोमणिरभूत्। ततस्तत्पुत्रो भिषक्शिरोमुकुटमणिर्जयपालः समजनि। तत्तनयश्च समस्तशास्त्रार्थतत्त्वज्ञो भरतपालः सञ्जातः। तत्पुत्रः स्वकुलनभस्तलचन्द्रमा विवेकवृहस्पतिः श्रीसहबपालदेवनृपतिवल्लभः श्रीडल्लनः समभूत्। तेन श्रीजैज्जटं टीकाकारं श्रीगयदासभास्करौ च पञ्जिकाकारौ श्रीमाधवब्रह्मदेवादीन् टीप्पनकारांश्चोपजीव्यायुर्व्वेदशास्त्रसुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते। यद्यपि सुश्रुतोपरि जैज्जटादिभिष्टीका रचिता, तथापि तस्याः कुशाग्रीयधियामभिगम्यत्वाद् अल्पमेधसामनुग्रहाय सुश्रुतं व्याख्यातुकामस्य मम प्रयासः सफलः।

अथातो वेदोत्पत्तिमिति। ननु कतमत् सूत्रमिदम्? चतुर्व्विधानि हि सूत्राणि भवन्ति। तद्यथा—प्रतिसंस्कर्तृसूत्रम् एकीयसूत्रं शिष्यसूत्रं गुरुसूत्रञ्चेति। इह प्रतिसंस्कर्त्तृसूत्रं

नास्त्येवेत्येके। अन्ये त्वस्तीति भाषन्ते। यथा च तदस्ति, तथेहैव नैकटेग्न कथयिष्यामः। एकीयसूत्रं यथा—तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्त-कषायाणि यथासंख्यमुदकानि भवन्ति इत्येके भाषन्ते। शिष्यसूत्रं यथा—वायोः प्रकृतिभूतस्य व्यापन्नस्य च लक्षणम्। स्थानं कर्म्म च रोगांश्च वदस्व वदतां वरः॥ गुरुसूत्रं यथा—देहे विचरतस्तस्य लक्षणानि निबोध मे। एवं सूत्रानेकत्वात् कस्येदं सूत्रम्? उच्यते, गुरोरेवैतत् सूत्रं शिषेग्ण ग्रन्थं चिकीर्षता लिखितम्। अन्ये तु शिष्यस्यैवेदं सूत्रमित्याहुः, स तु आत्मशिषेग्षु धन्वन्तरिप्रशिषेग्षु प्रतिज्ञां कृतवान्। तन्नेच्छति गयी। किमेतत् स्वकपोल-कल्पितं सुश्रुतेनोक्तम्, अथवा यथैव गुरुणोदीरितमिति पृष्टः प्रतिसंस्कर्त्ता सुश्रुतमुखेनेदमाह—यथोवाच भगवान् धन्वन्तरिरिति, इदं प्रतिसंस्कर्तृसूत्रम्। यत्र यत्र परोक्षे नियोगस्तत्र तत्रैव प्रतिसंस्कर्तृसूत्रं ज्ञातव्यमिति। प्रतिसंस्कर्त्तापीह नागार्ज्जुन एव।

अथशब्दोऽनन्तरार्थ एव। अतो युष्मच्छल्यतन्त्रोपदेशकामित्वादनन्तरम्। वेदोत्पत्ति-मिति—अस्यादौ आयुःशब्दो लुप्तो ज्ञेयस्तेनायुर्व्वेदोत्पत्तिमिति। उत्पत्तिमिति—उत्पत्ति-रत्राभिव्यक्तिः, न तु अभूतप्रादुर्भावः। अधी यन्तेऽस्मिन्नर्था इत्यध्यायः। व्याख्यास्यामः प्रकथयिष्यामः। अन्ये तु अथशब्दः शिष्यप्रश्नानन्तरार्थः, अतःशब्दो हेत्वर्थः, यत एते शिष्याः प्रजाहितार्थमायुर्व्वेदं गुरुं पप्रच्छुः। विर्विविधप्रकारे, आङ् आभिमुख्ये, शेषं समम्। एतेनातः शल्यतन्त्रोप-देशकामित्वादनन्तरं आयुर्व्वेदाभिव्यक्तिमधिकृत्य कृतोऽध्यायस्तं विशेषाभिव्याप्त्या प्रकथयि-ष्यामः। द्वितीयव्याख्यानपक्षेऽपि इत्थं योजनीयम्।

यथोवाच भगवान् धन्वन्तरिरिति। यथोवाच इति यादृक् उक्तवान्। समस्तैश्वर्य्यमाहात्म्ययशः-श्रीकामार्थप्रसन्नैर्युक्तो भगवान् उच्यते। अन्ये तु ज्ञानातिशयवान् पुरुषातिशयो भगवान्। अपरे तु अष्टगुणैश्वर्य्यवानेवात्र भगवान्। अथात इत्यादिकं प्रतिज्ञासूत्रं यद्यपि अध्यायादौ लिखितम्, तथापि वत्स सुश्रुत! इत्यनन्तरं द्रष्टव्यम्। अन्ये तु अध्याप्याश्च भवन्तो वत्सा इत्यनन्तरं पठन्ति, तन्नेच्छति गयी। वेदोत्पत्तिं नामाध्यायमिति पठन्ति॥ १॥

अथ खल्विति। अथेति मङ्गलार्थः। तत् तु श्रोतृव्याख्यात्रोः क्रियाफलसिद्धिं कथयति। खलु वाक्यशोभार्थः, अन्ये तु निश्चयार्थः। अमरवरं देवश्रेष्ठं पूर्व्वजन्मनि अमृतोद्धरणात्, अन्ये ब्रह्मणोऽवतारत्वात्। ऋषिगणपरिवृतं देवर्षिब्रह्मर्षिराजर्षिसमूहैर्वेष्टितम्, तपोज्ञानबाहुल्यादुपादेय-वाक्यत्वाच्च। आश्रमस्थं वानप्रस्थाश्रमस्थम्, एतेन राज्यचिन्तापरित्यागादनाकुलितचित्तत्वं राजर्षित्वञ्च सूचितम्। काशिराजं वाराणसीजनपदनृपतिं काशिराजस्य निर्व्वाणपदाभिलाषित्वात् कृत्रिमपुत्रत्वमापन्नमिति काशिराजम्। काशिराजानामनेकत्वात् विशेषणमाह—दिवोदासम्। दिविति शब्देनात्र तत्स्थानदेवाः कथ्यन्ते, तैः पूजाकाम्यया सम्प्रदीयते यस्मै स दिवोदासस्तम्। अन्ये तु दासयति कर्म्माणि यत्नेन करोतीति दासः, दिवः स्वर्गस्य दासो दिवोदासस्तम्। सर्व्वजन-प्रसिद्धं विशेषणमाह—धन्वन्तरिमिति। धनुः शल्यशास्त्रं तस्य अन्तः पारम् एति गच्छतीति धन्वन्तरिस्तम्। अपरा व्युत्पत्तिर्विस्तरभयान्न लिखिता। औपधेनवादयः सुश्रुतान्ताः सप्त शिष्याः

भगवन् शारीरमानसागन्तुस्वाभाविकैर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद् विचेष्टमानान् विक्रोशतश्च मानवानभिसमीक्ष्य मनसि नः पीड़ा भवति। तेषां सुखैषिणां रोगोपशमार्थमात्मनः प्राणयात्रार्थञ्च प्रजाहित-हेतोरायुर्व्वेदं श्रोतुमिच्छाम इहोपदिश्यमानम्। अत्रायत्तमैहिकमामुष्मिकञ्च श्रेयः; तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेनेति। तानुवाच भगवान्, स्वागतं वः ? सर्व्वं एवामीमांस्या अध्याप्याश्च भवन्तो वत्साः॥ २॥

इह खल्वायुर्व्वेदो नाम यदुपाङ्गमथर्व्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्र-

ऊचुः उक्तवन्तः। प्रभृतिशब्देन भोजादयः। अन्ये तु गोपुररक्षितौ इति नामद्वयं मन्यन्ते। इत्यौप-धेनवादयोऽष्टौ। प्रभृतिग्रहणात् निमि-काङ्कायन-गार्ग्य-गालवा इति। एवमेते द्वादश शिष्याः प्राहुः स्म। ननु प्रश्नकर्त्तृकतया सुश्रुतस्य मुख्यत्वादादावस्य नामग्रहणमुचितं स्यात्, कथमौप-धेनवादिनामान्यादावुक्तानि ? सत्यम्, देवर्षयस्तु राजर्षीणां पूज्या इति न दोषः।

ऋषयस्ते तं काशिराजं प्रति किमूचुरित्याह—भगवन् इत्यादि। भगवन्निति सम्बोधने। तत्र शारीराः वातादिवैषम्यनिमित्ताः, मानसाः रजस्तमःसम्भूताः कामादयः, आगन्तवो व्याघ्रादिकृताः शस्त्रादिकृताश्च। स्वाभाविकानामनाग्रहणमस्मिन् शास्त्रे तत्प्रतिकारस्याप्राधान्यसूचनार्थम्, अथवा आत्मनश्च प्राणयात्रार्थमित्यत्रै वावरोधाच्च। ऋषीणाञ्च शारीरमानसागन्तुव्याध्यसम्भवात् केवलं स्वभावव्याधिनिषेधेनैव प्राणयात्राभिप्रेता। उपद्रुतान् उपसृष्टान् सनाथानपि समित्रादिकानपि अनाथवद् एकाकिजनवत् विचेष्टमानान् विरुद्धां क्रियां कुर्व्वाणान्। एतेनायुर्व्वेदं विना मित्रादयो ऽप्यनर्थका इति। विक्रोशतश्च विशेषादार्त्तस्वरैरुदतश्च। नः अस्माकम्। आत्मनश्च प्राणयात्रार्थं प्राणानामग्नीषोमादीनां यात्रार्थं व्यवहारार्थं स्वस्थवृत्तानुवर्त्तनार्थम्। अत्र केचित् आत्मप्रजाहित-हेतोरिति पठन्ति। उपदिश्यमानं संक्षेपतः कथ्यमानम्। अत्रायत्तमिति। अत्रायुर्व्वेदोपदेशे, आयत्तम् अधीनम्, ऐहिकम् इहलोकभवम्, आमुष्मिकं परलोकभवम्, श्रेयः कल्याणलाभः। अर्थकामौ मित्रादिलाभो यशश्च ऐहिकं श्रेयः, स्वर्गादिविशिष्टजन्मान्तरज्ञानादयश्च आमुष्मिकं श्रेयः अमरत्वञ्च। तदिति हेतौ, यस्मादायुर्व्वेदोपदेशाद् विविधं श्रेयः आयत्तम्, तस्माद् उपपन्नाः स्मः समीपमागताः स्मः। शिष्यत्वेन छात्रभावेन।

तेषाम् औपधेनवादीनां समीपगतानां काशिराजेन किं कृतमित्याह—तानुवाच भगवानिति। स्वागतं शोभनमागतं वः युष्माकम्, अमीमांस्याः अविचारणीयाः प्रसिद्धजात्यादिमत्वात्, अध्याप्याश्च अध्यापनार्हाश्च। वत्साः इति पक्षपातातिशयत्वसूचकं सम्बोधनम्, अथवा वत्साः प्रथमवयसो गवां पुत्रा वत्सा इव वत्साः, अनेन विशेषणेन प्रथमवयस्त्वं पुत्रसादृश्यं दमनीयत्वं वा सूचयति॥ २॥

इदानीमायुर्व्वेदस्य सामान्यलक्षणं दर्शयन्नाह—इह खल्वायुर्व्वेद इति। इह खल्विति वाक्या-लङ्कारे, वक्ष्यमाणं वाक्यमलङ्करोति, अन्ये तु इह मयि सूत्रकारे खलु एवार्थः। एतेन मस्यैव

मध्यायसहस्रञ्च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्। तद् यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति॥ ३॥

अथास्य प्रत्यङ्गलक्षणसमासः।

तत्र शल्यं नाम विविधतृण-काष्ठ-पाषाणपांशुलोह-लोष्ट्रास्थिवालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च॥ ४॥

आयुर्व्वेदोऽष्टाङ्गो नान्येषु सूत्रकारेषु, अन्येषामेकस्यैवाङ्गस्य प्रणेतृत्वात्। इहेति वाक्योपक्रमे, खलु सम्बोधने इत्यपरे। उपाङ्गम् अङ्गमेवाल्पत्वात् उपाङ्गम्। तद् यथा,—देहस्य वाहुजङ्घे शिरः इत्यङ्गानि, कर-चरण-नासिकादीन्युपाङ्गानि। एतेन उपाङ्गमित्युक्तम्, उपाङ्गमङ्गसमीपमित्येके। अनुत्पाद्यैव प्रजाः इति लोकसृष्टेः प्राक् आयुर्व्वेदं प्रदर्श्य प्रजाः पश्चात् सृष्टवानित्यर्थः। कृतवान् संस्कृतवान्, न तु पूर्व्वमुत्पादितवान्। कुतः? नित्यत्वात्। स्वयम्भूः ब्रह्मा। ततोऽल्पायुष्ट्वमिति। ततः प्राक्तनकारणादनन्तरम् अधर्म्मवृत्तौ सत्याम् अल्पायुष्ट्वम् अल्पजीवितत्वम्, अल्पमेधस्त्वं स्वल्पबुद्धित्वम्, भूयः पुनः, अष्टधा अष्टभिः प्रकारैः।

अथ के तेऽष्टौ प्रकाराः इति? आह—तद् यथा—शल्यमिति। शल्याहरणप्रधानं तन्त्रं शल्यतन्त्रम्। शलाकायाः कर्म्म शालाक्यम्, तत्प्रधानं तन्त्रमपि शालाक्यम्। कायोऽत्राग्निरुच्यते तस्य चिकित्सा कायचिकित्सा, अथवा कायो देहस्तस्य चिकित्सा सा तथोक्ता। भूतानि देवासुर-गन्धर्व्व-यक्ष-रक्षः-पितृ-नाग-पिशाचा अष्टौ, तानि वेत्ति अनया इति भूतविद्या, अथवा भूतावेशापकरणार्थं विद्या भूतविद्या। कुमारा बालाः तेषां भृतिर्धारणं पोषणञ्च, तस्या भृत्या इदं तन्त्रमिति कौमारभृत्यम्। अगदो विषप्रतिकारस्तदर्थं तन्त्रम् अगदतन्त्रम्, अन्ये विषगरवैरोधिकसंप्रयोगो गदः, गदस्याभावः अगदः, अगदाय तन्त्रम् अगदतन्त्रमित्याचक्षते। रसानां रसरक्तादीनाम् अयनमाप्यायनं रसायनम्, तदर्थं तन्त्रं रसायनतन्त्रम्, अथवा रसानां रसवीर्य्यविपाकादीनाम् अयनमाप्यायनं रसायनम्, तदर्थं तन्त्रं रसायनतन्त्रम्, अथवा रसानां रसवीर्य्यविपाकादीनाम् आयुःप्रभृतिकारणानामयनं विशिष्टलाभोपायः रसायनम्, तदर्थं तन्त्रं रसायनतन्त्रम्। वाजीकरणतन्त्रमिति येन स्त्रीषु विषयेषु वाजीव नरः सामर्थ्यं प्राप्नोति तत् वाजीकरणम्, येनात्यर्थं व्यज्यते स्त्रीषु तत् वाजीकरणम्, अन्ये तु वजनं वाजो वेगः प्रकरणात् शुक्रस्य, स विद्यते येषां ते वाजिनः, अवाजिनो वाजिनः क्रियन्तेऽनेनेति वाजीकरणम्। अन्ये तु वाजीशब्देन शुक्रमभिधीयते, तेन शुक्ररहितस्य वाजी शुक्रं क्रियतेऽनेनेति वाजीकरणम्, तदर्थं तन्त्रं वाजीकरणतन्त्रम्। इतिशब्दोऽष्टाङ्गपरिसमाप्तौ॥ ३॥

अथेति। अथेत्यानन्तर्य्ये, अस्य आयुर्व्वेदस्य, प्रत्यङ्गलक्षणसमासः एकमेकमङ्गं प्रति लक्षणसंक्षेपः। किं तदेकमेकमङ्गं प्रति लक्षणं संक्षेपेणेत्याह—तत्रेत्यादि। अत्र शल्यं नामेति केचित्

शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवण-नयन-वदन-घ्राणादि-संश्रितानां व्याधीनामुपशमनार्थम् ॥ ५ ॥

कायचिकित्सा नाम सर्व्वाङ्गसंसृतानां व्याधीनां ज्वर-(अतीसार)-रक्तपित्त-शोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम् ॥ ६ ॥

भूतविद्या नाम देवासुर-गन्धर्व्व-यक्ष-रक्षः-पितृ-पिशाच-नागग्रहादुपसृष्ट-चेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम् ॥ ७ ॥

कौमारभृत्यं नाम कुमारभरण-धात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्य-ग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम् ॥ ८ ॥

अगदतन्त्रं नाम सर्प-कीट-लूता-वृश्चिक-मूषिकादिदष्टविष-व्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थम् ॥ ९ ॥

रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ॥ १० ॥

पठन्ति। तत्र तेष्वङ्गेषु, नामशब्दः प्रतिपादने, शल्यं प्रतिपाद्यते कथ्यते इत्यर्थः। विविध-तृणादीनां पूयास्रावान्तानां दुष्टव्रणस्यान्तर्मध्याद्उद्धरणार्थम् उद्धरणप्रयोजनम्, तथा गर्भशल्यस्यापि। उद्धरणार्थमित्यस्याग्रे षष्ट्या विधानैरिति केचित् पठन्ति व्याख्यानयन्ति च अपतर्पणादैः रक्षाविधानान्तैर्द्विव्रणीयोक्तैरित्यर्थः। प्रणिधानार्थं निषेवणार्थम्। न केवलं काष्ठतृणादि शल्यम्, "अतिप्रवृद्धं मलदोषजं वा शरीरिणां स्थावरजङ्गमानाम्। यत्किञ्चिदाबाधकरं शरीरे तत् सर्व्वमेतत् प्रवदन्ति शल्यम्" ॥ ४ ॥

शालाक्यमिति। जत्रु ग्रीवामूलम्, अन्ये तु वक्षोऽसंसन्धिमाहुः। वदनमत्र मुखकुहरमाहुः। घ्राणादिसंश्रितानाम् आदिशब्दात् शिरःकपालादिसंश्रितानाम् ॥ ५ ॥

कायचिकित्सेति। केचित् ज्वरानन्तरमतिसारं पठन्ति, तन्न, पञ्जिकादूषितत्वात् ॥ ६ ॥

भूतविद्येति। असुरा दैत्याः, गन्धर्व्वा देवगायकाः, यक्षा धनदादयः, रक्षांसि रावणप्रभृतीनि, पितरः अग्निष्वात्तादयः, पिशाचाः पिशिताशनाः, एते ग्रहणाद् ग्रहाः प्रोच्यन्ते। शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थं शान्तिकर्म्मादिभिरिष्टग्रहोपशमनप्रयोजनम् ॥ ७ ॥

कौमारभृत्यमिति। दुष्टस्तन्येन दुष्टग्रहेण च जातानामित्यर्थः, तत्र दुष्टस्तन्येन शारीराः, दुष्टग्रहेणागन्तवः ॥ ८ ॥

अगदतन्त्रमिति। विविधानां नानाप्रकाराणां विषाणां स्थावरजङ्गमानां संयोगः सङ्गमः तदुपशमाय। अन्ये तु विविधकीटा वृश्चिकादयः, लूता मर्कटः कीटभेदो वा। विविधविषसंयोगविषोपहतोपशमार्थञ्चेति। संयोगविषं समानमधुघृतादि ॥ ९ ॥

रसायनतन्त्रमिति। वयःस्थापनं वर्षशतमायुःस्थापनम् आयुष्कालं शताधिकमपि करोति। अन्ये तु वयःस्थापनं जरापहरणं तारुण्यं बहुकालं स्थापयतीत्यर्थः ॥ १० ॥

वाजीकरणतन्त्रं नाम अल्प-दुष्ट-विशुष्क-क्षीणरेतसामाप्यायनप्रसादोपचय-जननिमित्तं प्रहर्षजननार्थञ्च ॥ ११ ॥

एवमयमायुर्व्वेदोऽष्टाङ्ग उपदिश्यते। अत्र कस्मै किमुच्यतामिति ? त ऊचुः, अस्माकं सर्व्वेषामेव शल्यज्ञानमूलं कृत्वोपदिशतु भगवानिति। स उवाचैवमस्त्विति। ते ऊचुर्भूयोऽपि भगवन्तम्, अस्माकमेकमतीनां मतमभिसमीक्ष्य सुश्रुतो भगवन्तं प्रक्ष्यति। अस्मै चोपदिश्यमानं वयमप्युपधारयिष्यामः। स होवाचैवमस्त्विति। वत्स सुश्रुत ! इह खल्वायुर्व्वेदप्रयोजनं व्याध्युपसंसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य रक्षणञ्च ॥ १२ ॥

आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्व्वेदः। तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय ॥ १३ ॥

वाजीकरणतन्त्रमिति। अल्परेतसः प्रकृत्यैव स्तोकरेतसः तेषामाप्यायननिमित्तम्, विशुष्करेतसः शुष्करेतसः तेषां जननिमित्तम्, अथवाल्परेतसः पञ्चविंशतिमप्राप्ताः, क्षीणरेतसस्तु मध्यवयसः कारणादल्पीभूतरेतसः, शुष्करेतसो वृद्धाः। प्रहर्षजननार्थञ्चेति स्वस्थस्य शुक्रवृद्धिस्त्रुतिकरणार्थञ्चेत्यर्थः ॥ ११ ॥

एवमयमिति। एवम् अनेन प्रकारेण। अत्रेति। एषु मध्ये किमङ्गं कस्मै शिष्यायोपदिश्यतां व्याख्यायताम्। इतिशब्दः सामान्येन। त ऊचुः ते शिष्या धन्वन्तरिं प्रति ऊचुः उक्तवन्तः, शल्यज्ञानमूलं कृत्वा शल्यज्ञानमादौ कृत्वा। स धन्वन्तरिः, उवाच उक्तवान्, एवमस्त्विति एवं भवत्विति। सहोवाचेति केचित् पठन्ति, तैः शिष्यैः सहेत्यर्थः। प्रक्ष्यति पृच्छां करिष्यति। वत्स सुश्रुत ! इति सम्बोधने। अस्याग्रे अथात इत्यादिका प्रतिज्ञा ज्ञातव्येति पूर्व्वमेवोक्तम्। इह खलु इत्यधिकारे इह खलु आयुर्व्वेदोत्पत्त्यधिकारे इत्यर्थः। व्याधिशब्दोऽयं दुष्टेषु वातादिषु तत्कार्य्येषु ज्वरादिषु क्लेशेषु रागादिषु दुःखेषु संसारानुवृत्तिजनकेषु च वर्त्तते। परिमोक्षो निवृत्तिः। ननु व्याधिपरिमोक्षात् स्वास्थ्यरक्षणादन्यदपि प्रयोजनमस्ति, किं तत् ? याप्यव्याधितो रक्षा रसायनादायुरुत्कर्षो वा, तदिदं वक्तव्यम्; उच्यते, स्वास्थ्यरक्षणञ्चेति चकारोऽनुक्तसमुच्चयार्थः, तेन याप्यव्याधितो रक्षणं रसायनादायुरुत्कर्षश्च, अथवा साध्यव्याधेः क्रियैकत्वात् याप्यावरोधो रसायनादायुरुत्कर्षस्तु स्वस्थरक्षयैव गृह्यते ॥ १२ ॥

आयुरस्मिन्निति। आयुः शरीरेन्द्रियसत्त्वात्म-संयोगः, तदस्मिन्नायुर्व्वेदे विद्यते अस्तीत्यायुर्व्वेदः; अथवा आयुर्विद्यते ज्ञायते अनेनेत्यायुर्व्वेदः। आयुर्विद्यते विचार्य्यते अनेन वा इत्यायुर्व्वेदः। आयुरनेन विन्दति प्राप्नोति इति वा आयुर्व्वेदः। तस्याङ्गवरमिति। अङ्गवरम् अङ्गश्रेष्ठम्; आद्यम् आदिभवम्; प्रत्यक्षागमानुमानोपमानैरविरुद्धमिति। अनेन शल्येनाङ्गवरेण योऽर्थः प्रतिपाद्यते, स खलु प्रत्यक्षादिभिरपि अवगम्यते इत्यर्थः। प्रत्यक्षमिति यत्किञ्चिदेवार्थस्य

एतद्ध्यङ्गं प्रथमं प्रागभिघातव्रणसंरोहाद् यज्ञशिरःसन्धानाच्च। श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति। ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यम्। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरः संहितमिति ॥ १४ ॥

अष्टास्वपि चायुर्व्वेदतन्त्रेष्वेतदेवाधिकमभिमतमाशुक्रियाकरणाद् यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्व्वतन्त्रसामान्याच्च। तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरञ्चेति ॥ १५ ॥

साक्षात्कारिज्ञानं तदेव प्रत्यक्षम्। तथाहि—"मनोऽक्षगतमभ्रान्तं वस्तु प्रत्यक्षमुच्यते। इन्द्रियाणामसंज्ञानं वस्तुतत्त्वे भ्रमः स्मृतः ॥" प्रत्यक्षाविरुद्धं यथा—सूर्य्यावलोकनात् नासान्तः सूत्रवर्त्तिप्रवेशनाच्च क्षुतः प्रादुर्भावः। आगमो वेदः आप्तानां शास्त्रं वा, तथाहि—"सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च। आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः ॥" आगमाविरुद्धं यथा—पुराणादिष्वपि श्रूयते, रुद्रेण यज्ञस्य शिरश्छिन्नमश्विभ्यां संहितमिति। आगमस्य प्रत्यक्षफलत्वात् वरीयस्त्वम्, तेनानुमानात् पूर्व्वं निर्द्दिष्टवान्। अनु पश्चादव्यभिचारिलिङ्गाल्लिङ्गी मीयते ज्ञायते येन तदनुमानम्, तेनानुमानेनाविरुद्धं यथा—प्रनष्टे शल्ये चन्दन-घृतोपदिग्धायां त्वचि विशोषण-( रागादि )-आज्यविलयनाभ्याम् अनुमीयते अत्र शल्यमिति। प्रसिद्धसाधर्म्यात् सूक्ष्मव्यवहितविप्रकृष्टार्थस्य साधनमुपमानम्, तेनाविरुद्धं यथा—माषवन्माषः, तिलमात्रस्तिलकालकः; विदारीकन्दवद् विदारीरोगः, शालूकवत् पनसिकेत्यादिकम्। उच्यमानम् उपदिश्यमानं मया धन्वन्तरिणेत्यर्थः ॥ १३ ॥

शल्याङ्गस्याद्यत्वं प्रतिपादयन्नाह—एतद्धीत्यादि। हिशब्दोऽवधारणे। एतेनैतदेवाङ्गं प्रथमम् आद्यं प्रधानं वा। कस्मात् प्रथमम्? प्रागभिघातव्रणसंरोहाद; शारीरव्याधीनां प्रागेव देवासुरसंग्रामे अभिघातव्रणोत्पत्तिस्तत्संरोहात्। द्वितीयहेतुमाह—यज्ञशिरःसन्धानाच्चेति। अत्रापि प्रागिति सम्बध्यते। अन्ये त्वत्र यज्ञप्रधानशिरःसन्धानाच्चेति पठन्ति। यतः प्राक् यज्ञस्य प्रधानभूतस्य शिरसः सन्धानं तस्मादिदमाद्यम्। अत्रैव पारम्पर्य्योपदेशमाह—श्रूयते हीत्यादि। अत्र केचित् संहितमित्यत्र सन्धितमिति पठन्ति ॥ १४ ॥

इदानीं वरत्वे प्रतिज्ञातहेतुं प्रतिपादयन्नाह—अष्टास्विति। एतदेवाधिकं नान्यत् शालाक्यादि, कस्मादाशुक्रियाकरणात्। कुतोऽस्य पुनराशुक्रियाकरणत्वम्? यन्त्रादिप्रणिधानाच्च, न हि यन्त्रादिषु प्रणिधाने मन्दा क्रिया कर्त्तुं युक्ता, मन्दकारित्वे हि आतुरस्य व्यापत्तिः स्यात्। वरत्वे द्वितीयं हेतुमाह—सर्व्वतन्त्रसामान्याच्च शालाक्यादितन्त्रतुल्यत्वाच्च। अधिकक्रियाकरणादिति केचित् पठन्ति। अधिकक्रियाकरणमप्यस्य यन्त्रादिप्रणिधानात् सर्व्वतन्त्रसामान्याच्च हेतुभ्याम्। अन्ये तु वरत्वे आशुक्रियाकरणादिति हेतुत्रयमाहुः; आशुक्रियाकरणात् शीघ्रं छेदादि-

ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे, तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः ॥ १६ ॥

भवति चात्र।

अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्।
शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ १७ ॥

अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोऽधिष्ठानम्। कस्मात्? लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च। द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात्, पञ्चात्मको वा ॥ १८ ॥

क्रियाकरणादिति व्याख्यानयन्ति। अतः शिष्योत्साहनाय यथाभूतप्रशंसामाह—तदिदमिति। तदिदं शल्यतन्त्रं शाश्वतम् अविनाशि, अथवा शाश्वतशब्देन मोक्षोऽभिधीयते तत्सम्पादकत्वात् शाश्वतम्, पुण्यं पुण्यहेतुत्वात्, स्वर्गस्य निमित्तं स्वर्गाय हितं वा स्वर्ग्यम्, यशसो निमित्तं यशसे हितं वा यशस्यम्, आयुषो निमित्तम् आयुषे हितं वा आयुष्यम्, वृत्तिकरञ्चेति निर्व्वाहकरम् ॥ १५ ॥

इदानीं क्रमागतिं प्रतिपादयन्नाह—ब्रह्मा प्रोवाचेत्यादि। प्रोवाच प्रथमं कथितवान्। तस्मात् प्रजापतिः दक्षः अधिजगे अधीतवान्। मया त्विहेति। स्वर्गे ब्रह्मणैवार्थिभ्यः प्रथमं दत्तम्, मया धन्वन्तरिणा पुनरिह मर्त्त्यलोके प्रदेयं प्रथमं दातव्यमिति ॥ १६ ॥

अथ काशिराजः शिष्यप्रतीत्यर्थं श्लोकमाह—भवति चात्रेति। अहं हीत्यादि। आदिदेवः शङ्करः। अन्ये तु आदिदेवा ब्रह्मादयः, कर्म्मदेवाः शतक्रतुप्रभृतयः, प्रयोजनदेवास्तु प्रयोजनजनिताः स्कन्दादयः, तेषामहमादिदेवः। आदिदेवत्वेऽपि काशिराजत्वमुपपन्नमवतारान्तरापन्नत्वात्। जरारुजामृत्युहरोऽमराणामिति। एतेनैतदुक्तं देवानामपि पुरा जरादयस्तस्थुः, ते च मया आदिदेवेन हृताः। प्राप्तोऽस्मि गां भूयः इहोपदेष्टुमिति। पूर्व्वमहं देवकार्य्यार्थं स्वर्गं प्राप्तः, इदानीं भूयः पुनः गां पृथ्वीं प्राप्तोऽस्मि, इह मर्त्त्ये लोके मनुष्यकार्य्यार्थमुपदेष्टुम्। अन्ये शल्यं महत् शास्त्रवरं गृहीत्वेति पठन्ति। स्वमाहात्म्यप्रकाशनमपि परार्थत्वाद् यथाभूतत्वाच्च न दोषः ॥ १७ ॥

अस्मिन् शास्त्रे पञ्चमहाभूतेत्यादि। पञ्चमहाभूतानि पृथिव्यादीनि, शरीरी आत्मा, समवायः संयोगः। अन्ये तु तत्रास्मिन् शास्त्रे इति पठन्ति, तत्र इत्यनेन शल्यतन्त्रमधिक्रियते तस्मिन् शल्यशास्त्रे, अस्मिन्निति अस्मिन्नधिकारे। किं विशेषवति? उच्यते—क्रियाधिकारे व्याध्यधिष्ठानप्रस्तावे च। तस्मिन् क्रियेति। तस्मिन्निति पूर्व्वनिर्द्दिष्टे पुरुषे, क्रिया शास्त्रोदितं कर्म्म। किं तत्? भेषज-शस्त्रक्षाराग्निनिर्व्वर्त्त्यं स्वास्थ्यवृत्तिकरञ्च। कस्मात् तस्मिन्नेव क्रिया इत्याह—सोऽधिष्ठानमिति। यस्मात् स पुरुषः अधिष्ठानं आश्रयः, कस्य व्याधेः। व्याधेः स्वास्थ्यस्य चाधिष्ठानत्वे हेतुमाह—कस्मादिति। लोकस्य जगतः। लोको हीत्यादि। हि यस्मादर्थे, स्थावरः

तत्र चतुर्व्विधो भूतग्रामः। संस्वेदजजरायुजाण्डजोद्भिज्जसंज्ञः। तत्र पुरुषः प्रधानम्, तस्योपकरणमन्यत्। तस्मात् पुरुषोऽधिष्ठानम्॥ १९॥

तद्दुःखसंयोगा व्याधय उच्यन्ते। ते चतुर्व्विधा आगन्तवः शारीराः

वृक्षादिः। जङ्गमः मनुष्यादिः। चिकित्सोपयोगिधर्म्मद्वयं प्रतिपादयितुमाह—द्विविधात्मक एवेत्यादि। अग्निभूताधिदैवतस्वभावं आग्नेयम्, सोमभूताधिदैवतस्वभावं सौम्यम्, अन्ये द्विविधात्मको द्विविधहेतुक इति व्याख्यानयन्ति, तन्न, पञ्जिकया दूषितत्वात्। ननु सर्व्वभूतानां सर्व्वत्र सान्निध्यमस्ति तत् कथं द्विविधात्मक इत्याह—तद्भूयस्त्वादिति, तद्बाहुल्यादित्यर्थः। प्रायेण हि सर्व्वं शीतमुष्णं न तृतीयो राशिरस्ति, अतो द्वावेव अग्निषोमौ भूयांसौ। अधुना विशेषेण द्वितीयं पक्षमाह—पञ्चात्मको वेति। वाशब्दः पक्षान्तरे, तेन स द्विविधोऽपि लोकः पञ्चात्मकः पञ्चस्वभावः इत्ययं वा पक्षः॥ १८॥

इदानीं जङ्गमान् पृथक् कर्त्तुमाह—तत्रेति। तत्र तयोः स्थावरजङ्गमयोर्मध्ये, चतुर्व्विधः चतुःप्रकारः, भूतग्रामः प्राणिसमूहः। अथ के ते चत्वारः प्रकारा इत्याह—संस्वेदजेत्यादि। भुवः शरीरस्य च संस्वेदादुष्मणो जाताः संस्वेदजाः; जरायोर्जाताः जरायुजाः, जरायुर्गर्भाशयः; अण्डाज्जाताः अण्डजाः, अण्डं पेश्याकारवर्त्तुलम्; भुवमुद्भिद्य जाता उद्भिज्जाः; संज्ञाशब्दः प्रत्येकं सम्बध्यते। चतुर्द्धा निपतितानाम् उष्माणं विना कस्यचित् सिद्धिर्नास्ति इति संस्वेदजस्य प्राङ्निर्देशः; केचिदन्यथाक्रमं पठन्ति, तन्न, पञ्जिकया दूषितत्वात्। लोकद्वैविध्यादिति प्रागुद्दिष्टहेत्वर्थं स्फुटीकुर्व्वन्नाह—तत्र पुरुष इति। तत्र तयोः स्थावरजङ्गमयोर्मध्ये पुरुषः प्राधान्येन गुणेन पृथक् क्रियते। यद्यप्यत्र पञ्चमहाभूतशरीरिसमवायः पुरुष इति सामान्येन पुरुषशब्देन पश्वादिरपि वाच्यस्तथापि मनुष्यजातिरेवात्र पुरुषशब्देनोच्यते तस्योपकार्य्यत्वात्; इतरस्य चाप्राधान्यम् उपकरणत्वात्, अतएवाह—तस्योपकरणमन्यदिति। तस्य मनुष्यजातेः पुरुषस्य, अन्यत् स्थावरसंस्वेदजादि उपकरणम्, उपकरणत्वादेव प्रधानत्वमित्यत आह—तस्मात् पुरुषोऽधिष्ठानम्। तत्र पुरुषः प्रधानमिति तत्र तेषु चतुर्षु संस्वेदजादिषु मध्ये, इत्यन्ये व्याख्यानयन्ति॥ १९॥

ननु के ते व्याधयो येषां पुरुषोऽधिष्ठानमित्याह—तद्दुःखेत्यादि। तच्छब्देनानन्तरनिर्द्दिष्टः पुरुषोऽधिक्रियते, दुःखं कायवाङ्मानसपीड़ा, विविधदुःखमादधतीति व्याधयः, तस्य पुरुषस्य दुःखाय अथवा तस्य पुरुषस्य येषु सत्सु, यैर्वा करणभूतैः येभ्यो वा दुःखं जायते ते व्याधयः। एतौ वाक्यार्थौ न्याय्यौ। अन्ये तु तस्य पुरुषस्य दुःखानां वेदनानां ये संयोगास्ते व्याधयः, अपरे तु दुर्दुष्टानि खानि स्रोतांसि दुःखानि, तस्य पुरुषस्य दुःखानां दुष्टस्रोतसां निमित्तं संयोगो येषां ते तथोक्ताः। एतावन्याय्यौ पञ्जिकया दूषितत्वात्। ते चतुर्व्विधा इत्यादि। पूर्व्वमुत्पन्नत्वात् आगन्तोः प्रागभिधानम्, ततः शारीराः शरीरस्य प्राधान्यात्, ततः शेषावपि। स्वभावेन भवन्तीति स्वाभाविकाः, स्वभावो ह्यत्र सहजो धर्म्मः। आगन्तुप्रभृतयः पूर्व्वं व्याख्याताः, स्वाभाविकाश्चेति चकारः स्वाभाविकस्य व्याधेरागन्तुप्रभृतिभिः सह अतुल्यबलतां सूचयति। इतिशब्दश्चतुःप्रकारसमाप्तौ।

मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ताः। शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः। मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति। स्वाभाविकास्तु क्षुत्पिपासाजरामृत्युनिद्राप्रकृतयः। त एते मनःशरीराधिष्ठानाः॥ २०॥

इदानीमागन्तुप्रभृतीनेव विवरितुमाह—तेषामित्यादि। अभिघातः अभिहननं शस्त्रादिप्रहारः, स एव निमित्तं येषां ते तथोक्ताः। अन्नपानमूला इति। सामर्थ्याद् विषमान्नहेतवः। न ह्यन्नसाम्यं व्याधिहेतुः, अन्नवैषम्यन्तु स्वस्थवृत्तवैषम्यमुपलक्षयति, तेन कालवैषम्यं कायवाङ्मनोविहारवैषम्यम् इन्द्रियार्थवैषम्यञ्च लक्षयति। शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः। चये कोपे शमे चैव हेतुरुक्तश्चिकित्सकैरिति एषां ग्रहणमकृत्वा अन्नग्रहणेनैतल्लक्षयति—यथा अन्नमेवैषां सम्भवे प्रधानहेतुस्तथा नान्ये। वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता इति वातादीनां सन्निपातान्तानां वैषम्यं विषमता तदेव निमित्तं येषां ते तथोक्ताः। ते पुनर्वातादीनां सञ्चयादिज्ञापका वातपूर्णकोष्ठतादयो व्याधयः। तच्च वैषम्यं क्षयेण वृद्ध्या वा। दोषप्रस्तावे दूष्यशोणितग्रहणे हेतुर्वक्तव्यः, उच्यते एतद्धि शल्यतन्त्रम्, शल्यतन्त्रे च व्रणः प्रधानभूतः, व्रणे च दूष्येषु मध्ये रक्तस्य प्राधान्यमिति शोणितोपादानम्। अन्ये तु दोषदूषितत्वात् रक्तमपि व्याध्युत्पत्तिनिमित्तं भवति, वक्ष्यति चैवं दोषदूषितेष्वत्यर्थं धातुषु दोषसंज्ञा। शोणितजोऽयमित्यादि व्यपदेशो घृतादिदग्धवत्। अन्यनिबन्धकारैर्बहूक्तम्, तच्च शिष्यबुद्धिव्याकुलत्वहेतुत्वादस्माभिरुपेक्षितम्।

मानसान् प्रतिपादयन्नाह—मानसास्त्वित्यादि। क्रोधः पराभिद्रोहलक्षणः, शोकः पुत्रादिवियोगे चित्तोद्वेगः, भयं परस्मात् त्रासः, हर्षः उत्सेकः, निर्निमित्तम् अन्यस्य दोषोत्पादनेनात्मनः प्रीतिजननं वा हर्षः, असिद्धिभयाद् विविधेषु कर्म्मसु सादोऽप्रवृत्तिर्विषादः, ईर्ष्या परसम्पत्तावसहिष्णुता, छिद्रान्वेषितया परगुणेषु दोषारोपणम् असूया, दैन्यं क्लिष्टचित्तता, मात्सर्य्यं परगुणेषु अमाध्यस्थ्यं क्रौर्य्यं वा, काम इन्द्रियार्थेषु अभिकाङ्क्षा, लोभः परस्वग्रहणाभिलाषः, आदिग्रहणात् मानमददम्भादयः। इच्छाद्वेषभेदैर्भवन्तीति इच्छा सातिशयोऽर्थाभिलाषः, सा च नानावस्त्ववलम्बिनी नानाकामतश्च भिन्ना भवति, तत्र हर्षशोकदैन्यकामलोभादय इच्छाभेदेन; द्वेषः अप्रीतिः, सोऽपि नानावस्त्ववलम्बी नानारूपो भवति, क्रोधभयविषादेर्ष्यासूयामात्सर्य्याणि द्वेषभेदेन। अन्ये तु मानसाः क्रोधशोकभयदैन्येर्ष्यासूयामात्सर्य्यकामादय इति पठन्ति।

स्वाभाविकान् व्याख्यातुमाह—स्वाभाविकास्त्वित्यादि। क्षुत् भोक्तुमिच्छा, पिपासा पातुमिच्छा, जरा वार्द्धक्यम्, मृत्युः शरीरेन्द्रियात्ममनसां वियोगः, निद्रा मेध्यानाडीमनःसंयोगाद् देहेन्द्रियाणां सुखभोगः। प्रकृतिग्रहणात् प्रकृतिभवा रोगा गृह्यन्ते, ते च कदाचित् स्वाभाविकाः कदाचिद् दोषजाः; तत्र यदा प्रवृद्धपित्तस्य क्षीणश्लेष्मणो भस्मकानलेन बुभुक्षा भवति सा प्रतिकार्य्या दोषजत्वात्, पिपासाऽपि यथा दोषैः क्रियते तस्यापि दोषतः प्रसाधनं कर्त्तव्यम्,

तेषां संशोधनसंशमनाहाराचाराः सम्यक्प्रयुक्ता निग्रहहेतवः ॥ २१ ॥
प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च, स षट्सु रसेष्वायत्तः। रसाः

जरापि यदा अकाले भवति सा प्रतिकार्य्या, मृत्युरप्यकालजः प्रतिकार्य्यः, निद्रापि दोषजा प्रतिकारादुपशमं याति। तत्र यदा एते सर्व्वे दोषेभ्यो जायन्ते तदा शारीराः प्रतिकार्य्याश्च, यदा तु स्वभावतस्तदा निष्प्रतिकारा रसायनतोऽपि न प्रतिकार्य्याः। त एते स्वभावसम्भूतत्वात् स्वाभाविकाः कथ्यन्ते; यद्यपि क्षुत्पिपासाजरासु स्वभावसम्भूतास्वपि पित्तजत्वं निद्रायां श्लेष्मतमोभवत्वमस्ति, तथाप्यल्पदोषारब्धत्वाद् अदोषजत्वमुच्यते, एकतण्डुलाहारिणामनशनव्यपदेशवत्। मृत्युस्तु महद्भिरपि स्वभावानुवर्त्तिभिर्दोषैरारब्धोऽपि न दोषव्यपदेशं लभते। यथा राजानुवर्त्तिभिर्महद्भिरपि पुरुषैः सम्पादितं जयादिकं राजव्यपदेशं लभते, राज्ञा जितमिति, तद्वदत्रापि, आगन्तुमृत्योः सम्भवत्वाच्च नावश्यं दोषजव्यपदेशं लभते। अन्ये निद्राप्रकृतय इत्यत्र प्रभृतय इति पठन्ति। प्रभृतिग्रहणात् रात्रिजागरणादय इति व्याख्यानयन्ति। त एते इति। त एते अनन्तरोक्तव्याधयः। तत्र मनोऽधिष्ठानाः क्रोधादयः, शरीराधिष्ठाना ज्वरादयः, उभयाधिष्ठाना अपस्मारादयः। यद्यपि मानसा अपि शरीरं पीड़यन्ति, शारीरा अपि मनः पीड़यन्ति, तथापि प्राङ्मानसा एव मनः पीड़यन्ति पश्चात् शरीरम्, एवं शारीरा अपि, इति न दोषः। आत्मनि तु व्याध्यधिष्ठानं नास्ति निर्विकारत्वात् ॥ २० ॥

व्याधीन् निर्दिश्य चिकित्सां निर्द्देष्टुमाह—तेषामित्यादि। तेषां व्याधीनाम्। सम्यक् शोधयतीति संशोधनम्, तद् द्विविधम्—बहिराश्रयं अभ्यन्तराश्रयञ्च। तत्र बहिराश्रयं शस्त्रक्षाराग्निप्रलेपादयः। अभ्यन्तराश्रयं चतुःप्रकारम्, वमनं विरेचनम् आस्थापनं शोणितमोक्षणञ्च। अन्ये तु शोणितमोक्षणमित्यत्र शिरोविरेचनं मन्यन्ते। यत् किञ्चित् पीतलीढादिकमनिर्हृत्य दोषं शमयति तत् संशमनम्; यदुक्तम्—'न शोधयति यद् दोषान् समान् नोदीरयत्यपि। समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते।' तदपि द्विविधं बाह्यमाभ्यन्तरञ्च। तत्र बाह्यमालेपपरिषेकावगाहाभ्यङ्गशिरोवस्तिकवड़ग्रहगण्डूषादिकम्, आभ्यन्तरन्तु पाचनलेखनबृंहणरसायनवाजीकरणविषप्रशमनादिकम्। आहारश्चतुर्व्विधः पेयलेह्याद्भिक्ष्यभेदात्। स पुनस्त्रिविधः, दोषप्रशमनो व्याधिप्रशमनः स्वास्थ्यवृत्तिकरश्चेति। दोषसंशमनत्वात् संशमनग्रहणेनैव आहारे लब्धे पृथक्करणं संशोधनादिषु आहारस्य प्राधान्यसूचनार्थम्, अथवा स्वस्थे पुरुषे दोषव्याधिप्रशमाभावादाहारस्य पृथग्ग्रहणम्। आचारः कायवाङ्मानसं कर्म्म। तत्रोत्क्षेपणावक्षेपणादिकं कायिकं कर्म्म, पाठस्वाध्यायादि वाचनिकम्, ध्येयचिन्तनसङ्कल्पादि मानसम्। सम्यक् प्रयुक्ता इति आयुरादीन् वीक्ष्य प्रयुक्ताः ॥ २१ ॥

संशोधनादिषु आहारस्य प्राधान्यं दर्शयितुमाह—प्राणिनामित्यादि। मूलमिति। मूलमिव मूलम्, सम्भवहेतुत्वात्। शुक्रशोणितं तावदाहारादेव जायते यद् गर्भजननसमर्थम्। न केवलं प्राणिनां मूलं बलवर्णौजसाञ्च। एतेन प्राणिनामाहारादेव उत्पत्तिस्थिती निदर्शिते। बलं कर्म्मसाधनशक्तिः व्यायामाद्यनुमेया, वर्णः गौरादिः, ओजः सोमात्मकं रसादिशुक्रान्तसर्व-

पुनर्द्रव्याश्रयाः। द्रव्याणि पुनरोषधयस्तास्तु द्विविधाः, स्थावरा जङ्गमाश्च। तासां स्थावराश्चतुर्व्विधाः। वनस्पतयो वृक्षा वीरुध ओषधय इति। तास्वपुष्पाः फलवन्तो वनस्पतयः, पुष्पफलवन्तो वृक्षाः, प्रतानवत्यः स्तम्बिन्यश्च वीरुधः, फलपाकनिष्ठा ओषधय इति॥ २२॥

जङ्गमाः खल्वपि चतुर्व्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। क्रिमिकीटपिपी-

धातुधामभूतं हृदिस्थम्। अन्ये तु बलं शरीरोपचयोऽत्राभिप्रेत इति वदन्ति। एवं परमार्थतो बलौजसोर्भेदेऽपि दोषधातुमलक्षयवृद्धिविज्ञानीये चिकित्सैक्यार्थमभेद उक्तः। स षट्सु रसेष्वायत्त इति स आहारः रसेषु मधुरादिषु आयत्तः अधीनः। द्रव्याणि पुनरोषधय इति ओषधिशब्दोऽत्र सान्निध्यात् वक्ष्यमाणस्थावरजङ्गमराशिद्वय एव वर्त्तते, न पुनर्यावदोषधिमात्रे; अन्यथा हि पार्थिवेष्वपि ओषधिशब्दो वर्त्तते, इति पार्थिवानामुपादानं पृथक् न स्यात्। अन्ये तु पार्थिवेष्वपि ओषधिशब्दो वर्त्तते इत्याहुः। तास्त्वित्यादि। ता इति ओषधयः। स्थावराणां बहुतरोपयोगात् प्रागुपादानम्। तासामिति द्विविधानामोषधीनां मध्ये स्थावराश्चत्वारः प्रकारा इत्याह—वनस्पतय इत्यादि। तानेव विवरितुमाह—तास्विति। तासु मध्ये, अपुष्पा इति अविद्यमानपुष्पाः, फलवन्त इति फलं येषामस्ति, ते वनस्पतय इति, के पुनरीदृशाः? प्लक्षोडुम्बरादयः। पुष्पफलवन्तो वृक्षा इति उभययुक्ता वृक्षाः; के ते? आम्रजम्बूप्रभृतयः। प्रतानवत्यो विस्तारवत्यः, न केवलं प्रतानवत्यो वीरुधस्तम्बिन्यश्च गुल्मिन्यश्च, गुल्मः पुनः वर्त्तुललतासन्ततिविशिष्टः। ताश्च विदारीकोलचव्यवल्लीशालपर्णीपृश्निपर्णीप्रभृतयः। केचित् स्तम्बिन्यश्च इत्यत्र गुल्मिन्यश्चेति पठन्ति, तत्रापि स एवार्थः। फलपाकनिष्ठा इति निष्ठा नाशः, फलपाकेन परिणत्या नाशो यासां तास्तथोक्ताः; ते पुनर्गोधूमादयः। अन्ये तु निष्ठाशब्दं प्रत्येकं सम्बध्नन्ति। फलनिष्ठा पाकनिष्ठा इति, तत्र फलनिष्ठाः शालितिलकुलत्थादयः। पाकनिष्ठा करकादयः, करकश्छत्रक उच्यते॥ २२॥

जङ्गमाः खल्वपीति। खलुशब्दः शिष्यसम्बोधने, हे सुश्रुत! जङ्गमा अपि चतुर्व्विधाः चतुःप्रकाराः, तानाह—जरायुजेत्यादि। एतच्च पूर्व्वं व्याख्यातम्। जरायुजादिषु पूर्व्वोक्तसंस्वेदजादिक्रमत्यागो योनिसङ्करं बोधयति; तेन पक्षिषु बलाका जरायुजा अण्डजाश्चेति। सर्पजातिषु अहिपताका जरायुजा। संस्वेदजेष्वपि काश्चित् पिपीलिका अण्डजा उद्भिज्जाश्च। व्यालादय इति व्याला हिंस्रपशुव्याघ्रादयः। अन्ये तु पशुग्रहणादेव हिंस्रपशूनामपि ग्रहणमिति व्यालशब्देन सर्पविशेषमाहुः। तदुक्तम्—सर्पजातिषु अहिपताका जरायुजेति। आदिग्रहणात् बलाकाजतुकादयः। इहोपकरणप्रस्तावे पशूनां प्राधान्यमिति प्राङ्निर्देशः। प्रागभूतग्रामप्रसङ्गेन पुरुषप्राधान्यख्यापनार्थं पुरुषः प्राङ्निर्दिष्टः। अत्र पुनर्जरायुजाण्डजेत्यादिपाठं ओषधित्वख्यापनार्थमिति न पौनरुक्त्यम्। खगसर्पेत्यादि। खगाः पक्षिणः, सर्पाः

लिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः। तत्र स्थावरेभ्य-स्त्वक्पत्रपुष्पफलमूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तः, जङ्गमेभ्यश्चर्म्मनख-रोमरुधिरादयः॥ २३ ॥

पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः। कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्त्वयनादयः काल-विशेषाः। त एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः प्रयोजनवन्तश्च॥ २४ ॥

मन्दगामिनोऽजगरप्रभृतयः, सरीसृपाः शीघ्रगामिनः कृष्णसर्पादयः, मीनमकरादयो वा; प्रभृति-ग्रहणात् कूर्म्मनक्रादीनां ग्रहणम्। केचित् प्रभृतिशब्दमपठित्वा पूर्व्वनिर्द्दिष्टाद् आदिशब्दात् कूर्म्मादीन् गृह्णन्ति। कृमिकीटेत्यादि कृमयः कोष्ठपुरीषादिवाष्पसम्भवाः, कीटा वृश्चिकपड्-विन्दुप्रभृतयः, पिपीलिकाश्चिटिकाः, प्रभृतिग्रहणादेवंविधा अन्येऽपि दृश्यन्ते। इन्द्रगोप इत्यादि इन्द्रगोपाः प्रावृट्कालजा अतिरक्तकृमयः इन्द्रवधूरिति लोके, प्रभृतिग्रहणादीदृशा अन्येऽपि। स्थावरजङ्गमयोर्निर्द्दिष्टयोश्चिकित्सोपयोगिनोऽवयवविशेषान् दर्शयितुमाह—तत्र स्थावरेभ्य इत्यादि। स्वरसादय इत्यादिग्रहणात् तैलक्षारभस्मकण्टकप्रभृतीनां ग्रहणम्। केचित् कन्दं सूत्रे न पठन्ति, आदिशब्दाच्च गृह्णन्ति। रोमरुधिरादय इत्यादिशब्दान्मांसवसाघृतास्थिखुरादयः॥ २३ ॥

रसाधिकारिकमौषधिवर्गं स्थावरजङ्गमं प्रतिपाद्य परिशिष्टं प्रतिपादयितुमाह—पार्थिवा इत्यादि। पृथिव्या विकाराः पार्थिवाः, रजतं रौप्यम्, मणिः स्फटिकादि, मुक्ता मौक्तिकम्, मृत् मृत्तिका, कपालं कर्परम्। सुवर्णस्येह पार्थिवत्वमेवाङ्गीक्रियते गुरुत्वकाठिन्यस्थैर्य्यादिहेतुभिः। सूत्रे आदिग्रहणात् लौहमलसिकतासुधाहरितालवणगैरिकरसाञ्जनप्रभृतीनां ग्रहणम्। यद्यपि स्थितिशीलत्वात् तथा लोकद्वित्वसमाख्याने अपृथगुक्तत्वाच्च स्थावरशब्देनैव पार्थिवा उच्यन्ते, तथाप्यत्र प्रकरणात् येष्वाहारोपयोगित्वं फलमूलाद्यवयवेषु रसप्रधानतया तत्रैव चतुर्विधे वनस्पत्यादिगणे स्थावरशब्दो वर्त्तते न तु पार्थिवेष्वपि, तेषामाहारेषु प्रायेणानुपयोगात्। अन्यदपि समाधानान्तरमस्ति, तच्च विस्तरभयान्न लिखितम्। कालकृता इत्यादि। आदिग्रहणात् निमेषकाष्ठाकलामुहूर्त्तादयः। अन्ये तु एतद् गद्यमन्यथा पठन्ति व्याख्यानयन्ति च। तच्च वर्त्तमानप्रतीतिष्वप्रसिद्धमित्यस्माभिरुपेक्षितम्।

एषां प्रयोजनं दर्शयितुमाह—त एते इत्यादि। स्वभावत एवेति स्वलक्षणत एव। दूषयन्ति कायवाक्चित्तानीति दोषा वातादयः, तदारब्धत्वाज्ज्वरादयः। सञ्चयः स्थानवृद्धिः, प्रकोपणं प्रकोपः, प्रकोपशब्देन प्रकोपप्रसरस्थानसंश्रयव्यक्तिभेदाः पञ्चोच्यन्ते; प्रकोपः स्थानादुन्मार्गगमनम्, प्रसरः पञ्चदशप्रकारो व्रणप्रश्ने वक्ष्यते, ज्वरातीसारादीनां सामान्यलक्षणं व्यक्तिः, यथा सन्तापलक्षणो ज्वरः, सरणलक्षणोऽतिसार इत्यादि; विशेषणं भेदः, यथा—अष्टानां ज्वराणाम् इत्यादि। प्रशमनं प्रशमः स्वयं उपशमः, हेतुव्याधिविपरीतं कर्म्म प्रतीकारः। अन्ये तु प्रशमप्रतीकारयोरेकार्थतां

भवन्ति चात्र श्लोकाः।

शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः।
* प्रकोपे प्रशमे चैव हेतुरुक्तश्चिकित्सकैः॥ २५॥
आगन्तवस्तु ये रोगास्ते द्विधा निपतन्ति हि।
मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया॥
शरीरपतितानान्तु शारीरवदुपक्रमः।
मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः॥ २६॥

एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम्।

मन्यमानाः प्रतीकारं न पठन्ति, तन्न; यस्माज्ज्वरादानामप्यस्ति स्वभावोपशमः, तद् यथा—कफज्वरप्रशमनं वसन्ते पूर्व्वाह्णे च, स्वभावेन प्रशमस्तु ग्रीष्मे मध्याह्ने चेत्यादि। तस्मात् प्रशमप्रतीकारयोरर्थभेदोऽस्त्येव। प्रयोजनवन्तश्च इति चिकित्सोपकारिण इत्यर्थः। तद् यथा—लाजोत्पलोशीरकुचन्दनानि दत्त्वा प्रवाते निशि वासयेच्च। तथा निवाते देशे निचितिं कृत्वा मदनफलानामातपपरिशुष्काणामित्यादि प्रयोजनं ज्ञातव्यम्॥ २४॥

इदानीं गद्यविस्तरेण प्रतिपादितमर्थं श्लोकैः प्रकटीकुर्व्वन्नाह—भवन्ति चात्र श्लोका इत्यादि। यद्यपि सुश्रुते भवन्ति चात्रेति विनापि श्लोका भवन्ति, तथाप्यत्र मन्दमतीनां गद्यपद्यभेदकथनाय भवन्ति चात्र श्लोका इति कृतम्। अन्ये तु वेदादिधर्म्मसंवादार्थमिति वदन्ति। अथ के ते श्लोका इत्याह—शारीराणामित्यादि। न चात्र द्विरुक्तिः, पूर्व्वोक्तस्य गूढार्थस्याभिव्यक्तिकरत्वात्। शारीराणामिति शरीरसम्भवानाम्, विकाराणाम् इति विकृतयो विकाराः, तेन विकारा अत्र कुपिता दोषा व्याधयोऽपि गृह्यन्ते। एष पूर्व्वोक्तः, वर्गश्चतुर्व्विधश्चतुःप्रकारः आहाराचारपार्थिवकालभेदात्। स्थावरजङ्गमपार्थिवकालकृतभेदाच्चतुर्व्विध इति जैज्जटः, पञ्जिकाकारस्तु इदं न मन्यते। अत्रापि प्रकोपशब्दः प्रकोपप्रसरस्थानसंश्रयव्यक्तिभेदेषु वर्त्तते। प्रशमशब्दोऽत्र रोगोपघातमात्रस्योपलक्षणम्। तेन साध्यानां सिद्धिः, याप्यानां यापनम्, स्वस्थवृत्तञ्च गृह्यते॥ २५॥

इदानीमागन्तुकानामाश्रयभेदेन चिकित्सां वक्तुमाह—आगन्तवस्त्वित्यादि। मनस्यन्ये इति एके, शरीरे अन्ये इत्यपरे। शरीरपतितानाम् आगन्तूनां खड्गाद्यभिघातजानां शारीराणामिव, मानसानां मनःसम्भूतानां शब्दादिवर्गः शब्दस्पर्शरूपरसगन्धाः इष्ट इत्यभिप्रेतः चिकित्साहेतुत्वे। सुखावह इति सुखकारी; अन्ये तु चशब्दमनुव्यक्तसमुच्चयार्थमाचक्षते; तेन धैर्य्यधृतिप्रभृतयोऽपि मानसान् चिकित्सितुं निर्द्दिष्टाः॥ २६॥

इदानीं व्याख्यातमर्थमुपसंहरन्नाह—एवमित्यादि। एवम् अनेन प्रकारेण, एतत् इति पूर्व्वनिर्द्दिष्टम्, चतुष्टयम् इति चतुरवयवम्। यद्यप्यत्र पुरुषादयः पञ्च तथापि चतुष्टयं ज्ञेयम्, तथाहि—नान्यकालः क्रियातोऽस्ति क्रिया नान्याऽथवौषधात्। प्राधान्यात् पुरुषस्यात्र ततो व्याधिचतुष्टयम्।

* चये कोपे शमे चैवेति पाठान्तरम्।

तत्र पुरुषग्रहणात् तत्सम्भवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांसशिरास्नायुप्रभृतयः। व्याधिग्रहणाद् वात-पित्त-कफ-शोणित-सन्निपात-वैषम्यनिमित्ताः सर्व्व एव व्याधयो व्याख्याताः। औषधग्रहणाद् द्रव्यगुणरस-वीर्य्यविपाकप्रभावाणामादेशः। क्रियाग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्म्माणि व्याख्यातानि। कालग्रहणात् सर्व्वक्रियाकालानामादेशः॥ २७॥

भवति चात्र।

वीजं चिकित्सितस्यैतत् समासेन प्रकीर्त्तितम्।
सविंशमध्यायशतमस्य व्याख्या भविष्यति॥ २८॥

क्रियाविशिष्टः कालो वा कालो वा तच्चतुष्टयमिति, अतो न संख्यातिरेकः। तत्र येन यदुपगृहीतं तच्च तदुपदर्शयितुमाह—तत्रेत्यादि। तत्र इति तस्मिन् चतुष्टयमध्ये, तत्सम्भवद्रव्यसमूहः इति तस्य पुरुषस्य सम्भव उत्पत्तिस्तदर्थो द्रव्यसमूहः स तथा। कः पुनरसावित्याह भूतादिरिति। भूतानि आदीनि प्रथमानि प्रधानानि वा यस्य स भूतादिरिति वाक्यार्थः, तेन शुक्रार्त्तवपञ्चमहा-भूतानीह गृह्यन्ते। अन्ये त्वन्यथा व्याख्यानयन्ति—तस्य पुरुषस्य सम्भवद्रव्याणि शुक्रशोणिता-दीनि, तेषां समूहः संयोगविशेषः। कथम्भूतः सः? भूतादिः, भूतं महाभूतं पृथिव्यादिकम् आदिर्मूल-कारणं यस्य स तथा; अथवा तत्सम्भवद्रव्यसमूहः शुक्रशोणितादिसंयोगः स भूतानां प्राणिना-मादिः मूलकारणम्, तत्र व्यक्तीभावात्। भूतादिरित्यत्र एके भूतानामादिर्भूतादिः, अव्यक्तादारभ्य यावत् 'स एष कर्म्मपुरुषः चिकित्साधिकृतः' इति वदन्ति, तन्न, पञ्जिकया निरस्तत्वात्। तदङ्गप्रत्यङ्ग-विकल्पाश्चेति अङ्गानि मस्तकादीनि, प्रत्यङ्गानि चिवुकादीनि। त्वङ्मांसशिरास्नायुप्रभृतयः इति त्वचः सप्त; मांसपेशीशतानि पञ्च; शिराशतानि सप्त; स्नायुशतानि नव च; प्रभृतिग्रहणात् स्रोतोधमन्यादयः। सर्व्व एव इति। सर्व्वग्रहणादागन्तुमानसस्वाभाविकानां ग्रहणम्। द्रव्यं स्थावरादि, रसाः मधुरादयः, गुणाः गुर्व्वादयः, वीर्य्याणि शीतोष्णादीनि, द्वौ विपाकौ गुरुलघू; औषधग्रहणं क्रियाविशेषणम् अतो न संख्यातिरेकः। अयमर्थः पुरुषादिचतुष्टयप्रस्तावे व्याख्यातः। क्रियाग्रहणात् इति औषधविशेषादित्यर्थः। स्नेहादीनि इति आदिशब्दात् स्वेदन-वमन-विरेचनास्थापनानुवासन-धूप-नस्य-कवड़ग्रह-गण्डूष-पाचन-संशमनादीनां ग्रहणम्; छेद्यादीनि इत्यादिशब्दात् भेद्यलेख्यैष्याहार्य्यविस्राव्यसीव्यादीनां ग्रहणम्। कालग्रहणात् इति स्नेहन-स्वेदन-वमन-विरेचनादीनां कर्म्मणां तथा शस्त्रादिकर्म्मणाञ्च वक्ष्यमाणसमयनिर्द्देशः। तत्र स्नेहस्य 'प्रतप्त-कनक-निकर-पीतलोहिते सवितरि' इति वचनात् कालनिर्द्देशः, सर्व्वस्वेदानां जीर्णान्नकालः, वमनस्य पूर्व्वाह्णकालः, विरेचनस्य प्रातः; प्रातरिति दिनस्यादित्रयो मुहूर्त्ताः, आस्थापनान्तमनुसर्त्तव्यम्॥ २७॥

अनेन चतुष्टयेन सकलमेव शास्त्रं व्याप्तमिति निदर्शयितुमाह—भवति चात्रेत्यादि। वीजमिव वीजम्, यथैकं वीजं भूमौ निक्षिप्तं मूल-काण्डशाखाप्रशाखापल्लवैर्दूरतरविसारिततरुरुपजायते,

तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु। तत्र सूत्रस्थान-निदान-शारीर-चिकित्सित-कल्पेष्वर्थवशात् संविभज्योत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः ॥ २९ ॥

भवति चात्र।

स्वयम्भुवा प्रोक्तमिदं सनातनं पठेद्धि यः काशिपतिप्रकाशितम्।
स पुण्यकर्म्मा भुवि पूजितो नृपैरसुक्षये शक्रसलोकतां व्रजेत् ॥ ३० ॥

इति सुश्रुत-संहितायां सूत्रस्थाने वेदोत्पत्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

तथेदमपि चिकित्सितवीजं सूत्रनिदानशारीरचिकित्साकल्प-स्थानादैर्विस्तृतमारोग्यफलं भवतीति। समासेन संक्षेपेण। सविंशमध्यायशतमिति विंशत्यधिकमध्यायशतमित्यर्थः। सविंशमिति सहशब्देन किं प्रयोजनम्? उच्यते, सहशब्देनात्र उत्तरतन्त्रेण सह विंशत्यधिकमिति उत्तरतन्त्रसहितत्वं प्रकाश्यते। नन्वत्र पक्षे वीजकथनेनैव आद्याध्यायस्य गतत्वात् कथं विंशत्यधिकमध्यायशतं पूर्य्यते? नैवम् सर्व्वतन्त्रोपलक्षणत्वात् तस्येति नात्रोनत्वम्। अन्ये तु सशब्दं ऊनार्थमाचक्षते, यथा सलवणं सतिक्तं सक्षारमिति। कथमत्रोनता? उच्यते, वेदोत्पत्तिमध्यायं विहाय विंशत्यधिकमध्यायशतं न पूर्य्यते, एकेनोनत्वात्। तस्मादूनविंशत्यधिकमध्यायशतमस्य व्याख्या भविष्यतीति। यद्येवं तर्हि उत्तरतन्त्रस्य कथं प्राप्तिः? उच्यते, अर्थवशात्। ननु कः पुनरर्थो यद्वशात् प्राप्तिरिति आह—शेषा अर्था उत्तरे तन्त्रे प्रतिपादनीया इति। उत्तरतन्त्रप्राप्तौ अन्यो योऽर्थोऽस्ति स च न लिखितो ग्रन्थगौरवभयात् ॥ २८ ॥

तच्च सविंशमित्यादि। तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु। ननु कथमेतत्? उत्तरतन्त्रस्य पञ्चस्थानेभ्यः पृथगुक्तत्वात्; नैवम्, कुतः? पञ्चस्वेवेति नियमाभावात्। अतएवाग्रे वक्ष्यति उत्तरे शेषानर्थान् व्याख्यास्याम इति। शेषशब्देन रसभेदादयः स्वस्थवृत्तादयश्च ज्ञेयाः ॥ २९ ॥

इदानीं वेदोत्पत्त्यध्याये निदर्शितस्य चिकित्सावीजोपदेशन्यायेन शास्त्रस्य पाठानुशंसामाह—स्वयम्भुवेत्यादि। स्वयम्भुवा ब्रह्मणा, प्रोक्तं उपदिष्टम्, इदं शास्त्रम्, सनातनं नित्यम्, यः पठेत् अधीयीत, अन्ये तु पठधातुरत्र चतुर्षु अर्थेषु, तथाहि—पाठे अर्थज्ञाने कर्म्मदर्शने अभ्यासे च। हि स्फुटम्; काशिपतिप्रकाशितम् आदिदेवेन धन्वन्तरिणा प्रकाशितम्, भुवि पृथिव्याम्। पूजितो नृपैरिति नृपैः नरेन्द्रैः; एतेन ऐहिकं फलं दर्शयति। असुक्षये प्राणक्षये, शक्रसलोकतां इन्द्रसमानलोकतां व्रजति, एतेन पारलौकिकं श्रेयो दर्शयति। अन्ये तु शक्रसुलोकतां व्रजेदिति पठन्ति; सुशब्दः पूज्यवचनः तेन शक्रलोकपूज्यतां व्रजेत् प्राप्नुयादित्यर्थः। एतेन भुवि नरेन्द्रैः स्वर्गे च देवैः पूजितो भवेदित्यर्थः ॥ ३० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्यायश्रीडल्लनविरचिते निबन्धसंग्रहे वेदोत्पत्तिव्याख्यानाम प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ।

## अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वय-वयःशीलशौर्य्यशौचाचारविनयशक्ति-बलमेधाधृति-स्मृतिमति-प्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्न-चित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत्; अतो विपरीतगुणं नोपनयेत्॥२

उपनयनीयन्तु ब्राह्मणं * प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु प्रशस्तायां दिशि

अथात इति। यथोवाच भगवान् धन्वन्तरिरिति प्रत्यध्यायं बोद्धव्यम्। अथशब्दोऽत्राद्या-ध्यायादानन्तर्य्ये। अतःशब्दो हेत्वर्थे, स च हेतुः पूर्व्वाध्याये विस्तरेण व्याख्यातः। एवं प्रत्यध्यायम् अथातःशब्दौ ज्ञातव्यौ। शिष्योपनयनीयमिति—उपनयनं दीक्षा, तदधिकृत्य कृतो-ऽध्यायः शिष्योपनयनीयस्तं तथा। अन्ये तु उपनयनमात्मवत्तया अर्थीकरणम्। यद्यपि ब्राह्मणादयः प्रागुपनीताः, तथापि आयुर्व्वेदपठनारम्भे पुनरुपनयनम्। यथा ऋक्-यजुः-सामानि अधीत्य अथर्व्वारम्भे पुनर्व्रतावतरणं धनुर्व्वेदारम्भे च, तद्वदत्रापि ॥ १ ॥

ब्राह्मणक्षत्रियवैश्यानामित्यादि। ब्राह्मणादिषु मध्ये अन्यतमम् एकतमम्, अन्वयादियुक्तम्। अत्र अन्वयम् आयुर्व्वेदाध्यायिकुलम्, अन्ये वंशशुद्धिमाहुः; वयः अत्र बाल्यं तारुण्यं वा; शीलं शास्त्रार्थानुसारिणोऽविपरीतस्वभावः; शौर्य्यं शूरत्वं सर्व्वत्राविपादिता; शौचं शुचिता, तच्च द्विविधं बाह्यमाभ्यन्तरञ्च, तत्र बाह्यं स्नानादिकम्, आभ्यन्तरं मनःशुद्धिः; आचारः काल-देशाद्यनुगतं लौकिकं विधानम्, अन्ये तु कायवाङ्मानसिकं शुभव्यापारलक्षणं त्रिविधमाहुः, श्रुतिस्मृतिविहितानुष्ठानमित्येके; विनयः इन्द्रियवशित्वम्; शक्तिरुत्साहशक्तिः; बलं क्रिया-निर्व्वर्त्तनक्षमता; अन्ये शक्तिबलयोर्विपर्य्ययात्मिकां बुद्धिमाहुः; मेधा ग्रन्थाकर्षणसामर्थ्यम्; धृतिः मनःसन्तुष्टिः, अन्ये नियमात्मिकां बुद्धिमाहुः; स्मृतिः पूर्व्वानुभूतस्य स्मरणम्, अर्थधारण-शक्तिरित्यन्ये; मतिः अनागतार्थोद्देशः, त्रिकालविषया बुद्धिरित्यन्ये; प्रतिपत्तिः अर्थावबोध-प्रागल्भ्यम् अनुष्ठानं वा; तनुजिह्वौष्ठदन्ताग्रमिति तनुशब्दो जिह्वादिभिः प्रत्येकं सम्बध्यते। तनुजिह्वौष्ठदन्तमित्येके पठन्ति। प्रसन्नशब्दोऽपि चित्तादिभिः सह प्रत्येकं सम्बध्यते। चेष्टा कायपरिस्पन्दः; क्लेशसहं दुःखसहम्; उपनयेत् दीक्षेत्। अत इति। अतः एवंगुणविशिष्टात् शिष्याद् विपरीतगुणं नोपनयेत् न दीक्षेत्। ननु अन्वयादियुक्तं शिष्यमुपनयेत् इत्युक्ते गुणहीनस्य निषेधे सिद्धे पुनर्निषेधवचनं नियमार्थम्। तेन विपरीतगुणं नोपनयेदेव ॥ २ ॥

शिष्यगुणसम्पदमभिधाय उपनयनविधिं वक्तुमाह—उपनयनीयन्त्वित्यादि। उपनयनीयम् उपनयनार्हं पूर्व्वोदितगुणसम्पन्नं ब्राह्मणं शिष्यं भिषक् स्वाहाकारं कारयेदिति सम्बन्धः।

---

* उपनयनीयस्तु ब्राह्मण इति पाठान्तरम्।



दन्ताग्रदो दन्तमध्ये दन्ताग्रे च सूक्ष्माणं पदं प्रत्येकमभिसम्बध्यते।

शुचौ समे देशे चतुर्हस्तं चतुरस्रं स्थण्डिलमुपलिप्य गोमयेन दर्भैः संस्तीर्य्य पुष्पैर्लाजभक्तै रत्नैश्च देवताः पूजयित्वा विप्रान् भिषजश्च तत्रोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्रह्माणं स्थापयित्वाग्निमुपसमाधाय खदिरपलाशदेवदारुविल्वानां समिद्भिश्चतर्णां वा क्षीरवृक्षाणां न्यग्रोधोडुम्बराश्वत्थमधूकानां दधिमधुघृताक्ताभिर्दार्व्वीहोमिकेण विधिना स्रुवेणाज्याहुतीर्जुहुयात्। सप्रणवाभिर्महाव्याहृतिभिस्ततः प्रतिदैवतमृषींश्च स्वाहाकारञ्च कुर्य्यात् शिष्यमपि कारयेत्। ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति। शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्ज्जमनुपनीतमध्यापयेदित्येके ॥ ३ ॥

कदा कारयेदित्याह—प्रशस्तेष्विति। किं कृत्वेत्याह—प्रशस्तायामिति। ततश्च तत्रोल्लिख्येत्यादि। तदनन्तरमग्निमुपसमाधाय खदिरादीनां क्षीरवृक्षाणां वा दधिमधुघृताक्ताभिः समिद्भिः कृत्वा दार्व्वीहौमिकेन विधिना जुहुयात्। तथा सप्रणवाभिर्महाव्याहृतिभिरुपलक्षिताः स्रुवेण कृत्वा आज्याहुतीरेव जुहुयादिति सम्बन्धः। अन्ये तु उपनयनीयस्तु ब्राह्मण इति पठन्ति, व्याख्यानयन्ति च—उपनयनीय इति कर्त्तरि प्रयोगः। तेन उपनेता ब्राह्मण इदं कृत्वा आज्याहुतीर्जुहुयात् इति क्रियापदेन सम्बन्धः। प्राक् ब्राह्मणग्रहणं वर्णेषु मध्ये तस्य श्रेष्ठत्वात्। प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेष्विति तिथयः प्रतिपदादयः, करणानि ववबालवादीनि, मुहूर्त्तास्त्रिंशत् शिवाद्या अनिलपर्य्यन्ताः, नक्षत्राणि अश्विनीप्रभृतीनि। एषां प्रशस्तत्वं ज्योतिःशास्त्रविदां वचनाद्बोध्यम्। प्रशस्तायां दिशि प्राच्यामुदीच्यां वा; चतुरस्रं चतुष्कोणम्; गोमयेन गोपुरीषेण; स्थण्डिलं व्रतसाधनपिण्डिकाम्, गोचर्म्ममात्रभूप्रदेशः स्थण्डिलमित्यन्ये। एके चतुर्हस्तस्थाने गोचर्म्ममात्रमिति पठन्ति, पठित्वा गोचर्म्ममात्रस्थण्डिलयोर्व्याख्यानं कुर्व्वन्ति—गोचर्म्ममात्रं चतुर्हस्तप्रमाणम्, स्थण्डिलं संस्कृता भूः। तत्रेति तस्मिन् स्थण्डिले उल्लिख्य ऊर्द्धमुखीं लेखां कृत्वा, अभ्युक्ष्य जलेन सिक्त्वा; अग्निमुपसमाधाय सन्निधाने आरोप्य। चतुर्णां वा क्षीरवृक्षाणामिति न्यग्रोधोडुम्बराश्वत्थमधूकानाम्। दार्व्वीहौमिकेन विधिना इति दार्व्वीहोमप्रोक्तकल्पेन। दार्व्वीहौमिको विधिस्तु ब्राह्मणानां छन्दोविदां प्रसिद्धः। सप्रणवाभिः सोङ्काराभिः, महाव्याहृतिभिः भूःस्वाहेत्यादिभिः। तथाहि—ओं भूः स्वाहा, ओं भुवः स्वाहा, ओं स्वः स्वाहा, ओं भूर्भुवः स्वः स्वाहा इति। स्रुवेणाज्याहुतीर्जुहुयात् इति दारुहस्तकेन घृताहुतीर्दद्यात्। प्रतिदैवतमृषींश्च इति चकारात् ऋषींश्चेत्यत्रापि प्रतिशब्दः सम्बध्यते; तेन प्रतिदैवतं प्रतिऋषीनित्यर्थः। तत्र प्रतिदैवतं—ब्रह्मणे स्वाहा; प्रजापतये स्वाहा, अश्विभ्यां स्वाहा, इन्द्राय स्वाहा; प्रतिऋषीनिति—धन्वन्तरये स्वाहा, भरद्वाजाय स्वाहा, आत्रेयाय स्वाहा इत्यादि। ब्राह्मणस्त्रयाणामित्यादि। अन्ये तु अस्याग्रे राजन्यो द्वयस्य वैश्यो वैश्यस्यैवेति पठन्ति, स च निबन्धैरनार्षीकृतः। शूद्रमपि कुलगुणसम्पन्नमित्यादि। कुलगुणसम्पन्नमिति सम्पन्नशब्दः कुलगुणाभ्यां प्रत्येकं सम्बध्यते, कुलसम्पन्नम्

ततोऽग्निं त्रिः परिणीयाग्निसाक्षिकं शिष्यं ब्रूयात्, कामक्रोधलोभमोहमानाहङ्कारेर्ष्यापारुष्यपैशुन्यानृतालस्यायशस्यानि हित्वा नीचनखरोम्णा शुचिना काषायवाससा सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणावश्यं भवितव्यम्, मदनुमतस्थानगमनशयनासनभोजनाध्ययनपरेण भूत्वा मत्प्रियहितेषु वर्त्तितव्यम्; अतोऽन्यथा ते वर्त्तमानस्याधर्म्मो भवत्यफला च विद्या न च प्राकाश्यं प्राप्नोति॥ ४॥

अहं वा त्वयि सम्यग्वर्त्तमाने यद्यन्यथादर्शी स्यामेनोभाग् भवेयमफलविद्यश्च। द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्त्तव्यमेवं साधु भवति। व्याधशाकुनिकपतितपापकारिणां न च प्रतिकर्त्तव्यमेवं विद्या प्रकाशते मित्रयशोधर्म्मार्थकामांश्च प्राप्नोति॥ ५॥

आयुर्व्वेदाध्यायिकुलसंयुक्तम्, गुणसम्पन्नं वयःशौचादिशिष्यगुणसंयुक्तम् अनुपनीतं दीक्षारहितम्। शूद्रमपि गुणसम्पन्नं मन्त्रवर्ज्जमुपनीयाध्यापयेदित्येके इति केचित् पठन्ति॥ ३॥

ततोऽग्निमित्यादि। त्रिः परिणीय त्रीन् वारान् प्रदक्षिणीकृत्य अग्निसाक्षिकं शिष्यं ब्रूयादिति अग्निसाक्षिकं यथा स्यात् एवं शिष्यं ब्रूयात्। किं ब्रूयादित्याह—कामादीन् हित्वा परित्यज्य मत्प्रियहितेषु वर्त्तितव्यमिति। कामः विशिष्टस्त्रीविषयस्पर्शसङ्कल्पः, अथवा शब्दादिषु ग्रहणप्रवृत्तिर्वा स्वबान्धवकृतस्नेहो वा कामः; क्रोधः परस्यापकारपूर्व्वकं हृदयतेजः; लोभः परस्वग्रहणेच्छा; मोहस्तु तत्त्वज्ञानमूढ़ता, सा पुनस्त्रिभिः कारणैः—अज्ञानात् संशयज्ञानात् मिथ्याज्ञानाच्च; मानः सर्व्वत्रोत्कर्षेणात्मनो ज्ञानम्; कार्य्येऽपरामर्शतोऽहमिति प्रवृत्तिरहङ्कारः, ईर्ष्या परसम्पत्तावसहिष्णुता, पारुष्यं वाग्रूक्षता, पैशुन्यं सूचकता; अनृतम् असत्यम्; आलस्यं कर्म्मणि अनुत्साहः; अयशस्यानि वाच्यस्थानप्रवर्त्तनानि; हित्वा परित्यज्य। नीचनखरोम्णेति ह्रस्वत्वान्नीचमल्पं नखादि यस्य स तथा तेन। सत्यव्रतब्रह्मचर्य्याभिवादनतत्परेणेति तत्परशब्दः सत्यादिभिः प्रत्येकं सम्बध्यते। ब्रह्मचर्य्यं समस्तेन्द्रियसंयमः। अवश्यमिति निश्चयेन नान्यथेत्यर्थः; मदनुमतानि मयानुज्ञातानि मत्कथितानीत्यर्थः। स्थानादिपरेण भूत्वा तन्निष्ठेन भूत्वा। प्राकाश्यं प्रसिद्धिम्॥ ४॥

शिष्यप्रवृत्तिं आत्मविषये नियम्य शिष्यविषये आत्मप्रवृत्तिं नियमयन्नाह—अहं वेत्यादि। यद्यन्यथादर्शी स्याम् अन्यप्रकारदर्शी भवेयम्, तदा एनोभाग्भवेयं पापभाजनं भवामीत्यर्थः। शिष्यस्य आतुरे प्रवृत्तिं नियमयन्नाह—द्विजेत्यादि। प्रव्रजिताः तपस्विनः, उपनताः सन्निधाने प्रणययुक्ताः, साधवः सत्पुरुषाः, अनाथाः एकाकिनः, अभ्युपगताः दूरादायाताः, प्रतिकर्त्तव्यं प्रतिविधातव्यम्, एते त्वया सन्तोषीकृताः इत्यर्थः। एवं साधु भवति अनेन प्रकारेण शोभनं भवति। इदानीमप्रवृत्तिं दर्शयन्नाह—व्याधेति। व्याधादिषु सत्यपि अर्थलाभे न प्रतिकर्त्तव्यम्। व्याधा वागुरिकादयः, शाकुनिकाः पक्षिणां हन्तारः, पतिताः स्वकीयाचारभ्रष्टाः,

भवतश्चात्र।

कृष्णेऽष्टमी तन्निधनेऽहनी द्वे * शुक्ले तथाप्येवमहर्द्विसन्ध्यम्।
अकालविद्युत्स्तनयित्नुघोषे स्वतन्त्रराष्ट्रक्षितिपव्यथासु॥
श्मशानयानायतनाहवेषु महोत्सवौत्पातिकदर्शनेषु।
नाध्येयमन्येषु च येषु विप्रा नाधीयते नाशुचिना च नित्यम्॥ ६॥

इति सुश्रुत-संहितायां सूत्रस्थाने शिष्योपनयनीयो नाम द्वितीयोऽध्यायः॥ २॥

पापकारिणः गुरुतल्पगादयः। न च प्रतिकर्त्तव्यं नोपचरणीयम्, एवं विद्या प्रकाशते अनेन प्रकारेण विद्या स्वयमेव प्रकाशं याति, केचित् प्रकाश्यत इति पठन्ति॥ ५॥

इदानीमनध्ययनकालमाह—कृष्ण इति। कृष्णेऽष्टमी इति कृष्णपक्षे या अष्टमी, तन्निधने कृष्णपक्षावसाने अहनी द्वे चतुर्द्दश्यमावस्ये; शुक्ले शुक्लपक्षेऽपि तथा तेनैव प्रकारेण नाध्येयमिति। तेनात्रापि अष्टमीचतुर्द्दशीपौर्णमासीषु नाध्येयमिति। तत्प्रतिपदोस्तु पाठनिषेधः अन्येषु च येषु विप्रा नाधीयत इत्यनेन गम्यते। अन्ये तु प्रतिपदावन्यथा ग्रहीतुं व्याख्यानयन्ति। तन्निधने इति कृष्णपक्षावसाने अहनि नाध्येयं तेन अमावस्या गृहीता। अहनी द्वे इति कृष्णपक्षावसान-समीपे यौ द्वौ दिवसौ तयोरपि नाध्येयं तेन चतुर्द्दशीप्रतिपदौ। अहानि नियम्य अहरवयवान् नियन्तुमाह—अहर्द्विसन्ध्यमिति। अहनि द्वयोः सन्ध्ययोर्नाध्येयमिति। अकालविद्युत्स्तनयित्नुघोषे इति अकालशब्दो विद्युत्स्तनयित्नुघोषाभ्यां सह सम्बध्यते। तेन अकालविद्युत् अनार्त्तवा विद्युत्, विद्युद्ग्रहणमुपलक्षणं तेनाकालिकी वृष्टिर्गृह्यते। अकालवृष्टिः अनृतुवृष्टिः, सा तु हेमन्तशिशिरयोः। तथाचोक्तम्—पौषादिचतुरो मासान् स्मृता वृष्टिरकालिकीति। अकालस्तनयित्नुघोष इति अनृतुमेघ-गर्ज्जितम्, अन्ये सन्ध्यामेघगर्ज्जितमाचक्षते। स्वतन्त्रराष्ट्रक्षितिपव्यथासु इति स्वशब्दस्तन्त्रादिभिः प्रत्येकं सम्बध्यते, तेनात्मीयलोकदेशभूपपीड़ासु। श्मशानयानायतनाहवेषु इति श्मशानं मृतमर्त्त्य-दाहस्थानम्, आहवः संग्रामः। महोत्सवौत्पातिकदर्शनेषु इति महोत्सवाः शक्रोत्सवादयः। तथाहि—भाद्रपदपौर्णमास्यां शक्रस्य महोत्सवः, आश्विन्यां कौमुदीमहोत्सवः, उत्तरायणसंक्रान्तौ कुवेरमहोत्सवः, चैत्रशुक्लत्रयोदश्यां मदनमहोत्सवः इत्यादयः; उत्पातः अनिष्टसूचकनिमित्तं निर्घातादिः, अन्ये तु उत्पातं त्रिविधमाचक्षते, भौमम्, आन्तरीक्षं दिव्यमिति। तेषु मध्ये भौम उत्पातः स्थिराजातः, आन्तरीक्षो गन्धर्व्वपुरेन्द्रचापादिः, दिव्यो ग्रहनक्षत्रवैकृतोत्पातादिश्च। उत्पात एव औत्पातिकः। अनुक्तसंग्रहार्थमाह—नाध्येयमन्येषु चेत्यादि। ते कालविशेषाश्छन्दोगानां वचनादेवावगन्तव्या इति। अन्ये त्वत्र उच्छिष्टादिभोजवचनमाश्रयन्ति। कृष्णाष्टमीति केचित् पठन्ति॥ ६॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निवन्धसंग्रहे शिष्योपनयनीयव्याख्यानाम द्वितीयोऽध्यायः॥ २॥

---

* कृष्णेतरे इति पाठान्तरम्।

# तृतीयोऽध्यायः।

अथातोऽध्ययनसम्प्रदानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

प्रागभिहितं सविंशमध्यायशतं पञ्चसु स्थानेषु। तत्र सूत्रस्थानमध्यायाः षट्चत्वारिंशत्। षोड़श निदानानि। दश शारीराणि। चत्वारिंशच्चिकित-सितानि। अष्टौ कल्पाः। तदुत्तरं षट्षष्टिः ॥ २ ॥

वेदोत्पत्तिः शिष्यनयस्तथाध्ययनदानिकः।
प्रभाषणाग्रहरणात्तुचर्य्याथ यान्त्रिकः ॥
शस्त्रावचारणं योग्या विशिखा क्षारकल्पनम्।
अग्निकर्म्मजलौकाख्यावध्यायौ रक्तवर्णनम् ॥
दोषधातुमलाद्यानां विज्ञानाध्याय एव च।
कर्णव्यधामपक्वैषावालेपो व्रण्युपासनम् ॥
हिताहितो व्रणप्रश्नो व्रणास्रावश्च यः पृथक्।
कृत्याकृत्यविधिर्व्याधि-समुद्देशीय एव च ॥
विनिश्चयः शस्त्रविधौ प्रनष्टज्ञानिकस्तथा।
शल्योद्धृतिर्व्रणज्ञानं दूतस्वप्ननिदर्शनम् ॥

अथात इति। अधीयत इत्यध्ययनं शास्त्रम्। सम्यक् प्रविभज्य दानं सम्प्रदानम्। अविभक्त-मध्ययनं दातुमशक्यम्, अतस्तद्विभागायाह—प्रागिति। अस्य च वाक्यस्यार्थं आद्याध्याये उक्तः। प्रतिस्थानमध्यायान् संख्यातुमाह—तत्रेति ॥ १।२ ॥

प्रतिस्थानोक्तानामध्यायानां नामानि निर्द्देष्टुमाह—वेदोत्पत्तिरिति। शिष्यनयः शिष्योप-नयनीयः। अध्ययनदानिकः अध्ययनसम्प्रदानीयः। प्रभाषणः प्रभाषणीयः। अग्रहरणः अग्रोप-हरणीयः। ऋतुचर्य्या ऋतुचर्य्याध्यायः, यान्त्रिकः यन्त्रविधिः। शस्त्रावचारणं शस्त्रावचारणीयः। योग्या योग्यासूत्रीयः। विशिखा विशिखानुप्रवेशनीयः। क्षारकल्पनं क्षारपाकविधिः। अग्निकर्म्म अग्निकर्म्मविधिः। जलौकाख्यः जलौकावचारणीयः। रक्तवर्णनं शोणितवर्णनीयोऽध्यायः। दोषधातु-मलाद्यानां विज्ञानाध्यायः दोषधातुमलक्षयवृद्धिविज्ञानीयः। कर्णव्यधः कर्णव्यधबन्धविधिः। आम-पक्वैषः आमपक्वैषणीयः। आलेपः व्रणालेपनबन्धविधिः। व्रण्युपासनं व्रणितोपासनीयः। हिताहितः हिताहितीयाध्यायः। व्रणप्रश्नः व्रणप्रश्नाध्यायः। व्रणास्रावः व्रणास्रावविज्ञानीयः। शस्त्रविधौ विनिश्चयः अष्टविधशस्त्रकर्म्माध्यायः। प्रनष्टज्ञानिकः प्रनष्टशल्यविज्ञानीयः। शल्योद्धृतिः

पञ्चेन्द्रियं तथा छाया स्वभावाद् वैकृतं तथा।
वारणो युक्तसेनीय आतुरक्रमभूमिकौ ॥
मिश्रकाख्यो द्रव्यगणः संशुद्धौ शमने च यः।
द्रव्यादीनाञ्च विज्ञानं विशेषो द्रव्यगोऽपरः ॥
रसज्ञानं वमनार्थमध्यायो रेचनाय च।
द्रवद्रव्यविधिस्तद्वदन्नपानविधिस्तथा ॥
सूचनात् सूत्रणाच्चैव सन्धानाच्चार्थसन्ततेः।
षट्चत्वारिंशदध्यायं सूत्रस्थानं प्रचक्षते ॥ ३ ॥
वातव्याधिकमर्शांसि साश्मरिश्च भगन्दरः।
कुष्ठमेहोदरा मूढ़ो विद्रधिः परिसर्पणम् ॥
ग्रन्थि-वृद्धि-भग्न-शूक-क्षुद्राश्च * मुखरोगिकम्।
हेतुलक्षणनिर्देशान्निदानानीति षोड़श ॥ ४ ॥

शल्यापनयनीयः। व्रणज्ञानं विपरीताविपरीतव्रणविज्ञानीयः। दूतस्वप्ननिदर्शनं विपरीताविपरीत-दूतस्वप्ननिदर्शनीयाध्यायः। पञ्चेन्द्रियं पञ्चेन्द्रियार्थविप्रतिपत्तिः। छाया छायाविप्रतिपत्तिः। स्वभावाद् वैकृतं स्वभावविप्रतिपत्तिः। वारणः अवारणीयाध्यायः। आतुरक्रमः आतुरोपक्रमणीयाध्यायः। भूमिकः भूमिप्रविभागीयः। द्रव्यगणः द्रव्यसंग्रहणीयः। संशुद्धौ शमने च यः संशोधनसंशमनीयः। द्रव्यादीनाञ्च विज्ञानं द्रव्य-गुण रस-वीर्य्य-विपाकविज्ञानीयः। विशेषो द्रव्यगोऽपरः द्रव्यविशेषविज्ञानीयः। रसज्ञानं रसज्ञानीयः। वमनार्थमध्यायः वमनद्रव्यविकल्पविज्ञानीयः। रेचनाय च विरेचनद्रव्यविकल्पविज्ञानीयः। शेषास्तु निर्द्दिष्टनामप्रसिद्धा इति नोक्ताः। आतुरक्रममिश्रकाविति केचित् पठन्ति, तन्न, यतः पूर्व्वनिबन्धकारैरेष क्रमो नाङ्गीकृतः। सूत्रस्थानस्य निरुक्तिं कर्त्तुमाह—सूचनादिति। सूचनात् लेशतोऽर्थप्रकाशनात्। सूत्रणात् अर्थानां यथास्थानं विनिवेशनात्। सन्धानात् जननात् अर्थसन्ततेः अर्थसमूहस्य। षट्चत्वारिंशदध्याय-मिति सूत्रस्थानमध्यायाः षट्चत्वारिंशदिति प्रागेव संख्या निर्द्दिष्टा पुनरत्र संख्याकरणं नियमार्थम्, तेन द्रवद्रव्यान्नपानिकानामुदकगोरसतैलादिप्रकरणानां प्रत्येकमध्यायत्वं निराकृतम् ॥ ३ ॥

कानि पुनस्तानि षोड़श निदानानीत्याह—वातव्याधिकमिति। मूढ़गर्भादीनामेकदेशेन सूचनं लाघवार्थम्, एवम् उत्तरत्रापि बोद्धव्यम्। मूढ़ो मूढ़गर्भः। परिसर्पणं विसर्पनाड़ीस्तनरोगनिदानम्। ग्रन्थिरिति ग्रन्थ्यपच्यर्व्वुदगलगण्डनिदानम्। वृद्धिरिति वृद्ध्युपदंशश्लीपदनिदानम्। शूकः शूकदोषनिदानम्। निदाननिरुक्तिं प्रतिपादयन्नाह—हेत्वित्यादि। हेतव इति कारकहेतवः, ते बलवदविग्रहक्रोधदिवास्वप्नादयः। लक्षणानि ज्ञापकहेतवः, ते च पूर्व्वरूपरूपोपशयसंप्राप्तयः। निर्देशात् विवरणात् ॥ ४ ॥

---

* ग्रन्थिवृद्धिक्षुद्रशूकभग्नाश्च इति पाठान्तरम्।

भूतचिन्ता रजःशुद्धिर्गर्भावक्रान्तिरेव च ।
व्याकरणञ्च गर्भस्य शरीरस्य च यत् स्मृतम् ॥
प्रत्येकं मर्म्मनिर्द्देशः शिरावर्णनमेव च ।
शिराव्यधो धमनीनां गर्भिण्या व्याकृतिस्तथा ॥
निर्द्दिष्टानि दशैतानि शारीरानि महर्षिणा ।
विज्ञानार्थं शरीरस्य भिषजां योगिनामपि ॥ ५ ॥
द्विव्रणीयो व्रणः सद्यो भग्नानां वातरोगिकम् ।
महावातिकमर्शांसि साश्मरिश्च भगन्दरः ॥
कुष्ठानां महताञ्चापि मैहिकं पैड़िकं तथा ।
मधुमेहचिकित्सा च तथा चोदरिणामपि ॥
मूढ़गर्भचिकित्सा च विद्रधीनां विसर्पिणाम् ।
ग्रन्थिवृद्ध्युपदंशानां तथा च क्षुद्ररोगिकम् ॥
शूकदोषचिकित्सा च तथा च मुखरोगिणाम् ।
शोफस्थानागतानाञ्च निषेधो मिश्रकं तथा ॥
वाजीकरञ्च यत् क्षीणे सर्व्वाबाधशमोऽपि च ।
मेधायुष्करणञ्चापि स्वभावव्याधिवारणम् ॥

कानि पुनः शारीराणीत्याह—भूतचिन्तेति । भूतचिन्ता सर्व्वभूतचिन्ताशारीरम् । रजःशुद्धिः शुक्रशोणितशुद्धिशारीरम् । गर्भावक्रान्तिरिति अनेनैव नाम्ना प्रसिद्धा, गर्भावक्रान्तिः गर्भान्तः-प्रवेश इत्यर्थः । व्याकरणञ्च गर्भस्य गर्भव्याकरणशारीरम्, व्याकरणं विवरणम् । शरीरस्य च यत् स्मृतं शरीरसंख्याव्याकरणम् । शिरावर्णनं शिरावर्णनविभक्तिशारीरम् । शिराव्यधः शिराव्यध-विधिशारीरम् । व्याकृतिशब्दः धमनीगर्भिणीभ्यां प्रत्येकं सम्बध्यते । तेन धमनीव्याकृतिः धमनी-व्याकरणं शारीरम् । गर्भिणीव्याकृतिः गर्भिणीव्याकरणं शारीरम् । महर्षिणा इति महच्छब्दः पूजावचनः, तेन पूज्येन धन्वन्तरिणा । विज्ञानार्थं विशिष्टज्ञानार्थम् । योगः समाधिः स विद्यते येषां ते योगिनः तेषाम् ॥ ५ ॥

कानि पुनश्चिकित्सितानि इत्याह—द्विव्रणीय इति । व्रणः सद्यः सद्योव्रणचिकित्सितम् । वातरोगिकं वातव्याधिचिकित्सितम् । महावातिकं महावातव्याधिचिकित्सितम् । कुष्ठानां महताञ्चापि महाकुष्ठचिकित्सितम् । मैहिकं प्रमेहचिकित्सितम् । पैड़िकं प्रमेहपिड़काचिकित्सितम् । विसर्पिणां विसर्पनाड़ीस्तनरोगचिकित्सितम् । ग्रन्थिरिति ग्रन्थ्यपच्यर्व्वुदगलगण्डचिकित्सितम् । वृद्ध्युपदंशानां वृद्ध्युपदंशश्लीपदचिकित्सितम् । अनागतानां निषेध अनागताबाधप्रतिषेध-चिकित्सितम् । मिश्रकं मिश्रकचिकित्सितम् । वाजीकरञ्च यत् क्षीणे क्षीणबलीयवाजीकरण-

निवृत्तसन्तापकरं कीर्त्तितश्च रसायनम्।
स्नेहोपयौगिकः स्वेदो वमने च विरेचने * ॥
तयोर्व्यापच्चिकित्सा च नेत्रवस्तिविभागिकः ॥
नेत्रवस्तिविपत्सिद्धिस्तथा चोत्तरवस्तिकः।
निरूहक्रमसंज्ञश्च तथैवातुरसंज्ञकः।
धूमनस्यविधिश्चाग्रग-।-श्चत्वारिंशदिति स्मृताः ॥
प्रायश्चित्तं प्रशमनं चिकित्सा शान्तिकर्म्म च।
पर्य्यायास्तस्य निर्दिष्टाश्चिकित्सास्थानमुच्यते ॥ ६ ॥
अन्नस्य रक्षा विज्ञानं स्थावरस्येतरस्य च।
सर्पदष्टविषज्ञानं तस्यैव च चिकित्सितम् ॥
दुन्दुभेर्मूषिकाणाञ्च कीटानां कल्प एव च।
अष्टौ कल्पाः समाख्याता विषभेषजकल्पनात् ॥ ७ ॥
अध्यायानां शतं विंशमेवमेतदुदीरितम्।
अतः परं स्वनाम्नैव तन्त्रमुत्तरमुच्यते ॥

चिकित्सितम्। सर्व्वोबाधशमोऽपि सर्व्वोबाधशमनीयं रसायनम्। मेधायुष्करणञ्चापि मेधायुष्कामीयरसायनम्। स्वभावव्याधिवारणं स्वभावव्याधिप्रतिषेधनीयं रसायनम्। निवृत्तसन्तापकरं कीर्त्तितञ्च रसायनं निवृत्तसन्तापनीयं रसायनम्। स्वेदः स्वेदावचारणीयं चिकित्सितम्। वमने च विरेचने वमनविरेचनसाध्योपद्रवचिकित्सितम्, तयोर्व्यापच्चिकित्सा च वमनविरेचनव्यापच्चिकित्सितम्। नेत्रवस्तिविभागिकः नेत्रवस्तिप्रमाणप्रविभागचिकित्सितम्। नेत्रवस्तिविपत्सिद्धिः नेत्रवस्तिव्यापच्चिकित्सितम्। तथाचोत्तरवस्तिकः अनुवासनोत्तरवस्तिचिकित्सितम्। निरूहक्रमसंज्ञश्च निरूहोपक्रमचिकित्सितम्। तथैवातुरसंज्ञकः आतुरोपद्रवचिकित्सितम्। धूमनस्यविधिश्चाग्रगः धूमनस्यकवडग्रहचिकित्सितम्। अग्रे भवोऽग्रगः। चिकित्सितस्य पर्य्यायान्तरं दर्शयितुमाह—प्रायश्चित्तमिति। एते प्रायश्चित्तादयस्तस्य चिकित्सितस्य पर्य्यायाः। तस्यैवंपर्य्यायविनिर्द्दिष्टस्य चिकित्सितस्य निर्द्देशात् विवरणाच्चिकित्सास्थानं कथ्यते ॥ ६ ॥

के पुनः कल्पा इत्याह—अन्नस्येति। अन्नस्य रक्षाविज्ञानम् अन्नपानरक्षाविज्ञानीयः कल्पः। स्थावरस्य स्थावरविषविज्ञानीयः कल्पः। इतरस्य च जङ्गमविषविज्ञानीयः कल्पः। तस्यैव च चिकित्सितं सर्पदष्टचिकित्साकल्पः। दुन्दुभेः दुन्दुभिस्वनीयः कल्पः। मूषिकाणाञ्च मूषिककल्पः। कल्पनिरुक्तिं प्रतिपादयन्नाह—विषभेषजकल्पनादिति ॥ ७ ॥

पूर्व्वप्रतिज्ञामुपसंहरन्नाह—अध्यायानामित्यादि। एवमेतदिति अनन्तरोक्तम्। शल्यतन्त्रं

* वमनं सविरेचनमिति वा पाठः।

। धूमनस्यविधिश्चान्त्य इति पाठान्तरम्।

अधिकृत्य कृतं यस्मात् तन्त्रमेतदुपद्रवान्।
औपद्रविक इत्येष तस्याग्रत्वान्निरुच्यते ॥
सन्धौ वर्त्मनि शुक्ले च कृष्णे सर्व्वत्र दृष्टिषु।
संविज्ञानार्थमध्याया गदानान्तु प्रति प्रति ॥
चिकित्साप्रविभागीयो वाताभिष्यन्दवारणः।
पैत्तस्य श्लैष्मिकस्यापि रौधिरस्य तथैव च ॥
लेख्यभेद्यनिषेधौ च छेद्यानां वर्त्मदृष्टिषु।
क्रियाकल्पोऽभिघातश्च कर्णोत्थास्तच्चिकित्सितम् ॥
घ्राणोत्थानाञ्च विज्ञानं तद्गदप्रतिषेधनम्।
प्रतिश्यायनिषेधश्च शिरोगदविरेचनम्।
चिकित्सा तद्गदानाञ्च शालाक्यं तन्त्रमुच्यते ॥ ८ ॥

प्रतिपाद्य तदुत्तरमर्थवशादागतं प्रतिपादयन्नाह—अतःपरमिति। अतःपरम् उक्तस्थानपञ्चकादनन्तरम्, स्वनाम्नैव स्वसंज्ञयैव तन्त्रमुच्यते। किं तदात्मीयमस्य नाम येनोच्यते तत् तन्त्रमित्याह—उत्तरतन्त्रमिति, न शल्यतन्त्रं संज्ञया। कुतः पुनरौपद्रविकाध्यायस्योत्तरतन्त्रस्यादौ स्थितस्य औपद्रविक इति नाम कृतमिति? आह—अधिकृत्येति। अधिकृत्य अङ्गीकृत्य। उपद्रवान् रोगान्। यस्मात् तन्त्रमेतद् उत्तरतन्त्रं कृतम्, अतस्तस्योत्तरतन्त्रस्याग्रत्वात् प्रधानत्वाद् औपद्रविक इति नाम कृतमित्यर्थः। सन्धौ वर्त्मनि इत्यादिषु गतानां गदानान्तु प्रति प्रति सम्यग् विज्ञानार्थम् अध्याया इति सम्बन्धः। तेनायमर्थः—सन्धौ इति सन्धिगतरोगविज्ञानीयाध्यायः, वर्त्मनि इति वर्त्मगतरोगविज्ञानीयाध्यायः, शुक्ले च इति शुक्लगतरोगविज्ञानीयाध्यायः, कृष्णे इति कृष्णगतरोगविज्ञानीयाध्यायः, सर्व्वत्र इति सर्व्वगतरोगविज्ञानीयाध्यायः, दृष्टिषु इति दृष्टिगतरोगविज्ञानीयाध्यायः। पैत्तस्येत्यादिषु अभिष्यन्दवारण इति सम्बन्धः, तेन पैत्तस्य इति पित्ताभिष्यन्दप्रतिषेधाध्यायः। श्लैष्मिकस्य इति श्लेष्माभिष्यन्दप्रतिषेधाध्यायः, रौधिरस्य इति रक्ताभिष्यन्दप्रतिषेधाध्यायः, लेख्यभेद्यनिषेधौ च इति लेख्यरोगप्रतिषेधाध्यायः, भेद्यरोगप्रतिषेधाध्यायः, छेद्यानामिति छेद्यरोगप्रतिषेधाध्यायः; वर्त्मदृष्टिषु इति वर्त्मगतरोगप्रतिषेधाध्यायः दृष्टिगतरोगप्रतिषेधाध्यायः। अभिघातश्च इति नयनाभिघातप्रतिषेधाध्यायः। कर्णोत्थाः इति कर्णगतरोगविज्ञानीयाध्यायः; तच्चिकित्सितम् इति कर्णगतरोगप्रतिषेधाध्यायः, घ्राणोत्थानाञ्च विज्ञानम् इति नासागतरोगविज्ञानीयाध्यायः। तद्गदप्रतिषेधनम् इति नासागतरोगप्रतिषेधाध्यायः। प्रतिश्यायनिषेधश्च इति प्रतिश्यायप्रतिषेधाध्यायः। शिरोगदविरेचनम् इति शिरोरोगविज्ञानीयाध्यायः। चिकित्सा तद्गदानाञ्च इति शिरोरोगप्रतिषेधाध्यायः ॥ ८ ॥

नवग्रहाकृतिज्ञानं स्कन्दस्य च निषेधनम्।
अपस्मारशकुन्योश्च रेवत्याश्च पुनः पृथक्॥
पूतनायास्तथान्धाया मण्डिका शीतपूतना।
नैगमेषचिकित्सा च ग्रहोत्पत्तिः सयोनिजा।
कौमारतन्त्रमित्येतच्छारीरेषु च कीर्त्तितम्॥ ९॥
ज्वरातिसारशोषाणां गुल्महृद्रोगिणामपि।
पाण्डूनां रक्तपित्तस्य मूर्च्छायाः पानजाश्च ये॥
तृष्णायाश्छर्दिहिक्कानां निषेधः श्वासकासयोः।
स्वरभेदचिकित्सा च क्रिम्युदावर्त्तिनोः पृथक्॥
विसूचिकारोचकयोर्मूत्राघातविकृच्छ्रयोः।
इति कायचिकित्सायाः शेषमत्र प्रकीर्त्तितम्॥ १०॥
अमानुषनिषेधश्च तथापस्मारिकोऽपरः।
उन्मादप्रतिषेधश्च भूतविद्या निरुच्यते॥ ११

शालाक्यतन्त्रं समाप्य कुमारतन्त्रं दर्शयन्नाह—नवग्रहेत्यादि। स्कन्दस्य च निषेधन स्कन्दग्रहप्रतिषेधाध्यायः। अपस्मारशकुन्योश्च इति स्कन्दापस्मारप्रतिषेधाध्यायः, शकुनीप्रतिषेधाध्यायः। रेवत्याश्च पुनः पृथक् इति रेवतीप्रतिषेधाध्यायः। पूतनायाः इति पूतनाप्रतिषेधाध्यायः। तथान्धायाः इत्यत्रापि पूतनाशब्दः सम्बध्यते, तेन अन्धपूतनाप्रतिषेधाध्यायः। शीतपूतना इति शीतपूतनाप्रतिषेधाध्यायः। मण्डिका इति मुखमण्डिकाप्रतिषेधाध्यायः। नैगमेषचिकित्सा च इति नैगमेषप्रतिषेधाध्यायः। ग्रहोत्पत्तिरिति ग्रहोत्पत्तिप्रतिषेधाध्यायः। सयोनिजा इति योनिव्यापत्प्रतिषेधाध्यायः, सशब्दः सहार्थः। कौमारतन्त्रमिति इतिशब्दः कुमारतन्त्रपरिसमाप्तौ। किमेतावदेव कुमारतन्त्रम् अथवा अन्यदप्यस्तीति पृष्ट आह—शारीरेषु च कीर्त्तितमिति। किं तत् शारीरेषु उक्तम्? तद्यथा—रजःशुद्धिः गर्भावक्रान्तिरित्यादि॥ ९॥

का पुनरुत्तरतन्त्रे कायचिकित्सेति दर्शयन्नाह—ज्वरेति। निषेधः प्रतिषेधः, स च ज्वरादिभिः सह प्रत्येकं सम्बध्यते। तेन ज्वरप्रतिषेधोऽतीसारप्रतिषेध इत्यादि द्रष्टव्यम्। पानजाश्च ये इति मद्यपानजाश्च ये रोगास्तेषां प्रतिषेधः, एतेन पानात्ययप्रतिषेध इत्युक्तम्। स्वरभेदचिकित्सा च इति स्वरभेदप्रतिषेधः। मूत्राघातविकृच्छ्रयोरिति विशब्दश्छन्दःपूर्त्तये, तेन मूत्राघातप्रतिषेधः मूत्रकृच्छ्रप्रतिषेधः। इति कायचिकित्सायाः शेषमत्र प्रकीर्त्तितमिति इतिशब्दः समाप्तौ। अत्र उत्तरतन्त्रे कायचिकित्सायाः शेषं प्रकीर्त्तितं निर्दिष्टम्। शेषशब्देन शल्येऽपि निर्दिष्टमिति बोधयति॥ १०॥

कायचिकित्सां समाप्य भूतविद्यां प्रतिपादयन्नाह—अमानुषेत्यादि। अमानुषनिषेधः अमानुषोपसर्गप्रतिषेधः। आपस्मारिकः अपस्मारप्रतिषेधः॥ ११॥

रसभेदाः स्वस्थवृत्तिर्युक्तयस्तान्त्रिकाश्च याः।
दोषभेदा इति ज्ञेया अध्यायास्तन्त्रभूषणाः॥ १२॥
श्रेष्ठत्वादुत्तरं ह्येतत् तन्त्रमाहुर्महर्षयः।
बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरञ्चापि पश्चिमम्॥ १३॥
शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या।
भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते॥
वाजीकरं चिकित्सासु रसायनविधिस्तथा।
विषतन्त्रं पुनः कल्पाः शल्यज्ञानं समन्ततः॥
इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्।
विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि॥ १४॥

एतदवश्यमध्येयमधीत्य च कर्माण्यवश्यमुपासितव्यम्, उभयज्ञो हि भिषक् राजार्हो भवति॥ १५॥

तन्त्रभूषणाध्यायानाह—रसभेदा इति। रसभेदाः रसभेदकल्पः। इतिशब्दः समाप्तौ। एते अध्यायास्तन्त्रभूषणाः शास्त्रस्य अलङ्करणाः॥ १२॥

उत्तरतन्त्रस्य निरुक्तिं प्रतिपादयन्नाह - श्रेष्ठत्वादित्यादि। श्रेष्ठत्वाद् इति एतत्तन्त्रं महर्षयः श्रेष्ठत्वादुत्तरं ब्रुवन्ति। कुतः पुनरस्य श्रेष्ठत्वमित्याह—बह्वर्थसंग्रहात् श्रेष्ठमिति। शालाक्य-कुमाराबाधकायचिकित्साभूतविद्यातन्त्रभूषणाध्यायनिर्दिष्टानामर्थानां संग्रहात् श्रेष्ठमुत्तरतन्त्रम्। तस्य निरुक्तिपक्षान्तरमाह—उत्तरञ्चापि पश्चिममिति। पश्चिमत्वाद् वा इदं तन्त्रमुत्तरम्। शेषत्वादुत्तरं ह्येतदिति केचित् पठन्ति। पूर्व्वतन्त्रशेषत्वादिदं तन्त्रमुत्तरं श्रेष्ठत्वाद् वा इति व्याख्यानयन्ति॥१३॥

अष्टाङ्गस्यायुर्व्वेदस्य विस्तरेण प्रतिपादितस्य संक्षेपेण तन्त्रद्वये अवस्थानं नियमयन्नाह—शालाक्यतन्त्रमिति। इति चत्वारि तन्त्राणि उत्तरसंज्ञके तन्त्रे सन्ति। उत्तरतन्त्रे चतुर्णां तन्त्राणामवस्थानं प्रतिपाद्य पूर्व्वेऽपि शल्यतन्त्रे चतुर्णां तन्त्राणाम् अवस्थानं प्रतिपादयन्नाह—वाजीकरमिति। वाजीकरं चिकित्सासु यदुक्तं तथा रसायनविधिश्च यश्चिकित्सासूक्तः, तथा विषतन्त्रं कल्पाः कल्पस्थानोक्तं विषतन्त्रं तत् त्रयं पूर्व्वे शल्यतन्त्रे प्रतिपादितम्। शल्यज्ञानं शल्याङ्गज्ञानम्, समन्ततः सर्व्वत्र। इत्यष्टाङ्गमिदमिति इत्यनेन प्रकारेण। आदिदेवप्रकाशितं धन्वन्तरिणा प्रकटीकृतम्। युञ्जानाः प्रयोगं कुर्व्वाणाः॥ १४॥

एतदिति। एतत् तन्त्रं अवश्यमध्येयमिति निश्चयेन पठनीयम्, उपासितव्यमिति अभ्यसनीयम्, हि यस्मादर्थे, राजार्हः राजयोग्यो राजपूज्य इत्यर्थः॥ १५॥

भवन्ति चात्र।

यस्तु केवलशास्त्रज्ञः कर्म्मस्वपरिनिष्ठितः।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥ १६ ॥
यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रवहिष्कृतः।
स सत्सु पूजां नाप्नोति बधञ्चार्हति राजतः ॥ १७ ॥
उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि।
अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ १८ ॥
ओषध्योऽमृतकल्पास्तु शस्त्राशनिविषोपमाः।
भवन्त्यज्ञै रुपहृतास्तस्मादेतान् विवर्ज्जयेत् ॥ १९ ॥

भवन्ति चात्रेति। कर्म्मस्वपरिनिष्ठित इति कर्म्मसु विषये अनिपुणः अशिक्षित इत्यर्थः, अदृष्टकर्म्मेत्यन्ये। आहवः संग्रामः। यस्तु कर्म्मसु निष्णातः इति यः पुनः कर्म्मविषये सुशिक्षितः, शास्त्रवहिष्कृतः शास्त्रे च वहिर्भूतः, धार्ष्ट्यात् प्रागल्भ्यात् कर्म्म करोति, स राजतः राज्ञः सकाशात्, बधं चार्हति बधं प्राप्नोति। उभावेतावनिपुणौ द्वाविमौ अनिपुणौ अशिक्षितौ। स्वकर्म्मणि चिकित्सायाम्। अर्द्धवेदधरौ वेदशब्दोऽत्र ज्ञानार्थः, तेन अर्द्धज्ञानधरौ, शास्त्रज्ञः कर्म्मज्ञो वा। काविव एतावर्द्धवेदधरौ स्वकर्म्मण्यसमर्थौ इति ? आह— एतावेकपक्षाविव द्विजाविति। यथैकपक्षौ द्विजौ पक्षिणौ सर्व्वतो गमने असमर्थौ एतौ तद्वदित्यर्थः ॥ १६—१८ ॥

कुतः कारणात् शास्त्रवहिष्कृतो बधमर्हति राजत इति हेतुं प्रतिपादयन्नाह—ओषध्य इति। अमृतकल्पाः अमृततुल्याः। अज्ञै रुपहृताः ओषधीविषयाज्ञैः प्रयुक्ताः, ओषधेरज्ञानञ्च शास्त्रविहीनत्वात्। तथाचोक्तम्—यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रवहिष्कृत इति। ओषधीनां ज्ञानमपि नामरूपयोगभेदात् त्रिविधम्, तत्र नामादिषु मध्ये योगज्ञानं प्रधानम्। इदञ्च योगज्ञानं शास्त्रज्ञाने सति भवति। तस्मादेतान् विवर्ज्जयेत् इति एतान् शास्त्रज्ञानवहिष्कृतान् विशेषेण परिहरेत्। दृष्टान्तत्रयोपादानञ्च ऊर्द्धाधउभयभागव्यापन्निदर्शनार्थमित्येके। संशोधन पाचन-संशमनीयौषधव्यापन्निदर्शनार्थमित्यपरे। अनेककालानेकावस्थानत्वसूचनार्थमित्यन्ये। इतरे तु अत्र श्लोकाभ्याम् अन्यथा समाधानं दधति। तथाहि—"अथवैतत् त्रयं यद्वन्मिलितं मृत्युकारणम्। दुष्प्रयुक्तास्तु तास्तद्वन्नियतं मृत्युकारणम् ॥ अप्रसिद्धं क्वचित् किञ्चिदित्यर्थं व्याप्य तत् त्रयम्। गरुड़ाधिष्ठिते देशे विषमप्यविषं यथा ॥" अन्ये तु पुनरोषध्योऽमृतकल्पास्तथा स्नेहादिष्वनभिज्ञो य इत्यत्र उभयत उभावपि कर्म्मशास्त्रानभिज्ञावधिकुर्व्वते, तस्मादेतौ विवर्ज्जयेदिति च पठन्ति। एतौ पूर्व्वोक्तकेवलशास्त्रकर्म्मज्ञौ विवर्ज्जयेदिति व्याख्यानयन्ति च। एष पक्षः पञ्जिकायां विस्तरेणाप्याहृतः। यद्यपि ओषधिशब्दः फलपाकान्तेषु द्रव्येषु वर्त्तते, तथाप्यत्र समस्तद्रव्यवाची ग्रहीतव्यः, कुतः ? विशेषस्यानुपादानात् ॥ १९ ॥

स्नेहादिष्वनभिज्ञा ये छेद्यादिषु च कर्म्मसु।
ते निघ्नन्ति जनं लोभात् कुवैद्या नृपदोषतः॥ २०॥
यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने।
आहवे कर्म्म निर्व्वोढुं द्विचक्रः स्यन्दनो यथा॥ २१॥

अथ वत्स! तदेतदध्येयं यथा तथोपधारय मया प्रोच्यमानम्। अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा। ते च पदपादश्लोका भूयः क्रमेणानुसन्धेयाः। एवमेकैकशो घटयेदात्मना * चानुपठेत्। † अद्रुतमविलम्बितमविशङ्कितमननु-

इदानीं शास्त्रज्ञं कर्म्मानभिज्ञमधिकृत्याह—छेद्यादिष्विति। छेद्यादिभ्यः स्नेहादीनि कर्म्माणि प्रागुपयुज्यन्ते इति स्नेहादीनां प्रागुपादानम्। केचिच्छेद्यादीनां ग्रहणं प्राक् पठन्ति। कुवैद्याः इति कुशब्दः कुत्सावचनः। तेन शास्त्रज्ञानामपि कर्म्माज्ञानेन कुत्सितत्वं प्रतिपादयति। नृपदोषतः इति राज्ञामयं दोषो येन नाज्ञातकर्म्मणि प्रवर्त्तयितुं वैद्यान् निवारयन्ति भूपाः इति। केचित् कर्त्तृपदं सर्व्वत्रैकवचनान्तं पठन्ति छेद्यादिष्वनभिज्ञो य इत्यादि॥ २०॥

इदानीं शास्त्रज्ञकर्म्मज्ञस्य गुणं दर्शयन्नाह—यस्तूभयज्ञ इति। उभयज्ञः शास्त्रज्ञः कर्म्मज्ञश्च। मतिमान् ऊहापोहक्षम इत्यर्थः। अर्थसाधने आरोग्यकरणे। दृष्टान्तमाह—आहवे कर्म्म निर्व्वोढुमिति। आहवे संग्रामे, कर्म्म निर्व्वोढुं कर्म्म प्रवर्त्तयितुम्, स्यन्दनः रथः॥ २१॥

इदानीं प्रकृतमध्ययनं प्रस्तौति। अथ वत्सेति। अथेति आह्निकाद्यावश्यकादानन्तर्य्ये, आवश्यकमाह्निकं कृत्वेत्यर्थः। शुचये कृताह्निकत्वेन पवित्राय, कृतोत्तरासङ्गाय गृहीतोत्तरवस्त्राय, अव्याकुलाय एकचित्ताय, उपस्थिताय समीपस्थिताय, दूरस्थितौ अन्तरायसम्भवः; उपस्थिताय अभिवादनानन्तरं कृतोपस्थानाय इत्यन्ये। अध्ययनकाले प्रातरादौ अनध्यायवर्ज्जिते। शिष्याय उपनयनविधानेन अग्निसाक्षिकमनुशिष्टाय, यथाशक्ति शिष्यस्य शक्त्यनतिक्रमेण। पदं पादं श्लोकं वा इति अनेन त्रिविधां ग्रहणशक्तिं स्थापयति। तेन हीनशक्तये पदम्, तच्च पदं स्याद्यन्तं त्याद्यन्तं वा। तथाहि—शुचये कृतोत्तरासङ्गाय इत्यादि स्याद्यन्तं भवति, उपदिश्यते इति त्याद्यन्तम्। मध्यमशक्तये पादं श्लोकचतुर्थांशम्। उत्तमशक्तये श्लोकं चतुष्पादपरिपूर्णम्। ते च पदपादश्लोका उपदिष्टा भूयः पुनःपुनः क्रमेण अनुसन्धेयाः सन्धानीयाः। तथाहि—पदेन पादः, पदपादाभ्यां श्लोकः सन्धानीयः। एवमेकैकशो घटयेत् अनेन प्रकारेण एकमेकं प्रतिशिष्यं योजनिकां कारयेत्। आत्मना चानुपठेत् पठतः शिष्यस्य पश्चादाचार्य्यः स्वयं पठेत्, शिष्यस्य सुखपठनार्थम्। कायमनोभ्यां शिष्यं नियम्य पाठे वाचि नियमयितुमाह—अद्रुतमित्यादि।

---

* घटयेदित्यत्र घटयन् इति पाठान्तरम्।

† अतिद्रुतमतिविलम्बितमतिशङ्कितमिति वा पाठान्तरम्।

नासिकं व्यक्ताक्षरमपीड़ितवर्णमक्षिभ्रु वौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेत्। न चान्तरेण कश्चिद् व्रजेत् तयोरधीयानयोः॥ २२॥

भवतश्चात्र।

शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्ज्जितः।
पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात्॥ २३॥
वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्म्मनैपुणे।
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः॥ २४॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽध्ययनसम्प्रदानीयो नाम तृतीयोऽध्यायः॥ ३॥

अद्रुतम् असन्निकृष्टवर्णपदपादोच्चारणम्, अविलम्बितं नातिविस्रस्तम्, अशङ्कितं श्वासरहितम्, अननुनासिकं रूणणनमान् वर्ज्जयित्वा नासिकोच्चरितवर्ज्ज्यम्, अपीड़ितवर्णं वर्णमपीड़यन्, अक्षिभ्रु वौष्ठहस्तैरनभिनीतं अक्ष्यादिभिर्नर्त्तक इव अभिनयं न कुर्य्यादित्यर्थः, सुसंस्कृतं अक्लिष्टवर्णश्रुतिकम्, नात्युच्चैर्नातिनीचैरिति एतेनैतदुक्तं मध्यमेन स्वरेण पठेत्। न चान्तरेणेत्यादि तयोर्गुरुशिष्ययोर्मध्ये न कश्चित् गच्छेदित्यर्थः। अन्ये त्वन्यथा पठन्ति व्याख्यानयन्ति च। शास्त्रमुद्दिश्य तस्य सम्प्रदानायाह—अथ वत्सेत्यादि। वत्स सुश्रुत! इति गम्यते; शास्त्रप्रश्ने तस्याधिकृतत्वात्। कस्मै तद्देयमित्याह—शुचये इत्यादि॥ २२॥

पठतः शिष्यस्य शास्त्रान्तरावाप्तिहेतुमाह—भवतश्चात्रेत्यादि। शुचिः वाह्याभ्यन्तरशौचयुक्तः, गुरुपरः गुरुकार्य्यरतः, दक्षः नित्याभियुक्तः। तन्द्रा आलस्यम्॥ २३॥

अध्ययनान्तगः शिष्यः किं कुर्य्यादित्याह—वागित्यादि। वाक्सौष्ठवे अतिस्पष्टवाक्त्वे। प्रागल्भ्ये धार्ष्ट्ये। प्रागल्भ्यात् महतोऽपि रोगान् साध्यानुत्साही साधयति। तदभ्यासे कर्म्माभ्यासे, च शब्दात् कर्म्मदर्शनेऽपि। सिद्धौ च इति आरब्धाभिप्रेतार्थसाधनं सिद्धिः, चकारोऽत्र असाध्यानामनारम्भमनुक्तं समुच्चिनोति॥ २४॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अध्ययनसम्प्रदानीयव्याख्यानाम तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।

अथातः प्रभाषणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

अधिगतमप्यध्ययनमप्रभाषितमर्थतः खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति॥ २॥

भवति चात्र।

यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य।
एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद् वहन्ति॥ ३॥

तस्मात् सविंशमध्यायशतमनुपदपादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च। कस्मात्? सूक्ष्मा हि द्रव्यरसगुणवीर्य्यविपाकदोष-धातुमलाशय-मर्म्म-शिरास्नायुसन्ध्यस्थि-गर्भसम्भवद्रव्यसमूहविभागास्तथा प्रनष्टशल्योद्धरणव्रण-

अधीतशास्त्रस्य पुनरर्थतो व्याख्यानं प्रभाषणम्, तदधिकृत्य कृतोऽध्यायः प्रभाषणीयः। इदानीं प्रभाषणस्य प्रयोजनं दर्शयन्नाह —अधिगतमिति। एतेन एतदुक्तम्—सगुणमपि चन्दनं वहतो गर्द्दभस्य तद्गुणानजानतः केवलं व्यथाभागित्वमेव भवति। तद्वदधीतमपि शास्त्रमर्थद्वारेण अप्रभाषितं तदध्येतुः पुरुषस्य परिश्रमकरं भवति इत्यर्थः। अन्ये त्वप्रभाषितमित्यत्र अननुभाषितमिति पठन्ति, व्याख्यानयन्ति च—अनुशब्दः पश्चादर्थः, तेन अध्ययनस्यानु पश्चादर्थस्य प्रकर्षेण भाषणम् अनुभाषणम्, न कथमपि प्रथमम्। यथा खर इति। अर्थेषु मूढा अज्ञानाद् गर्द्दभवत् शास्त्रं वहन्ति॥ १—३॥

तस्मादिति। सविंशमध्यायशतं सहोत्तरतन्त्रेण विंशत्यधिकमध्यायशतम्। अनुपदपादश्लोकम् अनुशब्दो वीप्सार्थः, तेनायमर्थः— पदं पदं पादं पादं श्लोकं श्लोकमनुवर्णयितव्यम्, आचार्य्येण व्याख्यातव्यमित्यर्थः। कस्मादिति। हि शब्दो यस्मादर्थे, यस्मात् सूक्ष्मा द्रव्यादिविभागाः तस्मादनुवर्णयितव्यमिति पिण्डार्थः। तत्र द्रव्यं स्थावरादि, रसाः षट् मधुरादयः, गुणा गुर्व्वादयः, वीर्य्यं शीतोष्णं द्विविधम् अष्टविधं वा, द्वौ विपाकौ मधुरकटू, दोषा वातादयः, धातवो रसादयः, धातुग्रहणात् स्तन्यार्त्तवलसीकावसादयश्चोपधातवो गृह्यन्ते। द्वौ मलौ शकृन्मूत्रे, अन्ये तु सप्त मलानाचक्षते, तत्र द्वौ पूर्व्वोक्तौ, पञ्चानाञ्चेन्द्रियाधिष्ठानानां पञ्च, तथाहि—दूषिकासिंहानककर्णगूथरोमकूपप्रजननमलाश्चेति; मलाः पुरीषादयो धातुमलाश्चेत्येके। आशयाः सप्त शारीरोक्ता वातादीनाम्, स्त्रीणामष्टमो गर्भाशयः। सप्तोत्तरं मर्म्मशतम्, सप्त सिराशतानि, नव स्नायुशतानि, सन्धयो दशोत्तरे द्वे शते, अस्थीनि शतानि त्रीणि, आशयानां व्यक्तिं

विनिश्चयभग्नविकल्पाः साध्ययाप्यप्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः, किं पुनरल्पबुद्धेः। तस्मादवश्यमनुपद-पाद-श्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यश्च ॥ ४ ॥

अन्यशास्त्रोपपन्नानाञ्चार्थानामिहोपनीतानामर्थवशात् तेषां तद्विदेभ्य एव व्याख्यानमनुश्रोतव्यम्। कस्मात्? नह्येकस्मिन् शास्त्रे शक्यः सर्व्वशास्त्राणाम् अवरोधः कर्त्तुम् ॥ ५ ॥

भवन्ति चात्र।

एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम्।
तस्माद् बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ६ ॥

शारीरे वक्ष्यति। गर्भसम्भवद्रव्याणि शुक्रशोणितादीनि, आत्मपञ्चमहाभूतमनांसीत्यन्ये। समूहः सङ्घातः। एतेषां विभागा भेदाः। यस्मात् सूक्ष्मा इति हेतुपदं सर्व्वत्र सम्बध्यते। तथा प्रनष्टशल्योद्धरणादिविकल्पाः इति प्रनष्टशल्यं त्वगादिषु निलीनम्, व्रणविनिश्चयो वातादिभेदेन शुद्धया च षोड़शविधः, भग्नं संक्षेपेण द्विविधं सन्धिमुक्तं काण्डभग्नञ्च, प्रनष्टशल्योद्धरणादिभिः सह विकल्पशब्दः प्रत्येकं सम्बध्यते; विकल्पाः भेदाः। साध्ययाप्यप्रत्याख्येयता च विकाराणामिति। अत्र चशब्दात् सुखसाध्यता कृच्छ्रसाध्यता च गृह्यते। किमेत एव परं सूक्ष्मा इत्यनुक्तान् गुणानाह—एवमादयश्चान्ये विशेषा इति। आदिशब्दः प्रकारवाची, तेन एवम्प्रकाराश्चान्ये विशेषाः सूक्ष्मा इति प्रकारवाचिना आदिशब्देन द्योतितास्ते च शस्त्रकर्म्मणामष्टविधतादयो भेदाः। सहस्रशो ये विचिन्त्यमाना इति सहस्रशः सहस्रवारान्, ये इति द्रव्यादीनां भेदाः, विचिन्त्यमाना गुरुं विना इति शेषः। विमलविपुलबुद्धेरपि इति विमला बुद्धिर्मिथ्यासंशयज्ञानवर्ज्जिता। इत्थम्भूतस्यापि पुरुषस्य बुद्धिं व्याकुलीकुर्य्युः। अल्पबुद्धेस्तु का कथा? सहस्रशो येऽनुचिन्त्यमाना इत्यन्ये पठन्ति, व्याख्यानयन्ति च— श्रुतस्य पश्चादपि चिन्त्यमानाः, किं पुनरश्रुता इत्यनुशब्दार्थः। अनुपदपादेत्यादिपुनरुक्तिः शास्त्रस्य विषमत्वख्यापनाय ॥ ४ ॥

इदानीमन्यशास्त्रोपपन्नानामर्थानां शिष्यहितत्वेन विज्ञानोपायमाह—अन्यशास्त्रोपपन्नानामिति। अन्यशास्त्राणि व्याकरणसाङ्ख्यवैशेषिकज्योतिःशास्त्रादीनि। अन्यशास्त्राणि कायचिकित्सादीनि इत्यन्ये। उपपन्नाः निबद्धाः। इहोपनीतानाम् अत्रानीतानाम्, अर्थवशात् प्रयोजनाधीनत्वात्, तेषाम् इति अर्थानाम्, तद्विदेभ्यः व्याकरणादिविद्याचञ्चुः, अन्यशास्त्रोपपन्नानामित्यत्र अन्यशास्त्रविषयोपपन्नानामिति केचित् पठन्ति। इहोपनीतानामित्यत्र च इहोपपतितानामिति। न हीति हिशब्दो यस्मादर्थे ॥ ५ ॥

अमुमेवार्थं श्लोकेन स्पष्टीकर्त्तुमाह—भवन्ति चात्र। एकमिति। न हि अबहुश्रुतोऽत्र संक्षिप्तमप्यर्थान् वीजभूतान् अन्यशास्त्रासंस्कारादनायासेनावगच्छति। न कथञ्चिदनधीतशास्त्रो बहुश्रुतमात्रेण

शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥ ७ ॥
औपधेनवमौरभ्रं सौश्रुतं पौष्कलावतम् ।
शेषाणां शल्यतन्त्राणां मूलान्येतानि निर्दिशेत् ॥ ८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने प्रभापणीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

तद्विद्यो (वैद्यो) भवति । कथं न भवतीति दर्शयन्नाह—शास्त्रं गुरुमुखोद्गीर्णमिति । रोगात् शास्तीति उपवेदोऽपि शास्त्रमुच्यते, आयुरारोग्यदानेन धर्म्मार्थकामादीनां शासनाद् मरणात् त्रायत इति वा शास्त्रम् । उद्गीर्णम् उपदिष्टम् । आदाय गृहीत्वा, न ह्यादानमात्रेण गृहीतं किन्तु उपास्य च अर्थतश्चाभ्यस्य । असकृत् अनेकवारम् । अन्ये तु तस्कराः इति अन्ये तु पुनः वैद्यास्तस्कराश्चौराः, कस्मात् ? व्याधितेभ्यो वैद्यच्छद्मना वित्तापहरणात् प्राणहन्तृत्वाच्च ॥ ६ । ७ ॥

अन्यशास्त्रोपपन्नार्थविज्ञानोपायमभिधाय स्वशास्त्रोपपन्नानामर्थानां सम्यग्ज्ञानार्थं समानतन्त्राणि दर्शयितुमाह—औपधेनवमित्यादि । एतैश्चतुर्भिरौपधेनवादिभिः समानतन्त्रैः स्वकीयशास्त्रार्थानां मिथ्याज्ञानसंशयज्ञानानि स्फोटनीयानि । अन्ये तु गुरोरेव प्रभापणस्य मिथ्याज्ञानादयः औपधेनवादिशास्त्रैः निवर्त्तन्त इति व्याख्यानयन्ति । एतेनैतदुक्तम्—औपधनवादिशास्त्रैर्निवृत्तमिथ्याज्ञानादिना गुरुणा प्रभापणं कर्त्तव्यमिति । यद्यपि गुरुमुखादेव शिष्यस्य मिथ्याज्ञानादयो निवृत्तास्तथाप्यागमान्तरप्रत्ययार्थमौपधेनवादिशास्त्राणि निर्दिष्टानि । एतान्येव परतन्त्राणि आगमान्तरप्रत्ययार्थम्; कुत इत्याह—शेषाणां शल्यतन्त्राणामित्यादि । शेषाणां करवीर्यगोपुररक्षितप्रभृतिप्रणीतशल्यतन्त्राणाम्, कस्मात् ? तेषां तन्त्राणामेतन्मूलत्वात् । अन्ये तु शेषाणां करवीर्य्यादिप्रणीतानां शल्यतन्त्राणां मध्ये औपधेनवादितन्त्राणि सुव्याख्यातत्वेन मूलानि प्रधानानीति व्याख्यानयन्ति ॥ ८ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
प्रभाषणीयाध्यायव्याख्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः।

अथातोऽग्रोपहरणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

त्रिविधं कर्म्म। पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्मेति। तद् व्याधिं प्रति प्रत्युपदेक्ष्यामः। अस्मिन् शास्त्रे शस्त्रकर्म्मप्राधान्याच्छस्त्रकर्म्मैव तावत् पूर्व्वमुपदेक्ष्यामस्तत्सम्भारांश्च ॥ २ ॥

तच्च शस्त्रकर्म्माष्टविधम्। तद्यथा—छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति। अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि भवन्ति। तद्यथा—यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबुजाम्ब-

अथातोऽग्रोपहरणीयमिति। कर्म्मणोऽग्रे प्रथमत उपहरणं यन्त्रादिसम्भारस्य, तदधिकृत्य कृतोऽध्यायः अग्रोपहरणीयः। त्रिविधमिति। पूर्व्वकर्म्मेत्यादि। तन्त्रे के 'लङ्घनादि विरेकान्तं पूर्व्वकर्म्म व्रणस्य च। पाच-(ट)-नं रोपणं यच्च प्रधानं कर्म्म तत् स्मृतम्। बलवर्णाग्निकार्य्यन्तु पश्चात् कर्म्म समादिशेत्' इति। अन्ये तु संशोध्यस्य पाचनस्नेहनस्वेदनानि पूर्व्वकर्म्म, वमनविरेचनवस्तिनस्यशिरामोक्षणानि प्रधानं कर्म्म, पेयाद्यन्नसंसर्ज्जनं पश्चात् कर्म्म। अपरे तु चयादीनां पूर्व्वरूपान्तानामातङ्कोत्पत्तेः प्राक् यत् क्रियते तत् पूर्व्वकर्म्म, आतङ्कोत्पत्तौ यत् तत् प्रधानं कर्म्म, निवृत्तातङ्कस्यानुबन्धोपचरणाय यत् तत् पश्चात् कर्म्म। इदं तत् पूर्व्वकर्म्मेत्यादि इह कथं नोदाहियत इति प्रष्टुरुत्तरमाह—तद् व्याधिमित्यादि। तद् इति त्रिविधं कर्म्म व्याधिं व्याधिं प्रत्युपदेक्ष्यामः, न इह, ग्रन्थगौरवभयात्। ननु छेद्यादीनां कर्म्मणां तत्सम्भाराणामेव चात्र पूर्व्वमुपादानम्। कुतो न स्नेहादीनां तत्कर्म्मणाञ्चेत्याह—अस्मिन् शास्त्रे इत्यादि ॥ १ । २ ॥

तत् तु शस्त्रनिर्व्वर्त्त्यं कर्म्म नियताकृतिविशेषेण नानाविधप्रयोजनेन भिन्नं प्रदर्शयन्नाह—तच्च शस्त्रकर्म्मेत्यादि। छेद्यं निःशेषतश्छेदनीयमर्शःप्रभृति। भेद्यं भेदनीयं विद्रध्यादि। लेख्यं लेखनीयं रोहिण्यादि। वेध्यम् अल्पमुखैः शस्त्रैर्व्यधनीयं सिरादि। वेध्यस्थाने व्यध्यमित्येके पठन्ति। एष्यम् एषणीयं नाड्यादि। आहार्य्यम् आहरणीयं शर्करादि। विस्राव्यं विस्रावणीयम्, तच्च विद्रधिकुष्ठादि। सीव्यं सीवनीयम्, तच्च 'सीव्या मेदःसमुत्थाश्च भित्त्वा सुलिखिता गदाः' इति। यद्यपि छेद्यादयः शब्दा व्याधिवाचकास्तथापि अभेदोपचारात् शस्त्रकर्म्मव्यपदेशं लभन्ते। एषणाहरणे शस्त्रकर्म्मणि यद्यपि केचिन्न मन्यन्ते, तथापि छित्त्वा भित्त्वा अपि एषणाहरणे क्रियेते; अतोऽत्र शस्त्रकर्म्मणि निर्द्दिष्टे। अतोऽन्यतममिति। अतः एषां मध्ये अन्यतमं एकतमं कर्म्म

वौष्ठपिचुप्लोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि, परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः ॥ ३ ॥

ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्च्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं लघु भुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मशिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्याद् आ पूयदर्शनात्, सकृदेवापहरेच्छस्त्रमाशु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम् ॥ ४ ॥

छेद्यादिकं चिकीर्षता कर्त्तुमिच्छता पूर्व्वमेवोपकल्पयितव्यानि समीपमानेतव्यानि। जाम्बवौष्ठं जम्बूफलसदृशमुखाग्रकृष्णपाषाणरचितावर्त्तिः, पिचु तूलमिति प्रोक्तम्, प्लोतः कर्पटः, पट्टः व्रणबन्धनद्रव्यम्, तर्पणं जलप्लुतं शक्तुक्षीरादि, कषायः औषधक्कथितम्, उदकं जलम्, व्यजनं वंशादिरचितम्, कटाहः लौहादिनिर्म्मितः, आदिशब्दात् कवलिकामृत्कपालकलसस्थालीशयनासनादि। यन्त्रादिषु मध्ये कानिचिदुपकरणानि कर्म्माङ्गानि कानिचित् व्यापत्प्रशमनानि। परिकर्म्मिणश्चेति न केवलं यन्त्रादीन्येवोपकल्पयितव्यानि किन्तु परिकर्म्मिणश्च सर्व्वकर्म्मणां कर्त्तारः परिचालकाः, किं विशिष्टास्ते ? स्निग्धाः अनुरक्ताः, स्थिराः अचलाः, बलवन्तः सर्व्वकार्य्येषु समर्थाः ॥ ३ ॥

ततः प्रशस्तेष्विति। ततः यन्त्रादिसम्भारोपकल्पनानन्तरम्, तिथयः प्रतिपदादयः, करणानि बवादीनि, मुहूर्त्ताः त्रिंशत् शिवाद्याः, नक्षत्राणि अश्विनीप्रभृतीनि, प्रशस्तत्वञ्चैषां ज्योतिःशास्त्रविदां वचनात् ज्ञेयम्। अक्षतानि यवधान्यानि, रत्नानि माणिक्यमौक्तिकादीनि। कृतबलिमङ्गलस्वस्तिवाचनम् इति बलिः पूजोपहारः, मङ्गलं गीतादि, स्वस्तिवाचनमाशीर्व्वादोच्चारणम्, कृतशब्दो बलिप्रभृतिभिः सह प्रत्येकं सम्बध्यते। मर्म्माणि सप्तोत्तरशतभेदभिन्नानि, शिराः सप्तशतभेदभिन्नाः, नवशतभेदभिन्नाः स्नायवः, सन्धयः दशोत्तरद्विशतभेदभिन्नाः, अस्थीनि पञ्चाधिकशतत्रयभेदभिन्नानि, धमन्यः नाभिप्रभवाश्चतुर्व्विंशतिभेदभिन्नाः, एता परित्यजन्। अनुलोममिति लोमानुकूल्येन, येनैवावर्त्तेन लोमानि सन्ति तेनैवावर्त्तेनेत्यर्थः। प्रतिलोमन्तु लोमभिरेव प्रतिहतधारं शस्त्रं कुण्ठीभवति व्यथाञ्चोत्पादयति। निदध्यात् प्रवेशयेत्। कियद् दूरं शस्त्रं निदध्यादित्याह—आ पूयदर्शनादिति। सकृद् एकवारं न पुनःपुनरित्यर्थः। आशु च इति चशब्द एवार्थः, तेनोभयत्रापि नियमः, एतेन सकृदेव शस्त्रमपहरेद् आश्वेव शस्त्रमपहरेदितुयक्तम्। शस्त्रं प्रणिदध्यादित्यत्र शस्त्रप्रणिधानमात्रमुक्तम्। अपहरेत् शस्त्रमाशु चेत्यत्र शस्त्रशब्द आश्वपहरणक्रियया सम्बध्यते इति न पौनरुक्त्यम्। इदानीं सुदूरशस्त्रपाते अनर्थं सम्भावयन्नवधिमाह—महत्स्वित्यादि। महत्स्वपि च पाकेष्वित्यादि अन्तरशब्दोऽयमवकाशवाची, तेन शस्त्रपदं शस्त्रस्थानं द्व्यङ्गुलावकाशं त्र्यङ्गुलावकाशञ्चेतुयक्तम्, तत्र द्व्यङ्गुलावकाशं नात्यवगाढमिति। केचिदन्तरशब्दं न पठन्ति ॥ ४ ॥

तत्रायतो विशालः समः सुविभक्तो निराश्रय इति व्रणगुणाः ॥ ५ ॥

भवतश्चात्र।

आयतश्च विशालश्च सुविभक्तो निराश्रयः।
प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते ॥ ६ ॥
शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू।
असम्मोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥ ७ ॥

एकेन वा व्रणेनाशुध्यमाने नान्तरा बुद्ध्यावेक्ष्यापरान् व्रणान् कुर्य्यात् ॥ ८ ॥

व्रणकर्म्मणि प्राशस्त्यमाकृतिविशेषैराह—तत्रेत्यादि। तत्र इति शस्त्रकर्म्मणि, एते आयतत्वादयो व्रणगुणाः। आयतः दीर्घः, विशालः विस्तीर्णः, समः इति समपाकः, असमपाको हि किञ्चित् पक्वः किञ्चिदपक्वः शस्त्रपातनाय न सुखो भवति। अन्ये तु विशालशब्देन चतुरस्त्रमाचक्षते समशब्देन वृत्तम्। तदुक्तम्—आयतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमास इति, इह तिस्रो व्रणाकृतयो व्रणगुणत्वेन कर्म्मणि निर्दिष्टाः, अन्ये तु समो गोमूत्ररूपणवन्न विषमगतिः। स च सम इति आयतव्रणे विशेषणम्; सुविभक्तः सुव्यक्तः, सुष्ठु पृथग्भूतसकलावयवः। निराश्रयः जिह्वादन्तसन्ध्याद्यप्राप्यदेशमनाश्रितः। अन्ये त्वन्यथा व्याख्यानयन्ति, वैद्यकृतव्रणगुणानाह—तत्रायत इत्यादि। समो निम्नोन्नतत्वरहितः। सुविभक्तो हीनातिदोषत्यक्तः। इत्थम्भूते वैद्यकृते व्रणे कल्ककषायाद्यवचारणं सुखं क्रियते, अतो विपरीता व्रणदोषाः। शेषं सुगमम् ॥ ५ ॥

अमुमेवार्थं श्लोकेन स्फुटीकुर्वन्नाह—आयतश्चेत्यादि। एवंविधो व्रणः शस्त्रकर्म्मणि प्रशस्यते। आयतश्च विशालश्च इति द्विचकारेण आयतोऽपि विशालोऽपि आयतविशाल इति प्रतिपादयति। निराश्रयो मर्म्माद्यनाश्रितः, निराशय इत्यन्ये तत्राननुषङ्गीत्यर्थः। प्राप्तकालकृतश्चापीति युक्ते काले कृतः। एतेन शस्त्रक्षाराग्निसाध्यो बालवृद्धयोरप्राप्तकालः, तयोर्व्रणे शस्त्रादिनिषेधात्, अथवा शीतकाले अग्निसाध्यो व्रणो ग्रीष्मे स एवाप्राप्तकालः। अन्ये तु युक्तकालकृत इति पठन्ति। तत्र समपाक इत्याचक्षते। युक्तकालकृतः सम्यक्पाककृतः प्रतिक्रिय इत्यपरे। आयतश्च विशालश्चेत्यादि श्लोकं केचिन्न पठन्ति ॥ ६ ॥

अथ के वैद्यगुणाः शस्त्रकर्म्मणि? तानाह—शौर्य्येत्यादि। एते शौर्य्यादयो गुणा वैद्यस्य शस्त्रकर्म्मणि श्लाघ्यन्ते। शौर्य्यं निर्भयत्वम्, भयभीतो हि साध्यमपि व्रणमवगाढमूढं नारभते, आरब्धं वा अत्यवशेषयति। आशुक्रिया लघुहस्तता शीघ्रं शस्त्रकर्म्मकरणम्, आशुक्रियया आतुरस्य चिरं क्लमो न भवति। शस्त्रतैक्ष्ण्यं सुनिशितत्वं सुधारत्वञ्च, तेन रुजा न भवति; असम्मोहः असम्मूढता, स च आमपक्वव्रणपरिज्ञाने तथा प्राप्तानुष्ठाने च; व्रणच्छेदादिषु रक्तादिदर्शने असम्मोह इत्यन्ये। अमुमपि श्लोकं केचिन्न पठन्ति ॥ ७ ॥

अशुद्धावन्येऽपि व्रणाः कार्य्या इत्याह—एकेन वा व्रणेनेत्यादि। मा पुनः, अन्तरा मध्ये ॥ ८ ॥

भवति चात्र।

यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च।
तत्र तत्र व्रणं कुर्य्याद् यथा दोषो न तिष्ठति ॥ ९ ॥

तत्र भ्रू-गण्ड-शङ्ख-ललाटाक्षिपुटौष्ठ-दन्तवेष्ट-कक्ष-कुक्षि-वङ्क्षणेषु तिर्य्यक् च्छेद उक्तः ॥ १० ॥

चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥

अन्यथा तु शिरास्नायुच्छेदनमतिमात्रं वेदना चिराद् व्रणसंरोहो मांसकन्दीप्रादुर्भावश्चेति ॥ ११ ॥

मूढगर्भोदरार्शोऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म्म कुर्व्वीत ॥ १२ ॥

ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्याङ्गुल्या व्रणमभिमृद्य प्रक्षाल्य कषायेण प्लोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढ़ाम्

भवति चात्रेत्यादि। गतिं नाड़ीम्, उत्सङ्ग इव उत्सङ्गः, व्रणाशये हि चिरकालपूयावस्थानेनासमवदारितम् अन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते, उत् ऊर्द्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये। यथा दोषो न तिष्ठतीति दोषोऽत्र पूयः, अथवा पूयावस्थानाद् वातादयो दोषा अनुबध्नन्तीति पूय एव दोषशब्देनोच्यते, कारणे कार्य्योपचारात् ॥ ९ ॥

तिर्य्यक्छेदो व्यापत्सूक्तः, तस्य विशिष्टविषये प्रतिप्रसवं कुर्व्वन्नाह तत्र भ्रूगण्डेत्यादि। गण्डः कपोलः, अक्षिपुटः अक्षिवर्त्म, दन्तवेष्टं दन्तवेष्टमांसम्, कक्षः बाहुमूलम्। तथाच मेदिनी— 'कक्षः स्यादुत्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्द्धास्पदे च दोर्मूले कच्छवीरुत्तृणेषु च' इति। कुक्षिः उदरम्, वङ्क्षणम् ऊरुसन्धिः ॥ १० ॥

चन्द्रमण्डलवच्छेदानित्यादि सुगमम्। अन्यथा त्वित्यादि। मांसकन्दीप्रादुर्भावश्च कन्दाकारमांसाङ्कुरसम्भवः, कन्द एव कन्दी अल्पत्वात्। अन्यथा त्वित्यत्र अन्यत्र त्विति केचित् पठन्ति व्याख्यानयन्ति च —अन्यत्र यदि छेदन क्रियते इत्यर्थः। छेदनमित्यत्र क्षणनमिति पठन्ति, क्षणनं हिंसनम् ॥ ११ ॥

भुक्तवतः कर्म्म कुर्व्वीत इत्युक्तम्, तस्य विषयान्तरे प्रतिषेधं दर्शयन्नाह— मूढगर्भेत्यादि। मूढगर्भादिषु पञ्चसु अन्नपूर्णकोष्ठत्वाद् यन्त्रदानादिभिः कष्टं मरणं वा प्राप्नोत्यातुरः, अनिलश्च प्रकोपमेति। मुखरोगेषु आहारोऽङ्गुल्यादिपीड़नेन घृणया च निष्काशितः कर्म्मघातं करोति ॥ १२ ॥

इदानीं व्रणकर्मविधानमाह— ततः शस्त्रमित्यादि। ततः अनन्तरं शस्त्रकर्म्म कृत्वा, आश्वास्य शस्त्रकर्म्मजनितखेदमपनीय मूर्च्छादिनिवारणार्थम्, समन्तात् परिपीड्य सर्व्वत्र परिपीड़यित्वा पूयनिर्गमनार्थं व्रणमभिमृद्य व्रणमर्द्दनं कृत्वा शल्यपदमर्मकरणार्थम्, व्रणमभिमृज्येति केचित्

औषधयुक्तां वर्त्तिं प्रणिदध्यात्। ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां घनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद् वेदनारक्षोघ्नधूपैर्धूपयेद् रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत ॥ १३ ॥

ततो गुग्गुल्वगुरुसर्ज्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत्। आज्यशेषेण चास्य प्राणान् समालभेत ॥ १४ ॥

उदकुम्भाच्चापो गृहीत्वा प्रोक्षयन् रक्षाकर्म्म कुर्य्यात्, तद् वक्ष्यामः।

कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च।
रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥
नागाः पिशाचा गन्धर्व्वाः पितरो यक्षराक्षसाः।
अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ॥

पठन्ति, वालास्थिगत्युत्सङ्गादिविज्ञानार्थम् इति च व्याख्यानयन्ति। प्रक्षाल्य कषायेण ससराव सद्योव्रणविहितेन, तदूर्द्ध्वं यथास्वदोषहरौषधसिद्धेन कषायेण। वस्त्रेणोदकमादाय व्रणान्तर्गतं तिलकल्कमधुसर्पिःप्रगाढ़ां तिलकल्कादिभिरत्यर्थलिप्ताम् औषधयुक्तां मिश्रकोक्ताजगन्धाजशृङ्गी चेत्यादिसंशोधनौषधयुक्तां वर्त्तिं प्रणिदध्यात् प्रवेशयेत्। कल्केन सद्योव्रणौषधपिण्डेन, कवलिका व्रणकल्कौषधाच्छादनद्रव्यम्, सा चौषधस्वरसानां निःसरणनिवारणार्थं भग्नोक्तपलाशोडुम्बरादीनां त्वक्पत्रादिकृता। अन्ये द्विगुणचतुर्गुणमृदुकर्पटविरचितां कवलिकामाहुः। भृष्टयवशक्तुभिर्घृताक्तां घनां कवलिकां दद्यादित्यपरे। वेदनारक्षोघ्नैरिति वेदनाघ्नानि रुजाघ्नानि हिङ्गुलवणादीनि, रक्षोघ्नानि राक्षसघ्नानि वचादीनि, तैः ॥ १३ ॥

धूपद्रव्याण्याह – ततो गुग्गुल्वित्यादि। न केवलं व्रणं धूपयेत् शयनाद्यपि, व्रणदौर्गन्ध्यापगमार्थं नीलमक्षिकादिपरिहारार्थञ्च। अन्यथा नीलमक्षिकोपसर्पनाद् व्रणे क्रिमयः पतन्ति। आज्यशेषेणेत्यादि। आज्यशेषेण धूपनद्रव्येभ्य आज्यमिश्रेभ्यः परिशिष्टेन घृतेन। प्राणशब्देनात्र हृदयादय उच्यन्ते प्राणाधिष्ठानत्वात्। तान् समालभेत म्रक्षयेदभ्यञ्जयेदित्यर्थः प्राणाप्यायनार्थम् ॥ १४ ॥

इदानीं व्रणितस्य शोणितपूयादिसम्भवाद् रक्षोभयपरिहारार्थं रक्षाकर्म्म निदर्शयन्नाह—उदकुम्भाच्चेत्यादि। उदकुम्भात् पानीयकुम्भात् अपः जलं गृहीत्वा आदाय प्रोक्षयन् प्रमार्ज्जयन्। रक्षाकर्म्मनिर्द्दिष्टपादानां मन्त्रत्वाद् विवरणं न करणीयमिति केचित। अन्ये तु व्याख्यानयन्ति। कृत्यानामिति। कुपितमन्त्रिणोऽभिचारकर्म्मजनिता राक्षसी कृत्या इत्युच्यते, प्रतिघातार्थं निवारणार्थम्, अत्र परिरक्षार्थमिति केचित् पठन्ति। तथा रक्षोभयस्य चेति राक्षसभयस्य च प्रतिघातार्थमित्यर्थः। ब्रह्मा तदनुमन्यतामिति तद् रक्षाकर्म्म ब्रह्मा अङ्गीकरोतु। नागा इत्यादि। ये ये नागादयस्त्वामभिद्रवन्ति पीड़यन्ति तान् ब्रह्माद्या देवा घ्नन्त्विति पिण्डार्थः। तत्र नागाः वासुक्यादयः, पिशाचाः पिशिताशनाः, गन्धर्व्वाः देवगायनाः हाहाहूहूप्रभृतयः, पितरः

पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः।
दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः॥
पान्तु त्वां मुनयो ब्राह्म्या दिव्या राजर्षयस्तथा।
पर्व्वताश्चैव नद्यश्च सर्व्वाः सर्व्वेऽपि सागराः॥
अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च।
सोमो व्यानमपानं ते पर्ज्जन्यः परिरक्षतु॥
उदानं विद्युतः पान्तु समानं स्तनयित्नवः।
वलमिन्द्रो वलपतिर्मनुर्मन्ये मतिं तथा॥
कामांस्ते पान्तु गन्धर्व्वाः सत्त्वमिन्द्रोऽभिरक्षतु।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम्॥
चक्षुः सूर्य्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव॥
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा।
आकाशं खानि ते पातु देहं तव वसुन्धरा॥
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम्।
पौरुषं पुरुषश्रेष्ठो ब्रह्मात्मानं ध्रुवो भ्रुवौ॥
एता देहे विशेषेण तव नित्या हि देवताः।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि॥

अग्निस्वात्तादयः, यक्षाः धनदादयः, राक्षसाः रावणप्रभृतयः। दिक्षु इत्यत्र ये चरन्तीति सम्बध्यते; वास्तुनिवासाः गृहभूमिनिवासिनः। प्राणानिति अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः; अत्र द्वादशप्राणेषु मध्ये सामान्यवातवाच्योऽपि वातशब्दः प्राणाख्ये वातविशेषे वर्त्तते। कुतः? चतुर्णां व्यानादीनामग्रे वक्ष्यमाणत्वात्। सोमः चन्द्रमाः, ते तव, पर्ज्जन्यः वृष्टिमान् मेघः, इन्द्र इत्यन्ये; स्तनयित्नवः मेघाः, बलपतिरिति इन्द्रस्य विशेषणम्, मनुः प्रजापतिः, मन्ये ग्रीवापश्चिमभागाश्रिते द्वे शिरे मन्ये इत्युच्येते, मतिं तथा स एव मनुर्मतिं रक्षत्विति सम्बन्धः। तथा मनुर्मतिं रक्षतु इत्यहं मन्ये इति व्याख्यानयन्ति केचित्। सत्त्वं गुणविशेषः, मनः चित्तम्, रूपम् इह लावण्यं विवक्षितं यत्पर्य्यायः सौन्दर्य्यम्। छाया प्रभाभेदः, तदुक्तम्—'आसन्ना लक्ष्यते छाया प्रभा दूरात् प्रकाशते' इति। रेतः शुक्रम्, आपः पानीयानि, आप्याययन्तु वर्द्धयन्तु, खानि स्रोतांसि, इन्द्रियाणीत्यन्ये। पराक्रमः सामर्थ्यम्, पौरुषं मेढ्रम्, पुरुषश्रेष्ठः नारायणः, आत्मानं जीवम्, ध्रुवः ताराविशेषः। एताः पूर्व्वोक्ता देवताः, नित्याः सततस्थिताः।

स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्व्वताम्।
स्वस्ति ते चन्द्रसूर्य्यौ च स्वस्ति नारदपर्व्वतौ॥
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवा सहेन्द्रगाः।
पितामहकृता रक्षा स्वस्त्यायुर्वर्द्धतां तव।
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः॥

इति स्वाहा।

एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः।
मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि॥ १५॥

ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत्। ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद् वस्त्रपट्टेन, न चैनं त्वरमाणोऽपरेद्युर्मोक्षयेत्॥ १६॥

द्वितीयदिवसे परिमोक्षणाद् विग्रथितो व्रणश्चिरादुपसंरोहति तीव्ररुजश्च भवति। अत ऊर्द्ध्वं दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात्। न चैनं त्वरमाणः सान्तर्दोषं रोपयेत्, स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयो विकरोति॥ १७॥

स्वस्ति ते भगवान् ब्रह्मेति। स्वस्ति मङ्गलम्, भगवान् विशिष्टज्ञानवान्, देवाः सहेन्द्रगाः इन्द्रानुयायिन इत्यर्थः। पितामहः ब्रह्मा, ईतयः अन्नादिक्षयहेतवः अतिवृष्ट्यादयः। तदुक्तम्—"अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः"॥ १५॥

इदानीं कृतरक्षस्येतिकर्त्तव्यतां दर्शयन्नाह— ततः कृतरक्षमित्यादि। आगारं गृहम्, आचारिकं द्विविधं आहारविहारलक्षणं व्रणितोपासनीयनिर्द्दिष्टम्। न चैनमिति। एनं व्रणम्, त्वरमाणः शीघ्रीभवन्, अपरेद्युः द्वितीयदिवसे न मोक्षयेत्। ततस्तृतीयेऽहनि विमुच्य प्रक्षाल्य कषायेणैव एवं बध्नीयाद् वस्त्रपट्टेनेति केचित् पठन्ति। कषायेण सद्योव्रणोक्तानां द्रव्याणां क्वाथेन, एवं पूर्व्ववत्॥ १६॥

द्वितीये दिवसे मोक्षणाद् दोषं वक्तुमाह—द्वितीयेत्यादि। विग्रथितः अग्रथितः। अन्ये तु विग्रथित इत्यत्र वि-शब्दस्य स्थाने हि-शब्दं पठन्ति व्याख्यानयन्ति च, हि-शब्दो यस्मादर्थे, यस्माद् ग्रथितः सम्यक् नाङ्कुरितो ग्रन्थिभूतस्तस्मान्न संरोहति, उग्रवेदनश्च व्रणो भवति इत्यर्थः। अत ऊर्द्ध्वमित्यादि। अत ऊर्द्ध्वं तृतीयदिवसानन्तरं, दोषाः वातादयः, कालः हेमन्तादिकः, बलं हीनमध्यमोत्तमम्, आदिशब्दाद् वयःसात्म्यादीनि अवेक्ष्य परीक्ष्य, विदध्यात् कुर्य्यात् यावद् व्रणसंरोहणं भवति। अन्ये त्वन्यथा पठन्ति, अत ऊर्द्ध्वं दोषकालबलादीन्यवेक्ष्य कषायादीन् विदध्यादिति, व्याख्यानयन्ति च—अतऊर्द्ध्वमिति तृतीयबन्धादनन्तरं चतुर्थबन्धे दोषादीनि परीक्ष्य कषायादीन् विदध्यात्। कषायादीनित्यादिशब्दात् कल्कस्नेहादीनां ग्रहणम्। न चैनमित्यादि। सान्तर्दोषम् अभ्यन्तरं पूयसहितम्, अल्पेनाप्यपचारेण इति स्तोकेनापि विरुद्धकर्म्मणा, भूयः पुनः, विकरोति विशेषेण करोति॥ १७॥

भवन्ति चात्र ।

तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद् व्रणम् ।
रूढे ऽप्यजीर्णव्यायाम-व्यवायादीन् विवर्ज्जयेत् ।
हर्षं क्रोधं भयञ्चापि यावत् स्थैर्य्योपसम्भवात् ॥ १८ ॥
हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् ।
त्र्यहाद् द्व्यहाच्छरद्ग्रीष्म-वर्षास्वपि च बुद्धिमान् ॥ १९ ॥
अतिपातिषु रोगेषु नेच्छेद् विधिमिमं भिषक् ।
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम् ॥ २० ॥
या वेदना शस्त्रनिपातजाता तीव्रा शरीरं प्रदुनोति जन्तोः ।
घृतेन सा शान्तिमुपैति सिक्ता कोष्णेन यष्टीमधुकान्वितेन ॥ २१ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽग्रोपहरणीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

भवन्ति चात्रेत्यादि । शुद्धाश्च वर्णरसस्थानगन्धाश्चत्वारः । रूढ इत्यादि । केचित् हर्षं क्रोधं भयमित्यादि श्लोकं न पठन्ति, व्यवायादीनित्यादिशब्दाद् भयहर्षादीनि गृह्णन्ति ॥ १८ ॥

ननु किं सर्व्वदैव त्र्यहान्मोक्षयोऽथ किञ्चिदन्तरेणेत्याह—हेमन्ते शिशिरे चैवेत्यादि । हेमन्तादिषु त्र्यहान्मोक्षयेत्, तेषु शीतत्वेन शीघ्रपाकभयाभावात् । शरदादिषु द्व्यहान्मोक्षयेत् तेषामुष्णत्वेन शीघ्रपाकागमभयात् । हेमन्ते शिशिरे चैवेति एवशब्दो हेमन्तशिशिरयोस्त्र्यहे एव मोक्ष इति नियमयति, चकारस्तु पैत्तिकव्रणस्य नियमं व्यभिचारयति, तेन पैत्तिकस्य हेमन्त-शिशिरयोर्यथार्हं मोक्ष इति । वसन्ते चापीति अपिशब्दाद् वैशाखस्योष्णत्वात् कदाचिद् द्व्यहेऽपि मोक्षः, तथा पैत्तिकस्य द्विरह्नो बन्ध इति च समुच्चिनोति । शरद्ग्रीष्मवर्षास्वपि चेति अपिच-ग्रहणं क्वचिद् द्व्यहमोक्षणविधिमपि व्रणमेकस्मिन् दिने द्विर्बध्नीयात् । अन्ये तु शिशिरग्रहणम् अपास्य 'हेमन्ते च वसन्ते च प्रावृट्काले च मोक्षयेत्' इति पठन्ति, तन्न, पञ्जिकया दूषितत्वात् । ननु हेमन्तादयः शरदादयश्च न समानास्तत् कथं तेषु तुल्यकालं व्रणमोक्षणम् ? उच्यते, त्र्यहादेव द्व्यहादेवेति नियमो न कृतस्तेन हेमन्तादीनां शरदादीनाञ्च उत्कर्षापकर्षान् समीक्ष्य व्रणमोक्षणं कर्त्तव्यमित्यदोषः ॥ १९ ॥

ननु (कथं) सर्व्वत्रैव सम्भृतसम्भारस्य छेद्यादि कर्त्तव्यमुत अन्यथापीत्याह— अतिपातिष्वित्यादि । अतिपातिषु आशुकारिषु, अथवा अतिपातिषु रोगेषु बन्धकालादिनियमव्यभिचारार्थं एवायं श्लोक इति ॥ २० ॥

शस्त्रपाते अवस्थां चिकित्सितुमाह—या वेदनेत्यादि । प्रदुनोति उपतापयति, क्वचित् प्रतनोतीति पाठः, तत्र व्याप्नोतीत्यर्थः ॥ २१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अग्रोपहरणीयव्याख्यानाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ।

**अथात ऋतुचर्य्यमध्यायं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते । स सूक्ष्मामपि कलां न लीयत इति कालः, सङ्कलयति कालयति वा भूतानीति कालः ॥ २ ॥

अथात इत्यादि । ऋतवो द्विमासिकाः शिशिरादयो हेमन्तान्ताः षट्, वर्षादयः प्रावृडन्ता वा, तेषु चर्य्या चरणं वर्त्तनं तदधिकृत्य कृतोऽध्यायः ऋतुचर्य्यस्तं व्याख्यास्यामः । ऋतुचर्य्यमिति केचिदन्यथा व्याख्यानयन्ति । चरधातोर्गतिभक्षणार्थस्य चर्य्यमिति रूपम्, तेन आहारो विहारश्च चर्य्यशब्देनोच्यते । अन्ये तु अथात ऋतुचर्य्यानामाध्यायमिति पठन्ति, व्याख्यानयन्ति च—चर्य्या शास्त्रनियमित आचारः, ऋतुषु ऋतूनां वा चर्य्या ऋतुचर्य्या, ऋतुचर्य्यार्थोऽध्यायः ऋतुचर्य्या । यथा—प्रदीपार्था मल्लिका प्रदीप इति । नामशब्दः संज्ञायाम् । ऋतुचर्य्यां स्वस्थवृत्तेऽपि वक्ष्यति ॥ १ ॥

तत्र यदङ्गभूता ऋतवस्तमेव प्रथमं स्वगुणकर्म्मनिरुक्तिभिर्दर्शयन्नाह—कालो हि नामेत्यादि । हि उपदर्शने, नामशब्दः प्रसिद्धौ, काल इति प्रसिद्ध उपदर्श्यते । स्वयम्भूरिति न केनाप्युत्पाद्यते । अनादिमध्येत्यादि । आदिरुत्पत्तिः, आद्यन्तयोरन्तरा मध्यम्, निधनं विनाशः, एतैर्वर्ज्जितः । स्वधर्म्मेण कालमुक्त्वा कर्म्मणा चिकित्सोपयोगितां निदर्शयन्नाह—अत्र रसव्यापदित्यादि । अत्र काले, रसस्य मधुरादेः, रसशब्देनात्र रसवद् द्रव्यमुच्यते अभेदोपचारादित्यन्ये । व्यापत् विपन्नता, सम्पत्तिः सम्पन्नता, आयत्ते अधीने । जीवितमरणे च इति चकारोऽयम् अत्रशब्द-मिहानुवर्त्तयति, तेन जीवितमरणे अत्रायत्ते, जीवितस्योत्पत्त्यधीनत्वादिति सामर्थ्याद् उत्पत्तिरपि कालाधीनैव । कथमेकस्मात् कालद्रव्यात् सम्पद्व्यापत्ती जीवितमरणे च परस्परविरुद्धे स्याताम् ? न ह्येकस्मादग्नेः शीतोष्णौ, एकस्माद् वा प्रदीपात् प्रकाशतमसीति । सत्यम्, कालशब्देनात्र काल-त्वोपाधिः शीतादिभेदभिन्नः शिशिरादिरभिधीयते, तस्य च सम्यङ्मिथ्याभ्यां योगाभ्याम् योन्य-विरुद्धयोरपि कार्य्ययोः सम्भव इत्यदोषः । कालस्य निरुक्तिं कुर्व्वन्नाह - स सूक्ष्मामित्यादि । सः कालः सूक्ष्मामपि स्तोकामपि कलां भागं न लीयते गतिमत्त्वात् श्लिष्टो न भवति । अन्ये तु न लीयत इत्यत्र कलीयते संख्यायते इति पठन्ति, व्याख्यानयन्ति च—कलीयते संख्यायते इति कालः । निरुक्तिपक्षान्तरमाह—सङ्कलयतीत्यादि । सङ्कलयति संहरणादेकराशीकरोति भूतानीति वा कालः, सङ्कलयति सुखदुःखाभ्यां भूतानि योजयतीति वा कालः, कालयति सङ्क्षिप्यतीति वा कालः, अथवा कालयति मृत्युसमीपं नयतीति वा कालः । अन्ये तु कालयतीत्यत्र कलयतीति पठन्ति, कलयति संख्यातीति वा कालः इति च व्याख्यानयन्ति ॥ २ ॥

तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेणाक्षिनिमेषकाष्ठाकला-मुहूर्त्ताहोरात्रपक्षमासर्त्त्वयनसंवत्सरयुगप्रविभागं करोति ॥ ३ ॥

तत्र लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषः। पञ्चदशाक्षिनिमेषाः काष्ठा। त्रिंशत् काष्ठाः कलाः। विंशतिकलो मुहूर्त्तः कलादशभागश्च। त्रिंशन्मुहूर्त्तमहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। स च द्विविधः शुक्लः कृष्णश्च। तौ मासः ॥ ४ ॥

तत्र माघादयो द्वादश मासा द्विमासिकमृतुं कृत्वा षड्ऋतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्ज्जौ शरत्। सहःसहस्यौ हेमन्त इति ॥ ५ ॥

त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालविभागकरत्वादयने द्वे भवतः

तस्य संवत्सरेत्यादि। तस्य कालस्य, किं विशिष्टस्य ? संवत्सरात्मनः संवत्सरस्वरूपस्य। संवत्सरात्मनः संवत्सरशरीरस्य इत्यन्ये। भगवानादित्यः इत्युपलक्षणम्, तेन चन्द्रोऽपि गृह्यते निशाकरणत्वादिहेतुत्वात्। अथवा रविरेव भगवान् माहात्म्यवान् स्वरश्मिभिः शीतोष्णवर्षाः कुरुते, कालविभागञ्च गतिविशेषेणात्मीयेनोदयास्तगमनलक्षणेन। ननु संवत्सरात्मन इति किमुक्तम् ? येन ऋत्वन्तराणां दिनान्तराणां वा सर्व्वेषां धर्म्मावरोधः कृतः ? शीतोष्णवृष्टिभेदेन तेषामत्यन्त-भिन्नत्वात्। संवत्सरे पुनरेकस्मिन्नेव सर्व्वेषां भूतभवद्भविष्यतां दिवसानामृतूनां संवत्सरान्त-राणाञ्च धर्म्मोऽवरुध्यते इति यथोक्तमेव न्याय्यम् ॥ ३ ॥

इदानीं संवत्सरांशान् निमेषादीन् विवरितुमाह—तत्र लघ्वक्षरेत्यादि। तत्र तेषु मध्ये लघ्वक्षरम् अकारादि, तस्योच्चारणं कण्ठतालव्यादिव्यापारेणोदीरणम्, तत्प्रमाणो निमेषः। ननु लघ्वक्षरोच्चारणादिना निमेषादयो विभज्यन्ते, तत् कथं भगवानादित्यो गतिविशेषेण निमेषादीनां विभागं करोतीत्युक्तम् ? नैष दोषः, यतो ज्योतिषिका निमेषादिप्रविभागेण शङ्कुच्छायामागमोक्ता-मर्कगत्यापि प्रमाणयन्ति। सा तु न सर्व्वजनप्रसिद्धेति न निर्द्दिष्टा। कलादशभागश्चेति कलाया दशमो भागस्त्रिंशः काष्ठाः। त्रिंशत्कलो मुहूर्त्त इति पाठो निबन्धैर्विस्तरेण दूषितः। शुक्लकृष्णश्चेति पक्षक्रमोऽमावस्यावधिमासं ज्ञापयति। अन्ये तु कृष्णः शुक्लश्चेति पठन्ति ॥ ४ ॥

तत्र माघादय इत्यादि। तेषाम् ऋतूनां मध्ये। तपाः माघः, तपस्यः फाल्गुनः, मधुश्चैत्रः, माधवो वैशाखः, शुचिर्ज्यैष्ठः, शुक्रः आषाढः; अन्ये तु शुक्रो ज्यैष्ठः, शुचिराषाढ इति मन्यन्ते। नभाः श्रावणः, नभस्यः भाद्रपदः, इषः आश्विनः, ऊर्ज्जः कार्त्तिकः, सहाः मार्गशीर्षः, सहस्यः पौषः। शिशिरादिरयमृतुविभागो रसबलमधिकृत्योक्तः। चरकेऽपि तस्याशितीये रसबलनिष्पत्त्यर्थं शिशिरादि-विभागो दर्शितः। अन्ये त्वन्यथा व्याख्यानयन्ति। तत्रेति गङ्गाया उत्तरे देशे शिशिराद्यृतु-विभागो बोद्धव्यः। इत्ययमर्थो गयदासाचार्य्येण बहुधा दूषितः ॥ ५ ॥

त एते शीतोष्णवर्षेत्यादि। त एते षट् ऋतवः शीतोष्णवर्षलक्षणैर्लक्षिताः। अत्र शैत्यं

दक्षिणमुत्तरञ्च। तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमः, अम्ललवणमधुराश्च रसा बलवन्तो भवन्ति, उत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते। उत्तरञ्च शिशिरवसन्तग्रीष्मास्तेषु भगवानाप्यायतेऽर्कः, तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते ॥ ६ ॥

भवति चात्र।

शीतांशुः क्लेदयत्युर्व्वीं विवस्वान् शोषयत्यपि।
तावुभावपि संश्रित्य वायुः पालयति प्रजाः ॥ ७ ॥

अथ खल्वयने द्वे युगपत् संवत्सरो भवति ॥ ८ ॥

ते तु पञ्च युगमिति संज्ञां लभन्ते। स एष निमेषादियुगपर्य्यन्तः कालश्चक्रवत् परिवर्त्तमानः कालचक्रमुच्यत इत्येके ॥ ९ ॥

वातकृतम्, औष्ण्यमादित्यकृतम्, वर्षश्चन्द्रकृतः, शीतवर्षौ चन्द्रकृताविन्यन्ये। चन्द्र इत्यादि। एतैश्च षड्ऋतुभिः द्वे अयने भवतः, कुत इति ? आह— चन्द्रादित्ययोः कालप्रविभागकरत्वात्। के ते द्वे अयने इति पृष्ट आह— दक्षिणमुत्तरञ्च। अत्र दक्षिणमयनं चन्द्रकालं विभागयति, उत्तरमयनमादित्यकालमिति। तयोर्दक्षिणमित्यादि। तयोर्दक्षिणोत्तरायणयोर्मध्ये वर्षाशरद्धेमन्ता दक्षिणायनम्; तेषु वर्षादिषूत्तरोत्तरं भगवान् सोम आप्यायते अधिकबलो भवति, न केवलं सोम एव बलवान् भवति, रसाश्च अम्लादयो वर्षादिषु यथासंख्यमुत्तरोत्तरं बलवन्तो भवन्ति। उत्तरोत्तरञ्चेति चकारो व्यतिक्रमेण सम्बन्धनीयः, तेन सर्व्वप्राणिनाञ्चोत्तरोत्तरं बलमभिवर्द्धते इत्यर्थः। उत्तरमित्यादि। शिशिरवसन्तग्रीष्मा उत्तरायणम्, तेषु शिशिरादिषु उत्तरोत्तरं भगवानर्कः आप्यायते अधिकबलो भवति। तिक्तादयो रसाश्च शिशिरादिषु यथासंख्यमुत्तरोत्तरञ्च बलवन्तो भवन्ति। बलमपहीयते बलहानिर्भवति। 'ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः' इति सूत्रे यद्यपि प्रागुत्तरायणं पठन्ति, तथापि भाष्ये यत् प्रथमं दक्षिणायनस्य व्याख्यानं तदुत्तरायणतोऽपि दक्षिणायनस्य वैशिष्ट्यं प्रतिपादयति। कुतः ? विसर्गत्वात् प्राणिनां बलकरत्वाच्च ॥ ६ ॥

अमुमेवार्थमुपसंहरन्नाह—भवति चात्रेत्यादि। शीतांशुश्चन्द्रः, क्लेदयति आर्द्रीकरोति, उर्व्वीं भूमिम्, विवस्वान् आदित्यः; तावुभौ चन्द्रसूर्य्यौ संश्रित्य आश्रित्य, वायुः प्रजाः पालयति रक्षति। चन्द्रमाश्रित्य आप्यायनं जगतः करोति, सूर्य्यमाश्रित्य शोषणम्, ततो यथाकालं रसाभिनिर्वृत्तिः, तेन प्रजा वर्द्धयतीति पिण्डार्थः ॥ ७ ॥

परिशिष्टं पूर्व्वसूत्राद् व्याख्यातुमाह—अथ खल्वयन इत्यादि। युगपद् एककालं अयनद्वयं संवत्सरः, न पृथग् दक्षिणायनमुत्तरायणं वा। ननु माघादयो द्वादशमासाः संवत्सरः इत्युक्तम्। ततः किं पुनरभिधानेन ? उच्यते, पूर्व्वोदिता हि माघादयो द्वादशमासा व्यस्ता अक्रमपठिताश्च संवत्सर इत्याशङ्का स्यात्। अथ खल्वयने द्वे इत्यादिनिर्द्देशे क्रियमाणे येन क्रमेण षड्ऋतुभागे अयनद्वयमुक्तं तेनैव चेदयनद्वयं युगपत् स्यात् तदा संवत्सर इति व्यस्तानामक्रमपठितानाञ्च माघादीनां संवत्सरत्वं निरस्तमिति। इदानीं युगप्रविभागं दर्शयन्नाह—ते त्वित्यादि। ते पुनः

इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड्ऋतवो भवन्ति, दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदादेन द्विमासिकेन व्याख्याताः। तद्यथा—भाद्रपदाश्वयुजौ वर्षाः, कार्त्तिकमार्गशीर्षौ शरत्, पौषमाघौ हेमन्तः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृड़िति ॥ १० ॥

तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां

पञ्च संवत्सरा युगमिति संज्ञां प्राप्नुवन्ति। इयञ्च युगस्य पारिभाषिकी संज्ञा, परमार्थतस्तु कृतादयश्चत्वारो युगविशेषाः। स एष इत्यादि। स एषः कालः ॥ ८।९ ॥

संशोधनाश्रयं दर्शनं दर्शयन्नाह— इहेत्यादि। इह अस्मिन्नध्याये, तुशब्दः पुनरर्थः। अस्मिन्नध्याये पुनः किमर्थं वर्षादयो ऋतव इत्याह—दोषोपचयाद्यर्थम्। ननु इदं दर्शनं व्याधिहेतुवातादिसञ्चयाद्यर्थत्वात् प्राक् कर्त्तुं युज्यते। नैवम्, तत्र वातादिहेतूनां रसानां निष्पत्तेस्तदेव दर्शनं प्राक् कृतम्, अथवा 'हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत्' इत्यादिश्लोके शिशिरादीनां नाम आदौ निर्दिष्टत्वात्। ननु प्रावृड्वर्षयोः को भेदः ? उच्यते, प्रथमः प्रवृष्टेः कालः प्रावृट्, तस्यानुबन्धो वर्षाः। सञ्चयात् प्रकोपो बलवान्, तस्य चिकित्सितं संशोधनमधिकृत्येति वर्षादयोऽभिहिताः। यद्यपि दोषसञ्चयादिनिमित्तमत्र वर्षादयः कथिता इति वर्षादयः ऋतव उक्ताः, तथा चरकेऽपि रोगभिषग्जितीये विमाने संशोधनमधिकृत्योक्तास्तथापि सञ्चयादिषु संशोधनं कार्य्यमिति शिशिरादयस्तु रसं बलं चाधिकृत्योक्ताः, वर्षादयस्तु संशोधनमधिकृत्य सञ्चयाद्यर्थमिति तात्पर्य्यार्थः। अन्ये त्वन्यथा व्याख्यानयन्ति—गङ्गाया दक्षिणे देशे वर्षाद्यृतुविभागो ज्ञातव्य इति। अयमपि गयदासाचार्य्येण दूषितः। (भूयो वर्षति पर्ज्जन्यो गङ्गाया दक्षिणे जलम्। तेन प्रावृषवर्षाख्यौ ऋतू तेषां प्रकल्पितौ ॥ गङ्गाया उत्तरे कूले हिमवद्धिमसंकुले। भूयः शीतमतस्तेषां हेमन्तशिशिरावृतू।) इति काश्यपः ॥ १० ॥

पित्तादीनां सञ्चयप्रकोपौ वर्षादिषु यथा सहेतुकौ भवतस्तथा निर्दिशन्नाह—तत्र वर्षास्वित्यादि। तत्र तेषु ऋतुषु मध्ये, ओषधयः गोधूमचणकशाल्यादयः, तरुण्यः अभिनवाः, अल्पवीर्य्या अल्पशक्तयः, सम्भवन्तीत्यध्याहारः। अन्ये तु वीर्य्यशब्दं शीतोष्णाभ्यां वीर्य्यवाचिनं मन्यन्ते। ननु वर्षासु गोधूमादयः पुरातना एव भवन्ति ; कथमभिनवा इत्युच्यते ? नैष दोषः। गोधूमचणकशाल्यादयो अन्तःसूक्ष्मजलप्रवेशात् आर्द्रिमानमुपगताः किञ्चित् तिरस्कृतशक्तयः प्ररोहधर्म्मिण्यः प्रोच्छूनतामुपगता अनवा अपि तरुण्य इत्युच्यते। शाकादयस्तु नूतना एव प्रयुज्यन्ते। आपश्च अप्रसन्ना अपरिणता नवत्वाद्, अप्रसन्नाः कलुषा इत्यन्ये, क्षितिमलप्रायाः पृथिव्याः तृणपर्णोत्करशवकोथादिमलबहुलाः। अत्रापि भवन्ति इत्यध्याहारः। ता उपयुज्यमाना इति। विदह्यन्ते अम्लपाकमुपयान्ति, कास्ताः ? पूर्व्वोक्ता ओषधय आपश्च, किं क्रियमाणाः ? उपयुज्यमानाः,

शीतवातविष्टम्भिताग्नीनां विदह्यन्ते, विदाहात् पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति॥ ११॥

ता एवौषधयः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद् भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद् गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्ध-देहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति॥ १२॥

ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्वो भवन्त्यापश्च, ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद् वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ

केषामम्लपाकमुपयान्ति ? देहिनाम्, किं विशिष्टानाम् ? शीतवातविष्टम्भिताग्नीनां शीतेन कुपितो वातः शीतवातः शारीरस्तेन मन्दवेगीकृताग्नीनाम्, न पुनर्बाह्येन शीतवातेन, यतो वहिर्लोम-कूपरोधेन उष्मणोऽनिर्गमादन्तरग्नेर्बलमेधते। पुनः किम्भूतानां देहिनाम् ? क्लिन्नदेहानां आर्द्रीभूत-शरीराणाम्, जलप्रक्लिन्नायां पानीयेन सुष्ठु स्तिमितायाम्, नभसि आकाशे मेघावतते मेघव्याप्ते सति, विदाहाद् अम्लपाकात्, पित्तसञ्चयमिति संहतिरूपा वृद्धिः सञ्चयः, स्वस्थानवृद्धिरित्यन्ये। सञ्चीयमानमपि पित्तमृतुशैत्यात् तस्मिन् काले न कुप्यति। स सञ्चय इत्यादि। स एव पित्तस्य वर्षाकालोपचितः सञ्चयः, शरदि अल्पमेघे आकाशे सूर्य्यरश्मिभिः प्रविलायितः सन् पित्तोद्भवान् व्याधीन् उत्पादयति॥ ११॥

ता एवेत्यादि। ता एवौषधयः पूर्व्वोक्ताः कालपरिणामात् कालपरिपाकात् परिणतवीर्य्याः सञ्जातशक्तिकाः बलवत्यो देहोपचयहेतवः, अन्यथा परिणतवीर्य्यबलवतोरेकार्थत्वात् पुनरुक्तिः स्यात्। आपश्च प्रसन्नाः स्वच्छाः, क्षितिमलापगमादित्यन्ये। ता इति पूर्व्वोक्ता ओषधय आपश्च, उपयुज्यमाना खाद्यमानाः पीयमानाश्च, सतुषारपवनोपस्तम्भितदेहानामिति सतुषारपवनेन हिमार्द्रवातेन उपस्तम्भितानि आप्यायितानि देहानि शरीराणि येषां ते तथोक्ताः, हिमानीवशात् तदानीं स्त्यानत्वैव भवति न प्रकोपः। स सञ्चय इति। अर्करश्मिप्रविलायित इति स्त्यानघृतवद् विलयनमात्रं वसन्ते भवति, न पुनरुपशोषणाख्यः क्रमः। कस्मात् ? अर्कस्य नातितीक्ष्णत्वात् श्लेष्मप्राचुर्य्याच्च। श्लैष्मिकान् व्याधीन् अन्नद्वेषहृदयोत्क्लेदादीन्॥ १२॥

ता एवौषधय इत्यादि। निदाघे ग्रीष्मे, निःसाराः दुर्व्वलवीर्य्याः, रूक्षाः निःस्नेहाः। न केवलमोषधय एवंविधा भवन्ति आपश्च भवन्तीत्यर्थः। ता उपयुज्यमाना इत्यादि। ता अनन्तर-निर्दिष्टा ओषधयो रौक्ष्यलघुत्वाभ्यां हेतुभ्यां सूर्य्यप्रतापोपशोषितदेहानां देहिनां नृणां वातसञ्चय-मापादयन्तीति पिण्डार्थः। यद्यपि शीतस्य वायोरुष्णे ग्रीष्मे सञ्चयो न भवति, तथापि वातगुणेषु

क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति। एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः ॥ १३ ॥

तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम् ॥ १४ ॥

तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां घनात्यये स्वभावत एव। त एते सञ्चयप्रकोपोपशमा व्याख्याताः ॥ १५ ॥

सर्व्वेषु रौक्ष्यं प्रधानम्, तेन ओषधीनामत्यर्थं रौक्ष्येण रूक्षस्य वायोर्ग्रीष्मे सञ्चयः स्यादित्यदोषः। स सञ्चयः प्रावृषीत्यादि। स वातसञ्चयः शीतवातवर्षेरितो वातिकान् व्याधीन् कोष्ठतोदसञ्चरणादीन् जनयति। क काले? प्रावृषि, केषां वातिकान् व्याधीन् जनयति? देहिनाम्, किं विशिष्टानाम्? क्लिन्नदेहानाम्, कथं सत्याम्? भूमावत्यर्थं जलोपक्लिन्नायाम्। एवमेष इत्यादि। एवमनेन प्रकारेण, एष इति कालस्वभावकृतौषधितारुण्यादिर्योवच्छीतवातवर्षेरितो वातिकान् व्याधीन् जनयतीति दोषाणां सञ्चयप्रकोपहेतुरुक्तः। ननु दोषोपचयप्रकोपोपशमनिमित्तम् इति त्रयाणां चयादीनां प्रतिज्ञातत्वात् कथं सञ्चयप्रकोपौ व्याख्याय उपसंहारः? नैष दोषः, प्रकोपे हि संशोधनं कार्य्यम्, तत्र यदि यथाप्रतिज्ञं त्रीन् प्रशमसहितान् व्याख्याति तदा प्रशमान्तरितः प्रकोपोपशमविधिः स्यात्। तस्मात् सञ्चयप्रकोपावेव तावत् पृथगाख्याति ॥ १३ ॥

प्रकोपे यथावसरं संशोधनविधेरासञ्जनार्थं तमेव विधिं वक्तुमाह—तत्र वर्षेत्यादि। वर्षादिषु ये सञ्चिता दोषास्त एव यदा शरदादिषु प्रकुपिता भवन्ति, तदा निर्हरणं कर्त्तव्यम्। निर्हरणम् आकर्षणं वमनादिना। प्रकुपितानामिति प्र-शब्दो बहुदोषाणामेव संशोधनमिति दर्शयति। मध्य-दोषेषु पाचनम्, अल्पदोषेषु पुनर्लङ्घनपिपासानिग्रहादि यथर्त्तु विधिसमाचारश्चेति चकारो दर्शयति। ननु वर्षादिषु शरदादिषु च चयप्रकोपयोरनन्तरमेवोक्तत्वात् किमर्थं वर्षाहेमन्तग्रीष्मेष्वित्यादिपाठः? प्रकुपितानां निर्हरणं कर्त्तव्यमित्येव वक्तुं युक्तम्। सत्यम्, शरदादिष्वेव प्रकुपितानां निर्हरणं यथा स्यात् तथान्यत्र माभूदिति नियमार्थं पुनः शरदादिग्रहणम्, यदि पुनः शरदादिग्रहणं न क्रियते तदा वर्षादिषु हेतुबाहुल्यात् प्रकुपितेषु दोषेषु वमनादयो विधीयेरन्; न चैतदिष्यते, वर्षादिषु (ग्रीष्मादिषु) हि वमनादयो विधीयमाना व्यापदं मरणञ्चोत्पादयन्ति। प्रावृट्सु चेति चकारः संशोधनमसाध्येषु अतिपातिषु रोगेषु वर्षादिष्वपि संशोधनं कर्त्तव्यमिति ज्ञापयति। वर्षादिषु सञ्चयस्य पूर्व्वमेवोक्तत्वात् पुनर्वर्षादिग्रहणं यथास्वमृतुविहित आहाराचाराख्यः स्वस्थवृत्तोदितो विधिः कर्त्तव्य इति सूचयति। शरदादीनां ऋतूनां द्वितीयमासे संशोधनं कर्त्तव्यम्। तत्र पित्तसंशोधनं मार्गशीर्षे, कफनिर्हरणं चैत्रे, वातस्य श्रावणे, एवं हि साधारणः कालः, त्रिमासान्तरिताश्च दोषा भवन्ति। तथा चाह— 'ग्रीष्मादिसञ्चितान् दोषान् त्रिमासान्तरितान् हरेत्' इति ॥ १४ ॥

उपशमं व्याख्यातुकाम आह—तत्र पैत्तिकानामित्यादि। स्वभावतः स्वलक्षणतः, स्वलक्षणं पुनः शीतोष्णवर्षादि। ननु यदि कालस्वभावादेव दोषाणामुपशमस्तर्हि शास्त्रवैयर्थ्यं स्यात्। न

तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्ण-वर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ॥ १६ ॥

तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्त्यापश्च, ता उपयुज्यमानाः प्राणायु-र्बलवीर्य्यौजस्कर्य्यो भवन्ति। * तेषां पुनर्व्यापदोऽदृष्टकारिताः। शीतोष्णवात-वर्षाणि खलु विपरीतान्योषधीर्व्यापादयन्त्यपश्च, तासामुपयोगाद् विविधरोग-प्रादुर्भावो मरको वा भवेदिति। तत्राव्यापन्नानामोषधीनामपाञ्चोपयोगः ॥ १७ ॥

च वैयर्थ्यं दृश्यते, तदुक्तविधानादप्युपशमदर्शनात्। सत्यमेतत्, दोषाणां पदार्थस्वभावविनाशित्वेऽपि चयादिविसदृशसन्तानोत्पत्तौ शास्त्रं हेतुतया व्याप्रियमाणं नानर्थकम्। विनाशकारणाभावेऽपि हि घटादीनां विसदृशलक्षणोत्पादे मुद्गरादिहेत्वन्तरसाफल्यमस्ति ॥ १५ ॥

साम्वत्सरिकं विधिमहन्यप्यतिदेष्टुमाह—तत्र पूर्व्वाह्णे इत्यादि। तत्र इति अहोरात्रे। शारदमर्द्धरात्र इति भूगोलाधःस्थितसूर्य्यत्वादर्द्धरात्रे शारदं लिङ्गमातपाभावेऽपि गोलक-गणितविदो ज्योतिर्व्विदो मन्यन्ते ; भिषजस्तु कालस्वभावादाहारवशाच्च इति। अहोरात्रमपि वर्ष-मिवेत्यादि। शीतोष्णवर्षैर्ये दोषोपचयप्रकोपोपशमास्तैरहोरात्रमपि वर्षमिव जानीयादिति सम्बन्धः। एतेनाहोरात्रिके सञ्चयादौ अनागताबाधोक्तदन्तधावनादिप्रतीकारैर्निर्हरणं कर्त्तव्यमित्युक्तम्। ननु प्रतिदिनं दोषाणां सञ्चयप्रकोपप्रशमेषु सत्सु कथमार्त्तवाः सञ्चयादयो भवन्ति, दिवसैरेव ऋतूना-मारब्धत्वात्, आह्निकचयकोपयोः प्रत्यहमेव प्रतीतत्वात्। सत्यम्, आह्निकौ चयप्रकोपौ अहोरात्र-माश्रित्य सोमसूर्य्यानिलानामुष्णादिगुणमात्रोत्पन्नत्वादल्पकारणौ, अल्पेनैव अनागताबाधविधानात् शान्तिमुपयातः। ऋतुभवौ तु चयप्रकोपौ मार्गान्तरगतसोमसूर्य्यानिलकृतैर्द्रव्यरसगुणवीर्य्य-विपाकप्रभावैर्निरन्तरोपचितत्वाद् अहोरात्रमात्राश्रितार्कादिगुणादत्यन्तभिन्नैरारभ्यमाणौ महा-कारणकौ महतैव संशोधनादिविधिना शान्तिं गच्छतः ॥ १६ ॥

सोऽयं दोषचयादिरव्यापन्नेषु ऋतुषु भवतीति दर्शयन्नाह—तत्राव्यापन्नेष्वित्यादि। प्राणाः अग्नीषोमादयः, आयुः शरीरेन्द्रियसत्त्वात्ममनसां संयोगः, बलम् उत्साहोपचयलक्षणम्, वीर्य्यं शक्तिः, ओजः हृदयाश्रितं सप्तधातुस्नेहः। कुतः पुनः ऋतूनां व्यापद इत्याह—तेषां पुनरित्यादि। तेषामृतूनाम्, व्यापदः शीतोष्णवातवर्षाणामेव वैपरीत्यम्, अदृष्टेन सर्व्वजनसामान्येनाधर्म्मेण, कारिताः कर्त्तुं प्रयोजिताः। शीतोष्णेत्यादि। विपरीतानि हीनमिथ्यातियुक्तानि, ओषधीरपश्च व्यापादयन्ति विरुद्धतां प्रापयन्ति। अन्ये तु शीतोष्णवातवर्षाणीत्यादि पाठमन्यथा कृत्वा-पातनिकापूर्व्वं पठन्ति। तद् यथा—अधर्म्मस्तावद् व्यापदां सम्भवे प्रयोजकः कर्त्ता। कः पुनः स्वतन्त्रः कर्त्ता इत्याह—शीतोष्णवर्षाणां वैपरीत्यमोषधीर्व्यापादयति अपश्च। व्यापन्नानामोषधी-नामपाञ्चोपयोगाद् दोषं वक्तुमाह—तासामुपयोगादित्यादि। ऋतुव्यापदां चिकित्सासूत्रं दर्शयन्

* तासां पुनर्व्यापद इति वा पाठः।

कदाचिदव्यापन्नेऽपि ऋतुषु कृत्याभिशापरक्षःक्रोधाधर्म्मैरुपध्वस्यन्ते जनपदाः, विषौषधिपुष्पगन्धेन वायुनोपनीतेनाक्रम्यते यो देशस्तत्र दोषप्रकृत्यविशेषेण कासश्वासवमथुप्रतिश्यायशिरोरुग्ज्वरैरुपतप्यन्ते ग्रहनक्षत्रचरितैर्वा गृहदारशयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावैर्वा ॥ १८ ॥

तत्र स्थानपरित्याग-शान्तिकर्म्मप्रायश्चित्त-मङ्गलजप-होमोपहारेज्याञ्जलि

आह—तत्राव्यापन्नानामित्यादि । अव्यापन्नशब्द उभयत्र सम्बध्यते; तेन अव्यापन्नाः पुराणा ओषधयः, आपश्च अव्यापन्नाः कथिताः । अन्ये तु 'तत्राव्यापन्नानामोषधीनामपाञ्चोपयोग इत्यत्र' 'तत्र पुराणाभिरोषधिभिरनुपहतवीर्य्याभिः क्रिया कार्य्या' इत्यादिपाठं पठन्ति । स चात्यर्थमप्रसिद्ध इति न लिखितः ॥ १७ ॥

ऋतुव्यापन्नोऽन्यैरपि हेतुभिर्व्याधिसम्भवं दर्शयन्नाह—कदाचिदित्यादि । कदाचिन्न सर्व्वकाले । कृत्या कुपितमन्त्रिणोऽभिचारकर्म्मजनितो राक्षसीविशेषः, अन्ये तु सर्व्वराष्ट्रच्छेदी अभिचारः, अभिचारस्तु एकपुरुषव्यापादक एव । अभिशापो गुरुसिद्धादीनामाक्रोशः, रक्षांसि हिंसाविहाराणि हेतिप्रहेतिकुलजातानि, तेषां क्रोधो रक्षःक्रोधः । अधर्म्मः कायवाङ्मनसां दुश्चरितम्, उपध्वस्यन्ते उपद्रूयन्ते, जनपदाः लोकाः । विषौषधिपुष्पगन्धेनेत्यादि । विषाणाम् ओषधीनाञ्च यानि पुष्पाणि तेषां गन्धेन, किं विशिष्टेन ? वायुनोपनीतेन वायुना समीपमानीतेन; तेन ये श्वासकासादयस्तैरुपतप्यन्ते जनपदाः, ओषधयो सुविलिन्दवृक्षादयः । अन्ये तु कासश्वासेत्यादिपाठमन्यथा पठन्ति—'कासश्वासप्रतिश्यायगन्धाज्ञानभ्रमशिरोरुग्ज्वरमसूरिकादिभिरुपतप्यन्ते' इति, व्याख्यानयन्ति च—तत्र नासारन्ध्रानुगतेन वायुना कासश्वासप्रतिश्यायगन्धाज्ञानभ्रमशिरोरुजः, त्वगिन्द्रियगतेन ज्वरमसूरिकादयः । ग्रहनक्षत्रचरितैर्वेति ग्रहाणां शनैश्चरादीनां गर्हितस्थानस्थितानां प्रचारो ग्रहचरितम् । नक्षत्राणि अश्विन्यादीनि तेषां चरितम् उल्कापातादिभिर्जन्मनक्षत्राद्यभिहननम् । गृहदारेत्यादि । गृहादीनां यानि गर्हितानि निन्दितानि लक्षणानि चिह्नानि तन्निमित्तं प्रादुर्भाव उत्पत्तिर्येषां व्याधीनां तैर्वा उपतप्यन्ते जनपदाः । दाराः भार्य्याः, शयनं खट्वा, आसनं पीठम्, यानं दोलादि, वाहनं हस्त्यश्वादि, मणिः स्फटिकादिः । गृहादयो मणिपर्य्यन्तास्त एव रत्नानि इति समासः, अन्यथा मणिरत्नयोरेकार्थत्वात् पुनरुक्तता स्यात् । अन्ये तु मणयः सर्पादीनां प्रशस्तावयवविशेषाः, रत्नानि माणिक्यादीनि, उपकरणानि घटपिठरसूर्पादीनि, अथवा गृहादीन्येवोपकरणानि । अन्ये तु गृहदारेत्यादिगदेन गृहदारशब्दौ निमित्तशब्दञ्च परित्यज्य 'शयनासनयानवाहनमणिरत्नोपकरणगर्हितलक्षणप्रादुर्भावैर्वा' इति पठन्ति ॥ १८ ॥

इदानीं ऋतुव्यापदादिकृतानां रोगाणां सामान्येन चिकित्सां दर्शयन्नाह—तत्र स्थानेत्यादि । ऋतुकोपस्य अधर्म्मकारित्वात् तत्र दैवव्यपाश्रयं भेषजम् । शान्तिः इन्द्रियविजयः, अथवा वेदोक्तमन्त्रैर्यजनादिकम्, प्रायश्चित्तं प्राक्तनकर्म्मोपशमार्थं स्मार्त्तवचनेन चान्द्रायणादि, अथवा 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्' । मङ्गलं प्रशस्तौषध-

नमस्कारतपोनियमदयादानदीक्षाभ्युपगमदेवताब्राह्मणगुरुपरैर्भवितव्यमेवं साधु भवति॥ १९॥

अत ऊर्द्धमव्यापन्नानमृतूनां लक्षणान्युपदेक्ष्यामः॥ २०॥

वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः।
छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥
दर्पिता ध्वाङ्क्षखड्गाह्व-महिषोरभ्रकुञ्जराः।
रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ २१॥
शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः।
शेषं हेमन्तवत् सर्व्वं विज्ञेयं लक्षणं बुधैः॥ २२॥
सिद्धविद्याधरवधू-चरणालक्तकाङ्किते।
मलये चन्दनलता-परिषङ्गाधिवासिते॥
वाति कामिजनानन्द-जननोऽनङ्गदीपनः।
दम्पत्योर्मानभिदुरो वसन्ते दक्षिणोऽनिलः॥
दिशो वसन्ते विमलाः काननैरुपशोभिताः।
किंशुकाम्भोजवकुल-चूताशोकादिपुष्पितैः॥

मणिधारणादि, जपः ओङ्कारपूर्व्वकं ऋग्यजुःसामावर्त्तनम्, होमः लक्षकोटिप्रयुतोपलक्षितः, उपहारः देवादिषु गवाश्वप्रभृतीनामुपायनम्, अन्ये उपहारो देवतानां सपशुर्बलिः, इज्या यागः, अञ्जलिः भक्त्या करसम्पुटविधानम्, नमस्कारः देवद्विजगुरुभ्यः कायवाङ्मनसः प्रणामः, तपस्तापनालक्षणं उपवासादि, नियमः शास्त्रोदितो विधिर्मौनादिः। दया प्राणिषु कृपा, दानं यथाविभवं वित्तविसर्गः, दीक्षा गुरुतो मन्त्रादिग्रहणम्, अभ्युपगमः गुरुवाक्यादीनामङ्गीकारः। परशब्दः स्थानपरित्यागादिभिः प्रत्येकं सम्बध्यते। एवं साधु भवति एवं कुशलं भवतीत्यर्थः॥ १९॥

अत ऊर्द्धमित्यादि। अव्यापन्नाः प्रसन्नाः॥ २०॥

ऋतुप्रकोपे हि पूर्व्वं शान्त्यादिकमुक्तम्, अधुना प्रसन्नर्त्तुलक्षणान्याह—वायुर्वात्युत्तर इत्यादि। तत्र षड्नृतुषु मध्ये हेमन्ते उत्तरदिशो जातत्वाद् उत्तरो वायुर्वाति वहति। रजो धूलिः, आकुलाः व्याप्ताः, हिमानद्धाः हिमसम्बद्धाः, दर्पिताः हर्षिताः, ध्वाङ्क्षः काकः, खड्गः गण्डकः, उरभ्रः मेषः, पुन्नाग इति पद्मकेशरम्, हिमसाह्वये हेमन्ते॥ २१॥

प्रसन्नशिशिरर्त्तुलक्षणमाह—शिशिर इत्यादि। वातवृष्टिः वातेन मिश्रिता वृष्टिर्वातवृष्टिः॥२२॥

अधुना वसन्तलक्षणमाह—सिद्धेत्यादि। वसन्ते दक्षिणदिशो जातत्वान्मलयपर्व्वतस्थितचन्दनसुरभिर्दक्षिणो वायुर्वाति। अन्यदपि वसन्तलक्षणमाह—दिशो वसन्त इत्यादि। वसन्ते दिशो विमलाः रजोधूमादिविवर्जितत्वात् निर्मला भवन्ति। दिश एव च किंशुकादिवृक्षपुष्पितैः काननैः

कोकिलाषट्पदगणैरुपगीता मनोहराः।
दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः॥ २३॥
ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः।
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥
भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः।
ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः॥ २४॥
प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः *।
अम्बुदैर्विद्युदुद्द्योत-प्रस्रुतैस्तुमुलस्वनैः॥
कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही।
कदम्बनीपकुटज-सर्ज्जकेतकिभूषिता॥ २५॥

उपशोभिता भूषिता भवन्ति। ता एव दिशः कोकिलाषट्पदगणरुपगीता मधुरध्वनियुक्ता भवन्ति। दक्षिणानिलसंवीता दक्षिणवातेनावृता दिश इत्यर्थः, सुमुखाः शोभनावकाशाः, पल्लवोज्ज्वलाः पल्लवैः कृत्वा शृङ्गारिताः। अन्ये पल्वलोज्ज्वला इति पठन्ति, तेषां पक्षे पल्वला विलादिक्षुद्रजलाशयाः उज्ज्वलाः निर्म्मलसलिलाः मनोहराश्च इति॥ २३॥

अव्यापन्नग्रीष्मर्त्तुलक्षणमाह—ग्रीष्म इत्यादि। असुख इति ग्रीष्मे हि नैर्ऋतो वायुरसुखप्रदो भवति। तन्व्यः अल्पप्रवाहाः, भ्रान्तचक्राह्वयुगलाः इति जलाशयान्वेषितया भ्रान्तचक्रवाकयुगला दिशो भवन्ति। पयःपानाकुलाः इति उदकपानाय व्यग्रा मृगा भवन्ति। ध्वस्तवीरुत्तृणलता इति वीरुधो विटपाः, तृणानि प्रसिद्धानि, लता वल्ली, एते वीरुधादयो ध्वस्ता अधःपतिता भवन्ति। विपर्णाङ्कितपादपा इति विपर्णैर्विगलितपत्रैरङ्किताश्चिह्निताः पादपा वृक्षा भवन्ति॥ २४॥

अव्यापन्नप्रावृडृतुलक्षणमाह—प्रावृषीत्यादि। पश्चिमानिलकर्षितैरम्बुदैरम्बरम् आकाशं प्रावृषि आनद्धमाच्छादितं भवति। कथम्भूतैरम्बुदैरित्याह—विद्युदुद्द्योतेत्यादि। विद्युदुद्द्योतेन सह प्रस्रुतैः क्षरितैः, तुमुलस्वनैः प्रचण्डगर्ज्जितैः। मही च प्रावृषि कथम्भूता भवति इत्याह—कोमलेत्यादि।

* इतःपरमधिकः पाठः क्वचिद् दृश्यते—
कुर्व्वन्हिश्चातकान् हृष्टान् हंसान् मानसगामिनः।
भीमसन्तमसे सायं पथि दुर्गमकर्द्दमे॥
जघनोद्वहनक्लान्ताः प्रमृष्टासारमण्डनाः।
तडित्प्रभाहतालोक-निमीलन्नयनोत्पलाः।
गर्ज्जितध्वनिना त्रस्त-हृदयाश्चाभिसारिकाः॥
सवङ्कप्रोतसंकाशैर्मेघैरुचाम्बुभूषणैः।
सिताहंसावलीकान्ति-बलाकापङ्क्तिसारितैः।
केकागर्ज्जद्गलोदग्रीव-नृत्यदवर्हिणवीक्षितैः॥ इति।

तत्र वर्षासु नद्योऽम्भश्छन्नोत्खात-*-तटद्रुमाः।
वाप्यः प्रोत्फुल्लकुमुद-नीलोत्पलविराजिताः॥
भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता।
नातिगर्ज्जत्स्रवन्मेघ-निरुद्धार्कग्रहं † नभः॥ २६॥
बभ्रु रुग्णः शरद्यर्कः श्वेताभ्रविमलं नभः।
तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः।
वाणसप्ताह्वबन्धूक-काशासनविराजिता॥ २७॥

शष्पं बालतृणम्, आढ्याः समृद्धाः, शक्रगोपः इन्द्रवधूः, अन्ये ज्योतिरिङ्गणमाहुः। नीपः धूलीकदम्बः॥ २५॥

अव्यापन्नवर्षालक्षणमाह—तत्र वर्षास्वित्यादि। वर्षासु अम्भसा पानीयेन छन्नोत्खाततटद्रुमाश्च नद्यो भवन्ति। सोपानसहितकूपविशेषा वाप्यः। भूरव्यक्तस्थलश्वभ्रा इति भूमिश्च अदृश्यस्थलगर्त्ता भवति। नातिगर्ज्जदिति अतिगर्ज्जितवर्ज्जितः पर्ज्जन्यो योऽसौ मेघस्तेन निरुद्धार्कग्रहं नभो भवति॥ २६॥

शरल्लक्षणमाह—बभ्रु रुग्ण इत्यादि। बभ्रुः कपिलपिङ्गलः। नभः आकाशं श्वेताभ्रं विमलञ्च भवति। हंसांसघट्टितैरिति हंसस्कन्धचालितैः। पङ्कशुष्केत्यादि। निम्नादिषु प्रदेशेषु यथासङ्ख्यं पङ्कादिकीर्णा भवति। (वल्मीककारिण्यः सूक्ष्माः पिपीलिकाः।) वाणेत्यादि। वाणः सहचरः, सप्ताह्वः सप्तपर्णः, बन्धूकः बन्धूजीवकः बाँधुलीति लोके। 'मत्स्याम्लभोजिनः प्राच्या नित्यं चानूपसेविनः। श्लीपदा गलगण्डाश्च प्रायस्तेषु भवन्ति हि॥ निम्नतोयगतान् मत्स्यान् भक्षयन्ति समुद्रजान्। प्रायशः कुष्ठिनस्तेन मनुष्या दक्षिणाश्रिताः॥ तैलाम्लभोजिनो नित्यं गोधूमविदलाशिनः। भूयिष्ठमर्शसास्तेन खशाश्चावन्तिजा नराः॥ मांसकामाः सुराकामाः स्त्रीकामाः साहसे रताः। मागधास्तेन भूयिष्ठ दृश्यन्ते राजयक्ष्मिणः॥ तीक्ष्णान्यन्नानि सेवन्ते वाह्लीकास्तु विशेषतः। अभिष्यन्दीनि मांसानि तथा धान्योदकानि च॥ प्रकृत्या चाप्यभिष्यन्दान् सेवन्ते मानुषाः सदा। तेन वाह्लीकदेशेषु प्रायो व्याधिर्वलाशकः॥ नानादेशस्वभावा ये नानाहारास्तथैव च। नानाचारा नैकसत्त्वा धर्म्मिणोऽधर्म्मिणस्तथा॥ तेषां सात्म्यञ्च सत्त्वञ्च ऋतुकालञ्च लक्षयेत्। भैषज्यन्तु ततः कुर्य्याद् देहं विज्ञाय देहिनाम्॥ यस्य देहस्य यत् सात्म्यं यच्चास्याचरितं भवेत्। तेन भेषजसंयुक्तं भैषज्यमुपकल्पयेत्॥ आरोग्यं तेन वर्णौजो बलं वीर्य्यञ्च जायते। वर्ज्जनादृतुसात्म्यानां कृशो नित्यं सुदुर्बलः॥ नित्यं रोगाभिभूतश्च पुमान् सात्म्यविवर्ज्जनात्। तस्मात् सात्म्यं निषेवेत ह्यसात्म्यं परिवर्ज्जयेत्॥ सात्म्यसेवी जितक्रोधो नित्यञ्चापि जितेन्द्रियः। जीर्णभोजी मितस्वप्नः सुखं जीवत्यनामयः॥ ऋतवः प्राक् विनिर्दिष्टा बलयोगस्वभावतः। तेषु गर्भा निषिक्तास्तु तथा रूपास्तथायुषः। तान् सुविज्ञाय

* नद्योऽम्भःपुरोद्वृत्ततटद्रुमा इति पाठान्तरम्। † निरुद्धार्कग्रहमिति वा पाठः।

गुणैरतियुक्तेषु विपरीतेषु वा पुनः ।
विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥ २८ ॥
हरेद् वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ।
वर्षासु शमयेद् वायुं प्राग् विकारसमुच्छ्रयात् ॥ २९ ॥

इति सुश्रुत-संहितायामृतुचर्य्यानाम षष्ठोऽध्यायः ॥ ६ ॥

ततो बुद्ध्या प्रशस्तान् निन्दितानपि ॥ ततोऽस्याहारसंयुक्तं भेषजञ्चावचारयेत् । ततोऽस्यारोगता देहे बलं वीर्य्यञ्च वर्द्धते" ॥ २७ ॥

इदानीमध्यायपरिसमाप्तौ व्यापत्संग्रहश्लोकः स्वगुणैरित्यादि । स्वगुणैरतियुक्तेष्विति स्वगुणा ऋतूनामनन्तरोक्ताः, तैरतियुक्तेषु अतिशययुक्तेष्वृतुषु दोषा देहिनां कुप्यन्तीति सर्व्वत्र सम्बन्धनीयम् । अथवा ऋतूनां स्वगुणाः शीतोष्णवर्षाणि तैरतियुक्तेषु । विपरीतेष्विति मन्दशीतादियुक्तेषु, अन्ये तु शीते उष्णम् उष्णे शीतं वर्षास्ववृष्टिरिति ऋतुवैपरीत्यमाहुः । विषमेष्वपीति वैषम्यं पुनः ऋतूनां—वर्षालिङ्गं शरदि, शरल्लिङ्गं हेमन्ते, एवमनुलोमविलोमाभ्यां शेषमृतुवैषम्यमुदाहार्य्यम् । अन्ये तु ऋतूनां यथोक्तलिङ्गानामेकस्मिन् ऋतौ सर्व्वेषां लिङ्गानां भावोऽभावश्चेति वैषम्यमाहुः । एतेन स्वगुणातियोगाद् ऋतूनां षट् व्यापत्तयः, विपरीतेषु षट्, विषमेषु च षड़ेव, इति ऋतूनामष्टादश व्यापत्तय उक्ताः ॥ २८ ॥

हरेद् वसन्ते श्लेष्माणमित्यादि सुगमम् ॥ २९ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
ऋतुचर्य्याव्याख्यानाम षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः ।

अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

यन्त्रशतमेकोत्तरमत्र हस्तमेव प्रधानतमं यन्त्राणामवगच्छ, ( किं कारणम् ? यस्माद्धस्तादृते यन्त्राणामप्रवृत्तिरेव ) तदधीनत्वाद् यन्त्रकर्म्मणाम् ॥ २ ॥

तत्र मनःशरीराबाधकराणि शल्यानि, तेषामाहरणोपायो यन्त्राणि । तानि षट्प्रकाराणि । तद्यथा—स्वस्तिकयन्त्राणि, सन्दंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि चेति ॥ ३ ॥

तत्र चतुर्व्विंशतिः स्वस्तिकयन्त्राणि । द्वे सन्दंशयन्त्रे । द्वे एव तालयन्त्रे । विंशतिर्नाड्यः । अष्टाविंशतिः शलाकाः । पञ्चविंशतिरुपयन्त्राणि । तानि प्रायशो लौहानि भवन्ति, तत्प्रतिरूपकाणि वा तदलाभे । तत्र नानाप्रकाराणां

अथात इत्यादि । यन्त्रं शल्यानामाहरणोपायः, विधिः कल्पनं भेदो वा । यन्त्राणां संख्यामाह—यन्त्रशतमित्यादि । एकोत्तरम् एकाधिकम्, अन्ये तु शतशब्दोऽसङ्ख्यवाची, उत्तरशब्दः प्रधानवाचीति ; एतेन यन्त्रानामसंख्येयत्वमुक्तमेकस्य प्रधानत्वञ्चेति व्याख्यानयन्ति । अत्र यत् प्रधानं तदेव दर्शयति—अत्र हस्तमेवेत्यादि । प्रधानतमम् अतिशयेन प्रधानम्, अवगच्छ जानीहि । यद्यपि अग्रे कङ्कमुखस्य प्रधानत्वमुक्तमस्ति, तथापि हस्तस्य प्राधान्यं न विरुध्यते प्रधानतमत्वात् तस्यैति । प्रधानतमत्वे हेतुमाह—तदधीनत्वाद् यन्त्रकर्म्मणाम् इति हस्तायत्तत्वाद् यन्त्राणामित्यर्थः । अन्ये त्वन्यथा पठन्ति—किं कारणम् ? यस्माद् हस्तादृते यन्त्राणामप्रवृत्तिरेव, तदधीनत्वाद् यन्त्रकर्म्मणामिति ॥ १ । २ ॥

इदानीं यन्त्रव्यापिलक्षणपरिभाषां प्रतिपादयन्नाह—तत्र मन इत्यादि । तत्र इति तस्मिन् वक्ष्यमाणे शल्यविनिश्चये । तानीत्यादि । प्रकारो भेदः सादृश्यञ्च, तेषां षड्भेदाः स्वस्तिकादयः, सादृश्यानि वा षट् स्वस्तिकादीनां सादृश्यादेव । प्रतिज्ञातान् षट् प्रकारान् दर्शयितुमाह—तद् यथेत्यादि । स्वस्तिकं चतुरङ्गुलं पिष्टघटितम् तदाकृतीनि चतुरवयवानि स्वस्तिकयन्त्राण्युच्यन्ते । शेषाणामपि नामभिरेवाकृतयो ज्ञातव्याः ॥ ३ ॥

तत्र चतुर्व्विंशतिरित्यादि । द्वे एव तालयन्त्रे इति । ननु एवशब्दं विनापि द्वे तालयन्त्रे लभ्ये, तत् किम् एवशब्देन ? उच्यते, एवशब्दोऽयं स्वस्तिकादिषु निर्द्दिष्टां संख्यां व्यभिचारयति, तेन शल्याकृतिमवेक्ष्य स्वस्तिकादीनि यन्त्राणि अधिकान्यपि कार्य्याणि, तालयन्त्रे द्वे एव, एवं सति न दोषः । किंद्रव्याणि पुनर्यन्त्राणि कर्त्तव्यानीत्याह—तानि प्रायश इत्यादि ।

व्यालानां मृगपक्षिणां मुखैर्मुखानि यन्त्राणां प्रायशः सदृशानि, तस्मात् तत्-सारूप्यादागमादुपदेशादन्ययन्त्रदर्शनाद् युक्तितश्च कारयेत् ॥ ४॥

समाहितानि यन्त्राणि खरश्लक्ष्णमुखानि च।
सुदृढानि सुरूपाणि सुग्रहाणि च कारयेत् ॥ ५॥

तत्र स्वस्तिकयन्त्राण्यष्टादशाङ्गुलप्रमाणानि सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्जार-शृगाल-मृगैर्वारुक-काककङ्ककुररचासभासशशघात्युलूकचिल्लिश्येनगृध्रक्रौञ्च-भृङ्ग-राजाञ्जलिकर्णावभञ्जननन्दिमुखमुखानि मसूराकृतिभिः कीलरवबद्धानि मूले-ऽङ्कुशवदावृत्तवाराङ्गाण्यस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते ॥ ६ ॥

लोहाः पञ्च सुवर्णादयः, तत्कृतानि लौहानीत्युच्यते। तत्प्रतिरूपकाणि लोहप्रतिरूपकाणि वा। लोहाभावे चैतानि दन्तशृङ्गदारूणि यन्त्रयोनित्वेनोक्तानीति व्याख्यानयन्ति। लोहवेणुवृक्ष-सूत्रशृङ्गवल्कलतृणानि स्नायुप्रताना अश्मानश्चेत्येतेभ्यो यन्त्राणि निष्पाद्यन्ते। तत्र यन्त्राणां समासेनाकृतिं प्रसिद्धसाधर्म्योदाहर्त्तुमिच्छन्नाह—तत्र नानाप्रकाराणामित्यादि। नानाप्रकाराणां विविधभेदानां व्यालानां मृगपक्षिणां हिंस्राणां पशुविहङ्गमानां मुखैः सदृशानि यन्त्राणां मुखानि भवन्तीत्यध्याहारः। अत्र मृगाः सिंहादयः पशवः, पक्षिणः वायसादयः। व्यालानामिति पशूनामेव विशेषणं न तु पक्षिणामित्येके। तस्मादित्यादि। तत्सारूप्यादिति व्यालपशुपक्षिमुखसादृश्यात्, आगमादिति शास्त्रात्, तथाहि—स्वस्तिकयन्त्राणि अष्टादशाङ्गुलानि। उपदेशादिति वृद्धवैद्यवचनोप-देशात्, युक्तितश्चेति प्रयोजनतः पुरुषवयोऽवयवादिविभागविचारतश्च ॥ ४॥

गद्योक्तं श्लोकेनोपसंहरन्नाह—समाहितानीत्यादि। समाहितानि न्यूनातिरिक्तमानवर्जितानि, खरश्लक्ष्णमुखानि दृढमसृणमुखानि, अन्ये तु कार्य्यभेदात् कानिचित् खरमुखानि कानिचित् श्लक्ष्णमुखानि, तत्र खरमुखानि कङ्कमुखादीनि, श्लक्ष्णमुखानि सिंहमुखादीनि, सुदृढानि समुदायेन, सुग्रहाणि सुवाराङ्गाणि ॥ ५ ॥

तत्र स्वस्तिकयन्त्राण्येव प्रमाणाकाराभ्यां दर्शयन्नाह—तत्र स्वस्तिकेत्यादि। तत्र सिंहादयो नव व्यालमृगाः, काकादयः पञ्चदश पक्षिणः, एषां मुखसादृश्याच्चतुर्विंशतिः। तरक्षुः जरख इति लोके, ऋक्षः भल्लूकोऽतिलोमशः रीच्छ इति लोके, द्वीपी चित्रव्याघ्रः चित्रक इति लोके, मार्जारः विडालः, मृगैर्वारुकः हरिणवदिति लोके, कङ्कः कङ्कमल्लो दीर्घचञ्चुर्महाप्रमाणः, सुरमासूत इत्यन्ये। कुररश्चिरिल्लाकारो नादोत्थापितमत्स्यः कुरल इति लोके, भासः गोकुलचारी गृध्रविशेषः, शशघाती शशारिरिति लोके, चिल्लिः चिल्ल इति लोके, श्येनः सिञ्चानो गरुडान्वये, गृध्रः महाप्रमाणः स तु योजनदृष्टिरामिषाशी च, क्रौञ्चः कुरुञ्च इति लोके, भृङ्गराजः कालचटक इति पारियात्रीयाः, कान्यकुब्जास्तु पेंगिरिति। अञ्जलिकर्णावभञ्जनयोः सुश्रुतचरकादिटीकासु पर्य्यायो न दृश्यते, तस्माद् देशान्तरे लोकादवगन्तव्यम्, नन्दिमुखः पत्राटीः। मसूराकृतिभिः कीलैः शल्यैरवबद्धानि कीलि-तानि, स्कन्धप्रदेशे इति वाक्यशेषः, अन्ये तु तृतीये भागे इति वाक्यशेषं मन्यन्ते। मूलेऽङ्कु-

सनिग्रहोऽनिग्रहश्च सन्दंशौ षोड़शाङ्गुलौ भवतः, तौ त्वङ्मांसशिरास्नायुगत-शल्योद्धरणार्थमुपदिश्येते ॥ ७ ॥

तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके, कर्णनासानाड़ी-शल्यानामाहरणार्थम् ॥ ८ ॥

नाड़ीयन्त्राण्यपि अनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखान्युभयतोमुखानि च, तानि स्रोतोगतशल्योद्धरणार्थं रोगदर्शनार्थमाचूषणार्थं क्रियासौकर्य्यार्थ-ञ्चेति। तानि स्रोतोद्वारपरिणाहानि यथायोगदीर्घाणि च। भगन्दरार्शोऽर्व्वुद-व्रणवस्त्युत्तरवस्तिमूत्रवृद्धि-दकोदरधूमनिरुद्धप्रकशसन्निरुद्धगुदयन्त्राण्यलावूशृङ्ग-यन्त्राणि चोपरिष्टाद् वक्ष्यामः ॥ ९ ॥

वद्धावृत्तवारङ्गाणि इति अङ्कुशवद आवृत्तं चक्रं वारङ्गं ग्रहणस्थलं येषां तानि तथोक्तानि। अस्थि-विनष्टम् अस्थिनिमग्नम् ॥ ६ ॥

सनिग्रहोऽनिग्रहश्चेति। सनिग्रहानिग्रहौ द्वौ सन्दंशौ ; एकः सनिग्रहः सवारङ्गो नापितस्येव, अन्यश्च अनिग्रहोऽनिबन्धनः सुवर्णकारस्येव, अन्ये तु सनिग्रहो लोहकारसन्दंश इव कीलवद्ध इति मन्यन्ते ॥ ७ ॥

तालयन्त्रे इत्यादि। तालसंज्ञके द्वे यन्त्रे, द्वे अपि द्वादशाङ्गुलप्रमाणे। तयोराकारमाह—मत्स्यतालवदिति। तालमत्र शल्कमाह, मत्स्यस्य मीनस्य, तालतुल्ये प्रतनुमुखे इत्यर्थः। के ते द्वे इत्याह—एकतालद्वितालके इति। अत्र तालशब्देन प्रदेश उच्यते. एतेन एकं तालं प्रदेशो यस्य तदेकतालम्, द्वे ताले प्रदेशौ यस्य तत् द्वितालकम्. एतेन मत्स्यस्य शल्कवत् प्रतनुमुखैक-प्रदेशमेकतालम्, मत्स्यशल्कवत् प्रतनुमुखं द्विप्रदेशं द्वितालमित्युक्तम्। परिणाहस्तु कर्णादिप्रवेशी ज्ञेयः। अन्ये तु मत्स्यतालुकवदेकतालकद्वितालके इति पठन्ति, व्याख्यानयन्ति च—मत्स्योऽत्र भेटुलिर्नाममत्स्यः, तस्य लौहमयतालकाकारं मुखं भवति, अतस्तन्मुखार्द्धाकारं यन्त्रमेकतालकं, सर्व्वमुखाकारं द्वितालकं, तालकोऽत्र अपवारकादिकपाटसन्धिबन्धनं लौहमयमुच्यते, कर्णनासाशल्यं गूथकेशादि ॥ ८ ॥

नाड़ीयन्त्राण्यपीत्यादि। नाड़ीयन्त्राणीति नाड़ीवन्मध्यच्छिद्राणि। एकतोमुखानि एकाहर-णार्थानि अलाबुभगन्दरार्शोयन्त्रादीनि, उभयतोमुखानि वस्तुयत्तरवस्तिधूमयन्त्रादीनि। तानि स्रोतोगतशल्योद्धरणार्थमिति तानि नाड़ीयन्त्राणि स्रोतोगतशल्योद्धरणप्रयोजनानि। तथाहि—लाक्षाशल्ये कण्ठासक्ते मुखे नाड़ीं दत्त्वा तप्तया लोहशलाकया आकर्षयेदित्यादिकम्। रोग-दर्शनार्थमिति रोगा आभ्यन्तरार्शःप्रभृतयः। आचूषणार्थमस्थिगतवायोर्दुष्टरक्तस्तन्ययोराचूषणार्थम्। क्रियासौकर्य्यार्थमिति आभ्यन्तरार्शःप्रभृतिषु शस्त्रक्षाराग्न्यादिक्रियायाः सुकरत्वाय सुखकर-णायेत्यर्थः। तानि स्रोतोद्वारपरिणाहानीति वर्त्तुलत्वेन स्रोतोद्वारतुल्यानि। ननु विंशतिर्नाड्य इति पूर्व्वमेवोक्तम्। इह तु भगन्दरार्शोव्रणेष्वित्यादिना नाड़ीयन्त्राणि अलाबुशृङ्गान्तानि द्वादश,

शलाकायन्त्राण्यपि नानाप्रकाराणि नानाप्रयोजनानि यथायोगपरिणाहदीर्घाणि च। तेषां गण्डूपदशरपुङ्खसर्पफणबडिशमुखे द्वे द्वे एषणव्यूहनचालनाहरणार्थमुपदिश्येते। मसूरदलमात्रमुखे द्वे किञ्चिदानताग्रे स्रोतोगतशल्योद्धरणार्थम्। षट् कार्पासकृतोष्णीषाणि प्रमार्ज्जनक्रियासु। त्रीणि दर्व्व्याकृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम्। त्रीण्यन्यानि जाम्बववदनानि त्रीण्यङ्कुशवदनानि षडेवाग्निकर्म्मस्वभिप्रेतानि। नासार्व्वुदहरणार्थमेकं कोलास्थिदलमात्रमुखं खल्लतीक्ष्णोष्ठम्। अञ्जनार्थमेकं कलायपरिमण्डलमुभयतो मुकुलाग्रम्। मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति॥ १०॥

उपयन्त्राण्यपि रज्जुवेणिका-पट्टचर्म्मान्तवल्कल-*-लतावस्त्राष्ठीलाश्ममुद्गर-

तत् कथं विंशतिः पूर्य्यते? उच्यते—भगन्दरयन्त्रे द्वे एकमेकच्छिद्रमपरं द्विच्छिद्रम्। अर्शोयन्त्रे अपि द्वे, एकच्छिद्रद्विच्छिद्रभेदेन; व्रणयन्त्रमेकं व्रणच्छिद्रायामपरिणाहम्। वस्तिनेत्रं चतुर्व्विधं वयोभेदेन, अन्ये त्रिविधमाहुः; उत्तरवस्तिनेत्रं द्विविधं पुंसां स्त्रीणाञ्च, एके त्रिविधमाहुः। मूत्रवृद्धिदकोदरयोर्द्वे, मूत्रवृद्धिस्रावणार्थमेकं दकोदरस्रावणार्थञ्चैकम्। धूमनेत्राणि त्रीणि एकं वैरेचनिकम्, अपरं स्नैहिकम्, अन्यच्च प्रायोगिकम्। निरुद्धप्रकशयन्त्रमेकम्, सन्निरुद्धगुदयन्त्रमेकम्, अलाबुयन्त्रमेकम्, शृङ्गयन्त्रमेकम्, एवं विंशतिर्नाडीयन्त्राणि॥ ९॥

शलाकायन्त्राणि निर्द्देष्टुमाह—शलाकायन्त्राण्यपीत्यादि। यथायोगपरिणाहमिति परिणाहो वर्त्तुलता। तेषां शलाकायन्त्राणां मध्ये। गण्डूपदेत्यादि। मुख-शब्दो गण्डूपदादिभिः सह प्रत्येकं सम्बध्यते, तेन गण्डूपदमुखशरपुङ्खमुखे द्वे, एवं शेषयोरपि। शरपुङ्खः शरगुणसन्धानस्थानम्, बडिशं मत्स्यबन्धनम्। तेषां चतुर्णां गण्डूपदमुखादीनां यथासंख्येन प्रयोजनमाह—एषणेत्यादि। एषणं गम्भीरपाकादौ पूयाद्यन्वेषणम्, व्यूहनं ऊर्द्धीकरणं छित्त्वा उत्तुण्डितस्य उद्धरणार्थम्, वारङ्गेणानुसरणमित्येके। मसूरदलेति मसूरस्य दलितस्य निस्तुषस्य खण्डं दलमित्युच्यते। किञ्चिदानताग्रे इति मनाक् वक्राग्रे। षट् कार्पासकृतोष्णीषाणीति तूलवेष्टिताग्राणि, प्रमार्ज्जनक्रियासु प्रोञ्छनक्रियासु। त्रीणि दर्व्व्याकृतीनीति दर्व्वी दारुहस्तकः, खल्लमुखानि निम्नमुखानि। जाम्बववदनानीति जम्बुफलमुखाकृतीनि। कोलास्थिदलमात्रमुखमिति बदरास्थिमज्जविदलप्रमाणम्; खल्लतीक्ष्णोष्ठमिति खल्लं निम्नं मध्ये बोद्धव्यम् तीक्ष्णोष्ठन्तु अन्ते। कलायपरिमण्डलमिति कलायमात्रं परितो मण्डलं वर्त्तुलम्, उभयतो मुकुलाग्रमिति द्वयोरन्तयोः कलिकावदग्रम्, दैर्घ्येण तु अष्टाङ्गुलं शलाकायोक्तत्वात्। गण्डूपदमुखादीनामङ्कुशवदनान्तानां शलाकायन्त्राणां तुल्याकृतित्वेऽपि द्वित्रिषट्त्वादीनि कार्य्यापेक्षीणि॥ १०॥

उपयन्त्राणि निर्द्देष्टुमाह—उपयन्त्राण्यपीत्यादि। उपयन्त्राणीति यन्त्रसमीपवर्त्तीनि, हीनयन्त्राणीत्यन्ये। रज्जुः मुञ्जादिविरचितो गुणः, वेणिका गुणत्रयग्रथिता, चर्म्मान्तं चर्म्मावयवः,

* चर्म्मान्तवल्कलमिति पाठान्तरम्।

पाणिपादतलाङ्गुलि-जिह्वादन्त-नखमुखबालाश्वकटक-शाखाष्ठीवनप्रवाहणहर्षाय-स्कान्तभयानि * क्षाराग्निभेषजानि चेति॥ ११॥

एतानि देहे सर्व्वस्मिन् देहस्यावयवे तथा।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत्॥ १२॥

यन्त्रकर्म्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरण-पीड़नमार्गविशोधनविकर्षणाहरणाच्छनोन्नमनविनमन-भञ्जनोन्मथनाचूषणैषण-दारणर्ज्जूकरणप्रक्षालनप्रधमनप्रमार्ज्जनानि चतुर्व्विंशतिः॥ १३॥

अत्र वर्म्मान्तमित्येके पठन्ति, वर्म्म सन्नाहः; वल्कलं पलाशोडुम्बरादीनां त्वक्, सा च भग्नादि-बन्धनयन्त्रार्थम्; लता प्रतानिनी वेणिरिति लोके, वस्त्रं कर्पटः, अष्ठीलाश्मेति अष्ठीला दीर्घवर्त्तुल-पाषाणः, अन्ये लौहकाराणां लौहीं दीर्घवर्त्तुलदाण्डीमाहुः, तया तुल्योऽश्मा, स चाष्ठीलाश्मा उत्तरापथ प्रसिद्धः, मुद्गरः काष्ठादिकृतः, अयमस्थिविनष्टशल्यस्य चालनार्थम्। पाणिपादतलमिति तलशब्दः पाणिपादाभ्यां सह प्रत्येकं सम्बध्यते। अश्वकटकः घोटककविकाचूड़कम्, शाखा वृक्षस्य; अनयोः प्रयोजनं शल्यापनयनीये वक्ष्यति। ष्ठीवनं श्लेष्मादिनिरसनम्। प्रवाहणं वमनविरेचनाश्रुप्रवर्त्तनादि यथासंख्यं पुरीषकफपित्ताक्षिरजःशल्यादिषु। हर्षस्तुष्टिः, अयस्कान्तः पाषाणविशेषः, आकर्षक-द्रावकचुम्बकभ्रमकभेदाच्चतुर्व्विधः। इतिशब्दः समाप्तौ। स्वभावपाचनप्रमार्ज्जनादयोऽनवबद्ध-शल्योद्धरणहेतवो रज्ज्वाद्युपयन्त्रेष्वेवान्तर्भूता इति पृथक् नोक्ताः। तद् यथा—प्रवाहणग्रहणेन तावदश्रुक्षवथुप्रभृतीनामप्यत्र ग्रहणमित्यादिकं बोद्धव्यम्॥ ११॥

एतानीति—एतानि उपयन्त्राणि। सन्धिकोष्ठधमन्यादिदेहावयवान् समालोच्य तत्तदाकाराणि उपयन्त्राणि युक्तितः शस्त्रकर्म्मसु प्रयोजयेदिति॥ १२॥

कानि पुनर्यन्त्राणां कर्म्माणीत्याह—यन्त्रकर्म्माणि त्वित्यादि। निर्घातनं इतश्चेतश्च विचाल्य निर्हरणम्, इतश्चेतश्च घट्टनमित्येके; पूरणं वस्तिनेत्रप्रभृतिभिस्तैलादिना, बन्धनं रज्ज्वादिना, व्यूहनम् (ऊर्द्धीकरणं छित्त्वा उत्तुण्डितस्योद्धरणार्थम्) अत्रैवाध्याये व्याख्यातं प्राक्; वर्त्तनं विवृत्तस्य वर्त्तुलीकरणम्; चालनं स्थानात् स्थानान्तरनयनम्, अन्ये शल्यकम्पनमाहुः; विवर्त्तनं कर्णयायो-र्निष्कासयितुमिष्टस्य कर्णलग्नस्य पुनर्निवर्त्तनम्, अन्ये यन्त्रस्य भ्रामणमन्तरे वा, विवरणं प्रकाशनम्, मांसच्छेदावकाशदानेन विवरणमित्येके, विवरणं प्रसारणमिति लक्षणटिप्पनीकारेणोक्तम्; पीड़नं व्रणस्य पूयादिनिर्गमनार्थमङ्गुल्यादिना; मार्गविशोधनं मूत्रपुरीषसङ्गे; विकर्षणं विगृह्य कर्षणम्, अन्ये मांसादिप्रतिबद्धशल्यस्य मोचनमाहुः; आहरणम् आनयनम्, आच्छनमीषन्मुखा-नयनम् ईषन्मुखे आनयनमित्यर्थः; उन्नमनम् अधःस्थितस्य शिरःकर्णादेरूर्द्धं नयनम्, विनमनं निम्नी-करणम्, भञ्जनं शिरःकर्णादेरामर्द्दनम्, समन्ततो मर्द्दनमित्यन्ये; उन्मथनं प्रनष्टस्य शल्यस्य मार्गे शलाकादिभिरालोड़नम्; आचूषणं विषदुष्टस्तन्यरुधिरेषु शृङ्गालाबुभ्यां मुखेन वा; एषणं गण्डू-

* अयस्कान्तमयानीति वा पाठः।

स्वबुद्ध्या चापि विभजेद् यन्त्रकर्म्माणि बुद्धिमान्।
असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥ १४ ॥

तत्र अतिस्थूलम्, असारम्, अतिदीर्घम्, अतिह्रस्वम्, अग्राहि, विषमग्राहि, वक्रम्, शिथिलम्, अत्युन्नतम्, मृदुकीलम्, मृदुमुखम्, मृदुपाशमिति द्वादश यन्त्रदोषाः ॥ १५ ॥

एतैर्दोषैर्विनिर्म्मुक्तं यन्त्रमष्टादशाङ्गुलम्।
प्रशस्तं भिषजा ज्ञेयं तद्धि कर्म्मसु योजयेत् ॥ १६ ॥
दृश्यं सिंहमुखाद्यैस्तु गूढं कङ्कमुखादिभिः।
निर्हरेत् तु शनैः शल्यं शस्त्रयुक्तिव्यपेक्षया ॥ १७ ॥ *

पद्ममुखेन गतिव्रणोत्सङ्गशल्यादीनाम्; दारणं शिरःकर्णादिद्विधाकरणम्; ऋजूकरणं कुटिलस्य; प्रक्षालनं तोयादिभिर्व्रणोत्सङ्गादीनाम्, प्रधमनं श्लेष्मशल्यसङ्गे नासिकायां नाड्या चूर्णक्षेपणम्; प्रमार्ज्जनं प्रोञ्छनं वालाङ्गुलिवस्त्रै रक्षिरजःशल्यादिषु ॥ १३ ॥

इदानीं नानाविधशल्याकारेण कर्म्मणां बहुत्वात् संख्यायामनियमं दर्शयन्नाह—स्वबुद्ध्या चापीति ॥ १४ ॥

यन्त्रदोषान् वक्तुमाह—तत्रातिस्थूलमित्यादि। असारमशुद्धलोहादिघटितम्; अग्राहि विकृतमुखम्; विषमग्राहि एकदेशग्राहि; वक्रमनृजु; शिथिलं पीड़नाक्षमम्; अत्युन्नतम् उच्छ्रितम्; मृदुकीलं दुर्ब्बलशङ्कु; अन्ये तु वक्रशिथिलात्युन्नतमृदुकीलमिति पठन्ति, व्याख्यानयन्ति च—अत्र कीलशब्दो वक्रादिभिः सह प्रत्येकं सम्बध्यते, तेन वक्रकीलमित्यादि योज्यम्; मृदुमुखं शल्यपीड़नासहमुखम्; मृदुपाशं तनुपाशम्। एते प्रायेण स्वस्तिकयन्त्राणां दोषा बोद्धव्याः ॥ १५ ॥

यन्त्रस्य प्रशस्तत्वं वक्तुमाह—एतैर्दोषैरित्यादि ॥ १६ ॥

स्वस्तिकयन्त्राणां विषयभेदं दर्शयन्नाह—दृश्यमित्यादि। दृश्यं दर्शनगतं शल्यं, गूढमदृश्यं कङ्कमुखादिभिः, अत्रादिशब्दः प्रधानवाची, तेन कङ्कमुखादि प्रधानं येषां तैर्निर्हरेदित्यर्थः। यदि पुनरिहादिशब्दः प्रधानवाची न स्यात् तदा कङ्कमुखस्य ग्रहणं न स्यादिति। व्यपेक्षया इति विविधापेक्षा व्यपेक्षा विशिष्टापेक्षा वा ॥ १७ ॥

---

* शास्त्रयुक्तिव्यपेक्षयेति पाठः क्वचित्।

निवर्त्तते साध्ववगाहते च शल्यं निगृह्योद्धरते च यस्मात्।
यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्व्वेष्वधिकारि चैव॥ १८॥

इति सुश्रुत-संहितायां यन्त्रविधिर्नाम सप्तमोऽध्यायः॥ ७॥

कङ्कमुखस्य प्राधान्यं दर्शयन्नाह—निवर्त्तत इत्यादि। निवर्त्तते साधु निःसरतीत्यर्थः, अवगाहते प्रविशति च साधु, अन्येषां सिंहमुखादीनां स्थूलमुखत्वेन साध्ववगाहनसाधुनिवर्त्तनाभावात्। अन्ये विवर्त्तते विवृतत्वादन्तर्भ्रमतीत्याहुः। शल्यं निगृह्योद्धरते आकर्षति। स्थानेषु सर्व्वेष्विति सन्धिधमन्यादिषु, अधिकारि अस्य कङ्कमुखस्य अधिकारोऽस्ति नान्यस्य; अन्ये तु अविकारि इति पठन्ति, तत्रापि स एव तात्पर्य्यार्थ इति॥ १८॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निवन्धसंग्रहे
यन्त्रविधिव्याख्यानाम सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः ।

### अथातः शस्त्रावचारणीयमध्यायं व्याख्यास्यामः,
### यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

**विंशतिः शस्त्राणि । तद्यथा—मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्र-मुद्रिकोत्पलपत्रकार्द्धधार-सूची-कुशपत्राटीमुख-शरारिमुखान्तर्मुखत्रिकूर्चक-कुठारिका-व्रीहिमुखारावेतसपत्रक-वडिश-दन्तशङ्क्वेषण्य इति ॥ २ ॥**

अथात इत्यादि । शस्त्राणामवचारणं यस्मिन्नध्यायेऽस्ति स शस्त्रावचारणीयः, तं व्याख्यास्यामः । कियन्ति पुनस्तानि शस्त्राणीत्याह—विंशतिरित्यादि । मण्डलाग्रादीनि मण्डलाग्रे द्वे सूच्यस्तिस्र इत्याद्यवयवान्तरभेदेन तु बहून्यपि स्युः, तानि नामभिर्निर्द्देष्टुमाह—तद्यथा मण्डलाग्र त्यादि । 'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः' तथा 'नखशस्त्रै पण्यावष्टाङ्गुलौ' इत्यादिवाक्येन शस्त्राणामाकारं प्रमाणञ्च यद्यप्यग्रे वक्ष्यति, तथापीहैव परतन्त्रोक्तं शस्त्राकारप्रमाणलक्षणं सुखावबोधार्थमुपदेक्ष्यामः । मण्डलाग्रमिति मण्डलमिवाग्रं यस्य तत् मण्डलाग्रम्, तच्च द्विविधम् । तथाहि—यदग्रे मण्डलं वृत्तं क्षुरसंस्थानमेव वा । मण्डलाग्रस्य जानीयात् प्रमाणन्तु षड्ङ्गुलम् ॥ करपत्रमिति करवत् पत्रं करपत्रम्, यथा करोऽङ्गुलिभिराचितो भवति तद्वत् यत् कण्टकैराचितं स्यात् तत् करपत्रमुच्यते । अन्ये तु करपत्रशस्त्रं करपत्राकारमेव, तच्च द्वादशाङ्गुलं तन्त्रान्तरवचनात् । ननु यदि तन्त्रान्तरात् तद् द्वादशाङ्गुलं करपत्रमुच्यते तर्हि स्वतन्त्रे विरोधः, कुतः? स्वतन्त्रे करपत्रस्य निर्दिष्टप्रमाणत्वात्, शेषाणि तु षड्ङ्गुलानीत्यनेन वाक्येन षड्ङ्गुलमेव करपत्रं स्यान्न द्वादशाङ्गुलम् । नैवम्, 'तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः' इत्यस्मात् सूत्रात् प्रायःशब्दोऽनुवर्त्तते, तेनायमर्थः—शेषाणि प्रायेण षड्ङ्गुलानि, एवं शस्त्रमानेऽन्यत्राप्यविरोधः । वृद्धिपत्रमिति वृद्धेः पत्रमिव वृद्धिपत्रम्, तच्च द्विविधम्, एकमञ्चिताग्रं द्वितीयं प्रयताग्रम्, द्वे अपि सप्ताङ्गुलप्रमाणे, द्वयोरपि 'अर्द्धपञ्चाङ्गुलं वृन्तं कार्य्यं सार्द्धाङ्गुलं फलम्' इति, अनयोर्मध्ये अञ्चिताग्रं वृद्धिपत्रं क्षुरमाहुः । नखशस्त्रमिति नखानां छेदनाय शस्त्रं नखशस्त्रम्, तस्य फलं द्व्यङ्गुलायाममेकाङ्गुलविस्तृतम् । मुद्रिकां स्वयमेवाग्रे वक्ष्यति । उत्पलपत्रमिव पत्रमस्येत्युत्पलपत्रकम् । तथा च तन्त्रान्तरम्—'तुल्यमुत्पलपत्रेण तीक्ष्णधारं समाहितम् । षड्ङ्गुलं प्रमाणेन शस्त्रमुत्पलपत्रकम् ॥ तत्पत्रं त्र्यङ्गुलायामं कार्य्यमङ्गुलविस्तृतम्' इति । अर्द्धधारमिति अर्द्धं धारा यस्य तदर्द्धधारं चक्रधारमिति प्रसिद्धम्, तच्च अष्टाङ्गुलायतम् अरत्न्यङ्गुलविस्तारं द्व्यङ्गुलं फलम्, अन्ये त्वध्यर्द्धधारमिति पठन्ति, अधिकमर्द्धं धारा यस्य तदध्यर्द्धधारम् । सूची अग्रे वक्ष्यते । कुशपत्रमिति कुशपत्रतुल्यं कुशपत्रम्, तन्मानमाह—'द्व्यङ्गुलं रुचकं विद्यादङ्गुलं फलमुच्यते । वृन्तं स्यात् त्र्यङ्गुलं मध्ये कुशपत्रस्य लक्षणम् ॥' आटीमुखमिति आटी जलवर्द्धनी नाम पक्षिविशेषः, तन्मुखवन्मुखं यस्य तदाटीमुखम्, तथा चोक्तम्—'वृन्तं सप्ताङ्गुलं विद्यात् तस्याग्रे फलमिष्यते । आटीमुखप्रकारं हि फलमङ्गुष्ठमायतम् । आटीमुखं

तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च। वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च। सूचीकुशपत्राटीमुखशरारिमुखान्तर्मुखत्रिकूर्च्चकानि विस्रावणे। कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च। वड़िशं दन्तशङ्कश्चाहरणे। एषण्यैषणे आनुलोम्ये च। सूच्यः सेवने। इत्यष्टविधे कर्म्मण्युपयोगः शस्त्राणां व्याख्यातः ॥ ३ ॥

विजानीयात् तत्स्रावणविधौ मतम्' इति ॥ शरारिमुखमिति शरारिर्दीर्घचन्चुः पक्षिविशेषः, स द्विविधः—धवलस्कन्धः रक्तशीर्षश्च, धवलस्कन्धस्य शरारिरिति संज्ञा, तन्मुखवन्मुखं यस्य तच्छरारिमुखम्, तस्य शस्त्रस्य लोके कर्त्तरीति संज्ञा ; ताञ्च द्वादशाङ्गुलां चलत्पलाशां कुर्य्यात्। अन्तर्मुखमिति मध्यमुखं, तल्लक्षणमाह—'अष्टाङ्गुलं प्रमाणेन जिह्मधारेण चाप्लुतम्। शस्त्रमन्तर्मुखं नाम चन्द्रार्द्धमिव चोद्गतम्' इति ॥ त्रिकूर्च्चकमिति त्रयः कूर्च्चा यस्य तत् त्रिकूर्च्चकम्, तत्र तन्त्रान्तरम्—'अङ्गुलानि तथाष्टौ च शस्त्रं कार्य्यं त्रिकूर्च्चकम्। फलैरन्तर्मुखाकारैरङ्गुलैरन्वितं त्रिभिः ॥ एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितम्। वृन्तं पञ्चाङ्गुलायामं कार्य्यं रुचकभूषितम्' इति ॥ कुठारिकेति, कुठारतुल्या कुठारिका, अत्र तन्त्रान्तरम्—'कुठारिकाया वृन्तं स्यात् सार्द्धसप्ताङ्गुलायतम्। फलमर्द्धाङ्गुलायामं गोदन्तसदृशं समम्' इति ॥ व्रीहिमुखमिति व्रीहिमुखमिव मुखमस्य व्रीहिमुखम्, तत्र भोजः—'शस्त्रं व्रीहिमुखं कार्य्यमङ्गुलानि षड़ायतम्। द्व्यङ्गुलं तस्य वृन्तं स्यात् तत्फलं चतुरङ्गुलम्। तन्मुखं व्रीहिविस्तारं तनुसंगूढ़कण्टकम्' इति ॥ आरेति आरेव आरा असिश्चर्म्मकाराणां शस्त्रम्। अत्र तन्त्रान्तरम्—'आरा द्व्यष्टाङ्गुलायामा कर्त्तव्या तु विशाम्पते। तिलप्रमाणन्तु फलं तस्याः कार्य्यं समाहितम्। दूर्व्वाङ्कुरपरीणाहं वृन्तं गोपुच्छसन्निभम्' इति ॥ वेतसपत्रमिति वेतसपत्रमिव वेतसपत्रम्, अत्र भोजः—'तीक्ष्णमङ्गुलविस्तारं चतुरङ्गुलमायतम्। अङ्गुलानि तु चत्वारि वृन्तं कार्य्यं विजानता' इति ॥ बड़िशमिति वड़िशतुल्यं वड़िशं मत्स्यवेधनमाहुः, अत्र तन्त्रान्तरम्—वड़िशे चापि कर्त्तव्ये प्रमाणे तु षड़ङ्गुले। स्वानतन्तु तयोरेकमेकं नात्यानतं भवेत् ॥ अर्द्धपञ्चाङ्गुलं वृन्तं शेषं कार्य्यं मुखं तयोः। अर्द्धचन्द्राकृति वक्त्रं कार्य्यं नात्यानतस्य तु ॥ स्वानतं नामयेत् तत्र वड़िशञ्च भिषग्वरः। वृन्ताग्रयोरन्तरं स्याद् यावदर्द्धाङ्गुलं मतम्' इति ॥ दन्तशङ्कुरिति कपालिकाशर्करादिदन्तदोषहरणाय शङ्कुर्दन्तशङ्कुः, अत्र भोजः—'कार्य्यः षडङ्गुलायामो दन्तशङ्कुर्विजानता। शङ्कुवच्च मुखं तस्य कार्य्यमर्द्धाङ्गुलायतम् ॥ चतुरस्रं समञ्चैव तीक्ष्णधारं समाहितम्। वृन्ताग्रं तस्य कर्त्तव्यं शस्त्रं व्रीहिमुखाकृति। कपालिकां शर्कराञ्च दन्तस्थां तेन शोधयेद्' इति ॥ एषणीति एष्यते अनया इति एषणी, अत्र तन्त्रान्तरम्—'व्रणस्तासां परीणाहो मुखं गण्डूपदाकृति' इति ॥ १२ ॥

तेषां विषयभेदमष्टविधकर्म्मणि दर्शयितुमाह—तत्र मण्डलाग्रेत्यादि। तत्र तेषु मध्ये, स्यातां भवेताम्, चकारः कर्म्मान्तरं समुच्चिनोति। वृद्धिपत्रेत्यादि। चकाराल्लेखने च। सूची चेति चकारः कुशपत्रोत्पलपत्रकादींश्च व्यधने समुच्चिनोति। ननु उभयत्रापि एकार्थत्वात् किमर्थं यन्त्रशस्त्रयोर्मध्ये वड़िशस्य पाठः ? उच्यते— यन्त्रपठितं वड़िशं यथायोगपरिणाहदैर्घ्यम्, शस्त्रपठितन्तु षडङ्गुलमेव तीक्ष्णकण्टकमृजुमेवेत्यदोषः। एषण्यामिति। आनुलोम्यमत्र विस्रावणमभिप्रेतम्, न तु

तेषामथ यथायोगग्रहणसमासोपायः कर्म्मसु वक्ष्यते। तत्र वृद्धिपत्रं वृन्त-फलसाधारणे भागे गृह्णीयाद् भेदनान्येवं सर्व्वाणि। वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्य्यम्। वृन्ताग्रे विस्रावणानि। विशेषेण बालवृद्ध-सुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्च्चकेन विस्रा-वयेत्। तलप्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम्। कुठारिकां वामहस्त-न्यस्तामितरहस्तमध्यमाङ्गुल्याङ्गुष्ठविष्टब्धयाभिहन्यात्। आराकरपत्रैषण्यो मूले। शेषाणि तु यथायोगं गृह्णीयात्॥ ४॥

तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र नखशस्त्रैषण्यावष्टाङ्गुले, सूच्यो वक्ष्यन्ते। (प्रदेशिन्यग्रपर्व्वप्रदेशप्रमाणा मुद्रिका। दशाङ्गुला शरारि-मुखी, सा च कर्त्तरीति कथ्यते।) शेषाणि तु षडङ्गुलानि॥ ५॥

ऋजूकरणम्, कस्मात्? ऋजूकरणस्य शस्त्रकर्म्मसु अनिर्द्दिष्टत्वात्; यदि कथञ्चित् स्यात्, तदा शस्त्रकर्म्मणां नवत्वप्रसङ्गः, तस्मादाद्य एव पक्षो न्याय्य इति, चकारात् व्यधनेऽपि। ननु एषणी यन्त्रशस्त्रयोः पठ्यते, प्रयोजनञ्च उभयत्रापि एषणमेव, तस्मादुभयपाठे को विशेषः? उच्यते—यन्त्र-पठिताया एषण्या आकृतिर्गण्डूपदमुखी, प्रमाणन्तु यथायोगपरिणाहदैर्घ्यम्, शस्त्रेषु पुनरेषण्याः प्रमाणमष्टाङ्गुलम्, आकृतिस्तु तीक्ष्णकण्टकयवपत्रमुखी चेत्यदोषः। द्व्यङ्गुलादिभेदेन सूचीनां बहुत्वात् सूच्य इति बहुवचनत्वेन निर्द्देशः॥ ३॥

तेषामित्यादि। वृन्तफलसाधारणे भागे वृन्तफलयोर्मध्यदेश इत्यर्थः। एवमित्थमेव, यथा वृद्धिपत्रं वृन्तफलयोर्मध्यदेशे गृह्यते तथा भेदनान्यपीत्येवंशब्दार्थः। बहुशः इति बहून् वारान्, सकृदपहरेदित्यस्यापवादः। वृन्ताग्रे वारङ्गाग्रे गृह्णीयादित्यध्याहारः। तलप्रच्छादितवृन्तमिति हस्ततलपिहितवृन्तम्, अङ्गुष्ठप्रदेशिनीभ्यां गृह्णीयादित्यध्याहारः। अङ्गुष्ठविष्टब्धयेति अङ्गुष्ठाग्र विष्टम्भितवेगया। मूलं त्सरु वारङ्गं वृन्तमिति पर्य्यायाः। यथायोगमिति योगानतिक्रमेण। तद् यथा—कानिचिद् वृन्ताग्रे, कानिचिद् वृन्तमध्ये कानिचिद् वृन्तमूले, कर्म्मयोगापेक्षयेत्यर्थः॥ ४॥

सङ्क्षेपेण शस्त्राकारं दर्शयन्नाह—तेषां नामभिरित्यादि। तेषां शस्त्राणां आकृतयो लक्षणानि नामभिरेव प्रायेण व्याख्याताः। तेषां प्रमाणानि दर्शयन्नाह—तत्र नखशस्त्रेत्यादि। अन्ये तु नखशस्त्रस्थाने नखवर्द्धनीति पठन्ति व्याख्यानयन्ति च—नखवर्द्धनी नखच्छेदनी। सूच्यो वक्ष्यन्त इति। अष्टविधशस्त्रकर्म्मीध्याये द्व्यङ्गुला त्र्यङ्गुलेत्यादिना सूच्यो वक्ष्यन्त इति। एतस्याग्रे मुद्रिका-कर्त्तरीशस्त्रयोः केचिन्मानं पठन्ति। तदुच्यते—"प्रदेशिन्यग्रपर्व्वप्रदेशप्रमाणा मुद्रिका। दशाङ्गुला शरारिमुखी, सा च कर्त्तरीति कथ्यते।" शेषाणीति निर्द्दिष्टप्रमाणेभ्यो नखवर्द्धन्येषणीसूचीभ्योऽन्यानि शेषाणि॥ ५॥

तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राणि अकरालानि चेति शस्त्रसम्पत् ॥ ६ ॥

तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्र-दोषाः। अतो विपरीतगुणमाददीत, अन्यत्र करपत्रात्; तद्धि खरधारमस्थि-च्छेदनार्थम् ॥ ७ ॥

तत्र धारा भेदनानां मासूरी, लेखनानामर्द्धमासूरी, व्यधनानां विस्रावणा-नाञ्च कैशिकी, छेदनानामर्द्धकैशिकीति। वड़िशं दन्तशङ्कुश्चानताग्रे तीक्ष्ण-कण्टकप्रथमयवपत्रमुख्येषणी गण्डुपदाकारमुखी च ॥ ८ ॥

प्रमाणाकाराभ्यां शस्त्राणि निर्दिश्य शेषगुणसम्पदं दर्शयितुमाह—तानि सुग्रहाणीत्यादि। सुग्रहाणि शोभनवारङ्गानि, सुलोहाणि शोभनलोहानि, सुधाराणि शोभनधाराणि, सुसमाहित-मुखानि पिण्डीकृतमुखानि, अन्ये तु सुष्ठु सम्यग् आहितं मुखं येषां तानि तथोक्तानि, अकरालानि अदन्तुराणि, शस्त्रसम्पत् शस्त्रगुणः ॥ ६ ॥

शस्त्रदोषान्निर्दिशन्नाह—तत्र वक्रमित्यादि। कुण्ठं स्थूलधारत्वेनारोमवाहि, खण्डम् असमग्रम्, खरधारं कर्कशधारम्, अत्यल्पम् अतिन्यूनम्। अतो विपरीतगुणमिति वक्रादिशस्त्रेभ्यो विपरीतगुणम्, ऋजुतीक्ष्णश्लक्ष्णमसृणधारादिगुणम्। किं सर्व्वाण्येव विपरीतगुणाण्याददीत इत्याह—अन्यत्र करपत्रादिति। कुतः पुनरेतत्? तद्धीत्यादि। तच्छब्दो यस्मादर्थे, हिशब्दो हेतौ, यस्मात् करपत्रमस्थिच्छेदनार्थमतो हेतोः खरधारम् ॥ ७ ॥

अष्टविधे कर्म्मणि सुकर्म्मनिष्पादकत्वेन यथा शस्त्राणां सुधारत्वं भवति तथा निर्दिशन्नाह—तत्र धारेत्यादि। भेदनानां वृद्धिपत्रनखशस्त्रादीनाम्, मासूरी मसूरदलधारतन्वी, लेखनानां मण्डलाग्रादीनाम् अर्द्धमासूरी मसूरदलधारार्द्धतन्वी, व्यधनानां कुठारिकादीनां विस्रावणानां सूचीकुशपत्रादीनां कैशिकी केशप्रमाणा। छेदनानामिति—अत्र छेदनानि वृद्धिपत्रादीन्येव, तानि यदा छेदने प्रयुज्यन्ते, तदा तेषां धारा अर्द्धकैशिकी अर्द्धकेशप्रमाणतन्वी कर्त्तव्या। आहरणे एषणे च शस्त्राणां धाराविशेषं दर्शयन्नाह—वड़िशं दन्तशङ्कुरित्यादि। अत्र आनताग्रे इति वड़िशस्यैव विशेषणम्, न दन्तशङ्कोः, कुतः? शङ्कुतुल्यत्वेनैव तस्यानतत्वदर्शनात्। एषणी त्रिविधा भवति—तीक्ष्णकण्टकमुखी प्रथमयवपत्रमुखी गण्डूपदाकारमुखी च। अन्ये तु तीक्ष्णकण्टक-प्रथमयवपत्रमुखे इति पठन्ति, व्याख्यानयन्ति च—एतद्विशेषणद्वयं वड़िशदन्तशङ्क्वोः, तेन तीक्ष्ण-कण्टकमुखं वड़िशम्, प्रथमयवपत्रमुखो दन्तशङ्कुः, दन्तशङ्कुमुखत्वेन दन्तशङ्कोर्मुखतनुत्वमाकारश्च कथितः, तेन गण्डूपदाकारमुखी चेति चकारादेतद् विशेषणद्वयमेषणीमपि सम्बध्नाति। अन्ये तु तत्र धारा भेदनानां मासूरीत्यादिग्रन्थं एषणी गण्डूपदाकारमुखी चेति यावन्न पठन्ति ॥ ८ ॥

तेषां पायना त्रिविधा क्षारोदकतैलेषु। तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु। उदकपायितं मांसच्छेदनभेदनपाटनेषु। तैलपायितं सिराव्यधनस्नायुच्छेदनेषु। तेषां निशाणार्थं श्लक्ष्णशिला माषवर्णा, धारासंस्थापनार्थं शाल्मलीफलकमिति॥ ९॥

भवति चात्र।

यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्।
सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्॥ १०॥

अनुशस्त्राणि तु त्वक्सार-स्फटिककाचकुरुविन्दजलौकोऽग्निक्षारनख-गोजी-शेफालिका-शाकपत्रकरीर-वालाङ्गुलय इति॥ ११॥

शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत्।
त्वक्सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्॥

तत्र पायनायां तीक्ष्णत्वादयो गुणाः कर्म्मविशेषोत्कर्षहेतवो भवन्तीति तामाह—तेषां पायनेत्यादि। पायना पातुं प्रयोजना, सा च लौहकाराणां प्रसिद्धा। केचित् क्षारतैलपायनयोरनार्षत्वमाचक्षते। क्षारादिपायनानां कर्म्मविशेषविषयं दर्शयन्नाह— तत्र क्षारपायितमित्यादि। सुधाराणीति प्रागुक्तम्, कथं धारा शोभना कर्त्तव्या इत्यत्राह—तेषामित्यादि। श्लक्ष्णा अकर्कशा धारासंस्थापनार्थं स्थिरीकरणार्थं फलकं पट्टकम्। तत्र अनिशितधाराणां निशाणार्थं श्लक्ष्णशिला, विशितानां संस्थापनार्थं शाल्मलीफलकम्। अन्ये तु तेषां निशानी श्लक्ष्णशिलिका माषयूषप्रभा, धारासंस्थापनं शाल्मलीफलमिति पठन्ति, व्याख्यानयन्ति च—श्लक्ष्णशिलिका नापितशिलिका माषयूषप्रभा कृष्णकपिलेत्यर्थः॥ ९॥

कथं पुनः शस्त्रं संस्थापितधारं ज्ञातव्यमित्याह—भवति चात्रेत्यादि। यदा शस्त्रं रोमच्छेदि भवति तदा सुनिशितं भवति; यावद्रोमाणि न छिनत्ति तावन्निशितव्यमित्यर्थः। सुसंस्थितं शोभनाकारम्, सुगृहीतं ग्रहणञ्च शस्त्राणां प्रागुक्तम्, तद् यथा—'वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयात्' इत्यादि। प्रमाणेनेति प्रमाणेन लक्षितम्, शस्त्रप्रमाणं 'तेषां नखशस्त्रैषण्यावष्टाङ्गुले,' इत्यादि। अन्ये तु सुगृहीतं प्रमाणेनेति प्रमाणेन सुगृहीतमिति व्याख्यानयन्ति तच्च वृद्धिपत्रादिवृन्तफलसाधारणभागादिग्रहणप्रमाणेनेत्यर्थः। केचित् रोमच्छेदिस्थाने रोमवाहीति पठन्ति॥ १०॥

अशस्त्रावचारणीयेषु शिशुप्रभृतिषु अलाभाद् वा शस्त्राणां तत्कर्म्मसाधकद्रव्यान्तरेण शस्त्रातिदेशं कुर्व्वन्नाह—अनुशस्त्राणीत्यादि। अनुशस्त्राणि हीनशस्त्राणि शस्त्रसदृशानि वा, त्वक्सारः वंशः, कुरुविन्दः पाषाणविशेषः, येन निशितानि लौहानि तीक्ष्णानि भवन्ति, अन्ये तु कुरुविन्दं लोहिताश्मरत्नप्रधानम्; गोजी गोजिह्वा, अन्ये शाखोटकमाहुः; शेफालिका रक्तवृन्ता शारदकुसुमा, शाको महावृक्षः कर्कशपत्रः, पत्रशब्दो गोजीप्रभृतिभिः सह प्रत्येकं सम्बध्यते, करीरः अङ्कुरः॥ ११॥

तेषां विषयमाह—शिशूनामित्यादि। त्वक्सारादिचतुर्व्वर्गमिति वंशस्फटिककाचकुरुविन्दानि।

आहार्य्यच्छेद्यभेद्येषु नखं शस्त्येषु योजयेत्।
विधिः प्रवक्ष्यते पश्चात् क्षारवह्निजलौकसाम्॥
ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये।
गोजीशेफालिकाशाक-पत्रैर्विस्रावयेत् तु तान्।
एष्येष्वेषण्यलाभे तु वालाङ्गुल्यङ्कुरा हिताः॥ १२॥
शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु।
कारयेत् करणप्राप्तं कर्म्मारं कर्म्मकोविदम्॥ १३॥
प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः।
तस्मात् परिचयः कार्य्यः शस्त्राणां ग्रहणे सदा॥ १४॥

इति सुश्रुतसंहितायां सूत्रस्थाने शस्त्रावचारणीयो नामाष्टमोऽध्यायः॥ ८॥

आहार्य्यच्छेद्यभेद्येष्वपु नखं शस्त्येष्विति आहार्य्यादिषु नखशस्त्येषु नखं प्रयोजयेदित्यर्थः। नेत्रवर्त्म नेत्रपक्ष्म। एष्येष्वेषण्यलाभे त्वित्यादि, एष्येषु शल्येषु एषण्या अलाभे बालादयो हिताः॥ १२॥

इदानीं शस्त्राणां गुणसम्पत्कारणं वक्तुमाह— शस्त्राण्येतानीत्यादि। कारयेत् कर्त्तुं प्रयोजयेत्, कः कर्त्तुं प्रयोजयेत्? बुद्धिमान् वैद्य इत्यर्थः, कं? कर्म्मारं लौहकारम्, किं विशिष्टं लौहकारम्? करणप्राप्तं करणे प्राप्तं करणप्राप्तं युक्तं स्वकर्म्मणि निपुणमित्यर्थः। पुनः किं विशिष्टम्? कर्म्मकोविदं कर्म्मपण्डितम्, यतः स्वकर्म्मणि निपुणमतएव च कर्म्मकोविदम्, कानि कारयेत्? शस्त्राणि, एतानि पूर्व्वोक्तानि। किम्भूतानि शस्त्राणि कारयेदित्याह—शुद्धशैक्यायसानि त्विति शुद्धं मलरहितम्, शैक्यं तीक्ष्णम्, अन्ये तु शैक्यायसानि सारमयलौहघटितानि। केचित् श्लोकार्द्धमन्यथा पठन्ति, 'कारयेत् करणैः प्रोक्तैः कर्म्मारैः कर्म्मकोविदैः' इति, व्याख्यानयन्ति च— करणैरुपकरणैः, शेषं समम्॥ १३॥

प्रयोगज्ञस्येत्यादि। प्रयोगः प्रकृष्टो योगः योजना तज्ज्ञस्य, सिद्धिः आरोग्यसम्पादनम्, नित्यशः सर्व्वदा, परिचयः शस्त्रग्रहणाभ्यासः। अन्ये प्रमाणज्ञस्य वैद्यस्येति पठन्ति, प्रमाणज्ञस्य शस्त्रग्रहणमानज्ञस्य॥ १४॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे शस्त्रावचारणीयव्याख्यानामाष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

अथातो योग्यासूत्रीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्यां कारयेत्। स्नेहादिषु छेद्यादिषु च कर्म्मपथमुपदिशेत्। सुबहुश्रुतोऽप्यकृतयोग्यः कर्म्मस्वयोग्यो भवति॥ २॥

तत्र पुष्पफलालाबूकालिन्दकत्रपुसैर्व्वारुककर्क्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेदुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत्, दृतिवस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम्, सरोम्णि चर्म्मण्यातते लेख्यस्य, मृतपशुशिरासूत्पलनालेषु च वेध्यस्य। घुणोपहतकाष्ठवेणुनलनालीशुष्कालाबूमुखेष्वेष्यस्य, पनसविम्वीविल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य, मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य, सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्म्मान्तयोश्च सीव्यस्य, पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु वन्धयोग्याम्, मृदुमांसपेशीषूत्पलनालेषु च कर्णसन्धिवन्धयोग्याम्, मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम्, उदकपूर्णघटपार्श्वस्रोतस्यलाबूमुखादिषु च नेत्रप्रणिधानवस्तिव्रणवस्तिपीड़नयोग्यामिति॥ ३॥

अथात इति। योग्या सम्यक् कर्म्माभ्यासः, योग्यायाः सूत्रम्, तद्विद्यते यस्मिन् स तथा; अन्ये तु योग्याख्यापकं सूत्रं तदधिकृत्य कृतोऽध्यायो योग्यासूत्रीयः तं तथा। अधिगतेत्यादि। स्नेहादिष्विति आदिशब्दात् स्वेदवमनविरेचनास्थापनानुवासनादीनां ग्रहणम्। छेद्यादिष्विति आदिशब्दात् भेद्यादीनां सप्तानां ग्रहणम्, यद्यप्यस्मिन् तन्त्रे छेद्यादिकर्म्मणां प्राधान्यं तथापि छेद्यादिष्वपि प्राक् स्नेहादि प्रयुज्यते इति प्राक् स्नेहादिग्रहणम्। अन्ये छेद्यादिषु स्नेहादिषु चेति पठन्ति। कर्म्मपथं क्रियामार्गम्। कुतोऽधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्यां कारयेदित्याह—सुबहुश्रुतोऽपीत्यादि। अकृतयोग्योऽकृतकर्म्माभ्यासः, कर्म्मसु क्रियासु॥ १।२॥

शल्यतन्त्रस्य छेद्यादिकर्म्मप्राधान्यात् प्राक् छेद्यादियोग्यामुपदर्शयन्नाह—तत्र पुष्पफलेत्यादि। पुष्पफलं कुष्माण्डः, कालिन्दकः जोव्वालकुष्माण्डभेदः, त्रपुसादयः कर्कटीभेदाः, प्रभृतिग्रहणात् शीर्णवृन्तादीनां ग्रहणम्। छेद्यविशेषानिति गोतीर्थार्द्धलाङ्गलकप्रभृतीन्, उत्कर्त्तनमूर्द्ध्वकर्त्तनम्, परिकर्त्तनमधश्छेदः। दृतिवस्तीत्यादि। दृतिश्चर्म्मपुटकम्, वस्तिर्मूत्रपुटकम्, प्रसेवकश्चर्म्मखल्लपुटः, उदकपङ्कमिति उदकमिश्रः पङ्कः उदकपङ्कः। सरोम्णीत्यादि। आतते प्रसारिते। मृतपशुसिरास्विति मृताः पशवोऽजादयस्तेषां सिरासु। पनसेत्यादि। पनसो वहिष्कण्टकिमहाफलः कटहल इति लोके; पनसादीनां फलानि तेषां मज्जा। मधूच्छिष्टेति मधूच्छिष्टं मधुसिक्थकम्, शाल्मलीफलके शाल्मलीपट्टके। पुस्तमयेति पुस्तमयपुरुषः वस्त्रादिरचितो मनुष्यः। मृदुमांसेति।

भवतश्चात्र।

एवमादिषु मेधावी योग्यार्हेषु यथाविधि।
द्रव्येषु योग्यां कुर्व्वाणो न प्रमुह्यति कर्म्मसु॥ ४॥
तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्म्मसु।
यस्य यत्रेह साधर्म्म्यं तत्र योग्यां समाचरेत्॥ ५॥

इति सुश्रुतसंहितायां योग्यासूत्रीयो नाम नवमोऽध्यायः॥ ९॥

मांसपेशी मांसवर्त्तिः। उदकेति नेत्रप्रणिधानं नेत्रप्रवेशनम्, वस्तिपीड़नं व्रणवस्तिपीड़नञ्च, अनयोर्योग्यां कारयेत्; क्व कारयेत्? उदकपूर्णघटपार्श्वस्रोतसि, न केवलं जलपूर्णघटपार्श्वच्छिद्रे, अलावूमुखादिषु चेत्यर्थः॥ ३॥

भवतश्चात्रेत्यादि। एवमादिष्विति आदिशब्दः प्रकारे, एवंप्रकारेषु योग्यार्हेषु पुष्पफलादिषु। तस्मादित्यादि। यस्य कर्म्मणः यत्र यस्मिन् द्रव्ये साधर्म्म्यं साम्यं तस्य तत्र योग्यां समाचरेदिति। केचिदेवमादिषु मेधावीत्यादिश्लोकस्याग्रे आपातनिकापूर्व्वं श्लोकमेकं पठन्ति। तद् यथा—अनुक्तं योग्याविषयमुपग्रहीतुमाह—'दृष्टान्तमात्रमुपदिष्टं' इत्यादि। स च वर्त्तमानेषु पुस्तकेषु न पठ्यते इत्यस्माभिरुपेक्षितः॥ ४।५॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
योग्यासूत्रीयव्याख्यानाम नवमोऽध्यायः॥ ९॥

———

# दशमोऽध्यायः।

अथातो विशिखानुप्रवेशनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अधिगततन्त्रेणोपासिततन्त्रार्थेन दृष्टकर्म्मणा कृतयोग्येन शास्त्रं निगदता राजानुज्ञातेन नीचनखरोम्ना शुचिना शुक्लवस्त्रपरिहितेन छत्त्रवता दण्डहस्तेन सोपानत्केनानुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन वन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखानुप्रवेष्टव्या ॥ २ ॥

अथात इत्यादि। विशिखा कर्म्ममार्गः, विशिखाया अनुप्रवेशनम्, तदधिकृत्य कृतोऽध्यायो विशिखानुप्रवेशनीयस्तं व्याख्यास्यामः। यादृशस्य वैद्यस्य कर्म्ममार्गप्रवेशाधिकारस्तादृशं वक्तुमाह— अधिगततन्त्रेणेत्यादि। अधिगततन्त्रेण पठितशास्त्रेण, उपासिततन्त्रार्थेन गुरुपार्श्वादुपदेशेन, शास्त्रं निगदता पाठार्थाभ्यां नियमेनादेशेन शास्त्रं वदता, एतेन स्वावर्त्तितशास्त्रता उक्ता भवति ; अन्ये तु 'शास्त्रं निगदिना' इति पठन्ति, शास्त्राणि निगदता इत्यपरे। राजानुज्ञातेन राज्ञा अभिमतेन, राजा हि प्रजापालनतत्परः, तत्प्रमादाद् वैद्यप्रतिरूपका राष्ट्रं चरन्ति लोककण्टकभूताः, तस्माद्राज्ञा परीक्ष्यानुज्ञातेन विशिखा अनुप्रवेष्टव्येति। कर्म्मज्ञतां शास्त्रज्ञताञ्च वैद्यस्याभिधाय वाह्यवेशमधिकृत्याह—नीचनखरोम्णेत्यादि। नीचमल्पं नखं रोम च यस्य तेन, नीचनखत्वात् शुचिता कर्म्मसौकुमार्य्यञ्च, नीचरोमत्वादार्ज्जवम्, रसवत्यामवाध इत्यपरे। शुचिनेति वाह्यस्नानादिशौचयुक्तेन, कुतः ? वाह्यवेशाधिकारात्, वाह्यशौचायोगाल्लोके विगर्हणीयः, अन्तःशौचन्तु सुमनसेत्यनेनैव वोद्धव्यम्। शुक्लवस्त्रपरिधानं मङ्गलार्थं शौचार्ज्जवार्थं वा, छत्रवता आतपरजोवर्षापन्नगादिनिषेधार्थं छत्रयुक्तेन, दण्डहस्तेन दण्डोऽवलम्बनदण्डः तस्य धारणं स्खलितादिनिषेधार्थम्। सोपानत्केन पादत्राणादिना सहितेन, पादत्राणादिधारणं कण्टकादिनिषेधार्थम्। अनुद्धतवेशेन साधुजनवेशेन, एतेनायुक्तकायवेशनिषेधः ; अन्ये तु नानावस्त्राङ्गरागमाल्यानुलेपनविचित्रभूषणादिभिरुद्धतो वेशः, अतो विपर्य्ययेणानुद्धत इति मन्यन्ते। कायं नियम्य मनो नियमयन्नाह—सुमनसा शोभनमनसा, अक्रौर्य्यादिगुणयुक्तमनसेत्यर्थः ; दौर्म्मनस्यन्तु यात्रायां न प्रशस्यत इति सुमनसा भवितव्यम्। वाचं नियमयन्नाह—कल्याणाभिव्याहारेणेति। कल्याणं मङ्गलम् अभिव्याहारः भाषितम् यस्य स तथा, तच्च सर्व्वजनहृदयग्रहणार्थम्। कायवाङ्मनःसु त्रिष्वपि नियमयन्नाह—अकुहकेनेति। कुहकः शास्त्रहीनः परमविश्वासकारको मायावी, न कुहकः अकुहकः ; अन्ये तु अकुहकेन अविस्मापकेन, दम्भाद्ययोगाद् विस्मापककायादिवेशेनेत्यर्थः। सुसहायवता साधुसहायेन, अन्यथान्तःपुरचारिणो वैद्यस्य सहायदोषेण दोषः स्यात्, सहायश्चात्मरक्षार्थमातुरपरिचर्य्यार्थं वा। ननु प्राणिनां जीवतामेव सद्यस्करुधिरोपदेशात् कथं बन्धुभूतेन भूतानामित्युक्तम् ; सत्यम्, विधिप्रापितत्वाददोषः, आलम्भयोगे पशुवत् ॥ १।२ ॥

ततो दूतनिमित्तशकुनमङ्गलानुलोम्येनातुरगृहमभिगम्योपविश्यातुरमभिपश्येत् स्पृशेत् पृच्छेच्च। त्रिभिरेतैर्विज्ञानोपायै रोगाः प्रायशो वेदितव्या इत्येके। तत् तु न सम्यक्, षड्विधो हि रोगाणां विज्ञानोपायः ; तद्यथा—पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति॥ ३॥

तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते—तत्र सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः। स्पर्शनेन्द्रियविज्ञेयाः शीतोष्ण-श्लक्ष्णकर्कश-मृदुकठिनत्वादयः स्पर्शविशेषा ज्वरशोथादिषु। चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबल-वर्णविकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः। घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः। प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलं दीप्ताग्नितां वातमूत्रपुरीषाणां प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्। आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात्॥ ४॥

ततो दूतनिमित्तेत्यादि। गमनाय प्रश्नाय वा आगतः पुरुषो दूतः, निमित्तम् अनुकूलं सुरभिवातादि, शकुनं पक्षिविशेषस्य प्रशस्तवाक्यादि, मङ्गलं स्वस्तिकपूर्णकुम्भादि, एषामानुलोम्येन प्रशस्ततयेत्यर्थः। त्रिभिरेतैरित्यादि। एतैर्विज्ञानोपायैरनन्तरोक्तैः दर्शनस्पर्शनप्रश्नैः। षड्विधो हीति। हिशब्दो यस्मादर्थे। श्रोत्रादिभिरिति आदिशब्दात् त्वङ्नेत्ररसनघ्राणानि गृह्यन्ते॥ ३॥

तत्र श्रोत्रेत्यादि। शरीरोपचयेति उपचयः स्थौल्यम्, अपचयः कार्श्यम् बलमत्र उत्साहः। ननु प्रमेहादिषु रसा मधुरादयो मक्षिकापिपीलिकाद्युपसर्पणेन भिषग्भिरनुमेयास्तत् कथं रसनेन्द्रियविज्ञेया इति? उच्यते, नात्र भिषजां रसनेन्द्रियाणां व्यापारः, किन्तु पिपीलिकादीन्, पातादिना तदनुमितिरित्यदोषः। अरिष्टलिङ्गादिषु येऽव्रणानां व्रणानाञ्च गन्धविशेषास्ते घ्राणेन्द्रियविज्ञेया इति सम्बन्धः। देशस्त्रिविधो जाङ्गलानूपसाधारणभेदात्। जातिशब्दो ब्राह्मणादिषु वर्त्तते। कालो द्विविधो नित्यग आवस्थिकश्च ; नित्यगो ऋतुलक्षणः, आवस्थिको बाल्यादिलक्षणः। आवस्थिको द्विविधः—स्वस्थस्य बाल्यादिभेदेन, व्याधितस्य ज्वरारम्भादिकालावस्थया च। सात्म्यमिति यद् यस्य सेवितं सत् सुखाय सम्पद्यते तत् तस्य सात्म्यम्। तच्च द्विविधं चेष्टाख्यमाहाराख्यञ्च। चेष्टाख्यं कायवाङ्मनोभेदात्त्रिविधम्, आहाराख्यं रसभेदात् षड्विधम्। आतङ्कसमुत्पत्तिमिति समुत्पत्तिः कारणमुच्यते, तच्च बलवद्विग्रहादि। वेदनासमुच्छ्रायमिति वेदना वातादिवेदनास्तोदादयः, तासां समुच्छ्राय उन्नतिः। बलं व्यायामगम्या शक्तिः, दीप्ताग्नितामन्तरग्नेरिति, कीदृशोऽन्तरग्निः? समो विषमो मन्दो वा। वातमूत्रपुरीषाणामिति अन्नादिशब्दो लुप्तो ज्ञेयः, तेन आर्त्तवानामधोगतरक्तपित्तादीनां ग्रहणम्। कालप्रकर्षादींश्च विशेषानिति [illegible] कालोऽस्मिन् व्याधावुत्पन्न

भवति चात्र ।

मिथ्या दृष्टा विकारा हि दुराख्यातास्तथैव च ।
तथा दुष्परिमृष्टाश्च मोहयेयुश्चिकित्सकम् ॥ ५ ॥

इत्यादीन् भेदान्, चकाराद् गुह्यदेशप्रवृत्तपूयादीनां ग्रहणम् । अन्ये तु देशकालजातिसात्म्यमिति समस्तं पठन्ति, सात्म्यशब्दो देशादिभिः सह प्रत्येकं सम्बध्यते । देशस्त्रिविधो जाङ्गलादिभेदेन, तद्वैपरीत्येन देशसात्म्यमित्यादि व्याख्यानयन्ति । अपरे तु देशकालजातमिति पठन्ति, व्याख्यानयन्ति च—जातशब्दो देशकालाभ्यां सह प्रत्येकं सम्बध्यते । देशो भूमिरातुरश्च ; कस्मिन् देशे जाङ्गलेऽनूपे साधारणे वायं दोषः सञ्चितः ? कस्मिन् प्रकुपितः ? कस्मिन्नयं व्याधिरुत्पन्नः ? इति । तथा आतुरेऽपि गलादौ कस्मिन्नवयवे श्लेष्मस्थाने पित्तस्थाने वा ? आत्मसदृशेषु दोषसदृशेषु, विज्ञानाभ्युपायेषु षड्विधेषु श्रोत्रत्वक्चक्षूरसनघ्राणप्रश्नेषु । तत्र वातसदृशेषु विज्ञानाभ्युपायेषु पञ्चेन्द्रियप्रश्नेषु । व्रणे सशब्दफेनरक्तानिलादिनिर्गमनं श्रवणेन्द्रियग्राह्यम्, पारुष्यरौक्ष्यादिकं त्वगिन्द्रियग्राह्यम्, भस्मकपोतास्थिसवर्णत्वं दर्शनेन्द्रियग्राह्यम्, कटुगन्धलाजगन्धादित्वं घ्राणेन्द्रियग्राह्यम्, कषायरसादित्वं रसनेन्द्रियग्राह्यम्, तोदनभेदनादिविशेषाः प्रश्नग्राह्याः । पित्तसदृशेषु विज्ञानाभ्युपायेषु व्रणादीनामौष्ण्यं त्वगिन्द्रियग्राह्यम्, नीलपीतवर्णत्वं दर्शनेन्द्रियग्राह्यम्, कट्वम्लरसत्वं रसनेन्द्रियग्राह्यम्, तीक्ष्णातसीगन्धत्वं घ्राणेन्द्रियग्राह्यम्, ओषचोषपरिदाहादिका वेदनाविशेषाः प्रश्नग्राह्याः । श्लेष्मसदृशेषु विज्ञानाभ्युपायेषु स्निग्धपैच्छिल्यादिकं त्वगिन्द्रियग्राह्यम्, श्वेतत्वं चक्षुरिन्द्रियग्राह्यम्, माधुर्य्यादि रसनेन्द्रियग्राह्यम्, विस्रगन्धादित्वं घ्राणेन्द्रियग्राह्यम्, कण्डूगुरुत्वादिवेदनाविशेषाः प्रश्नग्राह्या इति, वैद्यो जानीयादिति । कान् ? व्याधीन्, अधिकारवशादक्षरैरनुक्तानपि । केषु सत्सु ? षड्विधेष्वपि विज्ञानाभ्युपायेषु आत्मसदृशेषु वातपित्तश्लेष्मसदृशेषु । कैर्जानीयात् ? तत्स्थानीयैः तेषां शब्दादीनां स्थानानि श्रोत्रादीनि, तेष्वधिकृतैः शब्दस्पर्शरूपरसगन्धैः तत्स्थानीयैः । एतेन एतदुक्तं—वातादिलिङ्गैरायुर्वेदेष्वनिर्दिष्टनामधेयानपि व्याधीन् कुशाग्रमतिर्वैद्यो जानीयादिति । पञ्जिकाकारस्तु दर्शनादिपरीक्षां त्रिविधामेव पठति । मिथ्यादृष्टा विकारा हि इत्यादिश्लोकान्ते 'तस्मात् परीक्ष्याः सततं भिषजा सिद्धिमिच्छता । युक्त्यैव व्याधयः सर्वे प्रमाणैर्दर्शनादिभिः' इति श्लोकमधीते, व्याख्यानयति च—दर्शनादिभिरित्येवं कर्त्तव्ये यत् प्रमाणैरित्यधिकं करोति, तदधिकप्रमाणप्राप्त्यर्थम्, तेन गन्धरसशब्दानामप्यवरोधः । ये त्वत्राक्षरैः षड्विधामपि परीक्षां पठन्ति, तेषां सम्यक् शास्त्रावबोधो नास्तीति भाषते । आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयादित्यपि न पञ्जिकाकारः पठति ॥ ४ ॥

भवति चात्रेत्यादि । मिथ्यादृष्टा इति रोगिणो विकारा ये मिथ्यादृष्टा असम्यक् दृष्टास्तथा दुराख्याताः रोगिणा न याथातथ्येनोक्ताः तथा दुष्परिमृष्टाः दुष्परिमर्षिताः, ते भिषजं मोहयेयुः, एवमविज्ञाता ये रोगास्तान् परिवर्जयेत् ॥ ५ ॥

एवमभिसमीक्ष्य साध्यान् साधयेद् याप्यान् यापयेदसाध्यान् नोपक्रमेत्। परिसंवत्सरोत्थितांश्च विकारान् प्रायशो वर्ज्जयेत् ॥ ६ ॥

तत्र साध्या अपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा भवन्ति। तद्यथा— श्रोत्रियनृपतिस्त्रीबालवृद्धभीरुराज-सेवककितवदुर्ब्बल-वैद्यविदग्ध--व्याधिगोपक-दरिद्रकृपणक्रोधवतामनात्मवतामनाथानाञ्च ; एवं निरूप्य चिकित्सां कुर्व्वन् धर्म्मार्थकामयशांसि प्राप्नोति ॥ ७ ॥

भवति चात्र।

स्त्रीभिः सहास्यां संवासं परिहासञ्च वर्ज्जयेत्।
दत्तञ्च ताभ्यो नादेयमन्नादन्यद् भिषग्वरैः ॥ ८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने विशिखानुप्रवेशनीयो नाम दशमोऽध्यायः ॥ १० ॥

एवमित्यादि। साध्यं द्विविधं सुसाध्यं दुःसाध्यञ्च, असाध्यं द्विविधं याप्यं प्रत्याख्येयञ्च। परिसम्वत्सरेत्यादि। परिसम्वत्सरोत्थिताः सम्वत्सरातीताः सर्व्वर्त्तुषु महाबला ये तान् परिवर्ज्जयेदिति, यदि ह्येकदोषजा स्तेभवेयुरेवं तेषां तद्दोषप्रशमनर्त्तुषु प्रशमो भवेदल्पता वा, स च न भवति, तेन तेषां त्रिदोषजत्वाधिगमः, अतस्तान् परिवर्ज्जयेत्, अथवा संवत्सरेणोत्तरोत्तर-धात्वनुक्रमादसाध्यत्वम्, प्रायशो बाहुल्येन, नावश्यतया ; तेन केचिद्रक्तगुल्मादयः सम्वत्सरानन्तर-मुपक्रमयोग्या भवन्ति, अर्द्दितस्तु त्रिभिर्वर्षैः साध्य इति ॥ ६ ॥

तत्र साध्या इत्यादि। शोत्रियेति। श्रोत्रियस्य वेदार्थपरिपालनपरस्य नित्यं स्नानादिभि-र्व्याधिपरिवृद्धिः, नृपतेरपि स्वातन्त्र्यात् यत्किञ्चनकारित्वात्, अन्ये तु सौकुमार्य्यात् क्रियाऽसहत्वाच्च, स्त्रीणां लज्जया वेगाद्युपरोधात् गुह्यव्याधेरप्रकाशनाच्च, बालवृद्धयोर्विरेचनादिक्रियाऽयोग्यत्वेना-ल्पक्रियत्वात्, अन्ये तु बालवृद्धवनिताः सुकुमारशरीरत्वाद् भेषजासहिष्णवः, भीरुरल्पसत्त्वत्वान्न शक्नोति सोढ़ुं क्रियाम्, राजसेवकस्य राजायत्तत्वात्, कितवस्य व्यसनित्वात्, कितवः दूतकारः ; दुर्ब्बलस्य बालवृद्धयोरिव, वैद्यविदग्धस्य अभिमानेन निर्द्दिष्टान्यथाकारित्वात् वैद्यविदग्धः वैद्याभि-मानी, पल्लवग्राहीत्यर्थः ; व्याधिगोपकस्य व्याधेरकथनादेव, दरिद्रस्य द्रव्याभावत्वे औषधाभावात्, कृपणस्य लोभेन भैषज्यानुपादानात्, क्रोधनस्य कोपेन रोगवृद्धिः, अनात्मवतोऽपथ्याचरणत्वात्, अनात्मवान् अजितेन्द्रियः, अनाथानां परिचारकाभावात्, अनाथाः एकाकिनः ॥ ७ ॥

इदानीं वैद्यस्य विशिखायामन्तःपुरचारिणः प्रमाददोषद्वारं नियमयन्नाह—भवति चात्रेत्यादि। सहास्यां एकत्र स्थितिम्, संवासं प्रतिवेशवासिताम्, परिहासं हास्यम्, अन्नादन्यदिति अन्नमन्न-पानद्रव्यं गृह्णीयात्, तस्य वृत्तिहेतुत्वात्, राज्ञामनुमतन्तु सर्व्वमेव गृह्णीयादिति। संवासमित्यत्र केचित् संवादमिति पठन्ति ॥ ८ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे विशिखानुप्रवेशनीयव्याख्यानाम दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।

अथातः क्षारपाकविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमश्छेद्य-भेद्य-लेख्य-करणात् त्रिदोषघ्नत्वात् विशेषक्रियावचारणाच्च ॥ २ ॥

तत्र क्षरणात् क्षणनाद् वा क्षारः। नानौषधिसमवायात् त्रिदोषघ्नः, शुक्लत्वात् सौम्यस्तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा, स खल्वाग्नेयौषधिगणभूयिष्ठत्वात् कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः

अथात इत्यादि। क्षारशब्दः पाकविधिभ्यां सह सम्बध्यते। शस्त्रानुशस्त्रेभ्य इति। शस्त्राणि मण्डलाग्रादीनि, अनुशस्त्राणि त्वक्सारादीनि, तेभ्यः क्षारः प्रधानतमः, तेषु पुनर्द्वे अनुशस्त्रे अग्निजलौकाख्ये परिशिष्टे, तदुक्तम्—'विधिः प्रवक्ष्यते पश्चादग्निक्षारजलौकसाम्' इति, एषां त्रयाणामपि प्राधान्यमस्ति, अतएवैषां पृथगध्यायः। अत्र जलौकसः प्रधानम्, अग्निः प्रधानतरः, क्षारस्तु प्रधानतमः। क्षारादग्निर्गरीयानित्यत्र यथा न विरोधस्तथा तत्रैव वक्ष्यामः। कस्मात् क्षारस्य प्राधान्यमित्यत आह—छेद्येत्यादि। छेद्यादीनि कर्म्माणि अग्निजलौकसोर्न सम्भवन्ति तेन ताभ्यां सकाशात् क्षारस्य प्राधान्यम्, त्रिदोषघ्नत्वं क्षारस्य नानौषधिसमवायादित्यादिना साधयिष्यति। विशेषक्रियावचारणं यथा पित्तार्शःसु विशेषेणावचारणम् ॥ १।२ ॥

क्षारस्य निरुक्तिं कुर्व्वन्नाह—तत्र क्षरणादित्यादि। क्षरणात् दुष्टत्वङ्मांसादिचालनात् शातनादित्यर्थः, अन्ये तु क्षरणाद् दोषाणां चालनात्; क्षणनात् त्वङ्मांसादिहिंसनात्। क्षरणादित्यत्र क्षपणादिति केचित् पठन्ति। क्षपणं शोधनमभिप्रेतम्। क्षारगुणकर्म्माह—नानौषधिसमवायादित्यादि। समवायः संयोगः, यतोऽयं क्षारोऽनेकौषधिसमवायात् त्रिदोषघ्नः, अतः पित्तार्शःस्वपि यौगिकत्वमस्य। शुक्लत्वात् सौम्य इत्यस्याग्रे केचिदपिशब्दं लुप्तनिर्द्दिष्टं वर्णयन्ति, व्याख्यानयन्ति च—न केवलमुष्णः सौम्योऽपीति, तेनास्य वक्ष्यमाणमुष्णत्वमपि न विरुध्यते। दहनपचनदारणशक्तिरविरुद्धा हिमानीवत्। पाचन इति प्रतिसारणीयः पानीय इति द्विविधोऽपि क्षारः, अत्र व्रणशोथस्य प्रतिसारणीयः पाचनः, अन्नाजीर्णस्य पानीयः पाचनः, विलयनः शोफस्य वातकफभूयिष्ठस्य, शोधनः दुष्टव्रणस्य, रोपणः शुद्धव्रणस्य। अत्र योगशक्तिप्रभावात् तिलयवकल्कवत् क्षारस्य शोधनरोपणत्वं न विरुध्यते; शोधन एवायं क्षारः, शुद्धस्तु व्रणः स्वयमेव रोहति इत्यन्ये; न हि शुद्धे व्रणे रोपणार्थं क्षारोऽवचार्य्यते शिरादिक्षणनभयात्, तस्मात् पारम्पर्य्येण रोपण इति;

शोषणः स्तम्भनो लेखनः क्रिम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः ॥ ३ ॥

स द्विविधः प्रतिसारणीयः पानीयश्च। तत्र प्रतिसारणीयः कुष्ठकिटिमदद्रु-मण्डलकिलासभगन्दरार्व्वुददुष्टव्रणनाड़ीचर्म्मकीलतिलकालक-न्यच्छव्यङ्ग-मशक-वाह्यविद्रधि-क्रिमिविषादिषूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुश-दन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम्। पानीयस्तु गरगुल्मोदराग्निषङ्गाजीर्णारोचकानाहशर्करास्मर्य्याभ्यन्तरविद्रधि-क्रिमिविषार्शः-सूपयुज्यते॥ ४ ॥

अहितस्तु रक्तपित्तज्वरितपित्तप्रकृति-वालवृद्धदुर्ब्बल-भ्रममद-मूर्च्छातिमिर-परीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः। तञ्चेतरक्षारवद् दग्ध्वा परिस्रावयेत्। तस्य विस्तरोऽन्यत्र ॥ ५ ॥

केचिदस्य रोपणत्वं न पठन्त्येव। शोषणो व्रणक्लेदस्य, स्तम्भनः शोणितातिप्रवृत्तेः, उपहन्तृ-शब्दः कृम्यादिभिः सह प्रत्येकं सम्बध्यते। कृमयो वाह्याभ्यन्तरास्तेषां द्विविधः क्षार एव उपहन्ता, आमोऽपक्वरसः, मेदो रोगविशेषः, एतेषां पानीय एवोपहन्ता ; पुंस्त्वस्य शुक्रस्य ॥ ३ ॥

इदानीमुक्तगुणकर्म्मणः क्षारस्य द्वैविध्यं दर्शयन्नाह—स द्विविध इत्यादि। प्रतिसारणीयः प्रतिसारणार्हः, पानीयः पानार्हः क्षारोदकमित्यर्थः, ये चान्येऽपि पावयसर्ज्जिकायवक्षारा यथारोगं वक्तव्यास्तेषां चूर्णवटकावलेहादिषु प्रयोगः कर्त्तव्यः।

प्रतिसारणीयस्य विषयं दर्शयन्नाह—तत्र प्रतिसारणीय इत्यादि। किटिमः कुष्ठविशेषः, तस्य पृथग्विधानं नियमेन प्रतिसारणीयसाध्यत्वज्ञापनार्थम्, दद्रुमण्डलं दद्रोः मण्डलम्, किलासं त्वग्गतश्वित्रकुष्ठम्, चर्म्मकीलोऽर्शोनिदानपठितः, न्यच्छव्यङ्गौ क्षुद्ररोगनिदानोक्तौ, वाह्यशब्दः विद्रधि-कृमि-विषैश्च प्रत्येकं सम्बध्यते, विषादिष्विति आदिशब्दात् वल्मीकादीनां ग्रहणम्। वाह्यकृमिविशे-षार्शःस्विति केचित् पठन्ति। के ते सप्त मुखरोगा येषु क्षार उपयुज्यते इति ? आह—उपजिह्वेत्यादि। उपजिह्वादीन् रोगान् मुखरोगनिदाने वक्ष्यति। तिसृणां रोहिणीनां ग्रहणं सन्निपातरक्तजत्रो-रसाध्यत्वज्ञापनार्थम्। कुतः पुनरुपजिह्वादिभ्योऽन्येषु मुखरोगेषु क्षारो नोपयुज्यत इत्याह—एतेष्वेवे-त्यादि। अत्र अनुशस्त्रं क्षार एव। एतेष्वनुशस्त्रं निपातनमिति क्वचित् पाठः।

पानीयविषयं दर्शयन्नाह—पानीयस्त्वित्यादि। गरः कृत्रिमं विषम्, दूषीविषमित्यन्ये ; अग्निपङ्ग इति, अग्निः सज्यते लीयते यस्मात् यस्मिन् वा असौ अग्निषङ्गः, तेन वातश्लैष्मिकग्रहणी-विसूचिकालसकविलम्बिकादिविकारा गृह्यन्ते, शर्करा वातेन भिन्नाश्मरी शर्करेत्युच्यते ॥ ४ ॥

क्षारस्य येष्वयौगिकत्वं तानाह—अहितस्त्वित्यादि। भ्रमश्चक्रारूढस्येव भ्रमणम्, मदो विषमद्य-शोणितोत्थो विकारः पूगफलेनेव मत्तता, मूर्च्छा चेतनाच्युतिः, परीतशब्दो भ्रमादिभिः सह प्रत्येकं

अथेतरो मृदुर्मध्यस्तीक्ष्णश्च । तं चिकीर्षुः शरदि गिरिसानुजं शुचिरुपोष्य प्रशस्तेऽहनि प्रशस्तदेशजातमनुपहतं मध्यमवयसं महान्तमसितमुष्ककमधिवास्य * अपरेद्युः पाटयित्वा खण्डशः प्रकल्प्यावपाट्य निवाते देशे निचितिं कृत्वा ( सुधाशर्कराश्च प्रक्षिप्य ) तिलनालैरादीपयेत् । अथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद् भस्मशर्कराश्च ॥ ६ ॥

सम्बध्यते । तत्र पानीयक्षारपाकं विधिञ्च संक्षेपेण दर्शयितुमाह—तञ्च तरक्षारवदित्यादि । इतरक्षारवत् प्रतिसारणीयवत्, यथा प्रतिसारणीयस्य काष्ठदाहः षड्गुणोदकपाकस्त्रिभागशेषानन्तरं परिस्रावणञ्च तद्वत् पानीयस्यापि पाकविधिः स्रावणञ्च द्वितीयपाकवर्ज्जम् । पानीयक्षारभस्मप्रमाणम् उत्तमा मात्रा पलम्, मध्यमा कर्षत्रयम्, अधमा अर्द्धपलम् । अन्यत्र गुल्मादिष्वध्यायेषु ॥ ५ ॥

अथेतर इत्यादि । इतरः प्रतिसारणीयः, अथेतरो मृदुरित्याद्यत्र केचिन्न पठन्ति । प्रतिसारणीयस्य पाकविधिं निर्द्देष्टुमाह—तं चिकीर्षुरित्यादि । तं प्रतिसारणीयम्, चिकीर्षुः कर्त्तुमिच्छुः ; तं चिकीर्षुरित्यत्र अथेतरं चिकीर्षुरिति केचित् पठन्ति । अथशब्दो मङ्गलार्थः, इतरं प्रतिसारणीयम् । गिरिसानुजं पर्व्वतोपरिजातम्, गिरिसानुजमिति जाङ्गलदेशोपलक्षणमित्यन्ये । शुचिरुपोष्येत्यत्र शुचिरुपवसन्निति केचित् पठन्ति । अनुपहतं कृमिदवाग्निगराद्यनुपहतम्, असितमुष्ककं कृष्णपुष्पमोक्षकं न श्वेतादिपुष्पम्, अधिवास्य मन्त्रवत् बलिकर्म्मोपहरेत् इत्यर्थः । केचिदस्याग्रे मन्त्रेणानेनाभिमन्त्र्य, अग्निवीर्य्य ! महावीर्य्य ! मा ते वीर्य्यं प्रणश्यतु । इहैव तिष्ठ कल्याण ! मम कार्य्यं करिष्यसि । मम कार्य्ये कृते पश्चात् स्वर्गलोकं गमिष्यसि ॥ श्वेतरक्तपुष्पसहस्रं जुहुयात्" इति पठन्ति ; अयञ्च निबन्धेषु न पठ्यते । अन्ये त्वत्र "प्राङ्मुखोपगतस्तत्र बलिं दत्त्वा चतुर्द्दिशम् । वृक्षाभ्यासे ततो ब्रूयात् प्राञ्जलिः प्रयतः शुचिः ॥ निवसन्तीह भूतानि यान्यस्मिन् कानिचिद् द्रुमे । अपक्रामन्त्वतश्छेद्यः परार्थे श्वो ह्ययं द्रुमः" इत्याद्यधिवासमन्त्रं पठन्ति, भोजेऽप्येवमेव पठ्यते" इति च वदन्ति । अपरेद्युः अपरस्मिन् दिने, खण्डशः प्रकल्प्य बहून् खण्डान् कृत्वा, अवपाट्य तान् खण्डान् पुनः पाटयित्वा ; अपरेद्युः पाटयित्वेत्यत्र स्थाने 'प्रभाते वैकृतमद्भूतं न पश्येत् तदोपकल्पयेत्' इति क्वचित् पाठः । वैकृतं तरुशाखाभङ्गादि, अद्भूतं रुधिरवर्षादि, इति च तस्य व्याख्यानम् । निचितिः काष्ठानाम् औत्तराधर्य्येणावस्थितिः, केचिदत्र चितिं कृत्वेति पठन्ति, चितिं दाहस्थानमिति व्याख्यानयन्ति च । तिलनालैरादीपयेत् तिलनालदीपनात् शक्त्यतिशयो भवति । निचितिं कृत्वेत्यस्याग्रे केचित् सुधाशर्कराः प्रक्षिप्येति पठन्ति व्याख्यानयन्ति च—सुधाशर्कराः सुधापाषाणाः । भस्मशर्कराश्चेति दह्यमानाद्र्कः काष्ठरसात् शर्करेवान्योऽन्यं संहता भस्मशर्करेत्युच्यते, ताञ्च पृथक् गृह्णीयात् ; पृथग्ग्रहणं भिन्नप्रयोजनार्थम् ; तेन भस्मनः क्षारोदककरणम्, भस्मशर्करा पुनः क्षारद्रव्यसमवायिनी । अन्ये तु पृथक् गृह्णीयादित्यस्याग्रे कटशर्करा भस्मशर्कराश्चेति पठन्ति । कटशर्करा अदग्धसुधा-

* मन्त्रवद्बलिकर्म्मोपहरेत् । ततइत्यधिकः पाठः क्वचित् ।

अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकविभीतकारग्वधतिल्वकार्कस्नुह्यपामार्ग-पाटला-नक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थगुञ्जाश्चतस्रश्च कोशातकीः समूलफलपत्रशाखा दहेत् ॥ ७ ॥

ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिकृत्वो परिस्राव्य महति कटाहे शनैर्दर्व्यावघट्टयन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च तमादाय महति वस्त्रे परिस्राव्येतरं विभज्य च पुनरग्नावधिश्रयेत्। तत एव च क्षारोदकात् कुड़वमध्यर्द्धं वापनयेत् ॥ ८ ॥

पाषाणाः, भस्मशर्करास्तु क्षारद्रव्यैः सह दग्धाश्चूर्णपाषाणा इति च व्याख्यानयन्ति। एष दाहकल्पः ॥ ६ ॥

अथानेनैवेत्यादि। अथानेनैव विधानेनेत्यनेन निवातदेशनिचितिस्तिलनालदीपनञ्च लभ्यते, गिरिसानुजमित्यस्य जाङ्गलदेशोपलक्षणत्वम्, तेनेहापि कुटजादीन्यपि जाङ्गलानि गृह्यन्ते। मुष्ककस्य कुटजादीनाञ्चैकदेशकल्पनत्वेऽपि पृथग्दाहविधानं कुटजादिभस्मनो मुष्ककभस्मनो भागाधिक्यख्यापनार्थम्, भागाधिक्यञ्च 'ततः क्षारद्रोणमुष्ककद्रोणैः षड्भिः' इत्यत्र वक्ष्यामः। अन्ये तु मुष्ककेण एकेनापि क्षारो भवति इति पृथग् विधानं बोधयति। पलाशः किंशुकः, अश्वकर्णः पूर्व्वदेशे गन्धमुण्डः पिप्पलसदृशः, पारिभद्रकः देवदारुः, अन्ये तु रक्तकुसुमः कण्टकीवृक्षविशेषः स्वनाम्ना प्रसिद्धः, तिल्वकः स्वनामप्रसिद्धः, इन्द्रवृक्षः कुटज एव, द्विविधो हि कुटजः, बृहत्फल-श्वेतपुष्पः स्निग्धपत्रः पुमान्, अणुफलवृन्ता श्यावारुणपुष्पा स्त्री। आस्फोता शारिवा, कोषातकी घोषकः, सा चतुर्व्विधा बृहत्फला अल्पफला पीतपुष्पा श्वेतपुष्पा इति। समूलफलपत्रशाखा इति कुटजादिभिः सह प्रत्येकं सम्बध्यते। केचित् कुटजादि-कोषातक्यन्तं समस्य पठन्ति ॥ ७ ॥

ततः क्षारद्रोणमित्यादि। ततः मुष्ककुटजादिदाहानन्तरम्। क्षारद्रोणमिति मुष्ककभस्मनो द्वौ भागौ कुटजादिभस्मन एको भाग इति मिश्रीकृतं क्षारद्रोणमुच्यते। उदकद्रोणैः षड्भिरिति भस्मद्रव्यात् षड्गुणोदकपरिभाषया, अनयैवान्यत्रापि क्षारपाकविधौ क्षारकल्पनम्। पक्षान्तरं दर्शयति—मूत्रैर्वा यथोक्तैरिति दुन्दुभिस्वनीयकल्पोक्तैरित्यर्थः। तथाहि—'गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेत्' इत्यत्रापि क्षारकल्पेनेति वचनात् भस्मद्रव्यान्मूत्रस्य षड्गुणत्वमुक्तम्। एकविंशतिकृत्वः परिस्राव्येति एकविंशतिवारान् वस्त्रेण गालयित्वा, अवघट्टयन् चालयन्, तावत् पचेत् स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्चेति। एते अच्छादयो गुणास्त्रिभागावशेषे क्षारोदके भवन्ति। तं क्षारक्वाथम्, आदाय गृहीत्वा इतरं विभज्य क्षारभस्मकल्कम्। इतरद् विसृज्येति क्वचित् पाठः, तत्र इतरत् भस्मकिट्टभूतम्। अधिश्रयेत् आरोपयेत्। तत एव क्षारोदकात् कुड़वमध्यर्द्धं वापनयेदिति कुड़वमष्टौ पलानि अपनयेत्, अध्यर्द्धमित्यत्र कुड़वमिति

ततः कटशर्कराभस्मशर्कराक्षीरपाकशङ्खनाभीरग्निवर्णाः कृत्वायसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसम्मितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सततमप्रमत्तश्चैनमवघट्टयन् विपचेत्। स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत। अथैनमागतपाकमवतार्य्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः। एष एवाप्रतीवापः पक्वः संव्यूहिमो मृदुः॥ ९॥

प्रतीवापे यथालाभं दन्तीद्रवन्तीचित्रक-लाङ्गलकीपूतिकप्रवालतालपत्रीविड्-सुवर्च्चिकाकनकक्षीरीहिङ्गुवचातिविषाः समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणाः

सम्बध्यते तेनाध्यर्द्धं कुड़वं द्वादशपलानि वा अपनयेत्। अन्ये त्वत्र द्वैगुण्यं न मन्यन्ते। एतद्धि क्षारोदकापनयनं कटशर्करादीनां निषेकार्थं पेषणार्थञ्च। अन्ये तु कटशर्करादीनां भागप्रमाण-ज्ञापनार्थमिति वदन्ति। तेन कटशर्करादीनि द्रव्याणि प्रत्येकं कुड़वप्रमाणानि अध्यर्द्धकुड़वप्रमाणानि वा आवपेदित्यर्थः॥ ८॥

ततः कटशर्करेत्यादि। कटशर्करा गाङ्गेष्टी, भस्मशर्करा अत्रैवाध्याये पूर्व्वं व्याख्याता। अन्ये तु कटशर्कराभस्मशर्करयोरन्यथा व्याख्यानं कुर्व्वन्ति, तदप्यत्रैवाध्याये कथितम्। क्षीरपाकः जलशुक्तिः, आयसे पात्रे लौहे भाजने, ता अग्निवर्णाः कृत्वा तस्मिन्नेव क्षारोदके पूर्व्वोपनीते कुड़वे अध्यर्द्धकुड़वे वा निषिच्य प्रक्षिप्य। अत्रैषां कटशर्करादीनां अनिर्द्दिष्टप्रमाणत्वात् समा भागा इत्येके, समभागश्चात्र प्रत्येकमष्टपलानि, एवञ्च द्वात्रिंशत् पलानि भवन्ति; एतेन द्विद्रोणेऽष्टपल-सम्मितमित्यपि प्रमाणमनुकूलितं भवति। द्विद्रोणे षोड़शांशश्चावापभागो ज्ञापितो भवति। अन्ये तु अष्टपलसम्मितमिति कटशर्करादीनां प्रत्येकं द्वे द्वे पले इत्येवमष्टपलत्वं मन्यन्ते। तत्र शङ्खनाभिप्रधानत्वादेव क्षारस्य, एवञ्च विश्वामित्रभोजोक्तभागकल्पना निरस्ता। तदुक्तभाग-ग्रहणेऽपि शङ्खनाभेरप्राधान्यं स्यात्। द्विद्रोणग्रहणेन त्रिभागावशेषं क्षारोदकं सर्व्वत्र परि-भाषयन्ति, वृद्धाः प्रायेण हि विमिश्रितक्षारद्रोणमाहुः, उदकद्रोणैः षड्भिरिति षट्त्रिंश-दधिकपञ्चदशशतोदकपलैः सह विपचेदित्यर्थः। ततस्तस्य पच्यमानस्य तीक्ष्णाच्छरक्तपिच्छिलादयो गुणाः षोड़शांशावशिष्टे षण्णवतिपलप्रमाणे भवन्ति। अन्ये तु वदन्ति—न चात्र चतुर्भागावश-शेषेणेत्यादिपरिभाषा व्याप्रियते, तस्माच्छनैः शनैस्तावत् विपचेत् यावद्रागादिगुणयुक्तः क्राथो भवति क्षारसंज्ञित इति। षण्णवतिपलप्रमाणे तु क्षारोदके कटशर्करादीनां समभागानां चतुर्थांश-मावापमिच्छन्ति॥ ९॥

सप्रतिवापं पाक्यसंज्ञं तीक्ष्णं प्रतिपादयन्नाह—प्रतीवापे यथालाभमित्यादि। प्रतीवापे इति क्षिप्ते आवापे नवद्रव्यप्रक्षेपः प्रतीवापः। द्रवन्ती दन्तीभेदा संवरीति भादालके, लाङ्गलकी कलि कारिका, पूतीकप्रबालाः कण्टकीकरञ्जपल्लवाः, अन्ये तु चिरविल्वपल्लवं पत्रञ्चेति पठन्ति, तालपत्री

प्रतीवापः। स एव सप्रतीवापः पक्कः पाक्यस्तीक्ष्णस्तेषां यथाव्याधिबलमुपयोगः। क्षीणबले तु क्षारोदकमावपेद् बलकरणार्थम् ॥ १० ॥

भवतश्चात्र।

नैवातितीक्ष्णो न मृदुः शुक्लः श्लक्ष्णोऽथ पिच्छिलः।
अविष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः॥
अतिमार्द्दवश्वैत्यौष्ण्य-तैक्ष्ण्यपैच्छिल्यसर्पिताः।
सान्द्रताऽपकता हीन-द्रव्यता दोष उच्यते ॥ ११ ॥

तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निर्व्वातातपे देशेऽसम्बाधेऽग्रोपहरणी-

मुषली, कनकक्षीरी सुवर्णक्षीरी कङ्कुष्ठमित्यन्ये, शुक्तिप्रमाणाः प्रत्येकमर्द्धपलप्रमाणाः। स एव सप्रतिवापः पक्कः पाक्यस्तीक्ष्ण इति स एव संव्यूहिमसंज्ञः क्षारो दन्त्यादिद्रव्यप्रतिवापेन सहितः पक्कः पाक्यसंज्ञो भवति तीक्ष्णश्चेत्यर्थः। न चास्य तीक्ष्णदोषः, कुतः ? अतितीक्ष्णः क्षारस्य दोषः। अन्ये तु स एव सप्रतिवाप इत्यादि पाठस्थाने स च पूर्व्ववत् पक्कस्तीक्ष्णः इति पठन्ति। तेषां यथाव्याधिबलमुपयोग इति तेषां क्षाराणाम्। कालवशात् हीनौषधिवशाद् वा मृदौ क्षारे बलकरणाय आवापमाह—क्षीणबले त्वित्यादि। क्षीणबले हीनशक्तौ क्षारे क्षारोदकमावपेत् पूर्व्वकल्पेन कृतं क्षारोदकं प्रतिक्षिपेत्, प्रक्षिप्य पुनर्विपचेदिति, बलकरणार्थं तीक्ष्णादिशक्त्युपचयार्थम् ॥ १० ॥

क्षारगुणदोषान् प्रतिपादयन्नाह—भवतश्चात्र नैवातीत्यादि। अतिशब्दस्तीक्ष्णमृदुशुक्लैः सह प्रत्येकं सम्बध्यते ; अनतिशुक्लत्वात् प्रतिवापाद्यल्पता सूचिता भवति, अन्ये त्वनतिशब्दं शुक्लेन सम्बध्नन्ति। श्लक्ष्णः अकर्कशः, अन्ये तु श्लक्ष्णस्थाने मृतस्त् इति पठन्ति, मृत्स्नस्त्वगिन्द्रियसुखः। अविष्यन्दी योऽवचारितोऽपि न प्रसर्पति। शिव इति सौम्य उच्यते, शिवस्थाने केचित् सम इति पठन्ति, तत्र नातिसान्द्रो नातिद्रव इत्यर्थः। शीघ्रः शीघ्रकारी। केचित् क्षारगुणेषु मध्ये सुखनिर्ग्राह्यो दोषघ्न इति गुणद्वयं पठन्ति। सुखनिर्ग्राह्यः सुखनिर्व्वर्त्त्यः, दोषघ्नो दोषमात्रानुसारी। दोषशब्दोऽत्र व्याधौ वर्त्तते इति च व्याख्यानयन्ति। नैवातितीक्ष्ण इत्यादिनैवाष्टसंख्या लब्धा पुनरष्टगुण इति यत् कृतं, तत् कटुरसादिगुणातिरेकत्वनिषेधार्थम्। परिहारार्थं दोषानधिकृत्याह—अतिमार्द्दवेत्यादि। अतिशब्दो मार्द्दवश्वैत्यादिभिः सह प्रत्येकं सम्बध्यते। श्वैत्यं शुक्लता। केचित् क्षारदोषान् सार्द्धश्लोकेनाधीयते। तद् यथा—"अत्यौष्ण्यमतिपैच्छिल्यमतितैक्ष्ण्यं विसर्पिता। अत्यर्थं मार्द्दवं श्वैत्यमत्यर्थं सान्द्रमेव च। हीनौषधविपक्कत्वं क्षारे दोषा नव स्मृताः" इति। अत्यर्थशब्दः प्रत्येकं सम्बध्यते। संख्येयनिर्देशादेव संख्या प्राप्ता, पुनर्नवेति संख्याकरणं क्षारातिसेवया पुंस्त्वहन्तृत्वदोषशङ्कानिरासार्थम्। केचित् क्षारदोषान् न पठन्ति, उक्तगुणविपर्य्ययेणैव दोषाणां लब्धत्वादिति ॥ ११ ॥

इदानीं क्षारप्रतिसारणीयविधिमधिकृत्याह—तत्र क्षारसाध्येत्यादि। क्षारसाध्यव्याधिव्याधितमिति क्षारस्य साध्यो यो व्याधिस्तेन व्याधितं दुःखितम्, निर्व्वातातपे देशे, इति निःशब्दो वाता-

योक्तेन विधानेनोपसम्भृतसम्भारं ततोऽस्य तमवकाशं निरीक्ष्यावघृष्यावलिख्य प्रच्छयित्वा शलाकया क्षारं * प्रतिसारयेत्। दत्त्वा वाक्च्छतमात्रमुपेक्षेत ॥१२॥

तस्मिन् निपतिते व्याधौ कृष्णता दग्धलक्षणम्।
तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः॥
अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते।
इदमालेपनं तत्र समग्रमवचारयेत्॥
अम्लकाञ्जिकवीजानि तिलान् मधुकमेव च।
प्रपेष्य समभागानि तेनैनमनुलेपयेत्॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः॥ १३॥
रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः।
आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति॥ १४॥

तपाभ्यां सह प्रत्येकं सम्बध्यते, असम्बाधे असङ्कीर्णदेशे, अग्रोपहरणीयोक्तेन विधानेनेति प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेष्वित्यादिकेन विधिना, अस्य च क्षारं प्रतिसारयेदित्यनया क्रियया सम्बन्धः। उपसम्भृतसम्भारमिति यन्त्रशस्त्रक्षाराग्निशलाकेत्यादिसमीपस्थापितोपकरणम्। ततः सम्भृत-सम्भारानन्तरम्, अस्य व्याधितस्य, तमवकाशं तं प्रदेशम्, निरीक्ष्येति व्याध्याकारविज्ञानार्थम्, अव-घृष्येति पित्तदुष्टम्, अवलिख्येति वातदुष्टं सुप्तकठिनत्वचम्, प्रच्छयित्वेति कफदुष्टं कण्डूश्वयथुप्रबलम्, पश्चाच्छलाकया क्षारं प्रतिसारयेदित्यर्थः। क्षारं प्रतिसारयेदित्यस्य स्थाने क्षारं पातयेदिति केचित् पठन्ति। कालावधिं प्रतिपादयति—दत्त्वा वाक्छतमात्रमित्यादि। वाक्छतं शतगुर्व्वक्षरोच्चारण-पर्य्याप्तं कालं क्षारावचारणम्, वाक्छतमात्रमिति मात्रग्रहणेनैतद् बोधयति—एतावता कालेन यो दहति स यथोक्तगुणः क्षारः। अन्ये मात्रस्थाने एवशब्दं पठन्ति, वाक्छतमेव नाधिकं न न्यूनञ्चेति च व्याख्यानयन्ति। इदानीं क्षारस्य प्रतिदोषं लेपप्रमाणमवचारणकालञ्च नियमयन्नाह—पद्मपत्रसम इत्यादि। इमञ्च पाठं केचिदाचार्य्या न पठन्ति, स चाभावात् समग्रो न लिखित इति॥ १२॥

सम्यग्दग्धलक्षणं वक्तुमाह—तस्मिन्निपतित इति। व्याधिशब्दोऽत्र दुष्टमांसादिषु वर्त्तते, न तु दुःखसंज्ञिके व्याधौ, कुतः? तत्र कृष्णताभावादिति। एतत्तु सामान्यं सम्यग्दग्धलक्षणम्। सम्यग्दग्धे पश्चात् कर्म्माह तत्राम्लवर्ग इति। अम्लवर्गः सौवीरकतुषोदकधान्याम्लादिः। स्थिर-मूलत्वात् दृढमूलत्वादित्यर्थः, न शीर्य्यते न शटति। इदमित्यग्रे वक्ष्यमाणम्, तत्रेति अशीर्य्यमाणे क्षारदग्धे, समग्रं सर्व्वं, अवचारयेत् प्रयोजयेत्। तदेवालेपनमाह—अम्लेत्यादि। अम्लकाञ्जिकवीजानि इति अम्लकाञ्जिकाधःस्थितद्रव्याणि, तेनेति समभागपिष्टेनाम्लकाञ्जिक-वीजादिना, एनं क्षारदग्धम्। क्षारकृतव्रणरोपणोपायमाह—तिलकल्क इति॥ १३॥

अग्नितुल्यस्य क्षारस्याग्नेयेन काञ्जिकेन कथं शमनमित्याशङ्क्याह—रसेनेत्यादि। अम्लेन

* क्षारं पातयित्वा वाक्शतमात्रमित्यपि पाठः।

एवं चेन्मन्यसे वत्स प्रोच्यमानं निबोध मे।
अम्लवर्ज्ज्यान् रसान् क्षारे सर्व्वानेव विभावयेत् ॥
कटुकस्तत्र भूयिष्ठो लवणोऽनुरसस्तथा।
अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः ॥
माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति।
माधुर्य्याच्छममाप्नोति वह्निरद्भिरिवाप्लुतः ॥ १५ ॥

तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च। हीनदग्धे तोदकण्डू-जाड्यानि व्याधिवृद्धिश्च। अतिदग्धे दाहपाकरागस्रावाङ्गमर्द-क्लम-पिपासा-मूर्च्छाः स्युर्मरणं वा। क्षारदग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत् ॥ १६ ॥

अथ नैते क्षारकृत्याः। तद्यथा—दुर्ब्बलबालस्थविरभीरु-सर्व्वाङ्गशूनोदरि-

तीक्ष्णेन वीर्य्यौष्णेनाग्नेयेन योजितोऽग्नितुल्यः क्षारः कथं प्रशाम्यतीत्यर्थः पिण्डः। उत्तरमाह—एवञ्चेन्मन्यसे वत्सेत्यादि। विभावयेज्जानीयादित्यर्थः ; कटुकस्तत्र भूयिष्ठ इति तत्र पञ्चरसे क्षारे कटुकोऽनुरसः, लवणस्तु भूयिष्ठ इति योज्यम्, केचित् कटुकमेव भूयिष्ठं मन्यन्ते, तन्न, यतो जना अम्लभक्षणे माधुर्य्यार्थं लवणमेव रसं प्रयुञ्जते, लवणवर्गे क्षारस्य पठितत्वाच्च कटुवर्गे चापठित-त्वात्। यदेवं स खल्वाग्नेयौषधिभूयिष्ठत्वात् कटुक इति तर्हि कथम् ? उच्यते, लवणवर्गे पाठादेव क्षारस्य लवणत्वेऽपि सिद्धे कटुक इति विध्यर्थमेव। स तीक्ष्णलवणो रस इति स क्षार एवंगुणः; अद्भिः पानीयैराप्लुतो वह्निरिव लोके ॥ १४ । १५ ॥

इदानीं चिकित्सान्तरकथनाय पुनः सम्यग्दग्धलक्षणमाह—तत्र सम्यग्दग्ध इति। तत्रेति सम्यग्दग्धादिमध्ये। लाघवमङ्गानाम्। कृते क्षारनिर्व्वापणे एते विकारोपशमादयो लक्षणान्यु-त्तरकालं ज्ञेयानि, एतद्विकारोपशमादिकं किञ्चित्तात्कालिकं लक्षणं किञ्चिदुत्तरकालिकमित्यन्ये। हीनदग्धलक्षणमाह—हीनदग्ध इति। हीनदग्धे तोदादयो वातश्लैष्मिकाः ; जाड्यं जड़ता। अन्ये त्वत्र दुर्दग्धे तोददाहकण्डूजाड्यानि व्याधिवृद्धिश्च इति पठन्ति, तस्मिन् स्थाने एतानि वात-पित्तकफरक्तप्रकोपकार्य्याणीति च व्याख्यानयन्ति। अतिदग्धलक्षणमाह—अतिदग्धे दाहेत्यादि। अतिदग्धे दाहपाकादयः पैत्तिकाः, रागः रक्तता, अङ्गमर्दः वेदनाविशेषः, क्लमः ग्लानिः। क्षारदग्धव्रण-व्यापच्चिकित्सां वक्तुमाह—क्षारदग्धव्रणमिति। अन्ये तु यथाविधि यथादोषमिति पठन्ति हेतुव्याधिप्रत्यनीकेन विधिना इति व्याख्यानयन्ति च ॥ १६ ॥

अतः क्षारस्य द्विविधस्यापि येषु प्रतिषेधस्तानाह,—अथ नैते क्षारकृत्या इति। एषु च यथादोषं, केषुचिदेव प्रतिसारणीयक्षारनिषेधः, केषुचित् पानीयनिषेधः, केषुचिदुभयनिषेधः।

रक्तपित्तिगर्भिण्यृतुमती-प्रवृद्धज्वरि-प्रमेहिरूक्षक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीबपवृत्ताप-वृत्तफलयोनयः ॥ १७ ॥

तथा मर्म्मशिरास्नायुसन्धितरुणास्थिसेवनीधमनीगलनाभिनखान्तरशेफः-स्रोतःस्वल्पमांसेषु च प्रदेशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात् ॥ १८ ॥

तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धि-पीड़ोपद्रुतञ्च क्षारो न साधयति ॥ १९ ॥

भवति चात्र ।

विषाग्निशस्त्राशनिमृत्युकल्पः क्षारो भवत्यल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो रोगान् निहन्यादचिरेण घोरान् ॥ २० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने क्षारपाकविधिर्नामैकादशोऽध्यायः ॥ ११ ॥

सर्व्वाङ्गशूनोदरीति सर्व्वाङ्गशूनो य उदरी तस्यैव क्षारनिषेधः, क्षत उरःक्षतस्तेन क्षीणः, तृष्णा-मूर्च्छोपद्रुत इति उपद्रुतशब्दस्तृष्णामूर्च्छाभ्यां सह प्रत्येकं सम्बध्यते, क्लीबः क्षीणशुक्रः, अशुक्रस्य पुनः क्षाराधिकार एव नास्ति, उद्वृत्तापवृत्तफलयोनय इति उद्वृत्तापवृत्तशब्दौ फलयोनिभ्यां सह प्रत्येकं सम्बध्यते । अत्र फलमण्डम्, योनिर्गर्भाशयः, उद्वृत्तफलः स्थानादूर्द्ध्वगताण्डः, अपवृत्त-फलः स्थानात् स्रस्ताण्डः, उद्वृत्तयोनिः स्थानादूर्द्ध्वगतयोनिः, अपवृत्तयोनिः स्थानात् स्रस्तयोनिः, अन्ये तु फलयोनिशब्देन समुदितेन गर्भाशयमाचक्षते । तत्रायमर्थः—उद्वृत्तफलयोनिः स्थाना दूर्द्ध्वगतगर्भाशया, अपवृत्तफलयोनिः स्थानात् स्रस्तगर्भाशयेत्यर्थः ; अपरे तु फलशब्दं रजसि वर्त्तयन्ति, कुतः ? गर्भस्य फलसाधनत्वात् । तेन यस्य योनेः सकाशात् फलं रजः उद्वृत्तमूर्द्ध्वगतम्, अपवृत्तं अधोगतम्, सा उद्वृत्तापवृत्तफलयोनिः ॥ १७ ॥

व्याधिपुरुषविशेषेण निषेधमुक्त्वा प्रदेशविशेषेण वक्तुमाह—तथा मर्म्मशिरेत्यादि । तरुणास्थीनि घ्राणकर्णग्रीवाक्षिकूटेषु तरुणसंज्ञान्यस्थीनि ; सेवन्यः सप्त, पञ्च शिरसि, एका जिह्वायाम्, एका शेफसि ; धमन्यश्चतुर्व्विंशतिर्नाभिप्रभवाः ; नाभिरिति मर्म्मग्रहणादेव नाभिः प्राप्ता, पुनर्नाभि-ग्रहणं नाभ्यां दोषातिशयसूचनार्थम् ; शेफो मेढ्रः । अनुक्तमुपगृह्णन्नाह—अल्पमांसेषु च देशेषु जानुपादोपरिललाटादिषु, अक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगादिति अन्यत्र अन्यस्मिन् रोगे, वर्त्मरोगे पुनरक्ष्णोरपि क्षारं दद्यादित्यर्थः ॥ १८ ॥

अवस्थावशान्निषेधार्थं दर्शयन्नाह—तत्र क्षारसाध्येष्वपीति । चकाराद् दुर्व्वलबालस्थविरादीन् प्रतिसारणीय इति ॥ १९ ॥

इदानीं सम्यक्प्रयुक्तस्य क्षारस्य महागुणत्वमसम्यक्प्रयुक्तस्य महादोषत्वञ्च निदर्शयन्नाह—भवति चात्रेत्यादि । विषाग्निशस्त्राशनिमृत्युकल्प इति मृत्युशब्दः विषादिभिः सह प्रत्येकं सम्बध्यते, तेनायमर्थः—विषादिभिः कृत्वा यो मृत्युस्तेन मृत्युना कल्पः सदृशो भवति ; तत्र विषवद्वेदनाभिः सर्व्वाङ्गानुसारी भूत्वा मारयति अग्निवद्विस्फोटकादिकारणो भूत्वा, शस्त्रवत् सिरादिच्छेदी भूत्वा, अशनिवत् सद्यो मारयतीति, दृष्टान्तचतुष्टयमुपन्यस्तम् ॥ २० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
क्षारपाकविधिव्याख्यानाम एकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः ।

**अथातोऽग्निकर्म्मविधिमध्यायं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

**क्षारादग्निर्गरीयान् क्रियासु व्याख्यातः । तद्दग्धानां रोगाणामपुनर्भावाद् भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ॥ २ ॥**

**अथेमानि दहनोपकरणानि । तद्यथा—पिप्पल्यजाशकृद्गोदन्तशरशलाका-जाम्बवौष्ठेतरलौहाः क्षौद्रगुड़स्नेहाश्च । तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाका-स्त्वग्गतानाम् । जाम्बवौष्ठेतरलौहा मांसगतानाम् । क्षौद्रगुड़स्नेहाश्च शिरास्नायु-सन्ध्यस्थिगतानाम् ॥ ३ ॥**

अथात इत्यादि । अग्निना कृतं यत् कर्म्म अग्निसम्बन्धि वा यत् कर्म्म तदग्निकर्म्म ; तस्य विधिर्विधानम् ; तद् यस्मिन्नध्याये विद्यते तं व्याख्यास्यामः । अग्निकर्म्मीयमित्यन्ये पठन्ति, अग्निकर्म्माधिकृत्य कृतोऽग्निकर्म्मीय इति व्याख्यानयन्ति च । अग्निकर्म्ममाहात्म्यमाह—क्षारादिति । क्षाराद्गुरोः सकाशादग्निर्गरीयान् गुरुतरः ; कुत्र पुनः क्षारादग्निर्गरीयानित्याह—क्रियासु कर्म्मसु न तु गुणेषु, गुणेषु पुनस्त्रिदोषघ्नछेद्यभेद्यलेख्यकरणादिषु क्षारः एव प्रधानः, एतेन स्वे स्वे कृत्ये द्वयोरपि प्राधान्यमित्युक्तम्, यथा—दृढप्रहारित्वेनार्ज्जुनात् कर्णः, कर्णाद् दूरपातित्वेन अर्ज्जुनः प्रधान इति । व्याख्यात इति कथित इत्यर्थः । प्रतिज्ञातस्य गरीयस्त्वस्य साधकं हेतुमाह—तद्दग्धानामित्यग्निदग्धानाम्, अपुनर्भावादिति अपुनर्भावस्तु साध्यानां सम्यग्दग्धानाम्, एतद्विपर्य्यये स्वग्निदग्धस्यापि पुनरुद्भवः । अन्ये त्वन्यथा समादधति—अर्ब्बुदादयोऽग्निना समूलमुन्मूलिता मिथ्याहारादिभिः पुनर्द्दोषप्रकोपात् तत्स्थान एव अन्ये जायमानास्तद्वदुपलभ्यन्ते । हेत्वन्तरं समुच्चिन्वन्नाह—भेषजेत्यादि । तत्साध्यत्वात् अग्निसाध्यत्वादित्यर्थः । अन्ये तु स्वेद-शस्त्रक्षारैरिति पठन्ति, तत्रायमर्थः—भगन्दरार्शसादयः पूर्व्वं स्विद्यन्ते, पश्चात्तेषु शस्त्रमवचार्य्यते ; अथवा स्वेदग्रहणं भेषजोपलक्षणं, भेषजाशक्तौ शस्त्रावचारणम्, शस्त्राशक्तावशेषव्याधिशमनाय क्षारः, क्षाराशक्येऽवगाढमूले व्याधौ अग्निरिति ॥ १ । २ ॥

अग्न्यवचारणोपकरणानि निदर्शयन्नाह—अथेमानीत्यादि । अजाशकृच्छागपुरीषम्, जाम्बवौष्ठ जम्बूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्त्तिः, इतरलौहा इति लोहास्ताम्ररजतादयः, तेषां विकाराः लौहाः ; क्षौद्रगुड़स्नेहाश्चेति चकारात् सर्ज्जरसमधूच्छिष्टादयः । अग्न्युपकरणराशित्रयस्य प्रत्येकविषयं दर्शयन्नाह—तत्रेत्यादि । त्वग्गतानामिति वातकफकृतानां सुप्त्यादिविकाराणाम् । मांसगतानां वातकफजविकाराणाम् । क्षौद्रगुड़स्नेहा इत्यत्रापि वातकफसम्भूतानामिति बोद्धव्यम् । ननु काश्यपेन मुनिना शिरादिष्वग्निकर्म्म प्रतिषिद्धम्, तथा च तद्वचनम्—'न शिरास्नायुसन्ध्यस्थि-

तत्राग्निकर्म्म सर्व्वर्त्तुषु कुर्य्यादन्यत्र शरद्ग्रीष्माभ्याम्, तत्राप्यात्ययिकेऽग्निकर्म्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा ॥ ४ ॥

सर्व्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः कर्म्म कुर्व्वीत, मूढ़गर्भाश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः ॥ ५ ॥

तत्र द्विविधमग्निकर्म्माहुरेके त्वग्दग्धं मांसदग्धञ्च। इह तु सिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः ॥ ६ ॥

तत्र शब्दप्रादुर्भावो दुर्गन्धता त्वक्सङ्कोचश्च त्वग्दग्धे। कपोतवर्णताल्पश्वयथुवेदना शुष्कसङ्कुचितव्रणता च मांसदग्धे। कृष्णोन्नतव्रणता स्रावसन्निरोधश्च शिरास्नायुदग्धे। रूक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे ॥ ७ ॥

मर्म्मस्वपि कथञ्चन। दंशस्योत्कर्त्तनं कार्य्यं दाहो वा भिषजाऽग्निना' इति। इह तु शिरादिष्वपि अग्निकर्म्मोक्तम्, इत्यञ्च शास्त्रान्तरविरोधः, तन्न; अत्रापि शिरास्नायुसन्ध्यस्थिच्छेदाद्रक्तातिप्रवृत्तौ व्यापत्प्रतीकाराय अग्निकर्म्मोक्तं न पुनः शिरादिगतरोगोच्छेदनाय, यतो मांसदाहादेव शिरादिगतरोगोच्छेदो जायत एव; तथा च भद्रशौनकः—'त्वङ्मांससंश्रितो वायुस्त्वग्दाहेनैव शाम्यति। मांसे दग्धे हि शाम्यन्ति शिरास्नाय्वस्थिसन्धिजाः' इति ॥ ३ ॥

तस्य कालं सापवादं निर्द्दिशन्नाह,—तत्राग्नीत्यादि। तत्राग्निकर्म्म सर्व्वर्त्तुषु कुर्य्यादिति उत्सर्गः, अन्यत्र शरद्ग्रीष्माभ्यामित्यपवादः। शरद्ग्रीष्मयोरप्यवस्थायां प्रवृत्तिमाह—तत्रापीत्यादि। तत्रापीति शरद्ग्रीष्मयोरपि, आत्ययिके आशुप्राणविनाशके, तत्प्रत्यनीकविधिं कृत्वेति तस्याग्निसमानस्य शरद्ग्रीष्माभिधानस्य ऋतोः प्रत्यनीकविधिं विपरीतविधानं शीताच्छादनभोजनप्रदेहादिकं कृत्वा अग्निकर्म्म कुर्य्यादित्यनुवर्त्तते। अत्र पाठे केचित् विधिशब्दं न पठन्ति ॥ ४ ॥

सर्व्वाग्निकर्म्माङ्गविधिमाह—सर्व्वव्याधिष्वित्यादि। तत्राप्यग्निकर्म्म कुर्य्यादिति प्रत्येकं सम्बध्यते। पिच्छिलमन्नं पिच्छिलवीर्य्यमन्नम्, शीतमृदुपिच्छिलानां वीर्य्याणां पित्तघ्नत्वात्। तत्र प्रदेशेषु भोजनस्य प्रतिषेधमाह—मूढ़ेत्यादि। एषु भोजने कृते ऊर्द्ध्वाधोवेगाभ्यां कर्म्मविघातः स्यात्; क्वचिदुदरानवकाशत्वात्। केचिदत्र मूढ़गर्भाश्मरीत्यादिपाठं न पठन्ति ॥ ५ ॥

अग्निकर्म्मणि मतमेकीयं दर्शयन्नाह—तत्र द्विविधमित्यादि। स्वतन्त्रसिद्धान्तं दर्शयन्नाह—इह तु सिरेत्यादि। सिरादिष्वपि अग्निकर्म्म कर्त्तव्यमित्यर्थः। पूर्व्वं व्याख्यातः सिरादिष्वपि अग्निकर्म्मविधिरात्ययिके व्याधावेव नान्यत्रेत्यन्ये व्याख्यानयन्ति ॥ ६ ॥

त्वगादिषु कर्म्मणि कृते प्रतिविषयं भेदलक्षणं दर्शयन्नाह—तत्र शब्देत्यादि। स्थिरव्रणता कठिनव्रणता ॥ ७ ॥

तत्र शिरोरोगाधिमन्थयोर्भ्रू ललाटशङ्खप्रदेशेषु दहेत्। वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं कृत्वा वर्त्मरोमकूपान् दहेत्। त्वङ्मांसशिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजे वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्ब्बुदभगन्दरापचीश्लीपदचर्म्मकीलतिलकालकान्त्रवृद्धिसन्धिशिराच्छेदनादिषु नाड़ीशोणितातिप्रवृत्तिषु चाग्निकर्म्म कुर्य्यात् ॥ ८ ॥

तत्र रोगादिस्थानभेदादग्निकर्म्म चतुर्धा भिद्यते; तद्यथा—वलयविन्दुविलेखाप्रतिसारणानीति दहनविशेषाः ॥ ९ ॥

भवति चात्र।

रोगस्य संस्थानमवेक्ष्य सम्यङ्नरस्य मर्म्माणि बलाबलञ्च।
व्याधिं तथर्त्तुञ्च समीक्ष्य सम्यक् ततो व्यवस्येद् भिषगग्निकर्म्म ॥ १० ॥

रोगभेदाच्छरीरावयवविशेषेषु अन्यवचारणं दर्शयन्नाह—तत्र शिरोरोगेत्यादि। अधिमन्थः अक्षिरोगोऽभिष्यन्दपूर्व्वकः, भ्रुवौ अक्षिकूटोपरि रोमराजी, शङ्खौ भ्रूकर्णयोर्मध्यम्। वर्त्मदेशे यथाग्न्यवचारणं तथा दर्शयन्नाह—वर्त्मरोगेष्वित्यादि। दहेदित्यनुवर्त्तते। वर्त्म नेत्रच्छादनम्। आर्द्रालक्तकम् आर्द्रालक्तककर्पटः। शेषविषयावस्थाभेदान् दर्शयन्नाह—त्वङ्मांसेत्यादि। अत्युग्ररुज वायावत्युग्रशूले वायौ, उच्छ्रितकठिनसुप्तमांसे इति उच्छ्रितमुत्सेधवत्, सुप्तमचेतनम्। नाड़ीति व्रणविशेषः ॥ ८ ॥

प्रणिधानाकारविशेषमाह—तत्र वलयेत्यादि। व्याधिमूले वलयमिव वलयं शलाकानिर्म्मितम्, विन्दुरिव विन्दुः, तिर्य्यगृजुवक्रा विविधा लेखा विलेखा, तप्तशलाकाप्रभृतिभिरवघर्षणं प्रतिसारणम्; विशेषा इति आश्रयव्याधिवशेनाकृतिभेदाः। तत्र वलयेत्यादिपाठस्यादौ केचित् 'रोगाकृतिमवेक्ष्य' इति पठन्ति। स च निबन्धकारैर्न पठितः, कुतः? तस्यार्थस्याग्रिमश्लोकेनैवोक्तत्वात् ॥ ९ ॥

वलयादिदहनविशेषारम्भके हेतुं परिहार्य्याणि च दर्शयितुमाह—भवति चात्रेत्यादि। रोगस्य ग्रन्थ्यादेः, संस्थानमायताद्याकारः, एतेन वलयाद्यारम्भहेतुः कथितः। परिहार्य्याणि च कथयन्नाह—नरस्य मर्म्माणीत्यादि। बलाबलमिति आतुरस्येति शेषः, बलवति आतुरे कर्म्माधिकारः, अबलवति परिहारः। व्याधिं वातकफात्मकं तत्राग्निकर्म्माधिकारः, परिहारस्तु रक्तपित्तादौ। ऋतुमिति हेमन्तादिप्रवृत्तिविषयम्, अप्रवृत्तिस्तु शरद्ग्रीष्मयोः। अवेक्ष्य समीक्ष्येत्यत्र एकस्मिन्नेव श्लोके एकार्थशब्दद्वयकरणं प्रवृत्तिनिवृत्तिविषययोरुभयोरपि अवेक्षणे यत्नः कार्य्यः इति प्रतिपादनार्थम्। व्यवस्येत् कुर्य्यादित्यर्थः। प्रथमस्य अवेक्ष्य सम्यगित्येतस्य स्थाने अथो विदित्वेति केचित् पठन्ति, विदित्वा ज्ञात्वा ॥ १० ॥

तत्र सम्यगदग्धे मधुसर्पिर्भ्यामभ्यङ्गः। अथेमानग्निना परिहरेत् पित्तप्रकृतिमन्तःशोणितं भिन्नकोष्ठमनुद्धतशल्यं दुर्ब्बलं बालं वृद्धं भीरुमनेकव्रणपीड़ितमस्वेद्यांश्चेति ॥ ११ ॥

अत ऊर्द्ध्वमितरथा दग्धलक्षणं वक्ष्यामः। तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहः सूक्ष्मशिरानुसारित्वात् त्वगादीननुप्रविश्याशु दहति। तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति ॥ १२ ॥

तत्र प्लुष्टं दुर्द्दग्धं सम्यगदग्धमतिदग्धञ्चेति चतुर्व्विधमग्निदग्धम्। तत्र यद् विवर्ण प्लुष्यतेऽतिमात्रं तत् प्लुष्टम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्‌दुर्द्दग्धम्। सम्यगदग्धमनवगाढ़ं तालवर्णं सुसंस्थितं पूर्व्वलक्षणयुक्तञ्च। अतिदग्धे मांसावलम्बनं गात्रविश्लेषः शिरास्नायु-

इदानीं सम्यगदग्धं चिकित्सयन्नाह—तत्र सम्यगदग्ध इत्यादि। अग्निकर्म्मदूषितरक्तपित्तयोः प्रसादाय वेदनोपशमाय च। अग्नेर्निवृत्तिविषयं दर्शयन्नाह—अथेमानित्यादि। अन्तःशोणितं भिन्नकोष्ठमिति इत्थम्भूतस्य पुरुषस्य शोणितनिरोधेन दाहपाकादिसम्भवात्। अनेकव्रणपीड़ितमित्यस्य स्थाने केचित् अनेकव्याधिपरिपीड़ितमिति पठन्ति। अस्वेद्याः 'पाण्डुर्मेही रक्तपित्ती तृषार्त्तः' इत्यादयः ॥ ११ ॥

वलयादिप्रकारात् प्रकारान्तरेणाग्निदग्धलक्षणं वक्तुमाह—अत ऊर्द्ध्वमित्यादि। इतरथा दग्धमिति प्रकारान्तरेण वैद्यादृते प्रमादाद् दग्धम्। तत्रेत्यादि। स्निग्धं द्रव्यं सर्पिरादि, रूक्षं द्रव्यं पाषाणलोष्ट्रादि ॥ १२ ॥

तत्राग्निदग्धं वैद्यदोषात् प्रमादाद् वा चतुर्व्विधं दर्शयन्नाह—तत्र प्लुष्टमित्यादि। प्लुष्टदुर्द्दग्धयोर्हीनदग्धत्वेऽपि पृथक्करणं लक्षणचिकित्साभेदात्। तत्र प्लुष्टमित्यादिगणनयैव चतुःसंख्या लब्धा, पुनश्चतुर्व्विधमितिकरणं प्लुष्टदुर्द्दग्धाभ्यां भेदाभ्यां हीनदग्धस्य त्रिप्रकारदाहशङ्कानिरासार्थम्। एषां लक्षणमाह—तत्र यद् विवर्णमित्यादि। तत्र तेषु मध्ये, विवर्णं प्राकृतवर्णादन्यवर्णम्, प्लुष्यते अतिमात्रं अत्यर्थं दह्यते न च स्फोटोत्पत्तिः स्यात्। अन्येत्वत्र 'प्लुष्टमतिमात्रं विवर्णं यत् प्लुष्यते' इति पठन्ति व्याख्यानयन्ति च—अतिमात्रं विवर्णं यत् प्लुष्यते इति अग्नितापेन उच्छिन्न इव भवति; विवर्णमत्र पाण्डुवर्णम्। यत्रेत्यादि। चोष आकृष्यत इव वेदनाविशेषः, दाहः भस्मसाद् भवतीव, रागो रक्तता, वेदना ओषादयः। सम्यगदग्धमित्यादि। अनवगाढमतिदग्धलक्षणरहितम्, तालवर्णं पक्वतालवर्णमित्यर्थः; पक्वतालवर्णमित्येके वदन्ति, अपरे तु अपक्वतालफलवर्णमिति। सुसंस्थितं अत्युन्नतावनतादिदोषवर्ज्जितम्। पूर्व्वलक्षणयुक्तञ्चेति त्वङ्मांस-

सन्ध्यस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासामूर्च्छाश्च उपद्रवा भवन्ति, व्रणश्चास्य चिरेण रोहति, रूढ़श्च विवर्णो भवति। तदेतच्चतुर्व्विधमग्निदग्धलक्षणमात्मकर्म्म-प्रसाधकं भवति ॥ १३ ॥

भवन्ति चात्र।

अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति।
ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्य्यते ॥
तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा।
तेनास्य वेदनास्तीव्राः प्रकृत्या च विदह्यते।
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते ॥ १४ ॥

शिरास्नायुसन्ध्यस्थिदाहलिङ्गयुक्तम्। अतिदग्ध इत्यादि। गात्रविश्लेषो विघट्टनम्, व्यापादनं हिंसनम्; अतिमात्रशब्दोऽत्र ज्वरादिभिः सह प्रत्येकं सम्बध्यते। मूर्च्छाश्चेति चकारात् शोणित-स्रावादयश्च। तदेतदित्यादि। प्लुष्टादिभेदेन चतुर्व्विधमप्यग्निकर्म्म वैद्यस्य यदात्मकर्म्म चिकित्सारूपं तस्य प्रसाधकं भवतीत्यर्थः। ननु सम्यग्दग्धलक्षणमेव वैद्यस्यात्मकर्म्मप्रसाधकं भवति, न पुनः प्लुष्टदुर्द्दग्धातिदग्धलक्षणं, सत्यम्, सम्यग्दग्धलक्षणं वैद्यकर्म्मप्रसाधकमुपादेयत्वेन, प्लुष्टदुर्द्दग्धातिदग्धलक्षणं परिहार्य्यत्वेनेति न दोषः। अन्ये चान्यथा पठन्ति—'तदेतच्चतुर्व्विध-मग्निदग्धलक्षणं पूर्व्वोक्तकर्म्मप्रसाधकं भवति' इति, व्याख्यानयन्ति च—पूर्व्वोक्तं त्वङ्मांसाश्रितं यदग्निकर्म्म तल्लक्षणप्रसाधकं द्योतकं भवति। अथवा पूर्व्वोक्तेष्वग्निसाध्येषु शिरोरोगाधिमन्थादिषु यदग्निकर्म्म तत्प्रसाधकं हेयोपादेयरूपतया इत्यर्थः। अपरे तु 'तदेतच्चतुर्व्विधमग्निदग्धलक्षणं पूर्व्वोक्तकर्म्मप्रसाधकञ्च भवति' इति चकारं पठन्ति व्याख्यानयन्ति च। तेषां मते यदेतच्चतुर्व्विध-मग्निकर्म्म तत् कथं चिकित्सनीयमित्याह—पूर्व्वोक्तकर्म्मप्रसाधकं पूर्व्वप्रतिपादितया क्रियया तत्प्रतीकार्य्यं तच्चिकित्स्यमित्यर्थः। पूर्व्वप्रतिपादितक्रिया तु 'सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्ग इत्यादिका, चकाराद् वक्ष्यमणापराग्निप्लुष्टप्रतपनादिकर्म्मप्रसाधकमिति ज्ञेयम् ॥ १३ ॥

इदानीं सर्व्वाग्निदग्धेषु चिकित्सार्थं विशिष्टदूष्यदोषयोर्दृष्टिं दर्शयन्नाह—भवन्ति चात्र अग्निनेत्यादि। ततस्तदनन्तरम्; तेनैवाग्निना रक्तेन चेत्यर्थः। कुतः पुनः प्राधान्येनाग्निदग्धे पित्तमेवोदीर्य्यत इत्याह—तुल्यवीर्य्य इत्यादि। हि यस्मात् कारणाद् एते द्वे अपि अग्निपित्ते तुल्यवीर्य्ये उष्णवीर्य्ये, रसतो रसात् द्वे अपि कटुके, द्रव्यतो द्रव्यादपि तुल्ये; तथाहि सदृशः एवाधारो वह्नेः पित्तस्यापि, द्रव्यञ्चात्र रसाद्याधार उच्यते; ततः कारणात् तेनाग्निना अस्य पित्तस्य कोपितस्य वेदनादाहादिका भवन्तीति वाक्यशेषः। प्रकृत्या च विदह्यते इति प्रकृत्या स्वभावेन विदह्यते विदाहमुपयाति। ताभ्यामेव रक्तपित्ताभ्यां स्फोटा ज्वरादयश्च शीघ्रं प्रजायन्त इति। अन्ये तु उभे इत्यत्र रक्तपित्ते इति व्याख्यानयन्ति। उष्णवीर्य्यत्वञ्च मधुररसस्यापि रक्तपित्तस्य

दग्धस्योपशमार्थाय चिकित्सां संप्रवक्ष्यते।
प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम्॥
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम्।
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यति शोणितम्।
तस्मात् सुखयति ह्युष्णं न तु शीतं कथञ्चन॥ १५॥
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्याद् भिषक् पुनः।
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत्॥ १६॥
सम्यग्दग्धे तुगाक्षीरी-प्लक्षचन्दनगैरिकैः।
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद् भिषक्॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत्।
पित्तविद्रधिवच्चैनं सन्ततोष्माणमाचरेत्॥ १७॥

यान्त्रिकेक्षुरसवद्विदाहित्वात्। द्रव्यत इति एते द्वे अपि रक्तपित्ते द्रव्यादपि तुल्ये। द्रव्यशब्देनात्र हेत्वाधारौ कथ्येते। तद् यथा—रक्तपित्तयोर्द्वयोरपि तेजो हेतुः, आधारश्च द्वयोरपि तेज एवेति॥१४॥

दग्धस्येत्यादि। अग्निप्रतपनं स्वेदनम्। उष्णं तथौषधमिति आलेपनान्नपानादिकम्। कुतः कारणादत्र शरीरमुपचर्य्यते नाग्निकोपितं रक्तपित्तमित्याह—शरीर इत्यादि। स्विन्नभूयिष्ठे अत्यर्थं स्विन्ने। स्वल्पमपि रक्तं यद्यस्विन्नं भवति तदा रक्तपित्तोपशमनेन शीतोपचारेण दुःखमुत्पादयतीति दर्शयन्नाह—प्रकृत्येत्यादि। स्कन्दयत्यति शोणितमिति रक्तमत्यर्थं स्त्यानतां नयतीत्यर्थः, स्त्यानेन रक्तेन च रुद्धमार्गो वायुरूष्माप्यनिर्गच्छन् प्लुष्टे शूलशोफरागादिकां वेदनां करोत्यतः शीतक्रिया न सुखं करोति; उष्णक्रिया पुनः रक्तविलयनकरी भवति, अत ऊष्मनिःसरणवातानुलोमहेतुः सा अतिसुखयति॥ १५॥

दुर्दग्धक्रियां निर्दिशन्नाह—शीतामित्यादि। दुर्दग्धे अवगाढमूलदग्धभागस्य स्विन्नरक्तस्य निर्व्वापणार्थं शीतां क्रियां कुर्य्यात्, अनवगाढमूलदग्धभागस्यास्विन्नरक्तस्य विलयनार्थमुष्णां क्रियां कुर्य्यात्। अन्ये तु शीतां दाहातिशये, नातिदाहे उष्णामिति। पुनः किं कुर्य्यादित्याह—घृतालेपनादीनपि शीतानेव कारयेदिति, एवं सुखीभवति व्रणरोहणञ्च॥ १६॥

सम्यग्दग्धे चिकित्सामाह—सम्यग्दग्ध इत्यादि। तुगाक्षीरी वंशरोचना, अन्ये तु वंशरोचनानुकारिपार्थिवद्रव्यम्; प्लक्षः पर्कटी, चन्दनं रक्तचन्दनम्, सामृतैरिति गुडूचीसहितैः, एतैस्तुगाक्षीर्य्यादिद्रव्यैर्घृतस्निग्धीकृतैः पित्तप्रत्यनीकमविशोषिणं लेपं सम्यग्दग्धे कारयेदित्यर्थः। वातशान्त्यर्थं प्रलेपमाह—ग्राम्येत्यादि। ग्राम्या अश्वादयः, आनूपा वराहमहिषादयः, औदकाः कूर्म्मादयः। पित्तविद्रधिवदित्यादि। एनं सम्यग्दग्धं, सन्ततोष्माणं बलवत्तरोष्माणम्॥ १७॥

अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम्।
क्रियां कुर्य्याद् भिषक् पश्चाच्छालितण्डुलकण्डनैः ॥
तिन्दुकीत्वक्कपालैर्वा घृतमिश्रैः प्रलेपयेत्।
व्रणं गुडूचीपत्रैर्वा छादयेदथवोदकैः ॥
क्रियाश्च निखिलां कुर्य्याद् भिषक् पित्तविसर्पवत् ॥ १८ ॥
मधूच्छिष्टं समधुकं लोध्रं सर्ज्जरसं तथा।
मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्व्वेषामग्निदग्धानामेतद्रोपणमुत्तमम् ॥ १९ ॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत् ॥ २० ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम्।
श्वसिति क्षौति चात्यर्थमत्याधमति कासते ॥
चक्षुषोः परिदाहश्च रागश्चैवोपजायते।
सधूमकं निश्वसिति घ्रेयमन्यन्न वेत्ति च।
तथैव च रसान् सर्व्वान् श्रुतिश्चास्योपहन्यते ॥

अतिदग्धे चिकित्सामाह—अतिदग्ध इत्यादि। विशीर्णानि अवलम्बितानि, शालितण्डुलकण्डनैरिति शालितण्डुलकण्डनोद्भवैर्गुण्डनैः कणैरित्यर्थः, कणैश्च चूर्णप्रयोगकाले अवचूर्णयेदित्यध्याहारः। तिन्दुकीत्वक्कपालैर्वेति तिन्दुकीवल्कलखर्परैः। तिन्दुकीत्वचा तिन्दुकीवल्कलेन कपालैः मृत्खर्परैरित्यन्ये। तिन्दुकीत्वक्कषायैर्वेति केचित् पठन्ति, तिन्दुक्या या त्वक् तया प्रलेपयेत्, कषायाः कषायवृक्षा ये तैरपीत्यर्थः। अन्ये तु कषायशब्देन चूर्णमाहुः, तत्र तिन्दुकीवल्कलचूर्णैरित्यर्थः। औदकैः पद्मोत्पलादिपत्रैः। पित्तरक्तोपद्रुतो व्रणः गुडूच्यादिपत्रच्छादनेन उष्माणं त्यक्त्वा सुखं संरोहति ॥ १८ ॥

सर्व्वेष्वग्निदग्धेषु रोपणार्थं चिकित्सां दर्शयन्नाह—मधूच्छिष्टमित्यादि। इदञ्च सामान्यं रोपणं घृतं केचित् पठन्ति न तु निबन्धकारा इति, सूपयोगित्वान्मयापि लिखितम् ॥ १९ ॥

स्नेहदग्धे चिकित्सामाह—स्नेहदग्ध इत्यादि। स्नेहदग्धे पुनरनुक्तामपि रूक्षां क्रियामवचारयेत् ॥ २० ॥

इदानीं कण्ठनासादिषु कर्म्मणि कृते धूमोपघातलक्षणं चिकित्साञ्च दर्शयन्नाह—अत ऊर्द्ध्वमित्यादि। श्वसिति श्वासं करोति, क्षौति चात्यर्थमिति अतिशयेन हिक्कति, आधमति आध्मानयुक्तो भवति। रागो लोहितता अक्ष्णोः। घ्रेयमन्यन्न वेत्ति चेति नासागतदोषेण धूमादन्यत् घ्रेयं न वेत्ति, घ्रेयं तावन्न वेत्ति अन्यत् स्पर्शं च न वेत्ति इत्यन्ये। रसान् सर्व्वान्

तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति ।
धूमोपहत इत्येवं शृणु तस्य चिकित्सितम् ॥ २१ ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥
वमतः कोष्ठशुद्धिः स्याद् धूमगन्धश्च नश्यति ।
विधिनानेन शाम्यन्ति सदनक्षवथुज्वराः ॥
दाहमूर्च्छातृड़ाध्मान-श्वासकासाश्च दारुणाः ।
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः ॥
सम्यग्गृह्णातीन्द्रियार्थान् मनश्चास्य प्रसीदति ।
शिरोविरेचनं तस्मै दद्याद् योगेन शास्त्रवित् ॥
दृष्टिर्विशुध्यते चास्य शिरोग्रीवञ्च देहिनः ।
अविदाहि लघु स्निग्धमाहारञ्चास्य कल्पयेत् ॥ २२ ॥
उष्णवातातपैर्दग्धे शीतः कार्य्यो विधिः सदा ।
शीतवर्षानिलैर्दग्ध उष्णं स्निग्धञ्च शस्यते ।
तथातितेजसा दग्धे सिद्धिर्नास्ति कथञ्चन ॥ २३ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽग्निकर्म्मविधिर्नाम द्वादशोऽध्यायः ॥ १५ ॥

इत्यत्र न वेत्तीति सम्बध्यते । श्रुतिश्चास्योपहन्यत इति न शृणोतीत्यर्थः श्रोत्रस्थदोषेण । तृष्णादाहज्वरयुत इति स्पर्शदोषेण । सीदति क्रियास्वसमर्थो भवतीत्यर्थः, शृणु तस्येति ॥ २१ ॥

सर्पिरित्यादि । सर्पिरिक्षुरसमित्येको योगः, द्राक्षां पयो वेति द्वितीयः, शर्कराम्बु वेति तृतीयः, मधुराम्लौ रसौ वापीति चतुर्थः । सदनम् अङ्गग्लानिः, योगेन मात्रया ॥ २२ ॥

इदानीं दग्धचिकित्साप्रसङ्गेन दग्धसदृशस्य चिकित्सां दर्शयन्नाह—उष्णेत्यादि । उष्णवातः ग्रैष्मिकः शारदो वा ; उष्णवातेनातपेन च दग्ध इव दग्धः ; उष्णवातातपाभ्यामिति द्विवचने प्राप्ते बहुवचनमनुक्तोष्णप्रापणार्थम् । सदास्थाने केचिद् व्रणे इति पठन्ति, व्याख्यानयन्ति च—व्रणे इति त्वगादिव्रणवस्तुनि । शीतवर्षानिलैर्दग्ध इति शीतं हिमम्, हिमदग्धस्तुषारदग्ध इति लोकोक्त्या हिमदग्धेऽपि दाहसादृश्यमस्ति । वर्षानिल इति वृष्टिसंयुक्तो वातः, अत्रापि बहुवचनमनुक्तशीत-

१२

प्रापणार्थम्। दग्धस्थाने केचित् हत इति पठन्ति। तथातितेजसा दग्ध इति अतितेजसा वज्राग्निना; तथातितेजसा दग्धे न सिध्यति कथञ्चनेति यत् कृतं तत् किञ्चिद्दग्धे सिद्धिरपि भवतीति ज्ञापनार्थम्। तत्र च पूर्व्वोक्तेन विधिना शीतोष्णादिना प्रतिकर्त्तव्यमिति। अस्याग्रे केचित् 'इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत्। स्नेहाभ्यङ्गपरिषेकैः प्रदेहैश्च तथा भिषक्' इति पठन्ति; तच्च निबन्धकारा न पठन्ति॥ २३॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अग्निकर्म्मविधिव्याख्यानाम द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

नृपाढ्यबालस्थविरभीरुदुर्ब्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः ॥ २ ॥

तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत् सर्व्वाणि सर्व्वैर्वा, विशेषतस्तु विस्राव्यं शृङ्गजलौकालाबुभिर्गृह्णीयात् ॥ ३ ॥

भवन्ति चात्र।

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम्।
तस्माद् वातोपसृष्टे तु हितं तदवसेचने ॥ ४ ॥
शीताधिवासा मधुरा जलौका वारिसम्भवा।
तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥ ५ ॥
अलाबु कटुकं रुक्षं तीक्ष्णञ्च परिकीर्त्तितम्।
तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ ६ ॥

अथात इत्यादि। जलौकसां विषयं निर्द्दिशन्नाह—नृपाढ्येत्यादि। अनुग्रहार्थमुपकारार्थम्, परमसुकुमारोऽयमिति प्रधानमृदुरित्यर्थः, शृङ्गालाबू सुकुमारोपायौ, जलौकसस्तु परमसुकुमारोपायः; असुकुमारोपायश्च प्रच्छानं सिराव्यधनञ्च ॥ १। २ ॥

दोषविशेषेणापि जलौकसां तत्प्रसङ्गेनागतस्य शृङ्गस्य अलाब्वाश्च विषयं दर्शयितुमाह—तत्र वातेत्यादि। अस्याग्रे केचित् स्निग्धशीतरुक्षत्वादिति हेतुमुदाहरन्ति, अमुञ्च निबन्धकारा न पठन्ति। पक्षान्तरं दर्शयन्नाह—सर्व्वाणीत्यादि। सर्व्वाणि वातपित्तकफदुष्टानि शोणितानि, सर्व्वैरिति शृङ्गादिभिर्यथालाभम्। ननु यथासंख्यमित्यभिधाय सर्व्वाणि सर्व्वैरित्युक्तमनियतं वचनं स्यादित्यभिप्रायेणाह—विशेषतस्तु विस्राव्यं शृङ्गजलौकालाबुभिर्गृह्णीयात्, अतिशयेन विस्रावणार्हं यद् भवति शोणितम् अतिप्रबलतया तत् शृङ्गादिभिर्गृह्णीयान्निर्हरेदित्यर्थः। विशेषतस्त्वित्यादि पाठस्तु कैश्चिदेव निबन्धकारैः कथञ्चिदेव व्याख्यातो बहुभिस्तु जैज्झटादिभिः परिहृत एव ॥ ३ ॥

तत्र वातादिदुष्टे सहेतुशृङ्गाद्यवचारणं दर्शयन्नाह—भवन्ति चात्रेति। उष्णमित्यादि। समधुरं ईषत् स्निग्धम्, केचित् स्निग्धं श्लक्ष्णं रुमधुरमिति पठन्ति। शीताधिवासा शीतगृहा ॥ ४—६ ॥

तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदा चूषणात्। सान्तर्दीपयाऽलाब्वा ॥ ७ ॥

अथ जलायुका वक्ष्यन्ते। जलमासामायुरिति जलायुका, जलमासामोक इति जलौकसः। ता द्वादश ; तासां सविषाः षट्, तावत्य एव निर्व्विषाः॥ ८॥

तत्र सविषाः—कृष्णा कर्व्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा। वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्व्वुरा। रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा। इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति ॥ ९ ॥

वातादिदोषदुष्टरुधिरास्रावणप्रसङ्गागतयोः शृङ्गालावुकयोरेवावचारणं दर्शयन्नाह—तत्र प्रच्छित इत्यादि। तनुवस्त्रपटलावनद्धेनेति सूक्ष्मवस्त्रावरणपिहितेन। अन्ये तु तनुवस्तिपटलसूत्रेणेति पठन्ति, व्याख्यानयन्ति च—तत्र वस्तिर्मूत्राशयः, पटलं घनं, सूत्रं मर्कटिकाजालकम्, तनुशब्दः उभयोरपि सम्बध्यते इति। सान्तर्दीपया मध्यदीपसहितया, शोणितमवसेचयेदिति सम्बन्धः। केचित् अलाब्ववचारणमन्यथा पठन्ति। तथाहि—भूर्ज्जपत्रशणतूलानामित्यादि। अयं पाठोऽभावात् समग्रो न लिखितः। शृङ्गालाबुप्रमाणं भाल्लूकिसकाशादवगन्तव्यम्। तथाच तद्वचः—'विषाणं श्वेतगोरिन्दुचक्रं सप्ताङ्गुलायतम्। क्षिप्तान्तःपिचुपेशीकं योज्यं वातयुतेऽसृजि। अङ्गुष्ठमूलवन्मूले छिद्रमग्रेऽस्य मुद्गवत्' इति, 'अष्टाङ्गुलपरीणाहा चतुरङ्गुलनालसम्मिता सुमुखी। कृष्णमृदालिप्ततनुः श्रेष्ठा रक्तावसेचनेऽलावुः' इति। अन्ये तु शृङ्गालाबुप्रमाणमत्रैव पठन्ति, तथा वातादिदुष्टरक्तलक्षणञ्च, स च पाठोऽस्माभिरभावान्न लिखितः ॥ ७ ॥

जलौकसां निरुक्तिमाह—अथ जलायुका वक्ष्यन्त इत्यादि। जलमासामायुरिति आसां जलौकसां जलमायुरिति जलायुकाः, कथ्यन्ते इत्यध्याहारः। निरुक्तिपक्षान्तरमाह—जलमासामोक इति जलौकसः। इदानीं चिकित्सोपयोगिनीं जलौकसां संख्यां निर्द्देष्टुमाह—द्वादशेति। तासामेव सविषनिर्व्विषभेदाद् द्विविधत्वमाह—तासामित्यादि। एवशब्दोऽत्र परतन्त्रोक्तसविषाष्टजलौकाशङ्कानिरासार्थम् ॥ ८ ॥

सविषाणां पोषणावचारणनिषेधार्थं प्रमादतस्त्ववचारितानां स्वयं वा लग्नानां व्यापच्चिकित्सार्थं नाम्ना निर्द्देशं कुर्व्वन्नाह—तत्र सविषा इत्यादि। तासामाकृतिं निर्द्देष्टुमाह—तास्वञ्जनेत्यादि। अञ्जनं कज्जलम्, पृथुशिराः महामस्तका। वर्म्मिमत्स्यः सर्पाकारः, अन्ये रोहितमत्स्यमाहुः; छिन्नोन्नतकुक्षिरिति क्वचिच्छिन्नकुक्षिः क्वचिदुन्नतकुक्षिः। रोमशेति वलियुक्तत्वाद् रोमावततेव प्रतिभाति। इन्द्रायुधं शक्रधनुः, चित्रिता विचित्रिता मण्डितेत्यर्थः। विचित्रपुष्पाकृतिचित्रेति नानासंस्थानधवलविन्दुचित्रा। गोवृषणवदिति वृषभाण्ड इव अधोभागे द्विःकारभूताकृतिः॥ ९ ॥

ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानालेपननस्यकर्म्मादिषूपयोज्यः। इन्द्रायुधदष्टमसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः॥ १०॥

अथ निर्व्विषाः—कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा * च पिङ्गला। यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी च शङ्कुमुखी। मूषिकाकृतिवर्णाऽनिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा च सावरिका, सा च पश्वर्थे। इत्येता अविषा व्याख्याताः॥ ११॥

तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि। तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्व्विषाश्च विशेषेण भवन्ति॥ १२॥

तासां दंशे विषोपद्रवं निर्द्दिशन्नाह—ताभिर्दष्ट इत्यादि। अतिमात्रशब्दः कण्ड्वादिभिः सह प्रत्येकं सम्बध्यते। मदः पूगफलेनेव मत्तता, सदनम् अङ्गग्लानिः। तासां दंशविषे चिकित्सां वक्तुमाह—तत्र महागद इत्यादि। महागदः 'त्रिवृद् विशल्ये मधुकं हरिद्रे' इत्यादिना कल्पस्थानोक्त इत्यादि। नस्यकर्म्मादिष्वित्यत्रादिशब्दात् परिषेकावगाहादिर्योज्यः। इन्द्रायुधेत्यादि। असाध्यमसाधनार्हम्। तद्दंशलिङ्गमसाध्यसर्पदष्टविषवेगविज्ञानवद् वेदितव्यम्; अन्ये तु श्वयथ्वादीनां सम्पूर्णलिङ्गत्वात् अरिष्टाद्युपपत्तेर्महागदावचारणेनापि अनुपशान्तेस्तल्लिङ्गज्ञानमित्याहुः॥ १०॥

उपादानार्थं निर्व्विषाणां नामानि निर्द्दिशन्नाह—अथेत्यादि। ता एव लक्षणैर्निर्द्दिशन्नाह—पिङ्गला कपिला, आशुगा शीघ्रगामिनी। यकृद्वर्णा नीललोहितवर्णा। मूषिकाकृतिवर्णेति मूषिकाकृतमूषिकवर्णा चेत्यर्थः। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रेति मुद्गवर्णा हरितमुद्गवर्णा, पुण्डरीकतुल्यवक्त्रा पद्मवद्विस्तीर्णमुखा। सावरिकाया विषयमाह—सा चेत्यादि। पश्वर्थे हस्त्यश्वादीनामर्थे, न पुनर्मनुष्याणाम्॥ ११॥

द्रव्यमाख्याय निर्व्विषाणां प्रशस्तानि क्षेत्राण्याह—तासामित्यादि। यवनस्तुरस्कदेशः, पाण्ड्यो दक्षिणदिग्विभागे यो देशः। 'काम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च पश्चिमे। पाण्ड्यदेशो महेशानि! महाशूरत्वकारकः' इति शक्तिसङ्गमतन्त्रे सप्तमः पटलः। सह्यो नर्म्मदायाः पारे पर्व्वतविशेषः, पौतनो मथुराप्रदेशः। यवनादिक्षेत्रेषु कीदृशी जलौका भवतीत्याह—तेष्वित्यादि। केचिद् यवनादीनि क्षेत्राणि न पठन्ति। कुतः? सविषाणां सविषकीटादिकोथस्य क्षेत्रत्वात्, निर्व्विषाणान्तु पद्मोत्पलादिकोथस्य क्षेत्रत्वादयुक्तं यवनादिक्षेत्रकथनमिति वदन्ति॥ १२॥

* पिङ्गलाङ्गा इति वा पाठः।

तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः। पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवलकोथजाता विमलेष्वम्भःसु च निर्व्विषाः॥ १३॥

भवति चात्र।

क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः॥ १४॥

तासां ग्रहणमार्द्रचर्म्मणान्यैर्वा प्रयोगैर्गृह्णीयात्। अथैनां नवे महति घटे सरस्तड़ागोदकपङ्कमावाप्य निदध्यात्। भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं तृणमौदकानि च पत्राणि, द्व्यहात् त्र्यहाच्चाभ्योऽन्यज्जलं भक्ष्यञ्च दद्यात्। सप्तरात्रात् सप्तरात्राच्च घटमन्यं संक्रामयेत्॥ १५॥

भवति चात्र।

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः।
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः॥ १६॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा, विरुक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजं स्यात्। गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्ध-

इदानीं सविषनिर्व्विषकोथकलुषजलोत्पन्नानां जलौकसां सविषनिर्व्विषत्वं दर्शयन्नाह—तत्र सविषेत्यादि। कोथः पूतिभावः। कलुषेषु मलिनेषु। पद्मोत्पलेति पद्मं ईषच्छुक्लम्, उत्पलं ईषन्नीलम्, नलिनं ईषद्रक्तम्, कुमुदं कुइआ इति लोके, सौगन्धिकं गर्द्दभपुष्पाभिधानमत्यन्तसुरभि चन्द्रोदयविकाशि, कुवलयं रक्तोत्पलम्, पुण्डरीकमतिश्वेतपद्मम्, शैवलं शैवालम्, कोथजाता इति एषां पूतिभावजाताः॥ १३॥

इदानीं क्षेत्रसंग्रहश्लोकमाह—भवति चात्रेत्यादि। एता इति पूर्व्वोक्ता निर्व्विषाः जलौकाः, सुगन्धिषु शोभनगन्धिषु, न च सङ्कीर्णचारिण्य इति न विषादिविरुद्धाहारभुजः शैवलाद्यशनत्वात्, न च पङ्के स्वपन्ति तृणोदकपत्रशयनत्वात्, सुखा इति सुखकारिण्य इत्यर्थः॥ १४॥

तासां ग्रहणोपायं दर्शयन्नाह—तासां ग्रहणमित्यादि। ग्रहणञ्चासां शरत्काले, तन्त्रान्तरवचनात्। अन्यैर्वा प्रयोगैरिति सद्योहतजन्तुमांसपेशी-नवनीतघृतक्षीराद्यभ्यक्तजङ्घाद्यवयवैर्वा। पोषणं दर्शयन्नाह—अथैनामिति। आवाप्य प्रक्षिप्य, निदध्यात् स्थापयेत्। वल्लूरं शुष्कमांसम्। संक्रामयेत् सञ्चारयेत्॥ १५॥

तास्त्वयोग्या निदर्शयन्नाह—भवति चात्रेत्यादि। परिक्लिष्टाः अन्योऽन्य-( असनोज्ञ )-दर्शनाः, पृथ्व्यो विस्तीर्णाः, मन्दविचेष्टिताः मन्दगामिन्यः, न पूजिताः न श्लाघिताः॥ १६॥

तासामवचारणमुदिशन्नाह—अथेत्यादि। संवेश्य शाययित्वा, अरुजमव्रणम्, व्रणे तु गन्ध-

गात्रीः सलिलसरकमध्ये मुहूर्त्तंस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत्। श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात्, अगृह्णन्त्यै क्षीरविन्दुं शोणितविन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत। यदेत्रवमपि न गृह्णीयात् तदान्यां ग्राहयेत् ॥ १७ ॥

यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद् गृह्णातीति, गृह्णन्तीश्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च। दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति, शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् ॥ १८ ॥

अथ पतितां तण्डुलगुण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ता ङ्गुष्ठाङ्गुलीभ्यां शनैः शनैरनुलोममनुमार्ज्जयेदा मुखात्, वामयेत् तावद यावत् सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता

क्लेदाभ्यामेव गृह्णन्ति; अथवा रुजावति विरूक्षणेन रुजातिवृद्धिः। सलिलसरकं जलपात्रम्। केचित् सलिलसरकस्थाने सरकमध्ये चारिण्य इति पठन्ति, सरकं जलपूर्णपात्रम्। रोगमत्र रोगाधिष्ठानं दोषाधिष्ठानं वा। श्लक्ष्णेत्यादि। पिचुस्तूलं वीजहीनः कार्पासः, प्रोतं वस्त्रम्, अपावृणुयाद नाच्छादयेत् ॥ १७ ॥

रोगाधिष्ठाने तासां ग्रहणलक्षणमाह—यदेत्यादि। निविशते लगतीत्यर्थः, गृह्णाति विध्यतीत्यर्थः। गृह्णन्तीमिति शोणितमाददानामित्यर्थः, आर्द्रवस्त्रावच्छन्नामिति इत्थं सुखिता शीघ्रं रक्तं पिवति; जलौकास्तु आत्मप्रभावेण प्राग् दुष्टमेव रक्तं पिवति, यथा दुग्धमिश्रितोदकात् हंसो दुग्धमेव पिवतीत्यर्थः। तासां विशुद्धरक्तादाने विज्ञानोपायं दर्शयन्नाह—तोदेति। तोदो व्यथा, सा धातुक्षयाद्बलवणेन वायुना। ननु शुद्धरक्तक्षयात् श्लेष्मकार्य्या कण्डूरिह न स्यादिति केचित् कण्डूग्रहणं न कुर्व्वन्ति। अन्ये तु वदन्ति—आग्नेयरक्तधातुक्षयात् कफधातोः सौम्यस्य जलौकामुखक्लेदवर्द्धितस्य वृद्धेः कण्डूसम्भव इति। अन्ये तु दंशतोदकण्डूप्रादुर्भावैरिति पठन्ति, व्याख्यानयन्ति च—दंशो वनमक्षिका, दंशेन कृतो यस्तोदः व्यथा, तस्मिन् तोदे यादृशी कण्डूः तादृशी कण्डूर्यदा स्यात् तदा शुद्धरक्तादानं जानीयात्। तत्र किं कुर्य्यादित्याह—शुद्धमिति। अवकिरेत् अवचूर्णयेत्। अन्ये तु शोणितगर्द्धेनेति पठन्ति, गर्द्धेन अभिकाङ्क्षया, वदन्ति च—गन्धेनेति अयुक्तः पाठः; कुतः? यस्माज्जलौकसां गन्धेन्द्रियं नास्तीति ॥ १८ ॥

पतितायाः रुधिरापहरणविधानमाह—अथ पतितामित्यादि। तण्डुलगुण्डनं गुण्डनं कणा इत्यर्थः, अनुलोममनुकूलम्, अनुमार्ज्जयेत् प्रोञ्छयेत्, आ मुखादिति मुखं यावदित्यर्थः। सम्यग्वान्तलिङ्गा-

सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्व्वान्ता, तां पुनः सम्यग् वामयेत्! दुर्व्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्व्ववत् सन्निदध्यात्॥ १९॥

शोणितस्य च योगायोगानवेक्ष्य शतधौतघृताभ्यङ्गस्तत्पिचुधारणं वा, जलौकोव्रणान् मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद् बध्नीत वा, कषायमधुरस्निग्धशीतश्च प्रदेहैः प्रदिह्यादिति॥ २०॥

न्याह—सम्यगिति। सलिलसरकन्यस्ता जलपूर्णसरावेष्वर्पिता, चरेद् गच्छत। असम्यग्वान्तलिङ्गान्याह—या सीदतीति। सीदति निमज्जति। दुर्व्वान्तावचाराद् व्याधिविशेषमाह—दुर्व्वान्ताया इति। अस्य तु व्याधेः शास्त्रे लक्षणानिर्द्देशान्न पठनीय इत्येके। अथ सुवान्ता किं कार्य्येत्याह—अथ सुवान्तामिति। पूर्व्ववदिति यथा— नवे महति घटे इत्यादौ॥ १९॥

शोणितावसेचने उत्तरकर्म्माणि निर्द्दिशन्नाह—शोणितस्येत्यादि। योगः सम्यक्स्रुतिः, अयोगः योगादन्यः; स त्रिविधो हीनातिमिथ्यायोगभेदात्। तत्र योगे शतधौतघृताभ्यङ्गः शतधौतघृताक्तपिचुधारणं वा। हीनयोगे किं कुर्य्यादित्याह—जलौक इत्यादि। अवघट्टयेत् चालयेत स्रावणार्थम्। अतियोगे किं कुर्य्यादित्याह—शीताभिरद्भिश्च परिसेचयेद् बध्नीत चेति। शीतलजलपरिषेचनं बन्धनञ्च जलौकोमुखपदस्य रक्तस्थित्यर्थम्। मिथ्यायोगे उपक्रममाह—कषायेत्यादि। प्रदिह्यात् लिम्पेत्। अत्र कषायप्रदेहः शेषदुष्टरक्तप्रसादार्थम्, मधुरैः प्रदेहः स्रुतादुष्टरक्तबन्धनार्थम्। अन्ये तु मूर्च्छाद्युपद्रवपरिहारार्थं शीतलजलसेकः, मधुनावघट्टनं कषायादिलेपनञ्च सन्धानार्थमिति व्याख्यानयन्ति। शोणितस्रावणमपि पुरुषबलप्रमाणाद् दोषबलप्रमाणाद् वा वातादिजनितव्याधिबलप्रमाणाद् वा यावच्छोणितस्य सम्यक्शुद्धिर्भवति तावद् वा रोगाशयं वा समीक्ष्य। तद् यथा—अल्पीयसि रोगाशये अल्पं रक्तमाहरणीयम्, महति पुनर्बह्विति। रक्तमोक्षणञ्च पलादिमानेन, पलञ्चात्र पक्वसप्तगुञ्जाफलप्रमाणमापकेण, तान्यपि, चार्द्धत्रयोदशपलानि प्रस्थः; रक्तप्रस्थश्चैकैकस्यां सिरायां मोक्षणीयः; तदपि द्वाभ्यां दिवसाभ्याम्, प्रस्थश्चात्र उत्तममात्रा। मध्यमा मात्रा अर्द्धप्रस्थः, अर्द्धप्रस्थश्चात्र कर्षाधिकषट्पलानि, एतदपि द्वाभ्यामहोभ्यां स्रावणीयम्। अधममात्रा कुडवम्, कुडवञ्चात्र—अष्टमाषाधिकानि त्रीणि पलानि; इदमपि दिनद्वयेन मोक्षणीयमिति प्रसिद्धः कर्म्ममार्गः॥ २०॥

भवति चात्र ।

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।
जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद् गदान् ॥ २१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

इदानीं संग्रहश्लोकमाह—भवति चात्रेत्यादि। क्षेत्राणीति सविषाणां क्षेत्राणि तत्र सविष-कीटेत्यादि, निर्व्विषाणां पद्मोत्पलपत्रेत्यादि। ग्रहणमिति तासां ग्रहणमार्द्रचर्म्मणेत्यादि। जातयः सविषाणां कृष्णकर्व्वूरेत्यादि; निर्व्विषाणां कपिला पिङ्गलेत्यादि; पोषणमिति नवे महति घटे इत्यादि। अवचारणमिति अथ जलौकोऽवसेकसाध्येत्यादि, चकारात् पश्चात् कर्म्मादि ॥ २१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्व्वान्ता, तां पुनः सम्यग् वामयेत्। दुर्व्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्व्ववत् सन्निदध्यात्॥ १९॥

शोणितस्य च योगायोगानवेक्ष्य शतधौतघृताभ्यङ्गस्तत्पिचुधारणं वा, जलौकोव्रणान् मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद् बध्नीत वा, कषायमधुरस्निग्धशीतश्च प्रदेहैः प्रदिह्यादिति॥ २०॥

न्याह—सम्यगिति। सलिलसरकन्यस्ता जलपूर्णसरावेष्वर्पिता, चरेद् गच्छेत्। असम्यग्वान्तलिङ्गान्याह—या सीदतीति। सीदति निमज्जति। दुर्व्वान्तावचाराद् व्याधिविशेषमाह—दुर्व्वान्ताया इति। अस्य तु व्याधेः शास्त्रे लक्षणानिर्द्देशान्न पठनीय इत्येके। अथ सुवान्ता किं कार्य्येत्याह—अथ सुवान्तामिति। पूर्व्ववदिति यथा— नवे महति घटे इत्यादौ॥ १९॥

शोणितावसेचने उत्तरकर्म्माणि निर्द्दिशन्नाह—शोणितस्येत्यादि। योगः सम्यक्स्रुतिः, अयोगः योगादन्यः; स त्रिविधो हीनातिमिथ्यायोगभेदात्। तत्र योगे शतधौतघृताभ्यङ्गः शतधौतघृताक्तपिचुधारणं वा। हीनयोगे किं कुर्य्यादित्याह—जलौक इत्यादि। अवघट्टयेत् चालयेत स्रावणार्थम्। अतियोगे किं कुर्य्यादित्याह—शीताभिरद्भिश्च परिसेचयेद् बध्नीत वेति। शीतलजलपरिषेचनं बन्धनञ्च जलौकोमुखपदस्य रक्तस्थित्यर्थम्। मिथ्यायोगे उपक्रममाह—कषायेत्यादि। प्रदिह्यात् लिम्पेत्। अत्र कषायप्रदेहः शेषदुष्टरक्तप्रसादार्थम्, मधुरैः प्रदेहः स्रुतादुष्टरक्तबन्धनार्थम्। अन्ये तु मूर्च्छाद्युपद्रवपरिहारार्थं शीतलजलसेकः, मधुनावघट्टनं कषायादिलेपनञ्च सन्धानार्थमिति व्याख्यानयन्ति। शोणितस्रावणमपि पुरुषबलप्रमाणाद् दोषबलप्रमाणाद् वा वातादिजनितव्याधिबलप्रमाणाद् वा यावच्छोणितस्य सम्यक्शुद्धिर्भवति तावद् वा रोगाशयं वा समीक्ष्य। तद् यथा—अल्पीयसि रोगाशये अल्पं रक्तमाहरणीयम्, महति पुनर्बह्विति। रक्तमोक्षणञ्च पलादिमानेन, पलञ्चात्र पक्वससगुञ्जाफलप्रमाणमाषकेण, तान्यपि चार्द्धत्रयोदशपलानि प्रस्थः; रक्तप्रस्थश्चैकैकस्यां सिरायां मोक्षणीयः; तदपि द्वाभ्यां दिवसाभ्याम्, प्रस्थश्चात्र उत्तममात्रा। मध्यमा मात्रा अर्द्धप्रस्थः, अर्द्धप्रस्थश्चात्र कर्षाधिकषट्पलानि, एतदपि द्वाभ्यामहोभ्यां स्रावणीयम्। अधममात्रा कुडवम्, कुडवञ्चात्र—अष्टमाषाधिकानि त्रीणि पलानि; इदमपि दिनद्वयेन मोक्षणीयमिति प्रसिद्धः कर्म्ममार्गः॥ २०॥

भवति चात्र ।

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।
जलौकसाश्च यो वेत्ति तत्साध्यान् स जयेद् गदान् ॥ २१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

इदानीं संग्रहश्लोकमाह—भवति चात्रेत्यादि । क्षेत्राणीति सविषाणां क्षेत्राणि तत्र सविष-कीटेत्यादि, निर्व्विषाणां पद्मोत्पलपत्रेत्यादि । ग्रहणमिति तासां ग्रहणमार्द्रचर्म्मणेत्यादि । जातयः सविषाणां कृष्णकर्ब्बूरेत्यादि ; निर्व्विषाणां कपिला पिङ्गलेत्यादि ; पोषणमिति नवे महति घटे इत्यादि । अवचारणमिति अथ जलौकोऽवसेकसाध्येत्यादि, चकारात् पश्चात् कर्म्मादि ॥ २१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
जलौकावचारणीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्द्दशोऽध्यायः ।

अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

तत्र पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्याहारस्य सम्यक्परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य हृदयं स्थानम्, स हृदयाच्चतुर्व्विंशतिं धमनीरनुप्रविश्योर्द्ध्वगा दश दशचाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति चादृष्टहेतुकेन कर्म्मणा ॥ २ । ३ ॥

अथात इत्यादि। शोणितोत्पत्ते रसाधीनत्वाद् रसमेव दर्शयन्नाह—तत्रेत्यादि। इत्थम्भूतस्याहारस्य यः सारः स रस इत्युच्यत इति पिण्डार्थः। पाञ्चभौतिकस्येति पृथिव्यादिभूतद्रव्यभेदेन, चतुर्व्विधस्येति पेयलेह्यभोज्यभक्ष्यभेदेन, षड्रसस्येति मधुरादिरसभेदेन, द्विविधवीर्य्यस्य इति शीतोष्णवीर्य्यभेदेन। पक्षान्तरमाह—अष्टविधवीर्य्यस्य वेति शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णभेदेन, अनेकगुणस्येति शीतादिद्रवादिगुणभेदेन विंशतिगुणस्य, उपयुक्तस्येति सम्यक्परिणतस्येत्यनेनैवोपयुक्तपदार्थस्य लब्धत्वाद् यदुपयुक्तग्रहणं करोति तत् सम्यग्योगं स्वास्थ्यवृत्तीयद्वादशविधाशनप्रविचारमपेक्ष्योपयोगं प्रापयति। तेजोभूत इति तेजसो भूतः, वह्निसम्भूतः इत्यर्थः। अन्ये तु तेजःशब्देन घृतमाहुः, तत्र तेजोभूतो घृतवदुत्पन्न इत्यर्थः। अन्ये तु वदन्ति—भूतशब्दोऽत्र उपमानार्थः, तत्र तेजोभूतो घृताकार इत्यर्थः। सार इति विड़ादिमलरहित इत्यर्थः, परमसूक्ष्म इति अतिशयेनास्थूलावयवसूक्ष्मस्रोतोऽनुसारी इत्यर्थः। रसस्य स्थानमाह—तस्येत्यादि। तस्य रसस्य सर्व्वदेहानुसारित्वेऽपि हृदयं स्थानम्। हृदयशब्देनात्र हृदयोपलक्षितः प्रदेश उच्यते, न तु साक्षात् हृदयं, कुतः? हृदयस्यौजःस्थानत्वात्। रसस्य क्रियां निर्द्दिशन्नाह—स हृदयादिति। तर्पयति बालमध्यस्थविरान् सर्व्वानेव प्रीणयति। अन्ये गर्भं तर्पयतीति मन्यन्ते तस्याहारासम्भवात्। वर्द्धयतीति बालम्, धारयतीति मध्यवयसं पूर्णधातुत्वात्। केचित् धारयतीत्यत्र जीवयतीति पठन्ति, अत्रापि स एवार्थः। यापयतीति वृद्धं क्षीयमाणदेहत्वात्। केचिदत्र स हृदयाच्चेत्यादि पाठं चतस्रश्च तिर्य्यग्गा इत्यन्तं न पठन्ति, कृत्स्नं शरीरमित्यादि च पठन्ति। कुतः पुनरयं तर्पणादि करोतीति पृष्ट आह—अदृष्टहेतुकेन कर्म्मणेति प्राक्तनकर्म्मणेत्यर्थः। अन्ये तु केषाञ्चिदेव मर्त्तुमिच्छूनां कुतो न तर्पणादि करोतीति पृष्ट आह—अदृष्टहेतुकेन कर्म्मणेति ॥ १—३ ॥

तस्य शरीरमनुधावतोऽनुमानाद् गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः । तस्मिन् सर्व्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा—किमयं सौम्य-स्तैजस इति ? अत्रोच्यते, स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभि-र्विशेषैः सौम्य इत्यवगम्यते ॥ ४ ॥

स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति ॥ ५ ॥

भवतश्चात्र ।

रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् ।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ ६ ॥
रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते ।
तद् वर्षाद् द्वादशादूर्द्धं याति पञ्चाशतः क्षयम् ॥ ७ ॥

आर्त्तवं शोणितन्त्वाग्नेयमग्नीषोमीयत्वाद् गर्भस्य, पाञ्चभौतिकञ्चापरे जीव-रक्तमाहुराचार्य्याः ॥ ८ ॥

तस्य शरीरमित्यादि । तस्येति रसस्य । अनुसरतः अनुगच्छतः । क्षयवृद्धिवैकृतैरिति वैकृतं विकारः । क्षयविकारैः रसक्षये हृत्पीड़ा कम्प इत्यादिभिः, वृद्धिविकारैः हृदयोत्क्लेदमित्यादिभिः । तत्र क्षयवृद्धिविकारैर्विकृतस्य । क्षयवृद्धिवैकृतैश्चेति चकारो द्रष्टव्यः, तेन सर्व्वशरीरतर्पणादिभि-श्चाविकृतस्य गतिरनुमन्तव्येत्यर्थः । रसस्वभावं विनिर्द्देष्टुमाह—तस्मिन्नित्यादि । तस्मिन्निति पूर्व्वोक्ते रसे, जिज्ञासा ज्ञातुमिच्छा । किमयं सौम्यः कफवत्, अथवा तैजसः पित्तवत् ? इति संशयः, इति पिण्डार्थः । अत्रोच्यते इति । अनुसारी अनुसरणशीलः, स्नेहनः स्नेहयतीति, जीवनः जीवयतीति, तर्पणः प्रीणनः शरीरस्य, आदिशब्दादवष्टम्भनादयः ; विशेषैर्भेदैः, अवगम्यते अवबुध्यते ॥ ४ ॥

इदानीं क्रमनिष्पत्त्या शोणितं दर्शयन्नाह—स खल्वित्यादि । खलुशब्दोऽप्यर्थः । आप्योऽपि रसो रागमुपैति लोहितत्वं गच्छति । तमेवार्थं श्लोकेन स्पष्टीकुर्व्वन्नाह—भवतश्चात्रेत्यादि । शरीरस्थेन यकृत्प्लीहस्थेनैव, प्रसन्नेन प्रकृतिस्थेन, इत्थम्भूतेन तेजसा रञ्जकनाम्ना, अव्यापन्ना एवंगुणविशिष्टा आपो रञ्जिता लोहितीकृताः सत्यो रक्तमित्युच्यते । आपोऽत्र रसः ॥ ५ । ६ ॥

रक्तार्त्तवयोरभेदं दर्शयन्नाह—रसादेवेति । रजःसंज्ञमिति संज्ञान्तरमेतत् । स्त्रीयोनिप्रवृत्तस्य रक्तस्य ऋतुकालजरक्तमेव रजःसंज्ञमुच्यते इत्यर्थः । तद् वर्षाद् द्वादशादूर्द्धमिति तद् रजःसंज्ञं शोणितं द्वादशवर्षादनन्तरं प्रवर्त्तते इति सम्बन्धः । तस्य निवृत्तिकालमाह—याति पञ्चाशतः क्षयमिति । 'रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत् । तद् वर्षाद् द्वादशादूर्द्धं यावत् पञ्चाशतं समाः' इत्यन्ये पठन्ति । समाः वर्षाणि ॥ ७ ॥

रक्तार्त्तवयोः सौम्यरससम्भूतयोरपि स्वभावभेदं दर्शयन्नाह—आर्त्तवमित्यादि । तुशब्दोऽत्र

विस्रता द्रवता रागः स्पन्दनं लघुता तथा।
भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते ॥ ९ ॥
रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः ॥ १० ॥

मेदे, तेन रसात् सौम्याज्जातमपि आर्त्तवं शोणितञ्च आग्नेयम्। कुतः कारणादित्याह- अग्नीषोमीयत्वाद् गर्भस्येति। आर्त्तवमाग्नेयम्, शुक्रं सौम्यम्, ताभ्यामग्नीषोमीयो गर्भो भवति। ननु यदि आर्त्तवमपि सौम्यं भवति, तदा सौम्यारब्धः सौम्य एव गर्भो भवति, न चैवम्, अग्नीषोमीयत्वाद् गर्भस्येत्यत्र आर्त्तवस्याग्नेयत्वमुच्यते आर्त्तवशोणितयोः स्वभावाभेदादार्त्तवस्याग्नेयत्वे उक्ते शोणितस्यापि आग्नेयत्वमुक्तमेवेति। आर्त्तवशोणितं त्वाग्नेयमित्यन्ये पठन्ति। आर्त्तवञ्च तत् शोणितञ्चेति आर्त्तवशोणितम्। तुशब्दोऽत्रावधारणे। तेनार्त्तवस्याग्नेयत्वमवधारयतीति व्याख्यानयन्ति। रक्तं पुनरनुष्णशीतमेव आर्त्तवतया न मन्यन्ते। शोणितस्वभावे मतान्तरमाह—पाञ्चभौतिकमिति। जीवरक्तं जीवतुल्यं रक्तम्। कुतः? जीवच्छरीरे रक्तदर्शनात्, मृतशरीरे चादर्शनात्। न तु जीवरक्तमोज इति, एवं प्रस्तुतस्यैव रक्तस्य लक्षणमनुक्तं स्यात् ॥ ८ ॥

तदेव पाञ्चभौतिकत्वं सुखबोधार्थं स्पष्टयितुमाह—विस्रतेत्यादि। विस्रता आमगन्धिता, भूमिगुणः; द्रवता द्रवभावः, अयमम्बुगुणः; रागः रक्तता, तेजोगुणः; स्पन्दनं किञ्चिच्चलनं, वातगुणः; लघुता अगुरुत्वं आकाशगुणः। भूम्यादीनामित्यत्र आदिशब्देनाप्तेजोवाय्वाकाशाः गृह्यन्ते। हि यस्मादर्थे, यस्मादेते विस्रतादयः पृथिव्यादीनां गुणा अत्र शोणिते दृश्यन्ते तस्माद्रक्तं पाञ्चभौतिकमिति ॥ ९ ॥

शोणितप्रसङ्गेन अन्येषामपि धातूनां क्रमेणोत्पत्तिं दर्शयन्नाह—रसाद्रक्तमित्यादि। स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैतीत्यनेनैव रसादेव रक्तस्य भवने उक्ते रसात् पुनः शोणितभवनवचनं नियमार्थम्। तेन रसात् क्रमोत्पत्त्या शोणितमेव भवति नापरे धातव इति। एतेन युगपदेव सर्व्वधातुषु रससञ्चाराद् रसेनैव सर्व्वधातुपोषणमिति तन्त्रान्तरीयं वचो निरस्तम्। ननु यदि परिणमन्ति रसादयो रक्तादिभावेन तर्हि सर्व्वेषामुच्छेदः स्यात्? सन्तत्या परिणाम इति चेत् तर्हि सर्व्वेषां पूर्व्वेषाम् अल्पता स्यात्, उत्तरेषां बाहुल्यमिति? नैतत्। तेषां रसादीनां मलस्थूलाणुभागविशेषेण त्रिविधः परिणामो भवति। तद् यथा—अन्नात् पच्यमानात् विण्मूत्रं मलः, सारो रसः। रसादग्निपक्वात् मलः कफः, स्थूलो भागो रसः, अणुभागो रक्तम्। रक्तादग्निपक्वात् मलः पित्तम्, स्थूलभागः शोणितम, अणुभागस्तु मांसमिति। ततोऽपि आत्मपावकपच्यमानान्मलः श्रोत्रनासाकर्णाक्षिप्रजननादिस्रोतोमलः, स्थूलो भागो मांसम्; सूक्ष्मो मेदः। ततोऽपि निजवह्निपच्यमानान्मलः स्वेदः, स्थूलांशो मेद एव. सूक्ष्मभागोऽस्थि। ततोऽपि पच्यमानान्मलः केशलोमश्मश्रूणि, स्थूलोऽस्थि, सूक्ष्मस्तु मज्जा। ततोऽपि मज्ज्ञः पावकपच्यमानान्मलो नयनपुरीषत्वचां स्नेहः, स्थूलो भागो मज्जा, सूक्ष्मः शुक्रम्। ततः पुनः पच्यमानादत्र मलः

तत्रैषां सर्व्वधातूनामन्नपानरसः प्रीणयिता।

रसजं पुरुषं विद्याद्रसं रक्षेत् प्रयत्नतः।

अन्नात् पानाच्च मतिमानाचाराच्चाप्यतन्द्रितः॥

तत्र रस गतौ धातुरहरहर्गच्छतीत्यतो रसः॥ ११॥

स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धातावव-तिष्ठते। एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवमिति॥ १२॥

नोत्पद्यते सहस्रधा ध्मातसुवर्णवत्, स्थूलो भागः शुक्रमेव, स्नेहभागः सूक्ष्मस्तेजोभूतं ओजः। पूर्व्वोक्त एवार्थः श्लोकाभ्यां कथ्यते। स्थूलसूक्ष्ममलैः सर्व्वे भिद्यन्ते धातवस्त्रिधा। स्वः स्थूलोऽंशः परं सूक्ष्मो विष्मलं याति तन्मलः। स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु। न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलः' इति। आकृष्टाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु शुक्रमल इत्येके। तन्न श्मश्रुहीनस्यापि शुक्रदर्शनात्। ननु मांसान्मेदः प्रजायते इत्यनर्थकम्, मज्ज्ञः शुक्रन्तु जायते इत्येतेनैव क्रियापदेन प्रजायत इत्यस्यार्थस्य लब्धत्वात्। सत्यम् प्रजायते इति क्रियापदं रसादीनां मेदः-पर्य्यन्तानां विशिष्टकार्य्योत्पाददर्शनार्थम्। एभ्य एवोपधातवः स्वभावादुत्पद्यन्ते न पुनरस्थ्यादिभ्य इति। तथाहि—रसात् स्तन्यमार्त्तवञ्च, रक्तात् कण्डराः शिराश्च, मांसाद् वसा त्वचः, मेदसः स्नायुसन्धीति। शुक्रन्तु जायते इति द्वितीयजायतेग्रहणेन शुक्रे विशिष्टधर्म्मवत्ता उक्तेति। शुक्रं हि स्वाग्निपच्यमानमपि नाणुभागमुत्पादयति। अन्ये तु मेदः प्रजायते इत्यत्र प्रवर्त्तते इति पठन्ति, शुक्रन्तु जायते इत्यत्र 'शुक्रस्य सम्भवः' इति पठन्ति, व्याख्यानयन्ति च—सम्भवशब्दोऽत्र पोषणे न त्वपूर्व्वोत्पादने। यतो रसादीनां शुक्रान्तानामागर्भादेवोत्पत्तिरिति॥ १०॥

रसस्य निर्द्दिष्टस्य प्राधान्यं दर्शयितुमाह- तत्रैषामित्यादि। तत्र तेषु धातुषु मध्ये एतेषां धातूनां प्रागुक्तानां रक्तादीनाम् अन्नपानरसः अन्नपानस्य सारः प्रीणयिता तर्पयितेत्यर्थः। अतन्द्रितोऽनलस इत्यर्थः। रसस्यैव निरुक्तिमाह तत्र रसगताविव्यादि॥ ११॥

रसधातुर्धात्वन्तराणां स्वभावं जनयन् एकैकस्मिन् धातौ कियन्तं कालमवतिष्ठत इत्याह—स खल्वित्यादि। अवतिष्ठते अवस्थितिं करोतीत्यर्थः, परिणामं गच्छन्नेव तिष्ठति पच्यमानस्थाली-तण्डुलवत्, न पुनरस्य गमननिवृत्तिः। त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला इत्यस्यार्थः—रसः किलैकाहेनैव सम्पद्यते, तदनन्तरं ये षड्धातवस्ते प्रत्येकं पञ्चभिरहोभिः सम्पद्यन्ते। यावता कालेन रसः शुक्रतां याति तावन्तं वक्तुमाह—एवं मासेनेति। अत्र आर्त्तवशब्दोऽयं शुक्रे वर्त्तते न तु रजसि। रजो हि रसाद्रक्तवत् सप्तमेऽहनि जायते। अथ यद्ययमार्त्तवशब्दः शुक्रे न वर्त्तते तदा अत्र शुक्रोत्पत्त्यधिकारे स्त्रीणां शुक्रस्यानुक्तत्वात् षड्धातुत्वं स्यात्। तस्मात् आर्त्तवशब्दः शुक्रे वर्त्तते, अन्ये तु पुनरत्रार्त्तवशब्दं रजस्येव वर्त्तयन्ति, चकारेण स्त्रीशुक्रं समुच्चिन्वन्तीति, शुक्रेऽपि गर्भजननशक्तिद्योतनार्थम्। तथाचोक्तम्—'यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन।

भवति चात्र।

अष्टादश सहस्राणि सङ्ख्या ह्यस्मिन् समुच्चये।
कलानां नवतिः प्रोक्ता स्वतन्त्रपरतन्त्रयोः ॥ १३ ॥

स शब्दार्च्चिर्जलसन्तानवदणुना विशेषेणानुधावत्येवं शरीरं केवलम्। वाजीकरण्यस्त्वोषधयः स्वबलगुणोत्कर्षाद् विरेचनवदुपयुक्ताः शुक्रं शीघ्रं विरेचयन्ति ॥ १५ ॥

यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नत्र नास्ती-

मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थि तत्र जायते' इति। अस्मिन् पक्षे मासेनार्त्तवस्य भवनमुपचयोऽभिप्रेतः प्रकाशश्च ; यस्मादार्त्तवस्य रक्तवत् सप्ताहेनैवोत्पत्तिरिति ॥ १२ ॥

इदानीं समुदायसंख्यामाह—अष्टादशेत्यादि। अष्टादशसहस्राणि इत्यादिना त्रिंशद्दिनानि कथितानि। स्वतन्त्रपरतन्त्रयोरिति समानतन्त्रासमानतन्त्रयोरित्यर्थः ॥ १३ ॥

दृष्टान्तत्रयेण शरीरे रसगतिं त्रिधा दर्शयन्नाह—स शब्दार्च्चिर्जलसन्तानवदिति। स रसः, सन्तानशब्दः शब्दादिभिः सह प्रत्येकं सम्बध्यते, अणुना विशेषेण सूक्ष्मप्रकारेण, अनुधावति सञ्चरति, एवंशब्दो नियमार्थः। शरीरं केवलं सकलमित्यर्थः। तत्र शब्दसन्तानवदित्यनेन तिर्य्यग्गामित्वं रसस्योक्तम्, अर्च्चिःसन्तानवदित्यनेन ऊर्द्ध्वगामित्वं जलसन्तानवदित्यनेनाधोगामित्वमिति। केचिदन्यथा व्याख्यानयन्ति—शब्दादिदृष्टान्तत्रयेण तीक्ष्णमध्यमन्दाग्नयो निर्द्दिष्टाः। शब्दसन्तानवत्तीक्ष्णाग्नीनां रसः सञ्चरति, अर्च्चिःसन्तानवन्मध्याग्नीनाम्, जलसन्तानवन्मन्दाग्नीनामिति। तेन तीक्ष्णाग्नीनामष्टाहेनैव रसः शुक्रीभवति, मन्दाग्नेर्मासेनैव। अयमर्थो गयदासाचार्य्येण बहुधा दूषितः। दीप्ताग्नेस्तु किञ्चिन्न्यूनेन मासेन शुक्रं भवति, मन्दाग्नेस्तु किञ्चिदधिकेन मासेन इत्ययमर्थो न्याय्य इति। यदि मासेन रसः शुक्रीभवति, तर्हि वाजीकरीणां महौषधीनां प्रयोगो निष्फलः स्यादित्याह—वाजीकरण्य इति। वाजीकरण्यस्त्वोषधय इति याभिरोषधिभिः स्त्रीषु नरो वाजीव समर्थो भवति ताः। स्वबलगुणोत्कर्षादिति स्वशब्दो बलगुणाभ्यां सह प्रत्येकं सम्बध्यते, उत्कर्षशब्दोऽपि। अत्र काश्चिदोषधयः स्वबलोत्कर्षात् काश्चित् स्वगुणोत्कर्षात् काश्चित् स्वबलगुणोत्कर्षात्। तत्र सङ्कल्पपादलेपविशिष्टकान्तास्पर्शादयः स्वबलोत्कर्षात् स्वप्रभावोत्कर्षादित्यर्थः, घृतक्षीरादयः स्वगुणोत्कर्षात् स्वस्नेहाद्युत्कर्षादित्यर्थः, माषादयः स्वबलगुणोत्कर्षात् स्वभावस्नेहाद्युत्कर्षादित्यर्थः। उत्कर्षः आधिक्यम्। वाजीकरण्य इति बहुवचनं आद्यर्थे। तेन बल्यबृंहणीयजीवनसंहरणादयोऽपि तद्वद्वाच्या इति ॥ १४ ॥

ननु यदि मासेन रसः शुक्रीभवति, तर्हि बालानामपि तत् कथं न दृश्यते इति दृष्टान्तमाह—यथेत्यादि। यथाहीति दृष्टान्ततामतिपादनार्थम्। पुष्पमुकुलस्थः इति मुकुलकाले कामध्यस्थः,

त्यथवास्ति, सतां भावानामभिव्यक्तिरिति क्त-(ज्ञा)-त्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते, स एव गन्धो विवृतपत्रकेशरे कुसुमे कालान्तरेणाभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामात् शुक्रस्य प्रादुर्भावो भवति। रोमराज्यादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति ॥ १५ ॥

स एवान्नरसो वृद्धानां परिपक्वशरीरत्वादप्रीणनो भवति। त एते शरीरधारणाद् धातव इत्युच्यन्ते ॥ १६ ॥

तेषां क्षयवृद्धी शोणितनिमित्ते, तस्मात् तदधिकृत्य वक्ष्यामः। तत्र फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च वातेन दुष्टम्। नीलं पीतं हरितं श्यावं विस्रमनिष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम्। गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च।

इहेति पुष्पमुकुले, गन्धोऽस्ति न वास्त्येव इति च वक्तुं न शक्यम्। पारमार्थिकं रूपमाह—अथवा अस्तीति। अथशब्दः सम्बोधने, वाशब्द एवार्थे अस्त्येवेत्यर्थः। युक्तिमाह—सतां भावानामभिव्यक्तिरिति क्त-(ज्ञा)-त्वेति पूर्व्वं सन्त एव भावाः पश्चाद्धेतुमासाद्याभिव्यज्यन्ते, यथा तिलेषु तैलमित्यादि। यद्यस्त्येवेति तत् किं मुकुलावस्थायामेव नाभिव्यज्यत इत्याह, केवलं सौक्ष्म्यान्नाभिव्यज्यते इति। स एवेत्यादि। इत्थं वयःपरिणामाच्छुक्रप्रादुर्भावो व्यक्तीभावो भवति। रोमराज्यादयश्च विशेषा भावा वयःपरिणामान्नारीणामपि प्रादुर्भवन्ति। आदिशब्दात् स्तन्यार्त्तवादयः, रोमराज्यादयश्चेति चकारो नारीणाञ्च इत्यत्र द्रष्टव्यः। तेन पुरुषाणामपि श्मश्रुप्रभृतयो गृह्यन्ते। अत्र केचिद्रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोरभिवृद्धिर्भवतीति पठन्ति। न तु निबन्धकाराः, कुतः ? आदिशब्दात्तदर्थस्य लब्धत्वादिति॥ १५ ॥

ननु रसस्योपचयकरत्वाद् वृद्धानामपि वर्द्धितव्यमित्याह—स एवान्नरस इति। स एवाशेषधातुपोषकोऽपि वृद्धानामप्रीणन ईषत् प्रीणनो भवति, जीवनमात्रं करोतीत्यर्थः। कुत इत्याह—परिपक्वशरीरत्वात्। रसादिधातूनां निरुक्तिं कुर्व्वन्नाह—त एते शरीरधारणादिति। यद्यपि क्वचित् दुष्टा दोषा अपि देहधारणाद्धातुशब्देनोच्यन्ते, तथाप्यत्र रसादीनामधिकृतत्वात् तएव धातवः कथ्यन्ते ॥ १६ ॥

प्रस्तुतं शोणितमेवाधिकर्त्तुमाह—तेषामित्यादि। तेषामिति धातूनाम्, तदधिकृत्य इति शोणितमधिकृतं कृत्वेत्यर्थः। तत्र फेनिलमिति। फेनिलं फेनसहितम्, अरुणमीषद्रक्तम्, तदेव पाकाभिमुखं कृष्णम्, परुषं अपिच्छिलं रूक्षमित्यन्ये, तनु अच्छम्, शीघ्रगम् आशुप्रसृति, अस्कन्दि च इति स्त्यानत्वरहितम्। नीलमित्यादि। नीलं हरितं श्यावं सामपित्तदुष्टम्, पीतं निरामपित्तदुष्टम्। श्यावं हरितकृष्णम्, विस्रम् आममन्धि, अनिष्टं पिपीलिकादीनामननुसरणादवगन्तव्यम्। अस्कन्दि चेति स्त्यानत्वरहितम्। गैरिकेत्यादि। गैरिकोदकप्रतीकाशं पाण्डुलोहितम्, बहलं घनम्,

सर्व्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टम्। द्विदोषलिङ्गं संसृष्टम् ॥ १७ ॥

इन्द्रगोपकप्रतीकाशमसंहतमविवर्णञ्च प्रकृतिस्थं जानीयात् ॥ १८ ॥

विस्राव्याण्यन्यत्र वक्ष्यामः। अथाविस्राव्याः—सर्व्वाङ्गशोफः क्षीणस्य चाम्लभोजननिमित्तः, पाण्डुरोग्यर्शसोदरिशोषिगर्भिणीनाञ्च श्वयथवः ॥ १९ ॥

तत्र शस्त्रविस्रावणं द्विविधं—प्रच्छानं शिराव्यधनञ्च। तत्र ऋज्वसङ्कीर्णं सूक्ष्मं सममनवगाढ़मनुत्तानमाशु च शस्त्रं पातयेन्मर्म्मशिरास्नायुसन्धीनाञ्च अनुपघाति ॥ २० ॥

तत्र दुर्द्दिने दुर्व्विद्धे शीतवातयोरस्विन्ने भुक्तमात्रे स्कन्दत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति ॥ २१ ॥

मांसपेशीप्रभं स्त्यानत्वात्। सर्व्वेत्यादि। सर्व्वलक्षणसंयुक्तं वातादियुक्तम्। अत्र केचित् पित्तवद्रक्तेनातिकृष्णमिति पठन्ति, न तु निबन्धकाराः। द्विदोषलिङ्गमित्यादि। संसृष्टं दोषद्वययुक्तमित्यर्थः। अत्र क्वचित् जीवशोणितमन्यत्रोपदेक्ष्याम इति पाठः, न तु निबन्धेषु ॥ १७ ॥

रक्तविकृतिमभिधाय प्रकृतिं वक्तुमाह—इन्द्रगोपकप्रतीकाशमिति। इन्द्रगोपकः प्रावृट्कालज उद्भिज्जः, इन्द्रवधूरिति लोके। स चानेकप्रकारवर्णः, अत्र तु रक्त एव गृह्यते। असंहतं नात्यच्छं नातिघनम्, न स्त्यायतीत्यन्ये। अविवर्णमिति इन्द्रगोपकवर्णमपीषद् विविधवर्णम्। एतेन पद्मालक्तकगुञ्जाफलवर्णमित्युक्तम्, अथवा वस्त्रादिलग्नं सत् प्रक्षाल्यमानमपि न विवर्णतां यातीत्यविवर्णम् ॥ १८ ॥

शोणितस्य स्रावणविषयमतिदेशेन दर्शयन्नाह—विस्राव्याणीत्यादि। अन्यत्रेति अष्टविधशस्त्रकर्म्मीयाध्याये। विस्राव्यनिषेधविषयं दर्शयन्नाह—अथाविस्राव्या इति। क्षीणस्य पुंसः अम्लभोजननिमित्तो यः सोऽविस्राव्य इत्यर्थः। तथा पाण्डुरोग्यादीनां शोथा अविस्राव्याः, एतेषां व्रणशोथा एकाङ्गजा अपि न स्राव्याः ॥ १९ ॥

शस्त्रविस्रावणस्य द्वैविध्यमाह—तत्र शस्त्रेत्यादि। अत्र प्रच्छानमधिकृत्याह—तत्रेति। ऋजु प्राञ्जलम्; असङ्कीर्णं न सङ्कटं विशालमित्यर्थः, अन्ये परस्परासंसृष्टमित्याहुः; सूक्ष्मं नातिमहत् मुखं शस्त्रकृतं; समं तुल्यरेखम्। अनवगाढ़म् अदूरगतिकम्, अनुत्तानं किञ्चिन्मांसस्पृगित्यर्थः। आशु अविलम्बितं यथा भवति एवं शस्त्रं पातयेत् ॥ २० ॥

रक्तस्यायोगं चिकित्सार्थमाह—तत्र दुर्द्दिन इत्यादि। दुर्द्दिने इति नित्यगकालदोषः। केचिद् दुर्द्दिने इति न पठन्ति। दुर्व्विद्धे इति वैद्यक्रियादोषः। शीतवातयोरिति कालकृतो दोषः। भुक्तमात्रे इति आवस्थिककालदोषः। अभुक्तवत इत्यन्ये पठन्ति। स्कन्दत्वात् स्त्यानत्वात् ॥ २१ ॥

भवति चात्र

मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम्।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते॥ २२॥

तद् दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत्। अत्युष्णेऽतिस्विन्नेऽतिविद्धे ष्वज्ञैर्विस्रावितमतिप्रवर्त्तते। तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणञ्चापादयति॥ २३॥

भवन्ति चात्र।

तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते।
यवागूं प्रतिपीतस्य शोणितं मोक्षयेद् भिषक्॥ २४॥
सम्यग् गत्वा यदा रक्तं स्वयमेवावतिष्ठते।
शुद्धं तदा विजानीयात् सम्यग् विस्रावितञ्च तत्॥ २५॥

भवति चात्रेति। मदः विषमद्यजो विकारः। आर्त्तानां पीड़ितानाम्। वातविण्मूत्रसङ्गिनामित्यत्र सङ्गोऽप्रवर्त्तनम्॥ २२॥

दुष्टरक्तस्य अस्रुतिदोषमुपदिशन्नाह—तद्दुष्टमित्यादि। अतियोगं व्यापदश्चोपदिशन्नाह—अत्युष्णेत्यादि। अत्युष्णे अत्युष्णकाले। अतिस्विन्ने अतिस्वेदिते। अतिविद्धेष्वज्ञैरिति अज्ञाः अदृष्टकर्म्माणः। तदतिप्रवृत्तमित्यादि। शिरोऽभितापं शिरःशूलम्, आन्ध्यं अन्धताम्, अधिमन्थः चक्षूरोगोऽभिष्यन्दपूर्व्वकः, तिमिरं लिङ्गनाशः, प्रादुर्भावशब्दो अधिमन्थतिमिराभ्यां सम्बध्यते। शिरोऽभितापादीन् शिरसि अतिहृतं रक्तं करोति। धातुक्षयं सर्व्वत्रैवातिहृतम्। एकाङ्गविकारमिति एकस्मिन्नङ्गे य उत्पद्यते स एकाङ्गविकारः, स चात्र वातजनितः॥ २३॥

अयोगातियोगौ सहेतुकौ निर्दिश्य सम्यग् योगं सहेतुकं निर्दिशन्नाह—भवन्ति चात्र तस्मादित्यादि। न शीते नात्युष्णे साधारणे काले, नास्विन्ने नातिस्वेदिते, नातितापिते सूर्य्यतापादिभिः। यवागूरत्र तिलयवागूस्तस्याः सद्यःस्नेहनीयत्वात् रक्तोत्क्लेदकारित्वाच्च। प्रतिपीतस्येति प्रतिशब्दोऽत्र पानान्तरं सूचयति; तेन यवाग्वा द्वितीयपानानन्तरं तृतीयपानानन्तरञ्चेत्यर्थः। अन्ये तु यवागूर्विरलद्रवा बहुसिक्था, तां प्रतिपीतस्य; सा हि प्रायशः प्रक्लेदनात्मिका स्वेदनत्वात् द्रवोष्णत्वाच्च शोणितं विलापयति। प्रतिशब्दोऽत्र मात्रार्थः, तेन यवागूं मात्रया पीतवत इत्यर्थः॥ २४॥

इदानीं सम्यग्योगस्य सुविशुद्धस्य चैकेनैव वाक्येन लक्षणं वक्तुमाह—सम्यगित्यादि। गत्वा निःसृत्य यदा सम्यग्रक्तं रक्तवर्णं शोणितं भवति, तदा शुद्धं विजानीयात्। सम्यग्विस्रावितपक्षे त्वयमर्थः—सम्यग्गत्वेति सम्यक् प्रवर्त्तनं कृत्वा यदा रक्तं रुधिरं स्वयमेवावतिष्ठते अवस्थितिं करोति, तदा सम्यग्विस्रावितञ्च तद्रक्तं विजानीयात्। चकारेणैतल्लक्षणद्वयं लभ्यते। अन्ये तु सम्यग्गत्वेत्यादिश्लोकस्य व्याख्यानमन्यथा कृत्वा सार्द्धश्लोकेन व्याख्यानयन्ति—"न चातिवेगदुष्टानां

लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः।
सम्यग् विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥ २६ ॥
त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये।
रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥ २७ ॥

अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारु-विडङ्ग चित्रकत्रिकटुकागारधूमहरिद्राकाङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैर्लवणतैलप्रगाढ़ैः* व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते ॥२८॥

अथातिप्रवृत्ते लोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्ज्जरसरसाञ्जनशाल्मलीपुष्प-शङ्ख-शुक्तिमाषयव-गोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीड़येत्। शालसर्ज्जार्ज्जुनारिमेदमेषशृङ्गधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढ़ं बध्नीयात्। शीताच्छादन-भोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत्। क्षारेणाग्निना वा दहेद् यथोक्तम्। व्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत् ॥ २९ ॥

सम्यग्गत्वा विनिःसृतम्। विहाय स्वेदरूपेण न तथा ह्यवतिष्ठते। प्रयत्नमनपेक्ष्यासृक् तदा शुद्धं विनिर्द्दिशेत्" इति ॥ २५ ॥

आभ्यन्तरमपरमपि रक्तशुद्धिस्रावणस्य लक्षणं दर्शयन्नाह—लाघवमित्यादि। एतच्छारीरं सम्यग्विस्राविते लिङ्गम्, प्रसादो मनसस्तथेति पुनर्मानसम्। शोणितस्रावणफलं दर्शयन्नाह—त्वग्दोषा इत्यादि। त्वग्दोषा अष्टादश कुष्ठानि न्यच्छनीलिकादयश्च, ग्रन्थयो वातादिनिमित्ताः शिराग्रन्थिश्च। शोणितजा रोगा रक्तगुल्मविद्रधिविसर्पादयः। रक्तमोक्षणशीलानां रक्तस्रावण-कारिणाम् ॥ २६ । २७ ॥

इदानीमप्रवृत्तरक्तस्य प्रवर्त्तनायाह—अथ खल्वित्यादि। शीतशिवः कर्पूरम्। नक्तमालः बृहत्करञ्जः। त्रिभिश्चतुर्भिरिति एतेनैकद्विद्रव्यनिषेधः कृतः। लवणतैलप्रगाढ़ैरिति सैन्धवतिल-तैलोत्कटैरिति ॥ २८ ॥

अतिप्रवृत्तौ रक्तस्थापनाय दर्शयन्नाह—अथेत्यादि। पत्तङ्गं रक्तचन्दनम्, सर्ज्जरसः रालः, शुक्तिः जलशुक्तिः, सालः शङ्कः, सर्ज्जः शालभेदः, अर्ज्जुनः ककुभः; अरिमेदः अरिमञ्ज इति लोके प्रसिद्धः, मेषशृङ्गः कर्कटशृङ्गः, धन्वनः धामरण इति धामन इति च प्रसिद्धः। सालादित्वग्भिः चूर्णीकृताभिर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीड़येदित्यत्रापि सम्बन्धः। क्षौमेण ध्मापितेन अतसी-वस्त्रेन दग्धेन व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीड़येदित्यत्रापि सम्बन्धः। यथोक्तैर्वा व्रणबन्धन-द्रव्यैरिति क्षौमकार्पासवस्त्रादिभिः। आच्छादनं वस्त्रादि। परिषेकः धारासेकः। प्रदेहो लेपः।

* लवणसर्षपतैलप्रगाढ़ैरिति पाठान्तरम्।

काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्, एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरम्; क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत् ॥ ३० ॥

धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनलः।
पवनश्च परं कोपं याति तस्मात् प्रयत्नतः ॥
तं नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः।
ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥ ३१ ॥
चतुर्व्विधं यदेतद्धि रुधिरस्य निवारणम्।
सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा ॥ ३२ ॥
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम्।
तथा सम्पाचयेद् भस्म दाहः सङ्कोचयेच्छिराः ॥ ३३ ॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत्।
सन्धाने भ्रश्यमाने तु पाचनैः समुपाचरेत् ॥

यथोक्तं वलयबिन्द्वादिभेदेनेत्यर्थः। व्यधादनन्तरं प्राक्कृतव्यधनादधःस्थाने तामेव पूर्व्वविद्धां सिरां विध्येद् रक्तातिच्छेदनार्थम् ॥ २९ ॥

रक्तातिस्रुतावाभ्यन्तरं भेषजं दर्शयन्नाह— काकोल्यादीत्यादि। एणः कृष्णहरिणः, हरिणस्ताम्रवर्णः। एणादिरक्तं पाययेदिति सम्बन्धः; रक्ताप्यायनार्थं तच्चादुष्टमसंस्कृतञ्च। रक्तातिप्रवृत्तौ भोजनं नियमयन्नाह— क्षीरेत्यादि। यूषः मुद्गयूषः, रसः मांसरसः। सुस्निग्धैरिति शोभनं कृत्वा घृतेन स्निग्धीकृतैः। अश्नीयादिति क्षीरादिसिक्तमोदनं भुञ्जीत। पित्तदुष्टरक्तस्यैवातिप्रवृत्तावतिप्रवृत्तरक्तस्य क्षीरभोजनम्। अथवा पित्तप्रकृतिकस्यैव रक्तातिप्रवृत्तौ क्षीरभोजनम्। कफदुष्टरक्तस्यातिप्रवृत्तावतिरक्तस्य यूषभोजनम्, श्लेष्मप्रकृतिकस्यैव वा। वातदुष्टरक्तस्यैवातिप्रवृत्तावतिप्रवृत्तरक्तस्य रसभोजनम्, वातप्रकृतिकस्यैव वा। अन्ये तु दीप्तमध्यमन्दाग्नीनां यथासंख्यं क्षीरादिसिक्तमोदनं भोजनमाहुः। सात्म्यापेक्षया इत्येके। अतिस्रुतरक्तस्योपद्रवान् चिकित्सितुमाह— उपद्रवांश्चेत्यादि। उपद्रवान् शिरोऽभितापादीन्, यथास्वमिति स्वकीयेन स्वकीयेन उपचारेणेत्यर्थः ॥ ३० ॥

धातुक्षयादित्यादि। तस्मादनतिशीतादिभोजनैः प्रयत्नतस्तं पुरुषमुपाचरेदिति सम्बन्धः, अग्निसन्धुक्षणार्थं शोणिताप्यायनार्थमुपद्रवपरिहारार्थञ्च। ईषदम्लैः दाडिमामलकैस्तेषामेवाम्लेषु प्रधानत्वात् ॥ ३१ ॥

चतुर्व्विधमित्यादि। सन्धानं शस्त्रपदस्य स्कन्दनं शोणितस्य स्त्यानीकरणम् पाचनं दहनञ्च शस्त्रपदस्य। व्रणमिति। कषायः कषायरसद्रव्यं तच्च लोध्रादिकम्; अन्ये तु हरीतक्यादिकं पञ्चवल्कलादिकञ्चाहुः। हिमं शीतम्, भस्म क्षौमादिजनितम्, दहनं शलाकाप्रभृतिभिः ॥ ३२।३३ ॥

इदानीं पूर्व्वपूर्व्वोक्तानामुत्तरोत्तरविध्यवसरं प्रतिपादयन्नाह— अस्कन्दमान इत्यादि। अस्कन्द-

कल्पएतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि।
असिद्धिमत्सु चैतेषु दाहः परम इष्यते॥ ३४॥
सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते।
सावशेषे ततः स्थेयं न तु कुर्य्यादतिक्रमम्॥ ३५॥
देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते।
तस्माद् यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः॥ ३६॥
स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले।
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत्॥ ३७॥

इति सुश्रुतसंहितायां सूत्रस्थाने शोणितवर्णनीयो नाम चतुर्द्दशोऽध्यायः॥ १४॥

माने प्रथमं शीतोपचारादि कर्त्तव्यम्; तेन यदा स्त्यानीभूय रक्तं न तिष्ठति तदा हरीतक्यादि पञ्चवल्कलादि वा प्रयोजयेत्। सन्धानेन चेन्न तिष्ठति रक्तं तदा पाचनं भस्म प्रयोजयेत्। एभिस्त्रिभिर्विधानैर्यदि न तिष्ठति रक्तं तदा दहनं शोणितस्थापनार्थं कर्त्तव्यमित्यर्थः॥ ३४॥

इदानीं रक्तातिस्रावदोषं दर्शयन्नाह— सशेषेत्यादि। न व्याधिरतिवर्त्तते न वृद्धिं याति। सावशेषे ततः स्थेयमिति सावशेषे दोषे रक्तं पुनः संशमनादिभिर्जयेत्। कुतः पुनः शोणितस्रावणे अतिक्रमो न करणीय इत्याह— देहस्येत्यादि। मूलमिति उत्पत्तिस्थितिप्रलयेषु शोणितमेव हेतुः; अनेनैव धार्य्यते स्थाप्यते॥ ३५। ३६॥

शोणितावशेषे पश्चात्कर्म्म दर्शयन्नाह— स्रुतरक्तस्येत्यादि॥ ३७॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शोणितवर्णनीयव्याख्यानाम चतुर्द्दशोऽध्यायः॥ १४॥

# पञ्चदशोऽध्यायः।

अथातो दोषधातुमलक्षयवृद्धिविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

दोषधातुमलमूलं हि शरीरम्, तस्मादेतेषां लक्षणमुच्यमानमुपधारय ॥ २ ॥

तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति ॥ ३ ॥

रागपक्त्योजस्तेजोमेधोष्मकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्म्मणानुग्रहं करोति ॥ ४ ॥

अथात इत्यादि। दोषा वातादयः, धातवो रसादय उपधातवश्च, मलाः पुरीषादयः, तेषां क्षयवृद्धिविज्ञानं यस्मिन्नस्ति स तथा। अन्ये तु 'मलशब्दाग्रे आदिशब्दो लुप्तो द्रष्टव्यस्तेन स्तन्यार्त्तवगर्भादयोऽपि धातवो गृह्यन्ते' इति वदन्ति। कुतः पुनरेषां क्षयवृद्धी वक्तव्ये इत्याह—दोषेत्यादि। हि यस्मादर्थे। यस्माच्छरीरं दोषादिमूलम्, यथा वृक्षादीनां सम्भव-स्थिति-प्रलयेषु मूलं प्रधानं तथा शरीरस्य वातादय इत्यर्थः। दोषधातुमलादीनां साम्यक्षयवृद्धयः स्वभावाख्य-लिङ्गेन कर्म्माख्यलिङ्गेन च ज्ञेयाः, तस्मात् साम्यादिज्ञाने एतल्लिङ्गद्वयं वाच्यम्। तथाहि—वातस्य स्वभावाख्यं लिङ्गं 'रूक्षः शीतः' इत्यादि वातव्याधौ वक्ष्यते। पित्तस्य तु 'पित्तं तीक्ष्णं द्रवम्' इत्यादि व्रणप्रश्ने। तथा कफस्य 'श्लेष्मा शीतो गुरुः' इत्यादि; एवं धातुमलयोरपि स्वभावाख्यं लिङ्गं दर्शनीयम् ॥ १ । २ ॥

इह तु दोषादीनां कर्म्माख्यं लिङ्गं दर्शयन्नाह—तत्र प्रस्पन्दनेत्यादि। प्रस्पन्दनं शरीरस्य चलनम्, इदं व्यानस्य कर्म्म। उद्वहनमिन्द्रियार्थानां धारणम्, उदानस्य कर्म्म। पूरणम् आहारेण, प्राणस्य कर्म्म। विवेको रसमूत्रपुरीषाणां पृथक्करणम्, समानस्य कर्म्म। शुक्रमूत्रा-दीनां वेगकाले कर्म्मकरणम् अवेगकाले धारणम्, अपानस्य। पञ्चधा प्रविभक्त इति प्राणोदान-समानव्यानापानभेदेन। अन्ये तु सामान्यं सर्व्ववायूनां प्रस्पन्दनादिकर्म्म आहुः। प्रस्पन्दनं श्वासप्रश्वासादिभावेन चलनम्। उद्वहनं दोषधातुमलानामित इतोनयनम्। पूरणमाहाररसादीनां स्वेषु स्वेषु आशयेषु नयनम्। विवेकः पूर्व्ववदत्रापि। धारणं शरीरमात्रस्य। कथमित्याह—पञ्चधा प्रविभक्त इत्यादि ॥ ३ ॥

प्रकृतिस्थस्य पित्तस्य कर्म्म निर्द्देष्टुमाह—रागेत्यादि। कृच्छब्दो रागादिभिः प्रत्येकं सम्बध्यते। रागकृत् रसस्य रञ्जकाग्निसंज्ञं पित्तम्। पक्तिकृदाहारस्य पाचकाग्निसंज्ञं पित्तम्। ओजःकृत् साधकाग्निसंज्ञं पित्तम्, ओजो हृदिस्थं सोमात्मकम्। तेजःकृदालोचकाग्निसंज्ञं पित्तम्, तेजो दृष्टिः, तदुक्तं—'तेजो दृष्टिरिति ख्यातं तेजः शुक्रं प्रकीर्त्तितम्' इति। मेधाकृत् मेधा ग्रन्थाकर्षण-

सन्धिसंश्लेषणस्नेहनरोपणपूरण (बृंहणतर्पण)-बलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति ॥ ५ ॥

रसस्तुष्टिं प्रीणनं रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसश्च। मेदः स्नेहस्वेदौ दृढ़त्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्ज्ञः पुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यं च्यवनं प्रीतिं देहबलं हर्षं बीजार्थञ्च ॥ ६ ॥

सामर्थ्यम्, तस्या अपि साधकाग्निसंज्ञमेव पित्तं कारकम्। ऊष्मकृत् त्वक्स्थं पित्तं भ्राजकाग्नि-संज्ञम्, ऊष्मा शरीरस्यौष्ण्यम्। पञ्चधा प्रविभक्तमिति पाचकरञ्जकसाधकालोचकभ्राजकभेदेन। अग्निकर्म्मणेति रागादि यदग्निकर्म्म तत् कृत्वेत्यर्थः। अनुग्रहमुपकारं करोति, शरीरस्येत्यनु-वर्त्तते। अन्ये तु तेजःशब्देन वर्णप्रकाशिनीं त्वक्स्थां दीप्तिमाहुः। इदञ्च रागादिकर्म्म सामान्यं सर्व्वपित्तानामिति वदन्ति ॥ ४ ॥

प्रकृतिस्थस्य कफस्य कर्म्म निर्द्दिशन्नाह—सन्धीत्यादि। कृच्छब्दः सन्धिसंश्लेपणादिभिः प्रत्येकं सम्बध्यते। सन्धिसंश्लेपणकृत् सन्धिबन्धनं करोति। यद्यपि सन्धिसंश्लेषणं श्लेष्मकर्म्म व्रणप्रश्नेऽप्युक्तम्, तथापीह तद्वचनं व्यानस्य सन्धिचारित्वात्तस्यापि सन्धिश्लेषणं कर्म्मेति शङ्का-निरासार्थम्। स्नेहनकृदिति शरीरस्य स्नैग्ध्यं करोति, स्निग्धत्वात्। रोपणकृद् व्रणस्य, सौम्यत्वात्। पूरणकृत् शरीरस्य बहुत्वान्मूर्त्तत्वाच्च। बलकृत् पुष्टिकृत्। स्थैर्य्यकृत् त्वक्-सन्धिदार्ढ्यकृत्। कफस्थानानां स्वकार्य्यसामर्थ्यं वा। पञ्चधा प्रविभक्त आशयभेदेन आमा-शयोरःशिरःकण्ठसन्धिभेदेनेत्यर्थः। अन्ये तु तस्यैव कफस्य आशयभेदेन पञ्चधाभिन्नस्य श्लेपक-क्लेदकबोधकतर्पकावलम्बकनामान्याहुः। केचिदत्र कफकर्म्मसु बृंहणं तर्पणञ्च पठन्ति, व्याख्या-नयन्ति च—बृंहणं शरीरस्य द्रवत्वमूर्त्तिमत्त्वाभ्याम्, तर्पणं तृप्तिजनकं धातूनाम् ॥ ५ ॥

इदानीं धातूनां प्रकृतिस्थानां प्राकृतं कर्म्म निर्द्दिशन्नाह रसस्तुष्टिमित्यादि। धैर्य्यं शौर्य्य-मित्येके। शौर्य्यं शूरत्वम्। अतएव क्लीवा अधीराः। च्यवनं शीघ्रत्वेन विस्रंसनम्, प्रीतिं स्नेहं प्रमदासु, देहबलम् उत्साहोपचयलक्षणम्, हर्षं पुनरक्तं प्रमदास्वेव, बीजार्थञ्चेति बीज-प्रयोजनम्, यथा ऋतुक्षेत्रादिसम्पत्तौ बीजमङ्कुरजननं स्यात्, एवं शुक्रमपि गर्भजनकमित्यर्थः। अन्ये त्वन्यथा पठन्ति—'रसः प्रीणयति, रक्तं जीवयति, मांसं लेपयति, मेदः स्नेहयति, अस्थि धारयति मज्जा अस्थि पूरयति, शुक्रं धैर्य्यच्यवनं प्रीतिदेहबलहर्षबीजार्थकृत्' इति, व्याख्यानयन्ति च रसः प्रीणयति धातून् तर्पयतीत्यर्थः। रक्तं जीवयति प्राणानुवर्त्तनं करोति। मांसं लेपयति अस्थ्यादीन्। मेदः स्नेहयति स्नेहात्, अस्थि धारयति शरीरमित्यर्थः। धैर्य्यच्यवनमिति धैर्य्यस्य च्यवनं धैर्य्यच्यवनं च्युतिः प्रमदासु विषय इत्यर्थः। अयं पाठो निबन्धकारैः सादरं पठितः ॥ ६ ॥

पुरीषमुपस्तम्भं वायग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत् ॥ ७ ॥

रक्तलक्षणमार्त्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्व-जननं जीवनञ्चेति। तत्र * विधिवत् परिरक्षणं कुर्व्वीत ॥ ८ ॥

अत ऊर्द्ध्वमेषां क्षीणलक्षणं वक्ष्यामः। तत्र वातक्षये मन्दचेष्टताल्पवाक्त्व-मप्रहर्षो मूढसंज्ञता च। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च। श्लेष्मक्षये रूक्षतान्तर्दाह आमाशयेतराशयानां शून्यता सन्धिशैथिल्यं तृष्णा दौर्ब्बल्यं प्रजा-गरणञ्च। तत्र स्वयोनिवर्द्धनान्येव † प्रतीकारः ॥ ९ ॥

अत ऊर्द्ध्वं मलानां प्राकृतं कर्म्मोच्यते -पुरीषमित्यादि। करोतीत्यनुवर्त्तते। उपस्तम्भः अवष्टम्भः शरीरधारणमित्यर्थः। केचित् पुरीषकर्म्मसु प्रीणनं पठन्ति, न त्वाचार्य्याः। कश्चि-दाचार्य्योऽत्र उपस्तम्भं न पठति। वस्तिर्मूत्राशयः, तस्य पूरणं विक्लेदमार्द्रत्वञ्च, मूत्रं करोतीत्यर्थः। अन्ये तु 'क्लेदविवेकजं वस्तिपूरणकृन्मूत्रम्' इति पठन्ति, क्लेदविवेकजमिति क्लेदः आर्द्रत्वं स चाहारस्य, तस्य विवेकात् पृथक्त्वाज्जातं मूत्रम्। स्वेदः क्लेदत्वगिति। केचित् स्वेदः क्लेदयतीति पठन्ति ॥ ७ ॥

अत उपधातूनां प्राकृतं कर्म्माह—रक्तलक्षणमित्यादि। रक्तस्य यानि लक्षणानि तान्यस्य सम्भवन्तीति स्वभावकथनम्। गर्भकृच्चेति प्राकृतकर्म्मकथनम्। चकारात् रक्तकर्म्मापि जीवनं करोति। केचिदाचार्य्या 'रक्तलक्षणमार्त्तवं यथोक्तमकृत्रिमं गर्भकृच्च' इति पठन्ति व्याख्यानयन्ति च—यथोक्तमिति 'शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम्' इत्याद्युक्तलक्षणम्। अकृत्रिममिति वातपित्तकफैरधःप्रसृतैरष्टधा आर्त्तवदूषकैरसृग्दररूपतया वा कृतं कृत्रिमम्, न कृत्रिमं अकृत्रिमं शुद्धम्, गर्भकृद्भवतीत्यर्थः। गर्भो गर्भलक्षणमिति स्तनयोः श्यावमुखतेत्यादिकम्, करोतीत्य-ध्याहारः। स्तन्यमिति आपीनत्वजननं मांसलत्वजननम्। जीवनं बालानाम्, तेषामेव क्षीरसात्म्यत्वात्। प्रकृतिस्थानां रक्षणमाह—तत्रेत्यादि। तत्र तेषु वातादिषु प्रकृतिस्थेषु, विधिवत् विधिनोपपन्नम्, विधिरत्र स्वास्थ्यप्रवृत्तिकः। परिरक्षणं सर्व्वतो रक्षणम् ॥ ८ ॥

अत ऊर्द्ध्वमित्यादि। केचिदत्र 'क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्न-मनस्तापव्यायामानशनातिमैथुनैर्भवति' इति क्षयकारणानि पठन्ति। एतानि प्रायो वायोर्वृद्धिं कुर्व्वन्ति पित्तकफयोस्तु क्षयमिति; तस्माद् यथासम्भवं कारणं ज्ञेयम्, नास्मिन् पाठे प्रयोजन-मित्याचार्य्या वदन्ति। तत्र वातक्षय इति। मन्दचेष्टता मन्दकायव्यापारता। अप्रहर्षः अतुष्टिः। मूढसंज्ञता नष्टसम्यग्ज्ञानता। चकारात् प्राकृतकर्म्महानिस्तद्विरोधिनश्च श्लेष्मणः प्राकृतकर्म्मवृद्धिरिति चकारः समुच्चिनोति। एवं पित्तादिक्षयेष्वपि चकारे प्रयोजनं ज्ञेयम्। पित्तक्षय इति। निष्प्रभता प्रभाहानिः। श्लेष्मक्षय इत्यादि। आमाशयो यत्राशितादि पच्यते।

* तेषामिति पाठान्तरम्।

† स्वयोनिवर्द्धनद्रव्याण्येव इति वा पाठः।

रसक्षये हृत्पीड़ा कम्पः शून्यता तृष्णा च। शोणितक्षये त्वक्पारुष्य-मम्लशीतप्रार्थना सिराशैथिल्यञ्च। मांसक्षये स्फिग्गण्डौष्ठोपस्थोरु-वक्षः-कक्षापिण्डिकोदर-ग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यञ्च। मेदःक्षये प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च। अस्थिक्षये-ऽस्थितोदो दन्तनखभङ्गो रौक्ष्यञ्च। मज्जक्षयेऽल्पशुक्रता पर्व्वभेदोऽस्थिनिस्तोदो-ऽस्थिशून्यता च। शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद् वा प्रसेकः प्रसेके चाल्परक्तशुक्रदर्शनञ्च। तत्रापि स्वयोनिवर्द्धनद्रव्योपयोगः ॥ १० ॥

इतराशया उरःकण्ठशिरःसन्धय इति। श्लेष्माशयशून्यतेति कृते सति आमाशयो लब्धः, यदा-माशयस्य पृथगुपादानं तद्विशेषेण शून्यताख्यापनार्थम्। केचित् शिरःशब्दं सूत्रे पठन्ति, शिरसो-ऽपि सर्व्वेन्द्रियाधिष्ठानत्वेन प्राधान्यात् पृथगभिधानम्। दोषक्षये चिकित्सामाह—तत्रेत्यादि। स्वयोनिवर्द्धनान्येवेति शीतरूक्षादीनि। प्रतीकारश्चिकित्सितम्। न पुनः स्वयोनिवर्द्धनान्यपि कटुकादीनि, कुतः? भूयस्त्वेनान्यदोषप्रकोपनत्वात्। तथाचोक्तम्—'वातक्षये शीत-रूक्षैर्न त्वन्यैः कटुकादिभिः। पित्तक्षयेऽपि कटुकैरुष्णैर्न लवणादिभिः। क्षीरादिभिः स्निग्ध-शीतैः प्रतिकुर्य्यात् कफक्षये' इति। अन्ये तु व्याख्यानयन्ति—स्वयोनिवर्द्धनानि स्वयोनिरात्महेतुः; तत्र वायोर्वायुरेव हेतुः। पित्तस्याग्निर्हेतुः। कफस्य हेतुरापः। वातक्षये वातवर्द्धनानि, पित्तक्षये पित्तवर्द्धनानि, कफक्षये कफवर्द्धनानि। कफस्य योनीरसः, पित्तस्य रक्तमित्यपरे; रस-रक्तयोरपि वर्द्धनानि आप्यतैजसद्रव्याणीति स एवार्थः ॥ ९ ॥

इदानीं धातुक्षयं दर्शयति—रसक्षय इत्यादि। हृच्छब्दः पीड़ादिभिः शून्यतान्तैः प्रत्येकं सम्बध्यते; तृष्णा उदकपानाभिलाषः। चकारप्रयोजनं दोषक्षयप्रस्तावे दर्शितम्। अन्ये तु रसक्षये हृत्पीड़ा कम्पः शोषः शून्यता तृष्णा चेति पठन्ति व्याख्यानयन्ति च—शोषः शरीरस्य, शून्यता आमाशयस्य मनसो वा, शेषं समम्। शोणितक्षय इति। अम्लशीतप्रार्थनेति शोणितक्षये-सति वातवृद्धौ तत्प्रत्यनीकाम्लरसेच्छा, तथा रक्तस्य द्रवत्वात् तत्क्षये तेजोवृद्धौ शीतप्रार्थनापि। केचिदग्नीषोमीयत्वाद्रक्तस्य तत्तुल्यगुणयोरम्लशीतयोः प्रार्थनेति वदन्ति। चकाराद् वह्निमान्द्या-दिकञ्च शोणितवर्णनीयोक्तं बोद्धव्यम्। मांसक्षय इति स्फिचौ कटिप्रोथौ, गण्डौ गल्लौ, उपस्थः योनिः, उरुर्लोके जङ्घेति व्याख्याता, वक्षः उरः, पिण्डिका जानुगुल्फयोरन्तरम्। शुष्कशब्दः स्फिगादिभिः प्रत्येकं सम्बध्यते। मेदक्षय इत्यादि। रौक्ष्यं त्वचि। मेदुरमांसप्रार्थनेति मेदुरं स्निग्धतमम्, प्रार्थना अभिलाषः। अस्थिक्षय इत्यादि। रौक्ष्यं देहस्य दन्तनखानां वा। दन्तादीना-मस्थिमयत्वाद् भङ्गः। मज्जक्षय इति। पर्व्वभेदः ग्रन्थिपीड़ा, अस्थिशून्यता रिक्तता पूरणा-भावात्। शुक्रक्षय इति। चिराद् वा प्रसेकः, कथञ्चित् प्रवृत्तावपि चिरकालेन क्षरणम्; अल्परक्त-शुक्रदर्शनं शुक्रं क्षीणं मज्जमिश्रमल्परक्तत्वमिच्छति। अन्ये तु अल्परक्तशुक्रदर्शने धातुक्षयात् कुपितो

पुरीषक्षये हृदयपार्श्वपीड़ा सशब्दस्य च वायोरूर्द्ध्वगमनं कुक्षौ सञ्चरणञ्च। मूत्रक्षये वस्तितोदोऽल्पमूत्रता च। अत्रापि स्वयोनिवर्द्धनद्रव्योपयोगः। स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च, तत्राभ्यङ्गः स्वेदोपयोगश्च॥११

आर्त्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च। तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां विधिवदुपयोगः। स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा। तत्र श्लेष्मवर्द्धनद्रव्योपयोगः। गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च। तत्र प्राप्तवस्तिकालायाः क्षीरवस्तिप्रयोगो मेध्यान्नोपयोगश्चेति॥१२

वायुः शोणितमल्पशुक्रमिश्रं निस्रावयतीति। मेढ्रवृषणवेदनेति शुक्रस्य सर्व्वशरीरव्यापिनोऽपि विशेषाधारत्वान्मेढ्रवृषणनिर्देशः। चिकित्सासूत्रं निर्दिशन्नाह—तत्रापीत्यादि। स्वयोनिवर्द्धनमपि समानेन द्रव्येण समानगुणेन समानगुणभूयिष्ठेन वा। समानेन द्रव्येण यथा—रक्तं रक्तेन वर्द्धते, मांसं मांसेन, मेदो मेदसा, अस्थि तरुणसंज्ञकेनास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण। समानगुणेन यथा—रक्तक्षये तैजसद्रव्योपयोगः, तेजोगुणभूयिष्ठद्रव्योपयोगो वेत्यादि बोद्धव्यम्। द्रव्यग्रहणमुपलक्षणम्, तेन कर्म्मापि यद् यस्य धातोरभिवृद्धिकरं तत्क्षये तत् सेव्यम्। तत्र स्वयोनिद्रव्याणामवबोधार्थं धातुमलोपधातुषु श्लोकाः कथ्यन्ते। "यद्यपि पञ्चभूतानां वाच्यः पाको द्विधा पुनः। तथाप्यपां प्रधानत्वाद्रसः सौम्योऽभिधीयते॥ अतिरिक्ता गुणा रक्त वह्नेर्मांसे तु पार्थिवाः। मेदस्यम्बु भुवोरस्थ्नि पृथिव्यनिलतेजसाम्॥ मज्ज्ञि शुक्रे वा सौम्यस्य मूत्रेऽम्बुशिखिनोर्गुणाः। भुवो विष्ठार्त्तवे त्वग्नेः प्रस्वेदस्तन्ययोरपाम्। इति धातुमलेषूक्ता गुणाः प्राधान्यतः स्थिताः। प्राये भगुणा गर्भे स्तोकाद्यनुग्रहा अपि"॥ १०॥

मलक्षयं दर्शयन्नाह—पुरीषक्षय इत्यादि। कुक्षिरत्र जठरम्। अत्र चिकित्सासूत्रं निर्दिशन्नाह—अत्रापीत्यादि। पुरीषक्षये माषकुल्माषादीनाम्, मूत्रक्षये इक्षुत्रपुषादीनामुपयोगः। स्वेदक्षय इत्यादि। स्पर्शवैगुण्यं स्पर्शहानिः। चिकित्सामाह—तत्राभ्यङ्ग इत्यादि। चकारात् स्वेदजननकुक्कुटवराहादिमांसोपयोगश्चाभ्यन्तरो लभ्यते॥ ११॥

उपधातुक्षयमाह—आर्त्तवक्षय इत्यादि। यथोचितकालो मासि मासि त्र्यहस्रवणम्। चिकित्सामाह—तत्र संशोधनमिति। संशोधनमिह सामान्यमिति केचित्। संशोधनमिह वमनं न विरेक इत्यपरे, कुतः? विरेचनेन हि पित्तक्षयादार्त्तवस्य क्षय एव स्यादिति, वमनेन तु सौम्यधातौ निर्हृते आग्नेयधातौ वृद्धे आर्त्तवमाप्याय्यते। आग्नेयानाञ्च द्रव्याणामिति तिलमाषसुराशुक्तादीनाम्। स्तन्यक्षय इति म्लानता अनुन्नतिः। चिकित्सामाह—तत्र श्लेष्मवर्द्धनेति स्तन्यस्य रसजत्वात्। गर्भक्षय इत्यादि। अत्र चिकित्सामाह—तत्रेत्यादि। प्राप्तवस्तिकालाया इति प्राप्ताष्टममासाया इत्यर्थः। मेध्यान्नोपयोग इति स्निग्धान्नोपयोगः। मेध्याण्डोपयोग इत्यन्ये पठन्ति। मेध्याण्डानि वृष्याण्डानि, वस्तमत्स्याण्डादीनीति व्याख्यानयन्ति॥ १२॥

अत ऊर्द्धमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः। * तत्र वातवृद्धौ त्वक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फूरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढ़वर्च्चस्त्वञ्च। पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्ब्बल्यं पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्य्यं गौरवमवसादस्तन्द्रा निद्रा सन्धिविश्लेषश्च ॥ १३ ॥

रसोऽतिवृद्धो हृदयोत्क्लेदं प्रसेकञ्चापादयति। रक्तं रक्ताङ्गाक्षितां शिरापूर्णत्वञ्च। मांसं स्फिग्गण्डौष्ठोपस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रताञ्च। मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यञ्च। अस्थ्यध्यस्थीन्यधिदन्तांश्च। मज्जा सर्व्वाङ्गनेत्रगौरवम्। शुक्रं शुक्राश्मरीमतिप्रादुर्भावञ्च ॥ १४॥

पुरीषमाटोपं कुक्षौ. शूलञ्च। मूत्रं मूत्रवृद्धिं मुहुर्म्मुहुः प्रवृत्तिं वस्तितोदमाध्मानञ्च। स्वेदस्त्वचो दौर्गन्ध्यं कण्डूञ्च ॥ १५ ॥

आर्त्तवमङ्गमर्द्दमतिप्रवृत्तिं दौर्गन्ध्यञ्च। स्तन्यं स्तनयोरापीनत्वं मुहुर्म्मुहुः प्रवृत्तिं तोदञ्च। गर्भो जठराभिवृद्धिं शोथञ्च। तेषां यथास्वं संशोधनं क्षपणञ्च क्षयादविरुद्धैः क्रियाविशेषैः प्रतिकुर्व्वीत ॥ १६ ॥

अत ऊर्द्ध मित्यादि। त्वक्पारुष्यं चर्म्मकार्कश्यम्। केचित् वाक्पारुष्यं पठन्ति, तत्र वचनकार्कश्यम्। कार्श्यं मांसक्षयः। कार्ष्ण्यं कृष्णत्वं शरीरे। अल्पबलत्वमुत्साहहानिः। गाढ़वर्च्चस्त्वञ्चेति चकारोऽयं वातस्य प्रकृतिकर्म्मणोऽतिशयत्वं समुच्चिनोति, एवं पित्तकफरसादिष्वपि चकारप्रयोजनम्। पित्तवृद्धावित्यादि। अल्पनिद्रता किञ्चित्स्निग्धत्वात् पित्तस्य। मूर्च्छा सर्व्वेन्द्रियशक्तेस्तिरस्कारः। बलहानिरिह ओजोहानिः, सन्तापात्तत्क्षयोपपत्तेः। श्लेष्मवृद्धावित्यादि। शौक्ल्यशैत्ये त्वगादीनाम्, स्थैर्य्यं गात्राणां स्तम्भः; अवसादश्चित्तदेहयोर्ग्लानिः; तन्द्रा निद्राभेदः; सन्धिविश्लेषः अत्यन्तवृद्धेन विघटनम्। सन्ध्यस्थिश्लिष्टतेति केचित् पठन्ति व्याख्यानयन्ति च—कफोपचितत्वात् सुष्ठु सङ्घटनं सन्ध्यस्थ्नोर्भवति। अध्यस्थिश्लिष्टतेति क्वचित् पाठः ॥ १३ ॥

धातूनामतिवृद्धिं दर्शयन्नाह—रसोऽतिवृद्ध इत्यादि। हृदयोत्क्लेदं हृल्लासम्, अन्ये छर्द्दिमाहुः। प्रसेकं लालास्रावमित्यर्थः। आपादयतीति क्रियापदं गर्भो जठराभिवृद्धिं शोथञ्चेत्यन्तं यावदनुवर्त्तते। अध्यस्थीन्यधिकास्थीनीति। अधिदन्तानिति अधिकान् दन्तान्, चकारात् केशनखयोरप्यतिवृद्धिर्ज्ञेया। शुक्रमित्यादि। अतिप्रादुर्भावमित्यतिप्रवृत्तिं शुक्रस्येत्यर्थः ॥ १४ ॥

मलानामतिवृद्धिं दर्शयन्नाह—पुरीषमित्यादि। आटोपमाध्मानम्, क्षोभमित्यन्ये। मूत्रमित्यादि। आध्मानमिह वस्तेरेव। उपधातूनामतिवृद्धिं निर्द्देष्टुमाह—आर्त्तवमिति। अङ्गमर्द्दः वेदनाविशेषः। दौर्गन्ध्यं पित्तधर्म्मत्वादार्त्तवस्य। तदुक्तं—ईषत्कृष्णं विगन्धञ्च इत्यादि। दौर्ब्बल्य-

* वृद्धिः पुनरेतेषां स्वयोनिवर्द्धनात्युपसेवनाद् भवतीत्यधिकः पाठः क्वचित्।

पूर्व्वः पूर्व्वोऽतिवृद्धत्वाद् वर्द्धयेद्धि परं परम्।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्॥ १७॥

वललक्षणं वलक्षयलक्षणञ्चात ऊर्द्ध्वं वक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजस्तदेव वलमित्युच्यते स्वशास्त्रसिद्धान्तात्॥१८

तत्र वलेन स्थिरोपचितमांसता सर्व्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो वाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्तिर्भवति॥१९॥

मित्यन्ये पठन्ति। चकाराद्रक्तगुल्मादीनपि। चिकित्सासूत्रं निर्दिशन्नाह—तेषामित्यादि। यथास्वं यद्यदस्यात्मीयम्। क्षपणमत्र संशमनम्। क्षयादविरुद्धैः क्रियाविशेषैरिति तन्त्रान्तरोक्तैः। तथा हि—'छिन्नाविश्वादिभिर्वायुं पित्तं क्षौद्रफलत्रिकैः। कफं गुडार्द्रकाद्यैश्च जयेद् दोषाविरोधिभिः' इति। अन्ये त्वेवं पठन्ति—तेषां क्षपणमविरुद्धैः क्रियाविशेषैः कुर्व्वीत। क्रियाविशेषैरिति क्रिया संशोधनसंशमनाहाराचाराख्या॥ १५। १६॥

स्वयं तावदेते वृद्धा अनर्थकराः, परम्परया वर्द्धिताः पूर्व्वपरधातुभिरपि महानर्थकारिण इति दर्शयन्नाह—पूर्व्व इत्यादि। हिर्यस्मादर्थे। ह्रासनमिति ह्रासोऽत्र वृद्धेर्हानिः। पूर्व्वः पूर्व्व इत्याद्युपलक्षणम्। तेन परोऽपि वृद्धः पूर्व्वं वर्द्धयति, तथा परोऽपि क्षीणः पूर्व्वं क्षपयति। तथा पूर्व्वः क्षीणः परं क्षपयति। केचिदमुं श्लोकं यस्य धातुक्षयाद् वायुरित्यादिश्लोकस्याग्रे पठन्ति॥ १७॥

वललक्षणमित्यादि। परमुत्कृष्टम्, तेज इव तेजः, तेजो घृतं वा, घृतं यथा कृत्स्नक्षीरस्नेह-स्तथैव तेजोऽपि कृत्स्नधातुस्नेह इत्यर्थः। यत् परं तेज इति यदुत्कृष्टं सार इत्यन्ये व्याख्यानयन्ति। तत् खल्वोजस्तदेव वलमित्युच्यत इति, इयञ्चाभेदोक्तिश्चिकित्सैक्यार्था; परमार्थतस्तु बलौजसोर्भेद एव। यथा भेदस्तदुच्यते—सर्व्वधातुस्नेहभूतस्योपचयलक्षणस्यौजसो रूपरसवीर्य्यादि विद्यते, बलस्य तु भारहरणादिशक्तिगम्यस्य रसवीर्य्यवर्णादिगुणा न विद्यन्ते; अतोऽनयोर्भेदोऽस्त्येवेति। तथाच बलौजसोर्भेदो वेदोत्पत्तावध्याये उक्तः—'प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च' इति। तन्त्रान्तरे तु ओजःशब्देन रसोऽप्युच्यते। जीवशोणितमप्योजःशब्देनामनन्ति केचित्। उष्माणमपि ओजःशब्देनापरे वदन्ति॥ १८॥

बलस्य प्राकृतं कर्म्म निर्द्देष्टुमाह तत्र बलेनेत्यादि। एतत् सर्व्वधातुसारोपचयलक्षणेन बलेन। सर्व्वचेष्टास्विति कायवाङ्मनोव्यापारेषु, अप्रतिघातः अप्रतिहतत्वम्; एतत् भारहरणादिशक्तिलक्षणेन बलेन। स्वरवर्णप्रसाद इति प्रसादो नैर्म्मल्यम्, एतदुभयात्मकेन बलेन। वाह्यानामित्यादि। वाह्यानां करणानां कर्म्मेन्द्रियाणाम्, आभ्यन्तराणां बुद्धीन्द्रियाणाम्। आत्मकार्य्यप्रतिपत्तिः स्वकीयकार्य्यावबोधो भवति। प्रतिपत्तिरत्रानुष्ठानमित्यन्ये। तत्र बाह्यानां वाक्पाणिपादपायूपस्थानामात्मकार्य्याणि वचनादानगमनविसर्गानन्दनानि। आभ्यन्तराणां करणानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकानामात्मकार्य्याणि शब्दस्पर्शरूपरसगन्धग्रहणानि; एतदुभयात्मकेन

भवन्ति चात्र।

ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं सरम्।
विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्॥ २०॥
देहः सावयवस्तेन व्याप्तो भवति देहिनाम्।
तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्॥ २१॥
अभिघातात् क्षयात् कोपाच्छोकाद् ध्यानाच्छ्रमात् क्षुधः।
ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्।
तेजः समीरितं तस्माद् विस्रंसयति देहिनः॥ २२॥

बलेन। केचिदन्यथा व्याख्यानयन्ति—बाह्यानां श्रोत्रत्वक्चक्षुर्जिह्वानासिकावाक्पाणिपादपायूपस्थानाम्। आभ्यन्तराणां मनोबुद्धिप्रभृतीनाम् बलकारणभूतमोजः॥ १९॥

बलचिकित्सार्थं स्वचिकित्सार्थमपि प्राकृतैर्गुणैर्निर्दिशन्नाह—भवन्ति चात्र। ओज इत्यादि। सोमात्मकं सौम्यम्, स्निग्धं स्नेहगुणयुक्तम्; शुक्लमिति श्वेतम्; तत् तु चरके—'हृदि तिष्ठति यच्छुद्धं रक्तमीषत् सपीतकम्' इत्यादिश्लोकेन ओजस्त्रिवर्णं पठितम्, तत्र हि शुद्धग्रहणेन शुक्लमुक्तम्, अतः शुक्लपीतरक्तवर्णास्त्रय उक्ताः। अत्राप्योजसस्त्रय एव वर्णाः। येनात्र शुक्लमोज इति प्रोक्तम्, शुक्रौजसोरभेदाद् अपरं तैलक्षौद्रवर्णद्वयं प्राप्तम्। तेनात्रापि शुक्लरक्तपीतवर्णास्त्रय एवौजस उक्ताः। न चात्र शुक्रौजसोर्भेदः स्वीकर्त्तव्यः; तस्मिन् सति अष्टधातुत्वं स्यात्। तस्मात् रसादिधातुस्नेहपरम्पराहेतुकः स्नेहः शुक्रम्, क्षीरस्थघृतमिवाभिन्नमोजः शुक्रेण। अपरे शुक्लस्थाने शुक्रं पठन्ति, युक्तञ्चैतत्, शुक्रवर्णेनवौजोवर्णानां निर्दिष्टत्वात्। शीतं शीतवीर्य्यम्। स्थिरं शरीरावयवस्थैर्य्यकारि। सरं प्रसरणशीलम्। अन्ये त्वत्र रसमिति पठन्ति, प्रधानरसकल्पनया मधुरमिति व्याख्यानयन्ति च। विविक्तं श्रेष्ठगुणैर्युक्तम्। अन्ये तु विविक्तं प्रत्यग्रमाहुः। ततः प्रत्यग्रै रेवान्नादिभिराप्यायनम्। मृदु कोमलम्। मृत्स्नञ्चेति पिच्छिलम्, चकाराद् गुर्व्वादयो गुणा अनुक्ताः समुच्चीयन्ते। प्राणानामग्नीषोमादीनाम् आयतनं स्थानम्, उत्तमं श्रेष्ठम्। तत्र बलेनेत्यादिवाक्येन स्थितौ हेतुत्वं प्रतिपादयति। तेन ओजसा, भवति उत्पद्यते॥ २०॥

इदानीं प्रलये तस्यैव हेतुत्वं दर्शयन्नाह—तदभावादित्यादि। शीर्य्यन्ते विनश्यन्ति। अयं पाठोऽभावात् समग्रो न लिखितः॥ २१॥

इदानीमभिघातादिभिर्हेतुभिरोजसः क्षयं निर्दिशन्नाह—अभिघातादित्यादि। एभ्योऽभिघातादिहेतुभ्यः। धातुग्रहणमिति धातवो गृह्यन्ते यैस्तानीति धातुग्रहणानि धातुवाहीनि स्रोतांसि, तेभ्यो निःसृतं निर्गतं सर्व्वधातुस्नेहपरम्परारूपेण। अथवा धातुग्रहणं हृदयं धातुवहस्रोतसां स्थानत्वात्, तस्माद् हृदयान्निःसृतं स्रोतसां मुखैरेव। अन्ये तु हृदयमेव धातुं न गृह्णातीति धातुग्रहणशब्देनैव हृदयमुच्यते। तेजः पित्तम्, समीरितं सम्यक् प्रेरितं वातेनेति शेषः। तस्मात् हृदयात्, विस्रंसयति च्यावयति॥ २२॥

तस्य विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति ; सन्धि-विश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे, स्तब्धगुरु-गात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने, मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति क्षये ॥ २३ ॥

भवन्ति चात्र ।

त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः ॥ २४ ॥
विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ।
अप्राचुर्य्यं क्रियाणाञ्च बलविस्रंसलक्षणम् ॥ २५ ॥
गुरुत्वं स्तब्धताङ्गेषु ग्लानिर्वर्णस्य भेदनम् ।
तन्द्रा निद्रा वातशोफो बलव्यापदि लक्षणम् ॥ २६ ॥
मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च ।
पूर्व्वोक्तानि च लिङ्गानि मरणञ्च बलक्षये ॥ २७ ॥

तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धैर्बलमाप्याययेत् । मूढ़संज्ञम्

तस्यौजसः क्षयभेदान् साध्यासाध्यज्ञानार्थं स्वलक्षणैर्निर्दिशन्नाह—तस्येत्यादि । विस्रंसः स्थानात् च्युतिरभिघातादिभिरेव । व्यापत् अन्यथापत्तिः, सा दुष्टदोषदूष्यसंसर्गात् । क्षयः स्वप्रमाणात् शोकध्यानक्षयादिभिः । लिङ्गानि व्यापन्नस्य भवन्तीति केचित् पठन्ति । व्यापन्नस्य व्यापन्नदोषदूषितस्य । विस्रंसादीनामोजःक्षयभेदानां किं लिङ्गमित्याह—सन्धिविश्लेष इत्यादि । सन्धिविश्लेषः सन्धीनां विघटनम् । दोषच्यवनं स्थानाद् वातादीनां भ्रंशः ; अन्ये दोषैः कृत्वा च्यवनमोजस इति वदन्ति, दोषाणां च्यवनं मलानां च्यवनमिति केचित् । क्रियाणां काय-वाङ्मानसीनां सन्निरोधः । क्रियाशब्दाग्रे नञ्लुप्तो द्रष्टव्यः ; नञ् ईषदर्थे, तेन क्रियाणामीषत् सन्निरोध इत्यन्ये व्याचक्षते । चकारात् बलस्य प्राकृतकर्म्महानिः । एवं व्यापत्तौ क्षये च चकार-प्रयोजनम् । एतानि लिङ्गानि विस्रंसे भवन्तीति योज्यम् । स्तब्धगुरुगात्रतेति स्तब्धगुरुभ्यां गात्रतेति सम्बध्यते । स्तब्धगात्रता जान्वादेरनमनसामर्थ्यम् । वर्णभेदो गौरादिवर्णान्यत्वम् । ग्लानिरप्रहर्षः, तन्द्रा इन्द्रियार्थाकर्म्मण्यता । व्यापन्ने लिङ्गानि भवन्तीत्यनुवर्त्तते । मूर्च्छेति । मूर्च्छा विज्ञानेन्द्रियनिरोधः । मोहो वैचित्त्यम् । प्रलापः असम्बद्धभाषणम् । क्षये लिङ्गानि भवन्तीत्यनुवर्त्तते ॥ २३ ॥

गद्योक्तमेवार्थं श्लोकैराह—त्रय इत्यादि । त्रयो दोषास्तिस्रो विकृतयः । विश्लेषसादावित्यादि पूर्व्वोक्तानि विस्रंसनादीनां लिङ्गानीत्यर्थः ॥ २४—२७ ॥

चिकित्सासूत्रं निर्दिशन्नाह—तत्रेत्यादि । क्रियाविशेषैः रसायनवाजीकरणादिभिः, अविरुद्धैः

इतरन्तु वर्ज्जयेत्। (तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति। तेन मार्द्दवसौकुमार्य्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति। तत् कषायतिक्तशीतरुक्षविष्टम्भिवेगविघातव्यवायव्यायाम-व्याधिकर्षणैश्च विक्रियते)। तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति। कार्श्यं मन्दाग्निताधस्तिर्य्यक् च विच्युतिर्व्यापत्तौ। दृष्ट्यग्निबलहान्यनिलप्रकोपणानि क्षये। तत्रापि स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षये विदधीत)॥ २८॥

दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः।
स्वयोनिवर्द्धनं यत् तदन्नपानं प्रकाङ्क्षति॥ २९॥
यद्यदाहारजातं हि क्षीणः प्रार्थयते नरः।
तस्य तस्य स लाभे तु तं तं क्षयमपोहति॥ ३०॥
यस्य धातुक्षयाद् वायुः संज्ञां कर्म्म च नाशयेत्।
प्रक्षीणञ्च बलं यस्य नासौ शक्यश्चिकित्सितुम्॥ ३१॥

अन्नाद्यविरुद्धैः, बलं शक्तुपचयलक्षणम्, आस्थापयेद् वर्द्धयेत्। क्षीणस्यावस्थायां वर्ज्जनमाह—इतरन्त्वित्यादि। इतरं क्षीणं वर्ज्जयेत्। किम्भूतं वर्ज्जयेदित्याह—मूढसंज्ञं नष्टसंज्ञम्, पूर्व्वं मोहस्योक्तत्वात्। तेज इत्यादि। इतरन्तु पुनरिह मूढसंज्ञं वर्ज्जयेदित्येतस्याग्रे केचित् सुश्रुताध्यायिनः 'तेजोऽप्याग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति। तेन मार्द्दवसौकुमार्य्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति; तत् कषायतिक्तशीतरुक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते। तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति। कार्श्यं मन्दाग्निताधस्तिर्य्यक्च्युतिर्व्यापत्तौ दृष्ट्यग्निबलहान्यनिलप्रकोपमरणानि क्षये। तत्रापि स्नेहपानाभ्यङ्गप्रदेहपरिषेकस्निग्धलघ्वन्नानि क्षये विदधीत' इति न पठन्ति। कुतः? निबन्धकारैरस्वीकृतत्वात्॥ २८॥

दोषेत्यादि। स्वयोनिवर्द्धनमात्मकारणवर्द्धनं यदन्नपानं तदभिलषति। यद्यदित्यादि। आहारजातम् आहारसमूहम्। केचिदाचार्य्या अमुं श्लोकं न पठन्ति। केचित् सुश्रुताध्यायिनोऽत्र दोषधात्वादिक्षयविनाशार्थं देयमन्नादिकं पठन्ति—"यवान् मुद्गान् हरेणूंश्च रुक्षञ्च लघुभोजनम्। कषायकटुतिक्तञ्च वातक्षीणोऽभिकाङ्क्षति॥ तिलमाषकुलत्थादि पिष्टान्नविकृतिं तथा। मस्तुशुक्ताम्लतक्राणि पित्तक्षीणस्तथा दधि॥ मांसं माहिषं वाराहमाजं गुड़गुरूणि च। श्लेष्मक्षीणोऽभिलषति क्षीरस्वप्नदधीनि च॥ इक्षुं मांसरसं मन्थं मधुसर्पिर्गुड़ोदकम्। असृङ्मांसं यवागूञ्च रसक्षीणोऽभिवाञ्छति॥ द्राक्षादाड़िमयुक्तानि सस्नेहलवणानि च। रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति॥ अम्लानि दधिसिद्धानि तथा षाड़वकानि च।

रसनिमित्तमेव स्थौल्यं कार्श्यञ्च। तत्र श्लेष्मलाहारसेविनोऽध्यशनशीलस्याव्यायामिनो दिवास्वप्नरतस्य चाम एवान्नरसो मधुरतरश्च शरीरमनुक्रामन्नतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति, तमतिस्थूलं क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेवाविशन्ति ; सौकुमार्य्यान्मेदसः सर्व्व क्रियास्वसमर्थः, कफमेदोनिरुद्धमार्गत्वाच्चाल्पव्यवायो भवति, आवृतमार्गत्वादेव च शेषा धातवो नाप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति। प्रमेहपिड़काज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति। सर्व्व एव चास्य रोगा बलवन्तो भवन्त्यावृतमार्गत्वात् स्रोतसाम्। अतस्तस्योत्-

स्थूलक्रव्यादमांसानि मांसक्षीणोऽभिकाङ्क्षति ॥ मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च। सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति ॥ रसान् सुसिद्धान् सास्थीनि मांसक्षीणोऽभिकाङ्क्षति ॥ अस्थिक्षीणः श्लथं मांसं मज्जास्थिस्नेहसंयुतम्। स्वाद्वम्लसंयुतं द्रव्यं मज्जक्षीणोऽभिकाङ्क्षति ॥ मयूरकुक्कुटाण्डानि हंससारसयोस्तथा। ग्राम्यानूपौदकानाञ्च शुक्रक्षीणोऽभिकाङ्क्षति ॥ यवानि यवकाम्लानि शाकानि विविधानि च। मायूरं माषयूषञ्च वर्च्चःक्षीणोऽभिकाङ्क्षति ॥ पेयामिक्षुरसं क्षीरं सगुडं बदरोदकम्। मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च ॥ अभ्यङ्गं मर्द्दनं यच्च (मदंग) निवातशयनाशनम्। गुरुप्रावरणञ्चैव स्वेदक्षीणोऽभिकाङ्क्षति ॥ कट्वम्ललवणाम्लानि विदाहीनि गुरूणि च। फलशाकानुपानानि स्त्री वाञ्छत्यार्त्तवक्षये ॥ मृगाजाविवराहाणां गर्भान् वाञ्छति संस्कृतान्। वसाशूल्यप्रकारादीन् भोक्तुं गर्भपरिक्षये ॥ यूषशाल्यन्नमांसानि गोक्षीरं शर्करान्तथा। आसवं दधि हृद्यानि क्षये स्तन्यस्य वाञ्छति" ॥ यस्येत्यादि। इतरन्तु मूढसंज्ञं वर्ज्जयेदित्यनेनैवास्योक्तार्थत्वात् केचिदमुं न पठन्ति। सर्व्वधातुक्षयव्यापकत्वाद् भिन्नविषयोऽयं श्लोकस्तस्मात् पठनीय इत्यन्ये ॥ २९—३१ ॥

रसनिमित्तमित्यादि। चकारान्मध्यशरीरत्वञ्च। ननु कथमेक एव रसः परस्परविरुद्धयोः स्थौल्यकार्श्ययोर्हेतुरित्यत आह—तत्रेत्यादि। अध्यशनशीलस्येति अजीर्णभोजनाभ्यासिन इत्यर्थः। ननु मेदस्विनो दीप्ताग्नित्वे कथमामरससम्भवः ? नैष दोषः, दीप्ताग्नित्वेऽप्यध्यशनशीलत्वादामरसो भवति। तर्हि कथं रसश्चापक्वश्चेति विरोधिवचनम् ? नह्यपक्वो रसव्यपदेशं लभते। सत्यम्, जाठरेणाग्निना रसः कन्नभावेन कृत एव, किन्तु धात्वग्निभिरपाकादाम इत्युच्यते। शरीरमनुक्रामन्निति तं तं शरीरदेशमनुगच्छन्नित्यर्थः। मेदो जनयति विशिष्टाहारवशाददृष्टवशान्मेदसावृतमार्गत्वाच्च धातुद्वयमतिक्रम्य मेद एव वर्द्धयति। तदतिस्थौल्यमापादयतीति तन्मेदः, आपादयति करोति। क्रथनं स्वपतः कण्ठे घुर्घुरारवः। अन्ये तु अकस्मात् श्वासावरोधे क्रथनं कथयन्ति। गद्गदत्वमव्यक्तवचनत्वम्। क्षिप्रमेवाविशन्तीति एते क्षुद्रश्वासादयस्तमतिस्थूलं शीघ्रमेव प्रविशन्ति, स्थूले भवन्तीत्यर्थः। शेषा धातवो नाप्यायन्तेऽत्यर्थमिति शेषधातवोऽस्थ्यादयः।

पत्तिहेतुं परिहरेत्। उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जन-मधु-यवमुद्ग-कोरदूषकश्यामाकोद्दालकादीनां विरूक्षणच्छेदनीयानाञ्च द्रव्याणां विधिवदुपयोगो व्यायामो लेखनवस्त्युपयोगश्चेति ॥ ३२ ॥

तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाध्ययनभयशोकध्यान-रात्रिजागरण-पिपासाक्षुत्-कषायाल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमनुक्रामन्नल्पत्वान्न प्रीणयति, तस्मादतिकार्श्यं भवति। सोऽतिकृशः क्षुत्पिपासा-शीतोष्णवातवर्षभारादानेष्वसहिष्णुर्वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति; श्वासकासशोषप्लीहोदराग्निसादगुल्मरक्तपित्तानामन्यतमं प्राप्य मरणमुपयाति। सर्व्व एव चास्य रोगा बलवन्तो भवन्त्यल्पप्राणत्वात्। अतस्तस्योत्पत्तिहेतुं परिहरेत्। उत्पन्ने तु पयस्याश्वगन्धाविदारी-विदारीगन्धा-शतावरीबलातिबला-नागबलानां मधुराणामन्यासाञ्चौषधीनामुपयोगः, क्षीरदधिघृतमांसशालि-षष्टिकयवगोधूमानाञ्च दिवास्वप्नब्रह्मचर्य्याव्यायामबृंहणवस्त्युपयोगश्चेति ॥३३॥

वातविकाराणामित्यत्र वातविकारा मेदःकृतमार्गावरणनिमित्तवातकोपविकारा इत्यर्थः। अन्यतममिति एषामेकम्। पञ्चत्वमुपयातीति मरणमुपगच्छतीत्यर्थः। तस्य चिकित्सामाह—अत इत्यादि। तस्योत्पत्तिहेतुं परिहरेदित्यनेन निदानपरिवर्ज्जनेनागतव्याधेश्चिकित्सोक्ता। उत्पन्ने जाते पुनरित्यर्थः। उद्दालकादीनामिति उद्दालक आरण्यकोद्रवः। आदिशब्दाद् गवेधुकादीनां ग्रहणम्। विरूक्षणच्छेदनीयानामिति विरूक्षणं मेदोघ्नम्, छेदनीयं स्रोतोविशोधनीयम्। विधिवदुपयोग इति पुरुषाग्निबलमात्राविधानवानुपयोग इत्यर्थः। लेखनवस्त्युपयोग लेखनवस्तयश्चिकित्सितोक्ताः। त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमन्विताः। ऊपकादिप्रतीवापा वस्तयो लेखनाः स्मृताः"। चकाराद् व्यायामादयो मृदवः काङ्क्षायनशक्तवश्च ॥ ३२ ॥

कार्श्यनिमित्तं दर्शयन्नाह—तत्र पुनरित्यादि। वातलाहारसेविन इति अतिरूक्षाहारसेविनः। अतिव्यायामेत्यादि अतिशब्दो व्यायामादिभिः सह प्रत्येकं सम्बध्यते। क्षयः धातुक्षयः, उपशोषित अतिरूक्षीकृतः अल्पीकृतश्च। न प्रीणयति ईषत् प्रीणयतीत्यर्थः। सोऽतिकृश इत्यनेनोपचय-लक्षणबलाभावो दर्शितः। वातरोगप्राय इति वातरोगबहुल इत्यर्थः। अल्पप्राणश्च क्रियासु भवतीति कायवाङ्मानसीषु क्रियासु विषयेष्वल्पशक्तिर्भवति। एतेन शक्तिलक्षणबलाभाव उक्तः। शोषो राजयक्ष्मा। अतस्तस्येति तस्य कार्श्यस्य, उत्पत्तिहेतुमिति निदानम्। उत्पन्ने त्विति कार्श्ये इति शेषः। पयस्या अर्कपुष्पी, क्षीरकाकोलीत्यन्ये. विदारीगन्धा शालपर्णी। मधुराणामिति ऋद्धिवृद्धिजीवकादीनाम्। बृंहणवस्त्युपयोगश्चेति बृंहणवस्तिर्यथा—'बृंहणद्रव्यनिक्वाथास्तत्कल्कस्नेहसैन्धवैः। युक्ताः खजप्रमथिता वस्तयो बृंहणा मताः' इति। चकारात् सन्तर्पणमपि लघु कर्त्तव्यम् ॥ ३३ ॥

यः पुनरुभयसाधारणान्युपसेवेत तस्यान्नरसः शरीरमनुक्रामन् समान् धातूनुपचिनोति; समधातुत्वान्मध्यशरीरो भवति सर्व्वक्रियासु समर्थः, क्षुत्-पिपासाशीतोष्णवर्षातपसहो बलवांश्च। स सततमनुपालयितव्य इति ॥ ३४ ॥

भवन्ति चात्र।

अत्यन्तगर्हितावेतौ सदा स्थूलकृशौ नरौ।
श्रेष्ठो मध्यशरीरस्तु कृशः स्थूलात् तु पूजितः ॥ ३५ ॥
दोषः प्रकुपितो धातून् क्षपयत्यात्मतेजसा।
इद्धः स्वतेजसा वह्निरुखागतमिवोदकम् ॥ ३६ ॥
वैलक्षण्याच्छरीराणामस्थायित्वात् तथैव च।
दोषधातुमलानान्तु परिमाणं न विद्यते ॥ ३७ ॥

मध्यशरीरस्य हेतुं गुणञ्च दर्शयन्नाह—यः पुनरित्यादि। उभयसाधारणानि नातिस्निग्ध-रूक्षाणि स्वास्थ्यवृत्तिकानि द्रव्याणि षष्टिकरक्तशालिलावकदाड़िमतण्डुलीयकादीनि, अदिवा-स्वप्नादींश्च विहारविशेषान्। सर्व्वक्रियासु समर्थ इत्यनेनैव बलवत्त्वे लब्धे यद् बलवांश्चेति करोति तन्नियमार्थम्, एवम्भूताहारविहारसेवी बलवानेव भवतीत्यर्थः। मध्यशरीरस्य चिकित्सा-माह—स सततमनुपालयितव्य इति स्वस्थवृत्तानुवर्त्तनेनेति शेषः ॥ ३४ ॥

तयोर्द्वयोः कृशस्थूलयोर्दोषवत्त्वेऽपि स्थूलस्यातिशयदोषवत्वं मध्यशरीरस्य च गुणवत्त्वं निर्द्देष्टु-माह—अत्यन्तेत्यादि। कुतः स्थूलात् कृशः पूजितः? उच्यते—स्थूलस्य क्रियाऽक्षमत्वात्, अति-शयेन व्याधिपीड़नाच्च ॥ ३५ ॥

दोषादीनां क्षयवृद्ध्योरेकत्र निर्द्देशेऽपि दोषा एव धातुमलक्षयहेतव इति दर्शयन्नाह—दोष इत्यादि। दोषो वातपित्तकफसंज्ञकः। धातूनिति धातुशब्दोऽत्र मलेष्वपि वर्त्तते, देहधारण-सामर्थ्यात्, अथवा धातुशब्द उपलक्षणम्, तेन मलाः गृह्यन्ते। क्षपयतीति क्षपणं वृद्धि-साम्ययोर्ह्रासः; आत्मतेजसेति आत्मशक्त्या। तत्र पित्तं कटुकोष्णत्वात् धातून् क्षपयति, वायुश्च शोषणहेतुत्वात्, कफो मार्गावरोधकत्वात्। इद्धो दीप्तः, उखागतं स्थालीस्थम् ॥ ३६ ॥

कुतः पुनः पलादिमानेन दोषादीनां प्रमाणं न निर्द्दिष्टमित्याह,—वैलक्षण्यादित्यादि। वैलक्ष-ण्यात् विसदृशत्वात्, विसदृशत्वञ्चात्र वातादिप्रकृतिरसरक्तादिभारसहनदीर्घह्रस्वादिकायभेदेन। अस्थायित्वात्तथैवेति अनवस्थितत्वात्, अस्थायित्वञ्च द्विविधेऽपि काले, नित्यगे आवस्थिकेऽपि च। तत्र नित्यगे प्रातः श्लेष्मोपचीयते मध्याह्ने पित्तमित्यादि प्रत्यहमाह्निकचयादिभेदेन। तथा हेमन्ते श्लेष्मोपचीयते, ग्रीष्मे वायुरित्याद्यार्त्तवचयादिभेदेन। अथवा आवस्थिकेऽपि, बाल्ये श्लेष्माभिवर्द्धते, तथा बाल्ये शुक्राल्पत्वं, बालानामार्त्तवस्तन्याभावः, युवसु पित्तमुपचीयते, वृद्धेषु वायुरित्यादिना। परिमाणमिति सर्व्वतो मानं न विद्यते, तेन कस्यचिदेव क्वचिदेव

एषां समत्वं यच्चापि भिषग्भिरवधार्य्यते।
न तत् स्वास्थ्यादृते शक्यं वक्तुमन्येन हेतुना ॥ ३८ ॥
दोषादीनान्त्वसमतामनुमानेन लक्षयेत्।
अप्रसन्नेन्द्रियं वीक्ष्य पुरुषं कुशलो भिषक् ॥
स्वस्थस्य रक्षणं कुर्य्यादस्वस्थस्य तु बुद्धिमान्।
क्षपयेद्बृंहयेच्चापि दोषधातुमलान् भिषक्।
तावद्यावदरोगः स्यादेतत् साम्यस्य लक्षणम् * ॥ ३९ ॥
समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ४० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने दोषधातुमलक्षयवृद्धिविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

मानं कर्त्तुं शक्यते न सर्व्वत इत्यर्थः। ननु दोषादीनां पलादिमानं विना साम्यं कथं ज्ञेय-मित्याह—एषामित्यादि। एषामिति दोषधातुमलानाम्। न तदिति तदपि साम्यम्, स्वास्थ्यादृते स्वास्थ्यं विना ॥ ३७। ३८

क्षयवृद्धिभेदात्मकमसाम्यमनुमानेन दर्शयन्नाह—दोषादीनामित्यादि। आदिशब्देन धातुमलानां ग्रहणम्। तुशब्दः पुनरर्थे; असमतां क्षयवृद्धिलक्षणाम्। अप्रसन्नेन्द्रियमित्यत्राप्रसन्नतनुमिति यन्न कृतं तदिन्द्रियाधिष्ठानानामिन्द्रियशक्तीनाञ्च प्रसन्नत्वं बोधयति। वीक्ष्येत्यनेन वर्णादि सर्व्वमुक्तं भवति। वीक्ष्येत्यत्र ज्ञात्वा इत्येके पठन्ति। असाम्यं वृद्धिक्षयात्मकमित्यनुमानेन प्रतिपाद्य किं कुर्य्यादित्याह—क्षपयेदित्यादि। क्षपयेत् वृद्धान् दोषधातुमलान् ह्रासयेदित्यर्थः। बृंहयेत् वर्द्धयेत्तानेव क्षीणान्। क्षपणबृंहणयोर्मात्रावधिं दर्शयन्नाह—तावदित्यादि। कुतः पुनरारोग्ये अवधिरित्याह—एतत् साम्यस्य लक्षणमित्यादि। अयं पाठः समग्रोऽभावान्न लिखितः। दोषादिसाम्यं स्वास्थ्यम्, तद्दर्शयितुमाह—समदोष इत्यादि। ननु द्विविधेऽपि काले नित्यं दोषचयाद्यनुबन्धात् कथं समदोषत्वम्? तथाहि नित्यगे—आह्निके तावत् प्रातः कफः कुप्यति, मध्याह्ने पित्तमित्यादि; तथा आर्त्तवेऽपि हेमन्ते कफश्चीयते, वसन्ते स एव कुप्यति इति। तथा आवस्थिके च काले बाले विवर्द्धते श्लेष्मा इत्याद्युक्तत्वात्। उच्यते, दोषचयादेरल्पत्वात् तद्व्यपदेश इति। एकतण्डुलाभ्यवहारेऽनशनव्यपदेशवत्। अन्ये त्वेवं वदन्ति, आर्त्तवे चयादौ स्वस्थवृत्तोक्तविधिभिराहोरात्रिके पुनरनागताबाधोक्तदन्तधावनादिविधानेन दोषाणां साम्यमुपपन्नमेवेति। समधातुमलक्रिय इति समा धातुमलानां क्रिया यस्य स तथा। क्रिया स्वप्नजागरणादिकेति केचिद् भिन्नं क्रियाशब्दं व्याख्यानयन्ति। प्रसन्नात्मेन्द्रियमना इति आत्मा देहः, अन्ये कर्म्मसमवायपुरुषः, तस्य निर्व्विकारस्यापि शरीरगुणदोषाभ्यां बद्धत्वमाचार्य्यैर्बहुधोक्तम्, अस्माभिर्ग्रन्थगौरवभयान्नोच्यते। इन्द्रियाणि भौतिकाधिष्ठानशक्तिरूपाणि, मनस्त्विन्द्रियाणु-

* नातो रोगसमन्वित इति पाठान्तरम्।

ग्राहकम् अन्तःकरणम्, एवम्भूतः पुरुषः स्वस्थ इत्यभिधीयते, पूर्व्वाचार्य्यैरिति शेषः। दोष-साम्येनैवाग्न्यादिसाम्यं लब्धम्, तत् किं पृथक् आचार्य्यः प्राह? उच्यते—न दोषैः समा अग्न्यादयो भवितुमर्हन्तीति; कुतः? पृथक्चिकित्सितत्वात्। पित्तहरणमपि सर्पिरजापयश्चाग्निं वर्द्धयति। अत्र श्रीमाधवः प्राह—'लब्धाश्च समदोषत्वे समाग्नित्वादयस्तदा। पृथगुक्ताः किमर्थं ते युक्तमेतत् निरर्थकम्' इति। समाधानमाह—'दोषेभ्यस्ते यतो भिन्ना पृथगुक्ता अतस्तु ते। प्रकृत्या तादृशाः केचिदत्यर्थं वा न दूषितम्' इति। दोषादीनान्त्वसमतामित्यादि श्लोकं वैलक्षण्याच्छरीराणा-मित्यादिश्लोकाग्रे केचिदन्यथा पठन्ति। तथाहि—पलादिमानाभावात् कथमेषां साम्यं ज्ञेय-मित्याह—'दोषादीनान्त्वसमतामनुमानेन लक्षयेत्' इति श्लोकार्द्धमेव दोषसाम्यज्ञानार्थं पठन्ति। यदनुमानेन समता ज्ञेया तदेव दर्शयन्नाह—एषां समत्वं यच्चापीत्यादि। एतेन साम्यकार्य्येण स्वास्थ्येन दोषाणां समता ज्ञातव्येत्यर्थः। अतोऽनन्तरं समदोषः समाग्निश्चेत्यादि पठन्ति। व्याख्यानञ्चास्य पूर्व्वमेवोक्तम्। इदानीं स्वास्थ्यप्रतिपालनाय अस्वस्थस्य च स्वास्थ्यकरणाय आह—'स्वस्थस्य रक्षणं कुर्य्यादस्वस्थस्य तु बुद्धिमान्। क्षपयेद् बृंहयेच्चापीत्यादीदग्रं कृत्वा केचित् पाठक्रमं पठन्ति ॥ ३९ । ४० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
दोषधातुमलक्षयवृद्धिविज्ञानीयनाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

# षोड़शोऽध्यायः ।

अथातः कर्णव्यधबन्धविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येते। तौ षष्ठे मासि सप्तमे वा शुक्लपक्षे प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु कृतमङ्गलस्वस्तिवाचनं धात्र्यङ्के कुमारधराङ्के वा कुमारमुपवेश्य बालक्रीड़नकैः प्रलोभ्याभिसान्त्वयन् भिषग् वामहस्तेनाकृष्य कर्णं दैवकृते च्छिद्रे आदित्यकरावभासिते शनैः शनैर्दक्षिणहस्तेन ऋजु विध्येत्; प्रतनुकं सूच्या, बहलमारया, पूर्व्वं दक्षिणं कुमारस्य वामं कन्यायाः। ततः पिचुवर्त्तिं प्रवेशयेत् ॥ २ ॥

शोणितबहुत्वेन वेदनया चान्यदेशविद्धमिति जानीयात्, निरुपद्रवतया तद्देशविद्धमिति ॥ ३ ॥

रक्षाभूषणनिमित्तमिति निमित्तशब्दो रक्षाभूषणाभ्यां सह प्रत्येकं सम्बध्यते। अन्ये तु रक्षणार्थं भूषणानि रक्षाभूषणानि तन्निमित्तमित्यर्थः। यद्यपि विद्धकर्णत्वात् व्रणिनि बाले रक्तमांसप्रियत्वात् रक्षोभयमस्त्येव, तथापि व्रणस्याल्पकालत्वाद् दैवकृतच्छिद्रत्वाद् वा रक्षणार्थं भवति। कस्मिन् काले कर्णस्य व्यधः कर्त्तव्य इत्याह—तौ षष्ठे म॰॰ सप्तमे वा शुक्लपक्षे इति। ताविति तौ कर्णौ। षष्ठे मासे सप्तमे वा इति नायं जन्मकालादूर्द्ध्वं किन्तु संवत्सरादेर्भाद्रपदाद् यः षष्ठो मासः माघः सप्तमः फाल्गुनस्तयोर्म्मध्ये एकस्मिन्निति। मङ्गलं गीतादि। स्वस्तिवाचनम् आशीर्व्वादोच्चारणम्। धात्र्यङ्के इति धात्री कुमारपरिचारिका। कुमारधराङ्के वेति बालग्राहिपुरुषस्योत्सङ्गे। बालक्रीड़नकैरिति कृत्रिमहस्त्यश्वबलीवर्द्दशुकादिभिः। अस्याग्रे भक्ष्यविशेषैर्वेति केचित् पठन्ति भक्ष्यविशेषैर्मोदकादिभिः। दैवकृते छिद्र इति प्राक्तनजन्मकर्म्मकृत इत्यर्थः, ऋजु अवक्रम्; कर्णविशेषेण सूचीविशेषविषयं नियमयन्नाह—प्रतनुकं सूच्येति प्रकर्षेण तनुं कर्णं सूच्या विध्येदित्यर्थः। बहलमारयेति स्थूलकर्णमारया विध्येदित्यर्थः। आरा चर्म्मकाराणां चर्म्मभेदनं शस्त्रम्, बहलं कठिनमिति लक्षणटिप्पनीकारेणोक्तम्। पुरुषस्त्रीभेदेन प्राक् कर्णव्यधने प्रशस्तत्वेन विशेषमाह—पूर्व्वं दक्षिणमिति। कर्णौ विद्धे सति किं कार्य्यमित्याह—तत इत्यादि। विद्धा च पिचुवर्त्तिं प्रवेशयेत्। अन्यदेशविद्धस्य विज्ञानोपायमाह—शोणितबहुत्वेनेति। दैवकृतच्छिद्रविद्धस्य विज्ञानमाह—निरुपद्रवतयेति। तद्देशविद्धमिति दैवकृतच्छिद्रविद्धम्, जानीयादित्यनुवर्त्तते ॥ १-३ ॥

तत्राज्ञेन यदृच्छया विद्धासु शिरासु कालिकामर्म्मरिकालोहितिकास्तूपद्रवा भवन्ति। तत्र कालिकायां ज्वरो दाहः श्वयथुर्वेदना च भवति। मर्म्मरिकायां वेदना ज्वरो ग्रन्थयश्च, लोहितिकायां मन्यास्तम्भापतानकशिरोग्रहकर्णशूलानि भवन्ति। तेषु यथास्वं प्रतिकुर्व्वीत। क्लिष्टजिह्माप्रशस्तसूचीव्यधाद् गाढ़तर-वर्त्तित्वाद् दोषसमुदायादप्रशस्तव्यधाद् वा यत्र संरम्भो वेदना वा भवति, तत्र वर्त्तिमुपहृत्याशु मधुकैरण्डमूलमञ्जिष्ठा-यवतिलकल्कैर्मधुघृतप्रगाढ़ैरालेपयेत् तावद् यावत् सुरूढ़ इति। सुरूढ़ञ्चैनं पुनर्विध्येत्, विधानन्तु पूर्व्वोक्तमेव॥ ४॥

तत्र सम्यग् विद्धामामतैलेन परिषेचयेत्। त्र्यहात् त्र्यहाच्च वर्त्तिं स्थूलतरां दद्यात् परिषेकञ्च तमेव। अथ व्यपगतदोषोपद्रवे कर्णे वर्द्धनार्थं लघुवर्द्धनकं कुर्य्यात्॥ ५॥

भवति चात्र।

एवं विवर्द्धितः कर्णश्छिद्यते तु द्विधा नृणाम्।
दोषतो वाभिघाताद् वा सन्धानं तस्य मे शृणु॥ ६॥

तत्र समासेन पञ्चदश कर्णबन्धाकृतयः। तद्यथा—नेमिसन्धानक

सिरासु दोषं वक्तुमाह—तत्राज्ञेनेत्यादि। अज्ञेन तु कालिकालोहितिकयोर्वर्णौ नैव परिहारः कर्त्तव्यः, मर्म्मरिकायास्तु वर्णानुक्तौ दैवकृतच्छिद्रव्यधनेनेति। प्रत्येकमुपद्रवान् वक्तुमाह—तत्र कालिकायां ज्वर इत्यादि। कालिकादिव्यधोपद्रवचिकित्सामाह—तेषु यथास्वमिति। तेषु ज्वरादिषु व्याधिषु, यथास्वं प्रतिकुर्व्वीत इति यस्य ज्वरादिव्याधेर्यः प्रतीकारस्तेन तं प्रतिकुर्व्वीतेत्यर्थः। कालिकादिव्यधादन्यथापि व्यापदं चिकित्साञ्च निर्द्दिशन्नाह—क्लिष्टजिह्माप्रशस्तेति। क्लिष्टा अमनोज्ञा, जिह्मा वक्रतमा, अप्रशस्ता यथोक्तगुणहीना। दोषसमुदायादिति दोषप्रकोपात् अप्रशस्तव्यधाद् वेति अदैवकृतच्छिद्रे व्यधाद् गर्हितशस्त्रादिव्यधाद् वा। संरम्भः श्वयथुः। केचित् क्लिष्टजिह्माप्रशस्तसूचीव्यधाद् गाढ़तरवर्त्तित्वादिति न पठन्ति, दोषसमुदायादित्यादि च पठन्ति। सुरूढ़ञ्चैनं पुनर्व्विध्येदिति च न पठन्ति। दुर्व्विद्धे व्यापच्चिकित्सां प्रतिपाद्य सम्यग् विद्धे चिकित्सामाह—तत्रेत्यादि। आमतैलेनेति अपक्वतैलेन, तिलकल्कनिष्पीड़नेन सुष्टितः परिस्रुतेनेत्यर्थः। तमेवेति आमतैलपरिषेकमेवेत्यर्थः। गतोपद्रवे कर्णे वर्द्धनोपायमाह—अथ व्यपगतेत्यादि। लघुवर्द्धनकमिति दोषविशेषादपामार्गनिम्बकार्पासादीनां काष्ठानामन्यतमस्य, अथवा सीसकादिघटितां धातुपुष्पाकृतिं कुर्य्यात्॥ ४। ५॥

भवति चात्र। एवं विवर्द्धित इत्यादि। दोषशब्दो व्याधिष्वपि वर्त्तते, तेन दोषैर्वातादिभिस्तज्जनितव्याधिभिर्वेत्यर्थः, अभिघाताद् वेति पतनपीड़नादिभिः। इदानीं सन्धेयस्य सन्धानाय असन्धेयस्य च परिहाराय चाह—तत्र समासेनेति। समासेन संक्षेपेण, विस्तरेण तु कर्णबन्धा अमिताः। यद्यपि पञ्चदशसु कर्णेषु मध्ये दश एव बन्ध्यास्तथापि बन्धबाहुल्याद्

उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्व्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति॥ ७॥

तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। वाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्व्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। वाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्याः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः॥ ८॥

अबन्धेष्वपि बन्धशब्दो वर्त्तते; यथा छत्रिणो यान्तीत्यत्र छत्रिबाहुल्यादछत्रिष्वपि छत्रिव्यपदेशः। तत्र समासेन पञ्चदशकर्णाकृतय इत्यन्ये पठन्ति। तानेव बन्धान् नामभिर्निर्द्दिशन्नाह—तद् यथा—नेमिसन्धानक इत्यादि। तद्यथेति निदर्शने। तत्रामी बन्धविकल्पा नित्यकर्म्मदर्शनादभ्यासाच्च सर्व्वे जायन्ते॥ ६। ७॥

यद्यप्येषां नामभिरेवाकृतयः प्रायेण व्याख्यातास्तथापि लक्षणसूत्रं निर्द्दिशन्नाह—तेषु पृथुलायतेति। पृथुले विस्तीर्णे आयते दीर्घे समे तुल्ये, इत्थम्भूते द्वे पाल्यौ यस्य स तथा। पालिः कर्णलतिका। नेमिसन्धानक इति नेमी चक्रधारा, तद्वत् सन्धानं यस्य स नेमीसन्धानकः। वल्लूरकं इति वल्लूरं शुष्कमांसम्, शुष्कमांसवदनेकधा विपाट्य यः सन्धीयते स वल्लूरकः। समुन्नतसमोभयपालिरित्येके पठन्ति। एतत् कर्णबन्धत्रयं समोभयपालिविषयतया ज्ञेयम्। अभ्यन्तरदीर्घैकेति यस्त्वभ्यन्तरदीर्घैकपालिः कथञ्चिच्छिन्नो भवति तस्येतरपाल्यभावाद् वाह्यपालिमूले व्यासङ्ग आसङ्गिमः। गण्डकर्ण इति सानुबन्धकपोलमांसमुत्कृत्य वाह्यदीर्घपाल्यग्रभागः सन्धीयते यस्मिन् स गण्डकर्णः। एतद् बन्धद्वयमेकपालिकम्। अपालिरिति ईषत्पालिः, उभयतो गण्डप्रदेशात् सानुबन्धमांसमाहृत्य पाल्याकारं कृत्वा सन्धानं यस्य क्रियते स आहार्य्यः। पीठोपमपालिरिति यस्य तु पालिद्वयं मूलत एव छिन्नं भवति स पीठोपमपालिः। निर्व्वेधिम इति वेधेन निष्पन्न इत्यर्थः, पालिद्वयहीनं कर्णपुत्रिकाया उपरि विद्ध्वा यो निष्पादनीय इत्यर्थः। इदमपालिकं कर्णबन्धद्वयम्। स्थूलाणुसमेति स्थूलाणुत्वाभ्यामेका पालिः समा, अपरा विषमा, ते उल्लिख्य नानाप्रकारयोजना व्यायोजिम इति। अभ्यन्तरदीर्घैकपालिरिति अभ्यन्तरदीर्घैकपालिरितराल्पपाल्या सह वहिःसन्धानात् कपाटवत् सन्धानं यत्र स कपाटसन्धिकः। अर्द्धकपाटसन्धिक इति वाह्यदीर्घैकपालिरितराल्पपाल्या सहाभ्यन्तरसन्धानेन अर्द्धकपाटवत् यत्र सन्धीयते स अर्द्धकपाटसन्धिकः। इदं कर्णबन्धत्रयं विषमोभयपालिकम्। तत्र दशैते कर्णबन्धेति। तत्र तेषु पञ्चदशसु कर्णबन्धविकल्पेषु मध्ये। तेषामाकारज्ञानम[illegible]माह— तेषां नामभिरेवेति ॥८॥

संक्षिप्तादयः पञ्चासाध्याः। तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोश्च क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्वल्लीकर्णः। ग्रथितमांसस्तब्धशिरासन्ततसूक्ष्मपालिर्यष्टिकर्णः। निर्म्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठक इति। बन्धेष्वपि तु शोफदाहरागपाकपिड़कास्रावयुक्ता न सिद्धिमुपयान्ति॥ ९॥

भवन्ति चात्र।

यस्य पालिद्वयमपि कर्णस्य न भवेदिह।
कर्णपीठं समे मध्ये तस्य विद्ध्वा विवर्द्धयेत्॥ १०॥
बाह्यायामिह दीर्घायां सन्धिराभ्यन्तरो भवेत्।
आभ्यन्तरायां दीर्घायां बाह्यसन्धिरुदाहृता॥ ११॥
एकैव तु भवेत् पालिः स्थूला पृथ्वी स्थिरा च या।
तां द्विधा पाटयित्वा तु छित्वा चोपरि सन्धयेत्॥ १२॥
गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता।
कर्णपालिमपालेस्तु कुर्य्यान्निलिख्य शास्त्रवित्॥ १३॥

शेषाणां परिहारार्थमाह—संक्षिप्तादयः पञ्चासाध्या इति। तेषां लक्षणमाह—शुष्कशष्कुलिरिति शुष्कबाह्यपाल्यधिष्ठानः, इतराल्पपालिरिति इतरा गण्डदेशानुगता अल्पा पालिर्यस्य स तथा। अनधिष्ठानपालिरिति अविद्यमानाऽधिष्ठानपालिर्यस्य स तथा, पर्य्यन्तयोश्च गण्डबाह्यपार्श्वयोः, क्षीणमांसः हीनकर्णः। तनुविषमाल्पेति विषमा तनुत्वस्थूलत्वाभ्याम्। त एते पञ्च कर्णबन्धाः सपाल्योऽप्यसाध्याः, असाध्या इति साधनाय अशक्याः; केचिदमुं पाठं न पठन्ति। एतेषां पञ्चानामसाध्यत्वे हेतुमाह—बद्धेष्वपीति। अन्ये तु शोफाद्युपद्रवोपेतानां पूर्व्वेषां दशानां बन्धानां साध्यानामप्यसाध्यत्वमाहुः॥ ९॥

गद्योक्तानां कर्णबन्धानां मध्ये निर्व्वेधिमस्य सन्धानसूत्रमाह—भवन्ति चात्र, यस्येत्यादि। इहेति कर्णबन्धमध्ये। कर्णपीठं पुत्रिकोपरिप्रदेशम्। व्यायोजिमकपाटसन्धिकार्द्धकपाटसन्धिकानां सन्धानसूत्रमाह—बाह्यायामिह दीर्घायामित्यादि। यदा बाह्या पालिर्दीर्घा भवेत् तदा आभ्यन्तरः सन्धिः कर्त्तव्य इत्यर्थः, आभ्यन्तरा च पालिर्यदा दीर्घा स्यात् तदा बाह्यसन्धिर्विधेय इति। बाह्यायां गण्डाद्दूरवर्त्तिन्यां पाल्यां दीर्घायाम्, आभ्यन्तरो गण्डसन्निकृष्टो गण्डसंश्रयी वेत्यर्थः। कपाटसन्धिकार्द्धकपाटसन्धिकयोरेवेदं सन्धानसूत्रम्, न तु व्यायोजिमस्येत्यन्ये। इदानीमासङ्गिमस्य सन्धानसूत्रमाह—एकैवेत्यादि। वल्लूरकस्येदं सन्धानसूत्रं सम्भाव्यते इत्यन्ये वदन्ति। आहार्य्यस्य सन्धिसूत्रं निर्द्देष्टुमाह—गण्डादुत्पाट्य मांसेनेत्यादि। सानुबन्धेनेति गण्डप्रदेशलग्नेनेत्यर्थः। जीवतेति शोणितसहितेनेत्यर्थः। अन्ये तु गण्डकर्णस्याप्येतत् सन्धानसूत्रमिति वदन्ति॥ १०—१३॥

अतोऽन्यतमं बन्धं चिकीर्षुरग्रोपहरणीयोक्तोपसम्भृतसम्भारं विशेषतश्चात्रोपहरेत् सुरामण्डं क्षीरमुदकं धान्याम्लं कपालचूर्णञ्चेति। ततोऽङ्गनां पुरुषं वा ग्रथितकेशान्तं लघु भुक्तवन्तमाप्तैः सुपरिगृहीतञ्च कृत्वा बन्धमुपधार्य्य छेद्यभेद्यलेख्यव्यधनैरुपपन्नैरुपपाद्य कर्णशोणितमवेक्षेत तद्दुष्टमदुष्टं वेति। तत्र वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे शीतोदकपयोभ्यां श्लेष्मदुष्टे सुरामण्डोष्णोदकाभ्यां प्रक्षाल्य कर्णौ पुनरवलिख्यानुन्नतमहीनमविषमञ्च कर्णसन्धिं सन्निवेश्य स्थितरक्तं सन्दध्यात्। ततो मधुघृतेनाभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेणानवगाढमनतिशिथिलञ्च बद्ध्वा कपालचूर्णेनावकीर्य्याचारिकमुपदिशेद् द्विव्रणीयोक्तेन च विधानेनोपचरेत् ॥ १४ ॥

भवति चात्र।

विघट्टनं दिवास्वप्नं व्यायाममतिभोजनम्।
व्यवायमग्निसन्तापं वाक्श्रमञ्च विवर्ज्जयेत् * ॥ १५ ॥

न चासंशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा सन्दध्यात्। स हि वातदुष्टे रक्ते रूढ़ोऽपि परिपुटनवान्, पित्तदुष्टे दाहपाकरागवेदनावान्, श्लेष्मदुष्टे स्तब्धः कण्डूमान, अतिप्रवृत्तरक्ते श्यावशोफवान्। क्षीणोऽल्पमांसो न वृद्धिम्

अतःपरं बन्धविधिः। अग्रोपहरणीयोक्तोपसम्भृतसम्भारमिति अग्रोपहरणीयोक्तो यन्त्रशस्त्रादिः उप समीपे सम्भृतः सम्यक् कृत्वा धृतः सम्भारः समूहो यत्र। सुरामण्डं मद्यस्योपर्य्यच्छभागम्, कपालचूर्णं मृन्मयभाण्डखण्डचूर्णम्। ततोऽङ्गनां पुरुषं वेति अङ्गनाया भूषणप्राधान्यात् प्राङ्निर्द्देशः। ग्रथितकेशान्तमिति ग्रथितकेशावयवम्, अन्यथा केशव्याकुलतया कर्म्माभिघातः स्यात् बन्धविश्लेषो वा। लघु भुक्तवन्तमिति भुक्तवान् कर्म्मपीड़ां सहते, आहारलघुत्वात् वेदनया रात्रिजागरितवतोऽपि नाजीर्णबाधा स्यात्। आप्तैः सुपरिगृहीतञ्च कृत्वेति आप्तैर्हितैः, बन्धमुपधार्य्येति अयं बन्धोऽत्र कर्त्तव्य इति निश्चित्य, छेद्याद्यैरुपपन्नैरिति युक्तैः, उपपाद्येति संयोज्य। सन्निवेश्य आरोप्य, सन्दध्यात् सन्धानं कुर्य्यात्। पिचुप्लोतयोरिति तूलकर्पटयोरित्यर्थः, अवगुण्ठ्य इति आवेष्ट्य, आचारिकमिति आहारविहाराख्यम्, द्विव्रणीयोक्तेन च विधानेनेति आलेपनादिना ॥ १४ ॥

परिहार्य्याण्युपदिशन्नाह—विघट्टनमित्यादि। विघट्टनं चालनम्। परिहार्य्यसामान्यादन्यदपि विरुद्धं प्रतिपादयन्नाह—न चेत्यादि। अशुद्धरक्तमिति दुष्टरक्तम्, अतिप्रवृत्तरक्तमिति शुद्धरक्तमपि यदातिप्रवृत्तं स्यात्तदा न सन्धेयम्। अशुद्धरक्तसन्धाने दोषमाह—स हि वातदुष्ट इति। परिपुटनं त्वच उद्घाटनम्, मिश्रकाध्यायोक्तः सशोफः कर्णलतिकारोगो वा। अतिप्रवृत्तरक्तस्य सन्धाने दोषमाह—अतिप्रवृत्तरक्त इति, अतिस्रवद्रक्त इत्यर्थः। श्यावशोफोऽत्र

* इतःपरं—आमतैलपरीषेकं त्रिरात्रमवचारयेत्।
तत्तैलेन परिषिक्तं त्र्यहादपनयेत् पिचुम्॥ इत्यधिकः पाठः क्वचित्।

उपैति। स यदा सुरूढ़ो निरुपद्रवः सवर्णो भवति, तदैनं शनैः शनैरभिवर्द्धयेत् ॥ १६ ॥

अतोऽन्यथा संरम्भदाहपाकरागवेदनावान् पुनश्छिद्यते वा, अथास्यामदुष्टस्याभिवर्द्धनार्थमभ्यङ्गः। तद्यथा—गोधाप्रतुदविष्किरानूपौदकवसामज्जानौ पयः सर्पिस्तैलं गौरसर्षपजञ्च यथालाभं सम्भृत्यार्कालर्कवलातिवलानन्तापामार्गाश्वगन्धाविदारिगन्धाक्षीरशुक्लाजलशूकमधुरवर्गपयस्याप्रतीवापं तैलं वा पाचयित्वा स्वनुगुप्तं निदध्यात् ॥ १७ ॥

स्वेदितोन्मर्द्दितं कर्णं स्नेहेनानेन योजयेत्।
अथानुपद्रवः सम्यग् वलवांश्च विवर्द्धते।
यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम् ॥
शतावर्य्यश्वगन्धाभ्यां पयस्यैरण्डजीवनैः।
तैलं विपक्वं सक्षीरमभ्यङ्गात् पालिवर्द्धनम् ॥ १८ ॥

र्वार्तकृतः। क्षीणकर्णस्य सन्धाने दोषमाह—क्षीणोऽल्पमांस इति। क्षीणोऽल शुद्धरक्तातिप्रवृत्त्या, न तु दोषोपद्रवैः, सदोषोपद्रववर्द्धने छिद्यत एव। द्विव्रणीयोक्तसामान्यविधिमुद्दिश्य विशेषविधिं निर्द्दिशन्नाह—आमतैलेनेत्यादि। प्रतुदाः लटादयः पक्षिभेदाः श्रेष्ठत्वात्, विष्किराः लावादयः, आनूपाः वराहमहिषादयः, औदका रोहितमत्स्यादयः; एषां वसामज्जानौ, वसा मांसस्नेहः। गौरसर्षपजस्थाने राजसर्षपजमिति केचित् पठन्ति। राजसर्षपाः श्वेतसर्षपाः। वसामज्जासर्पिर्गौरसर्षपतैलमेतत् स्नेहचतुष्टयमर्कादिकल्कमावाप्य चतुर्गुणेन दुग्धेनैवं पचनीयमिति। अन्ये त्वत्र सर्पिर्न पठन्ति। अपरे वसादिस्नेहचतुष्टयं परं पठन्ति न तु पयः। द्रवानुक्तौ च जलं चतुर्गुणं वदन्ति स्नेहपाके, यदान्यत्रापि केवलं दुग्धं स्यात् तदा स्नेहाच्चतुर्गुणं दुग्धं, यदा पुनरन्योऽपि द्रवो भवेत् तदा स्नेहसममेव दुग्धं कार्य्यमित्याचार्य्या भाषन्ते। यथालाभं सम्भृत्येति यस्य यस्य लाभस्तं तमेकत्र कृत्वेत्यर्थः। एतेन द्वित्राणामपि ग्रहणमुक्तम्। अलर्कः मन्दारः, मन्दारशब्देनात्र श्वेतार्को ग्राह्यो न तु पारिभद्र इति, अलर्कशब्दस्य श्वेतार्कपर्य्यायपठितत्वात्। अनन्ता उत्पलसारिवा। विदारिगन्धा शालपर्णी। क्षीरशुक्ला क्षीरविदारी। जलशूकः जलनीलिका जलान्तर्वर्त्तिरोमयुक्तविषप्राणी वा, जलशूको जलसंस्थस्तृणसक्तो जन्तुविरचितः शूकसङ्घातवान् निवासान्दुक इत्यन्ये, जलचारी कृष्णकीट इति लक्षणटीप्पनकारेणोक्तम्। मधुरवर्गः काकोल्यादिः। पयस्या विदारीभेदः, केचिदर्कपुष्पीत्याहुः, अन्ये मधुरवर्गं पयस्याञ्च न पठन्ति। तैलं वेति तिलतैलं वा पचेत्, एकैकम्। स्वनुगुप्तमिति निरुपद्रवस्थाने इत्यर्थः ॥१५—१७

अस्य तैलस्यावचारणमाह—स्वेदितोन्मर्द्दितमित्यादि। अभ्यक्तस्योद्वर्त्तनमाह—यवाश्वगन्धायष्ट्याह्वैरिति। कर्णपालिविवृद्ध्यर्थमपरं तैलमाह—शतावर्य्यश्वगन्धाभ्यामिति शतावर्य्यादि-

ये तु कर्णा न वर्द्धन्ते स्वेदस्नेहोपपादिताः।
तेषामपाङ्गदेशे तु कुर्य्यात् प्रच्छानमेव तु।
बाह्यच्छेदं न कुर्व्वीत व्यापदस्तु ततो ध्रुवाः॥ १९॥
बद्धमात्रन्तु यः कर्णं सहसैवाभिवर्द्धयेत्।
आमकोशीसमाध्मातः क्षिप्रमेव विमुच्यते॥ २०॥
जातरोमा सुवर्त्मा च श्लिष्टसन्धिः समः स्थिरः।
सुरूढोऽवेदनो यस्तु तं कर्णं वर्द्धयेच्छनैः॥ २१॥
अमिताः कर्णबन्धास्तु विज्ञेयाः कुशलैरिह।
यो यथा सुविशिष्टः स्यात् तं तथा विनियोजयेत् *॥ २२॥

कल्केन स्नेहचतुर्थांशेन केवलक्षीरेण चतुर्गुणेन तैलमत्र पचनीयम्। पयस्या अर्कपुष्पी। जीवनैः काकोल्यादिद्रव्यैः। एवमप्यवर्द्धमानानां कर्णानां वर्द्धनोपायं दर्शयन्नाह—ये तु कर्णा न वर्द्धन्ते इत्यादि। उपपादिताः संयोजिताः। अपाङ्गदेशे त्विति कर्णपुत्रिकाया अधस्तिर्य्यक्। तुशब्द एवार्थः, प्रच्छानमेव त्विति प्रशब्द ईषदर्थे, ईषच्छेदनम्, तुशब्दोऽयमप्यर्थः, तेन कर्णपुत्रिकाया अध एव छेदनम्, तदपीषदेव कार्य्यमित्युक्तं भवति। तेषामपाङ्गच्छेद्यं हि कार्य्यमाभ्यन्तरं भवेदिति केचित् पठन्ति, अपाङ्गपुत्रिकाया अधः कर्णानुकूलमाभ्यन्तरं छेद्यं प्रच्छदयेत् वा। बाह्यच्छेदमिति कर्णबाह्यलतिकाच्छेदम्। व्यापदः कर्णलतिकात्रुटनादयः। स्याधयः स्युरित्यन्ये पठन्ति। आरब्ध-कर्णस्य वर्द्धने दोषमाह—बद्धमात्रन्तु यः कर्णमित्यादि। आमकोशीति असम्यग्रूढमध्यः। केचिदमुं न पठन्ति। कीदृशः पुनर्वर्द्धनीयस्तमाह-जातरोमा सुवर्त्मा चेति। सुवर्त्मेति शोभनच्छिद्रः, श्लिष्टसन्धिः संलग्नसन्धिः समो निम्नोन्नतत्वरहितः, स्थिरो दृढः॥ १८—२१॥

कर्णपालिविशेषेण कर्णसन्धिबन्धानामपरिमितत्वादनुक्तमपि प्रकारं दर्शयन्नाह—अमिताः कर्णबन्धास्त्विति। सुविशिष्ट इत्यत्र केचित् सुनिविष्ट इति पठन्ति। केचिदत्रैवाध्याये कर्णपाल्या-मयान् परिपोटादीन् पठन्ति। अन्ये तु चिकित्सिते मिश्रकलिङ्गचिकित्सिते पठन्ति। तांश्च तत्रैव व्याख्यास्यामः। अन्ये तु सुश्रुताध्यायिनोऽत्र कर्णपाल्यामयानित्यादिकं ग्रन्थं सचिकित्सितं पठन्ति, स स्वाचार्य्यैरनार्षीकृतस्तस्मान्न पठनीयः। अपरे पुनरत्रैवोत्पाटकादीन् सचिकित्सितान् पठन्ति, अमुमपि पाठमनार्षमाचार्य्या वर्णयन्ति, अतोऽयमपि न पठितव्यः॥ २२॥

* इतः परमिमे श्लोकाः क्वचिदधिका दृश्यन्ते—

"कर्णपाल्यामयान् नृणां पुनर्वक्ष्यामि सुश्रुत।
कर्णपाल्यां प्रकुपिता वातपित्तकफास्त्रयः॥
द्विधा वाप्यथ संसृष्टाः कुर्व्वन्ति विविधा रुजः।
विस्फोटः स्तब्धता शोफः पाल्यां दोषे तु वातिके॥

दाहविस्फोटजननं शोफः पाकश्च पैत्तिके ।
कण्डूः सश्वयथुः स्तम्भो गुरुत्वञ्च कफात्मके ॥
यथादोषञ्च संशोध्य कुर्य्यात् तेषां चिकित्सितम् ।
स्वेदाभ्यङ्गपरीषेकैः प्रलेपासृग्विमोक्षणैः ॥
मृद्वीं क्रियां बृंहणीयैर्यथास्वं भोजनैस्तथा ।
य एवं वेत्ति दोषाणां चिकित्सां कर्त्तुमर्हति ॥
अत ऊर्द्ध्वं नामलिङ्गैर्वक्ष्ये पाल्यामुपद्रवान् ।
उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतो भृशम् ॥
अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा ।
स्रावी च दाहवांश्चैव शृण्वेषां क्रमशः क्रियाम् ॥
अपामार्गः सर्ज्जरसः पाटलालकुचत्वचौ ।
उत्पाटके प्रलेपः स्यात् तैलमेभिश्च पाचयेत् ॥
शम्पाकशिग्रुपूतिकान् गोधामेदोऽथ तद्रसाम् ।
वाराहं गव्यमैणेयं पित्तं सर्पिश्च संसृजेत् ॥
लेपमुत्पुटके दद्यात् तैलमेभिश्च साधितम् ।
गौरीं सुगन्धां सश्यामामनन्तां तण्डुलीयकम् ॥
श्यावे प्रलेपनं दद्यात् तैलमेभिश्च साधितम् ।
पाठां रसाञ्जनं क्षौद्रं तथा स्यादुष्णकाञ्जिकम् ॥
दद्याल्लेपं सकण्डूके तैलमेभिश्च साधितम् ।
व्रणीभूतस्य देयं स्यादिदं तैलं विजानता ॥
मधुकक्षीरकाकोली जीवकाद्यैर्विपाचितम् ।
गोधावराहसर्पाणां वसाः स्युः कृतबृंहणे ॥
प्रलेपनमिदं दद्यादवसिच्यावमन्थके ।
प्रपौण्डरीकं मधुकं समङ्गां धवमेव च ।
तैलमेभिश्च सम्पक्वं शृणु कण्डूमतः क्रियाम् ।
सहदेवा विश्वदेवा अजाक्षीरं ससैन्धवम् ।
एतैरालेपनं दद्यात् तैलमेभिश्च साधितम् ॥
ग्रन्थिके गुटिकां पूर्व्वं स्रावयेदवपाट्य तु ।
ततः सैन्धवचूर्णन्तु घृष्ट्वालेपं प्रदापयेत् ।
लिखित्वा तत् स्रुतं घृष्ट्वा चूर्णैं रोध्रस्य जम्बुले ॥
क्षीरेण प्रतिसार्य्यैनं शुद्धं संरोपयेत् ततः ।
मधुपर्णीं मधूकञ्च मधुकं मधुना सह ।
लेपः स्राविणि दातव्यस्तैलमेभिश्च साधितम् ॥

विश्लेषितायास्त्वथ नासिकाया वक्ष्यामि सन्धानविधिं यथावत्।
नासाप्रमाणं पृथिवीरुहाणां पत्रं गृहीत्वा त्ववलम्बि तस्य ॥
तेन प्रमाणेन हि गण्डपार्श्वादुत्कृत्य बद्धन्त्वथ नासिकाग्रम्।
विलिख्य चाशु प्रतिसन्दधीत तत् साधुबन्धैर्भिषगप्रमत्तः ॥
सुसंहितं सम्यगतो यथावन्नाड़ीद्वयेनाभिसमीक्ष्य बद्धा।
प्रोन्नम्य चैनामवचूर्णयेच्च पत्तङ्गयष्टीमधुकाञ्जनैश्च ॥
संछाद्य सम्यक् पिचुना सितेन तैलेन सिञ्चेदसकृत् तिलानाम्।
घृतञ्च पाय्यः स नरः सुजीर्णे स्निग्धो विरेच्यः स यथोपदेशम् ॥
रूढ़श्च सन्धानमुपागतं स्यात् तदर्द्धशेषन्तु पुनर्निकृन्तेत्।
हीनां पुनर्वर्द्धयितुं यतेत समाञ्च कुर्य्यादतिवृद्धमांसाम् ॥ २३ ॥
नाड़ीयोगं विनौष्ठस्य नासासन्धानवद् विधिम्।
य एवमेव जानीयात् स राज्ञः कर्त्तुमर्हति ॥ २४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने कर्णव्यधबन्धविधिर्नाम षोड़शोऽध्यायः ॥ १६ ॥

विश्लेषिताया इत्यादि। विश्लेषिताया इति छिन्नायाः। पृथिवीरुहाणां वृक्षाणाम्, तस्येति छिन्ननासिकस्य पुरुषस्य, तेन प्रमाणेनेति वृक्षपत्रप्रमाणेन, उत्कृत्येति ऊर्द्धं छेदयित्वा, बद्धमिति संलग्नं यथा स्यात् मांसमिति शेषः, तदिति नासिकाग्रम्, साधुबन्धैरिति शोभनबन्धैः कृत्वा, अप्रमत्तः सावधानः सुसंहितं सम्यगभिसमीक्ष्य नाड़ीद्वयेन यथावद् बद्ध्वा। प्रोन्नम्य च प्रकृष्टं यथा स्यात् एवमुत्थाप्य, एनां नासिकामवचूर्णयेदिति सम्बन्धः। नाड़ीद्वयमत्र नलकृतं एरण्डपत्रनालकृतं वा, न तु सीसकादिवर्त्तिकाकृतम्, सा हि गुरुत्वादधो गच्छति। पत्तङ्गं रक्तचन्दनम्, अञ्जनं रसाञ्जनम्, सितेन शुक्लेन, तैलेन इत्युक्ते तिलतैलं लब्धम्, तिलानामिति यत् कृतं तत् प्रतिनिधितैलनिषेधार्थम्। पाय्यः पायितव्यः, सुजीर्णे भोजने। अन्ये त्वेवं पठन्ति—'छिन्नान्तु नासिकां दृष्ट्वा वयःस्थस्य शरीरिणः। नासानुरूपं संच्छिद्य पत्रं गण्डे निवेशयेत्' इत्यादि ॥ २३ ॥

अतश्छिन्नस्यौष्ठस्य सन्धानमाह—नाड़ीयोगमित्यादि। ओष्ठस्य सन्धानविधिः नासासन्धानवत् कर्त्तव्यः, परं नाड़ीयोगं विना, अर्हति योग्यो भवति। इदं नासासन्धानौष्ठसन्धानसूत्रं पूर्व्वाचार्य्यैरनार्षीकृतमपि जेज्झटगयदासादिभिरङ्गीकृतं सुबोधत्वेन व्याख्यातम्, तैरङ्गीकृतत्वादस्माभिरपि संगृहीतं सुबोधमपि च वैद्यपुत्रबोधार्थं व्याख्यातम्। दाक्षिणात्यास्तु भिषजः कर्णस्योपरि कोटिव्यधमत्र पठन्ति। सोऽप्यत्राप्रसिद्धो नार्षः ॥ २४ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
कर्णव्यधबन्धविधिर्नाम षोड़शोऽध्यायः ॥ १६ ॥

पञ्चवल्कैः समधुकैः पिष्टैस्तैश्च घृतान्वितैः।
जीवकाद्यैः ससर्पिष्कैर्दग्धमात्रं प्रलेपयेत् ॥ इति।

## सप्तदशोऽध्यायः।

अथात आमपक्वैषणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिधास्यन्ते अनेकाकृतयः, तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसङ्घातः शरीरैकदेशोत्थितः शोफ इत्युच्यते ॥ २ ॥

स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः। तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति। पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी, ओषादयश्चात्र वेदनाविशेषा भवन्ति। श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी, कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्व्ववर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च ॥ ३ ॥

स यदा वाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रिया-

अथात इत्यादि। आमशब्दात् पच्यमानोऽप्यत्र बोद्धव्यः। आमश्च पच्यमानश्च पक्वश्च तेषामेषणं विज्ञानं तद् विद्यते यस्मिन्नध्याये तं तथा। शोफसमुत्थाना इत्यादि। शोफसमुत्थाना इति शोथकारणाः, शोफस्यैव समुत्थानं येषामित्यन्ये। प्रायेणेति बाहुल्येन, कदाचिद् भिन्नसमुत्थाना अपि भवन्ति। तैर्विलक्षण इति तेभ्यो ग्रन्थ्यादिभ्यो व्याधिभ्य पृथगित्यर्थः। तैर्ग्रन्थ्यादिव्याधिभिः कृत्वा विलक्षणो नानाप्रकार इत्यन्ये। पृथुर्विस्तीर्णः, ग्रथितो ग्रन्थिरिवोन्नतः, जातबहुग्रन्थिरित्यन्ये। समः समस्थानः, विषमो वेति विषमसंस्थानो वा, एतेन व्रणशोफस्याकृतेरनियम उक्तः। त्वङ्मांसस्थायीति एतत् तु प्रायेण, कुतः ? शेषव्रणवस्तुष्वपि व्रणशोफस्य सम्भवात्। दोषसङ्घातः इति एकस्य द्वयोर्वा बहूनां वा दोषाणां सङ्घातः दोषसङ्घातः, सङ्घातः उच्छ्रायः। शरीरैकदेशोत्थित इति एतेन सर्व्वसराद् भिन्नत्वं प्रतिपादयति ॥ १ । २ ॥

स षड्विधो वातेत्यादि। तस्य व्रणशोफस्य, दोषरूपव्यञ्जनैरिति वातादिरूपैर्वर्णादिभिः, वातादिलक्षणैस्तोदादिभिश्चेत्यर्थः, दोषरूपव्यञ्जनैर्दोषाणां वातादीनां रूपाण्याकृतयो व्यज्यन्ते एभिरिति व्यञ्जनानीत्यन्ये। तत्र वातशोफ इत्यादि। अनवस्थितश्चलः। तोदादयश्च इत्यादिशब्दाद् भेदनच्छेदनादयः। पित्तशोफः पीत इत्यादि। ओषादयश्चेत्यादिशब्दाच्चोषपरिदाहधूमायनानि गृह्यन्ते। श्लेष्मशोफः पाण्डुरित्यादि। कण्ड्वादयश्चेत्यादिशब्दाद् गुरुत्वसुप्तत्वादयः। आगन्तुरिति पतनपीडनादिकृतः ॥ ३ ॥

स यदेत्यादि। वाह्याभ्यन्तरैरिति वाह्या आलेपनादयः, आभ्यन्तराः क्वाथपानवमनविरेचनादयः,

विपर्य्ययाद् बहुलाद् वा दोषाणाम्, तदा पाकाभिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय ॥ ४ ॥

तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताल्पशोफता चामलक्षणमुद्दिष्टम् ॥ ५ ॥

सूचीभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिस्ताभिश्च संसृप्यत इव, छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्यत इव चाङ्गुल्या, दह्यते पच्यत इव च क्षाराग्निभ्याम्, ओषचोषपरिदाहाश्च भवन्ति; वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति, त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्यमानलिङ्गम् ॥ ६ ॥

वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीडिते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीडिते मुहुर्मुहुस्तोदः कण्डूरुन्नतता व्याधेः * उपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् ॥ ७ ॥

तैः प्रशमयितुं न सम्भावितः न पारितः, न प्राप्त इत्यन्ये। क्रियाविपर्य्ययादिति अतर्पणादीनां अन्यथाभावात्। हेत्वन्तरमाह—बहुत्वाद् वा दोषाणामिति। न हि बहुदोषा विकारा शोणितावसेकादिभिरेव प्रशमं यान्ति, यदुक्तम्—"आलेपनस्रावणशोधनैश्च सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्" इति ॥ ४ ॥

तत्र मन्दोष्मतेति। स्थैर्य्यं काठिन्यम्। सूचीभिरिवेत्यादि। निस्तुद्यते भृशं व्यथ्यते, निःशब्दोऽत्र भृशार्थे। ताभिः पिपीलिकाभिः, छिद्यते इव द्विधाक्रियत इव। भिद्यते विदार्य्यत इव, शक्तिभिरायुधविशेषैः। ताड्यते आहन्यत इव, दण्डो लगुडः। घट्यते चाल्यत इव। दह्यते पच्यत इव च क्षाराग्निभ्यामिति यथासंख्यं व्याख्येयम्, तेन दह्यते भस्मसात् क्रियत इव अग्निना, पच्यत इव अङ्गारतापैरुपतप्यत इव क्षारेण। ओष एकदेशिको दाहः, चोपश्चूष्यत इव वेदनाविशेषः, परि समन्ताद्दाहः परिदाहः। आध्मातवस्तिरित्यादि। आध्मातवस्तिरिति वायुपूर्णचर्म्मसंपुटकः, आततस्त्वक्सङ्कोचरहितः, विस्तीर्ण इत्यर्थः। भक्तारुचिरिति अन्नपानादिषु श्रद्धाराहित्यं सूचयति। लिङ्गमिति लक्षणम् ॥ ५। ६ ॥

वेदनोपशान्तिरित्यादि। त्वक्परिपुटनं त्वच उत्पाटनम्, प्रत्युन्नमनमाभिमुख्येनोर्द्ध्वं नमनम्। वस्ताविवेत्यादि यथा वस्तावुदकसञ्चरणं भवति तद्वद् वैद्य एकमन्तमवयवं प्रपीडयति सति पूयस्य

* कण्डूरुन्नतव्याधिरिति पाठान्तरम्।

कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु च केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति। यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजताश्मवच्च घनता, न तत्र मोहमुपेयादिति ॥ ८ ॥

भवन्ति चात्र।

आमं विपच्यमानञ्च सम्यक्पक्वञ्च यो भिषक् ।
जानीयात् स भवेद् वैद्यः शेषास्तस्करवृत्तयः ॥ ९ ॥
वातादृते नास्ति रुजा न पाकः पित्तादृते नास्ति कफाच्च पूयः ।
तस्मात् समस्ताः परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः ॥ १० ॥
कालान्तरेणाभ्युदितन्तु पित्तं कृत्वा वशे वातकफौ प्रसह्य ।
पचत्यतः शोणितमेष पाको मतोऽपरेषां विदुषां द्वितीयः ॥ ११ ॥

तत्रामच्छेदे मांसशिरास्नाय्वस्थिसन्धिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिः वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति। स यदा भय-

सञ्चरणं शोफे भवतीत्यर्थः। मुहुर्मुहुस्तोदः वातवेदना, कण्डूः श्लेष्मवेदना। पक्वशोथे विदाहापगमेन पित्ताभावात्तल्लिङ्गाभावः। उन्नतता व्याधेरुन्नतशोफः। उपद्रवा ओपपरिदाहादयः ॥ ७ ॥

कफजेषु तु रोगेष्विति रोगोऽत्र शोफः, तत्र विषये कफजस्य गम्भीरगतित्वात् अभिघातजेषु केषु वा विवरानुप्रविष्टशल्यादिहेतुत्वात्। यत्र हि त्वक्सवर्णतेत्यादि। यत्र इति कफजेऽभिघातजे च शोफे। त्वक्सवर्णता न तु त्वग्वैवर्ण्यं, गम्भीरगतित्वादन्तःपाको वहिः पुनः त्वक्सावर्ण्यमेव, शीतशोफता वहिः, अन्तः पुनरुष्णत्वम्, गम्भीरगतित्वात् कफारब्धत्वाच्च। अल्परुजता कफारब्धत्वात्। अश्मवद् घनता शिलावत् काठिन्यम् कफारब्धत्वादवहिःपाकत्वाच्चेति। न तत्र मोहमुपेयादिति न तत्र मोहं गच्छेत्, एभिः पक्वलक्षणैः पक्वमेव जानीयादित्यर्थः। न मोहमुपेयाद् यतस्तं रक्तपाकमाचक्षते वृद्धा इत्यन्ये पठन्ति ॥ ८ ॥

आमादिलक्षणज्ञाने गुणमज्ञाने दोषञ्च दर्शयन्नाह—भवन्ति चात्र। आममित्यादि। शेषा अन्ये आमादिज्ञानवर्जिताः, तस्कराश्चौराः, तेषामिव वृत्तिर्येषां ते, प्राणापहारित्वात् ॥ ९ ॥

एकदोषारब्धा अपि पाककाले सर्व्वदोषाश्लिष्टा भवन्तीत्याह- वातादृते नास्ति रुजेति। ऋतेशब्दः कफाच्चेत्यत्रापि सम्बध्यते। त्रिभिरेव शोणितचतुर्थैः शरीरमिदं धार्य्यत इति द्वितीयं दर्शनं दर्शयन्नाह—कालान्तरेणेति। अन्तरशब्दोऽत्रावधिवाची पित्तप्रकोपप्रसरस्थानसंश्रयकालावधिना, अभ्युदितन्तु पित्तमिति समन्ततो भावेन पुनरुद्भूतं पित्तम्, कृत्वा वशे वातकफौ वातश्लेष्माणौ हीनौ कृत्वा प्रसह्य बलात्कारेण वा वशे कृत्वा, क्रोडीकृत्येत्यनेन एष मतः सम्मतः ॥ १० । ११ ॥

आमं न छिन्द्यात् पक्वं नोपेक्षेतेति दर्शयन्नाह—तत्रामच्छेदे मांसशिरेत्यादि। आमशब्दात् पच्यमानस्यापि ग्रहणात् तत्रापि एते दोषाः। व्यापादनं हिंसनं; अवदरणं विदरणं, क्षतविद्रधिः

मोहाभ्यां पक्वमप्यपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदार्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति॥ १२॥

भवन्ति चात्र।

यश्छिनत्त्याममज्ञानाद् यश्च पक्वमुपेक्षते।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ॥ १३॥
प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदातुरं भिषक्।
मद्यपं पाययेन्मद्यं तीक्ष्णं यो वेदनासहः॥ १४॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते।
तस्मादवश्यं भोक्तव्यं रोगेषूक्तेषु कर्म्मणि॥ १५॥
प्राणो ह्याभ्यन्तरो नृणां वाह्यप्राणगुणान्वितः।
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम्॥ १६॥

तैस्तैर्भावैरभिहते क्षते वेत्यादिविद्रधिनिदानोक्तः। स यदा भयमोहाभ्यामित्यादि। मोहः अज्ञानम्, चिरं प्रभूतकालम्, गम्भीरानुगतो दूरानुप्रविष्टः। उत्सङ्ग इवोत्सङ्गः, व्रणाशये हि चिरकालं पूयावस्थानेनावदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते। उत् ऊर्द्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये। अवकाशमन्तरालम्॥ १२॥

अस्यैवार्थस्य निदानार्थं चापरं श्लोकमाह—भवन्ति चात्र। यश्छिनत्त्याममित्यादि। पक्वं शोफं शस्त्रकर्म्मार्हम्। श्वपचाविव चण्डालाविव, मन्तव्यौ ज्ञातव्यौ, तौ द्वौ अनिश्चितकारिणौ आमच्छेदनपक्वोपेक्षणत्वात्। अन्ये तु नरौ श्वपचतुल्यौ आतुरव्यापादनात्। तद् व्यापादनं तौ कुतो विधत्त इत्याह—अनिश्चितकारिणौ यतोऽसमीक्ष्य विधायिनौ वैद्यौ॥ १३॥

शस्त्रकर्म्मणि पूर्व्वकर्म्माह—प्राक् शस्त्रकर्म्मणश्चेष्टमिति। इष्टं हितं हितकारि। अन्ये तु इष्टमभिप्रेतमपथ्यमपि तद् बलाधानार्थं भोजयेत्। यो वेदनां न सहते तं तीक्ष्णं मद्यं पाययेत् परं मद्यपम्। अस्यैव फलमाह—न मूर्च्छत्यन्नसंयोगादिति। शस्त्रं न बुध्यते शस्त्रवेदनां न जानातीत्यर्थः। रोगेषूक्तेष्विति मूढगर्भोदरार्शोऽश्मर्य्यादिवर्ज्जितेषु, कर्म्मणि शस्त्रप्रयोगे प्राप्ते अवश्यं ध्रुवं भोक्तव्यम्। कस्मादुक्तेषु रोगेषु भोजयेदित्याह—प्राणो ह्याभ्यन्तर इति अत्राभ्यन्तरः प्राणो बलं तच्चौजोजनितं भारहरणादिशक्तिलक्षणम्। वाह्यप्राणगुणान्वित इति वाह्यप्राणोऽत्र वाह्यं बलमुपचयलक्षणं पाञ्चभौतिकाहारजनितम्। गुणाः शरीरदार्ढ्यादिकाः, तैरन्वितः सन् आभ्यन्तरः प्राणः प्राणशक्तिलक्षणः शरीरं धारयतीत्यर्थः। अन्ये त्वन्यथा व्याख्यानयन्ति—प्राणो ह्याभ्यन्तर इति 'सम्पन्नो यवः' इतिवत् जातिविवक्षया इहैकवचनम्, तेनात्र अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि [illegible] प्राणाः, वाह्यप्राणा आग्नेयसौम्यवायव्याः

अल्पो महान् वा क्रियया विना यः
समुच्छ्रितः पाकमुपैति शोफः।
विशालमूलो विषमो विदग्धः
स कृच्छ्रतां यात्यवगाढ़दोषः॥ १७॥
आलेपविस्रावणशोधनैश्च
सम्यक्प्रयुक्तैर्यदि नोपशाम्येत्।
पच्येत शीघ्रं सममल्पमूलः
स पिण्डितश्चोपरि चोन्नतः स्यात्॥ १८॥
कक्षं समासाद्य यथैव वह्नि-
र्वाय्वीरितः सन्दहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि
मांसं शिराः स्नायु च खादतीह॥ १९॥
आदौ विम्लापनं कुर्य्याद् द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम्॥

द्रव्याणि दिवसो वायूरात्रिः शब्दस्पर्शरूपरसगन्धाश्चेति, तेषां गुणास्तैरन्वितोऽनुगतः स [
आभ्यन्तरः प्राणः शरीरं धारयतीत्यर्थः। तत्र वाह्यप्राणस्य अग्नेर्गुणैः कट्वम्लरूक्षगादिभिरनुगतः
सन् अन्तरग्निः शरीरं धारयतीत्यादिना वाह्यप्राणगुणानुगतत्वेनाभ्यन्तरप्राणस्य शरीरधारकत्व
दर्शयति, अस्माभिस्तु विस्तरभयान्न दर्शितम्। लक्षणटीप्पनकारस्तु आभ्यन्तरः प्राणः अग्नि-
षोमादिः, येन प्राणी जीवति, वाह्यप्राणोऽन्नम्, तद्गुणाः प्रीणनादयः तैरन्वितः सन् आभ्यन्तरः
प्राणः शरीरं धारयतीत्यर्थः॥ १४—१६॥

महति शोफेऽल्पे वा अप्रतिक्रियमाणे सति बहुं दोषमाह—अल्प इत्यादि। विषमो विदग्धं
इति विषमो विपक्को विषमपाक इत्यर्थः। अवगाढ़दोष इति आभ्यन्तरपूय इत्यर्थः। "यो ह्युत्थितो-
ऽल्पो यदि वा महान् वा क्रियां विना पाकमुपैति शोथः" इति केचित् पठन्ति। शोफाना-
मालेपनादिक्रियासमूहावचारणेऽपि पक्वानामुपक्रमसाफल्यं दर्शयन्नाह—आलेपनेत्यादि। पच्येत
शीघ्रं सममित्यन्ते समपाकत्वमुक्तं, स शोफः, पिण्डितो वर्त्तुलीभूतः। पक्वस्याप्युपेक्षणे शोफस्य
प्रागुक्तमेव दोषं दृष्टान्तेन दर्शयन्नाह—कक्षं समासादेत्यादि। कक्षस्तृणादिबहुलः प्रदेशः, इह
इति पक्वशोफे॥ १७—१९॥

व्रणस्य षष्टिरुपक्रमाः; तान् सूत्रस्थाने सूलणार्थं विम्लापनादीनुपक्रमान्निर्देष्टुमाह—आदौ
विम्लापनं कुर्य्यादित्यादि। विम्लापनमङ्गुल्यादिमर्द्दनेन शोफविलयनम्, अवसेचनं जलौकादिभिः

पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ २० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने आमपक्व षणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

रक्तविस्रावणम्, उपनाहो बन्धनं पाचनाय, वैकृतापहमिति सवर्णकरणरोमसञ्जननादि। अन्ये त्वन्यथापातनिकां गृह्णन्ति अन्यथैव च व्याख्यानयन्ति। अत्र व्रणस्य षष्टेरुपक्रमाणां सुखबोधार्थं लक्षणान्तरेण सप्तत्वं दर्शयन्नाह—आदौ विम्लापनमित्यादि। विम्लापनशब्दोऽत्र वहिःप्रमार्ज्जने शोफविलयनकरलेपपरिषेकाभ्यङ्गस्वेदादौ वर्त्तते, न तु मन्दवेदनस्य स्निग्धस्विन्नस शोफस्य द्विव्रणीयपठिते वेणुनालाङ्गुष्ठादिमर्द्दने, अवसेचनं विस्रावणम्, अवसेचनशब्दोऽप्यत्र वमनविरेकशोणितविस्रावणाद्यन्तर्वहिःप्रमार्ज्जने वर्त्तते, नतु केवल एव विस्रावणे, एवं शेषेष्वपि उपक्रमेषु उपक्रमान्तराणि समानेषु समानानि अन्तर्भाव्यानि ॥ २० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
आमपक्वैषणीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः ।

अथातो व्रणालेपनबन्धविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

आलेप आद्य उपक्रमः, एष सर्व्वशोफानां सामान्यः प्रधानतमश्च, तञ्च प्रतिरोगं वक्ष्यामः। ततो बन्धः प्रधानं, तेन शुद्धिर्व्रणरोपणमस्थिसन्धि-स्थैर्य्यञ्च, तत्र प्रतिलोममालिम्पेन्नानुलोमम्; प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति च रोमकूपान् स्वेदवाहिभिः शिरामुखैश्च वीर्य्यं प्राप्नोति। न च शुष्यमाणमुपेक्षेतान्यत्र पीड़यितव्याच्छुष्को ह्यपार्थकोऽरुष्करश्च * ॥ २ ॥

स त्रिविधः—प्रलेपः प्रदेह आलेपश्च। तेषामन्तरं प्रलेपः शीतस्तनुरविशोषी विशोषी वा, प्रदेहस्तूष्णः शीतो वा बहलोऽबहुरविशोषी च, मध्यमोऽत्रालेपः ॥३॥

तत्र रक्तपित्तप्रसादकृदालेपः। प्रदेहो वातश्लेष्मप्रशमनः सन्धानः शोधनो रोपणः शोफवेदनापहश्च, तस्योपयोगः क्षताक्षतेषु। यस्तु क्षतेषूपयुज्यते स भूयः

अथात इत्यादि। नन्वेष आलेप आद्य उपक्रमः कथम्? द्विव्रणीयेऽपतर्पणस्याद्यत्वेन पठितत्वात्। उच्यते—औषधद्रव्येभ्यो बहिरन्तःप्रमार्ज्जनेभ्य आलेप आद्य इत्यर्थः, आद्यसमीपत्वात् श्रेष्ठत्वाद् वा आलेपस्त्वाद्य इत्युच्यते। सर्व्वशोफानां सामान्य इति वातादिशोफानां तुल्यः, आलेपनाभेदात्। प्रधानतमश्च सर्व्वोपक्रमेभ्य आशुपीड़ाहरत्वात्। तञ्च प्रतिरोगमिति तमालेपं प्रतिरोगं रोगे रोगे वक्ष्यामः कथयिष्यामः, अस्मिन् स्थाने चिकित्सिते च। ततस्तस्मादालेपात्, अस्थिसन्धिस्थैर्य्यञ्चेति अस्थ्नः सन्धेर्दार्ढ्यं भवतीत्यध्याहारः। केचिदाचार्य्या इमं न पठन्ति। इदानीमालेपावचारणं तत्फलञ्च निर्द्देष्टुमाह—तत्रेत्यादि। प्रतिलोममालिम्पेदिति प्रतिलोमं लोमाभिमुखमालिम्पेत्; हि यस्मादर्थे। अवतिष्ठते अवस्थितिं करोति, अनुप्रविशति च, औषधमित्यनुवर्त्तते। आलेपस्यावस्थायां कर्त्तव्यतामाह—न चेत्यादि। पीड़यितव्यादिति पीड़नद्रव्यैर्मिश्रकोक्तैर्यो व्रणः पीड़नीयो भवति तस्मादन्यत्र शुष्यमाणं नोपेक्षेतेत्यर्थः। हि यस्मादर्थे। अपार्थकः निष्फलः ॥ १। २ ॥

तद्भेदानाह—स त्रिविध इत्यादि। प्रलेपप्रदेहयोर्वास्तवाभेदेऽपि व्यावहारिकं भेदं दर्शयन्नाह—तेषामन्तरमिति। अन्तरं भेदः, स्थानासनवत्। प्रलेपं लक्षणैर्निर्द्दिशन्नाह—प्रलेप इत्यादि। अविशोषी अपीड़यितव्ये व्रणशोफे, विशोषी पीड़यितव्ये, एतेन येन कल्केन चन्दनवल्लिप्यते स प्रलेपः, अन्ये शीतस्तनुरित्यादिलक्षणं प्रदेहस्येति वदन्ति। लक्षणैः प्रदेहं निर्द्दिशन्नाह—प्रदेह इत्यादि। उष्णः शीतो वेति विषयापेक्षया; तत्र वातकफबहुले उष्णः, पित्तरक्तबहुले शीतः। बहलः स्थूलः, एतेन यस्तु कल्कः पिण्डीकृत्य व्रणस्योपरि दीयते स प्रदेहः। उष्णः शीतो वेत्यादि-लक्षणं प्रलेपस्येति केचिन्मन्यन्ते। मध्यमोऽत्रालेपः। लक्षणान्तरं निर्द्दिश्य कार्य्यभेदं निर्द्दिशन्नाह—

* अरुष्करश्चेति पाठान्तरम्।

कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञः। तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमन्तर्निर्दोषता व्रणशुद्धिश्च भवति॥ ४॥

अविदग्धेषु शोफेषु हितमालेपनं भवेत्।
यथास्वं दोषशमनं दाहकण्डूरुजापहम्॥ ५॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम्।
दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम्॥ ६॥
मर्म्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम्।
संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक्॥ ७॥
षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके।
अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत्॥ ८॥

तस्य प्रमाणमार्द्रमहिषचर्म्मोत्सेधमुपदिशन्ति। न च लेपं रात्रौ प्रयुञ्जीत, मा भूच्छैत्यपिहितोष्मणः * तदनिर्गमाद् विकारप्रवृत्तिरिति।

तस्येत्यादि। तत्र तयोर्मध्ये। केचिदत्रालेपनस्थाने प्रदेह इति पठन्ति। प्रदेहो वातश्लेष्मनि, अन्ये तु प्रदेहस्थाने आलेपं पठन्ति। आलेपस्य सामान्यविषयं दर्शयन्नाह—तस्योपयोग इति। क्षताक्षतेषु व्रणशोफेष्वित्यर्थः। विषयान्तरेणालेपस्य नामान्तरमाह - यस्त्वित्यादि। तुशब्दोऽवधारणे, भूयः शब्दोऽत्र पुनरर्थे। निरुद्धा निषिद्धा। अन्ये त्वत्र निरोध्यालेपनसंज्ञमिति पठन्ति। तत्रापि स एवार्थः। कल्कसंज्ञस्यालेपस्य कर्म्म आह - तेनास्रावसन्निरोध इति। आस्रावो रक्ताद्यास्रावः। अन्तर्निर्दोषतेति दोषोऽत्र पूयः, तेनाभ्यन्तरपूयवर्ज्जितत्वम्। व्रणशुद्धिश्चेति दोषदुष्टिनिवृत्तिः। चकाराद् व्रणरोपणस्य ग्रहणम्॥ ३। ४॥

आलेपस्यात्मविषये कालावधिमाह—अविदग्धेष्वित्यादि। अविदग्धेषु आलेपनं हितम्, विदग्धेषु पुनः प्रदेह एव, यस्य उपनाह इति संज्ञान्तरम्। यथास्वं दोषशमनमिति दाहः पित्तस्य, कण्डूः कफस्य, रुजा वातस्य, एता अपहन्ति। रुजाकण्डूविनाशनमित्यन्ये पठन्ति। दूष्यप्रसादनत्वमालेपस्य निर्द्देष्टुमाह—त्वक्प्रसादनमेवाग्र्यमिति। अग्र्यं प्रधानम्, दाहकण्डूरुजापहमिति पूर्व्वस्मिन्नेव श्लोके दाहादीनां पठितत्वादिह पुनः पाठो दूष्यकृता अपि दाहादयो भवन्तीति बोधनार्थम्। तनुत्वमालेपस्य गुणः; तनुत्वं किं प्रमाणमित्याह - तस्येत्यादि। ये तु तनुत्वं प्रदेहगुणं मन्यन्ते, तेषां मते प्रदेहस्यैतत् प्रमाणम्। विशिष्टे काले आलेपावचारणविधिनिषेधे कथञ्चित् क्रियमाणे च दोषमाह—न चेत्यादि। शैत्यपिहितोष्मणः शोफस्येति शेषः, तदनिर्गमात् शोफोष्मा निःसारणात्, विकारप्रवृत्तिर्विकाराभिवृद्धिः। शैत्यरुद्धरोमकूपत्वादनिर्गच्छन्नूष्मा आलेपनात्

* शैत्यपिहिततोष्मणः इत्यन्यः पाठः।

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा।
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत्।
उपर्य्युपरि लेपन्तु न कदाचित् प्रदापयेत्॥
ऊष्माणं वेदनां दाहं घनत्वाज्जनयेत् स हि।
न च तेनैव लेपेन प्रदेहं दापयेत् पुनः।
शुष्कभावात् स निर्व्वीर्य्यो युक्तोऽपि स्यादपार्थकः॥९॥

अत ऊर्द्ध्वं व्रणबन्धनद्रव्याण्युपदेक्ष्यामः। तद्यथा—क्षौमकार्पासाविक-दुकूलकौशेयपत्रोर्ण-चीनपट्टचर्म्मान्तर्वल्कलालाबुशकललताविदल-रज्जुतूलफल-

हेतोरत्यर्थं शोफं पचतीत्यर्थः, स्वेदवाहिभिः शिरामुखश्च वीर्य्यं प्राप्नोतीत्यत ऊर्द्ध्वं बहुषु ग्रन्थेषु निबन्धपाठक्रमाद् व्यतिक्रमेण पाठक्रमोऽधिकश्च पाठो दृश्यते, स उच्यते—"तस्य प्रमाणं महिषार्द्रचर्म्मोत्सेधमुपदिशन्ति। न च शुष्यमाणमुपेक्षेतान्यत्र पीडयितव्यात्। शुष्को ह्यपार्थो रूक्षश्च। स त्रिविध आलेपः प्रदेहो लेपश्च। तेषामन्तरम्—आलेपः शीतस्तनुरविशोषी च, प्रदेहस्तूष्णः शीतो वा बहलो बहुरविशोषी च, मध्यमो लेप इति। विशेषतो रक्तपित्तप्रसाद-कृदालेपः, प्रदेहो वातश्लेष्मप्रशमनः शोधनो रोपणः शोफवेदनापहश्च। तस्योपयोगः क्षताक्षतेषु, यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते निरुद्धालेपनसंज्ञः। तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमनन्तर्दोषता व्रणशुद्धिश्च भवति। उभयगुणो लेपः। न चालेपं रात्रौ प्रयुञ्जीत, माभूच्छैत्यविहतोष्मणस्तदनिर्गमाद् विकारप्रवृत्तिरिति। त्वक्प्रसादनमेवाग्र्यं मांस-रक्तप्रसादनम्। दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम्। मर्म्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम्। संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक्। अविदग्धेषु शोथेषु हितमालेपनं भवेत्। यथास्वं दोषशमनं दाहकण्डूविनाशनम्। षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके। अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत्॥" अयं पाठो वर्त्तमानेषु पुस्तकेषु सर्व्वेष्वेव पठ्यते इत्यस्माभिः क्रममात्रं दर्शितम्, न त्वयं पठनीयः; पठनीयः पुनः प्राक्तनपाठ एव सर्व्वपूर्व्वाचार्य्य-सम्मतत्वात्॥ ५—९॥

इदानीं व्रणबन्धविधिः प्रस्तूयते, स च द्रव्याधीनः, अतस्तान्येव प्रागुपदेष्टुमाह—क्षौमेत्यादि। क्षौममतसीतन्तुभिर्व्यूतं, अन्ये वस्त्रान्तरमाहुः, कार्पासं कार्पासतन्तुरचितम्, आविकं उरभ्ररोम-व्यूतं, दुकूलं पट्टवस्त्रं, अन्ये वल्कलमाहुः; कौशेयं कोशकारकृमिलालोद्भवं, तसरमिति लोके; पत्रोर्णः रल्लकाख्यः कम्बलः, अन्ये तु यैर्हरितादीनि देवाङ्गानि उच्यन्ते ते पत्रोर्णाः, धौत-कौशेयमित्यपरे, मागधपौण्ड्रकादिदेशेषु नागवृक्षादयश्चत्वारो वृक्षाः, तत्पत्रेभ्यो जातैः हरिततन्तुभिरूर्णारूपैर्व्यूयते यत् तत् पत्रोर्णमित्येके; चीनपट्टं चीनदेशे यद्बोत्पद्यते, तद्देश-जातास्तु चीनयुगपट्टमिति वदन्ति, स च पत्रोर्णस्यैव भेदः, अन्ये नेत्रमाहुः; चर्म्म एणा-

सन्तानिकालौहानीति, तेषां व्याधिं कालञ्चावेक्ष्योपयोगः, प्रकरणतश्चैषामादेशः ॥ १० ॥

तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ ११ ॥

दीनाम्, अपरे चर्म्मबद्धं घनद्रव्यं, अथवा सुवर्णपिष्टिकादिलिप्तचर्म्मतन्तुभिस्तुरुष्कैर्यानि व्यूयन्ते तानि चर्म्मशब्देनोच्यन्ते। वाह्यवल्कलमन्तर्यञ्च त्यक्त्वा मध्यं यद् गृह्यते तत् अन्तर्वल्कलं, अलावूशकलं तुम्बीफलकर्परिका, लताविदलं श्यामलतादिपाटितार्द्धं, केचिद्विदलशब्दं चर्म्मादिभिः सह सम्बध्नन्ति, अन्ये तु विदलशब्देन वंशवेत्रादिकञ्चाहुः, लताशब्देन च श्यामलतादीनां ग्रहणं, रज्जुः मुञ्जवल्वजादिविहितः, तूलफलं शल्मलीफलादि, सन्तानिका क्षीरसन्तानिका, अन्ये कुशलसन्तानिकेति पठन्ति, कुशलसन्तानिका कोकिलवृत्तिः द्विसितन्तुरचिता चय इति लोके प्रसिद्धा मर्कटीवासं केचिदाहुः, लोहानि सुवर्णत्रपुसीसादीनि। क्व पुनस्तेषामुपयोग इत्याह—तेषामित्यादि। तेषां क्षौमादीनाम्, व्याधिं कालञ्चावेक्ष्योपयोग इति तत्र वातश्लैष्मिकं व्याधिं कालञ्च शीतमवेक्ष्य व्रणबन्धनद्रव्याणां घनानामुपयोगः, रक्तपैत्तिकं व्याधिमुष्णञ्च कालमवेक्ष्य तनूनामुपयोगः; चकाराद् गाढस्थानमवेक्ष्य घनानामुपयोगः; शिथिलस्थानमवेक्ष्य तनूनामुपयोग इति। वर्गोक्तानां व्रणबन्धनद्रव्याणां संक्षेपेणादेशमाह—प्रकरणतश्चैषामादेश इति। प्रकरणतः प्रकरणमवेक्ष्य, एषां व्रणबन्धनद्रव्याणां आदेशनं, तद्यथा—सर्पादिदष्टस्य अरिष्टाबन्धो रक्षादिभिः, रक्तातिप्रवृत्तौ रक्तनिवृत्त्यर्थं सन्तानिकया बध्नीयात्, पाटितश्यामलतादैर्भग्नसन्धानाय बन्धः कर्त्तव्यः, लौहैः सुवर्णादिभिर्दन्तान् बध्नीयात्, त्रप्वादिभिरर्श्वुदग्रन्थ्यादीन्, अलाबुशकलेन शिरोव्रणान् बध्नीयात्, एवमन्येषामपि यथार्हमादेशनम् ॥ १० ॥

इदानीं बन्धविशेषान् संख्यया निर्देष्टुमाह— तत्र कोशेत्यादि। एषामाकारं निर्देष्टुमाह—तेषामित्यादि। प्रायोग्रहणादत्रनैव सर्व्वेषामाकृतीर्वक्तुं न शक्यते, तस्मात् परतन्त्रोक्तलक्षणमप्यत्रैव सम्यगाकृतिविज्ञानाय श्लोकैरुपदेक्ष्यामः। तद्यथा—"पूरयित्वौषधैर्बन्धः क्रियते कोशकाकृतिः। कोशकाख्यः स विज्ञेयो वैदैर्यबन्धेन वर्ज्जितः। दामाकृतिं चतुष्पादां दामाख्यं स्वस्तिकं पुनः। स्वस्तिकाकृतिमासीव्य पश्चादावेष्ट्य बध्यते। अनुवेल्लितं तद्विद्यात् प्रतोलीलक्षणं शृणु। बहङ्घ्रिमुष्टिकाकारो जालवद्बहुरन्ध्रकः। प्रतोलीबन्ध एष स्यात् संज्ञान्तरमतः शृणु। गोतुण्डिकां चालनीञ्च तामेवाहुर्भिषग्वराः। मण्डलं वेष्टनाकारं विदध्यात् मण्डलाख्यके। स्थगिकादिभिरापूर्य्य भेषजैः पट्टकेन च। बध्यते मण्डलाकारो यमलव्रणयोस्तु सः। बन्धं यमकनामानं भिषजो वर्णयन्ति तम्। खट्वा तु बहुपादा स्याद् धाराभिर्बहुभिर्वृता। चीनबन्धं विजानीयात् चीराभिर्बहुभिर्वृतम्। विबन्धो विविधो बन्धः स च पट्टचीरिकायुतः। ज्ञेयो

तत्र कोशमङ्गुष्ठाङ्गुलिपर्व्वसु विदध्यात्, दाम सम्बाधेऽङ्गे, सन्धिकूर्च्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्, अनुवेल्लितन्तु शाखासु, ग्रीवामेढ्रयोः प्रतोलीम्, वृत्तेऽङ्गे मण्डलम्, अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम्, यमलव्रणयोर्यमकम्, हनुशङ्खगण्डेषु खट्वाम्, अपाङ्गयोश्चीनम्, पृष्ठोदरोरःसु विबन्धम्, मूर्द्धनि वितानम्, चिबुकनासौष्ठांसवस्तिषु गोफणाम्, जत्रुण ऊर्द्ध्वं पञ्चाङ्गीमिति। यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति तं तस्मिन् विदध्यात्। यन्त्रणमूर्द्ध्वमधस्तिर्य्यक् च ॥ १२ ॥

तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षेपमृजुमनाविद्धमसङ्कुचितं मृदुपट्ट-

वितानसंज्ञस्तु वितानाकारसंयुतः। पाषाणगुड़कोत्क्षेपकारिणीं गोफणां विदुः। तदाकृतिं भिषक् कुर्य्यात् फणस्य पञ्चकं त्रिभिः। पञ्चाङ्गीन्तु वृतां कुर्य्यात् सन्धानाय चिकित्सकः ॥ ११ ॥

बन्धविषयमाह—तत्रेत्यादि। तत्रेति चतुर्द्दशबन्धेषु मध्ये, पर्व्वशब्दोऽङ्गुष्ठाङ्गुलिभिः सह सम्बध्यते। दाम सम्बाधेऽङ्गे सङ्कटे अङ्गे। सन्धिकूर्च्चकभ्रूस्तनान्तरेति। क्षिप्रमर्म्मोपरिष्टादुभयतः कूर्च्चकः, पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रमिति मर्म्म, भ्रूस्तनान्तरमिति अन्तरशब्दः प्रत्येकं सम्बध्यते। तलमिह हस्तपादतलम्। अनुवेल्लितन्तु शाखास्विति शाखासु सक्थिबाहुषु। ग्रीवामेढ्रयोः प्रतोलीं, वृत्तेऽङ्गे मण्डलमिति बाहुपार्श्वोदरोरुपृष्ठादिकं वृत्तमङ्गम्। अङ्गुष्ठाङ्गुलिमेढ्राग्रेष्विति अग्रशब्दोऽत्राङ्गुष्ठादिभिः सह प्रत्येकं सम्बध्यते। हनुशङ्खगण्डेष्विति हनुर्मुखसन्धिः, शङ्खः भ्रूकर्णयोरन्तरं, गण्डः गल्लः। अपाङ्गयोश्चीनमिति अपाङ्गयोर्नेत्रान्तप्रदेशयोः। हृदयोर्द्ध्वं स्तनयोर्मध्यो ग्रीवामूलादधस्तादुरः। मूर्द्धा मस्तकम्। चिबुकनासौष्ठांसवस्तिषु गोफणामिति। चिबुकमोष्ठाधोमांसास्थिपिण्डिका, अंसः बाहुशिरः, वस्तिर्मूत्राशयः। उक्तं देशनियमं प्रयोजनवशेन व्यभिचारयन्नाह—यो वेत्यादि। सुनिविष्टः शोभनाकारः। बन्धो मृदुसमावगाढभेदात्त्रिविधः। स च यन्त्रणमन्तरेण न सम्भवति, अतो यन्त्रणं निर्द्देष्टुमाह—यन्त्रणमूर्द्ध्वमधस्तिर्य्यक् चेति। यन्त्रणं पट्टग्रन्थेर्बन्धनं, तच्च ऊर्द्ध्वादिभेदेन त्रिप्रकारं, व्रणाकृतीनां नानाविधत्वात्। चकार ऊर्द्ध्वादिभेदानेव समुच्चिनोति ॥ १२ ॥

बन्धावचारणं निर्द्दिशन्नाह—तत्र घनामित्यादि। तत्रेति वाक्योपक्रमे। घनां कवलिकामिति औषधवस्त्रयोरन्तरे या दीयते औषधसंस्थापनार्थम् औडुम्बरादित्वक् पत्राणि वा सा कवलिकेत्युच्यते। अन्ये द्विगुणचतुर्गुणमृदुकर्पटविरचितां कवलिकामाहुः। वामहस्तपरिक्षेपमिति वामहस्तपरिक्षेपात् दृष्ट्वा रचितो बन्धो मङ्गलमावहति। अन्ये तु पट्टे वामहस्तपरिक्षिप्ते दक्षिणहस्तेन साधुबन्धो निष्पद्यत इत्याचक्षते। अपरे तु वामदक्षिणपरिक्षेपावुभावपि विषये कर्त्तव्यौ। क्रियासौकर्य्यार्थन्तु वामहस्तपरिक्षेप उक्तः। ऋजुत्वं सन्निवेशविशेषापेक्षम्, अनाविद्धमनाकुलितम्, असङ्कीर्णमित्यपरे। असङ्कुचितं वलिवर्ज्जितम्, मृदु कोमलम्, वामहस्तपरिक्षेपऋजुत्वादि-

निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्य्याद् ग्रन्थिमाबाधकरञ्च। न च विकेशिकौषधेऽतिस्निग्धेऽतिरूक्षे विषमे वा कुर्व्वीत। यस्मादतिस्नेहात् क्लेदो रौक्ष्याच्छेदो दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति ॥ १३ ॥

तत्र व्रणायतनविशेषाद् बन्धविशेषस्त्रिविधो भवति, गाढ़ः समः शिथिल इति।

पीड़यन्नरुजो गाढ़ः सोच्छ्वासः शिथिलः स्मृतः।
नैव गाढ़ो न शिथिलः समो बन्धः प्रकीर्त्तितः॥

तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरःशिरःसु गाढ़ः, शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समः, अक्ष्णोः सन्धिषु च शिथिल इति। तत्र पैत्तिकं गाढ़स्थाने समं बध्नीयात्, समस्थाने शिथिलं, शिथिलस्थाने नैव, एवं शोणितदुष्टञ्च। श्लैष्मिकं शिथिलस्थाने समं, समस्थाने गाढ़ं, गाढ़स्थाने गाढ़तरमेवं वातदुष्टञ्च ॥ १४ ॥

गुणयुक्तं पट्टं निवेश्य संस्थाप्य बध्नीयादित्यर्थः। आबाधकरञ्चेति आ समन्ततः पीड़ाकरं ग्रन्थिं न कुर्य्यादित्यर्थः। स च वामदक्षिणपार्श्वयोस्तथा पृष्ठेऽपि क्रियमाणः स्वप्नाबाधकरो भवेदिति। तत्रौषधकल्कव्रणवर्त्त्योः स्निग्धादिभावं नियमयन्नाह—न चेत्यादि। तिलकल्कमधुघृताक्तवस्त्रस्य सूत्रस्य वा वर्त्तिः विकेशिका, सा च सपूतिमांसोत्सङ्गातिपूयगर्भेषु व्रणेषु निक्षिप्यते। औषधमिह औषधकल्कः, स च केवलकल्कः पूतिमांसोत्सङ्गगत्यस्थ्यन्तरपूयवर्ज्जितेषु व्रणेषु दीयते, एतद्विपर्य्ययव्रणेषु पुनर्व्विकेशिकौषधकल्कयोरुभयोरप्युपयोगः। विषमे दुर्न्यस्ते, अन्ये विषमे इति न पठन्ति। विकेशिकौषधयोरतिस्निग्धातिरुक्षदुर्न्यस्तयोर्द्दोषं वक्तुमाह—यस्मादतिस्नेहात् क्लेद इति। क्लेदो व्रणस्यार्द्रत्वम्, छेदः संहतयोर्व्रणौष्ठयोर्द्विधाकरणम्, दुर्न्यासात् दुष्प्रवेशात्, व्रणवर्त्म व्रणमुखम्। गयदासाचार्य्यस्तु अन्यथापातनिकां गृहीत्वा पाठमन्यथा पठति—"अतिस्नेहातिरुक्षयोर्विकेशिकौषधयोर्द्दोषं युक्तियुक्तस्नेहतो गुणञ्च वक्तुमाह—कस्मात्? अतिस्नेहात् क्लेदो रौक्ष्यात् छेदो युक्तस्नेहात् सम्यगुपरोहः" इति ॥ १३ ॥

इदानीमुक्तसंख्यकमपि बन्धं व्रणाकृतिविशेषेण त्रिविधं दर्शयन्नाह—तत्रेत्यादि। व्रणायतनविशेषादिति। व्रणानाम् आयतनं स्थानं अङ्गप्रत्यङ्गादिकं तद्विशेषाद्गाढ़ादयो बन्धविशेषा भवन्ति। ननु दोषकालविशेषादप्यग्रे बन्धविशेषाणां दर्शितत्वाद्दोषकालावप्यत्र वाच्याविति? उच्यते, दोषकालौ हि व्रणायतनविशेषमात्रकरावेवेति न पृथगुक्तौ; अन्ये तु व्रणायतनविशेषादित्यस्याग्रे चकारो लुप्तो द्रष्टव्य इति पठन्ति व्याख्यानयन्ति च—व्रणानां वातादिदोषविशेषात् तथायतनानां स्थानानामङ्गप्रत्यङ्गादिकानां तथानुक्तकालविशेषाच्च त्रयो बन्धविशेषा भवन्ति। व्रणायतनं व्रणाकारो व्रणसन्निवेश इत्यन्ये व्याचक्षते। इदं चासङ्गतमेवेति। गाढ़ादिबन्धानां लक्षणं निर्द्दिशन्नाह—पीड़यन्नरुजो गाढ़ इति। गाढ़ो बन्धः पीड़यन् गाढ़मवगाढ़मानोऽपि न रुजति। सोच्छ्वासोऽनवगाढ़कः। प्रागेव व्रणायतनविशेषाद् बन्धविशेषं निर्द्दिशन्नाह—तत्रेत्यादि। स्फिचौ कटिप्रोथौ, वङ्क्षणः ऊरुसन्धिः, मेढ्रः मेहनम्, मुष्कः अण्डकोषः। दोषविशेषाद् बन्धविशेषं निर्द्देष्टुम्

तत्र पैत्तिकं शरदि ग्रीष्मे द्विरह्नो बध्नीयाद् रक्तोपद्रुतमप्येवं, श्लैष्मिकं हेमन्त-वसन्तयोस्त्र्यहात्, वातोपद्रुतमप्येवम्। एवमभ्यूह्य बन्धविपर्य्ययंश्च कुर्व्वीत ॥१५॥

तत्र समशिथिलस्थानेषु गाढ़बन्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च, गाढ़समस्थानेषु शिथिलबन्धे विकेशिकौषधपतनं पट्टसञ्चाराद् व्रणवर्त्मावघर्षणमिति, गाढ़शिथिलस्थानेषु समबन्धे च गुणाभाव इति। अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवञ्च ॥ १६ ॥

अबध्यमानो दंशमशकतृणकाष्ठोपलपांशु-शीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणो विविधवेदनोपद्रुतश्च दुष्टतामुपैत्यालेपनादीनि चास्य विशोषमुपयान्ति ॥ १७ ॥

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम्।
अस्थिस्नायुशिराच्छिन्नमाशु बन्धेन रोहति ॥ १८ ॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति।
सुखं शय्यासनस्थस्य क्षिप्रं संरोहति व्रणः ॥ १९ ॥

आह—तत्रेत्यादि। कालविशेषादपि बन्धविशेषं दर्शयन्नाह—तत्रेत्यादि। द्विरह्नो बध्नीयादिति दिवसस्य मध्ये द्वौ वारौ बध्नीयादित्यर्थः। एवमभ्यूह्येति एवमनेन प्रकारेण अभ्यूह्य स्वयमपि वितर्क्य बन्धविपर्य्ययं बन्धस्यान्यथात्वमवस्थावशात् कुर्य्यादिति। तद् यथा—श्लैष्मिकं द्व्यहाद् बध्नीयात् प्रातर्ग्रीष्मशरदोः, हेमन्ते पैत्तिकमहरहः, वर्षादिष्वपि पित्तश्लैष्मिकं द्व्यहे सायमिति ॥ १४ । १५ ॥

गाढादिस्थानेऽप्यन्यथाकृतानां बन्धानां दोषं वक्तुमाह—तत्रेत्यादि। चकारोऽत्र रागं समुच्चिनोति। गाढ़बन्धदोषोऽयम्। यथोचितबन्धगुणमाह—अविपरीतबन्धे इत्यादि। बन्धव्यतिरेके दोषं वक्तुमाह—अबध्यमान इत्यादि। दंशो वनमक्षिका, उपलः पाषाणः, पांशुर्धूलिः, आतपो घर्म्मः, दुष्टतां वैकृतम् ॥ १६ । १७ ॥

अथ बन्धस्यात्यन्तगुणं दर्शयन्नाह—चूर्णितमित्यादि। चूर्णितं बहुधा खण्डीकृतम्, मथितं विलोड़ितम्, भग्नं काण्डभग्नम्, विश्लिष्टं सन्धिच्युतम्, अतिपातितं स्थानाच्च्युतमलम्बमानम्। छिन्नशब्दोऽस्थ्यादिभिः प्रत्येकं सम्बध्यते। चूर्णितादिषु गमनागमनस्थानशयनेष्वपि चतुर्षु बन्धः प्रशस्त इत्याह—सुखमित्यादि। शेते स्वपिति, तिष्ठति ऊर्द्ध्वीभूत आस्ते, शय्यासनस्थस्य सुखं भवतीत्यध्याहारः ॥ १८ । १९ ॥

अवन्ध्याः पित्तरक्ताभिघातविषनिमित्ताः, यदा चोषदाहपाकरागतोदवेदनाभिभूताः क्षाराग्निदग्धाः पाकात् प्रकुथिताः प्रशीर्णमांसाश्च भवन्ति ॥ २० ॥

कुष्ठिनामग्निदग्धानां पिड़का मधुमेहिनाम्।
कणिकाश्चोन्दुरुविषे विषजुष्टव्रणाश्च ये।
मांसपाके न बध्यन्ते गुदपाके च दारुणे ॥ २१ ॥
स्वबुद्ध्या विभजेच्चापि कृत्याकृत्यांश्च बुद्धिमान्।
देशं दोषञ्च विज्ञाय व्रणञ्च व्रणकोविदः।
ऋतूंश्च परिसंख्याय ततो बन्धान् निवेशयेत् ॥ २२ ॥
ऊर्द्ध्वं तिर्य्यगधस्ताच्च यन्त्रणा त्रिविधा मता।
यथा च बध्यते बन्धस्तथा वक्ष्याम्यशेषतः ॥ २३ ॥
घनां कवलिकां दत्त्वा मृदु चैवापि पट्टकम्।
विकेशिकामौषधञ्च नातिस्निग्धं समाचरेत् ॥ २४ ॥
प्रक्लेदयत्यतिस्निग्धा तथा रुक्षा क्षिणोति च।
युक्तस्नेहा रोपयति दुर्न्यस्ता वर्त्म घर्षति ॥ २५ ॥
विषमञ्च व्रणं कुर्य्यात् स्तम्भयेत् स्रावयेत् तथा।
यथाव्रणं विदित्वा तु योगं वैद्यः प्रयोजयेत् ॥ २६ ॥

येषु बन्ध एवानर्थकरस्तान् दर्शयन्नाह—अवन्ध्या इत्यादि। निमित्तशब्दः पित्तादिभिः सह प्रत्येकं सम्बध्यते। कदा पुनरेते अवन्धनीया इत्याह- यदेत्यादि। तोदाख्यैव वेदना, तया अभिभूता वातानुविद्धा इत्यर्थः। अत्र बन्धेनात्यर्थं तोदोत्पत्तिरेव स्यात्, तस्मान्न बन्धः कर्त्तव्य इति। तोददाहाभिभूता इत्यन्ये पठन्ति। यदा च शोफतोददाहरागपाकवेदनाभिभूता इति केचित् पठन्ति। पाकात् प्रकुथिताः प्रशीर्णमांसाश्च भवन्तीति ये व्रणाः पाकात् प्रतिसत्तमांसाश्च भवन्ति, तेऽपि न बन्ध्या इत्यर्थः ॥ २० ॥

उक्तानुक्तमर्थं सुखपाठार्थं श्लोकैर्निर्दिशन्नाह—कुष्ठिनामित्यादि। कुष्ठिप्रभृतीनां मांसपाके सति व्रणा न बध्यन्ते। मधुमेहिनां पिड़का इति गुदपाके च दारुण इति तथा बन्धो न कार्य्य इत्यर्थः। कृत्याकृत्यान् साध्यासाध्यान्, देशं स्फिक्कुक्षिकक्षादिकं, दोषं वातादिकं, व्रणकोविदः व्रणविद्वान्, ऋतून् शीतोष्णसाधारणान्, परिसंख्याय बुद्ध्वा निवेशयेत् कुर्य्यादित्यर्थः। केचित् सुश्रुताध्यायिनो गद्योक्तस्यार्थस्य व्यक्त्यर्थं संग्रहश्लोकान् पठन्ति—ऊर्द्ध्वमित्यादि। विषमञ्च व्रणं कुर्य्यादिति—वैषम्यमिह निम्नोन्नतत्वेन। स्तम्भयेत् स्रावयेत्तथेति स्तम्भनं स्रावणं चेह पूयस्यैवेति।

पित्तजं रक्तजं वापि सकृदेव परिक्षिपेत् ।
असकृत् कफजे वापि वातजे च विचक्षणः ॥ २७ ॥
तलेन प्रतिपीड्याथ स्रावयेदनुलोमतः ।
सर्व्वांश्च वन्धान् गूढ़ास्तान् सन्धींश्च विनिवेशयेत् ॥ २८ ॥
ओष्ठस्याप्येष सन्धाने यथोद्दिष्टो विधिः स्मृतः ।
बुद्ध्योत्प्रेक्ष्याभियुक्तेन तथा चास्थिषु जानता ॥
उत्तिष्ठतो निषण्णस्य शयनञ्चापि गच्छतः ।
गच्छतो विविधैर्यानैर्नास्य दुष्यति स व्रणः ॥ २९ ॥
ये च स्युर्मांससंस्था वै त्वग्गताश्च तथा व्रणाः ।
सन्ध्यस्थिकोष्ठप्राप्ताश्च शिरास्नायुगतास्तथा ॥
तथावगाढ़गम्भीराः सर्व्वतो विषमस्थिताः ।
नैते साधयितुं शक्या ऋते वन्धाद् भवन्ति हि ॥ ३० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणालेपनविधिर्नामाष्टादशोऽध्यायः ॥ १८ ॥

सकृदेव परिक्षिपेदिति एकवारमेव पट्टेन वेष्टयेदिति । सर्व्वांश्च वन्धानित्यादि सर्व्वान् वन्धान् सन्धींश्च सर्व्वान् गूढ़ान् तान् विनिवेशयेत् विनियोजयेत् कुर्य्यादित्यर्थः । ओष्ठस्येत्यादि । एष यथोद्दिष्टो विधिरोष्ठस्यापि सन्धाने स्मृतः । बुद्ध्योत्प्रेक्ष्येत्यादि । अभियुक्तेन जानता वैद्येन बुद्ध्या अभ्यूह्य अस्थिष्वपि सन्धानाय यथोद्दिष्टो विधिः कर्त्तव्य इति । तथेत्यादि । अवगाढ़तया गम्भीरतया इत्यर्थः । गयदासाचार्य्येणायं पाठः अनार्ष एव कृतः, तन्मतानुसारिणा ब्रह्मदेवेन क्वचिद् व्याख्यातः, ताभ्यां गृहीतत्वाद् अस्माभिर्लिखितो व्याख्यातश्च क्वचिदिति ॥ २१—३० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे व्रणालेपनबन्धविधिव्याख्यानामाष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः ।

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

व्रणितस्य प्रथममेवागारमन्विच्छेत्, तच्चागारं प्रशस्तवास्त्वादिकं कार्य्यम् ॥२॥

प्रशस्तवास्तुनि गृहे शुचावातपवर्ज्जिते ।
निवाते न च रोगाः स्युः शारीरागन्तुमानसाः ॥ ३ ॥

तस्मिन् शयनमसम्बाधं स्वास्तीर्णं मनोज्ञं प्राक्‌शिरस्कं सशस्त्रं कुर्व्वीत ॥४॥

सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी ।
प्राच्यां दिशि स्थिता देवास्तत्पूजार्थं नतं शिरः * ॥ ५ ॥

तस्मिन् सुहृद्‌भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत ॥ ६ ॥

सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः ।
आश्वासयन्तो बहुशस्त्वनुकूलाः प्रियंवदाः ॥ ७ ॥

अथातो व्रणितोपासनीयमध्यायं व्याख्यास्याम इति। व्रणितस्य सञ्जातव्रणस्य उपासनं सेवनं तच्च गृहशय्यासनादिकं, तद्विद्यते यस्मिन् स तथा। शय्यासनादिकं गृहस्थस्य कार्य्यमिति प्रागेव गृहं निर्द्देष्टुमाह—व्रणितस्य प्रथममेवेति। व्रणिन इत्यन्ये पठन्ति। तच्चागारं प्रशस्तवास्त्वादिकं कार्य्यम्। यतस्तस्मिन् तथाभूते स्थितस्य व्रणिनः शरीरे रोगा न भवेयुरिति दर्शयितुमाह—प्रशस्तवास्तुनीत्यादि। प्रशस्तवास्तुनि गृहे इति वास्तुशब्देन प्रदेशः कथ्यते, तेन प्रशस्तदेशे गृहे इत्यर्थः, प्रशस्तत्वञ्च देशस्य प्राङ्‌निम्नत्वं उदङ्‌निम्नत्वं कृष्णमृत्तिकत्वं सुवर्णमृत्तिकत्वं वेत्यादिकम्; गृहसन्निवेशार्थो भूमिस्तदधिष्ठातृपुरुषो वा वास्तुशब्देनोच्यत इत्यन्ये, तस्य प्रशस्तत्वं हि मर्म्मादिरहितत्वम् ॥ १–३ ॥

शयनस्थस्य व्रणिनः सव्रणान्यङ्गानि सुखमासत इति तदेव निर्द्दिशन्नाह—तस्मिन्नित्यादि। तस्मिन्नित्यगारे, असम्बाधमसङ्कीर्णं स्वास्तीर्णं शोभनैरास्तरणैस्तूलीगण्डोपधानैराच्छादनैश्चाच्छादितं मनोज्ञं रमणीयं सशस्त्रं शस्त्रसहितं हिंस्रनिवारणार्थम्। इत्थंभूतस्य शयनस्य गुणमाह—सुखचेष्टाप्रचारः स्यादित्यादि। चेष्टाप्रचार इति शयनपरिवर्त्तनादिगतिः। तस्मिन् शयने यथा व्रणितेन स्थातव्यं तथोपदिशन्नाह—तस्मिन्नित्यादि। सुहृद्भिरिति मित्रैः। अनुकूलैरिति आत्मनोऽनुमतवर्त्तिभिरित्यर्थः, उपास्यमानः सेव्यमानः ॥ ४–६ ॥

सुहृदुपासनफलमाह—सुहृद इत्यादि। विक्षिपन्ति विशेषेण प्रेरयन्ति स्फोटयन्तीत्यर्थः, कथाः पूर्व्वपुरुषवृत्तान्तप्रबन्धरचनाः, आश्वासयन्तः आश्वासनं कुर्व्वन्तः ॥ ७ ॥

---

* तत्पूजार्थञ्च तच्छिर इति वा पाठः।

न च दिवानिद्रावशगः स्यात् ॥ ८ ॥

दिवास्वप्नाद् व्रणे कण्डूर्गात्राणां गौरवं तथा ।
श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत् ॥ ९ ॥

उत्थानसंवेशनपरिवर्त्तनचंक्रमणोच्चैर्भाषणादिषु चात्मचेष्टास्वप्रमत्तो व्रणं संरक्षेत् ॥ १० ॥

स्थानासनं चंक्रमणं दिवास्वप्नं तथैव च ।
व्रणितो न निषेवेत शक्तिमानपि मानवः ॥
उत्थानाद्यासने स्थानं शय्या चातिनिषेविता ।
प्राप्नुयान्मारुतादङ्गे रुजस्तस्माद् विवर्ज्जयेत् ॥ ११ ॥

गम्यानाश्च तथा स्त्रीणां सन्दर्शनसम्भाषणसंस्पर्शनानि दूरतः परिहरेत् ॥ १२ ॥

स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलितं स्रवेत् ।
ग्राम्यधर्म्मकृतान् दोषान् सोऽसंसर्गेऽप्यवाप्नुयात् ॥ १३ ॥

नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुड़पिष्ट-

शयने दोषवन्तमाचारं परिहरन्नाह—न च दिवानिद्रावशगः स्यादिति । कथञ्चिद्दिवास्वप्ने कृते दोषमाह – दिवास्वप्नादित्यादि । अत्र कण्डूगौरवे कफकृते, श्वयथुवेदने वातकृते, रागः पित्तजनितः, स्रावः रक्तकृतः; एतेन दिवास्वप्नस्य अखिलदोषकर्त्तृत्वमुक्तम् । सर्व्वास्ववस्थासु व्रणसंरक्षा करणीयेति दर्शयन्नाह—उत्थानेत्यादि । संवेशनं विस्रवणम्, परिवर्त्तनं वामदक्षिणकट्योर्विलोटनं, चंक्रमणं गतागतम्, आत्मचेष्टासु उत्थानादिकासु एव अप्रमत्तः व्रणीति शेषः । चतुर्व्विधामपि व्रणिनः कायचेष्टां नियमयन्नाह— स्थानासनमित्यादि । स्थानमूर्द्धीभूतस्य स्थितिः, आसनमुपविष्टस्य स्थितिः । 'स्थानासनं चंक्रमणं यानयानातिभाषणम् । व्रणवान्न निषवेत शक्तिमानपि मानवः' इति केचित् पठन्ति । यानयानं रथादिगमनम् । उत्थानादीनामतिनिषवणाद् दोषमाह—उत्थानेत्यादि । सामान्याचारान् नियम्य विशिष्टं स्पर्शाश्रयं विहारमतिदोषकरं पृथगेव निर्द्दिशन्नाह—गम्यानामित्यादि । गम्या गमनार्हा ग्राम्यधर्म्मयोग्या इत्यर्थः, ताश्च भार्य्यावेश्याचेटीप्रभृतयः । सन्दर्शनादिषु संशब्द आभिमुख्यार्थः । कस्माद् गम्यस्त्रीणां सन्दर्शनादि परिहर्त्तव्यमित्याह— स्त्रीदर्शनादिभिरिति ॥ ८—१३ ॥

अतिदोषकरमाहारं नियमयन्नाह – नवधान्यमाषेत्यादि । कलायोऽत्र त्रिपुटकः, एतेन हरेणुसतीनकयोरप्रतिषेधः । निष्पावशब्देनात्र राजशिम्बी । हरितकमिति 'कुठेरशिग्रु सुरस सुमुखासुरिभूस्तृणाः । मूलकं चुक्रिका चेति वर्गं हरितकं विदुः' इति । अत्राम्लादयस्त्रयो रसाः । गुड़पिष्ट-

विकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्ध-तक्रप्रभृतीन् परिहरेत् ॥ १४ ॥

तक्रान्तो नवधान्यादिर्योऽयं वर्गः प्रकीर्त्तितः।
दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः ॥ १५ ॥

मद्यपश्च मैरेयाऽरिष्टासवसीधुसुराविकारान् परिहरेत् ॥ १६ ॥

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णञ्च वीर्य्यतः।
आशुकारि च तत् पीतं क्षिप्रं व्यापादयेद् व्रणम् ॥ १७ ॥

विकृतिरिति विकृतिशब्दो गुड़पिष्टाभ्यां सह सम्बध्यते। वल्लूरं शुष्कमांसम्। अजाविकानूपौदकमांसवसेति अजाविके प्रसिद्धे, आनूपशब्दो द्विविधः—व्युत्पादितोऽव्युत्पादितश्च, तत्राव्युत्पादितः पञ्चसु कूलचरादिषु वर्त्तते। अत्र तु व्युत्पादित एव ग्राह्यः। तदेवाह—अनुगता आपो यस्मिन् सोऽनूपो देशः तच्चारिणस्त्वानूपाः। ते च कूलचराः प्लवाश्चेति। औदकशब्देन पुनरत्र कोशस्थाः पादिनो मत्स्याश्चोच्य वसा शुद्धमांसस्नेहः, कृशरा तिलतण्डुलमाषैः कृता यवागूः, पायसं क्षीरसिद्धास्तण्डुलाः। अन्ये तु अजाङ्गलानूपौदकमांसेति पठन्ति। यद्यपि जाङ्गलादयोऽष्टविधास्तथाप्यत्र जङ्घालविष्किरौ जाङ्गलशब्देनोच्येते, कुतः? तयोः प्रधानतमत्वात्, यथा लवणशब्दस्याविशेषोक्तावपि प्रधानत्वात् सैन्धवं गृह्यते तद्वत्, तेनात्र जङ्घालविष्किरौ विहाय अन्येषां जाङ्गलानां प्रतिषेध इति। आनूपौदकयोरपि अजाङ्गलत्वादेव निषेधे सिद्धे पुनरुपादानं तन्मांसानामत्यर्थं दोषत्वप्रतिपादनार्थम्, अजाङ्गलमांसविकार इति निषेधमुखेन विधिप्रणयनं जङ्घालविष्किरयोरप्यवस्थायामुपयोगख्यापनार्थमिति। प्रभृतिग्रहणाद् वरकोद्दालकादीनां परिहारः ॥ १४ ॥

एषां भिन्नजातीयानामपि दोषकरत्वं प्रतिपादयन्नाह—तक्रान्त इत्यादि। ननु तक्रप्रभृतीनि परिहरेदित्यत्र प्रभृतिग्रहणाद् वरकोद्दालकादीनां ग्रहणम्, अतस्तेषामपि दोषसञ्जननत्वं पूयवर्द्धनत्वञ्च प्रतिपादनीयं, तत् कथं तक्रान्तो नवधान्यादिरिति विच्छेदः कृतः? उच्यते—वरकादिभ्यो नवधान्यादीनां तक्रान्तानामत्यर्थं दोषसंजननत्वपूयवर्द्धनत्वप्रतिपादनार्थमिति। ननु नवधान्यादौ वर्गे केचिद् वातहराः केचिच्च पित्तहराः केचिच्च कफहरास्तत्कथमुच्यते दोषसञ्जनन इति? नैष दोषः, यतोऽत्र दोषशब्देन व्रणदुष्टिरेवोच्यते। यद्यपि व्रणदुष्टिरपि दुष्टैरेव दोषैः क्रियते तथापि न दोषः, कस्मात्? निदानद्रव्याणां त्रिविधत्वात्। तद् यथा—किञ्चित् द्रव्यं दोषकारि, किञ्चित् व्याधिकारि, किञ्चिदुभयकारीति। किं बहुनोक्तेन, अत्र निबन्धकारैर्बहुधा जल्पितं, तच्चास्माभिर्विस्तरभयान्न दर्शितमिति ॥ १५ ॥

तत्र विशिष्टविषयेऽतिदोषकरत्वाद् विशिष्टं पानद्रव्यञ्चाङ्गीकृत्य निषेधार्थमाह—मद्यपश्च मैरेयेत्यादि। शस्त्रकर्म्मादावेकवारं मद्यपस्य मद्यपानं अभिहितं, तत्र व्रणे सति निषेध एव। मैरेयं सुरासवयोरेकस्मिन् भाजने सन्धानम्। अरिष्टमभयारिष्टादि। आसवाः पलाशक्षारोदकासवादयो महाकुष्ठाद्यभिहिताः। सीधुः सत्यकः, सोऽपि नानाप्रकारः पक्वरसिकरसिकादिभेदेन। सुरा

वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टश्रवणदर्शनेर्ष्यामर्षभयक्रोध-शोकध्यान-रात्रिजागरणविषमाशनशयनोपवास-वाग्व्यायामस्थानचंक्रमणशीत-वातविरुद्धाशनाजीर्णमक्षिकाद्याबाधाः परिहरेत् ॥ १८ ॥

व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः।
क्षीणशोणितमांसस्य भुक्तं सम्यङ् न जीर्य्यति ॥
अजीर्णात् पवनादीनां विभ्रमो बलवान् भवेत्।
ततः शोफरुजास्राव-दाहपाकानवाप्नुयात् ॥ १९ ॥

सदा नीचनखरोम्ना शुचिना शुक्लवाससा शान्तिमङ्गलदेवताब्राह्मणगुरुपरेण भवितव्यम्। तत् कस्य हेतोः? हिंसाविहाराणि हि महावीर्य्याणि रक्षांसि पशुपतिकुवेरकुमारानुचराणि मांसशोणितप्रियत्वात् क्षतजनिमित्तं व्रणिनमुप-सर्पन्ति सत्कारार्थं जिघांसूनि वा कदाचित् ॥ २० ॥

लोहितवर्णा, पिष्टकिण्वकल्केन किञ्चित् कलुषा। अत्र केचिदाचार्य्या एवं ब्रुवते, यानि मद्यानि अम्लादिगुणयुक्तानि भवन्ति, तानि सर्व्वाण्येव व्रणिभिर्न पातव्यानि, यानि पुनर्द्राक्षारसोद्भवानि मद्यानि अम्लादिगुणविपरीतगुणानि रक्तपित्तादिष्वभिमतानि तानि च व्रणितस्यावस्थायां कदाचिद् हातव्यानीत्ययं ग्रन्थकर्त्तुरभिप्राय इति। कुतः पुनर्म्मैरेयादयः परिहरणीया इत्याह—मद्यमम्ल-मित्यादि ॥ १६।१७ ॥

आभ्यन्तराश्रयाहारविहारौ नियम्य वाह्यानपि परिहरन्नाह—वातातपरजोधूमेति। ईर्ष्या परसम्पत्त्यसहिष्णुता, अमर्षः क्रोधः, ध्यानमनवरतकार्य्याकार्य्यचिन्तनम्। विषमाशनशयनमिति विषमशब्दः शयनाशनाभ्यां सह प्रत्येकं सम्बध्यते। बहुस्तोकाकालभोजनं विषमाशनम्, रात्रिजागरणं दिवास्वप्नश्च विषमशयनम्, तत्र विषमशयनं निषिद्धमपि पुनरत्यन्तापथ्यकारित्वेन नियमार्थम्, शीतो वातः, विरुद्धाशनं सममधुघृतादिकम् ॥ १८ ॥

कुतः पुनरेते परिहार्य्या इत्याह—व्रणिनः सम्प्रतप्तस्येत्यादि। सम्प्रतप्तस्य इति सम्यक् प्रकारेण तापितस्य। पवनादीनामिति वातपित्तकफानामित्यर्थः। विभ्रमः व्यापद्विशेषो वाता-दीनाम्, स्थानान्तरगमनं वा। शोफरुजे वातस्य, आस्रावः कफस्य, दाहपाकौ पित्तस्येति ॥ १९ ॥

आधिदैविकं विशिष्टमागन्तुबाधं परिजिहीर्षुराह—सदेत्यादि। शान्त्यादिपरेण शान्त्यादि कुर्व्वतेत्यर्थः। शिष्यहितार्थं गुरुः स्वयमेव प्रश्नं कुर्व्वन्नाह—तत् कस्य हेतोरिति। तत् नीचनख-रोमादिकरणम्। अन्ये अपि तत् कस्य हेतोरिति पठन्ति। अपिशब्दोऽत्र सानुनयप्रश्ने इति च व्याख्यानयन्ति। शिष्यहितत्वेन स्वयमेव हेतुसाकाङ्क्षं प्रश्नं कृत्वा सहेतुमुत्तरमाह—हिंसाविहाराणी-त्यादि। हिंसाविहाराणि बधक्रीड़नानि। अन्ये तु हिंसार्थं विहारश्चेष्टा येषां तानि हिंसाविहाराणि। हि यस्मादर्थे, यस्मात् क्षतजनिमित्तं व्रणिनमुपसर्पन्ति तस्मान्नीचनखादिना भवितव्यमिति। हिस्थाने अन्ये तुशब्दं यस्मादर्थे पठन्ति। रक्षांसि पशुपतिकुवेरकुमारानुचराणि महेश्वरधनदकार्त्तिकेयानुगानि

भवति चात्र।

तेषां सत्कारकामानां प्रयतेतान्तरात्मना।
धूपबल्युपहारांश्च भक्ष्यांश्चैवोपहारयेत्॥ २१॥

ते तु सन्तर्पिता आत्मवन्तं न हिंस्युः। तस्मात् सततमतन्द्रितो जनपरिवृतो नित्यं दीपोदकशस्त्रस्रग्दामपुष्पलाजाद्यलङ्कृते वेश्मनि सम्पन्मङ्गलमनोऽनुकूलाः कथाः शृण्वन्नासीत॥ २२॥

सम्पदाद्यनुकूलाभिः कथाभिः प्रीतमानसः।
आशावान् व्याधिमोक्षाय क्षिप्रं सुखमवाप्नुयात्॥ २३॥

ऋग्यजुःसामाथर्व्ववेदाभिहितैरपरैश्चाशीर्व्विधानैरुपाध्याया भिषजश्च सन्ध्ययो-रक्षां कुर्य्युः॥ २४॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च।
द्विरह्नः कारयेद् धूपं दशरात्रमतन्द्रितः॥ २५॥

तदादेशकारीणीत्यर्थः। क्षतजनिमित्तं शोणितार्थम्, सत्कारार्थं जिघांसूनि वा कदाचित् सत्कारार्थं पूजार्थमायुष्मन्तं व्रणिनमुपसर्पन्ति, गतायुषन्तु जिघांसूनीति; अन्ये त्वन्यथा व्याख्यानयन्ति—कदाचिद् वा जिघांसूनि हन्तुमिच्छन्त्युपसर्पन्ति सत्कारार्थम्॥ २०॥

तेषां सत्कारदानायाह—तेषामित्यादि। तेषामनुचराणां पूजाभिलाषिणाम्, प्रयतेतान्तरात्मना विशिष्टो वैद्यो धूपादीनुपहारयेत् दापयेदित्यर्थः। बलिः पशुवर्ज्जिता पूजा, उपहारः सपशुर्बलिः। तेषां तर्पणफलमाह—ते तु सन्तर्पितेत्यादि। आत्मवन्तं रक्षांसि हिंसितुं न शक्नुवन्ति। आत्मवांस्तु नीचनखरोमादिभिर्भवति, अतन्द्रितः अनलसः। स्रक् मूर्द्धार्हा पुष्पमाला, दाम ग्रैवेयकादि पुष्पाभरणं, पुष्पाणि अग्रथितानि, आदिशब्दाच्चन्दनादर्शवीणादयः। सम्पन्मङ्गलमनोऽनुकूला इति अनुकूलशब्दः सम्पदादिभिः प्रत्येकं सम्बध्यते। सम्पदाद्यनुकूलत्वात् श्रवणफलमाह—सम्पदाद्यनुकूलाभिरित्यादि॥ २१—२३॥

अपरामपि कर्त्तव्यतामाह—ऋग्यजुरित्यादि। आशीर्व्विधानैराशीःकरणैराशीर्व्वादैरित्यर्थः। उपाध्यायाः पुरोहिताः॥ २४॥

मक्षिकादिभ्यो राक्षसादिभ्यश्च रक्षार्थं धूपमाह—सर्षपारिष्टेत्यादि। अरिष्टपत्रं निम्बपत्रम्, लवणेन सैन्धवेन, द्विरह्न इति दिनस्य वारद्वयं प्रातः सायञ्च दशरात्रम्, सर्षपादिरक्षोघ्नहितत्वाद्यांसि रक्षांसि नैव पुनर्व्रणिनमुपसर्पन्ति॥ २५॥

छत्रातिच्छत्रे लाङ्गूलीं जटिलां ब्रह्मचारिणीं लक्ष्मीं गुहामतिगुहां वचामतिविषां शतवीर्य्यां सहस्रवीर्य्यां सिद्धार्थकांश्च शिरसा धारयेत् ॥ २६ ॥

व्यजयेत वालव्यजनैर्व्रणं न च विघट्टयेत्।
न तुदेन्न च कण्डूयेच्छयानं परिपालयेत् ॥ २७ ॥
अनेन विधिना युक्तमादावेव निशाचराः।
वनं केशरिणाक्रान्तं वर्ज्जयन्ति मृगा इव ॥ २८ ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम्।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ २९ ॥
तण्डुलीयकजीवन्ती-सुनिषण्णकवास्तुकैः।
बालमूलकवार्त्ताक-पटोलैः कारवेल्लकैः ॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः।
अन्यैरेवंगुणैर्वापि मुद्गादीनां रसेन वा।
शक्तून् विलेपीं कुल्माषं जलञ्चापि शृतं पिबेत् ॥ ३० ॥

छत्रत्यादि। छत्रातिच्छत्रे द्रोणपुष्पीद्वयम्, लाङ्गूली कपिकच्छुः, जटिला मांसी, ब्रह्मचारिणी मुण्डितिका, पत्तङ्गकाष्ठमित्यपरे; लक्ष्मीः शमी, लक्ष्मणेत्यन्ये, विष्णुक्रान्तेत्यपरे; गुहातिगुहे शालिपर्णीपृश्निपर्ण्यौ, शतवीर्य्या शतावरी, नीलदूर्व्वेत्यन्ये; सहस्रवीर्य्या श्वेतदूर्व्वा, सिद्धार्थकाः सर्षपाः ॥ २६ ॥

अन्यदप्याह—व्यजयेत बालव्यजनैरित्यादि। बालव्यजनैश्चामरैः, न च विघट्टयेत् न चालयेत्, न तुदेत् न व्यथयेत्, न कण्डूयेत् न खर्ज्जयेत् नखविषभयात्, शयानं स्वपन्तम्। केचिदमुं न पठन्ति ॥ २७। २८ ॥

एतस्य रक्षोघ्नविधेः फलं दर्शयन्नाह—अनेन विधिनेत्यादि। आहारविधिविधेयमधिकृत्याह—जीर्णशाल्योदनं स्निग्धमित्यादि। जीर्णशाल्योदनमिति नवधान्यनिषेधादेव पुराणशालीनां लाभे पुनर्जीर्णग्रहणं प्रपुराणनिषेधार्थम्; तेन वर्षोषितं ग्राह्यम्। द्रवोत्तरमिति द्रव उत्तरो यस्मिन् स द्रवोत्तरः, द्रवप्रधान इति केचिद् व्याख्यानयन्ति। इदञ्च व्याख्यानं गयदासाचार्य्यो न मन्यते, कस्मात्? व्रणिनां तोयपाननिषेधात्। तदुक्तम्—"व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्" इति, तथा भोजोऽपि "व्रणोदरास्थापनपीड़ितानां प्रमेहिणां छर्द्यतीसारिणाञ्च। द्रवं न दद्यादथ वापि कोष्णं स्वल्पं हितं भेषजसंस्कृतञ्च" इति। तथा द्वादशाशनप्रविचारेऽपि "प्रक्लिन्नदेहान् व्रणिनः शुष्कैर्मेहिन एव च" इति तस्माद् द्रवादुत्तरो द्रवोत्तरः द्रवहीनो मूर्त्तिप्रधान इति व्याख्येयम्। जाङ्गलमांसभोजनमपि रोपणकाले दातव्यम्, 'मांसं मांसेन वर्द्धते' इति वचनात्। जीवन्ती डुलिका, सुनिषण्णकाः सिरवालिकाः, चतुष्पर्णीत्यन्ये। घृतभृष्टैरित्येतेन घृतेनैव संस्कारो

दिवा न निद्रावशगो निवातगृहगोचरः।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति॥ ३१॥
( व्रणे श्वयथुरायासात् स च रागश्च जागरात्।
तौ च रुक् च दिवास्वप्नात् ताश्च मृत्युश्च मैथुनात्॥ ३२॥ )
एवंवृत्तसमाचारो व्रणी सम्पद्यते सुखी।
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा॥ ३३॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणितोपासनीयो नामैकोनविंशोऽध्यायः॥ १९॥

विधेयो नान्यैरिति। ससैन्धवैरिति सैन्धवमेव लवणेषु ग्राह्यम्। अन्यैरेवंगुणैर्वेति स्वस्थवृत्तिकैर्वन्यैश्च वेताग्रमण्डूकपर्णीककोंटकप्रभृतिभिः। मुद्गादीनां रसेन वेति शमीधान्येषु निषेधवर्ज्जं मुद्गादयः। रसेन यूषेण। शक्तूनिति यथासात्म्यं, यवसात्म्यानां यवशक्तवः, शाल्यादिसात्म्यानां तल्लाजशक्तव इति। विलेपी स्वल्पद्रवा बहुसिक्था। कुल्माषा यवपिष्टमया उत्स्विन्नाः॥२९।३०॥

यथोक्ताहाराचारानुवर्त्तिनो व्रणितस्य फलोपदर्शनपरं श्लोकद्वयमाह— दिवा न निद्रावशग इत्यादि। निवातगृहगोचर इति वातरहितागारविषयः, तत्स्थायीत्यर्थः। एवमनेन प्रकारेण वृत्तः प्राप्तः सम्यगाचारः आहारो विहारश्च येन, अथवा एवमनेन प्रकारेण वृत्तस्य समाचारः समाचरणं व्यवहरणं यस्य स एवंवृत्तसमाचारः। सम्पद्यते सुखीति सुखी भवतीत्यर्थः। यथेति सत्यम्। कश्चिदाचार्य्यस्त्वनयोः श्लोकयोर्मध्ये अमुं श्लोकं पठति— "व्रणे श्वयथुरायासात् स च रागश्च जागरात्। तौ च रुक् च दिवास्वप्नात् ताश्च मृत्युश्च मैथुनात्" इति, व्याख्यानयन्ति—स च श्वयथुः रागश्च रक्तता च जागरात् रात्रिजागराद् भवतः, तौ चेति श्वयथुरागौ रुक् व्यथा च दिवास्वप्नात् भवन्ति, ता इति श्वयथुरागरुजो मृत्युश्च मैथुनात् सम्भवन्तीत्यर्थः। श्रीगयदासाचार्य्यप्रभृतयस्तु द्वावेव श्लोकौ मन्यन्ते। इमञ्च कस्मिंश्चित् पुस्तके प्रमादपठितं दृष्ट्वा कश्चिदेवाविहितपाठं व्याख्यानयति। अस्मिंश्च स्वीक्रियमाणे निर्णीतपाठव्याख्यातृभिः श्रीगयदासप्रभृतिभिः सह विरोधः स्यात्, तस्मादयं न पठनीय इति॥ ३१—३३॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे व्रणितोपासनीयनामैकोनविंशोऽध्यायः॥ १९॥

———

# विंशोऽध्यायः ।

अथातो हिताहितीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

यद् वायोः पथ्यं तत् पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद् द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्य्या ब्रुवते। तत् तु न सम्यक्। इह खलु यस्माद् द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकन्ताहितानि हिताहितानि च भवन्ति ॥ २ ॥

तत्रैकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि। एकान्ताहितानि दहनपचनमारणादिषु प्रवृत्तान्यग्निक्षारविषादीनि। संयोगादपराणि विषतुल्यानि भवन्ति। हिताहितानि तु यद् वायोः पथ्यं तत् पित्तस्यापथ्यमिति ॥ ३ ॥

अथातो हिताहितीयमित्यादि। हिताहितान्यधिकृत्य कृतोऽध्यायो हिताहितानि वा अस्मिन् विद्यन्ते इति हिताहितीयः। प्रथमं परमतमेव दर्शयन्नाह—यद् वायोः पथ्यमित्यादि। यद् वायोः पथ्यं तत् पित्तस्यापथ्यमिति यथा तैलकाञ्जिकादि। इतिशब्दोऽयमाद्यर्थः। एकान्तेन सातत्येन किञ्चिदपि द्रव्यं हितं नास्ति, पित्तस्यापथ्यत्वात्। तथैकान्तेन नाहितमप्यस्ति, वायोः पथ्यत्वात्। वाशब्दोऽत्र समुच्चयार्थः। परमतनिषेधार्थं स्वमतमाह—तत्तु न सम्यगिति। इहेति सौश्रुते तन्त्रे। खलु निश्चयेन। स्वभावतः प्रकृतितः, या सर्व्वावस्थास्वपरित्याज्या सा द्रव्यस्य प्रकृतिः; यथा—वह्नेरुष्णत्वमपां द्रवत्वमित्यादि। संयोगत इति एकद्वित्र्यादिद्रव्येण संहतीभावः संयोगः। चकारेण संयोगेषु स्वभावोऽपि हेतुत्वेन समुच्चीयते, तथा देशकालमात्रासंस्काराश्च स्वभावानुसम्बद्धाः समुच्चीयन्ते ॥ १। २ ॥

एकान्तहितान्येव प्रथमं दर्शयन्नाह—तत्रैकान्तहितानीत्यादि। तत्रेति हिताहितद्रव्येषु मध्ये। जातिसात्म्यादिति मनुष्यजातिसात्म्यात्। आत्मना देहेन सह स्थितं द्रव्यमविकारि सात्म्यम्। प्रभृतिग्रहणात् यवगोधूमादयः। एकान्ताहितानि दर्शयन्नाह—एकान्ताहितानीत्यादि। एतान्यग्निक्षारविषादीनि एकान्ताहितानि स्वस्थानाम्, रोगिणान्तु रोगमात्राद्यपेक्षया हितान्येवेति। संयोगादित्यादि। अन्ये त्वेवं पठन्ति—'तेषामेव संयोगतस्त्वपराणि' इति, व्याख्यानयन्ति च—एकान्ताहितानीति सम्बध्यन्ते, तुशब्दश्चार्थः। तेन स्वभावसंयोगानुषक्तैर्देशादिभिरप्येकान्ताहितानि भवन्ति। हिताहितानि दर्शयन्नाह—हिताहितानि त्वित्यादि। अस्यार्थः प्रागेवाहैवाध्याये व्याख्यातः ॥ ३ ॥

अतः सर्व्वप्राणिनामयमाहारार्थं वग उपदिश्यते। तद्यथा—रक्तशालिषष्टिक-कङ्गुकमुकुन्दक-पाण्डुकपीतक-प्रमोदक-कालकाशनक-पुष्पक-कर्द्दमक-शकुनाहृत-सुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवप्रभृतयः, एणहरिण-कुरङ्गमृगमातृकाश्वदंष्ट्रा-कराल-क्रकरकपोतलावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिका-दीनां मांसानि, मुद्गवनमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेण्वाढ़कीसतीनाः, चिल्लीवास्तूकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः, गव्यं घृतं सैन्धव-दाड़िमामलकमित्येष वर्गः सर्व्वप्राणिनां सामान्यतः पथ्यतमः॥ ४॥

तथा ब्रह्मचर्य्यनिवात-शयनोष्णोदक-निशास्वप्न-व्यायामाश्चैकान्ततः पथ्यतमाः॥ ५॥

एकान्तहितान्येकान्ताहितानि च प्रागुपदिष्टानि। हिताहितानि तु यद् वायोः पथ्यं तत् पित्तस्यापथ्यमिति॥ ६॥

अत इत्यादि। रक्तशालिः स्वनाम्ना प्रसिद्धः। षष्टिकः गौरषष्टिकः, कङ्गुकः पीततण्डुलः। मुकुन्दक ईषत् कृष्णषष्टिकः। पाण्डुकः पाण्डुकशालिः, स च पाण्डुतुषयुक्तः। सुगन्धको देवशालिः। कलमः शालिविशेषः कलम्बिरिति लोके प्रसिद्धः। एते षष्टिकादयः शूकधान्येषु। नीवारः प्रसादिका-धान्यमध्ये रक्तशूको भवति, तुलजीधान्यमिति लोके प्रसिद्धः। उद्दालक आरण्यकोद्रवः। वैणवः वेणुयवः। नीवारादयस्तु शूकधान्येषु। एणः कृष्णमृगः; हरिणस्ताम्रवर्णमृगः। कुरङ्गश्चतुरङ्ग इति लोके प्रसिद्धः। मृगमातृका स्वल्पा पृथूदरा चतुरङ्गस्त्री। श्वदंष्ट्रा चतुर्द्दंष्ट्रोऽतिदुष्टः, कर्कटका इति लोके। करालः कस्तूरीमृगः, क्रकरः क्रकसपक्षी, कयारकरवारा इति भाषा। तित्तिरिः कृष्ण-तित्तिरिः। कपिञ्जलो गौरतित्तिरिः, वर्त्तीरः घर्घर इति लोके; वर्त्तिका तद्भेदः। एणादयो जाङ्गलमृगमांसेषु। लावादयो जाङ्गलपक्षिषु। मङ्गल्याः पाण्डुवर्णा मसूराः। हरेणुः सतीनभेदो वर्त्तुलकलायः। आढ़की तुवरी। सतीनो वर्त्तुलकः। मुद्गादयो वैदलसूपेषु। चिल्ली क्षेत्रवास्तुकः। वास्तुकः टङ्कवास्तुकः। सुनिषण्णकः शिरिवाटिका, चतुष्पर्णीत्यपरे। जीवन्ती डुलिका। मण्डूक-पर्णी ब्राह्मी। चिल्लीप्रभृतीनि शाकेषु। गव्यं घृतं स्नेहेषु। सैन्धवं लवणेषु। आमलकदाड़िमौ फलेषु। ननु नीवारकोद्रवोद्दालकादीनां वातकरत्वाद् वाताहितत्वं स्यात्, तत् कथं हितानीत्यु-च्यन्ते? नैवम्, अल्पवातकरत्वाददोषकरत्वव्यपदेश इति॥ ४॥

आहारमैकान्तिकं निर्द्दिश्य विहारं निर्द्दिशन्नाह— तथा ब्रह्मचर्य्येत्यादि। ब्रह्मचर्य्यं स्त्रीसेवा-निवृत्तिः। व्यायामः स्वस्थस्य मात्रया काले च पथ्यतमः। व्यायामश्चेति चकाराद् वेगा-विधारणादीनां ग्रहणम्। एकान्तहितानीत्यादि। एकान्ताहितानि सलिलादीनि। एकान्ताहितानि अग्न्यादीनि। एतानि पूर्व्वं कथितानि। हिताहितानि त्विति तुशब्दश्चार्थे, तेन हिताहितानि च प्रागुपदिष्टानि। कानि पुनस्तानि हिताहितानि प्रागुपदिष्टानीत्याह— यद् वायोः पथ्यं तत् पित्त-स्यापथ्यमिति॥ ५। ६॥

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति। तद्यथा—वल्लीफलकवककरीराम्लफल-लवणकुलत्थपिण्याक-दधि-तैलविरोहिपिष्ट-शुष्कशाकाजाविकमांस-मद्य जाम्बवचिलिचिममत्स्य-गोधावराहांश्च नैकध्यमश्नीयात् पयसा॥ ७॥

रोगं सात्म्यञ्च देशञ्च कालं देहञ्च बुद्धिमान्।
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत्॥ ८॥

अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम्।
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे॥ ९॥

द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः।
दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम्॥ १०॥

संयोगतस्त्वित्यादि। विषतुल्यानीति विषतुल्यत्वेन एकान्ताहितत्वमुक्तम्। कुतः? स्वस्थे विषस्यैकान्ताहितत्वात्। तान्येव दर्शयन्नाह—तद्यथेत्यादि। वल्लीफलं कुष्माण्डादिवल्लीजम्, अन्ये शिम्ब्यादिकमाहुः। कवकं छत्रकं, छत्रकभेदं सुखण्डकसंज्ञमित्यन्ये। करीरो वंशाङ्कुरः। अम्लफलानि आम्रातकादीनि। विरोहि विगतरोहणं चणकादिकमङ्कुरितञ्च, पिष्टं तण्डुलपिष्टम्। जाम्बवं जम्बूफलम्। चिलिचिममत्स्यः शकली लोहिताक्षो सर्व्वतो लोहितराजी प्रायो भूमौ चरति स्थलमीनसंज्ञकः। नैकध्यं नैकस्मिन् काले। एतानि वल्लीफलादीनि वराहान्तानि समस्तव्यस्तान्यपि पयसा सह नाश्नीयात्। केचिदेतस्य वर्गस्यान्ते 'अजाङ्गलमांसं स्वस्थानामन्यत्र रोगोपसृष्टेभ्यः' इति पठन्ति, व्याख्यानयन्ति च अजाङ्गलमांसं जलेशयानूपादिभेदेन पञ्चप्रकारम्॥७

विरुद्धस्यापि क्वचित् प्रयोगं दर्शयन्नाह—रोगं सात्म्यञ्चेत्यादि। रोगमुदरादिकम्। सात्म्यमष्टविधं जात्यातुरौषधान्नरसदेशर्त्तूदकभेदतः। देशमानूपादिकम्। कालं शीतोष्णवर्षलक्षणम्। देहं स्थूलकृशमध्यभेदभिन्नम्। अग्न्यादिकान् भावानिति अग्न्यादिकान् पदार्थान्। आदिशब्दात् प्रकृतिवयोबलसत्त्वादि गृह्यते। रोगवृत्तेः रोगिण इत्यर्थः। एतेन बुद्धिमानूहापोहवितर्कोद्गतधीयुक्तो वैद्यो रोगादीनवेक्ष्य एकान्ताहितमपि रोगिणः प्रयोजयेदिति। तद्यथा—उदरिणस्तिलमात्रविषभक्षणम्, कृष्णसर्पदष्टेक्षुकाण्डभक्षणञ्चेत्यादिकं बोद्धव्यम्। तस्माद्धिताहितत्वेन व्यवस्थितं द्रव्यं नास्तीत्याह—अवस्थान्तरबाहुल्यादिति। अवस्थान्तरबाहुल्यात् अवस्थाविशेषाणां प्राचुर्य्यात्। केषां अवस्थाविशेषा इत्याह रोगादीनाम्। आदिशब्दात् सात्म्यदेशादीनां ग्रहणम्। व्यवस्थितं द्रव्यं नेच्छन्तीति हितमेवेदमहितमेवेदमिति वैद्या नेच्छन्ति, अवस्थाविशेषबाहुल्यात्। किं सर्व्वत्रैव व्यवस्थितं द्रव्यं नेच्छन्तीत्याह—इच्छन्ति स्वस्थरक्षणे इति। स्वस्थरक्षणे पुनर्व्यवस्थितं द्रव्यं वैद्या इच्छन्त्येवेति। अमुमेवार्थं दर्शयन्नाह—द्वयोरित्यादि। द्वयोः स्वस्थरोगिणोः। अन्यतरादान इति सामान्योक्तावपि स्वस्थस्यैव ग्रहणम्। तेन विषदुग्धयोर्मध्ये

एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु।
एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा ॥ ११ ॥

अतोऽन्यानपि संयोगादहितानि वक्ष्यामः। न नवविरूढ़धान्यवसामधु-पयोगुड़माषर्वा ग्राम्यानूपौदकपिशितादीन्यभ्यवहरेत्। न पयोमधुभ्यां रोहिणी-शाकं जातुशाकं वाश्नीयात्। बलाकां वारुणीकुल्माषाभ्याम्, काकमाचीं पिप्पली-मरिचाभ्यां, नाड़ीभङ्गशाककुक्कुटदधीनि च नैकध्यम्। मधु चोष्णोदकानुपानं, पित्तेन च मांसानि, सुराकृशरापायसांश्च नैकध्यम्, सौवीरकेण सह तिलशष्कु-लीम्, मत्स्यैः सहेक्षुविकारान्, गुड़ेन काकमाचीम्, गुड़ेन मधुना मूलकम्, वाराहं मधुना च सह विरुद्धम्, क्षीरेण मूलकमाम्रजाम्बवश्वाविच्छूकरगोधाश्च, सर्व्वांश्च मत्स्यान् विशेषेण चिलिचिमं पयसा, कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा, लकुचफलं पयसा दध्ना माषसूपेन वा मधुना घृतेन च, प्राक् पयसः पयसोऽन्ते वा ॥ १२ ॥

दुग्धस्यैकान्तहिततां भिषजो वदन्ति—विषं पुनरेकान्ततोऽहितमिति। एवं युक्तरसेष्विति। एवमनेन स्वस्थोपयोगप्रकारेण विद्धि जानीहि। नान्यथेति नास्वस्थोपयोगप्रकारेण ॥ ८—११ ॥

अतोऽन्यान्यपीत्यादि। नवविरूढ़धान्यैरिति नवविरूढ़धान्यादिभिः सह ग्राम्यादीनां मांसादीनि नाश्नीयादित्यर्थः। नवधान्यादिभिः समस्तैर्व्यस्तैरपि ग्राम्यादीनां पिशितादीनि विरुद्धानीति। विरूढं विगताङ्कुरमङ्कुरितञ्च। न पयोमधुभ्यामित्यादि। रोहिणीशाकं कटुकाशाकम्। जातुशाकं पौष्करशाकम्। बलाकां वारुणीकुल्माषाभ्यामिति बलाका वकभेदः, वारुणी मद्यापरपर्य्यायः, कुल्माष उत्स्विन्नमाषादिः; आभ्यां सह बलाकां नाश्नीयादिति योज्यम्। काकमाचीमिति पिप्पलीमरिचाभ्यां सह काकमाचीं नाश्नीयादिति योजनीयम्। नाड़ीभङ्गशाकेति नाड़ीभङ्गशाकं नाड़ीपल्लवशाकम्, कुक्कुटस्ताम्रचूड़ः, एतानि द्विशस्त्रिशोऽपि वा नाश्नीयात्। मधु चेति न हितमित्यर्थः। पित्तेन चेति पित्तं कालखण्डलग्नम्। सुराकृशरेत्यादि सुरा मद्यभेदः, कृशरा तिलतण्डुलमाषैः कृता यवागूः, पायसं क्षीरसिद्धास्तण्डुलाः। अमून्यपि त्रिशो द्विशो वापि विरुद्धानि। सौवीरकेण सहेति सौवीरकं काञ्जिकविशेषः विरेचनाधिकारे वक्ष्यते। मत्स्यैः सहेत्यादि। इक्षुविकारान् गुड़ादीन्। गुड़ेन काकमाचीमित्यादि। अन्ये त्वेवं पठन्ति, गुड़ेन काकमाचीम्, मधुना मूलकम्, वाराहं क्षीरेण मूलकञ्च। अपरे त्वेवं पठन्ति—गुड़ेन काकमाचीं मधुना मूलकं वाराहञ्च। चकारात् मधुनेति पदं वराहेण काकमाच्या च सह सम्बध्नन्ति। आम्र-जाम्बवेत्यादि। नैकध्यमश्नीयादिति वाक्यशेषः। श्वावित् सेदिका सजारुः। सर्व्वांश्च मत्स्यानिति। ननु सर्व्वांश्च मत्स्यान् पयसा इत्यनेनैव चिलिचिममत्स्यविरोधः सिद्धः, तत् किमर्थं वल्लीफलादिषु चिलिचिममत्स्यस्य पयसा विरोधपाठः इति ? आह—विशेषेण चिलिचिममिति।

अतः कर्म्मविरुद्धान् वक्ष्यामः। कपोतान् सर्षपतैलभृष्टान् नाद्यात्। कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्व्यग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्। कांस्यभाजने दशरात्रपर्य्युषितं सर्पिः, मधु चोष्णैरुष्णे वा, मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीम्, तिलकल्कसिद्धमुपोदिकाशाकम्, नारिकेलेन वराहवसापरिभृष्टां बलाकाम्, भासमङ्गारशूल्यं नाश्नीयादिति ॥ १३ ॥

अतो मानविरुद्धान् वक्ष्यामः। मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्, स्नेहौ मधुस्नेहौ जलस्नेहौ वा, विशेषादान्तरीक्षोदकानुपानौ ॥ १४ ॥

अत ऊर्द्ध्वं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि वक्ष्यामः। तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ मधुरलवणौ च, मधुरकटुकौ च सर्व्वतः, मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ च अम्ललवणौ रसतः, अम्लकटुकौ रसविपाकाभ्याम् अम्लतिक्तावम्लकषायौ च सर्व्वतः। लवणकटुकौ रसविपा-

कदलीफलमित्यादि तालादिभिः सह कदलीफलं नाश्नीयादित्यर्थः। लकुचेत्यादि दध्यादिभिः सह लकुचफलं नाश्नीयादित्यर्थः। केचिदत्र मधुना घृतेन चेति पठन्ति, लकुचफलं नाश्नीयादिति च व्याख्यानयन्ति। अयं पाठो वर्त्तमानेषु बहुषु पुस्तकेषु पठ्यते, न तु निबन्धेषु, तस्मान्न पठनीय इति। प्राक् पयसः पयसोऽन्ते वा इति लकुचफलं नाश्नीयादिति शेषः ॥ १२ ॥

संयोगविरुद्धानभिधाय कर्म्मविरुद्धान् वक्तुमाह—अतः कर्म्मविरुद्धानिति। कर्म्मशब्देनात्र संस्कारोऽभिप्रेतः। कपिञ्जलमयूरेति एरण्डदार्व्व्यग्निसिद्धा इति एरण्डदारुहरिद्राग्निसिद्धाः, एरण्डदार्व्वग्निसिद्धा इत्यन्ये पठन्ति, एरण्डकाष्ठवह्निना सिद्धा इति च व्याख्यानयन्ति। नाद्यात् न खादेत्। दशरात्रपर्य्युषितमिति दशनिशानिवासितम्। मधु चोष्णैरिति उष्णैरुष्णस्पर्शद्रव्यैः, उष्णस्पर्शत्वं चाग्न्यादिजनितं ज्ञेयम्। उष्णे उष्णकाले ग्रीष्मे शरदि चेत्यर्थः। मत्स्यपरिपचने इति परिपचनं पात्रमुच्यते। नारिकेलेनेति वराहवसापरिभृष्टां बलाकां नारिकेलेन सह नाश्नीयादित्यर्थः। भासमिति। भासो गृध्रविशेषः स्वल्पतुण्डो धूसरवर्णः। यत् शूलेन विद्धाङ्गारेषु पक्वं तदङ्गारशूल्यम् ॥ १३ ॥

अतो मानेत्यादि। आन्तरीक्षोदकानुपानौ विशेषतो मधुस्नेहौ जलस्नेहौ वा नाश्नीयात्, तदेवं स्वभावापथ्यसंयोगकालसंस्कारमानैः पञ्च प्रकाराणि विरुद्धानि निर्दिष्टानि ॥ १४ ॥

अत ऊर्द्ध्वमित्यादि। मधुरलवणौ चेति चकारेण रसवीर्य्यविरुद्धाविति समुच्चीयते। सर्व्वत इति रसवीर्य्यविपाकतः; एवं सर्व्वत्र रसद्वन्द्वप्रकरणे सर्व्वतःशब्दो व्याख्यातव्यः। मधुरकषायौ

काभ्याम्, लवणतिक्तौ लवणकषायौ च सर्व्वतः, कटुतिक्तौ रसवीर्य्याभ्यां कटुकषायौ तिक्तकषायौ च रसतः॥ १५॥

तरतमयोगयुक्तांश्च भावानतिरुक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्ज्जयेत्॥ १६॥

भवन्ति चात्र।

विरुद्धान्येवमादीनि वीर्य्यतो यानि कानिचित्।
तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम्॥ १७॥
व्याधिमिन्द्रियदौर्ब्बल्यं मरणञ्चाधिगच्छति।
विरुद्धरसवीर्य्याणि भुञ्जानोऽसात्मवान् नरः॥ १८॥

चेति चकारेणमावपि रसविपाकाभ्यां विरुद्धाविति समुच्चीयते। कटुकषायौ चेति चकारादेतावपि रसवीर्य्याभ्यां विरुद्धाविति। मधुराम्लावित्यादिपाठेन दधिशर्करादिद्वन्द्वेपूपयोगार्हेषु न विरोधः, अन्येषु चानूपयोगार्हेषु च विरोध इति सूचितम्। श्रीगयदासादय आचार्य्या अमुं पाठमनार्षं वर्णयन्ति; कस्मात्? आदौ मधुरमश्नीयादित्यादिना सर्व्वरसाभ्यवहारस्य स्वस्थानामुक्तत्वात्, न चैकरससेवायामित्यादिना चैकरससेवाया निषिद्धत्वात्। तस्मान्न पठनीय एवायं ग्रन्थ इति। श्रीब्रह्मदेवस्त्वार्षानार्षचिन्तामकुर्व्वन्नमुं ग्रन्थं पठति व्याख्यानयति च। तत्पठितव्याख्यातत्वात् सर्व्वमतदर्शिभिरस्माभिरपि लिखितः क्वचिद्व्याख्यातश्चेति॥ १५॥

अतिशयगुणयोगयुक्ता माहिषक्षीरादिपदार्था हिता अपि स्वस्थानामेकान्ताहिता भवन्तीति दर्शयन्नाह—तरतमेत्यादि। तरतमयोगयुक्तांश्च भावानिति अतिशयस्नेहादिगुणसहितानि द्रव्याणीत्यर्थः। तानेवातिशयगुणयुक्तान् विवृण्वन्नाह—अतिस्निग्धानित्यादि। तस्मान्माहिषं दुग्धं गव्यादतिशयस्निग्धं स्वस्थस्य समाग्नेर्वर्ज्ज्यम्, अस्वस्थस्य च तीक्ष्णाग्नेः सेव्यमित्यादि द्रष्टव्यम्। युक्तांश्चेति चकारोऽतिशयगुणयुक्तानामपि पथ्यतमायुष्यतमवृष्यतमानां सेवनं समुच्चिनोति, एषामेकान्तहितत्वात्। एभ्योऽन्येऽतिशयगुणयुक्ताः स्वभावादेवैकान्ताहिता इति। एवमादीनित्यादिशब्दादन्येऽपि वीर्य्यसंज्ञका गुणाः पिच्छलविशदतीक्ष्णमृदवो गृह्यन्ते, तथा गुरुलघुवीर्य्यञ्च। अन्ये तु आदिशब्दादुक्तेभ्योऽन्येऽपि सर्व्वे गुणा गृह्यन्त इति वदन्ति॥ १६॥

अमुमेवार्थं सुखबोधार्थं संगृह्याह— विरुद्धान्येवमादीनीत्यादि। वीर्य्यत इति वीर्य्यशब्देनात्र स्निग्धादयोऽष्टौ गुणा उच्यन्ते। अथवा विंशतिगुणाः पड्रसा अप्युच्यन्ते, येन कुर्व्वन्ति तद् वीर्य्यमिति वचनात्। एवमादीनीत्युक्ते यानि कानिचिदिति यत् कृतं तत् तन्त्रान्तरोक्ताशेषविरुद्धोपग्रहार्थम्। अन्ये तु आदिशब्दात्तन्त्रान्तरोक्तानि देशकालमात्रादिविरुद्धानि लभ्यन्त इति मन्यन्ते। शेषतोऽन्यत् मापादि हिताहितं जानीयात्, कस्यचिद्दोषप्रकोपत्वात् कस्यचिद्दोषहरत्वादिति॥ १७॥

किं पुनर्विरुद्धं भुक्तं करोतीत्याह—व्याधिमित्यादि। व्याधिमिति पाण्डवान्ध्यविसर्पदकोदरविस्फोटकोन्मादभगन्दरादिकम्, इन्द्रियदौर्व्वल्यमिन्द्रियाधिष्ठानदौर्व्वल्यमिन्द्रियशक्तिदौर्व्वल्यं वा,

यत् किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत्।
रसादिष्वयथार्थं वा तद् विकाराय कल्पते ॥ १९ ॥
विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम्।
वमनं शमनं वापि पूर्व्वं वा हितसेवनम् ॥ २० ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च।
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ २१ ॥

अधिगच्छति प्राप्नोति। विरुद्धरसवीर्य्याणि भुञ्जान इति रसग्रहणं द्रव्यवीर्य्यपरिहारार्थम्, तेनोष्णस्यापि दुग्धस्य प्रयोगो भवति, क्षीरद्रव्यस्य ह्युष्णत्वं तद्गतमधुररसशैत्येन विरोधिनापि न दुष्यति, एवमुष्णपानीयस्यापीति। अनात्मवान् अबुद्धिमान्। अन्ये रसवीर्य्याणीति पठन्ति। तेषां मते रसविपाकयोरपि गुरुलघुसंज्ञयोर्विरोधो वर्ज्जनीय इति। पूर्व्वप्रतिपादिताध्यायार्थपिण्ड-दर्शनपरः श्लोकोऽयम्। तेनास्मिन्नध्याये एव यानि विरुद्धानि द्रव्याण्युक्तानि तेष्वेव रसवीर्य्य-विरोधो ज्ञेयः। न पुनरिहानुक्तानि यानि तेष्विति ॥ १८ ॥

न केवलं विरुद्धभोजनमेव व्याधिहेतुरपि तु हिताहितादीन्यपीति दर्शयन्नाह—यदित्यादि। यत् किञ्चिदित्यनेनाशेषमेवाहितं संगृहीतम्। दोषं वातादिकम्। उत्क्लेश्य प्रकोप्य। न निर्हरेदिति मदनफलत्रिवृतादिवदूर्द्ध्वं वा नाकर्षेत्, तद् विकाराय कल्पते इति सम्बन्धनीयम्। कल्पते सम्पद्यते। न केवलं दोषकरमेव व्याधये भवति, अपि तु रसादिधातुदुष्टिकरमपि व्याधये भवतीत्याह—रसादिष्वित्यादि। रसादिष्वयथार्थं वा इति रसादिधातुषु अयथार्थं प्रयोजनविरुद्धं रसादीनां जीवनादिप्रयोजनविरोधि रसादिधातुदूषणकरमित्यर्थः। दोषदुष्टिकारित्वेन धातुदूषणकरत्वं न लभ्यते, विशिष्टशक्तित्वाद् द्रव्याणाम्, तथाहि—कानिचित् दोषदुष्टिकराणि, कानिचित् धातु-दुष्टिकराणीति। तानि चात्र न कथयिष्यामो विस्तरभयात्। अन्ये तु व्याख्यानयन्ति रसादिष्विति आदिशब्दाद् वीर्य्यविपाकयोर्ग्रहणम्, तेन रसवीर्य्यविपाकेषु यद् भुक्तं सदयथार्थकरं भवति, तद् विकाराय कल्पते। जैज्झटाचार्य्यस्तु अमुं श्लोकमनार्षं कथयति। गयदासाचार्य्येण चायमङ्गी-कृतः, अतोऽस्माभिरपि लिखितो व्याख्यातश्च ॥ १९ ॥

विरुद्धाशनादुत्पन्नानां रोगाणां चिकित्सासूत्रमुद्दिशन्नाह—विरुद्धाशनजानित्यादि। प्रतिहन्ति विरेचनमिति विरुद्धाशनजव्याधिप्रत्यनीकविरेचनं प्रतिशब्देन द्योत्यते। तेन कुष्ठव्याधिप्रत्यनीकं विरेचनं विरुद्धाशनजं कुष्ठं हन्ति। एवमन्यत्रापि योजनीयम्। वमनं शमनं वापीति तत्र विरेकवमने बहुदोषाणां प्राणवताञ्च, इतरेषान्तु शमनमिति। शमनलक्षणमुच्यते—"न शोधयति यद् दोषान् समान् नोदीरयत्यपि। समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते" इति। पूर्व्वं वा हितसेवनमिति सुवर्णलोहादिविरोधि रोगहरं पूर्व्वमेव सेवेत। तदुक्तं—'न सज्जते हेमपाले विषं पद्मदलेऽम्बुवत्।" पूर्व्वं वा हितभोजनमित्यन्ये पठन्ति ॥ २० ॥

विरुद्धाशनं कुर्व्वतोऽपि कस्यचित् कुतो विरुद्धाशनजा रोगा न भवन्तीत्याह—सात्म्यतोऽल्पतया

अथ वातगुणान् वक्ष्यामः।

पूर्व्वः समधुरः स्निग्धो लवणश्चैव मारुतः।
गुरुर्विदाहजननो रक्तपित्ताभिवर्द्धनः॥
क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये।
तेषामेव विशेषेण सदा रोगविवर्द्धनः॥
वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम्।
तेषामेव विशेषेण व्रणक्लेदविवर्द्धनः॥ २२॥
मधुरश्चाविदाही च कषायानुरसो लघुः॥
दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्द्धनः।
रक्तपित्तप्रशमनो न च वातप्रकोपणः॥ २३॥
विशदो रुक्षपरुषः खरः स्नेहबलापहः।
पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः।
सद्यःप्राणक्षयकरः शोषणस्तु शरीरिणाम्॥ २४॥

वापीत्यादि। सात्म्यादिभिर्हेतुभिर्विरुद्धं वितथं निष्फलं भवतीति पिण्डार्थः। स्निग्धव्यायामबलिनामिति स्निग्धव्यायामाभ्यां बलिनामिति सम्बध्यते। तेनायमर्थः—स्निग्धद्रव्याभ्यवहारव्यायामबलिनां बलवदग्नित्वाद् विरुद्धं निष्फलं भवति। केचिद् बलिनामिति पदं भिन्नं मन्यन्ते। तेनायमर्थः—स्निग्धानां व्यायामिनां बलिनाञ्च विरुद्धं वितथं भवेदिति। सात्म्यतोऽल्पतयेत्यादि श्लोकस्याग्रे केचिदमुं श्लोकं पठन्ति, "व्यायामशीलो बलवान् शिशुश्च स्निग्धोऽग्निमांश्चापि महाशनश्च। आप्नोति रोगान् न विरुद्धजातानभ्यासतो वाल्पतया च जन्तुः" इति, अयञ्च न पठनीयः, सर्व्वनिबन्धकारैरपठितत्वात्॥ २१॥

हितस्यापि वातस्य दिक्संयोगादहितत्वं स्यादिति वातगुणान् निर्दिशन्नाह— अथ वातगुणान् वक्ष्याम इति। "वातस्य दक्षिणोत्तरगतस्य दोषहरत्वेन हितत्वम्, पूर्व्वपश्चिमवातस्याहितत्वम्, अतो हिताहितीयाध्यायपरिसमाप्तौ वातस्य गुणोपवर्णनं निर्द्दिष्टुमाह—अथ वातगुणानित्यादि" इत्यन्ये। खरः प्रचण्डवेगः, अन्ये स्वाहारद्रव्यप्रकरणादिभिरसंयोगोऽप्रस्तुत इत्यमुं वातगुणोपवर्णनग्रन्थं न पठन्त्येव। गयदासाचार्य्यस्तु अस्मिन् हिताहितीयाध्यायपाठे पूर्व्वोक्तं पाठं कियन्तं निक्षिप्य पूर्व्वोक्तपाठक्रममव्यतिक्रमेण पठति। यावता पाठेन व्यतिक्रमस्तावन्तं दर्शयन्नाह— वल्लीफलकरकरीराम्लफललवणकुलत्थपिण्याकदधितिलतैलविरोहिशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिममत्स्यगोधावराहांश्च नैकध्यमश्नीयात् पयसा, प्राक् पयसोऽन्ते वा। कपोतांश्च सर्षपतैलभृष्टान् नाद्यात्। कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्व्वग्निसिद्धा वा। मधुघृते समधृते मधु वान्तरीक्षोदकानुपानम्। कांस्यभाजने दशरात्रपर्य्युषितं सर्पिः, मधु चोष्णमुष्णेन

उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ।
कषायानुरसः शीतो दोषाणामप्रकोपणः ॥
तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्द्धनः ।
क्षीणक्षयविषार्त्तानां विशेषेण तु पूजितः ॥ २५ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने हिताहितीयो नाम विंशोऽध्यायः ॥ २० ॥

वा, दधि मधु वा, पित्तेन सह मांसानि पक्वानि आमानि च केवलान्यपि । सुराकृशरापायसांश्च नैकध्यमश्नीयात् । सौवीरकेण सह तिलशष्कुलीः । तक्रेण सह मधुघृतैर्मत्स्यगोधानां मांसानि । मधुना गोधाम्, मत्स्यान् क्षौद्रासवेन, पृषतो मांसं वा तेनैव, तथा मैरेयमाध्वीकाभ्यां बालोपदक्या वा मत्स्यान् । नेक्षुविकृतीः सर्व्वा मत्स्यैः सह । सर्पिर्गुडकाकमाचीमधुमूलकानि नैकध्यम् । मधुना वाराहम्, कौक्कुटम् दध्ना, मदेन बलाकाम्, तिलकल्केन चोपोदिकां सिद्धाम् । न पिप्पलीं मत्स्यवसया, प्रियङ्गुनुलिप्तो न पायसमश्नीयादिति । अस्याग्रे च तरतमयोगयुक्तांश्च भावानित्यादिसूत्राणि पठति । तानि च पूर्व्वसूत्रैरेव समानानीति नेह प्रदर्शितानि ॥ २२—२५ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
हिताहितीयव्याख्यानाम विंशोऽध्यायः ॥ २० ॥

---

# एकविंशोऽध्यायः ।

अथातो व्रणप्रश्नमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वातपित्तश्लेष्माण एव देहसम्भवहेतवः। तैरेवाव्यापन्नैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्य्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके॥ २

त एव च व्यापन्नाः प्रलयहेतवः; तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति ॥ ३ ॥

अथात इत्यादि। व्रणविषयः प्रश्नो यस्मिन् स व्रणप्रश्नः। व्रणशब्देनात्र वातादय उच्यन्ते; व्रणकारणत्वात्। तेन वातादिविषयः प्रश्नो यस्मिन्नित्युक्तम्। अन्ये तु व्रणमाश्रित्य प्रश्नो व्रणप्रश्नः, स विद्यते यस्मिन्नित्यर्थे उत्पन्नस्य इयप्रत्ययस्य लोपं कृत्वा व्रणप्रश्नमिति रूपं पठन्ति। तेनात्र व्रणारम्भकाणां वातादीनां संख्यास्वलक्षणकर्म्माणि व्रणस्यैव निरुक्त्यादि च वक्तव्यमित्यर्थः सिद्धः। व्रणकारणानि वातादीनि प्रथमं संख्यादिभिर्निर्दिशन्नाह—वातपित्तश्लेष्माण इत्यादि। देहसम्भवहेतवः देहोत्पत्तिहेतवः। ननु शुक्रशोणिते देहोत्पत्तिहेतुः, तत् कथं वातादयो देहसम्भवहेतवः कथ्यन्ते ? उच्यते, अविकृतवातादयः शुक्रार्त्तवादिसहकारितया देहजनका अभिप्रेता इत्यर्थः। शरीरसम्भवे वातादीनां हेतुत्वं प्रतिपाद्य स्थितिकारणत्वं दर्शयन्नाह—तैरेवाव्यापन्नैरिति। तैरेव वातपित्तश्लेष्मभिः, अव्यापन्नैः प्रकृतिस्थैरित्यर्थः। अधोमध्योर्द्ध्वसन्निविष्टैरिति यथाक्रमेण वातपित्तकफैः। दृष्टान्तमाह—अगारमिवेत्यादि। अगारं गृहम्। एकीयमतमाह—अतश्च त्रिस्थूणमाहुरेके। चकारोऽयं त्रिस्थूणमित्यत्र योज्यः, तेनायमर्थः त्रिस्थूणमिति च। अतो हेतोः, एके आचार्य्याः ॥ १। २ ॥

देहविनाशहेतुत्वमपि वातादीनां निर्द्दिशन्नाह—त एव च व्यापन्ना इति। चकारोऽत्र भिन्नक्रमे, तेनायमर्थः—त एव वातादयः, व्यापन्ना विकृतिस्थाः, प्रलयहेतवो भवन्तीत्यध्याहारः। अन्ये तु प्रलयेऽपीत्यपिशब्दं पठन्ति। शल्यशास्त्रे व्रणारम्भाधिष्ठानभूतत्वात् कस्यचिद् दूष्यस्य प्राधान्यं दर्शयन्नाह—तदित्यादि। एभिरेव वातपित्तकफैः, शोणितचतुर्थैरिति, ननु पूर्व्वं शोणितमनुपात्तं तत् कथमिह सम्भवादिषु शोणितस्याविरहितत्वमुक्तम् ? शोणितोपादानं कुर्व्वन्नेकीयमतमिदमिति दर्शयति, तेन व्रणपाके दर्शनद्वयं भवति ; तथाहि—नर्त्तेऽनिलादस्ति रुजेत्यादिना व्रणपाके दोषा एव व्याप्रियन्ते इति दर्शितम्, कालान्तरेणाभ्युदितन्तु पित्तमित्यादिना पुनः शोणितचतुर्था एव व्रणपाके व्याप्रियन्त इति। अविरहितं संयुक्तमित्यर्थः ॥ ३ ॥

भवति चात्र ।

नर्त्ते देहः कफादस्ति न पित्तान्न च मारुतात् ।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते ॥ ४ ॥

तत्र 'वा' गतिगन्धनयोरिति धातुः, 'तप' सन्तापे, 'श्लिष' आलिङ्गने । एतेषां कृद्विहितैः प्रत्ययर्वातः पित्तं श्लेष्मेति च रूपाणि भवन्ति ॥ ५ ॥

दोषस्थानान्यत ऊर्द्ध्वं वक्ष्यामः । तत्र समासेन वातः श्रोणीगुदसंश्रयः । तदुपर्य्यधो नाभेः पक्वाशयः, पक्वामाशययोर्मध्यं पित्तस्य । आमाशयः श्लेष्मणः ॥६

एतदेव द्वितीयदर्शनं श्लोकेनापि दर्शयन्नाह—नर्त्ते देहः कफादस्तीति । ननु वातादिक्रमं परित्यज्य कफादिक्रमेण सूत्रणं कस्मादिह कृतम् ? उच्यते, देहस्योर्द्ध्वमूलत्वमधःशाखत्वं प्रतिपादितम्, ऊर्द्ध्वभागे च कफाधिष्ठानमस्ति, तेनेह कफ एव प्रथमं दर्शितः । तदुक्तम् "ऊर्द्ध्वमूलमधःशाखं त्रिस्थूणं पञ्चदैवतम् । क्षेत्रज्ञाधिष्ठितं विद्वान् यो वै वेद स वेदवित्" इति । न केवलं कफादीन् विना देहो न भवति, अपि तु धारणमपि एतैरेव क्रियत इत्याह—देह एतैस्तु धार्य्यत इति । तुशब्दश्चार्थः भिन्नक्रमश्च । तेनायमर्थः—धार्य्यते च एतैरेवाव्यापन्नैः कफपित्तवातरक्तैरित्यर्थः । नर्त्ते देहः कफादित्येतस्मादौ अतो गद्योक्तस्यार्थस्य संग्रहश्लोक इत्यापतनिकां केचिदाचार्य्याः पठन्ति ॥ ४ ॥

वातादीनां चिकित्सोपयोगिनां स्वलक्षणं दर्शयितुं निरुक्तिं कुर्वन्नाह—तत्रेत्यादि । गतिगन्धोपादानार्थस्य वा धातोरसृग्दरादिभ्य इत्यादिसूत्रोत्पन्ने तप्रत्यये वात इति रूपम् । एतेन च तत्स्वरूपत्वं वातस्य दर्शितम् । सन्तापार्थस्य तपधातोरिचिप्रत्यये तकारस्यैत्वे वर्णविपर्य्यये तस्य च त्ते कृते पित्तमिति रूपम् । एतेन पित्तस्य स्वाभाविकं सन्तापलक्षणं दर्शितम् । आलिङ्गनार्थस्य श्लिषधातोर्मनिन् प्रत्यये गुणे च कृते श्लेष्मेतिरूपम् । एतेन श्लेष्मणः सन्ध्यादिवियोजनं दर्शितम् ॥ ५ ॥

तत्र कस्य दोषस्य किं स्थानं तदाह—दोषेत्यादि । दोषस्थानानीत्येतत्स्थाने तेषां स्थानानीति केचित् पठन्ति, तत्रापि स एवार्थः । तत्र दोषेषु मध्ये, समासेन संक्षेपेण, विस्तरेण तु स्थानानि वातस्य नाभिमध्यहृदयकण्ठसर्व्वाङ्गसन्धयोऽपि वातव्याधौ वक्ष्यन्ते । श्रोणिः कटिः, श्रोणिश्च गुदश्च श्रोणीगुदं, तत् संश्रयः स्थानं यस्य स तथा । पक्वामाशयोर्मध्यं पित्तस्थानं वक्ष्यति । अतः पक्वाशयमेव प्रागदर्शयन्नाह—तदुपर्य्यधो नाभेः पक्वाशय इति । तदुपरि श्रोणीगुदयोरुपरि इत्यर्थः । पित्तस्थानं दर्शयन्नाह—पक्वामाशययोर्मध्यं पित्तस्येति । समासेनेत्यत्रापि सम्बध्यते । तेनायमर्थः—पक्वामाशयमध्यं पित्तस्थानं संक्षेपेण, विस्तरेण तु यकृत्प्लीहहृदयदृष्टित्वगिन्द्रियाण्यपि पित्तस्य स्थानमिति । कफस्थानं निर्द्देष्टुमाह—आमाशयः श्लेष्मण इति । स्थानमिति शेषः । यत्राशितपीतादिकं पच्यते स आमाशयः । तथा च मुनिः—नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः । अत्रापि समासेनेति सम्बध्यते, तेन विस्तरेण उरःशिरःकण्ठसन्धयोऽपि श्लेष्मस्थानम् ॥ ६ ॥

अतः परं पञ्चधा विभज्यन्ते। तत्र वातस्य वातव्याधौ वक्ष्यामः। पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्व्वोक्तञ्च। श्लेष्मणस्तूरःशिरःकण्ठसन्धय इति पूर्व्वोक्तञ्च। एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम् ॥ ७ ॥

विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥ ८ ॥

तत्र जिज्ञास्यं, किं पित्तव्यतिरेकादन्योऽग्निः, आहोस्वित् पित्तमेवाग्निरिति? अत्रोच्यते—न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिष्वभिवर्त्तमानेष्वग्निवदुपचारः क्रियतेऽन्तरग्निरिति। क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिरेकादतिप्रवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति ॥ ९ ॥

वातादीनामप्रधानानि स्थानानि निर्द्दिश्य प्रधानानि निर्द्देष्टुमाह—अतःपरमित्यादि। विभज्यन्ते प्रकटीक्रियन्ते वातादीनां स्थानानीत्यर्थः। कानि पुनर्वातस्य स्थानानीति पृष्ट आह—तत्र वातस्येत्यादि। वातव्याधौ वक्ष्याम इति निदानस्थाने इति शेषः। पित्तस्य पञ्चस्थानान्याह—पित्तस्येत्यादि। यकृत्प्लीहानाविति यकृत् कालखण्डम्, प्लीहा वामपार्श्वाश्रयं मांसखण्डम्, हृदयं कमलमुकुलाकारमधोमुखम्। दृष्टिः कृष्णतारकान्तर्व्वर्त्तिनी मसूरदलमात्रा। चकारात् परतन्त्रोक्तं लसीकाद्यनुक्तं समुच्चीयते। पित्तेन खिन्नमांसात् स्रवदुदकम् 'लसीका' इत्युच्यते। कफस्य पञ्चस्थानानि निर्द्दिशन्नाह—श्लेष्मणस्त्वित्यादि। उरः स्तनयोरन्तरालम्, पूर्व्वोक्तञ्चेत्यामाशयः। चकारात् परतन्त्रोक्तो भेदः समुच्चीयते। एतानि स्थानानि प्रायेण प्रकृतिस्थानामेव दोषाणां भवन्तीत्याह—एतानीत्यादि। अव्यापन्नानामकुपितानाम् ॥ ७ ॥

विसर्गादानेत्यादि। विसर्गादानविक्षेपैः कर्म्मभिर्यथासंख्येन चन्द्रादित्यवाता यथा जगद् धारयन्ति, तथा कफादयस्त्रयो यथासंख्येन विसर्गादानविक्षेपैः कर्म्मभिर्द्देहं धारयन्तीति समुदायार्थः। विसर्गः सर्ज्जनं बलस्येति शेषः। आदानं ग्रहणं बलस्यैव, विक्षेपः शीतोष्णादीनां विविधप्रकारेण प्रेरणम् ॥ ८ ॥

इदानीमग्निपित्तयोर्भेदविचारप्रतिपादकं ग्रन्थं निर्द्देष्टुमाह—तत्र जिज्ञास्यं किमित्यादि। तत्र इति पित्ताग्न्योर्भेदाभेदविचारे। तत्रेति तेषु मध्ये इत्यन्ये। तत्रेति आदानकर्म्मणि। विसर्गादानविक्षेपैरित्यादिश्लोकेनादानं कर्म्म यदुक्तं तत् किं पित्तस्याग्नेर्वेति जिज्ञास्यमित्यपरे। जिज्ञास्यं ज्ञातुमेषणीयम्। आहोस्विदथवार्थः। इति संशये। उत्तरमाह—अत्रोच्यते इत्यादि। दहनं दाहः। पचनं पाकः आहारादेः, आदिशब्दात् रञ्जनदर्शनादीनि गृह्यन्ते। अग्निवदुपचारः अग्निवद् व्यवहारः क्रियते अन्तरग्निरिति, पित्तमन्तरग्निरित्युपचर्य्यत इत्यर्थः। न खल्वित्यादि-सूत्रेण प्रत्यक्षेणैव पित्तमग्निरित्युक्तम्। अनुमानेनापि पित्तस्याग्नित्वं साधयन्नाह—क्षीणे ह्यग्निगुणे इति। अग्नेर्गुणो यस्य तत् अग्निगुणं पित्तं, तस्मिन् क्षीणे। हि यस्मादर्थे। तत्समानद्रव्योपयोगात् अग्निसमोष्णतीक्ष्णद्रव्योपयोगादित्यर्थः। अग्निगुणशब्देनोष्मा कथ्यत इत्यन्ये, तत्र तत्समानद्रव्यो-

तच्चादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्व्विधमन्नपानं पचति, विवेचयति च दोषरसमूत्रपुरीषाणि तत्रस्थमेव चात्मशक्त्या शेषाणां पित्तस्थानानां शरीरस्य चाग्निकर्म्मणानुग्रहं करोति तस्मिन् पाचकोऽग्निरिति संज्ञा ॥ १० ॥

यत् तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरितिसंज्ञा, स रसस्य रागकृदुक्तः ॥ ११ ॥

यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः ॥ १२ ॥

यद्दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा ; स रूपग्रहणेऽधिकृतः ॥१३॥

यत् तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा ; सोऽभ्यङ्गपरिषेकावगाहावलेपनादीनां क्रियाद्रव्याणां पक्ता च्छायानाञ्च प्रकाशकः ॥ १४ ॥

पयोगादित्यर्थः । अतिप्रवृद्धे शीतक्रियोपयोगादिति पित्तमेवाग्निरिति शेषः । प्रत्यक्षानुमानाभ्यां पित्तस्याग्नित्वं प्रसाध्य आगमेनापि प्रसाधयन्नाह—आगमाच्चेति । आगमात् समस्तायुर्व्वेदशास्त्रतः । ननु यदि पित्ताग्न्योरभेदस्तत् कथं घृतं पित्तप्रशमनमग्निदीपनम्, अजापयो मत्स्यादयश्च पित्तवृद्धिं कुर्व्वन्ति न चाग्निदीप्तिकराः, दिवास्वप्नश्च पित्तप्रकोपणोऽप्यग्निशमनः ; तथेदमपि कथं स्यात् विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणेति । समदोषः समाग्निश्चेत्यादिकमपि कथं स्यादिति ? नैष दोषः, येनायमग्निः परमार्थतः पित्तादभिन्न एव सुश्रुतादिभिरङ्गीकृतः । तदुक्तं "क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः । पित्तञ्च केशान् पचति पलितं तेन जायते" इति । शरीरोष्मा अग्निः स चात्र पित्ताद् भिन्न एवोक्तः । तथान्यदपि पित्ताग्न्योर्भेदप्रतिपादकतन्त्रमुच्यते—"द्रवं स्निग्धमधोगञ्च पित्तवह्निरतोऽन्यथा" इति । अन्यान्यपि पित्ताग्निभेदप्रतिपादकानि वाक्यानि सन्ति, तानीह विस्तरभयान्न दर्शितानि । यत् पुनरिहाग्निपित्तयोरभेदकथनं कृतं, तद्रसवीर्य्यादिगुणोपाधियुक्तस्य पित्तस्य चिकित्साद्वारेणाग्नेश्चिकित्सा कार्य्येति दर्शनार्थम्, अन्यथा रसादिगुणोपाधिरहितस्य वह्नेश्चिकित्सा कर्त्तुं न पार्य्यत इति ॥ ९ ॥

तच्चादृष्टहेतुकेन विशेषेणेति विशेषेण भेदेन, किंविशिष्टेन अदृष्टहेतुकेन प्राक्तनकर्म्महेतुकेनेत्यर्थः । पक्वामाशयमध्यस्थमिति नाभिस्थम् । चतुर्व्विधमन्नपानं पचतीति अशितं खादितं तावत् पचति ; चतुर्व्विधमिति चर्व्यचोष्यलीढपीतमित्यर्थः । विवेचयति च पृथक्करोति रसदोषमूत्रपुरीषाणि । अत्र केचिदन्नरसपानमूत्रपुरीषाणीति पठन्ति । वातमूत्रपुरीषाणीत्यपरे । अनुग्रहं करोति उपकारं करोति ॥ १० । ११ ॥

यत् पित्तं हृदयेत्यादि । साधकः धर्म्मार्थकाममोक्षलक्षणपुरुषार्थस्य साधक इत्यर्थः । कस्मात् ? हृदयस्थकफतमोऽपनोदविस्पष्टीकृतमनःप्रागुण्यात् । यत् दृष्ट्यां पित्तमित्यादि । क्रियाद्रव्याणां क्रियानिमित्तानां कर्म्मनिमित्तानामित्यर्थः । छायानाञ्च प्रकाशक इति छायानां पाञ्चभौतिकानां नीलादीनां प्रकाशकः उत्पादकः । चकारात् प्रभाणां पाञ्चभौतिकानाञ्च प्रकाशकः । ननु

पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च।
उष्णं कटुरसञ्चैव विदग्धञ्चाम्लमेव च॥ १५॥

अत ऊर्द्ध्वं श्लेष्मस्थानान्यनुव्याख्यास्यामः। तत्रामाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीकत्वादूर्द्ध्वगतित्वात् तेजसश्चन्द्र इवादित्यस्य; स चतुर्व्विधस्याहारस्याधारः। स च तत्रोदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखजरो भवति॥ १६॥

माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात् तथैव च।
आमाशये सम्भवति श्लेष्मा मधुरशीतलः॥ १७॥

छायाप्रभयोः को भेदः? उच्यते, "आसन्ना लक्ष्यते च्छाया प्रभा दूरात् प्रकाशते। वर्णमाक्रमति च्छाया प्रभा वर्णप्रकाशिनी" इति॥ १२—१४॥

इदानीं पित्तस्य चिकित्सोपयोगि स्वलक्षणं दर्शयन्नाह— पित्तमित्यादि। तीक्ष्णं राजिकामरिचादिवत्। पूति विस्रगन्धि। नीलं सामावस्थायाम्। पीतं निरामावस्थायाम्। कटुरसं प्रकृतिस्थं पित्तम्। विदग्धं चाम्लमेवेति विरुद्धपाकोपपन्नं पुनरम्लरसं भवति। विदग्धाजीर्णं संसृष्टमम्लरसं भवतीत्यन्ये। विदग्धं पित्तमम्लपित्तमिति रोगविशेषं केचिन्मन्यन्ते। द्रवस्थाने केचित् सरमिति पठन्ति॥ १५॥

श्लेष्मस्थानानीत्यादि। अनु क्रमेण व्याख्यास्यामः, येन च क्रमेण पित्तस्थानान्युक्तानि तेनैव क्रमेणेत्यर्थः। प्राक् आमाशयः श्लेष्मस्थानमुक्तः, तमेव प्रथमं दर्शयन्नाह— तत्रामाशयः पित्ताशयस्योपरीत्यादि। तत्रेति श्लेष्मस्थानेषु पञ्चसु मध्ये, उपरिष्टात् उपरि। कस्मात् कारणात् पित्ताशयोपरीत्याह— तत्प्रत्यनीकत्वादिति। तस्य पित्तस्य प्रत्यनीकत्वात् प्रतिपक्षत्वाद्विगुणत्वादित्यर्थः। द्वितीयं हेतुमाह—ऊर्द्ध्वगतित्वात्तेजस इति। एतेनैतदुक्तं भवति, यदि हि पार्श्वयोरधो वा आमाशयो भवेत् तदा उदकस्याधोगामित्वान्निष्प्रत्यनीकत्वम्। ततश्च निष्प्रत्यनीकोऽग्निः शरीरमेव दहेत्, इति प्रत्यक्षेण पित्ताशयस्योपरि आमाशयं प्रसाध्य अनुमानेनापि साधयन्नाह— चतुर्व्विधस्याहारस्येति। चतुर्व्विधस्याहारस्याधारश्चतुर्व्विधस्य अशितपीतलीढ़खादितस्य आधारः स्थानम्। तेजस्त्वावदूर्द्ध्वगामि। यदि चाधः आमाशयो भवेत्, तदा चतुर्व्विधमाहारं न पचेत्, पचति च, तेनानुमीयते आमाशयः पित्ताशयस्योपर्य्येवेति। स च इति चतुर्व्विधाहारः। औदकैर्गुणैरिति द्रवस्नेहादिभिः, द्रवगुणैः भिन्नसंघातः स्नेहेन प्रक्लिन्न इति बोद्धव्यः। सुखजरो भवति सुखेन परिणामं गच्छतीत्यर्थः॥ १६॥

अथ के औदका गुणा इत्याह— माधुर्य्यादित्यादि। माधुर्य्यादयः आहारस्येति शेषः, चकारद्वयेन द्रवस्नेहादयो गुणा अनुक्ता अपि समुच्चीयन्ते। सम्भवतीति प्रकुप्यति, न पुनरभूतप्रादुर्भावेण, कफस्य रसधातुत एव उत्पन्नत्वात्॥ १७॥

स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदककर्म्मणानुग्रहं करोति। उरःस्थस्त्रिकसन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति। जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते। शिरःस्थः स्नेहसन्तर्पणाधिकृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्वसन्ध्यनुग्रहं करोति॥ १८॥

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च।
मधुरस्त्वविदग्धः स्याद् विदग्धो लवणः स्मृतः॥ १९॥

शोणितस्य स्थानं यकृत्-प्लीहानौ, तच्च प्रागभिहितम्; तत्रस्थमेव शेषाणां शोणितस्थानानामनुग्रहं करोति॥ २०॥

अनुष्णशीतं मधुरं स्निग्धं रक्तञ्च वर्णतः।
शोणितं गुरु विस्रं स्याद् विदाहश्चास्य पित्तवत्॥ २१॥

एतानि खलु दोषस्थानानि, एषु सञ्चीयन्ते दोषाः। प्राक् सञ्चयहेतुरुक्तः। तत्र सञ्चितानां खलु दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता

स तत्रस्थ एवेत्यादि। स श्लेष्मा, तत्रस्थ आमाशयस्थः, स्वशक्त्या आत्मवीर्य्येण। उदककर्म्मणेति क्लेदनपूरणादिना। द्वितीयस्थानस्य कर्म्म दर्शयन्नाह—उरःस्थस्त्रिकसन्धारणमिति। त्रिकं शिरोबाहुद्वयसन्धानस्थानम्। आत्मवीर्य्येणेति प्राकृतगुणेन। हृदयावलम्बनं हृदयस्य स्वकार्य्यसामर्थ्यं करोति। शिरःस्थः स्नेहसन्तर्पणेति स्नेहसन्तर्पणाधिकृतत्वात् स्नेहने सन्तर्पणे चाधिकृतत्वात्; अथवा स्नेहेन सन्तर्पणं तत्राधिकृतत्वात्। अन्ये तु व्याख्यानयन्ति—स्नेहो मस्तकमज्जा, तस्य सन्तर्पणं तत्राधिकृतत्वात्। इन्द्रियाणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानाम्, अनुग्रहं करोति स्वकार्य्यसामर्थ्यं जनयति। सन्धिस्थस्तु श्लेष्मेत्यादि स्पष्टम्॥ १८॥

इदानीं कफलिङ्गज्ञानार्थं चिकित्सार्थञ्च लक्षणं दर्शयन्नाह—श्लेष्मा श्वेत इत्यादि। शीत एव चेति चकारो मृदुस्थिरादिगुणसमुच्चयार्थः। अविदग्धः अपक्वो मधुररसो भवति, विदग्धः पक्वो लवण इति। अन्ये त्वन्यथा व्याख्यानयन्ति—अविदग्धः प्रकृतिस्थ अप्रदुष्टः मधुररसः श्लेष्मा भवति, विदग्धो विकृतिस्थः प्रदुष्टो लवणरसः; अथवा विदग्धात्पाकाल्लवण इति॥ १९॥

तदेवं दोषान् प्रथमदर्शनोक्तानभिधाय शोणितचतुर्थैरित्यस्य दर्शनस्याभिप्रेतं शोणितस्थानं दर्शयन्नाह—शोणितस्येत्यादि। तच्च प्रागभिहितं शोणितवर्णनीये उक्तम्॥ २०॥

शोणितस्य निदानलिङ्गचिकित्साज्ञानार्थं स्वलक्षणं दर्शयन्नाह—अनुष्णेत्यादि। अनुष्णशीतमिति साधारणमित्यर्थः। विस्रमामगन्धि, विदाहश्चास्य पित्तवदिति पित्तस्येव, पित्तस्य येन वस्तुना यथा च विदाहस्तेन वस्तुना तथा च विदाहः शोणितस्यापीत्युक्तम्॥ २१॥

प्रतिपादितं नियमयन्नाह—एतानि खलु दोषेत्यादि। एषु स्थानेषु दोषाः सञ्चयं यान्तीत्यर्थः।

चाङ्गानां गौरवमालस्यं चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति। तत्र प्रथमः क्रियाकालः ॥ २२ ॥

अत ऊर्द्ध्वं प्रकोपणानि वक्ष्यामः। तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययन-प्रपतनप्रधावनप्रपीड़नाभिघातलङ्घनप्लवनतरणरात्रिजागरणभारहरणगजतुरङ्गरथ-पदातिचर्य्याकटुकषायतिक्तरुक्षलघुशीतवीर्य्य-शुष्कशाकवल्लूरवरकोद्दालककोर-दूषश्यामाकनीवारमुद्ग-मसूराढ़कीहरेणुकलायनिष्पावानशनविषमाशनाध्यशन-वातमूत्रपुरीष-शुक्रच्छर्दि-क्षवथूद्गार-वाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोप-मापद्यते ॥ २३ ॥

स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः।
प्रत्यूषस्यपराह्णे तु जीर्णेऽन्ने च प्रकुप्यति ॥ २४ ॥

किं पुनर्दोषाणां सञ्चये हेतुरित्याह—प्राक् सञ्चयहेतुरिति। प्रागिति ऋतुचर्य्याध्याये। सञ्चितानां वातादीनां यथासंख्यं लिङ्गं दर्शयन्नाह—तत्र सञ्चितानामित्यादि। सामान्येन सर्व्वेषां सञ्चितानाम्, संहतिरूपा वृद्धिश्चयः विलयनरूपा वृद्धिः प्रकोपः। स्तब्धपूर्णकोष्ठतेति कोष्ठताशब्दः स्तब्धपूर्णाभ्यां प्रत्येकं सम्बध्यते, तेन स्तब्धकोष्ठतापूर्णकोष्ठते वायोर्लिङ्गम्, पीतावभासता मन्दोष्मता च पित्तस्य, गौरवमालस्यञ्च श्लेष्मणः। एतानि स्तब्धपूर्णकोष्ठतादिलिङ्गानि सामान्येन सर्व्वेषा-मेव सञ्चितानामित्यपि केचिन्मन्यन्ते। चयकारणविद्वेषश्चेति सामान्येन सर्व्वेषां वातादीनामिदं लिङ्गम्। चयकारणविद्वेषश्चेति वाक्यं केचिन्न पठन्ति। केचिदाचार्य्या अस्याग्रे चयप्रकोपयोर्लक्षणं श्लोकेन पठन्ति, 'स्वस्थानवृद्धिर्दोषाणामित्यादि'। अयं श्लोकोऽभावात् समग्रो न लिखित इति। तत्र प्रथमः क्रियाकाल इति तत्र वातादीनां सञ्चये, प्रथमः क्रियाकालः आद्यः कर्म्मावसरः ॥ २२ ॥

कानि पुनस्तानीत्याह—अत ऊर्द्ध्वं प्रकोपणानीत्यादि। तत्र बलवद्विग्रहेत्यादि। बलवद्विग्रहः मल्लादिभिः सह बाहुयुद्धादिः। अतिशब्दो व्यायामादिभिस्त्रिभिः सम्बध्यते। व्यवायः स्त्रीसेवा। अभिघातः लगुड़ादिभिः प्रहारः। लङ्घनं रयेण गर्त्तादुत्क्रमणम्। प्लवनम् उत्प्लुत्योत्प्लुत्य गमनम्। प्रतरणं नद्यादीनां बाहुभ्यां तरणम्। अतिचर्य्या अत्यटनम्, सा च गजादिभिः पदान्तैः प्रत्येकं सम्बध्यते। वल्लूरं शुष्कमांसम्। वरको वरटिका, कुधान्यविशेषः। उद्दालकः आरण्यकोद्रवः। नीवारः प्रसाधिका, धान्यमध्ये रक्तशूको भवति ; उलजिधान्यमिति लोके। आढ़की तुवरी। हरेणुः वर्त्तुलकलायः। कलायस्त्रिपुटकः। निष्पावो राजशिम्बिः। अनशनम् अल्पभोजनमुपवासश्च। विषमाशनं बह्वल्पाकालभोजनम्। अध्यशनं साजीर्णभोजनम्। वेगविघातो वेगावरोधः, स च वातमूत्रादिभिः प्रत्येकं सम्बध्यते। क्षवथुः छिक्का। वाष्पशब्देन रोदनजलं कथ्यते। आदिशब्दात् क्षुधादिवेगविघातादयो गृह्यन्ते ॥ २३ ॥

वातप्रकोपहेतुं कालं पृथगुपदिशन्नाह—स शीतेत्यादि। स वायुः, शीते शीतकाले, अभ्रे मेघोपलक्षितकाले, प्रवाते प्रकृष्टवाते काले, घर्म्मान्ते वर्षाकाले, विशेषतोऽतिशयेन। आर्त्तवं

क्रोधशोक-भयायासोपवास-विदग्धमैथुनोपगमन-कट्वम्ललवणतीक्ष्णोष्णलघु-विदाहि-तिलतैलपिण्याक-कुलत्थ-सर्षपातसीहरितकशाक-गोधामत्स्याजाविक-मांस-दधितक्रकूर्च्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वराकंप्रभृतिभिः पित्तं प्रकोपमापद्यते ॥ २५ ॥

तदुष्णरुष्णकाले च मेघान्ते च विशेषतः।
मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति ॥ २६ ॥

दिवास्वप्नाव्यायामालस्यमधुराम्ललवणस्निग्धगुरु-पिच्छिलाभिष्यन्दिहायनक-यवकनैषधेत्कटमाषमहामाषगोधूमतिलपिष्टविकृतिदधिदुग्धकृशरापायसेक्षुविकारानूपौदक-मांस--वसाविसमृणाल--कशेरुक--शृङ्गाटक--मधुरवल्लीफलसमशनाध्यशन-प्रभृतिभिः श्लेष्मा प्रकोपमापद्यते ॥ २७ ॥

कालमुक्त्वा आह्निकमाह—प्रत्यूषस्यपराह्ने त्विति। भुक्तापेक्षं कालमाह—जीर्णेऽन्ने च प्रकुप्यतीति ॥ २४ ॥

पित्तप्रकोपणानि दर्शयन्नाह—क्रोधशोकभयेत्यादि। आयासः शरीरपीडा। विदग्धं विदाहः, स च शोफरोगाहारादिकृतः। विदाहीति यदम्लोद्गारदाहतृष्णाप्रभृतीनुदीर्य्य कृच्छ्रात् पाकमुपगच्छति तद् विदाहि। हरितकशाकमिति "कुठेरशिग्रु सुरससुमुखासुरिभूस्तृणाः। चुक्रकश्चुक्रिका चेति वर्गं हरितकं विदुः" इति। दधि सस्नेहं गव्यम्। कूर्च्चिका विग्रथितं तक्रम्। मस्तु दधिमस्तु। सौवीरकं निस्तुषयवत्रिवृदादिकृतं सन्धानं धान्याम्लं वा। सुराविकाराः पैष्टिकादयः। अम्लफलानि आम्रातकादीनि। कट्वरमिति अस्नेहं दधि। अन्ये भाषन्ते—"सौवीराम्लसथात्यम्लं काञ्जिकं कट्वरं विदुः। अन्ये तु तदधोभागं तक्रच्चात्यम्लतां गतम्। सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्" प्रभृतिशब्दाच्चुक्रादीनां ग्रहणम् ॥ २५ ॥

पित्तप्रकोपस्य कालं दर्शयन्नाह—तदुष्णैरित्यादि। तदिति पित्तम्। उष्णैरिति उष्णत्वमत्र घर्म्मादिकृतम्। उष्णकाले ग्रीष्मे। मेघान्ते शरदि। आह्निकं पित्तप्रकोपस्य कालमाह—मध्याह्ने इत्यादि। भुक्तापेक्षं पित्तप्रकोपस्य कालमाह—जीर्य्यत्यन्ने च कुप्यतीति। पित्तप्रकोपणेषु मध्ये शोकभययोर्वातप्रकोपणयोः पाठोऽनार्षं इति जैज्झटः। स चान्यैर्निबन्धकारैरनुपहतत्वादस्माभिरपि गृहीत इति ॥ २६ ॥

कफप्रकोपणानि निर्दिशन्नाह—दिवास्वप्नाव्यायामेत्यादि। अभिष्यन्दि दोषधातुमलस्रोतसाम् अतिशयक्लेदप्राप्तिजननम्। हायनको घोटकपुच्छः, स च शालिविशेषः। यवकः शूकधान्यविशेषः, तस्य च यवाकारास्तण्डुलाः। नैषधः "कोरक" इत्याख्यायते, स च धान्यविशेषः। इत्कटः खग्गली। पिष्टं तण्डुलपिष्टम्। कृशरा तिलतण्डुलमाषैः कृता यवागूः। पायसः क्षीरसिद्धतण्डुलाः। विसं पद्ममूलं विसाण्ड इति लोके। मृणालं पद्ममूलात् स्थूलप्ररोहाङ्कुरः। शृङ्गाटकः

स शीतः शीतकाले च वसन्ते च विशेषतः ।
पूर्व्वाह्णे च प्रदोषे च भुक्तमात्रे च कुप्यति ॥ २८ ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिश्चाहारैर्दिवास्वप्न-क्रोधानलातप-श्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते ॥ २९ ॥

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ।
तस्मात् तस्य यथादोषं कालं विद्यात् प्रकोपण ॥ ३० ॥

तेषां प्रकोपात् कोष्ठतोदसञ्चरणाम्लिकापिपासापरिदाहान्नद्वेषहृदयोत्क्लेदाश्च जायन्ते । तत्र द्वितीयः क्रियाकालः ॥ ३१ ॥

अत ऊर्द्ध्वं प्रसरं वक्ष्यामः । तेषामेभिरातङ्कविशेषैः प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति, तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः सत्यप्यचैतन्ये, स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्व्वभावानाम् ॥ ३२ ॥

जलमध्ये त्रिकण्टकम् । मधुरवल्लीफलमिति मधुरफलं तालनारिकेलादि, वल्लीफलमलाबूप्रभृति, अन्ये कुष्माण्डकादीनि ॥ २७ ॥

कफकोपकालविशेषं निर्द्दिशन्नाह—स शीतैरित्यादि । शीतैः शीतलद्रव्यैः । पूर्व्वाह्णे प्रथमप्रहरे । प्रदोषे रजनीमुखे ॥ २८ ॥

द्वितीये दर्शने शोणितचतुर्थैरित्युक्तेः शोणितस्य चतुर्थस्य कोपनानि दर्शयन्नाह—पित्तेत्यादि । पित्तप्रकोपणैरेव चेति पित्तशोणितयोः समानत्वात् । तस्यैव विशिष्टमपि हेतुं दर्शयन्नाह—अभीक्ष्णं द्रवेत्यादि । अभीक्ष्णञ्च पुनःपुनः सेवितैरिति शेषः ॥ २९ ॥

न च स्वातन्त्र्येणास्य प्रकोपः, किन्तु सर्व्वदा पारतन्त्र्येणैव, तत् प्रतिपादयन्नाह—यस्मादित्यादि । तत्र वातदुष्टं वातप्रकोपकाले कुप्यति, एवं पित्तकफदुष्टस्य रक्तस्य पित्तकफकाला इति ॥ ३० ॥

तेषां प्रकोपलिङ्गानि दर्शयन्नाह—तेषां प्रकोपादिति । कोष्ठतोदसञ्चरणे द्वे वातस्य, सञ्चरणमिति कोष्ठे वातपरिभ्रमणमित्यर्थः । अम्लिकापिपासापरिदाहाः पित्तस्य । अम्लिका अम्लोद्गारः, परिदाहः सर्व्वतो दाहः । अन्येऽपरिदाह इति अकारप्रश्लेषं मन्यन्ते । तत्र नञ् ईषदर्थे, यथाऽनुदरा कन्येति, तेनेषद्दाह इति व्याख्यानयन्ति । अन्नद्वेषहृदयोत्क्लेदौ कफस्य, हृदयोत्क्लेदः हृल्लासः । द्वितीयक्रियाकाल इति द्वितीयश्चिकित्सावसरः ॥ ३१ ॥

प्रकोपविशेषमेव प्रसराख्यं दर्शयन्नाह—अत ऊर्द्ध्वमित्यादि । तेषामेभिरिति । तेषां वातपित्तश्लेष्मणाम्, एभिरातङ्कविशेषैः, प्रकुपितानामिति पूर्व्वोक्तैर्बलवद्विग्रहादिभिः कोष्ठतोदसञ्चरणादिभिर्वा । कथं ते प्रसरन्तीत्यत आह—किण्वोदकपिष्टेत्यादि । अन्योन्यगुणानुप्रवेशाद् यथा किण्वोदकपिष्टानामुद्रेकः, एवं दुष्टिहेतूनां समवाये वातादीनामुद्रेको भवति । किण्वं सुरावीजम्, पिष्टं तण्डुलपिष्टम्, समवायः संयोगः । इतो दोषाणां मध्ये वायुरेव प्रसरणहेतुरित्याह—तेषां

यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदार्य्यापरेणोदकेन व्यामिश्रः सर्व्वतः प्रधावत्येवं दोषाः कदाचिदेकशो द्विशः समस्ताः शोणितसहिता वानेकधा प्रसरन्ति। तद्यथा—वातः पित्तं श्लेष्मा शोणितम् वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणितानि वातपित्तकफा वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरन्ति ॥ ३३ ॥

कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्।
दोषो विकारं नभसि मेघवत् तत्र वर्षति ॥ ३४ ॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति।
निष्प्रत्यनीकः कालेन हेतुमासाद्य कुप्यति ॥ ३५ ॥

तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतीकारः, पित्तस्य च कफस्थानगतस्य कफवत्, कफस्य च वातस्थानगतस्य वातवत्; एष क्रियाविभागः। एवं प्रकुपितानां प्रसरताञ्च वायोर्विमार्गगमनाटोपौ, ओषचोषपरिदाहधूमायनानि पित्तस्य,

वायुर्गतिमत्त्वादित्यादि। स हि रजोभूयिष्ठ इति स वायुः, हि यस्मादर्थे, रजोभूयिष्ठः रजोबहुलो वायुरित्युक्तत्वात्। सर्व्वभावानां सर्व्वपदार्थानाम्। एतेन वायोर्गतिमत्त्वे हेतुरुक्तः ॥ ३२ ॥

प्रसरस्य पुनर्दृष्टान्तमाह—यथा महानुदकसञ्चयोऽतिप्रवृद्ध इत्यादि। सेतुमवदार्य्येति आलीं भित्त्वा। तमेव प्रसरणोपयोगिनां संयोगं संख्यया दर्शयन्नाह—तद् यथा, वातः पित्तमित्यादि ॥ ३३ ॥

तेषामेकदेशप्रसरणेन दृष्टान्तेन एकदेशविकारं दर्शयन्नाह—कृत्स्नेऽर्द्धेऽवयवे वेत्यादि। अत्राङ्गशब्देन शिरोबाहुजङ्घाः कथ्यन्ते। किंविशिष्टेऽङ्गे इत्याह—कृत्स्न इत्यादि। कृत्स्ने समस्ते, अर्द्धे इति प्रसिद्धम्, अवयवे चिबुकचरणादौ ॥ ३४ ॥

प्रभूतोऽपि कोऽपि कोपाल्पत्वान्न सहसा विकारकारीति दर्शयन्नाह—नात्यर्थं कुपितश्चापीति। लीनः एकदेशस्थितः। निष्प्रत्यनीकः निष्क्रियः ॥ ३५ ॥

तत्र प्रसरणेनान्यदोषस्थानगतस्य दोषस्य स्थानिवत् प्रतिकारातिदेशं दर्शयन्नाह—तत्र वायोः पित्तस्थानेत्यादि। तेषां प्रसरणलिङ्गानि दर्शयन्नाह — एवं प्रकुपितानामित्यादि। प्रसरप्रस्तावेऽत्र प्रकुपितानामिति यत् कृतं तत् प्रकोपविशेष एव प्रसर इति ज्ञापनार्थम्। प्रकोपप्रसरणयोश्च को भेदः? उच्यते—स्थानगतस्य सर्पिषः क्वाथ्यमानस्य प्रथमं सञ्चलनमात्रमेव प्रकोपः, तस्यैव चातिक्वाथ्यमानस्य फेनमण्डलेनोत्सर्पता देशान्तरसरणमेव प्रसरः। वायोर्विमार्गगमनमित्यादि। विमार्गगमनाटोपौ वायोः; वायोरप्राकृतवायोः, मार्गादन्यः विमार्गः, आटोपो रुजापूर्व्वक उदरक्षोभः। ओषादीनि पित्तस्य। ओष एकदेशिको दाहः, चोषः चुष्यत इव वेदनाविशेषः। धूमायनं धूमोद्गमनमिव। केचिदोषचोषे न पठन्ति, दाहो धूमायनञ्च पित्तस्येति पठन्ति।

अरोचकाविपाकाङ्गसादच्छर्द्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति। तत्र तृतीयः क्रियाकालः ॥ ३६ ॥

अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः। एवं कुपितास्तांस्तान् शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। ते यदोदरसन्निवेशं कुर्व्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीन् जनयन्ति, वस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन, मेढ्रगता निरुद्धप्रकशोपदंशशूकदोषप्रभृतीन्, वृषणगता वृद्धीः। गुदगता भगन्दरार्शःप्रभृतीन, ऊर्द्ध्वं जत्रुगतास्तूर्द्ध्वजान्, त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च, मेदोगता ग्रन्थ्यपच्यर्व्वुदगलगण्डालजीप्रभृतीन, ( अस्थिगता विद्रध्यनुशयीप्रभृतीन् ), पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्। सर्व्वाङ्गगता ज्वरसर्व्वाङ्गरोगप्रभृतीन् ॥ ३७ ॥

तेषामेवमभिसन्निविष्टानां पूर्व्वरूपप्रादुर्भावः, तं प्रतिरोगं वक्ष्यामः। तत्र पूर्व्वरूपगतेषु चतुर्थः क्रियाकालः ॥ ३८ ॥

अरोचकादयः कफस्य। अङ्गसादोऽङ्गग्लानिः। अविपाकाङ्गसादौ केचिन्न पठन्ति, अरोचकश्छर्द्दिश्चेत्येतदेव च पठन्ति। तत्र प्रसरणं यावद्दोषाणामेव हेतुलिङ्गचिकित्साः, तदनन्तरं व्याधेरिति ॥३६

प्रसृतानां पुनर्दोषाणां स्रोतोवैगुण्याद् यत्र सङ्गः स स्थानसंश्रयस्तं निर्दिशन्नाह—अत ऊर्द्ध्वमित्यादि। तत्र स्रोतोवैगुण्याद् यत्र यत्रागत्य यान् कुर्व्वन्ति तांस्तान् निर्द्देष्टुमाह—ते यदोदरसन्निवेशमित्यादि। सन्निवेशं सम्यक्स्थितिम्। प्रभृतिग्रहणात् प्रवाहिकाविलम्बिकाप्रभृतयः। ऊर्द्ध्वं जत्रुगतास्त्विति। जत्रु ग्रीवामूलम्। त्वङ्मांसशोणितस्था इति त्वक्शब्देनात्र रसो विवक्षितः। मेदोगतदोषव्याधिपाठानन्तरमस्थिगता विद्रध्यादीनीति पाठो युक्तः, मूलेऽदर्शनात् समस्तो न लिखितः। मज्जशुक्रगतानां दोषाणां व्याधयो न निर्द्दिष्टाः, स्वल्पत्वात् कादाचित्कत्वाच्चेति। सर्व्वाङ्गगता इत्यादि। सर्व्वाङ्गरोगः सर्व्वाङ्गवातव्याधिः प्रमेहपाण्डुशोषादयो वा। सूक्ष्मत्वात् स्थानसंश्रयस्य न पृथगुक्तं लक्षणं नापि क्रियाकाल इति ॥ ३७ ॥

तेषामेवमभिनिविष्टानामिति अभिनिविष्टानामत्यर्थं सन्निवेशं कृतवताम्। पूर्व्वरूपप्रादुर्भाव इति व्याधेरिति शेषः। किं तत् पूर्व्वरूपमिति पृष्टो व्याधिभेदबाहुल्येन पूर्व्वरूपभेदबाहुल्यात् साक्षान्निर्द्देशेन दर्शयितुमशक्यमित्यतिदेशेन दर्शयन्नाह—तं प्रतिरोगं वक्ष्यामः, तं पूर्व्वरूपप्रादुर्भावं रोगे रोगे प्रतिवक्ष्याम इत्यर्थः, न प्रतिदोषं चयादिलिङ्गवदित्यर्थः। तत्र पूर्व्वरूपगतेष्विति गतेषु ज्ञातेषु पूर्व्वरूपेषु, वर्त्तमानेष्विति केचित् पठन्ति। चतुर्थः क्रियाकालः इति चतुर्थश्चिकित्सावसरः। चिकित्सा चात्र दोषस्य दूष्यस्य चेत्युभयाश्रिता चिकित्सा ॥ ३८ ॥

अत ऊर्द्ध्वं व्याधिदर्शनं वक्ष्यामः—शोफार्व्वुदग्रन्थिविद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातिसारप्रभृतीनाञ्च । तत्र पञ्चमः क्रियाकालः ॥ ३९ ॥

अत ऊर्द्ध्वमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः, ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुवन्धः । तत्राप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ॥४०॥

भवन्ति चात्र ।

सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम् ।
व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद् भिषक् ॥ ४१ ॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ।
ते तूत्तरासु गतिषु भवन्ति वलवत्तराः ॥ ४२ ॥
सर्व्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः ।
संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति ॥ ४३ ॥

व्याधेः प्रव्यक्तं रूपं व्यक्तिस्तां दर्शयन्नाह—अत ऊर्द्ध्वं व्याधिदर्शनं वक्ष्याम इति । व्याधेर्दर्शनं व्याध्युपलब्धिः, शोफादीनां ज्वरादीनाञ्च प्रव्यक्तलक्षणता व्यक्तिः । प्रव्यक्तलक्षणता च व्याधिजातिलक्षणकथनम्, तद्यथा -शोफार्व्वुदादीनां त्वङ्मांसस्थानस्य दोषस्य सङ्घातता, तथा सन्तापलक्षणो ज्वरः, सरणलक्षणोऽतीसारः, पूरणलक्षणमुदरमिति । तत्र व्याधिप्रत्यनीकैव चिकित्सा ॥३९

व्यक्तिमभिधाय भेदं कथयन्नाह—अत ऊर्द्ध्वमेतेषामवदीर्णानामित्यादि । एतेषां शोफादीनामित्यर्थः । अवदीर्णानां विदरणगतानां भिन्नानामित्यर्थः । अवदीर्णत्वञ्च शोफादीनां विशेषलक्षणम्, अतएव व्रणभावमापन्नानामिति, यत एव विदीर्णा अतएव व्रणत्वं गता इत्यर्थः । ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्ध इति, यथा व्यक्तिप्रस्तावे ज्वरादीनां सन्तापसरणपूरणादिकं सामान्यलक्षणमुक्तं, तथात्र भेदप्रस्तावाद् विशेषलक्षणं दीर्घकालानुवन्धो ज्वरादिजातिषु भेद इति ज्ञातव्यः । केचिदत्र दीर्घकालानुवन्धो न प्रतिव्याधिजातिषु सम्भवतीति वातादिलक्षणभेदाद् भिन्नत्वं भेद इत्याचक्षते, यथा—अष्टानां ज्वराणामित्यादि । अत्र पक्षे दीर्घकालानुवन्ध इति स्वरूपकथनम्, एतेन सञ्चयादिषु प्रतीकाराद् दीर्घकालानुवन्धोऽसाध्यता च भवतीत्युक्तम्, पूर्व्वासु गतिष्वप्रतिकारेऽपि प्रतीकारावसरोऽस्त्येव । अत्र तूत्तरगत्यभावात् पश्चात् प्रतीकाराशा नास्त्येवेति दर्शयन्नाह—तत्राप्रतिक्रियमाण इति । तत्रेति भेदे इत्यर्थः ॥ ४० ॥

अतीतं संक्षिप्य संग्रहं प्रतिपादयन्नाह—भवन्ति चात्र । सञ्चयञ्च प्रकोपञ्चेत्यादि । चकारेण सञ्चयादिहेतुस्थानाद्यनुक्तं सर्व्वं समुच्चीयते । यथापूर्व्वं प्रतीकाराल्पत्वं यथोत्तरं प्रतिकारबाहुल्यं दर्शयन्नाह—सञ्चयेऽपहृता दोषा इत्यादि । तेषामपहरणञ्च बहुदोषे शोधनं मध्यदोषे लङ्घनपाचनम्, अल्पदोषे संशमनमिति ॥ ४१।४२ ॥

इदानीं संसर्गे सन्निपाते च प्रसराभिहिते अंशांशबलविकल्पेनानुबन्ध्यानुबन्धिभावं चिकित्सार्थं

संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत्।
शेषदोषाविरोधेन सन्निपाते तथैव च ॥ ४४ ॥

दर्शयन्नाह—सर्व्वैर्भावैस्त्रिभिर्वेति। अनुधावति अनुलग्नो भवति। कोऽसौ ? दोषः, किं विशिष्टः ? कुपितः, कैः कृत्वा ? भावैः, कोऽर्थः ? स्वभावैः रुक्षोष्णस्निग्धादिभिः, कतिसंख्योपेतैः ? त्रिभिः, न केवलं त्रिभिर्द्वाभ्यामेकेन वा ; एतेन त्र्यादिस्वभावकुपितोऽप्रधानोऽनुबन्धभूतः प्रधानं दोषमग्रेऽनुलग्नो भवतीत्युक्तम्। कमनुधावति ? इत्याह—दोषं, किं विशिष्टं ? क्रुद्धं प्रकोपं गतम्, कैः कृत्वा ? भावैः, कतिसंख्यैः ? इत्याह—सर्व्वः, कोऽर्थः ? समस्तैः रुक्षोष्णस्निग्धादिभिः, एतेन सर्व्वभावक्रुद्धः प्रधानभूतो व्यक्तलिङ्गोऽनुबन्ध्यो दोष उक्तः। क ? संसर्गे ? कोऽर्थः ? दोषद्वयसंयोगे। अत्राप्येवमुक्तं भवति—यदा किल दोषद्वयसंसर्गो भवति तदा प्रधानस्यानुबन्ध्यभूतस्य दोषस्य चिकित्सा कर्त्तव्या, तत्प्रशमादेवाप्रधानस्यानुबन्धभूतस्य प्रशमो भविष्यतीति ; यदा तु सर्व्वैर्भावैः कुप्यन्ति तदा सर्व्वे प्रधानभूताः परस्परमनुबन्धभूताश्च भवन्ति, एवञ्च समसन्निपातो भवति तदा पित्तमुपचरणीयम्। अन्ये तु सर्व्वैर्भावैरित्यत्र भावा व्याधिहेतवः, ते चाहारविहारदेशकालाश्चत्वार इति वर्णयन्ति। अपरे तु रसगुणवीर्य्यविपाकांश्चतुरो भावान् कथयन्ति। द्रव्यगुणकर्म्माणि भावा इति चरकव्याख्यातारो भट्टारकहरिचन्द्रप्रभृतयः प्रतिपादयन्ति। अन्ये तु सर्व्वैर्भागैरिति पठन्ति। तत्र वातस्य रुक्षलघुविशदविष्टम्भा भागाः, पित्तस्य तीक्ष्णद्रवपूतिनीलपीता भागाः, श्लेष्मणः शीतगुरुपिच्छिलस्निग्धादयो भागाः, ततो वातादयो यदा सर्व्वैस्त्रिभिर्द्वाभ्यामेकेन वा भागेन कुप्यन्ति, तदा तावद्भिस्तद्विपरीतैर्भागैश्चिकित्सा कर्त्तव्या। तत्र श्लेष्मणः क्षये बलवद्विग्रहादिभिः क्रियमाणे यदा रुक्षो भागो वातस्य कुप्यति, तदा स्निग्धेनैकेन भागेन तद्विपरीतेन प्रतिकर्त्तव्यः। यदा तु रुक्षशीतौ द्वौ भागौ कुप्यतस्तदा स्निग्धोष्णाभ्यां द्वाभ्यां भागाभ्यां चिकित्सेत्यादि। सर्व्वैर्वेति स्वयमूह्यम्। संसर्गे दोषद्वयसंयोगे इत्यर्थः। एतेनैतदुक्तं भवति यदा क्रुद्धं दोषं कुपितोऽनुगच्छति तदा संसर्गो भवति, संसर्गो द्विधा भवति, स च प्रकृतिसमसमवेततया विकृतिविषमसमवेततया च ; तत्र यदा वायुपित्तयोः संसर्गः, तदा शोषणात्मकतया स्वभावसदृशेन पित्तेन वायुः समवेत इति प्रकृतिसमसमवेत उच्यते, यदा तु पित्तश्लेष्मणोः संयोगस्तदा पित्तमुष्णं शीतेन श्लेष्मणा युक्तमतः स्वभावविपरीतेन समवेत इति विकृतिविषमसमवेत उच्यते ॥ ४३ ॥

संसर्गसन्निपातयोश्चिकित्सासूत्रमाह—संसर्गे यो गरीयानिति। गरीयान् गुरुतरः। कथमुपक्रमणीय इत्याह—शेषदोषाविरोधेनेति, यथा न कुप्यतीत्यर्थः। संसर्गक्रियां सन्निपातेऽप्यतिदेष्टुमाह—सन्निपाते तथैव चेति। ननु यदि शेषदोषाविरोधेन संसर्गे यो गरीयान् स उपक्रम्यस्तर्हि कथमिदमुच्यते "शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः॥" तथा, 'समवाये हि दोषाणां पूर्व्वं पित्तमुपाचरेत्। ज्वरे चैवातिसारे च सर्व्वत्रान्यत्र मारुतम्' इति। सत्यं, समसन्निपातमाश्रित्य तत्रोक्तम्, न पुनरन्यान् द्वादशेति न दोषः ॥ ४४ ॥

वृणोति यस्माद्रूढ़ेऽपि व्रणवस्तु न नश्यति ।
आ देहधारणात् तस्माद् व्रण इत्युच्यते बुधैः ॥ ४५ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणप्रश्नो नामैकविंशोऽध्यायः ॥ २१ ॥

कथं पुनरयं शरीरैकदेशोत्थितदोषसङ्घातो व्रण इत्युच्यते इत्याह—वृणोतीत्यादि । स वृणोति आच्छादयति यस्मात् तस्मात् व्रण इति, अथवा व्रणवस्तु व्रणचिह्नं रूढेऽपि न नश्यति तथैवास्ते, आदेहधारणात् यावज्जीवं, तस्माद् व्रण इति ॥ ४५ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे व्रणितोपासनीयव्याख्यानामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः ।

## अथातो व्रणास्रावविज्ञानीयमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्म्माणीत्यष्टौ व्रणवस्तूनि, अत्र सर्व्वव्रणसन्निवेशः ॥ १ ॥

तत्राद्यैकवस्तुसन्निवेशी त्वग्भेदी व्रणः सूपचरः, शेषाः स्वयमवदीर्य्यमाणा दुरुपचाराः। तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृतिसमासः। शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति ॥ ३ ॥

सर्व्वे एव व्रणा क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः, अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति प्रवृद्धत्वाच्च दोषाणाम् ॥ ४ ॥

आदिशब्दः प्रतिज्ञायां लुप्तनिर्दिष्टो द्रष्टव्यः। तेन व्रणस्रावादि विज्ञानीयमित्यर्थः। एतेन वेदनादयोऽपि संगृहीताः। त्वगित्यादि। व्रणवस्तूनि व्रणाधिष्ठानानि। अत्रेति एष्वित्यर्थः। व्रणसन्निवेशो व्रणसंस्थानम्। तेषां मध्ये एकस्मिन्नेव वस्तुनि व्रणस्य सुखोपचर्य्यत्वं दर्शयन्नाह—आद्यैक वस्तुसन्निवेशीति त्वक्सन्निवेशीत्यर्थः। त्वग्भेदीति पुनर्नियमार्थम्, एतेन त्वगाश्रितमांसभेदी व्रणो न सूपचरः। अन्ये तु आद्यैकवस्तुसन्निवेशी त्वग्भेदी चेत्यनयोः पदयोर्मध्ये एकतरपदेनैव त्वग्वस्तु प्राप्यते किं पदद्वयेनेति यत् पदद्वयं तद् ग्रन्थाधिक्यादर्थाधिक्यं बोधयति, तेन विकृताकृतयोऽपि त्वग्भेदिनो व्रणाः सूपचरा इत्यधिकोऽर्थ उक्तो भवतीति मन्यन्ते। अपरवस्तुसन्निवेशिनः किं विशिष्टा इत्याह—शेषा इति मांसाद्यधिष्ठानाः, स्वयमवदीर्य्यमाणा इति आलेपस्रावणादिभिर्विना स्वयमेव पक्वाः पश्चाद् भिन्ना इत्यर्थः। यथा स्रावज्ञानं चिकित्साहेतुस्तथा व्रणाकृतिरपीति तां दर्शयन्नाह- तत्रायत इत्यादि। आयतो दीर्घः, चतुरस्रश्चतुष्कोणः, वृत्तो वर्त्तुलः, त्रिपुटक स्त्रिकोणः, इतिशब्द उपसंहारे, दोषजव्रणाकृतीनां समासः संक्षेपः। शेषा इति उक्तेभ्योऽन्ये अर्द्धचन्द्रस्वस्तिकाद्या व्रणाकृतयो विकृता इत्यर्थः ॥ १—३ ॥

व्रणिनामात्मवतां भिषजां गुणसम्पदोऽपि चिकित्साहेतव इति दर्शयन्नाह—सर्व्वे इत्यादि। आत्मवतां पथ्याहारविहारसेविनाम्। अनात्मवतामिति अनात्मवतामहिताहारविहारसेविनाम्। अज्ञैश्चोपक्रान्ता इति चकारेणात्मवतां सुभिषग्भिरुपक्रान्तानामपि कुण्ठिप्रमेहिणां कदाचित् शुक्रप्रवृत्तिमात्रादेव व्रणदुष्टिरनुक्ता समुच्चीयते। कुतः पुनरनात्मवतामज्ञभिषगुपक्रान्तानां व्रणानां दुष्टिरित्याह—प्रवृद्धत्वाद्दोषाणामिति। अन्ये त्वेवं योजयन्ति—न केवलमज्ञैरुपक्रान्ताः प्रदुष्यन्ति अपि तु प्रवृद्धत्वाद्दोषाणाम् ॥ ४ ॥

तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नोऽतिशीतोऽत्युष्णः कृष्णरक्तपीतशुक्लादीनां वर्णानामन्यतमवर्णो भैरवः पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्णः पूतिपूयास्राव्युन्मार्ग्युत्सङ्ग्यमनोज्ञदर्शनगन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिड़कोपद्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि। तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतिकारे प्रयतेत ॥ ५ ॥

अत ऊर्द्ध्वं सर्व्वस्रावान् वक्ष्यामः। तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु विदारितेषु वा सलिलप्रकाशो भवत्यास्रावः किञ्चिद्विस्रः पीताव-

प्रायेण दुष्टेष्वेव व्रणेषु स्रावा भवन्ति, अतस्तेषां दुष्टव्रणानां लक्षणमाह—तत्रातिसंवृत इत्यादि। अतिसंवृतोऽतिसङ्कुचितो वातेन, अतिविवृतो व्यात्तमुखः पित्तशोणितेन, काठिन्यं वातेन, अतिमार्द्दवं कफेन, अन्ये पित्तशोणितेन मार्द्दवमिच्छन्ति। उत्सन्न उन्नतमांसः, अवसन्नो हीनमांसो निम्नाकारः, एतौ रक्तपित्तेन। अन्ये वातेनोत्सन्नावसन्नत्वमिच्छन्ति। अलोत्सन्नत्वं कफेनेति केचित्। अतिशैत्यं कफवातात्, अत्युष्णत्वं रक्तपित्तात्। कृष्णादयो वर्णा यथासम्भवं वातादिभिर्ज्ञेयाः। भैरवोऽनवधारितलिङ्गः। पूतिपूयमांससिरास्नायुप्रभृतिभिः पूर्ण इति पूतिशब्दः प्रत्येकं पूयादिभिरभिसम्बध्यते। पूतिमांससिरास्नायुप्रतिपूर्ण इत्येके पठन्ति। पूतिमांससिरास्नायुप्रतिपूर्णत्वं तत्स्रावित्वञ्च यथासम्भवं वेदितव्यम्। उन्मार्गी तिर्य्यग्गतिः, उत्सङ्गी ऊर्द्ध्वगतिः; अन्ये पूयापेक्षावदारितमांसादिदेशत्वेनातिनिम्नत्वादुत्सङ्गतुल्यत्वादुत्सङ्गः, सोऽस्यास्तीति उत्सङ्गी उन्मार्गी, उत्सङ्गीति कफेन। अमनोज्ञदर्शनगन्ध इति अमनोज्ञदर्शनोऽमनोज्ञगन्धश्च इत्यर्थः। अमनोज्ञदर्शनामनोज्ञगन्धत्वं रक्तपित्तेन, अन्ये दोषत्रयेण मन्यन्ते। अत्यर्थं वेदनावानिति वातेन। दाहपाकरागकण्डूशोफेत्यादि। अत्र दाहादिभिः सह उपद्रुतशब्दः प्रत्येकं सम्बध्यते। अत्र दाहपाकरागोपद्रुतत्वं पित्तरक्तेन, कण्डूपद्रुतत्वं कफेन, शोफोपद्रुतत्वं वातेन, पिड़कोपद्रुतत्वं दुष्टशोणितास्रावश्च रक्तपित्तेन, दीर्घकालानुबन्धित्वं दोषत्रयेण। दीर्घकालानुबन्धी चेति चकारेण रोप्यादयो दुष्टव्रणविशेषा गृह्यन्ते। रौप्यलक्षणन्तु "बहिःशुद्ध इवाभाति स व्रणो रोप्य उच्यते" इति चरकेणोक्तम्। व्रणदुष्टौ चिकित्सासूत्रं दर्शयन्नाह—तस्येत्यादि। तस्य व्रणस्य, उच्छ्रायेण औत्कण्ठ्येन, षट्त्वं वातपित्तकफरक्तसन्निपातागन्तुभेदतः। यथास्वं स्वस्वदोषस्यानतिक्रमेण। प्रतीकारे चिकित्सिते, प्रयतेत प्रयत्नं कुर्व्वीत। अन्ये त्वत्र 'दोषोच्छ्रायमवेक्ष्य' इति पठन्ति ॥ ५ ॥

अत्र व्रणदुष्टिरसूत्रिताऽप्युक्ता. तां निर्द्दिश्य व्रणास्रावान् निर्द्दिशन्नाह—अत ऊर्द्ध्वमित्यादि। सर्व्वस्रावानिति सर्व्वव्रणवस्तूनां सर्व्वदोषाणामागन्तोश्च व्रणस्य स्रावानित्यर्थः। घृष्टासु छिन्नास्वित्यागन्तोः, त्वक्षु इति सम्बन्धः। बहुवचनन्तु सप्तत्वगपेक्षया। अत्र त्वग्ग्रहणात् लक्षणया रसाधिष्ठानो व्रण उक्तः। स्फोटे इति त्वकस्थिते व्रणे, भिन्ने स्वयं भिन्ने, विदारिते यत्नेन विदारिते इत्यर्थः। अत्र

भासश्च। मांसगतः सर्पिःप्रकाशः सान्द्रः श्वेतः पिच्छिलश्च। सिरागतः सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः, पक्वासु च तोयनाडीभिरिव तोयागमनं पूयस्य, आस्रावश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च। स्नायुगतः स्निग्धो घनः सिंहाणकप्रतिमः सरक्तश्च। अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति। आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च। सन्धिगतः पीड्यमानो न प्रवर्त्तते, आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कटासनप्रवाहणश्च स्रवति। आस्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च। कोष्ठगतोऽसृङ्मूत्रपूरीषपूयोदकानि स्रवति। मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते॥ ६॥

तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मारुताद् भवन्ति। पित्ताद्गोमेदगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि। पित्तवद्रक्तादतिविस्रत्वञ्च। कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकवराहवसा-सन्निभत्वानि। सन्नि-

भिन्ने विदारिते इति शरीरव्रणस्य। सलिलप्रकाश इति उदकरसयोरच्छयोस्त्वचामधिष्ठानत्वात्। विस्र आमगन्धिः, पीतावभासः पाकारम्भकेण पित्तेनेत्यर्थः। मांसगत इति मांसगत आस्राव इत्यर्थः। सर्पिःप्रकाशस्त्वङ्मांसगतः। सान्द्रश्वेतपिच्छिलत्वं शरीरस्य। शिरागतः सद्यश्छिन्नास्विति शिराग्रहणेन रक्ताधिष्ठानो व्रण उक्तः, सद्यश्छिन्नास्वित्यागन्तोः; पक्वास्वित्यादि शारीरस्य, विच्छिन्न इति अल्पाल्पप्रवर्त्तनम्, अवलम्बी अवलम्बनशीलः। स्नायुगतः स्निग्ध इति स्नायुग्रहणेन मेदोऽधिष्ठानो व्रण उक्तः, अन्ये तु मेदोमज्जानौ घृतवद् विलीयेते, अतो व्रणाधिष्ठानत्वं नैव तयोरिति वदन्ति। सिंहानको रक्तमिश्रो घनीभूतश्लेष्मा। अस्थिगतोऽस्थनीति अभिहत इति अभिघातजे व्रणे, भिन्ने विदारिते चेति शारीरे। अस्थि निःसारं कोऽर्थः? लघु, भवतीत्यध्याहारः। शुक्तिधौतमिवाभाति शुक्तिरिव शोभते तथा धौतमिव शोभते अस्थीति सम्बध्यते। सन्धिगतः पीड्यमान इति। उन्नमनमिति बाहुजङ्घादीनामुर्द्ध्वं नयनम्। विनमनं गात्राणामधःप्रापणम्, प्रवाहणमिति निकुन्थनम्, सफेनपूयरुधिरोन्मथितश्चेति रुधिरेणैवोन्मथितश्च। कोष्ठगतोऽसृगित्यादि। कोष्ठगत इति मलधातुसमुदायाधिष्ठानो व्रण उक्तः। उदकमत्र रसक्लेद एव गृह्यते पित्तं वा। मर्म्मगतस्त्वगादिष्विति। अवरुद्ध इति संगृहीत इत्यर्थः॥ ६॥

दोषास्रावान् निर्द्दिशन्नाह—तत्र त्वगादिगतानामित्यादि। तत्र मर्मवर्ज्जितेषु सप्तसु त्वगादिव्रणवस्तुषु। वातपित्तकफसन्निपातानां सप्त सप्त स्रावा यथाक्रमेण द्रष्टव्या इत्येके। अन्ये तु त्वगादिषु वातादिलिङ्गानां मध्ये किञ्चित् कचिदिति वर्णयन्ति। पित्ताद् गोमेदेत्यादि। गोमेदक

पातात् तिलनारिकेलोदकैर्व्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ॥ ७ ॥

श्लोकौ चात्र भवतः ।

पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ।
क्षारोदकनिभः स्रावो वज्ज्यो रक्ताशयात् स्रवन् ॥
आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः ।
स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद् भिषक् ॥ ८ ॥

अत ऊर्द्ध्वं सर्व्वव्रणवेदना वक्ष्यामः। तोदनभेदनताडनच्छेदनायामनमन्थनविक्षेपणचुमुचुमायननिर्द्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नाकुञ्चनाङ्कुशिकाः सम्भवन्ति, अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्म्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्। ओषचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति

इति मणिरापीतः। एर्व्वारुकरसः कर्कटिकारसः। काञ्जिकप्रसाद इति काञ्जिकस्योपर्य्यच्छः। आरुकमनेनैव नाम्ना प्रसिद्धम् ॥ ७ ॥

स्थानभेदात् स्रावस्यासाध्यत्वख्यापनाय श्लोकौ प्राह पक्वाशयादित्यादि। पुलाकोदकं गवेधुकोदकं, गवेधुकस्तृणविशेषः, जलगोधूम इति लोके। अन्ये तु पुलाकशब्देनाप्राप्तपाकं धान्यमाहुः। आमाशयादित्यादि। कलायोऽत्र त्रिपुटकः, त्रिकसन्धिज इति बाहुग्रीवास्थित्रयसंघातोऽत्र त्रिकं, तस्य सन्धौ जात इति ॥ ८ ॥

स्रावानन्तरं वातादिवेदनां निर्द्दिशन्नाह—अत ऊर्द्ध्वं सर्व्वव्रणवेदना इत्यादि। तोदनं सूचिभिरिव, भेदनं त्वग्विदारणमिव वेदनाविशेषः, ताडनं दण्डादिभिराहन्यत इवेत्यर्थः, छेदनं द्विधा क्रियत इव शस्त्रादिभिः, आयामनं सङ्कुचिताङ्गदेशस्य दीर्घीकरणमिव, मन्थनं मन्थानकादिभिर्व्रणान्तर्मथ्यत इव, विक्षेपणं प्रेर्य्यत इव, चुमुचुमायनं सर्षपराजिकाकल्कलिप्त इव, निर्द्दहनं निःशेषं वह्निना दह्यत इव, अवभञ्जनं संचूर्ण्यत इव, स्फोटनं पाषाणादिभिरिव, विदारणं नखादिभिश्चीर्य्यते इव वा, उत्पाटनमूर्द्ध्वमाकृष्यत इव; कम्पनं वेप्यत इव, विविधशूलविश्लेषणं नानाप्रकारार्त्तिशूलाहतगात्रस्येव वेदनाविशेषः, विकिरणं व्रणावयवा नानास्थानेषु विकीर्य्यन्त इवेति, पूरणं भरणं, स्तम्भनं स्तब्धता, स्वपनं प्रसुप्तिः, आकुञ्चनं कुटिलीकरणमिव। अङ्कुशिकः खड्गीविशेषः, अन्ये अङ्कुशनिपाताकर्षणमिवाङ्कुशिकामाचक्षते। ओषचोषपरिदाहेत्यादि। ओष एकदेशिको दाहः,

विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्। यत्र सर्व्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति विद्यात्॥ ९॥

अत ऊर्द्ध्वं व्रणवर्णान् वक्ष्यामः। भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य। नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः। श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य। सर्व्व-वर्णोपेतः सान्निपातिक इति॥ १०॥

भवति चात्र।

न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः।
सर्व्वशोफविकारेषु व्रणवल्लक्षयेद् भिषक्॥ ११॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्रणास्रावविज्ञानीयो नाम द्वाविंशोऽध्यायः॥ २२॥

चोषः आचूषणं, समन्ताद्दाह इत्येके, पिपासेत्यन्ये। परि समन्ततो दाहः परिदाहः, धूमायनं धूमोद्गमनमिवाङ्गानाम्। कण्डूर्गुरुत्वमित्यादि। सुप्तत्वं नखमक्षिकामशकादिदंशवेदनानभिज्ञत्वं, उपदेहो लिप्तत्वमिवेति॥ ९॥

( यत्र सर्व्वासां वेदनानामुत्पत्तिस्तत्र ) वेदनाः प्रतिपाद्य व्रणवर्णान् निर्द्दिशन्नाह—अत ऊर्द्ध्व-मित्यादि। सामान्यव्रणनिर्द्दिष्टान् दोषदुष्टिस्राववेदनावर्णान् शोफविशेषेष्वपि विद्रध्यलजीग्रन्थ्यादिषु निर्द्दिशन्नाह—न केवलं व्रणेषूक्त इत्यादि। शोथविकारेष्विति शोथारब्धविकारेषु विद्रध्यादि ष्विति॥ १०।११॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे व्रणास्रावविज्ञानीयव्याख्यानाम द्वाविंशोऽध्यायः॥ २२॥

---

# त्रयोविंशोऽध्यायः ।

अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

तत्र वयःस्थानां दृढानां प्राणवतां सत्त्ववताञ्च सुचिकित्स्या व्रणाः, एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः ॥ २ ॥

तत्र वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति । दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणं शिरास्नाय्वादिविशेषान् न प्राप्नोति । प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते । सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति, तस्मादेतेषां सुखसाधनीयतमाः । त एव विपरीत गुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः ॥ ३ ॥

अथातः कृत्याकृत्यविधिमध्यायं व्याख्यास्यामः । तत्र कृत्याः साध्याः । ते द्विविधाः—सुखसाध्याः, कृच्छ्रसाध्याश्च । अकृत्या असाध्याः । तेऽपि द्विविधाः—याप्याः, प्रत्याख्येयाश्च । इति कृत्याकृत्यपदद्वयेन सर्व्वमुक्तम् ॥ १ ॥

तत्र यथा व्रणस्याकृतिगन्धवर्णादिविशेषाः साध्यासाध्यविधौ भवन्ति तथातुरस्यापि केऽपि गुणा भवन्ति तांस्तान् दर्शयन्नाह—तत्र वयःस्थानां दृढानामित्यादि । वयःस्थानां तरुणानाम्, दृढाः गूढसन्धिसिरास्नायवः, एतेन सुसंहतसमशरीरा अभिप्रेताः । प्राणवतां शक्तियुक्तानां, सत्त्ववतां व्यसनेऽप्यनाकुलानां, चकारादनुक्तापि आतुरोपक्रमणीयोक्ता आतुरस्य गुणसम्पत् समुच्चीयते । प्राणवतामित्यस्याग्रे आत्मवतामिति पञ्चमं गुणं केचित् पठन्ति । तत्र आत्मवतां जितेन्द्रियाणामित्यर्थः । अत्रैकगुणेन सुखसाध्यत्वम्, द्वाभ्यां त्रिभिश्च सुखसाध्यतरत्वम्, चतुर्भिः सुखसाध्यतमत्वञ्च, एतदेव प्रकटयन्नाह—एकस्मिन् वा पुरुष इत्यादि । वाशब्द एकत्र सर्व्वगुणानां दुष्प्राप्तिख्यापनार्थः । तस्येति पुरुषस्येत्यर्थः, सुखसाधनीयतमा व्रणा इति शेषः ॥ २ ॥

तत्र तेषां गुणानां येन सुखसाध्यत्वं तन्निर्दिशन्नाह— तत्र वयःस्थानामिति । प्रत्यग्रं नूतनम् । स्थिरेति स्थिरमचलम् । प्राणवतां वेदनेत्यादि । ग्लानिरत्र शरीरशैथिल्यम् । अत्रापि आत्मवतामिति पञ्चमगुणस्य केचिद्धेतुं पठन्ति, स चाभावान्न लिखितः । सत्त्ववतामिति दारुणैः दुःसहैः, क्रियाविशेषैश्चिकित्साप्रकारैः । तस्मादित्यादि एतेषां पुरुषाणामित्यर्थः । सुखसाधनीयतमा व्रणा इति शेषः । पूर्व्वोक्तगुणानां विपर्य्ययमाह—त एव विपरीतगुणा इत्यादि । एकगुणाभावात् कृच्छ्रसाध्यत्वं, द्वित्रिगुणाभावात् कृच्छ्रतरसाध्यत्वं, चतुर्गुणाभावात् कृच्छ्रतमसाध्यत्वम् । अत्र केचिदनात्मवत्सु चेति पञ्चमं विपरीतगुणं पठन्ति । तेषां मते चकारेण आतुरोपक्रमणीयोक्ता गुणसम्पूर्णता अनुक्तापि समुच्चीयते ॥ ३ ॥

स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः । अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्व-कुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः । अधोभागाश्चोर्द्ध्वभागनिर्व्वाहिणो रोमान्तोपनखमर्म्मजङ्घास्थि-संश्रिताश्च । भगन्दरमपि चान्तर्मुखं सेवनीकुटकास्थिसंश्रितम् ॥ ४ ॥

भवति चात्र ।

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषाञ्चापि व्रणे व्रणाः ॥ ५ ॥

अवपाटिकानिरुद्धप्रकशसन्निरुद्धगुद-जठरग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च, त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते ; शर्करा सिकतामेहो वातकुण्डलिकाष्ठीला दन्तशर्करोपकुशः कण्ठशालूकं निष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिक्षतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः ॥ ६ ॥

आतुरविशेषेण कृत्याकृत्यान् प्रतिपाद्य तदवयवसम्भवत्वेन व्रणानां कृत्यत्वं दर्शयन्नाह—स्फिक्पायुप्रजननेत्यादि । स्फिचौ कटिप्रोथौ पोदाचिति लोके, पायुर्गुदम्, प्रजननं गुह्यप्रदेशः, गण्डौ गल्लौ, फलकोषोऽण्डकोषः, जत्रु ग्रीवामूलम् ॥

साध्यभेदान् कृच्छ्रसाध्यान् दर्शयन्नाह—अक्षिदन्तनासेत्यादि । अपाङ्गो भ्रूपुच्छान्तः । नितम्बः कटेः पश्चाद्भागः । वक्ष उरः । सन्धिभागः सन्धिप्रदेशः । वाहिशब्दः सफेनपूयादिभिः सह प्रत्येकं सम्बध्यते । अन्तःशल्याः आभ्यन्तरशल्याः । अधोभागाश्चोर्द्ध्वभागनिर्वाहिण इति अधो-भागगता ये व्रणास्ते यदा ऊर्द्ध्वमुखा भवन्ति, तदोर्द्ध्वभागनिर्व्वाहिण उच्यन्ते । रोमान्तोपनखे-त्यादि । रोमान्तः केशान्तः, उपनखं नखसमीपं, जङ्घास्थि गुल्फजान्वन्तरास्थि । भगन्दरमपि चान्तर्मुखमिति गुदे अभ्यन्तरं मुखं यस्येत्यर्थः । सेवनीकुटकास्थिसंश्रितं भगन्दरमिति शेषः, कुटकास्थि श्रोणिकाण्डास्थि; मयूरास्थीति लोको ब्रूते । अन्ये तु कुटकास्थिसंश्रितमित्यत्र उपस्थ-संश्रितमिति पठन्ति । तेषां मते उपस्थो मूत्रमार्गः । विषजुष्टानामिति दूषीविषजुष्टानां पुरुषाणां ये व्रणा इत्यर्थः ॥ ४।५ ॥

साध्यान् विविधानभिधायासाध्यभेदं याप्यं दर्शयन्नाह—अवपाटिकेत्यादि । ग्रन्थिक्षतक्रिमय इति ग्रन्थ्युपलक्षितो यो क्षतस्तत्र ये क्रिमय इत्यर्थः, प्रतिश्यायजाः कोष्ठजाश्च क्रिमय इति सम्बन्धः । त्वग्दोषिणां प्रमेहिणां वा ये परिक्षतेषु दृश्यन्ते इति त्वग्दोषप्रमेहरोगयोः क्षते सति ये क्रिमयो दृश्यन्त इत्यर्थः । शर्करेति अश्मरी वातभिन्नेत्यर्थः । सिकतामेहो मेहविशेषः । वातकुण्डलिकाष्ठीले मूत्राघातविशेषे । निष्कोषणदूषिताश्च दन्तवेष्टा इति निष्कोषणं सविषो दन्तरञ्जकानां शाणः मिशि इति वङ्गभाषायामभिधीयते । एतेनैतदुक्तं भवति, दन्तान् रञ्जयन्ति ये पुरुषास्तेषां

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्॥ ७॥
यापनीयं विजानीयात् क्रिया धारयते तु यम्।
क्रियायान्तु निवृत्तायां सद्य एव विनश्यति॥ ८॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम्।
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः॥ ९॥

अत ऊर्द्ध्वमसाध्यान् वक्ष्यामः। मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूया वेदनावन्तोऽश्वापानवदुद्धतौष्ठाः; केचित् कठिना गोशृङ्गवदुन्नतमृदुमांसप्ररोहाः; अपरे दुष्टरुधिरास्राविणस्तनुपिच्छिलास्राविणो वा मध्योन्नताः; केचिदवसन्नशुषिरपर्य्यन्ताः शणतूलवत् स्नायुजालवन्तो दुर्द्दर्शनाः; वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीतासितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः, त एवोभयतोभागव्रणमुखेषु पूयरक्तनिर्व्वाहिणः; (क्षीणमांसानाञ्च) सर्व्वतोगतयश्चाणुमुखा मांसवद्बुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकण्ठस्थाः; क्षीणमांसानाञ्च पूयरक्तनिर्व्वाहिणोऽरोचकाविपाककासश्वासोपद्रवयुक्ताः। भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति॥ १०॥

यद्दन्तनिशानार्थं सविषदन्तकाष्ठं तेन यदा दूषिता दन्तवेष्टा इत्यर्थः। निश्चकुणदूषिता इत्यन्ये पठन्ति। निष्कर्षणदूषिता इत्यपरे, तत्रापि स एवार्थः। अलावपाटिकेत्यादौ पाठे ये व्रणाः सन्ति ते व्रणा एव याप्याः, ये च व्याधयस्तेषु व्याधिषु सत्सु ये व्रणास्ते याप्या इत्यभिप्रायः॥ ६॥

त एते निर्द्दिष्टा न नियमेन साध्या असाध्या वा याप्या एवेत्युक्तेष्वनियमं क्रियया दर्शयन्नाह—साध्या इत्यादि। घ्नन्ति प्राणानसाध्यास्त्विति कालान्तरप्राणहारिणः सद्यः प्राणान् घ्नन्तीत्यर्थः, अक्रियावतां क्रियारहितानां विरुद्धक्रियाकारिणाञ्च। अथ कीदृशो याप्यस्तमाह—यापनीयं विजानीयादित्यादि। यापनीयं प्राणधारणमेव क्रिया करोति न पुनर्व्याधिमूलच्छेदमिति दर्शयन्नाह—प्राप्ता क्रिया धारयतीति। प्राप्ता वैद्येन प्रयुक्ता। विष्कम्भः स्थूणा॥ ७—९॥

अत ऊर्द्ध्वमसाध्यानित्यादि। प्रसेकिनः स्रावबहुलाः। अश्वापानवद् वड़वायोनिवद्, उद्धृत्तौष्ठाः उत्सन्नवर्त्मानः। केचित् अवसन्नशुषिरपर्य्यन्ता इति निम्नच्छिद्रावसाना इत्यर्थः। वसा मांसनिर्य्यासः, मस्तुलुङ्ग अर्द्धविलीनघृताकारो मस्तकमज्जा। दोषसमुत्था इति वातादिदोषजा न पुनरभिघातजाः, ते ह्येवम्भूता अपि सिध्यन्ति। दोषजानसाध्यानभिधाय कोष्ठस्थान् दर्शयितुमाह—पीतासितमूत्रेत्यादि। त एव कोष्ठस्था एव। उभयतोभागव्रणमुखेष्विति गुदवदनोभयमार्गाभ्यां व्रणमुखमार्गेण पूयादिवाहिनः। सर्व्वव्रणवस्तुगता व्रणाः कीदृशा असाध्या इत्याह—सर्व्वत इत्यादि। शिरःकण्ठस्थाः कीदृशा असाध्या इत्याह—सशब्देत्यादि। क्षीणमांसानां

भवन्ति चात्र।

वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्।
आगन्तुस्तु व्रणः सिध्येन्न सिध्येद् दोषसम्भवः॥ ११॥
अमर्म्मोपहिते देशे शिरासन्ध्यस्थिवर्ज्जिते।
विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम्॥ १२॥
क्रमेणोपचयं प्राप्तो धातूननुगतः शनैः।
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः॥ १३॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च।
निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा॥ १४॥
अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते।
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः॥ १५॥

कीदृशा असाध्या इत्याह—क्षीणेत्यादि। शिरःकपाले भिन्ने कीदृशा असाध्या इत्याह—भिन्ने वा शिरःकपाले इत्यादि॥ १०। ११॥

अनन्तरोक्तमेवार्थं सुखावबोधाय श्लोकेन दर्शयन्नाह—वसामित्यादि। अपरिगृहीतानामपि व्रणानामवस्थाविशेषप्राप्तया असाध्यत्वं दर्शयन्नाह—अमर्म्मोपहिते इत्यादि। अमर्म्मोपहिते देशे न मर्म्मसमीपव्यवस्थिते, देशे शरीरावयवे त्वचीत्यर्थः। शिरासन्ध्यस्थिवर्ज्जिते इत्यत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन शिरासन्ध्यस्थ्यादिवर्ज्जिते इत्यर्थः, एतेन स्नायुधमनीवर्ज्जिते इत्युक्तम्। अन्ये शिरादिपदेन स्थूलशिरावर्ज्जिते इत्याहुः। विकारो योऽनुपर्य्येति विकारोऽत्र व्रणः, अनुपर्य्येति सर्व्वतो धातून् व्याप्नोति चिकित्स्यमानोऽपि, तदसाध्यस्य लक्षणम्, एतेन सुवैद्योपक्रमेऽपि सुप्रदेशजातेऽपि यदा सर्व्वधातुव्याप्तिर्दृश्यते, तेन ज्ञायते कर्म्मजोऽयं व्याधिरिति। अन्ये तु विकारशब्देन कुष्ठवातरक्तक्षयादीनपि कथयन्ति। एवं साध्यस्य व्याधेः कस्यचिदुत्पत्तावेवासाध्यत्वं प्रतिपाद्यापरस्यापि व्याधेः साध्यस्याप्युपेक्षयाऽसाध्यत्वं दर्शयन्नाह – क्रमेणेत्यादि। कुतः पुनः कारणाद् दृष्टफलैरौषधैः स व्याधिर्नोपशाम्यतीत्याह – स स्थिरत्वादिति। स इति उपेक्षितो व्याधिरित्यर्थः। स्थिरत्वादिति स्थिरत्वमपथ्यकारिणो दोषबाहुल्यात्। कश्चिदनुपेक्षितोऽप्युत्पत्तावेव व्याधिरौषधवीर्य्याणि हन्तीत्यत्र हेत्वन्तरमाह—महत्त्वाच्चेति। महत्त्वञ्चोदरादिव्याधिनिदानबलप्राक्तनकर्म्मपरिणामसम्प्राप्तिविशेषैर्द्रष्टव्यं, चकारेण रोहिणिकावलयमुखरोगिणामौषधवीर्य्योपघाते स्वभावोऽपि हेतुरिति समुच्चीयते। धात्वनुक्रमणेन चेति कुष्ठादिषु चैतद् द्रष्टव्यम्। दुष्टग्रह इति स्कन्दापस्मारादिक इत्यर्थः॥१२—१४॥

एतन्निर्द्दिष्टार्थप्रकरणविपर्य्ययेणापि सुखसाध्यत्वं दर्शयन्नाह—अतो यो विपरीतः स्यादित्यादि।

त्रिभिर्दोषैरनाक्रान्तः श्यावौष्ठः पिड़की समः ।
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥ १६ ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्ज्जिताः ।
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥ १७ ॥
रूढ़वर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ।
त्वक्सवर्णं समतलं सम्यग्रूढ़ं विनिर्द्दिशेत् ॥ १८ ॥

मर्म्मशिरास्नायुसन्ध्यस्थिधमनीस्थितो यो नानुपर्य्येति स सुखसाध्य उच्यते। किंवदित्याह— अवद्धमूल इत्यादि। क्षुपकोऽतिह्रस्ववृक्षः ॥ १५ ॥

इदानीं व्रणस्य शुद्धिलक्षणमाह—त्रिभिर्दोषैरनाक्रान्त इत्यादि। दोषशब्दोऽत्र दोषकार्य्येषु व्रणाकृतिगन्धवर्णस्राववेदनासु वर्त्तते, कार्य्ये कारणोपचारात् घृतमायुरेवेति यथा। तैर्दोषाकृतिगन्धादिभिरनाक्रान्तः। त्रिभिर्द्वन्द्वैरित्यन्ये पठन्ति। ते तु द्वन्द्वशब्दमभिव्यक्तौ वर्णयन्ति, तेन दोषत्रयाभिव्यक्तिभिराकृत्यादिभिरनाक्रान्त इति स एवार्थः। अन्ये तु शीतोष्णं मृदुकठिनं संवृतविवृतमिति द्वन्द्वत्रयं मन्यन्ते। अपरे तु द्वन्द्वानि दोषास्ते चात्र वातादयस्तैरनाक्रान्त इति व्याख्यानयन्ति। श्यावौष्ठ इति किञ्चित् कृष्णः किञ्चित् पाण्डुः प्रसादाच्छोणितस्वात्। अन्ये श्यावौष्ठतां कषायपरिषेकाभ्यङ्गादिकृतां वदन्ति। पीड़का यस्य सन्ति स पीड़की, पीड़काः व्रणौष्ठे अणुमांसाङ्कुराः। अपीड़कीत्यन्ये पठन्ति। तत्र न विद्यन्ते पीड़काः अस्येति। समः समतलः। अवेदन इति न विद्यते वातादीनां तोदादिवेदना यस्य स अवेदनः, सामान्यशुद्धव्रणवेदना तु विद्यत एव, येन सुरूढ़े वक्ष्यति—अशूनमरुजं व्रणमिति ॥ १६ ॥

रोहद्व्रणलक्षणं निर्द्दिशन्नाह— कपोतवर्णप्रतिमा इत्यादि। कपोतवर्णप्रतिमाः पाण्डुधूसराः, स्थिराः कठिना इत्यर्थः, चिपिटिकावन्त इति चर्म्मचेलीयुक्ताः, विशुष्यमाणत्वात् त्वचश्चर्म्मचेलीसम्भवः। रोहति रोहं गच्छति। व्रणे शुष्का सूक्ष्मा श्वेता या उच्चटति त्वक्, सा चर्म्मचेली कथ्यते। अन्ये तु अपिटिकावन्त इति पठन्ति ॥ १७ ॥

सम्यग्रूढव्रणस्य लक्षणं दर्शयन्नाह—रूढवर्त्मानमग्रन्थिमित्यादि। रूढवर्त्मानं रूढव्रणवर्त्मित्यर्थः। त्वक्सवर्णं त्वचा सवर्णमित्यर्थः। समतलमिति सदृशं करतलेन जिह्वातलेन वेत्यर्थः, अन्ये त्वग्रन्थिपदेनोपरिष्टात् शूनता निषिद्धा। समतलशब्देनाधोनिम्नता निषिध्यत इति वदन्ति।

दोषप्रकोपाद् व्यायामादभिघातादजाणतः ।
हर्षात् क्रोधाद् भयाद् वापि व्रणो रूढ़ोऽपि दीर्य्यते ॥ १९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने कृत्याकृत्यविधिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

तेषां मते समस्तले समतल इति योज्यते। केचिदत्राध्यायान्ते रूढ़व्रणव्यापत्पाठं पठन्ति। दोषप्रकोपादित्यादि । अयञ्च श्लोकः सर्व्वेष्वपि निबन्धेष्वपरिगृहीत इत्यनार्षः, तस्मान्न पठनीय इति ॥ १८ । १९ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे
कृत्याकृत्यविधिव्याख्यानाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्व्विंशोऽध्यायः ।

अथातो व्याधिसमुद्देशीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

द्विविधा व्याधयः—शस्त्रसाध्याः स्नेहादिक्रियासाध्याश्च। तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते। स्नेहादिक्रियासाध्येषु शस्त्रकर्म्म न क्रियते। अस्मिन् पुनः शास्त्रे सर्व्वतन्त्रसामान्यात् सर्व्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते ॥ २ ॥

प्रागभिहितं तद्दुःखसंयोगा व्याधय इति। तच्च दुःखं त्रिविधम्—आध्यात्मिकमाधिभौतिकमाधिदैविकमिति ॥ ३ ॥

तत् तु सप्तविधे व्याधावुपनिपतति। ते पुनः सप्तविधा व्याधयः; तद्यथा—आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ताः सङ्घातबलप्रवृत्ताः कालबलप्रवृत्ता दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ता इति ॥ ४ ॥

अथातो व्याधिसमुद्देशीयमित्यादि। व्याधिसमुद्देशीयो व्याधीनां समासेनोद्देशः कथनम्, तदधिकृत्य कृतोऽध्यायो व्याधिसमुद्देशीयः व्याधिसंक्षेपोद्देशीय इत्यर्थः। शस्त्रसाध्यत्वेन स्नेहादिसाध्यत्वेन च व्याधीनां द्वैविध्यं दर्शयन्नाह—द्विविधा इत्यादि। शस्त्रसाध्या इति छेद्यादिप्रकारेण, स्नेहादिक्रियासाध्या इत्यत्रादिशब्देन स्वेदनवमनविरेचनादयः। तत्रेति तयोर्मध्ये, शस्त्रसाध्येष्वष्टविधशस्त्रकर्म्मोक्तेषु भगन्दरग्रन्थिप्रभृतिषु। शल्यतन्त्रत्वादस्य तन्त्रस्य शस्त्रक्रियैवार्हति न स्नेहादिक्रियेत्याशङ्क्य उभयक्रियाधिकारं दर्शयन्नाह - अस्मिन्नित्यादि। अस्मिन्निति सौश्रुते शल्यतन्त्रे। पुनःशब्दोऽत्र एवार्थे। सर्व्वतन्त्रसामान्यादिति शालाक्यादीनां सामान्यात् तुल्यत्वात्। यथास्थूलमिति स्थूलदृष्ट्या न सूक्ष्मदृष्ट्येत्यर्थः। एतेन ये सनामका व्याधयस्तेषामवरोधः। निर्नामकानां पुनर्लक्षणद्वारेण, अवरोधः संग्रहः ॥ १ । २ ॥

कः पुनरयं व्याधिरित्याह—प्रागभिहितमित्यादि। तदिति तयोः शरीरशरीरिणोः, शरीरमनसोरिति केचित्। तच्च दुःखं त्रिविधमिति चकारान्न केवलं त्रिविधं, सप्तविधञ्च। आत्मशब्देन समनस्कं शरीरमुच्यते। तत्र वातपित्तकफोत्थाः शरीरभवा आध्यात्मिकास्तथारजस्तमोभवाश्च। आत्मन्यधि अध्यात्मं, तत्र भवमाध्यात्मिकम्। भूतानि प्राणिनः, भूतेष्वधिकृत्य यत् प्रवर्त्तते तत् आधिभौतिकम्। देवाः सुराः सुरयोनयश्च, देवेष्वधिकृत्य यद् वर्त्तते तदाधिदैविकम् ॥ ३ ॥

तदेव त्रिविधं दुःखं भेदान्तरहेतुभिर्बहुप्रकारभूते व्याधौ सम्भवतीत्याह—तदित्यादि। तत् त्रिविधं दुःखं, उपनिपतति मध्ये निपतति। ते पुनरिति ते त्रिविधा व्याधयः पुनः सप्तविधा भवन्तीत्यर्थः। तेषां सप्तविधानां व्याधीनां क्रमेण नामान्याह—तद् यथेति ॥ ४ ॥

तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः; तेऽपि द्विविधाः—मातृजाः पितृजाश्च। जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्ग्वात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते; तेऽपि द्विविधा रसकृता दौहृदापचारकृताश्च। दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च; तेऽपि द्विविधाः—आमाशयसमुत्थाः पक्वाशयसमुत्थाश्च, पुनश्च द्विविधाः शारीरा मानसाश्च। एत आध्यात्मिकाः॥ ५॥

सङ्घातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात्; तेऽपि द्विविधाः—शस्त्रकृता व्यालकृताश्च। एत आधिभौतिकाः॥ ६॥

कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्ताः। तेऽपि द्विविधाः—व्यापन्नर्त्तुकृता अव्यापन्नर्त्तुकृताश्च। दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका

प्रोक्तसप्तविधव्याधीनां क्रमशो विवरणमाह—तत्र आदिबलप्रवृत्ता इत्यादि। तत्र तेषु मध्ये, आदिबलप्रवृत्ता दुष्टशुक्रशोणितबलजाता; के ते इत्याह—ये शुक्रशोणितदोषान्वया इति, शुक्रशोणितस्थितवातादिदोषजनिताः। तानेव नामतो दर्शयति—कुष्ठार्शःप्रभृतय इति। प्रभृतिग्रहणान्मेहक्षयादयः। मातृजा इति मातुः शोणितजाः, पितृजाश्च इति पितुः शुक्रजाः। जन्मबलप्रवृत्ता इत्यादि। जन्मबलप्रवृत्ता इति शुक्रशोणितदुष्टिं विनापि मातुरपचारबलजाताः। अपचार इति दुष्टाहाराचारावपचारः। मूकाः अवाचः, मिन्मिनिकाः सानुनासिकाः, वामनाः अत्यन्तह्रस्वशरीराः। दौहृदापचारकृताश्चेति गर्भानुभवात् मातुश्चतुर्थादिमासेष्विन्द्रियार्थप्रार्थना दौहृदमित्याचक्षते, तस्यापचारस्तु दौहृदमेवापमानितम्, अपमानितम् अलब्धं गर्भस्याहितं वा। अत्र मूकमिन्मिनिकवामनप्रभृतयो जायन्ते इत्यस्याग्रे केचिद् भुञ्जत इत्यादिपाठं पठन्ति, स च पूर्णो न दृश्यते निबन्धेष्विति न लिखितः। तृतीयं व्याधिभेदं निर्दिशन्नाह—दोषेत्यादि। दोषा इति वातादयो रजस्तमसी च, बलं शक्तिः, प्रवृत्ता जाताः। के पुनस्ते इत्याह—आतङ्कसमुत्पन्ना इति। आतङ्का रोगाः, यथा प्रतिश्यायात् कासः, कासात् क्षय इत्यादि। एते आध्यात्मिका इति एते आदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्तास्त्रय आध्यात्मिकाः, शरीरस्थवातादिरजःप्रभृतिदोषजनितत्वात्॥ ५॥

चतुर्थं व्याधिभेदं निर्दिशन्नाह—सङ्घातेत्यादि। सङ्घातबलप्रवृत्ता इति प्रहारशक्तिजाताः। के पुनस्ते इत्याह—ये आगन्तव इति। व्यालकृता इति व्याला दुष्टव्याघ्रादयः। एते आधिभौतिका इति एते पूर्व्वोक्ता आगन्तवः। आधिभौतिकत्वं भूतेषु प्राणिषु अधिकृतत्वात्॥ ६॥

पञ्चमं व्याधिभेदं निर्दिशन्नाह—कालबलप्रवृत्ता इत्यादि। कालः शीतोष्णवर्षलक्षणः षडृतुकः। के पुनस्ते इत्याह—शीतोष्णवातवर्षातपप्रभृतिनिमित्ताः। ते पुनर्जाड्यदाहकम्पादयः, तथा व्रणज्वराश्च। अत्र व्यापन्नर्त्तुकृतानां पूर्व्वोद्धृतान्नपानौषधिभिरुपचारः। यथास्वञ्च व्याधिविहितं भेषजम्, ऋतुव्यापत्प्रशमनञ्च दैवव्यपाश्रयं होमादि, अव्यापन्नर्त्तुकृतानां पुनर्यथादोषं

आथर्व्वणकृता उपसर्गजाश्च; तेऽपि द्विविधाः—विद्युदशनिकृताः पिशाचादिकृताश्च, पुनश्च द्विविधाः—संसर्गजा आकस्मिकाश्च। स्वभावबलप्रवृत्ताः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः; तेऽपि द्विविधाः—कालकृता अकालकृताश्च। तत्र परिरक्षणकृताः कालकृताः, अपरिरक्षणकृता अकालकृताः। एत आधिदैविकाः। अत्र सर्व्वव्याध्यवरोधः॥ ७॥

सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलम्, तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्च। यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न

यथारोगमेवोपचारः। षष्ठं व्याधिभेदं निर्द्दिशन्नाह—दैवबलप्रवृत्ता इत्यादि। दैवबलप्रवृत्ताः इति दैवशक्तिजाता इत्यर्थः। के पुनस्ते इत्याह—ये देवद्रोहादित्यादि। देवगोगुरुसिद्धानां द्रोहात्। अभिशस्तका इति ऋषीणामाक्रोशजाः। आथर्व्वणकृता इति अथर्व्ववेदप्रणिहिताभिचारिकमन्त्रैः कृता मारणात्मका व्याधयः। उपसर्गजा इति उपसृज्यन्ते इत्युपसर्गाः पीड़ितजनसमीपोत्पन्ना ज्वरादयः। विद्युदशनिकृता इति लताकारा तिर्य्यक्पतन्ती वह्निरूपा विद्युत्, मुषलवदधःपतनशीलो मारणात्मकोऽशनिः। संसर्गजा इति देवादिद्रोहजनकसम्पर्कजा इत्यर्थः। आकस्मिका इति विनैव संसर्गं प्राक्तनकर्म्मपीड़ितत्वेन जाता इत्यर्थः। उपसर्गजसंसर्गजयोरयं विशेषः—उपसर्गजा ज्वरादिरोगपीड़ितजनसम्पर्काद् भवन्ति, संसर्गजाश्च देवादिद्रोहकजनसम्पर्काद् भवन्ति। देवद्रोहाभिशस्तका इत्यत्र केचित् उपसर्गाभिशापाभिचाराभिषङ्गजा इति पठन्ति, स चाभावात् न लिखितः। सप्तमं व्याधिभेदं दर्शयन्नाह—स्वभावबलप्रवृत्ता इत्यादि। स्वभावबलप्रवृत्ता इति प्रकृतिशक्तिजाता इत्यर्थः। के पुनस्ते इत्याह—क्षुत्पिपासेत्यादि। कालजा इति ये समये प्राप्ता भवन्ति। अकालजा असमये जाता इत्यर्थः। तत्र कालजाकालजयोर्हेतुभेदेन भेद इति दर्शयति—तत्र परिरक्षणकृता इत्यादि। परिरक्षणं रक्षाप्रयत्नः, तस्मिन्नपि परिरक्षणे ये भवन्ति ते कालकृताः। अतएव कालकृतानां नोपचारोऽस्ति; याप्यतैवास्ति भोजनपानरसायनादिभिः। आत्यन्तिक प्रतिकारो वा स्वभावव्याधिचिकित्सितोक्तरसायनविधिना। अपरिरक्षणकृता इति अपरिरक्षणं रक्षणेऽप्रयत्नः, तस्मिन् ये भवन्ति ते अकालकृताः। तेषाञ्च यथादोषं यथारोगं प्रतिकारः। एते आधिदैविका इति एते क्षुत्पिपासादयो दैवमधिकृत्य भवन्तीत्याधिदैविकाः। केचित् 'एते आधिदैविकाः' इत्यमुं पाठं न पठन्ति। तेषां मते स्वभावबलप्रवृत्ताः क्षुत्पिपासादय आध्यात्मिकमध्ये निपतन्ति। तत्र तेष्वेव सप्तसु व्याधिभेदेषु सर्व्वव्याध्युपरोधं दर्शयन्नाह—अत्र सर्व्वव्याध्युपरोध इति। अत्रेति सप्तविधे व्याधौ, उपरोधः संग्रहः॥ ७॥

कथं पुनः सर्व्वव्याध्युपरोध इत्याह—सर्व्वेषाञ्च व्याधीनामित्यादि। मूलमिति कारण मित्यर्थः। तल्लिङ्गत्वादिति वातादिलिङ्गत्वात्। लिङ्गन्तु वातादीनां रौक्ष्याल्पस्नेहादयः, तथा तोददाहकण्ड्वादीनि कार्य्याणि च। दृष्टफलत्वादिति वातादिहरौषधैर्वातादिव्याधेरुपशमनदर्शनात्। आगमाच्च सर्व्वशास्त्रेकवाक्यतानां व्याधीनां कार्य्यरूपतानां वातपित्तश्लेष्माणो

व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते। दोषधातुमलसंसर्गायतनविशेषान्निमित्ततश्चैषां विकल्पा भवन्ति। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते—रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजोऽयमस्थिजोऽयं मज्जजोऽयं शुक्रजोऽयं व्याधिरिति॥८॥

तत्रान्नाश्रद्धारोचकाविपाकाङ्गमर्दज्वर-हृल्लास-तृप्तिगौरवहृत्पाण्डुरोग-मार्गोपरोध-कार्श्यवैरस्याङ्गसादाकालवलिपलितदर्शनप्रभृतयो रसदोषजा विकाराः। कुष्ठविसर्पपिड़कामशकनीलिकातिलकालकन्यच्छ--व्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्म-वातशोणितार्शोऽर्बुदाङ्गमर्दासृग्दर-रक्तपित्तप्रभृतयो रक्तदोषजा गुदमुखमेढ्रपाकाश्च। अधिमांसार्बुदार्शोऽधिजिह्वोपजिह्वोपकुश-गलशुण्डिकालजीमांस-

हि कारणम्। यथा हि कृत्स्नमित्यादि। विकारजातमिति विकारसमूहम्, विकाराश्चात्र त्रयोविंशतिर्महदाद्याः। विश्वरूपेणावस्थितमिति जगद्रूपेण व्याप्य स्थितमित्यर्थः। न व्यतिरिच्यन्ते इति न पृथग्भवन्तीत्यर्थः। एवमेव कृत्स्नं विकारजातमित्यादि। विकारजातमिति रोगसमूहम्, अव्यतिरिच्येति अपरित्यज्येत्यर्थः। एतेन तल्लिङ्गत्वादित्यादिना अनुमानप्रत्यक्षापगमोपमानानि चत्वारि प्रमाणान्युक्तानि। ननु दोषत्रयात् कथमादिवलप्रवृत्तादयोऽनेकव्याधय इत्याह—दोषधातुमलसंसर्गादिति। संसर्गः संयोगः। तद् यथा—वातादिदोषरसधातुमूत्रपुरीषमलसंसर्गादतीसारादयः, वातादिदोषरसधातुसंसर्गात् ज्वरादयो रसाधिष्ठानाः, वातादिदोषरसादिदूष्यमूत्रमलसंसर्गाद् विंशतिर्मेहाः; तथा वातादिदोषरक्तधातुसंसर्गाद् वातरक्तरक्तपित्तविद्रधिरक्तगुल्मादयः। आयतनविशेषादिति आयतनानि स्थानानि, तेषां विशेषो भेद इत्यर्थः। तद् यथा—सप्तस्वायतनेषु पञ्चषष्टिर्मुखरोगाः, चक्षुरिन्द्रियायतनेषु षट्सप्ततिर्नेत्ररोगाः। निमित्ततश्चेति निमित्तानि वातादयः, तद् यथा—प्रत्येकं वातादिज्वरास्त्रयः, सान्निपातिक एकः, द्वन्द्वजास्त्रयः, आगन्तुश्चाष्टमः। एवमन्यदपि निमित्ततो व्याधीनां नानात्वं ज्ञेयम्। एषामिति व्याधीनाम्, विकल्पः भेदेन नानात्वमित्यर्थः। दूष्यजन्मसंज्ञा लक्षणया भवतीति दर्शयन्नाह—दोषदूषितेष्वत्यर्थमित्यादि। दोषैरेव दूषितेषु धातुषु अत्यर्थं दूषितेषु विकारेषु रसजादिसंज्ञा; यथा घृतदग्धस्तैलदग्धस्ताम्रदग्धो लोहदग्ध इति। अत्र घृतादिशब्देन घृतादिस्थो वह्निर्लक्ष्यते, एवं रसादिजो व्याधिरित्यत्र रसादिस्थितवातादिदोषा लक्ष्यन्ते॥८॥

चिकित्साविशेषविज्ञानार्थं सुखसाध्यत्वादिकर्म्मबोधार्थञ्च प्रत्येकं रसादिधातुविकारान् दर्शयितुमाह—तत्रान्नाश्रद्धारोचकेत्यादि। अन्नाश्रद्धा अन्नविद्वेषः। अङ्गमर्द इति वेदनाविशेषः स्फुटनिकेति लोके। हृल्लासः हृदयोत्क्लेदः असकृत् ष्ठीवनम्। अङ्गसाद इति अङ्गानामनुत्साहः। रसदोषजा इति दोषदूषितरसजाताः। रसजानभिधाय रक्तजानभिधातुमाह—कुष्ठेत्यादि। रक्तजानुक्त्वा मांसजानाह—अधिमांसेत्यादि। मांससङ्घात इति मांससङ्घातो नाम मुखरोगेषु,

सङ्घातौष्ठप्रकोपगलगण्डगण्डमालाप्रभृतयो मांसदोषजाः। ग्रन्थि-वृद्धि-गलगण्डार्व्वुदमेदोजौष्ठप्रकोप-मधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः। अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः। तमोदर्शनमूर्च्छाभ्रमपर्व्वस्थूलमूलारुर्जन्मनेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः। क्लैब्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषजाः। त्वग्दोषाः सङ्गोऽतिप्रवृत्तिरयथाप्रवृत्तिर्वा मलायतनदोषाः। इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः। इत्येवं समास उक्तः, विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्यामः॥ ९॥

भवति चात्र।

कुपितानां हि दोषाणां शरीरे परिधावताम्।
यत्र सङ्गः खवैगुण्याद्*व्याधिस्तत्रोपजायते॥ १०॥

मांसोच्छ्रायः सामान्य एवेत्यन्ये। मांसजान् कथयित्वा मेदोजानाह—ग्रन्थीत्यादि। मेदोजानुक्त्वा अस्थिजानाह—अध्यस्थ्यधिदन्तेत्यादि। अध्यस्थीनि अधिकास्थीनीत्यर्थः। अधिदन्त इति अधिका दन्ता इत्यर्थः। तोदशूलाभ्यां सह अस्थिशब्दः प्रत्येकं सम्बध्यते। अस्थिदोषानभिधाय मज्जजानाह—तमोदर्शनेत्यादि। तमोदर्शनम् अन्धकारदर्शनम्। मूर्च्छा चेतनाच्युतिः। भ्रमश्चक्रारूढस्येव। स्थूलमूलानामरुषां व्रणानां पर्व्वसु जन्मेत्यर्थः। अन्ये तु पर्व्वस्थूलमूलारुर्जन्म इत्यत्र पर्व्वगौरवस्थूलमूलोरुजङ्घा इति पठन्ति। मज्जदोषानभिधाय शुक्रदोषान् दर्शयति—क्लैब्याप्रहर्षेति। क्लैब्यमिति पण्डता इत्यर्थः। अप्रहर्ष इति स्त्रीविषयेऽनभिलापः। तद्दोषजा इति शुक्रदोषजाः। शुक्रजानुक्त्वा मलायतनदोषानाह—त्वग्दोषा इत्यादि। त्वग्दोषाः कुष्ठानि। कर्णनासाक्षिमुखमलायतनेष्वन्येषु च प्रजननाद्यपत्यपथेष्वप्रवृत्तिः सङ्ग उच्यते। मलायतनदोषानभिधाय इन्द्रियायतनदोषानाह—इन्द्रियाणामप्रवृत्तिरित्यादि। समासः संक्षेपः। दोषधातुमलसंसर्गादिति यत् प्रागुक्तं व्याधिनानात्वकारणं, तथा आयतनविशेषादि यद् द्वितीयं व्याधिनानात्वकारणमुक्तम्, एतद् द्वयमपि सक्षेपेणाभिधाय निमित्ततश्चेति यदुक्तं तृतीयं व्याधिनानात्वकारणं तदभिधातुमाह विस्तरं निमित्तानि चैषामिति। निमित्तानि वातादयः, तत्कारणानि बलवद्विग्रहादीनि मिथ्याप्रयुक्तानि स्नेहादीनि च; तद्यथा—कामज्वरः क्रोधज्वरो मृत्पाण्डुरोग इत्यादि। तथातीसारे गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैरित्यादि प्रतिरोगं निर्द्दिष्टानि। प्रतिरोगं वक्ष्याम इति रोगे रोगे वक्ष्यामः। वातादीनां शरीरे प्रसरतां स्थानसंश्रयस्य व्याधिनानात्वकारणस्य हेतुं दर्शयन्नाह—कुपितानामिति। खवैगुण्यात् स्रोतोवैगुण्यादित्यर्थः॥ ९।१०॥

* स्ववैगुण्यादिति पाठान्तरम्।

भूयोऽत्र जिज्ञास्यम्—किं वातादीनां ज्वरादीनाञ्च नित्यः संश्लेषः परिच्छेदो वा इति ? यदि नित्यः संश्लेषः स्यात् तर्हि नित्यातुराः सर्व्वं एव प्राणिनः स्युः; अथाप्यन्यथा वातादीनां ज्वरादीनाञ्चान्यत्र वर्त्तमानानामन्यत्र लिङ्गं न भवतीति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति, तन्न। अत्रोच्यते—दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति, अथ च न नित्यः सम्बन्धः;—यथा हि विद्युद्वाताशनिवर्षाण्याकाशं प्रत्याख्याय न भवन्ति, सत्यप्याकाशे कदाचिन्न भवन्ति, अथ च निमित्ततस्तत एवोत्पत्तिरिति। तरङ्गबुद्बुदादयश्चोदकविशेषा एव। वातादीनां ज्वरादीनाञ्च नाप्येवं संश्लेषो न परिच्छेदः शाश्वतिकः, अथ च निमित्तत एवोत्पत्तिरिति * ॥ ११ ॥

भवति चात्र

विकारपरिमाणञ्च सङ्ख्या चैषां पृथक् पृथक्।
विस्तरेणोत्तरे तन्त्रे सर्व्वाबाधाश्च वक्ष्यते ॥ १२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने व्याधिसमुद्देशीयो नाम चतुर्व्विंशोऽध्यायः ॥ २४ ॥

प्रतिपाद्यव्याधीनां दोषाणाञ्च कार्य्यकारणसम्बन्धं पुनरन्यथा जिज्ञास्यमाह—भूयोऽत्रेत्यादि। भूयःशब्दः पुनरर्थे। जिज्ञास्यं ज्ञातुमभिलषणीयम्। एतेनैतदुक्तं भवति, प्राक् किल व्याधीनां वातादिमूलत्वं जिज्ञासितम्, अत्रान्यत् पुनरपि ज्ञातुमेष्टव्यमित्यर्थः। अन्ये भूयो बहुतरमिति व्याख्यानयन्ति। केचिद् भूयोऽत्र जिज्ञास्यते इति पठन्ति। नित्यः संश्लेष इति सर्व्वदा अपृथक्त्वम्, यथा—सूर्य्यातपयोश्चन्द्रज्योत्स्नयोः पावकोष्णत्वयोरिति। परिच्छेदो विश्लेषः, पृथक्त्वं; यथा—पटकुविन्दकयोर्घटकुम्भकारयोः कुण्डलसुवर्णकारयोरित्यादि। अथाप्यन्यथा इति कोऽर्थः ? अनित्यः संश्लेषः। पूर्व्वपक्षमाशङ्क्य समाधानमाह—अत्रोच्यते इत्यादि। प्रत्याख्यायेति परित्यज्येत्यर्थः। ननु यदि दोषान् परित्यज्य ज्वरादयो न भवन्ति, तर्हि सम्बन्धोऽस्तीत्याशङ्कानिराकरणायाह—अथच न नित्यः सम्बन्ध इति। नित्यः सर्व्वदेत्यर्थः। स कथं न सर्व्वदा सम्बन्ध इति दृष्टान्तमाह—विद्युद्वातेत्यादि। आकाशशब्देनाकाशस्थो मेघ उच्यते। सत्यप्याकाशे इति विद्यमानेऽपि जलदे इत्यर्थः। निमित्तत इति सामग्रीत इत्यर्थः। तत एवेति तस्याः सामग्र्या एवेत्यर्थः। अपरदृष्टान्तमाह—तरङ्गबुद्बुदादय इति। तरङ्गो जललहरी। शाश्वतिक इति नित्य इत्यर्थः ॥ ११ ॥

विस्तरं निमित्तानि चैषां प्रतिरोगं वक्ष्याम इति यदुक्तं प्राक् तत् प्रतिपादयन्नाह—विकार-

* अथ च न नित्यः सम्बन्ध इति पाठान्तरम्।

परिमाणञ्चेत्यादि । विकारपरिमाणञ्चेतीयं समुदायसङ्ख्या, तथा च व्याधीनान्तु सहस्रं यञ्चतं विंशतिरेव चेत्युत्तरे तन्त्रे वक्ष्यते । संख्या चैषां पृथक् पृथगिति इयमवयवसंख्या, तथाच षड्शांसि, चतस्रोऽश्मर्य्यः अष्टादश कुष्ठानीति निदानस्थाने वक्ष्यते, सर्व्वाबाधाश्च वक्ष्यत इति ज्वरातिसारशोषादयः । चकारोऽत्र भिन्नक्रमे । तेन विकारपरिमाणञ्च सर्व्वाबाधाश्चोत्तरे तन्त्रे वक्ष्यत इति सम्बध्यते, न पुनरुत्तरे तन्त्रे इति संख्या चैषां पृथक् पृथगित्यत्र सम्बध्यते । अन्ये तु व्याख्यानयन्ति—विकारा ज्वरादीनामुपद्रवरूपतया तृट्छर्दिप्रभृतयः, तत्परिमाणमधिकमध्य-हीनभेदेन विकारपरिमाणम्; अष्टौ ज्वराः, षडतीसारा इत्यादि संख्या च पृथक् पृथक्; सर्व्वा-बाधाश्च शारीरमानसा इति; सर्व्वमेतदुत्तरे तन्त्रे वक्ष्यते व्याख्यास्यत्याचार्य्य इति ॥ १२ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे व्याधिसमुद्देशीयव्याख्यानाम चतुर्व्विंशोऽध्यायः ॥ २४ ॥

# पञ्चविंशोऽध्यायः ।

अथातोऽष्टविधशस्त्रकर्म्मीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः ।
व्रणवर्त्मार्व्वुदान्यर्शश्चर्म्मकीलोऽस्थिमांसगम् ॥
शल्यं जतुमणिर्मांस-सङ्घातो गलशुण्डिका ।
स्नायुमांससिराकोथो वल्मीकं शतपोनकः ।
अध्रुपश्चोपदंशाश्च मांसकन्द्यधिमांसकः ॥ २ ॥
भेद्या विद्रधयोऽन्यत्र सर्व्वजाद् ग्रन्थयस्त्रयः ।
आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः ॥
प्रमेहपिड़काशोफ-स्तनरोगावमन्थकाः ।
कुम्भीकानुशयीनाड्यो वृन्दौ पुष्करिकालजी ॥
प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ।
तुण्डिकेरी गिलायुश्च पूर्व्वं ये च प्रपाकिणः ।
वस्तिस्तथाश्मरीहेतोर्मेदोजा ये च केचन ॥ ३ ॥

तत्र पूर्व्वं छेद्यकर्म्मण एव दर्शितत्वात् तद्भेदमेव दर्शयन्नाह—छेद्या भगन्दरा इत्यादि । ग्रन्थिः श्लैष्मिक इति आमो न तु पक्वः । तिलकालक इति क्षुद्ररोगपरिपठितः, न तु शूकदोपोक्तः तस्यासाध्यत्वात् । व्रणवर्त्मेति क्लिन्नो व्रणौष्ठः । अर्व्वुदानि सर्व्वाणि । अर्शो वातिकं श्लैष्मिकञ्च । चर्म्मकील इति गुदपार्श्ववर्त्तिमांसाङ्कुरः । स्नाय्वादिभिः सह कोथशब्दः प्रत्येकं सम्बध्यते । कोथः पूतिभावः । शतपोनक इति शूकदोषपठितः ; अन्ये तु भगन्दरग्रहणंनाभ्युपपन्नस्य शतपोनकस्य पुनरुपादानमत्यन्तछेदनार्थमनन्यप्रतीकारत्वात् ॥ १ । २ ॥

भेद्यविषयं दर्शयन्नाह—भेद्या इत्यादि । ग्रन्थयस्त्रय इति वातपित्तकफजाः । आदितो ये विसर्पाश्चेति वातपित्तश्लेष्मजाः, विदारिका क्षुद्ररोगेषु, अवमन्थका इति शूकदोषेषु, वृन्दाविति एकवृन्दो वृन्दश्च कण्ठगतरोगेषु, पुष्करिका शूकदोषेषु, पुप्पुटौ तालुदन्तजाविति तालुपुप्पुटो दन्तपुप्पुटश्च । पूर्व्वं ये च प्रपाकिण इति भगन्दरादयः । वस्तिस्तथाश्मरीहेतोरिति अश्मरीनिमित्तमेव वस्तिर्भेद्यो नान्यहेतोः, अभेदे ध्रुवमरणात् भेदे च संशयात् ॥ ३ ॥

लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका।
मेदोजो दन्तवैदर्भो ग्रन्थिर्वर्त्माधिजिह्विका॥
अर्शांसि मण्डलं मांस-कन्दी मांसोन्नतिस्तथा॥ ४॥
वेध्याः शिरा बहुविधा मूत्रवृद्धिर्दकोदरम्॥ ५॥
एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये॥ ६॥
आहार्य्याः शर्करास्तिस्रो दन्तकर्णमलोऽश्मरी।
शल्यानि मूढ़गर्भाश्च वर्च्चश्च निचितं गुदे॥ ७॥
स्राव्या विद्रधयः पञ्च भवेयुः सर्व्वजादृते।
कुष्ठानि वायुः सरुजः शोफो यश्चैकदोषजः॥
पाल्यामयाः श्लीपदानि विषजुष्टञ्च शोणितम्।
अर्व्वुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये॥
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका।
शौषिरो गलशालूकं कण्टकाः कृमिदन्तकः॥
दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः।
पित्तास्रक्कफजाश्चौष्ठ्याः क्षुद्ररोगाश्च भूयशः॥ ८॥
सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः।
सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रिताः॥ ९॥

लेख्यविषयं दर्शयन्नाह लेख्याश्चतस्र इत्यादि। चतस्रो रोहिण्य इति वातपित्त-श्लेष्मसन्निपातोत्थाः, रक्तजा पुनरेकान्तासाध्यत्वादिह नोक्ता। वर्त्मं इति व्रणवर्त्मं नेत्रवर्त्मं चेत्यर्थः। मण्डलं कण्डूकुष्ठादीनाम्, मांसकन्दी स्वल्पमांसाङ्कुरः॥ ४॥

वेध्यविषयं दर्शयन्नाह—वेध्याः शिरा बहुविधा इत्यादि॥ ५॥

एष्यविषयं दर्शयन्नाह—एष्या इत्यादि। एष्या नाड्य इति लोहादिशलाकया अन्तरन्वेषणीया इत्यर्थः, अल्पास्थित्वज्ञापनार्थं सुखेनापकर्षाय च। उन्मार्गी तिर्य्यग्गतिः॥ ६॥

आहार्य्यविषयं दर्शयन्नाह—आहार्य्या इत्यादि। आहार्य्या आकर्षणीयाः, शर्करास्तिस्र इति मूत्रशर्करा पादशर्करा दन्तशर्करा चेति॥ ७॥

विस्राव्यविषयं दर्शयन्नाह स्राव्या इत्यादि॥ ८॥

सीव्यविषयं दर्शयन्नाह—सीव्या इत्यादि। मेदःसमुत्था इति ये केचन मेदोभवा विकाराः। भिन्ना इति विदीर्णा इत्यर्थः। सुलिखिता गदा इति निरवशेषलिखिता इत्यर्थः, व्यपाश्रिता इति विशेषेणाश्रिता इत्यर्थः। स्राव्या इति केचित् पठन्ति॥ ९॥

न क्षाराग्निविषैर्जुष्टा न वा मारुतवाहिनः।
नान्तर्लोहितशल्याश्च तेषु सम्यग् विशोधनम्।
पांशुरोमनखादीनि चलमस्थि भवेच्च यत्॥
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम्।
रुजश्च विविधाः कुर्य्युस्तस्मादेतान् विशोधयेत्॥ १०॥
ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम्।
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा॥
शणजक्षौमसूत्राभ्यां स्नाय्वा वालेन वा पुनः।
मूर्व्वागुडूचीतानैर्वा सीव्येद् वेल्लितकं शनैः॥
सीव्येद् गोफणिकां वापि सीव्येद् वा तुन्नसेवनीम्।
ऋजुग्रन्थिमथो वापि यथायोगमथापि वा॥
देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम्।
आयता त्र्यङ्गुला त्र्यस्रा मांसले चापि पूजिता॥
धनुर्वक्रा हिता मर्म्म-फलकोषोदरोपरि।
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः॥
कारयेन्मालतीपुष्प-वृन्ताग्रपरिमण्डलाः।
नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत्।
दूराद् रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम्॥ ११॥

अथ के न सीव्या इत्याह—न क्षारेत्यादि। तेषु किं कर्त्तव्यमित्याह—तेष्वित्यादि। कान् विशोधयेदित्याह—पांश्वित्यादि। अन्ये तृणादीनीति पठन्ति। कस्मादेते विशोध्या इत्याह—अहृतानीत्यादि। तत्र सप्तानां छेद्यादिकर्म्मणामवचारणस्यान्यत्र दर्शितत्वात् सीव्यं पुनरत्रैव विस्तरेण निर्दिशन्नाह—ततो व्रणमित्यादि। समुन्नम्य उन्नतं कृत्वा, अश्मन्तकः अम्लटकसदृशो वृक्षः, क्षौममिति क्षुमा अतसी तस्या इदं क्षौमं, स्नायुरिति शणाकार उपधातुविशेषः, येन धनूंषि नह्यन्ते। मूर्व्वा चीरस्नायुः, यया पूर्व्वदेशे गुणान् कुर्व्वन्ति धनुषाम्। अन्ये कोविदारसदृशयुग्मपत्रं लताविशेषमश्मन्तकमाचक्षते। तानैरिति तन्तुभिरित्यर्थः। वेल्लितकञ्च। गोफणिकां गोफणाकाराम्, तुन्नसेवनीमिति यथा वस्त्रं पाटितं तन्तुवायकाः सन्दधति, तद्वत् तुन्नसेवनीं सीव्येत्। ऋजुग्रन्थिमिति ऋजुग्रन्थिः बन्धसदृशो यस्यां सेवन्यां सा ऋजुग्रन्थिः। त्र्यस्रेति त्रिधारेत्यर्थः। फलकोषोऽण्डकोषः, सुसमाहिता इति सुहस्ता इत्यर्थः। परिमण्डला इति वर्त्तुला इत्यर्थः। निकृष्टे सन्निकृष्ट निकटे इत्यर्थः। अवलुञ्चनमिति त्रुटनमित्यर्थः॥ १०। ११॥

अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् ।
प्रियङ्ग्वञ्जनयष्ट्याह्व-रोध्रचूर्णैः समन्ततः ॥
शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः ।
ततो व्रणं यथायोगं बद्ध्वाचारिकमादिशेत् ॥ १२ ॥
एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम् ।
चिकित्सिते तु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते ॥ १३ ॥
हीनातिरिक्तं तिर्य्यक् च गात्रच्छेदनमात्मनः ।
एताश्चतस्रोऽष्टविधे कर्म्मणि व्यापदः स्मृताः ॥ १४ ॥
अज्ञानलोभाहितवाक्ययोग-भयप्रमोहैरपरैश्च भावैः ।
यदा प्रयुञ्जीत भिषक् कुशस्त्रं तदा स शेषान् कुरुते विकारान् ॥ १५ ॥
तं क्षारशस्त्राग्निभिरौषधैश्च भूयोऽभियुञ्जानमयुक्तियुक्तम् ।
जिजीविषुर्दूरत एव वैद्यं विवर्ज्जयेदुग्रविषाग्नितुल्यम् ॥ १६ ॥
तदेव युक्तं त्वति मर्म्मसन्धीन् हिंस्यात् सिराः स्नायुमथास्थि चैव ।
मूर्खप्रयुक्तं पुरुषं क्षणेन प्राणैर्वियुञ्ज्यादथवा कथञ्चित् ॥ १७ ॥

सीवनस्य पश्चात् कर्म्म दर्शयन्नाह—अथ क्षौमेत्यादि । क्षौमेण अतसीवस्त्रेण, पिचुना कार्पासतूलेन, आभ्यां द्वाभ्यां छन्नमित्यर्थः । सुस्यूतमिति सम्यक् सीवितमिति लोके, प्रतिसारयेदवचूर्णयेदित्यर्थः । अवचूर्णनद्रव्याणि प्रियङ्ग्वञ्जनमित्यादीनि । अञ्जनं सौवीराञ्जनम् । समन्तत इति सर्व्वतस्त्यर्थः । क्षौमध्यामेनेति अतसीभववस्त्रभस्मना । आचारिकमादिशेदिति व्रणितोपासनीयोक्तमाचारं कथयेदित्यर्थः । केचिदिहावद्यादीनि गद्येनैव पठन्ति यावदाचारिकमादिशेदिति । संक्षेपोक्तिरियम्, विस्तरोऽस्य वक्ष्यत इति दर्शयन्नाह एतदित्यादि । अष्टग्रहणं पुनर्यदिह कृतं तच्चरकोक्तपदसंख्यानिराकरणार्थम् ॥ १२ । १३ ॥

तत्राष्टानामपि कर्म्मणां व्यापदं दर्शयन्नाह—हीनातिरिक्तमित्यादि । गात्रच्छेदनमात्मन इति शस्त्रकर्म्म कुर्व्वतः स्वशरीरे छेदनमित्यर्थः । चतस्रो व्यापद इति ; अन्ये तु एता हि तिस्र इति पठन्ति । स तु प्रमादपाठः । व्यापदो हेतून् दर्शयन्नाह—अज्ञानेत्यादि । अहितवाक्ययोगः शत्रुवचनप्रयोगः, प्रमोहो वैचित्त्यम्, अपरैश्च भावैरिति प्रयोजनव्यग्रत्वादिभिरित्यर्थः । कुशस्त्रमिति ईषच्छस्त्रम् । स शेषानिति स इति वैद्यः, शेषान् परानित्यर्थः ॥ १४ । १५ ॥

प्रागुक्ताज्ञानादिदोषदूषितं वैद्यं प्रति आतुरः किं कुर्य्यादित्याह—तं क्षारशस्त्राग्निभिरित्यादि । तं तथाविधं भिषक्छद्मचरम्, अयुक्तियुक्तं यथा भवतीत्यर्थः, जिजीविषुर्जीवितुमिच्छुः, दूरत एव वैद्यं विवर्ज्जयेदिति तस्मै दर्शनमपि न दद्यात् । हीनव्यापदमभिधायातिरिक्तशस्त्रव्यापदं दर्शयन्नाह—तदेवेत्यादि । तदेव शस्त्रं युक्तं, तु पुनरर्थे, अतीति अतिशयेन, प्राणैर्वियुञ्ज्यादिति प्राणैः सह वियोगं कारयेदित्यर्थः ॥ १६ । १७ ॥

भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च * ।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः ॥
मांसोदकाभं रुधिरञ्च गच्छेत् सर्व्वेन्द्रियार्थोपरमस्तथैव ।
दशार्द्धसङ्ख्येष्वपि हि क्षतेषु सामान्यतो मर्म्मसु लिङ्गमुक्तम् ॥ १८ ॥
सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेद् वै क्षततश्च वायुः ।
करोति रोगान् विविधान् यथोक्तांश्छिन्नासु भिन्नास्वथवा सिरासु ॥
कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत् ॥
शोफातिवृद्धिस्तुमुला रुजश्च बलक्षयः पर्व्वसु भेदशोफौ ।
क्षतेषु सन्धिष्वचलाचलेषु स्यात् सन्धिकर्म्मोपरतिश्च लिङ्गम् ॥
घोरा रुजो यस्य निशादिनेषु सर्व्वास्ववस्थासु न शान्तिरस्ति ।
तृष्णाङ्गसादौ श्वयथुश्च रुक् च तमस्थिविद्धं पुरुषं व्यवस्येत् ॥
यथास्वमेतानि विभावयेयुर्लिङ्गानि मर्म्मस्वभिताडितेषु ।
स्पर्शं न जानाति विपाण्डुवर्णो यो मांसमर्म्मण्यभिताडितः स्यात् ॥१९।२०॥

मर्म्मसन्धिशिरास्नाय्वस्थिपञ्चानां छेदनात् पञ्चप्रकारमतिरिक्तशस्त्रव्यापदं दर्शयित्वेदानीं तेष्वेव मर्म्मादिषु विद्धेषु यानि लिङ्गानि भवन्ति तानि सामान्येन दर्शयन्नाह— भ्रम इत्यादि । भ्रमश्चक्रारूढस्येव, प्रलापोऽसम्बद्धभाषणम्, पतनमनूर्द्ध्वस्थितिः, प्रमोहोऽत्यन्तचित्तनाशः, विचेष्टनं विगतकायपरिस्पन्दनं, (संलपन स्वप्नं वा) ग्लानिः सुषुप्तावस्थस्येव चित्तस्याकर्म्मण्यता, उष्णता शरीरस्य परितापः, स्रस्ताङ्गता शरीरशैथिल्यं, मूर्च्छनं चेतनाच्युतिः, ऊर्द्ध्ववात इति श्वासोऽत्राभिप्रेतः न रोगविशेषः, मांसोदकाभं मांसधावनजलसदृशम्, उपरमो निवृत्तिः, दशार्द्धसंख्येषु तदेव युक्तमित्यादिश्लोकोक्तेषु मर्म्मसन्धिशिरास्नाय्वस्थिषु पञ्चसु, क्षतेषु विद्धेषु ॥ १८ ॥

अमर्म्मविद्धशिरादिलिङ्गं दर्शयन्नाह—सुरेन्द्रेत्यादि । सुरेन्द्रगोपप्रतिममिति इन्द्रगोपकीटसन्निभमित्यर्थः । यथोक्तानिति शोणितवर्णनीयोक्तशिरोरोगाधिमन्थादीन् । कौब्ज्यं शरीरेत्यादि । कौब्ज्यमिति अन्तर्बहिरायामजं द्विधा । अवयवावसाद इति अवयवस्य स्वकर्म्मण्यसामर्थ्यम्, क्रियास्वशक्तिरिति सामान्येन सर्व्वशरीरस्य, क्रियाश्चात्रोत्क्षेपणावक्षेपणप्रसारणाकुञ्चनलक्षणाः, तुमुला गहनाः । अन्ये तु वातपित्तश्लेष्मजनिता एकत्र व्याकुलीभूतवेदना तुमुला उच्यन्ते इति वदन्ति । व्यवस्येत् जानीयादित्यर्थः । शोफातिवृद्धिरिति शोफः प्रसिद्धः, पर्व्वस्विति सन्धिषु, भेदः स्फुटनमिव, चलेति शाखाहनुकरग्रीवासु चलाः सन्धयः ।

शिरादीनां मर्म्मरहितानां विद्धलक्षणमभिधाय शिरादिमर्म्मविद्धलक्षणमतिदेशेन दर्शयन्नाह—यथास्वमेतानीत्यादि । चकारोऽयं भिन्नक्रमे, एतानि चेत्यत्र द्रष्टव्यः, तेन न केवलं भ्रम-

* संलपनोष्णते च तथा संलपनोष्णते च इति पाठान्तरं क्वचिद् दृश्यते ।

आत्मानमेवाथ जघन्यकारी शस्त्रेण यो हन्ति हि कर्म्म कुर्व्वन् ।
तमात्मवानात्महतं कुवैद्यं विवर्ज्जयेदायुरभीप्समानः ॥ २१ ॥
तिर्य्यक्प्रणिहिते शस्त्रे दोषाः पूर्व्वमुदाहृताः ।
तस्मात् परिहरन् दोषान् कुर्य्याच्छस्त्रनिपातनम् ॥ २२ ॥
मातरं पितरं पुत्त्रान् वान्धवानपि चातुरः ।
अप्येतानभिशङ्केत वैद्ये विश्वासमेति च ॥
विसृजत्यात्मनात्मानं न चैनं परिशङ्कते ।
तस्मात् पुत्त्रवदेवैनं पालयेदातुरं भिषक् ॥ २३ ॥
धर्म्मार्थौ कीर्त्तिमत्यर्थां सतां ग्रहणमुत्तमम् ।
प्राप्नुयात् स्वर्गवासञ्च हितमारभ्य कर्म्मणा ॥ २४ ॥

प्रलापादीनि पूर्व्वोक्तानि, किन्त्वमर्म्मविद्धशिरादिलिङ्गान्यपि यथास्वं बोद्धव्यानीत्यर्थः । अनुक्तमपि मांसस्य मर्म्मविद्धरुक्षणं दर्शयन्नाह—स्पर्शं न जानातीत्यादि । शिरादिवन्मांसमपि कुतो न निर्द्दिष्टमिति चेत् ? न, केवलं मांसविद्धस्याव्यापकत्वात् । केचिदाचार्य्या भ्रमप्रलापादीनि लिङ्गानि सद्यःप्राणहरादीनां मर्म्मणां मन्यन्ते, अतएव तेषां मते दशार्द्धसंख्येष्वित्यत्र सद्यःप्राणहर-कालान्तरप्राणहरविशल्यप्राणहरवैकल्यकररुजाकराख्येषु पञ्चसु मर्म्मस्विति व्याख्यानम्, तथा तेषां मते यानि शिरादीनां सुरेन्द्रगोपप्रतिममित्यादिलक्षणान्युक्तानि तान्यपि शिरादिमर्म्मविद्धेषु ज्ञातव्यानि, न पुनर्मर्म्मरहितशिरादिविद्धेषु, अतएव तेषां मते यथास्वमेतानि विभावयेच्चेत्यत्र चकारार्थं कथयन्ति, किन्तु सुरेन्द्रगोपप्रतिममित्याद्युक्तलक्षणेष्वन्तर्भावयन्ति यथास्वमित्यादिपाठम् ॥ २० ॥

अतिरिक्तशस्त्रव्यापदमभिधाय वैद्यस्यैवात्मगात्रच्छेदनव्यापदं दर्शयन्नाह—आत्मानमेवेत्यादि—स्वाङ्गमेवेत्यर्थः । शस्त्रग्रहणधारणावचारणानभिज्ञत्वाद्धिनस्तीत्यर्थः । जघन्यकारी अतिहीनकर्म्मकारी । तं तथाविधं कुवैद्यम् । आत्मवान् बुद्धिमान्, आतुर इति शेषः; आत्महनमात्मच्छेदिनम्, आत्मतुदमिति केचित् पठन्ति । आयुर्जीवितम् ॥ २१ ॥

तिर्य्यक्शस्त्रप्रणिधाने कर्म्मव्यापदं दर्शयन्नाह—तिर्य्यक्प्रणिहित इत्यादि । पूर्व्वमुदाहृता इति अग्रोपहरणीयाध्याये शिरास्नायुच्छेदनमित्यादयो दोषाः । दोषपरिहारं दर्शयन्नाह—तस्मादित्यादि ॥ २२ ॥

इदानीं वैद्यं प्रत्यातुरेण किं कर्त्तव्यमित्याह—मातरमित्यादि । अत्र श्लोके प्रथमोऽपिशब्दः समुच्चये, द्वितीयस्तु सम्भावनायाम् । विसृजति ददाति, आत्मना स्वयमेव, आत्मानं शरीरम्, एनं वैद्यम् । वैद्येनैवम्विधे आतुरे विश्वस्ते यत् कर्त्तव्यं तदाह—तस्मादित्यादि । एनमातुरं

कर्म्मणा कश्चिदेकेन द्वाभ्यां कश्चित् त्रिभिस्तथा।
विकारः साध्यते कश्चिच्चतुर्भिरपि कर्म्मभिः ॥ २५ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽष्टविधशस्त्रकर्म्मीयो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

पुत्रवत् पालयेदित्यर्थः। सम्यक्पालने महदेव फलं भवतीति दर्शयन्नाह—धर्म्मार्थावित्यादि। सतां ग्रहणमुत्तममिति शिष्टानां मध्ये ग्रहणमुपादानमुत्तमं भवतीत्यर्थः। साध्योऽपि व्याधिरनेककर्म्मसाध्यो भवतीति दर्शयन्नाह—कर्म्मणेत्यादि। कर्म्मणेति छेद्यादिकेन स्नेहादिकेन वा; अपिशब्दात् पञ्चादिभिरपि। केचिद्धर्म्मार्थावित्यादिश्लोकमध्यायान्ते पठन्ति ॥ २३—२५ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
अष्टविधशस्त्रकर्म्मीयव्याख्यानाम पञ्चविंशोऽध्यायः ॥ २५ ॥

# षड्विंशोऽध्यायः।

अथातः प्रनष्टशल्यविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शल श्वल आशुगमने धातुस्तस्य शल्यमिति रूपम्। तद् द्विविधं शारीरमागन्तुकञ्च ॥ २ ॥

सर्व्वशरीराबाधकरं शल्यं तदिहोपदिश्यत इत्यतः शल्यशास्त्रम्। तत्र शारीरं रोमनखादि धातवोऽन्नमला दोषाश्च दुष्टाः। आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति। अधिकारो हि लोहवेणुवृक्षतृणशृङ्गास्थिमयेषु, तत्रापि विशेषतो लोहेष्वेव विशसनार्थोपपन्नत्वाल्लोहस्य लोहानामपि दुर्व्वारत्वादणुमुखत्वाद् दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः ॥ ३ ॥

अथातः प्रनष्टशल्येत्यादि। तत्र शल्यस्य स्वकीयलक्षणबोधार्थं निरुक्तिं दर्शयन्नाह—शल्येत्यादि। 'शल' 'श्वल' आशुगमन इति शलश्वल आशुगतौ धातू, अनयोराशुगमनमित्यर्थः, तयोरायस्य शलधातोः शल्यमिति रूपं निष्पद्यत इत्यर्थः। शलहिंसायां धातुस्तस्य शल्यमिति रूपमिति केचित् पठन्ति। अपरे शल रुजायामिति पठन्ति। तस्य चिकित्सोपयोगिभेदं दर्शयन्नाह—तद् द्विविधमित्यादि ॥ १।२ ॥

कथं पुनः शल्यशास्त्रमेतदुच्यते इत्याह—सर्व्वशरीरेत्यादि। सर्व्वशरीरे येन बाधा भवति तत् शल्यम्, तदिहोपदिश्यते कथ्यते, अतः शल्यशास्त्रमेतदित्यर्थः। शारीरागन्तुकयोर्भेदमाह—तत्रेत्यादि। आदिशब्दात् कैश्चित् श्मश्रुपूयपक्ष्माणि गृह्यन्ते। धातवो रसादयः, मला मूत्रपुरीषकर्णमलस्वेदनेत्रविट्प्रभृतयः, दोषा वातादयः। परमेते धात्वन्नदोषा दुष्टाः सन्तः शल्यभूताः, अमुमेवार्थं केचिद् दुष्टाश्चेति चकारात् कथयन्ति। धातवोऽन्नमला इत्याद्यसमस्तानां पृथगुपादानं यत् कृतं तदुपधातुग्रहणार्थम्। आगन्तुशल्यं प्रतिपादयन्नाह—आगन्त्वपीत्यादि। भावा इति पदार्थाः तृणकाष्ठपाषाणलोहलोष्टप्रभृतयः। तत्रापि प्रसिद्धशल्यभेदान् दर्शयितुमाह—अधिकारो हीत्यादि। अधिकारो योग्यत्वं शल्यत्वेन लोहादिषु। लोहादिभिर्मयशब्दः प्रत्येकं सम्बध्यते। तेषां मध्ये लौहस्य प्राधान्यं दर्शयन्नाह—तत्रापीति—तेषामपि मध्ये। विशेषतः अतिशयेन, लोहेष्वेवेति अधिकार इत्यनुवर्त्तते। कथं पुनर्लोहेष्वेवाधिकार इत्यत्र हेतुमाह—विशसनार्थोपपन्नत्वादिति; मारणार्थयुक्तत्वात् लोहस्येत्यर्थः। लोहेष्वपि कान्तादिभेदेनानेकप्रकारेषु शरस्यैव प्राधान्यं दर्शयन्नाह—लोहानामित्यादि। लोहानामपि कान्तादीनामपि मध्ये इत्यर्थः। शरः काण्डः, अधिकृत इति योग्य इत्यर्थः। अन्ये तु दुर्व्वारत्वादित्यत्र निर्व्वाहित्वादिति पठन्ति, व्याख्यानयन्ति च देशाद्देशान्तरगमनशीलत्वादित्यर्थः। अन्ये तु निर्व्वाहित्वादिति पठन्ति; तत्रापि स एवार्थः ॥ ३ ॥

स द्विविधः कर्णी श्लक्ष्णश्च, प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्याख्याता व्यालमृगपक्षिवक्त्रसदृशाश्च ॥ ४ ॥

सर्व्वशल्यानान्तु महतामणूनां वा पञ्चविधो गतिविशेष ऊर्द्ध्वमधोऽर्व्वाचीनस्तिर्य्यगृजुरिति। तानि यदा वेगक्षयात् प्रतिघाताद् वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते, धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु ॥ ५ ॥

तत्र शल्यलक्षणमुच्यमानमुपधारय। तत् तु द्विविधं—सामान्यं वैशेषिकञ्च। श्यावं पिड़काचितं शोफवेदनावन्तं मुहुर्म्मुहुः शोणितास्राविणं बुद्बुदवदुन्नतं मृदुमांसञ्च व्रणं जानीयात् सशल्योऽयमिति। सामान्यलक्षणमेतदुक्तम्। वैशेषिकन्तु—त्वग्गते विवर्णः शोफो भवत्यायतः कठिनश्च। मांसगते शोफाभि-

तस्य शरस्यापहरणोपयोगिभेदं दर्शयन्नाह—कर्णीत्यादि। कर्णीति कर्णयुक्तः, श्लक्ष्णः अकर्ण इत्यर्थः। कर्णवानित्यन्ये पठन्ति, तत्रापि स एवार्थः। तदाकृतीनामानन्त्येन दर्शयितुमशक्यत्वात् संक्षेपेण सदृशनानाविधवस्त्वाकृतिसारूप्येण दर्शयन्नाह—प्रायेणेत्यादि। प्रायेणेति बाहुल्येनेत्यर्थः। विविधवृक्षपत्राकृतयः पिप्पलपत्रकरवीरपत्राद्याकाराः, पुष्पाकृतयो मालतीकुमुदोत्पलपत्राद्याकाराः, फलाकृतय एलाद्याकाराः। स्थावरैराकृतिं प्रतिपाद्य जङ्गमैर्दर्शयन्नाह—व्यालवक्त्रसदृशाः सिंहव्याघ्रादिमुखसदृशाः सर्पफणाकारा वा, मृगवक्त्रसदृशाः शृगालमार्ज्जारादिमुखसमानाः, पक्षिवक्त्रसदृशाः काककङ्कादिवक्त्रसदृशाः ॥ ४ ॥

शराणामाहरणोपयोगिगतिभेदान् दर्शयितुमाह—सर्व्वशल्यानामित्यादि। तत्र ऊर्द्ध्वगतिविशेषः अधस्तादागतस्य शरस्य, अधोगतिविशेषः उपरिष्टादागतस्य शरस्य, अर्व्वाचीनगतिविशेषः पश्चादागतस्य शरस्य, तिर्य्यग्गतिविशेषः पार्श्वाभ्यामागतस्य, ऋजुगतिविशेषः अग्रदेशादागतस्य शरस्य। अन्ये तु व्यत्ययेन पञ्चगतिपाठं पठन्ति, किञ्चिदन्यथा व्याख्यानयन्ति, तच्चास्माभिर्विस्तरभयान्न लिखितम्। अन्ये तु शरीरे सर्व्वशल्यानामित्यादि पाठं पठन्ति। यथा शल्यानि शरीरे स्थितिं कुर्व्वन्ति तथा हेतुं दर्शयन्नाह—तानीत्यादि। तानि शल्यानि, प्रतिघाताद् वेगनिवृत्तेरित्यर्थः। त्वगादिष्वित्यत्रादिशब्दान्मांससिरास्नायुसन्धिकोष्ठास्थिमर्म्माणि गृह्यन्ते। अवतिष्ठन्ते इति शल्यानीति शेषः। शल्यावस्थाने त्वगादिभ्योऽधिकमपि स्थानं सम्भवतीति पक्षान्तरमाह—धमनीत्यादि। धमन्यादिभिस्त्रिभिः सह विवरशब्दः प्रत्येकमभिसम्बध्यते। विवरं छिद्रं, पेशी मांसखण्डः। वाशब्देन पक्षान्तरं सूचयति—शरीरप्रदेशेष्विति। धमन्यादय एव शरीरप्रदेशास्तेष्वित्यर्थः। अवतिष्ठन्ते शल्यानीति सम्बध्यते ॥ ५ ॥

त्वगादिशल्यानां लक्षणानि निर्द्दिशन्नाह—तत्रेत्यादि। तत्र तेषु त्वगादिष्वित्यर्थः, लक्षणं चिह्नम्। तद् द्विविधमित्यादि। उपधारय शृणु। तत्र प्रथमं सामान्यलक्षणमाह—श्यावमित्यादि। पिड़काचितमिति पिड़काव्याप्तम्। सामान्यमभिधाय वैशेषिकं लक्षणमाह—वैशेषिकमित्यादि।

वृद्धिः शल्यमार्गानुपसंरोहः पीड़नासहिष्णुता चोषपाकौ च। पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्ज्जम्। सिरागते सिराध्मानं सिराशूलं सिराशोफश्च। स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च। स्रोतोगते स्रोतसां स्वकर्म्मगुणहानिः। धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्द्दः पिपासा हृल्लासश्च। अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च। अस्थिविवरगतेऽस्थिपूर्णतास्थितोदः संहर्षो बलवांश्च। सन्धिगते अस्थिवच्चेष्टोपरमश्च। कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारदर्शनञ्च व्रणमुखात्। मर्म्मगते मर्म्मविद्धवच्चेष्टते। सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति ॥ ६ ॥

महान्ति स्वल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति विशेषतः कण्ठस्रोतःसिरात्वक्पेश्यस्थिविवरेषु। दोषप्रकोपव्यायामाभिघातेभ्यः * प्रचलितानि पुनर्बाधन्ते ॥ ७ ॥

तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति, तत्र शल्यं जानीयात्। स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाशु विसरति घृतमुपशुष्यति वा लेपो यत्र, तत्र शल्यं

चोषश्चूष्यत इव वेदनाविशेषः, पिपासेत्यन्ये। पेशीति पाकाभावात्। स्नायुगत इत्यादि। स्नायुजालोत्क्षेपणं स्नायुसमूहस्योर्द्ध्वं नयनं, संरम्भः श्वयथुः। स्रोतसां स्वकर्म्मगुणहानिरिति रसादिवहानां स्रोतसां रसादिवहनकर्म्म, गुणाः पुनरेषां वातादिवहानामरुणपीतसितरक्तादयो वर्णाः, तेषां हानिरित्यर्थः। धमनीस्थ इति अङ्गमर्द्दः स्फुटनिका, हृल्लासोऽसकृत् ष्ठीवनम्। संहर्ष इति मारुतोपद्रवो रोमाञ्चप्रायो वेदनाविशेषः; संहर्षः सङ्कटनमित्यन्ये। चेष्टोपरम इति आकुञ्चनप्रसारणादिहानिः। कोष्ठगत इति। आटोपः सतोदो वातसंक्षोभः, आनाहो वातमूत्रपुरीषादिनिरोधः। मर्म्मविद्धवत् चेष्टते इति शिरादिमर्म्मविद्धे यानि लिङ्गानि भवन्ति तानीत्यर्थः। चेष्टते चेष्टां कुरुते। स्थूलशल्यानां लक्षणमभिधाय सूक्ष्मशल्यलक्षणमाह—सूक्ष्मगतिष्वित्यादि। अस्पष्टानीति अस्फुटानीत्यर्थः ॥ ६ ॥

इदानीं शल्यप्रनष्टस्य हेतुं दर्शयन्नाह—महान्तीत्यादि। शुद्धदेहानामिति वाताद्यदूषितदेहानां पाकाभावाद् रोहन्तीत्यर्थः। अनुलोमसन्निविष्टानीति रोमानुकूल्येन प्रविष्टानीत्यर्थः। विशेषतः इत्यतिशयेन, कण्ठादिषु प्रविष्टानि शल्यानि रोहन्तीति शेषः। केचिन्महान्तीत्यत्र स्थाने सूक्ष्माण्यल्पानीति पाठं पठन्ति। यदि रूढान्यप्यदोषकराणि तत् किं तेषां विज्ञानेनाहरणेन चेत्याह—दोषप्रकोपेत्यादि ॥ ७ ॥

त्वगादिप्रविष्टानां विज्ञानोपायं दर्शयन्नाह—तत्र त्वगित्यादि। संरम्भो रागशोफाभिसम्भवः,

* दोषप्रकोपव्यायामाभिघाताजीर्णेभ्य इति पाठान्तरम्।

विजानीयात्। मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्। कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भं वेदनां वा जनयति,तत्र च शल्यं विजानीयात्। कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवमेव परीक्षेत। सिराधमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायाद् यत्र संरम्भो वेदना वा भवति, तत्र शल्यं जानीयात्। अस्थिप्रनष्टे स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीड़नाभ्यां भृशमुपचरेद् यत्र संरम्भो वेदना वा भवति, तत्र शल्यं जानीयात्। सन्धिप्रनष्टे स्नेहस्वेदोपपन्नान् सन्धीन् प्रसरणाकुञ्चनबन्धनपीड़नभृ शमुपचरेद् यत्र संरम्भो वेदना वा भवति, तत्र शल्यं जानीयात्। मर्म्मप्रनष्टे त्वनन्यभावान्मर्म्मणामुक्तं परीक्षणं भवति॥ ८॥

सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्व्वतद्रुमारोहणधनुर्व्यायामद्रुतयाननियुद्धाध्वगमन--लङ्घन-प्रतरणप्लवनव्यायामैर्जृम्भोद्गारकास-क्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति, तत्र शल्यं जानीयात्॥९॥

आशु विसरतीति शीघ्रं विलीयते। मांसेत्यादि। क्रियाविशेषैः सह आतुरमुपपादयेत् योजयेदित्यर्थः। कर्शितस्य आतुरस्येत्यर्थः। शिथिलीभूतमनवबद्धं क्षुभ्यमाणं शल्यमिति शेषः। क्षुभ्यमाणमिति चलदित्यर्थः। एवमेवेति पूर्व्वोक्तन्यायेनेत्यर्थः। खण्डचक्रसंयुक्ते याने इति खण्डितचक्रसमन्विते रथे इत्यर्थः। आरोप्येति आरोहेत्यर्थः, विषमेऽध्वनि निम्नोन्नतमार्गे इत्यर्थः। स्वेदोपपन्नानि स्वेदयुक्तानीत्यर्थः। मर्म्मप्रनष्टे इत्यादि। मर्म्माणि त्वगादिष्वष्टसु व्रणवस्तुष्वेव भवन्ति, नान्यत्र भवन्तीति अनन्यभावान्मर्म्मणां प्रनष्टशल्ये त्वगाद्युक्तमेव परीक्षणं कर्त्तव्यमित्यर्थः॥ ८॥

सामान्यविज्ञानोपायमपि दर्शयन्नाह—सामान्यलक्षणमित्यादि। अष्टस्वपि त्वगादिव्रणवस्तुष्ववस्थितशल्यस्य लक्षणं सामान्यलक्षणम्। हस्तिस्कन्धादिभिः सहारोहणशब्दः प्रत्येकं सम्बध्यते। धनुर्व्यायाम इति धनुराकर्षणजनितश्रमः, द्रुतयानमिति शीघ्रगमनम्, नियुद्धं बाहुयुद्धम्, लङ्घनमिति कुड्यादीनामुत्प्लुत्यातिक्रमणं, प्रतरणं नद्यादौ, प्लवनमुत्पतनं, व्यायामः शरीरायासजनकं कर्म्म। जृम्भेति पीतैकमारुतोच्छ्वासस्य व्यात्तमुखेन परिमोक्षणम्, उद्गारेति उद्गतस्य वायोरुद्गिरणमुद्गारः, कासेति दोषदुष्टोदानानुगतप्राणवायोर्निर्गमनं भिन्नकांस्यध्वनिकं कासः। क्षवथुरिति ऊर्द्ध्वं स्रोतोऽवस्थितप्राणोदानयोराकुलितयोर्नासाविवरतो निर्गमनं क्षवथुः। ष्ठीवनं कफादेस्थूत्करणम्, हसनम् हासो विकृताङ्गवचःकृत्यजातस्य हास्यरसस्य स्थायी भावोऽङ्गकपोलनासौष्ठस्पन्दनलक्षणः। प्राणायाममिति प्राणवायोरायमनमवरोधनं प्राणायामः। उत्सर्गशब्दो

भवन्ति चात्र।

यस्मिंस्तोदादयो देशे सुप्तता गुरुतापि च।
घट्टते बहुशो यत्र स्र यते * तुद्यतेऽपि च॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति।
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत्॥ १०॥
अल्पबाधमशूनञ्च नीरुजं निरुपद्रवम्।
प्रसन्नं मृदुपर्य्यन्तं निराघट्टमनुन्नतम्॥
एषण्या सर्व्वतो दृष्ट्वा यथामार्गं चिकित्सकः।
प्रसाराकुञ्चनान्नूनं निःशल्यमिति निर्द्दिशेत्॥ ११॥
अस्थ्यात्मकं भज्यते तु शल्यमन्तश्च शीर्य्यते।
प्रायो निर्भुज्यते शार्ङ्गमायसञ्चेति निश्चयः॥ १२॥

वातादिभिः सह प्रत्येकं सम्बध्यते। उत्सर्गः प्रमोचनम्। केचिद् यत्र संरम्भो वेदना चेत्यत्र स्थाने उत्सर्गं वा यत्र तोदादयस्तत्र शल्यं विजानीयादिति पाठं पठन्ति, व्याख्यानयन्ति च—आदिशब्दात् पाकरागशोफादयः। श्यावं पिड़काचितमित्यादीनि पूर्व्वोक्तसामान्यलक्षणानि सन्निकृष्टानि, एतानि पुनर्हस्तिस्कन्धारोहणादीनि विप्रकृष्टानि; यत एभिरेव श्यावं पिड़काचितमित्यादि लक्षयितव्यमित्यनयोः सामान्यलक्षणपाठयोर्न पौनरुक्त्यम्॥ ९॥

प्रनष्टशल्यविज्ञानोपायमुद्दिश्यापराण्यपि राजर्षिः पुनर्लिङ्गानि निश्चयार्थमाह—यस्मिन्नित्यादि। यस्मिन् देशे शरीरावयवे, तोदादयो भवन्तीत्यध्याहारः। आदिग्रहणात् रागपाकादयः। सुप्तता स्पर्शज्ञानभिज्ञत्वम्। घट्टते बहुशो यत्रेति यस्मिन् प्रदेशे बहुशो वारंवारं पुरुषः स्वयमेव घट्टते चालयति। तुद्यतेऽपि च इत्यत्र पीड़ाया अतिशयख्यापनं न पुनरुक्तिः। आतुरश्चापि यं देशमित्यादि। आतुरो यं देशमभीक्ष्णमनवरतं रक्षति, किंविशिष्टः? संवाह्यमानः मृद्यमानः, कथं? बहुशो वारंवारं, एतेन यदा यदा आतुरो मृद्यते तदा तदा तं देशं रक्षतीत्यर्थः॥ १०॥

निःशल्यस्य लक्षणं दर्शयन्नाह—अल्पबाधमित्यादि। अल्पबाधमल्पदुःखम्, नीरुजं निर्गतशूलादिवेदनम्, मृदुपर्य्यन्तं मृद्वन्तं, निराघट्टमनिश्चलम्। एषण्येत्यादि। एषण्या लोहादिशलाकया, सर्व्वतः सर्व्वत्र, यथामार्गं मार्गानतिक्रमेण। चिकित्सकः वैद्यः, निःशल्यमिति निर्द्दिशेत् कथयेत्, नूनं निश्चितं, कस्मात्? प्रसारणादाकुञ्चनाच्च अल्पापि यदि बाधा न भवतीत्यर्थः। अल्पबाधमित्यत्र अल्पतापमित्यन्ये पठन्ति। केचिदनुन्नतमिति न पठन्ति अशूनमित्यनेनैव गतार्थत्वात्॥ ११॥

आहरणोपयोगिनीं हेतुभेदेनान्तःस्थशल्यावस्थां दर्शयन्नाह—अस्थ्यात्मकमित्यादि। अस्थ्यात्मकम् अस्थिजम्, भज्यते इति स्वयं द्विधा त्रिधा वा भवतीत्यर्थः। एतेनैवास्याहरणेऽवयवान्तरं विचार्य्याहरणं कर्त्तव्यमित्यभिप्रायः। शीर्य्यते इति शटतीत्यर्थः। ननु केशास्थिवेणुदारूपलानि तु न विशीर्य्यन्त इत्यग्रे वक्ष्यति, अत्र तु अन्तश्च शीर्य्यत इति कथयति, तत् कथं न विरोधः?

* रुज्यते इति पाठान्तरम्।

वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि।
पचन्ति रक्तं मांसञ्च क्षिप्रमेतानि देहिनाम्॥ १३॥
कानकं राजतं ताम्रं रैतिकं त्रपुसीसकम्।
चिरस्थानाद् विलीयन्ते पित्ततेजःप्रतापनात्॥
स्वभावशीता मृदवो ये चान्येऽपीदृशा मताः।
द्रवीभूताः शरीरेऽस्मिन् नैकत्वं यान्ति धातुभिः॥ १४॥
विषाणदन्तकेशास्थि-वेणुदारूपलानि तु।
शल्यानि न विशीर्य्यन्ते शरीरे मृन्मयानि च॥ १५॥
द्विविधं पञ्चगतिमत् * त्वगादिव्रणवस्तुषु।
विश्लिष्टं वेत्ति यः शल्यं स राज्ञः कर्त्तुमर्हति॥ १६॥

इति सुश्रुतसंहितायां सूत्रस्थाने प्रनष्टशल्यविज्ञानीयो नाम षड्विंशोऽध्यायः॥ २६॥

उच्यते, अन्तश्च शीर्य्यत इति चकारो विषयभेदप्रतिपादनार्थः, तेन केषाञ्चिदेवास्थ्नां शीर्णत्वं न सर्व्वेषामिति नास्ति विरोधः। निर्भुज्यत इति कुटिलीभवति। शार्ङ्गमिति शृङ्गमयम्। आयसञ्चेति लौहमयमपि निर्भुज्यत इत्यर्थः॥ १२॥

वार्क्षादीनां विशल्यघ्ने मर्म्मणि पाकात् स्वयं पतितानामवश्यमनिर्हरणीयत्वं दर्शयन्नाह—वार्क्षेत्यादि। वार्क्षं वृक्षमयं, वैणवं वेणुमयं, तार्णं तृणमयं। निर्ह्रियन्ते तु नो यदीति अनिर्हरणञ्च विशल्यप्राणहरप्रदेशे बोद्धव्यम्। पचन्ति रक्तं मांसञ्चेत्यादिना वार्क्षादीनि शल्यानि पाकात् स्वयं पतन्तीत्युक्तं भवतीति। विशल्यप्राणहरादिषु प्रदेशेषु कानकादीनामनाहरणे अदोषं दर्शयन्नाह—कानकमित्यादि। रैतिकमिति रीतिः पित्तलभेदः, तन्मयं रैतिकम्। केचिदत्र रैतिकमिति पदं विहाय कृष्णायस्त्रपुसीसकमिति पठन्ति। अन्येषामपि कांस्यप्रभृतीनां कानकादिधर्म्मं दर्शयन्नाह—स्वभावेत्यादि। अपरेषां चिरकालस्थितावपि न शरीरधातुभिरेकत्वमिति दर्शयन्नाह—विषाणेत्यादि। विषाणं शृङ्गं, दारु काष्ठं, उपलः पाषाणः, न विशीर्य्यन्ते इति न शटन्तीत्यर्थः। मृन्मयानि मृत्तिकामयानि॥ १३—१५॥

अध्यायपिण्डार्थज्ञानेन वैद्यस्तुतिं दर्शयन्नाह—द्विविधमित्यादि। द्विविधं द्विप्रकारं कर्णी श्लक्ष्णञ्चेति। अन्ये शारीरागन्तुभेदेन द्वैविध्यं मन्यन्ते। पञ्चगतिमदिति ऊर्द्ध्वाधोऽर्व्वाचीनतिर्य्यगृजुगतिकम्। त्वगादिव्रणवस्तुष्विति त्वगादिव्रणवस्तुष्वष्टासु विश्लिष्टं विविधप्रकारं स्थितम्। राजग्रहणं प्रधानसंग्रहार्थम्। कर्त्तुमिति प्रतीकारं कर्त्तुमित्यर्थः, अर्हति योग्यो भवति। यो वेत्त्यधिष्ठितं शल्यमिति केचित् पठन्ति॥ १६॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे प्रनष्टशल्यविज्ञानीयव्याख्यानाम षड्विंशोऽध्यायः॥ २६॥

---

* द्विविधं पञ्चगतिकमिति पाठान्तरम्।

## सप्तविंशोऽध्यायः ।

अथातः शल्यापनयनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शल्यं द्विविधमवबद्धमनवबद्धञ्च । तत्र समासेनानवबद्धशल्योद्धरणार्थं पञ्चदश हेतून् वक्ष्यामः । तद्यथा—स्वभावः पाचनं भेदनं दारणं पीडनं प्रमार्ज्जनं निर्ध्मापनं वमनं विरेचनं प्रक्षालनं प्रतिमर्षः प्रवाहणमाचूषणमयस्कान्तो हर्षश्चेति ॥ २ ॥

तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति । मांसावगाढं शल्यमविदह्यमानं पाचयित्वा प्रकोपा-(था)-त् तस्य पूयशोणितवेगाद् गौरवाद् वा पतति । पक्वमभिद्यमानं भेदयेद् दारयेद् वा । भिन्नमनिरस्यमानं पीडनीयैः पीडयेत् पाणिभिर्वा । अणून्यक्षशल्यानि परिषेचनाध्मापनैर्वालवस्त्रपाणिभिः प्रमार्ज्जयेत् । आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनै-

अवबद्धमनवबद्धञ्चेति । तत्र अवबद्धं विशेषेणासक्तम्; अन्ये तु अस्थ्यादिप्रविष्टमवबद्धम्, इतरदनवबद्धमिति मन्यन्ते । तत्रानवबद्धस्यैव प्रथममङ्गीकृतस्य परिहरणे परिसंख्याय हेतून् दर्शयन्नाह—तत्रेत्यादि । तत्रेति तयोर्मध्ये । स्वभावः प्रकृतिः, पाचनमिति अपक्वशल्यस्य पाचनद्रव्यैः पाकविधानम्, भेदनमिति वृद्धिपत्रादिभिः शस्त्रैः स्फोटनम्, दारणमिति चिरविल्वादिभिर्मिश्रकोक्तैरौषधैर्विदारणम्, पीडनमिति द्रव्याणां पिच्छिलानामित्यादिमिश्रकोक्तैर्द्रव्यैः कृत्वा पीड्यते यत्, प्रमार्ज्जनमिति बालवस्त्रादिभिः प्रोञ्छनं, निर्ध्मापनमिति प्रधमनम्, एतदुक्तं भवति पिप्पलीकट्फलादिचूर्णस्य नाड्या नासान्तः प्रापणम्; प्रतिमर्षः अङ्गुल्यादिघर्षणम्, प्रवाहणं विकुन्थनम्, आचूषणं मुखशृङ्गैः कृत्वा यच्चूष्यते, अयस्कान्तः पाषाणविशेषः, यद्यप्ययस्कान्त इति सामान्येनोपात्तस्तथाप्यत्र कर्षको ग्राह्यः । हर्षस्तुष्टिः ॥ १।२ ॥

स्वभावादिहेतोर्विषयमाह—तत्राश्रुक्षवथूद्गारेत्यादि । तत्र तेषां पञ्चदशानां मध्ये, एतैरश्र्वादिभिः, स्वभावबलं स्वभावशक्तिः, ततः प्रवृत्तैरागतैर्हेतुभिः नयनादिभ्यः शरीरप्रदेशेभ्यो रजःप्रभृतिशल्यं पततीत्यर्थः । पाचनविषयमाह— मांसावगाढमित्यादि । अवगाढमभ्यन्तरगतम्, अविदह्यमानमपच्यमानम् । प्रकोपा-(था)-त् तस्येति पूतिभावान्मांसस्येत्यर्थः । भेदनदारणयोर्विषयमाह—पक्वमित्यादि । पीडनविषयमाह—भिन्नमित्यादि । अनिरस्यमानमनिष्क्रामन्तम् । प्रमार्ज्जनविषयमाह— अणूनीत्यादि । अक्षाणि इन्द्रियाणि । परिषेचनं धाराभिषेचनम्, आध्मापनमक्षिषु मुखमारुतस्य प्रापणम् । निर्ध्मापनविषयमाह—आहारशेषेत्यादि । भुञ्जानस्य नासान्तरादिस्थितमन्नमाहारशेषः । हीनानां पतितानां भ्रष्टानां शल्यानामल्पावयवा हीनाणुशल्यानि

निर्धमेत्, अन्नशल्यानि वमनाङ्गुलिप्रतिमर्षप्रभृतिभिः, विरेचनैः पक्काशयगतानि, व्रणदोषाशयगतानि प्रक्षालनैः। वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम्। मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन विषाणैर्वा। अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन। हृद्यवस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति ॥ ३ ॥

सर्व्वशल्यानान्तु महतामणूनां वा द्वावेवाहरणहेतू भवतः प्रतिलोमोऽनुलोमश्च। तत्र प्रतिलोममर्व्वाचीनमानयेत्, अनुलोमं पराचीनम्। उत्तुण्डितं छित्वा निर्घातयेच्छेदनीयमुखम्। छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावङ्क्षणपर्शुकान्तर-

उच्यन्ते। श्वसनं श्वासः, उत्कास उत्कृष्टं कासनं, निर्धमेत् निष्कासयेत्। वमनप्रतिमर्शयोर्विषयमाह- अन्नशल्यानीत्यादि। अन्नशल्यं वमनेन पतति अङ्गुलिप्रतिमर्शेन च। अङ्गुलिप्रतिमर्शोऽङ्गुल्यादिघर्षणम्। विरेचनविषयं दर्शयन्नाह—विरेचनैः पक्काशयगतानीति। पक्काशयगतानि शल्यानीति शेषः। प्रक्षालनविषयमाह—व्रणेत्यादि। व्रणदोषः पूयः स एव शल्यम्, व्रणाशयगतानि शल्यानीति शेषः। प्रवाहणविषयमाह— वातेत्यादि। सङ्गोऽप्रवृत्तिः। चूषणविषयमाह—मारुतेत्यादि। अयस्कान्तविषयमाह—अनुलोममित्यादि। हर्षविषयमाह— हृद्यवस्थितमित्यादि। केचिदनवबद्धशल्यमध्ये भेदनदारणपीडनवमनविरेचनक्षालनानि न मन्यन्ते, तेषां मते भेदनदारणयोरवबद्धशल्यविषयत्वं, पीड़नादीनां चतुर्णां यथासम्भवमुक्तेष्वेवान्तर्भावः ॥ ३ ॥

पञ्चगतीनां शल्यानामपि सर्व्वेषाममार्गमार्गभेदेन द्विविधमाहरणं दर्शयन्नाह— सर्व्वशल्यानामित्यादि। प्रवेशमार्गेणैवाहरणं प्रतिलोमम्, तद्विपरीतं चानुलोमम्। प्रतिलोमानुलोमाहरणयोर्विषयमाह— तत्रेत्यादि। तत्रेति तयोर्मध्ये। अर्व्वाचीनमिति नातिदूरप्रवेशात् निविष्टशल्यद्वारापेक्षया कायस्य पूर्व्वार्द्धस्थितं शल्यमर्व्वाचीनमुच्यते। तत् तु शल्यं प्रतिलोममानयेत्। कोऽर्थः? पाश्चात्येऽर्व्वाचीनदेशे आनयेत्, प्रवेशमार्गेणैवानयेत्, अनुलोमेन हि परार्द्धेन निह्नियमाणमविद्धमपि बहुतरं प्रदेशं वेधयेत्, तत्र मरणमुपद्रवा वा भवन्ति। पराचीनमिति दूरप्रविष्ट कायस्य परार्द्धनिर्गतशल्यमुच्यते। तच्छल्यमनुलोममानयेत्। कोऽर्थः? अग्रेतने पराचीने प्रदेशे आनयेत्। यदा त्वनतिवेगाच्छल्यमग्रेतनप्रदेशेन निर्गतमुत्तुण्डितमुखञ्च भवति तदा तस्य शल्यस्य छेदनीयमुखस्य छेद्यप्रदेशजटितस्य पराचीनानुलोमहरणे कीदृशं विधानमिति दर्शयन्नाह— उत्तुण्डितमित्यादि। उत्तुण्डितमूर्द्ध्वं निःसरन्मुखमिव। निर्घातयेदिति इतस्ततश्चालयेद्धस्तेन मुद्गरादिना वा, ततश्चानुलोममाहरेत्। छेदनीयमुखमिति कण्टकखर्ज्जूरीपत्रप्रभृतिकं, एतेन उत्तुण्डितं छेदनीयमुखं पराग्निर्गतमुखं छेद्यप्रदेशजटितञ्च शल्यं पराचीनानुलोमाहरणविषयं इत्युक्तं भवति। किं छेदनीयमुखस्य सर्व्वत्रायं विधिर्नेत्याह—छेदनीयेत्यादि।

पतितानि च हस्तशक्यं यथामार्गं हस्तेनैवापहर्त्तुं प्रयतेत। हस्तेनैवापहर्त्तु-मशक्यं विशस्य शस्त्रेण वा यन्त्रेणापहरेत् ॥ ४ ॥

भवति चात्र ।

शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ।
संरक्षेदस्य मर्म्माणि मुहुराश्वासयेच्च तम् ॥ ५ ॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्य विदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्ध्वाचारिकमुपदिशेत्। (शिरास्नायुविलग्नं शलाका-दिभिर्विमोच्यापनयेत्, श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं दुर्ब्बलवारङ्गं

वक्ष इति हृदयम्। हस्तेनाहर्त्तुं यच्छक्यते शल्यं तत् हस्तशक्यम्। यथामार्गमिति प्रवेशमार्गेणेत्यर्थः। हस्तेनैवेति हस्तेनैवोद्धरेत् न कदाचिन्मुद्गरादिभिश्चालयेत्। प्रयतेत इति प्रयत्नं कुर्व्वीत। अन्ये तु अच्छेदनीयमुखानि तु इत्यादि पाठं पठन्ति, व्याख्यानयन्ति च—न केवलमनुत्तुण्डितान्यनिर्घात्यमुखान्यपीति समुच्चीयते तुशब्देन, तानि कुक्ष्यादिपतितानि सर्व्वाण्येवा-च्छेद्यत्वादनिर्घात्याहरणीयानि। एतेनैतदुक्तं भवति—पराचीनानामपि शल्यानामनुलोममाहरणीया-नामपि प्रतिलोममेवाहरणं कर्त्तव्यम्, अनुलोमाहरणे कुक्ष्यादिषु महान् छेदानुबन्धो भवेत्, पर्शुकान्तरपतितानि चेत्यस्याग्रे "अनुत्तुण्डितशल्यानि छेदनीयमुखानि च। अनिर्घात्यानि जानी-याद् भूयश्छेदानुबन्धतः ॥" इति भोजसंहितोक्तं पाठं केचित् पठन्ति, स च प्रमादपाठः, निबन्धेष्व-दर्शनात्। हस्तेनापहर्त्तुमशक्ये शल्ये किं विधानमिति दर्शयति—हस्तेनेत्यादि। विशस्य छित्त्वा शस्त्रेणेत्यर्थः। केचित् हस्तेन चापहर्त्तुमशक्ये अविशस्य यन्त्रेणापहरेदिति पाठं मन्यन्ते। तेषां मते अविशस्य अच्छित्त्वेत्यर्थः, हस्तेन चेति चकारेण यन्त्राहरणाशक्यस्य विशस्येत्युपलभ्यते ॥ ४ ॥

शल्याहरणे उपद्रवचिकित्सासूत्रं निर्द्दिशन्नाह—भवति चात्र। शीतलेनेत्यादि। एनमिति शल्यातुरम्, अवसेचयेदिति सिञ्चेदित्यर्थः। आश्वासयेदिति क्षीरतर्पणादिदानेन। बाहुल्येनामुं केचिन्न पठन्ति। गयदासेन तु पठित्वाऽयं पाठोऽन्तरे व्याख्यातः; युक्तश्चायम्, तस्मात् पठनीय एव ॥ ५ ॥

हृते शल्ये पश्चात्कर्म्म दर्शयन्नाह—तत इत्यादि। निर्लोहितमिति रुधिरवर्ज्जितं, संस्वेद्यति अतिनिःस्रुतशोणितमवेदनं सुखोष्णेन घृतेन, तदितरमग्निना संस्वेदयेदिति सम्बन्धः। विदह्येति अग्निकृत्यान् व्रणान् दग्ध्वेत्यर्थः। प्रदिह्येति लेपयित्वा, अस्वेद्यमतिस्रुतशोणितञ्च। अत्र केचिद् विदह्येति न पठन्ति, प्रदिह्येत्यस्य स्थाने तर्पयित्वेति पठन्ति। अत्र केचिद् गद्दुरिकाप्रवाहेण भोजोक्तं शिरास्नायुविलग्नं शलाकाभिर्विमोच्यापनयेत्, श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं, दुर्ब्बलवारङ्गं कुशादिभिर्बध्नी[illegible] इति पाठं पठन्ति, प्रवाहपठितां [illegible] च [illegible]

कुशादिभिर्बद्धा।) हृदयमभितो वर्त्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद् यथामार्गम्। दुरुपहरमन्यतोऽपबाध्यमानं पाटयित्वोद्धरेत्। अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पादाभ्यां यन्त्रेणापहरेत्। अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतश्चास्य पञ्चाङ्ग्यामुपसंयतस्याश्वस्य वक्त्रकविके वा बध्नीयादथैनं कशया ताड़येद् यथोन्नमयन् शिरो वेगेन शल्यमुद्धरति। दृढ़ां वा वृक्षशाखामवनम्य तस्यां पूर्व्ववद् बद्ध्वोद्धरेत्॥ ६॥

अदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव यन्त्रेण विमृदितकर्णानि कर्णवन्त्यनाबाधकरदेशोत्तुण्डितानि

नालम्, अवपीड्य श्वयथुमिति सम्बन्धः। कुशादिभिरपनयेदित्यत्रापि योज्यते। कुशा वंशवेत्रादिकम्, अयञ्च विधिस्तन्त्रान्तरादवसेयो न सुश्रुतसंहितायामस्ति, तन्त्रान्तरदर्शनालसैस्त्वत्रैवानीय लिखित इत्यत्र न पठनीय एवायम्। चतुर्व्विधेष्वेव वक्षःपतितेषु विशेषविधिमाह—हृदयमित्यादि। हृदयमभितो वर्त्तमानमिति हृदयसमीपे स्थितमित्यर्थः। उद्वेजितस्य उद्विग्नहृदयस्य, शीतजलाद्युद्वेजनञ्च क्लमपरिहाराय। यथामार्गमिति येनैव मार्गेन प्रविष्टं तेनैवापहरेदित्यर्थः। तेनाशक्ये उपायान्तरं दर्शयन्नाह—अन्यत इति अन्यस्मिन्नपि प्रदेशे। दुःखेनोपह्रियते तद् दुरुपहरम्। अपबाध्यमानमिति मर्म्मपीड़ाकरं शल्यमिति शेषः। पाटयित्वा इति दारयित्वेत्यर्थः। अवबद्धशल्यस्य हस्तेनापहर्त्तुमशक्यस्य निर्हरणोपायं दर्शयन्नाह—अस्थीत्यादि। अस्थिविवरप्रविष्टमिति अस्थिच्छिद्रान्तर्गतम्। विदष्टमिति अत्यासक्तम्। सुपरिगृहीतस्यातुरस्येत्यर्थः। प्रविभुज्य वक्रीकृत्य, धनुर्गुणैरिति मूर्व्वार्कसूत्रमयैः। एकत एकस्मिन् प्रदेशे। अस्येति शल्यवतो नरस्य, पञ्चाङ्ग्यामिति बन्धविशेषे, उपसंयतस्य बद्धस्य, अश्वस्य घोटकस्य, वक्त्रं मुखं, तत्र कविका कटकं, तत्र बध्नीयात् शल्यमिति सम्बन्धः। पुनमश्वम्, कशया सट्टया, उन्नमयन्निति उच्चैः कुर्व्वन्। पक्षान्तरमाह—दृढ़ां वा वृक्षशाखामित्यादि। अवनम्य नमयित्वा, तस्यामिति वृक्षशाखायाम्। अन्ये तु दृढ़ामित्यस्य स्थाने पञ्चाङ्गीमिति मन्यन्ते। तत्र पञ्चाङ्गी पञ्चभिः शाखान्तरैर्युतां शाखां वदन्ति। अपरे तु पञ्चाङ्गीं प्लक्षाश्वत्थोडुम्बरन्यग्रोधवेतसानामिति कथयन्ति। अन्ये त्वेवं पठन्ति अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेणैनं ग्राहयित्वा शल्यमाबद्धं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतः शाखाश्वकक्कटके बध्नीयात्। अथैनं कशया ताड़येत् यथोन्नमयन् शिरो वेगेन शल्यमुद्धरति, नामितायां पञ्चाङ्ग्यां वृक्षशाखायां वा पूर्व्ववद् बद्ध्वोद्धरेदिति॥ ६॥

कुक्ष्याद्यच्छेदनीयप्रदेशोत्तुण्डितानामस्थ्यादिविदष्टानां यथामार्गापहरणोपायं दर्शयन्नाह—अदेशेत्यादि। यथामार्गमेव यन्त्रेणेति अपहरेदिति शेषः। अस्थिदेशोत्तुण्डितमित्यन्ये पठन्ति। कर्णान्वितानामाहरणं दर्शयन्नाह—विमृदितेत्यादि। कर्णवत् यच्छल्यं तदनाबाधकरप्रदेशोत्तुण्डितं

पुरस्तादेव। जातुषे कण्ठासक्ते कण्ठे नाड़ीं प्रवेश्याग्नितप्ताञ्च शलाकां तथाव-गृह्य शीताभिरद्भिः परिषिच्य स्थिरीभूतामुद्धरेत्। अजातुषं जतुमधूच्छिष्ट-लिप्तया शलाकया पूर्व्वकल्पेनेत्येके ॥ ७ ॥

अस्थिशल्यमन्यद् वा तिर्य्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढ़ैः कसूत्रवद्धं द्रव-भक्तोपहितं पाययेदाकण्ठात्। पूर्णकोष्ठं वामयेद् वमतश्च शल्यकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्च्चकेनापहरेत् प्रणुदेद् वान्तः। क्षतकण्ठाय च मधुसर्पिषी लेढ़ुं प्रयच्छेत् त्रिफलाचूर्णं वा मधुशर्करामिश्रम्। उदकपूर्णोदरमवाक्शिरसमवपीड़येद् धुनीयाद् वामयेद् वा भस्मराशौ वा निख-नेदामुखात्। ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धं स्कन्धे मुष्टिनाभि-हन्यात् स्नेहं मद्यं पानीयं वा पाययेत्। बाहुरज्जुलतापाशशल्ये तु कण्ठ-पीड़नाद् वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि, लालास्रावं फेनागमनं संज्ञानाशञ्चापादयति। तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसञ्च वातघ्नं विदध्यादिति ॥ ८ ॥

यदा भवति तदा विमृदितकर्णिकं कृत्वा कोऽर्थः ? सङ्कुचितकर्णिकं कृत्वा, पुरस्तादेव कोऽर्थः ? अग्रेतने प्रदेशे एव, आकर्षयेदिति शेषः। जातुषशल्यस्य विधानं दर्शयन्नाह—जातुष इत्यादि। जातुषे लाक्षामये, कण्ठासक्ते गललग्ने। नाड़ीमिति ताम्रादिरचितनलिकां, स्थिरीभूतामुत्पन्न-गाढ़ताम्। शिशवो जातुषैः शल्यैः क्रीड़न्ति, ते यदा प्रमादान्निगिलन्ति तदायं विधिर्वेदितव्यः। अन्ये तु जातुषाणि शिरादिष्वेव घटितानि मन्यन्ते। अजातुषे कण्ठासक्ते विधिमाह—अजातुष-मित्यादि। जतु लाक्षा, मधूच्छिष्टं सिक्थकं, पूर्व्वकल्पेनेति शीतोदकस्थिरीभूतमित्यर्थः ॥ ७ ॥

अस्थ्यादिशल्यस्यान्तं कण्ठासक्तस्याहरणमुद्दिशन्नाह—अस्थिशल्यमित्यादि। केशोण्डुकं बाल-कृतं विड्कम्, उपहितं सहितम्। सहसा त्वाक्षिपेदिति शल्यनिर्गमनार्थम्। दन्तधावन-कूर्च्चकेनेति दन्तधावनानां करञ्जकादीनां कुट्टिताग्रं कूर्च्चकं, तेनापहरेदित्यर्थः। प्रणुदेद्वान्तरिति वहिरनिर्गच्छदन्तः प्रणुदेत् प्रवेशयेदित्यर्थः। केशोन्दुकमित्यादि केचित् पाठं पठन्ति। अपहृतकण्ठ-शल्यस्य पश्चात् कर्म्म दर्शयन्नाह – क्षतकण्ठायेत्यादि। उदकं यदान्तर्निविष्टं जलमृतादीनामुदरे भवति तदा तस्यापहरणोपायं दर्शयन्नाह —उदकेत्यादि। अवाक्शिरसमधोमुखीकृतम्, अवपीड़येत् उदरम्, धुनीयात् कम्पयेत्, वामयेत् घर्षणैरवाक्शिरसमेव, निखनेत् प्रवेशयेत्, आमुखादिति मुखपर्य्यन्तम्। कण्ठासक्तग्रासाहरणोपायमाह—ग्रासशल्ये इत्यादि। अनवबुद्धमिति अज्ञातं यथा भवति। अभिहन्यादिति प्रहारं दद्यादित्यर्थः। बाहुरज्ज्वादिपीड़ितकण्ठप्रकुपितवायु-श्लेष्मापहरणोपायमाह- बाह्वित्यादि। पाशशब्दो बाह्वादिभिः सह प्रत्येकं सम्बध्यते। केचिदमुं पाठं न पठन्ति ॥ ८ ॥

भवन्ति चात्र।

शल्याकृतिविशेषांश्च स्थानान्यवेक्ष्य बुद्धिमान्।
तथा यन्त्रपृथक्त्वञ्च सम्यक् शल्यमथाहरेत्॥ ९॥
कर्णवन्ति तु शल्यानि दुःखाहार्य्याणि यानि च।
आददीत भिषक् तस्मात् तानि युक्त्या समाहितः॥ १०॥
एतैरुपायैः शल्यन्तु नैव निर्घात्यते यदि।
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत्॥ ११॥
शोफपाकौ रुजश्चोग्राः कुर्य्याच्छल्यमनिर्हृतम्।
वैकल्यं मरणञ्चापि तस्माद् यत्नाद् विनिर्हरेत्॥ १२॥

इति सुश्रुतसंहितायां सूत्रस्थाने शल्यापनयनीयो नाम सप्तविंशोऽध्यायः॥ २७॥

शल्याकृतीनामानन्त्यादनुक्तमपि कर्त्तव्यं दर्शयन्नाह—शल्याकृतीत्यादि। स्थानानि शिरोऽक्षिकर्णनासाहृदयादीनि। कर्णवतां दुराहरत्वं दर्शयन्नाह—आददीतेति संगृह्णीयादित्यर्थः। युक्त्या इति योगेन, न तु हीनयोगातियोगमिथ्यायोगैः। समाहितः सावधानः। अवश्यं निर्हरणीयस्य शल्यस्योक्तैः प्रकारैरनाहरणे अनुक्तोपायमनुक्तयन्त्रकरणसूत्रमुद्दिशन्नाह—एतैरित्यादि। नैव निर्घात्यते यदीति नैव निष्कास्यते यदीत्यर्थः। मत्या निपुणया वैद्य इति मत्या निपुणया स्वकर्म्मणि प्रवीणया बुद्ध्या युक्तो यन्त्रयोगैश्च निर्हरेदिति। योगैः संयोगैः, योगैश्चेति चकारादनुक्तगुणादिबन्धनादि समुच्चीयते॥ ९—११॥

शल्यस्यानाहरणे दोषं दर्शयन्नाह—शोफपाकावित्यादि। अमुं श्लोकं केचिदत्र न पठन्ति, न्यायचन्द्रिकायान्तु पठितत्वादवश्यं पठनीय एव॥ १२॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शल्यापनयनीयव्याख्यानाम सप्तविंशोऽध्यायः॥ २७॥

---

# अष्टाविंशोऽध्यायः ।

अथातो विपरीताविपरीतव्रणविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ।
ख्यापयन्ति भविष्यत्त्वं तथा रिष्टानि पञ्चताम् ॥ २ ॥
तानि सौक्ष्म्यात् प्रमादाद् वा तथैवाशु व्यतिक्रमात् ।
गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसम्भवात् ॥ ३ ॥
ध्रुवन्तु मरणं रिष्टे ब्राह्मणैस्तत् किलामलैः ।
रसायनतपोजप्य-तत्परैर्वा निवार्यते ॥ ४ ॥

नियतानियतभेदेन द्विविधमरिष्टं प्रकाशयितुमाह—फलाग्नीत्यादि । अत्र यथा पुष्पं फलस्य भविष्यत्त्वं ख्यापयति, कोऽर्थः ? पुष्पं फलं भविष्यतीति, यथा च धूमोऽग्निं ख्यापयति, यथा म्बुदो जलवृष्टिं, एवमरिष्टानि पञ्चतां मृत्युं ख्यापयन्ति, भाविनीमिति शेषः । अरिष्टान्यत्र मरणलक्षणानि । नन्वत्र किमर्थं पुष्पधूमाम्बुदा इति बहवो दृष्टान्ता उक्ताः ? एकेनैव गतार्थत्वात् । उच्यते, पुष्पाम्बुदौ हेतू फलजलवृष्ट्योर्ज्ञापकावनियतौ न ह्यवश्यं कारणेन कार्य्यं कर्त्तव्यमेव, इत्यनेनानियतदृष्टान्तेन हेत्वादिनिमित्तजमरिष्टमनियतमुक्तं, धूमात् कार्य्यादग्नेः कारणस्य यतो ज्ञानं तन्नियतं एतेन नियतदृष्टान्तेन दोषजमरिष्टं नियतमुक्तमित्यनियतनियतभेदेन द्विविधमरिष्टं प्रकाशयन्ति बहवो दृष्टान्ता इति न दोषः ॥ १ । २ ॥

अवश्यमेवारिष्टस्य मरणभवनं दर्शयन्नाह—तानीत्यादि । मुमूर्षोः मर्त्तुमिच्छोः प्राणिन उद्गतान्यपि प्रकटितान्यपि अरिष्टानि अज्ञैर्मनुष्यैर्न गृह्यन्ते न ज्ञायन्ते । कुतो हेतोरित्याह—सौक्ष्म्यादिति परमाणुत्वात् । प्रमादाद् वेति मदिरामदमत्तस्य वस्तुनि अविमर्ष इव । आशु व्यतिक्रमादिति यदैवारिष्टमुत्पन्नं तदैव मरणादिति, उत्पलशतपत्रव्यतिभेदवत् । अन्ये त्वाशुव्यतिक्रमो यदैवारिष्टमुत्पन्नं तदैव निवर्त्तत इति मन्यन्ते । न त्वसम्भवादिति न पुनरसम्भवान्न गृह्यन्ते, अपितु सम्भवन्त्यप्यरिष्टानि उक्तैः कारणैरज्ञैर्न गृह्यन्ते इत्यभिप्रायः ॥ ३ ॥

दोषजमरिष्टमधिकृत्य अरिष्टैर्मरणस्य नियतत्वं दर्शयन्नाह—ध्रुवमित्यादि । रिष्टेऽपि मरणनिवृत्तिमुपायविशेषैराह—ब्राह्मणैरित्यादि । किलशब्दोऽत्रागमार्थं सूचयति, एवं किल आगमे प्रतिपादितमित्यर्थः । अमलैरिति रागादिदोषरहितैः । ब्राह्मणेभ्योऽपरानपि दर्शयन्नाह—रसायन तपोजप्येत्यादि । रसायनपरा इति स्वभावव्याधिनिवारणविशिष्टौषधवितर्काः, ते रसवीर्य्यौषधप्रभावेण मरणं निवारयन्ति । तथा तपःपरास्तपस्विनः तेऽपि विशिष्टतपःप्रभावेण मरणं-

नक्षत्रपीड़ा बहुधा यथा कालाद् विपच्यते।
तथैवारिष्टपाकञ्च ब्रुवते बहवो जनाः ॥ ५ ॥
असिद्धिमाप्नुयाल्लोके प्रतिकुर्व्वन् गतायुषः।
अतो रिष्टानि यत्नेन लक्षयेत् कुशलो भिषक् ॥ ६ ॥
गन्धवर्णरसादीनां विशेषाणां स्वभावतः।
वैकृतं यत् तदाचष्टे व्रणिनः पक्वलक्षणम् ॥ ७ ॥
कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः।
लोहगन्धिस्तु रक्तेन व्यामिश्रः सान्निपातिकः ॥ ८ ॥
लाजातसीतैलसमाः किञ्चिद्विस्राश्च गन्धतः।
ज्ञेयाः प्रकृतिगन्धाः स्युरतोऽन्यद् गन्धवैकृतम् ॥ ९ ॥
मद्यागुर्व्वाज्यसुमनः-पद्मचन्दनचम्पकैः।
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ १० ॥
श्ववाजिमूषिकध्वाङ्क्ष-पूतिवल्लूरमत्कुणैः।
सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः ॥ ११ ॥

निवारयन्ति। जप्यपराः सिद्धमन्त्रशक्तिकाः, तेऽपि मन्दशक्तियुक्ताः पञ्चत्वं निषेधयन्ति एतच नियतानियतरिष्टविषयं ज्ञेयम् ॥ ४ ॥

कथं पुनः कालान्तरे पञ्चविंशवर्षादावरिष्टपीड़ा भवतीत्याह – नक्षत्रेत्यादि। विपच्यते फलतीत्यर्थः। पाकः फलम्। अरिष्टापरिज्ञानदोषं दर्शयन्नाह—असिद्धिमित्यादि। असिद्धिं धर्म्मार्थकामादीनां हानिम् ॥ ५। ६ ॥

अस्य तन्त्रस्य शल्यत्वात्तत्र च व्रणस्य प्राधान्यात्तस्यैवारिष्टानि प्राक् निर्द्देष्टुमाह - गन्धेत्यादि। गन्धवर्णरसादीनामिति आदिग्रहणेनैव शब्दस्पर्शयोरपि संग्रहः। एतेन पञ्चापीन्द्रियार्था उक्ता भवन्ति ; रूपस्य वर्णग्रहणेन गृहीतत्वात्। स्वभावतः प्रकृतितो वैकृतम् अन्यथात्वं यत्तदाचष्टे तत् कथयति, व्रणिनः पुरुषस्य, पक्वलक्षणं पातलक्षणं, यथा पक्वफलं पतत्येव तथाऽसावपि व्रणी पतत्येव इत्यर्थः ॥ ७ ॥

तत्र प्राकृतं गन्धं दर्शयन्नाह—कटुस्तीक्ष्णश्चेत्यादि। अत्र लाजातसीतैलसमास्त्रयो गन्धा यथासंख्येन वातपैत्तिकवातश्लैष्मिकपित्तश्लैष्मिका द्वन्द्वजा ज्ञेयाः। एते त्रयोऽपीषद्विस्राश्च स्वभावाज्ज्ञेयाः। अतसीशब्देनातसीतैलं, तैलं तिलतैलम्। ज्ञेयाः प्रकृतिगन्धाः स्युरिति ज्ञातव्याः प्रकृतिगन्धा भवेयुरित्यर्थः। कटुस्तीव्रश्चेति केचित् पठन्ति। विकृतिगन्धान् दर्शयन्नाह—अत इत्यादि। अतोऽन्यद् गन्धवैकृतमिति अत एभ्यः पूर्व्वोक्तेभ्यः कट्वादिप्राकृतगन्धेभ्योऽन्यद् गन्धवैकृतम् ॥८।९॥

तानेव विकृतगन्धानाह—मद्येत्यादि। सुमना जाती, सगन्धाः समगन्धाः। दिव्यगन्धा इति अपरोऽपि य उत्तमगन्धः। मुमूर्षूणामिति मर्त्तुमिच्छतां प्राणिनाम्। श्वा कुक्कुरः, ध्वाङ्क्षः काकः।

ध्यामकुङ्कुमकङ्कुष्ठ-सवर्णाः पित्तकोपतः।
न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥ १२ ॥
कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः।
दूयन्ते च विदह्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥ १३ ॥
कृष्णाश्च ये तनुस्रावा वातजा मर्म्मतापिनः।
स्वल्पामपि न कुर्व्वन्ति रुजं तान् परिवर्ज्जयेत् ॥ १४ ॥
क्ष्वेडन्ति घुर्घुरायन्ते ज्वलन्तीव च ये व्रणाः।
त्वङ्मांसस्थाश्च पवनं सशब्दं विसृजन्ति ये।
ये च मर्म्मस्वसम्भूता भवन्त्यत्यर्थवेदनाः ॥
दह्यन्ते चान्तरत्यर्थं वहिःशीताश्च ये व्रणाः।
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥
शक्तिध्वजरथाः कुन्त-वाजिवारणगोवृषाः।
येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा ॥

पूतिवल्लूरं पूयसहितं शुष्कमांसम्, मत्कुणाः शय्यादिजाः क्षुद्रकीटाः, एतैः समानगन्धा इत्यर्थः। वर्णान् निर्द्दैष्टुमाह—ध्यामेत्यादि। ध्याम ईषत् कृष्णः। न दह्यन्ते न दाहयुक्ता भवन्ति। चूष्यन्ते इति चूषणमिव वेदनाविशेषः। पित्तवर्णे सति यत् पित्तवेदना दाहादिका न भवन्ति तद् वैकृतं वर्णस्य। केचित् "श्यामाकुङ्कुमकङ्कुष्ठसवर्णाः पित्तदोषतः। न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्ज्जयेत् ॥" इति पाठं पठन्ति, व्याख्यानयन्ति च श्यामा प्रियङ्गुः, कङ्कुष्ठं सुवर्णक्षीरिनिर्य्यासः, न दह्यन्ते नातितप्यन्ते, किन्तु परितापभावयुक्ता भवन्तीति। स च निवन्धेषु न दृश्यते, यत्र तु दृश्यते तत्र गड्डलिकाप्रवाहः, तस्मात् पूर्व्वः पाठो न्याय्यः। कण्डूमन्त इत्यादिकाः कफेन, तेषां दाहरुजे वर्णवैकृतम्; दूयन्ते इति पीड़ां कुर्व्वन्ति ॥ १०—१३ ॥

कृष्णाश्चेत्यादि। ये वातजा व्रणाः कृष्णास्तनुस्रावा मर्म्मतापिनश्च यदा स्वल्पामपि पीड़ां न कुर्व्वन्ति तदा वातजे वर्णवैकृतम्। अत्र रसवैकृतं यद्यपि नोक्तं तथापि वातपित्तकफव्रणेषु यथाक्रमं कषायकटुमधुरेषु पिपीलिकाद्युपसर्पणादनुक्तमपि ज्ञेयं, गन्धवर्णरसादीनामित्यत्रोद्देश-सूत्रे रसस्योक्तत्वात् ॥ १४ ॥

शब्दवैकृतं दर्शयन्नाह—क्ष्वेडन्तीत्यादि। क्ष्वेडन्ति खट्खटाशब्दं कुर्व्वन्ति। घुर्घुरायन्ते इति श्वमार्ज्जारादीनां कोपादन्तर्गतशब्दो घुर्घुराशब्द उच्यते। ज्वलन्तीवेति ज्वलन्त इव दृश्यन्ते। त्वङ्मांसस्थानां व्रणानां सशब्दपवनवाहित्वं शब्दवैकृतम्, कोष्ठगतानान्तु सशब्द-पवनवाहित्वं प्रकृतिरेव। स्पर्शवैकृतमधिकृत्याह—दह्यन्ते इत्यादि। आकृतिविशेषवैकृतमधि-कृत्याह —शक्तीत्यादि। शक्तिरायुधविशेषः, ध्वजः पताकादण्डः। येषु व्रणेषु अवभासेरन् शोभन्ते।

चूर्णावकीर्णा इव ये भान्ति वा न च चूर्णिताः।
प्राणमांसक्षयश्वास-कासारोचकपीड़िताः॥
प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्म्मसु।
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः।
वर्ज्जयेत् तान् भिषक् प्राज्ञः संरक्षन्नात्मनो यशः॥ १५॥

इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतव्रणविज्ञानीयो नामाष्टाविंशोऽध्यायः॥ २८॥

प्रासादः देवतानरेन्द्राणामधिष्ठानम्, आकृतिरत्र रूपमेव। रूपञ्च पञ्चेन्द्रियार्थमध्ये। अपरमपि रूपविशेषमाह—चूर्णावकीर्णा इत्यादि। अत्रापि सामान्याकारेण रूपमेव बोद्धव्यम्। गन्धादि वैकृतं समाप्य उपद्रवासाध्यत्वं प्रसङ्गतो युक्त्यागतं दर्शयन्नाह—प्राणेत्यादि। प्राणक्षयः शक्तिलक्षणबलक्षयः, मांसक्षयः उपचयलक्षणबलक्षयः। अनुक्तमप्यशेषारिष्टमुपगृह्णन्नाह—क्रियाभिरित्यादि॥ १५॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
विपरीताविपरीतव्रणविज्ञानीयव्याख्यानाम अष्टाविंशोऽध्यायः॥ २८॥

---

# एकोनत्रिंशोऽध्यायः ।

अथातो विपरीताविपरीतदूतस्वप्ननिदर्शनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

दूतदर्शनसम्भाष-वेशाश्चेष्टितमेव च ।
ऋक्षं वेला तिथिश्चैव निमित्तं शकुनोऽनिलः ॥
देशो वैद्यस्य वाग्देह-मनसाञ्च विचेष्टितम् ।
कथयन्त्यातुरगतं शुभं वा यदि वाऽशुभम् ॥ २ ॥
पाषण्डाश्रमवर्णानां सपक्षाः कर्म्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्म्मविपत्तये ॥
नपुंसकं स्त्री बहवो नैककार्य्या असूयकाः ।
गर्द्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ३ ॥

अथात इत्यादि । स्वप्नशब्दानन्तरं लुप्तादिशब्दनिर्द्देशान्नक्षत्रवेलातिथिनिमित्तशकुनानिलदेश-वैद्यवाग्देहमनश्चेष्टा अपि गृह्यन्ते । अत्राध्याये निर्द्देश्यान् दूतादीनुपदर्शयन्नाह—दूतेत्यादि । दूतशब्दोऽत्र दर्शनसम्भाषणवेशचेष्टितैः सह सम्बध्यते । गमनाय प्रश्नाय वा आगतः पुरुषो दूतः, चेष्टा चात्र कायकृतो व्यापारः, ऋक्षाणि आर्द्रादीनि, वेला मध्याह्नादिकाः, तिथयश्चतुर्थ्यादयः, निमित्तं सर्पादिदर्शनम्, देशो वैद्यस्य भूमिभागः, वाग्देहमनसाञ्च चेष्टितमपि वैद्यस्यैव, आतुरगतमिति आतुराश्रितमित्यर्थः । स्वप्नाः पश्चान्निर्द्देश्याः ॥ १ । २ ॥

प्रथमं दूतदर्शनमधिकृत्याह—पाषण्डाश्रमवर्णानामित्यादि । पाषण्डाः कापालिकादयः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थयतयः, वर्णाः ब्राह्मणादयः । सपक्षा इति तद् यथा—कापाली कापालिकस्य, ब्रह्मचारी ब्रह्मचारिणः, विप्रो विप्रस्येत्यादयः । कर्म्मसिद्धये कार्य्यसिद्ध्यर्थम्, त एव विपरीता इति कापालिकस्य ब्रह्मचारी ब्रह्मचारिणः कापालीति । कर्म्मविपत्तये इति चिकित्सितनाशाय । नपुंसकमिति न पुमान् न च स्त्री । स्त्रीति योषिदित्यर्थः, बहव इति प्रभूता इत्यर्थः, नैककार्य्या इति न एकस्मिन् कार्य्ये ये दूताः समागता इत्यर्थः, असूयका इति परस्परं कलहं कुर्व्वाणाः, गर्द्दभोष्ट्ररथप्राप्ता इति गर्द्दभोष्ट्रयुक्तेन रथेनागता इत्यर्थः । प्राप्ता वा स्युः परम्परा इति आगता वा भवेयुः, परम्परा पङ्क्तिः, एतेन पङ्क्तिं कृत्वा यदा आगता भवन्तीत्युक्तम् । वैद्यं य उपसर्पन्तीत्यादि । ये दूता एवंगुणविशिष्टा वैद्यमुपसर्पन्ति समीपमागच्छन्ति ते गर्हिता एवेति सम्भावनीयाः । अत्र चशब्द एवकारार्थः, अपिशब्दः सम्भावनायाम् ॥ ३ ॥

पाशदण्डायुधधराः पाण्डरेतरवाससः ।
आर्द्रजीर्णापसव्यैक-मलिनोद्ध्वस्तवाससः ॥
न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः ।
रूक्षनिष्ठुरवक्तारस्त्वमाङ्गल्याभिधायिनः ॥
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम् ।
वस्त्रान्तानामिकाकेश-नखरोमदशास्पृशः ॥
स्रोतोऽवरोधहृद्गण्ड-मूर्द्धोरःकुक्षिपाणयः ।
कपालोपलभस्मास्थि-तुषाङ्गारकराश्च ये ॥
विलिखन्तो महीं किञ्चिन्मुञ्चन्तो लोष्टभेदिनः ।
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ॥
फलं पक्वमसारं वा गृहीत्वान्यच्च तद्विधम् ।
नखैर्नखान्तरं वापि करेण चरणं तथा ॥

वेशमधिकृत्याह - पाशेत्यादि । पाशो दीर्घः पशूनां बन्धनो रज्जुवलयः, दण्डो लौहादिवलयैर्निबद्धो दीर्घः निष्ठुरकाष्ठयष्टिः, आयुधानि खड्गशक्त्यादीनि, पाण्डरेतरवासस इति कृष्णपीतरक्तवस्त्राः । आर्द्रजीर्णापसव्यैकमलिनोद्ध्वस्तवासस इति - आर्द्रं स्तिमितं, जीर्णं पुरातनम्, अपसव्यं दक्षिणाश्रितमुत्तरीयम्, एकवासस इति एकवस्त्रधारिणः, मलिनमधौतं, उद्ध्वस्तं पाटितं वस्त्रं, न्यूनाधिकाङ्गा इति न्यूना हस्ताद्यवयवैर्हीनाः, अधिकाङ्गा इति एकविंशत्यङ्गुलादियुक्ताः, उद्विग्ना इति भीताः, विकृता इति पङ्गुकुब्जवामनादयः, रौद्ररूपिण इति भैरवोद्धतकर्कशाः भयावहरूपिणः। दूतसम्भाषमधिकृत्याह —रूक्षेत्यादि । रूक्षं मैत्रीरहितं वचः, निष्ठुरं कर्कशवचनं, अमङ्गल्याभिधायिन इति गतमृतनष्टरुदितेत्यादिवचनममङ्गलम् । चेष्टितमधिकृत्याह—छिन्दन्त इत्यादि। वस्त्रान्तो दशाहीनस्य वस्त्रस्यान्तः, अनामिका पवित्राङ्गुलिः, केशा मस्तकबालाः, रोमाणि शरीरोद्भवा बालाः, दशाः सदशस्य वस्त्रस्य प्रान्ताः । स्रोतोऽवरोधेत्यादि स्रोतोऽवरोधादिषु निक्षिप्तपाणयः, स्रोतः कर्णादिच्छिद्रम्, अवरोधः स्कन्धदेशः, हृत् कमलमुकुलाकारमधोमुखम्, गण्डः गल्लः, मूर्द्धा मस्तकम्, उरः कण्ठहृदयान्तरालः, कुक्षिः वङ्क्षणपार्श्वान्तरालः । कपालोपलेत्यादि । करशब्दः कपालादिभिः प्रत्येकं सम्बध्यते, तेन कपालादिकरा इत्यादि बोध्यम् । कपालो मूर्द्धास्थिखण्डः, उपलः पाषाणः, भस्म इति दग्धकाष्ठादिक्षारः, अस्थि हड्डिः, तुषं धान्यादित्वचः, अङ्गारः अर्द्धभस्मीकृतकाष्ठखण्डः । विलिखन्तो महीमित्यादि । विलिखन्तो नखादिना विदारयन्तः पृथिवीमित्यर्थः, किञ्चिन्मुञ्चन्त इति किञ्चिद्वस्तु हस्तेन गृहीतं मुञ्चन्तः । लोष्टभेदिन इति मृत्पिण्डस्फोटनशीला इत्यर्थः ।

दिग्धाङ्गा इति लिप्ताङ्गा इत्यर्थः । रक्तस्रगनुलेपना रक्तमालाधारिणो रक्तविलेपनाश्चेत्यर्थः फलमित्यादि । असारमिति अभ्यन्तरसारवर्जितम् । अन्यच्च तद्विधमिति अन्यदपि वस्तु

उपानच्चर्म्महस्ता वा विकृतव्याधिपीड़िताः ।
वामाचारा * रुदन्तश्च श्वासिनो विकृतेक्षणाः ॥
याम्यां दिशि प्राञ्जलयो विषमैकपदे स्थिताः ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ४ ॥
दक्षिणाभिमुखं देशे त्वशुचौ वा हुताशनम् ।
ज्वलयन्तं पचन्तं वा क्रूरकर्म्मणि चोद्यतम् ॥
नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम् ।
प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ५ ॥
वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने ।
मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च ॥
आर्द्राश्लेषामघामूल-पूर्व्वासु भरणीषु च ।
चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ ६ ॥

पक्रमसारब्ध । नखैर्नखान्तरं वापि करेण चरणं तथा इत्यत्र गृहीत्वा इति सम्बन्धः । उपानदित्यादि । उपानत् पादहिता, चर्म्महस्ता वेति चर्म्ममयदत्यादिधारिणः, विकृतव्याधिपीड़िता इति गलत्कुष्ठादिविकृतव्याधिपीड़िताः, वामाचारा इति विपरीतव्यवहाराः, श्वासिन इति श्रमजनितश्वासयुक्ताः, विकृतेक्षणा इति पुष्पितनेत्रादयः, याम्यां दिशि दक्षिणस्यां दिशि, प्राञ्जलयः प्रसारिताञ्जलयः, विषमैकपदे स्थिता इति विषमे एकस्मिन् स्थाने ऊर्द्धीभूताः, उपसर्पन्ति समीपं गच्छन्ति ॥ ४ ॥

चेष्टितमेव चेति चकारेणानुक्तापि वैद्यचेष्टा समुच्चीयते। तां दूतदर्शने निर्द्दिशन्नाह— दक्षिणाभिमुखमित्यादि । दक्षिणाभिमुखमिति दक्षिणदिङ्मुखम्, देशे प्रदेशे, अशुचावपवित्रे, हुताशनं ज्वलयन्तं अग्निं ज्वालयन्तम्, पचन्तमिति पाकं कुर्व्वाणम्, क्रूरकर्म्मणि पशुवधादिके उद्यन्तमुद्यमं कुर्व्वाणम् ; क्षुरकर्म्मणीत्येके पठन्ति, तत्र मुण्डनादिकर्म्मणि उद्यमं कुर्व्वाणमित्यर्थः । वेगोत्सर्गेष्विति मूत्रपुरीषोत्सर्गेषु, अशुचिमिति अपवित्रम्, प्रकीर्णकेशं विमुक्तकेशम्, अभ्यक्तं तैलादिना, स्विन्नं प्रस्वेदसहितं, विक्लवं विह्वलम् । वैद्यं ये उपसर्पन्तीत्यादि इत्थम्भूतं वैद्यं ये दूता उपसर्पन्ति ते गर्हिता निन्दिता भवन्तीत्यर्थः । वैद्यकार्य्याद्यधिकृत्याह—वैद्यस्येत्यादि । पैत्रे पितृकार्य्ये, दैवे देवकार्य्ये, उत्पातदर्शने इति उत्पातानां भूमिदिव्यान्तरीक्षाणां दर्शने । नक्षत्रमधिकृत्याह—कृत्तिकास्वित्यादि । तिथिमधिकृत्याह— चतुर्थ्यामित्यादि । सन्धिदिनेषु देवप्रेतकार्य्यादिषु ॥ ५ । ६ ॥

* कामाचारा इति वा पाठः ।

स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः।
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः॥
त एव कफरोगेषु कर्म्मसिद्धिकराः स्मृताः।
एतेन शेषं व्याख्यातं बुद्धा संविभजेत् तु तत्॥
रक्तपित्तातिसारेषु प्रमेहेषु तथैव च।
प्रशस्तो जलरोधेषु दूतवैद्यसमागमः।
विज्ञायैवं विभागन्तु शेषं बुध्येत पण्डितः॥ ७॥
शुक्लवासाः शुचिर्गौरः श्यामो वा प्रियदर्शनः।
स्वस्यां जातौ स्वगोत्रो वा दूतः कार्य्यकरः स्मृतः॥ ८॥
गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः।
धृतिमान् विधिकालज्ञः स्वतन्त्रः प्रतिपत्तिमान्।
अलङ्कृतो मङ्गलवान् दूतः कार्य्यकरः स्मृतः॥
स्वस्थं प्राङ्मुखमासीनं समे देशे शुचौ शुचिम्।
उपसर्पति यो वैद्यं स च कार्य्यकरः स्मृतः॥ ९॥

विशिष्टरोगेषु विशिष्टवेलादि दर्शयन्नाह—स्विन्नेत्यादि। स्विन्नाभितप्ता दूता ज्वलनस्य समीपतः सन्निधानाद् यदा वैद्यं मध्याह्ने उपसर्पन्ति तदा गर्हिता इति सम्बन्धः। एतेन शेषमित्यादि वातरोगे शीतप्रवातादिष्विति ज्ञेयम्, अशुभमित्यर्थः। रक्तपित्तेत्यादि। जलरोधेषु जलनिरोधयुक्तप्रदेशेषु। विज्ञायेत्यादि। शेषं बुध्येत इति उदावर्त्तमूत्रकृच्छ्रादौ जलवेगदर्शनादिकं प्रशस्तमिति जानीयात्॥ ७॥

अथाविपरीतदूतदर्शनादिकं निर्दिशन्नाह—शुक्लवासा इत्यादि। गोयानेनेति वृषभारूढो वृषभयुक्तयानारूढो वेत्यर्थः। अन्ये तु गोयानेन पशुयानेनेत्यर्थमाहुः, गोशब्दस्य पशुवाचित्वात्, एतेन गर्दभादियानखरोष्ट्रादिकवर्ज्जमश्वादियानमुक्तम्। स्वतन्त्रः स्वप्रधानः। शुक्लवासाः शुचिर्गौर इत्यादिदर्शनमुक्तम्। शुभचेष्टित इत्यनेन चेष्टा उक्ता। प्रतिपत्तिमानिति प्रतिपत्तिरत्र ज्ञानं प्रगल्भता वा। अलङ्कृत इति वेश उक्तः। सम्भाषश्चात्राविपरीतसम्भाषविषयानुक्तोऽपि ज्ञेयः। तथाहि—तत्र रूक्षनिष्ठुरवक्तार इत्युक्तं, अत्र तु तद्विपर्य्ययेण स्निग्धकोमलाभिधायिन इत्यविपरीतसम्भाषो ज्ञेयः। तथा वेलानक्षत्रतिथीनामुक्तानामेव विपरीतत्वं ततोऽन्यदविपरीतत्वमिति। कथम्भूतं वैद्यमुपसर्पन् दूतः कार्य्यकारी भवतीत्याह—स्वस्थमित्यादि। स्वस्थमाधिव्याधिवर्जितं आसीनमुपविष्टं, शुचौ पवित्रे देशे, शुचिं वैद्यं, इत्थम्भूतं वैद्यं यो दूत उपसर्पति स कार्य्यकारी। केचिन्निबन्धकारा अमुं पाठं न पठन्ति॥ ८।९॥

मांसोदकुम्भातपत्र-विप्रवारणगोवृषाः ।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥
स्त्री पुत्रिणी सवत्सा गौर्वर्द्धमानमलङ्कृता ।
कन्या मत्स्याः फलश्चामं स्वस्तिकं मोदका दधि ॥
हिरण्याक्षतपात्रं वा रत्नानि सुमनो नृपः ।
अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा ॥
ब्रह्मदुन्दुभिजीमूत-शङ्खवेणुरथस्वनाः ।
सिंहगोवृषनादश्च ह्रेषितं गजबृंहितम् ॥
शस्तं हंसरुतं नृणां कौशिकञ्चैव वामतः ।
प्रस्थाने यायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः ॥
पत्रपुष्पफलोपेतान् सक्षीरान् निरुजो द्रुमान् ।
आश्रिता वा नभोवेश्म-ध्वजतोरणवेदिकाः ॥

तथाऽविपरीतलक्षणान्याह—मांसेत्यादि । मांसमाममत्र । उदकुम्भ इति । अत्रोदकुम्भशब्देन पूर्णो रिक्तश्च घटो गृह्यते ; तत्रातुरगृहे प्रविशन् पूर्णः, आतुरगृहान्निःसरन् रिक्त इति गृह्यते । आतपत्रं छत्रं, वृषो वृषभः, शुक्लवर्णाः पदार्थाः कार्पासास्थितक्रभस्मक्षारादिव्यतिरिक्ताः सुमनोदध्यक्षतमौक्तिकादयः । पूज्यन्ते श्लाघ्यन्ते, गताः प्राप्ताः । वर्द्धमानः शरावः, अन्ये तु विशिष्टमेव दर्पणं मङ्गल्यार्थं चषकं वा वर्द्धमानमाचक्षते । अलङ्कृता कन्या भूषणवती कन्या । केचिद् वर्द्धमाना स्वलङ्कृता इति पठन्ति, व्याख्यानयन्ति च– आलेपनधवलत्वादिस्वलङ्कृताः शरावाश्च वर्द्धमाना इति । स्वस्तिकं मुक्तादामविशेषः, अन्ये स्वस्तिकं स्वस्तिकाकारं दूर्वाशकलमण्डितं धवलं दर्पणसक्तं मृन्मयं गोमयकृतं वा मङ्गल्यमवतारणकार्थं कुर्वते माङ्गलिककर्त्तारस्त्रियः । मोदका लड्डुकाः, हिरण्यं स्वर्णम्, अन्ये कपर्द्दकान्याहुः, अक्षता लाजाः, अन्ये अक्षतान् यवधान्यान्याहुः ; पात्रं तण्डुलभृतशरावादिकम्, अन्ये त्वक्षतपात्रमित्येकमेव तण्डुलभृतशरावमिच्छन्ति । रत्नानि माणिक्यादीनि, सुमन इति शोभनमानसमित्यर्थः, वैद्यस्येति शेषः ; नृपः पृथ्वीपतिः, अन्ये तु शोभनचित्तो राजेत्याहुः : अप्रशान्तोऽनलः प्रज्ज्वलितवैश्वानरः, वाजी घोटकः, चाषः करटासः, शिखी मयूरः । ब्रह्मदुन्दुभीत्यादि । ब्रह्म इति वेदः, दुन्दुभिः भेरी, जीमूतो मेघः, एतेषां स्वनाः शब्दाः । सिंहेत्यादि । ह्रेषितं वाजिध्वनिः, गजबृंहितं हस्तिस्वनः, रुतशब्दः कौशिकञ्चेत्यत्रापि सम्बन्धनीयः, तेन उलूकस्य रुतमित्यर्थः । यायिन इति रोगिभवनमित्यर्थः, पत्रपुष्पफलोपेतानिति स्पष्टम् । नीरुज इति क्रिमिदावाग्न्याद्यनुपहतान् । आश्रितशब्दो नभःप्रभृतिभिः सह प्रत्येकं सम्बध्यते ; नभ आकाशम्, वेश्म गृहम्, ध्वजा पताकादि, तोरणमङ्ग वंशादिरचितं प्रतोल्याकारम्, वेदिका इति विवाहादिनिमित्तमग्नेष्टकादिरचितश्चतुरकः ।

दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ।
वामा वा दक्षिणा वापि शकुनाः कर्म्मसिद्धये ॥ १० ॥
वृक्षेऽशनिहते पत्रे वल्लीनद्धे सकण्टके ।
शुष्केऽथवाश्मभस्मास्थि-विट्तुषाङ्गारपांशुषु ॥
चैत्यवल्मीकविषम-स्थिता दीप्तखरस्वराः ।
पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः ॥
पुन्नामानः खगा वामा स्त्रीसंज्ञा दक्षिणाः शुभाः ।
दक्षिणाद् वामगमनं प्रशस्तं श्वशृगालयोः ॥
वामं नकुलचाषाणां नोभयं शशसर्पयोः ।
भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् ॥
दर्शनं वा रुतञ्चापि न गोधाकृकलासयोः ।
दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् ॥
कुलत्थतिलकार्पास-तुषपाषाणभस्मनाम् ।
पात्रं नेष्टं तथाङ्गार-तैलकर्द्दमपूरितम् ॥
प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः ।
शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः ॥
नेष्यन्ते पतितान्तस्थ-दीनान्धरिपवस्तथा ।
मृदुः शीतोऽनुकूलश्च सुगन्धश्चानिलः शुभः ।
खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः ॥ ११ ॥
ग्रन्थ्यर्व्वुदादिषु सदा च्छेदशब्दश्च पूजितः ।
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च ॥
रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते ।
एवं व्याधिविशेषेण निमित्तमुपधारयेत् ॥ १२ ॥

दिक्षु शान्तास्विति पूर्व्वासूत्तरासु चेत्यर्थः । अन्ये तु आलिङ्गितावधूमितदीप्तवर्ज्जितास्वित्याचक्षते । वक्तार इति शब्दायमानाः । पृष्ठतोऽनुगा इति पृष्ठप्रदेशानुगता इत्यर्थः ॥ १० ॥

वायुं शुभाशुभमाह मृदुरित्यादि । मृदुरिति अनुकूलः पृष्ठगामी । प्रतिलोमोऽभिमुखः । रोगविशेषादपि निमित्तविशेषमनुक्तं निर्द्दिशन्नाह—ग्रन्थीत्यादि । व्याधिविशेषेणानुक्तेन व्याधिभेदेनेत्यर्थः । निमित्तमिति शुभाशुभसूचकम् । अन्ये तु "एवं व्याधिविशेषेण निमित्तमुपधारयेत्" इत्यमुं पाठमन्यथा पठन्ति, व्याख्यातयन्ति च, सोऽभावान्न लिखितः ॥ ११ । १२ ॥

तथैवाक्रुष्टहाकष्टमाक्रन्दरुदितस्वनाः ।
छर्द्द्यां वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः ॥
प्रतिषिद्धं तथा भग्नं क्षुतं स्खलितमाहतम् ।
दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥ १३ ॥
प्रवेशेऽप्येतदुद्देशादवेक्ष्यञ्च तथातुरे ।
प्रतिद्वारं गृहे वास्य पुनरेतन्न गण्यते ॥
केशभस्मास्थिकाष्ठाश्म-तुषकार्पासकण्टकाः ।
खट्वोर्द्ध्वपादा मद्यापो वसा तैलं तिलास्तृणम् ॥
नपुंसकव्यङ्गभग्न-नग्नमुण्डासिताम्बराः ।
प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः ॥
भाण्डानां सङ्करस्थानां स्थानात् सञ्चरणं तथा ।
निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा ॥

सामान्यं शब्दनिमित्तं दर्शयन्नाह—तथैवेत्यादि । आक्रुष्टमाक्रोशः । आक्रुष्टादिभिः स्वनशब्दः प्रत्येकं सम्बध्यते । हाकष्टंशब्दो खेदार्थः । आक्रन्द आक्रोशस्वनः । अमुं श्लोकं बाहुल्येन न पठन्ति । पञ्जिकाकारगयदासेन तु विशिष्टपाठशुद्धिकारेण लिखितो व्याख्यातश्चेत्यत्रापि लिखितः ।

वैद्यस्यापि गेहे वागादिचेष्टितं दर्शयन्नाह—प्रतीत्यादि । प्रतिषिद्धमिति निषेधवचनं मा-गच्छत्यादिकम् । भग्नं कीलकादिभङ्गवचनम् । क्षुतं छिक्कितम् । त्रयमेतद् वाग्विचेष्टितम् । भग्नमित्यस्य स्थाने केचिल्लग्नमिति पठन्ति, व्याख्यानयन्ति च—लग्नं वस्त्रादिसङ्गः । लग्नं स्खलितमाहतमेतत् कायविचेष्टितम् । स्खलितं लुठनं पादादेः, आहतमिति आहननम् । दौर्म्मनस्यं चित्तविचेष्टितम् ॥ १३ ॥

वैद्यगृहविधिमातुरगृहेऽप्यतिदिशन्नाह—प्रवेशे इत्यादि । गृहे गृहाभ्यन्तरे अस्यातुरस्य तत् पूर्व्वोक्तं निमित्तं न गण्यते न मन्यते इत्यर्थः । केचित् प्रति द्वारं गृहञ्चास्य इति पाठं मन्यन्ते । प्रतिशब्दो लक्षणार्थे, तेन द्वारं लक्ष्यीकृत्य, गृहञ्च लक्ष्यीकृत्येति । अत्रोद्देशाव सङ्क्षेपादातुरेऽप्यवेक्ष्यमिति सम्बन्धः ।

आतुरगृहे गतस्य यात्रोन्मुखस्य च वैद्यस्य विपरीतनिमित्तं दर्शयन्नाह—केशभस्मेत्यादि । मुण्डा मुण्डितमुण्डाः । असिताम्बरा रक्तवस्त्राः । एतत् पुनरातुरगृहेऽपि गण्यत इत्याह—भाण्डानामित्यादि । भाण्डानामुपकरणद्रव्याणाम् । सङ्करस्थानां मिलितानाम् । सञ्चारणमितस्ततो नयनम् । निखातस्य भाण्डस्योत्पाटनमुद्धरणमित्यर्थः । भङ्गः स्फुटनम् । पतनं हस्तादेरधोभ्रंशः,

वैद्यासनावसादो वा रोगी वा स्यादधोमुखः।
वैद्यं सम्भाषमाणोऽङ्गं कुड्यमास्तरणानि वा॥
प्रमृज्याद् वा धुनीयाद् वा करौ पृष्ठं शिरस्तथा।
हस्तञ्चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि॥
यो वैद्यमुन्मुखः पृच्छेदुन्मार्ष्टि स्वाङ्गमातुरः।
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते॥
भवने पूज्यते वापि यस्य वैद्यः स सिध्यति।
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च।
आतुरस्य ध्रुवं तस्माद् दूतादीँ ल्लक्षयेद् भिषक्॥ १४॥
स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च।
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा॥
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्द्दभैः।
वराहैर्महिषैर्वापि यो यायाद् दक्षिणामुखः॥
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्द्धजा।
यं वा कषति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम्॥
अन्तावसायिभिर्यो वा कृष्यते दक्षिणामुखः।
परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा॥
मूर्द्धन्याघ्रायते यस्तु श्वापदैर्विकृताननैः।
पिबेन्मधु च तैलञ्च यो वा पङ्केऽवसीदति॥

निर्गमो गृहाभ्यन्तरादितो गमनम्। अवसादो भङ्गः। वैद्यं सम्भाषमाणो वैद्येन सहालापं कुर्व्वाणोऽङ्गं प्रमृज्यात्, कुड्यं भित्तिं वास्तरणानि प्रच्छादनवस्त्राणि वा प्रमृज्यात् प्रोञ्छयेदित्यर्थः। धुनीयात् कम्पयेत्। कानित्याह—करौ पृष्ठं शिरस्तथा। न्यसेन्निक्षिपेत्। उन्मुख इति ऊर्द्ध्वमुखः। उन्मार्ष्टि ऊर्द्ध्वं प्रोञ्छन्तीति केचिद् वृद्धाः पठन्ति। दूतादेः शुभाशुभस्य यथासङ्ख्यं शुभाशुभमेव फलं निर्द्दिशन्नाह—शुभमित्यादि॥ १४॥

निद्रोपप्लुतेन तन्द्रायुक्तेन मनसा विषयग्रहणं स्वप्नः। तत्र दृष्टाः स्वप्ना निमित्तमात्रमेव; स्वयं दृष्टास्तु प्रकृत्यादिवर्ज्जं गुरुतराः। अशुभस्वप्नान्निदर्शयन्नाह—स्नेहेत्यादि। करभादिष्वारूढ़ तैलाभ्यक्तशरीरः सन् यो यायाद् गच्छेत्; अनेन दुःस्वप्नेन षण्मासैर्म्रियते परं राजयक्ष्मणा रोगेण। अन्तावसायिभिश्चाण्डालैः। परिष्वजेरन् आलिङ्गेयुः। प्रव्रजिताः शैवपाशुपतादयः। मुहुर्वारंवारम्, आघ्रायते चुम्ब्यते, भक्ष्यत इत्यन्ये। श्वापदैर्व्याघ्रादिभिः। पिबेन्मधु च तैलञ्चेति मधु पुष्परसः। चकारद्वयादेकैकशः पानं ज्ञेयम्। केचित्तु मधु मद्यमित्याहुः, तत्र, केवलस्य

पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत् तथा।
निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम्॥
यस्य वंशो नलो वापि तालो वोरसि जायते।
यं वा मत्स्यो ग्रसेद् यो वा जननीं प्रविशेन्नरः॥
पर्व्वताग्रात् पतेद् यो वा श्वभ्रे वा तमसावृते।
ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात्॥
पराजीयेत बध्येत काकाद्यैर्वाऽभिभूयते।
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः॥
यः पश्येद् देवतानां वा प्रकम्पमवनेस्तथा।
यस्य च्छर्दिर्विरेको वा दशनाः प्रपतन्ति वा॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम्।
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति॥
कार्पासतैलपिण्याक-लोहानि लवणं तिलान्।
लभेताश्नीत वा पक्कमन्नं यश्च पिबेत् सुराम्।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति॥ १५॥
यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते॥ १६॥

मद्यस्य पानं प्रशस्तं स्वप्नाध्यायशास्त्रेषु कथितम्; यत्र तु सुरापानमशोभनमित्युक्तं, तत्र सुरा पिष्टमयी ग्राह्या। पङ्केऽवसीदतीति पङ्कः कर्द्दमः, अवसीदति ब्रुडतीत्यर्थः, पङ्कावसादस्तु सद्यो मृत्युकरः। रक्तां स्रजं रक्तपुष्पमालाम्। ग्रसेदिति गिलतीत्यर्थः। जननीं प्रविशेदिति मातुरुदरं प्रविशतीत्यर्थः। श्वभ्रे विवरे, तमसावृते अन्धकारवेष्टिते। ह्रियते नीयते, स्रोतसा नाड्या मौण्ड्यं कृत्तकेशता। पराजीयेत पराजितो भवतीत्यर्थः, तारकादीनामित्यादिग्रहणाच्चन्द्रादिग्रहणम्, प्रणाशं दीपचक्षुषोरिति स्वप्नेऽकस्माद् दीपं नष्टं पश्यति, स्वचक्षुषी विगलिते पश्यतीत्यर्थः। देवतानां प्रकम्पमिति देवतानां देवताप्रतिमानां कम्पमित्यर्थः। अवनेः पृथिव्याः, यूपो यज्ञपशुबन्धनकाष्ठम्, पारिभद्रको निम्बवृक्षः, कोविदारः काञ्चनारः, लौहानि लौहमयानि वस्तूनि, पक्कमन्नं सिद्धमित्यर्थः। केचिदन्नस्थाने मांसमिति पठन्ति। सुरा पिष्टमयी न तु मद्यम्, तस्य शोभनत्वात्। ऋच्छति प्राप्नोतीत्यर्थः॥ १५॥

विफलान् स्वप्नानरिष्टभूतान् दर्शयन्नाह—यथास्वमित्यादि। स्वस्याः प्रकृतेरनतिक्रमेण यथास्वम्, यथा—वातप्रकृतौ वियति गच्छति सम्भ्रमेण च, पित्तप्रकृतौ संपश्येदपि च हुताशविद्युदुल्काः, श्लेष्मप्रकृतौ प्रसुप्तः सन् कमलहंसचक्रवाकान् संपश्येदपि च जलाशयान् मनोज्ञान्।

ज्वरितानां शुना सख्यं कपिसख्यन्तु शोषिणाम्।
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्त्तनम् ॥
मेहातिसारिणां तोय-पानं स्नेहस्य कुष्ठिनाम्।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्द्ध्नि शिरोरुजि ॥
शष्कुलीभक्षणं छर्द्यामध्वा श्वासपिपासयोः।
हारिद्रं भोजनं वापि यस्य स्यात् पाण्डुरोगिणः।
रक्तपित्ती पिबेद् यश्च शोणितं स विनश्यति ॥ १७ ॥
स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान्।
दद्यान्माषांस्तिलान् लोहं विप्रेभ्यः काञ्चनं तथा ॥
जपेच्चापि शुभान् मन्त्रान् गायत्रीं त्रिपदां तथा।
दृष्ट्वा च प्रथमे यामे सुप्याद् ध्यात्वा पुनः शुभम् ॥
जपेद् वान्यतमं देवं ब्रह्मचारी समाहितः।
न चाचक्षीत कस्मैचिद् दृष्ट्वा स्वप्नमशोभनम् ॥
देवतायतने चैव वसेद् रात्रित्रयं तथा।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते ॥ १८ ॥

विस्मृतोऽतिशयेन न स्मृतः, विहतः पूर्वं विरूपो दृष्टः स एवास्यानन्तरं विशिष्टेन स्वप्नेन हतः। उक्तञ्च—"अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः। सौम्यं स्वप्ने पुमान् पश्येत् तस्य विद्यात् शुभं फलमिति। तथाग्रहणात् सुस्वप्नं दृष्ट्वा अस्वपतां सद्यःफलत्वं महाफलत्वञ्च सूच्यते। अन्ये तु विहितश्च य इति पठन्ति। दिवादृष्ट इति स्वप्न इति शेषः। भवन्त्यफलदास्तु ते इति तुशब्दश्चकारार्थः, तेनातिह्रस्वातिदीर्घप्रथमयामदृष्टाश्चाफलदाः समुच्चीयन्ते। भवत्यफल एव स इति केचित् पठन्ति ॥ १६ ॥

उत्तरतन्त्रपठितविशिष्टव्याधिषु विशिष्टमेव स्वप्नदर्शनारिष्टं दर्शयन्नाह—ज्वरितानामित्यादि। शुना सख्यमिति कुक्कुरेण सह मैत्रं, कपिसख्यमिति वानरमैत्रयम्। प्रवर्त्तनशब्द उन्मादापस्माराभ्यां सह प्रत्येकं सम्बध्यते। गुल्मेषु गुल्मरोगेषु, स्थावरोत्पत्तिर्वृक्षोत्पत्तिः, कोष्ठे उदरे, मूर्द्ध्नि मस्तके स्थावरोत्पत्तिः, शिरोरुजि मस्तकव्यथायाम्, छर्द्यां चणकादिपिष्टकृता सतिला तैलभृष्टा शष्कुली इत्युच्यते, तस्या भक्षणम्। अध्वा मार्गस्तत्र गमनम्, श्वासपिपासयोः। हारिद्रमिति हरिद्रारक्तोज्ज्वललक्षणमित्यर्थः ॥ १७ ॥

अशुभस्वप्नदर्शने किञ्चिच्चिकित्सितमाह—स्वप्नानित्यादि। प्रथमे यामे प्रथमप्रहरे दृष्ट्वा विलोक्य दुःस्वप्नं सुप्यात् शयीत। किं कृत्वा? ध्यात्वा शुभं कल्याणमित्यर्थः। यद्यपि

अत ऊर्द्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम्।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान्॥
समिद्धमग्निं विप्रांश्च निर्म्मलानि जलानि च।
पश्येत् कल्याणलाभाय व्याधेरपगमाय च॥ १९॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च।
लभेत धनलाभाय व्याधेरपगमाय च॥ २०॥
महाप्रासादसफल-वृक्षवारणपर्व्वतान्।
आरोहेद् द्रव्यलाभाय व्याधेरपगमाय च॥ २१॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान्।
तरेत् कल्याणलाभाय व्याधेरपगमाय च॥ २२॥
उरगो वा जलौको वा भ्रमरो वापि यं दशेत्।
आरोग्यं निर्दिशेत् तस्य धनलाभञ्च बुद्धिमान्॥ २३॥
एवंरूपान् शुभान् स्वप्नान् यः पश्येद् व्याधितो नरः।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म्म समाचरेत्॥ २४॥

इति सुश्रुतसंहितायां सूत्रस्थाने विपरीताविपरीतदूतस्वप्नादिनिदर्शनीयो नामैकोनत्रिंशोऽध्यायः॥ २९॥

प्रथमयामलक्ष्यस्वप्नस्य निष्फलत्वं कथितं, तथापि दुःस्वप्नभयादयं विधिः कर्त्तव्यः। अन्यतममेकतमम्, समाहितः सावधानः, न चाचक्षीत न च कथयेत्॥ १८॥

अत ऊर्द्ध्वमित्यादि। सुहृदो मित्राणि, समिद्धमग्निं प्रज्वलितं वह्निम्। कल्याणलाभायेति शुभवस्तुप्राप्तये इत्यर्थः। अपगमो निवृत्तिः, नद्यः गङ्गाद्याः, नदाः प्रसिद्धाः, क्षुभितान् प्रचलितान् वृद्धिं गतानित्यर्थः। कलुषोदकान् यत एव क्षुभितान् अतएवाप्रशस्तोदकानित्यर्थः। उरगः सर्पः, दशेत् भक्षयेत्॥ १९—२४॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे विपरीताविपरीतदूतस्वप्नादिनिदर्शनीयव्याख्यानमेकोनत्रिंशोऽध्यायः॥ २९॥

---

# त्रिंशोऽध्यायः ।

## अथातः पञ्चेन्द्रियार्थविप्रतिपत्तिमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।
तत् त्वरिष्टं समासेन व्यासतस्तु निबोध मे ॥ २ ॥

पञ्चेन्द्रियाणि श्रोत्रादीनि, तेषामर्थाः शब्दादयः, अर्थानां शब्दादीनां विप्रतिपत्तिर्विपरीतावबोधो हीनातियोगेनेत्यर्थः । पञ्चग्रहणं कर्म्मेन्द्रियाणामुभयात्मकस्य मनसश्च निषेधार्थम्, कर्म्मेन्द्रियाणां शरीरग्रहणेनैव ग्रहणात्, मनसस्तु इन्द्रियग्रहणे नैव ग्रहणम्, मनोव्यतिरेकेण इन्द्रियाणां विषयग्रहणाभावात् । प्रागध्याये दूतादिज्ञ यबाह्यारिष्टं प्रतिपाद्यास्मिन्नध्याये आभ्यन्तरमरिष्टमाश्रयभेदेन त्रिविधं संक्षेपेण दर्शयन्नाह—शरीरशीलयोरित्यादि । शरीरं पाञ्चभौतिकं प्राणिकायः, शीलं मानसो भावः, अन्ये तु शीलं समाधानयुक्तं मन इत्याचक्षते ; प्रकृतिः स्वाभाविकः प्राणिनो निजो धर्म्मः ; एतेषां शरीरशीलप्रकृतीनां त्रयाणां भावानां विकृतिर्वैपरीत्यं यद् भवेत्तदरिष्टं मरणलक्षणं भवति । समासेन संक्षेपेण । अन्ये तु शरीरशीलयोर्द्वयोर्या प्रकृतिस्तस्या या विकृतिस्तदरिष्टं मरणलक्षणं भवतीत्याचक्षते । प्रकृतेः प्रस्तावात् किञ्चिद्विचारः क्रियते, सा हि प्रकृतिर्जात्यादीन् षड् पाधीनपेक्षते । तदुक्तं चरके—"प्रकृतिर्हि जातिप्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता च" इति । सर्व्वभेदेषु चकारकरणमन्योन्यसमावेशार्थम् ; तत्र जातिप्रसक्ता नाम तासु तासु मनुष्यादिजातिषु ते ते करचरणादयः स्वभावविशेषाः, वचनेषु च नानाविधा एव व्यक्ताव्यक्तादयो धर्म्माः, मनसि च धर्म्माधर्म्ममैथुनाहारप्रभृतयोऽपि भावाः, कुलप्रसक्ता नाम द्विजकुले तपःप्रियतादयः, क्षत्रियकुले समरप्रियतादयो धर्म्मविशेषा भवन्ति । देशानुपातिनी नाम लाटकर्णाटादीनां काये वाचि मनसि ते ते स्वभावविशेषा विशेषेण भवन्ति । कालानुपातिनी नाम देहादिषु दौर्ब्बल्याद्यादानाद्यपेक्षं, गदेषु च दोषमलाद्यपेक्षिणी । वयोऽनुपातिनी नाम बाल्याद्यवस्थासु बालादौ सौकुमार्य्यादयो धर्म्माः । एतेषु त्रिष्वनुपातिशब्दप्रयोगात् सञ्चारित्वं स्वभावगुणानामिष्टम् । प्रत्यात्मनियतेति आत्मन्यात्मनि नियता प्रतिपुरुषनियतेत्यर्थः । ते पुनः काये वाचि मनसि च स्वभावविशेषाः प्रतिपुरुषभेदभिन्ना दृश्यन्ते । एवं तावत् षोढा प्रकृतिर्भवत्येव । अन्ये तु "सप्तम्यपि भवेत् प्रायो देहे लक्षणहेतुका । उत्तमाधममध्यायुर्लिङ्गानां कारणं हि सा" इति मन्यन्ते । अन्ये तु प्रकृतिं सत्त्वरजस्तमोमयीं पित्तवातश्लेष्ममयीं वा मन्यन्ते । तस्या विकृतिर्वैपरीत्यमन्यथाभावः । यथा प्रथमं सत्त्वप्रकृतिरनन्तरं रजस्तमःप्रकृतिः ॥ १।२ ॥

श्रृणोति विविधान् शब्दान् यो दिव्यानामभावतः ।
समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान् ॥
तान् स्वनान् नावगृह्णाति मन्यते चान्यशब्दवत् ।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् श्रृणोत्यपि ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
न श्रृणोति च योऽकस्मात् तं ब्रुवन्ति गतायुषम् ॥ ३ ॥
यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत् ।
सञ्जातशीतपिड़को यश्च दाहेन पीड्यते ॥
उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते ।
प्रहारान् नाभिजानाति योऽङ्गच्छेदमथापि वा ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ।
वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥
स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति योऽकस्मात् तं ब्रुवन्ति गतायुषम् ॥ ४ ॥

विप्रतिपत्तिं ( आतुरग्राह्यविरुद्धशब्दप्रतिपत्तिं ) निर्दिशन्नाह—श्रृणोतीत्यादि । विविधान् बहुप्रकारान् संजल्पपाठगीतवाद्यादीन्, दिव्यानां सिद्धकिन्नरगन्धर्व्वादीनाम् । समुद्रपुरमेघानामित्यत्र समुद्रादिभिः सह निःस्वनशब्दः प्रत्येकं सम्बध्यते । एतेन समुद्रादीनामसम्पत्तावभावेऽपि तेषां शब्दान् श्रृणोतीत्यर्थः । पुरस्वनः पुरवासिप्राणिशब्दः । अन्ये तु पुरस्थाने नरमिति पठन्ति, अपरे चापमिति पठन्ति । तान् स्वनानित्यादि । विद्यमानेषु वा समुद्रादिस्वनेषु तान् न गृह्णाति, गृह्णाति वा अन्यप्रतिध्वनीन् विपरीतान् अन्यशब्दवन्मन्यन्ते । ग्राम्यान् स्वनान् ग्रामवासिप्राणिशब्दात् आरण्यानिव श्रृणोति, आरण्यान् ग्राम्यानिव श्रृणोतीत्यर्थः । द्विषच्छब्देषु शत्रुशब्देषु, सुहृत् मित्रादिः, अकस्माच्छ्रवणरोगं विना ॥ ३ ॥

( अकस्मात् श्रवणे ) आतुरग्राह्यविरुद्धस्पर्शप्रतिपत्तिं दर्शयन्नाह—यस्तूष्णमित्यादि । अत्र शीतपीड़का हि कफकृताः, तासां जाड्यादयो वेदनाविशेषाः प्राकृताः, दाहस्तु वैकृत इति । प्रहारो लगुड़ादिकृतः, अङ्गच्छेदः शस्त्रादिकृतः । आतुरगतग्राह्यरूपविरुद्धप्रतिपत्तिं दर्शयन्नाह—पांशुनेत्यादि । पांशुर्धूलिः, अवकीर्णानि व्याप्तानि, राज्यः लेखा नीललोहितादयः । आतुरगतामेव विरुद्धरसप्रतिपत्तिं दर्शयन्नाह—स्नातेत्यादि । पूर्व्वं स्नातः पश्चादनुलिप्त इत्थम्भूतमपि सुगन्धिकायं बहिर्मलवर्ज्जितं यदा नीलमक्षिकाः श्रयन्ते तदासौ कालपक्वत्वादतिमधुरीभूतशरीरः, येन निर्म्मलशरीरं मक्षिकाभिः काम्यते इति । स्नातानुलिप्तमित्येतदरिष्टं वर्षावधि । आतुरगतग्राह्यगन्धप्रतिपत्तिं दर्शयन्नाह—सुगन्धिरित्यादि । सुगन्धिर्वा अकस्माद् सुगन्धिप्रयोग विना

विपरीतेन गृह्णाति रसान् यश्चोपयोजितान्।
उपयुक्ताः क्रमाद् यस्य रसा दोषाभिवृद्धये॥
यस्य दोषाग्निसाम्यश्च कुर्य्युर्मिथ्योपयोजिताः।
यो वा रसान् न संवेत्ति गतासुं तं प्रचक्षते॥ ५॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम्।
गृह्णीते योऽन्यथा गन्धं शान्ते दीपे च नीरुजः।
यो वा गन्धं न जानाति गतासुं तं विनिर्द्दिशेत्॥ ६॥
द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति।
रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्च्चसम्॥
अमेघोपप्लवे यश्च शक्रचापतडिद् गुणान्।
तडित्वतोऽसितान् यो वा निर्म्मले गगने घनान्॥

भवतीति शेषः, इदमपि वार्षिकमरिष्टम्। आतुरगतपञ्चेन्द्रियार्थविप्रतिपत्तिं निर्द्दिश्यातुरग्राह्यपञ्चेन्द्रियार्थविप्रतिपत्तिनिर्द्दिशतीत्यभिप्रायः। तत्र रसस्य देहमूलत्वेन प्रधानत्वात् तस्यैव विप्रतिपत्तिं दर्शयन्नाह—विपरीतेनेत्यादि। विपरीतेनेति मधुरोऽम्लः अम्लो मधुर इत्यादि। उपयुक्ताः क्रमादिति पूर्व्वं मधुरमश्नीयादित्यादिक्रमः, गतासुं गतप्राणम्, एतदरिष्टं मासिकम्॥ ४।५॥

गन्धग्रहणमधिकृत्याह—सुगन्धमित्यादि। शान्ते दीपे निर्व्वाणे प्रदीपे, यो गन्धं न जानाति। नीरुजः नीरोगः, पीनसादिरोगवर्ज्जितः॥ ६॥

स्पर्शग्रहणमधिकृत्याह—द्वन्द्वानीत्यादि। द्वन्द्वानि कष्टकराणि; आदिग्रहणात् स्पर्शग्राह्याणि स्निग्धादिवीर्य्याणि। कालावस्था प्रवातनिर्व्वातवर्षाद्याः। दिश इति पूर्व्वादिकाः। अनेन मानसः स्पर्श उक्तः। द्विविधो हि स्पर्शः–स्पर्शेन्द्रियग्राह्यः मानसश्च। तथा च तन्त्रान्तरम्—"स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च" इति। अन्यांश्च भावान् द्रव्यगुणकर्म्माणि विपरीतेन गृह्णाति। द्वन्द्वान्युष्णहिमादीन्येतदरिष्टमेकमासिकमिति। दिशो वैपरीत्येन गृह्णात्येतदरिष्टं त्रिमासिकम्। रूपग्रहणमधिकृत्याह—दिवा ज्योतींषीत्यादि। ज्योतींषि तारकादीनि, चन्द्रवर्च्चसमिति सूर्य्यमेव चन्द्रतेजःसमं पश्यतीत्यर्थः। अमेघोपप्लव इत्यादि। मेघैरनावृतेऽपि नभसि इन्द्रधनुर्विद्युल्लतां पश्यतीति शेषः। तडित्वतो विद्युद्युक्तान्, असितान् कृष्णान् मेघानिति सम्बन्धः। अमेघोपप्लवे

विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम्।
यश्चानिलं मूर्त्तिमन्तमन्तरीक्षश्च * पश्यति॥
धूमनीहारवासोभिरावृतामिव मेदिनीम्।
प्रदीप्तमिव लोकञ्च यो वाप्लुतमिवाम्भसा॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति।
न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम्।
ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम्॥ ७॥
ज्योत्स्नादर्शोष्णतोयेषु च्छायां यश्च न पश्यति।
पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम्॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्।
पिशाचोरगनागानां भूतानां विकृतामपि॥
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते।
आतुरस्य भवेन् मृत्युः स्वस्थो व्याधिमवाप्नुयात्॥ ८॥

इति सुश्रुत संहितायां सूत्रस्थाने पञ्चेन्द्रियार्थविप्रतिपत्तिर्नाम त्रिंशोऽध्यायः॥ ३०॥

शक्रचापतडिल्लतारिष्ट द्वित्रिमासिकम्। सङ्कुलं व्याप्तम्। अम्बरमाकाशम्, मूर्त्तिमन्तं देवताकारम्, अन्ये पुरुषाकारमित्याहुः, मेदिनीं पृथिवीम्, धूमादिभिरावृतामिव व्याप्तामिव, नेत्ररोगं विनापि धूमादिभिरावृतां मेदिनीं पश्यतीत्यर्थः। लोकं जगत्, प्रदीप्तमिव ग्रीष्मकालादृतेऽपि ज्वलितमिव आप्लुतमिव ब्रुडितमिव, अम्भसा पानीयेन। भूमिमष्टापदाकारमिति अष्टापदशब्देन लेखाभिः काष्ठसन्ताननिर्म्मितच्चत्वरं क्रीडनार्थमुच्यते। अरुन्धतीं वशिष्ठभार्य्याम्, ध्रुवं तारकाविशेषम्, आकाशगङ्गाशब्देन श्लक्ष्णघनतारकासन्ततिर्नद्याकारोच्यते॥ ७॥

ज्योत्स्नेत्यादि। आदर्शः प्रतिविम्बदर्शनार्थं सम्पूर्णचन्द्राकारः कांस्यमय उच्यते। उष्णं घर्म्मः, ज्योत्स्नातपयोस्तु प्रतिच्छायां छायापुरुषं केचिन्मन्यन्ते। विकृतां प्रकृतेरन्यथाभूताम्, अन्यसत्त्वजामन्येभ्यः प्राणिभ्यो जातां प्राण्यन्तरजाताम्। श्वा कुक्कुरः, कङ्कः कङ्कमल्लः, तस्य लक्षणमाह—"कङ्कः स्यात् कङ्कमल्लाख्यो वाणपक्षार्हपक्षकः। लोहपृष्ठो दीर्घपादः पक्षाधः पाण्डुवर्णभाक्" इति। भूतानां देवयोनीनाम्, अथवा भूतानि प्राणिनस्तेषामपि विकृतां विकृतिं गतां छायां पश्यतीति सम्बन्धः। यो वा मयूरकण्ठाभमित्यादि। सुदीप्तखदिराङ्गारज्वलितं धूमरहितमपि मयूरकण्ठाभं नीलं धूमसदृशं पश्यतीत्यर्थः। अत्र दिवा ज्योतींषीत्यादि विधूमं वह्निमीक्षत इत्येतत्पर्य्यन्तेन ग्रन्थेन पञ्चविधं रूपमुक्तम्। तथाहि—दिवा ज्योतींषीत्यादिना आकाशस्य-

* अन्तरीक्षे चेति पाठान्तरम्।

रूपिद्रव्यरूपमुक्तम्; आकाशरूपासम्भवात्। यश्चानिलमित्यादिना वायुरूपमुक्तम्। धूम-नीहारेत्यादिना पृथ्वीरूपमुक्तम्। प्रदीप्तमित्यादिना वह्निरूपमुक्तम्। आप्लुतमिवाम्भसेत्यनेनापां रूपमुक्तम्। एवं पञ्चधा रूपमुक्तम्। भूमिमष्टापदाकारामित्यनेन भूमेर्विकृतिदर्शनमुक्तम्। पूर्व्वन्तु धूमाद्यावरणदर्शनमेवेति न पौनरुक्त्यम्। न पश्यति सनक्षत्रामित्यनेन व्योमस्थाना-भदर्शनमुक्तम्। दिवाज्योतींषीत्यादिना तु पूर्व्वदर्शितमुक्तम्, अतो न पौनरुक्त्यम्। ज्योत्स्ना-दर्शोष्णतोयेष्वित्यादिना रूपस्यायोग उक्तः। पश्यत्येकाङ्गहीनां वेत्यनेन रूपहीनयोग उक्तः। विकृताञ्चेत्यनेन मिथ्यायोगो रूपस्योक्तः। अग्नेर्मिथ्याग्रहणमधिकृत्योक्तं यो वा मयूरकण्ठाभ-मित्यादिना। एतदरिष्टफलं दर्शयन्नाह—आतुरस्य भवेन्मृत्युरित्यादि ॥ ८ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे पञ्चेन्द्रियार्थविप्रतिपत्तिव्याख्यानाम त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ।

अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

श्यावा लोहितिका नीला पीतिका वापि मानवम् ।
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥ २ ॥
ह्रीरपक्रमते यस्य प्रभास्मृतिधृतिश्रियः ।
अकस्माद् यं भजन्ते वा स परासुरसंशयम् ॥ ३ ॥
यस्याधरौष्ठः पतितः क्षिप्तश्चोर्द्ध्वं तथोत्तरः ।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ ४ ॥

अत्र छायाशब्दानन्तरं लुप्तादिशब्दनिर्द्देशात् ह्रीश्रीतुष्ट्यादिविप्रतिपत्तयो ग्राह्याः । वर्णप्रभाश्रिता या भवति सा छायाशब्देनोच्यते । छायाप्रभयोस्तु भेदः शास्त्रकारैरुक्तः । तथाच—"वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी । आसन्ना लक्ष्यते छाया प्रभा दूराच्च लक्ष्यते" इति । प्रभा दूराच्चेत्यत्र प्रभा हरा तु लक्ष्यते इति क्वचित् पुस्तके पाठोऽस्ति । न केवलं वर्णप्रभाच्छायानां लक्षणभेदः, संख्याभेदोऽप्यस्ति । तथाहि—चतुर्व्विधो वर्णः—गौरः, कृष्णः, श्यामः, गौरश्याम इति । प्रभा सप्तविधा—रक्ता पीता सिता श्यावा हरिता पाण्डुरा असिता इति । छाया पञ्चविधा—स्निग्धा विमला रूक्षा मलिना संक्षिप्ता इति । छायाविरुद्धप्रतिपत्तिं दर्शयन्नाह—श्यावेत्यादि । अत्र यद्यपि श्यावा लोहितिका नीलेत्यादयः प्राकृताश्छायास्तथाप्यभूतपूर्व्वा आकस्मिका विपर्य्ययेण या पुरुषमभिद्रवन्ति ता इह गृह्यन्ते । अभिद्रवन्ति अनुसरन्ति उपतिष्ठन्तीत्यर्थः । परासुर्गतप्राणः ॥ १।२ ॥

पूर्व्वाध्यायनिर्द्दिष्टशीलविकृतिं तथा छायासदृशीं प्रभां निर्द्दिशन्नाह—ह्रीरित्यादि । ह्रीर्लज्जा, प्रभा पूर्व्वोक्तलक्षणा, स्मृतिः पूर्व्वानुभूतस्मरणम्, धृतिर्नियमात्मिका, तुष्टिः सन्तोष इत्यर्थः, श्रीः कमनीयता । प्रभाविकृतिं विहाय अपराः शीलविकृतयो ज्ञेयाः । केचित् पठन्ति—"ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा" । शेषं समं पठन्ति व्याख्यानयन्ति च, श्रीर्बलम्, तेजोऽत्र चेष्टालक्षणं बलमभिधीयते । ओजस्तु शुक्लं हृदयस्थधातुधाम । शोभाधनतेजसां वैपरीत्यं वार्षिकमरिष्टम् । स्मृतिबलादिविपर्य्ययः षाण्मासिकमरिष्टम् । छायादिविप्रतिपत्त्यनन्तरं वैपरीत्यसामान्यादोष्ठादीनामवयवानां विकृतिं दर्शयन्नाह—यस्येत्यादि । अधरौष्ठोऽधस्तन ओष्ठः, पतितो लम्बायमानः, उत्तर उपरितन ओष्ठः, ऊर्द्ध्वं क्षिप्तः पतित इत्यर्थः । जाम्बवाभासाविति जम्बूफलसदृशौ, ओष्ठारिष्टेन दन्तारिष्टेन च सान्निपातिककालप्रमाणेन म्रियते ॥ ३।४ ॥

आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥ ५ ॥
कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै।
कर्कशा वा भवेद् यस्य सोऽचिराद् विजहात्यसून् ॥ ६ ॥
कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका।
अवस्फूर्ज्जति मग्ना * वा न स जीवति मानवः ॥ ७ ॥
सङ्क्षिप्ते विषमे † स्तब्धे रक्ते स्रस्ते च लोचने।
स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ ८ ॥
केशाः सीमन्तिनो यस्य सङ्क्षिप्ते विनते भ्रुवौ।
लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद् याति मृत्यवे ॥ ९ ॥
नाहरत्यन्नमास्यस्थं न धारयति यः शिरः।
एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान् जहाति सः ॥ १० ॥

आरक्ता इत्यादि। अत्र श्यावदन्तत्वमरिष्टं सामान्यविषयं, न पुनर्विसूचीविषयमेव। खञ्जनप्रतिमा इति मर्द्दनादिभिरगारधूमातुरचितमुपस्तरणं खञ्जनमुच्यते, यं खरजिसित्याहुर्दन्तवादकाः, अन्ये खञ्जरीटमाहुः, तद्वर्णः शुक्लकृष्ण इत्यर्थः। कृष्णेत्यादि। विशेषतस्तु जिह्वावलिप्तेवालिप्ता न पुनर्मलोत्पत्त्यादिना, प्रमेहपूर्व्वरूपे तु मलोत्पत्त्यानुलेपो लक्ष्यनिमित्तत्वादरिष्टं न भवति। शूना श्वयथुयुक्ता, विजहाति विशेषेण त्यजति असून् प्राणान्, एतदरिष्टं पाक्षिकम्। कुटिलेत्यादि। कुटिला वक्रा, स्फुटिता विकसिता, अवस्फूर्ज्जति शब्दायते, मग्ना ब्रुडिता, एतदरिष्टं चक्षुररिष्टञ्च सप्तरात्रिकम्। सङ्क्षिप्ते इति सङ्क्षिप्ते सङ्कुचिते, विषमे निम्नोन्नते, स्तब्धेऽत्र निश्चेष्टे, स्रस्ते अधःपतिते, स्यातां भवेताम्। केशा इत्यादि। सीमन्तः केशमार्गः। सङ्क्षिप्ते सङ्कुचिते, विनते अधःपतिते, लुनन्ति अनवरतं चलन्तीत्यर्थः। पक्ष्माणि चक्षुराच्छादनरोमाणि। भ्रुवावपि सीमन्तिन्याविति सम्बध्नन्ति केचित्। एतदरिष्टं स्वस्थस्य षड्रात्रादातुरस्य त्रिरात्रान्मरणाय। केचिदत्र सीमन्तारिष्टं तथा जिह्वानेत्रविकारारिष्टञ्च ज्वरविषयमेवाचक्षते। ज्वर एवैषामन्तेषु प्रदेशेषूक्तत्वात्; नैतदित्यन्ये; पुनर्व्वचनात्, तेषां ज्वर एवोक्तत्वात् पुनरिह तद् वचनमनर्थकमेव स्यात् ॥ ५—९ ॥

कायावयवक्रियाविप्रतिपत्तिमधिकृत्याह— नाहरतीत्यादि। नाहरति न गिलति, आस्यस्थं मुखस्थम्। मूढात्मा विस्मृतिशीलः। सद्य इति तस्मिन्नेवाहनि प्राणक्षय इत्यवगन्तव्यम्।

* भग्नेति वा पाठः।

† विनते इति पाठान्तरम्।

बलवान् दुर्ब्बलो वापि सम्मोहं योऽधिगच्छति ।
उत्थाप्यमानो बहुशस्तं पक्वं भिषगादिशेत् * ॥ ११ ॥
उत्तानः सर्व्वदा शेते पादौ विकुरुते च यः ।
विप्रसारणशीलो वा न स जीवति मानवः ॥ १२ ॥
शीतपादकरोच्छ्वास-च्छिन्नश्वासश्च † यो भवेत् ।
काकोच्छ्वासश्च यो मर्त्त्यस्तं धीरः परिवर्ज्जयेत् ॥ १३ ॥
निद्रा न च्छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा ।
मुह्येद् वा वक्तुकामस्तु प्रत्याख्येयः स जानता ॥ १४ ॥
उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः ।
प्रेतैर्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत् ॥ १५ ॥
खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते ।
पुरुषस्याविषार्त्तस्य सद्यो जह्यात् स जीवितम् ॥ १६ ॥
वाताष्ठीला तु हृदये यस्योर्द्ध्वमनुयायिनी ।
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥ १७ ॥
अनन्योपद्रवकृतः शोफः पादसमुत्थितः ।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥ १८ ॥

बलवानित्यादि । अत्र संमोहं मूर्च्छां, बहुशो वारंवारं, पक्वं कालपक्वं मृत्युग्रस्तमित्यर्थः । एतदरिष्टे सप्तरात्रं जीविताविधिः । उत्तान इत्यादि । शेते स्वपिति, विकुरुते मुहुर्मुहुः पादप्रसारणसङ्कोचौ करोति, विप्रसारणशीलः पादसङ्कोचनशीलः । एतदरिष्टं सद्योमरणकरम् । शीतपादेत्यादि । पादौ करौ उच्छ्वासश्च त्रयमेतद् यदा एकदैव शीतं भवति तदा एतदरिष्टं ज्ञेयम् । छिन्नश्वासश्च छित्वाछित्वा ऊर्द्ध्वं श्वसितीत्यर्थः । काकोच्छ्वास इति काकवद् व्यात्ताननः श्वसितीत्यर्थः । एतदरिष्टं सद्योमरणकरम् । निद्रेत्यादि । लिह्यात् स्वादयेत्, उद्गारान् उत्कारानित्यर्थः । प्रेतैः मृतैः, सार्द्धं सहेत्यर्थः ॥ १०—१५ ॥

शरीरदेशविशेषाश्रितव्याधिविशेषानरिष्टकृतान् दर्शयन्नाह—खेभ्य इत्यादि । खेभ्यः स्रोतोभ्यः । जह्यात् त्यजेत् । वाताष्ठीलेति । वाताष्ठीलेव वाताष्ठीला, न तु वातव्याधिपठिता वाताष्ठीलेह गृह्यते । अथ सैव हृदयमागत्य एवं लक्षणा यदा भवति तदा अरिष्टमिति । रुजान्नविद्वेषकरी चेति । रुजाकरी अन्नविद्वेषकरीचेत्यर्थः । अनन्येति । अनन्योपद्रवैः कृतः, कोऽर्थः ? शोफस्यैवोपद्रवैः श्वासपिपासादौर्ब्बल्यादिभिः कृत इत्यर्थः, इत्थम्भूतः शोफः पादसमुत्थितः पुरुषं हन्ति, इत्थम्भूतः श्वयथुर्मुखजो नारीं, इत्थम्भूत एव शोफो गुह्यजो द्वयं पुरुषं नारीञ्च हन्तीति सम्बन्धः । अन्ये

* धीरः परिवर्ज्जयेदिति वा पाठः ।　　† छिन्नश्वासश्चेति पाठान्तरम् ।

अतिसारो ज्वरो हिक्का च्छर्दिः शूनाण्डमेढ्रता।
श्वासिनः कासिनो वापि यस्य तं क्षीणमादिशेत् ॥ १९ ॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम्।
बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयः ॥ २० ॥
श्यावा जिह्वा भवेद् यस्य सव्यञ्चाक्षि निमज्जति।
मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत् ॥ २१ ॥
वक्त्रमापूर्य्यतेऽश्रुणा स्विद्यतश्चरणावुभौ।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ २२ ॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च।
यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम् ॥ २३ ॥
पङ्कमत्स्यवसातल-घृतगन्धांश्च ये नराः।
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम् ॥ २४ ॥

तु अन्यैरुपद्रवैः कृतोऽन्योपद्रवकृतः, नान्योपद्रवैः पाण्डुरोगादिभिः कृतः अनन्योपद्रवकृतः पाण्डुरोगोदरार्शःप्रभृतिश्वयथुकारणं विहायान्यकारणसमुत्थः पादशोफोऽसाध्यः, पाण्डुरोगादिकृतस्तु साध्य इति। अपरे तु अनन्योपद्रवगत इति पठन्ति। अत्र अनन्यः स्वकीयोपद्रव उच्यते। अनन्योपद्रवं स्वकीयोपद्रवं श्वासपिपासादौर्ब्बल्यादिकं गतः प्राप्त इत्यर्थः, स्वकीयोपद्रवं विहाया न्योपद्रवं पाण्डुरोगादिगतो नारिष्टमिति भावः। अपरे आननोपद्रवगत इति मन्यन्ते, तत्र पादतलाच्छोफ आननं मुखमुपद्रवैः सह गत प्राप्त इत्यर्थः। अतिसार इत्यादि। कासवतः श्वासवतो वा पुरुषस्य यदा अतिसारादयो भवन्ति तदा तं पुरुषं क्षीणं मृतम् आदिशेत् कथये दित्यर्थः। एतदरिष्टं सप्तरात्रिकम्। स्वेद इति। बलवानतिशयेन वियुञ्जन्ति प्राणैः सह वियोगं कुर्व्वन्ति मारयन्तीत्यर्थः। एतदरिष्टं त्रिरात्रिकम्। श्यावेत्यादि। यस्य मुखं पूति मुखं शटितं भवतीत्यर्थः। एतत्त्रितयमपि समुदायेनैवारिष्टम्। केचिदिदमरिष्टं सान्निपातिकमाहुः। अतएव मरणमर्य्यादापि तत्प्रमाणेनैव ॥ १६—२१ ॥

वक्त्रमित्यादि। आपूर्य्यते भ्रियते, अश्रुणा चक्षुरम्भसा, स्विद्यत इति स्वेदयुक्तौ भवतः। आकुलतां यातीति ओदनमण्डादिनेव पूर्णेऽक्षिणीत्यर्थः। गमिष्यतो गन्तुमिच्छतः पुरुषस्य। चरणा विति द्विवचनेन द्वित्वे लब्धे उभशब्दो यौगपद्यस्य ज्ञापक इत्यर्थः। एतदरिष्टं मौहूर्त्तिकं प्राहरिकञ्च। अतिमात्रमित्यादि। अत्र गात्राणि परिचारकैः संवाहकैश्चोत्थाप्यमानानि, अकस्मात् कारणं विना, लघूनि लघुतराणि, गुरूणि भारवन्ति, अथवा गुरूणि स्थूलानि, लघूनि कृशानि, स्युर्भवेयुः। वैवस्वतो यमः, आलयं गृहं, गन्ता गमिष्यतीत्यर्थः। पङ्केत्यादि। मृष्टान् गन्धान् ये पुरुषा

यूका ललाटमायान्ति वलिं नाश्नन्ति वायसाः ।
येषां वापि रतिर्नास्ति यातारस्ते यमालयम् ॥ २५ ॥
ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः ।
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम् ॥ २६ ॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥ २७ ॥
प्रवाहिका शिरःशूलं कोष्ठशूलश्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ २८ ॥
विषमेणोपचारेण कर्म्मभिश्च पुरा कृतः ।
अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत् ॥ २९ ॥
प्रेता भूताः पिशाचाश्च रक्षांसि विविधानि च ।
मरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥ ३० ॥

वान्ति शोभनगन्धान् वमन्तीत्यर्थः । एतदरिष्टं वार्षिकम् । यूकेत्यादि । बलिं काकबलिम् । यस्य रतिर्नास्ति यस्य सुखं नास्ति न रमते क्वापीत्यर्थः, परलोके बद्धरतित्वात् । एतद्दरिष्टं वार्षिकम् । ज्वरेत्यादि । अन्योऽन्यावसादिनः परस्परोपद्रविणः । बलमुत्साहलक्षणम् । प्रवाहिका अतिसार-भेदः । उपस्थित उप समीपे स्थित इत्यर्थः ॥ २२—२८ ॥

कस्मादेतान्यरिष्टान्युत्पद्यन्ते येभ्यो जीवितं निधनं यातीत्याह —विषमेणेत्यादि। प्रकृतेर्बलादीन् भावानवेक्ष्य कृत उपचारः समोपचारः, तद्विपरीतो विषमोपचारः । पुराकृतैः पूर्व्वजन्मार्ज्जितैः कर्म्मभिः शरीरस्थापकैः, क्षीणैरित्यध्याहारः । अनित्यत्वाद् विनाशित्वादित्यर्थः, निधनं विनाशः । अन्येऽरिष्टादन्यतोऽपि मरणमुत्पद्यत इत्याहुः । तथाहि—युक्तिव्यपाश्रयं मरणमुक्तं विषमेणोपचारेणेत्यनेन, दैवव्यपाश्रयन्तु मरणं कर्म्मभिश्च पुराकृतैरित्यनेनोक्तं, स्वभावादप्यनित्यं जीवितं भवतीति अनित्यत्वाच्चेत्यनेनोक्तम्, एतेन त्रिहेतुकं मरणमुक्तम् । ननु सर्व्वत्रारिष्टमन्ते मरणायोत्पद्यते तत् कथं मरणे हेत्वन्तराण्युक्तानि ? सत्यम्, उल्लङ्घितचिकित्सामार्गैर्दोषैर्जन्यते मरणं, रिष्टमपि च तथाविधैरेव दोषैर्जन्यते, अतएव समसामग्रीजनितमेवारिष्टमिति न दोष इति मन्यन्ते ॥ २९ ॥

कस्मात् पुनर्मरणमप्रतिसाधनमित्यत आह —प्रेता इत्यादि । प्रेताः प्राणिनो विगतिं प्राप्ताः, भूताः यमानुचराः, पिशाचाः पिशिताशना देवयोनयः, रक्षांसि रावणानुचरादीनि, उपसर्पन्ति समीपं गच्छन्ति, प्रतिघ्नन्ति विनाशयन्ति, जिघांसया हन्तुमिच्छया, मोघाः निष्फलाः । अन्ये

तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया।
तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव गतायुषः ॥ ३१ ॥

इति सुश्रुत-संहितायां सूत्रस्थाने च्छायाविप्रतिपत्तिर्नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

व्याख्यानयन्ति—शरीरव्याधिषु क्रियावैफल्यहेतवः प्रागुक्ताः; तथाहि—"संस्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च। निहन्त्यौषधवीर्य्याणि सन्त्वान् दुष्टग्रहो यथा" इति। आगन्तुषु पुनरत्र भूतानुबन्धात् क्रियावैफल्यं दर्शयति—प्रेता इत्यादिना। तत्र प्रेता अकृतैकोद्दिष्टा भविष्यत्-पितृभेदाः, भूताः पिशाचभेदाः, रक्षांसि विविधानि चेति ब्रह्मराक्षसादिभेदैर्विविधानि नाना-प्रकाराणीत्यर्थः। चकारद्वयमौषधवीर्य्यादीनां तुल्यसामर्थ्यं समुच्चिनोति। तथाहि—यथा स स्थिरत्वादित्यादौ शरीरव्याधिक्रियाप्रतिघातसामर्थ्यमुक्तं, तथा आगन्तुव्याधिक्रियाप्रतिघात-सामर्थ्यमप्यत्र प्रेता इत्यादौ ॥ ३० । ३१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे
छायाविप्रतिपत्तिव्याख्यानामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः ।

## अथातः स्वभावविप्रतिपत्तिमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

स्वभावप्रसिद्धानां शरीरैकदेशानामन्यभावित्वं मरणाय। तद्यथा ;— शुक्लानां कृष्णता, कृष्णानां शुक्लता, रक्तानामन्यवर्णत्वम्, स्थिराणां मृदुत्वम्, मृदूनां स्थिरता, चलानामचलत्वमचलानां चलता, पृथूनां सङ्क्षिप्तत्वम्, सङ्क्षिप्तानां पृथुता, दीर्घाणां ह्रस्वत्वम्, ह्रस्वानां दीर्घता, अपतनधर्म्मिणां पतनधर्म्मित्वम्, पतनधर्म्मिणामपतनधर्म्मित्वम् ; अकस्माच्च शैत्यौष्ण्यस्नैग्ध्यरौक्ष्यप्रस्तम्भ-

स्वभावशब्दानन्तरमादिशब्दो लुप्तो द्रष्टव्यः, तेन स्वभावादिविप्रतिपत्तिरित्यर्थः। स्वभावशब्देनात्र प्रकृतिरुच्यते। तां स्वभावविप्रतिपत्तिं संक्षेपेण तावन्निर्देष्टुमाह—स्वभावप्रसिद्धानामित्यादि। अन्यभावित्वं गुणकर्म्मभ्यां कृत्वा, तथा विशिष्टद्रव्यान्तरसंयोगाच्च शिराणां दर्शनं ललाटे नासावंशे वा पिड्कोत्पत्तिरित्यादिना वक्ष्यमाणः।

तत्र स्वभावसिद्धानां शरीरैकदेशानामन्यथाभावित्वं विस्तरेणोपदर्शयन्नाह—तद् यथेत्यादि। अकस्माच्च शुक्लानां दृशैकदेशानां निर्निमित्तं कार्ष्ण्यं मरणाय। कृष्णानां लोचनमध्यस्य तारुण्ये केशश्मश्रुलोम्नाञ्च शुक्लत्वमरिष्टम्। रक्तानां नेत्रान्तपादकरतलताल्वोष्ठजिह्वानामाकस्मिकमन्यवर्णत्वं श्वेतपीतकृष्णनीलत्वमरिष्टमिति। स्थिराणां कठिनानां केशश्मश्रुनखदन्तशिरास्नायुस्रोतःप्रभृतीनां मृदुत्वं कोमलत्वमरिष्टमिति। मृदूनां मांसशोणितमेदोमज्जशुक्रनाभिहृदययकृत्प्लीहप्रभृतीनां स्थिरत्वं काठिन्यं विकृतिरिति। केचिद् मृदूनामित्यत्र अदृढानामिति पठन्ति। चलानां वाताशयशिरासन्धिजिह्वादीनामस्पन्दत्वमरिष्टमिति। शिरा दशैव चला भवन्ति, तास्तु शारीरे च वक्ष्यति। अचला मांसमेदोऽस्थिनाभयस्तेषां चलत्वमरिष्टम्। अन्ये तु नासाकर्णमांसादीनामित्याहुः। पृथूनां सङ्क्षिप्तत्वमिति विस्तीर्णानां स्वल्पत्वम्। तानि च शिरोललाटवक्त्रांसोरःपृष्ठादीनि, तेषां सङ्क्षिप्तत्वमरिष्टम्। सङ्क्षिप्तानां दृष्टिमण्डलनखरोमगुल्फादीनां पृथुत्वमरिष्टम्, दीर्घाणां नयनभुजाङ्गुलिपर्व्वोच्छ्वासनादीनां ह्रस्वत्वमरिष्टम्। ह्रस्वानां जङ्घामेढ्रग्रीवादीनां दीर्घत्वमरिष्टम्। अपतनधर्म्मिणां पतनधर्म्मित्वमिति अपतनस्वभावानां पतनस्वभावत्वमित्यर्थः। तत्रापतनधर्म्मिणः केशश्मश्रुलोमनखादयस्तेषां पतनधर्म्मित्वमरिष्टम्। पतनधर्म्मिणामपतनधर्म्मित्वमिति पतनधर्म्मिणां स्वेदमूत्रपुरीषादीनां पतनधर्म्मित्वमरिष्टम्। अकस्मादिति अनिमित्तमित्यर्थः। अकस्मादित्येतदुक्तैः शुक्लानां कृष्णत्वमित्यादिभिर्वक्ष्यमाणैश्च शैत्यौष्ण्यादिभिः सह प्रत्येकं सम्बध्यते। शैत्येत्यादि। हस्तपादोच्छ्वासादिषु स्वभावोष्णतायुक्तेषु शैत्यं, शीतत्वयुक्तेषु फुत्कारादिषु चौष्ण्यं, स्निग्धतायुक्तेषु नयनतारकादिषु रौक्ष्यम्, [illegible] रूक्षेषु स्निग्धत्वम्।

वैवर्ण्यावसदनञ्चाङ्गानाम्। स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवस्रस्तोत्क्षिप्त-भ्रान्तावक्षिप्तपतितविमुक्तनिर्गतान्तर्गतगुरुलघुत्वानि, प्रवालवर्णव्यङ्गप्रादुर्भावो-ऽप्यकस्मात्। शिराणाञ्च दर्शनं ललाटे, नासावंशे वा पिड्कोत्पत्तिः। ललाटे प्रभातकाले वा स्वेदः। नेत्ररोगाद् विना वाश्रुप्रवृत्तिः। गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे निलयनं वा कपोतकङ्कप्रभृतीनाम्। मूत्रपुरीषवृद्धि-रभुञ्जानानां तत्प्रणाशो भुञ्जानानाम्। स्तनमूलहृदयोरःसु च शूलोत्पत्तयः। मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्य्ययो वा तथार्द्धाङ्गे श्वयथुः। शोषो-ऽङ्गपक्षयोर्वा, नष्टहीनविकलविकृतस्वरता वा विवर्णपुष्पप्रादुर्भावो वा दन्तमुख-

प्रस्तम्भः प्रकर्षेण स्तब्धता, नेत्रयोरङ्गावयवानाञ्च वैवर्ण्यं गौरश्यामादिवर्णानां वैपरीत्यम्। अवसादोऽप्रवृत्तिः वैकल्यमित्यर्थः। केचिद् वैवर्ण्योपसर्ज्जनं चाङ्गानामिति पठन्ति, व्याख्यानयन्ति च—उपसर्ज्जनं तद्भावापत्तिरित्यर्थः।

स्वेभ्य इत्यादि। अवस्रस्तत्वं भ्रूपक्ष्मप्रभृतीनां स्थानादधः प्रलम्बनम्, उत्क्षिप्तत्वं तेषा-मेवोर्द्ध्वगमनं, भ्रान्तत्वं चक्षुरादीनां भ्रमणं, अवक्षिप्तत्वं तेषामेव तिर्य्यक्क्षिप्तत्वं, पतितत्वं शिरो-ग्रीवादीनामधार्य्यमाणता, विमुक्तत्वं सन्धीनां मोक्षः, निर्गतत्वं बहिर्निःसरणं जिह्वानेत्रप्रभृतीनाम्, अन्तर्गतत्वं जिह्वानेत्रनासादीनामन्तःप्रवेशः, अनिर्गतत्वमिति केचित् पठन्ति, तत्रापि स एवार्थः। गुरुलघुत्वानि गुरूणि बाहुशिरःसक्थ्यादीनि, लघूनि अक्षिपक्ष्मादीनि, तेषां विपरीतत्वमरिष्टम्। अवक्षिप्तत्वमित्यत्राक्षिप्तमिति केचित् पठन्ति, तत्रापि स एवार्थः।

प्रवालवर्णेत्यादि। व्यङ्गानां क्षुद्ररोगविशेषाणामकस्मादनिमित्तं प्रवालसदृशवर्णताप्रादुर्भावो भवतीत्यर्थः, प्रवालो विद्रुमः, स च समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः। व्यङ्गरोगस्य श्यावत्वं प्राकृतं, रक्तत्वं वैकृतम्। शिराणामिति प्रवालवर्णानामित्यत्रापि चकारात् सम्बन्धनीयम्। अथवाऽप्राकृतं शिराणां दर्शनमरिष्टमिति। नासेत्यादि पिड्कायाः प्रवालवर्णाया इत्यत्रापि ज्ञेयम्। नासावंशो नासास्थिदण्डः। अन्ये तु नासावंशे ललाटे च पिड्काया उत्पत्तिं वाशब्दान्मन्यन्ते। ललाट इत्यत्र प्रलेपज्वरिण इति शेषो ज्ञेयस्तन्त्रान्तरदर्शनात्। नेत्ररोगादित्यादि अयं पाठो निबन्धेषु न पठितः, वृद्धैः पठितत्वादस्माभिरपि पठितः। गोमयेत्यादि। गोमयं गोपुरीषं तस्य रजः-प्रकाशस्येत्यादि प्रथमं मासिकमरिष्टं, निलयनं वेत्यादि द्वितीयं, उत्तमाङ्गे इत्यत्रापि सम्बध्यते। निलयनमिति उपवेशनम्। स्तनमूलेत्यादि। अत्रापि भुञ्जानानामेवेति बोद्धव्यम्, एतच्च मल-प्रणाशेन सह यदा समुदितं भवति तदा अरिष्टमिति ज्ञेयम्। मध्य इत्यादि। मध्ये शूनत्वं अन्तेषु हस्तपदादिषु परिम्लायित्वं शुष्कता, विपर्य्ययो वेति अन्ते शूनत्वं मध्ये परिम्लायित्वम्। एतदरिष्टं मासिकम्। तथेत्यादि अर्द्धाङ्गे श्वयथौ सति अर्द्धे परिम्लायित्वमिति योज्यम्। अङ्ग-पक्षयोरिति। पक्षः शरीरार्द्धम्। नष्टहीनेत्यादि। नष्टस्वरता अत्यन्तस्वराभावः, हीनस्वरता मन्दस्वरत्वं, विकलस्वरता गद्गदादिस्वरत्वं, विकृतस्वरता स्वाभाविकस्य वैपरीत्यम्। विवर्णेत्यादि।

नखशरीरेषु। यस्य वाऽप्सु कफपुरीषरेतांसि निमज्जन्ति। यस्य वा दृष्टि-मण्डले भिन्नविकृतानि रूपाण्यालोक्यन्ते। स्नेहाभ्यक्तकेशाङ्ग इव यो भाति। यश्च दुर्ब्बलो भक्तद्वेषातिसाराभ्यां पीड्यते कासमानश्च तृष्णाभिभूतः। क्षीणश्छर्द्दिभक्तद्वेषयुक्तः सफेनपूयरुधिरोद्वामी हतस्वरः शूलाभिपन्नश्च मनुष्यः। शूनकरचरणवदनः क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणिपादो ज्वरकासाभिभूतः। यस्तु पूर्व्वाह्णे भुक्तमपराह्णे च्छर्दयत्यविदग्धमतिसार्य्यते वा ज्वरकासाभिभूतः स श्वासात् म्रियते। वस्तवद् विलपन् यश्च भूमौ पतति स्रस्तमुष्कः स्तब्धमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः। प्राग्विशुष्यमाणहृदय आर्द्रशरीरः। यश्च लोष्टं लोष्ट्रेणाभिहन्ति काष्ठं काष्ठेन तृणानि वा च्छिनत्ति। अधरौष्ठं दश-त्युत्तरोष्ठं वा लेढ़ि। आलुञ्चति वा कर्णौ केशांश्च। देवद्विजगुरुसुहृद्वैद्यांश्च

विवर्णपुष्पप्रादुर्भावोऽनुज्ज्वलवर्णबिन्दुप्रादुर्भावो दन्तादिषु अरिष्टम्। यस्येत्यादि। यस्य पुरुषस्य अप्सु पानीयेषु निमज्जन्ति अधःपतनं गच्छन्ति : एतदरिष्टन्तु यत्र त्रयाणामपि मज्जनं भवति तदारिष्टमिति ज्ञेयम्, मासिकञ्च तदरिष्टम्। यस्येत्यादि। भिन्नानि नानाविधानि गवाश्व प्रभृतीनां, विकृतानि वीभत्सानि त्रिभुजत्रिशिर-आदित्वेनाधिकाङ्गानि, एकाक्ष्येकभुजैककर्णा-दित्वेन वा न्यूनाङ्गानि, यस्य पुरुषस्य दृष्टिमण्डलाभ्यन्तर एवंविधानि रूपाणि आलोक्यन्ते दृश्यन्ते तस्यारिष्टम्। अन्ये तु यस्य वा दृष्टिमण्डलेऽभिन्ने इति दृष्टिमण्डलविशेषणमभिन्ने इति कुर्व्वन्ति। तत्राभिन्न इत्यत्राभिन्नेऽभिघातजो भेद आध्यात्मिकदोषेभ्यो वा भेदोऽभिप्रेतः। तत्र विकृतरूपावलोकनं सद्योऽरिष्टं पाञ्चवार्षिकं वेति व्याख्यानयन्ति। स्नेहेत्यादि। सर्व्वदा यद्येवं भवति तदेदमरिष्टम्। यश्चेत्यादि। यः पुमान् दुर्व्वलो बलहीनो मांसहीनो वा, तत्र कासतृष्णारुच्यतीसारा इति समुदितमरिष्टं दुर्व्वले नरे। क्षीणेत्यादि। क्षीणे नरे यदा छर्द्द्यादय उपद्रवाः समुदिता भवन्ति तदारिष्टम्। शूनेत्यादि। ज्वरकासाभिभूते क्षीणे नरे यदा शूनकरचरणादय उपद्रवा भवन्ति, तदाऽरिष्टम्। स्रस्तपिण्डिकः शिथिलजानुगुल्फान्तरालस्थितमांस-पिण्डः; स्रस्तशब्दः पिण्डिकादिभिः सह प्रत्येकं सम्बध्यते। अंसः स्कन्धः। यस्त्वित्यादि। यथा शौनिकेन व्यापाद्यमानो वस्तश्छगलको विलपन् शब्दं कुर्व्वन् भूमौ पतति, तद्वन्मनुष्यो-ऽप्यरिष्टयुक्त इति। स्रस्तमुष्क इति स्थानच्युताण्डः, स्तब्धमेढ्रः स्तब्धलिङ्गः, भग्नग्रीवं इति नतग्रीवः, प्रनष्टमेहनश्चेति अन्तःप्रविष्टलिङ्ग इत्यर्थः। अत्र चकारो वाशब्दार्थः, तेन स्तब्धमेढ्रो भवति, प्रनष्टमेहनो वा भवतीत्यर्थः। अत्रापि श्वासान्म्रियते इति योज्यम्।

प्रागिति। यस्य मनुष्यस्य शरीरमार्द्रमेवावतिष्ठते हृदयं प्रथममेव शुष्यति तस्यारिष्टम्, एतदरिष्टं पाक्षिकम्। यश्चेत्यादि। तृणानि छिनत्ति नखैरिति शेषः। अधरौष्ठं दशतीति अधस्तनमोष्ठं दन्तैर्गृह्णातीत्यर्थः। उत्तरौष्ठं वा लेढ़ीति उपरिसमोष्ठं जिह्वया स्पृशतीत्यर्थः। अयं पाठो निबन्धेषु

द्वेष्टि। यस्य वक्रानुवक्रगा ग्रहा गर्हितस्थानगताः पीड़यन्ति। जन्मर्क्षं वा यस्योल्काशनिभ्यामभिहन्यते होरा वा। गृहदारशयनासनयानवाहन-मणि-रत्नोपकरणगर्हितलक्षणनिमित्तप्रादुर्भावो वेति॥ २॥

भवन्ति चात्र।

चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते।
प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः॥ ३॥
निवर्त्तते महाव्याधिः सहसा यस्य देहिनः।
न चाहारफलं यस्य दृश्यते स विनश्यति॥ ४॥
एतान्यरिष्टरूपाणि सम्यग् बुध्येत यो भिषक्।
साध्यासाध्यपरीक्षायां स राज्ञः सम्मतो भवेत्॥ ५॥

इति सुश्रुतसंहितायां सूत्रस्थाने स्वभावविप्रतिपत्तिर्नाम द्वात्रिंशोऽध्यायः॥ ३२॥

न दृश्यते; बहुवचपठितत्वादस्माभिः पठितः। आलुञ्चतीति आलुञ्चति उत्पाटयतीत्यर्थः। द्वेष्टीत्यादि। सुहृत् मित्रं, द्वेष्टि अप्रीतो भवति। एतदरिष्टं वार्षिकम्। यस्येत्यादि। समाक्रान्तं राशिं मुक्त्वा पुनः पूर्व्वमेव भुक्तराशिं नक्षत्रं वा याति स वक्रगः, पुनश्चानुगत एवोत्तरस्थाने ह्यनुवक्रगः, गर्हितस्थानगता इति ग्रहा इति सम्बध्यते, तच्च गर्हितं निन्दितं स्थानं ज्योतिःशास्त्रादेवाव गन्तव्यम्। जन्मर्क्षं जन्मनक्षत्रं, तेजःपिण्डनिपतनम् उल्का, अशनिः विद्युद्दन्तिभेदः, एताभ्यां यदा आकाशे उदितं जन्मनक्षत्रमभिहन्यते तदाऽरिष्टमित्यर्थः। होरा जन्मराशिः सापि यदा उल्काशनिभ्यां हन्यत इत्यर्थः। गृहेत्यादि। गृहादीनां यानि गर्हितलक्षणानि वास्तुविद्यादिप्रोक्तानि तन्निमित्तस्तत्कारणः प्रादुर्भावः उत्पत्तिररिष्टस्येत्यर्थः; दारा भार्य्या, यानं शिविकारथादि, वाहनं हस्त्यादि, मणयः स्फटिकादयः। रत्नशब्दो गृहादिभिः सह प्रत्येकं सम्बध्यते। उपकरणानि घटपिठरसूर्पादीनि॥ १। २॥

सर्व्वविकाराणामनुक्तमरिष्टमभिनिर्द्दिशन्नाह—चिकित्स्यमान इत्यादि। महाव्याधिर्वातव्याधि प्रमेहादिरष्टविधः, शोफादिः कायचिकित्सापठितो वा। सहसा वेगेनेत्यर्थः। अरिष्टज्ञानफलं दर्शयन्नाह—एतानीत्यादि। साध्यासाध्येत्यादि। स वैद्यः साध्यासाध्ययोः परीक्षायां नृपतेः श्लाघ्यः पूज्यो भवतीत्यर्थः॥ ३—५॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे स्वभावविप्रतिपत्तिव्याख्यानाम द्वात्रिंशोऽध्यायः॥ ३२॥

# त्रयस्त्रिंशोऽध्यायः।

अथातोऽवारणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

उपद्रवस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम्।
रसायनाद् विना वत्स तान् शृण्वेकमना मम॥ २॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः।
अश्मरी मूढ़गर्भश्च तथैवोदरमष्टमम्।
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः॥ ३॥
प्राणमांसक्षयश्वास-तृष्णाशोषवमिज्वरः।
मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः।
वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता॥ ४॥

अवारणीयमिति वारणं चिकित्सा, न विद्यते वारणं येषां ते अवारणा व्याधयस्तानधिकृत्य कृतोऽध्यायोऽवारणीयः; एतेन असाध्यव्याधीनधिकृत्य कृतोऽध्यायः अवारणीयः इत्यर्थः। उपद्रवैरिति पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो यो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः, जघन्यकालजात इति पश्चात्कालजात इत्यर्थः। उपद्रवैस्त्विति तुशब्दोऽत्रावधारणार्थः, तेनेदमवधारयति—पूर्व्वाध्यायेऽरिष्टैर्मरणमभिहितम्, अत्र तूपद्रवैरिति। केचिदुपद्रवैश्चेति तुशब्दस्थाने चकारं पठन्ति। चकारस्तु लक्षणेऽर्थे, तेनोपद्रवैर्लक्षणैर्जुष्टा इत्यर्थः। जुष्टाः सहिताः। रसायनाद् विनेति रसायनेन ह्यसाध्यो व्याधिरपि साध्यते प्रायशः, एकमनाः सावधानः। ममेति मम पार्श्वात्। व्याधयो यान्त्यसाध्यतामिति केचित् पठन्ति॥ १। २॥

प्रथमं मूलव्याधयो भवन्ति पश्चादुपद्रवा इति मूलव्याधीन् दर्शयति—वातव्याधिरित्यादि। वातव्याधिरत्र महावातव्याधिरभिप्रेतो महच्छब्दापलापात्। अष्टावेते इत्यत्र द्वितीयं पुनरष्टग्रहणं सर्व्वेषां तुल्यत्वख्यापनार्थम्; अन्ये त्वन्यथा समादधति, तत्तु विस्तरभयान्न लिखितम्। प्रकृत्यैव स्वभावेनैव, महागदा इति मारणात्मकत्वादसाध्यत्वाच्च महत्त्वमेषामिति। "अष्टावेते महान्तस्तु व्याधयो दुस्तराः सदा" इति केचित् पठन्ति। यैरुपद्रवैर्जुष्टा असाध्या भवन्ति वातव्याध्यादयो रोगास्तानुपद्रवानाह—प्राणमांसक्षय इत्यादि। उत्साहापचयः क्षय इत्यर्थः। चकारत्रयं वक्ष्यमाणशोफत्वक्स्वापादीनां समुच्चयार्थम्। एतैरुपद्रवैर्जुष्टा इत्यत्र बहुवचनं त्रिभिर्वा जुष्टा इति ख्यापनार्थम्। अन्ये "प्राणमांसक्षयश्वासतृष्णाशोथवमिज्वरैः। मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रवैः। वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता" इति पठन्ति॥ ३। ४॥

शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीड़ितम्।
नरं रुजार्त्तमन्तश्च वातव्याधिर्विनाशयेत्॥ ५॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा।
पिड़कापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम्॥ ६॥
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्।
पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्॥ ७॥
तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम्।
शोफातीसारसंयुक्तमर्शोव्याधिर्विनाशयेत्॥ ८॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च।
भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्ज्जयेत्॥ ९॥
प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम्।
अश्मरी क्षपयत्याशु सिकताशर्करान्विता॥ १०॥

प्रतिव्याधिनियतमरिष्टं विशिष्टं दर्शयन्नाह—शूनमित्यादि। शूनाद्युपद्रवसहितं पुरुषं वातव्याधिर्विनाशयेदिति सम्बन्धः। सुप्तत्वचं वधिरत्वचं, भग्नं वातेन त्रुटितम्, रुजार्त्तमन्तश्चेति अन्तर्मध्ये रुजार्त्तं गभीरवेदनापीड़ितम्। केचित् "नरं रुजार्त्तिमन्तञ्च" इति पठन्ति; तत्र रुजा तोदादिलक्षणा, अर्त्तिः शूलम्। यथोक्तोपद्रवाविष्टमिति मक्षिकोपसर्पणादयः श्लैष्मिकानां, वृषणस्वदरणादयः पैत्तिकानां, हृद्ग्रहादयो वातिकानां, तैराविष्टं संयुक्तं मानवं प्रमेहो हन्ति। अतिप्रस्रुतमिति सुष्ठुस्रवन्मूत्रम्। पिड़कापीड़ितमिति पिड़काः शराविकाकच्छपिकादयः, गाढ़मतिशयेन॥ ५।६।

प्रभिन्नमित्यादि। प्रभिन्नप्रस्रुताभ्यां सह अङ्गशब्दः प्रत्येकं सम्बध्यते। हतस्वरमिति नष्टस्वरम्। पञ्चकर्म्मगुणातीतमित्यत्र वमनादीनां पञ्चकर्म्मणामप्राप्तफलमित्येके; तत्तु न सम्यक्, यतः पञ्चशब्देन पञ्चमधात्वस्थिस्थितं कुष्ठमुक्तम्, तत्र कर्म्माणि संशोधनसंशमनाभ्यङ्गगुग्गुलुशिलाजतुप्रभृतीनि, तेषां गुणाः फलानि, तेभ्योऽतीतम्; एतदुक्तं भवति—अस्थिगतकुष्ठं संशोधनादिभिरप्यप्राप्तविशेषं कुष्ठिनं हन्ति। अन्ये तु पूर्व्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियासमूहः पञ्चकर्म्माणीति मन्यन्ते। तद् यथा पूर्व्वरूपेषु संशोधनमुभयतः सेवेत, त्वक्प्राप्ते संशोधनालेपनानि, अत्र त्वक्शब्देन रसोऽभिधीयते। एवं शोणितमांसमेदसामपि चिकित्सितं निर्दिष्टं दर्शनीयम्। इहेति अस्मिन् शास्त्रे। तृष्णेत्यादि। तृष्णारोचकाद्युपद्रवसहितं पुरुषमर्शोव्याधिर्विनाशयेदिति सम्बन्धः। वातेत्यादि। प्रशूननाभीत्याद्युपद्रवसहितं पुरुषमश्मरी क्षपयति विनाशयति, आशु शीघ्रम्। सिकता शर्करान्वितेति सिकता वालुका, तत्सदृशा या शर्करा तया सहिता अश्मरीत्यर्थः॥ ७—१०॥

गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः ।
हन्युः स्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ॥ ११ ॥
पार्श्वभङ्गान्नविद्वेष-शोफातिसारपीडितम् ।
विरिक्तं पूर्य्यमाणञ्च वर्ज्जयेदुदरार्दितम् ॥ १२ ॥
यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा ।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ १३ ॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान् ।
नित्यं वक्त्रेण चोच्छ्वस्यात् तं ज्वरो हन्ति मानवम् ॥ १४ ॥
हिक्काश्वासपिपासार्त्तं मूढं विभ्रान्तलोचनम् ।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ १५ ॥

गर्भेत्यादि । गर्भकोषपरासङ्गप्रभृत्युपद्रवाः स्त्रियं हन्युर्विनाशयेयुः, कस्मिन् सति ? मूढगर्भे । गर्भकोषपरासङ्ग इति गर्भाशयस्य परो अत्यर्थमासङ्गोऽतिशयेन निरोध इत्यर्थः । अन्ये तु स्वस्थानात् परस्थानं गत्वा गर्भस्य सङ्गो निरोध उत्पद्यते, अनेन प्रकारेण परासङ्ग इति कथयन्ति । मक्कल्ल इति गर्भिणीव्याकरणोक्तो ज्ञेयः, तत्राप्रजातायाश्चेति चकारस्त्र केवलं प्रजातायाः, अप्रजाताया अपि मक्कल्लो भवति, तथा गर्भाशयाच्च्युतगर्भाया योनिद्वारसक्तगर्भायाश्च रक्तं स्रुतमन्तःस्थितं पच्यमानं मक्कल्लसंज्ञं भवतीति ज्ञेयम् । योनिसंवृतिः योनिसङ्कोचनम् । यथोक्ताश्चाप्युपद्रवा इति आक्षेपककासश्वासभ्रमादयो मूढगर्भनिदाने पठिताः । हन्युः स्त्रियं मूढगर्भामिति केचित् पठन्ति । मुढगर्भां मूढगर्भसहिताम् । पार्श्वेत्यादि । पार्श्वौ भज्यतेऽनेनेति पार्श्वभङ्गो वेदनाविशेषः । पूर्य्यमाणं विरिक्तञ्चेति विरेचनद्रव्यैर्बहुशो विरिक्तं पुनः पूर्य्यमाणमुदरार्दितं वर्ज्जयेदिति ॥ ११।१२ ॥

कायचिकित्साव्याधीनुपद्रवैरसाध्यान् निर्द्दिशन्नाह—यस्ताम्यतीत्यादि । यस्ताम्यति मुहुर्मुहुः मूर्च्छां गच्छति । विसंज्ञः शेते संज्ञारहितः स्वपितीत्यर्थः । निपतितोऽपि वेति संज्ञारहित इति शेषः । शीतार्दितो बहिरिति शेषः । अन्तरुष्णश्चेति अन्तर्दाहयुक्तः ॥ १३ ॥

यो हृष्टरोमा इति हृष्टरोमा उद्धर्षितरोमा, हृदि सङ्घातशूलवानिति अष्ठीलावत् संहतवस्तुशूलवानित्यर्थः । अन्ये तु महाशूलवानिति मन्यन्ते । नित्यं वक्त्रेण चोच्छ्वस्यादिति सर्व्वदा मुखेनोर्द्ध्वं श्वासं कुर्य्यादित्यर्थः । तं ज्वरो हन्ति मानवमिति तं मानवं ज्वरो हन्ति विनाशयतीत्यर्थः ॥ १४ ॥

हिक्केत्यादि । मूढं व्यामोहयुक्तमनसं विभ्रान्तलोचनमत्यन्तघूर्णिताक्षम् । क्षपयति ज्वरः

आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च।
क्षीणशोणितमांसञ्च नरं नाशयति ज्वरः॥ १६॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम्।
विशेषेण नरं वृद्धमतीसारो विनाशयेत्॥ १७॥
शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम्।
कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम्॥ १८॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढ़ताः।
भवन्ति दुर्ब्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः॥ १९॥
आध्मातं बद्धनिष्यन्दं छर्द्दिहिक्कातृड़न्वितम्।
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम्॥ २०॥
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः।
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति॥ २१॥

इति तल्लक्षणादेवेति शेषः। आविलाक्षमित्यादि। आविलाक्षं ओदनमण्डवदश्रुपूर्णेक्षणम्, प्रताम्यन्तं प्रकर्षेण मोहं गच्छन्तम्। अतीव चेति अहर्निशमित्यर्थः, इत्थम्भूतमाविलाक्षताद्युपद्रवसहितं नरं नाशयति ज्वर इति सम्बन्धः। अत्र विशेषेण वृद्धमिति अवृद्धमप्येवम्भूतं विनाशयेत्, वृद्धं पुनर्विशेषेणातिशयेनेत्यर्थः, इत्थम्भूतं नरं श्वासाद्युपद्रवसहितमतीसारो विनाशयेदिति सम्बन्धः। क्षीणं ज्वरनिपीड़ितमित्यत्र स्थाने क्षीणं विम्बिशीपीड़ितमिति पठन्ति केचित्। अत्र विम्बिशीशब्देन प्रवाहिकोच्यते; भेड़ेनात्रोक्तं "प्रवाहिकामिति विदुर्विम्बिशीं त्वपरे बुधाः" इति॥ १५—१७॥

शुक्लाक्षमित्यादि। कृच्छ्रेण बहुमेहन्तमिति कृच्छ्रेण कष्टेन, बहुमेहन्तं क्षरन्तं मलमिति शेषः। एतेनाहारस्यातिशयमलीभावः कथितः, यस्य चातिशयमलो निष्पद्यते तस्य स पुनरसाध्यो भवति। इत्थम्भूतस्य मांसरक्तक्षयो भवति, शुक्लाक्षत्वाद्युपद्रवसहितं यक्ष्मा हन्तीति सम्बन्धः। इह अस्मिन् शास्त्रे। श्वासेत्यादि। ग्रन्थिमूढ़तेति गुल्मस्यादर्शनम्, एते श्वासाद्युपद्रवा भवन्ति। कस्येत्याह—गुल्मिनो मृत्युमेष्यत इति। गुल्मिनो गुल्मयुक्तस्य पुरुषस्य, मृत्युं मरणम्, एष्यतो गमिष्यत इत्यर्थः॥ १८।१९॥

आध्मातमित्यादि। बद्धनिष्यन्दं बद्धमूत्रं रुद्धपूयगतिकं वा। कायचिकित्सायां यद्यपि विद्रधिर्न पठितः, तथापीह गुल्मान्तरमुपद्रवैः सोऽप्यसाध्यो भवतीति पठितः। समाविष्टमिति सहितं नरं विद्रधिर्नाशयेदिति सम्बन्धः। पाण्डित्यादि। पाण्डुशब्देन श्वेतत्वमभिधीयते। दन्तनखयोः पाण्डुता अस्थिगतदोषेण, नेत्रपाण्डुता पाण्डुसङ्घातदर्शित्वञ्च मज्जगतदोषेण, पाण्डुसङ्घातदर्शी चेति श्वेतद्रव्याणां सङ्घातः समूहः, तं सर्व्वासु दिक्षु पश्यतीत्यर्थः॥ २०।२१॥

लोहितं छर्दयेद् यश्च बहुशो लोहितेक्षणः।
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति॥ २२॥
अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः।
जागरिष्णुरसन्देहमुन्मादेन विनश्यति॥ २३॥
बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम्।
नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत्॥ २४॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽवारणीयो नाम त्रयस्त्रिंशोऽध्यायः॥ ३३॥

लोहितमित्यादि। बहुश इति बहुवारम्। लोहितेक्षण इति रक्तनेत्रः, एतच्च पूर्ववन्मज्जगतदोषेणेति। रक्तानाञ्च दिशां द्रष्टेत्यत्र केचिल्लोहितोद्गारदर्शी चेति पठन्ति। तत्रोद्गारेऽपि लोहितागमत्वेन लोहितोद्गारः, लोहितदर्शित्वञ्च मज्जगतदोषेणैव, लोहितं रक्तं सर्व्वं वस्तु पश्यतीत्यर्थः। लोहिताकारदर्शी चेत्यपरे पठन्ति॥ २२॥

अवागित्यादि। अवाङ्मुखस्तु अधोमुखः, उन्मुखो वेति ऊर्द्ध्वमुखः। बलशब्देनात्रोत्साहः कथ्यते। जागरिष्णुर्जागरणशीलः। अन्ये अवाञ्ची वाप्युदञ्ची वेति पठन्ति, तत्रापि स एवार्थः। बहुश इत्यादि। बहुशो बहुवारान्, अपस्मरन्तमपस्मारवेगवन्तं, प्रक्षीणं पुरुषमिति शेषः। नेत्राभ्याञ्च विकुर्व्वाणमिति नेत्रद्वयं विकृतियुक्तं करोतीत्यर्थः। इत्थम्भूतं पुरुषम् अपस्मारवेगाद्युपद्रवसहितमपस्मारो विनाशयेदिति सम्बन्धः। य एते कायचिकित्सारोगोपद्रवास्ते समस्ता एवासाध्या इति ज्ञेयाः॥ २३।२४॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रह
अवारणीयाध्यायव्याख्यानाम त्रयस्त्रिंशोऽध्यायः॥ ३३॥

---

# चतुस्त्रिंशोऽध्यायः ।

अथातो युक्तसेनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

नृपतेर्युक्तसेनस्य परानभिजिगीषतः ।
भिषजा रक्षणं कार्य्यं यथा तदुपदेक्ष्यते ॥ २ ॥
विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः ।
रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ ३ ॥
पन्थानमुदकं छायां भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयस्तच्च जानीयाच्छोधयेत् तथा ॥
तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रवक्ष्यते ॥ ४ ॥
एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते ।
तत्रैकः कालसंयुक्तः * शेषा आगन्तवः स्मृताः ॥ ५ ॥

युक्तसेनीयमिति । युक्ता सेना यस्य स युक्तसेनो राजा इत्यर्थः, तमधिकृत्य कृतोऽध्यायो युक्तसेनीयः । नृपतेर्युक्तसेनस्येति सज्जसेनस्य गजतुरगरथपदातिलक्षणचतुरङ्गबलस्येत्यर्थः । अन्ये युक्तसेनस्येह मिलितसेनस्येति कथयन्ति । परान् शत्रून्, अभिजिगीषतो जेतुमिच्छत इत्यर्थः । विजिगीषुर्जेतुमिच्छुः । सहामात्यैरिति क्रमागतैः पुरुषैः सहेत्यर्थः, यात्रायुक्त इति दत्तप्रयाण इत्यर्थः, रक्षितव्य इति सर्व्वेभ्य आगन्तुमृत्युभ्यः, विशेषेण अतिशयेन, विषं स्थावरं जङ्गमं कृत्रिमञ्च ॥ १—३ ॥

विषप्रयोगभेदं चिकित्सार्थं दर्शयन्नाह—पन्थानमित्यादि । पन्थानं मार्गम् । स च विषेण दूषितोऽश्वादिखुरक्षुण्णरेणुना रोमकूपनासाविवरादिषु प्रविशन् विकारं जनयति । छायामिति विषेण वृक्षादिदूषणाच्छायादोषः, द्रव्यस्वभावाद् वा छायामपि विषं दूषयति ; यद् वा भल्लातकतरुच्छाया शोफकारिणीति । भक्तमोदनादिकम्, यवसं बुसादि, इन्धनं तृणमश्वादीनां मारणार्थम् । दूषयन्ति विकृतिं कुर्व्वन्ति । अरयः शत्रवः । तच्चेति पन्थादि जानीयाल्लिङ्गैः कृत्वेति शेषः, शोधयेत् चिकित्सेत् । किं तल्लिङ्गं का वा चिकित्सेत्याह—तस्येत्यादि ॥ ४ ॥

ननु यद्यकालमृत्युरस्ति तदा विषादिभ्यो नृपतिरक्षणं युक्तम्, विषभक्षकस्य लिङ्गचिकित्से च युक्ते, अथ नास्त्यकालमृत्युस्तदा किं निष्फलप्रयासेन इत्याशङ्क्याकालमृत्युं प्रमाणैः साधयन्नादावागममेव प्रमाणमाह - एकोत्तरमित्यादि । एकेनाधिकं मृत्युशतम् अथर्व्वाणः अथर्व्ववेदविदः पुरुषाः प्रचक्षते कथयन्ति । तत्रैकः कालसंयुक्त इति तत्र तेषां मृत्यूनां मध्ये एकः कालसंयुक्तः

* कालसंज्ञस्त्विति पाठान्तरम् ।

दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्तौ * वैद्यपुरोहितौ ॥ ६ ॥
ब्रह्मा वेदाङ्गमष्टाङ्गमायुर्व्वेदमभाषत ।
पुरोहितमते तस्माद् वर्त्तते भिषगात्मवान् ॥ ७ ॥

कालमृत्युरित्यर्थः । शेषा आगन्तवः स्मृता इति शेषा उर्व्वरिता आगन्तवोऽपमृत्यवः स्मृताः कथिता इत्यर्थः । अत्र गर्भवर्षेण सहितोत्तरशतवर्षैरेकोत्तरशतं मृत्यवः पूर्य्यन्ते । ततः शता-दर्व्वाग्कालमृत्यवः, शतादनन्तरं कालमृत्युरिति केचिन्मन्यन्ते । अपरे ब्रुवते शतशब्दोऽत्रा-संख्यावाचकः, उत्तरशब्दस्तु प्रधानवाचकः, तेनासंख्या मृत्यवः, कारणानामसंख्येयत्वात् । एकश्च मृत्युः प्रधानं, स च कालमृत्युः कथ्यते । ननु यो यस्मिन् काले म्रियते स तस्य कालमृत्युरेव, तत् कथमकालमृत्युरित्युच्यते ? तथा चोक्तं—"नाकाले म्रियते कश्चित् नास्ति मृत्युरकालजः । यो यस्मिन् म्रियते काले मृत्युकालः स तस्य हि" इति । व्यासभट्टारकेणाप्युक्तं—"नाकाले म्रियते कश्चिद् विद्धः शरशतैरपि । कालप्राप्तस्य कौन्तेय वज्रायन्ते तृणान्यपि" इति । नैतदस्ति, उपमानादि-प्रमाणैर्बहुधा आचार्य्यैरकालमृत्योः स्थापितत्वात् । तथाच—"यथा वर्षमकाले च यथा पुष्पं यथा फलम् । यथा स्याद् दीपनिर्व्वाणमकाले मरणं तथा" इति व्यासवचनमपि अर्ज्जुन-प्रोत्साहकमकालमृत्युस्थापकं दृश्यते । तथाहि—"जलमग्निर्विषं शस्त्रं स्त्रियो राजकुलानि च । अकालमृत्यवो ह्येते तेभ्यो बिभ्यति पण्डिताः" इति । अन्यैरप्युक्तं—"कालः सुरैरपि हि वञ्चयितुं न शक्यो वक्ष्येऽभिधानमपमृत्युविनाशनाय । मृत्युर्भविष्यति कथञ्चन नापमृत्युर्व्यर्थास्तदा चरक-सुश्रुतवाग्भटाद्याः" इति । तस्मात् कालाकालयोर्मृत्युर्भवत्येवेति । अपरे शेषा आगन्तवः स्मृताः इत्यस्याग्रतः "विष्वग्वातादिभिर्यद्वद् दीपो वर्त्त्यादिसंयुतः । निर्व्वाप्यते क्षणाद् देही तथैवागन्तुमृत्युभिः" इति श्लोकं पठन्ति व्याख्यानयन्ति च—विष्वग्वातः प्रबलवातः । आदिशब्देन शलभादिनिपातः कथ्यते ॥ ५ ॥

अथर्व्ववेदोऽकालमृत्युप्रशमनहेतू वैद्यपुरोहितौ पठति । अतस्तयो राजरक्षणे व्यापारं दर्शय-न्नाह—दोषेत्यादि । दोषा वातादयः, आगन्तवो विषाभिघातादयः, रसमन्त्रविशारदाविति रस-विशारदो वैद्यः, मन्त्रविशारदः पुरोधाः । तत्र केचिद् रसविशारद इत्यत्रादिशब्दलोपात् रसवीर्य्य-विपाकविशारदः, अथवा रसशब्देन रसवन्ति द्रव्याणि कथ्यन्ते, तेषां विशारदः ; अथवा रसशब्दोऽत्र विषवाचकः, तद्विशारद इति कथयन्ति । विशारदः पण्डितः । मन्त्राणामृग्यजुःसामोक्तानां-मथर्व्ववेदोक्तानाञ्चेत्यर्थः । यत्तौ यत्नपरौ ॥ ६ ॥

पुरोहितो वेदानधीते, वैद्यस्तु तदङ्गमायुर्व्वेदमिति । वैद्यात् पुरोधसः प्राधान्यं दर्शयन्नाह—ब्रह्मेत्यादि । ब्रह्मा आयुर्व्वेदमभाषत, किं विशिष्टं ? अष्टाङ्गं, पुनः किं विशिष्टं ? वेदाङ्गम् ।

* यत्नादिति पाठान्तरम् ।

सङ्करः सर्व्ववर्णानां प्रणाशो धर्म्मकर्म्मणाम् ।
प्रजानामपि चोच्छित्तिर्नृपव्यसनहेतुतः ॥ ८ ॥
पुरुषाणां नृपाणाञ्च केवलं तुल्यमूर्त्तिता ।
आज्ञा त्यागः क्षमा धैर्य्यं विक्रमश्चाप्यमानुषः ॥ ९ ॥
तस्माद् देवमिवाभीक्ष्णं वाङ्मनःकर्म्मभिः शुभैः ।
चिन्तयेन्नृपतिं नित्यं श्रेयांसीच्छन् विचक्षणः ॥ १० ॥
स्कन्धावारे च महति राजगेहादनन्तरम् ।
भवेत् सन्निहितो वैद्यः सर्व्वोपकरणान्वितः ॥ ११ ॥
तत्रस्थमेनं ध्वजवद्यशःख्यातिसमुच्छ्रितम् ।
उपसर्पन्त्यमोहेन विषशल्यामयार्द्दिताः ॥ १२ ॥

वर्त्तेत व्यवहरेदित्यर्थः । आत्मवान् बुद्धिमान् । सर्व्वप्रजानां राजायत्ता स्थितिरिति राजरक्षणं यत्नेन कार्य्यमिति दर्शयन्नाह— सङ्कर इत्यादि । सङ्कर एकत्वं ब्राह्मणादीनां वर्णानां दण्डाभावेनाचारापलोपात् । धर्म्मकर्म्मणामिति वर्णानामेव धर्म्मस्य कर्म्मणामन्येषामपि । अन्ये तु धर्म्मिकर्म्मणामिति पठन्ति, तत्र धर्म्मयोगादाश्रमाश्चत्वारो धर्म्मिणः, ब्रह्मचारिगृहस्थवानप्रस्थयतयश्चत्वार आश्रमाः, तत्कर्म्मणां प्रणाशः । प्रजानामुच्छित्तिरिति दण्डाभावेन कृषिपाशुपाल्यवाणिज्यराजोपसेवानामभावादुच्छित्तिरुच्छेदो भवतीत्यर्थः । नृपव्यसनहेतुत इति वर्णसङ्करादयोऽनर्था राजव्यसनात् कारणाद् भवन्ति, तस्माद् राजा यत्नेन रक्षणीय इत्यर्थः । अन्ये नृपव्यसनहेतुका इति पठन्ति । तत्र उच्छित्तिरिति सम्बध्यते ॥ ७।८ ॥

राज्ञो मनुजत्वसमानेऽपि अमानुषानुवर्त्तिभिर्गुणैर्देवत्वं साधयन्नाह—पुरुषाणामित्यादि । केवलं निश्चितं, मूर्त्तिराकृतिः, आज्ञा अनुल्लङ्घनीय आदेशः, त्यागः कीर्त्तिधर्म्मार्थं बहुप्रकारो वित्तविसर्गः, क्षमा सर्व्वसहता, धैर्य्यं व्यसनेषु धीरता, विक्रमः पराक्रमः, अमानुष एष गुणसमूहो मानुषेषु न सम्भवतीत्यर्थः । तस्मादित्यादि । अभीक्ष्णमनवरतं, तस्मात् कारणात् देवमिव नृपतिं वैद्यश्चिन्तयेदिति सम्बन्धः । कैः कृत्वा चिन्तयेदित्याह—वाङ्मनःकर्म्मभिः शुभैरित्यादि । शुभैः शोभनैरित्यर्थः ॥ ९।१० ॥

वैद्यस्य सन्ततोपयोगित्वादुचितप्रदेशवासं निर्द्दिशन्नाह— स्कन्धावार इत्यादि । स्कन्धावारे कटके, महति गुरुतरे । अनन्तरमिति अन्यान्तरायवर्ज्जिते । सर्व्वोपकरणान्वित इति यन्त्रशस्त्रक्षारौषधागदादियुक्तः । तत्रेत्यादि । तत्रस्थमेनं ध्वजवत् पताकावत्, निर्म्मलगुणकीर्त्तनं यशः, ख्यातिः स्वाभाविकी स्तुतिः, समुच्छ्रितं वृद्धिं गतं, उपसर्पन्ति समीपं गच्छन्ति । अमोहेन निश्चिन्तमनसा । विषशल्यामयार्द्दिता इति अर्द्दिताः पीड़िताः, तेन विषार्द्दिताः शल्यार्द्दिताः

स्वतन्त्रकुशलोऽन्येषु शास्त्रार्थेष्ववहिष्कृतः।
वैद्यो ध्वज इवाभाति नृपतद्विद्यपूजितः ॥ १३ ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः।
एते पादाश्चिकित्सायाः कर्म्मसाधनहेतवः ॥ १४ ॥
गुणवद्भिस्त्रिभिः पादैश्चतुर्थो गुणवान् भिषक्।
व्याधिमल्पेन कालेन महान्तमपि साधयेत् ॥ १५ ॥
वैद्यहीनास्त्रयः पादा गुणवन्तोऽप्यपार्थकाः।
उद्गातृहोतृब्रह्माणो यथाध्वर्य्युं विनाध्वरे ॥ १६ ॥
वैद्यस्तु गुणवानेकस्तारयेदातुरान् सदा।
प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि ॥ १७ ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयङ्कृती।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः।
सत्यधर्म्मपरो यश्च स भिषक् पाद उच्यते ॥ १८ ॥

आमयाद्दिंताश्चेत्यर्थः। वैदंत्र बहुश्रुतं स्तुवन्नाह—स्वतन्त्रेत्यादि। कुशलः प्रवीणः, अवहिष्कृत इति नात्यन्तमकुशलः, नृपतद्विद्यपूजित इति नृपैस्तद्विदैश्च पूजितः सम्मानितः, तद्विदैः वैद्यैरित्यर्थः ॥ ११—१३ ॥

पादचतुष्टयं चिकित्सासाधकं दर्शयन्नाह—वैद्य इत्यादि। व्याध्युपसृष्टो रोगी, परिचारकः शुश्रूषकः पुरुषः। कर्म्मसाधनहेतव इति आरोग्यहेतव इत्यर्थः ॥ १४ ॥

वैद्यस्य प्राधान्यं दर्शयन्नाह—वैदेत्यादि। अपार्थका निष्फलाः। उद्गाता सामवित्, होता ऋग्वेदवित्, ब्रह्मा तु त्रयीवित्, (यथा) अध्वर्य्युर्यजुर्व्वेदविदुपाध्यायः सर्व्वेषामेवोपदेष्टा, अध्वरे यज्ञे ॥ १५ । १६ ॥

पादत्रयव्यतिरेकेऽपि वैद्यक्रियायाः साफल्यं दर्शयन्नाह—वैद्यस्त्वित्यादि। प्लवं नावं, प्रतितरैः अन्तःप्रविष्टजलोत्क्षेपकैः पुरुषैः। कर्णधारो नौकाया नेता ॥ १७ ॥

वैद्यादीनां गुणानाह—तत्त्वेत्यादि। तत्त्वाधिगतशास्त्रार्थ इति यथावदधीतशास्त्रो यथावज्ज्ञाततदर्थश्चेत्यर्थः, दृष्टकर्म्मा इति छेदादौ स्नेहादौ च कुशल इत्यर्थः, स्वयंकृती स्वप्रज्ञया चिकित्सायां प्रवृत्तः, लघुहस्त इति छेदादिक्रियासु वेपनादिदोषरहितः, शुचिरिति वाह्याभ्यन्तरशौचयुक्तः, शूरो विषादरहितः, सज्जोपस्करभेषज इति सज्जानि प्रस्तुतानि उपस्कराणि अग्रोपहरणीयपठितानि यन्त्रशस्त्रादीनि भेषजानि च यस्य स तथा। प्रत्युत्पन्नमतिर्योऽवस्थासु न मुह्यति। धीमानिति [illegible] व्यवसायी विषमावस्थास्वपि चिकित्सां

आयुष्मान् सत्त्ववान् साध्यो द्रव्यवानात्मवानपि।
आस्तिको वैद्यवाक्यस्थो व्याधितः पाद उच्यते ॥ १९ ॥
प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृतम्।
युक्तमात्रं मनस्कान्तं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकारि विपर्य्यये।
समीक्ष्य दत्तं काले च भेषजं पाद उच्यते ॥ २० ॥
स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे।
वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृतः ॥ २१ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने युक्तसेनीयो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

कुर्व्वन् न मुह्यति, अन्ये उत्साहीति मन्यन्ते। विशारदः पण्डितः, कृच्छ्रपदमालेषु न मुह्यति। सत्यधर्म्मपर इति सत्यं मिथ्याभाषणनिवृत्तिः, धर्म्मः अनेकसाधनसाध्यः ॥ १८ ॥

आयुष्मानित्यादि। आयुष्मान् दीर्घायुः, सत्त्ववान् क्लेशसहिष्णुः, साध्यः साध्यव्याधियुक्त इत्यर्थः; आत्मवान् अलोलुपः, आस्तिक इति दत्तमस्ति हुतमस्ति परलोकोऽस्ति एवं मतिर्यस्य स आस्तिकः, वैद्यवाक्यस्थो वैद्यवचनकर इत्यर्थः ॥ १९ ॥

प्रशस्तदेशसम्भूतमित्यादि। युक्तमात्रं युक्तप्रमाणं, मनस्कान्तं मनःप्रियं, दोषघ्नमिति दोषशब्देन वातादय उच्यन्ते, तद्दूषिता धातुमलाश्च, अथवा दोषहरं दुष्टिं हरति अदुष्टं न च कोपयति। अग्लानिकरं हर्षक्षयं न करोतीत्यर्थः। अविकारि विपर्य्यय इति विपर्य्यये व्यापत्तावपि अल्पविकारं निर्व्विकारं वा। समीक्ष्य दत्तमिति किमभिसमीक्ष्य ? आतुरोपक्रमोक्तान् परीक्ष्यानायुरादीन् देशान्तान्, कालावस्थाः पूर्व्वाह्णादिका वा ॥ २० ॥

स्निग्ध इत्यादि। स्निग्धः प्रीतियुक्तः, अजुगुप्सुरिति अनिन्दकः, एतेन कष्टव्याध्यवस्थास्वपि आतुरं न निन्दतीत्यर्थः। बलवानिति बलवत्त्वात् सर्व्वक्लेशसहः। युक्तो व्याधितरक्षणे इति युक्तो निपुणः, एतेन व्याधितस्य रक्षणे तत्पर इत्यर्थः। वैद्यवाक्यकृदिति वैद्यवाक्यमविकल्पं करोतीत्यर्थः। अश्रान्त इति खेदरहितः। पादैश्चतुर्भिः सम्पूर्णैरेभिः कर्म्म प्रसिध्यति इति केचित् अध्यायान्ते पठन्ति। एतच्च न पठनीयं, सर्व्वेषु निबन्धेष्वदर्शनात् ॥ २१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
युक्तसेनीयव्याख्यानाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

# पञ्चत्रिंशोऽध्यायः ।

अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

आतुरमुपक्रममाणेन भिषजायुरादावेव परीक्षितव्यम् *। सत्यप्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत ॥ २ ॥

तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वो-च्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीर-सत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानु-

यादृश आतुर उपक्रम्यो भवति तादृशोपक्रमणमधिकृत्य कृतोऽध्याय इत्यर्थः। उपक्रमणं चिकित्सा, सा तु दीर्घायुषि कर्त्तव्येत्याह—आतुरमित्यादि। सत्यप्यायुषीति सति विद्यमाने आयुषि जीविते व्याध्यादीनां परीक्षा कर्त्तव्या। तत्र व्याधिः साध्यासाध्यभेदेन, ऋतव इति अग्निवयोदेहबलानामृत्वायत्तत्वात्, अग्निरिति दीप्ताग्निमन्दाग्न्यादिभेदेन, वयः बाल्याद्यवस्था-भेदेन, देहबलं कृशस्थूलादिभेदेन, सत्त्वं गुणः, स चोत्तमादिभेदेन, सात्म्यं प्राणिना सेवितो यो मधुरादिरसो व्यायामादिर्वा सुखाय भवति तत् सात्म्यमुच्यते, एतदपि परीक्ष्यं, प्रकृतिर्वातादिका, भेषजम् औषधं परीक्ष्यमिति सम्बन्धः। दोषसात्म्यप्रकृत्याद्यपेक्षाणि बलवन्ति भेषजानि भवन्ति इति परीक्षा। देशो जाङ्गलानूपभेदेन। देशशब्दानन्तरं लुप्तादिशब्दनिर्देशादौषधकालादीन् परीक्षेत इति केचिद् वदन्ति ॥ १। २ ॥

तत्र दीर्घायुषो लक्षणानि निर्देष्टुमाह – तत्रेत्यादि। महच्छब्दः पाणिपादादिभिर्ललाटान्तैः सह प्रत्येकं सम्बध्यते। महत्त्वञ्च स्वैरङ्गुलैरुक्तप्रमाणात् किञ्चिदाधिक्यम्। दीर्घशब्दोऽङ्गुलि-प्रभृतिभिर्बाह्वन्तैः सह प्रत्येकं सम्बध्यते। दीर्घत्वमपि उक्तप्रमाणात् किञ्चिदाधिक्यं ज्ञेयम्। तत्र महत्त्वं विस्तारेण सह, दैर्घ्यं विस्तारं विना। अङ्गुलिपर्वाणि अङ्गुलिग्रन्थयः, प्रेक्षणानि लोचनानि। विस्तीर्णशब्दो भ्रूप्रभृतिभिरुरोऽन्तैः सह प्रत्येकं सम्बध्यते। विस्तीर्णं विपुलं, स्तनान्तरं स्तनयोर्मध्यं, उरो हृदयकण्ठान्तरं, ह्रस्वशब्दो जङ्घादिभिर्ग्रीवान्तैः सह प्रत्येकं सम्बध्यते, मेढ्रं लिङ्गं, गम्भीरशब्दोऽपि सत्त्वादिभिर्नाभ्यन्तैः सह प्रत्येकं सम्बध्यते। गम्भीरं गहनं, सत्त्वस्य गाम्भीर्यं प्राचुर्यमुच्यते, स्वरस्य गाम्भीर्यं सुस्निग्धानुद्धतत्वं, नाभेर्गम्भीरत्वं निम्नता। अनुच्चैर्बद्धस्तनमिति किञ्चिद्घनविड्स्तनं। उपचितमहारोमशकर्णमिति उपचितौ महान्तौ लोमशौ कर्णौ यस्य तं। पश्चान्मस्तिष्कमिति पश्चाद् ग्रीवाभागे मस्तिष्को रोमावर्त्तो यस्य तम्। पार्श्वमस्तिष्कमित्यन्ये पठन्ति। तत्र पार्श्वयोर्मस्तिष्कौ द्वौ आवर्त्तौ गण्डभागे यस्य इत्यर्थः। अपरे मस्तिष्कशब्देन मस्तकस्नेहं घृतिकामिति वदन्ति। स पश्चाद्भागे भवतीत्यर्थः। अन्ये तु

* आयुरेवादौ परीक्ष्येत इति वा पाठः।

लिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद् दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति॥ ३॥

भवन्ति चात्र।

गूढ़सन्धिशिरास्नायुः संहताङ्गः स्थिरेन्द्रियः।
उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते॥
गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते।
शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः॥ ४॥

उपचितमहारोमशकर्णपार्श्वन्यस्तमस्तिष्कमिति समुदितं पदं पठन्ति व्याख्यानयन्ति च— उपचिता मांसला महान्तो विस्तीर्णा रोमशा लोमवन्तः कर्णपार्श्वमस्तिष्का यस्य तम्। कर्णपार्श्वमस्तिष्कशब्देन कर्णस्य पार्श्वौ द्वौ तयोरेवोपरितनभागः मस्तिष्कं; कालमस्तकमित्यन्ये पठन्ति। स्नातानुलिप्तमित्यादि। मूर्द्धानुपूर्व्व्या मस्तकानुक्रमेण, एतेन प्रथमं मस्तकादिशरीरं शुष्यति पश्चात् हृदयमित्यर्थः। खल्वयमिति खलु निश्चयेन, अयं पुरुषः। दीर्घायुषं ज्ञात्वा किं कुर्य्यादित्याह—तमित्यादि। तं पुरुषं, एकान्तेन एकनिश्चयेन अदोलायमानहृदयेनेत्यर्थः, उपक्रमेत् चिकित्सेत्। अन्ये त्वाहुः—एकान्तेन सातत्येनेत्यर्थः। अल्पस्यायुषो लक्षणमतिदेशेन निर्द्दिशन्नाह—एभिरित्यादि अन्ये तलैतैर्लक्षणैरित्यादि पाठं पठन्ति। मध्यमायुषो लक्षणमाह— मिश्रैरित्यादि। मिश्रैरिति अल्पायुर्दीर्घायुर्लक्षणैरित्यर्थः॥ ३॥

प्रागनुक्तं दीर्घायुषो लक्षणमाह—गूढ़ेत्यादि। गूढ़ा गुप्ताः सन्धिशिरास्नायवो यस्येत्यर्थः। संहताङ्गो गूढ़ाङ्गः, स्थिरेन्द्रियोऽचलेन्द्रिय इत्यर्थः; अन्ये त्विन्द्रियशब्देन इन्द्रियाधिष्ठानं वदन्ति, तेन स्थिरेन्द्रियाधिष्ठान इत्यर्थः। एतेन विमुक्ताक्षित्वादयो भावास्तस्य न सन्तीत्युक्तम्। उत्तरोत्तरसुक्षेत्र इति उत्तरोत्तरं श्रेष्ठात् श्रेष्ठं सुक्षेत्रं शोभनशरीरं यस्य। तत्र पादाङ्गुल्यौ प्रथमं क्षेत्रं, जङ्घे च जानुनी चेति द्वितीयमित्यादि यावत् 'केशान्तञ्च शिरश्चैव दशमं क्षेत्रमुच्यते' इति। गर्भादित्यादि शनैरिति क्रमेण, समुपचीयते वृद्धिं याति। कैः कृत्वा इत्याह—शरीरज्ञानविज्ञानैः। तत्र शरीरवृद्धिः मेदःप्रभृतिका, ज्ञानविज्ञाने मानसौ धर्म्मौ, ज्ञानं तत्त्वावबोधः, विज्ञानं चित्रकादिकर्म्मकौशल्यं, समासतः संक्षेपतः। विज्ञानशब्दानन्तरं लुप्तादिशब्दनिर्देशादन्येऽपि शुभादयः। तदुक्तं—"व्यञ्जनादिशुभा क्रिया मेदो मेधादयो यशः। अल्पे वयसि यस्यैतद् न जीवेत् स कदाचन"॥ ४॥

मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ।
अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः ।
द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ ॥
नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः ।
यस्य स्युस्तस्य परममायुर्भवति सप्ततिः ॥ ५ ॥
जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे ।
ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् ॥
तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम् ।
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ॥
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम् ॥ ६ ॥

अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः । तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि, तदवयवाः प्रत्यङ्गानीति । तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । प्रदेशिन्यास्तु मध्यमानामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीनाः । चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले ।

प्रागुक्तस्य मध्यमायुषो लक्षणं निर्द्दिशन्नाह मध्यमेत्यादि । अक्षयोः कोष्ठकास्थ्नोः, लेखाः राजयः, अधस्ताद्धनुयोरित्यादि पाठं केचित् पठन्ति ॥ ५ ॥

प्रागुक्तस्य स्वल्पायुषो लक्षणं निर्द्देष्टुमाह—जघन्यस्येत्यादि । जघन्यस्य अल्पस्य, मेहनं मेढ्रम् । तथोरस्यवलीढानीति उरसि वक्षःस्थले, अवलीढानि आवर्त्तभेदः प्रतिलोमानुलोमत्वेन । तथोरस्यवलीढानीत्यत्र स्थाने केचिदन्यथा पाठं पठन्ति, स चाभावान्न लिखितः । विभ्रान्तं विशेषेण मोहयुक्तं यथा भवति । पञ्चविंशतिं वर्षाणीति शेषः ॥ ६ ॥

यदपेक्षया ललाटादीनां महत्त्वह्रस्वत्वाद्युक्तं तदेवाङ्गुलिमानेन निर्द्दिशन्नाह—अथेत्यादि । साराः सत्त्वादिकाः । कानि पुनस्तान्यङ्गानि प्रत्यङ्गानि चेत्याह—तत्रेत्यादि । अन्तराधिः शरीरमध्यभागः, कटिसन्धिमारभ्य पादाङ्गुलीर्यावत् सक्थि उच्यते । तदवयवा इति अन्तराधिबाहुद्वयसक्थिद्वयशिरसामवयवा इत्यर्थः । तत्र पादाङ्गुष्ठात् प्रभृति यावन्मस्तकमनुक्रमेण मानं दर्शयन्नाह—तत्रेत्यादि । तत्र तेषां प्रत्यङ्गानां मध्ये, पादाङ्गुष्ठः पादस्यैव प्रदेशिनी च द्व्यङ्गुलायते अङ्गुलद्वयदीर्घे, नखं विहायेति शेषः । प्रदेशिन्यास्त्विति प्रदेशिन्याः सकाशात् मध्यमाङ्गुली पञ्चमभागहीना, ततोऽपि मध्यमायाः सकाशादनामिका पञ्चमभागहीना, ततोऽपि अनामिकायाः कनिष्ठिका पञ्चमभागहीनेत्यर्थः । पञ्चमभागस्तु अर्द्धाङ्गुलमात्रः । चतुरङ्गुलायत इति प्रपदं पादाग्रं, पादतलं पादमध्यम्; अन्ये षट्पञ्चाङ्गुलविस्तृते प्रपदपादतले इति पठन्ति व्याख्यानयन्ति

पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्द्दशाङ्गुलायतः पादः। चतुर्द्दशाङ्गुल-परिणाहानि पादगुल्फजङ्घाजानुमध्यानि। अष्टादशाङ्गुला जङ्घा, जानूपरिष्टाच्च द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू॥ ७॥

द्व्यङ्गुलानि वृषणचिवुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिवन्धप्रकोष्ठ-स्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोड़शाङ्गुलः।

च—प्रपदं षड़ङ्गुलविस्तारं, पञ्चाङ्गुलविस्तारं पादतलमिति। पञ्चचतुरङ्गुलेति पञ्चाङ्गुलायता चतुरङ्गुलविस्तारा इत्यर्थः। चतुर्द्दशाङ्गुलपरिणाहानि पादमध्यगुल्फमध्यजङ्घामध्यजानुमध्यानीत्यर्थः, परिणाहो वर्त्तुलता चतुर्द्दशाङ्गुलमानरज्ज्वा वेष्टनमित्यर्थः। अन्ये त्रयोदशाङ्गुलपरिणाहानीति पठन्ति। अष्टेत्यादि। जङ्घाशब्देन गुल्फजानुमध्यमुच्यते, सा अष्टादशाङ्गुलप्रमाणा दैर्घ्येण। अन्ये चतुर्व्विंशत्यङ्गुला जङ्घेति पठन्ति। जानूपरिष्टाच्चेत्यादि उपरिष्टात् उपरितनविभागः, जानुनोऽधःसन्धिमारभ्य कटिसन्धिं यावत् द्वात्रिंशदङ्गुलो दैर्घ्येणेत्यर्थः, एवं पञ्चाशत्। जङ्घाजानूपरिष्टाच्चेत्येकत्र मिलिताः पञ्चदशाङ्गुला भवन्ति। जङ्घेत्यादि। जङ्घयोरायामेन दैर्घ्येण समावूरू अपि अष्टादशाङ्गुलावित्यर्थः, जानुन उपरि वङ्क्षणसन्धिपर्य्यन्तमूरुः॥ ७॥

द्व्यङ्गुलानीत्यादि। वृषणमण्डं, विस्तारे द्व्यङ्गुलम्; अधरोष्ठाधस्तात् चिवुकं, तदपि द्व्यङ्गुलम्। अर्द्धं वहिः अर्द्धं मांसवेष्टितमिति दशनाः द्व्यङ्गुलाः। नासापुटभाग इति द्वयोर्नासापुटयोर्भागो वहिर्भागः प्रत्येकमङ्गुलद्वयप्रमाणमित्यर्थः। नयनान्तराणि नयनयोर्मध्यम्। अत्रापि पाठान्तराणि सन्ति, तान्यभावान्न लिखितानि। चतुरङ्गुलानीत्यादि। चतुरङ्गुलं मेहनमुच्छ्रायहीनं चतुरङ्गुलं शशजातेः पुंसः, सोच्छ्रायन्तु षड़ङ्गुलम्। व्यात्तस्य मुखस्यान्तरमपि चतुरङ्गुलम्। नासावंशो दैर्घ्येण चतुरङ्गुलः। कर्णललाटग्रीवाणामुच्छ्रायो दीर्घत्वं चतुरङ्गुलम्। दृष्ट्यन्तराणीति दृष्टी अत्र कृष्णतारके मसूरदलप्रमाणे भवतः, तयोर्दृष्ट्योरन्तरं चतुरङ्गुलम्। द्वादशेत्यादि। भगो योनिः, तस्य विस्तारो रन्ध्रः, तस्य परिणाहः द्वादशाङ्गुलः; इदन्तु भगप्रमाणं हस्तिनीजातिस्त्रिया ज्ञेयम्, कामशास्त्रोक्तत्वात्। मेहननाभ्योरन्तरं द्वादशाङ्गुलं, तथा नाभिहृदययोर्ग्रीवाहृदययोः स्तनयोश्चान्तरमिति ज्ञेयम्। मुखायामो मुखदैर्घ्यं, एतच्च चिवुकादारभ्य ललाटान्तं यावद् द्वादशाङ्गुलम्। मणिवन्धप्रकोष्ठाभ्यां सह स्थौल्यशब्दः प्रत्येकं सम्वध्यते; तत्र मणिवन्धस्य पाणिमूलस्य परिणाहो द्वादशाङ्गुलः, प्रकोष्ठस्य परिणाहो द्वादशाङ्गुलः। प्रकोष्ठो मणिवन्धोपरिष्टाद् चतुरङ्गुलः, कला चैकेत्यर्थः। इन्द्रवस्तीत्यादि। इन्द्रवस्तेर्जङ्घामध्यस्य परिणाहः षोड़शाङ्गुलः। अंसपीठो वाहुशिरः, कूर्परो भुजमध्यं, तयोरन्तरायामो दैर्घ्यं षोड़शाङ्गुल इत्यर्थः। षोड़शाङ्गुल इत्यस्य स्थाने केचिद् विंशत्यङ्गुल इति पठन्ति। पूर्व्वं जङ्घामध्यं चतुर्द्दशाङ्गुलपरिणाहमिति यत्

चतुर्व्विंशत्यङ्गलो हस्तः। द्वात्रिंशदङ्गलपरिमाणौ भुजौ, द्वात्रिंशत्परिणाहावूरू। मणिबन्धकूर्परान्तरं षोड़शाङ्गलम्। तलं षट्चतुरङ्गलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गल्यौ पञ्चाङ्गले। सार्द्धचतुरङ्गले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गलौ कनिष्ठाङ्गुष्ठौ। चतुर्व्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः। कर्णावट्वन्तरं चतुर्द्दशाङ्गलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गलशतं पुरुषायाम इति ॥ ८ ॥

प्रोक्तं तत् गुल्फाश्रितं जङ्घामध्यं ज्ञेयं, इह तु जान्वाश्रितं, अतो न विरोधः। चतुर्व्विंशतीत्यादि। हस्तोऽत्र कूर्परादिमध्यमाङ्गल्यन्तपर्य्यन्तो ज्ञेयः। द्वात्रिंशदित्यादि। मणिबन्धः पाणिमूलं, कूर्परं कुहनिका. तयोरन्तरं मध्यं शोड़शाङ्गुलं, अष्टादशाङ्गुलमित्यपरे। तलमित्यादि। तलमत्र हस्ततलं षड़ङ्गुलायामं चतुरङ्गुलविस्तारम्। अङ्गुष्ठेति अङ्गुष्ठमूलस्य प्रदेशिन्याश्चान्तरं पञ्चाङ्गुलं, श्रवणस्य कर्णविवरस्य अपाङ्गस्य चान्तरं पञ्चाङ्गुलम्, मध्यमाङ्गुली पञ्चाङ्गुला चेत्यर्थः। अङ्गुष्ठमूलकनिष्ठिकेत्यादि पाठं केचित् पठन्ति। सार्द्धेत्यादि। सार्द्धचतुरङ्गुले प्रदेशिन्यनामिके अङ्गुल्यौ दैर्घ्येणेत्यर्थः। सार्द्धत्र्यङ्गुलाविति दैर्घ्येणेति शेषः। चतुर्व्विंशतीत्यादि चतुरङ्गुलिविस्तारं मुखं, विंशत्यङ्गुलिपरिणाहा ग्रीवेत्यर्थः। अन्ये चतुर्व्विंशत्यङ्गुलिविस्तारमुरः, चतुर्व्विंशत्यङ्गुलविस्तारा ग्रीवा इति पाठान्तरमत्र मन्यन्ते। त्रिभागेत्यादि। अङ्गुलस्य त्रिभागेन सहाङ्गुलं त्रिभागाङ्गुलं, तावन्मात्रतिर्य्यङ्मित एको नासापुटः। अन्ये तु त्रिभागहीनाङ्गुलिविस्तारा नासापुटमर्य्यादा इति पाठं मन्यन्ते; तेषां मते तरुणास्थिहीनस्यैकस्यैव नासारन्ध्रस्य प्रमाणं, न तु तरुणास्थिसहितयोर्द्वयोरपि नासापुटयोः। नयनेत्यादि। नयनत्रिभागो द्वियवप्रमाणः, तत्परिणाहा तारका कृष्णभाग इत्यर्थः। नवमेत्यादि। तारकानवमांशो दृष्टिमण्डलं शल्यतन्त्राभिहितप्रमाणं, शालाक्यतन्त्रप्रमाणन्तु मसूरदलमात्रमेव, अतो न दोषः। अथवा तारकानवमांशेनापि मसूरदलमात्रमेव भवति। तारकाशब्देनात्रापि कृष्णविभागः। केशान्तेत्यादि। केशान्तः शङ्खयोरुपरि, मस्तकशब्देनात्र मस्तकमध्यविभागो रोमावर्त्तान्वितः, तत्र केशान्तमस्तकयोरन्यतरमेकादशाङ्गुलम्। मस्तकादित्यादि। मस्तकात् मस्तकमध्यविभागात्। अवटुकेशान्त इति अवटुः कृकाटिका किरिड़िकेति लोके, तत्केशान्तस्तत्केशपर्य्यन्तः, तयोरन्तरं दशाङ्गुलम्। कर्णेत्यादि। कर्णद्वयस्य योऽवटुर्गर्त्तः, तयोरन्तरं चतुर्द्दशाङ्गुलं पश्चात्कर्णयोरित्यर्थः, न पुनः कर्णावट्वोरेवान्तरं तदन्तरस्याल्पप्रमाणत्वात्। पुरुषोर इत्यादि। श्रोणिरत्र ऊरुसन्धेरधस्तात् स्मरमन्दिरोपरितनविभागः, हृदयादूर्द्धं कण्ठस्याधः पुरुषोरो द्वादशाङ्गुलं, तत्प्रमाणा स्त्रीश्रोणिरित्यर्थः। अन्येषां मते चतुर्व्विंशत्यङ्गुलविस्तारमुर इति। तन्मते स्त्रीश्रोणि-

भवन्ति चात्र।

पञ्चविंशे ततो वर्षे पुमान् नारी तु षोड़शे।
समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्॥ ९॥
देहः स्वैरङ्गुलैरेष यथावदनुकीर्त्तितः॥
युक्तः प्रमाणेनानेन पुमान् वा यदि वाङ्गना।
दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति।
मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथावरम्॥ १०॥

अथ सारान् वक्ष्यामः। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धं दृढ़दन्तहन्वस्थिनखमस्थिभिः। स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरम्

रपि तत्प्रमाणेति। अष्टादशेत्यादि। अष्टादशाङ्गुलविस्तीर्णमुरः स्त्रिया इत्यर्थः, तत्प्रमाणा अष्टादशाङ्गुलविस्तीर्णा पुरुषस्य कटी। पूर्व्वोक्तप्रमाणमेकत्वेनाह—सविंशमित्यादि। विंशत्या अङ्गुलैः सह शतं सविंशमङ्गुलशतं, पुरुषायामः पादाग्रावस्थितस्योर्द्ध्व बाहोः पुरुषस्य दैर्घ्यम्॥ ८॥

तत्र स्त्रीश्रोणिपुरुषोरःप्रभृतीनां यौवन एव यथोक्तप्रमाणता भवति, न त्वल्पे वयसि इत्याह—भवन्ति चात्रेत्यादि। पञ्चविंश इत्यादि। एतेन पञ्चविंशे वर्षे पुरुषं समत्वागतवीर्य्यं जानीयात्, षोड़शे वर्षे नारीञ्च समत्वागतवीर्य्यां जानीयात्, तयोश्च समत्वागतवीर्य्ययोरेव यथोक्तं प्रमाणं भवति। अन्यत्राप्युक्तम्—'वर्षेऽथ पञ्चविंशे नरः समन्वितबलः षोड़शे नारी। अर्हति मानोन्मानं जीवितभागे चतुर्थे वा' इति। समत्वागतवीर्य्याविति समत्वं परिपूर्णत्वमागतं वीर्य्यं ययोस्तौ समत्वागतवीर्य्यौ, रसादिधातुपरिपूर्त्या वीर्य्यपूर्त्तिः, परिपूर्णसर्व्वधातुकावित्यर्थः। अन्ये त्वेवं पठन्ति समन्वागतवीर्य्याविति, सम्यगनु पश्चादागतं वीर्य्यमुपचयलक्षणं ययोरिति च व्याख्यानयन्ति॥ ९॥

कैः पुनरङ्गुलैरिदं मानमुक्तमित्याह—देह इत्यादि। एष देहः स्वैरङ्गुलैर्यथावदुपक्रममाणेन अनुकीर्त्तितः कथित इत्यर्थः। उक्तप्रमाणप्रयोजनं दर्शयन्नाह—युक्त इत्यादि। मध्यमैरिति मध्यमलक्षणैः। वित्तं धनं, अवरं हीनं भवति। तथा तेन प्रकारेण। कैरित्याह—हीनैर्हीनलक्षणैरित्यर्थः॥ १०॥

सारेणाप्यायुर्निर्दिशन्नाह—अथेत्यादि। स्मृतिः स्मरणं, प्रज्ञा कालत्रयात्मिका बुद्धिः, शौर्य्यं सर्व्वकर्म्मस्वविषादिता, कल्याणाभिनिवेशः कल्याणविषये तत्परम्। सत्त्वसारं विद्यादिति सत्त्वगुणबहुलं जानीयादित्यर्थः। स्निग्धेत्यादि। स्निग्धसंहतश्वेतशब्दास्त्रयः अस्थिदन्तनखैः सह प्रत्येकं सम्बध्यन्ते। संहतं घनम्। बहुलकामप्रजमिति बहुलकामं बहुप्रजमित्यर्थः। शुक्रेण कृत्वा सारं विद्यादिति सम्बन्धः। उपपन्नमिति युक्तमित्यर्थः। मज्ज्ञेति मज्जधातुना कृत्वा सारं विद्यादिति सम्बन्धः। महाशिर इति महाशब्दः शिरःस्कन्धाभ्यां सह सम्बध्यते।

आयासासहिष्णु मेदसा। अच्छिद्रगात्रं गूढ़ास्थिसन्धिं मांसोपचितञ्च मांसेन। स्निग्धताम्रनखनयनताल्वजिह्वौष्ठपाणिपादतलं रक्तेन। सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुःसौभाग्ययोरिति॥ ११॥

भवति चात्र।

विशेषतोऽङ्गप्रत्यङ्ग-प्रमाणादथ सारतः।
परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्म्मसु॥ १२॥

व्याधिविशेषास्तु प्रागभिहिताः; सर्व्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च। तत्रैतान् भूयस्त्रिधा परीक्षेत—किमसावौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति। तत्रौपसर्गिको नाम यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः। प्राक्केवलो यः प्रागेवोत्पन्नो

दृढशब्दो दन्तहन्वस्थिनखैः सह प्रत्येकं सम्बध्यते। अस्थिभिर्हेतुभिः कृत्वा सारं विद्यादिति सम्बन्धः। स्निग्धेत्यादि। स्निग्धशब्दो मूत्रस्वेदस्वरैः सह प्रत्येकं सम्बध्यते। बृहच्छरीरमिति प्रबलकायम्, आयासासहिष्णुमिति कष्टकारिकर्म्माक्षमम्। मेदसेति मेदसा कृत्वा सारं जानीयादिति सम्बन्धः। अच्छिद्रगात्रमिति अनिम्नशरीरमित्यर्थः। गूढ़ेत्यादि गूढ़ास्थिसन्धिः गुप्तहड्डसन्धिरित्यर्थः। मांसोपचितमिति मांसलशरीरमित्यर्थः। मांसेनेति मांसेन कृत्वा सारं विद्यादिति सम्बन्धः। स्निग्धेति स्निग्धताम्रशब्दौ पादतलान्तैर्नखादिभिः सह प्रत्येकं सम्बध्यते। रक्तेनेति रुधिरेण कृत्वा सारं विद्यादित्यर्थः। सुप्रसन्नेति सुप्रसन्नमृदुशब्दौ त्वग्रोमभ्यां सह प्रत्येकं सम्बध्येते। त्वक्सारं रससारम्। त्वक्शब्देन त्वक्स्थो रसोऽभिहितः। इत्येषामिति। एषां पूर्व्वोक्तसाराणां मध्ये पूर्व्वं पूर्व्वं प्रधानं यो यः पूर्व्वः स स प्रधानमित्यर्थः। कयोः प्रधानं श्रेष्ठमित्याह—आयुःसौभाग्ययोरिति। सौभाग्यं सर्व्वस्यापि प्रतिभासमानत्वम्॥ ११॥

अङ्गप्रत्यङ्गमानसारज्ञानफलमाह—भवति चात्रेत्यादि। विशेषत इति परस्परव्यावर्त्तनेन इत्यर्थः। एतेन विपरीतव्रणभूताद्रिच्छायाशरीरस्वभावविकृतिपर्य्युपद्रवासाध्यतादिभिश्चायुर्निश्रित्य विशेषतो महाललाटेत्यादिलक्षणभेदेन प्रवरावरमध्यमान्यायूंषि परीक्ष्य भिषक् सिध्यतीत्यर्थः। सुनिपुण इति सुष्ठु अतिशयेन निपुणः कुशलः। भिषक् सिध्यति कर्म्मस्विति वैद्यः कर्म्मसिद्धिं प्राप्नोतीत्यर्थः। केचित् सामान्यतोऽङ्गप्रत्यङ्गेत्यादि पठन्ति। तेषां मते सामान्यतः स्थूलवृत्त्या इत्यर्थः॥ १२॥

व्याधिपरीक्षां निर्द्दिशन्नाह—व्याधीत्यादि। व्याधिविशेषास्तु प्रागभिहिता इति वेदोत्पत्त्यध्याये व्याधिसमुद्देशीये च ये उक्ताः। प्रत्याख्येयाश्चेति चकारात् प्रत्याख्येयानामपि साध्यत्वं दर्शयति; यथा—'बल्यामभ्यन्तरायान्तु प्रत्याख्याय समाचरेत्' तथा मुखरोगेषु मांसतानालसप्रभृतिपूर्व्वकम् 'तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत्' इति। तत्रैतानित्यादि। किमसावौप-

व्याधिरपूर्व्वरूपोऽनुपद्रवश्च। अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः ॥ १३।१४ ॥

तत्र सोपद्रवमन्योन्याऽविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा। प्राक्केवलं यथास्वं प्रतिकुर्व्वीत। अन्यलक्षणे त्वादिव्याधौ प्रयतेत ॥ १५ ॥

भवति चात्र।

नास्ति रोगो विना दोषैर्यस्मात् तस्माद् विचक्षणः।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ १६ ॥

प्रागभिहिता ऋतवः ॥

शीते शीतप्रतीकारमुष्णे चोष्मनिवारणम्।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ १७ ॥

सर्गिक इति किमयमनुपद्रव इत्यर्थः। किमसौ प्राक्केवल इति किमयं पूर्व्वरूपेणोपद्रवेण च रहित इत्यर्थः। किमसौ अन्यलक्षण इति पूर्व्वरूपसंज्ञ इत्यर्थः। तेषां लक्षणमाह—तत्रेति। तत्र तेषां मध्ये। औपसर्गिकस्तावत् कथ्यते—जघन्यकालजातो व्याधिरिति पश्चात्कालजातो रोग इत्यर्थः। उपसृजति समीपे आत्मानं नयतीत्यर्थः, एतेन तेन सह मिलतीत्युक्तम्। स इति पश्चात्कालजातो रोग इत्यर्थः। तन्मूल एव इति प्रागुत्पन्नव्याधिहेतुक एवेत्यर्थः। पश्चादुत्पन्नो व्याधिरेव उपद्रवो भवति, न पुनर्मूलव्याधिना सह भूतानि लिङ्गान्युपद्रवसंज्ञानि, लिङ्गान्यपि यदि चिरकालानुबन्धीनि भवन्ति तदा तान्युपद्रवा भवन्ति। उपसृजतीति अत्रैकवचनादेव एकव्याधिरुपद्रव इति न मन्तव्यम्, अपरेऽपि ये मूलव्याधेरनन्तरमुत्पद्यन्ते व्याधयस्तेऽप्युपद्रवा एकवचनस्याप्राधान्यात्। उपद्रवसंज्ञ इति उपसर्ग इति एकैव संज्ञा इत्यर्थः। प्रागिति। अपूर्व्वरूपः पूर्व्वरूपरहितः, अनुपद्रवश्च इति उपद्रवरहितः। एतेन मशकतिलकालकन्यच्छव्यङ्गादयः प्राक्केवला व्याधयः कथ्यन्ते व्याधिस्वभावात् पूर्व्वरूपमन्तरेणापि प्रागेवोत्पद्यन्त इत्यर्थः। अन्येति यो भाविनं व्याधिं ख्यापयति स पूर्व्वरूपसंज्ञः ॥ १३।१४ ॥

व्याधीनां बहुत्वात् कः प्रथमं प्रतिकरणीयमित्याह—तत्रेत्यादि। सह उपद्रवेण वर्त्तते इति सोपद्रवो मूलव्याधिरित्यर्थः, तथा उपद्रव उत्तरकालजव्याधिः, अन्योन्याविरोधेन उभयाविरोधेनेत्यर्थः, बलवन्तमुपद्रवं वेति बलवन्तमुपद्रवं प्रथमं वोपक्रमेतान्योन्याविरोधेनेति सम्बन्धः। यथास्वमिति। यथास्वं यथात्मीयचिकित्सितम्। अन्यलक्षण इत्यादि। अन्यलक्षणे पुनः पूर्व्वरूपसंज्ञिते आदिव्याधौ प्रयतेत प्रयत्नं कुर्व्वीत, यथास्वमित्यनुवर्त्तते ॥ १५ ॥

व्याधीनामानन्त्याद् दोषभेदेनानुक्तस्य व्याधेर्दोषव्यपेक्षया चिकित्सार्थं तथा रोगकृतस्यापि रोगस्य दोषचिकित्सापि न कार्य्या व्याधिमात्रस्यापि तु हेतुव्याधिमात्रस्येति कथयन्नाह—नास्तीत्यादि। अनुक्तमपि व्याधिं दोषाणां लिङ्गैः कृत्वोपाचरेदिति सम्बन्धः ॥ १६ ॥

ऋतुपरीक्षां निर्दिशन्नाह—प्रागित्यादि। प्रागिति ऋतुचर्य्याध्याये। विसदृशकालजस्यात्यय-

अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया ।
क्रिया हीनातिरिक्ता वा साध्येष्वपि न सिध्यति ॥ १८ ॥
या तूदीर्णं शमयति नान्यं व्याधिं करोति च ।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥ १९ ॥

प्रागभिहितोऽग्निरन्नस्य पाचकः। स चतुर्व्विधो भवति, दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति। विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्व्वसाम्यादिति ॥ २० ॥

तत्र यो यथाकालमुपयुक्तमन्नं सम्यक् पचति स समः समैर्दोषैः। यः कदा-

कस्य व्याधेर्विध्यन्तरमुपदिशन्नाह—शीते इत्यादि। शीते शीतकाले, शीतप्रतीकारं शीत-विपर्य्ययं कृत्वा, उष्णमित्यर्थः; उष्णे उष्णकाले उष्मनिवारणं उष्णविपर्य्ययं कृत्वा, शीत-मित्यर्थः। कुर्य्यात् क्रियामिति क्रियाम् अग्निकर्म्मादिकम्, तदुक्तं तत्राप्यात्ययिके व्याधौ तत्प्रत्यनीकं विधिं कृत्वेति। प्राह्यामिति योग्याम्। काल एवावश्यं क्रिया करणीयेत्याह—क्रियाकालं न हापयेत्; न हापयेत् नोल्लङ्घयेत्, देशवैफल्यव्याध्यसाध्यत्वभयात् कालशक्तेरतिशय प्रभविष्णुत्वात्। तद् यथा—अप्राप्ते काले आमज्वरे 'भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्' इत्यादि। उष्णे चोष्मनिवारणमित्यत्र चकाराद् वृष्टौ वृष्टिप्रतीकारोऽपि समुच्चीयते। अन्ये तु वृष्टेरपि शीतत्वात् शीते शीतप्रतीकारमित्यनेनैव तद्ग्रहणमिति मन्यन्ते। कीदृशी क्रिया न सिध्य-तीत्याह—अप्राप्ते वेति। अप्राप्तकाले अनागते काले क्रिया कृता साध्येष्वपि न सिध्यतीति सम्बन्धः। अनागते हि काले क्रिया कृता न सिध्यति, तथाच प्रागुक्तं—भेषजं ह्यामदोषस्येत्यादि। प्राप्ते वा न कृता क्रियेति अतीते काले क्रिया कृतेत्यर्थः। सापि साध्येष्वपि व्याधिषु न सिध्यति। यथा—जीर्णज्वरे क्षीरमांसरसस्नेहसाध्ये लङ्घनमिति। क्रिया हीनातिरिक्ता वेति बहुदोषे हीना क्रिया अकिञ्चित्करी अल्पदोषे महती रोगिजीवितहरी रोगान्तकारिणी च। चकारान्मिथ्या क्रिया चानुक्ता समुच्चीयते। तद् यथा—शीतसाध्ये उष्णा, उष्णसाध्ये शीता चेति क्रिया ॥ १७।१८ ॥

क्रियाक्रिययोर्लक्षणमाह—येत्यादि। उदीर्णं उत्कटम्। न तु या व्याधिं हरत्यन्यमुदीरयेदिति न पुनः सा क्रिया कथ्यते, या एकं व्याधिं हरति अन्यं प्रकोपयतीत्यर्थः। यथा—कृशबृंहणे अग्नि-सादमेहातीसारादयः, यथा वा स्थौल्यापकर्षणे मेहे च यक्ष्मवातरोगादयः चिकित्सापतर्पणेन ॥ १९ ॥

अग्निपरीक्षां निर्द्दिशन्नाह प्रागिति। प्राक् व्रणप्रश्ने। पञ्चप्रकारो भ्राजकादिभेदेन। कथं पुनश्चतुर्व्विध इत्याह दोषेत्यादि। दोषाभिपन्नो दोषैः प्राप्त एक एवाग्निस्त्रिविधो भवति विषम इत्यादि। अनेन प्रकारेण। ननु दोषाभिपन्नत्वेनैव विक्रियामापन्न इति प्राप्यते, तत् किमर्थं विक्रियामापन्न इत्युक्तम्? नैष दोषः, वातादिकप्रकृतीनां पुरुषाणां वातादिदोषाभिपन्नत्वं भवति, न च विक्रिया काचिद् भवतीति ॥ २० ॥

तेषां चतुर्णामग्नीनां लक्षणमाह—तत्रेत्यादि। यथाकालमिति कालस्यानुल्लङ्घनेन। प्रथमं प्रकृतिः

चित् सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजन-प्रवाहणानि कृत्वा स विषमः। यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते ; स मुहुर्मुहुः प्रभूतमप्युपयुक्तमन्नमाशुतरं पचति, पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति। यस्तु स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्द्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः॥ २१॥

विषमो वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान्।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्॥ २२॥

तत्र समे परिरक्षणं कुर्व्वीत, विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत, तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च, एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिः, मन्दे कटुतिक्तकषायैर्वमनैश्च परिरक्षणमिति॥ २३॥

जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः।
सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते॥ २४॥

प्रकृतेरनन्तरं विकृतिरिति ज्ञापनार्थं प्रथमं व्यत्ययेन समाग्निलक्षणमुक्तम्—य इत्यादि। विषम इति विषमाग्नेर्वायुर्यदा न विक्षिपति तदाग्निः सम्यक् पचति, यदा पुनरितश्चेतश्च भागशो विक्षिप्तः स्यात् तदा सम्यक् न पचति। एतान्याध्मानादीनि कृत्वा यः पचति स विषम इति सम्बन्धः। कूजनं गुड़गुड़ायनशब्दः, प्रवाहणं कुन्थनम्। उपयुक्तं दत्तम्। तीक्ष्ण इति तीक्ष्णस्तु त्रिविधः—एकस्तीक्ष्णः, अन्य उपेक्षितोऽत्यग्निसंज्ञो भस्मकापरपर्य्यायः, अपर उपेक्षितस्तीक्ष्णतमो मुहुर्मुहुरित्यादिना कथितः। यश्च मुहुर्मुहुः पचति वह्निः, तत्र पाकान्ते गलादिशोषादीन् जनयतीति सम्बन्धः। सन्तापान् जनयतीत्यस्याग्रे केचिद् 'यथा वातेनानुरुध्यते पित्तं तदत्यर्थं द्रवोपेतम्' इत्यादि पाठं पठन्ति, स चाभावान्न लिखितः। यस्त्वित्यादि। प्रसेको लालास्रावः, गात्रसदनमङ्गग्लानिः॥ २१॥

एते विषमादयोऽग्नय उत्पन्ना किं कुर्व्वन्तीत्याह—विषम इत्यादि॥ २२॥

समाग्न्यादीनां चिकित्सितमाह—तत्रेति। परिरक्षणमिति यथा सममेवाग्निस्तिष्ठतीत्यर्थः। एवमेवेति मधुरस्निग्धशीतैर्विरेचनैश्चेत्यर्थः॥ २३॥

अग्नेरिदानीं प्रत्यक्षानुपलभ्यस्याप्यस्तित्वमाह—जाठर इति। जठरमुदरं तत्र भवो जाठरः। भगवानिति माहात्म्यवानित्यर्थः। ईश्वर इति अष्टमहैश्वर्य्यगुणयुक्तः, अतएव अणिमादिगुणयुक्त इति। सूक्ष्मत्वान्न दृश्यते कार्य्यैरुपलभ्यते। ननु यद्यसौ ईश्वरस्तत् कथमस्य मान्द्यादयो दोषा भवन्ति? सत्यम्, पुरुषस्य प्राक्तनकर्म्मणा मान्द्यादयः क्रियन्ते, अथवाग्निः पित्ताश्रितः, ततः पित्तविघातादग्निमान्द्यादयो दोषाः, न स्वत इति। सौक्ष्म्यादणिमादिगुणयुक्तत्वात्, रसान्

प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः।
ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः * ॥ २५ ॥

वयस्तु त्रिविधं, वाल्यं मध्यं वृद्धमिति। तत्रोनषोड़शवर्षीया वालास्तेऽपि त्रिविधाः—क्षीरपाः, क्षीरान्नादाः, अन्नादा इति। तेषु संवत्सरपराः क्षीरपाः, द्विसंवत्सरपराः क्षीरान्नादाः, परतोऽन्नादा इति। षोड़शसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति। तत्र आ विंशतेर्वृद्धिरा त्रिंशतो यौवनमा चत्वारिंशतः सर्व्वधात्विन्द्रियवलवीर्य्यसम्पूर्णता। अत ऊर्द्ध्वमीषत्परिहानिर्यावत् सप्ततिरिति। सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियवलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते।

मधुरादीन् आददान परिपक्तुं गृह्णन्, विवेक्तुं न च शक्यते इति सौक्ष्म्यान्नोपलभ्यते इत्यर्थः। अपि तु अन्नपाकलक्षणेन कार्य्येणानुमीयतेऽग्निरिति ॥ २४ ॥

यथा वाह्यस्याग्नेर्वायुः सहायो भवति तद्वज्जाठरस्यापि वायुसहायत्वं दर्शयन्नाह—प्राणेत्यादि। सर्व्वतः सर्व्वासु दिक्षु; अन्ये सर्व्वत इति सर्व्वेभ्यो वायुभ्य इत्यर्थं वदन्ति। तेन सर्व्वेभ्योऽपि वायुभ्यः सकाशात् त्रय एव वाता धमनपालनसमर्था न व्यानोदानावित्युक्तं भवति। ध्मायते प्राणापानाभ्याम्, पाल्यते समानेन। स्वे स्वे स्थाने व्यवस्थितैः स्वस्वमार्गे स्वस्याः स्वस्याः क्रियायाः कारकैरविकृतैरित्यर्थः। स्वे स्वे स्थाने व्यवस्थितैरित्यस्याग्रे वह्नेः प्राधान्यख्यापनाय केचित् युक्तेऽग्नावित्यादि पाठं पठन्ति, स चाभावान्न लिखितः ॥ २५ ॥

इदानीं वयःपरीक्षां निर्दिशन्नाह—वयस्त्वित्यादि। तत्रोनषोड़शवर्षीया वाला इति पञ्चदशवर्षीया इत्यर्थः। क्षीरान्नादा इति दुग्धान्नभोजिन इत्यर्थः। अन्नादा इति केवलान्नभक्षका इति। क्षीरपाः स्तननिःसृतामृतक्षीरभक्षका इत्यर्थः। तेषामवधिमाह—तेष्वित्यादि। संवत्सरपरा इति परशब्देनात्रावधिरुक्तः। परतोऽन्नादा इति तृतीयादिसंवत्सरेष्वित्यर्थः। अत्रापि केचित् पाठान्तरं मन्यन्ते, तच्चाभावान्न लिखितम्। मध्यमवयसोऽवधिं भेदांश्च कथयन्नाह—षोड़शेत्यादि। अन्तरे अन्तराले मध्यं वयः कथ्यत इति शेषः। विकल्पो भेद इत्यर्थः। वृद्धिर्वर्द्धनम्, यौवनमिति वृद्धिसम्पूर्णतयोर्मिश्रीभावः, यूनो विकारो यौवनमित्येके, सम्पूर्णतेति वृद्धानामवयवानामाप्यायनं सम्पूर्णता। आ विंशतेरिति विंशतिवर्षाणि मर्य्यादीकृत्य इत्यर्थः। यावत् सप्ततिरित्यत्र स्थाने यावत् षष्टिरिति केचित् पठन्ति। सप्ततेरनन्तरं यादृशो भवति यन्नाम्ना च कथ्यते, तदाह—सप्ततेरित्यादि। वीर्य्यं रेतः, वली त्वक्सङ्कोचः, पलितं केशशुक्लत्वं, खालित्यं खल्वाटत्वं चान्दिलत्वमिति

* स्वां स्वां गतिमवस्थितैरिति वा पाठः।

तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्ति, ऋते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्व्वीत ॥ २६ ॥

भवन्ति चात्र ।

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु ।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत् ॥ २७ ॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्ज्जयेत् ।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः ॥ २८ ॥

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः ।

कर्शयेद् बृंहयेचापि सदा स्थूलकृशौ नरौ ।
रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक् ॥ २९ ॥

लोके । अभिवृष्टं मेघवृष्ट्या सिक्तमित्यर्थः । अवसीदन्तं पतन्तम् । वयोज्ञानस्य भेषजमात्राप्रयोगः फलमिति दर्शयन्नाह—तत्रेत्यादि । तत्र वयोज्ञाने, उत्तरोत्तरासु वयोऽवस्थास्विति बाल्ययौवनादिकासु । उत्तरोत्तरा इति उत्कृष्टोत्कृष्टा, भेषजमात्राविशेषा इति औषधप्रमाणविशेषाः, ऋते च परिहाणेरिति सप्ततेरूर्द्ध्वं वर्ज्जयित्वेत्यर्थः । तत्राद्यापेक्षया प्रतिकुर्व्वीतेति तत्र परिहाणौ आद्यापेक्षया बाल्यापेक्षया षोड़शवर्षवद् भेषजमात्रा इत्यर्थः । षोड़शवर्षवद्भेषजमात्रा च तन्त्रान्तरोक्ता ग्राह्या । तद् यथा—"प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका । अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः । एकैकां वर्द्धयेत्तावत् यावत् संवत्सरो भवेत् । तदूर्द्ध्वं माषवृद्धिः स्यात् यावत् षोड़शकाब्दिकः । षोड़शाब्दात्ततस्तूर्द्ध्वं यावदासप्ततेरिति । एवमेव विभागोऽयं तदूर्द्ध्वं बालवत् क्रिया ॥" इति । स्वतन्त्रेऽपि सांवत्सरिकाष्टद्विरष्टवर्षाणामित्यादि । अन्ये तत्राद्यापेक्षया इत्यत्र अन्यापेक्षयेति पठन्ति व्याख्यानयन्ति च—परिहाणेरन्या वृद्धिरुच्यते, तदपेक्षयेत्यर्थः, एतेन षोड़षवर्षवन्मात्रा प्रयोक्तव्येत्यर्थः ॥ २६ ॥

दोषचयादावपि वयोज्ञानफलं दर्शयन्नाह—भवन्ति चात्र, बाल इत्यादि । भूयिष्ठं बहुतरम् । एतेन यथा बाले श्लेष्मा न तथा पित्तवाताविन्त्यर्थः । एवं शेषयोरपि । वयोज्ञानफलं क्रियाविशेषेऽपि भवतीत्याह—अग्नीत्यादि । मृद्वीं कुर्य्यात् क्रियामिति अजाशकृदादिमृदुद्रव्यसंश्रयोऽग्निरपि मृदुः, आश्रयविशेषादप्येषां मार्द्दवादि भवति । तदुक्तं—'स्नेहदग्धेऽधिका रुजो भवन्ति' इति ; अथवा मृद्वीमिति छेद्यभेद्यादिकां प्रतिनियतभेषजेन, तदुक्तं—"बालवृद्धासहक्षीण भीरूणां योषितामपि । मर्म्मोपरि च जातेषु रोगेषूक्तेषु दारुणम्" इति । उक्तेषु दारुणमिति मिश्रकोक्तेषु । तद् यथा—कपोतकङ्कगृध्राणां पुरीषाणि च दारुणम् । क्षारोऽपि आवापप्रतिवापहीनो मृदुः, एवं विरेकोऽपि चतुरङ्गुलादिमृदुद्रव्याश्रयो मृदुः । शनैर्मन्दमित्यर्थः ॥ २७।२८ ॥

देहपरीक्षां निर्द्दिशन्नाह—देह इत्यादि । प्रागुपदिष्ट इति दोषधातुमलक्षयवृद्धिविज्ञानीयेऽपि । करणीयतां निर्द्दिशन्नाह—कर्शयेदित्यादि ॥ २९ ॥

बलमभिहितगुणं, दौर्ब्बल्यन्तु स्वभावदोषजरादिभिरवेक्षितव्यम्। यस्माद् बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद् बलमेव प्रधानमधिकरणानाम्॥ ३०॥

केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः।
तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत्॥ ३१॥

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम् *।

सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना।
राजसः स्तभ्यमानोऽन्यैः सहते नव तामसः॥ ३२॥

प्रकृतिं भेषजञ्चोपरिष्टाद् वक्ष्यामः। सात्म्यानि तु देशकालजात्यृतुरोग-व्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति॥ ३३॥

बलपरीक्षां निर्द्दिशन्नाह—बलमित्यादि। अभिहितगुणं कथितगुणम्, ओजः सोमात्मकमित्यादिना। अनुपदिष्टमपि चिकित्सोपयोगि दौर्ब्बल्यं कारणभेदेन निर्द्दिशन्नाह—दौर्ब्बल्यमित्यादि। स्वभावात् मातृपितृशोणितशुक्रस्वभावादित्यर्थः, दोषैर्वातादिभिः, जरया वार्द्धक्येनेत्यर्थः, अवेक्षितव्यं स्वभावादिभिर्ज्ञातव्यमित्यर्थः। अन्ये तु अवेक्षितव्यमित्यत्र स्थाने जरापेक्षितं भवतीति पठन्ति व्याख्यानयन्ति च, यथा—क्षीरपात् क्षीरान्नादः क्षीरान्नादादन्नादः कृश इति। बलप्राधान्यं दर्शयन्नाह—यस्मादित्यादि। प्रवृत्तिरनुष्ठानं करणमित्यर्थः। अन्ये प्रतिपत्तिरिति पठन्ति। तत्रापि स एवार्थः। अधिकरणानां क्रियाधाराणाम्॥ ३०॥

तत्र बलयोरुपचयशक्तिलक्षणयोर्व्यभिचारमाह—केचिदित्यादि। स्थिरत्वमिति स्थैर्य्यलक्षणं यद् बलं तद् व्यायामैः कृत्वा प्रतर्कयेत् विचारयेदित्यर्थः। सत्त्वं दर्शयन्नाह—सत्त्वमित्यादि। सत्त्वं मनोबलं, गुणविशेषो रजस्तमसोर्विपक्षः। सत्त्वे सति पीड़ादिसहिष्णुत्वलक्षणमनोबलं भवति। व्यसनं दुःखं, सुखस्य हेतुः अभ्युदयः, तयोः क्रियास्थानानि येषु स्थानेषु व्यसनाभ्युदयक्रिये भवतः, तानि व्यसनाभ्युदयक्रियास्थानानि, तेषु। अविक्लवकरमग्लानिकरमहर्षकरञ्च। सत्त्वे उत्तमं मनोबलं, रजसि मध्यमं मनोबलं, तमसि मनोदौर्ब्बल्यमेवेति। त्रयमपि श्लोकेन निर्द्दिशन्नाह—सत्त्ववानित्यादि। सर्व्वमिति काये पीड़ादिकं दुःखमित्यर्थः। संस्तभ्यात्मानमिति आत्मानं मनः, संस्तभ्य दृढीकृत्य। केन मनः संस्तभ्येत्याह—आत्मना बुद्ध्या इत्यर्थः। स्तभ्यमानोऽन्यैरिति अन्यैः पुरुषैः दृढीक्रियमाणः। नैव तामस इति तामसस्तमोगुणबहुलः, अन्यैरप्यवष्टभ्यमानो नैव सहते इत्यर्थः॥ ३१।३२॥

प्रकृतेर्भेषजस्य क्व पुनः परीक्षेत्याह—प्रकृतिमित्यादि। प्रकृतिं शारीरे, भेषजं भूमिप्रविभागीये, आतुरोपक्रमणीयाध्यायादनन्तरं सूत्रस्थानसमाप्तिं यावत् भेषजपरीक्षैवेत्येके। सात्म्यपरीक्षां

* अवैक्लव्यकरमिति तथा विकल्पकरमिति च पाठान्तरम्।

यो रसः कल्पते यस्य सुखायव निषेवितः।
व्यायामजातमन्यद् वा तत् सात्म्यमिति निर्द्दिशेत्॥ ३४॥

देशस्त्वानूपो जाङ्गलः साधारण इति। तत्र वहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो वहुमहापर्व्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायः कफवातरोगभूयिष्ठश्चानूपः। आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्राय उष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायो वातपित्तरोगभूयिष्ठश्च जाङ्गलः। उभयदेशलक्षणः साधारण इति॥ ३५॥

निर्द्दिशन्नाह—सात्म्यानीत्यादि। सात्म्यं आत्मसुखं यत् करोति तदुच्यते। तत्र देशसात्म्यं यथा—देशो हि द्विविधः भूमिरातुरशरीरञ्च। तत्रातुरशरीरसात्म्यं द्विविधं—समुदायस्यैकम्, अन्यदवयवस्य। तत्र समुदायस्य यथा—मधुरो रसः सर्व्वधातुवर्द्धनः, अवयवसात्म्यं यथा—चक्षुष्यकेश्यकण्ठ्यादिद्रव्यम्। भूमिसात्म्यमपि समुदायैकदेशभेदेन द्विविधम्। तत्र समुदायस्य यथा—जाङ्गलदेशे यौ आहाराचारौ अनूपे तौ विपरीतौ। देशावयवानामपि यथा—वाह्लीकपह्लवचीनादीनां माषगोधूममाध्वीकादिभिः सात्म्यम्। जातिसात्म्यं यथा—मनुष्यजातेः सात्म्यं शाल्यादयः, मृगपक्षिजातीनाञ्च तृणपतङ्गादीनि। ऋतुसात्म्यं यथा—ऋत्वभिहितमन्नपानादि। रोगसात्म्यं यथा—गुल्मिनां क्षीरं, उदावर्त्तिनां घृतं, प्रमेहिणां क्षौद्रमित्यादि। व्यायामस्त्रिविधः कायवाङ्मनोभेदात्। उदकग्रहणाद् द्रवद्रव्याणाम्, दिवास्वप्नग्रहणाज्जागरणादीनां ग्रहणम्। दिवास्वप्नरसप्रभृतीनीति केचिद् रसोदकशब्दं पठन्ति। तेषां मते रसोदकग्रहणात् रसनेन्द्रियग्राह्यं दुग्धदधिघृतसलिलाद्यन्नपानं गृह्यते। प्रकृतिविरुद्धानि स्वभावेन विरुद्धानीत्यर्थः। अन्ये तु प्रकृतिः स्वभावतो भेदेन भिन्नेत्याचक्षते। तदेव सात्म्यं विस्तरोक्तमाहाराचारभेदेन द्विभेदं सङ्क्षिप्य श्लोकेन दर्शयन्नाह—यो रस इत्यादि। यो रस सुखकारणमेव सेवितः सन्नित्यर्थः। अन्ये सुखायैवातिसेवित इति पठन्ति। व्यायामजातमिति व्यायामसमूहः; अन्यद् वा इति क्लेशजात्यादि॥ ३३।३४॥

देशपरीक्षां निर्द्दिशन्नाह—देश इत्यादि। तेषां लक्षणमाह—तत्रेत्यादि। वहुशब्द उदकादिभिर्वर्षान्तैः सह प्रत्येकं सम्बध्यते। गहन इति एतैः कृत्वा गहनीभूत इत्यर्थः। आकाशसम इति निरावरणत्वान्निम्नोन्नतत्वरहितत्वेन समभूमिभाग इत्यर्थः। प्रविरलाल्पकण्टकिवृक्षप्राय इति प्रविरला अल्पाः कण्टकिनो वृक्षाः प्रायेण यत्र देशे स तथा। अल्पवर्षप्रस्रवणोदपानोदकप्राय इति अल्पं वर्षायाः प्रस्रवणानां निर्झराणामुदपानानाञ्च कूपानां उदकं प्रायेण यत्र स तथा। उभयेति॥ ३५॥

भवन्ति चात्र।

समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः।
दोषाणां समता जन्तोस्तस्मात् साधारणो मतः॥ ३६॥
न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः।
स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः॥ ३७॥
उचिते वर्त्तमानस्य नास्ति देशकृतं भयम्।
आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति॥ ३८॥
देशप्रकृतिसात्म्यर्त्तु-विपरीतोऽचिरोत्थितः।
सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा॥
केवलः समदेहाग्नेः सुखसाध्यतमो गदः।
अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः॥ ३९॥
क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्।
पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥ ४०॥

त्रिविधदेशपरिज्ञाने दोषचयादिफलं दर्शयन्नाह—समा इत्यादि। तुल्यगुणदेशजातस्य रोगस्य विपरीतगुणे देशे सुचिकित्स्यतां दर्शयन्नाह—न तथेत्यादि। जलजा इति आनूपदेशजाताः श्लीपदादयः। स्थलाहृता इति जाङ्गलदेशं नीता इत्यर्थः। उक्तव्याधिकारणं दोषचयादेर्विसदृशदेशाश्रयं प्रथमं दर्शयन्नाह—स्वदेश इत्यादि। यथा—आनूपे देशे सञ्चितः कफो जाङ्गलदेशे कुपितः। उचिते इति न्याय्ये इत्यर्थः। यदि पुनराहारादावनुचिते वर्त्तते तदा भवत्येव भयं, यथानूपदेशे सञ्चिते कफे जाङ्गलदेशेऽपि दिवास्वप्नादि कुर्व्वतः पुरुषस्य भयं भवत्येव। आहारस्वप्नेत्यादि। तद्देशस्य गुणे सति जाङ्गलदेशस्य रौक्ष्यौष्ण्यादौ गुणे सत्यप्युचिते वर्त्तेत। एतदुक्तं भवति—यद्यपि आहारस्वप्नचेष्टादयस्तद्देशगुणा अपि सन्ति, तथापि उचिते वर्त्तेत कफविपरीतगुणैर्वर्त्तेत इत्यर्थः॥ ३६—३८॥

सुखसाध्यादीनां लक्षणमाह—देशेत्यादि। देशविपरीतो यथा—जाङ्गलदेशे कफरोगोत्पत्तिः, प्रकृतिविपरीतो यथा—पित्तप्रकृतेः कफरोगोत्पत्तिः, सात्म्यविपरीतो यथा—कटुसात्म्यस्य कफरोगोत्पत्तिः, ऋतुविपर्य्ययो यथा—शरदि वातिकस्य हेमन्ते पैत्तिकस्य ग्रीष्मे श्लैष्मिकस्य व्याधेः प्रादुर्भाव इति। अचिरोत्थितो नव इत्यर्थः। अन्ये तु नञानिर्द्दिष्टत्वात् रक्तगुल्मादिः पुराणोऽपि साध्य इति। सम्पत्तौ इति परिपूर्णत्वे। बलसत्त्वायुषां तथेत्यत्रापि सम्पत्ताविति सम्बध्यते। केवल एकदोषजनितो निरुपद्रवः। समदेहाग्नेः समकायाग्नेः॥ ३९॥

क्रियाफलं यदा न दृश्यते तदा अन्या क्रिया कर्त्तव्या; सापि विश्रम्य कालान्तरिता सती कर्त्तव्येति दर्शयन्नाह—क्रियाया इत्यादि। पञ्चरात्रान्तरिता षड्रात्रान्तरिता वा अन्या क्रिया प्रयोक्तव्या।

गुणालाभेऽपि सपदि यदि सैव क्रिया हिता।
कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि ॥ ४१ ॥
य एवमेनं विधिमेकरूपं विभर्त्ति कालादिवशेन धीमान्।
स मृत्युपाशान् जगतो गदौघांश्छिनत्ति भैषज्यपरश्वधेन ॥ ४२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने आतुरोपक्रमणीयो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

सङ्करो युगपद्द्वयोः प्रयोगः। यस्यापि फलं न दृश्यते सापि सहसावं प्रकर्त्तव्येत्याह—गुणालाभ इत्यादि। सपदि शीघ्रं यदा पुनः कृच्छ्रसाध्यो व्याधिस्तदा गुणस्य क्रियाफलस्यालाभेऽपि हिता या क्रिया सैव सपदि शीघ्रं प्रयोक्तव्या। अस्मिन् श्लोके पाठान्तरमस्ति तच्चाभावान्न लिखितम् ॥ ४०।४१ ॥

अत्र तु स्तुत्यर्थं श्लोकमाह—य एवमित्यादि। एवम् अनेन प्रकारेण, एनं विधिं पूर्व्वोक्तं विधानम्, एकरूपं विभर्त्ति अप्रकल्पं धारयति। कालादिवशेन कालादिसामर्थ्येनेत्यर्थः, गदौघान् विकारसमूहान्, भैषज्यपरश्वधेनेति औषधकुठारेणेत्यर्थः। केचिदमुं श्लोकं न पठन्ति। एके आचार्य्या विपरीताविपरीतव्रणाद्यवारणीयपर्य्यन्तमरिष्टाध्यायान् षट् वदन्ति। अपरे तु आतुरोपक्रमणीयमरिष्टमिति वदन्ति। वृद्धाश्चात्रैवमुपदिशन्ति अरिष्टाध्याया विघ्नभयाद् गृहाद् वहिः पाठनीया देवालयादिषु ॥ ४२ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे आतुरोपक्रमणीयव्याख्यानाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः ।

**अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

**श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहता-मनूपरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधग्रहणाय परीक्षेत। तस्यां जातमपि क्रिमिविषशस्त्रा-तपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्याश्चौ-षधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः ॥ २ ॥**

भूमेः प्रकृष्टो भागो भूमिप्रविभागः, भूमिप्रविभागार्थोऽध्यायो भूमिप्रविभागीयः। पूर्वाध्याये भूमिपरीक्षा भूतकार्य्यैः शीतोष्णवर्षादिभिस्तथा पर्व्वतवृक्षादिभिः कृता, इह त्वध्याये भूतगुणैरेव परीक्षा कर्त्तव्येति। केचिदत्रान्तराले मिश्रकाध्यायं पठन्ति, तन्न, पूर्व्वाचार्य्यैरेवापठितत्वात्। स भूमिविभागो द्विविधः सामान्यो विशिष्टश्च। तत्र प्रथमं सामान्यमेव भूमिविभागमाह—श्वभ्र-त्यादि। अनुपहतामिति श्वभ्रादिभिः सिकतान्तैः सह प्रत्येकं सम्बध्यते। श्वभ्रशर्कराश्मभिर्विषमो निम्नोन्नतः, तेनानुपहतामिति सम्बन्धः। श्वभ्रं विलं, शर्करा पक्वभाण्डसूक्ष्मखण्डं शर्करेति लोके, अश्मा पाषाणः। वल्मीकेति। ननु वल्मीकमूर्द्धन्येव श्वेतकपोती गृह्यते, तत् कथं वल्मीकजातौषधिनिषेधः? सत्यम्, आशीविषविषैस्तस्या दिव्यौषधेर्वीर्य्यं न हन्यते, अथवा तत्रैव सा विशेषेण वीर्य्यवती भवतीत्यदोषः। श्मशानं मृतमर्त्त्यदाहस्थानं, आघातनम् वध-स्थानं, सिकता वालुका, अनुपहताम् अनुपद्रुताम्, अनूषराम् ऊषरावर्ज्जिताम्, अभङ्गुरां राजि-रहिताम्। अदूरोदकत्वेन साधारणत्वमुक्तम्। स्निग्धां चिक्कणाम्, प्ररोहवतीं बीजाङ्कुरजननीम्, मृद्वीं कोमलाम्, स्थिरां वाततोयादिभिरचलितमृत्तिकाम्, समाम् अनिम्नोन्नताम्, गौरीं सुवर्ण-वर्णाम्, औषधग्रहणायेति औषधग्रहणार्थम्। न केवलं भूमिगुणैरेव भेषजानि विभजनीयानि किन्तर्हि सदोषगुणैरपीति दर्शयन्नाह—तस्यां जातमित्यादि। क्रिम्यादिभिः सम्बाधमार्गान्तैः सह प्रत्येकमनुपहतशब्दः सम्बध्यते। सम्बाधः सङ्कटः, एकरसम् उत्कृष्टरसम्, पृथ्ववगाढ-मूलञ्चेति पृथु पृथुवल्कलं, अवगाढमूलं भूम्यन्तःस्थितं मूलं यस्य तत् तथा, चकारादनुपहतं प्रशस्तमूलत्वञ्च समुच्चीयते। उदीच्यामिति उत्तरस्यां दिशि। एतेनोत्तराभिमुखो गृह्णीयादित्यर्थः, विशेषो भेदः ॥ १। २ ॥

विशेषतस्तु—तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा। स्निग्धा शीतलासन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्ला अम्बुगुणभूयिष्ठा। नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहा अग्निगुणभूयिष्ठा। रूक्षा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्षप्राया अनिलगुणभूयिष्ठा। मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा ॥ ३ ॥

अत्र केचिदाहुराचार्य्याः—प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासङ्ख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति। तत् तु न सम्यक्; कस्मात्? सौम्याग्नेयत्वाज्जगतः। सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेषु; एवमव्यापन्नगुणानि भवन्ति। सौम्यान्यौषधानि सौम्येषु ऋतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते। एतेन शेषं व्याख्यातम् ॥ ४ ॥

तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीत, अग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि। उभयगुणभूयिष्ठायामुभयतोभागानि। आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति सर्व्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः। (सर्व्वाण्येव सक्षीराणि वीर्य्यवन्ति।) तेषामसम्पत्ताव(न)तिक्रान्तवत्सराण्याददीतेति ॥ ५ ॥

सामान्यभूमेर्गुणं प्रदर्श्य विशिष्टं प्रतिभूतगुणं निर्द्दिशन्नाह विशेषतस्त्वित्यादि। स्वगुणभूयिष्ठेति पृथ्वीगुणभूयिष्ठेत्यर्थः। तनुवृक्षा ह्रस्ववृक्षेत्यर्थः। मृद्वीति। अस्य पाञ्चभौतिकविशेषगुणकथनस्यायमभिप्रायः—पृथिव्याद्युत्कटत्वेन द्रव्याणां स्वस्यां भूमौ जातं ग्राह्यम्, एवं बलवत्तराणि औषधानि भवन्ति। वमनादिद्रव्याणि कीदृशायां भूमौ ग्रहीतव्यानीत्याह—तत्रेत्यादि। संशमनानीति यद् द्रव्यं न वामयति न विरेचयति व्याधिना सहैकीभूय तत्स्थमेव व्याधिमुपशमयति तत् संशमनमुच्यते। सर्व्वाणीत्यादि। यानि सर्व्वाण्येवाभिनवानि बलवत्तराणीत्यत्रापि सम्बध्यते। अत्र परिणतिकालानन्तरत्वमभिप्रेतं न पुनर्ज्जन्मनवत्वम्। एतस्यैवापवादसूत्रं दर्शयन्नाह अन्यत्रेत्यादि। अत्रान्तरे वृद्धैः पठितः पाठः सर्व्वाणीत्यादि। तत्र सक्षीराणि सरसानीत्यर्थः। मध्वादीनि यथोक्तानि यदा न प्राप्यन्ते तदा किं कर्त्तव्यमित्याह—तेषामित्यादि। तेषां मधुघृतादीनाम् असम्पत्तौ अत्यन्तपुराणानामप्राप्तौ ॥ ३—५ ॥

भवन्ति चात्र ।

गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ।
मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ ६ ॥
सर्व्वावयवसाध्येषु पलाशलवणादिषु ।
व्यवस्थितो न कालोऽस्ति तत्र सर्व्वो विधीयते ॥ ७ ॥
गन्धवर्णरसोपेता षड् विधा भूमिरिष्यते ।
तस्माद् भूमिस्वभावेन वीजिनः षड् रसायुताः ॥ ८ ॥
अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः ।
रसः स एव चाव्यक्तो व्यक्तो भूमिरसाद् भवेत् ॥ ९ ॥
सर्व्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता ।
द्रव्याणि यत्र तत्रैव स्वगुणानि विशेषतः ॥ १० ॥

कुतः पुनर्भेषजानि ज्ञातव्यानीत्याह—गोपाला इत्यादि । गोपाला गोमहिषाजादिपालकाः प्रोच्यन्ते, तापसास्तपस्विनो जटाधारिप्रभृतयः, व्याधा वागुरिकादयः, वनचारिणो म्लेच्छादयः । तत्र केचिदाहुराचार्य्या प्रावृड् वर्षाशरद्धेमन्तेत्यादिगदेशन व्यभिचार्य्यं श्लोके व्यभिचारयितुमाह—सर्व्वेत्यादि । सर्व्वावयवसाध्येषु अशेषमूलाद्यवयवग्राह्येषु योगेष्वित्यर्थः । पलाशलवणादिष्विति पत्रलवणादिष्वित्यर्थः । पत्रलवणयोगश्च वातव्याधिपठितो ज्ञेयः । तत्र सर्व्वो विधीयते इति तत्र तेषु पत्रलवणादियोगेषु सर्व्वः समस्तोऽपि कालः प्रावृडादिर्विधीयते कथ्यते इत्यर्थः । एतेन सर्व्वस्मिन्नपि काले भेषजसंग्रहः क्रियते इत्यर्थः । येन च हेतुना स्वगुणपरित्यागस्तमाह—गन्धवर्णरसोपेता षड् विधा भूमिरिति निर्देशात् रूपवर्णगन्धरसस्पर्शशब्दोपेता कथिता । षड् विधा षट्प्रकारा, पञ्चभूतात्मिका सर्व्वलक्षणा च, वीजिनो वृक्षादयः, ते च भूमिस्वभावेन युताः षड्रसोपेता भवन्ति, अथवा एते षड्रसा भूमिस्वभावेन युता मिलिताः सन्तः वीजिनो भवन्ति वृक्षादिरूपा भवन्तीत्यर्थः ॥ ६—८ ॥

यदि द्रव्याणां परिणामविशेषेण मधुरादिरसता तत् कथमुच्यते तोयस्य रस इत्याह—अव्यक्त इत्यादि । अव्यक्त इति मधुरादिभावेनापरिस्फुट इत्यर्थः, किल अवधारणे, निश्चयनिश्चित इति प्रमाणनिश्चितो रसोऽस्तीत्यर्थः । यद्येवं-तर्हि मधुरादिभेदानुपपत्तिरिति ? अत आह—रसः स एवेत्यादि । स एवाव्यक्तो रसो व्यक्तो भवति मधुरादिभावं याति, कस्मात् ? भूमिरसादिति सम्बन्धः । भूमिद्रव्ययोः कारणमाह—सर्व्वलक्षणसम्पन्नेति । सर्व्वलक्षणसम्पन्ना पृथिव्यादि-

विगन्धेनापरामृष्टमविपन्नं रसादिभिः।
नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्द्दिशेत् ॥ ११ ॥
विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम्।
शेषमन्यत्त्वभिनवं गृह्णीयाद् दोषवर्ज्जितम् * ॥ १२ ॥
जङ्गमानां वयःस्थानां रक्तरोमनखादिकम्।
क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् ॥ १३ ॥
प्लोतमृद्भाण्डफलक-शङ्कुविन्यस्तभेषजम्।
प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ॥ १४ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने भूमिप्रविभागविज्ञानीयो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

पञ्चमहाभूतलक्षणयुक्तेत्यर्थः, तद्गुणानि साधारणगुणानि द्रव्याणीत्यर्थः। नवं वा पुराणं वा कीदृशं द्रव्यं गृह्यत इत्याह—विगन्धेनेत्यादि। विगन्धेनापरामृष्टमिति विरोधिना गन्धेन न दृष्टमित्यर्थः, अविपन्नं अक्षीणं रसादिभिरित्यर्थः, दोषवर्ज्जितमिति क्रिमिविषशस्त्राद्युपघातादि-दोषैस्त्यक्तम् ॥ ९—१२ ॥

स्थावराणि नियम्य जङ्गमानि नियन्तुमाह—जङ्गमानामित्यादि। वयःस्थानामिति तरुणानां न बालवृद्धानामित्यर्थः। गृहीतौषधसंस्थापनोपायं दर्शयन्नाह—प्लोतेति। प्लोतः कर्पटखण्डं, मृदा भाण्डं, मृद्भाण्डम्। फलकं पट्टकमिति पुस्तकान्तरे पाठः, शङ्कुः कीलकः, एतेषु प्लोतादिषु विन्यस्तं धृतं भेषजं यस्मिन् गृहे तत् भेषजागारं भेषजगृहमिष्यते इति सम्बन्धः। प्रशस्तायां दिशि पूर्व्वस्यामुत्तरस्यां वा, शुचौ देशे अस्मिन् भूमिप्रविभागीयाध्याये। निबन्धेषु व्यत्ययेन न पाठो दृश्यते, अस्माभिस्तु वृद्धक्रमरीत्यैव पाठो लिखित इति। सर्व्वावयवसाध्येष्वित्यादि यावन्नवं द्रव्यं पुराणञ्चेति पाठं केचिदाचार्य्या न पठन्ति ॥ १३।१४ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे भूमिप्रविभागविज्ञानीयाध्यायव्याख्यानाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

* ग्राह्यमेव विनिर्द्दिशेदिति वा पाठः।

# सप्तत्रिंशोऽध्यायः।

अथातो मिश्रकमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम्।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफहृत्॥ २॥
दूर्व्वा च नलमूलञ्च मधुकं चन्दनं तथा।
शीतलाश्च गणाः सर्व्वे प्रलेपः पित्तशोफहृत्॥
आगन्तुजे रक्तजे च एष एव विधिः स्मृतः।
विधिर्विषघ्नो विषजे पित्तघ्नोऽपि हितस्तथा॥ ३।४॥
अजगन्धाश्वगन्धा च काला सरलया सह।
एकैषिकाजभृङ्गी च प्रलेपः श्लेष्मशोफहृत्॥ ५॥
एते वर्गास्त्रयो लोध्रं पथ्या पिण्डीतकानि च।
अनन्ता चेति लेपोऽयं सान्निपातिकशोफहृत्॥ ६॥

षष्ठ्युपक्रमाणां मध्ये विम्लापनपाचनदारणपीडनशोधनरोपणोत्सादनावसादनानामष्टानां प्रधानानामिह निर्द्दिष्टानां मिश्रीकृत्य कथनान्मिश्रकाख्योऽध्याय इत्यर्थः। अन्ये तु शोफस्य व्रणस्य च मिश्रयोगकथनान्मिश्रक इत्युच्यते॥ १॥

तत्र प्रथमं विम्लापनं क्रमेण वातादिदोषशोफप्रत्यनीकं दर्शयन्नाह—मातुलुङ्गेत्यादि। मातुलुङ्गं बीजपूरकः, अग्निमन्थः अरणी, भद्रदारु देवदारु, महौषधं शुण्ठी, अहिंस्रा वृहदहिंस्रा, रास्ना सुरभिः। दूर्व्वेत्यादि। दूर्व्वादीनि द्रव्याणि प्रसिद्धानि। शीतलाश्च गणा इति काकोल्यादुत्पलादिन्यग्रोधादयः।

पित्तविम्लापनवदागन्तुजरक्तजयोरत्रापि दर्शयन्नाह—आगन्तुज इत्यादि। आगन्तुजे पाकप्रतिबन्धाय शीतविधिः स्मृतः। विषजनितशोथस्यागन्तुभेदस्य वक्ष्यमाणातिदेशेन चिकित्सां दर्शयन्नाह—विधिरित्यादि। विधिर्विषघ्नो विषजे इति विधिः कल्पोक्तः॥ २—४॥

अजगन्धेत्यादि। अजगन्धा वोथयिका, लतौषधीत्येके, अन्ये यवानिकामाहुः। अश्वगन्धा प्रसिद्धा, काला अहिंस्रा, सरला अरुणमूला त्रिवृत्, एकैषिका शुक्लमूला त्रिवृत्, अजशृङ्गी कर्कटशृङ्गी, अन्ये अजशृङ्गी छगलविषाणिका उत्तमारणी मेढिकेति लोके॥ ५॥

प्रत्येकदोषजशोथविम्लापनमभिधाय सान्निपातिकस्य विम्लापनं निर्द्देष्टुमाह—एत इत्यादि। एते वर्गास्त्रयो मातुलुङ्गादयः, लोध्रं प्रसिद्धं, पथ्या हरीतकी, पिण्डीतको मदनः, अनन्ता दुरालभा। केचित् पिण्डीतकत्वयमित्यादि पाठं पठन्ति॥ ६॥

स्निग्धाम्ललवणो वाते कोष्णः शीतः पयोयुतः।
पित्ते चोष्णः कफ क्षार-मूत्राढ्यस्तत्प्रशान्तये ॥ ७ ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः।
शक्तवः किण्वमतसी द्रव्याण्युष्णानि पाचनम् ॥ ८ ॥
चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः।
कपोतगृध्रकङ्काणां पुरीषाणि च दारणम् ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणं परम् ॥ ९ ॥
द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि प्रपीड़नम्।
यवगोधूममाषाणां चूर्णानि च समासतः ॥ १० ॥
शङ्खिन्यङ्कोठसुमनः-करवीरसुवर्च्चलाः।
शोधनानि कषायाणि वर्गश्चारग्वधादिकः ॥ ११ ॥

दोषभेदेन लेपस्य संस्कारविशेषं निर्दिशन्नाह—स्निग्धेत्यादि। आढ्यो बहुल इत्यर्थः। विम्लापनमभिधाय पाचनानि निर्दिशन्नाह—शणमूलकेत्यादि। फलशब्दः शणादिभिः सर्षपान्तैः सह प्रत्येकं सम्बध्यते। शणः परिपाके सस्वनफलः, शिग्रुः शोभाञ्जनकः, किण्वं सुरावीजं यद्वहिः प्रक्षिप्यते, अतसी मसिना इति लोके प्रसिद्धा, द्रव्याण्युष्णानि उष्णवीर्य्याणि कुष्ठागुरुप्रभृतीनि। एतेनानुक्तपाचनद्रव्यसंग्रह उक्तः। पाचनं शोथस्य। शेषं प्रसिद्धम्। एतेषां व्यस्तानां समस्तानाञ्च पाचनत्वं, शक्तूनां शीतवीर्य्यत्वेऽपि प्रभावविशेषात् पाचनत्वं संयोगविशेषाद् वा ॥ ७।८ ॥

पाचनमभिधाय दारणं निर्दिशन्नाह— चिरविल्व इत्यादि। चिरविल्वो वृद्धकरञ्जः 'चिरिहिलि' इति लोके, अग्निकः कलिकारिका, अन्ये भल्लातकमाहुः। दन्ती दन्तिनी, चित्रकः प्रसिद्धः, हयमारः करवीरः। पुरीषशब्दः कपोतादिभिः सह प्रत्येकं सम्बध्यते। कपोतो वनवासी पाण्डुकः, गृध्रो मांसाशी पक्षिविशेषः, कङ्कः कङ्कमल्लः न पुनः काकः। दारणं विदारणं पक्वशोथस्य। दारणद्रव्ययोगभेदं दर्शयन्नाह—क्षारद्रव्याणीत्यादि। क्षारद्रव्याणि मुष्ककुटजपलाशाश्वकर्णपारिभद्रादीनि। क्षारो वा इति एतैर्द्रव्यैः सिद्धः प्रतिसारणीयः। परमिति कृच्छ्रेण दारणमित्यर्थः, बालवृद्धादिष्वयोजनीयम्। द्विविधं हि पक्वशोथदारणं— सुकुमारं कृच्छ्रञ्चेति, तत्र कपोतपुरीषादिः सुकुमारं, क्षारः कृच्छ्रमिति ॥ ९ ॥

ततः परं पीड़नं दर्शयन्नाह—द्रव्याणामित्यादि। पिच्छिलद्रव्याणि शाल्मलीशेलुवटपर्णादीनि, प्रपीड़नं मर्म्मादिसमीपसूक्ष्ममुखव्रणपीड़नं, समासतः सङ्क्षेपतः। प्रपीड़नञ्चेत्थं कर्त्तव्यं— व्रणमुखं वहिःकृत्य लेपयेत्, लिप्त्वा च शोषयेत्, शुष्कं सत् पीड़नं भवति। अथ शोधनं दर्शयन्नाह—शङ्खिनीत्यादि। शङ्खिनी यवतिक्ताभेदः, सुगन्धा वृहत्पत्राः, अङ्कोठः संग्राही चिरितस्वल्पपत्रः अङ्कोल इति लोके, सुमनाः जाती, करवीरः प्रसिद्धः, सुवर्च्चला सूर्य्यावर्त्तः, सोञ्चलीति लोके।

अजगन्धाजशृङ्गी च गवाक्षी लाङ्गलाह्वया।
पूतीकश्चित्रकः पाठा विडङ्गैलाहरेणवः॥
कटत्रिकं यवक्षारो लवणानि मनःशिला।
कासीसं त्रिवृता दन्ती हरितालं सुराष्ट्रजा॥
संशोधनीनां वर्त्तीनां द्रव्याण्येतानि निर्द्दिशेत्।
एतैरेवौषधैः कुर्य्यात् कल्कानपि च शोधनान्॥ १२॥
कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयोः।
पूर्व्वोद्दिष्टेषु चाङ्गेषु कुर्य्यात् तैलघृतानि च॥ १३॥
अर्कोत्तमां स्नुहीक्षीरं पिष्ट्वा क्षारोत्तमानपि।
जातीमूलं हरिद्रे द्वे कासीसं कटुरोहिणीम्।
पूर्व्वोद्दिष्टानि चान्यानि कुर्य्यात् संशोधनं घृतम्॥ १४॥
मयूरको राजवृक्षो निम्बः कोषातकी तिलाः।
वृहती कण्टकारी च हरितालं मनःशिला।
शोधनानि च योज्यानि तैले द्रव्याणि शोधने॥ १५॥

शङ्खिन्यादीनां कषाया आरग्वधादिश्च धावनादिद्वारेण शोधनः। शोधनं पुनरष्टविधं कषायवर्त्ति-कल्कघृततैलरसक्रियाचूर्णधूपनभेदेन। एतच्चाष्टविधमपि क्रमेणात्रैव वक्ष्यति। कषायस्तु शृत-शीतफाण्टस्वरसभेदेन चतुर्व्विधो ग्राह्यः। कल्कश्चात्र पञ्चमं पृथगेव वक्ष्यति॥ १०।११॥

कषायमभिधाय वर्त्तिमाह—अजगन्धेत्यादि। गवाक्षी इन्द्रवारुणी, लाङ्गलाह्वया कलिकारिका, पूतिकः चिरविल्वः, कण्टकीविटपकरञ्ज इत्येके, हरेणवो रेणुकाः, लवणानि सैन्धवसौवर्च्चल-विडौद्भिदसामुद्रिकाणि पञ्च। अन्ये विड्स्थाने काललवणेन सह पञ्चसंख्यामाहुः। काललवणन्तु निर्गन्धं सौवर्च्चलभेदः, सुराष्ट्रजा तुम्वुरुमृत् तुरीति लोके, अपरे सामान्येन कृष्णमृत्तिकामाहुः। शेषाणि द्रव्याणि किञ्चित् पूर्व्वं व्याख्यातानि किञ्चित् प्रसिद्धानि। एतैर्द्रव्यैः सूत्रवर्त्तिं लिप्त्वा व्रणे निक्षिपेत्। एवं वर्त्तिर्भवति। वर्त्तिमुक्त्वा कल्कमाह—एतैरेवौषधैः कुर्य्यादित्यादि। एतैरौषधै-रजगन्धादिभिः सुराष्ट्रजान्तैः॥ १२।१३॥

कल्कमभिधाय शोधनघृतमाह—अर्कोत्तमामित्यादि। अर्कः अर्कमूलम्, उत्तमा त्रिफला, अन्ये तु पुनरर्कोत्तमामित्यभिन्नपदेन मन्दारकमाहुः। स्नुहीक्षीरं सेहुण्डदुग्धं, क्षारोत्तमान् क्षारश्रेष्ठद्रव्याणि मुष्कककुटजपलाशाश्वकर्णादीनि, जातीमूलं जात्या जटा, अन्ये जातुकन्द इति पठन्ति, तत्र जातुकन्दो गुग्गुलुरू उत्तरापथे प्रसिद्धः; पूर्व्वोद्दिष्टानि शोधनवर्त्तिनिर्द्दिष्टानि। शेषं सुगमम्। तैलशोधनं निर्द्दिशन्नाह—मयूरको राजवृक्ष इत्यादि। मयूरकः अपामार्गः, राजवृक्षः किरमालकः, कोषातकी घोषकः, घुघुण्डीति लोके। शोधनानि च योज्यानीति

कासीसे सन्धवे किण्वे वचायां रजनीद्वये।
शोधनाङ्गेषु चान्येषु चूर्णं कुर्व्वीत शोधनम् ॥ १६ ॥
सालसारादिसारेषु पटोलत्रिफलासु च।
रसक्रिया विधातव्या शोधनी शोधनेषु च ॥ १७ ॥
श्रीवेष्टके सर्ज्जरसे सरले देवदारुणि।
सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम् ॥ १८ ॥
कषायाणामनुष्णानां वृक्षाणां त्वक्षु साधितम्।
शृतं शीतं कषायं वा रोपणार्थेषु शस्यते ॥ १९ ॥
सोमामृताश्वगन्धासु काकोल्यादौ गणे तथा।
क्षीरिप्ररोहेष्वपि च वर्त्तयो रोपणाः स्मृताः ॥ २० ॥

शोधनवर्त्तिनिर्द्दिष्टानि, वमनविरेचननिर्द्दिष्टानीत्यन्ये। शेषं प्रसिद्धम्। शोधनचूर्णानि निर्द्दिशति—कासीसे सैन्धवे किण्वे इत्यादि। शोधनाङ्गेषु शोधनवर्त्तिनिर्द्दिष्टेषु वमनविरेचनाङ्गद्रव्येषु च, कानिचित् पूर्व्वं व्याख्यातानि कानिचित् प्रसिद्धानि द्रव्याणि ॥ १३—१६ ॥

रसक्रियां शोधनीं निर्द्दिशति—सालसारादिसारेष्वित्यादि। रसक्रिया फाणिताकृतिः, काकोवीति लोके। विधातव्या कर्त्तव्या। शोधनेषु चेति शोधनवर्त्तिनिर्द्दिष्टेषु अथवा ऊर्द्धाधःशोधनेषु वमनविरेचनद्रव्येषु। शेषं प्रसिद्धम्। रसक्रियाकल्पना चेयं—द्रव्यापेक्षया अष्टगुणं षोड़शगुणं वा जलं दत्त्वाऽष्टभागावशेषः षोड़शभागावशेषो वा क्वाथः कार्य्यः। ततः पूतं कषायं पुनस्तावत् पचेत्, यावत् फाणिताकृतिः ॥ १७ ॥

परिशिष्टमष्टमं धूपनं दर्शयन्नाह—श्रीवेष्टके इत्यादि। श्रीवेष्टकः सरलरसो नवनीतप्रायः, गुग्गुलीति लोके प्रसिद्धः। सर्ज्जरसः राला इति लोके प्रसिद्धः, सरले सरलवृक्षत्वचीत्यर्थः। सारेष्विति अनुक्तेषु सालसारादिष्वित्यर्थः। शेषं प्रसिद्धम्। अत्र शोधनप्रकरणे केचित् "एतैरेवौषधैः कुर्य्यात्, कल्कानपि च शोधनान्" इत्यस्याग्रे "कासीसकटुरोहिण्योर्जातीकन्दहरिद्रयोः। पूर्व्वोद्दिष्टेषु चाङ्गेषु कुर्य्यात् तैलघृतानि वै।" इति पाठं पठन्ति व्याख्यानयन्ति च—कन्दहरिद्रयोरित्यत्र कन्दशब्दो दारुहरिद्रापरिहाराय। जातुकन्दहरिद्रयोरित्यन्ये पठन्ति। अत्र जातुकन्दो गुग्गुलुः। पूर्व्वोद्दिष्टेषु चाङ्गेष्विति शङ्खिन्यादिषु अजगन्धादिषु च। एषां कषायादीनां व्रणधावनादौ द्विव्रणीये यथोक्तविषयतावचारणम् ॥ १८ ॥

रोपणमपि धूपवर्ज्जं शोधनमिव सप्तविधं कषायादिभेदेन दर्शयन्नाह—कषायाणामनुष्णानामित्यादि। कषायाणामनुष्णानामिति न्यग्रोधोडुम्बराश्वत्थप्लक्षप्रभृतीनां, शृतं शीतं कषायं वेत्युपलक्षणं, तेन फाण्टस्वरसावपि गृह्येते। द्रव्यमुष्णोदके रात्रौ स्थापितं शीतकषाय इत्युच्यते। रोपणार्थं संरोहणार्थम्। रोपणवर्त्तिद्रव्याणि निर्द्दिशन्नाह—सोमेत्यादि। सोमः सोम एव, सोमवल्कल इत्यन्ये। अपरे सोमा [illegible] अमृता गुडूची, क्षीरिप्ररोहा न्यग्रोधोडुम्बरादीनामङ्कुराः। शेषं

समङ्गा सोमसरला सोमवल्का सचन्दना ।
काकोल्यादिश्च कल्कः स्यात् प्रशस्तो व्रणरोपणे ॥ २१ ॥
पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता ।
काकोल्यादिश्च योज्यः स्यात् प्रशस्तो रोपणे घृते ॥ २२ ॥
कालानुसार्य्यागुरुणी हरिद्रे देवदारु च ।
प्रियङ्गवश्च रोध्रश्च तैले योज्यानि रोपणे ॥ २३ ॥
कङ्गुका त्रिफला रोध्रं कासीसं श्रवणाह्वया ।
धवाश्वकर्णयोस्त्वक् च रोपणं चूर्णमिष्यते ॥ २४ ॥
प्रियङ्गुका सर्ज्जरसः पुष्पकासीसमेव च ।
त्वक्चूर्णं धवजञ्चैव रोपणार्थं प्रशस्यते ॥ २५ ॥
त्वक्ष न्यग्रोधवर्गस्य त्रिफलायास्तथैव च ।
रसक्रियां रोपणार्थे विदधीत यथाक्रमम् ॥ २६ ॥
अपामार्गोऽश्वगन्धा च तालपत्री सुवर्च्चला ।
उत्सादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥ २७ ॥

प्रसिद्धम् । रोपणकल्कद्रव्यं निर्द्दिशन्नाह—समङ्गेत्यादि । समङ्गा अञ्जलिकारिका लज्जालुकीति लोके प्रसिद्धा, वराहक्रान्तामपरे । सोमः सोम एव, सरला सरलः विशंसिकामन्ये, सोमवल्कः कट्फलम् । शेषं प्रसिद्धम् । रोपणघृतं निर्द्दिशन्नाह—पृथगित्यादि । पृथक्पर्णी पृश्निपर्णी, आत्मगुप्ता कपिकच्छुः, मालती जातिः, सिता शर्करा, श्वेतदूर्व्वेत्यन्ये । शेषं प्रसिद्धम् ॥ १९—२२ ॥

रोपणतैलमुद्दिशन्नाह—कालानुसार्य्येत्यादि । कालानुसार्य्यं तगरं, शैलजमिति केचित् । शेषं प्रसिद्धम् । रोपणचूर्णमाह—कङ्गुकेत्यादि । कङ्गुकाः कङ्गवः, अन्नविशेषा इत्यपरे, श्रवणाह्वया मुण्डितिका, धवः शकवृक्षः, अनेनैव नाम्ना प्रसिद्धः, अश्वकर्णः पूर्व्वदेशे गन्धमुण्डोऽश्वत्थसदृशवृक्षः, शेषं प्रसिद्धम् । कङ्गुकास्थाने केचित् किंशुका इति पठन्ति । द्वितीयं रोपणचूर्णमाह—प्रियङ्गुकेत्यादि । अत्र सर्व्वं सुबोधम् । रसक्रियां रोपणीमाह—त्वक्षेत्यादि । रसक्रियावस्थायां रोपणरसक्रिया कर्त्तव्येत्यर्थः । शेषं सुगमम् ॥ २३—२६ ॥

इदानीमुत्सादनमाह—अपामार्ग इत्यादि । अपामार्गस्य मूलं शीतलं गृह्यते न तु फलं, तस्योष्णवीर्य्यत्वात् । तालपत्री मुशली, सुवर्च्चला सूर्य्यावर्त्तः, अस्या अपि मूलं न तु फलं, तस्योष्णवीर्य्यत्वात् । उत्सादने इति उत्सादनं मांसवर्द्धनं, लेपप्रयोगादुत्सादनं भवति । शेषं सुगमम् ॥ २७ ॥

कासीसं सैन्धवं किण्वं कुरुविन्दो मनःशिला।
कुक्कुटाण्ड-कपालानि सुमनोमुकुलानि च।
फले शैरीष-कारञ्जे धातुचूर्णानि यानि च।
व्रणेषूत्सन्नमांसेषु प्रशस्तान्यवसादने ॥ २८ ॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्म्मसु ॥ २९ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने मिश्रको नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

अवसादनं निर्द्दिशन्नाह—कासीसमित्यादि। कुरुविन्दः लोहितरत्नं, पद्मराग उच्यते, कुक्कुटाण्डकपालानि कुक्कुटाण्डकर्पराणि, सुमनोमुकुलानि चेति जातिकलिका इत्यर्थः, धातुचूर्णानि यानि चेति हरितालपुष्पकासीसरसाञ्जनप्रभृतीनि। उत्सन्नमांसेष्ववसादने इति मांसस्फोटने ॥२८॥

एषां शोधनरोपणादिवर्गाणां समस्तानामलाभे कल्पान्तरं दर्शयन्नाह—समस्तमित्यादि। मिश्रकीयेषु द्रव्यगणेषु तथा द्रव्यसंग्रहणीयोक्तेषु तथा संशोधनसंशमनीयोक्तेषु यानि द्रव्याणि, तेषां समस्तानामलाभे त्रिचतुःपञ्चषड़ादिद्रव्याणामपि योगः कर्त्तव्य इत्यर्थः। तेनाध्यायत्रयनिर्द्दिष्टगणविषयिण्येव इयं परिभाषा, न समस्ततन्त्रव्यापिनी। अन्ये समस्तमुत्तमबलव्याधौ, अर्द्धं मध्यमबले, यथालाभं हीनबले इति कथयन्ति। अयं पक्षो गयदासाचार्य्येण दूषितः। यथालाभमिति यस्य यस्य लाभः स्यात्तत्तत् प्रयुञ्जीतेत्यर्थः। यथोद्दिष्टेषु कर्म्मसु इति उक्तेषु विम्लापनादिकर्म्मस्वित्यर्थः ॥ २९ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
मिश्रकाध्यायव्याख्यानाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

अथातो द्रव्यसंग्रहणीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

समासेन सप्तत्रिंशद्द्रव्यगणा भवन्ति । तद्यथा—विदारिगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभी चेति ।
विदारिगन्धादिरयं गणः पित्तानिलापहः ।
शोषगुल्माङ्गमर्दोर्द्ध-श्वासकासविनाशनः ॥ २ ॥

द्रव्याणां संग्रहः सङ्क्षेपः, तमधिकृत्य कृतोऽध्याय इत्यर्थः, विस्तरस्तु चिकित्सिते कथ्यते । तदुक्तं—"समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम् । चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम्" इति । तत्रादावध्यायस्य पिण्डार्थं निर्दिशन्नाह—समासेनेत्यादि । समासेन सङ्क्षेपेण । गण्यन्ते इति गणाः समूहाः । तत्र द्वात्रिंशदनियतावयवाः पुनः पञ्च पञ्चावयवाः । केचित् पञ्चत्रिंशदिति पठन्ति, त्रिंशद् वामलकादीनि विहायेति । तत्र प्रथमं दोषक्रमेणाद्यं गणं निर्दिशन्नाह—तद् यथेति । विदारिगन्धा शालपर्णी, विदारी विदारिकन्दः, कोहलाकारो लोहितकुसुमः, स च द्विविधः—दीर्घकन्दो बहुक्षीरः, हस्तिपादको महाल्पक्षीर इति । विश्वदेवा गाङ्गेरुकी प्रसिद्धा, गुडशर्करेति पूर्वदेशे, अन्ये सितकुसुमां बलामाहुः । सहदेवी बलाभेदः पीतपुष्पा काङ्कसी इति लोके, अन्ये बलां नीलपुष्पामाहुः । श्वदंष्ट्रा गोक्षुरकः, पृश्निपर्णी पृथक्पर्णी, पीठवन इति लोके ; शतावरी सूक्ष्मपत्रा, शताउरि इति लोके ; सारिवा जम्बूपत्रा दुग्धगर्भा वल्ली स्वनामप्रसिद्धा, कृष्णसारिवा छलहेण्टापत्रसदृशच्छदा चन्दनगन्धा कालवेलि इति लोके । केचित् कृष्णसारिवां न पठन्ति । जीवकः कूर्चशीर्षकः स्वनामख्यातः, ऋषभको वृषभकः, अयमपि स्वनामख्यातः ; महासहा माषपर्णी, क्षुद्रसहा मुद्गपर्णी, बृहत्यौ सूक्ष्मफला स्थूलफला च, पुनर्नवा वर्षाभूः साउड़ि इति लोके, एरण्डः स्वनामप्रसिद्धः, हंसपादी मधुस्रवा हंसपदाकारपत्रा पीतपुष्पा जलयुक्तदेशजाता हंसपदी इति लोके प्रसिद्धा, वृश्चिकाली कण्टकितमेषशृङ्गतुल्याकारफला पाठापत्रा ईषद्रोमशा श्वेतपुष्पगुच्छा दक्षिणावर्त्तवल्ली मेषशृङ्गीभेदः, वृ[illegible]याकमन्ये, ऋषभी कपिकच्छुः, शृगालविन्नामेके विदारिगन्धादौ पठन्ति, ताम[illegible]न्यन्ते । अन्ये पृथक्पर्णीभेदां दीर्घपत्रां सिंहपुच्छामाहुः । शोषो राजयक्ष्मा, अङ्गमर्दः स्फुटनिका । पित्तानिलहरत्वेन दोषप्रत्यनीकता उक्ता, शोषादिनाशकत्वेन व्याधिप्रत्यनीकत्वं चोक्तं, एवं दोषयोरुक्तयोर्व्याधिषु चोक्तेष्ववस्थाकालदेशादिभेदेन समस्तैरेतैरर्द्धैर्यथालाभं लब्धैर्वा शृतशीतफाण्टस्वरसकल्कचूर्णगुटिकोत्कारिकारसक्रियालेपप्रदेहपरिषेकावगाहनघृततैलादीनि यथायोगं साधनीयानि ।

आरग्वधमदनगोपघोण्टाकण्टकीकुटजपाठापाटलामूर्व्वेन्द्रयवसप्तपर्ण-निम्ब-कुरुण्टकदासीकुरुण्टक-गुड़ूची-चित्रकशार्ङ्गेष्टाकरञ्जद्वय-पटोल-किराततिक्तकानि सुषवी चेति।

आरग्वधादिरित्येष गणः श्लेष्मविषापहः।
मेहकुष्ठज्वरवमी-कण्डूघ्नो व्रणशोधनः ॥ ३ ॥

वरुणार्त्तगलशिग्रु-मधुशिग्रु-तर्कारीमेषशृङ्गी-पूतिकनक्तमालमोरटाग्निमन्थ-सरयकद्वयविम्वीवसुकवसिर-चित्रकशतावरीविल्वाजशृङ्गीदर्भा वृहतीद्वयञ्चेति।

वरुणादिर्गणो ह्येष कफमेदोनिवारणः।
विनिहन्ति शिरःशूलं गुल्माभ्यन्तरविद्रधीन् ॥ ४ ॥

एवमन्येष्वपि गणेषु योज्यम्। येषां जीवकर्षभकादिद्रव्याणामन्नपानादौ गुणो न निर्दिष्टः, तेषां समुदितस्य गणस्य गुणाभिधानेनैव पृथग् द्रव्यगुणो ज्ञातव्य इति ॥ १२ ॥

आरग्वधेत्यादि। आरग्वधः कृतमालकः, मदनः पिण्डीतकः, मयनफल इति लोके। गोपघोण्टा कर्कोटी, वदरभेद इत्यन्ये, ग्रामकोलिकेति प्रसिद्धा; पूगभेदमपरे। कण्टकी विकङ्कतः वृक्षकण्टकारिकेति प्रसिद्धा, काइ्वा इति लोके। कुटज इन्द्रवृक्षः, पाठा अविद्धकरणी, पाठे इति लोके। पाटला वसन्तदूती स्वनामप्रसिद्धा, मूर्व्वा धनुर्गुणोपयोग्या, दूधउडम इति लोके, अन्ये चोरस्नायुमाहुः; इन्द्रयवः कुटजफलं, सप्तपर्णः शाल्मलीसदृशपर्णो गजमदगन्धपुष्पः शरदि विकसनशील उच्चैर्वृक्षः, सातपन इति लोके। निम्बः प्रसिद्धः, कुरुण्टकः पीतपुष्पः, कण्टशेलुया इति लोके; नीलपुष्पः स एव दासीकुरुण्टकः। गुड़ूची प्रसिद्धा, चित्रकः प्रसिद्धः, शार्ङ्गेष्टा काकजङ्घा चिकसवनीति लोके, काकमाचीत्यन्ये; अन्ये तु शार्ङ्गेष्टा काकतिक्ता गौरवर्त्तुला वगुण्ठितफला चिरपोटिकेति प्रसिद्धा, झक्षरुदाकेति पूर्व्वदेशे, काकादनीत्यपरे, सा च गुञ्जेति प्रसिद्धा। करञ्जद्वयमिति एकश्चिरविल्वः, द्वितीयः कण्टकी विटपकरञ्जः, पटोलः कुलकः स्वनामख्यातः, किराततिक्तको भूनिम्बः, सुषवी कारवेल्लकः, अन्ये तु पानीयवल्लीमाहुः ॥ ३ ॥

वरुणेत्यादि। वरुणस्तिक्तशाकद्रुमः, वरुण इति लोके। आर्त्तगलः ककुभः सुगन्धमूलः कौहा इति नाम्ना पूर्व्वदेशे प्रसिद्धः, शिग्रुः शोभाञ्जनकः, मधुशिग्रुः रक्तशोभाञ्जनकः, तर्कारी अरणिका, मेषशृङ्गी कर्कटशृङ्गी, पूतीकश्चिरविल्वः, नक्तमालो वृहत्करञ्जः, मोरटोऽङ्कोल्लपुष्पो मोड्डहर इति लोके, हस्तिकर्णपलाश इत्यन्ये। अग्निमन्थः तेजोवृक्षः पूर्व्वदेशे अरनेथु इति प्रसिद्धः। सैरेयकद्वयं रक्तपुष्पनीलपुष्पकण्टशेलुयाद्वयम्, विम्बी ओष्ठोपमफला, तिन्दुरिकेति प्रसिद्धा, वसुको वुकः वकपुष्प इति लोके, वसिरो मर्कटपिप्पली तृणजातिः अपामार्ग इति प्रसिद्धः, चित्रकः प्रसिद्धः, शतावरी प्रसिद्धा, विल्वः श्रीफलः, अजशृङ्गी छागलविषाणिका उत्तमारणी मेण्डिकेति लोके, दर्भः कुशः, वृहतीद्वयं कण्टकारिकाद्वयम्—एका स्थूलफला, द्वितीया ह्रस्वफला ॥ ४ ॥

वीरतरुसहचरद्वय-दर्भ-वृक्षादनीगुन्द्रानल कुशकाशाश्मभेदकाग्निमन्थ-मोरटा-वसुकवसिरभल्लूककुरुण्टकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति।

वीरतर्वादिरित्येष गणो वातविकारनुत्
अश्मरीशर्करामूत्र-कृच्छ्राघातरुजापहः ॥ ५ ॥

सालसाराजकर्ण-खदिर-कदरकालस्कन्धक्रमुकभूर्ज्जमेषशृङ्गीतिनिशचन्दन-कुचन्दन-शिंशपाशिरीषासनधवार्ज्जुनतालशाकनक्तमालपूतिकाश्वकर्णागुरूणि कालीयकञ्चेति।

सालसारादिरित्येष गणः कुष्ठविनाशनः।
मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥ ६ ॥

वीरेत्यादि। वीरतरुः धवः, अन्ये तु वीरतरुर्वेल्लन्तर इति नाम्ना प्रसिद्धः जाङ्गलदेशे नर्म्मदा-तटे चर्म्मण्वतीनदीसमीपे च, तल्लक्षणमुच्यते—"वेल्लन्तरुर्जगतिवीरतरुः प्रसिद्धः श्वेता सितारुण-विलोहितपीतपुष्पः। स्याज्जाटितुल्यकुसुमः शमिसूक्ष्मपत्रः स्यात् कण्टकी विजलदेशज एष वृक्षः" इति। सहचरद्वयं कण्टशेलुद्वयम्, दर्भः प्रसिद्धः, वृक्षादनी वन्दाकः, कवलेखु इति लोके, वृक्षकलम्बुकमपरे। गुन्द्रा वकभेदो गोदर इति लोके, नलो दूर्व्वाकाराङ्कुरोऽन्तःशुषिरः स्वनाम-ख्यातः, कुशो ह्रस्वदर्भः, काशश्चामरपुष्पः, अश्मभेदकः पाषाणभेदकः, अग्निमन्थस्तेजोवृक्षः, 'अङ्गशूर' इति लोके, मोरटो अङ्कोल्लपुष्पः, हस्तिकर्णपलाश इत्येके, इक्षुमूलमित्यपरे, वसुकः वक-वकपुष्प इति लोके, वसिरोऽपामार्गः, सूर्य्यावर्त्तभेद इत्येके। भल्लूकः श्योनाकः, श्योना इति लोके, कुरण्टिका कृष्णसूक्ष्मफला, सिरिवालिका इति लोके; इन्दीवरोऽपि तद्भेदो दीर्घपत्री बहुलपुष्पः, कपोतवङ्का सुवर्च्चला, अन्ये शिरीषसदृशपत्रा स्वल्पविटपा] इति द्रव्यान्तरमाहुः। श्वदंष्ट्रा गोक्षुरकः। अश्मरी वस्तिपाषाणः, सैव वातभिन्ना शर्करा, मूत्रकृच्छ्रः मूत्रस्य कृच्छ्रेणप्रवृत्तिः, मूत्राघातः मूत्रावरोधः रुजाशब्दो रोगवाचकः, स च अश्मर्य्यादिषु प्रत्येकं सम्बध्यते ॥ ५ ॥

सालसारेत्यादि सालः शङ्कुस्तस्य सारः सालसारः। अजकर्णः सर्ज्जः सालभेद एव, खदिरो गायत्री स्वनामख्यातः, कदरः खदिराकारः श्वेतसारः, क्रमुकः पूगः, केचित् क्रमुग इति पठन्ति, अत्रापि स एवार्थः, वृक्षरोध्र इत्यन्ये साराधिकारात्। भूर्ज्जो मृदुत्वक् स्वनामख्यातः। केचित् भूर्ज्जस्थाने स्फूर्जक इति पठन्ति, तत्र स्फूर्जकः श्योनाकनाम्ना प्रसिद्धो लकुचाकारपत्रकाण्डः, मेषशृङ्गः कर्कटशृङ्गः स च पुत्रञ्जीवकसदृशस्तरुविशेषः, तिनिशः स्यन्दनः, सादन इति लोके प्रसिद्धः। चन्दनं श्रीचन्दनं श्रीखण्ड इति प्रसिद्धम्, कुचन्दनं रक्तचन्दनं, शिंशपा कृष्णसारा 'सीसइ' इति लोके, शिरीषो विषघाती, शिरीष इति लोके, असनो बीजकः पूर्व्वदेशे प्रसिद्धः, धवः शकटाख्यः स्वनामप्रसिद्धः, अर्ज्जुनः ककुभः, तालः स्वनामख्यातः, शाकः पूर्व्वदेशे प्रसिद्धः महा-पत्रः, अगुरु स्वनामख्यातं, कालीयकं सलेन्द्रीचन्दनमिति प्रसिद्धम्। विनाशनहरणविशोषणा

रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवालुक-शल्लकीजिङ्गिनी-कदम्बसालाः कदली चेति।

एष रोध्रादिरित्युक्तो मेदःकफहरो गणः।
योनिदोषहरः स्तम्भी व्रण्यो ( वर्ण्यो ) विषविनाशनः॥ ७॥

अर्कालर्क-करञ्जद्वय-नागदन्तीमयूरक-भार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेता-वृश्चिकाल्यलवणास्तापसवृक्षश्चेति।

अर्कादिको गणो ह्येष कफमेदोविषापहः।
क्रिमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः॥ ८॥

सुरसाश्वेतसुरसाफणिज्झकार्ज्जकभूस्तृणसुगन्धकसुमुखकालमालकासमर्द-क्षवकखरपुष्पाविडङ्गकट्फलसुरसीनिर्गुण्डी-कुलाहलोन्दुरुकर्णिका-फञ्जीप्राची-बलकाकमाच्यो विषमुष्टिकश्चेति।

नामर्थभेदमाह - तत्र कुष्ठविनाशनो मूलोच्छेदनः, हरणो मेहपाण्ड्वादेः, संशमनत्वेन निर्मूलनत्वेन वा; शोषणः कफमेदसोर्द्द्वस्तिगयोः॥ ६॥

रोध्रेत्यादि। रोध्रः लाक्षाप्रसादनो रक्तः, सावरलोध्रः श्वेतस्थूलत्वक्, पलाशः किंशुकः, कुटन्नटः श्योनाकः, अशोको लोहितकुसुमः स्वनामख्यातः, फञ्जी भार्गी, कट्फलः काश्मरी, कायफल इति लोके; एलवालुकं हरिवालुकं कृष्णगन्धिकफलसदृशं, शल्लकी गजभक्ष्या साल इति लोके जिङ्गिनी गुड़मञ्जनिका, गुलडुलि इति लोके, पूर्व्वदेशे स्वनामप्रसिद्धा। कदम्बो वृक्ष-कदम्बः, सालः सर्ज्जः, कदली रम्भा स्वनामप्रसिद्धा। स्तम्भी अतिसारादेः स्तम्भनः॥ ७॥

अर्केत्यादि। अर्को रक्तपुष्पः प्रसिद्धः, अलर्को मन्दारकः, यस्य क्षीरं न विनश्यति; करञ्जद्वयं वृक्षविटपकरञ्जौ, नागदन्ती दन्ती, मयूरकोऽपामार्गः, भार्गी स्वनामख्याता, रास्ना सुरभी स्वनामख्याता, इन्द्रपुष्पी कण्टकी कृष्णपुष्पकरञ्जः, कलिकारिकेत्यन्ये, क्षुद्रश्वेता श्वेतस्यन्दा श्वेतपुष्पा सेफन्द इति लोके, महाश्वेता नीलपुष्पः सेफन्दः, बन्ध्या कर्कोटिकेत्यन्ये; वृश्चिकाली वृश्चियाकः, अलवणा ज्योतिष्मती वर्त्तुलपक्वरक्तफला पीततैला काकमर्द्दनिकेति लोके प्रसिद्धा, तापसवृक्षः इङ्गुदः, पुत्रञ्जीवक इत्यन्ये॥ ८॥

सुरसेत्यादि। सुरसे द्वे श्वेतकृष्णकुसुमे, ते च लोके तुलसीति प्रसिद्धे। फणिज्झकस्तीक्ष्ण-गन्धो मरुवक इति लोके, अन्ये त्वनेनैव नाम्ना प्रसिद्धः। अर्जको वर्ब्बरिकाकारो लघुमञ्जरीकः सूक्ष्मपत्रो निर्गन्धः श्वेतकुठेरकः। भूस्तृण अञ्जुदाकनामधेयो द्रोणपुष्पसदृशः, सुगन्धकः द्रोण-पुष्पः, अन्ये तु भूस्तृणं रोहिषं, सुगन्धकः वृहत्सुगन्धतृणम्। सुमुखो राजिका, अन्ये तु वनवर्ब्बरिका सबहा इति नाम्ना जंजीमुक्ती प्रसिद्धा। कालमालः कृष्णमल्लिका वर्ब्बरिकेति लोके, कासमर्द्दः स्वनामख्यातः, क्षवकः क्षवथुकारः फणिज्झकाकारः चिह्नारिकाय इति पारियात्रे प्रसिद्धः;

सुरसादिर्गणो ह्येष कफहृत् क्रिमिसूदनः ।
प्रतिश्यायारुचिश्वास-कासघ्नो व्रणशोधनः ॥ ९ ॥

मुष्कक-पलाश-धव-चित्रक-मदनवृक्षक-शिंशपावज्रवृक्षास्त्रिफला चेति ।

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत् ।
मेहार्शःपाण्डुरोगघ्नः शर्कराश्मरीनाशनः ॥ १० ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयव-पाठाजीरकसर्षपमहानिम्बफल-हिङ्गु-भार्गी-मधुरसातिविषा-वचा-विडङ्गानि कटुरोहिणी चेति ।

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ।
निहन्याद् दीपनो गुल्म-शूलघ्नश्चामपाचनः ॥ ११ ॥

एलातगरकुष्ठमांसीध्यामकत्वक्पत्रनागपुष्प-प्रियङ्गुहरेणुका-व्याघ्रनख-शुक्ति-

छिक्किनीति लोके, खरपुष्पं तस्यैव भेदः, वोरइकामपरे, मरुवकमन्ये, विडङ्गः प्रसिद्धः, कट्फलः सोमवल्कः कायफल इति लोके, सुरसी कपित्थसदृशपत्रा विल्वनासीति लोके प्रसिद्धा, श्वेतनिर्गुण्डीत्यन्ये । निर्गुण्डी नीलनिर्गुण्डी, कुलाहलः मुण्डिकेति प्रसिद्धः, उन्दुरुकर्णिका मूषिककर्णिका उन्दुरीति लोके, उन्दुरकर्णी द्रवन्तीमाहुरन्ये, अपरे दन्तिनमाहुः, उन्दुरकर्णा इत्येके पठन्ति, तत्रापि स एवार्थः, फञ्जी भार्गी, प्राचीबलः मत्स्याक्षकः, काकमाची काकजङ्घा नदीपिप्पलीत्यपरे । केचिदाचार्य्या एवं वदन्ति—यद्यपि प्राचीबलशब्देन काकजङ्घा गण्डदूर्व्वा जलपिप्पली चोच्यते तथाप्यत्र काकजङ्घैव, काकमाचीसान्निध्यात् वातकफक्रिमिवाधिर्य्यहरत्वाच्च, काकमाची सृष्टफला स्वनामप्रसिद्धा, विषमुष्टिको द्रेका राजनिम्ब इति प्रसिद्धः, वृहदलम्बुषामपरे, कर्कोटिकेत्यन्ये ; क्रिमिसूदन इति क्रिमिघ्न इत्यर्थः ॥ ९ ॥

मुष्ककेत्यादि । मुष्ककः क्षारवृक्षः, मोषक इति लोके ; पलाशः किंशुकः, धवः स्वनामप्रसिद्धः, चित्रकोऽपि स्वनाम्नैव प्रसिद्धः, मदनः पिण्डीतकः, वृक्षकः कुटजः, मदनवृक्ष इत्यन्ये पठन्ति, मदनवृक्ष इत्यत्र वृक्षशब्दनिर्देशः फलप्रतिषेधार्थमिति व्याख्यानयन्ति । शिंशपा कृष्णसारा स्वनामख्याता, वज्रवृक्षः सेहुण्ड इति लोके, त्रिफला हरितक्यामलकविभीतकानि ॥ १० ॥

पिप्पलीत्यादि । चव्यं हस्तिपिप्पलीमूलं स्वनामख्यातम्, शृङ्गवेरं शुण्ठी, हस्तिपिप्पली गजपिप्पली, अजमोदा स्वनामख्याता, अन्ये यवानिकामाहुः ; महानिम्बफलमिति महानिम्बो द्रेका पर्व्वतनिम्ब इति लोके, मधुरसा मूर्व्वा । आमपाचन इति । आमलक्षणं यथा—"जठरानलदौर्व्वल्यादविपक्वस्तु यो रसः । स आमसंज्ञको देहे सर्व्वदोषप्रकोपकः" इति । शेषं प्रसिद्धम् ॥ ११ ॥

एलेत्यादि । ध्यामकं कत्तृणं रोहिषमिति लोके, त्वक् वराङ्गं गुडत्वक् इति लोके, पत्रं पत्रकं, नागपुष्पं नागकेशरम्, अन्ये नागकेशरपुष्पसमपुष्पो महातरुरित्याहुः ; हरेणुका रेणुका,

चण्डास्थौणेयकश्रीवेष्टकचोचचोरकवालक-गुग्गुलुसर्ज्जरसतुरुष्ककुन्दुरुकागुरु-स्पृक्कोशीरभद्रदारुकुङ्कुमानि पुन्नागकेशरञ्चेति।

एलादिको वातकफौ निहन्याद् विषमेव च।
वर्णप्रसादनः कण्डू-पिड़काकोठनाशनः॥ १२॥

वचामुस्तातिविषाभयाभद्रदारूणि नागकेशरञ्चेति। हरिद्रादारुहरिद्रा-कलशीकुटजवीजानि मधुकञ्चेति।

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ।
आमातीसारशमनौ विशेषाद् दोषपाचनौ॥ १३॥

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनीतिल्वककम्पिल्लक-रम्यकक्रमुकपुत्रश्रेणी-गवाक्षी-राजवृक्ष-करञ्जद्वय-गुड़ूची-सप्तलाच्छगलान्त्रीसुधाः सुवर्णक्षीरी चेति।

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः।
आनाहोदरविड्भेदी तथोदावर्त्तनाशनः॥ १४॥

व्याघ्रनखो वृहन्नखः, वृहन्नखीत्यन्ये, शुक्तिस्तद्भेदोऽल्पनखः; चण्डा स्वनामख्याता ईषत्कृष्णा चोरकभेदः अजमोदाकारा, स्थौणेयकं थुणेरकः, श्रीवेष्टकः सरलद्रुमः, गुग्गुलीति लोके; चोचः त्वग्भेदो वनवासिकात्वक्, चोरकः स्वनामख्यातः ग्रन्थिपर्णकभेदो ग्रन्थिपर्णाकार एव, सर्ज्जः सर्ज्जरसः राल इति प्रसिद्धः, अन्तर्लोमाद् रसो गन्धरसः वोल इति लोके, तुरुष्कः सिह्लकः, कुन्दुरुकः शल्लकीचोपः, स्पृक्का कुटिलपुष्पा सुगन्धिद्रव्यमौत्तरापथिकम्, भद्रदारु देवदारुः, पुन्नागः सुरपर्णिका, सुगन्धिपुष्पा दक्षिणापथ सुरपतिनाम्ना प्रतीता, केशरं वकुलं, केचित् समुदितं पठन्ति व्याख्या-नयन्ति च— पुन्नागकेशरं पद्मकेशरमित्यर्थः। अन्ये त्वेवं पठन्ति पुन्नागनागकेशरञ्चेति, पुन्नागं देववल्लभं राजचम्पकमिति लोके, नागकेशरं स्वनामप्रसिद्धम्। कोठनाशन इति। तत्र कोठ-लक्षणमुच्यते—"वरटीदष्टसङ्काशः कण्डूमान् लोहितोऽस्रकफपित्तात्। क्षिप्रोत्पादविनाशः कोठ इति निगद्यते सद्भिः" इति॥ १२॥

वचेत्यादि। कलशी पृश्निपर्णी। दोषपाचनाविति आमसंसृष्टानां दोषाणां पाचनौ॥ १३॥

श्यामेत्यादि। श्यामा श्वेता त्रिवृत्, महाश्यामा वृद्धदारकः, त्रिवृत रक्तमूला त्रिवृत्, निशोत्र इति लोके, दन्ती दन्तिनी, शङ्खिनी यवतिक्ताभेदः, श्वेतबुध्नीत्येके, तिल्वकः रोध्रः, अन्ये तिल्वको रोध्राकारो वृहत्पत्रो रक्तत्वक्को वैरेचनिकः; कम्पिल्लकः रोचनिका, स्वनामख्यातः; रम्यको द्रेक्का महानिम्ब इति लोके प्रसिद्धः, पटोलमूलमित्येके; क्रमुकः पूगफलं, पुत्रश्रेणी द्रवन्ती एरण्डसदृशफलपत्राल्पविटपा सम्बरीति लोके, गवाक्षी इन्द्रवारुणी, राजवृक्षः कृतमालकः, करञ्जद्वयं वृक्षविटपकरञ्जौ, गुड़ूची प्रसिद्धा, सप्तला सातला स्नुहीभेदः, छगलान्त्री वृद्धदारकभेदः, वुब्नाभेद इत्यपरे; सुधा सेहुण्डः, सुवर्णक्षीरी अनन्तासदृशपत्रा, कङ्कुष्ठमित्यपरे॥ १४॥

बृहतीकण्टकारिकाकुटजफलपाठा मधुकञ्चेति ।

पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ।
कफारोचकहृल्लास-मूत्रकृच्छ्रविनाशनः * ॥ १५ ॥

पटोलचन्दनकुचन्दनमूर्व्वागुडूचीपाठाः कटुरोहिणी चेति ।

पटोलादिर्गणः पित्त-कफारोचकनाशनः ।
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥ १६ ॥

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहा-कर्कटश्रृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति ।

काकोल्यादिरयं पित्त-शोणितानिलनाशनः ।
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ १७ ॥

ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकञ्चेति ।

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ।
अश्मरीशर्करामूत्र-कृच्छ्रगुल्मप्रणाशनः ॥ १८ ॥

बृहतीत्यादि । स्पष्टमेव । पटोलेत्यादि । कुचन्दनं रक्तचन्दनम् । मूर्व्वा हधौड़श्चोरस्नायुकः । व्रणेभ्यो हितः व्रण्यः । शेषं सुखबोधम् ।

काकोलीत्यादि । काकोली क्षीरी स्वनाम्ना प्रसिद्धा, क्षीरकाकोली तद्भेदः स्वनामख्यातः, जीवकः स्वनामप्रसिद्धः, ऋषभः स्वनामख्यातः, मुद्गपर्णी मुगवनी इति लोके, माषपर्णी मापवनी इति लोके, अरण्यमाषस्तम्ब इत्येके ; मेदा महामेदा च स्वनामख्याता, तुगाक्षीरी वंशलोचना, पद्मकं पद्मकाष्ठम् । प्रपौण्डरीकं स्वनामख्यातं यष्टिमधुद्रव्यादीपत् स्थूलं मधुररसं नेत्राश्च्योतनार्हं द्रव्यम्, अन्ये श्रीपुष्पमाहुः ; मृद्वीका द्राक्षा, जीवन्ती डोडिका इति लोके लतार्कफलाकार-सक्षीरफला, अन्ये सुवर्णजीवन्तीमाहुः । जीवनः प्राणधारणः, बृंहणः शरीरवृद्धिकरः । शेषं सुबोधम् ॥ १५—१७ ॥

ऊषकेत्यादि । ऊषकः क्षारमृत्तिका वाराणसीसमीपे वड़तरदेशे बाहुल्येन भवति, अन्ये तद्भवं द्रव्यान्तरमाहुः ; कासीसद्वयं कासीसं भस्मसदृशं किञ्चिदम्लं लवणरसं, द्वितीयं पुष्पकासीसमीषत् पीतं तुवररसं तद्भेद एव, तुत्थकं कर्परिकातुत्थं 'खपरिया' इति लोके, अन्ये मयूरग्रीवमाहुः । शेषं सुबोधम् ॥ १८ ॥

* कफारोचकहृल्लास-मूत्रकृच्छ्रापहः । इति पाठान्तरम् ।

सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूकपुष्पाण्युशीरञ्चेति।
सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः।
पित्तज्वरप्रशमनो विशेषाद् दाहनाशनः॥ १९॥
अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकञ्चेति।
अञ्जनादिर्गणो ह्येष रक्तपित्तनिवर्हणः।
विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा॥ २०॥
परूषकद्राक्षाकट्फलदाड़िमराजादनकतकफलशाकफलानि त्रिफला चेति।
परूषकादिरित्येष गणोऽनिलविनाशनः।
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः॥ २१॥
प्रियङ्गुसमङ्गाधातकीपुन्नाग-नागपुष्पचन्दनकुचन्दनमोचरसरसाञ्जनकुम्भीक-स्रोतोऽञ्जनपद्मकेशरयोजनवल्ल्यो दीर्घमूला चेति।
अम्बष्ठाधातकीकुसुम-समङ्गाकट्वङ्ग-मधुकबिल्वपेशिका-रोध्रसावररोध्रपलाश-नन्दीवृक्षाः पद्मकेशराणि चेति।

सारिवेत्यादि। चन्दनं रक्तचन्दनम्, अन्ये पद्ममिति पठन्ति, तत्र पद्मं पद्मपुष्पम्। शेषं सुबोधम्॥ १९॥

अञ्जनमित्यादि। अञ्जनं सौवीराञ्जनं, रसाञ्जनं दारुहरिद्राक्वाथेन कृत्रिमं, अन्ये त्वेवं वदन्ति—रसाञ्जनं द्विविधं—स्रोतोऽञ्जनं कृष्णपाषाणाकृति धातुद्रव्यं, अन्यत् दारुहरिद्राक्वाथेन कृत्रिमं पीतलोहितम्, अत्र धातुद्रव्यमेव सौवीराञ्जनसाहचर्य्यात्। नागपुष्पं नागकेशरम्, नलदं मांसी, नलिनकेशराणि पद्मकेशराणि। शेषं सुबोधम्॥ २०॥

परूषकेत्यादि। परूषको धन्वपत्रकः स्वनाम्नैव प्रसिद्धः, स द्विविधो वृक्षविटपभेदात्। कट्फलः सोमवल्कः कायफल इति लोके, राजादनः क्षीरिकः, कतकफलं स्वनामख्यातं शशकपुरीषप्रतिमफलमम्बुप्रसादनम्। शाकफलानि शाको मसृणकर्कशोदरपृष्ठदलो वृक्षविशेषः, तस्य फलानि। सर्व्वेषां फलानि ग्राह्याणि। शेषं सुबोधम्॥ २१॥

प्रियङ्ग्वित्यादि। समङ्गा अञ्जलिकारिका, लज्जालुः इति लोके, पुन्नागस्तुङ्गः स्वनामख्यातः, अन्ये सुरपर्णिका सुगन्धिपुष्पा दक्षिणापथे सुरपतीति प्रसिद्धा, नागपुष्पं नागकेशरम्, चन्दनं रक्तचन्दनम्, कुचन्दनं मलयाद्रिचन्दनं, मोचरसः शाल्मलीचुपः, रसाञ्जनं दार्व्वीक्वाथसमुद्भवं स्वनामख्यातम्, कुम्भीकः श्लक्ष्णत्वक्को रोमशः कुम्भीनामा वृक्षः, यस्य त्वग् वस्त्राकारा भवति, अन्ये पाटलामाहुः, अपरे स्वल्पविटपमाहुः। स्रोतोऽञ्जनं सौवीराञ्जनं, पद्मकेशरं स्वनामख्यातं, योजनवल्ली मञ्जिष्ठा, दीर्घमूला दुरालभा शालपर्णीत्यपरे।

अम्बष्ठेत्यादि। अम्बष्ठा माचिका साङ्कुरण इति पश्चिमे प्रसिद्धा, पाठा इत्यपरे। धातकी-

गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ॥ २२॥

न्यग्रोधोडुम्बराश्वत्थप्लक्षमधुक-कपीतनककुभाम्रकोशाम्रचोरकपत्र-जम्बूद्वय-पियालमधूकरोहिणीवञ्जुलकदम्बवदरीतिन्दुकी-सल्लकीरोध्रसावररोध्रभल्लातक-पलाशा नन्दीवृक्षश्चेति।

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः।
रक्तपित्तहरो दाह-मेदोघ्नो योनिदोषहृत्॥ २३॥

गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकञ्चेति।

एष सर्व्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः।
हृल्लासारोचकच्छर्द्दि-पिपासादाहनाशनः॥ २४॥

उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकञ्चेति।

उत्पलादिरयं दाह-पित्तरक्तविनाशनः।
पिपासाविषहृद्रोग-च्छर्द्दिमूर्च्छाहरो गणः॥ २५॥

कुसुमं धातकीपुष्पं, समङ्गा अञ्जलिकारिका लज्जालुरिति लोके, कट्वङ्गोऽरलुकः, विल्वपेषिका वालविल्वगिरः, महारोध्रं केचित् पठन्ति। सावररोध्रो लोध्रस्तस्यैव ग्राहित्वात्, नेतरस्तस्य विरेचनत्वात्। पलाशः किंशुकः, नन्दीवृक्षः काश्मरी, अन्ये गर्द्दभाण्डमाहुः। पद्मकेशरं स्वनामख्यातम्। सन्धानीयाविति भग्नसन्धानकारकौ॥ २२॥

न्यग्रोधेत्यादि। न्यग्रोधो वटः, उडुम्बरः प्रसिद्धः, अश्वत्थः पिप्पलः, प्लक्षः पर्कटी, मधुकं प्रसिद्धं, कपीतनः आम्रातकः, ककुभः अर्ज्जुनः, आम्रः प्रसिद्धः, कोशाम्रः स्वनामख्यातः, चोरकपत्रो लाक्षावृक्षः, जम्बूद्वयम् एका राजजम्बूः वृहत्फला, द्वितीया काकजम्बूः स्वल्पफला, द्वयग्रहणाद् भूमिजम्ब्वास्तृतीयायाः प्रतिषेधः। पियालः सारद्रुमः, मधूको गुडपुष्पः, महुया इति लोके; रोहिणी कट्फलः, वञ्जुलो वेतसः, कदम्बः प्रसिद्धः, बदरी प्रसिद्धा, तिन्दुकी तिन्दुकवृक्षः टिम्बरुयणि इति लोके; नन्दीवृक्षोऽत्र प्ररोही पार्श्वपिप्पल इति लोके। गर्द्दभाण्ड इति पुस्तकान्तरे पाठोऽस्ति। शेषं प्रसिद्धम्॥ २३॥

गुडूचीत्यादि। कुस्तुम्बुरुर्धान्यकं, चन्दनं रक्तचन्दनं, हृल्लासस्थूत्करणम्। शेषं प्रसिद्धम्॥ २४॥

उत्पलेत्यादि। उत्पलं नीलोत्पलं, रक्तोत्पलं लोहितोत्पलं, कुमुदं श्वेतोत्पलं, सौगन्धिकं नीलोत्पलाकारवर्णमुत्पलं सुगन्धि च। कुवलयम् ईषन्नीलधवलं, पुण्डरीकं श्वेतपद्मं, मधुकम् यष्टिमधुकम्॥ २५॥

मुस्ताहरिद्रादारुहरिद्रा-हरीतक्यामलकविभीतक-कुष्ठ-हैमवतीवचा-पाठाकटु-रोहिणीशार्ङ्गष्टातिविषाद्राविड़ीभल्लातकानि चित्रकञ्चेति।

एष मुस्तादिको नाम्ना गणः श्लेष्मनिसूदनः।
योनिदोषहरः स्तन्य-शोधनः पाचनस्तथा ॥ २६ ॥

हरीतक्यामलकविभीतकानीति त्रिफला।

त्रिफला कफपित्तघ्नी ( तु त्रिदोषघ्नी ) मेहकुष्ठविनाशिनी।
चक्षुष्या दीपनी चैव विषमज्वरनाशनी ॥ २७ ॥

पिप्पलीमरिचशृङ्गवेराणीति त्रिकटुकम्।

त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान्।
निहन्याद् दीपनं गुल्म-पीनसाग्न्यल्पतामपि ॥ २८ ॥

आमलकी-हरीतकी-पिप्पल्यश्चित्रकश्चेति।

आमलक्यादिरित्येष गणः सर्व्वज्वरापहः।
चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥ २९ ॥

त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलश्चेति।

गणस्त्रप्वादिरित्येष गरक्रिमिहरः परः।
पिपासाविषहृद्रोग-पाण्डुमेहहरस्तथा ॥ ३० ॥

लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति।

कषायस्तिक्तमधुरः कफपित्तार्त्तिनाशनः।
कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥ ३१ ॥

मुस्तेत्यादि। हैमवती श्वेतवचा, वचा स्वनामख्याताहणवर्णा। शार्ङ्गष्टा यवतिक्ता गौरवर्त्तुलावगुण्ठितफला चिरपोटिकेति प्रसिद्धा, झञ्झरुप इति पूर्व्वदेशे, काकजङ्घामन्ये, काकमाचीत्यपरे। द्राविड़ी एला। स्तन्यशोधन इति स्त्रीक्षीरप्रसादनः। शेषं प्रसिद्धम् ॥ २६ ॥

हरीतकीत्यादि। त्रिफला प्रसिद्धा। त्रिफलात्रिकटुकयोर्यथालाभं परिभाषा न व्याप्रियते, अतएवानयोर्ग्रन्थकारेण संज्ञा न कृतेति ॥ २७ ॥

पिप्पलीत्यादि। त्वगामयान् कुष्ठादीन्। शेषं प्रसिद्धम् ॥ २८ ॥

आमलकीत्यादि। मूले स्पष्टमेव ॥ २९ ॥

त्रप्वित्यादि। त्रपु वङ्गं, सीसं नागं, ताम्रं प्रसिद्धं, रजतं रूप्यं, कृष्णलोहं तीक्ष्णलोहं, सुवर्णं प्रसिद्धं, लोहमलः प्रसिद्धः, काट् इति लोके। गरः कृत्रिमं विषम् ॥ ३० ॥

लाक्षेत्यादि। आरेवतः कृतमालकः, कुटज इन्द्रयवः, अश्वमारकः करवीरः, कट्फलः सोमवल्कलः, कायफल इति लोके। सप्तच्छदः सप्तपर्णः, सातवन इति लोके। मालती जाती। त्रायमाणा स्वनामप्रसिद्धा। केचिदत्र त्रिफलां पठन्ति। शेषं प्रसिद्धम् ॥ ३१ ॥

पञ्च पञ्चमूलान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र त्रिकण्टकवृहतीद्वयपृथक्पर्ण्यौ विदारिगन्धा चेति कनीयः।

कषायतिक्तमधुरं कनीयः पञ्चमूलकम्।
वातघ्नं पित्तशमनं बृंहणं बलवर्द्धनम्॥ ३२॥

विल्वाग्निमन्थटुण्टुकपाटलाकाश्मर्य्यश्चेति महत्।

सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम्।
मधुरानुरसञ्चैव पञ्चमूलं महत् स्मृतम्॥ ३३॥

अनयोर्दशमूलमुच्यते।

गणः श्वासहरो ह्येष कफपित्तानिलापहः।
आमस्य पाचनश्चैव सर्व्वज्वरविनाशनः॥ ३४॥

विदारीसारिवारजनीगुडूच्योऽजशृङ्गी चेति वल्लीसंज्ञः।
करमर्द्दत्रिकण्टकसरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः॥

रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ।
सर्व्वमेहहरौ चैव शुक्रदोषविनाशनौ॥ ३५॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः।

मूत्रदोषविकारञ्च रक्तपित्तं तथैव च।
अन्त्यः प्रयुक्तः क्षीरेण शीघ्रमेव विनाशयेत्॥ ३६॥

पञ्चेत्यादि। त्रिकण्टको गोक्षुरकः, विदारिगन्धा शालपर्णी। कनीयो लघुपञ्चमूलमित्यर्थः। केचिद् गोक्षुरकस्थाने एरण्डं पठन्ति॥ ३२॥

विल्वेत्यादि। अग्निमन्थो गणिकारिका, अग्निवधू इति लोके। टुण्टुकः श्योनाकः। महत् महत्पञ्चमूलमित्यर्थः॥ ३३॥

अनयोरित्यादि। तस्य गुणमाह—गण इत्यादि॥ ३४॥

विदारी विदारीकन्दः, रजनी हरिद्रा, अजशृङ्गी मेढ़िकः, कर्कटशृङ्गीत्यपरे। वल्लीसंज्ञः पञ्चमूलमिति शेषः। "वल्लीजं पञ्चमूलन्तु प्रशस्तं कफनाशनम्। सृष्टमूत्रानिलहरं वृष्यमिन्द्रियबोधनम्। कण्टकाख्यं पञ्चमूलं कफानिलहरं परम्। मधुरानुरसञ्चैव पक्वाशयविशोधनम्" इत्यन्ये पठन्ति॥ ३५॥

कुशेत्यादि। कुशो ह्रस्वो मृदुः सूचीपत्रः, काशश्चमरपत्रः, नलः स्वनाम्ना ख्यातः, दर्भः पृथुलः खरपत्रो दीर्घः। काण्डेक्षुका महती खगाली, अन्ये इक्षुमेवाहुः। अन्ये तु पठन्ति काण्डश्च इति, तत्र काण्डः शरः। अन्त्यस्तृणपञ्चमूलमित्यर्थः॥ ३६॥

एषां वातहरावाद्यावन्त्यः पित्तविनाशनः।
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ ॥ ३७ ॥
समासेन गणा ह्येते प्रोक्तास्तेषान्तु विस्तरम्।
चिकित्सितेषु वक्ष्यामि ज्ञात्वा दोषबलाबलम् ॥ ३८ ॥
एभिर्लेपान् कषायांश्च तैलं सर्पींषि पानकान्।
प्रविभज्य यथान्यायं कुर्व्वीत मतिमान् भिषक् ॥ ३९ ॥
धूमवर्षानिलक्लेदैः सर्व्वर्त्तुष्वनभिद्रुते।
ग्राहयित्वा गृहे न्यस्येद् विधिनौषधसंग्रहम् ॥
समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत्।
पृथङ्‌मिश्रान् समस्तान् वा गणं वा व्यस्तसंहतम् ॥ ४० ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यसंग्रहणीयो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

ये प्रतिपञ्चकं पुनः श्लोकं न पठन्ति, तेषां मते पञ्चकानां गुणानेकेनैव श्लोकेन वक्तुमाह— एषामित्यादि। आद्याविति लघुपञ्चमूलमहापञ्चमूले, अन्त्यस्तृणपञ्चमूलमित्यर्थः। इतरौ मध्यौ— वल्लीसंज्ञः कण्टकसंज्ञकश्चेत्यर्थः। केचिदत्र वृद्धाः पठन्ति त्रिवृतादिकमित्यादि ॥ ३७ ॥

अयमेषां सङ्क्षेप इति दर्शयन्नाह— समासेनेत्यादि। दोषबलाबलमिति दोषादिबलाबलमित्यर्थः, तेन सर्व्वेषामेव परीक्षणानामवरोधः कृतो भवति। किमेभिर्गणैः कर्त्तव्यमित्याह— एभिरित्यादि। कषायशब्देनात्र शृतशीतस्वरसफाण्टकल्कभेदाः पञ्चोच्यन्ते। पीयन्ते इति पानका यूषमण्डादयः कथ्यन्ते, कषायांश्चेति चकारादनुक्ता गुडादिसंस्कारा समुच्चीयन्ते। अत्र केचित् पठन्ति— धूमेत्यादि। एतदुक्तं भवति, विविधौषधसंग्रहं ग्राहयित्वा धूमादिभिरनुपद्रुते गृहे निक्षिपेत्। कथमेते द्रव्यगणा योज्या इत्याह— समीक्ष्येत्यादि। अयमर्थः, दोषभेदान् पृथक् कोऽर्थः? भिन्नान् दृष्ट्वा गणान् भिन्नान् मिश्रान् प्रयोजयेत्। मिश्रान् वा कोऽर्थः? द्वन्द्वान् दोषभेदान् वा समीक्ष्य मिश्रान् गणान् प्रयोजयेत्। समस्तान् वा दोषभेदान् समीक्ष्य संयुक्तांस्त्रीनेव प्रयोजयेदिति। गणेनापि गणस्य संयोगोऽभिप्रेतः। तदुक्तं— वर्गमपि वर्गेण सह योजयेदिति। अयञ्चार्थः प्रतिगणं चकारकरणाल्लभ्यते। एकस्यैव गणस्य यथावचारणं करणीयं तथा निर्दिशन्नाह— गणं वेत्यादि। व्यस्तं द्वित्रिचतुरादिद्रव्ययोगः, संहतः समस्तद्रव्योपयोगः। इयं पुनः परिभाषा गणविषयैव ज्ञेया नान्ययोगेषु। केचित् पुनरिमां परिभाषां न वदन्तीति ॥ ३८—४० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे द्रव्यसंग्रहणीयव्याख्यानामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

# एकोनचत्वारिंशोऽध्यायः ।

अथातः संशोधनसंशमनीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

मदनकुटज-जीमूतकेक्ष्वाकुधामार्गवकृतवेधनसर्षप-विडङ्गपिप्पलीकरञ्जप्रपुन्नाड़कोविदारकर्व्वुदारारिष्टाश्वगन्धाविदुलवन्धुजीवक-श्वेता-शणपुष्पी-विम्वी-वचामृगेर्व्वारुचित्राश्चेत्यूर्द्ध्वभागहराणि । तत्र कोविदारपूर्व्वाणां फलानि । कोविदारादीनां मूलानि ॥ २ ॥

त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्रीस्नुक्सुवर्णक्षीरीचित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतक-नीलिनी-चतुरङ्गुलरण्ड पूतीक-महावृक्ष-सप्तच्छदार्क-ज्योतिष्मती-

संशोधनं संशमनञ्चाधिकृत्य कृतोऽध्यायः संशोधनसंशमनीयस्तस्यारम्भ इत्यर्थः। प्राग् द्रव्यसंग्रहणीयाध्याये व्याधिप्रत्यनीका द्रव्यगणा उक्ताः, संशोधनसंशमनीये तु दोषप्रत्यनीकप्रायाः पञ्चकर्म्मोपयोगिनः शोधनद्रव्यसंग्रहगणा वातादिशमनद्रव्यगणाश्च कथयितव्या इति शेषः। तत्र द्विविधं संशोधनं—वमनं विरेचनञ्च। तत्र पूर्व्वकत्वाद् विरेचनस्य प्रथमं वमनद्रव्यगणमभिधातुमाह—मदनेत्यादि। जीमूतको देवदाली, इक्ष्वाकुः कटुकालावूः, धामार्गवः पीतपुष्पकोषातकीभेदः, कृतवेधनः श्वेतपुष्पघोषकः, सर्षपाः श्वेतसर्षपाः विशेषेण वमनार्हाः, कोविदारः काञ्चनारः, कर्व्वुदारः श्लेष्मान्तकः, वव इति लिसोड़ा इति हसाडका इति च देशभाषया प्रसिद्धः। अरिष्टो निम्बः, विदुलो वेतसः, वन्धुजीवो मध्याह्नपुष्पकः, मरुनीया इति लोके; श्वेता श्वेतवचा, शणपुष्पी शणसदृशविटपः शन् हुलीति लोके, विम्वी किन्दुरिका, वचा द्वितीया अरुणा, मृगेर्व्वारुः इन्द्रवारुणी, चित्रा चित्राण्डिका पटोलफलाकारफला, आरण्यकचण्डकेत्यर्थः, अन्ये द्रवन्तीमाहुः। शेषं प्रसिद्धम्। ऊर्द्ध्वभागहराणि वमनकराणीत्यर्थः। एषां मध्ये कानिचिद् द्रव्याणि साक्षाद् वमयन्ति कानिचिद् वमनद्रव्यमिलितानि। केचिदाचार्य्याः द्वाविंशतिद्रव्याणीत्यत्र गणे नियममाहुः। एषामवयवविभागमाह—तत्रेत्यादि ॥ १।२ ॥

विरेचनद्रव्याणि निर्दिशन्नाह—त्रिवृतेत्यादि। त्रिवृता रक्तमूला निसोत् इति लोके। श्यामा कृष्णमूला त्रिवृत्, दन्ती दन्तिनी, द्रवन्ती दन्तीभेदः, संवरीति लोके। सप्तला सातला सेहुण्डभेदः, अपरे वुध्नामाहुः। शङ्खिनी यवतिक्ताभेदः, श्वेतवुध्नेत्यपरे। विषाणिका मेषशृङ्गी, गवाक्षी श्वेतपुष्पा इन्द्रवारुणी, छगलान्त्री वृद्धदारकः, स्नुक् सेहुण्डः, सुवर्णक्षीरी अनन्तासदृशपत्रा हियावलि इति लोके, कङ्कुष्ठ इत्यपरे। किणिही कटभी, तिल्वकः स्वल्परोध्रः, कम्पिल्लको रोचनिकः स्वनामख्यातः, रम्यको द्रेका वकाइनि इति लोके, पटोलमूलमित्यपरे। नीलिनी

चेत्यधोभागहराणि। तत्र तिल्वकपूर्व्वाणां मूलानि। तिल्वकादीनां पाटलान्तानां त्वचः। कम्पिल्लकफलरजः। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां क्षीराणीति ॥ ३ ॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि। एषां स्वरसा इति ॥ ४ ॥

पिप्पली-विडङ्गापामार्ग-शिग्रु-सिद्धार्थक-शिरीष-मरिचकरवीरबिम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मती-करञ्जार्कालर्कलशुनातिविषा-शृङ्गवेर-तालीश-तमाल-सुरसार्ज्जकेङ्गुदीमेषशृङ्गी-मातुलुङ्गीसुरङ्गी-* पीलुजाती-शाल-ताल-मधूक-लाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि। तत्र करवीर-पूर्व्वाणां फलानि। करवीरादीनामर्कान्तानां मूलानि। तालीशपूर्व्वाणां कन्दाः। तालीशादीनामर्ज्जकान्तानां पत्राणि। इङ्गुदीमेषशृङ्गीत्वचौ। मातुलुङ्गीसुरङ्गीपीलुजातीनां पुष्पाणि। शालतालमधूकानां साराः। हिङ्गुलाक्षे

नीलवृक्षा, श्रीफलिकेत्यन्ये। चतुरङ्गुलः किरमालकः। अत्रैके चतुरङ्गुलस्थाने पञ्चाङ्गुल इति पठन्ति, तेषां मते पञ्चाङ्गुल एरण्डः, अन्ये तु पञ्चाङ्गुलशब्देन पटोलफलसदृशफलां लतां स्निग्धपत्रां शारदफलामाहुः। पूतीकश्चिरविल्वः, महावृक्षः सेहुण्डभेदः, तस्य क्षीरं, एतेन न पुनरुक्तदोषः। सप्तच्छदः सप्तपर्णः, ज्योतिष्मती काकमर्द्दनिका। अधोभागहराणीति विरेचनानीत्यर्थः। शेषं सुगमम्। एषामवयवविभागमाह— तत्रेत्यादि ॥ ३ ॥

उभयतोभागहराणि निर्द्दिशन्नाह— कोशातकीत्यादि। कोशातकी घोषातकः, सप्तला स्नुहीभेदः, अपरे श्रीफलिकामाहुः। देवदाली स्वनामख्याता, देवली इति लोके। उभयतोभागहराणीति वमनानि विरेचनानि चेत्यर्थः। एतानि कोशातकीप्रभृतीनि नियमेनोभयतोभागहराणि, गवाक्षीप्रभृतीनां पूर्व्वोक्तानान्तु पत्रादिविशेषेण कदाचिद् विरेचकत्वमिति न तेषामुभयतोभागहरत्वम्। एषां कोशातक्यादीनां किं गृह्यत इत्याह— एषामित्यादि। तत्र स्वरसग्रहणं कषायादिनिवारणार्थम् ॥ ४ ॥

शिरोविरेचनद्रव्याणि निर्द्देष्टुमाह— पिप्पलीत्यादि। अपामार्गः शिखरी, अन्धकुड्क इति लोके। शिग्रुः शोभाञ्जनकः, सिद्धार्थः सर्षपः, शिरीषः विषघाती, करवीरः स्वनामख्यातः, बिम्बी कुन्दुरुका, गिरिकर्णिका सेफन्दः, किणिही कटभी, ज्योतिष्मती ककुन्दनी, अर्कालर्कौ अर्कद्वयं, शृङ्गवेरं शुण्ठी, तालीशं तालीशपत्रं, तमालं तमालपत्रं, पत्रकमिति लोके। सुरसा तुलसीति लोके, अर्ज्जकः कुठेरकः, मेषशृङ्गी मेढ्रशृङ्गः पुत्रञ्जीवकसदृशपत्रो वृक्षः, अन्ये कर्कटशृङ्गमाहुः। मातुलुङ्गी सुरभीफला वनजाऽरण्यवीजपूरकः, सुरङ्गी रक्तकुसुमः शोभाञ्जनकः, पीलुः मधुरफलः, पीलु इति लोके। जाती मालती, शकृद्रसः गोमयरसः, मूत्रं गोमूत्रम्। शिरोविरे-

* सुरङ्गीति वा पाठः।

निर्य्यासौ। लवणानि पार्थिवविशेषाः। मद्यान्यासवसंयोगाः। शकृद्रसमूत्रे मलाविति॥ ५॥

संशमनान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकी-कुवेराक्षी-वीरतरु-सहचराग्निमन्थ-वत्सादन्येरण्डाश्मभेदकालर्कार्कशतावरी-पुनर्नवा-वसुकवसिरकाञ्चनक-भार्गीकार्पासीवृश्चिकाली-पत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः॥ ६॥

चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवल-कह्लार-

नमानीति नस्यप्रयोगेण शिरःस्थं श्लेष्माणं विरेचयन्ति स्रावयन्तीत्यर्थः। शेषं प्रसिद्धम्। एषामवयवविभागमाह—तत्रेत्यादि। निर्य्यासौ स्वरसावित्यर्थः, लवणानि पार्थिवविशेषा इति पृथिव्या अवयवविशेषाः, एतेन स्वरूपेणैव लवणानि ग्राह्याणीत्युक्तम्। मद्यान्यासवसंयोगा इति सन्धानकसंयोगो मद्यम्, अतएव तदपि स्वरूपेणैव ग्राह्यम्। शकृद्रसमूत्रे मलाविति एते मलौ, तस्मादेते अपि स्वरूपेण ग्राह्ये॥ ५॥

संशोधनमभिधाय संशमनं निर्द्दिशन्नाह—भद्रदार्व्वित्यादि। संशमनानीति सम्यक् शमयति संशमनम्, सम्यक्त्वञ्च दुष्टदोषस्यानिर्हरणपूर्व्वकं शमनम्, अदुष्टस्यानुदीरणञ्च, व्याधिसंशमनं हि प्रस्तुतव्याधेः संशमनमप्रस्तुतव्याधेरनुदीरणम्। तदुक्तं—"न शोधयति यद् दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धान् तत् संशमनमुच्यते" इति। दोषशब्दोऽत्र दोषेषु दोषकार्य्येषु व्याधिष्वपि वर्त्तते, कार्य्ये कारणोपचारात्। मेषशृङ्गी मेढ्शृङ्गः, पुत्रञ्जीवकतरुसदृशपत्रो वृक्षः, अन्ये कर्कटशृङ्गमाहुः। बलातिबले शुक्लपीतपुष्पं बलाद्वयम्, आर्त्तगलः ककुभः; केचिदार्त्तगलं कण्टकीवृक्षमाचक्षते। कच्छुरा कुङ्कुमर्द्दनिका, कच्छुरा शुकशिम्बिरित्यन्ये। कुवेराक्षी काष्ठपाटला, पोटिका इत्यन्ये। वीरतरुर्बिल्वनासिका, शर इत्यन्ये। सहचरः कण्टासेनीयकः, अग्निमन्थः सर्ज्जो वृक्षः, 'अग्निबधूरिति पूर्व्वदेशे प्रसिद्धः। वत्सादनी गुडूची, वीर्य्येण गुडूची वातं हन्ति, रसेन कफपित्ते। अश्मभेदकः पाषाणभेदकः, वसुकः शिवसञ्ज्ञिका, वकपुष्पमिति लोके। वसिरः सूर्य्यावर्त्तः, अपामार्ग इत्यपरे। काञ्चनको धुस्तूरकः, कर्च्चूर इत्यन्ये पठन्ति; कर्च्चूरः शटी। कार्पासी वनकार्पासिका, कार्पासविटपसदृशी। वृश्चिकाली वृश्चिकयाकः, पत्तूरः कुचन्दनम्। शेषं प्रसिद्धं, पूर्व्वं व्याख्यातञ्च। प्रभृतिग्रहणान्माषतिलातसीप्रभृतीनां ग्रहणम्। समासेन सङ्क्षेपेण, विस्तरेण तु अन्नपानाद्यनिलहरग्रहणश्रुतिप्रतिपादितं यावद् भूजलानलगुणबहुलं द्रव्यं वातसंशमनमिति॥ ६॥

पित्तसंशमनान् निर्द्दिशन्नाह—चन्दनेत्यादि। चन्दनं श्रीखण्डं, कुचन्दनं रक्तचन्दनं, ह्रीवेरं वालकं, पयस्या क्षीरकाकोली, विदारी विदारीकन्दः, शैवलं शैवालं, कह्लारं रक्तोत्पलं बृहत्पत्रिकेति

चेत्यधोभागहराणि। तत्र तिल्वकपूर्व्वाणां मूलानि। तिल्वकादीनां पाटलान्तानां त्वचः। कम्पिल्लकफलरजः। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां क्षीराणीति॥ ३॥

कोशातकी सप्तला शङ्खिनी देवदाली कारवेल्लिका चेत्युभयतोभागहराणि। एषां स्वरसा इति॥ ४॥

पिप्पली-विडङ्गापामार्ग-शिग्रु-सिद्धार्थक-शिरीष-मरिचकरवीरविम्बीगिरिकर्णिकाकिणिहीवचाज्योतिष्मती-करञ्जार्कालर्कलशुनातिविषा-शृङ्गवेर-तालीश-तमाल-सुरसार्ज्जकेङ्गुदीमेषशृङ्गी-मातुलुङ्गीसुरङ्गी-* पीलुजाती-शाल-ताल-मधूक-लाक्षाहिङ्गुलवणमद्यगोशकृद्रसमूत्राणीति शिरोविरेचनानि। तत्र करवीरपूर्व्वाणां फलानि। करवीरादीनामर्कान्तानां मूलानि। तालीशपूर्व्वाणां कन्दाः। तालीशादीनामर्ज्जकान्तानां पत्राणि। इङ्गुदीमेषशृङ्गीत्वचौ। मातुलुङ्गीसुरङ्गीपीलुजातीनां पुष्पाणि। शालतालमधूकानां साराः। हिङ्गुलाक्षे

नीलवुह्ना, श्रीफलिकेत्यन्ये। चतुरङ्गुलः किरमालकः। अलैके चतुरङ्गुलस्थाने पञ्चाङ्गुल इति पठन्ति, तेषां मते पञ्चाङ्गुल एरण्डः, अन्ये तु पञ्चाङ्गुलशब्देन पटोलफलसदृशफलां लतां स्निग्धपत्रां शारदफलामाहुः। पूतीकश्चिरविल्वः, महावृक्षः सेहुण्डभेदः, तस्य क्षीरं, एतेन न पुनरुक्तदोषः। सप्तच्छदः सप्तपर्णः, ज्योतिष्मती काकमर्द्दनिका। अधोभागहराणीति विरेचनानीत्यर्थः। शेषं सुगमम्। एषामवयवविभागमाह— तत्रेत्यादि॥ ३॥

उभयतोभागहराणि निर्द्दिशन्नाह— कोशातकीत्यादि। कोशातकी घोषातकः, सप्तला स्नुहीभेदः, अपरे श्रीफलिकामाहुः। देवदाली स्वनामख्याता, देवली इति लोके। उभयतोभागहराणीति वमनानि विरेचनानि चेत्यर्थः। एतानि कोशातकीप्रभृतीनि नियमेनोभयतोभागहराणि, गवाक्षीप्रभृतीनां पूर्व्वोक्तानान्तु पत्रादिविशेषेण कदाचिद् विरेचकत्वमिति न तेषामुभयतोभागहरत्वम्। एषां कोशातक्यादीनां किं गृह्यत इत्याह— एषामित्यादि। तत्र स्वरसग्रहणं कषायादिनिवारणार्थम्॥ ४॥

शिरोविरेचनद्रव्याणि निर्द्देष्टुमाह— पिप्पलीत्यादि। अपामार्गः शिखरी, अन्धकुड्क इति लोके। शिग्रुः शोभाञ्जनकः, सिद्धार्थः सर्षपः, शिरीषः विषघाती, करवीरः स्वनामख्यातः, विम्बी कुन्दुरुका, गिरिकर्णिका सेफन्दः, किणिही कटभी, ज्योतिष्मती ककुन्दनी, अर्कालर्कौ अर्कद्वयं, शृङ्गवेरं शुण्ठी, तालीशं तालीशपत्रं, तमालं तमालपत्रं, पत्रकमिति लोके। सुरसा तुलसीति लोके, अर्ज्जकः कुठेरकः, मेषशृङ्गी मेढ़शृङ्गः पुत्रञ्जीवकसदृशपत्रो वृक्षः, अन्ये कर्कटशृङ्गमाहुः। मातुलुङ्गी सुरभीफला वनजाऽरण्यवीजपूरकः, सुरङ्गी रक्तकुसुमः शोभाञ्जनकः, पीलुः मधुरफलः, पीलु इति लोके। जाती मालती, शकृद्रसः गोमयरसः, मूत्रं गोमूत्रम्। शिरोविरे-

* सुरङ्गीति वा पाठः।

निर्य्यासौ। लवणानि पार्थिवविशेषाः। मद्यान्यासवसंयोगाः। शकृद्रसमूत्रे मलाविति॥ ५॥

संशमनान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र भद्रदारुकुष्ठहरिद्रावरुणमेषशृङ्गीबलातिबलार्त्तगलकच्छुरासल्लकी-कुवेराक्षी-वीरतरु-सहचराग्निमन्थ-वत्सादन्येरण्डाश्मभेदकालर्ककशतावरी-पुनर्नवा-वसुकवसिरकाञ्चनक-भार्गीकार्पासीवृश्चिकाली-पत्तूरबदरयवकोलकुलत्थप्रभृतीनि विदारिगन्धादिश्च द्वे चादेत्र पञ्चमूल्यौ समासेन वातसंशमनो वर्गः॥ ६॥

चन्दनकुचन्दनह्रीवेरोशीरमञ्जिष्ठापयस्याविदारीशतावरीगुन्द्राशैवल-कह्लार-

चमानीति नस्यप्रयोगेण शिरःस्थं श्लेष्माणं विरेचयन्ति स्रावयन्तीत्यर्थः। शेषं प्रसिद्धम्। एषामवयवविभागमाह—तलेत्यादि। निर्य्यासौ स्वरसावित्यर्थः, लवणानि पार्थिवविशेषा इति पृथिव्या अवयवविशेषाः, एतेन स्वरूपेणैव लवणानि ग्राह्याणीत्युक्तम्। मद्यान्यासवसंयोगा इति सन्धानकसंयोगो मद्यम्, अतएव तदपि स्वरूपेणैव ग्राह्यम्। शकृद्रसमूत्रे मलाविति एते मलौ, तस्मादेते अपि स्वरूपेण ग्राह्ये॥ ५॥

संशोधनमभिधाय संशमनं निर्द्दिशन्नाह—भद्रदार्व्वित्यादि। संशमनानीति सम्यक् शमयति संशमनम्, सम्यक्त्वञ्च दुष्टदोषस्यानिर्हरणपूर्व्वकं शमनम्, अदुष्टस्यानुदीरणञ्च, व्याधिसंशमनं हि प्रस्तुतव्याधेः संशमनमप्रस्तुतव्याधेरनुदीरणम्। तदुक्तं—"न शोधयति यद् दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धान् तत् संशमनमुच्यते" इति। दोषशब्दोऽत्र दोषेषु दोषकार्य्येषु व्याधिष्वपि वर्त्तते, कार्य्ये कारणोपचारात्। मेषशृङ्गी मेढ्रशृङ्गः, पुत्रञ्जीवकतरुसदृशपत्रो वृक्षः, अन्ये कर्कटशृङ्गमाहुः। बलातिबले शुक्लपीतपुष्पं बलाद्वयम्, आर्त्तगलः ककुभः, केचिदार्त्तगलं कण्टकीवृक्षमाचक्षते। कच्छुरा कुङ्कुमर्द्दनिका, कच्छुरा शुकशिम्बिरित्यन्ये। कुवेराक्षी काष्ठपाटला, पोटिका इत्यन्ये। वीरतरुर्बिल्वनासिका, शर इत्यन्ये। सहचरः कण्टालेनीयकः, अग्निमन्थः सर्ज्जो वृक्षः, 'अग्निबधूरिति पूर्व्वदेशे प्रसिद्धः। वत्सादनी गुडूची, वीर्य्येण गुडूची वातं हन्ति, रसेन कफपित्ते। अश्मभेदकः पाषाणभेदकः, वसुकः शिवमल्लिका, वकपुष्पमिति लोके। वसिरः सूर्य्यावर्त्तः, अपामार्ग इत्यपरे। काञ्चनको धुस्तूरकः, कर्च्चूर इत्यन्ये पठन्ति; कर्च्चूरः शटी। कार्पासी वनकार्पासिका, कार्पासविटपसदृशी। वृश्चिकाली वृश्चिकयाकः, पत्तूरः कुचन्दनम्। शेषं प्रसिद्धं, पूर्व्वं व्याख्यातञ्च। प्रभृतिग्रहणान्माषतिलातसीप्रभृतीनां ग्रहणम्। समासेन सङ्क्षेपेण, विस्तरेण तु अन्नपानाद्यनिलहरग्रहणश्रुतिप्रतिपादितं यावद् भूजलानलगुणबहुलं द्रव्यं वातसंशमनमिति॥ ६॥

पित्तसंशमनान् निर्द्दिशन्नाह—चन्दनेत्यादि। चन्दनं श्रीखण्डं, कुचन्दनं रक्तचन्दनं, ह्रीवेरं बालकं, पयस्या क्षीरकाकोली, विदारी विदारीकन्दः, शैवलं शैवालं, कह्लारं रक्तोत्पलं बृहत्पत्रिकेति

कुमुदोत्पल-कन्दली-*-दूर्व्वा-मूर्व्वाप्रभृतीनि काकोल्यादिः सारिवादिरञ्जनादि-रुत्पलादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः ॥ ७ ॥

कालेयकागुरुतिलपर्णी-कुष्ठहरिद्राशीतशिवशतपुष्पासरलारास्नाप्रकीर्य्योदकीर्य्येङ्गुदीसुमनःकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातकलामज्जकप्रभृतीनि वल्ली-कण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादिर्मुष्ककादिर्वचादिः सुरसादिरारग्वधादि-रिति समासेन श्लेष्मसंशमनो वर्गः ॥ ८ ॥

तत्र सर्व्वाण्येवौषधानि व्याध्यग्निपुरुषबलान्यभिसमीक्ष्य विदध्यात्। तत्र व्याधिबलादधिकमौषधमुपयुक्तं तमुपशमय्य व्याधिं व्याधिमन्यमावहति। अग्निबलादधिकमजीर्णं विष्टभ्य वा पच्यते। पुरुषबलादधिकं ग्लानिमूर्च्छा-

लोके, अन्ये सौगन्धिकोत्पलम्। कुमुदोत्पलं श्वेतोत्पलम्, कन्दली श्वेतश्लक्ष्णबहुपुटकन्द-विशेषः सर्पच्छत्रकमिति लोके, मूर्व्वा कन्दलीरुदशस्वल्पविटपः हधोड़ इति लोके। प्रभृतिग्रहणात् अनुक्तमपि मधुरतिक्तकषायं द्रव्यं ग्राह्यम्। समासग्रहणेन तु अन्नपानादौ पित्तहरत्वेन यदन्यद-प्युदितं खभूमिजलानिलभूयिष्ठं तदपि पित्तशमनं ग्राह्यम्। ननु चन्दनकुचन्दने सारिवादौ, पयस्या काकोल्यादौ, उत्पलादीनि उत्पलादिगणे पठितान्येव, तत् कथं पृथङ् निर्द्देश इति? ब्रूमः, समस्तव्यस्तानां त्रिचतुराणां गुणविशेषज्ञापनाय पृथक् पाठः। यष्टीमधुकन्तु शीतकषायादिकल्पनया पित्तं शमयति वामनीयद्रव्यसंयुतन्तु वामनीयमिति न दोषः ॥ ७ ॥

कफसंशमनं निर्द्दिशन्नाह—कालेयकेत्यादि। कालेयकः कृष्णवर्णचन्दनविशेषः मलयाद्रि-चन्दनमिति लोके। तिलपर्णी हुलहुलः, शीतशिवं कर्पूरं, शतपुष्पाभेदमेके, गवेधुकेत्यपरे। सरला त्रिवृत्, प्रकीर्य्या कटुकी, विटपकरञ्जः। उदकीर्य्या चिरविल्वः, इङ्गुदी इङ्गुकः, पुत्रञ्जीवक इत्यन्ये। सुमनाः जाती, काकादनी हिंस्रा, लाङ्गलकी कलिकारिका, हस्तिकर्णो गजकर्णी-कारैकपत्रः, 'भूपलाश' इति लोके, रक्तैरण्ड इत्यन्ये। मुञ्जातकः स्वनामख्यातः स्वल्पकन्द उत्तरापथे। लामज्जकमुशीरभेदः। केषाञ्चिदत्र पिप्पल्यादिवचादिपठितानां पुनर्वचनं विशेषेण कफसंशमनत्वदर्शनार्थं, मुञ्जातकस्य वातपित्तहरत्वेऽपि श्लेष्महरत्वेन प्रायस्त्रिदोषहरत्वं दर्शयति। प्रभृतिग्रहणादनुक्तकटुतिक्तकषायाणामुपसंग्रहः। समासेनेति विस्तरेण त्वन्नपानादौ तथा तेजो-ऽनिलाकाशगुणभूयिष्ठमनुक्तमपि द्रव्यं कफसंशमनमिति ॥ ८ ॥

अतः परं संशोधनसंशमनद्रव्यमालां नियमयन्नाह—तत्रेत्यादि। सर्व्वाणि संशोधनानि संशमनानि चेत्यर्थः। व्याध्यग्निपुरुषाणाञ्च बलं शक्तिमभिसमीक्ष्य न्यूनाधिकभावेन विदध्यात् कुर्य्यात्। व्याधिशब्देन दोषा रोगाश्च। तेषां व्याध्यादीनां बलादिकमनपेक्ष्य भेषजप्रयोगे क्रियमाणे व्याध्यादिबलाधिक्ये दोषं निर्द्दिशन्नाह—तत्रेत्यादि। विष्टभ्य वा पच्यते इति चिरकालं स्थिरीभूय

* कदलीति वा पाठः।

मदानावहति संशमनमिति, एवं संशोधनमतिपातयति, हीनमेभ्यो दत्तमकिञ्चित्-करं भवति। तस्मात् सममेव विदध्यात् ॥ ९ ॥

भवन्ति चात्र।

रोगे शोधनसाध्ये तु यो भवेद् दोषदुर्ब्बलः।
तस्मै दद्याद् भिषक् प्राज्ञो दोषप्रच्यावनं मृदु ॥
चले दोषे मृदौ कोष्ठे नेक्षेतात्र बलं नृणाम्।
अव्याधिदुर्ब्बलस्यापि शोधनं हि तदा भवेत् ॥
स्वयंप्रवृत्तदोषस्य मृदुकोष्ठस्य शोधनम्।
भवेदल्पबलस्यापि प्रयुक्तं व्याधिनाशनम् ॥

बलादि कृत्वेत्यर्थः। पुरुषबलादिति ग्लानिः शरीरशैथिल्यं, मूर्च्छा चेतनाच्युतिः, मदो मद्यमत्तस्येव, आवहति करोति। संशमनमिति संशमनौषधमित्यर्थः। संशोधनदोषमाह—एवं संशोधनमिति। एवमेतद्दोषं संशोधनमपि करोतीत्यर्थः। अतिपातयति अतिपातनमभ्यधिकं करोति आतुरबल-स्येत्यर्थः। व्याधिबलन्यूनाया औषधमात्राया दाने दोषमाह—हीनेत्यादि। अकिञ्चित्करं न किञ्चित् करोति अनर्थकमित्यर्थः। अन्ये अकिञ्चित्करम् अल्पार्थकरमित्याहुः। नञ् ईषदर्थे। सिद्धिहेतुमुपाधिं दर्शयन्नाह—तस्मादिति। सममेव रोगाविषमबलमित्यर्थः ॥ ८।९ ॥

दुर्ब्बलस्य बलवच्छोधनं न कर्त्तव्यमित्याह—भवन्ति चात्र। रोग इत्यादि। यो भवेद्दोष-दुर्ब्बलः यः पुरुषो दोषैर्दुर्ब्बलो न तूपवासादिभिः। यः स्याद् दोषदुर्ब्बलस्तस्य दोषहरणादेव बलं भवति, उपवासादिकृशे तु अपहृतेऽपि दोषे बलं न भवति। दोषप्रच्यावनं विरेचनम्। मृदु इति मृदुवीर्य्यं चतुरङ्गुलविरेकादि। अवस्थाविशेषेणाव्याधिदुर्ब्बलेऽपि शोधनं दर्शयन्नाह—चले इत्यादि। चले स्वस्थानाच्चलिते इत्यर्थः। अत्रेति चले दोषे मृदौ कोष्ठे इत्यस्यामवस्थायामित्यर्थः। अव्याधिदुर्ब्बलस्यापि उपवासादिदुर्ब्बलस्यापि, हि यस्मादर्थे, तदा भवेत् हितमित्यध्याहारः। अव्याधिदुर्ब्बलस्यापीत्यत्र केचिदव्यापद्दुर्ब्बलस्यापीति पठन्ति। अव्यापत् शोधनं हितं तदा भवती-त्यर्थः, अव्यापच्छोधनं तदुच्यते शूलादीनि यन्न करोति। तन्त्रान्तरात् केचित् पठन्ति स्वयमित्यादि।

व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते।
विड़ालपदकं चूर्णं देयः कल्कोऽक्षसम्मितः ॥ १०

इति सुश्रुतसंहितायां सूत्रस्थाने संशोधनसंशमनीयो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

न चायं सर्व्वनिबन्धेषु दृश्यत इति। व्याध्यग्निपुरुषेषु मध्यमबलेषु कियन्मात्रमौषधं दद्यादित्याह—व्याध्यादिष्वित्यादि। मध्येषु मध्यमबलेषु। क्वाथस्याञ्जलिरिष्यत इति क्वाथग्रहणात् शृतशीतफाण्टस्य, न तु स्वरसक्षीरयोः, ते हि गुरुत्वादल्पप्रमाणाः प्रयोक्तव्याः। अञ्जलिः चत्वारि पलानि, विड़ालपदकं कर्ष इत्यर्थः, अक्षसम्मित इति कर्षप्रमाण इत्यर्थः, कल्कः द्रवपिष्टः। एतेन व्याध्यादिषु हीनबलेषु अञ्जल्यादयोऽप्यपकर्षणीयाः, तेषामेवाधिके बले तूत्कर्षणीया इति। अनुवासनास्थापनशिरोविरेचनादीनामन्यत्र मानोद्देशः कार्य्य इति ॥ १० ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
संशोधनसंशमनीयव्याख्यानामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

# चत्वारिंशोऽध्यायः ।

अथातो द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयमध्यायं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानम्, कस्मात्? व्यवस्थितत्वात्, इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा—आमे फले ये रसादयस्ते पक्वे न सन्ति; नित्यत्वाच्च, नित्यं हि द्रव्यमनित्या गुणाः, यथा—कल्कादिप्रविभागः, स एव सम्पन्नरसगन्धो व्यापन्नरसगन्धो वा भवति; स्वजात्यवस्थानाच्च, यथा हि पार्थिवं द्रव्यमन्यभावं न गच्छत्येवं शेषाणि; पञ्चेन्द्रियग्रहणाच्च, पञ्चभिरिन्द्रियैः

अथातो द्रव्यरसगुणत्यादि। द्रव्याणां विज्ञानं विशिष्टज्ञानं तदधिकृत्य कृतोऽध्याय इत्यर्थः। द्रव्यम् औषधमुच्यते, रसः मधुरादिकः, गुणाः शीतोष्णस्निग्धरूक्षमन्दतीक्ष्णगुरुलघुपिच्छिलविशदश्लक्ष्णपरुषकठिनमृदुद्रवसान्द्रस्थिरसरस्थूलसूक्ष्मा विंशतिः। वीर्य्यं चाष्टविधम्। तद् यथा - शीतोष्णस्निग्धरूक्षविशदपिच्छिलमृदुतीक्ष्णा इति। विंशतिगुणानां मध्ये एतेषामष्टानां वीर्य्यमिति संज्ञा। ननु गुणाद् वीर्य्याणां को भेदः? उच्यते, य एव गुणा आमलक्यां त एव गुणा हरीतक्याम्, अस्ति च वीर्य्ये विशेषः। तथाहि—उष्णवीर्य्या हरीतकी, शीतवीर्य्यमामलकमिति; एतेनैतदुक्तं भवति, द्रव्यरसगुणविपाकैर्यत् कर्त्तुं न शक्यते तत् कर्म्म कुर्व्वन् प्रभावो वीर्य्यमुच्यते। तथाहि—वीर्य्यं शक्तिरुत्पत्तिविशेषः, सामर्थ्यं प्रभाव इत्यनर्थान्तरम्। यद् द्रव्यं परिणामकाले स्वाभाविकं रसं परित्यज्य रसान्तरं भजते तत्र विपाक इति संज्ञा ॥ १ ॥

तत्र प्रत्येकं द्रव्यादिप्राधान्यमेकीयमतेन प्रतिपादयिष्यन् द्रव्यप्राधान्यं प्रथमं सकारणं प्रतिपादयन्नाह—केचिदित्यादि। व्यवस्थितत्वादिति द्रव्यं हि व्यवतिष्ठते न रसादयः, यथा—आम्रफलमेकमेव प्रथमं कषायाम्लं पश्चादम्लं ततो मधुरमपि भवति, न तु तदेवाम्रफलमाम्रातकं कोशाम्रं वा भवति। द्रव्यप्राधान्ये द्वितीयं हेतुमाह—नित्यत्वादित्यादि। नित्यत्वात् कियत्कालावस्थितत्वादित्यर्थः। अनित्या गुणा इति विनाशिन इत्यर्थः। कल्केत्यादि आदिग्रहणात् स्वरसशृतशीतफाण्टानामपि ग्रहणम्। स एव कल्कादिप्रविभाग एव। सम्पन्नरसगन्धो वा भवतीति संयुक्तरसः संयुक्तगन्धो वा भवतीत्यर्थः। एतेनैतदुक्तं भवति—कल्काद्यवस्थास्वपि द्रव्यं तदेव नान्यतरत् द्रव्यम्; रसगन्धौ तु अन्यौ संयुक्तौ भवत इति; गुणा अनित्याः, द्रव्यं नित्यम्। अन्ये कल्कादिस्थाने कालादिप्रविभागादिति पठन्ति। तेषां मते आदिग्रहणाज्जलवातदेशसोमसूर्य्या गृह्यन्ते। तद् यथा—ता एवौषधयो ग्रीष्मे निःसारा रूक्षा इत्यादि। द्रव्यप्राधान्ये तृतीयं हेतुं दर्शयन्नाह—स्वजात्यवस्थानाच्चेति स्वस्यां पार्थिवादिजात्यामवस्थितत्वादित्यर्थः। अन्यभावं न गच्छति आप्यादि-

गृह्यते द्रव्यं न रसादयः; आश्रयत्वाच्च, द्रव्यमाश्रिता रसादयो भवन्ति; आरम्भसामर्थ्याच्च, द्रव्याश्रित आरम्भः, यथा—विदारिगन्धादिमाहृत्य संक्षुद्य विपचेदित्येवमादिषु न रसादिष्वारम्भः; शास्त्रप्रामाण्याच्च, शास्त्रे हि द्रव्यं प्रधानमुपदेशे हि योगानां, यथा—मातुलुङ्गाग्निमन्थौ चेत्यादौ न रसादय उपदिश्यन्ते; क्रमापेक्षितत्वाच्च रसादीनां, रसादयो हि * द्रव्यक्रममपेक्षन्ते, यथा—तरुण तरुणाः सम्पूर्णे सम्पूर्णा इति; एकदेशसाध्यत्वाच्च, द्रव्याणामेकदेशेनापि व्याधयः साध्यन्ते, यथा—महावृक्षक्षीरेणेति; तस्माद् द्रव्यं प्रधानम् †। द्रव्यलक्षणन्तु क्रियागुणवत् समवायिकारणमिति ॥ २ ॥

नेत्याहुरन्ये। रसास्तु प्रधानम्, कस्मात्? आगमात्, आगमो हि शास्त्रमुच्यते, शास्त्रे हि रसा अधिकृताः, यथा—रसायत्त आहार इति, तस्मिंश्च प्राणाः; उपदेशाच्च, उपदिश्यन्ते हि रसाः, यथा—मधुराम्ललवणा वातं शमयन्ति; अनुमानाच्च, रसेन ह्यनुमीयते द्रव्यंः, यथा—मधुरमिति; ऋषिवचनाच्च, ऋषिवचनं वेदः, यथा—किञ्चिदिज्यार्थं मधुरमाहरेदिति; तस्माद् रसाः प्रधानं, रसेषु गुणसंज्ञा। रसलक्षणमन्यत्रोपदेक्ष्यामः ॥ ३ ॥

जातिं न गच्छति। चतुर्थं कारणं दर्शयन्नाह—पञ्चेत्यादि। पञ्चभिरिन्द्रियैर्द्रव्यं गृह्यते, द्रव्ये गृहीते तदाश्रया गुणा गृहीता भवन्ति, गुणाश्च शब्दस्पर्शरूपरसगन्धाः। द्रव्ये शब्दोऽप्यस्ति; यथा—पार्थिवद्रव्ये कटकटाशब्दः, तैजसे तटतटाशब्द इत्यादिकः। वायव्यद्रव्यमाकाशद्रव्यञ्चानुमानग्राह्यममूर्त्तत्वात्। न रसादय इति रसगुणवीर्य्यविपाकास्तु न पञ्चेन्द्रियग्राह्या इत्यर्थः। पञ्चमं हेतुं दर्शयन्नाह—आश्रयत्वादित्यादि। आश्रय इवं द्रव्यं रसादीनाम्। षष्ठं हेतुं दर्शयन्नाह—आरम्भेत्यादि। आरम्भसामर्थ्यात् उपक्रमसामर्थ्यादित्यर्थः। संक्षुद्य चूर्णयित्वेत्यर्थः। सप्तमं हेतुं दर्शयन्नाह—शास्त्रेत्यादि। अष्टमं हेतुं दर्शयन्नाह—क्रमेत्यादि। तरुणे तरुणा इति अभिनवे अभिनवा इत्यर्थः। नवमं हेतुं दर्शयन्नाह—एकदेशेत्यादि। द्रव्यप्राधान्यमभिधाय द्रव्यलक्षणमाह—द्रव्यलक्षणमित्यादि। क्रियागुणवदिति क्रियावत् गुणवद् द्रव्यमित्यर्थः, क्रिया कर्म्म, गुणा उक्ता विंशतिः। समवायिकारणमपि द्रव्यमेव; यथा पटे तन्तवः, घटे मृत्पिण्ड इत्यादि। न च क्रियायां क्रिया समवेता न गुणेषु गुणाश्च समवेता इति ॥ २ ॥

रसप्राधान्ये एकीयं दर्शनं निर्दिशन्नाह—नेत्यादि। नेत्याहुरन्ये द्रव्यप्राधान्यमन्ये न ब्रुवते इत्यर्थः। तस्मिंश्च प्राणा इति आहारे सति प्राणा इत्यर्थः। रसप्राधान्ये द्वितीयं हेतुमाह—उपदेशादित्यादि। अत्रैव तृतीयं हेतुमाह—अनुमानादित्यादि। चतुर्थं हेतुमाह—ऋषिवचनादित्यादि। इज्यार्थं यागार्थं, मधुररसमाहरेत् इति आनयेत् न तु द्रव्यमानयेदिति। गुणस्यापि

---

* रसादीनां वा पाठः। † इतः परम्—न रसादयः, कस्मात्? निरवयवत्वादित्यधिकः पाठः क्वचित्।

नेत्याहुरन्ये, वीर्य्यं प्रधानमिति। कस्मात्? तद्वशेनौषधकर्म्मनिष्पत्तेः। इहौषधकर्म्माण्यूर्द्धाधोभागोभयभागसंशोधनसंशमनसंग्राहकाग्निदीपनपीड़नलेखन-बृंहणरसायनवाजीकरण-श्वयथुकरविलयनदहनदारणमादन-प्राणघ्न-विषप्रशमनादीनि वीर्य्यप्राधान्याद् भवन्ति। तच्च वीर्य्यं द्विविधमुष्णं शीतञ्चाग्नीषोमीयत्वाज्जगतः। केचिदष्टविधमाहुः शीतम् उष्णं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेति ; एतानि खलु वीर्य्याणि स्वबलगुणोत्कर्षाद् रसमभिभूयात्मकर्म्म कुर्व्वन्ति। यथा तावन्महत् पञ्चमूलं कषायं तिक्तानुरसं वातं शमयत्युष्णवीर्य्यत्वात्, तथा कुलत्थः कषायः कटुकः पलाण्डुः स्नेहभावाच्च। मधुरश्चेक्षुरसो वातं वर्द्धयति शीतवीर्य्यत्वात्। कटुका पिप्पली पित्तं शमयति मृदुशीतवीर्य्यत्वात्, अम्लमामलकं लवणं सैन्धवञ्च। तिक्तः काकमाची पित्तं

किमिति न प्राधान्यं साधितमित्याशङ्क्याह —रसेष्वित्यादि। अत्रादिशब्दो लुप्तो द्रष्टव्यः, एतेनैतदुक्तं भवति, रसादिप्राधान्येनैव साधितेन गुणप्राधान्यं साधितं भवति। यथा द्रव्यलक्षणमुक्तं तथा रसस्यापि किमिति नोक्तमित्याह रसलक्षणमित्यादि। अन्यत्र रसविज्ञानीये॥ ३॥

अपरेषां वीर्य्यवादिनां मतं निर्दिशन्नाह नेत्याहुरन्ये इत्यादि। ईदृशमन्ये न कुर्व्वन्ति। तद्वशेनेति वीर्य्यवशेन। कानि पुनस्तान्यौषधकर्म्माणीत्याह—इहौषधेत्यादि। संशोधनं व्रणादीनां, संशमनमिति वमनविरेचनादिकं विना तत्स्थमेव शमयति संशमनं, संशमनभेदा एव सांग्राहिकादयः। पीड़नमिति शाल्मलीत्वगादीनां व्रणे कर्म्मविशेषः, लेखनं पत्तलीकरणं, बृंहणं शरीरवृद्धिकरं, रसायनं वयःस्थापनादिकरणं, वाजीकरणं वाजिवत् येनाप्रतिहतः स्त्रियं याति ; अन्ये तु वाजिशब्देन शुक्रमुच्यते, ततः अवाजिनो वाजिनः क्रियन्ते येनेति वाजीकरणं शुक्रोत्पादकमित्याहुः। श्वयथुकरविलयनेति करविलयनशब्दौ श्वयथुशब्देन सह प्रत्येकं सम्बध्येते। श्वयथुहरविलयनेत्येके पठन्ति। दहनं क्षारादिना, दारणं गृध्रपुरीषादिना, मादनं मत्तताकरणं, तच्च मदिरादीनां कर्म्म, प्राणघ्नत्वं विषादेः, विषप्रशमनत्वमगदादीनाम्। विषप्रशमनादीनीत्यत्रादिशब्देन व्रणरोपणरोमसञ्जननादयो गृह्यन्ते। स्वबलगुणोत्कर्षादिति स्वबलोत्कर्षात् स्वगुणोत्कर्षाच्चेत्यर्थः। आत्मकर्म्म कुर्व्वन्ति वातादिदोषशमनं कोपनं वा कुर्व्वन्ति, अभिभूय निराकरणं कृत्वेत्यर्थः। स्नेहभावाच्चेत्यत्रापि वातं शमयतीत्यादि योज्यम्। मधुरश्चेक्षुरस इत्यादि न केवलं वातं शमयतीति वीर्य्यं रसमभिभूय प्रकोपयत्यपि वातमित्यर्थः। कटुका पिप्पलीत्यादि अत्र आर्द्रा पिप्पली यदि गृह्यते तदा तस्याः स्वादुशीतत्वात् कटुकेति विशेषणं युक्तं न स्यात्, अथ शुष्का तदा तस्याः कटूष्णत्वात् पित्तं हन्तीति विशेषणमयुक्तं भवेत्, सत्यं, 'तेषु गुर्व्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा' इत्यत्र पाठे शीता चेति चकारो द्रष्टव्यः। तेन न केवलं शीता कटुका चेत्यर्थः, ततो नार्द्रपक्षे दोषः ; शुष्कपक्षे तु 'शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी'

वर्द्धयत्युष्णवीर्य्यत्वात्, मधुरा मत्स्याश्च। कटुकं मूलकं श्लेष्माणं वर्द्धयति स्निग्धवीर्य्यत्वात्। अम्लं कपित्थं श्लेष्माणं शमयति रूक्षवीर्य्यत्वात्, मधुरं क्षौद्रञ्च। तदेतन्निदर्शनमात्रमुक्तम्॥ ४॥

भवन्ति चात्र।

ये रसा वातशमना भवन्ति यदि तेषु वै।
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥ ५॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै।
तैक्ष्ण्यौष्ण्यलघुताश्चैव न ते तत्कर्म्मकारिणः॥ ६॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै।
स्नेहगौरवशैत्यानि वलासं वर्द्धयन्ति ते *॥ ७॥
तस्माद्वीर्य्यं प्रधानमिति॥ ८॥

नेत्याहुरन्ये, विपाकः प्रधानमिति। कस्मात्? सम्यङ्मिथ्याविपाकत्वात्। इह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यङ्मिथ्याविपकानि गुणं दोषं वा जनयन्ति। तत्राहुरन्ये—प्रतिरसं पाक इति। केचित् त्रिविधमिच्छन्ति मधुरमम्लं कटुकञ्चेति। तत् तु न सम्यक्, भूतगुणादागमाच्चान्योऽम्लो विपाको नास्ति।

इत्यत्र पित्तेन सहेषद्विरोधिनीति व्याख्यानान्न दोषः। केषाञ्चिन्मते पित्तप्रकोपणीति पाठः। तेषां मते पित्तशमनीयत्वं पिप्पल्याः वीर्य्यवादिनां मतं, न पुनः सत्यमेषा पित्तं शमयति, यदि वा आर्द्रा पित्तप्रशमनी शुष्का प्रकोपणीति। अम्लम् आमलकं, लवणं सैन्धवञ्चेत्यत्रापि मृदुशीतवीर्य्यत्वात् पित्तं शमयतीति योज्यम्। तिक्ता काकमाचीत्यादि पित्तं वर्द्धयति केवलं न तु प्रकोपयति, तस्यास्त्रिदोषघ्नीत्वात्। अन्ये चात्रैवं वदन्ति—वीर्य्यवादी एवमुष्णवीर्य्यां काकमाचीं मन्यते, आचार्य्यस्तु नात्युष्णशीतां, अतएव त्रिदोषघ्नीत्वं काकमाच्या इति। मधुरा मत्स्याश्चेत्यत्रापि पित्तं वर्द्धयन्तीति योज्यम्। मूलकं वृहन्मूलकं न पुनर्बालकं त्रिदोषघ्नत्वात्॥ ४॥

द्रव्याश्रितवीर्य्यकर्म्माभिधाय रसाश्रितं वीर्य्यकर्म्माह—भवन्ति चात्रेत्यादि। ये रसा वातशमना मधुराम्ललवणाः, ये रसाः पित्तशमनाः मधुरतिक्तकषायाः, ये रसाः श्लेष्मशमनाः कटुतिक्तकषायाः॥ ५-८॥

अपरं वादिमतं निर्द्दिशन्नाह—नेत्याहुरित्यादि। नेत्याहुरन्ये वीर्य्यं प्रधानमिति केचिन्न ब्रुवते। तर्हि किं प्रधानम्? विपाकः प्रधानमिति, विशिष्टः पाको विपाकः। सर्व्वद्रव्याण्यभ्यवहृतानीति इह सर्व्वशब्दो वामनीयद्रव्याणि वर्ज्जयित्वा ज्ञेयः। गुणं दोषं वा जनयन्ति गुणं सम्यग्विपक्कानि, दोषं मिथ्याविपक्कानि। प्रतिरसं पाक इति रसं रसं प्रति पाक उत्पद्यत इत्यर्थः। तत् तु न सम्यक्, त्रैविध्यं न सम्यगित्यर्थः। कथं पुनस्त्रैविध्यं न सम्यगित्याह—

* न ते तत्कर्म्मकारिण इति पाठान्तरम्।

पित्तं हि विदग्धमम्लतामुपैति अग्नेर्मन्दत्वात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति, श्लेष्मा हि विदग्धो लवणतामुपैति, मधुरो मधुरस्य, अम्लोऽम्लस्य, एवं सर्व्वेषामिति केचिदाहुः। दृष्टान्तञ्चोपदिशन्ति—यथा तावत् क्षीरमुखागतमभिपच्यमानं मधुरमेव स्यात् तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति। केचिद् वदन्त्यबलवन्तो बलवतां वशमायान्तीति, एवमनवस्थितिस्तस्मादसिद्धान्त एषः ॥ ९ ॥

आगमे हि द्विविध एव पाको मधुरः कटुकश्च। तयोर्मधुराख्यो गुरुः, कटुकाख्यो लघुरिति। तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति, गुणसाधर्म्म्याद् गुरुता लघुता च, पृथिव्यापश्च गुर्व्व्यः, शेषाणि लघूनि। तस्माद् द्विविध एव पाक इति ॥ १० ॥

भवन्ति चात्र।

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः।
निर्व्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते ॥
तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु।
निर्व्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते ॥ ११ ॥
पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः।
चतुर्णामपि सामग्र्यमिच्छन्त्यत्र विपश्चितः ॥ १२ ॥

भूतगुणादित्यादि। एतेन त्रैविध्यं निरस्तम्। प्रतिरसं पाक इति पूर्व्वोक्तं स्थापयन्नाह—मधुरो मधुरस्येत्यादि। अम्लोऽम्लस्यैवं सर्व्वेषामिति केचिदाहुरिति पदच्छेदः, दृष्टान्तञ्चोपदिशन्तीति प्रतिरसपाके इत्यर्थः। उखागतं स्थालीगतम्, प्रकीर्णा इति भूमौ निक्षिप्ताः फलितपर्य्यन्ता इत्यर्थः। तद्वदिति एवं रसा अपि जठराग्निपक्वाः स्वं स्वं रूपं मधुरादिकं न त्यजन्ति। तस्मादित्यादि। तस्मात् केचित् प्रतिरसं पाकः, केचित्त्रिविधः, अन्येऽबलवन्तो बलवतामिति मतानामनियतत्वम्। तस्मादसिद्धान्त एष अनागम एष इत्यर्थः ॥ ९ ॥

स्वमतमिदानीं दर्शयन्नाह—आगमे इत्यादि। आगमे शास्त्रे। अन्ये आगमस्त्विहेति पठन्ति। तत्र तुशब्दोऽप्यर्थः, अथवा विशेषार्थस्तुशब्दः, तेन प्रत्यक्षादिप्रमाणाविरुद्धोऽपि शिष्टागम इत्यर्थः। अथवा, आगमशब्दोऽयं सिद्धान्तवचनः, तेन सिद्धान्तः पुनरिहेत्यर्थः। पृथिव्यप्तेज इत्यादि। पृथिव्यादीनां गुणसाधर्म्म्याद् गुणसमानतया द्वैविध्यं भवतीत्यर्थः। गुणमेवाह—गुरुता लघुता चेति ॥ १० ॥

भवन्ति चात्रेत्यादि। निर्व्वर्त्तन्ते अधिका इति जायन्ते इत्यर्थः ॥ ११ ॥

एवं द्रव्यरसवीर्य्यविपाकवादिनां सविपादहेतूनि मुगतानि निर्द्दिश्य स्वमतं द्रव्यादिसामग्र-

तद् द्रव्यमात्मना किञ्चित् किञ्चिद् वीर्य्येण सेवितम्।
किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा॥ १३॥
पाको नास्ति विना वीर्य्याद् वीर्य्यं नास्ति विना रसात्।
रसो नास्ति विना द्रव्याद् द्रव्यं श्रेष्ठमतः स्मृतम्॥ १४॥
जन्म तु द्रव्यरसयोरन्योन्यापेक्षिकं स्मृतम्।
अन्योऽन्यापेक्षिकं जन्म यथा स्याद् देहदेहिनोः॥ १५॥
वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः।
रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः॥ १६॥
द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड् रसाः।
श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः॥ १७॥

लक्षणं निर्दिशन्नाह—पृथक्त्वदर्शिनामित्यादि। पृथक्त्वदर्शिनां भेददर्शिनाम्, एष वादसंग्रह इति योज्यम्। वादसंग्रहश्च द्रव्यं प्रधानं रसाः प्रधाना इत्यादिकम्। स्वमतमाह—चतुर्णामित्यादि। चतुर्णां रसगुणवीर्य्यविपाकानाम्। अपिशब्दः समुच्चये; न केवलमेकस्य द्वयोस्त्रयाणां वा, चतुर्णामपीत्यर्थः। सामग्र्यं समुदायत्वम्, इच्छन्ति मन्यन्ते। अत्र द्रव्ये, विपश्चितः पण्डिताः॥१२॥

ननु तर्हि द्रव्यमेव क्रियाकारि न रसादय इत्याशङ्क्याह—तद् द्रव्यमित्यादि। आत्मना स्वयमेव, द्रव्यमात्मना कृत्वा किञ्चिद्दोषं हन्ति करोति वा, किञ्चिद् द्रव्यमेव वीर्य्येण कृत्वा हन्ति करोति वा, किञ्चिद्धन्ति करोति वा रसविपाकाभ्यां कृत्वा, सर्व्वत्र द्रव्यं हनने करणे च कर्त्तृकारकं, तत्र द्रव्यमात्मना पार्थिवाप्यतैजसवायवाकाशीयरूपेण दोषं हन्ति; यथा—खदिरः कुष्ठम्। दोषशब्दोऽत्र व्याधावपि वर्त्तते. वीर्य्येण द्विविधेनाष्टविधेन वा सेवितं द्रव्यं दोषं हन्ति, तच्च महत्-पञ्चमूलादिकमेतस्मिन्नध्याये कथितमेव, रसेन कृत्वा द्रव्यं दोषं हन्ति, यथा—तिक्ता गुडूची उष्णवीर्य्यापि पित्तं शमयति, विपाकेन कृत्वा द्रव्यं दोषं हन्ति, यथा शुण्ठी कटुकापि वातं शमयति मधुरविपाकत्वात्। रसादीनां द्रव्यकार्य्यत्वात् द्रव्यस्य प्राधान्यं दर्शयन्नाह—पाक इत्यादि। श्रेष्ठतमं प्रशस्यतमं, एतेनाश्रयो द्रव्यं आश्रयिणो रसादयः॥ १३। १४॥

कार्य्यकारणभावेऽपि यथा—अग्नेर्धूमो जायते, नैवं रसादयो द्रव्याज्जायन्ते किन्तर्हि द्रव्यरसादीनां सहैव जन्मेति दर्शयन्नाह—जन्म त्वित्यादि। अन्योन्यापेक्षिकमिति अन्योन्याश्रित-मेकवेलोत्पत्तिरित्यर्थः। किमिवेत्याह—अन्योऽन्येत्यादि। देहः शरीरं देही आत्मा। एवं रसं द्रव्याश्रयं प्रतिपाद्य वीर्य्यमपि द्रव्याश्रयं प्रतिपादयन्नाह—वीर्य्यसंज्ञा इत्यादि। अपि-शब्दादन्येऽपि स्थूलसूक्ष्मादयो गुणा द्रव्याश्रया एव। निर्गुणास्तु गुणाः स्मृता इति एते शीताद्याः स्थूलसूक्ष्मादयश्चान्ये गुणाः, रसा अपि गुणाः, अतो गुणेषु गुणा न सम्भवन्ति, तस्माद् द्रव्यस्यैवैते शीतादयो गुणा इति। तथा विपाकमपि द्रव्याश्रयमेव प्रतिपादयन्नाह—द्रव्ये इत्यादि। द्रव्ये

अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः॥ १८॥
प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः।
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कदाचन॥ १९॥
सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत्।
तस्मात् तिष्ठेत् तु मतिमानागमे न तु हेतुषु॥ २०॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यरसगुणवीर्य्यविपाकविज्ञानीयो
नाम चत्वारिंशोऽध्यायः॥ ४०॥

पञ्चभूतात्मकदेहे, द्रव्याणि आहारद्रव्याणि; न षड्रसाः, निरवयवत्वात्। शेषा भावा इति रसादय इत्यर्थः, तदाश्रया इति द्रव्याश्रया इत्यर्थः। अत्र पाठान्तराणि तद्व्याख्यानान्तराणि च बहूनि सन्ति, तानि विस्तरभयान्न लिखितानि॥ १५—१७॥

यथोक्तभेषजानां स्वबुद्ध्या विचारनिषेधं निर्दिशन्नाह—अमीमांस्यानीत्यादि। अमीमांस्यानि न विचार्य्याणि, अचिन्त्यानि यान्येवाचिन्त्यानि तान्येवामीमांस्यानि। कानि पुनस्तानि? खदिरतुवरकरसाञ्जनहरिद्रादीनि कुष्ठघ्नानि, न तु सर्व्वाणि द्रव्याणि, अन्यथा वर्गमपि वर्णोपसृजेत् तथा वीजेनानेन मतिमान् कुर्य्याद् वस्तुशतान्यपीत्यादि विरुद्धं भवेत्। स्वभावतो जन्मतः। अन्ये तु आगमे यानि भेषजानि प्रसिद्धानि तान्यमीमांस्यान्यविचारणीयानि, कुतो हेतोरविचार्य्याणि? यतः स्वभावतोऽचिन्त्यानि तेषां स्वभावश्चिन्तयितुं न शक्यत इत्यर्थः। यथा द्रवत्वमपामुष्णत्वमग्नेरित्यादि। कथं पुनस्तानि प्रयोज्यानीत्याह—आगमेनोपयोज्यानि आगमेनैवेकेनोपयोग कार्य्य इत्यर्थः॥ १८॥

ननु अनुमानविरुद्धानि कथमागमैकप्रयोज्यानीत्याशङ्क्य आगमस्य प्रत्यक्षफलत्वेन बलीयस्त्वं दर्शयन्नाह—प्रत्यक्षेत्यादि। प्रत्यक्षलक्षणफला हिताहितभेदेन। कुतः पुनर्हेतुभिर्न परीक्षणीयं भेषजं प्रसिद्धलक्षणफलमित्याह—सहस्रेणेत्यादि॥ १९।२०॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे
द्रव्यादिविज्ञानीयव्याख्यानाम चत्वारिंशोऽध्यायः॥ ४०॥

---

# एकचत्वारिंशोऽध्यायः ।

अथातो द्रव्यविशेषविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

तत्र पृथिव्यप्तेजोवाय्वाकाशानां समुदायाद् द्रव्याभिनिर्वृत्तिः, उत्कर्षस्त्वभिव्यञ्जको भवति—इदं पार्थिवमिदमाप्यमिदं तैजसमिदं वायव्यमिदमाकाशीयमिति ॥ २ ॥

तत्र स्थूलसारसान्द्रमन्दस्थिर(खर)गुरुकठिनं गन्धबहुलमीषत्कषायं प्रायशो मधुरमिति पार्थिवम् । तत् स्थैर्य्यबलसङ्घातोपचयकरं विशेषतश्चाधोगतिस्वभावमिति ॥ ३ ॥

शीत-स्तिमित-स्निग्धमन्दगुरुसरसान्द्रमृदुपिच्छिलरसबहुलमीषत्कषायाम्ललवणं मधुररसप्रायमाप्यम् । तत् स्नेहनह्लादनक्लेदनबन्धनविष्यन्दनकरमिति ॥४

उष्ण-तीक्ष्ण-सूक्ष्म-रूक्षखरलघुविशदं रूपगुणबहुलमीषदम्ललवणं कटुकरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसम् । तद् दहनपचनदारणतापनप्रकाशनप्रभावर्णकरमिति ॥ ५ ॥

अथातो द्रव्यविशेषेत्यादि । द्रव्यस्य विशेषो भेदः पार्थिवादिकः । तत्र सर्व्वेषामेव द्रव्याणां पञ्चभूताभिनिर्वृत्तत्वात् पृथग्द्रव्याणां पृथिव्याद्याकाशान्तानां परमार्थभेदो नास्तीत्युत्कर्षोपाधिभेदं दर्शयन्नाह—तत्रेत्यादि । समुदायात् समवायात्, द्रव्याभिनिर्वृत्तिः द्रव्यजन्म, अभिव्यञ्जकः अभिज्ञापकः ॥ १।२ ॥

तत्र प्रभूतं द्रव्याभिव्यक्तिकारणं पृथिव्यादिभूतगुणोत्कर्षं निर्दिशन्नाह—तत्र स्थूलेत्यादि । स्थूलः सूक्ष्मविपरीतः, सान्द्रस्तनुविपर्य्ययः, मन्दस्तीक्ष्णविपर्य्ययः, सरविपरीतः स्थिरः अचलः, गुरुश्चिरपाकः, कठिनो मृदुविपरीतः । पार्थिवस्य लक्षणाभिधानेन गुणवत्त्वमभिधाय क्रियावत्त्वं दर्शयन्नाह—तत् स्थैर्य्येत्यादि । स्थैर्य्यमचलत्वम्, सङ्घातः काठिन्यम्, उपचयो बृंहणम् ॥ ३ ॥

इदानीमाप्यद्रव्यमप्गुणोत्कर्षेण भिन्नं दर्शयन्नाह—शीतस्तिमितमित्यादि । स्तिमितम् आर्द्रम्, जड़मित्यन्ये । आप्यस्य लक्षणाभिधानेन गुणवत्त्वमभिधाय क्रियावत्त्वं दर्शयन्नाह—तत् स्नेहनेत्यादि । ह्लादनं सुखोत्पादनं, क्लेदनमार्द्रभावः, बन्धनं संहत्यापादनं, विष्यन्दनं द्रवस्रुतिः ॥ ४ ॥

आग्नेयद्रव्यलक्षणं तद्भूतगुणोत्कर्षेण दर्शयन्नाह—उष्णेत्यादि । तीक्ष्णं राजिकामरिचादिवत्, सूक्ष्मं स्रोतोऽनुसरणशीलम्, विशदं पिच्छिलविपरीतम् । तस्य क्रियावत्त्वं दर्शयन्नाह—दहने-

सूक्ष्मरूक्षखरशिशिरलघुविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतः कषायमिति वायवीयम् । तद्वैशद्यलाघवग्लपनविरूक्षणविचारणकरमिति ॥ ६ ॥

श्लक्ष्णसूक्ष्ममृदुव्यवायिविशदविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम् । तन्मार्दवशौषिर्य्यलाघवकरमिति ॥ ७ ॥

अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद् द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थञ्चाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कार्म्मुकाणि * भवन्ति । तानि यदा कुर्व्वन्ति स कालः, यत् कुर्व्वन्ति तत् कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयन्ति तत् फलमिति † ॥ ८ ॥

त्यादि । दहनं भस्मसात्करणं, पचनम् आहारादिपाकः, दारणं व्रणादेः, तापनं शरीरादिसन्तापनं, प्रकाशनमभिव्यक्तिः, प्रभा तेजः, वर्णो गौरादिः ॥ ५ ॥

वायुगुणोत्कर्षात् वायव्यं द्रव्यविशेषं दर्शयन्नाह—सूक्ष्मेत्यादि । खरं कर्कोटकफलवत्, शिशिरं शीतं, विशदं धूलिवत् । तस्यैव कर्म्म दर्शयन्नाह—तद्वैशदेत्यादि । ग्लपनम् अवृष्यत्वं, विचारणं मनसोऽनेकविकल्पकारणं, विचरणकरमित्यन्ये पठन्ति, तत्र गतिविशेषकरमित्यर्थः ; विधारणमित्यन्ये ॥ ६ ॥

आकाशगुणोत्कर्षेणाकाशीयं द्रव्यविशेषं दर्शयन्नाह—श्लक्ष्णेत्यादि । श्लक्ष्णं मसृणं, मृदु कोमलम्, व्यवायीति समस्तदेहं व्याप्य पश्चात् पाकं गच्छति विषमद्यवत्, विविक्तं पृथग्भूतं, अवयवद्वारेण शून्यमित्यन्ये । अव्यक्तरसं मधुरादिरसविशेषानुपलब्धेः । तस्य कर्म्माणि निर्दिशन्नाह—तन्मार्द्दवेत्यादि । शौषिर्य्यं छिद्रभावः ॥ ७ ॥

इदानीं सर्व्वस्यैव जगतः स्थावरजङ्गमाख्यस्य भौतिकत्वेन सर्व्वमौषधं क्रियागुणयोगादिभिः दर्शयन्नाह—अनेनेत्यादि । अनौषधिभूतमिति अनौषधिभूतं द्रव्यं नास्तीति सम्बन्धः । युक्तिविशेषमिति युक्तिविशेषो योजनाविशेषः, तोयाग्निसंस्कारभावनामात्राकालाद्यपेक्षः । अर्थञ्चेति अर्थः प्रयोजनं नानाव्याधिनिर्घातनं, वीर्य्यं शक्तिः शीतोष्णादयो वा अष्टौ शक्तिमन्तो गुणाः, गुणाः गुर्व्वादयः, अन्ये तु वीर्य्यप्रधाना गुणा वीर्य्यगुणास्ते पुनः सरत्वादयः । कार्म्मुकाणि कार्य्यकराणि । तानीत्यादि । तानि द्रव्याणि, यदा यस्मिन् काले, क्रियां कुर्व्वन्ति स कालः । कालश्च संवत्सरात्मा ऋत्वाख्यः शीतोष्णवर्षलक्षणश्चातुरावस्थिकश्चाभिप्रेतः । यदित्यादि । कर्म्मशब्देनात्र भेषजद्रव्यव्यापारः शोधनादिरुक्तः । येनेत्यादि । वीर्य्यमिति शक्तिः । यत्रेत्यादि । अधिकरणमिति पञ्चमहाभूतशरीरिसमवायिलक्षणः पुरुषोऽधिकरणम् । यथेत्यादि । येन स्वरसकल्कश्रुतशीतफाण्टघृततैललेहमोदकोत्कारिकादिप्रकारेण कुर्व्वन्ति स उपायः । यदित्यादि । स्वास्थ्यमस्वास्थ्यं वा ॥८॥

* कर्म्मकराणीति पाठान्तरम् ।　　† स्वास्थ्यमस्वास्थ्यं वेति अधिकः पाठः ।

तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि, पृथिव्यापो गुर्व्व्यः, गुरुत्वादधो गच्छन्ति, तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात्। वमनद्रव्याण्यग्निवायुगुणभूयिष्ठानि, अग्निवायू हि लघू, लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति, तस्माद् वमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम्। उभयगुणभूयिष्ठमुभयतो भागम्। आकाशगुणभूयिष्ठं संशमनम्। सांग्राहिकमनिलगुणभूयिष्ठम्, अनिलस्य शोषणात्मकत्वात्। दीपनमग्निगुणभूयिष्ठम्। लेखनमनिलानलगुणभूयिष्ठम्। बृंहणं पृथिव्यम्बुगुणभूयिष्ठम्। एवमौषधकर्म्माण्यनुमानात् साधयेत्॥ ९॥

भवन्ति चात्र।

भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः।
भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिम्॥
खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणाम्।
वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः॥
आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते।
वसुधाजलजाताभ्यां बलासः परिवर्द्धते॥ १०॥
एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितम्।
द्विशो वा बहुशो वापि ज्ञात्वा दोषेषु चाचरेत्॥ ११॥

तत्र य इमे गुणा वीर्य्यसंज्ञकाः शीतोष्णस्निग्धरुक्षमृदुतीक्ष्णपिच्छिलविशदास्तेषां तीक्ष्णोष्णावाग्नेयौ, शीतपिच्छिलावम्बुगुणभूयिष्ठौ, पृथिव्यम्बुगुणभूयिष्ठः स्नेहः, तोयाकाशगुणभूयिष्ठं मृदुत्वं, वायुगुणभूयिष्ठं रौक्ष्यं, क्षितिसमीरणगुणभूयिष्ठं वैशद्यं, गुरुलघुविपाकावुक्तगुणौ। तत्रोष्णस्निग्धौ

तत्रेत्यादि। गुरुत्वादिति गुरुत्वलघुत्वे चेह प्रभावविशेषाधिष्ठिते त्रिवृतादिमदनफलादिद्रव्यसमवेते ग्राह्ये; न तु गुरुलघुत्वमात्रे, अन्यथा मत्स्यपिष्टान्नमसूरादीनां विरेचकत्वं कपिञ्जललावादीनाञ्च वामनीयत्वं स्यात्। अधो गच्छन्ति उपलादिवत्। अधोगुणभूयिष्ठं पृथिव्यम्बुगुणभूयिष्ठमित्यर्थः। वमनेत्यादि। ऊर्द्धमुत्तिष्ठन्तीति धूमवत् ज्वालावच्च। वमनद्रव्यमूर्द्धगुणभूयिष्ठम् अग्निवायुगुणभूयिष्ठमित्यर्थः। आकाशेत्यादि। संशमनमिति "न शोधयति यद् दोषान् समान् नोदीरयत्यपि। समीकरोति क्रुद्धांश्च तत् संशमनमुच्यते" इति। लेखनं कफमेदसोः॥ ९॥

भवन्ति चात्रेत्यादि। निर्वृतिः शान्तिः। एवमित्यादि। एवम् अनेन प्रकारेण, एतत् पूर्व्वोक्तं, द्विश इति द्वयोर्द्वयोर्दोषयोः, बहुशः इति बहूनां दोषाणामित्यर्थः। दोषेषु चाचरेदिति चकाराद् रोगेष्वप्येवमाचरेदिति समुच्चीयते। निर्वृतिः शान्तिः॥ १०।११॥

तत्रेत्यादि। इमे वक्ष्यमाणाः। विपाकयोर्मधुरकटुकयोः प्रागुक्तयोः प्रागुक्ता गुणाः। तत्रोष्णे-

वातघ्नौ, शीतमृदुपिच्छिलाः पित्तघ्नाः, तीक्ष्णरूक्षविशदाः श्लेष्मघ्नाः, गुरुपाको वातपित्तघ्नः, लघुपाकः श्लेष्मघ्नः। तेषां मृदुशीतोष्णाः स्पर्शग्राह्याः, पिच्छिलविशदौ चक्षुःस्पर्शाभ्यां, स्निग्धरूक्षौ चक्षुषा, * तीक्ष्णो मुखदुःखोत्पादनात्। गुरुः पाकः सृष्टविण्मूत्रतया कफोत्क्लेशेन च, लघुर्बद्धविण्मूत्रतया मारुतकोपेन च। तत्र तुल्यगुणेषु भूतेषु रसविशेषमुपलक्षयेत्। तद्यथा—मधुरो गुरुश्च पार्थिवः, मधुरः स्निग्धश्चाप्य इति॥ १२॥

भवति चात्र।

गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा।
स्थानवृद्धिक्षयास्तस्माद्देहिनां द्रव्यहेतुकाः॥ १३॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रव्यविशेषविज्ञानीयो
नामैकचत्वारिंशोऽध्यायः॥ ४१॥

त्यादि। उष्णस्निग्धौ वीर्यसंज्ञौ गुणौ। गुरुपाक इति। तेषामष्टानां वीर्याणां मध्ये। मुखदुःखोत्पादनादिति अत्र चार्थो द्रष्टव्यः, तेन घ्राणदुःखोत्पादनाच्चेति द्रष्टव्यम्। गुरुपाक इति। स्निग्धश्चेति चकाराद् गुरुश्च। गुणा इत्यादि। गुणा विंशतिरधिका वा। स्थानं दोषधातुमलसाम्येनावस्थानं, वृद्धिर्दोषादेराधिक्यं, क्षयः ह्रासो दोषादीनां, द्रव्यहेतुकाः पाञ्चभौतिकद्रव्यहेतुकाः॥ १२।१३॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे
द्रव्यविशेषविज्ञानीयव्याख्यानामैकचत्वारिंशोऽध्यायः॥ ४१॥

---

* चाक्षुषौ, शीतोष्णौ सुखदुःखोत्पादनाच्चेति पाठान्तरम्।

# द्विचत्वारिंशोऽध्यायः ।

**अथातो रसविशेषविज्ञानीयमध्यायं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

आकाशपवनदहनतोयभूमिषु यथासंख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः, तस्मादाप्यो रसः। परस्परसंसर्गात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यमस्ति, उत्कर्षापकर्षात् तु ग्रहणम् ॥ २ ॥

आप्य एव रसः शेषभूतसंसर्गाद् विदग्धः षोढ़ा विभज्यते। तद्यथा— मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति। ते च भूयः परस्परसंसर्गात् त्रिषष्टिधा भिद्यन्ते। तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः, तोयाग्निगुणबाहुल्यादम्लः, भूम्यग्निगुणबाहुल्याल्लवणः, वाय्वग्निगुणबाहुल्यात् कटुकः, वाय्वाकाशगुणबाहुल्यात् तिक्तः, पृथिव्यनिलगुणबाहुल्यात् कषाय इति। तत्र मधुराम्ललवणा वातघ्नाः, मधुरतिक्तकषायाः पित्तघ्नाः, कटुतिक्तकषायाः श्लेष्मघ्नाः ॥३॥

अथातो रसविशेषविज्ञानीयमित्यादि। रसविशेषो मधुरादिः, तस्य विज्ञानं विशिष्टं ज्ञानम्। रससामान्यस्य प्रथमं कारणसम्भवं दर्शयन्नाह आकाशेत्यादि। आकाशपवनदहनतोयभूमिषु यथासंख्यं शब्दस्पर्शरूपरसगन्धा जायन्त इति शेषः। किं विशिष्टास्ते ? एकोत्तरपरिवृद्धा इति; तथाहि—शब्दगुणमाकाशं, शब्दस्पर्शगुणो वायुः, शब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपरसगुणा आपः। शब्दस्पर्शरूपरसगन्धगुणा पृथ्वी, पर रं भूतानुप्रवेशादित्थमेकोत्तरा वृद्धिर्ज्ञेया। आप्यः जलसम्भवः। तत्र सर्व्वेष्वेव भूतेषु सर्व्वभूतानां सान्निध्यमस्तीति दर्शयन्नाह—परस्परसंसर्गादित्यादि। परस्परसंसर्गात् अन्योऽन्यसंयोगात्, परस्परानुग्रहात् अन्य ऽन्योपकारात्, परस्परानुप्रवेशात् अनुप्रवेशात् एकात्मीभावात्, सर्व्वेषु भूतेषु, सर्व्वेषाम् आकाशादीनां, सर्व्वेषु द्रव्येषु इत्यन्ये। सर्व्वेषु भूतेषु सर्व्वभूतानां सान्निध्यमस्तीति सर्व्व एव गुणाः सर्व्वेषां भूतानां प्राप्नुवन्तीत्याह—उत्कर्षापकर्षादित्यादि। उत्कर्षो वृद्धिः, अपकर्षो ह्रासः, आकाशाधिके द्रव्ये शब्दोऽधिकः, वाताधिके द्रव्ये स्पर्शोऽधिकः, एवं शेषभूतेषु शेषगुणाः ॥ १ । २ ॥

तेन सर्व्वेषामेव भूतानां सर्व्वात्मकत्वेऽप्युत्कर्षेणाभिधानात् आप्य एव रसः। यदि पुनरसौ रस आप्य एव नान्यभूतजः, स एवमपां स्वभावेनाव्यक्तरसत्वात् तेनाप्यव्यक्तरसेन भवितव्य मित्याह—शेषेत्यादि। पानीयादन्यानि भूतानि शेषभूतानि, तेषां संसर्गः मिलनं, ततो हेतोराप्यो रसोऽव्यक्तोऽपि कालसहायभूमिवियदनिलानलसंसर्गेण परिपाकान्तरं गतः, षोढ़ा विभज्यते षड्विधाकारो भवति। ते चेति। तत्र यस्य यस्य शेषभूतस्य संसर्गात् यो यो रस उत्पद्यते तं तं रसं दर्शयन्नाह—तत्रेत्यादि। तत्र च शेषभूतसंसर्गः प्रतिपादनीयः, तत् कथमुदकोपादानम् ? उच्यते—निष्पत्तावेव तोयप्राधान्यमुक्तम्। विशेषे तु न प्राप्नोतीति विशेषेऽपि तोयस्य प्राधान्य-

तत्र वायुरात्मनैवात्मा, पित्तमाग्नेयं, श्लेष्मा सौम्य इति। त एते रसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च। केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधाः—सौम्या आग्नेयाश्च। तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः। मधुराम्ललवणाः स्निग्धा गुरवश्च। कटुतिक्तकषाया रुक्षा लघवश्च। सौम्याः शीता, आग्नेयाश्चोष्णाः॥ ४॥

तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणो वायुः, तस्य समानयोनिः कषायो रसः, सोऽस्य शैत्याच्छैत्यं वर्द्धयति, रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं, वैशद्यात् वैशद्यं, वैष्टम्भ्याद् वैष्टम्भ्यमिति॥ ५॥

औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं, तस्य समानयोनिः कटुको रसः, सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति तैक्ष्ण्यात् तैक्ष्ण्यं रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद् वैशद्यमिति॥ ६॥

माधुर्य्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः श्लेष्मा, तस्य समानयोनिर्मधुरो रसः, सोऽस्य माधुर्य्यान्माधुर्य्यं वर्द्धयति, स्नेहात् स्नेहं, गौरवाद् गौरवं, शैत्याच्छैत्यं पैच्छिल्यात् पैच्छिल्यमिति। तस्य पुनरन्ययोनिः कटुको रसः, स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्य्यमभिभवति रौक्ष्यात् स्नेहं, लाघवाद् गौरवमौष्ण्याच्छैत्यं, वैशद्यात् पैच्छिल्यमिति। तदेतन्निदर्शनमात्रमुक्तम्॥ ७॥

रसलक्षणमत ऊर्द्ध्वं वक्ष्यामः। तत्र यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखोपलेपं जनयति श्लेष्माणञ्चाभिवर्द्धयति स मधुरः। यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धाञ्चोत्पादयति सोऽम्लः। यो

प्रतिपादनाय पृथिव्यम्बुगुणबाहुल्यादित्युक्तं, तोयाग्निगुणबाहुल्यादम्ल इत्येके पठन्ति। षण्णां रसानां क्रियाविशेषं दर्शयन्नाह—तत्रेत्यादि। दोषाणामुत्पत्तिकारणमाह—तत्रेत्यादि। आत्मनैवात्मा इति आत्मैव योनिः, वायुतो वातोत्पत्तिरित्यर्थः। पित्तमाग्नेयमिति अनलः पित्तस्य योनिरित्यर्थः, श्लेष्मा सौम्य इति सोमादुत्पद्यत इत्यर्थः। त एते इत्यादि। स्वयोनिवर्द्धना इति येभ्यः कारणेभ्यो मधुरादयो रसा उत्पद्यन्ते तानि वर्द्धयन्तीत्यर्थः। केचिदित्यादि। अग्निषोमीयत्वादिति अग्निश्च सोमश्च योनिर्जगत इत्यर्थः, सौम्याश्चाग्नेयाश्च इति चकारद्वयात् स्नेहरूक्षगुरुत्वलघुत्वैरपि द्वैविध्यं सूचयति। मधुरेत्यादि॥ ३।४॥

तत्र शैत्येत्यादि। समानयोनिः तुल्ययोनिरित्यर्थः। औष्ण्येत्यादि। माधुर्य्येत्यादि। तस्य श्लेष्मणः, प्रत्यनीकत्वात् विरुद्धत्वात्। तदित्यादि। निदर्शनमात्रमुक्तमिति दृष्टान्तमात्रमुक्तम्॥ ५—७॥

रसलक्षणमित्यादि। परितोषस्तु परितुष्टिः, प्रह्लादयति सुखमुत्पादयति, तर्पयति तृप्तिं

भक्तरुचिमुत्पादयति कफप्रसेकं जनयति मार्दवञ्चापादयति स लवणः। यो जिह्वाग्रं वाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुकः। यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिञ्चापादयति हर्षञ्च स तिक्तः। यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं वध्नाति हृदयं कर्षति पीड़यति च स कषायः ॥ ८ ॥

रसगुणानत ऊर्द्ध्वं वक्ष्यामः। तत्र मधुरो रसो रसरक्तमांसमेदोऽस्थि-मज्जौजःशुक्रस्तन्यवर्द्धनश्चक्षुष्यः केश्यो वर्ण्यो वलकृत् सन्धानः शोणितरस-प्रसादनो वालवृद्धक्षतक्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाह-प्रशमनः षड़िन्द्रियप्रसादनः क्रिमिकफकरश्चेति। स एवंगुणोऽप्येक एवात्यर्थ-मासेव्यमानः कासश्वासालसकवमथुवदनमाधुर्य्यस्वरोपघातक्रिमि-गलगण्डाना-पादयति तथार्व्वुदश्लीपदवस्तिगुदोपलेपाभिष्यन्दप्रभृतीन् जनयति ॥ ९ ॥

अम्लो जरणः पाचनो दीपनः पवननिग्रहणोऽनुलोमनः कोष्ठविदाही वहिः-शीतः क्लेदनः प्रायशो हृद्यश्चेति। स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसम्मीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्यापादयति तथा क्षताभिहतदग्ध-दष्टभग्न-शूनरुग्नप्रच्युतावमूत्रित-विसर्पितच्छिन्नभिन्न-विद्धोत्पिष्टा-दीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्चेति ॥ १० ॥

करोति, जीवयति प्राणान् धारयति, उपलेपो मलवृद्धिः। दन्तहर्षो दन्तकुण्ठता। कफप्रसेकः श्लेष्मस्रावः। शिरो गृह्णीते उद्वेजकत्वेन न तु कफवातवेदनाभिः। य इत्यादि। चोष आकर्षणं, हर्षो रोमहर्षः ॥ ८ ॥

रसेत्यादि। षष्ठमिन्द्रियं मनः। तस्येदानीमतिसेव्यमानस्यातिसेवां दोषकरीं निदर्शयन्नाह— एवंगुण इत्यादि ॥ ९ ॥

अम्लस्य सेवितस्य गुणान् दर्शयन्नाह—अम्ल इत्यादि। जरण आहारस्य, पाचनः दोषामयोः शोथस्य वा। अनुलोमनो वातमूत्रपुरीषाणाम्। तस्यैकस्यातिसेवितस्य दोषं निर्दिशन्नाह—स एवंगुण इत्यादि। रोमसंवेजनं रोमाञ्चः। अभिहतमभिघातः, दष्टं व्याड़दिभिः, भग्नं काण्डभग्ना-द्यनेकधा। रुग्नं वक्रीभूतं, प्रच्युतं भ्रष्टं स्वस्थानात्, अवमूत्रितं मूत्रविषाणां जन्तूनां मूत्रसङ्गः, विसर्पितं स्पर्शविषाणां जन्तूनां विसर्पितसङ्गः। छिन्नं निःशेषतः, भिन्नं कोष्ठादि। विद्धं शिरादि, उत्पिष्टं मर्द्दितं प्रहारचूर्णितादि ॥ १० ॥

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्व्वरस-प्रत्यनीको मार्गविशोधनः सर्व्वशरीरावयवमार्दवकरश्चेति। स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान् तथा मुखाक्षिपाकरक्तपित्तवातशोणिताम्लिकाप्रभृतीनापादयति ॥ ११॥

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफक्रिमिविषकुष्ठ-कण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्यशुक्रमेदसामुपहन्ता चेति। स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रममदगलताल्वोष्ठशोषदाहसन्तापबल-विघातकम्पतोदभेदकृत् करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति ॥१२॥

तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्चेति। स एवंगुणोऽप्येक एवा-त्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्द्दितशिरःशूलभ्रमतोद-भेदच्छेदास्य-वैरस्यान्यापादयति ॥ १३ ॥

कषायः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीड़नः क्लेदो-पशोषणश्चेति। स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीड़ास्यशोषोदरा-ध्मान-वाक्यग्रह-मन्यास्तम्भ-गात्रस्फुरणचुमुचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जन-यति ॥ १४ ॥

लवणरसगुणकर्म्माणि दर्शयन्नाह—लवण इत्यादि। संशोधनो वमनविरेचनाभ्यां, व्रणस्य दुष्टस्य, विश्लेषण इति पृथक्करणः प्रत्यवयवानां छेदित्वात्। क्लेदनो व्रणस्य। सर्व्वरसानां प्रत्यनीको विपक्ष उच्छेदक इत्यर्थः। मार्गविशोधनो मूत्रनाड़ीव्रणादिमार्गविशोधनः। तस्याति-सेव्यमानस्य दोषं दर्शयन्नाह—सर्व्वशरीरेत्यादि। कोठः पीड़काः, पुंस्त्वोपघातः शुक्रक्षयः, इन्द्रियोपतापश्चक्षुरादीनां स्वकर्म्मगुणहानिः, अम्लिकेति अम्लोद्गारः, आपादयति करोति ॥ ११ ॥

कटुकस्य प्रकृतिकर्म्म निर्द्दिशन्नाह—कटुक इत्यादि। अवसादनो अनुत्साहकृत्। तस्यैवाति-सेवितस्य दोषं निर्द्दिशन्नाह—स एवंगुण इत्यादि। भ्रमश्चक्रारूढस्येव। मद (अपस्मार) उन्माद-पूर्व्वरूपं हर्षक्षयो वा ॥ १२ ॥

तिक्तस्य प्रकृतिकर्म्म निर्द्दिशन्नाह—तिक्त इत्यादि। रोचन इति इतरभक्ष्यवस्तूनां, न पुनः स्वयमेव। तस्यातिसेवितस्य दोषं निर्द्दिशन्नाह—मन्यास्तम्भेत्यादि। मन्ये द्वे तयोः स्तम्भ इति ॥१३॥

कषायस्य प्रकृतिकर्म्म निर्द्दिशन्नाह—कषाय इत्यादि। रोपणो व्रणस्य। स्तम्भनो गात्राणाम्, मृदूनां वा दृढ़ीकरणः। शोधनो व्रणस्य, लेखनो व्रणाद्यच्छिन्नमांसस्य, शोषणो द्रवधातोः, व्रण-मेहादीनां वा। पीड़नो व्रणस्य हृदयस्य वा वातकारित्वात्। तस्याप्यतिसेवया दोषमाह—स एवंगुण इत्यादि। चुमुचुमायनं रात्रिकालिप्तस्येव त्वक्पीड़ा। आक्षेपणम् अतिशयेन कम्पनम्। प्रभृतिग्रहणादन्यानपि वातविकारानर्द्दितादीन् करोति ॥ १४ ॥

अतः सर्व्वेषामेव द्रव्याण्युपदेक्ष्यामः। तद्यथा—काकोल्यादिः क्षीरघृतवसा-मज्ज-शालि-षष्टिक-यव-गोधूम-माषशृङ्गाटक-कसेरुकत्रपुसैर्व्वारुकालावुकालिन्द-कतक-गिलोड्य-*-पियालपुष्करवीजकाश्मर्य्यमधूकद्राक्षाखर्ज्जूरराजादनताल-नारिकेलेक्षुविकारवलातिवलात्मगुप्ताविदारीपयस्यागोक्षुरकक्षीरमोरटमधूलिका-कुष्माण्डप्रभृतीनि समासेन मधुरो वर्गः ॥ १५ ॥

दाड़िमामालक-मातुलुङ्गाम्रातक-कपित्थकरमर्द्द-वदरकोल-प्राचीनामलक-तिन्तिड़ीककोशामकभव्य-पारावत वेत्रफल-लकुचाम्लवेतसदन्तशठदधितक्रसुरा-शुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लो वर्गः ॥ १६ ॥

सैन्धवसौवर्च्चलविड़पाक्यरोमकसामुद्रकपक्तिमयवक्षारोषरप्रसूतसुवर्च्चिका-प्रभृतीनि समासेन लवणो वर्गः ॥ १७ ॥

पिप्पल्यादिः सुरसादिः शिग्रु मधुशिग्रुमूलकलशुनसुमुखशीतशिवकुष्ठदेव-दारु हरेणुकावल्गुजफल-चण्डा-गुग्गुलु-मुस्तलाङ्गलकी-शुकनासा-पीलुप्रभृतीनि सालसारादिश्च प्रायशः कटुको वर्गः ॥ १८ ॥

अत इत्यादि। अतोऽनन्तरं, सर्व्वेषां रसानां द्रव्याण्युपदेक्ष्यामः। क्षीरेत्यादि। शृङ्गाटकं द्विविधं स्थूलाल्पभेदेन। त्रपुसं तिरसीति लोके। एर्व्वारुः रोमशा कर्कटी, गिलोड्यः कालकलकः, गिलोड्यकन्दः प्रावृड्जातः शणपत्रिकाकारः वल्लीयुक्तो गिल्लोठीति लोके, अङ्गलोड्य इत्यन्ये पठन्ति चित्रोटकमिति च व्याख्यानयन्ति। पियालश्चारः, पुष्करवीजं पद्मवीजं, राजादनः क्षीरिकः, पयस्या विदारीभेदः। क्षीरमोरटः किलाटमस्तु, पीलुपर्णीत्येके। मधूलिका कर्कटकः ॥ १५ ॥

दाड़िमेत्यादि। पारावतः कामरूपे मधुराम्लरसफलम्। दन्तशठो जम्बीरः। शुक्तं सन्धानक विशेषश्चुक्रमित्येके। सौवीरकतुषोदके निस्तुषसतुषयवकृते त्रिवृत्कषायसहिते सन्धाने। धान्याम्लं काञ्जिकम्। प्रभृतिग्रहणात् आमलक्या-( शिण्डाक्या )-दीनामवबोधः ॥ १६ ॥

सैन्धवेत्यादि। पाक्यमुद्भिदं। रोमकं शाकम्भरीदेशोत्थं, श्वेतलवणमित्यन्ये। सामुद्रं समुद्र-समीपभवं, गुर्ज्जरराष्ट्रे प्रचुरं भवति। पक्तिमं पाकाभिनिर्वृत्तं, फुल्लालवणमित्युच्यते। ऊषरप्रसूतम् ऊषरलवणम्। प्रभृतिग्रहणाट्टङ्कणक्षारादीनामवबोधः ॥ १७ ॥

पिप्पल्यादिरित्यादि। शीतशिवं कर्पूरम्, अवल्गुजफलं वाकुचीवीजं, चण्डा अजमोदाकारा सुगन्धिद्रव्यम्। लाङ्गलकी कलिकारिका, शुकनासा श्योनाकः ॥ १८ ॥

---

* कालङ्कतकाङ्कलोड्य इति पाठान्तरम्।

आरग्वधादिगुडूच्यादिर्मण्डूकपर्णीवेत्रकरीर-हरिद्राद्वयेन्द्रयववरुणस्वादुकण्टक-सप्तपर्ण-बृहतीद्वय-शङ्खिनी-द्रवन्ती-त्रिवृत्-कृतवेधन-कर्कोटक-कारवेल्लक-वार्त्ताक-करीर-करवीर-सुमनःशङ्खपुष्प्यपामार्गत्रायमाणाशोकरोहिणीवैजयन्तीसुवर्च्चला-पुनर्नवावृश्चिकालीज्योतिष्मतीप्रभृतीनि समासेन तिक्तो वर्गः ॥ १९ ॥

न्यग्रोधादिरम्बष्ठादिः प्रियङ्ग्वादी रोध्रादिस्त्रिफला शल्लकीजम्ब्वाम्रबकुल-तिन्दुकफलानि कतकशाकफलपाषाणभेदकवनस्पतिफलानि सालसारादिश्च प्रायशः कुरुवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णकप्रभृतीनि नीवा-रकादयो मुद्गादयश्च वदलाः समासेन कषायो वर्गः ॥ २० ॥

तत्रैषां रसानां संयोगास्त्रिषष्टिर्भवन्ति । तद्यथा—पञ्चदश द्विकाः, विंशति-स्त्रिकाः, पञ्चदश चतुष्काः, षट् पञ्चकाः, एकशः षड्रसाः, एकः षट्क इति । तेषामन्यत्र प्रयोजनानि वक्ष्यामः ॥ २१ ॥

आरग्वधादिरित्यादि । मण्डूकपर्णी ब्राह्मी, वेत्रकरीरो वेत्राङ्कुरः, स्वादुकण्टको विकङ्कतः वृक्ष-कण्टकारिकेति प्रसिद्धः । शङ्खिनी यवतिक्ताभेदः, कृतवेधनः कोशातकी, सुमनाः जाती, अशोक-रोहिणी कटुका, वैजयन्ती तर्कारी, सुवर्च्चला सूर्य्यावर्त्तो वृश्चिकपत्री, ज्योतिष्मती काकुदमर्द-निका ॥ १९ ॥

न्यग्रोधादिरित्यादि । कतकस्तोयप्रसादनफलम् । शाकः खरमसृणपत्रपृष्ठोदरः, तयोः फलम् । वनस्पतयो न्यग्रोधादयः, तेषां फलानि । सालसारादेस्तिक्तानुरसत्वात् कथं कषायवर्गेऽस्य पाठ इत्याह—प्रायशः, कषाय इति शेषः । कुरुवकः कण्टसेलयाकः, "कोविदारमपि काञ्चनारकं मल्लिकां विचकिलं विदुर्बुधाः" इति हलायुधः । कोविदारः काञ्चनारकः, जीवन्ती डोडी, चिल्ली क्षेत्रवास्तुकः, पालङ्क्या शाकविशेषः पालङ्क इति लोके । सुनिषण्णकः सिरिवालिका, चतुष्पर्णीत्य-परे । नीवारकादयः कुधान्यानि, मुद्गादयो वैदलाः ॥ २० ॥

तत्रैषामित्यादि । द्विषष्टिदोषभेदेषु द्विषष्टी रसभेदा योज्याः, स्वस्थे तु षडेव समुद्दिताः । एषान्तु विवरणमुत्तरतन्त्रे स्वयमेवाचार्य्यः करिष्यतीति, अस्माभिस्तु ग्रन्थबाहुल्यभयाद् विवरणं न कृतम् ॥ २१ ॥

भवति चात्र।

जग्धाः षड्धिगच्छन्ति बलिनो वशतां रसाः।
यथा प्रकुपिता दोषा वशं यान्ति बलीयसः॥ २२॥

इति सुश्रुतसंहितायां सूत्रस्थाने रसविशेषविज्ञानीयो नाम
द्विचत्वारिंशोऽध्यायः॥ ४२॥

इदानीं रसानामेकैकानामनभ्यासप्रतिपादितबहुतरदोषाणां विशिष्टविषये दोषा न भवन्तीति निर्दिशन्नाह—जग्धा इत्यादि। जग्धा भक्षिताः, षड् रसा एकैकशः कृत्वा अभ्यस्ता अपि बलिनः शक्त्युपचयबलयुक्तस्य पुरुषस्य वश्यतां वशभावं यान्ति गच्छन्ति, दोषकारिणो न भवन्तीत्यर्थः। यथा दोषा एव बलीयसो बलयुक्तपुरुषस्य कार्य्यकारणक्षमा न भवन्ति, एवं रसा अपीत्यर्थः। बलिनो रसस्येति केचित्॥ २२॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
रसविशेषविज्ञानीयव्याख्यानाम द्विचत्वारिंशोऽध्यायः॥ ४२॥

---

# त्रिचत्वारिंशोऽध्यायः ।

अथातो वमनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वमनद्रव्याणां फलादीनां मदनफलानि श्रेष्ठतमानि भवन्ति। अथ मदनपुष्पाणामातपपरिशुष्काणां चूर्णप्रकुञ्चं प्रत्यक्पुष्पीसदापुष्पी-निम्बकषायाणामन्यतमेनालोड्य मधुसैन्धवयुक्तां पुष्पचूर्णमात्रां पाययित्वा वामयेत्। मदनशलाटुचूर्णान्येवं वा वकुलरम्यकोपयुक्तानि मधुलवणयुक्तान्यभिप्रतप्तानि; मदनशलाटुचूर्णसिद्धां वा तिलतण्डुलयवागूम्। निर्वृत्तानां वा नातिहरितपाण्डूनां कुशमूढ़ावबद्धमृद्गोमयप्रलिप्तानां यव-तुष-मुद्गमाषशाल्यादिधान्यराशावष्टरात्रोषितक्लिन्नभिन्नानां फलानां फलपिप्पलीरुद्धत्यातपे शोषयेत्, तासां दधिमधुपललविमृदितपरिशुष्काणां सुभाजनस्थानामन्तर्नखमुष्टिमुष्णे यष्टीमधुककषाये कोविदारादीनामन्यतमे वा कषाये प्रमृज्य रात्रिपर्य्युषितं मधुसैन्धव-

अथातो वमनद्रव्येत्यादि। विकल्पः प्रयोगः। वमनद्रव्याणामित्यादि। फलादीनामिति फलं मदनफलम्, आदिग्रहणात् कुटजजीमूतकेक्ष्वाकुधामार्गवकृतवेधनानि गृह्यन्ते। मदनपुष्पाणामिति अत्र पुष्पशब्दः फले वर्त्तते, कारणे कार्य्योपचारात्। चूर्णप्रकुञ्चं पुनरस्य मध्यमा मात्रा; प्रकुञ्चः पलं, मुष्टिरित्येके, कराङ्गुलिचतुष्कमूलावधिमितं चूर्णमित्यपरे। प्रत्यक्पुष्पी अपामार्गः, सदापुष्पी अर्कस्तस्य मूलं, निम्बः प्रसिद्धः, कषायाणां त्रित्वाद् योगत्रयमुक्तम्। पुष्पचूर्णमात्रामिति मात्रा च तन्त्रान्तरे चूर्णशरावः, अत्र च मात्राशब्दो यथायोगवचनोऽभिप्रेतः। अस्याग्रे 'अक्रूराशयमुपस्थितदोषं सद्यःप्रच्छर्द्दनम्' इति केचित् पठन्ति, तन्न, निबन्धकारैरपठितत्वात्। मदनेत्यादि। शलाटु आमं फलम्। एवमिति एवंशब्दात् प्रत्यक्पुष्प्यादीनां त्रयः कषाया ज्ञेयाः, तेन योगा अपि त्रयः। रम्यको महानिम्बः। अभिप्रतप्तानि उष्णीकृतानि, पाययित्वा वामयेदित्यनुवर्त्तनीयम्। शलाटुचूर्णेषु योगान्तरं निर्दिशन्नाह—मदनेत्यादि। अत्रापि चूर्णस्य प्रकुञ्च एव, तिलतण्डुलयोस्तु यवागूप्रमाणेन मात्राकल्पनम्, लेहयित्वा वामयेदिति ज्ञेयम्, लेह्यत्वाद् यवाग्वाः। तदेवं शलाटुचूर्णेषु मदनस्य चत्वारो योगाः। मदनफलानां पक्वानां प्रधानं योगं निर्दिशन्नाह—निर्वृत्तानामित्यादि। निर्वृत्तानां निष्पन्नानां नातिहरितपाण्डुत्वेन, परिपाकातिपाण्डुत्वे हि वीर्य्यातिक्रमः स्यात्। कुशमूढ़ः कुशविरचितः पुटकः। फलपिप्पलीः मदनफलवीजानि। तासामिति तासां फलपिप्पलीनाम्। अन्तर्नखमुष्टिमिति नखानां मध्ये मुष्टिर्न तु पारिभाषिकं पलाभिधानं, अन्तर्नखमुष्टिं यष्टीमधुककषाये आतुरं पाययेदिति सम्बन्धः।

युक्तमाशीर्भिरभिमन्त्रितमुदङ्मुखः प्राङ्मुखमातुरं पाययेदनेन मन्त्रेणाभिमन्त्र्य—

ब्रह्मदक्षाश्विरुद्रेन्द्र-भूचन्द्रार्कानलानिलाः।
ऋषयः सौषधीग्रामा भूतसङ्घास्तु पान्तु ते॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥ २। ३॥

विशेषेण श्लेष्मज्वरप्रतिश्यायान्तर्विद्रधिषु। अप्रवर्त्तमाने वा दोषे पिप्पलीवचागौरसर्षपकल्कोन्मिश्रैः सलवणैरुष्णाम्बुभिः पुनःपुनः प्रवर्त्तयेदा सम्यग्वान्तलक्षणादिति। मदनफलमज्जचूर्णं वा तत्क्वाथपरिभावितं मदनफलकषायेण। मदनफलमज्जसिद्धस्य वा पयसः सन्तानिकां क्षौद्रयुक्ताम्। मदनफलमज्जसिद्धं वा पयः। मदनफलमज्जसिद्धेन वा पयसा यवागूम्। अधोभागास्रक्पित्तहृद्दाहयोः। मदनफलमज्जसिद्धस्य वा पयसो दधिभावमुपगतस्य दध्युत्तरं दधि वा, कफप्रसेकच्छर्दिमूर्च्छातमकेषु। मदनफलमज्जरसं भल्लातकस्नेहवदादाय फाणितीभूतं लेहयेत्, आतपपरिशुष्कं वा तमेव मदनफलमज्जचूर्णं जीवन्तीकषायेण,

कोविदारेत्यादि। कोविदारादीनां संशोधनसंशमनीयोक्तानामेकादशानामन्यतमस्यैकतमस्य कषायैः। एतेनैकादश योगा उक्ताः। प्रत्यूषे पाययेदिति सम्बन्धः। किंविशिष्टमन्तर्नखमुष्टिम्? रात्रिपर्युषितं मधुसैन्धवयुक्तञ्च। आशीर्भिरभिमन्त्रितमिति इष्टाशानिष्पादनमन्त्रोऽपि आशीः, ताभिर्वेदोक्ताभिरभिमन्त्रितमन्तर्नखमुष्टिम्। उदङ्मुख उत्तराभिमुखो वैद्यः प्राङ्मुखं पूर्व्वाभिमुखमातुरं मन्त्रेण अभिमन्त्र्य। मन्त्रमाह— ब्रह्मदक्षेत्यादि। मन्त्रार्थस्त्वदर्शनीयः, आवृत्त्यैव केवलया मन्त्राणां फलदत्वात्॥ १—३॥

अस्य योगस्य विषयं नियमयन्नाह— विशेषेणेत्यादि। विशेषेण अतिशयेन, श्लेष्मज्वरादिषु ज्ञेय इत्यध्याहारः। अप्रवर्त्तमानस्य दोषस्य प्रवर्त्तमाने हेतुं दर्शयन्नाह— अप्रवर्त्तमान इत्यादि। वुर्वमनबहुदोषविषययोगमाह— मदनेत्यादि। मदनफलमज्जा मदनफलमध्यस्य स्निग्धो भागः, सकलमेव मदनफलमित्यन्ये। मदनफलकषायेण पाययेदित्यध्याहारः। मदनेत्यादि। सन्तानिकामिति लेहयेदिति सम्बन्धः। सन्तानिका क्षीरस्योपरितनस्त्यानो भागः। मदनफलमज्जसिद्धं वा पयः पाययेदित्यध्याहारः। अत्रापि प्रकुञ्चः। मदनफलमज्जसिद्धेन वा पयसा यवागूम्। पयःसन्तानिकायवागूनां विषयमाह— अधोभवरक्तपित्ते पित्तकृतहृदयदाहे च। मदनेत्यादि। दध्युत्तरं सरं लेहयेदिति सम्बन्धः। दधि वा पाययेदित्यध्याहारः। एतद् योगद्वयमुक्तम्। मदनेति। मदनफलमज्जरसं फाणितीभूतं काकवीभूतं लेहयेदिति सम्बन्धः। भल्लातकस्नेहवदादायेति द्विव्रणीयोक्तेन विधिना। आतपेति जीवन्तीकषायेण आतपविशुष्कं तमेव मदनफलमज्जरसं पाययेदिति शेषः। जीवन्ती

पित्ते कफस्थानगते। मदनफलमज्जक्वाथं वा पिप्पल्यादिप्रतीवापं तच्चूर्णं वा निम्बरूपिकाकषाययोरन्यतरेण सन्तर्पणकफजव्याधिहरं, मदनफलमज्जचूर्णं वा मधूककाश्मर्य्यद्राक्षाकषायेण। मदनफलविधानमुक्तम् ॥ ४ ॥

जीमूतककुसुमचूर्णं वा पूर्व्ववदेव क्षीरेण, निर्वृत्तेषु क्षीरयवागूं, रोमशेषु सन्तानिकां, अरोमशेषु च दध्युत्तरं, हरितपाण्डुषु दधि, तत्कषायसंसृष्टां वा सुरां, कफारोचककासश्वासपाण्डुरोगयक्ष्मसु, पर्य्यागतेषु मदनफलमज्जवदुप-

शुष्कयावनलवर्णा लतौषधी पार्व्वतीया। एतयोर्योगयोर्विषयमाह—पित्ते कफस्थानगते इति। मदनफलमज्जक्वाथं वेत्यादि। मदनफलमज्जकाथं वेत्यादेकः योगः। तच्चूर्णं निम्बरूपिका-कषाययोरन्यतरेणेति योगद्वयं; तच्चूर्णं मदनफलमज्जचूर्णं, रूपिका अर्कः। एतेषां त्रयाणां योगानां विषयं नियमयन्नाह—सन्तर्पणेत्यादि। द्वात्रिंशत्तमं योगं केचित् पठन्ति, तन्नेच्छति गयी। व्याख्यातमेवोपसंहरन्नाह—मदनेत्यादि। एतेनाप्रवर्त्तमानव्यापच्चिकित्सां विहाय मदन-फलयोगा एकत्रिंशदुक्ताः ॥ ४ ॥

मदनफलस्य पश्चाज्जीमूतकं दर्शयन्नाह—जीमूतकेत्यादि। जीमूतको देवदाली। पूर्व्ववदेवेति प्रत्यक्पुष्पादिद्रव्यत्रयक्वाथैस्त्रयो योगाः पुष्पचूर्णस्य। अन्ये तु चरके—प्रत्यक्पुष्पादियोगा न सन्तीति क्षीरेणैवान्यमेकं योगमिच्छन्ति, पूर्व्ववदित्यनेन प्रकुञ्चं मधुसैन्धवादियुक्तञ्चामनन्ति। निर्वृत्तेष्विति निर्वृत्तेषु जातमात्रेषु, क्षीरयवागूं जीमूतशलाटुक्वथितक्षीरयवागूम्। रोमशेष्विति रोमशेषु कठिनावस्थां प्राप्तेषु। सन्तानिकामिति जीमूतकचूर्णक्वथितसन्तानिकाम्। अरोमशेष्विति अरोमशेषु बृहत्तमेषु, चूर्णक्वथितक्षीरस्य दधिभावं गतस्योत्तरं सरकम्। हरितपाण्डुष्विति हरित-पाण्डुषु कठिनतमेषु तच्चूर्णक्वथितक्षीरस्य दधि। तत्कषायसंसृष्टामिति जीमूतकषायकृताम्। तस्यास्तु कल्पनं जीमूतक्वाथे माषाः साधनीयाः, जीमूतकस्य क्वाथेनैव शालितण्डुलाः प्रक्षालनीयाः, माषाः शालितण्डुलाः, ते च संक्षुद्य एकत्र पिण्डाः कार्य्याः, तान् शुष्कचूर्णितान् कृत्वा अपर-शालितण्डुलचूर्णं पिष्टपाचनिकायां जीमूतकषायोष्मणा सम्यग् उत्स्वेद्यावतारयेत्, ततः स्विन्नशीतलस्य तस्य पिष्टस्य त्रयो भागाः किण्वभागश्चतुर्थः सन्धानार्थे भार्गीक्वाथस्ततस्सर्व्वं कलसे निधापितं जातरसं सुरा भवति। पैष्टीयं तेनात्र नास्ति गुड़ो न वा मधु। अन्ये पुन-रत्रानुक्तोऽपि गुड़ो दातव्य इत्याहुः। गुड़प्रमाणं त्वर्शोनिर्द्दिष्टाभयारिष्टक्वाथशेषे द्रोणे गुड़पलशत-द्वयं प्रक्षेपविभागपरिभाषारूपेण सर्व्वत्र। अन्ये तु जीमूतकषायेण सह सुरामेव, न पुनर्जीमूत-कषायसाधितामिति वदन्ति। जीमूतकुसुमचूर्णं वेत्यादीनां योगानां विषयमाह—कफेत्यादि। दद्यादिति शेषः। पर्य्यागतेषु नातिहरितपाण्डुष्वतिदेशेन योगं निर्द्दिशन्नाह—पर्य्यागतेष्वित्यादि। पर्य्यागतेषु मदनफलमज्जवदिति वत्करणात् मदनपुष्पशलाटुयोगान् वर्ज्जयित्वा अन्ये ये मदनफल योगास्ते सर्व्वे पर्य्यागतेषु जीमूतकेषु विज्ञेयाः। एतेन पर्य्यागतजीमूतकयोगाश्चतुर्व्विंशति-रुक्ताः। पर्य्यागतेषु परिपक्वेष्वित्यन्ये। कुटजफलयोगान् निर्द्दिशन्नाह—तद्वदिति। अत्रापि जीमूतक-

योगः। तद्वदेव कुटजफलविधानम्। कृतवेधनानामप्येष एव कल्पः। इक्ष्वाकुकुसुमचूर्णं वा पूर्व्ववदेव क्षीरेण, कासश्वासच्छर्द्दिकफरोगेषूपयोगः॥ ५॥

धामार्गवस्यापि मदनफलमज्जवदुपयोगो विशेषतस्तु गरगुल्मोदरकासश्वासश्लेष्मामयेषु, वायौ वा कफस्थानगते। कृतवेधनफलपिप्पलीनां वमनद्रव्यकषायपरिपीतानां बहुशश्चूर्णमुत्पलादिषु दत्तमाघ्रातं वामयति, तत्त्वनवबद्धदोषेषु यवागूमा कण्ठात् पीतवत्सु च विदध्यात्। वमनविरेचनशिरोविरेचनद्रव्याण्येवं वा प्रधानतमानि भवन्ति॥ ६॥

भवतश्चात्र।

वमनद्रव्ययोगानां दिगियं सम्प्रकीर्त्तिता।
तान् विभज्य यथाव्याधि कालशक्तिविनिश्चयात्॥

वचतुर्व्विंशतियोगा ज्ञेयाः। कृतवेधनयोगान् निर्द्दिशन्नाह—कृतवेधनानामित्यादि। अत्रापि कुटजवचतुर्व्विंशतियोगा इत्यर्थः। कृतवेधनं कोशातकी। इक्ष्वाकुयोगान् निर्द्दिशन्नाह—इक्ष्वाकिति। इक्ष्वाकुः कटुकालाबूः। तथा पूर्व्ववत् मदनफलवत्; एवं क्षीरेण न पुनः कुटजवत् कृतवेधनवच्च, तयोः पुष्पशलाटुवर्ज्जनात्। इति मदनफलवदेकत्रिंशत्। तथा पूर्व्वग्रहणेन सुरा गृह्यते। एतेनेक्ष्वाकुयोगास्त्रयस्त्रिंशदुक्ताः॥ ५॥

धामार्गवयोगान् निर्द्दिशन्नाह—धामार्गवस्येत्यादि। एतेन धामार्गवस्य चतुर्व्विंशतियोगाः। अपिशब्दात् पुष्पशलाटुक्षीरसुरायोगाश्च। वमनद्रव्येषु सर्व्वेषामेवातिदेशयोगानां मदनफलतुल्यकल्पानां मदनफलयोगविषय एव विषयो नापूर्व्वः। कृतवेधनेत्यादि। कृतवेधनग्रहणं समस्तजीमूतकभेदव्यापकम्। परिपीतानामिति भावितानाम्। उत्पलादिष्विति आदिग्रहणाद् रक्तोत्पलकुमुदपुण्डरीकसौगन्धिकानि गृह्यन्ते। तस्य प्रयोगविशेषस्य विषयं दर्शयन्नाह—तत्त्वित्यादि। तत् तु प्रागुक्तं चूर्णं विदध्यादिति सम्बन्धः। केषु? अनवबद्धदोषेषु अत्युद्रिक्तेषु दोषेषु पुरुषेष्वित्यर्थः। पुनरपि किंविशिष्टेषु? यवागूमाकण्ठात् पीतवत्सु। तदनवबद्धदोषेष्विति केचित् पठन्ति। भावनायाः फलातिशयं दर्शयन्नाह—वमनेत्यादि। एवमिति तद्द्रव्यस्वरसैर्बहुशो भावितानि॥ ६॥

भवतश्चात्र। वमनद्रव्येत्यादि। दिगियं सम्प्रकीर्त्तितेति इयं दिक् सम्प्रकीर्त्तिता कथितेत्यर्थः। तान् चान्तिद्रव्यविकल्पितान् विभज्य पृथक्कृत्य यथाव्याधि वमनान्युपकल्पयेदित्यग्रतने सम्बन्धः। कस्मात्? कालशक्तिविनिश्चयात्। कषायैरित्यादि। केषु वमनान्युपकल्पयेदित्याह—

कषायैः स्वरसैः कल्कैश्चूर्णैरपि च बुद्धिमान् ।
पेयलेह्याद्यभोज्येषु वमनान्युपकल्पयेत् ॥ ७८ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने वमनद्रव्यविकल्पविज्ञानीयो नाम
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

पेयलेह्याद्यभोज्येषु, कैः कृत्वा ? कषायैरित्यादिभिः । कषायैः शृतशीतफाण्टभेदात् त्रिविधैः, स्वरसैः यन्त्रादिपीडिताद्र्द्रव्योत्थैः, कल्कैः दृषदि पिष्टैः, चूर्णैः शुष्कपेषणाणूकृतावयवैः । अपिशब्दाद् वमनद्रव्यपक्वैः स्नेहैरित्यनुक्तं समुच्चीयते । भोज्यग्रहणान्मोदकोत्कारिकाशष्कुलीप्रभृतीनां ग्रहणम् ॥ ७ । ८ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे
वमनद्रव्यविकल्पविज्ञानीयव्याख्यानाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

# चतुश्चत्वारिंशोऽध्यायः ।

अथातो विरेचनद्रव्यविकल्पविज्ञानीयमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अरुणाभं त्रिवृन्मूलं श्रेष्ठं मूलविरेचने ।
प्रधानं तिल्वकस्त्वक्षु फलेष्वपि हरीतकी ॥
तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका ।
सुधापयः पयःसूक्तमिति प्राधान्यसंग्रहः ॥
तेषां विधानं वक्ष्यामि यथावदनुपूर्व्वशः ॥ २ ॥
वैरेचनद्रव्यरसानुपीतं मूलं महत् त्रैवृतमस्तदोषम् ।
चूर्णीकृतं सैन्धवनागराढ्यमम्लैः पिबेन्मारुतरोगजुष्टः ॥
इक्षोर्विकारैर्मधुरै रसैस्तत् पैत्ते गदे क्षीरयुतं पिबेद् वा ।
गुड़ूच्यरिष्टत्रिफलारसेन सव्योषमूत्रं कफजे पिबेत् तत् ॥ ३ ॥

अथातो विरेचनद्रव्येत्यादि । विकल्पो भेदः । अरुणाभमित्यादि । अरुणाभम् ईषल्लोहितं, त्रिवृत् निशोत्र इति लोके । मूलविरेचने मूलविरेचनानां मध्ये । तिल्वकः स्वल्पलोध्रः । त्वक्षु इति त्वग्विरेचनानां मध्ये तिल्वकत्वक् प्रधानमित्यर्थः । सुधा सेहुण्ड इति लोके, पयःसूक्तमिति पयःसु क्षीरविरेचनानां मध्ये सुधापयः प्रधानमुक्तमिति सम्बन्धः । फलेष्वपि हरीतकी अस्याग्रे 'तैलेष्वेरण्डजं तैलं स्वरसे कारवेल्लिका' इति जेज्झटाचार्य्यः पठति, तन्नेच्छति गयी । विधानमिति विधानं प्रयोगकरणम्, एषां त्रिवृदादीनां, यथावत् यथासम्भवं, अनुपूर्व्वशः अनुक्रमेणेत्यर्थः ॥१।२॥

वैरेचनेत्यादि । वैरेचनद्रव्यरसानुपीतं त्रिवृदादिद्रव्यरसानुभावितं, अस्तदोषं क्रिम्यादिदोषरहितं, आढ्यमधिकं, अम्लैः शुक्तसौवीरतुषोदकदध्यम्लमद्यमस्तुभिः । 'वैरेचनस्वरसक्काथपीतां गाढ़मूलां त्रिवृतां कालपुष्टाम् । चूर्णीकृतां नागरसैन्धवाढ्यां पिबेदम्लैरनिलव्याधिजुष्टः' इति क्वचित् पाठः । इक्षोरित्यादि । इक्षोर्विकारैः खण्डादिभिः, न पुनर्गुड़ेन ; उष्णवीर्य्यत्वात् तस्य, न च फाणितेन, त्रिदोषकरत्वात् तस्य ; न चेक्षुरसेन विदाहित्वात् तस्येति । मधुरै रसैः काकोल्यादिक्काथैः, तदिति त्रिवृन्मूलम् । 'स्वादुकाथैश्चापि नोष्णैर्विकारैः पैत्ते द्राक्षाक्षीरयुक्तां पिबेद् वा' इति केचित् पठन्ति । गुड़ूचीत्यादि । अरिष्टो निम्बः । रसोऽत्र क्काथः । तत् त्रिवृन्मूलम् । अन्ये तु 'क्षौद्रारिष्टत्रिफलाक्काथयुक्ता मूत्रैः पेया कफजे व्योषगाढ़ा' इति पठन्ति । तत्र पित्तमपि द्रष्टव्यं, तेन पित्ताधिके श्लेष्मणि द्राक्षारसेन, कफाधिके मूत्रैरिति । अयन्तु पाठोऽभावात् न समग्रो लिखितः ॥ ३ ॥

त्रिवर्णकत्र्यूषणयुक्तमेतद् गुडेन लिह्यादनवेन चूर्णम्।
प्रस्थे च तन्मूलरसस्य दत्त्वा तन्मूलकल्कं कुडवप्रमाणम्॥
कर्षोन्मिते सैन्धवनागरे च विपाच्य कल्कीकृतमेतदद्यात्।
तत्कल्कभागः समहौषधार्द्धः ससैन्धवो मूत्रयुतश्च पेयः॥ ४॥
समास्त्रिवृन्नागरकाभयाः स्युर्भागार्द्धकं पूगफलं सुपक्वम्।
विडङ्गसारो मरिचं सदारु योगः ससिन्धूद्भवमूत्रयुक्तः॥ ५॥
विरेचनद्रव्यभवन्तु चूर्णं रसेन तेषां भिषजा विमृद्य।
तन्मूलसिद्धेन च सर्पिषाक्तं सेव्यं तदाज्ये गुटिकीकृतञ्च॥
गुडे च पाकाभिमुखे निधाय चूर्णीकृतं सम्यगिदं विपाच्य।
शीतं त्रिजाताक्तमथो विमृद्य योगानुरूपा गुटिकाः प्रयोज्याः॥ ६॥

वातश्लेष्मप्रयोगमाह—त्रिवर्णकेत्यादि। त्रिवर्णकं त्रिजातकं, एतत् त्रिवृन्मूलं, तत्र त्रिवर्ण-त्रिकटुकगुडानामेको भागः, अपरस्त्रिवृतायाः, तस्याः प्रधानत्वात्। वातश्लेष्मविषयमपरमपि प्रयोगमाह—प्रस्थे चेत्यादि। प्रस्थो द्वात्रिंशत् पलानि, द्रवद्रव्यत्वात्। तन्मूलरसस्य त्रिवृन्मूल-क्वाथस्य, तन्मूलं त्रिवृन्मूलम्। कुडवश्चत्वारि पलानि। कर्षोन्मिते इति प्रत्येकं कर्षप्रमाणे। विपाच्य कल्कीकृतमेतदिति एतत् सर्व्वं तावत् पक्तव्यं, यावत् कल्कावशेषं भवति। अद्यात् भक्षयेत्। अन्ये त्वेवं पठन्ति—'क्वाथप्रस्थे कुडवं तस्य दद्यात् युक्त्या दद्यान्नागरं सैन्धवञ्च। सर्व्वं पचेत् यावदेतद् घनं स्याल्लेहीभूतं तत् प्रयोज्यं ततस्तु' इति। अन्ये तु कुडवं घृतस्य दद्यात् इति पठन्ति, तत्र कुडवोऽष्टौ पलानि, सैन्धवनागरे च प्रत्येकं पलिके, तन्मते घृतमेतद्विरेचनं, तच्च वातपित्ते, वाताधिककफे इत्यन्ये। वातश्लेष्मविषयमेव योगान्तरमाह—तदित्यादि। तत्-कल्कः त्रिवृत्कल्कः, समहौषधार्द्धः शुण्ठ्याः पलार्द्धयुक्तः। ससैन्धव इति सैन्धवमपि त्रिवृदर्द्धम्। अन्ये तु पठन्ति—'त्रिवृत्कल्को नागरभागयुक्तः ससैन्धवो मूत्रयुतः प्रदेयः'। सर्व्वविषयकान् योगानाह—समा इत्यादि। भागार्द्धकमिति आदिद्रव्यापेक्षया पूगादिकं प्रत्येकमर्द्धभागिकं ग्राह्यम्। विडङ्गसारो विडङ्गबीजानि, सिन्धूद्भवं सैन्धवं, तदप्यर्द्धभागेन ग्राह्यम्। ससैन्धवमूत्रयुक्तो योगः पेय इति सम्बन्धः। 'समे त्रिवृन्नागरे' इति केचित् पठन्ति॥ ४। ५॥

विरेचनेत्यादि। विरेचनद्रव्यभवं चूर्णं यदृच्छया ग्राह्यम्। रसेन तेषां विमृद्य तेषां वैरेचन-द्रव्याणां रसेन भावना कार्य्येत्यर्थः, यावता चूर्णमार्द्रीभवति तावद्रसो देयः। भिषजा वैद्येन योगानुरूपवटिकाः प्रयोज्या इति सम्बन्धः। तन्मूलसिद्धेन च सर्पिषाक्तमिति विरेचनद्रव्यजटा-पक्वेन घृतेन पुनरपि भावना कार्य्येत्यर्थः, यावता स्नैग्ध्यमुत्पद्यते तावन्मात्रं घृतं देयमित्यर्थः। सेव्यं सेवनीयं, तदाज्ये तस्मिन्नेव घृते, गुटिकीकृतं गुटिकारूपं कृतम्। निधाय निक्षिप्य, गुडोऽत्र द्विगुणो देयः, त्रिजातकमत्र यावता सौगन्ध्यं भवति॥ ६॥

वैरेकीयद्रव्यचूर्णस्य भागं सिद्धं साद्धं क्वाथभागैश्चतुर्भिः।
आमृद्गीयात् सर्पिषा तच्छृतेन तत्क्वाथोष्मस्वेदितं सामितश्च ॥
पाकप्राप्ते फाणिते चूर्णितं तत् क्षिप्तं पक्वञ्चावतार्य्य प्रयत्नात्।
शीतीभूता मोदका हृद्यगन्धाः कार्य्यास्त्वेते भक्ष्यकल्पाः समासात् ॥ ७

रसेन तेषां परिभाव्य मुद्गान् यूषः ससिन्धूद्भवसर्पिरिष्टः।
वैरेचनेऽन्यैरपि वैदलैः स्यादेवं विदध्याद् वमनौषधैश्च ॥ ८ ॥

भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः प्रतिबध्य रज्ज्वा।
पक्वश्च सम्यक् पुटपाकयुक्त्या खादेत् तु तं पित्तगदी सुशीतम् ॥ ९ ॥

सिताजगन्धात्वक्क्षीरी-विदारीत्रिवृतः समाः।
लिह्यान्मधुघृताभ्यान्तु तृड् दाहज्वरशान्तये ॥ १० ॥

शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम्।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशकम् ॥ ११ ॥

मोदकभक्ष्यान्निर्दिशन्नाह—वैरेकीयेत्यादि। वैरेकीयद्रव्याणां त्रिवृच्छ्यामादीनां ग्रहणम्। क्वाथभागैरिति विरेचनद्रव्यक्वाथभागैश्चतुर्भिर्मन्देऽग्नौ घृतेन विरेचनद्रव्यसिद्धेन, सामिताभागं गोधूमचूर्णं तुल्यभागं प्रक्षिप्य मर्द्दयित्वा पिष्टपाचनिकायां धृत्वा उष्मणा स्वेदयित्वान्यस्मिन् फाणिते पाकप्राप्ते प्रक्षिप्य मोदकाः कार्य्याः ॥ ७ ॥

यूषकल्पं निर्दिशन्नाह—रसेनेत्यादि। तेषामिति तेषां विरेचनद्रव्याणाम्। अन्ये त्वेवं पठन्ति—'मुद्गानां वा तद्रसे भावितानां यूषः कल्प्यः सघृतः सैन्धवाढ्यः' इति। तद्रसे प्रधानकल्पनया त्रिवृतारसे। वैरेचने इति विरेचनद्रव्यभावितैरन्यैरपि वैदलैः मसूरादिभिर्यूषः स्यात् भवेदित्यर्थः। एवमिति एष एव वमनीयादियूषाणां कर्म्ममार्गः ॥ ८ ॥

पुटपाकक्रमविरेचनं निर्दिशन्नाह—भित्त्वेत्यादि। भित्त्वा विदार्य्य, त्रिभण्डी शुक्ला त्रिवृत्। पुटपाकयुक्त्या पुटपाकक्रमेण शालाक्योक्तक्रियाकल्पनिर्दिष्टपुटपाकविधिना; तेन काश्मर्य्यादिपत्राच्छादनकुशपरिवेष्टनं मृदावलेपनं निर्धूमाङ्गारान्तरूपस्वेदनादि सर्व्वमतिदेशेन लभ्यते। अन्ये त्वेवं पठन्ति—"इक्षुं द्विधा पाटयित्वावलिप्य त्रिवृत्कल्कैः प्रतिसन्धाय चापि। पक्वं सम्यक् पुटपाकक्रमेण खादेच्छीतं पित्तरोगाभिभूतः" इति, व्याख्यानयन्ति च—त्रिवृत्कल्कैरिति बहुवचनात् त्रिवृद्रादिकल्कैरित्यादिशब्दो लुप्तो निर्दिष्टो द्रष्टव्यः, तेनान्येषां वैरेचनिकानामयमेव पुटपाकविधिरिति द्योतयति ॥ ९ ॥

इदानीं वैरेचनलेहानाह—सितेत्यादि। सिता शर्करा, अजगन्धा (जवानिका) वन्ययवानी; बोथइ इत्यन्ये; त्वक्क्षीरी वंशलोचना, बिदारी बिराली, त्रिवृत् निशोत्रा इति लोके। शर्करेत्यादि।

पचेल्लेहं सिताक्षौद्रं पलार्द्धकुड़वान्वितम्।
त्रिवृच्चूर्णयुतं शीतं पित्तघ्नं तद् विरेचनम्॥ १२॥
त्रिवृच्छ्यामाक्षारशुण्ठी-पिप्पलीर्मधुनाप्नुयात्।
सर्व्वश्लेष्मविकाराणां श्रेष्ठमेतद् विरेचनम्॥ १३॥
वीजाढ्यपथ्याकाश्मर्य्य-धात्रीदाड़िमकोलजान्।
तैलभृष्टान् रसानम्ल-फलैरावाप्य साधयेत्॥
घनीभूतं त्रिसौगन्ध्यं त्रिवृत्क्षौद्रसमन्वितम्।
लेह्यमेतत् कफप्रायैः सुकुमारैर्विरेचनम्॥ १४॥
नीलीतुल्यं त्वगेलञ्च तस्त्रिवृत् ससितोपला।
चूर्णं सन्तर्पणं क्षौद्र-फलाम्लं सन्निपातनुत्॥ १५॥
त्रिवृच्छ्यामासिताकृष्णा-त्रिफलामाक्षिकैः समैः।
मोदकाः सन्निपातोर्द्ध्व-रक्तपित्तज्वरापहाः॥ १६॥

मरिचांशकमिति अंशश्चतुर्थो भागः। पचेदित्यादि। सिता शर्करा तस्याः पलं, क्षौद्रं मधु तस्यार्द्धकुड़वः चत्वारि पलानि, त्रिवृल्लेहस्य चतुर्थांशेन। अत्र मधुनोऽग्निसंयोगो न विरुध्यते, अनवस्थानात् प्रयोगभावाच्च। त्रिवृदित्यादि। श्यामा वृद्धदारकः, क्षारो यवक्षारः, आप्नुयात् लिह्यात्॥ १०—१३॥

वीजाढ्येत्यादि। वीजाढ्यान् सुपक्वान् पथ्यादीन् सहैव वीजैः साधयेत्, तान् रसान् पथ्याधात्रीदाड़िमकोलजान् एरण्डतैलभृष्टान्, पुनः फलैर्वीजपूरादिभिः सह आवाप्य प्रक्षिप्य साधयेत्, पथ्यादीनां यदृच्छया मात्रा, जले तु षोड़शगुणे तेषां क्वाथः कर्त्तव्यः, एरण्डतैलमात्रा तु यावता तस्य भर्ज्जनं सम्भवति, अम्लफलन्तु क्वाथस्य चतुर्थांशेन, त्रिसौगन्ध्यमात्रा तु यावता सौगन्ध्यं भवति, त्रिवृत् क्षौद्रन्तु प्रत्येकं लेहस्य चतुर्थांशेन, कफप्रायैः भूयिष्ठकफैः पुरुषैः सेव्यम्॥ १४॥

नीलीतुल्यमिति नीलीफलतुल्यं त्वगेलं, नीली श्रीफलिका, तैर्नील्यादिभिः सह तुल्या त्रिवृत्, ससितोपला शर्करायुक्ता, सन्तर्पणं प्रीणनम्। केचित् सतर्पणमिति पठन्ति व्याख्यानयन्ति च—तर्पणाः शक्तवः, तैः सह युक्तं। क्षौद्रफलाम्लं मधुवीजपूराम्लरसेन सह चूर्णं देयम्। सन्निपातनुत् प्रशान्ते सन्निपाते अनुबन्धपरिरक्षणार्थमित्यर्थः। वैरेचनिकमोदकमाह—त्रिवृदित्यादि। श्यामा वृद्धदारकः। त्रिफलायाः प्रत्येकं भागाः समाः। यद्यप्यत्र भागश्रुतिर्नास्ति तथापि सितामाक्षिके पक्त्वा गुटिकाः कार्य्याः। सितामाक्षिके समस्तद्रव्येभ्यो द्विगुणे आहेरे॥ १५। १६॥

त्रिवृद्भागास्त्रयः प्रोक्तास्त्रिफला तत्समा तथा।
क्षारकृष्णाविडङ्गानि सञ्चूर्ण्य मधुसर्पिषा।
लिह्याद् गुड़ेन गुटिकां कृत्वा वाप्यथ भक्षयेत्॥
कफवातकृतान् गुल्मान् प्लीहोदरहलीमकान्।
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम्॥ १७॥
चूर्णं श्यामात्रिवृन्नीली कट्वी मुस्ता दुरालभा।
चव्येन्द्रवीजं त्रिफला सर्पिर्मांसरसाम्बुभिः।
पीतं विरेचनं तद्धि रूक्षाणामपि शस्यते॥ १८॥
वैरेचनिकनिःक्काथ-भागाः शीतास्त्रयो मताः।
द्वौ फाणितस्य तच्चापि पुनरग्नावधिश्रयेत्॥
तत् साधुसिद्धं विज्ञाय शीतं कृत्वा निधापयेत्।
कलसे कृतसंस्कारे विभज्यर्त्तू हिमाहिमौ॥
मासादूर्द्ध्वं जातरसं मधुगन्धं वरासवम् *।
पिबेदसावेव विधिः क्षारमूत्रासवेष्वपि॥ १९॥

लेहगुटिकयोः प्रयोगमाह—त्रिवृदित्यादि। त्रिफलाया अपि त्रयो भागाः, क्षारकृष्णाविडङ्गानामपि त्रयो भागा ग्राह्याः। निरपायं व्यापद्रहितम्। चूर्णमाह—चूर्णमित्यादि। नीली नीलिनी श्रीफलिकेति लोके। कट्वी कटुरोहिणी। रूक्षाणां सर्पिषा मांसरसेन च, स्निग्धानां पुनरपिशब्दसमुच्चितानामम्बुना पानीयेन सह योगो देयः॥ १७। १८॥

वैरेचनिकं गौड़मासवं निर्दिशन्नाह—वैरेचनिकेत्यादि। वैरेचनिकं द्रव्यं सेहुण्डवर्ज्जितं ग्राह्यम्। एकैव त्रिवृदित्येके। शीता इत्यनेन वैरेचनिकक्काथे उष्णे फाणितं न योजयेदित्युक्तं भवति। द्वौ फाणितस्येति फाणितं काकवी। एतेन पञ्च भागाः क्वथनीया इत्यर्थः। साधुसिद्धमिति अर्द्धावशिष्टं। पुनः शीतग्रहणेनोष्णं न सन्धातव्यमित्युक्तम्। त्रिवृदधिकारे वैरेचनिकक्काथभागा इति सामान्यशब्दप्रयोगादपरवैरेचनिकानामप्येवमेवासव इति बोधयति। निधापयेत् क इत्याह—कलसे, कथम्भूते? कृतसंस्कारे; अन्तःक्षालितशुष्कस्य मधुपिप्पलीलेपोऽगुरुधूपनञ्चेति संस्कारः। विभज्यर्त्तू हिमाहिमाविति हिमे मासं धान्यराशौ स्थाप्यम्, अहिमे पुनरुष्णे पक्षमिति। जातरसमुत्पन्नरसं वरासवं पि दिति सम्बन्धः। जातरसस्य लक्षणमाह—मधुगन्धमिति। असावेव विधिः क्षारमूत्रासवेष्विति अयमेव विधिश्चिकित्सितादौ वक्ष्यमाणक्षारोदकासवादिषु गुड़मधुयोनिष्वन्येषु च हिमाहिमकालस्थापमस्य पाकप्राप्तिलक्षणस्य चेति॥ १९॥

* आसवं मधुगन्धिकम् इति पाठान्तरम्।

वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् ।
सुधौतांस्तत्कषायेण शालीनाञ्चापि तण्डुलान् ॥
अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् ।
शालितण्डुलचूर्णञ्च तत्कषायोष्मसाधितम् ॥
तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् ।
मण्डोदकार्थे क्वाथञ्च दद्यात् तत् सर्व्वमेकतः ॥
निदध्यात् कलसे तान्तु सुरां जातरसां पिवेत् ।
एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ॥ २० ॥
मूलानि त्रिवृतादीनां प्रथमस्य गणस्य च ।
महतः पञ्चमूलस्य मूर्व्वाशार्ङ्गेष्टयोरपि ॥
सुधां हैमवतीञ्चैव त्रिफलातिविषे वचाम् ।
संहृत्यैतानि भागौ द्वौ कारयेदेकमेतयोः ॥
कुर्य्यान्निःक्वाथमेकस्मिन्नेकस्मिंश्चूर्णमेव तु ।
क्षुण्णांस्तस्मिंस्तु निःक्वाथे भावयेद् वहुशो यवान् ॥
शुष्काणां मृदुभृष्टानां तेषां भागास्त्रयो मताः ।
चतुर्थं भागमावाप्य चूर्णानामत्र कीर्त्तितम् ॥

पैष्टीं सुरां वैरेचनीं दर्शयन्नाह—वैरेचनिकेत्यादि । त्रिवृदादिक्वाथेन माषविदलानि विभावयेदित्यर्थः । तत्कषायेणेति तेनैव वैरेचनिकक्वाथेन, अवक्षुद्यैकतः एकीकृत्य कुट्टयित्वेत्यर्थः । पिण्डान् कृत्वेति किण्वनिमित्तं पिण्डं कृत्वेत्यर्थः । तत्कषायोष्मसाधितमिति त्रिवृदादिक्वाथोष्मस्वेदितम् । तस्य पिष्टस्येत्यादि । पिष्टपाचनिकायां शीतलीकृत्य तस्य पिष्टस्य भागांस्त्रीन् पूर्व्वकिण्वभागेनैकेन मिश्रितान् कृत्वेत्यर्थः । क्वाथं दद्यादिति त्रिवृदादेः । तस्य प्रमाणन्तु आसुतज्ञा एव जानन्ति । एतस्यैव योगस्यान्यत्राप्यतिदेशं निर्द्दिशन्नाह—एष एवेत्यादि । एष एव सर्व्वपिष्टसुराणां विधिः, तथा वामनीयेषु मदनफलादिष्वपीत्यर्थः ॥ २० ॥

सौवीरकं वैरेचनमम्लसन्धानं निर्द्दिशन्नाह—मूलानीत्यादि । त्रिवृदादीनां संशोधनसंशमनीयोक्तानां ग्रहणम् । प्रथमो गणो विदारिगन्धादिः, मूर्व्वा चोरस्नायुः, शार्ङ्गेष्टा कोठकरञ्जः चिरपोटिकेत्यन्ये, अपरे तु काकजङ्घामाहुः । सुधा सेहुण्डः । हैमवती श्वेतवचा । एतानि सर्व्वाण्यपि त्रिवृदादीनि संहृत्य एकीकृत्य द्वौ भागौ कारयेत् । ततश्च एतयोर्द्वयोर्भागयोर्मध्ये एकस्मिन् भागे एकं निःक्वाथं कुर्य्यात्, एकस्मिंस्तु भागे चूर्णं कुर्य्यात् । क्षुण्णान् कुट्टितान् । पूर्व्वोक्ते निःक्वाथे भावयेत् सप्ताहं यावत् । तेषां यवानाम्, आवाप्य निक्षिप्य, चूर्णानां पूर्व्वोक्तोर्व्वरित-

प्रक्षिप्य कलसे सम्यक् समस्तं तदनन्तरम्।
तेषामेव कषायेण शीतलेन सुयोजितम्।
पूर्व्ववत् सन्निदध्यात् तु ज्ञेयं सौवीरकं हि तत्॥ २१॥
पूर्व्वोक्तं वर्गमाहृत्य द्विधा कृत्वैकमेतयोः।
भागं संक्षुद्य संसृज्य यवान् स्थाल्यामधिश्रयेत्॥
अजशृङ्ग्याः कषायेण तानभ्यासिच्य साधयेत्।
सुसिद्धांश्चावतार्य्यैतानौषधेभ्यो विवेचयेत्॥
विमृद्य सतुषान् सम्यक् ततस्तान् पूर्व्ववन्मितान्।
पूर्व्वोक्तौषधभागस्य चूर्णं दत्त्वा तु पूर्व्ववत्॥
तेनैव सह यूषेण कलसे पूर्व्ववन्न्यसेत्।
ज्ञात्वा जातरसञ्चापि तत् तुषोदकमादिशेत्॥ २२॥
तुषाम्बुसौवीरकयोर्विधिरेष प्रकीर्त्तितः।
षड़्रात्रात् सप्तरात्राद् वा ते च पेये प्रकीर्त्तिते॥ २३॥
वैरेचनेषु द्रव्येषु त्रिवृन्मूलविधिः स्मृतः॥ २४॥

त्रिवृदादिद्रव्यैकभागचूर्णानाम्, अत्र अस्मिन् शास्त्रे, कीर्त्तितं कथितं, सौवीरकं हितं ज्ञेयमिति सम्बन्धः। ततस्तस्मात् चूर्णभागनिक्षेपणादनन्तरं कलसे प्रक्षिप्य तत् सौवीरकं तदनन्तरं तेषामेव त्रिवृदादीनामन्यतमस्य कषायेण क्वाथेन शीतलेन सुयोजितं पूर्व्ववत् सन्निदध्यादिति सम्बन्धः। सौवीरकं सौवीरकसंज्ञम्॥ २१॥

तुषोदककल्पं निर्दिशन्नाह—पूर्व्वोक्तमित्यादि। त्रिवृतादिमूलं विदारिगन्धादिस्तथा महत् पञ्चमूलं मूर्व्वा शार्ङ्गेष्टा चेति पूर्व्वोक्तो वर्गः। द्विधा कृत्वा द्वौ भागौ कृत्वेत्यर्थः। एतयोर्भागयोर्मध्ये एकं भागं संक्षुद्य कुट्टयित्वा, सतुषैर्यवैः सह संसृज्य संबद्धीकृत्य स्थाल्यामधिश्रयेत् निक्षिपेत्। यवानामेको भागः। अजशृङ्गी कर्कटशृङ्गी विषाणिकेत्यपरे। तं पूर्व्वोक्तं सयवं भागं, साधयेत् सम्पादयेत्। सुसिद्धान् सुस्विन्नान् एतान् यवान् औषधेभ्यो विवेचयेत् पृथक् कुर्य्यात्। तान् यवान्, पूर्व्ववन्मितान् भागद्वयपरिमितान् पूर्व्वोक्तौषधभागस्योद्धरितस्येति शेषः, पूर्व्ववच्चतुर्थभागप्रमाणमित्यर्थः। तेनैव सह यूषेणेति प्रोक्तस्विन्नौषधवर्गयवाजशृङ्गीकषायेणोद्धृतौषधयवेन; स पुनरौषधसंसर्गेण घनत्वाद् यूष इव जातः। जातरसं व्यक्ताम्लम्। तयोः सौवीरकतुषोदकयोर्व्यक्ताम्लत्वे कालावधिं दर्शयन्नाह—षड़्रात्रात् सप्तरात्राद् वा षड़्रात्रसप्तरात्रविकल्पोऽप्युष्णशीतकालापेक्षः। ते चेति सौवीरकतुषोदके। सौवीरकतुषोदके त्रिवृद्विधानं सप्रपञ्चमुद्दिश्य त्रिवृद्विधानप्रकारातिदेशेनावशिष्टवैरेचनमूलानि निर्द्देष्टुमाह—वैरेचनेष्वित्यादि। वैरेचनेषु सर्व्वेष्वित्यादि। अवशिष्टेषु श्यामादन्तीद्रवन्तीसप्तलादिषु। त्रिवृन्मूलविधिः स्मृतः इति यादृश-

दन्तीद्रवन्त्योर्मूलानि विशेषान्मृत्कुशान्तरे।
पिप्पलीक्षौद्रयुक्तानि स्विन्नान्युद्धृत्य शोषयेत्।
ततस्त्रिवृद्विधानेन योजयेत् श्लेष्मपित्तयोः ॥ २५ ॥
तयोः कल्ककषायाभ्यां चक्रतैलं विपाचयेत्।
सर्पिश्च पक्वं वीसर्प-कक्षादाहालजीर्जयेत् ॥ २६ ॥
मेहगुल्मानिलश्लेष्म-विबन्धांस्तैलमेव च ॥ २७ ॥
चतुःस्नेहं शकृच्छुक्र-वातसंरोधजा रुजाः ॥ २८ ॥
दन्तीद्रवन्तीमरिच-कनकाह्वयवासकैः।
विश्वभेषजमृद्वीका-चित्रकैर्मूत्रभावितैः ॥

त्रिवृन्मूले विधिरुक्तस्तादृशेष्वपि ज्ञेय इत्यर्थः। तद् यथा—श्यामामूलं श्यामास्वरसभावितं वा चूर्णितं सैन्धवनागरयुक्तमम्लैरनिलव्याधौ, मधुरक्काथसहितं शर्करादिभिस्तुल्यभागं गोक्षीरयुक्तं पित्ते इत्यादि, यावत् सौवीरकतुषोदकविधिः; एवं प्रतिशेषं (प्रतिदोषं) वैरेचनिकमेनेहोदाहार्य्यं विषयोऽपि तेषां वैरेचनिकमूलकल्पानां प्रति त्रिवृत्कल्पविषय एवेति ॥ २२—२४ ॥

सामान्यातिदेशं निर्दिश्य दन्तीद्रवन्त्योर्विशिष्टं कल्पनमाह—दन्तीत्यादि। दन्तीद्रवन्त्योर्मूलान्युद्धृत्य शोषयेदिति सम्बन्धः। किंविशिष्टानि? स्विन्नानि, कस्मात्? विशेषात् अतिशयेन, क्वेत्याह—मृत्कुशान्तरे मृत्तिकादर्भमध्ये, पुटपाकविधानेनेत्यर्थः। पिप्पलीक्षौद्रयुक्तानि स्विन्नानीति सम्बन्धः। दन्ती प्रसिद्धा, द्रवन्ती चीरितपत्रा सम्बरीति लोके। तयोरित्यादि। तयोर्दन्तीद्रवन्त्योः। कल्ककषायमात्रायाः परिभाषा सरणीया। तामाश्रित्य कल्पनोच्यते—तैलपलानि द्वात्रिंशत्, दन्तीद्रवन्तीकल्कपलान्यष्टौ, दन्तीद्रवन्तीक्काथस्य पलानि शतमेकमष्टाविंशत्यधिकं, तावत् क्वाथ्यं यावत् तैलपाकलक्षणम्। दन्तीद्रवन्तीक्काथस्यायं विधिः—पानीयपलानि पञ्चशतानि द्वादशाधिकानि, दन्तीद्रवन्तीपलानि शतमेकं, क्काथशेषमेकशतमष्टाविंशत्यधिकम्, इति क्काथकल्पना। अन्यत्राप्यनुक्ततैलादिमाने इयमेव कल्पना ज्ञेया। चक्रतैलमिति चक्रपीडितं तिलतैलं, हस्तादियन्त्रपीडननिषेधार्थं, चक्रे ह्यभृष्टा एव तिलादयः पीड्यन्ते, ते पुनर्गुणवत्तरा भवन्ति। यन्त्रेण भर्ज्जनरूक्षितानां तिलानां स्नेहगुरुत्वादयो गुणा हीयन्ते इति। सर्पिश्चेति ताभ्यां दन्तीद्रवन्तीमूलकल्ककषायाभ्यां प्रत्येकं पक्वं सिद्धं सर्पिर्विसर्पादीन् जयेत्। पुनर्दन्त्याः कल्को द्रवन्त्यास्तु कषाय इति बोद्धव्यम्। तैलमेव चेति चक्रतैलं पुनर्मेहगुल्मादीन् जयेत्। चतुःस्नेहमिति घृततैलवसामज्जानश्चत्वारः स्नेहाः, शकृत् पुरीषम्। चतुःस्नेहं दन्तीद्रवन्तीसाधितं वातसंरोधजा रुजा जयेदिति सम्बन्धः। अत्र द्रवस्यानुक्तत्वाच्चतुर्गुणं जलं देयम् ॥ २५—२८ ॥

दन्तीत्यादि। दन्ती सम्बरी, कनकाह्वं कङ्कुष्ठं, नागकेशरमित्यन्ये। यवासो दुरालभा,

सप्ताहं सर्पिषा चूर्णं योज्यमेतद् विरेचनम्।
जीर्णे सन्तर्पणं क्षौद्रं पित्तश्लेष्मरुजापहम्।
अजीर्णपार्श्वरुक्पाण्डु-प्लीहोदरनिवर्हणम्॥ २९॥
गुड़स्याष्टपले पथ्या विंशतिः स्युः पलं पलम्।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश॥
कृत्वैतान् मोदकानेकं दशमे दशमेऽहनि।
ततः खादेदुष्णतोय-सेवी नियन्त्रणास्त्विमे।
दोषघ्ना ग्रहणीपाण्डु-रोगार्शःकुष्ठनाशनाः॥ ३०॥
व्योषं त्रिजातकं मुस्ता विडङ्गामलके तथा।
नवैतानि समांशानि त्रिवृदष्टगुणानि वै॥
श्लक्ष्णचूर्णीकृतानीह दन्तीभागद्वयन्तथा।
सर्व्वाणि चूर्णितानीह गालितानि विमिश्रयेत्॥
षड्भिश्च शर्कराभागैरीषत्सैन्धवमाक्षिकैः।
पिण्डितं भक्षयित्वा तु ततः शीताम्बु पाययेत्॥
वस्तिरुक्तृड्ज्वरच्छर्दि-शोषपाण्डुभ्रमापहम्।
निर्यन्त्रणमिदं सर्व्वं विषघ्नन्तु विरेचनम्॥
त्रिवृदष्टकसंज्ञोऽयं प्रशस्तः पित्तरोगिणाम्।
भक्ष्यः क्षीरानुपानो वा पित्तश्लेष्मातुरैर्नरैः।
भक्ष्यरूपसधर्म्मत्वादाढ्येष्वेव विधीयते॥ ३१॥

विश्वभेषजं शुण्ठी, सप्ताहं मूत्रभावितमिति सम्बन्धः। सर्पिषेति अस्य चूर्णस्य घृतेन वा लेहः कार्यं इत्यर्थः। अस्यैव प्रयोगस्य यौगिकमनुसंग्रहमाह—जीर्णे इत्यादि। जीर्णे तस्मिन्नौषधे, सन्तर्पणं तृप्तिकरणं, क्षौद्रमिति लाजशक्तुसहितं मधु देयम्॥ २९॥

मोदकस्य प्रयोगमाह—गुड़स्येत्यादि। अष्टौ पलानि गुड़स्य, विंशतिर्हरीतकीफलानि, दन्तीमूलचूर्णपलं, चित्रकमूलचूर्णपलञ्च, पिप्पलीकर्षः, त्रिवृत्कर्षश्च। अत्र तु सप्तगुञ्जाफलपरिमितमापकप्रमाणेन पलादिमानं ग्राह्यम्। दश कृत्वैतान् मोदकानित्यादि दश मोदकान् कृत्वा, एकं मोदकं दशमे दशमेऽहनि खादेदिति सम्बन्धः। नियन्त्रणा वातातपादिनिषेधरहिता। इमे मोदकाः॥ ३०॥

व्योषादिशीतविरेचनं दर्शयन्नाह—व्योषमित्यादि। व्योषादीनि प्रसिद्धानि। त्रिवृदष्टगुणानीति त्रिवृदष्टगुणा येषु तानि। तथा ईषत् सैन्धवमाक्षिकैरिति ईषच्छब्दश्चतुर्थांशवाचकः। भक्ष्यो भक्षणीयः। भक्ष्यरूपसधर्म्मत्वात् भक्ष्यरूपतुल्यादित्यर्थः। वातश्लेष्मातुरैर्नरैरिति केचित् पठन्ति॥३१॥

तिल्वकस्य त्वचं वाह्यामन्तर्वल्कविवर्ज्जिताम् ।
चूर्णयित्वा तु तौ भागौ तत्कषायेण गालयेत् ॥
तृतीयं भावितं तेन भागं शुष्कन्तु भावितम् ।
दशमूलीकषायेण त्रिवृद्वत् संप्रयोजयेत् ॥ ३२ ॥
विधानं खलु निर्द्दिष्टं——————————
——————————फलानामथ वक्ष्यते ।
हरीतक्याः फलन्त्वस्थि-वियुक्तं दोषवर्ज्जितम् ॥
योज्यं त्रिवृद्विधानेन सर्व्वव्याधिनिवर्हणम् ।
रसायनं परं मेध्यं दुष्टान्तव्रणशोधनम् ॥ ३३ । ३४ ॥
हरीतकी विड़ङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत् सर्व्वं गोमूत्रेण विरेचनम् ॥ ३५ ॥
हरीतकी भद्रदारु कुष्ठं पूगफलं तथा ।
सैन्धवं शृङ्गवेरञ्च गोमूत्रेण विरेचनम् ॥ ३६ ॥
नीलिनीफलचूर्णञ्च नागराभययोस्तथा ।
लिह्याद् गुड़ेन सलिलं पश्चादुष्णं पिवेन्नरः ॥ ३७ ॥
पिप्पल्यादिकषायेण पिवेत् पिष्टां हरीतकीम् ।
सैन्धवोपहितां सद्य एष योगो विरेचयेत् ॥ ३८ ॥
हरीतकी भक्ष्यमाणा नागरेण गुड़ेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ३९ ॥

त्वक्प्रसाधनकस्य तिल्वकस्य प्रयोगं निर्द्दिदिक्षुः प्रथमं तस्य संस्कारमेव सर्व्वप्रयोगविषयमाह—तिल्वकस्येत्यादि । अन्तर्वल्कविवर्ज्जितामिति अभ्यन्तरकठिनत्वग्विवर्ज्जिताम् । भागाविति द्वौ भागावित्यर्थः । तत्कषायेण तिल्वककषायेण, गालयेत् क्षारकल्पेन, गालनं पुनरिह विंशतिवारान् पारम्पर्य्यात् । तृतीयं भावितं तेन भागमिति अपरं चूर्णस्य स्थापितं तृतीयं भागं तेनैव तिल्वककषायजलेन (चतुर्थ)भागद्वयगालनलब्धगुणातिशयेन भावितमित्यर्थः । शुष्कन्तु भावितं दशमूलीकषायेणेति तृतीयं भागं शुष्कं पुनः सन्तं दशमूलीकषायेण भावितं त्रिवृद्वत् संप्रयोजयेदिति सम्बन्धः ॥ ३२ । ३३ ॥

फलप्रधानहरीतकीकल्पेनाशेषवैरेचनिकफलकल्पं निर्द्दिशन्नाह—हरीतक्या इत्यादि । व्याधिशब्दोऽयं दोषेषु व्याधिषु च वर्त्तते । सर्व्वेषां हरीतकीयोगानां सामान्यं फलं दर्शयन्नाह—रसायनमित्यादि । सुखोपयोज्यान् योगान् सर्व्वर्त्तुकान् सार्व्वधातुकांश्चाह—हरीतकीत्यादि । मात्राप्रमाणं मध्येषु कोष्ठवयोवलेषु चूर्णकर्षः, उत्तमाधमयोर्वुद्ध्या विकल्पनीयः । नीलिनी

वातानुलोमनी हृष्या चेन्द्रियाणां प्रसादनी।
सन्तर्पणकृतान् रोगान् प्रायो हन्ति हरीतकी ॥ ४० ॥
शीतमामलकं रूक्षं पित्तमेदःकफापहम्।
विभीतकमनुष्णन्तु कफपित्तनिवर्हणम् ॥
त्रीण्यप्यम्लकषायाणि सतिक्तमधुराणि च ॥ ४१।४२ ॥
त्रिफला सर्व्वरोगघ्नी त्रिभागघृतमूर्च्छिता।
वयसः स्थापनञ्चापि कुर्य्यात् सततसेविता ॥ ४३ ॥
हरीतकीविधानेन फलान्येवं प्रयोजयेत्।
विरेचनानि सर्व्वाणि विशेषाच्चतुरङ्गुलात् ॥ ४४ ॥
फलं काले समुद्धृत्य सिकतायां निधापयेत्।
सप्ताहमातपे शुष्कं ततो मज्जानमुद्धरेत् ॥ ४५ ॥
तलं ग्राह्यं जले पक्त्वा तिलवद् वा प्रपीड्य च।
तस्योपयोगो बालानां यावद् वर्षाणि द्वादश ॥ ४६ ॥
लिह्यादेरण्डतलेन कुष्ठत्रिकटुकान्वितम्।
सुखोदकञ्चानुपिबेद् एष योगो विरेचयेत् ॥ ४७ ॥
एरण्डतैलं त्रिफला-क्वाथेन त्रि-(द्वि)-गुणेन तु।
युक्तं पीतं तथा क्षीर-रसाभ्यान्तु विरेचयेत् ॥
बालवृद्धक्षतक्षीण-सुकुमारेषु योजितम्।
फलानां विधिरुद्दिष्टः ———— ———— ॥ ४८।४९ ॥

शेफालिका। सातत्येन निरन्तरोपयोगेन, सन्तर्पणकृता रोगास्तृप्त्यादयः, तानुष्णत्वाद् दीपनत्वाच्च शमयतीति। अत्र नागरगुडसैन्धवादीनां भिन्नकार्य्याणां दोषदेहधातुबलकालवयोऽवस्थान्तर-विकारापेक्षया व्यवस्थितविकल्पः ॥ ३४—४० ॥

हरीतकीनिर्द्देशानन्तरमामलकविभीतकयोरपि गुणनिर्द्देशमाह—शीतमित्यादि। सतिक्तमधुराणि चेति प्रत्येकं हरीतक्यादिषूक्ता शक्तिर्गुणतः संयोगतः प्रभावतश्च। इदानीं त्रिफलायाः प्रयोगमाह—त्रिफलेत्यादि। रोगशब्दोऽत्र त्रिदोषवचनो व्याधिवचनो वा। मूर्च्छिता संयुक्ता ॥४१—४३॥

विशेषादित्यादि। चतुरङ्गुलात् किरमालकात्, समुद्धृत्य फलमिति शेषः। सिकतायां वालुकायां निधापयेत् निक्षिपेत्, सप्ताहमिति सम्बन्धः। ततस्तस्मात् चतुरङ्गुलफलात् ॥ ४४—४६ ॥

लिह्यादिति। एष योगो वातकफप्रशमनः। एरण्डतैलमित्यादि। त्रि-(द्वि) गुणेन त्रिफलाक्वाथेन युक्तं तथा क्षीररसाभ्यां युक्तमिति सम्बन्धः। रसो मांसरसः, बालादिषु योजितमेरण्डतैलं विरेचयेदिति सम्बन्धः ॥ ४७—४९ ॥

——— ——— क्षीराणां शृणु सुश्रुत ।
विरेचनानां तीक्ष्णानां पयः सौधं परं मतम् ।
अज्ञप्रयुक्तं तद्धन्ति विषवत् कर्म्मविभ्रमात् ॥
विजानता प्रयुक्तन्तु महान्तमपि सञ्चयम् ।
भिनत्त्याश्वेव दोषाणां रोगान् हन्ति च दुस्तरान् ॥ ५०।५१ ॥
महत्याः पञ्चमूल्यास्तु बृहत्योश्चकशः पृथक् ।
कषायैः समभागन्तु तदङ्गारर्विशोषितम् ।
अम्लादिभिः पूर्व्ववत् तु प्रयोज्यं कोलसम्मितम् ॥ ५२ ॥
महावृक्षपयःपीतर्यवागूस्तण्डुलैः कृता ।
पीता विरेचयत्याशु गुड़नोत्कारिका कृता ॥ ५३ ॥
लेहो वा साधितः सम्यक् स्नुहीक्षीरपयोघृतैः ।
भावितास्तु स्नुहीक्षीरे पिप्पल्यो लवणान्विताः ।
चूर्णं काम्पिल्लकं वापि तत् पीतं गुटिकीकृतम् ॥ ५४ ॥
सप्तला शङ्खिनी दन्ती त्रिवृदारग्वधं गवाम् ।
मूत्रेणाप्लाव्य सप्ताहं स्नुहीक्षीरे ततः परम् ॥

क्षीराणामित्यादि । सौधं सेहुण्डभवम् । कर्म्मविभ्रमात् कर्म्माविज्ञानात्, दोषाणां सञ्चयमिति सम्बन्धः । आश्वेव शीघ्रमेव । महत्या इत्यादि । महती पञ्चमूली विल्वादिका । बृहत्योरिति स्थूलबृहती लघुबृहती चेति द्वे बृहत्यौ । एकश इत्यादि । एकीकृत्य अङ्गारेषु विशोषयेत्, न ज्वलदग्नौ पाकखरताभयात् । तत् सेहुण्डदुग्धं पृथक् कषायैः समभागं ग्राह्यम् । एतेन पञ्चमूली-बृहतीकषायाणां सप्त भागाः, अष्टमस्तु सेहुण्डदुग्धस्य । अम्लादिभिः काञ्जिकमस्तुसुरादिभिः, पूर्व्ववत् त्रिवृद्वत्, कोलसम्मितं कर्षप्रमाणम् ॥ ४९—५२ ॥

महावृक्षेत्यादि । महावृक्षः सेहुण्डः । पीतैर्भावितैः । गुड़ेनेत्यादि । गुड़ेन कृता उत्कारिका विरेचयतीति सम्बन्धः । उत्कारिका लप्सिका । तस्याः कल्पना—गोधूमान् स्नुहीक्षीरेण भावयित्वा चूर्णीकृत्य घृतक्षीरादिभिः संयाववत् उत्कारिका पचनीया गुड़ेन । लेह इत्यादि । लेहस्य कल्पना कथ्यते—स्नुहीक्षीरभावितस्य गोधूमचूर्णस्य लेहः साध्यः । अन्ये तु स्नुहीक्षीरसिताघृतैरिति पठन्ति । तन्मते पयोऽप्युत्कारिकायामिवानुक्तमपि लेहे देयम् । लेहो विरेचयतीत्यत्राप्यनुवर्त्तते । भाविता इत्यादि । विरेचयन्तीत्यत्राप्यनुवर्त्तते । चूर्णमित्यादि । तत्पीतं स्नुहीक्षीरभावितम् । अत्रापि विरेचयतीत्यनुवर्त्तते ॥ ५३ । ५४ ॥

सप्तलेत्यादि । सप्तला सेहुण्डभेदः, शङ्खिनी यवतिक्ता तस्याः फलं मूलञ्च विरेचकम् । अन्ये शङ्खिनीं यवतिक्ताभेद इत्याहुः । अपरे तु श्वेतबुध्नामाहुः । दन्ती दन्तिनी, आरग्वधः किरमालकं,

कीर्णं तेनैव चूर्णेन माल्यं वसनमेव च।
आघ्रायावृत्य वा सम्यङ् मृदुकोष्ठो विरिच्यते॥ ५५॥
क्षीरत्वक्फलमूलानां विधानैः परिकीर्त्तितैः।
अवेक्ष्य सम्यग् रोगादीन् यथावदुपयोजयेत्॥ ५६॥
त्रिवृच्छाणमितास्तिस्रस्तिस्रश्च त्रिफलात्वचः।
विडङ्गपिप्पलीक्षार-शाणास्तिस्रश्च चूर्णिताः॥
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुडेन वा।
भक्षयेन्निष्परीहारमेतच्छ्रेष्ठविरेचनम्॥ ५७॥
गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम्।
कफवातकृतांश्चान्यान् व्याधीनेतद् व्यपोहति॥ ५८॥
घृतेषु तैलेषु पयःसु चापि मद्येषु मूत्रेषु तथा रसेषु।
भक्ष्यान्नलेह्येषु च तेषु तेषु विरेचनान्यग्र्यमतिर्विदध्यात्॥ ५९॥
क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम्।
कल्पाः षड़ेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टाः॥ ६०॥

इति सुश्रुतसंहितायां सूत्रस्थाने विरेचनद्रव्यविकल्पविज्ञानीयो
नाम चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

आघ्राप्य भावयित्वा, कीर्णम् अवचूर्णितं, तेनैव सप्तलादिचूर्णेन माल्यं पुष्पम् आघ्राय शिङ्खित्वा, तेनैव वा चूर्णेन कीर्णं भावितं वसनं वस्त्रम् आवृत्य परिधाय मृदुकोष्ठो विरिच्यते नान्य इत्यर्थः। क्षीरत्वगित्यादि। शाणः कर्षचतुर्थो भागः॥ ५५—५८॥

अनुकालपानेषु प्रयोगकल्पान्निर्दिशन्नाह—घृतेष्वित्यादि। भक्ष्यं मोदकशष्कुल्यादि, अन्नं भक्तादि, अग्र्यमतिरतिप्रधानबुद्धिः। क्षीरमित्यादि। "यन्त्रादिपीड़ितद्रव्य-रसः स्वरस उच्यते। यः पिण्डश्चार्द्रपिष्टानां स कल्कः परिकीर्त्तितः। वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः। उपोषितं निशायान्तु तोयस्थं शीतमुच्यते। चूर्णमुष्णेन संपृक्तं तत् फाण्टमभिधीयते। अभिभूयाम्बुनोष्णेन क्षणात् पूतमितीतरे"। फाण्टलक्षणन्तु प्रसङ्गादुक्तम्। कषायो द्विविधः—शृतकषायः, शीतकषायश्च। ते तु षट्कल्पा भवन्ति। कल्पाः विधयः। अन्ये त्वेवं पठन्ति—'चूर्णं कषायः शिशिरः शृतश्च फाण्टश्च कल्कः स्वरसस्तथैव। पञ्चैव कल्पाः खलु भेषजानां यथोत्तरं ते गुरवः प्रदिष्टाः' इति। ते तु स्वरस एव क्षीरमन्तर्भावयन्ति, फाण्टं शीतकषायेऽन्तर्भावयन्ति॥५९।६०॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे
विरेचनद्रव्यविकल्पविज्ञानीयव्याख्यानाम चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

## पञ्चचत्वारिंशोऽध्यायः ।

अथातो द्रवद्रव्यविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पानीयमान्तरीक्षमनिर्द्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमश्च ॥ २ ॥

तदेवावनीपतितमन्यतमं रसमुपलभते स्थानविशेषान्नदी-नद-सरस्तडागवापी-कूप-चुण्टी-प्रस्रवणोद्भिदविकिरकेदार-पल्वलादिषु स्थानेष्ववस्थितमिति ॥ ३ ॥

अथात इत्यादि । द्रवद्रव्याणि पानीयक्षीरादीनि, तेषां विधिर्विधानं भेद इत्यर्थः । पानीयमित्यादि । अन्तरीक्षादागतं आन्तरीक्षं न तु तत्रभवं, कुतः ? मेघजत्वात्; तत्र जातमित्येके । अनिर्द्देश्यरसमव्यक्तरसं अप्रकटरसमित्यर्थः, अत्यल्परसत्वात्, न पुनस्तस्य रसो नास्ति । अमृतमिति अमृतमिवेत्यर्थः, अमृतत्वं पुनरस्य दोषप्रकोपस्याकरणात्; अमृतं ब्रह्मरूपमित्यन्ये । जीवनं प्राणधारणं, सौम्यधातुवृद्धिकरमिति केचित्, ओजोवृद्धिकरमित्यन्ये । तर्पणं तृप्तिजनकम् । धारणमिति शस्त्रपातादिव्यथासु मूर्च्छतां शरीरं दधातीति धारणम् । आश्वासजननमिति मार्गादिशुष्कदेहानां प्राणजननम् । श्रमेत्यादि । प्रशमनशब्दः श्रमादिभिः सह प्रत्येकमभिसम्बध्यते, श्रमादीनां प्रशमनमित्यर्थः । बह्वायासकृतं कष्टं श्रमः, अल्पायासकृतः श्रम एव क्लमः । मदः पूगफलेनेव मत्तता, स च विषमद्यशोणितोद्भवो विकारः । तन्द्रानिद्रयोः कफवातकृतयोरपि प्रशमनं स्पर्शेन, या तु स्वाभाविकी निद्रा तां करोत्येव पीतं सत्; तन्द्रा निद्राभेदः, निद्रा प्रसिद्धैव । एकान्ततः पथ्यतममिति एकान्ततोऽतिशयेनेत्यर्थः । तर्हि तमप्रत्ययः कथम् ? उच्यते—स्वार्थिकत्वात्; एतेनातिशयेन पथ्यमित्यर्थः । अन्येषामाकाशगुणभूयिष्ठभूमिसलिलानां पथ्यानां प्रकृष्टं पथ्यं पथ्यतमम्, एकान्तग्रहणेन सर्व्वकालदेशपुरुषव्याधिषु प्रयोगोऽस्य द्योतक इत्येके; तमप्रत्ययेन स्वस्थस्यातिशयेन हितमित्यभिहितमित्यपरे ॥ १ । २ ॥

तस्यानिर्द्देश्यरसस्यापि निर्द्देश्यरसत्वे कारणं निर्द्दिशन्नाह—तदित्यादि । तदेवावनीपतितमान्तरीक्षं जलं भूमिप्राप्तं, अन्यतमं मधुरादिष्वेकतमं उपलभते प्राप्नोतीत्यर्थः । स्थानविशेषात् देशभेदादित्यर्थः । के पुनस्ते स्थानविशेषा इत्याह—नदीत्यादि । नद्यो गङ्गाद्याः । नदाः सिन्धुशोणादयः । सरो दिव्यखातं पुरुषव्यापारं विना । पुरुषव्यापारकृतः तडागः, तलाव इति लोके, केचिद् विपर्य्ययेणार्थमाहुः । वापी इष्टकादिभिर्बद्धा ससोपानतीर्था, पुष्करिणीति लोके । कूपो मृत्तिकेष्टकादिभिर्बद्धोऽसोपानः । चुण्टी अबद्धकूपः । प्रस्रवणम् उच्चप्रदेशात् प्रस्रवज्जलस्थानं पर्व्वताश्रितम् । उद्भिदं पुनर्निम्नप्रदेशादूर्द्ध्वोत्तिष्ठज्जलस्थानम् । विकिरं वालुकादि विकीर्य्य गृह्यमाणोदकस्थानम् । केदारः प्रसिद्धः । पल्वलमानूपदेशजं तृणादिच्छन्नं सरः । आदिग्रहणात् ह्रदसमुद्रादिग्रहणम् ॥ ३ ॥

तत्र लोहितकपिलपाण्डुनीलपीतशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटु-तिक्तकषायाणि यथासङ्ख्यमुदकानि सम्भवन्तीत्येके भाषन्ते, तत् तु न सम्यक्। तत्र पृथिव्यादीनामन्योऽन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण। तत्र स्वलक्षणभूयिष्ठायां भूमावम्लं लवणञ्च। अम्बुगुणभूयिष्ठायां मधुरं। तेजोगुण-भूयिष्ठायां कटुकं तिक्तञ्च। वायुगुणभूयिष्ठायां कषायम्। आकाशगुणभूयिष्ठायाम् अव्यक्तरसम्, अव्यक्तं ह्याकाशमित्यतस्तत्प्रधानमव्यक्तरसत्वात्; तत् पेयमान्त-रीक्षालाभे॥ ४॥

तत्रान्तरीक्षं चतुर्व्विधम्। तद्यथा—धारं कारं तौषारं हैममिति। तेषां धारं प्रधानं लघुत्वात्। तत् पुनर्द्विविधं गाङ्गं सामुद्रञ्चेति। तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति। तयोर्द्वयोरपि परीक्षणं कुर्व्वीत। शाल्योदनपिण्ड-मकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे वहिष्कुर्व्वीत, स यदि मुहूर्त्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यम्; वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्, तन्नोपादेयम्। सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गवद् भवति। गाङ्गं पुनः प्रधानं, तदुपाददीताश्वयुजे मासि, शुचिशुक्लविततपटैक-देशच्युतमथवा हर्म्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णं राजते

परमतमाह—तत्रेत्यादि। तन्निराकृत्य स्वमतमाह—तत्त्वित्यादि। कृत इति जनितः। उत्कर्षापकर्षेणेति वृद्धिह्रासाभ्याम्। स्वलक्षणभूयिष्ठायां पृथिव्यंशगुणबहुलायाम्। तत्र पृथिव्यम्बु-गुणबाहुल्यान्मधुर इत्यादिना रसविज्ञानीये उक्तस्य सामान्यविधेरुत्सर्गाख्यस्य तत्र स्वलक्षणभूयि-ष्ठायां भूमावम्लमित्यादिको विशेषविधिरपवादाख्योऽत्रोक्तः। अन्ये तु भूतद्वयगुणसंयोगं रसविशेष-हेतुमाहुः। तथाहि—तत्र स्वलक्षणोदकभूयिष्ठायां भूमौ मधुरं, पृथिव्यनिलभूयिष्ठायामम्लं, जलाग्नि गुणभूयिष्ठायां लवणं, वाय्वग्निगुणभूयिष्ठायां कषायम्, आकाशगुणभूयिष्ठायामव्यक्तरसमिति॥ ४॥

तत्रेत्यादि। धाराभिः पततीति धारम्। कराः वर्षोपलास्तेषां तोयं कारम्। तौषारं यद् अवश्यायजं निशाजलं, तदेव संहतावयवत्वेन स्फटिकशिलाशकलसदृशावयवं हिमं, तद्भवं हैमम्। तदित्यादि। गाङ्गम् आकाशाधिष्ठानं, सामुद्रं पुनरवन्यधिष्ठानम्। तत्रेत्यादि। एतेन गाङ्गमाश्वयुज एव ग्रहीतव्यं न भाद्रपदे मासीत्युक्तं भवति। तयोरिति तयोर्गाङ्गसामु-द्रयोरित्यर्थः। कथं परीक्षणमित्याह—शाल्योदनेति। अविदग्धमविवर्णं। रूप्यमये भाजने अम्लरसे सामुद्रतोयं विना शाल्यन्नं न क्वोथमेति। दिनस्य रात्रेश्च पञ्चदशभागो मुहूर्त्तः। अवगन्तव्यं ज्ञातव्यमित्यर्थः। वर्णान्यत्वे इत्यादि। क्लेदः कोथः। तन्नोपादेयमिति दोषलत्वात्। सामुद्रमिति। एतेन सामुद्रस्यानुपादेयस्यापि कदाचिदेवोपादेयता दर्शिता। आन्तरीक्षस्य ग्रहणोपायं दर्शयन्नाह—गाङ्गमित्यादि। शुचीत्यादि। शुचिरनुपहतः। हर्म्म्यतलपरिभ्रष्टमिति

मृन्मये वा पात्रे निदध्यात्, तत् सर्व्वकालमुपयुञ्जीत। तस्यालाभे भौमम्। तच्चाकाशगुणवहुलम्। तत् पुनः सप्तविधम्। तद्यथा—कौपं नादेयं सारसं ताड़ागं प्रास्रवणमौद्भिदं चौण्ट्यमिति। तत्र वर्षास्वान्तरिक्षमौद्भिदं वा सेवेत महागुणत्वात्, शरदि सर्व्वं प्रसन्नत्वात्, हेमन्ते सारसं ताड़ागं वा, वसन्ते कौपं प्रास्रवणं वा, ग्रीष्मेऽप्येवं, प्रावृषि चौण्ट्यमनभिवृष्टं सर्व्वञ्चेति॥ ५॥

कीटमूत्रपुरीषाण्ड-शवकोथप्रदूषितम्।
तृणपर्णोत्करयुतं कलुषं विषसंयुतम्॥
योऽवगाहेत वर्षासु पिवेद् वापि नवं जलम्।
स वाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु॥ ६॥

धवलगृहोपरिभूमिकायाः सकाशादधः पतद्गृहीतम्। तत् पुनरित्यादि। तदिति कौपमित्यादिकं सर्व्वं प्रागेव व्याख्यातम्। तत्रेत्यादि। तत्र वर्षाशब्दो वर्षान्ते आश्वयुजे वर्त्तते न तु भाद्रपदे, तत्रान्तरीक्षजलस्य निषिद्धत्वात्; तदुक्तम्—"वलाहकाद्याः समदाः कीटा लूताश्च खेचराः। तद्विषोत्सर्गसंसर्गादग्राह्यं तत् तदा जलम्॥" तर्हि भाद्रपदे किं पातव्यम्? अत्रोच्यते—भाद्रपदे मासि आकाशगुणभूयिष्ठभूम्याश्रितमान्तरीक्षवद् भवतीति तत् पयः पेयमिति। अन्ये पुनस्तप्तशीतमम्भो भाद्रपदे पाययन्ति, स्वस्थापितं माहेन्द्रं वा, अन्ये तु वर्षास्वान्तरीक्षमौद्भिदं कौपं वेति पठन्ति, तच्च कौपं विदाहपरिहारार्थं सक्षौद्रं पेयमिति व्याख्यानयन्ति। शरदि सर्व्वं पातव्यमिति शेषः। प्रसन्नत्वादिति प्रसन्नत्वं निर्द्दोषत्वमगस्त्योदयात्। प्रावृषि चौण्ट्यमनवम् अनभिवृष्टं सर्व्वञ्चेति। अनवं पुरातनं तच्च सारसं ताड़ागं वा, अनभिवृष्टमनाभसं तच्च कौपम्। परं यदि न वर्षति देवस्तदा सर्व्वमेव वा पातव्यं, यदि संस्कृतं भवेत् क्वथनादिभिः, सर्व्वस्यैवाभिनवस्य जलस्य प्रविष्टत्वात्। अन्ये तु अनवमित्यस्य स्थाने अनभिनवमिति पठन्ति, अत्रापि स एवार्थः॥ ५॥

इदानीं नवस्य सलिलस्य वाह्याभ्यन्तरप्रयोगे वाह्याभ्यन्तरानेव च रोगान्निर्द्दिशन्नाह—कीटेत्यादि। कीटादिभिः सह कोथशब्दः प्रत्येकमभिसम्बध्यते। कीटाः सविषा वृश्चिकादयः, शवः मृतप्राणिशरीरं, कोथः शटितत्वं, प्रदूषितं विकृतीकृतम्। तृणपर्णोत्करयुतमिति तृणपर्णानामुत्करः समूहस्तेन युतं, कलुषं मलिनं, विषसंयुतमिति स्थावरजङ्गमविषयुक्तमित्यर्थः। वर्षास्विति आश्वयुजं विहाय आषाढश्रावणभाद्रपदा गृह्यन्ते। वर्षाशब्दोऽयं प्रावृषि वर्षासु च वर्त्तते। तदाह—'वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत्' इति। वाह्याभ्यन्तरान् रोगानिति वाह्याः कुष्ठादयः, आभ्यन्तरास्तूदरामयादयः। ते च यथासंख्यमवगाहपानाभ्यां ज्ञेयाः॥ ६॥

तत्र यत् पङ्कशैवालहटतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद् व्यापन्नमिति विद्यात् ॥ ७ ॥

तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् सम्भवन्ति ॥ ८ ॥

तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषः। पङ्कसिकताशैवालबहुवर्णता रूपदोषः। व्यक्तरसता रसदोषः। अनिष्टगन्धता गन्धदोषः। यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः। यदुपयुक्तं चिराद् विपच्यते विष्टभ्नाति वा स विपाकदोष इति। त एते आन्तरिक्षे न सन्ति ॥ ९ ॥

व्यापन्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्व्वापणं प्रसादनञ्च कर्त्तव्यं, नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ १० ॥

सौवर्णे राजते ताम्रे कांस्ये मणिमयेऽपि वा।
पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत् ॥
व्यापन्नं वर्ज्जयेन्नित्यं तोयं यद् वाप्यनार्त्तवम्।
दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत् ॥

व्यापन्नलक्षणमाह—तत्रेत्यादि। पङ्कः कर्द्दमः। शैवालं शैवलम्। हटः जलकुम्भिका, अभूमिलग्नमूलस्तृणविशेष इत्येके। अवच्छन्नमाच्छादितम्। नाभिजुष्टं न स्पृष्टं। उपसृष्टं संयुतम्, व्यापन्नं दोषाक्रान्तम्। तस्येति। तानेव षड्दोषान्निर्द्दिशन्नाह—तत्रेत्यादि। औष्ण्यं भूवाष्पजनितं न पुनरन्यातपकृतम्। दन्तग्राहिता अतिशीततताभिप्रेता। पङ्केत्यादि। सिकता वालुका। व्यक्तेति व्यक्तरसता रसनेन्द्रियग्राह्यमधुरादिरसता। अनिष्टेति अनिष्टगन्धता विस्रादिगन्धता। यदुपयुक्तमित्यादि। कफप्रसेकः श्लेष्मस्रवणम्, वीर्य्यं चाचिन्त्यक्रियाहेतुः। यदुपयुक्तमित्यादि। विष्टम्भः गुडगुडाशब्दः। त एते इति। एते पूर्व्वोक्ताः षड् दोषाः, आन्तरीक्षे इत्यस्योपलक्षणत्वादाकाशगुणभुयिष्ठेऽपि न सम्भवन्ति ॥ ७ ९ ॥

व्यापन्नानां प्रसन्नतोपायं दर्शयन्नाह—व्यापन्नानामित्यादि। अग्निक्वथनं महादोषदुष्टस्य, सूर्य्यातपप्रतापनमल्पदोषे, तप्तायःपिण्डादिनिर्व्वापणं मध्यदोषे, लोष्टुः कठिनो मृत्पिण्डः, निर्व्वापणं जलनिःक्षेपणमित्यर्थः। प्रसादनञ्च कर्त्तव्यमिति अग्निक्वथनादिस्वरूपं प्रसादनं नान्यत्। गन्धापनयने उपायमाह—नागेत्यादि। नागो नागकेशरः, चम्पको राजचम्पकः, उत्पलं सौगन्धिकम्। प्रभृतिग्रहणात् केतकीमल्लिकादिपुष्पाणि ॥ १० ॥

तदुदकं गुणवदपि कीदृशपात्रस्थं पेयमित्याह—सौवर्णे इत्यादि। पुष्पावतंसं पुष्पसुगन्धी-

व्यापन्नं सलिलं यस्तु पिवतीहाप्रसाधितम्।
श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम्॥
श्वासकासप्रतिश्याय-शूलगुल्मोदराणि च।
अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च॥ ११॥

तत्र सप्त कलुषस्य प्रसाधनानि भवन्ति, तद् यथा—कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्ता मणिश्चेति। पञ्च निक्षेपणानि भवन्ति; तद् यथा—फलकं त्र्यष्टकं मुञ्जवलय उदकमञ्चिका शिक्यञ्चेति। सप्त शीतीकरणानि भवन्ति—प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं वालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति॥ १२॥

निर्गन्धमव्यक्तरसं तृष्णाघ्नं शुचि शीतलम्।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते॥ १३॥

कृतम्। व्यापन्नादिवर्ज्जनमाह—व्यापन्नमित्यादि। अनार्त्तवमिति ऋतुविशेषानुपयोग्यं, अनृतुवृष्टमिति केचित्। अप्रसाधितमिति क्वथनाद्यसंस्कृतम्॥ ११॥

तत्र सप्त कलुषस्येत्यादि। कतकं शशकपुरीषप्रतिमफलं, गोमेदकः पुष्परागाभो मणिः, मत्कोलमिति केचित्। विसग्रन्थिः पद्ममूलम्, शैवालमूलं प्रसिद्धम्, मुक्ता मौक्तिकम्, मणिः स्फटिकादिः। एतेन रूपदोषापनयनोपायो दर्शितः। अन्ये तु विसग्रन्थीत्यस्याग्रे पर्णीमूलमिति पठन्ति। तत्र पर्णी पानीयपृष्ठजा, तस्या मूलं जटा। पञ्च निक्षेपणानीत्यादि। निक्षेपणं यत्र जलं निक्षिप्यते स्थाप्यते, तेन भूम्यादिस्पर्शाभावाद्दोषान्तरानुदयः। फलकं शाल्मलीकाष्ठादिविरचितं। त्र्यष्टकं अष्टास्रदण्डत्रयसंयोगः। मुञ्जवलयो मुञ्जादिविरचितो वलयाकारः। उदकमञ्चिका आकाशान्तराले निरन्तरनिहितवेत्रवैणवादिविरचिता वेत्रगृहाद्यभिधाना। शिक्यं मुञ्जादिविरचितं प्रसिद्धम्। सप्तेत्यादि। उदकप्रक्षेपणमिति सलिलपूर्णे भाजने वस्त्रादिपीडिते आकण्ठमपरशीतसलिलनिक्षेपः। यष्टिकाभ्रामणं यन्त्रयष्ट्यादिभ्रामणम्। व्यजनमिति व्यजनादिना वातलीकरणम्। वस्त्रोद्धरणं वस्त्रेण गालनं, वालुकाप्रक्षेपणम् उदकपात्रस्य वालुकामध्ये निक्षेपणम्। शिक्यावलम्बनं प्रसिद्धम्॥ १२॥

कीदृशं पुनरुपादेयं भौममित्याह—निर्गन्धमित्यादि। शुचि अनुपहतम्, लघु चेति चकारः समस्तगुणवत्त्वे अत्यन्तगुणकारि, अल्पगुणवत्वे तु अल्पगुणकारीति तारतम्यसूचकः। हृद्यञ्चेत्यत्र कथितजलस्य हृदयाप्रियत्वेऽप्युपग्रहणार्थम्। गुणवत् प्रशस्तगुणोपेतम्॥ १३॥

तत्र नद्यः पश्चिमाभिमुखाः पथ्या लघूदकत्वात्। पूर्व्वाभिमुखास्तु न प्रशस्यन्ते गुरूदकत्वात्। दक्षिणाभिमुखा नातिदोषलाः साधारणत्वात्। तत्र सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगञ्च, मलयप्रभवाः क्रिमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोग-श्लीपदगलगण्डान्। प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युपजनयन्ति, पारि-पात्रप्रभवाः पथ्या बलारोग्यकर्य्य इति॥ १४॥

नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः।
गुर्व्व्यः शवालसञ्छन्नाः कलुषा मन्दगाश्च याः॥
प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः।
ईषत्कषाया मधुरा लघुपाका बले हिताः *॥ १५॥

तत्र सर्व्वेषामेव भौमानां ग्रहणं प्रत्यूषसि, तत्र ह्यमलत्वं शैत्यञ्चाधिकं भवति, स एव चापां परो गुण इति॥ १६॥

इदानीं जाङ्गलपश्चिमदेशस्थानूपपूर्व्वदेशस्थसाधारणमध्यदेशस्थानां नदीनां गुणान् निर्दिश-न्नाह—तत्र नद्य इत्यादि। पश्चिमाभिमुखा जाङ्गलपश्चिमदेशस्थाः पश्चिमसमुद्रगाः, पूर्व्वाभिमुखाः आनूपदेशस्थाः पूर्व्वसमुद्रगाः, दक्षिणाभिमुखा मध्यदेशस्थाः। शैलादिभेदेन गुणान्निर्दिशन्नाह—तत्रेत्यादि। मलयप्रभवा इति मलयपर्व्वतवाहिनद्यो द्विविधा भवन्ति—पाषाणसिकतावाहिन्यः अपाषाणसिकतावाहिन्यश्च। तत्र पाषाणसिकतावाहिन्यश्च पथ्याः, अपाषाणसिकतावाहिन्यः क्रमीन् जनयन्ति। हिमवत्प्रभवा इति ता अपि द्विविधाः—हिमवदुपरिभागप्रभवाः पथ्याः, अधोभागप्रभवास्तु हृद्रोगादिहेतवः। विशिष्टदेशाश्रितपर्व्वतप्रभवाणां नदीनां सलिलगुणं दर्शय-न्नाह—प्राच्येत्यादि। अवन्ती उज्जयिनी तयोपलक्षितो देशस्तस्य पूर्व्वस्यां जाताः प्राच्यावन्त्याः पश्चिमस्यां जाता अपरावन्त्याः शैलास्तेषु या नद्यः; एतेन विशिष्टदेशाश्रितपर्व्वतप्रभवाणां नदीनां सलिलगुण उक्तः। उज्जयिन्युपलक्षिते देशे याः प्राचीं पश्चिमाञ्चाभिमुखं यान्ति ताः प्राच्यावन्त्या अपरावन्त्याश्च, न तु उज्जयिनीप्रभवेषु पर्व्वतेष्वित्यन्ये। अयमर्थो गयदासेन दूषितः। पारिपात्रेत्यादि पारिपात्रः पर्व्वतभेदः, तत्र प्रभवा नद्यो द्विविधाः—तडागजा पथ्याः, दरीजा दोषलाः॥ १४॥

नदीनां धन्वानूपसाधारणशैलाश्रयाणां सर्व्वासामेव शेषीभूतं विशेषं दर्शयन्नाह—नद्य इत्यादि। इदानीं विशिष्टदेशप्रभवाणां नदीनां गुणविशेषं दर्शयन्नाह—प्रायेणेत्यादि। मरुषु प्रसिद्धेषु मरुदेशेषु, न तु जाङ्गलशब्दाभिहितेषु॥ १५॥

भौमानां दिनापेक्षं ग्रहणकालं नियमयन्नाह—तत्रेत्यादि। प्रत्यूषसि प्रभाते। स एव चापां

* लघ्व्यः समधुराश्चैव पौरुषेया बले हिताः। इति वा पाठः।

दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ।
अरूक्षमनभिष्यन्दि तत् तुल्यं गगनाम्बुना ॥ १७ ॥
गगनाम्बु त्रिदोषघ्नं गृहीतं यत् सुभाजने ।
बल्यं रसायनं मेध्यं पात्रापेक्षि ततः परम् ॥ १८ ॥
रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ।
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥ १९ ॥
मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
भ्रमक्लमपरीतेषु तमके वमथौ तथा ।
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ २० ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ।
आध्माते ( ने ) स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ।
हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेत् ॥ २१ ॥

परो गुण इति स च शैत्यामलत्वलक्षणोऽपां परमो गुण इत्यर्थः । अन्ये तु शैत्यं चापां परो गुण इति पठन्ति । तत्र चकारोऽमलसूचनार्थः । तत्र भौमानामर्कसोमकरसंस्कारगुणेनान्तरीक्षतुल्यत्वं तदलाभे उपादानायाह दिवार्ककिरणैरित्यादि । अर्कग्रहणे सिद्धे दिवाग्रहणं समस्तदिनप्राप्त्यर्थम् । किरणग्रहणं दुर्दिनव्युदासार्थम् । दिवानिशीतिवचनात् सरोऽपि चन्द्रार्ककरसम्बन्धम् । सत्यप्यर्के चन्द्रसम्बन्धादरूक्षं, सत्यपि चन्द्रेऽर्कसम्बन्धादनभिष्यन्दि । दोषान् व्याधीन् झटिति यदभिष्यन्दते उत्पादयति तदभिष्यन्दि, विपर्य्ययेणानभिष्यन्दि । निशाग्रहणं समस्तरात्रिप्राप्त्यर्थम् । पौर्णमास्यामेव सकलरात्रौ सम्बन्धो नान्यासु, तथापि एकयापि पौर्णमास्यां रात्र्यातिशायी संस्कारः कृतः अन्यास्वप्यनुवर्त्तते । एतेनातिशीतोष्णस्निग्धरूक्षं निन्दितमित्युक्तं भवति ॥ १६ । १७ ॥

किंगुणं पुनर्गगनाम्बु येनैतत्तुल्यमुच्यते इत्याह—गगनाम्बु त्रिदोषघ्नमित्यादि । बल्यम् उपचयौजःशक्तिकरत्वात् । विशिष्टरसाद्युत्पादनात् रसायनं स्वस्थातुरोपयोगि । मेध्यं पवित्रम् । पात्रापेक्षि ततः परमिति अतिश्रेष्ठभाजने गृहीतमधिकं गुणं करोतीत्यर्थः । अन्ये तु मेध्यस्थाने शीतमिति पठन्ति । पूर्व्वं दोषशमनादि नोक्तम्, अधुना अगस्त्योदयदर्शनविशेषभावादुक्तम् ॥ १८ ॥

चन्द्रकान्तमणिप्रभवजस्य गुणमाह—रक्षोघ्नमित्यादि । रक्षोघ्नं राक्षसभयहरं, ह्लादि सुखावहं, चन्द्रकान्तोद्भवमिति चन्द्रकान्तमणिप्रभवं, इदन्तु चन्द्रकिरणानुप्रवेशात् नाभसं, चन्द्रमणिप्रादुर्भूतत्वाद्भौममित्युभयात्मकम् ॥ १९ ॥

शीतोष्णविषयमाह—मूर्च्छेत्यादि । पित्तोष्णदाहेष्विति उष्णे शरदि ग्रीष्मे च । मदात्यये मदविकारे । भ्रमः चक्रारूढस्येव, परीतेषु युक्तेषु, तमकः श्वासो मोहो वा । वमथौ छर्द्दिरोगे ॥ २० ॥

पार्श्वेत्यादि । स्तिमिते कोष्ठे आमकोष्ठे इत्यर्थः । सद्यःशुद्धे इति यस्मिन् दिने शोधनं कृतं तस्मिन्नित्येके, अपरे तु सप्ताहमित्याहुः । यद्यप्यौष्ण्यं स्पर्शदोषत्वेन उक्तं तथापि अवस्थायां

नादेयं वातलं रुक्षं दीपनं लघु लेखनम्।
तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥ २२ ॥
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥ २३ ॥
ताड़ागं वातलं स्वादु कषायं कटुपाकि च ॥ २४ ॥
वातश्लेष्महरं वाप्यं सक्षारं कटु पित्तलम् ॥ २५ ॥
सक्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु ॥ २६ ॥
चौण्ट्यमग्निकरं रुक्षं मधुरं कफकृन्न च ॥ २७ ॥
कफघ्नं दीपनं हृद्यं लघु प्रस्रवणोद्भवम् ॥ २८ ॥
मधुरं पित्तशमनमविदाह्यौद्भिदं स्मृतम् ॥ २९ ॥
वकिरं कटु सक्षारं श्लेष्मघ्नं लघु दीपनम् ॥ ३० ॥
कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् ॥ ३१ ॥
तद्वत् पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत् ॥ ३२ ॥
सामुद्रमुदकं विस्रं लवणं सर्व्वदोषकृत् ॥ ३३ ॥
अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितम् ॥ ३४ ॥
एभिर्दोषैरसंयुक्तं निरवद्यन्तु जाङ्गलम्।
पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम् ॥ ३५ ॥
दीपनं स्वादु शीतञ्च तोयं साधारणं लघु ॥ ३६ ॥
कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम्।
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ३७ ॥
यत् क्वाथ्यमानं निर्व्वेगं निष्फेनं निर्म्मलं लघु।
चतुर्भागावशेषन्तु तत् तोयं गुणवत् स्मृतम् ॥ ३८ ॥

व्यवहारार्थत्वेनोपादेयम्, अन्ये तु पूर्व्वमौष्ण्यं भूवाष्पजनितमेव दोषत्वेनोक्तम्, इदन्त्वगन्यातपकृतमिति समादधति ॥ २१ ॥

समस्तनदीनां शेषगुणमाह—नादेयमित्यादि। द्विविधं कौपं सक्षारमव्यक्तरसञ्च। यत् सक्षारं तत् पित्तलम्, इतरत् पित्तघ्नं मधुरमिति ॥ २२–३३

आनूपधन्वसाधारणगुणान्निर्दिशन्नाह—अनेकेत्यादि। अत्र स्पर्शरूपरसगन्धवीर्य्यविपाकाः प्रागुक्ता दोषा ज्ञेयाः। एभिरिति एभिः पूर्व्वोक्तैः स्पर्शादिभिरित्यर्थः। पाके इति अविदाहि अदाहकारीत्यर्थः ॥ ३४–३६ ॥

उष्णोदकगुणमाह—कफेत्यादि। पथ्यं हितम्, उष्णोदकम् अर्द्धावशिष्टमुदकम्। उष्णोदक-

न च पर्य्युषितं देयं कदाचिद् वारि जानता।
अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे॥ ३९॥
मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा।
सन्निपातसमुत्थे च शृतशीतं प्रशस्यते॥ ४०॥
दाहातीसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु।
शृतशीतं जलं शस्तं तृष्णाच्छर्द्दिभ्रमेषु च॥ ४१॥
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम्।
वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु॥ ४२॥
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये।
मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा।
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत्॥ ४३॥

इति जलवर्गः॥

गव्यमाजं तथा चौष्ट्रमाविकं माहिषञ्च यत्।
अश्वायाश्चैव नार्य्याश्च करेणूनाञ्च यत् पयः॥
तत् त्वनेकौषधिरस-प्रसादं प्राणदं गुरु।
मधुरं पिच्छिलं शीतं स्निग्धं श्लक्ष्णं सरं मृदु।
सर्व्वप्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते॥ ४४॥

भेदमाह—यदित्यादि। निर्व्वेगं निश्चलम्। पर्य्युषितमुष्णोदकं न दातव्यमित्याह—न चेत्यादि। पर्य्युषितं रात्र्युषितम्॥ ३७—३९॥

शृतशीतविषयमाह—मद्यपानादित्यादि। पूर्व्वं मदात्यये शीतम्, अत्र तु मदात्ययसमुत्थे रोगे शृतशीतं प्रशस्यते; मदात्यये मदात्ययसमुद्भूते रोगे चोभयस्मिन्नपि शृतशीतं प्रयोक्तव्यमित्यर्थः। अधुना शृतशीतस्य शेषविषयमाह—दाहेत्यादि॥ ४०।४१॥

उदकप्रसङ्गेन नारिकेलफलसलिलस्यापि गुणं निदर्शयन्नाह—स्निग्धमित्यादि। नारिकेलोदकम् ईषत्पक्वार्द्रनारिकेलफलान्तर्व्वर्त्ति सलिलमित्यर्थः। जेज्झटस्तु लध्विति पठति, लघुत्वञ्च शीघ्रपरिणामित्वमिच्छति॥ ४२॥

केषु रोगेषु जलं मन्दं पेयमित्याह—अरोचके इत्यादि। यावत् प्रतिषेधयितुमशक्यं तावदाचरेदिति मन्दार्थः। अयं पानीयवर्गो निबन्धकारैर्विपरीतक्रमेण पठितः। अस्माभिस्तु यथैव गुरुभिः कथितस्तथैव क्रमेण व्याख्यातः। इति पानीयवर्गः॥ ४३॥

इदानीं क्षीरस्याष्टविधां योनिमाह—गव्यमित्यादि। करेणुर्हस्तिनी। अश्वायाश्च नार्य्याश्च करेणूनाञ्चेति चकारस्त्वनुक्तसमानजातीयक्षीराणां समुच्चयार्थम्, तेनाश्वतरीखरीमृगीखड्गिनी-

तत्र सर्व्वमेव क्षीरं प्राणिनामप्रतिषिद्धं जातिसात्म्यात्। वातपित्तशोणित-मानसेषु विकारेष्वविरुद्धम्। जीर्णज्वरकासश्वासशोषक्षयगुल्मोन्मादोदर-मूर्च्छा-भ्रम-मददाह-पिपासा-हृद्वस्तिदोष-पाण्डुरोग-ग्रहणीप्रदोषार्शः-शूलोदावर्त्तातिसार-प्रवाहिकायोनिरोगगर्भास्रावरक्तपित्तश्रमक्लमहरं बल्यं वृष्यं वाजीकरणं रसायनं मेध्यं पाप्मापहं सन्धानं वयःस्थापनमायुष्यं जीवनं बृंहणं वमन-विरेचनास्थापनं तुल्यगुणत्वाच्चौजसो वर्द्धनमिति बालवृद्धक्षतक्षीणानां क्षुद्व्यवाय-व्यायामकर्शितानाञ्च पथ्यतमम्॥ ४५॥

क्षीराणामपि ग्रहणम्। तत् पुलभूयसा लेपे युज्यते (नोपयुज्यते) इति न कृतं साक्षाद् ग्रहणम्। सर्व्वेषामेव क्षीराणां दशविधं गुणं निर्दिशन्नाह—तत्त्वित्यादि। तत्त्वनेकौषधिरसप्रसादमिति तुशब्दः पुनरर्थे, ओषधिशब्देन सर्व्वद्रव्याणि न तु फलपाकावसानाः। रसः सारः किट्टभाव(ग)रहितः ओजःशुक्रादिवत्। एतेन शुक्लत्वं द्योत्यते शुक्रत्वस्योत्पत्तेः। प्रसादः नैर्म्मल्यम्। प्राणदम् अग्निसोमादिधारणादुपचयादिकरणाद् वा। पिच्छिलं विशदविपरीतं, श्लक्ष्णं खरविपरीतम्। एवमिदं क्षीरं दशगुणयुक्तं भवति। जेज्झटस्तु 'तत्त्वनेकौषधिरस-प्रसादः क्षीरतां गतः। सर्व्व-प्राणभृतां तस्मात् सात्म्यं क्षीरमिहोच्यते' इति पठति॥ ४४॥

सर्व्वेषामेव समानगुणानां समानकर्म्म निर्द्देष्टुमाह—तत्रेत्यादि। सर्व्वम् अष्टविधमपीत्यर्थः। प्राणिनां जरायुजातानाम्। जातिसात्म्यात् मनुष्यादिजातिसुखकरत्वात्। मानसेषु विकारेषु रजस्तमःसंसर्गजेषु। जीर्णज्वरेत्यादि जीर्णशब्दमेके ज्वरेण सह संबध्नन्ति, अन्ये तु क्लमान्तैर्ज्वरा-दिभिः सह, जीर्णत्वेनैतेषु प्रायेण वातपित्तानुबन्धो भवतीत्याहुः। हरशब्दो ज्वरादिभिः सह सर्व्वैः क्लमान्तैः प्रत्येकमभिसम्बध्यते। कासेति कासोऽत्र कफकासं त्यक्त्वा, शोषोऽत्र मुखकण्ठताल्वां, क्षयो राजयक्ष्मा, गुल्मोदरयोर्वातपैत्तिकयोः, मूर्च्छाभ्रममदपिपासासु कफामरहितासु, हृदयदोषाणां वातपित्तप्रायाणां, पाण्डुरोगे वातपित्तप्राये, ग्रहणीप्रदोषे जीर्णावस्थायाम्। गर्भस्रावे आमान्वयादिना, रक्तपित्ते कफप्रधाने, अग्निमान्द्ये च न देयम्। बल्यं मांसोपचयकरम्। अन्ये ओजसो वर्द्धन-मिति; तन्मते ओजसो वर्द्धनमिति पाठोऽग्रे न भवति। वृष्यं शुक्रजनकं, वाजीकरणं शुक्रप्रवर्त्तनम्, एतेन जनकप्रवर्त्तकमित्युक्तम्। रसायनं सततोपयोगात्। मेध्यं मेधाजनकं पवित्रं वा। पाप्मा-पहं पापोपशमनम्, विशेषतो गव्यं। वयःस्थापनं जरया विना; आयुष्यम् आयुषे हितं, सन्धानं भग्नस्य। वमनविरेचनास्थापनमिति वमनं वमनद्रव्यसंयोगि, विरेचनं सरत्वान्मृदुकोष्ठस्य, रेचनद्रव्यसंयोगाद् विरेचनमित्यन्ये; आस्थापनमास्थापनद्रव्यसंयोगि, आस्थापनं निरूहमित्य-र्थान्तरम्। तुल्यगुणत्वाच्चौजसो वर्द्धनमिति यावन्त एवौजसो गुणास्तावन्त एव क्षीरस्यापि, तेन तैस्तैरेवात्मगुणैस्तेषां समानानामोजसो गुणानामभिवर्द्धनम्। जेज्झटस्तु 'गव्यन्तु शीतं स्निग्धं मधुरमविदाहीति' इति पठति, शेषन्तु समं, तन्मते गोक्षीरस्यैव गुणाः॥ ४५॥

गोक्षीरमनभिष्यन्दि * स्निग्धं गुरु रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ।
जीवनीयं तथा वात-पित्तघ्नं परमं स्मृतम् ॥ ४६ ॥
गव्यतुल्यगुणन्त्वाजं विशेषाच्छोषिणे हितम् ।
दीपनं लघु संग्राहि श्वासकासास्रपित्तनुत् † ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ।
नात्यम्बुपानाद् व्यायामात् सर्व्वव्याधिहरं पयः ॥ ४७ ॥
रूक्षोष्णं लवणं किञ्चिदौष्ट्रं स्वादुरसं लघु ।
शोफगुल्मोदरार्शोघ्नं क्रिमिकुष्ठविषापहम् ॥ ४८ ॥
आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् ।
पथ्यं केवलवातेषु कासे चानिलसम्भवे ॥ ४९ ॥
महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् ।
निद्राकरं शीतकरं गव्यात् स्निग्धतरं गुरु ॥ ५० ॥

सामान्येन क्षीरस्य गुणमभिधाय गव्यस्यैव विशिष्टं गुणकर्म्मं निर्द्दिशन्नाह—गोक्षीरमित्यादि । दोषधातुमलस्रोतसां मन्दक्लेदप्राप्तिजनकमनभिष्यन्दि ॥ ४६ ॥

अजाक्षीरगुणमाह—गव्यतुल्यगुणमित्यादि । गुणशब्दस्तत्कार्य्ये फले वर्त्तते । अत्राल्पकायत्वादयः स्वरूपविशेषेण न क्षीरपथ्यत्वे हेतवः, तेषामल्पकायत्वादीनामन्यत्राप्यपि सम्भवः । अतो द्वयमेव क्षीरपथ्यापथ्यविभागे हेतुर्जातिविशेषो भ्रमणादिविशेषश्च । सर्व्वव्याधिहरं सर्व्वदोषहरम् ॥ ४७ ॥

इदानीमौष्ट्रक्षीरगुणमाह—रूक्षेत्यादि ॥ ४८ ॥

आविकक्षीरगुणमाह—आविकमित्यादि । कफावहं कफकरम् । केवलवातेष्विति केवलेषु अनावृतेषु असंयुक्तेष्वपीत्यर्थः । अन्ये त्वेवं पठन्ति—'आविकं मधुरं स्निग्धमुष्णं पित्तकफावहम् । गुरु शुद्धेऽनिले पथ्यं सेकश्चानिलशोणिते' इति । शुद्धेऽनिले अनावृते, अनिलशोणिते रक्ते वाते रक्तावृते वा, सेकः परिषेकः ॥ ४९ ॥

महिषीक्षीरमाह—महेत्यादि । दोषधातुमलस्रोतसामतिशयेन क्लेदप्राप्तिजनकं महाभिष्यन्दि । गव्यात् स्निग्धतरं गोक्षीरात् स्निग्धतरमित्यर्थः ॥ ५० ॥

---

* अनभिष्यन्दि गोक्षीरमिति पाठान्तरम् ।　　† श्वासकासाम्लपित्तनुदिति वा पाठः ।

उष्णञ्चैकशफं बल्यं शाखावातहरं पयः।
मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥ ५१ ॥
नार्य्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम्।
नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥ ५२ ॥
हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु।
स्निग्धं स्थैर्य्यकरं शीतं चक्षुष्यं बलवर्द्धनम् ॥ ५३ ॥
प्रायः प्राभातिकं क्षीरं गुरु विष्टम्भि शीतलम्।
रात्र्याः सोमगुणत्वाच्च व्यायामाभावतस्तथा ॥
दिवाकराभितप्तानां व्यायामानिलसेवनात्।
वातानुलोमि श्रान्तिघ्नं * चक्षुष्यञ्चापराह्णिकम् ॥ ५४ ॥
पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्।
तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम्।
वर्ज्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥ ५५ ॥
धारोष्णं गुणवत् क्षीरं विपरीतमतोऽन्यथा।
तदेवातिशृतं सर्व्वं गुरु बृंहणमुच्यते ॥ ५६ ॥

अश्वादिक्षीरमाह—उष्णमित्यादि। एकशफा अश्वादयः, शफः क्षुरः। शाखा बाहुजङ्घे, तद्वातहरमित्येके; शाखा रक्तादयो धातव इत्यन्ये। काञ्जिकस्येव प्रभावादाधारप्रभावाच्च शाखायां हन्ति, कोष्ठे करोतीत्यामनन्ति ॥ ५१ ॥

मानुषं क्षीरमाह—नार्य्यास्त्वित्यादि। आश्च्योतनम् अक्षिपूरणम् ॥ ५२ ॥

हस्तिनीक्षीरमाह—हस्तिन्या इत्यादि। स्थैर्य्यंकरं शरीरदार्ढ्यंकरम्, अन्ये तारुण्यस्थापकमित्याहुः ॥ ५३ ॥

प्राभातिकं क्षीरमाह—प्राय इत्यादि। विष्टम्भो गुड़गुड़ाशब्दः। आपराह्णिकक्षीरमाह—दिवाकरेत्यादि। अपराह्णो दिवान्तभागः, वृद्धानुमतौ पाठाविमौ ॥ ५४ ॥

आमक्षीरमाह—पय इत्यादि। पक्वस्य गुणमाह—तदित्यादि। शृतं पक्वम्, आवर्त्तितमित्यर्थः। अनभिष्यन्दि किञ्चिदभिष्यन्दि इत्यर्थः। स्त्रीक्षीरे पाकनिषेधमाह—वर्ज्जयित्वेत्यादि। स्त्रियाः स्तन्यं वर्ज्जयित्वा अन्यदुग्धानि शृतान्येव हितानि भवन्तीत्यर्थः। तत् स्त्रीभवं स्तन्यमाममक्वथितमेव हितम् ॥ ५५ ॥

तेषां सर्व्वक्षीराणामेव दोहनकालधारापातोष्णानां गुणविशेषं निर्द्दिशन्नाह—धारोष्णमित्यादि। गुणवत् गुणान्वितं, विपरीतम् अगुणवत्, अतोऽन्यथेति धारोष्णं यन्न भवति। अतिपक्वमाह—तदित्यादि। बृंहणं देहवृद्धिकरम् ॥ ५६ ॥

* श्रमघ्नं वातनुच्चैवेति पाठान्तरम्।

अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्॥ ५७॥

इति क्षीरवर्गः॥

दधि तु मधुरमम्लमत्यम्लञ्चेति। तत्र कषायानुरसं स्निग्धमुष्णं पीनस-विषमज्वरातिसारारोचकमूत्रकृच्छ्रकार्श्यापहं वृष्यं प्राणकरं मङ्गल्यञ्च॥ ५८॥

महाभिष्यन्दि मधुरं कफमेदोविवर्द्धनम्।
कफपित्तकृदम्लं स्यादत्यम्लं रक्तदूषणम्॥ ५९॥
विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषकृत्॥ ६०॥
स्निग्धं विपाके मधुरं दीपनं बलवर्द्धनम्।
वातापहं पवित्रञ्च दधि गव्यं रुचिप्रदम्॥ ६१॥
दध्याजं कफपित्तघ्नं लघु वातक्षयापहम्।
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम्॥ ६२॥
विपाके मधुरं वृष्यं वातपित्तप्रसादनम्।
बलासवर्द्धनं स्निग्धं विशेषाद् दधि माहिषम्॥ ६३॥
विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि।
वातमर्शांसि कुष्ठानि क्रिमीन् हन्त्युदराणि च॥ ६४॥

कीदृशं क्षीरं वर्ज्यमित्याह—अनिष्टेत्यादि। विवर्णं शुक्लाद् वर्णान्तरमापन्नं, विरसं मधुरा-दन्यरसं, विग्रथितमम्लादिद्रव्यसंयोगेन विग्रथितावयवं, यल्लोके नष्टमिति प्रसिद्धम्। इति क्षीरवर्गः॥ ५७॥

अथ दधिभेदानाह—दधीत्यादि। एतेन त्रिप्रकारं दध्युक्तम्। सामान्यदधिगुणमाह—तदित्यादि। उष्णम् उष्णवीर्य्यं, वृष्यं शुक्रकरं, मङ्गल्यं मङ्गलहेतुः। अन्ये त्वेवं पठन्ति—'दधि तु मधुरं सृष्टपुरीषं गुर्व्वम्लमभिष्यन्दि श्लेष्मपित्तशोफवर्द्धनं कार्श्यापहं रोचनं माङ्गल्यञ्च, तदेव चोद्धृतसारं ग्राह्यमनभिष्यन्दि च। ससरं कफमेदःशुक्रकृत्, त्रिदोषकृन्मन्दजातम्' इति। अथ त्रिप्रकारस्यापि दध्नो गुणमाह—महेत्यादि। महाभिष्यन्दीति पूर्व्ववद् व्याख्येयम्। मन्दजातगुण-माह—विदाहीत्यादि। त्रिदोषकृदिति दोषान् वातपित्तश्लेश्माणः करोतीति दोषकृदिति सिद्धे त्रिग्रहणमेतज्ज्ञापयति यन्मन्दजातं दधि त्रीनपि दोषान् यौगपद्येन तुल्यबलत्वेन च कोपयति न पुनः परिपाट्या हीनाधिकभावेन वा॥ ५८—६०॥

गोदध्याह—स्निग्धमित्यादि। अजादध्याह—दध्याजमित्यादि। महिषीदध्याह—विपाके मधुर-मित्यादि। बलासः श्लेष्मा। स्निग्धपदबलासवर्द्धनपदाभ्यां सह विशेषादिति सम्बध्यते। इष्ट्री-

कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि।
रसे पाके च मधुरमत्यभिष्यन्दि दोषलम् ॥ ६५ ॥
दीपनीयमचक्षुष्यं वाड़वं दधि वातलम्।
रुक्षमुष्णं कषायञ्च कफमूत्रापहञ्च तत् ॥ ६६ ॥
स्निग्धं विपाके मधुरं वल्यं सन्तपर्णं गुरु।
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्य्या गुणोत्तरम् ॥ ६७ ॥
लघु पाके बलासघ्नं वीर्य्योष्णं पक्तिनाशनम्।
कषायानुरसं नाग्या दधि वर्च्चोविवर्द्धनम् ॥ ६८ ॥
दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक्।
विज्ञेयमेवं सर्व्वेषु गव्यमेव गुणोत्तरम् ॥ ६९ ॥
वातघ्नं कफकृत् स्निग्धं बृंहणं न च पित्तकृत् *।
कुर्य्याद्भक्ताभिलाषञ्च दधि यत् सुपरिस्रुतम् ॥ ७० ॥
शृतात् क्षीरात् तु यज्जातं गुणवद् दधि तत् स्मृतम्।
वातपित्तहरं रुच्यं धात्वग्निवलवर्द्धनम् ॥ ७१ ॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः।
वह्नेर्विधमनश्चापि कफशुक्रविवर्द्धनः ॥ ७२ ॥
दधि त्वसारं रुक्षञ्च ग्राहि विष्टम्भि वातलम्।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥ ७३ ॥

दध्याह— विपाके इत्यादि। सक्षारम् ईषत्क्षारम्। मेषीदध्याह —कोपनमित्यादि। दुर्नामानि अर्शांसि। दोषलम् अपथ्यत्वेन विकारकारि। अश्वादध्याह—दीपनीयमित्यादि। वाड़वम् आश्वम्। मानुषीदध्याह—स्निग्धमित्यादि। अग्र्यं श्रेष्ठं चक्षुष्यं चक्षुषि हितमित्यर्थः, गुणोत्तरं गुणोत्कृष्टम्। हस्तिनीदध्याह—लघ्वित्यादि ॥ ६१—६८ ॥

सर्व्वेषां गोदधि श्रेष्ठमित्याह—दधीनीत्यादि। एवमेतेन प्रकारेण, एवावधारण ॥ ६९ ॥

वस्त्रादिगालितदधिगुणमाह—वातघ्नमित्यादि। सुपरिस्रुतं सुष्ठु गालितं वस्त्रादिभिः। क्वथितक्षीरजातस्य दध्नो गुणमाह—शृतादित्यादि। दध्यवयवविशेषाणां गुणविशेषं दर्शयन्नाह—दध्न इत्यादि। सरः दध्न उपरितनो भागः स्नेहबहुलः सर इति प्रसिद्धः। वह्नेर्विधमनः अग्निनाशनः, वृष्यः शुक्रविवर्द्धन इति चोभयमतिवृद्धिकरत्वप्राप्तये; एतेन जनकप्रवर्त्तकमुक्तम्। उद्धृतस्नेहस्य दध्नो गुणमाह—दधीत्यादि। असारं साररहितम्। विष्टम्भीति सवाततोदशूलानिलमलस्याप्रवृत्तिर्विष्टम्भः। अन्ये विष्टम्भो गुड़गुड़ाशब्द इति प्राहुः ॥ ७०—७३ ॥

* नातिपित्तकृदिति वा पाठः।

शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ ७४ ॥
तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम् ।
अम्लं कषायं मधुरमवृष्यं कफवातनुत् ॥
प्रह्लादनं प्रीणनञ्च भिनत्याशु मलञ्च तत् ।
बलमावहते चापि भक्तच्छन्दं करोति च ॥ ७५ ॥
स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतक्षीरभवं सरञ्च ।
असारमेवं दधि सप्तधास्मिन् वर्गे स्मृता मस्तुगुणास्तथैव ॥ ७६ ॥

इति दधिवर्गः ।

तक्रं मधुरमम्लं कषायानुरसमुष्णवीर्य्यं लघु रुक्षमग्निदीपनं गरशोफातिसार-ग्रहणी-पाण्डुरोगार्शःप्लीहगुल्मारोचकविषमज्वरतृष्णाच्छर्द्दिप्रसेकशूलमेदःश्लेष्मा-निलहरं मधुरविपाकं हृद्यं मूत्रकृच्छ्रस्नेहव्यापत्प्रशमनमवृष्यञ्च ॥ ७७ ॥

मन्थनादिपृथग्भूत-स्नेहमर्द्धोदकन्तु यत् ।
नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥
यत् तु सस्नेहमजलं मथितं घोलमुच्यते ॥
तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्ब्बले ।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ७८ ॥

ऋतुभेदेन हेयोपादेयतामाह—शरदित्यादि । तृष्णाक्लमहरमित्यादि । मस्तु दध्न उपरस्थच्छो भागः । अन्ये तु मथितदधितक्रजभेदेन मस्तु त्रिविधमिच्छन्ति । दधि सप्तविधं ; तद् यथा—स्वाद्वम्ल-मत्यम्लं मन्दजातं शृतक्षीरभवं ससारमसारञ्च । मलं मूत्रपुरीषे । इति दधिवर्गः ॥ ७४—७६ ॥

अथ तक्रगुणानाह—तक्रमित्यादि । गरं कृत्रिमं विषं, सदाभाविनं वर्ज्जयित्वा अन्ये विषम-ज्वराः, प्रसेको लालास्रावः । स्नेहव्यापत् स्नेहातियोगायोगसमुत्थो विकारः । अवृष्यम् अशुक्रलम् । तच्च तन्त्रान्तरे त्रिविधं—"रूक्षमर्द्धोद्धृतस्नेहं यत्न स्यादुद्धृतं घृतम् । तक्रं दोषाग्निबलकृ(वि)त् त्रिविधं तत् प्रयोजयेत्" । तन्त्रान्तरे सर्व्वेषामेवैतेषां पृथग्गुणोपवर्णनं कृतम् ॥ ७७ ॥

अथ कीदृक् तक्रं यस्यायं गुणनिर्देशः कृतः ? उच्यते,—मन्थनादीत्यादि । घोलमाह—यत्त्वि-त्यादि । तत् तु दधिगुणमेव । सस्नेहं सजलम् उदश्वित् ; तद्गुणास्तु मतान्तराद् बोद्धव्याः ।

तस्य तक्रस्य निषेधविषयमाह—तक्रं नैवेत्यादि । उष्णकाले शरद्ग्रीष्मयोः । केषु प्रशस्त-मित्याह—शीतकाले इत्यादि । मार्गावरोधे स्रोतःशोधकत्वात् । दुष्टे च वायौ विकृते वाते ; स च प्रायः कोष्ठस्थो ज्ञेयः ॥ ७८ ॥

तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तप्रशमनञ्च, अम्लं वातघ्नं पित्तकरञ्च ॥७९

वातेऽम्लं सन्धवोपेतं स्वादु पित्ते सशर्करम्।
पिबेत् तक्रं कफे चापि व्योषक्षारसमायुतम् ॥ ८० ॥
ग्राहिणी वातला रुक्षा दुर्ज्जरा तक्रकूर्च्चिका।
तक्राल्लघुतरो मण्डः कूर्च्चिकादधितक्रजः ॥
गुरुः किलाटोऽनिलहृत् पुंस्त्वनिद्राप्रदः स्मृतः।
मधुरौ बृंहणौ वृष्यौ तद्वत् पीयूषमोरटौ ॥ ८१ ॥

नवनीतं पुनः सद्यस्कं लघु सुकुमारं मधुरं कषायमीषदम्लं शीतलं मेध्यं दीपनं हृद्यं संग्राहि पित्तानिलहरं वृष्यमविदाहि क्षयकासश्वासव्रणार्शोऽर्दितापहम्, चिरोत्थितं गुरु कफमेदोविवर्द्धनं * बलकरं बृंहणं शोषघ्नं विशेषतो बालानां प्रशस्यते। क्षीरोत्थं पुनर्नवनीतमुत्कृष्टस्नेहमाधुर्य्यमतिशीतं सौकुमार्य्यकरं चक्षुष्यं संग्राहि रक्तपित्तनेत्ररोगहरं प्रसादनञ्च ॥ ८२ ॥

तक्रस्य रसविशेषेण गुणविशेषमाह—तदित्यादि। संयोगविशेषेण दोषहरत्वमाह—वाते इत्यादि ॥ ७९। ८० ॥

तस्य हेत्वन्तरैर्विग्रथितस्य स्त्यानघनीभूतस्य स्वगुणान् निर्द्दिशन्नाह—ग्राहिणीत्यादि। विनष्टं तक्रं घनावयवं तक्रकूर्च्चिका। इदानीं तक्राद् दधिमस्तुनस्तथा तक्रमस्तुनोऽपि विशेषं गुणेषु दर्शयन्नाह—तक्रादित्यादि। मण्डो मस्तुकः; कूर्च्चिकीभूतं यद् दधि तक्रञ्च ताभ्यां जातो यो मण्डः स तक्राल्लघुतरः, प्राकृतदधिजातं पुनर्मस्तु लाघवात्तक्रसममेव। अन्ये त्वेवं पठन्ति—दधिकूर्च्चिकातक्रज इति। तत्र प्राकृतदधिजः कूर्च्चिकीभूतदधिजः कुर्च्चिकीभूततक्रज इति मस्तुत्रयसंग्रहः। 'तक्रतुल्यो दधिमण्डो विष्टम्भारुचिनाशनः' इति च क्वचित् पठ्यते। प्राकृतमस्तु च ग्रीष्मादिदाहेन सुजातस्य दध्नः अच्छो भाग उच्यते। तक्रकूर्च्चिकाप्रस्तावे क्षीरकूर्च्चिकामाह—गुरुरित्यादि। कूर्च्चिकीभूतक्षीरस्य घनभागः किलाटः, यं लोकाः क्षीराश्रमित्याहुः। सूदास्तु किलाटीति। पुंस्त्वं शुक्रम्। पीयूषमोरटावाह—मधुरावित्यादि। तद्वदिति किलाटतुल्यौ। पीयूषः सद्यःप्रसूताया गोः क्षीरं सप्ताहं यावत्, तदेव सप्ताहात् परतो यावत् प्रसन्नतां न गच्छति तावन्मोरट इत्युच्यते। जेज्जटस्तु विनष्टक्षीरभवं मस्तु मोरटमित्याह ॥ ८१ ॥

सद्यस्कं नवनीतमाह—नवनीतमित्यादि। सद्यस्कं सद्योभवं देहसौकुमार्य्यकरम्। संग्राहि प्रभावात् तक्रावयवसम्बन्धाच्च, अतएवाम्लम्। चिरोत्थितस्य नवनीतस्य गुणमाह—गुर्व्वित्यादि। बलकरं ओजस्करम्, बृंहणं देहोपचयकरं, विशेषेण अतिशयेनेत्यर्थः। क्षीरमथनोत्थितस्य नवनीतस्य गुणमाह—क्षीरोत्थमित्यादि। दध्युत्थितनवनीतापेक्षया उत्कृष्टे स्नेहमाधुर्य्ये यस्मिन् तत्तथा।

* कफमेदोविलयनमिति वा पाठः।

सन्तानिका पुनर्वातघ्नी तर्पणी बल्या वृष्या स्निग्धा रुच्या मधुरा मधुरविपाका रक्तपित्तप्रसादनी गुर्व्वी चेति ॥ ८३ ॥

विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः।
विकल्पानवशिष्टांस्तु क्षीरवीर्य्यात् समादिशेत् ॥ ८४ ॥

इति तक्रवर्गः ॥

घृतन्तु सौम्यं मृदु शीतवीर्य्यं मधुरमल्पाभिष्यन्दि स्नेहनमुदावर्त्तोन्मादापस्मारशूलज्वरानाहवातपित्तप्रशमनमग्निदीपनं स्मृतिमतिमेधाकान्तिस्वरलावण्यसौकुमार्य्यौजस्तेजोबलकरमायुष्यं वृष्यं मेध्यं वयःस्थापनं गुरु चक्षुष्यं श्लेष्माभिवर्द्धनं पाप्मालक्ष्मीप्रशमनं विषहरं रक्षोघ्नञ्च ॥ ८५ ॥

अतिशीतमपि तदपेक्षयैव। प्रसादनञ्चेति रक्तपित्तनेत्ररोगयोः। प्रसादनस्थाने वर्णप्रसादनीयमिति केचित् पठन्ति ॥ ८२ ॥

क्षीरोत्थनवनीतप्रसङ्गेन क्षीरोत्थसन्तानिकामाह—सन्तानिकेत्यादि। सन्तानिका क्षीरस्योपरि स्त्यानो भागः क्षीरसर इत्यर्थः। तर्पणी तृप्तिजनिका। ननु चाष्टानां क्षीराणां निर्द्दिष्टत्वादिह तक्रमस्तुतक्रकूर्च्चिकाकिलाटपीयूषमोरटनवनीतसन्तानिकादयः कस्य क्षीरस्योक्ता इत्याह—विकल्प इत्यादि। विकल्पो भेदः, प्रकारः। दधि आदिर्यस्य स दध्यादिः। गव्य इति गोरेव, अभिवर्णितः कथितः, न पुनरजाविप्रभृतीनां, यतः श्रेष्ठः सर्व्वेभ्यः प्रधानम्, तत् किमजादीनां दध्यादि न सम्भवतीत्याह—विकल्पानित्यादि। अवशिष्टान् उर्व्वरितान्। क्षीरवीर्य्यादिति क्षीरवीर्य्यं क्षीरगुण इत्यर्थः। यथाजादीनां क्षीरगुणः तदनुगुणस्तत्तक्रादिगुणो वाच्य इत्यर्थः। इति तक्रवर्गः ॥ ८३। ८४ ॥

अथ घृतमाह—घृतन्त्वित्यादि। एते सामान्यघृतगुणाः, अन्ये तु गव्यस्यैवेति गुणश्रेष्ठत्वाद् इत्याहुः। सौम्यत्वमुष्णेऽपि यथाविक्षीरे अतिशीतवीर्य्यमित्युक्तम्। अल्पाभिष्यन्दि अनभिष्यन्दीत्यर्थः, एतेन दोषधातुमलस्रोतसां मन्दक्लेदप्राप्तिजननम्। स्नेहनं स्निग्धत्वापादकम्। उदावर्त्तादिप्रशमनम् उदावर्त्तप्रभृतिरोगनाशकमित्यर्थः; निरामाणामेव नतु सामानाम्। ज्वरस्य जीर्णस्य प्रशमनं शान्तिकरमित्यर्थः। स्मृत्यादिभिर्बलान्तैः सह करशब्दः प्रत्येकमभिसम्बध्यते। स्मृतिरतीतस्मरणम् अनागतज्ञानमित्यर्थः। मेधा ग्रन्थधारणशक्तिः, कान्तिः शोभा, लावण्यं रूपातिशयः, सौकुमार्य्यं मार्द्दवमङ्गानाम्, ओजः हृदिस्थितं धातुधाम, तेजः पराक्रमः अन्ये प्रभावमाहुः, सा च महापञ्जिकायां निषिद्धा। बलम् उपचयः। मेध्यं पवित्रम्। वयःस्थापनमिति यावदेवायुः प्रमितं तावदेवायुः स्थापयत्यनाबाधम्। रक्षोघ्नं राक्षसभयहरं त्रिदोषापकर्षणमिति केचित् पठन्ति, स तु नातिप्रसिद्धः पाठः। तत्रापि वातपित्तसम्बद्धस्यैव कफस्य हन्तृत्वं नतु केवलस्य ॥ ८५ ॥

विपाके मधुरं शीतं वातपित्तविषापहम्।
चक्षुष्यमग्र्यं बल्यञ्च गव्यं सर्पिर्गुणोत्तरम् ॥ ८६ ॥
आजं घृतं दीपनीयं चक्षुष्यं बलवर्द्धनम्।
कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥ ८७॥
मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम्।
वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ ८८ ॥
औष्ट्रं कटु घृतं पाके शोफक्रिमिविषापहम्।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ ८९ ॥
पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपनम्।
कफेऽनिले योनिदोषे शोषे कम्पे च तद्धितम् ॥ ९० ॥
पाके लघूष्णवीर्य्यञ्च कषायं कफनाशनम्।
दीपनं बद्धमूत्रञ्च विद्यादेकशफं घृतम् ॥ ९१ ॥
चक्षुष्यमग्र्यं स्त्रीणान्तु सर्पिः स्यादमृतोपमम्।
वृद्धिं करोति देहाग्न्योर्लघुपाकं विषापहम् ॥ ९२ ॥
कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु।
हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन् ॥ ९३ ॥

क्षीरघृतं पुनः संग्राहि रक्तपित्तभ्रममूर्च्छाप्रशमनं नेत्ररोगहितञ्च ॥ ९४ ॥

सर्पिर्मण्डस्तु मधुरः सरो योनिश्रोत्राक्षिशिरसां शूलघ्नो वस्तिनस्याक्षिपूरणेषूपदिश्यते ॥ ९५ ॥

सर्पिः पुराणं सरं कटुविपाकं त्रिदोषापहं मूर्च्छामदोन्मादोदरज्वरगरशोफापस्मार-योनिश्रोत्राक्षिशिरःशूलघ्नं दीपनं वस्तिनस्याक्षिपूरणेषूपदिश्यते ॥९६॥

सामान्येन घृतगुणमभिधाय गव्यघृतस्य विशेषगुणमाह—विपाके इत्यादि। चक्षुष्यमग्र्यमिति सर्व्वचक्षुष्यश्रेष्ठमित्यर्थः। गुणोत्तरं गुणोत्कृष्टम्। आजं घृतमाह—आजमित्यादि। माहिषघृतमाह—मधुरमित्यादि। औष्ट्रघृतमाह—औष्ट्रमित्यादि। आविकघृतमाह—पाके इत्यादि। आश्वघृतमाह—पाके इत्यादि। ऐकशफं घृतम् अश्वाया घृतमित्यर्थः। मानुषीघृतमाह—चक्षुष्यमित्यादि। चक्षुष्यमग्र्यं सर्व्वचक्षुष्यश्रेष्ठम्। हास्तिनघृतमाह—कषायमित्यादि। कारेणवं हास्तिनम् ॥ ८६—९३ ॥

क्षीरोत्थघृतगुणमाह—क्षीरघृतमित्यादि। क्षीरमथनात् समुद्भूतनवनीतोत्थितं घृतं क्षीरघृतम्। संग्राहि प्रभावात्। भ्रमश्चक्रारूढस्येव। मूर्च्छा चेतनाच्युतिः। घृतमण्डस्य गुणमाह—सर्पिर्मण्डस्त्वित्यादि। विलीनघृतस्य घनीभूत उपरितनो भागो मण्डः ॥ ९५—९६ ॥

भवन्ति चात्र।

पुराणं तिमिरश्वास-पीनसज्वरकासनुत्।
मूर्च्छाकुष्ठविषोन्माद-ग्रहापस्मारनाशनम्॥ ९७॥
एकादशशतञ्चैव वत्सरानुषितं घृतम्।
रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम्॥
पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः।
बल्यं पवित्रं मेध्यञ्च विशेषात् तिमिरापहम्॥
सर्व्वभूतहरञ्चैव घृतमेतत् प्रशस्यते॥ ९८॥

इति घृतवर्गः।

तलन्त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं बृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकासि वृष्यं त्वक्प्रसादनं * मेधामार्द्दवमांसस्थैर्य्यवर्णवलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलवलासक्षयकरं क्रिमिघ्नमशितपित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनञ्च। तथा च्छिन्न-

पुराणघृतगुणमाह—सर्पिरित्यादि। पुराणं दशवर्षस्थितम्, विषरुधिरमद्यजा मदाख्यः, गरः संयोगविषम्, पूरणेऽक्षिपूरणे। एकादशशतमिति एकादशोत्तरं शतमित्यर्थः। भूतैः प्राणिभिः। आचार्य्यस्तु कौम्भन्तु शतवत्सरमित्याह। अयं पाठो निवन्धेषु न दृश्यते। अस्माभिस्तु बहुवैद्यपठितत्वात् पठितः। इति घृतवर्गः॥ ९७—९८॥

जङ्गमस्नेहोत्तमं घृतं निर्द्दिश्य स्थावरस्नेहोत्तमं तैलं गुणकर्म्मभ्यां निर्द्दिशन्नाह—तैलमित्यादि। तिलेषु भवं तैलं तिलतैलम्। आग्नेयमुष्णमिति प्रभा आग्नेयी न चोष्णा, क्षार उष्णः सौम्यश्च, मत्स्या उष्णा न त्वाग्नेयाः, अतएवाग्नेयमुष्णमित्युभयमुक्तम्। बृंहणं धातुपुष्टिकरत्वेन शरीरदार्ढ्यावहत्वात्, न च लेखनत्वमप्यस्य विरुद्धं मेदोहरत्वात्। न खलु तैलं मेदोघ्नमपि मांसं न करोति, प्रतिनियतशक्तित्वाद् द्रव्याणाम्। प्रीणनं तृप्तिजनकम्। व्यवायि अपरिणतमेव व्याप्य देहं पच्यते। सूक्ष्मं सूक्ष्मस्रोतोऽनुसारि। विशदं निर्म्मलम्। विकासि सन्धिवन्धविमोचकम्। वृष्यं शुक्रलं, अन्ये तु धातुपोषणकरणाद् वृष्यं, सद्यः पुनरवृष्यमेव। यदुक्तं जातुकर्णेन—शुक्रार्थे तैललवणमिति। त्वक्प्रसादनम् अभ्यङ्गे भोजने च। वर्णो गौरादिः। बलकरम् उत्साहकरम्, चक्षुष्यं परिणामे न तु पूरणेन, लेखनं मेदोहरम्। अनिलवलासक्षयकरमिति मिलितवातवलासयोः क्षयकरम्, न केवलस्य वातस्य न केवलस्य श्लेष्मणः; अथवा क्षयो मार्गः, अनिलवलासस्रोतःशोधनमित्यर्थः। अशितपित्तजननम् अल्पतनुकरणपित्तयाजंनकं, शितं हि तनूकरणं, नञाल्पदर्थे, तेनाल्पतनूकरणमिति लभ्यते। केचिदशितमिति पृथक् पठन्ति। तच्च महापार्श्वकायां दूषितम्। छिन्नं द्विधाभूतं,

* शोधनमित्यधिकः पाठः क्वचित्।

भिन्नविद्धोत्पिष्टच्युतमथितक्षतपिच्चितभग्नस्फुटितक्षाराग्निदग्धविश्लिष्टदारिताभिहतदुर्भग्नमृगव्यालविदष्टप्रभृतिषु च परिषेकाभ्यङ्गावगाहादिषु तिलतैलं प्रशस्यते।

तद् वस्तिषु च पाने च नस्ये कर्णाक्षिपूरणे।
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये॥ ९९॥

एरण्डतैलं मधुरमुष्णं तीक्ष्णं दीपनं कटुकषायानुरसं सूक्ष्मं स्रोतोविशोधनं त्वच्यं वृष्यं मधुरविपाकं वयःस्थापनं योनिदोषशुक्रविशोधनमारोग्यमेधाकान्तिस्मृतिबलकरं वातकफहरमधोभागदोषहरञ्च॥ १००॥

निम्बातसी-कुसुम्भ-मूलक-जीमूतक-वृक्षककृतवेधनार्ककम्पिल्लकहस्तिकर्णपृथ्वीकापीलु-करञ्जेङ्गुदी-शिग्रु सर्षप-सुवर्च्चला-विड़ङ्ग-ज्योतिष्मतीफलतैलानि तीक्ष्णानि लघून्युष्णवीर्य्याणि कटूनि कटुविपाकानि सराण्यनिलकफक्रिमिकुष्ठप्रमेहशिरोरोगहराणि चेति॥ १०१॥

वातघ्नं मधुरं तेषु क्षौमं तैलं बलावहम्।
कटुपाकमचक्षुष्यं स्निग्धोष्णं गुरु पित्तलम्॥ १०२॥
क्रिमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु।
कफमेदोऽनिलहरं लेखनं कटु दीपनम्॥ १०३॥
क्रिमिघ्नमिङ्गुदीतैलमीषत्तिक्तं तथा लघु।
कुष्ठामयक्रिमिहरं दृष्टिशुक्रबलापहम्॥ १०४॥

भिन्नं विदारितं, विद्धं सूच्यादिभिः, उत्पिष्टं चूर्णितं, च्युतं स्थानादधोगतं, मथितं विलोड़ितं, क्षतम् उरःक्षतादि, पिच्चितं चिप्पटीभूतं, चिपिंतमिति लोके। भग्नं सन्धिमुक्तादिभेदं, स्फुटितं बहुधा खण्डीभूतं, विश्लिष्टं सन्धिविश्लेषमात्रयुक्तं, दारितं स्फाटितमीषद्विदारितमित्यर्थः। अभिहतं लगुड़ादिभिः। दुर्भग्नं चूर्णितातिपातितं मज्जानुगतादिकं कृच्छ्रसाध्यं दुष्टं भग्नम्। मृगव्यालविदष्टं दुष्टमृगभक्षितम्। परिषेकः अङ्गोपरि तैलधारादिनिपातः। अभ्यङ्गः प्रसिद्धः। अवगाहः अप्क्रीड़नम्। अन्नपानविधावििति विधौ संस्करणे॥ ९९॥

एरण्डतैलस्य गुणकर्म्माण्याह—एरण्डतैलमित्यादि। अधोभागदोषहरं विरेचनेन दोषहरमित्यर्थः॥ १००॥

निम्बादिफलस्नेहगुणमाह—निम्बेत्यादि। जीमूतको देवदाली, वृक्षकः कुटजः, कृतवेधनः कोशातकी, अर्कः प्रसिद्धः, कम्पिल्लको रेचनिकः, हस्तिकर्णो महापर्णो भूपलाश इत्युच्यते, अन्ये रक्तैरण्डमाहुः। पृथ्वीका कृष्णजीरकः, पीलुः प्रसिद्धः, करञ्जः वृक्षकरञ्जः इङ्गुदी कण्टकीवृक्षः प्रसिद्धः, पुत्रजीवकमाहुः। शिग्रुः शोभाञ्जनफलं, सुवर्च्चला सूर्य्यावर्त्तः, विड़ङ्गः क्रिमिहा, ज्योतिष्मती काकमर्द्दनिका। निम्बतैलं तन्त्रान्तरे पलितहरमुक्तं, इहापि सामान्येन शिरोरोगापहरत्वेन पलित-

विपाके कटुकं तैलं कौसुम्भं सर्व्वदोषकृत् ।
रक्तपित्तकरं तीक्ष्णमचक्षुष्यं विदाहि च ॥ १०५ ॥

किराततिक्तकाऽतिमुक्तक-विभीतक-नारिकेर-कोलाक्षोड़जीवन्ती-पियाल-कर्व्वुदार-सूर्य्यवल्ली-त्रपुसैर्व्वारुक-कर्कारु-कुष्माण्ड-प्रभृतीनां तलानि मधुराणि मधुरविपाकानि वातपित्तप्रशमनानि शीतवीर्य्याण्यभिष्यन्दीनि सृष्टविण्मूत्राण्यग्निसादनानि चति ॥ १०६ ॥

मधुककाश्मर्य्यपलाशतैलानि मधुरकषायाणि कफपित्तप्रशमनानि ॥१०७॥

तुवरकभल्लातकतले उष्णे मधरकषाये तिक्तानुरसे वातकफकुष्ठमेदोमेहक्रिमिहरे उभयतोभागदोषहरे च ॥ १०८ ॥

सरलदेवदारु-गण्डीर-शिंशपागुरुसारस्नेहास्तिक्त-कटु-कषाया दुष्टव्रणशोधनाः क्रिमिकफकुष्ठानिलहराश्च ॥ १०९ ॥

तुम्बीकोशाम्रदन्तीद्रवन्तीश्यामासप्तलानीलिकाकम्पिल्लकशङ्खिनीस्नेहास्तिक्तकटुकषाया अधोभागदोषहराः क्रिमिकफकुष्ठानिलहरा दुष्टव्रणविशोधनाश्च॥११०॥

हरत्वमुच्यते। एषु केषाञ्चित् सामान्यगुणाननु विशेषं निर्द्दिशन्नाह—वातघ्नमित्यादि। क्षौमम् अतसीभवम्। कृमिघ्नमित्यादि ॥ १०१—१०५ ॥

कटून्यभिधाय मधुराणि निर्द्दिशन्नाह—किरातेत्यादि। अतिमुक्तकः आवन्तकः, कोलो बदरमज्जा, अक्षोड़ः उत्तरापथे आखरोट् इति प्रसिद्धः, जीवन्ती स्वर्णजीवन्तीफलं, पियालः प्रसिद्धो मधुराम्लफलः, कर्व्वुदारः काञ्चनारः, सूर्य्यवल्ली अर्कपुष्पी, सूर्य्यावर्त्तभेद इत्यन्ये, सुवर्च्चलायाः पूर्व्वमेव पठितत्वात्। त्रपुसं कर्कटीफलं त्रिपुण्डी इति लोके। एर्व्वारुः ग्रीष्मकर्कटिका, कर्कारु वाड्वं त्रपुसम्। प्रभृतिग्रहणात् कालिङ्गादीनां ग्रहणम्। अग्निसादनानि अग्निमान्द्यकराणि। किराततिक्तकादीनां तिक्तानामपि मधुराणि तैलानि प्रत्यक्षदृष्टत्वात् ॥ १०६ ॥

मधुकादीनां तैलान्याह—मधुकेत्यादि। पलाशः किंशुकः ॥ १०७ ॥

तुवरादितैलमाह—तुवरकेत्यादि। तुवरकं पश्चिमार्णवतीरजातमाहुः। तदुक्तं—'पत्रैस्तु केशराकारैः कलायसदृशैः फलैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः ॥' उभयतोभागदोषहरे चेति वमनेन विरेचनेन चेत्यर्थः ॥ १०८ ॥

सारस्नेहानाह—सरलेत्यादि। सरलो वृक्षभेदः, गण्डीरः सारप्रधानस्तरुविशेषः, सारस्त्वन्तर्गतः प्रधानभूतोऽवयवविशेषः ॥ १०९ ॥

तुम्ब्यादीनां स्नेहमाह—तुम्बीत्यादि। तुम्बी तिक्तालावुः, कोशाम्रः कोशम्ब इति प्रसिद्धः। दन्ती दन्तिनी, द्रवन्ती शम्बरी, श्यामा वृद्धदारकः, सप्तला सातलेति प्रसिद्धा। नीलिनी श्रीफलिका, कम्पिल्लकः प्रसिद्धः, शङ्खिनी श्वेतश्रीफलिका, अन्ये यवतिक्ताभेदमाहुः। अधोभागदोषहरा इति विरेचनेन दोषहरा इत्यर्थः ॥ ११० ॥

यवतिक्तातैलं सर्व्वदोषप्रशमनमीषत्तिक्तमग्निदीपनं लेखनं मेध्यं पथ्यं रसायनञ्च ॥ १११ ॥

एकैषिकातैलं मधुरमतिशीतं पित्तहरमनिलप्रकोपणं श्लेष्माभिवर्द्धनञ्च ॥११२॥

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं रूक्षं मधुरकषायं रसवन्नातिपित्तकरञ्च ॥ ११३ ॥

फलोद्भवानि तैलानि यान्युक्तानीह कानिचित्। *
गुणान् कर्म्म च विज्ञाय फलानीव विनिर्द्दिशेत् ॥ †
यावन्तः स्थावराः स्नेहाः समासात् परिकीर्त्तिताः।
सर्व्वे तैलगुणा ज्ञेयाः सर्व्वे चानिलनाशनाः ॥ ११४ ॥
सर्व्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते।
निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ ११५ ॥

यवतिक्तातैलमाह—यवतिक्तातैलमित्यादि। यवतिक्ता यवक्षेत्रेषु जायते, तिक्तसप्ताष्टपला यवतिक्तेति प्रसिद्धा ॥ १११ ॥

एकैषिकातैलमाह—एकैषिकातैलमित्यादि। एकैषिका अविद्धकरणी, पाठेति लोके, त्रिवृदिति जेज्झटः ॥ ११२ ॥

आम्रतैलमाह—सहकारतैलमित्यादि। सहकारतैलम् आम्रतैलम्। तच्चाम्रस्य तरुणफलवृन्तभङ्गमात्रत एव जातमिति गयी। तत्फलमज्जस्नेह इत्यन्ये ॥ ११३ ॥

फलानामानन्त्यात् फलगुणातिदेशं तैलस्याह—फलोद्भवानीत्यादि। इह जगति। फलानीवेति फलसदृशगुणाः कर्म्माणि चेत्यर्थः ; अथवा इह तैलवर्गे यानि कानिचित् फलोद्भवानि तैलान्युक्तानि तानि तावदुक्तगुणकर्म्मभ्यामेव ज्ञेयानि। शेषाणि तु फलतैलानि फलस्य गुणान् कर्म्म च विज्ञाय फलानीव विनिर्द्दिशेदित्यर्थः। केचित् तु यान्युक्तानीह कानिचिदित्यस्य स्थाने यानीत्युक्तानि कानिचिदिति पठन्ति। शेषञ्च समम्। तच्च सुबोधम्। सर्व्वेषां स्थावराणां स्नेहानां तिलतैलगुणमाह—यावन्त इत्यादि। सर्व्वे तैलगुणा ज्ञेया इति एतेन तिलतैले ये केचिद्धर्म्माः कानिचित् कर्म्माणि च यानि तान्यपरेष्वपि तैलेषु वर्त्तन्ते इत्युक्तं, न तु सर्व्वे तिलतैलधर्म्माः सर्व्वाणि तिलतैलकर्म्माणि, अन्ये तु गुणशब्देन सर्व्वसाधारणीं स्निग्धतामाहुः ॥ ११४ ॥

तिलतैलप्राधान्यकथनद्वारेण इतरेषां तैलानामपि तैलत्वमाह—सर्व्वेभ्यस्त्वित्यादि। निष्पत्तेरिति यथा तैलं हि तिलशब्दान्निष्पद्यते तथैवैरण्डादितैलमपीति निष्पत्तिमाम्यादित्यर्थः। एरण्डतैलादिषु चोपचारेण तन्निष्पत्तेस्तिलतैलस्य प्रशस्तत्वमिति भावः। तद्गुणत्वाच्चेति कैश्चित् तिलकर्म्मभिः कैश्चित्तिलतैलधर्म्मैश्च समानत्वात् ॥ ११५ ॥

* यान्युक्तानि कानिचित् इति पाठान्तरम्। † फलवत् तानि निर्द्दिशेत् इति वा पाठः।

ग्राम्यानूपौदकानाञ्च वसामेदोमज्जानो गुरूष्णमधुरा वातघ्नाः, जाङ्गलकशफक्रव्यादादीनां लघुशीतकषाया रक्तपित्तघ्नाः, प्रतुदविष्किराणां श्लेष्मघ्नाः ॥ ११६ ॥

तत्र घृततैलवसामेदोमज्जानो यथोत्तरं गुरुविपाका वातहराश्च ॥ ११७ ॥

इति तैलवर्गः।

मधु तु मधुरं कषायानुरसं रूक्षं शीतमग्निदीपनं वर्ण्यं वल्यं * लघु सुकुमारं लेखनं हृद्यं वाजीकरणं सन्धानं शोधनं रोपणं संग्राहि चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासकासातिसारच्छर्दितृष्णाक्रिमिविषप्रशमनं ह्लादि त्रिदोषप्रशमनञ्च। तत् तु लघुत्वात् कफघ्नं, पैच्छिल्यान्माधुर्य्यात् कषायभावाच्च वातपित्तघ्नम्। ११८॥

पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ ११९ ॥

स्नेहसमानत्वाद् वसादिगुणकर्माह—ग्राम्येत्यादि। ग्राम्या गवोष्ट्रवस्तादयः, आनूपा महिषादयः, औदका मत्स्यादयः। जाङ्गलेत्यादि। जाङ्गला एणादयः, एकशफा अश्वादयः, क्रव्यादा व्याघ्रादयः। प्रतुदेत्यादि। प्रतुदाः कपोतपारावतादयः, विष्किरा लावादयः ॥ ११६।११७ ॥ इति तैलवर्गः।

इदानीं मध्वाह, तस्य सामान्यं स्वगुणं निर्दिशन्नाह—मधु त्वित्यादि। रूक्षदीपनलघुत्वादिगुणयुक्तं पुराणं नवमेतद्विपरीतमिति। सुकुमारं सौकुमार्य्यकरं, लेखनं पत्तलीकरणं, हृद्यं हृदयप्रियं हितञ्च। वाजीकरणं शुक्रलं, सन्धानं भग्नस्य, चक्षुष्यं चक्षुषे हितं, प्रसादनं चक्षुषोर्देहस्य च, आह्लादि सुखकारि। त्रिदोषशमनमिति यद्यपि शैत्यरौक्ष्यलाघवैर्वातकारित्वं मधुरत्वादिना च कफकारित्वं तथापि द्रव्यगुणोभयप्रभावात् त्रिदोषघ्नत्वम् ॥ ११८ ॥

तद्भेदानाह—पौत्तिकमित्यादि। पिङ्गला महत्यो मक्षिकाः पुत्तिकाः, तद्भवं पौत्तिकम्; अन्ये मशकोपममक्षिकाः कृष्णवर्णाः पुत्तिका इति वदन्ति। भ्रमराः प्रसिद्धाः तद्भवं भ्रामरम्। मक्षिकाः पिङ्गला एव स्वल्पाः क्षुद्राः, तद्भवं क्षौद्रम्। पिङ्गलवर्णा महत्यो मक्षिकास्तद्भवं माक्षिकम्; अन्ये अत्यल्पा मक्षिका इत्याहुः। पीतका पिङ्गला वग इति लोके यत् कुर्व्वन्ति छत्राकारं हिमाचलवने मालववने च तत् छात्रम्। "मधूकवृक्षनिर्य्यास(मधूकवृक्षपुष्पेभ्यो)जरत्कार्वाश्रमोद्भवम्। स्रवन्त्यार्घ्यं मधु प्राहुः श्वेतकं मालवे जनाः ॥ तीक्ष्णतुण्डास्तु याः पीतवर्णाः षट्पदसन्निभाः। अर्घा नाम च तद्भूतमार्घ्यमित्यपरे जगुः" इति। उष्णेन सहार्घ्यं न विरुध्यते। यदुक्तं—"मधून्युष्णैर्विरुध्यन्तेऽन्यत्रार्घ्यात्" इति। उद्दालकाः कपिलकीटाः स्वल्पाः प्रायशो वल्मीकेष्वन्तर्मधु स्रवन्ति, तद्भवमौद्दालकम्। दालमिति दलं पत्रं तदुपरिस्थितं दालम्। अन्ये तु कपिला एव स्वल्पतरा मक्षिकाः प्रायेण वृक्षकोटरोद्भवा दला इत्युच्यन्ते, तद्भवं दालमिति ॥ ११९ ॥

* बल्यमित्यत्र स्वर्य्यमिति वा पाठः।

विशेषात् पौत्तिकं तेषु रुक्षोष्णं सविषान्वयात्।
वातासृक्पित्तकृच्छेदि विदाहि मदकृन्मधु ॥ १२० ॥
पच्छिल्यात् स्वादुभूयस्त्वाद्भ्रामरं गुरुसंज्ञितम् ॥ १२१ ॥
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥ १२२ ॥
तस्माल्लघुतरं रुक्षं माक्षिकं प्रवरं स्मृतम्।
श्वासादिषु च रोगेषु प्रशस्तं तद् विशेषतः ॥ १२३ ॥
स्वादुपाकं गुरु हिमं पिच्छिलं रक्तपित्तजित्।
श्वित्रमेहक्रिमिघ्नश्च विद्याच्छात्रं गुणोत्तरम् ॥ १२४ ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम्।
कषायं कटु पाके च बल्यं तिक्तमवातकृत् ॥ १२५ ॥
औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम्।
कषायमुष्णमम्लश्च पित्तकृत् कटुपाकि च ॥ १२६ ॥
छर्दिमेहप्रशमनं मधु रुक्षं दलोद्भवम् ॥ १२७ ॥
बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥ १२८ ॥
मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥ १२९ ॥
दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥ १३० ॥
तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्।
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ १३१ ॥

तेषां प्रत्येकं गुणमाह—विशेषादित्यादि। सविषान्वयादिति सविषरसाहार(सविषपुष्पाहार) मक्षिकासम्भवत्वात्। छेदि मेदोग्रन्थ्यादीनाम्। मदकृदिति विषान्वयत्वादेव विषमदकृत् ॥१२०-१२७

नवपुराणयोर्गुणमाह—बृंहणीयमित्यादि। तस्याल्पकालस्थापितत्वेन नवत्वम्, एतद्विपर्य्ययेण पुराणत्वम् ॥ १२८। १२९ ॥

पक्वामयोर्गुणमाह—दोषत्रयहरमित्यादि। पक्वत्वमग्निसंयोगात्, घनीभावादित्येके, अग्नि-संयोगनिषेधान्निन्दितमेतत्, तस्मान्मधुनः कालविशेषस्थित्या परिणामात् पक्वत्वमामत्वञ्च ज्ञेय-मित्यन्ये। अनेककर्म्मकारिणीं योगवाहितां दर्शयन्नाह—तद्युक्तमित्यादि। योगैरिति औषधसमूहै-रित्यर्थः। यादृग्द्रव्येण संयोज्यन्ते तादृक् कर्म्म कुर्व्वन्तीति योगवाहित्वम्, तेषां मध्ये परमुत्-कृष्टं मध्वित्यर्थः ॥ १३०।१३१ ॥

तत् तु नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानां पुष्परसानां सविषमक्षिका-सम्भवत्वाच्चानुष्णोपचारम् ॥ १३२ ॥

उष्णैर्व्विरुध्यते सर्व्वं विषान्वयतया मधु।
उष्णार्त्तमुष्णरुष्णे वा तन्निहन्ति यथा विषम् ॥ १३३ ॥

तत् सौकुमार्य्याच्च तथैव शत्यान्नानौषधीनां रससम्भवाच्च।
उष्णैर्व्विरुध्येत् विशेषतश्च तथान्तरीक्षेण जलेन चापि ॥ १३४ ॥

उष्णेन मधु संयुक्तं वमनेष्ववचारितम्।
अपाकादनवस्थानान्न विरुध्येत पूर्व्ववत् ॥ १३५ ॥

मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते।
विरुद्धोपक्रमत्वात् तत् सर्व्वं हन्ति यथा विषम् ॥ १३६ ॥

इति मधुवर्गः।

इक्षवो मधुरा मधुरविपाका गुरवः शीताः स्निग्धा बल्या वृष्या मूत्रला रक्त-पित्तप्रशमनाः क्रिमिकफकराश्चेति ॥ १३७ ॥

इदानीमुक्तायामपि हिताहितीये प्रोक्तमागतायामनुष्णोपसेवायां हेतुं दर्शयन्नाह—तत्त्वित्यादि। तत् मधु अनुष्णोपचारं भवतीति सम्बन्धः। कस्मादित्याह—पुष्परसानां मक्षिकासम्भवत्वात्, किम्भूतानाम्? नानाद्रव्यरसगुणवीर्य्यविपाकविरुद्धानाम्; पुष्परसविषमक्षिकासम्भवत्वादित्यन्ये पठन्ति। पुष्परसविषसञ्चारिण्यो मक्षिकाः पुष्परसविषमक्षिकाः। अनुष्णोपचारं योगवाहि चेति केचिद् द्वयं पठन्ति, तन्न पूर्व्वमुक्तत्वाद् योगवाहितायाः, मक्षिका हि पुष्परससञ्चारिण्यस्तत्सम्भवं मध्वपि वीर्य्येणोष्णं भवति, तस्मान्मधु उष्णद्रव्येण न उपचर्य्यतें युज्यते, उष्णेन सह विरुद्धत्वात् विषवदिति भावः ॥ १३२ ॥

उष्णेन सह विरोधे हेतुमाह—उष्णैरिति उष्णस्पर्शः न तूष्णवीर्य्यः। विषान्वयतया विषाहार-मक्षिकाप्रसवतया। उष्णार्त्तं घर्म्मपीड़ितम्, उष्णैर्द्रव्यैः सह, उष्णे देशे काले वा। उक्तमेव सुख-बोधनार्थमाह—तदित्यादि। सुकुमारं ह्युष्णेन विरुध्यते, यथा नवनीतस्त्यानघृतजलकुसुमानि। शीतस्यापि स्वभावतः शीतेनापि केनचिद्विरोधमाह—तथान्तरीक्षेण जलेन चापि; खजलेन स्वभावतः, अपिशब्दादार्घ्यमुष्णेन सह न विरुध्यते। वमनविषये उष्णेनाप्यविरोधमाह—उष्णेनेत्यादि। यद्यपि वमने उष्णस्य मधुना विरोधो नोक्तः, तथापि वृद्धा न प्रयुञ्जते वमनस्याधोगतिभयात्। अन्येभ्योऽजीर्णेभ्यः सकाशान्मध्वजीर्णं कष्टावहमित्याह—मध्वित्यादि। मध्वामं मध्वजीर्णं, परत ऊर्द्ध्वम्; आमस्य स्वेदोष्णोदकादय उपक्रमा उष्णत्वान्मधुनो विरुद्धाः ॥ १३३-१३६॥ इति मधुवर्गः।

ते चानेकविधाः ; तद्‌यथा—

पौण्ड्रको भीरुकश्चैव वंशकः शतपोरकः।
कान्तारस्तापसेक्षुश्च काष्ठेक्षुः सूचिपत्रकः॥
नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकृत्।
इत्येता जातयः स्थौल्याद्———————।
————गुणान् वक्ष्याम्यतः परम्॥१३८॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मलः सरः।
अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा॥
आभ्यां तुल्यगुणः किञ्चित्-सक्षारो वंशको मतः।
वंशवच्छतपोरस्तु किञ्चिदुष्णः स वातहा॥
कान्तारतापसाविक्षू वंशकानुगुणौ मतौ।
एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपणः॥
सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः।
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः॥
कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः॥१३९॥
अतीव मधुरो मूले मध्ये मधुर एव तु।
अग्रे त्वक्षिषु विज्ञेय इक्षूणां लवणो रसः॥१४०॥
अविदाही कफकरो वातपित्तनिवारणः।
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीड़ितो रसः॥१४१॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः॥१४२॥

अथेक्षूणां सामान्यं गुणमाह—इक्षव इत्यादि। इतिशब्दः प्रकारवाची, तेन पोरकशतपत्रपौण्ड्रकवेत्रकोद्रवकवनिप्रभृतयो बह्वो जातयो गृह्यन्ते। स्थौल्यादिति स्थौल्यात् सामान्यादेव द्वादशजातयो भवन्तीत्यर्थः॥ १३७—१३९॥

गुणानित्यादि। तेषामवयवविशेषेण गुणविशेषमाह—अतीवेत्यादि। अग्रे त्वक्षिषु विज्ञेय इति इक्षूणामक्षिषु पर्वसन्धिषु प्ररोहजननसमर्था अङ्कुराः। अन्ये त्वक्षु चेति पठन्ति। त्वक्षु वल्कलेषु। दन्तनिष्पीड़ितेक्षुरसस्य गुणमाह—अविदाहीत्यादि। वृहल्लघुपञ्जिकयोः जेज्झटस्तु—"कफकृच्चाविदाही च रक्तपित्तनिवर्हणः। शर्करासमवीर्य्यस्तु दन्तनिष्पीड़ितो रसः" इति पठति। शर्करासमवीर्य्यं इत्यत्र वीर्य्यशब्दः शक्त्यभिधायकः, न तु शीतादिवीर्य्यवाचकः। कस्मादविदाही? उच्यते—बहिरस्थायित्वेन वातातपाद्यनुपहतत्वात्॥ १४०। १४१।

यन्त्रपीड़ितेक्षुरसस्य गुणमाह—गुरुरित्यादि। यन्त्रपीड़ितस्य बहिश्चिरस्थित्या वातातपादि-

पक्वो गुरुः सरः स्निग्धः स तीक्ष्णः कफवातनुत् ॥ १४३ ॥
फाणितं गुरु मधुरमभिष्यन्दि बृंहणमवृष्यं त्रिदोषकृच्च ॥ १४४ ॥
गुडः सक्षारमधुरो नातिशीतः स्निग्धो मूत्ररक्तशोधनो नातिपित्तजिद् वातघ्नो मेदःक्रिमिकफकरो बल्यो वृष्यश्च ॥ १४५ ॥
पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ।
स पुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥ १४६ ॥
मत्स्यण्डिकाखण्डशर्करा विमलजाता उत्तरोत्तरं शीताः स्निग्धा गुरुतरा मधुरतरा वृष्या रक्तपित्तप्रशमनास्तृष्णाप्रशमनाश्च ॥ १४७ ॥
यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ।
स्नेहगौरवशैत्यानि सरत्वञ्च तथा तथा ॥ १४८ ॥
यो यो मत्स्यण्डिकाखण्ड-शर्कराणां स्वको गुणः ।
तेन तेनैव निर्देश्यस्तेषां विस्रावणो गुणः ॥ १४९ ॥

संयोगे त्वगादिभिः सह पीड़नाच्च गुरुत्वादयो भवन्ति। गुरुत्वं चिरपाकित्वम्। विदाहीति "द्रव्यस्वभावादथ गौरवाद् वा चिरेण पाकं जठराग्नियोगात्। पित्तप्रकोपं विदहत् करोति तदन्नपानं कथितं विदाहि" इति। विष्टम्भः गुड़गुड़ाशब्दः, अन्ये तु सवाततोदशूला मलस्याप्रवृत्तिर्विष्टम्भः। तस्याग्निपक्वस्य गुणमाह—पक्व इत्यादि। फाणितस्य गुणमाह—फाणितमित्यादि। फाणितं क्षुद्रगुडः लहकाकर इति लोके। अस्य त्रिदोषकरत्वं प्रभावात्। तस्यैव पाकादतिघनभावं गतस्य गुडसंज्ञामाह—गुड इत्यादि। सक्षार ईषत्क्षारः। एतेऽनिर्म्मलगुडगुणाः। निर्म्मलगुडस्य गुणमाह—पित्तघ्न इत्यादि। शुद्धो निर्म्मलो धवल इत्यर्थः। पुराणस्य गुडस्य गुणमाह—स इत्यादि। पुराण ईषत् पुराणः। गुडस्य संस्कारविशेषेण नामान्तरं गुणान्तरञ्चाह—मत्स्यण्डिकेत्यादि। मत्स्यण्डिका द्रवखण्डः खण्डद्रव इति लोके। खण्डः प्रसिद्धः। शर्करा सितोपला तवराज इति लोके। गुडान्मत्स्यण्डिका ततः खण्डस्ततः शर्करेति यथा वैमल्योत्कर्षस्तथा शैत्यादिप्रकर्ष इत्यर्थः ॥ १४२—१४७ ॥

पूर्व्वोक्तमेव स्मारयति—यथेत्यादि। एषामिक्षुविकाराणाम्। गौरवं वातपित्तहारित्वं, गौरवं मधुरविपाकित्वमन्ये। अन्ये तु स्नेहलाघवशैत्यानीति पठन्ति। मत्स्यण्डिकादीनां करणे अपनीयमानस्य मलस्य गुणमाह—यो य इत्यादि। स्वको गुणः शीतादिरित्यर्थः। तेन तेनैव स्वकीयेन स्वकीयेनैव गुणेन। को निर्देश्य इत्याह—तेषां विस्रावणो गुण इति निर्देश्यः कथनीयः। गुणः समलक्षारोऽवयवविशेषः। कथं समलक्षारो गुणः कथ्यते ? उच्यते—यो यो यस्य सम्बन्धी भवति तेषां मत्स्यण्डिकादीनां विस्रावणो गुणो निर्म्मलीकरणः, स तु तद्गुण एव तत्सम्भूतत्वात् ॥ १४८।१४९ ॥

सारस्थिता सुविमला निःक्षारा च यथा यथा।
तथा तथा गुणवती विज्ञेया शर्करा बुधैः॥ १५०॥

मधुशर्करा पुनश्छर्द्यतीसारहरी रुक्षा छेदनी प्रह्लादनी कषायमधुरा मधुरविपाका च॥ १५१॥

यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति॥ १५२॥

यावत्यः शर्कराः प्रोक्ताः सर्व्वा दाहप्रणाशनाः।
रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृषापहाः॥ १५३॥
रुक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत्।
कफघ्नं मधुरं पाके कषायं वस्तिदूषणम्॥ १५४॥

इतीक्षुवर्गः।

सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम्।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्॥
पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्।
विकासि सृष्टविण्मूत्रं——————————॥ १५५॥
————————श्रृणु तस्य विशेषणम्।
मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा।
रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते॥
मधुरं तद्धि रुक्षञ्च कषायानुरसं लघु।
लघुपाकि सरं शोष-विषमज्वरनाशनम्॥ १५६॥

शर्करायाः उत्कर्षमाह—सारेत्यादि॥ १५०॥

मधुशर्करागुणमाह—मधुशर्करेत्यादि। पाकात् कालान्तरशोषणाद् वा घनीभूतावयवं मधुशर्करातुल्यत्वात् मधुशर्करा इत्युच्यते। छेदनी कफादीनां पिण्डीभूतानां भेदकारिणी। यवासशर्करागुणमाह—यवासशर्करेत्यादि। यवासक्वाथपाकघनीभावात् शर्करा कृता यवासशर्करा। अवशिष्टशर्करागुणमाह—यावत्य इत्यादि। मधुकपुष्पोत्थफाणितस्य मधुगुणमाह—रूक्षमित्यादि। वस्तिदूषणमिति मूत्राशये वातादिप्रकोपकारि॥ १५१-१५४॥ इति इक्षुवर्गः।

अथ मद्यानि गुणकर्म्मभ्यां निर्द्दिशन्नाह—सर्व्वमित्यादि। सर्व्वं पैष्टिकं मार्द्वीकं गौडञ्च त्रिविधं हि मद्यम्। अम्लमिति लवणवर्ज्ज्यं पञ्चरसत्वेऽपि अम्लस्योत्कटत्वादम्लकार्य्यकारित्वाच्चाम्लमित्युक्तम्। इन्द्रियबोधनम् इन्द्रियपाटवकरं, विकासि सन्धिबन्धविमोचकं, सृष्टविण्मूत्रं विष्ठामूत्रप्रवर्त्तकम्। एते सर्व्वे मद्यगुणाः॥ १५५॥

श्रृणु तस्य विशेषणमित्यादि। मार्द्वीकमाह—मार्द्वीकमित्यादि। मार्द्वीकमविदाहित्वादिति मार्द्वीकं

माद्वींकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम् ।
तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु ।
कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम् ॥ १५७ ॥
कासार्शोग्रहणीदोष-मूत्राघातानिलापहा ।
स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी ॥ १५८ ॥
कासार्शोग्रहणीश्वास-प्रतिश्यायविनाशनी ।
श्वेता मूत्रकफस्तन्य-रक्तमांसकरी सुरा ॥ १५९ ॥
छर्द्यरोचकहृत्कुक्षि-तोदशूलप्रमर्दनी ।
प्रसन्ना कफवातार्शोविबन्धानाहनाशनी ॥ १६० ॥
पित्तलाल्पकफा रुक्षा यवैर्वातप्रकोपणी ॥ १६१ ॥
विष्टम्भिनी सुरा गुर्व्वी श्लेष्मला तु मधूलिका ॥ १६२ ॥
रुक्षा नातिकफा वृष्या पाचनी चाक्षिकी स्मृता ॥ १६३ ॥
त्रिदोषो भेद्यवृष्यश्च कोहलो वदनप्रियः ॥ १६४ ॥
ग्राह्युष्णो जगलः पक्वा रुक्षस्तृट्कफशोफहृत् ।
हृद्यः प्रवाहिकाटोप-दुर्नामानिलशोषहृत् ॥ १६५ ॥

द्राक्षोद्भवं, मधुरान्वयतो मधुरद्रव्यप्रभवत्वात् । खार्ज्जूरमाह—मार्द्वीकेत्यादि । अल्पान्तरं स्तोकभेदं, कर्शनं कार्श्यकरम् । सुरागुणमाह—कासार्श इत्यादि । सुरा लोहितवर्णा पिष्टकिण्वकल्केन किञ्चित् कलुषा । एते सर्व्वे सुरागुणाः । श्वेतसुरागुणमाह—कासार्श इत्यादि । श्वेतसुरा श्वेतपुनर्नवादि-मूलशालिपिष्टककिण्वप्रभवा कतोलीति प्रसिद्धा । प्रसन्नागुणमाह—छर्दीत्यादि । तोदः पीड़ा, शूलं द्वादशप्रकारमुक्तलक्षणम् । प्रसन्ना सुराया मण्डः उपर्य्यच्छो भागः । विबन्धो वातादीनामप्रवृत्तिः । आनाहः उदरापूरः ॥ १५६—१६० ॥

पिष्टसुरामुक्त्वा कुधान्यसुरामाह—पित्तलेत्यादि । यवैरिति बहुवचनात् यवयविकातियवा गृह्यन्ते । सवाततोदशूला मलस्याप्रवृत्तिः विष्टम्भः, अन्ये गुड़गुड़ाशब्दमाहुः । यवकिण्वेन सुरेयम् । मधूलिकामाह—श्लेष्मला तु मधूलिकेति । मधूलिका स्वल्पगोधूमो मध्यदेशे पीशीकेति ख्याता । मर्कटहस्ततृणं वा, तत्फलकिण्वं मधूलकम् । असआतमद्यं मधूकपुष्पोत्थमिति जेज्झटः । आक्षिकीं सुरामाह—रुक्षेत्यादि । अक्षस्य विभीतकस्य वल्कलैः सह कृता आक्षिकी ; बल्कलीति केचित् । अत्रापि स एवार्थः । कोहलगुणमाह—त्रिदोष इत्यादि । यवसक्तुकृतः कोहलः कोहलिकेति लोके, अन्ये पुनर्भक्तसुरामाहुः । यामेव पौण्ड्राः काञ्चनालीत्याहुः । जगलगुणमाह—ग्राहीत्यादि जगलः अधःकिण्वं मद्यस्य यो वहिस्त्यज्यते । अन्ये किण्वभक्तसुरा जगलमित्युच्यते । शोफहा लेपेन । शोषः क्षयः ॥ १६१—१६५ ॥

वक्कसो हृतसारत्वाद् विष्टम्भी वातकोपनः।
दीपनः सृष्टविण्मूत्रो * विशदोऽल्पमदो गुरुः॥ १६६॥
कषायो मधुरः सीधुर्गौडः पाचनदीपनः॥ १६७॥
शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः।
वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः॥ १६८॥
तद्वत् पक्करसः सीधुर्बलवर्णकरः सरः।
शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः॥ १६९॥
कर्शनः शीतरसिकः श्वयथूदरनाशनः।
वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः॥ १७०॥
आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः।
कषायमधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः॥ १७१॥
जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः॥ १७२॥
तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत्।
मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः॥ १७३॥
लघुर्मध्वासवश्छेदी मेहकुष्ठविषापहः।
तिक्तः कषायः शोफघ्नस्तीक्ष्णः स्वादुरवातकृत्॥ १७४॥

वक्कसगुणमाह—वक्कस इत्यादि। वक्कसो जगल एवाद्रवः किण्वौषधमात्रम्। गुडशीधुमाह—कषाय इत्यादि। शीधुः सम्यक् इक्षुरसेन क्वथितेन धातक्यादिबद्धपाशः कालान्तरेण निष्पन्नः किञ्चिद्गुडघृतावापः सम्यग् वाच्यः। शर्कराशीधुमाह— शार्कर इत्यादि। गुडशर्करया खण्डशर्करया क्रियते इति शार्करशीधुः। इन्द्रियबोधन इन्द्रियपाटवजनकः। पक्करसशीधुमाह—तद्वदित्यादि। तद्वत् शार्करवत्, पक्करसः पक्वेक्षुरसादिना कृतः। अपक्करसशीधुगुणमाह—कर्शन इत्यादि। शीतरसिकः अपक्करसकृतः। जरणः अन्नादिपरिपाककारी। आक्षिकशीधुमाह—आक्षिक इत्यादि। विभीतकक्वाथगुडकृतो धातकीकुसुमादिकृतसंस्कारः शीधुराक्षिकः, द्रव्यप्रभावादपरमद्यापेक्षया प्रायशः पाण्डुरोगे व्रणे चाविरुद्धः, ग्राहित्वमप्येवं वाच्यम्। जाम्बवशीधुमाह—जाम्बव इत्यादि। जम्बूफलरसतुम्बरीक्वाथगुडधातक्यादिकृतसंस्कारो जाम्बवः शीधुरुक्तः। बद्धनिष्यन्दो बद्धमूत्रः, तुवरः कषायः। आसवमाह—तीक्ष्ण इत्यादि। सुरासवः सुरया सूयते तोयकार्य्यं क्रियते यस्मिन् स सुरासवः। स्थिरमदः चिरकालमत्तताकारी। मध्वासवमाह—लघुरित्यादि। मध्वासवः

* सृष्टविड्बल्य इति पाठान्तरम्।

तीक्ष्णः कषायो मदकृद् दुर्नामकफगुल्महृत् ।
क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ॥ १७५ ॥
बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः ॥ १७६ ॥
शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ।
रुक्षः कषायः कफहृद् वातपित्तप्रकोपणः ॥ १७७ ॥
निर्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान् ॥ १७८ ॥
नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् ।
अनिष्टगन्धि विरसमहृद्यञ्च विदाहि च ॥ १७९ ॥
सुगन्धि दीपनं हृद्यं रोचिष्णु क्रिमिनाशनम् ।
स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥ १८० ॥
अरिष्टो द्रव्यसंयोग-संस्कारादधिको गुणैः ।
बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥
दीपनः कफवातघ्नः सरः पित्ताविरोधनः ।
शूलाध्मानोदरप्लीह-ज्वराजीर्णार्शसां हितः ॥ १८१ ॥

मधुरो गुरुः, मधुगुडाभ्यां सन्धानात् । मैरेयसंज्ञकत्रियोनिमासवमाह—तीक्ष्ण इत्यादि । तत्र मैरेयो नाम सुरासवयोः प्रत्येकनिष्पादितयोरेकीकृत्य पुनः सन्धानात् मैरेयः । सुरा पैष्टी, आसवश्च गुडयोनिः, मधु च देयमिति त्रियोनित्वम् । यदि वा पैष्टीमध्वासवो गुडश्चेति सन्धानात् त्रियोनित्वेन मैरेयो द्विविधो भवति ॥ १६६—१७५ ॥

इक्षुरसासवमाह—बल्य इत्यादि । मृद्वीकेक्षुरसासव इति द्वयमन्ये पठन्ति । मार्द्वीकं मद्यमुक्तम् । अयन्तु आसवः । पुष्पयोनिं शीधुमाह—शीध्वित्यादि । अत्र मधूकपुष्पोत्थे केचिद् गुडं नेच्छन्ति । शीधुत्वाद् गुडमिच्छन्त्यन्ये ॥ १७६।१७७ ॥

अनुक्तसंग्रहायाह—निर्दिशेदित्यादि । कन्दाद्युपलक्षणं, तेन काण्डत्वगासवा अपि गृह्यन्ते । नवमद्यस्य दोषमाह—नवमित्यादि । नवत्वम् अजातरसप्रसादनत्वेन, अन्ये त्वनतीतसंवत्सरं नवमित्याहुः । जीर्णस्य गुणमाह—सुगन्धीत्यादि । रोचिष्णु साधु रोचते, तृप्तस्यापि रुचिकरम् । पुराणत्वं जातरसप्रसादनत्वेन गन्धादिसम्पत्त्या, अतीतसंवत्सरं जीर्णमित्यन्ये ॥ १७८—१८० ॥

आसवप्रसङ्गेन तत्सदृशारिष्टगुणमाह—अरिष्ट इत्यादि । द्रव्यसंयोग अभयाचित्रकादिसंयोगः । संस्काराच्च मद्यादधिककर्म्मता । बहुदोषहरश्चैव इति दोषशब्दो व्याधिवाची । दोषाणां शमन इत्यस्य भाष्यम्—कफवातघ्न इति । पित्ताविरोधन इति नञीषदर्थे, तेन ईषत् पित्तं हन्तीति मन्यते । बहुव्याधिहर इत्येतस्य तु भाष्यम्—शूलाध्मानोदरादीनां हित इति, शूलादिके

पिप्पल्यादिकृतो गुल्म-कफरोगहरः स्मृतः ॥ १८२ ॥
चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक् ॥ १८३ ॥
अरिष्टासवसीधूनां गुणान् कर्म्माणि चादिशेत् ।
बुद्ध्या यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥ १८४ ॥
सान्द्रं विदाहि दुर्गन्धं विरसं क्रिमिलं गुरु ।
अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥
अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत् ।
तद्वर्ज्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद् भवेत् ॥ १८५ ॥
तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु ।
कफप्रकोपि तन्मद्यं दुर्ज्जरञ्च विशेषतः ॥ १८६ ॥
पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च ॥ १८७ ॥
अहृद्यं फेनिलं पूति क्रिमिलं विरसं गुरु * ॥ १८८ ॥
तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम् ॥ १८९ ॥
सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपनम् ॥ १९० ॥
चिरस्थितं जातरसं दीपनं कफवातजित् ॥ १९१ ॥

हित इत्यर्थः, अन्ये कफवातघ्नत्वं विशेषत इत्याहुः। पिप्पल्याद्यरिष्टमाह—पिप्पल्यादीत्यादि। शेषारिष्टानां स्थानमाह—चिकित्सितेष्वित्यादि। अनुक्तसंग्रहायाह—अरिष्टासवेत्यादि। शीधुशब्देनात्र मद्यमाहुः, द्रवप्रधानमरिष्टं, द्रव्यप्रधान आसवः, उभयप्रधानं मद्यम्। बुद्ध्या अवेक्ष्य ज्ञात्वा, यथास्वमिति यद् यस्य रोगाद्यपेक्षया हितं द्रव्यसंस्कारादि एतेनारिष्टादि विधीयते, एवंविधा यतो अतस्तदनुरूपं गुणकर्म्म वाच्यमित्यर्थः ॥ १८१—१८४ ॥

मद्यदोषमाह—सान्द्रमित्यादि। सान्द्रं घनं, विदाहोऽस्यास्तीति विदाहि—"जठराग्निसंयोगात् यः पाकमगच्छन् मध्यमायामेव पाकावस्थायां विदह्यमानः पित्तं कुर्व्वन् चिरकालमवतिष्ठते न शीघ्रं जरां याति गुरुत्वाद् वस्तुस्वभावाद् वा स विदाहयुक्तो भावो भण्यते" इत्यागमिकाः। अन्ये विदाहि विविधसन्तापकारीत्याहुः। दुर्गन्धं कुत्सितगन्धं, विरसं विरुद्धरसमनिष्टरसमित्यर्थः। क्रिमिलं क्रिमियुक्तं, गुरु चिरपाकि, अहृद्यम् अप्रियं, तरुणं नवं, तीक्ष्णं मुखे दुःखोत्पादकम्, उष्णं स्पर्शेन, दुर्भाजनस्थितं कुत्सितपात्रस्थम्, अल्पौषधं स्तोकधातक्यादिकं, पर्य्युषितं सन्धानभाण्डादन्यस्मिन् भाण्डे रात्रुर्षितम्। अत्यच्छम् अतितनु। पिच्छिलं गुरु। तत्रेत्यादि। अत्रापि पित्तप्रकोपीति सम्बन्धः। स्तोकसम्भारम् अल्पौषधम्। अहृद्यमिति। फेनिलम् अच्छम्, अन्ये तरुणमाहुः।

* अहृद्यं पेलवं पूति क्रिमिलं विरसञ्च यदिति वा पाठः।

रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥ १९२ ॥
तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः।
सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना॥
समेत्य हृदयं प्राप्य धमनीरूर्द्धमागतम्।
विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात् ॥ १९३ ॥
चिरेण श्लैष्मिके पुंसि पानतो जायते मदः।
अचिराद् वातिके दृष्टः पैत्तिके शीघ्रमेव तु ॥ १९४ ॥
सात्त्विके शौचदाक्षिण्य-हर्षमण्डनलालसः।
गीताध्ययनसौभाग्य-सुरतोत्साहकृन्मदः॥
राजसे दुःखशीलत्वमात्मत्यागं ससाहसम्।
कलहं सानुबन्धन्तु करोति पुरुषे मदः॥

सर्व्वदोषैरिति सर्व्वदोषैः सान्द्रादिभिः। दोषानभिधाय इदानीं मद्यस्य गुणमाह—चिरस्थित-मित्यादि। प्रसन्नं निर्म्मलं, सुरभि सुगन्धि, मदावहं हर्षकारि। पूर्व्वदोषान्वितं वर्ज्यम्, एतद्गुणान्वितं सेव्यम् ॥ १८५—१९२ ॥

इदानीं यथा मद्यं मदयति तदाह—तस्येत्यादि। तस्य एवंविधस्य मद्यस्य वीर्य्यं शक्तिः हृदयं प्राप्याचिरेण मदयति हर्षयतीति सम्बन्धः। अनेकप्रकारत्वं मृद्वीकादियोनिभेदेन तथा रसवीर्य्यतश्च, रसा लवणवर्ज्याः, वीर्य्यम् उष्णरूक्षादि। कथं मदयतीत्याह—विक्षोभ्येन्द्रिय-चेतांसीति। विक्षोभ्य चालयित्वा, इन्द्रियाणि चक्षुरादीनि, चेतो मनः। किंविशिष्टं वीर्य्यम्? धमनीरूर्द्धमागतमिति। कथं पुनरस्य धमनीभिरूर्द्धगमनं भवतीत्याह—वह्निना समेत्य मिलित्वा स्वभावेनैव वह्नेरूर्द्धगामित्वात्। कथं पुनस्तन्मद्यवीर्य्यं सूक्ष्माणि इन्द्रियचेतांसि मदयतीत्याह—सौक्ष्म्यादिति। ऊर्द्धगामित्वे द्वितीयं हेतुमाह—औष्ण्यादिति। आग्नेयद्रव्यस्य स्वभावेनैवोर्द्ध-गामित्वात्। कुतः पुनरचिरेण मद्यवीर्य्यं मदयतीत्याह—तैक्ष्ण्यादिति। तीक्ष्णं हि द्रव्यमचिर-कारि भवति। मद्यवीर्य्यस्याचिरकारित्वे अपरमपि हेतुमाह—विकाशित्वादिति। विकाशि सन्धिबन्धविमोचनकारि चकारेणानुक्तमपि लाघवमूर्द्धगमने हेतुः समुच्चीयते ॥ १९३ ॥

शारीरदोषेण मदभेदमाह—चिरेणेत्यादि। श्लैष्मिके श्लेष्मप्रकृतिके। वातिके वातप्रकृतिके। पैत्तिके पित्तप्रकृतिके। शीघ्रमेव च इति चकारात् तीक्ष्णश्च ॥ १९४ ॥

मानसदोषेण मदभेदमाह—सात्विक इत्यादि। सात्त्विके सत्त्वप्रकृतिके। दाक्षिण्यं परा-पेक्षिणी प्रकृतिः। लालसोऽभिलाषुकः। सुरतोत्साहः मैथुनोद्यमः। राजस इति राजसे रजःप्रकृतिके। दुःखशीलत्वं दुःखसेवित्वम्। आत्मत्यागं ससाहसं देहनाशनकारि साहसम्।

अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः।
असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः॥ १९५॥
रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम्।
वैस्वर्य्यं जरणं श्लेष्म-पाण्डुक्रिमिहरं लघु॥ १९६॥
तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च।
तद्वत् तदासुतं सर्व्वं रोचनञ्च विशेषतः॥ १९७॥
गौड़ानि रसशुक्तानि मधुशुक्तानि यानि च।
यथापूर्व्वं गुरुतराण्यभिष्यन्दकराणि च॥ १९८॥
तुषाम्बु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत्।
ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा॥ १९९॥

अनुबन्धं निरन्तरं, मदो मत्ततेत्यर्थः। अशौचेत्यादि। तामसे तामसप्रकृतिके। मात्सर्य्यं परासहिष्णुता, लोलता अभिलाषः॥ १९५॥

शुक्तादिकर्म्माणि दर्शयन्नाह—रक्तपित्तकरमित्यादि। शुक्तं चुक्रमुच्यते, यदुक्तं—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते" इति; तच्चेक्षुरसमधूकपुष्पपीलुप्रभृतिभिः कषायव्यतिरेकेणासूयते, कन्दाद्यासुतमपि शुक्तमाहुरन्ये। छेदनं कफग्रन्थ्यादीनाम्, वैस्वर्य्यं विस्वरत्वोत्पादकं, जरणमामस्य, श्लेष्मपाण्डुः श्लेष्मोत्कटः पाण्डुरोग इत्यर्थः॥ १९६॥

शुक्तसन्धितानां कन्दादीनामपि शुक्तगुणमाह— तद्वदित्यादि। तद्वत् शुक्तवत्, तदासुतं शुक्तसन्धितं कन्दादिकम्। शुक्तस्य योनिभेदेन गुणमाह—गौड़ानीत्यादि। गौड़ानि गुडोद्भवानि; "गुडाम्बुना सतैलेन सन्धानकाञ्जिकन्तु यत्। कन्दशाकफलैर्युक्तं गुड़शुक्तं तदुच्यते" इति; रसशुक्तानि इक्षुरसादिकृतानि। गुड़शुक्तवदिक्षुरसशुक्तं सन्धेयम्। मधुशुक्तं तु—'जम्बीरस्य फलरसं पिप्पलीमूलसंयुतं। मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्। त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतम्' इति। मधुभाण्डे इति मधुपूर्णप्राये भाण्डे इत्यर्थः। अथवा मधूनि कृत्वा भाण्डे निक्षिप्येति योज्यम्। मद्यशुक्तमिति पाठान्तरं, तत्र मद्यशुक्तलक्षणमुच्यते—"सर्व्वं मद्यं पञ्चरसं कालान्तरवशाद् यदा। त्यक्त्वान्यरसमम्लत्वं याति शुक्तं तदुच्यते" इति। चकारेण धान्ययोनिशुक्तमप्यस्तीति समुच्चीयते। यो यः पूर्व्वो यथापूर्व्वं, मद्यशुक्तापेक्षया रसशुक्तं गुरु, तदपेक्षया गौड़मित्यर्थः। दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम् अभिष्यन्दि। तुषाम्बुसौवीरकयोर्गुणमाह—तुषाम्बु दीपनमित्यादि। काञ्जिकभेदावेतौ। तुषाम्बुसौवीरके विरचनमध्यायोक्तेऽपि

धान्याम्लं धान्ययोनित्वाज्जीवनं * दाहनाशनम्।
स्पर्शात् पानात् तु पवन-कफतृष्णाहरं लघु॥
तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात्।
मुखवैरस्यदौर्गन्ध्य-मलशोषक्लमापहम्॥
दीपनं जरणं भेदि हितमास्थापनेषु च।
समुद्रमाश्रितानाञ्च जनानां सात्म्यमुच्यते॥ २००॥

इति मद्यवर्गः।

अथ मूत्राणि गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातक्रिमिमेदोविषगुल्मार्शः-उदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः॥ २०१॥

भवन्ति चात्र।

तत् सर्व्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु।
शोधनं कफवातघ्नं क्रिमिमेदोविषापहम्॥
अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम्।
पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्॥ २०२॥
गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम्।
लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित्॥
शूलगुल्मोदरानाह-विरेकास्थापनादिषु।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत्॥ २०३॥

सन्धानसामान्यादधिकगुणकर्म्मदर्शनायेहोक्तेः। धान्याम्लमाह—धान्याम्लमित्यादि। धान्याम्लं काञ्जिकं शालिजीर्णाह्वकोद्रवादिकृतं मद्यम्। जीवनं प्राणधारि, शाल्यादिकृतत्वात्। दाहनाशनं स्पर्शात्, पानात् तु पवनकफतृपाहरमिति पानात् सवायुं कफम्, तयोस्तृष्णाञ्च हरतीत्यर्थः। शोषो मुखस्य, दीपनम् उद्दीपनकारि, जरणं पाचनम्, आस्थापनेषु निरूहेषु॥ १९७—२००॥

इति मद्यवर्गः।

अथ मूत्राण्युच्यन्ते—अथ मूत्राणीत्यादि। अष्टानामपि मूत्राणां सामान्यगुणमाह—तीक्ष्णानीत्यादि। शोधनानि मलशुद्धिकराणि। तत् सर्व्वमित्यादि। पद्योक्तत्वान्न द्विरुक्तम्॥ २०१।२०२॥

गोमूत्रगुणमाह—गोमूत्रमित्यादि। गोमूत्रं गोरेव न तु वृषस्य, महिषीसाहचर्य्यात्, न हि तत्र महिषेति पाठः, अथवा वृद्धव्यवहारादित्येके, आचार्य्यास्तु गोमहिष्यजावीनां स्त्रीणाम्। गजहयखरोष्ट्रमानुषाणां पुनः पुंसाम्। अनुक्तव्यक्तिके तु मूत्रपाठे उभयोरपि मूत्राणि ग्राह्याणि।

* जीवनमित्यत्र दीपनमिति पाठान्तरम्।

दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु।
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ २०४ ॥
कासश्वासापहं शोष-कामलापाण्डुरोगनुत्।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २०५ ॥
कासप्लीहोदरश्वास-शोषवर्च्चोग्रहे हितम्।
सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २०६ ॥
दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत्।
आश्वं कफहरं मूत्रं क्रिमिदद्रुषु शस्यते ॥ २०७ ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम्।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥ २०८ ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणीरोगनुत्।
दीपनं गार्द्दभं मूत्रं क्रिमिवातकफापहम् ॥ २०९ ॥
शोफकुष्ठोदरोन्माद-मारुतक्रिमिनाशनम्।
अर्शोघ्नं कारभं मूत्रं———— ——॥ २१० ॥
————————मानुषन्तु विषापहम् ॥ २११ ॥
द्रवद्रव्याणि सर्व्वाणि समासात् कीर्त्तितानि तु।
कालदेशविभागज्ञो नृपतेर्दातुमर्हति ॥ २१२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रवद्रव्यविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

यत्र तु व्यक्त्या ( कण्ठरवेण ) स्त्रीपुरुषनिर्देशः, तत्र तस्यैवेति निर्णीतवन्तः। माहिषमूत्रमाह— दुर्नामेत्यादि। अविशुद्धिर्वमनादीनाम् ॥ २०३। २०४ ॥

छागमूत्रमाह—कासश्वासापहमित्यादि। मेषमूत्रमाह—कासेत्यादि। आश्वमूत्रमाह—दीपन-मित्यादि। चेतोविकारः उन्मादादिः। गजमूत्रमाह—सतिक्तं लवणमित्यादि। किलासं पाण्डुरं कुष्ठम्। गर्द्दभमूत्रमाह—गरचेत इत्यादि। गरः कृत्रिमं विषम्। कारभमूत्रमाह—शोफकुष्ठोदरे-त्यादि। कारभम् औष्ट्रम्। मानुषमूत्रमाह—मानुषमिति। कारभं मानुषञ्च मूत्रं विषापह-मित्यर्थः। मानुषमष्टानां मूत्राणां मध्ये अनुद्दिष्टमपि तत्तुल्यमित्यनेनैव पूर्व्वोक्तेन सूचितत्वाद् विवृतम्। उक्तानुक्तद्रव्याणामूहार्थमाह—द्रवद्रव्याणीत्यादि। देशकालविभागज्ञ इति वैद्य इति शेषः ॥ २०५—२१२ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्यायश्रीडल्लनविरचिते निबन्धसंग्रहे द्रवद्रव्यविधिव्याख्यानाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

# षट्चत्वारिंशोऽध्यायः ।

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धन्वन्तरिमभिवाद्य सुश्रुत उवाच प्रागभिहितं प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च। स षट्सु रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयिणः, द्रव्यरस-गुणवीर्य्यविपाकनिमित्ते च क्षयवृद्धी दोषाणां साम्यञ्च। ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णे-न्द्रियप्रसादश्च। तथाह्याहारवैषम्यादस्वास्थ्यम् ॥ २ ॥

तस्याशितपीतलीढ़खादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेक-विधप्रभावस्य पृथक् पृथग् द्रव्यरसगुणवीर्य्यविपाकप्रभावकर्म्माणीच्छामि ज्ञातुं, नह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्थाः ॥ ३ ॥

आहारमूलाश्च सर्व्वप्राणिनो यस्मात् तस्मादन्नपानविधिमुपदिशतु मे

अन्नं शाल्यादि, पानम् अनुपानादि, विधिर्विधानं, कल्पनं प्रकारो वा। अथ शिष्यो गुरुं प्रति प्रश्नं कुर्व्वन्नाह—धन्वन्तरिमित्यादि। अभिवाद्य नमस्कृत्य, उवाच उक्तवान्। किमुक्तवानि-त्याह—प्रागभिहितमित्यादि। मूलं कारणम्। स इति आहारः। निमित्ते चेति चकारा-दिन्द्रियार्थाः कालो विहारश्चेति त्रयं समुच्चीयते। दोषाणामित्युपलक्षणम्, तेन दोषधात्वादीना-मित्यर्थः। आहारस्य सर्व्वापेक्षणीयतामाह—ब्रह्मादेरित्यादि। स्थितिरवस्थानं, उत्पत्तिर्जन्म, विनाशः प्रलयः। उत्पत्तिहेतुरपि सम्यगुपयोगात् प्रधानधातूत्पत्तेः, विनाशहेतुश्च मिथ्योपयोगात् देवानां स्थितिहेतुरेव, जरायुजानां स्थित्युत्पत्तिविनाशानां त्रयाणामपि हेतुः, ध्यानाहारत्वेऽपि ब्रह्मादेर्योगादिद्वारेण तृप्तिसम्भवादमृतप्राशार्थमाहारः। स्थितिहेतुतामेव विवृण्वन्नाह—आहारा-देवेत्यादि। अभिवृद्धिः शरीरस्य। बलमुत्साहोपचयलक्षणम्। आरोग्यं स्वास्थ्यलक्षणम्। वर्णो गौरादिः। इन्द्रियाणां प्रसादः स्वस्वविषयग्रहणसामर्थ्यम्। वैषम्यम् अन्यथोपयोगः। अस्वास्थ्यं दोषादिवैषम्यम् ॥ १।२ ॥

अस्य चातुर्व्विध्यमाह—अशितेत्यादि। अशितं भोज्यमोदनादि, पीतं पेयं क्षीरादि, लीढं लेह्यं मध्वादि, खादितं भक्ष्यं मोदकादि। नानाद्रव्यात्मकस्येति बहुविधपृथिव्यादिद्रव्यारब्धस्य, अनेकविधविकल्पस्य अनेकविधा मण्डपेयाविलेपीभक्तादयो विकल्पाः प्रकारा यस्य स तथा। अनेकविधप्रभावस्य नानाप्रकारशक्तिकस्य। न हीति हि यस्मादर्थे, अनवबुद्धस्वभावा आहारस्य

दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ।
आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ २०४ ॥
कासश्वासापहं शोष-कामलापाण्डुरोगनुत् ।
कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ २०५ ॥
कासप्लीहोदरश्वास-शोषवर्च्चोग्रहे हितम् ।
सक्षारं तिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ २०६ ॥
दीपनं कटुतीक्ष्णोष्णं वातचेतोविकारनुत् ।
आश्वं कफहरं मूत्रं क्रिमिदद्रुषु शस्यते ॥ २०७ ॥
सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् ।
तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत् ॥ २०८ ॥
गरचेतोविकारघ्नं तीक्ष्णं ग्रहणीरोगनुत् ।
दीपनं गार्द्दभं मूत्रं क्रिमिवातकफापहम् ॥ २०९ ॥
शोफकुष्ठोदरोन्माद-मारुतक्रिमिनाशनम् ।
अर्शोघ्नं कारभं मूत्रं——— ——॥ २१० ॥
—————मानुषन्तु विषापहम् ॥ २११ ॥
द्रवद्रव्याणि सर्व्वाणि समासात् कीर्त्तितानि तु ।
कालदेशविभागज्ञो नृपतेर्दातुमर्हति ॥ २१२ ॥

इति सुश्रुतसंहितायां सूत्रस्थाने द्रवद्रव्यविधिर्नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

यत्र तु व्यक्त्या ( कण्ठरवेण ) स्त्रीपुरुषनिर्द्देशः, तत्र तस्यैवेति निर्णीतवन्तः । माहिषमूत्रमाह—दुर्नामेत्यादि । अविशुद्धिर्वमनादीनाम् ॥ २०३ । २०४ ॥

छागमूत्रमाह—कासश्वासापहमित्यादि । मेषमूत्रमाह—कासेत्यादि । आश्वमूत्रमाह—दीपनमित्यादि । चेतोविकारः उन्मादादिः । गजमूत्रमाह—सतिक्तं लवणमित्यादि । किलासं पाण्डुरं कुष्ठम् । गर्द्दभमूत्रमाह—गरचेत इत्यादि । गरः कृत्रिमं विषम् । कारभमूत्रमाह—शोफकुष्ठोदरेत्यादि । कारभम् औष्ट्रम् । मानुषमूत्रमाह—मानुषमिति । कारभं मानुषञ्च मूत्रं विषापहमित्यर्थः । मानुषमष्टानां मूत्राणां मध्ये अनुद्दिष्टमपि तत्सर्व्वमित्यनेनैव पूर्व्वोक्तेन सूचितत्वाद् विवृतम् । उक्तानुक्तद्रव्याणामूहार्थमाह—द्रवद्रव्याणीत्यादि । देशकालविभागज्ञ इति वैद्य इति शेषः ॥ २०५—२१२ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्यायश्रीडह्लनविरचिते निबन्धसंग्रहे
द्रवद्रव्यविधिव्याख्यानाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

# षट्चत्वारिंशोऽध्यायः ।

## अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः,
## यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धन्वन्तरिमभिवाद्य सुश्रुत उवाच प्रागभिहितं प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च। स षट्सु रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयिणः, द्रव्यरसगुणवीर्य्यविपाकनिमित्ते च क्षयवृद्धी दोषाणां साम्यञ्च। ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुः, आहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च। तथाह्याहारवैषम्यादस्वास्थ्यम् ॥ २ ॥

तस्याशितपीतलीढ़खादितस्य नानाद्रव्यात्मकस्यानेकविधविकल्पस्यानेकविधप्रभावस्य पृथक् पृथग् द्रव्यरसगुणवीर्य्यविपाकप्रभावकर्म्माणीच्छामि ज्ञातुं, नह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्थाः ॥ ३ ॥

आहारमूलाश्च सर्व्वप्राणिनो यस्मात् तस्मादन्नपानविधिमुपदिशतु मे

अन्नं शाल्यादि, पानम् अनुपानादि, विधिर्विधानं, कल्पनं प्रकारो वा। अथ शिष्यो गुरुं प्रति प्रश्नं कुर्व्वन्नाह—धन्वन्तरिमित्यादि। अभिवाद्य नमस्कृत्य, उवाच उक्तवान्। किमुक्तवानित्याह—प्रागभिहितमित्यादि। मूलं कारणम्। स इति आहारः। निमित्ते चेति चकारादिन्द्रियार्थाः कालो विहारश्चेति त्रयं समुच्चीयते। दोषाणामित्युपलक्षणम्, तेन दोषधात्वादीनामित्यर्थः। आहारस्य सर्व्वापेक्षणीयतामाह—ब्रह्मादेरित्यादि। स्थितिरवस्थानं, उत्पत्तिर्जन्म, विनाशः प्रलयः। उत्पत्तिहेतुरपि सम्यगुपयोगात् प्रधानधातूत्पत्तेः, विनाशहेतुश्च मिथ्योपयोगात् देवानां स्थितिहेतुरेव, जरायुजानां स्थित्युत्पत्तिविनाशानां त्रयाणामपि हेतुः, ध्यानाहारत्वेऽपि ब्रह्मादेर्योगादिद्वारेण तृप्तिसम्भवादमृतप्राशार्थमाहारः। स्थितिहेतुतामेव विवृण्वन्नाह—आहारादेवेत्यादि। अभिवृद्धिः शरीरस्य। बलमुत्साहोपचयलक्षणम्। आरोग्यं स्वास्थ्यलक्षणम्। वर्णो गौरादिः। इन्द्रियाणां प्रसादः स्वस्वविषयग्रहणसामर्थ्यम्। वैषम्यम् अन्यथोपयोगः। अस्वास्थ्यं दोषादिवैषम्यम् ॥ १।२ ॥

अस्य चातुर्व्विध्यमाह—अशितेत्यादि। अशितं भोज्यमोदनादि, पीतं पेयं क्षीरादि, लीढं लेह्यं मध्वादि, खादितं भक्ष्यं मोदकादि। नानाद्रव्यात्मकस्येति बहुविधपृथिव्यादिद्रव्यारब्धस्य, अनेकविधविकल्पस्य अनेकविधा मण्डपेयाविलेपीभक्तादयो विकल्पाः प्रकारा यस्य स तथा। अनेकविधप्रभावस्य नानाप्रकारशक्तिकस्य। न ह्यति हि यस्मादर्थे, अनवबुद्धस्वभावा आहारस्य

भगवन्नित्युक्तः प्रोवाच भगवान् धन्वन्तरिरथ खलु वत्स सुश्रुत यथाप्रश्न-मुच्यमानमुपधारयस्व ॥ ४ ॥

तत्र लोहितशालिकलम-कर्द्दमकपाण्डुकसुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीक-महाशालि--शीतभीरुकरोध्रपुष्पक-दीर्घशूक-काञ्चनकमहिषशूक--हायनकदूषक-महादूषकप्रभृतयः शालयः ॥ ५ ॥

मधुरा वीर्य्यतः शीता लघुपाका बलावहाः।
पित्तघ्नाल्पानिलकफाः स्निग्धा बद्धाल्पवर्च्चसः ॥ ६ ॥

अज्ञातस्वरूपाः, भिषजो वैद्याः। मे ममेत्यर्थः। भगवानिति धन्वन्तरिं प्रति पूजावचनम्। उत्तरमाह—उक्त इति। उक्तः पूर्व्वोक्तवचनैः प्रेरितः, प्रोवाच उक्तवान्। अथेति मङ्गले। खलु वाक्यालङ्कारे ॥ ३।४ ॥

तत्रेत्यादि। लोहितशालिः रक्तशालिः, कलमः अन्तर्वेद्यां कलविरिति लोके। कर्द्दमक इति सातिशये पङ्के निष्पद्यते इति कर्द्दमको लोकतोऽवगन्तव्यः। पाण्डुक इति पाण्डुतुषः पाण्डुशूकश्च पाण्डुकः। सुगन्धको देवशालिः पाञ्चाले, शकुनाहृत उत्तरकुरोः सकाशाद्धंसैरानीतः,अवन्त्यां नगर्य्यां स एव वक्रनाम्ना प्रसिद्धः, मगधदेशे तु पाचक इति; वृद्धवैद्यास्तु—"द्वीपान्तरात् समानीतो गरुड़ेन महात्मना। शकुनाहृतः स शालिः गरूड़ापरनामकः" इत्याहुः। पुष्पाणीव सुगन्धानि सुकुमाराण्यण्डानि तण्डुलानि यस्य सः पुष्पाण्डको लोकतोऽवगन्तव्यः। पुण्डरीकं श्वेतपद्मं तत्सदृशः सौकुमार्य्यवर्णसौरभैर्यः सः पुण्डरीकः; देवग्रहादेव बहुपोपकनामा। महातण्डुलको महाशालिः, शीताद् विभेतीत्येवं शीतभीरुको लोकादवगन्तव्यः। रोध्रपुष्पाकाराः शूका यस्य सः रोध्रपुष्पकः। दीर्घाः शूका यस्य सः दीर्घशूकः स्वर्णशालिः। महिषशूको मध्यदेशे तिलवासीति प्रसिद्धः। हायनकः शङ्कुचाक इति लोके; जेज्झटस्तु घोटकपुच्छ इत्याह। दूपकमहादूपकौ लोकादवगन्तव्यौ। प्रभृतिग्रहणात् यवकनैपधादयः। शालय इति अकण्डितशुक्ला हैमन्ताः, अन्ये तु कण्डितशुक्ला अकण्डितशुक्लाश्च हैमन्ताः शालयः। ग्रैष्माः षष्टिकाः, प्रायेण गर्भपाकाः, षष्टिका इत्यन्ये। वार्षिकास्तु व्रीहयः, कण्डितशुक्लास्तु व्रीहय इत्यन्ये। अत्र लोहितशाल्यादयस्तेषु तेषु देशेषु स्वैस्तैर्नामभिः प्रसिद्धाः। एकमेव हि द्रव्यं नानादेशेषु नानाशब्दैरभिधीयते; यथा—बहवोऽन्नं भक्तमाहुः, दाक्षिणात्यास्तु कूरमिति। तत्र दाक्षिणात्येषु भक्तसंज्ञा चै (यै)-व प्रसिद्धा तद्वितरेषु पुनः कूरसंज्ञेति। तस्मात् शूकशमीकुधान्यानि नानादेशकृषीबलेभ्य ज्ञेयानि, मृगास्तु नानादेशीयव्याधेभ्यः, शाकुनिकेभ्यः पक्षिणः, कन्दमूलफलाशिभ्यो वनेचरतपस्विभ्यः कन्दमूल-फलानि, शाकानि तु ग्राम्यारण्यवासिभ्यः, कृतान्नानि तु सूदेभ्यः, भेषजद्रव्याणि पुनर्वणिग्भ्यः, अङ्के याणि पुनर्मूलादीनि तापसवनेचरेभ्य इति ॥ ५ ॥

तत्र शालीनां सामान्यगुणमाह—मधुरा इत्यादि। पूर्व्वं हि द्रव्यं रसगुणवीर्य्यविपाककर्म्मभि-रिच्छामि ज्ञातुमित्युक्तं, तदेव दर्शयति—तत्र लोहितशालिरित्यादि यावत् दूपकमहादूषकप्रभृतयः

तेषां लोहितकः श्रेष्ठो दोषघ्नः शुक्रमूत्रलः।
चक्षुष्यो वर्णवलकृत् स्वर्य्यो हृद्यः श्रमापहः *।
व्रण्यो ज्वरहरश्चैव सर्व्वदोषविषापहः॥
तस्मादल्पान्तरगुणाः क्रमशः शालयोऽवराः॥ ७॥

षष्टिककाङ्गुकमुकुन्दक-पीतकप्रमोदक-काकलकासनपुष्पकमहाषष्टिकचूर्णक-कुरवककेदारप्रभृतयः षष्टिकाः॥ ८॥

रसे पाके च मधुराः शमना वातपित्तयोः।
शालीनाञ्च गुणैस्तुल्या बृंहणाः कफशुक्रलाः॥ ९॥
षष्टिकः प्रवरस्तेषां कषायानुरसो लघुः।
मृदुः स्निग्धस्त्रिदोषघ्नः स्थैर्य्यकृद्वलवर्द्धनः॥
विपाके मधुरो ग्राही तुल्यो लोहितशालिभिः।
शेषास्त्वल्पान्तरास्तस्मात् षष्टिकाः क्रमशो गुणैः॥ १०॥

कृष्णव्रीहि-शालामुख-जतुमुखनन्दीमुख-लावाक्षकत्वरितक-कुक्कुटाण्डक-पारावतकपाटलप्रभृतयो व्रीहयः॥ ११॥

शालय इति द्रव्यनिर्द्देशः, मधुरा इति रसनिर्द्देशः, वीर्य्यतः शीता इति वीर्य्यनिर्द्देशः, लघुपाका इति पाकनिर्द्देशः, पित्तघ्ना इत्यादि स्वकर्म्मनिर्द्देशः। अल्पानिलकफा अल्पं वातं श्लेष्माणञ्च कुर्व्वन्तीत्यर्थः। लोहितशालिगुणमाह—तेषामित्यादि। दोषघ्नस्त्रिदोषघ्नः। सर्व्वदोषेत्यादि। दोष शब्दो व्याधिषु वर्त्तते। शालीनां तारतम्यमाह—तस्मादित्यादि। तस्मात् लोहितशालेः। अल्पान्तरगुणा इति अल्पमन्तरं भेदः क्रमेणावरत्वेन येषां ते तथोक्ताः। गुणशब्दः कर्म्मवाची। क्रमशोऽवरा इति क्रमात् क्रमात् हीना इत्यर्थः॥ ६।७॥

षष्टिकानाह—षष्टिकेत्यादि। अन्ते षष्टिकाभिधानं सर्व्वेषां षष्टिकत्वसूचनार्थम्। षष्टिको गौरषष्टिकः, मुकुन्दककाकलकासनपुष्पककुरवककेदाराः कृष्णषष्टिकाः, शेषा गौरकृष्णा इति। प्रभृतिग्रहणाच्चीनदर्द्दरशारदादयः। षष्टिको व्रीहिभेद एव, षष्टिको व्रीहिषु श्रेष्ठः इत्युक्तत्वात्, किन्तु व्रीहिश्चिरपाकी षष्टिकस्तु शीघ्रपाकी। गौरषष्टिकगुणमाह—षष्टिक इत्यादि। स्थैर्य्यकृत् देहदार्ढ्यकृत्, तारुण्यस्थापको वा। शेषास्त्वित्यादि। अल्पान्तराः स्तोकभेदा गुणैः कृत्वा, तस्माद् गौरषष्टिकात्॥ ८—१०॥

व्रीहिविशेषानाह—कृष्णव्रीहीत्यादि। कृष्णव्रीहिः कृष्णतुषतण्डुलः, शालामुखः कृष्णशुक्लाकारतण्डुलः। जतु लाक्षा, तदाकृति मुखं यस्यासौ जतुमुखः। नन्दीमुखः आटीचञ्चुसदृशमुखतण्डुलः, लावाक्षिसदृशतण्डुलो लावाक्षः। षष्टिकवत् त्वरितं पच्यते इति त्वरितकः। कुक्कुट्या

* श्रमापह इत्यत्र तृषापह इति वा पाठः। † शेषास्त्वल्पान्तरगुणा इति पाठान्तरम्।

कषायमधुराः पाकेऽमधुरा वीर्य्यतोऽहिमाः।
अल्पाभिष्यन्दिनस्तुल्याः षष्टिकैर्बद्धवर्च्चसः॥
कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः।
तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे॥ १२॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः।
कषाया बद्धविण्मूत्रा रुक्षाः श्लेष्मापकर्षणाः॥ १३॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः।
किञ्चित्सतिक्तमधुराः पवनानलवर्द्धनाः *॥ १४॥
कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः॥ १५॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः॥ १६॥
शालयश्छिन्नरूढ़ा ये रुक्षास्ते बद्धवर्च्चसः।
तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफावहाः॥ १७॥

अण्डानीव वर्णेन वर्त्तुलतया च तण्डुला यस्य स कुक्कुटाण्डकः। पारावतवत् शुक्लतण्डुलः पारावतः। पाटलापुष्पवर्णव्रीहिः पाटलः। प्रभृतिग्रहणात् खञ्जरीटखञ्जनकक्षौमकादयो गृह्यन्ते। कषायमधुरां रसे, अमधुराः पाके कटुका इत्यर्थः। वीर्य्यतोऽहिमा उष्णा इत्यर्थः। अल्पाभिष्यन्दिन इति पूर्ब्ववत्। तुल्याः षष्टिकैरिति एतेन कुधान्येभ्य एषामुत्कर्षः सूच्यते, न तु षष्टिकानां गुणकारिता, चरकादैस्त्रिदोषकारित्वेन पाटलस्योक्तत्वात्। अनार्षोऽयं पाठ इति जेज्झटः। पाटलाशब्दो व्रीहौ सामान्ये विशेषे च वर्त्तते इति विशेषवाचिनस्त्रिदोषकर्त्तृत्वं सामान्येन व्रीहेस्तु उक्त एव गुण इति गयी। यस्त्रिदोषकारी पाटलस्तत्र जात्यन्तरम्, अयन्तु यथोक्तगुण इति ब्रह्मदेवः। अथ कृष्णव्रीहिगुणमाह—कृष्णव्रीहीत्यादि॥ ११।१२॥

अथ भूमिद्वारेण गुणमाह—दग्धायामित्यादि। दग्धायामवनौ जाता इति दग्धभूमावुत्पन्नाः। स्थलजेत्यादि। स्थलजा जाङ्गलभूमिसम्भवाः। सतिक्तमधुरा ईषत्तिक्तमधुराः। पवनानलवर्द्धना इति अत्र किञ्चिच्छब्दः सम्बध्यते॥ १३।१४॥

कैदारा इत्यादि। कैदारा अनूपजा इत्यर्थः, वृष्याः शुक्रवैरेचनिकाः, शुक्रलाः शुक्रवृद्धिकराः। रोप्यातिरोप्यगुणमाह—रोप्येत्यादि। ये शालय एकवारमुत्पाद्याशु अन्यत्र रोप्यन्ते ते रोप्याः, ये तु द्विस्त्रिर्वा अन्यत्र रोप्यन्ते ते अतिरोप्याः। मूत्रविवर्द्धना इति अदाहित्वात्, मूत्रलाः, केचित्तु मूत्रविवर्द्धना मूत्रापकर्षणाः प्रमेहिणां हिता इत्यर्थः। छिन्नरूढशालि

विस्तरेणायमुद्दिष्टः शालिवर्गो हिताहितः ।
तद्वत् कुधान्यमुद्गादि-माषादीनाञ्च वक्ष्यते ॥ १८ ॥

इति शालिवर्गः ।

कोरदूषकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गमधूलिकानान्दीमुखी-कुरुविन्द-गवेधुकसरवरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः ॥१९॥

उष्णाः कषायमधुरा रुक्षाः कटुविपाकिनः ।
श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणाः ॥ २० ॥
कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः ।
कोद्रवश्च सनीवारः श्यामाकश्च सशान्तनुः ॥ २१ ॥

गुणमाह - शालय इत्यादि । छिन्नरूढा इति पूर्वं छिन्नाः पश्चात् रूढा इत्यर्थः । उपसंहारमाह—विस्तरेणेत्यादि । उद्दिष्टः सङ्क्षेपेण कथितः । अयं शालिवर्गः, किंविशिष्टः शालिवर्गः ? विस्तरेण सह सविस्तर इत्यर्थः । सविस्तरता च वक्ष्यमाणश्लोकेन दर्शिता । तद् यथा—"धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात्" इति । अत्र हि अप्रमेयादिति आनन्त्यादित्यर्थः । तद्वदित्यादि । तद्वदिति सविस्तराणामपि कुधान्यानां मुद्गादीनां माषादीनाञ्च उद्देशमात्रमेव भविष्यतीत्यर्थः । माषादीनाञ्चेति चकारेण मांसफलशाकवर्गेषु चोद्देशमात्रमेव भविष्यतीत्यनुक्तं समुच्चीयते । अनेन पाठेन मुद्गादीनां धान्यत्वं सूच्यते, तेन मुद्गादयः शिम्बीधान्येष्वपि पठ्यन्ते । कुधान्येति कुत्सितानि धान्यानि ॥ १५—१८ ॥

इति शालिवर्गः ।

कुधान्यान्याह —कोरदूषकेत्यादि । कोरदूषकः कोद्रवः श्यामाकस्त्रिविधः—श्यामाक उष्ट्रश्यामाकः हस्तिश्यामाकश्चेति । श्यामाकशब्देन तोयश्यामाक उच्यते । उष्ट्रश्यामाकः स्थूलश्यामाकः, हस्तिश्यामाकः श्यामिकेति लोके । नीवार उड़ि-( लि )-काधान्यम् । तद् द्विविधम्—एकं धान्यसदृशविटपं धान्यक्षेत्रजं, द्वितीयं महादलकाण्डन्तु सलिलजं सलिलवृद्धिमात्रस्तम्बप्ररोहं रक्तशूकञ्च, तदेव प्रशान्तिकेति तन्त्रान्तरेऽपि पठ्यते । वरको वर्व्वटिका शाकम्भरीभूमौ प्रायशः । उद्दालको वनकोद्रवः । प्रियङ्गुः कङ्गुनिकेति लोके । मधूलिका मर्कटहस्ततृणम्, तद्भेदो नान्दीमुखी । कुरुविन्दको व्रीहिगुरुः, गवेधुकस्तृणविशेषः, गलगोधूम इति लोके, देशान्तरे तु यरल इति लोके । अन्ये तु प्रभृतिग्रहणाद् गवेधुकशब्दं गृह्णन्ति । सरः सरकर्णिका । वरुकः वरु इति लोके । अन्ये तु वरुकशब्दं प्रभृतिग्रहणाद् गृह्णन्ति । तोदपर्णी तोयपर्णी स्वनामप्रसिद्धा, मुकुन्दः मुलुन्दः, वेणुयवो वंशफलम् । शेषाणि तु वनचारिभ्यो ज्ञेयानि । प्रभृतिग्रहणेन ऋष्टीघर्मूटीजोन्नलिकादयः ॥ १९ ॥

उष्णा इत्यादि । बद्धनिष्यन्दा बद्धमूत्राः । तेषामेव कंचाञ्चिद् वैशेषिकं गुणमाह—कषायमधुरा इत्यादि । सकोरदूषा श्यामाका इति केचित् पठन्ति । तत्र बहुवचनं श्यामाकानां त्रिविधत्वात् ।

कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियङ्गवः ।
यथोत्तरं प्रधानाः स्यू रूक्षाः कफहराः स्मृताः ॥ २२ ॥
मधूलो मधुरा शीता स्निग्धा नान्दीमुखी तथा ।
विशोषी तत्र भूयिष्ठं वरुकः समुकुन्दकः ॥ २३ ॥
रूक्षा वेणुयवा ज्ञेया वीर्योष्णाः कटुपाकिनः ।
वद्धमूत्राः कफहराः कषाया वातकोपनाः ॥ २४ ॥

मुद्गवनमुद्ग-कलायमकुष्ठ-मसूरमङ्गल्यचणकसतीनत्रिपुटकहरेण्वाढ़कीप्रभृतयो वैदलाः ॥ २५ ॥

कषायमधुराः शीताः कटुपाका मरुत्कराः ।
बद्धमूत्रपुरीषाश्च पित्तश्लेष्महरास्तथा ॥ २६ ॥
नात्यर्थं वातलास्तेषु मुद्गा दृष्टिप्रसादनाः ।
प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥ २७ ॥
विपाके मधुराः प्रोक्ता मसूरा वद्धवर्च्चसः ।
मकुष्ठकाः क्रिमिकराः कलायाः प्रचुरानिलाः ॥ २८ ॥

प्रियङ्गुगुणमाह—कृष्णेत्यादि। प्राधान्यं कफहरत्वादिगुणापेक्षम्। मधूलीनान्दीमुखगुणमाह—मधूलीत्यादि। तथा मधुरशीतलस्निग्धेत्यर्थः। वरुकमुकुन्दकयोर्गुणमाह—विशोषीत्यादि। विशोषी द्रवधातोः। भूयिष्ठमतिशयेन। वेणुयवगुणमाह—रूक्षेत्यादि। कुधान्यानां वार्गिकगुण-प्रस्तावे बद्धनिस्यन्दा इत्युक्तेऽपि वेणुयवा बद्धमूत्रा इति पृथक्कृत्य यदुक्तं तदतिशयप्रतिपाद-नार्थम् ॥ २०—२४ ॥

शमीधान्यानि गुणकर्म्मभ्यां निर्दिशन्नाह—मुद्गेत्यादि। मुद्गा नानाविधा हरितपीतकृष्णरक्त भेदेन। वनमुद्गस्तु वने जायते कृष्णमुद्ग इति प्रसिद्धः, मुद्गिकेति लोके। कलायास्त्रिपुटाः। मकुष्ठकः मोठः। मसूरा द्विविधाः—कृष्णाः पाण्डुराश्च। तत्र कृष्णवर्णा मसूराभिधानाः, पाण्डुवर्णा मङ्गल्यकाभिधानाः, चणकः प्रसिद्धः। सतीनो वर्त्तुलकः, स्वल्पास्त्रिपुटाः, हरेणुः स्वल्प-वर्त्तुलः। आढकी तुवरी। वैदला इति एषां वैदला इति संज्ञा, न पुनरन्वयार्थेन वैदलसंज्ञा ; एवं हि विदलानामिति वैदला इति माषकुलत्थादिष्वपि वैदलत्वं स्यात्, तेन "वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्। वर्ज्जयेच्चालुकं गुल्मी मधुराणि फलानि च॥" इत्यादिषु वैदलत्वेन मुद्गादिषु निषेधः, तेन गुल्मेषु माषकुलत्थादयो न निषिध्यन्ते, न हि ते वैदलाः ॥ २५।२६ ॥

मुद्गगुणमाह—नात्यर्थमित्यादि। मसूरगुणमाह—विपाक इत्यादि। मकुष्ठगुणमाह—

आढ़की कफपित्तघ्नी नातिवातप्रकोपणी ॥ २९ ॥

वातलाः शीतमधुराः सकषाया विरुक्षणाः।

कफशोणितपित्तघ्नाश्चणकाः पुंस्त्वनाशनाः ॥ ३० ॥

हरेणवः सतीनाश्च विज्ञेया बद्धवर्च्चसः ॥ ३१ ॥

ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥ ३२ ॥

माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोष्णवृष्यो मधुरोऽनिलघ्नः।

सन्तर्पणः स्तन्यकरो विशेषाद् बलप्रदः शुक्रकफावहश्च ॥

कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्त्ता।

स्वादुर्विपाके मधुरोऽलसान्द्रः सन्तर्पणः स्तन्यरुचिप्रदश्च ॥ ३३ ॥

माषैः समानं फलमात्मगुप्तमुक्तञ्च काकाण्डफलं तथैव ॥ ३४ ॥

आरण्यमाषा गुणतः प्रदिष्टा रुक्षाः कषाया अविदाहिनश्च ॥ ३५ ॥

उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः।

शुक्राश्मरीगुल्मनिसूदनश्च संग्राहकः पीनसकासहारी ॥ ३६ ॥

आनाहमेदोगुदकीलहिक्का-श्वासापहः शोणितपित्तकृच्च।

कफस्य हन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ ३७ ॥

मकुष्ठका इत्यादि। कलायगुणमाह—कलाया इत्यादि। आढ़कीगुणमाह—आढ़कीत्यादि। चणकगुणमाह—वातला इत्यादि। हरेणुसतीनावाह—हरेणव इत्यादि। ऋते मुद्गमसूरयोराध्मानकरत्वमाह—ऋत इत्यादि। ऋते विना, मुद्गमसूरयोः स्वजात्यपेक्षया आध्माननिषेधः, न पुनः सर्व्वथाध्माननिषेधः २७—३२ ॥

वैदलत्वेनाग्राह्यान् मापादीनाह—माष इत्यादि। भिन्नपूरीषमूत्रो द्रवपुरीषमूत्रः, सन्तर्पणस्तृप्तिकरः, बलप्रदः बलम् उपचयशक्तिलक्षणम्, वृष्यत्वशुक्रलत्वे श्रुतिवृद्धिकरत्वे, पित्तकफावहश्च इति क्वचित्। राजमापानाह—कपायेत्यादि। अलसान्द्रो राजमापः। कपायरसप्रभावात् कफहारित्वमवृष्यत्वञ्च ज्ञेयम्। स्वादुरिति रसे। आत्मगुप्तकाकाण्डयोर्गुणमाह—मापैरित्यादि। आत्मगुप्ता कपिकच्छुः, तस्याः फलम् आत्मगुप्तं, काकाण्डफलमश्वकः कपिकच्छुसदृशशिम्बः काकाण्डः शूकरशिम्बीति लोके। आरण्यमापगुणमाह—आरण्यमापा इत्यादि। आरण्यमापाणां रूक्षत्वाविदाहित्वे च स्वजात्यपेक्षया ॥ ३३—३५ ॥

कुलत्थानाह—उष्ण इत्यादि। उष्णो वीर्य्येण। कफमारुतघ्न इति कफमारुतौ भिन्नौ मिलितौ

ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः।
तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः।
दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽथ केश्योऽनिलहा गुरुश्च ॥ ३८ ॥
तिलेषु सर्व्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये ॥ ३९ ॥
यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी।
व्रणेषु पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्च्चाः ॥
स्थैर्य्याग्निमेधास्वरवर्णकृच्च स पिच्छिलः स्थूलविलेखनश्च।
मेदोमरुत्तृड्हरणोऽतिरुक्षः प्रसादनः शोणितपित्तयोश्च ॥ ४० ॥
एभिर्गुणैर्हीनतरांस्तु किञ्चिद्विद्याद्यवेभ्योऽतियवान् विशेषैः ॥ ४१ ॥
गोधूम उक्तो मधुरो गुरुश्च वल्यः स्थिरः शुक्ररुचिप्रदश्च। *
स्निग्धोऽतिशीतोऽनिलपित्तहन्ता सन्धानकृत् श्लेष्मकरः सरश्च ॥ ४२ ॥

च हन्तीत्यर्थः। वन्यकुलत्थमाह—आनाहेत्यादि। गुदकीला अर्शांसि। तिलमाह—ईषदित्यादि। ईषत्कषायोऽनुरसत्वेन, मधुरो मुख्यरसेन, ईषत्तिक्तोऽनुरसत्वेनैव। व्रणालेपन एव पथ्य इति एतेन तिलानामालेपन एव व्रणे पथ्यत्वम्। अभ्यवहारेषु पुनरपथ्यत्वमेव, अन्ये पुनः स्निग्धो व्रणे सर्व्वत एव पथ्य इति पठन्ति। सर्व्वत इति पञ्चदशधा प्रसरप्रदुष्टेष्वित्यर्थः, अन्ये तु द्विव्रणीयोक्तेभ्यो दोषहन्तृभ्यो लेपेभ्यः सर्व्वेभ्यः पथ्यतम इत्यर्थः। दन्तेभ्यो हितः दन्त्यः। त्वचे हितः त्वच्यः। केशेभ्यो हितः केश्यः। तिलानामुत्तममध्यमाधमत्वमाह—तिलेष्वित्यादि। असितः कृष्णः, सितः श्वेतः। अन्ये इति पीतहरितलोहिताः ॥ ३८—३९ ॥

यवमाह—यव इत्यादि। हिमश्चेति चकारः कषायानन्तरं बोद्धव्यम्। तेन मधुररसाच्चकारसमुचितं कषायत्वं हीनमिति ज्ञेयम्। व्रणेषु पथ्यस्तिलवदिति तिलो यथा व्रणे लेपे वातपित्तकफेषु च शस्यते, तथा यवोऽपि। नित्यमिति वचनेन अविदग्धविदग्धाभिन्नाशुद्धत्वाद्यवस्थास्वित्यर्थः। अन्ये तु नित्यग्रहणेन व्रणे यवाभ्यवहारेणापि हितमिच्छन्ति। प्रबद्धमूत्र अल्पमूत्रः, अतएव प्रमेहिणां हितः। बहुवातवर्च्चा इति वातोऽत्र कुक्षिवातोऽभिप्रेतः, अन्यथा मेदोमरुत्तृड्हरण इति विरुध्यते। स्थैर्य्यं वयःस्थापनकारित्वं। मेदोमरुत्तृड्हरण इति मेदो वातं तृष्णाञ्च हन्तीत्यर्थः; यदि वा मेदसावृतो मरुन्मेदोमरुत् तं सावरणं हन्ति, स्रोतःशोधकत्वात्। निरावरणे तु रुक्षशीतकषायकटुपाकैर्नातिवर्द्धको नातिप्रत्यनीकः। यवोऽकषाय इति केचित्। तत्रेषत्कषाय इत्यर्थः ॥ ४० ॥

अतियवगुणमाह—एभिरित्यादि। अतियव निःशूकाः कृष्णारुणयवा एव। अशेषैर्गुणैरतियवान् विद्यादित्यर्थः। अन्ये तु पठन्ति—यवेभ्योऽपि यवानशेषान् इति। तत्रातियवयविकाद्योऽशेषशब्दवाच्याः। तत्र यविका निःशूकाः स्वल्पाः ॥ ४१ ॥

गोधूमगुणमाह—गोधूमेत्यादि। स्थिरो वयःस्थापनकारी। स्निग्धोऽतिशीत इत्यतिशब्दः

* शुक्रविवर्द्धनश्चेति पाठान्तरम्।

रुक्षः कषायो विषशोफशुक्र-बलासदृष्टिक्षयकृद् विदाही ।
कटुर्विपाके मधुरस्तु शिम्बः प्रभिन्नविण्मारुतपित्तलश्च ॥ ४३ ॥
सितासिताः पीतकरक्तवर्णा भवन्ति येऽनेकविधास्तु शिम्बाः ।
यथोदितास्ते गुणतः प्रधाना ज्ञेयाः कटूष्णा रसपाकयोश्च ॥ ४४ ॥
सहाद्वयं मूलकजाश्च शिम्बाः कुशिम्बिवल्लीप्रभवास्तु शिम्बाः ।
ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिबर्हणाश्च ॥ ४५ ॥
विदाहवन्तश्च भृशञ्च रुक्षा विष्टभ्य जीर्य्यन्त्यनिलप्रदाश्च ।
रुचिप्रदाश्चैव सुदुर्ज्जराश्च सर्व्वे स्मृता वैदलिकास्तु शिम्बाः ॥ ४६ ॥
कटुर्विपाके कटुकः कफघ्नो विदाहिभावादहितः कुसुम्भः ॥ ४७ ॥
उष्णातसी स्वादुरसानिलघ्नी पित्तोल्वणा स्यात् कटुका विपाके ॥ ४८ ॥
पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी ।
तीक्ष्णोष्णरुक्षः कफमारुतघ्नस्तथागुणश्चासितसर्षपोऽपि ॥ ४९ ॥

अनार्त्तवं व्याधिहतमपर्य्यागतमेव च ।
अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतम् ॥ ५० ॥

काकाक्षिगोलकवदुभयत्रापि सम्बध्यते । श्लेष्मकर इति नवगोधूमः, पुराणगोधूमस्तु वसन्तेऽप्युपयोगार्हत्वान्न श्लेष्मकरः । सामान्यशिम्बिगुणमाह—रूक्ष इत्यादि । विषशोथमिति केचित् पठन्ति । वर्णविशेषेण शिम्बादीनां गुणमाह—सितेत्यादि । सिताः शुक्लाः, असिताः कृष्णाः । यथोदितास्ते गुणतः प्रधाना इति असितात् कृष्णात् सितः प्रधानः, पीतादसितः प्रधानः, रक्तादपि पीतः । गुणै रसवीर्य्यविपाकलक्षणैः, प्रधानाः श्रेष्ठाः । अन्ये तु यथोदितास्ते गुणतस्तथार्द्राः इति पठन्ति । अत्रायमर्थः—ये शिम्बा येन प्रकारेण रसपाकयोरुदिताः, ते तथैवार्द्रा ज्ञेयाः, न शुष्काः ॥ ४२—४४ ॥

सहाद्वयमिति । सहाद्वयं मुद्गपर्णीमापपर्ण्यौ । मूलकजाश्च शिम्बा इति मूलकशिम्बी कुशिम्बी । वल्लीशिम्बी शूकशिम्बी । अन्ये तु मूलकपर्णिकाश्चेति पठन्ति ; तत्र मूलकपर्णी शोभाञ्जनः । इदानीं वैदलानां मुद्गादीनां सतीनान्तानामार्द्रशिम्बीगुणमाह विदाहवन्तश्चेत्यादि । विष्टभ्य जीर्य्यन्ति गुड़गुड़ाशब्दं कृत्वा पाकं गच्छन्तीत्यर्थः । अन्ये सवाततोदशूलां मलस्याप्रवृत्तिं कृत्वा गच्छन्तीत्यर्थः । वैदलिकास्तु शिम्बा मुद्गादीनामार्द्रफलिकाः । शुष्कनिर्गतत्वचान्तु प्रागुक्त एव गुणः । शमीधान्यसामान्यादेव कुसुम्भातसीसर्षपगुणमाह—कटुर्विपाके इत्यादि । रसे च पाके च कटुक इत्यर्थः । मधुरोऽनिलघ्नः इत्यन्ये पठन्ति ॥ ४५—४७ ॥

उष्णातसीत्यादि । सिद्धार्थकः श्वेतसर्षपः । रक्तसर्षपगुणमाह—तथेत्यादि । असितसर्षपो रक्तसर्षपः । त्याज्यमाह—अनार्त्तवमित्यादि । अनार्त्तवमन्यर्त्तुजातम् । व्याधिहतं कुङ्कमादिना

नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम्।
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम्॥ ५१॥
शाल्यादेः सर्षपान्तस्य विविधस्यास्य भागशः।
कालप्रमाणसंस्कार-मात्राः सम्परिकीर्त्तिताः॥ ५२॥

इति धान्यवर्गः।

अत ऊर्द्ध्वं मांसवर्गानुपदेक्ष्यामः। तद्यथा—जलेशया आनूपा ग्राम्याः क्रव्यभुज एकशफा जाङ्गलाश्चेति षण्मांसवर्गाः। तेषां वर्गाणामुत्तरोत्तरं प्रधानतमाः। ते पुनर्द्विविधा जाङ्गला आनूपाश्चेति। तत्र जाङ्गलवर्गोऽष्टविधः। तद्यथा—जङ्घाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा बिलेशया

हतम्, अपर्य्यागतमपक्वम्। अभूमिजम् ऊषरोपलकादिसविषभूमिजम्, यस्य धान्यस्य या चोचिता भूमिस्ततोऽन्यत्र भूमौ जातमित्यपरे। नवं चापीति चकारेण नवस्यानतिदोषकारिता सूच्यते। धान्यशब्देन शूकशमीधान्यानि गृह्यन्ते। नवादीनां गुणमाह—नवमित्यादि। नवमिति वर्षं यावत्। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम्। लघु सम्वत्सरोषितमिति लघु पुराणमिति वाच्येऽत्र सम्वत्सरोषितमिति यत् करोति, तज्ज्ञापयति प्रथमवर्षादूर्द्ध्वं द्वितीयं वर्षं यावत् पुराणं गुणवच्च भवति, तदूर्द्ध्वन्तु नीरसत्वान्न गुणकरमिति। उक्तञ्च—"वर्षोषितं सर्व्वधान्यं परित्यजति गौरवम्। न तु त्यजति तद्वीर्य्यं क्रमशो विजहाति तत्॥" माषचणकादयस्तु नूतना एव स्वकार्य्यकरणसमर्था इत्येके। विरूढमाह—विदाहीत्यादि। विरूढम् अङ्कुरजननशक्तिरहितमित्यर्थः। अन्ये विरूढमङ्कुरितमित्याहुः। ईषद्भृष्टं चणकमुद्गादि विरूढमाहुरपरे। उपसंहारमाह—शाल्यादेरित्यादि। भागशः कालप्रमाणं सम्वत्सरोषितमित्यनेनोक्तम्। संस्कारो यथा—गुरोरपि व्रीहेः संस्कारवशाल्लाजा लघवः, मात्रा पुनरग्निबलापेक्षिणी हीना मध्यमोत्तमा चेति। "लघु पथ्यतमं प्रोक्तं गुर्व्वपथ्यतमं स्मृतम्। यत् पाकं गच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम्"॥ ४८—५२॥

इति धान्यवर्गः।

अन्नं भक्तरूपं चोक्तम्, प्रधानव्यञ्जनं मांसमाह—तद् यथेत्यादि। जलेशयाः कोशस्थापादिनो मत्स्याश्च; आनूपाः कूलचराः प्लवाश्च, ग्राम्यशब्देन एकशफशब्देन च ग्राम्याः, शफः क्षुरः। क्रव्यभुक्शब्देन च गुहाशयाः प्रसहाश्च। क्रव्यं मांसम्। जाङ्गलशब्देन जङ्घालविष्किरप्रतुदपर्णमृगविलेशया इति त्रयोदश भेदाः षट्स्वेवान्तर्भूताः। संख्येयनिर्द्देशादेव षट्संख्यायां लब्धायां षड्ग्रहणं प्रतुदादिभेदा हि एतेष्वेवावरुध्यन्ते, तेन षड्वर्गा इति नियमार्थम्। अन्येऽपि जङ्घालादिभेदा भविष्यन्तीति सूचनार्थमित्यपरे। अयं षड्भेदः संक्षेपेणोत्तरोत्तरप्राधान्यज्ञापनाय। वर्गाणामुत्तरोत्तरप्राधान्यमाह—एतेषामित्यादि। पुनर्द्वैविध्यमाह—ते पुनरित्यादि। द्वैविध्यकथनं जाङ्गलत्वेनानूपत्वेन च वक्ष्यमाणभेदानां गुणानुगमाय। जाङ्गलस्याष्टविधत्वमाह—

ग्राम्याश्चेति। तेषां जङ्घालविष्किरौ प्रधानतमौ, तावेणहरिणर्क्षकुरङ्ग-कराल-कृतमालशरभश्वदंष्ट्रापृषतचारुष्क-मृगमातृकाप्रभृतयो जङ्घाला मृगाः कषाया मधुरा लघवो वातपित्तहरास्तीक्ष्णा हृद्या वस्तिशोधनाश्च ॥ ५३ ॥

कषायो मधुरो हृद्यः पित्तासृक्कफरोगहा।
संग्राही रोचको बल्यस्तेषामेणो ज्वरापहः ॥ ५४ ॥
मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः।
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः ॥ ५५ ॥
एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते।
न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते ॥ ५६ ॥
शीतासृक्पित्तशमनी विज्ञेया मृगमातृका।
सन्निपातक्षयश्वास-कासहिक्काऽरुचिप्रणुत् ॥ ५७ ॥

लावतित्तिरि-कपिञ्जलवर्त्तीर-वर्त्तिकावर्त्तकनप्तृकावार्त्तीकचकोरकलविङ्क-

तन्नेत्यादि। ते सर्व्वेऽत्रैव वक्ष्यन्ते। तेषां मध्ये कस्य प्राधान्यमित्याह—तेषामित्यादि। जाङ्गल-विष्किराविति कश्चित्। जङ्घालविष्किरावाह—तावेणेत्यादिना। यौ जङ्घालविष्किरौ कथ्येते इत्यर्थः। एणः कृष्णहरिणः, हरिणो गौरहरिणः, ऋक्षो नीलाण्डः रोरु इति प्रसिद्धः। कुरङ्गश्चतुरगतिः चतुरङ्ग इति लोके। करालोऽधोनिष्क्रान्तदन्तो हिमवदादिपर्व्वतेषु कस्तुरीमृग इति लोके। कृतमाला बहवः सङ्घातचारिणो मृगा देशान्तरे लोकादवगन्तव्याः। शरभोऽष्टापद उष्ट्रप्रमाणो महाशृङ्गः पृष्ठगतचतुष्पादः काश्मीरे प्रसिद्धः। श्वदंष्ट्रा चतुर्द्दंष्ट्रोऽतिदुष्टः कर्कटक इति कार्त्तिक-पुरे। पृषतो विन्दुचित्रितः चित्तल इति लोके। चारुष्कश्चारुशरीरः स्वल्पतनुर्मृगभेद एव। मृगमातृका अल्पा पृथूदरा चतुरङ्गस्त्री भेदलीति लोके। प्रभृतिग्रहणात् कोटकारकरभादयः। जङ्घाला इति प्रशस्तजङ्घावन्तः। तेषां सामान्यगुणमाह—कषाया इत्यादि। तीक्ष्णा इति तीक्ष्ण-गुणकर्म्मकरत्वात्। वस्तिशोधना इति अश्मरीशर्करामूत्रकृच्छ्रमूत्राघातादिषु पथ्या मूत्रविरेक-कारिण इत्यर्थः ॥ ५३ ॥

तेषां मध्ये कृष्णहरिणगुणमाह—कषाय इत्यादि। एणस्य षड्रसत्वेऽपि कषायमधुरोत्कटत्वात् कषायमधुर इत्युक्तम्। गौरहरिणगुणमाह—मधुर इत्यादि। बद्धविण्मूत्र इति एतेनातीसारिणां प्रमेहिणाञ्च हित इत्युक्तम्, एणस्तु प्रमेहिणामहितः, वस्तिविशोधनत्वात्। सूत्रेण एणहरिणयोर्भेद-माह—एण इत्यादि। मृगमातृकामाह—शीतासृगित्यादि ॥ ५४—५७ ॥

विष्किरानाह—लावेत्यादि। लावः प्रसिद्धः, तित्तिरिः कृष्णतित्तिरिश्चित्रपक्षः, कपिञ्जलो गौरतित्तिरिः, वर्त्तीरः कपिञ्जलानूकः कपिञ्जलादल्पो वर्त्तिकातः किञ्चिन्महान् वर्त्तिकसदृश एव, घर्घरा इति लोके। वर्त्तिकावर्त्तकौ तद्भेदौ। नप्तृका लोके घुड्डुरकाभिधा हुङ्कारकारिणी अल्पा

मयूरक्रकरोपचक्रकुक्कुटसारङ्ग-शतपत्रकुतित्तिरिकुरुवाहुकयवलकप्रभृतयस्त्र्याहला विष्किराः, लघवः शीतमधुराः कषाया दोषशमनाश्च ॥ ५८ ॥

संग्राही दीपनश्चैव कषायमधुरो लघुः।
लावः कटुविपाकश्च सन्निपाते च पूजितः ॥ ५९ ॥
ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्द्धनः।
तित्तिरिः सर्व्वदोषघ्नो ग्राही वर्णप्रसादनः ॥
हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः ॥
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः।
कफोत्थेषु च रोगेषु मन्दवाते च शस्यते ॥ ६० ॥
वातपित्तहरा वृष्या मेधाग्निबलवर्द्धनाः।
लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः ॥ ६१ ॥

पाण्डुरोदरा। वार्त्तीका वर्त्तिचटकाः स्वल्पाः रुङ्घातचारिणः वगेड़ा इति लोके। चकोरो रक्ताक्षो विषसूचकः स्वनाम्ना ख्यातः। कलविङ्कः कालचटको भृङ्गराजाद् भिन्नः, अपरे भृङ्गराजमाहुः, अन्ये तु रक्तशिरसं कृष्णग्रीवं ग्राम्यचटकाकारं कलविङ्कमाहुः। मयूरः प्रसिद्धः। क्रकरो लावाल्पकः कपिञ्जलात् स्थूलः, कयर इति लोके। उपचक्रः क्रकरभेदः कृष्णचन्चुर्मंदाविलः। कुक्कुटः प्रसिद्धः। सारङ्गश्चातकः, अन्ये कृष्णकच्चुरश्चातकाकारो विष्किरः। शतपत्रो दार्व्वाघाटः, काष्ठकुट्टक इति लोके। कुतित्तिरिस्तित्तिरिभेदः पाण्डुः कपिलः। कुरुवाहुकः कुरुकुरुकः। यवलकः यवंगुडुरुकः। प्रभृतिग्रहणेनैवंजातीयाः। विकीर्य्य भक्षयन्तीति विष्किराः। त्रिभिश्चरणयुगलचन्चुभिराहलन्ति विलिखन्ति त्र्याहलाः, टाना इति जेज्झटः। एतेषां सामान्यगुणमाह—लघवः शीतमधुरा इत्यादि। अन्ये लावादिवर्त्तिकादिवर्गयोर्गुणान् श्लोकेन पठन्ति—"वर्गौ स्वादुरसावेतौ कषायानुरसौ लघू। वातपित्तहरौ नातिशीतलौ वस्तिशोधनौ" इति—अत्रापि स एवार्थः ॥ ५८ ॥

तेषां मध्ये लावकगुणमाह—संग्राहीत्यादि। सन्निपाते तु पूजित इति पूजितः प्रशस्त इत्यर्थः। पूज्यत्वं सामान्यगुणकथने दोषशमन इति वचनादत्र सन्निपातवचनात् वातादीन् व्यस्तान् समस्तानपि हन्तीत्यर्थः। अथवा सन्निपातज्वरे निवृत्ते पुनरागमननिवृत्तये प्रयोज्य इत्यर्थः। अत्र केचित् पठन्ति—"गैरिकः पांशुलश्चैव पौण्ड्रकौ दर्भकस्तथा। लोकश्चतुर्व्विधः प्रोक्तस्तित्तिरिर्द्विविधः स्मृतः" इति गैरिकपांशुलौ प्रसिद्धौ, पौण्ड्रकदर्भकौ देशान्तरे लावद्वगन्तव्यौ। तित्तिरिर्व्याख्यातः अस्याग्रे केचित् गैरिकपांशुलपौण्ड्रकदर्भकभेदेन गुणान् पृथग्भिन्नान् पठन्ति। एतच्च न बहुसम्मतम्, तस्मान्न पठन्ति। कृष्णतित्तिरिगुणमाह—ईषदिति। ईषद्गुरुत्वं लावकापेक्षया। सर्व्वग्रहणं रक्तदुष्टिघ्नत्वप्राप्तये। गौरतित्तिरिगुणमाह—रक्तेत्यादि। क्रकरगुणमाह—वातपित्तेत्यादि।

कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः ।
मयूरः स्वरमेधाग्नि-दृक्श्रोत्रेन्द्रियदार्ढ्यकृत् ॥ ६२ ॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलापहः ।
बृंहणः कुक्कुटो वन्यस्तद्वद् ग्राम्यो गुरुस्तु सः ।
वातरोगक्षयवमी-विषमज्वरनाशनः ॥ ६३ ॥

कपोत-पारावतभृङ्गराजपरभृतकोयष्टिक-कुलिङ्गगृहकुलिङ्गगोक्ष्वेडकडिण्डिमानकशतपत्रकमातृनिन्दक-भेदाशिशुकसारिकावल्गुलीगिरिशालट्वान्नदूषक-सुगृही-खञ्जरीटकहारीतदात्यूहप्रभृतयः प्रतुदाः ॥ ६४ ॥

कषायमधुरा रुक्षाः फलाहारा मरुत्कराः ।
पित्तश्लेष्महराः शीता बद्धमूत्राल्पवर्च्चसः ॥ ६५ ॥
सर्व्वदोषकरस्तेषां भेदाशी मलदूषकः ॥ ६६ ॥
कषायस्वादुलवणो गुरुः काणकपोतकः ॥ ६७ ॥

उपचक्रगुणमाह—तथेत्यादि । तथा इति क्रकरसदृशगुणा इत्यर्थः । मयूरगुणमाह—कषाय इत्यादि । दृक्श्रोत्रेन्द्रियदार्ढ्यकृदिति चक्षुःश्रवणेन्द्रियदार्ढ्यकारीत्यर्थः । वन्यकुक्कुटमाह—स्निग्धेत्यादि । वन्यो वनजातः । ग्राम्यकुक्कुटमाह—तद्वदित्यादि । तद्वदिति वन्यकुक्कुटवदित्यर्थः । गुरुस्त्विति वन्योऽपि गुरुः, ग्राम्यस्तु गुरुतर इत्यर्थः ॥ ५८—६३ ॥

प्रतुदानाह—कपोतेत्यादि । कपोतः वनवासी पाण्डुक इति लोके । स च नानाविधः । पारावतः गृहदेवकुलालयः, भृङ्गराजः भ्रमरको धूम्याटसदृशः पक्षिराज इति लोके । परभृतः कोकिलः, कोयष्टिः कोयङ्का दीर्घजङ्घा कोयङ्क इति लोके । कुलिङ्गः वनचटको ग्राम्यचटकाकारः । गृहकुलिङ्गः पुण्ड्रचटकः ग्राम्यचटक इति लोके । गोक्ष्वेडो गोनर्द्दः । डिण्डिमानकः डिण्डिमोत्कटध्वनिः । शतपत्रः राजघूकः । मातृनिन्दकः प्रियात्मकः पुत्ररक्षक इति लोके । भेदाशी पुत्रशुकः भेकाशीति केचित्, तत्रापि स एवार्थः । शुकसारिके प्रसिद्धे । बल्गुली गडुलिकेति लोके । गिरिशा गिरिवर्त्तिका, पर्व्वतवाहीत्येके । लट्वा फेञ्जातकः रक्तपुच्छाधोभागः, अन्ये भरद्वाजभेदमाहुः, लाट इति लोके । अन्नदूषकः द्वितीयफेञ्जातकः, अन्ये सञ्चानचञ्च्वाकृति चञ्चुभागं दीर्घपुच्छादिलक्षणेन प्रतुदं विहङ्गमाहुः । सुगृही पीतमस्तको वया इति लोके । खञ्जरीटः सितासितवर्ण्णो द्रुतललितगतिः, कवड़िया इति लोके । हारीतो हरितपीतवर्णः हरिताल इति लोके । दात्यूहः कालकण्ठकः, डाहुक इति लोके । प्रभृतिग्रहणात् गोपापुत्रसारपदेन्द्राद्यश्चरकोक्ताः । प्रतुदा इति प्रतुद्य भक्षयन्तीति हेतोः ॥ ६४ ॥

एषां सामान्यगुणमाह—कषायेत्यादि । फलाहारा मरुत्करा इति फलाहारत्वेन वातकराः, फलाहारत्वं स्वभावकथनं वा, वातकरत्वं चणककलायादिवत्, किन्तु मांसान्तरापेक्षया न वातं घ्नन्तीत्यर्थः । तेषां मध्ये भेदाशिगुणमाह—सर्व्वदोषकरस्तेषामित्यादि । मलदूषक इति वातादि-

रक्तपित्तप्रशमनः कषायो विशदोऽपि च।
विपाके मधुरश्चापि गुरुः पारावतः स्मृतः ॥ ६८ ॥
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः।
रक्तपित्तहरो वेश्म-कुलिङ्गस्त्वतिशुक्रलः ॥ ६९ ॥
सिंहव्याघ्रवृकतरक्षृक्षद्वीपिमार्ज्जारशृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः ॥७०॥
मधुरा गुरवः स्निग्धा बल्या मारुतनाशनाः।
उष्णवीर्य्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७१ ॥
काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः ॥७२॥
एते सिंहादिभिः सर्व्वे समाना वायसादयः।
रसवीर्य्यविपाकेषु विशेषाच्छोषिणे हिताः ॥ ७३ ॥

दोषजननो मूत्रादिमलदूषकश्चेति स्वभावेन दोषाणां मलानाञ्च दूषयितेत्यर्थः। केचित् सर्व्वदोषकरस्थाने सर्व्वदोषहर इति प्रमादपाठं दृष्ट्वा सर्व्वदोषहरस्य च मलदूषकत्वासम्भवभयेन मलदूषकस्थाने मलदूषक इति पठन्ति। तच्च प्रमादजत्वान्नादेयम्। काणकपोतगुणमाह—कषायेत्यादि। चकारोऽत्र लुप्तनिर्द्दिष्टो द्रष्टव्यः, तेन काणकपोतोऽपि त्रिदोषकोपनो मलदूषयितेति चकारेण पूर्व्वानुवृत्तं समुच्चीयते। काणकपोतो वनवासी पाण्डुकपोतः, अन्ये अरुणवर्णकमपि कपोतमाहुः। पारावतगुणमाह—रक्तेत्यादि। विशदः पिच्छिलविपरीतः। वन्यकुलिङ्गगुणमाह—कुलिङ्ग इत्यादि। गृहकुलिङ्गगुणमाह—रक्तेत्यादि। वेश्म गृहम् ॥ ६५—६९ ॥

गुहाशयानाह—सिंहेत्यादि। सिंहः पराक्रमी निद्रालुः। व्याघ्रः विकृतमुखो निद्रालुर्हिंस्रः। वृकः कुक्कुरसदृशः पशुः क्षुद्रः। तरक्षुः मृगशत्रुर्व्याघ्रविशेषः जरख इति लोके। ऋक्षो भल्लूकोऽतिलोमशः रिच्छ इति लोके। द्वीपी व्याघ्रभेदश्चित्रव्याघ्रः चित्रक (चिता) इति लोके। मार्ज्जारो विडालः, अत्र च मार्ज्जारो गुहाशयत्वाद् आरण्यविडालो बोद्धव्यः। शृगालः प्रसिद्धः। मृगेर्व्वारुः मृगभक्षः शृगालाकृतिः हरिणाद्रुव इति लोके। प्रभृतिग्रहणाद् वान्तादचभ्रुप्रभृतयः। गुहासु पर्व्वतविवरेषु शेरत इति गुहाशयाः। तेषां सामान्यगुणमाह—मधुरा इत्यादि ॥ ७०।७१ ॥

प्रसहानाह—काकेत्यादि। काकः प्रसिद्धः। कङ्को दीर्घचञ्चुर्महाप्रमाणः; उक्तञ्च—"कङ्कः स्यात् कङ्कमल्लाख्यो वाणपत्रार्हपक्षकः। लोहपृष्ठो दीर्घपादः पक्षाधः पाण्डुवर्णभाक्" इति। कुरव श्चिल्ल्याकारो नादोत्थापितमत्स्यः हस्तमत्स्यग्राही कुरल इति लोके प्रसिद्धः। चाषः इन्द्रनीलमणिसदृशपक्षः शस्तदर्शनः करटाशन इति लोके प्रसिद्धः। भासो गोकुलचारी गृध्रविशेषः श्वेतशिखावान्। शशघाती चिल्ल्याकारो महाचरणनखः प्रहारेण शशकाहरणशीलः शशाग्निरिति लोके प्रसिद्धः; अन्ये पाजीत्याहुः। उलूकः कौशिकः। चिल्लिः चिल्लः। श्येनः सिञ्चानो गरुडान्वयः। गृध्रो मांसाशी योजनदृष्टिः। प्रभृतिग्रहणेन धूसपिकाकरपत्रिकादयो गृह्यन्ते। प्रसह्य भक्षयन्तीति प्रसहाः। तेषां सामान्यं गुणमाह—एते इत्यादि। एते वायसादयः

मद्गुमूषिकवृक्षशायिकावकुशपूतिघासवानरप्रभृतयः पर्णमृगाः॥ ७४॥

मधुरा गुरवो वृष्याश्चक्षुष्याः शोषिणे हिताः।
सृष्टमूत्रपुरीषाश्च कासार्शःश्वासनाशनाः॥७५॥

श्वाविच्छल्यकगोधाशशवृषदंशलोपाकलोमशकर्णकदलीमृगप्रियकाजगरसर्प-मूषिकनकुलमहावभ्रुप्रभृतयो विलेशयाः॥ ७६॥

वर्च्चोमूत्रं संहतं कुर्य्यु रेते वीर्य्ये चोष्णाः पूर्व्ववत् स्वादुपाकाः।
वातं हन्युः श्लेष्मपित्ते च कुर्य्युः स्निग्धाः कासश्वासकार्श्यापहाश्च॥७७॥

कषायमधुरस्तेषां शशः पित्तकफापहः।
नातिशीतलवीर्य्यत्वाद् वातसाधारणो मतः॥ ७८॥

गोधा विपाके मधुरा कषायकटुका स्मृता।
वातपित्तप्रशमनी बृंहणी बलवर्द्धनी॥ ७९॥

शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः॥ ८०॥

प्रियको मारुते पथ्योऽजगरस्त्वर्शसां हितः॥ ८१॥

सिंहादिभिः समानास्तुल्या इति सम्बन्धः। वायसः काकः। ते केषु समाना इत्याह—रसवीर्य्य-विपाकेषु, विशेषात् अतिशयेन, शोषिणे राजयक्ष्मिणे॥ ७२।७३॥

पर्णमृगानाह—मद्ग्वित्यादि। मद्गुर्मूषिको मालुयासर्पः, अन्ये तु मद्गुमूषिकौ भिन्नावाच-क्षेते। तत्र मद्गुः पूर्व्वार्थ एव, मूषिको वृक्षमूषिकः। वृक्षशायिका वृक्षमर्कटिका गिळीति लोके। अवकुशो गोलाङ्गुलो वानरविशेषः। पूतिघासो वृक्षविडालः सुगन्धिवृषणः कर्पूरक इति लोके। वानरो मर्कटः। प्रभृतिग्रहणादेवंजातीया अन्येऽपि। प्रायेण वृक्षस्थायित्वात् पर्णमृगाः। एतेषां सामान्यगुणमाह—मधुरा इत्यादि॥ ७४।७५॥

विलेशयानाह—श्वाविदित्यादि। श्वावित् सूचीसदृशरोमयुक्तः सिंह इति लोके। शल्यकः (वज्रशकलः) वृक्षनकुलः वृहद्गोधानुकारी सालाइति लोके। गोधाशशौ प्रसिद्धौ। वृषदंशः ग्राम्यमार्जारः, अन्ये वन्यमार्जारमाहुः। लोपाकः शृगालभेदः, लाङ्गलक इति लोके। लोमशकर्णो महाविडालसमो व्याघ्राकारः, कदली कदलीहण्ड इति पौण्ड्रे प्रसिद्धः, अन्ये सर्पविशेषमाहुः, अपरे कदलीमृगमिति समस्तं पठन्ति, तत्रापि स एवार्थः। मृगप्रियको गोनसः। अजगरो महासर्पः। सर्पः पुनरल्पो राजीलमण्डलीदर्व्वीकरभेदात् त्रिविधः। मूषिकः भूमिमूषिकः। नकुलो भुजङ्गशत्रुः। तद्भेदो महावभ्रुः। प्रभृतिग्रहणाद् गण्डकजाहकप्रभृतयोऽपि द्रष्टव्याः। विलशायित्वात् विलेशयाः॥७६॥

एतेषां सामान्यगुणमाह—वर्च्च इत्यादि। संहतं सान्द्रम्, अन्ये तु संग्राहका बद्धमूत्रा इत्यादि पठन्ति। तेषामेव केषाञ्चिद् गुणविशेषमाह—कषायेत्यादि। वाते साधारणो मध्यस्थः साधारणदेशवत्, न चायं वातं कोपयति न च वातशमं करोति; माधुर्य्याद् वातशमहेतुः, कषायात्

दुर्नामानिलदोषघ्नाः क्रिमिदूषीविषापहाः।
चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्द्धनाः ॥ ८२ ॥
दर्व्वीकरा दीपकाश्च ते युक्ताः कटुपाकिनः।
मधुराश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ८३ ॥
अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः ॥ ८४ ॥
ग्राम्या वातहराः सर्व्वे बृंहणाः कफपित्तलाः।
मधुरा रसपाकाभ्यां दीपना बलबर्द्धनाः ॥ ८५ ॥
नातिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः।
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ ८६ ॥
बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥ ८७ ॥
मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ८८ ॥
श्वासकासप्रतिश्याय-विषमज्वरनाशनम्।
श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम् ॥ ८९ ॥
औरभ्रवत् सलवणं मांसमेकशफोद्भवम् ॥ ९० ॥
अल्पाभिष्यन्द्ययं वर्गो जाङ्गलः समुदाहृतः ॥ ९१ ॥

सशैत्याच्च अहेतुरिति साधारणत्वम्। गोधेत्यादि। दूषीविषापहा इति विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषम्। सर्पाः सामान्यसर्पाः। दर्व्वीति। दर्व्वीकराः फणकरा इत्यर्थः। दीपका राजिमन्तः ॥ ७७—८३ ॥

ग्राम्यानाह—अश्वाश्वतरेत्यादि। अश्वो घोटकः। अश्वायां गर्द्दभेन जनितोऽश्वतरः वेसर इति लोके। गौः प्रसिद्धा। खरो गर्द्दभः, उष्ट्रः करभः, वस्तश्छगलः, उरभ्रो मेषः, मेदःपुच्छको दुम्बकः, अन्ये मेढकमाहुः। प्रभृतिग्रहणात् वेक्कप्रभृतयः। प्रायो ग्रामवासित्वात् ग्राम्याः। गुणमाह—ग्राम्या वातहरा इति ॥ ८४।८५ ॥

अथ छागलगुणमाह—नातिशीत इत्यादि। अल्पस्नेहगौरवाभ्यामल्पकफः, उष्णानुबन्धादल्पशैत्यादल्पपित्तः, कटुतिक्तकषायाल्पाम्बुसेवनादनभिष्यन्दी अल्पाभिष्यन्दी दोषधातुमलस्रोतसामल्पक्लेदप्राप्तिजनन इत्यर्थः। मेषगुणमाह—बृंहणमित्यादि। औरभ्रं मांसं यद्यपि पित्तश्लेष्मकरमत्रोक्तं, तथापि सातिशयं पित्तश्लेष्माणञ्च करोतीति चिप्रचण्डाचार्य्यमतम्। मेदःपुच्छगुणमाह—मेद इत्यादि। गव्यगुणमाह—श्वासकासेत्यादि। सलवणम् ईषल्लवणम्। शफः क्षुरः ॥ ८६—९० ॥

अल्पेत्यादि ॥ ९१ ॥

दूरे जनान्तनिलया दूरे पानीयगोचराः।
ये मृगाश्च विहङ्गाश्च तेऽल्पाभिष्यन्दिनो मताः॥ ९२॥
अतीवासन्ननिलयाः समीपोदकगोचराः।
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दिनस्तु ते॥ ९३॥

आनूपवर्गस्तु पञ्चविधः। तद्यथा—कूलचराः प्लवाः कोषस्थाः पादिनो मत्स्याश्चेति। तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकौन्द्रन्यङ्क्वरण्यगवयप्रभृतयः कूलचराः पशवः॥ ९४॥

वातपित्तहरा वृष्या मधुरा रसपाकयोः।
शीतला बलिनः स्निग्धा मूत्रला कफवर्द्धनाः॥ ९५॥
विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः।
स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः॥ ९६॥

सर्व्वेषामेव जाङ्गलानामल्पाभिष्यन्दित्वं माभूदित्याह—दूर इत्यादि। जनशब्दोऽत्र ग्रामवाची, तेन दूरे ग्रामतो गृहा इत्यर्थः। अन्ये दूरे जनान्तेति पठित्वा व्याख्यानयन्ति—दूरे जनानामान्तो गृहीतो निलयो यैर्मृगैर्विहङ्गैश्च ते तथा। दूरे पानीयगोचरा इति दूरे पानीयविषयाः पानीयाद् दूरनिवासिन इत्यर्थः। ये मृगाश्चेति चकारात् सर्पादयः। अतीवासन्ननिलयाः इति अतिशयेन ग्रामासन्नगृहा इत्यर्थः। समीपोदकगोचरा इति पानीयसमीपभूमिचारिण इत्यर्थः। अत्रापि चकारात् धन्वानूपचारिणामजावितित्तिरीणां जाङ्गलपठितानामपि मिश्रगोचरत्वान्नात्यभिष्यन्दित्वम्॥ ९२। ९३॥

आनूपवर्गप्रकारानाह—आनूपवर्गस्त्वित्यादि। अनुगता आपोऽस्मिन्निति सजलस्थलात्मको देशः, तद्भवा आनूपाः। कूलं नद्यादितटं, तत्र चरन्ति भक्षयन्ति भ्रमन्ति च ये ते कूलचराः। प्लवन्ते पानीये तरन्ति ये ते प्लवाः। कोषः शङ्खादीनां संपुटः, तत्र तिष्ठन्तीति कोषस्थाः। पादिनः पादवन्तः। मत्स्याः प्रसिद्धाः। तत्र कूलचरानाह तत्रेत्यादि। गजो हस्ती, गवयो गोसदृशः। महिषः प्रसिद्धः। रुरुः शरदि शृङ्गत्यागी; तल्लक्षणं उच्यते—"विकटबहुविषाणः शम्बराकारदेहः सलिलतटचरत्वाच्छम्बरेभ्यो विचित्रः। त्यजति शरदि शृङ्गं रौत्यतोऽसौ रुरुः स्यात् पृथुलमृगविशेषः प्रायशश्चेदिदेशे।" इति। चमरः केशमृत्युर्गोसदृशः। सृमरो महाशूकरः। अन्ये तु महाश्वाकारश्चमरान्तकः। रोहितो लोहितवर्णो मृगजातिः। अन्ये तु रोहिष इति पठन्ति व्याख्यानयन्ति च—कच्छशूकर इत्यर्थः, अपरे फलशूकरमाहुः। वराहः शूकरः, खड्गी गण्डकः, गोकर्णः गोसदृशकर्णः गोन इति प्रसिद्धः। कालपुच्छकश्चलत्कृष्णपुच्छकः। औन्द्रः पानीयविड़ालः भोंदड़ इति लोके। न्यङ्कुः न्यंगुण इति लोके। अरण्यगवयो वन्यगौः॥ ९४॥

तेषां सामान्यगुणमाह—वातेत्यादि। शीतला इत्यत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः, तेनौष्ण्यमपि केषाञ्चित् द्रष्टव्यम्। तेषां केषाञ्चिदेव गुणविशेषमाह—विरूक्षण इत्यादि।

गवयस्य तु मांसं हि स्निग्धं मधुरकासजित्।
विपाके मधुरञ्चापि व्यवायस्य तु वर्द्धनम् ॥ ९७ ॥
स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः।
निद्रापुंस्त्वबलस्तन्य-वर्द्धनो मांसदार्ढ्यकृत् ॥ ९८ ॥
रुरोर्मांसं समधुरं कषायानुरसं स्मृतम्।
वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् ॥ ९९ ॥
तथा चमरमांसन्तु स्निग्धं मधुरकासजित्।
विपाके मधुरञ्चापि वातपित्तप्रणाशनम् ॥ १०० ॥
सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम्।
वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् ॥ १०१ ॥
स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु।
स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम् ॥ १०२ ॥
कफघ्नं खड्गिपिशितं कषायमनिलापहम्।
पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् ॥ १०३ ॥
गोकर्णमांसं मधुरं स्निग्धं मृदु कफावहम्।
विपाके मधुरञ्चापि रक्तपित्तविनाशनम् ॥ १०४ ॥

हंस-सारसक्रौञ्चचक्रवाक-कुरर-कादम्ब-कारण्डव-जीवञ्जीवक-बकबलाका-पुण्डरीकप्लव-शरारीमुखनन्दीमुख-मद्गूत्क्रोश-काचाक्ष-मल्लिकाक्षशुक्लाक्षपुष्कर-

समुदितौ कफवातौ हन्ति, केवलं तु कफं करोत्येव, गजादिषु विरूक्षणकफघ्नत्वादि स्वजात्यपेक्षं परिणतिविशेषात् ॥ ९५—९७ ॥

स्निग्धोष्णेत्यादि। वृष्यः पुंस्त्ववर्द्धन इति च द्वयं स्तुतिवृद्धिप्राप्तये। रुरोर्मांसमित्यादि। स्वेदनं स्वेदजनकम्, बृंहणमिति बृंहणं देहवृद्धिकरं, वृष्यं शुक्रलं, तर्पणं तृप्तिजनकम्। कफघ्नमित्यादि। पित्र्यमिति पितृभ्यो हितम्। गोकर्णमांसमित्यादि ॥ ९८—१०४ ॥

प्लवानाह—हंसेत्यादि। हंसः कलस्वरो ललितगतिः प्रसिद्धः। सारसः लक्ष्मणो रक्तशिराः प्रसिद्ध एव। क्रौञ्चः क्रौचिरः; कोंचवक इति लोके। चक्रवाकः द्वन्द्वचरः, निशावियोगी। कुररः अस्य प्रसहेष्वपि पाठः, तेनोभयेषामपि गुणा बोद्धव्याः; अन्ये तु कङ्कमल्लुसदृशजलचरं कुररमाहुः। कादम्बः कलहंसः अतिधूसरपक्षः, अन्ये तु रक्तचञ्चुशिरःकृष्णपादादीनां लक्षणेन युत इति पठन्ति। कारण्डवः शुक्लहंसभेदोऽल्पः, अन्ये करहवमाहुः। उक्तञ्च—'कारण्डवः काकवक्त्रो दीर्घाङ्घ्रिः कृष्णवर्णभाक्' इति। जीवञ्जीवको विषदर्शनमृत्युः। बकः पाण्डुरपक्षः प्रसिद्धः। बलाका बकभेदः बगुलीति लोके। पुण्डरीको ललितनयनः। प्लवो महाप्रमाणः

शायिका-कोनालकाम्बुकुक्कुटिका-मेघराव श्वेतचरणप्रभृतयः प्लवा सङ्घात-चारिणः ॥ १०५ ॥

रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः ।
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः ॥ १०६ ॥
गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः ।
बृंहणः शुक्रलस्तेषां हंसो वातविकारनुत् * ॥ १०७ ॥

शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः ॥ १०८ ॥

कूर्मकुम्भीरकर्कटककृष्णकर्कटकशिशुमारप्रभृतयः पादिनः ॥ १०९ ॥

शङ्खकूर्मादयः स्वादु-रसपाका मरुन्नुदः ।
शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः ॥ ११० ॥
कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ।
शुक्लः सन्धानकृन् सृष्ट-विण्मूत्रोऽनिलपित्तहा ॥ १११ ॥

प्रसेवकगलः सगर इति लोके । शरारीमुखः खदिरवर्णो गिर्गराटीति लोके । नन्दीमुखः पन्नाटी आटी-भेदः । मद्गुर्जलकाकः । उत्क्रोशः कुररभेदो मत्स्याशी । काचाक्षः कपर्द्दिपाकः, बहुडीति लोके । मल्लिकाक्षः शुक्लशवलः । शुक्लाक्षः तद्भेदः,अन्ये तु मलिनचञ्चुचरणो हंसभेद एव इत्याहुः । पुष्कर-शायिका पद्मपत्रशायिका । कोनालकः श्यामपृष्ठः श्वेतोदरः पानीयवर्त्तिकेति लोके । अम्बुकुक्कुटिका जलकुक्कुटी कृष्णवर्णा, बुड़ीयाक इति लोके । मेघरावश्चातकः,अन्ये तु चातकं विष्किरेष्वामनन्ति । श्वेतचरणः शुक्लपक्षः प्रसेवकगलः, ज्येष्ठबलाकेति लोके । प्रभृतिग्रहणाद् आरामण्डितुण्डिकामृणाल कण्ठादयः । तेषां सामान्यगुणमाह—रक्तेत्यादि । केषाञ्चिद् विशेषगुणमाह—गुरूष्णेत्यादि । अन्ये पुनरत्र सारसक्रौञ्चकुररकारण्डवकादम्बकजीवञ्जीवकानामपि विशिष्टं गुणं पठन्ति, तन्नाति-प्रसिद्धमिति न लिखितम् ॥ १०५—१०९ ॥

कोशस्थानाह—शङ्खेत्यादि । शङ्खः प्रसिद्धः । शङ्खनखः क्षुद्रशङ्खः शङ्खभेद एव । शुक्तिः समुद्रजा सिप्पिः झिनुक् इति लोके । शम्बूकः आवर्त्तकोशः शामुक् ( शाङ्कुला ) इति लोके । भल्लूकः कपर्द्दकः, अन्ये शम्बूकभेदमाहुः । प्रभृतिग्रहणात् वोड़िकजलशुक्तिशम्बूकभेदा बहुविधा गृह्यन्ते । पादिन आह—कूर्म्मेत्यादि । कूर्म्मः कच्छपः, स तु नानाविधः वर्त्तुलदीर्घमहदादि-भेदेन । कुम्भीरोऽपि नानाभेदो घड़ियालगोधादिभेदेन । कर्कटोऽपि द्विविधः कृष्णशुक्लभेदेन, शिशुमारो हस्त्याकारोऽन्तर्वक्त्रो वहिर्निःश्वासमुक्, सोऽपि द्विविधो वर्त्तुलदीर्घभेदेन, दीर्घफाणित इति लोकाः प्राहुः ; स एवात्र गृह्यते पादित्वात् । प्रभृतिग्रहणात् ग्राहादयः । तेषां कोशस्थानां पादिनाञ्चैकगुणत्वादुभयोर्वर्गयोर्गुणमेकीकृत्याह—शङ्खकूर्म्मादय इत्यादि । तेषां मध्ये कस्यचिद् गुणमाह—कृष्णेत्यादि ॥ ११० । १११ ॥

* मारुतनाशन इति वा पाठः ।

मत्स्यास्तु द्विविधा नादेया सामुद्राश्च। तत्र रोहितपाठीनपाटलाराजीववर्म्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः ॥ ११२ ॥

नादेया मधुरा मत्स्या गुरवो मारुतापहाः।
रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्च्चसः ॥ ११३ ॥
कषायानुरसस्तेषां शष्पशैवालभोजनः।
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ११४ ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः।
दूषयेद्रक्तपित्तन्तु * कुष्ठरोगं करोत्यसौ ॥ ११५ ॥
मुरलो बृंहणो वृष्यः स्तन्यः श्लेष्मकरस्तथा ॥ ११६ ॥
सरस्तड़ागसम्भूताः स्निग्धाः स्वादुरसा स्मृताः ॥ ११७ ॥
महाह्रदेषु वलिनः स्वल्पेऽम्भस्यवलाः स्मृताः ॥ ११८ ॥

तिमितिमिङ्गिल-कुलिश-पाकमत्स्य-निरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः ॥ ११९ ॥

सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः।
उष्णा वातहरा वृष्या वर्च्चस्याः श्लेष्मवर्द्धनाः।
वलावहा विशेषेण मांसाशित्वात् समुद्रजाः ॥ १२०।१२१ ॥

मत्स्यानाह—मत्स्यास्त्वित्यादि। तत्र नादेयामाह—तत्रेत्यादि। रोहितो घनशल्कलः प्रसिद्धः। पाठीनः पुनरशल्कल एव दीर्घो निर्म्मलः, सोऽपि वोयाल इति लोके प्रसिद्ध एव। वर्म्मिः सर्पाकारो मत्स्यः। गोमत्स्यः स्वनामप्रसिद्धः। 'कृष्णमत्स्यस्तु शल्कली बहुकण्टकसंयुतः। कषायवर्णो रक्ताक्षः कथितो मत्स्यवेदिभिः'। वागुञ्जारो वाहंस इति लोके। सहस्रदंष्ट्रो महापाठीनः। शेषास्तु कैवर्त्तेभ्यो ज्ञेयाः। प्रभृतिग्रहणाच्छफरादयः ॥ ११२ ॥

तेषां सामान्यगुणमाह—नादेया इत्यादि। नादेयानामेव केषाञ्चिद् गुणविशेषमाह—कषायेत्यादि। शष्पं वालतृणं, शैवालम् शैवलम्। पाठीनमाह—पाठीन इत्यादि। पिशिताशनः मांसभक्षकः। मुरल इति। सरस्तड़ागादिजान् मत्स्यानाह—सर इत्यादि। ह्रदः दह इति लोके ॥ ११३—११८ ॥

सामुद्रानाह—तिमीत्यादि। तिमिः महत्तमो मत्स्यः। तिमिङ्गिलस्ततोऽपि महत्तमः। कुलिशः कुड़िरा इति लोके। नन्दिवारलकः समुद्रशिम्बाक इति लोके। मकरो हिंस्रदंष्ट्रकः। गर्गरकः स्वनामप्रसिद्धः। चन्द्रकः पार्श्वेषु कण्टकवलयितो वर्त्तुलो मत्स्यः। राजीवो वज्राभो वह्वायतः स्वनामप्रसिद्धः; शेषास्तु समुद्रतीरवासिभ्यो ज्ञेयाः। प्रभृतिग्रहणादन्येऽपि तेभ्य एव ज्ञेयाः। सामुद्रमत्स्यानां सामान्यगुणमाह—सामुद्रा इत्यादि।

* दूषयेदम्लपित्तन्तु इत्यपि पाठः।

समुद्रजेभ्यो नादेया बृंहणत्वाद् गुणोत्तराः ॥ १२२ ॥
तेषामप्यनिलघ्नत्वाच्चौष्ण्यात्कौप्यौ गुणोत्तरौ ॥ १२३ ॥
स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणोत्तराः ॥ १२४ ॥
नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः ।
सरस्तडागजानान्तु विशेषेण शिरो लघु ॥ १२५ ॥
अदूरगोचरा यस्मात् तस्मादुत्सोदपानजाः ।
किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते ॥ १२६ ॥
अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः ।
उरोविचरणात् तेषां पूर्व्वमङ्गं लघु स्मृतम् ॥ १२७ ॥
इत्यानूपो महाभिष्यन्दिमांसवर्गो व्याख्यातः ॥ १२८ ॥

तत्र शुष्कपूतिव्याधिविषसर्पहतदिग्धविद्धजीर्णकृशबालानामसात्म्यचारिणां मांस्यान्यभक्ष्याणि, यस्माद् विगत-व्यापन्नापहत-परिणताल्पासम्पूर्णवीर्य्यत्वाद् दोषकराणि भवन्ति, एभ्योऽन्येषामुपादेयं मांसमिति ॥ १२९ ॥

अरोचकं प्रतिश्यायं गुरु शुष्कं प्रकीर्त्तितम् ।
विषव्याधिहतं मृत्युं बालं छर्द्दिञ्च कोपयेत् ॥ १३० ॥

सामुद्रादीनां सारतरत्वमाह—समुद्रजेभ्य इत्यादि । गुणोत्तरा गुणोत्कृष्टाः । तेषामिति । तेषां नादेयमत्स्यानाम् । नादेयमत्स्यावयवानां गुरुलाघवमाह—नादेया गुरवो मध्ये इत्यादि । आस्यं मुखम् । सरस्तडागेति । अदूरगोचरा अदूरविषया अल्पव्यायामा इत्यर्थः । उत्सोदपानजा गिरिप्रस्रवणजाः । अधस्तादिति । महाभिष्यन्दीति दोषधातुमलस्रोतसामतिशयक्लेदकारीत्यर्थः । अन्ये त्वन्यथा कृत्वा पठन्ति, तदुच्यते—'हृदयस्थाननिर्य्यासवद्भिःस्रोतोमुखानि यत् । मुक्तं लिम्पति पैच्छिल्यादभिष्यन्दि तदुच्यते ॥ वैशद्यात् कफहन्तृत्वात्तान्येव विवृणोति यत् । तदुक्तमनभिष्यन्दि द्रव्यं द्रव्यविशारदैः' इति ॥ ११९—१२८ ॥

मांसमनुपादेयमाह—तत्रेत्यादि । पूतिः शटितः, हतशब्दो व्याधिविषसर्पैः प्रत्येकं सम्बध्यते । दिग्धः विषादिलिप्तः, विद्धः शस्त्रादिविद्धः, जीर्णः वृद्धः, कृशो दुर्ब्बलः । असात्म्यचारिणाम् अनुचिताहारभक्षिणाम् । कस्मादनुपादेयानीत्याह—यस्मादित्यादि । बालानाम् असम्पूर्णवीर्य्यत्वादित्यर्थः । असात्म्यचारिणामनुपादेयत्वे हेतुः सूत्रकारेण निबन्धकारैश्चानुक्तोऽपि स्वयमप्यूह्यः । मांसमुपादेयमाह—एभ्य इत्यादि । दोषरहितं गुणवद्ग्राह्यमित्यर्थः । शुष्कादीनां दोषमाह—अरोचकमित्यादि । शुष्कं मांसम् अरोचकं प्रतिश्यायञ्च करोतीत्यध्याहारः । मृत्युमिति

कासश्वासकरं वृद्धं त्रिदोषं व्याधिदूषितम्।
क्लिन्नमुत्क्लेशजननं कृशं वातप्रकोपणम्॥ १३१॥

एभ्योऽन्येषामुपादेयं मांसमिति। स्त्रियश्चतुष्पादेषु, पुमांसो विहङ्गेषु, महाशरीरेष्वल्पशरीराः, अल्पशरीरेषु महाशरीराः प्रधानतमाः, एवमेकजातीयानां महाशरीरेभ्यः कृशशरीराः प्रधानतमाः॥ १३२॥

स्थानादिकृतं मांसस्य गुरुलाघवमुपदेक्ष्यामः। तद्यथा—रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तराः सुगुरुतरास्तथा सक्थिस्कन्धक्रोड़शिरःपादकरकटीपृष्ठचर्म्मकालेयकयकृदन्त्राणि॥ १३३॥

शिरः स्कन्धं कटी पृष्ठं सक्थिनी चात्मपक्षयोः।
गुरुपूर्व्वं विजानीयाद् धातवस्तु यथोत्तरम्॥ १३४॥
सर्व्वस्य प्राणिनो देहे मध्यो गुरुरुदाहृतः।
पूर्व्वभागो गुरुः पुंसामधोभागस्तु योषिताम्॥ १३५॥
उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्।
पक्षोत्क्षेपात् समो दिष्टो मध्यभागस्तु पक्षिणाम्॥ १३६॥

अत्रापि करोतीत्यध्याहारः। क्लिन्नं शटितम्। उत्क्लेशः थूत्करणम्। असात्म्यचारिणां दोषः स्वयमप्यूह्यः॥ १२९—१३१॥

गुणवन्मांसप्रसङ्गेन लिङ्गाद्यधिकृत्याह—स्त्रिय इत्यादि। चतुष्पदां मध्ये स्त्रियः प्रधानतमाः, विहङ्गानां मध्ये पुमांसः पुरुषाः प्रधानतमाः। महाशरीरेष्वित्यादि। महाशरीरेषु खड्गिमहिषादिषु, अल्पशरीरा आनूपा एव रुरुप्रभृतयः प्रधानतमाः। अल्पशरीरेष्विति अल्पशरीराः विष्किरा लावादयः, तेषु महाशरीराः, कृशमांसस्य निषिद्धत्वात्। स्थानादिकृतमित्यादि। रक्तादिधातूनां गुरुलाघवमुक्त्वा इतरावयवानाह—तथेत्यादि। यथोत्तरं गुरवः, सक्थिनी ऊरू, स्कन्धः बाहुशिरः, क्रोड़ः हृदयस्थानं, पश्चाद्भागस्थितौ पादौ अग्रिमभागस्थितौ करौ। कालेयकं बुक्कं, यकृत् कालखण्डं दक्षिणभागस्थितम्॥ १३२। १३३॥

द्वयं द्वयमधिकृत्याह—शिर इत्यादि। स्कन्धात् शिरो गुरु, पृष्ठात् कटिः सक्थिनी। सक्थिनी चात्मपक्षयोरिति सक्थिनी द्वे ते च आत्मपक्षयोः स्वांशयोर्यथापूर्व्वं गुरुणी ज्ञेये। तेन सक्थ्न उत्तरभागापेक्षया पूर्व्वो भागो गुरुरित्यर्थः। अन्ये तु आमपक्वयोरिति पठन्ति, पक्वादाममांसं गुरु इति व्याख्यानयन्ति, तन्न, पञ्जिकाकाराभ्यां दूषितत्वात्। जेज्झटस्तु शिर इत्यादि संग्रहश्लोकत्वेन पठति, तदपि पञ्जिकाकारो न मन्यते। सर्व्वस्यापि शरीरस्य मध्ये को भागोगुरुरित्याह—सर्व्वस्येत्यादि। स्त्रीपुरुषविभागेनाह—पूर्व्वभाग इत्यादि। पूर्व्वभागः उपरिष्टाद् भागः। पक्षिणामाह—उरोग्रीवमित्यादि। आत्मपक्षग्रहणमन्यत्रापि सम्बन्धनीयम्। धातवस्तु यथोत्तर-

अतीव रुक्षं मांसन्तु विहङ्गानां फलाशिनाम्।
बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥ १३७ ॥
मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारणाम् ॥ १३८ ॥
जलजानूपजा ग्राम्याः क्रव्यादैकशफास्तथा।
प्रसहा विलवासाश्च ये च जङ्गालसंज्ञिताः॥
प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम्।
अल्पाभिष्यन्दिनश्चैव यथापूर्व्वमतोऽन्यथा ॥ १३९ ॥

प्रमाणाधिकास्तु स्वजातौ चाल्पसारा गुरवश्च। सर्व्वप्राणिनां सर्व्वशरीरेभ्यो ये प्रधानतमा भवन्ति यकृत्प्रदेशवर्त्तिनस्तानाददीत। प्रधानालाभे मध्यमवयस्कं सद्यस्कमाक्लिष्टमुपादेयं मांसमिति ॥ १४० ॥

भवति चात्र

वयः(चरः)शरीरावयवाः स्वभावो धातवः क्रियाः।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्षिताः ॥ १४१ ॥

इति मांसवर्गः।

मित्यत्र रक्तस्य पूर्व्वभागापेक्षया उत्तरभागो गुरुः' मांसस्य पूर्व्वभागापेक्षया उत्तरभागो गुरुरित्यादि। पक्षोत्क्षेपात् समो दृष्ट इति समो नातिगुर्नातिलघुरित्यर्थः। आहारविशेषेणापि मांसेषु रौक्ष्यादिविशेषमाह—अतीव रूक्षमित्यादि। फलाशिनां मांसमितरमांसापेक्षया रूक्षम्। उक्तवर्गाणां गुरुलाघवमाह—जलजेत्यादि। अतोऽस्मात् लघुत्वादल्पाभिष्यन्दित्वाच्च। अन्यथा इति महाभिष्यन्दिनो गुरवश्चेत्यर्थः ॥ १३४—१३९ ॥

प्रमाणेत्यादि। स्वजातौ आत्मीयजातौ। अल्पसारास्तुच्छबला इत्यर्थः। सत्यां कृत्स्नशरीरप्राप्तौ गुणवच्छरीरावयवग्रहणं निर्द्दिशन्नाह—सर्व्वेत्यादि। यकृत्प्रदेशवर्त्तिशब्देन यकृत्प्रदेशे या दीर्घाकारा मांसवर्त्तयो भवन्ति ता इह गृह्यन्ते; एतेन समस्तशरीरप्राप्तावपि विशिष्टशरीरावयवग्रहणमुक्तम्। अन्ये तु—सर्व्वप्राणिनां सर्व्वशरीरेभ्यः प्रधानतमा या वर्त्तिर्भवति तामाददीतेति पठन्ति, मांसलेषु अवकाशेषु या वर्त्तयो भवन्ति ता ग्राह्या इति व्याख्यानयन्ति। तदलाभे मध्यमवयःस्थं सामान्यदेशजमपि ग्राह्यमित्याह—प्रधानालाभ इत्यादि। मध्यमवयःस्थं मांसमिति मध्यमवयःस्थस्य तरुणस्येत्यर्थः। अन्ये मध्यं वयःस्थमिति पठन्ति व्याख्यानयन्ति, मध्यं ग्राह्यमिति तद्वयःस्थस्य प्राणिन इत्यर्थः। सद्यस्कं सद्योहतमांसम्। अक्लिष्टं मनोऽनुकूलम् ॥ १४० ॥

इदानीमुक्तं सर्व्वं गुरुलाघवहेतु सुखस्मरणार्थमेकीकृत्य श्लोकेन निर्द्दिशन्नाह —वयइत्यादि। परीक्षिता इति च वय आदिभिः सर्व्वैः प्रत्येकं सम्बध्यते। वयःशब्दोऽत्र आहारविहारयोर्वर्त्तते। तद्यथा—कस्मिन् देशेऽयं विहरति धन्वनि अनूपे वा, जले वा वियति वा, किं पुनरयमाहरति अतिगुरु अतिलघु वा शीतमुष्णं वा स्निग्धं रूक्षं वा, तत्तदाहारगुणभावितशरीरधातोर्मृगस्य पक्षिणो

५०

अत ऊर्द्ध्वं फलवर्गानुपदेक्ष्यामः। तद्यथा—दाड़िमामलकवदरकोलकर्कन्धु-सौवीर-शिञ्चितिकाफल-कपित्थ-मातुलुङ्गाम्राम्रातक-करमर्द्द-पियाललकुचभव्य-पारावतवेत्रफल-प्राचीनामलक-तिन्तिड़ीकनीप-कोशाम्राम्लीकानारङ्ग-जम्बीर-प्रभृतीनि ॥ १४२ ॥

अम्लानि रसतः पाके गुरूण्युष्णानि वीर्य्यतः।
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च ॥ १४३ ॥
कषायानुरसं तेषां दाड़िमं नातिपित्तलम्।
दीपनीयं रुचिकरं हृद्यं वर्च्चोविबन्धनम् ॥

वा तत्तद्गुणमेव मांसमिति भावः। आहारो यथा—'शष्पशैवालभोजना' इत्यादि। विहारो—यथा—'अतीवासन्ननिलया' इत्यादि। शरीरावयवाः परीक्ष्यन्ते; तद् यथा—'उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्' इत्यादि। स्वभावो यथा—'स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जला' इति। स्वभावोऽत्राचार्य्येण नोक्तः सर्व्वत्रैव वयःप्रभृतिषु अष्टास्वपि स्वभावस्यानुषङ्गात्। धातवस्तु यथोत्तर-मित्यादि धातुपरीक्षा। क्रिया यथा—'उरोविचरणात्तेषां पूर्व्वमङ्गं लघु स्मृतम्' इत्यादि। लिङ्गं यथा—स्त्रियश्चतुष्पादेषु पुमांसो विहङ्गेष्विति। प्रमाणमिति 'महाशरीरेषु अल्पशरीरा' इत्यादि। संस्कारो यथा—'स्नेहगोरसधान्याम्ल फलाम्लैरम्लितं च यत्। यथोत्तरं लघु' इत्यादि। मात्रा चास्मिन्निति 'गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते'। मात्रा चेति चकारात् अग्निरपि परीक्ष्यते, तेनाग्निबलापेक्षिणी द्रव्यगुरुलाघवापेक्षिणी च मात्रा, तदेवं वयःप्रभृतीन् परीक्ष्य मांसेषु गुरु लाघवं वाच्यमित्यर्थः। इति मांसवर्गः ॥ १४१ ॥

अथ फलवर्गः। दाड़िमेत्यादि। दाड़िमामलके प्रसिद्धे। बदरं महत्, कोलं मध्यप्रमाणं बदरम्। कर्कन्धु अल्पम्। सौवीरं महत्तममामपक्वावस्थासु मधुरं मरुदेशजम्। सिञ्चितिका-फलं तद्भेद एव अतिमधुरो मुष्टिप्रमाण उत्तरापथजः। कपित्थं स्वनामप्रसिद्धम्। मातुलुङ्गं बीजपूरकम्। आम्रं प्रसिद्धम्। आम्रातकं आम्रफलसदृशम्, आम्राटकमिति लोके। करमर्द्दः स्वनामप्रसिद्धः। पियालं चारं मधुराम्लफलं प्रायशो मगधेषु, नारङ्गजम्बीरलकुचानि प्रसिद्धानि। भव्यमारुकं कार्त्तिकेयपुरे प्रसिद्धम्, अन्ये तु कर्म्मरङ्गफलं भव्यमाहुः, भव्यं तालफलोपमं वल्कल संहतिमात्रमित्यपरे। पारावतः कामरूपे फलं पाककाले धवललोहितं मधुराम्लञ्च। वेत्रफलं पद्मवीजसमम्। प्राचीनामलकं प्राग्देशोद्भवं पानीयामलकमिति लोके। तिन्तिड़ीकं वृक्षाम्लम्; नीपं कदम्बकं, कोशाम्रं कौसिम्ब इति प्रसिद्धम्, अम्लिका प्रसिद्धाः चिञ्चा वक्रफला; प्रभृति-ग्रहणादेवंजातीयान्यन्यान्यपि ॥ १४२ ॥

तेषां सामान्यगुणमाह—अम्लानीत्यादि। अम्लानि अम्लरसोत्कटानि ॥ १४३ ॥

एषां केषाञ्चिद् गुणविशेषमाह—कषायानुरसमित्यादि। नातिपित्तलं अम्लदाड़िमफलविशेषणं ईषत्पित्तकरमित्यर्थः। चरकेऽपि 'सर्व्वं पित्तलमम्लमन्यत्र दाड़िमामलकात्' इत्यत्र भट्टारकहरि-चन्द्रेण दाड़िमग्रहणं निरस्य अन्यत्रामलकादिष्वेव पाठः पुस्तकान्तरे इति पञ्जिकाकारौ,

द्विविधं तत् तु विज्ञेयं मधुरञ्चाम्लमेव च ।
त्रिदोषघ्नञ्च मधुरमम्लं वातकफापहम् ॥ १४४ ॥
अम्लं समधुरं तिक्तं कषायं कटुकं सरम् ।
चक्षुष्यं सर्व्वदोषघ्नं वृष्यमामलकीफलम् ॥
हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः ।
कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकञ्च तत् ॥ १४५ ॥
कर्कन्धूकोलवदरमामं पित्तकफावहम् ।
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ।
पुरातनं तृट्शमनं श्रमघ्नं दीपनं लघु ॥ १४६ ॥
सौवीरं वदरं स्निग्धं मधुरं वातपित्तजित् ॥ १४७ ॥
कषायं स्वादु संग्राहि शीतं शिञ्चितिकाफलम् ॥ १४८ ॥
आमं कपित्थमस्वर्य्यं कफघ्नं ग्राहि वातलम् ।
कफानिलहरं पक्वं मधुराम्लरसं गुरु ॥ १४९ ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ।
लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ॥
त्वक् तिक्ता दुर्ज्जरा तस्य वातक्रिमिकफापहा ।
स्वादु शीतं गुरु स्निग्धं मांसं मारुतपित्तजित् ॥
मेध्यं शूलानिलच्छर्दि-कफारोचकनाशनम् ।
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केसरम् ॥
शूलाजीर्णविवन्धेषु मन्दाग्नौ कफमारुते ।
अरुचौ च विशेषेण रसस्तस्योपदिश्यते ॥ १५० ॥
पित्तानिलकरं वालं पित्तलं वद्धकेशरम् ॥ १५१ ॥
हृद्यं वर्णकरं रुच्यं रक्तमांसवलप्रदम् ।
कषायानुरसं स्वादु वातघ्नं बृंहणं गुरु ।
पित्ताविरोधि सम्पक्वमाम्रं शुक्रविवर्द्धनम् ॥ १५२ ॥

जेज्झटस्तु अम्लं दाड़िमं पित्तं न करोति न शमयतीति व्याख्यानयति, ईषत् पित्तलपाठं च युक्तं मन्यते । सर्व्वमपि मधुराम्लं मधुररसोत्कटं मधुरमित्युच्यते, अम्लरसोत्कटमम्लमित्युच्यत इति द्विविधम् । अम्लमित्यादि । फलेभ्योऽभ्यधिकञ्च तत् अपरेभ्यः फलेभ्यः यदामलकीफलं तद् गुणेन कृत्वा अधिकमित्यर्थः । आमलके प्रभावात् न समानगुणैः कोपः । मांसं कटाहमित्यर्थः । मेध्यं मेधाहितं, केशरं वीजपुरान्तर्गतं तन्तुजालं चड्डभीति लोके ॥ १४४—१५० ॥

बृंहणं मधुरं बल्यं गुरु विष्टभ्य जीर्य्यति।
आम्रातकफलं वृष्यं सस्नेहं श्लेष्मवर्द्धनम् ॥ १५३ ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्र..ाशनम् ॥ १५४ ॥
अम्लं तृष्णापहं रुच्यं पित्तकृत् करमर्द्दकम् ॥ १५५ ॥
वातपित्तहरं वृष्यं पियालं गुरु शीतलम् ॥ १५६ ॥
हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम्।
पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥ १५७ ॥
पारावतं समधुरं रुच्यमत्यग्निवातनुत् ॥ १५८ ॥
गरदोषहरं नीपं प्राचीनामालकं तथा ॥ १५९ ॥
वातापहं तिन्तिड़ीकमामं पित्तवलासकृत्।
ग्राह्युष्णं दीपनं रुच्यं सम्पक्वं कफवातनुत् ॥ १६० ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ॥ १६१ ॥
अम्लीकायाः फलं पक्वं तद्वद् भेदि तु केवलम् ॥ १६२ ॥
अम्लं समधुरं हृद्यं विशदं भक्तरोचनम्।
वातघ्नं दुर्ज्जरं प्रोक्तं नारङ्गस्य फलं गुरु ॥ १६३ ॥
तृष्णाशूलकफोत्क्लेशच्छर्द्दिश्वासनिवारणम्।
वातश्लेष्मविवन्धघ्नं जम्वीरं गुरु पित्तकृत् ॥ १६४ ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १६५ ॥

क्षीरवृक्षफलजाम्ववराजादनतोदनशीतफलतिन्दुकवकुलधन्वनाश्मन्तकाश्व कर्णफल्गुपरूषकगाङ्गेरुकीपुष्करवर्त्तिविल्वविम्बीप्रभृतीनि ॥ १६६ ॥

पित्तेत्यादि। बद्धकेशरं बद्धतन्तुजालम्। पित्ताविरोधीति ईषत्पित्तविरोधि ईषत्पित्तशमनमित्यर्थः। अन्येऽपि पित्तलं भवतीत्याहुः। त्रिदोषेत्यादि। सवाततोदशूला मलस्याप्रवृत्तिः विष्टम्भः, अन्ये गुड़गुड़ाशब्दमाहुः। अम्लमित्यादि। गरहरं त्रिदोषहरञ्च। दुर्ज्जरं दुःखमुत्पाद्य पाकं गच्छति। गुरु चिरपाकि। तृष्णेत्यादि। इमं जम्वीरगुणपाठं पञ्जिकाकारो न मन्यते। ऐरावतमित्यादि। दन्तशठशब्देन जम्वीरस्य वक्ष्यमाणत्वात्, जम्वीरनानाविधत्वाद् युक्तोऽयं पाठ इत्यन्ये ॥ १५१—१६५ ॥

कषायरसप्रायमाह—क्षीरवृक्षेत्यादि। क्षीरवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षादयः। जाम्बवं जम्बूः, राजादनं क्षीरिका, तोदनं राजप्रियं, शीतफलं रावणास्त्रिकेति प्रसिद्धं, काश्मीरास्त्रिकेत्येके।

फलान्येतानि शीतानि कफपित्तहराणि च ।
संग्राहकाणि रूक्षाणि कषायमधुराणि च ॥ १६७ ॥
क्षीरवृक्षफलं तेषां गुरु विष्टम्भि शीतलम् ।
कषायं मधुरं साम्लं नातिमारुतकोपनम् ॥ १६८ ॥
अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ॥ १६९ ॥
स्निग्धं स्वादु कषायञ्च राजादनफलं गुरु ॥ १७० ॥
कषायं मधुरं रुक्षं तोदनं कफवातजित् ।
अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्द्धनम् ॥ १७१ ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरु सम्पक्वं मधुरं कफपित्तजित् ॥ १७२ ॥
मधुरञ्च कषायञ्च स्निग्धं संग्राहि वाकुलम् ।
स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते ॥ १७३ ॥
सकषायं हिमं स्वादु धान्वनं कफवातजित् ॥ १७४ ॥
तद्वद्‌गाङ्गेरुकं विद्यादश्मन्तकफलानि च ॥ १७५ ॥
विष्टम्भि मधुरं स्निग्धं फल्गुजं तर्पणं गुरु ॥ १७६ ॥
अत्यम्लमीषन्मधुरं कषायानुरसं लघु ।
वातघ्नं पित्तजननमामं विद्यात् परूषकम् ॥
तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ।
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥ १७७ ॥
पौष्करं स्वादु विष्टम्भि वल्यं कफकरं गुरु ॥ १७८ ॥

तिन्दुकः कालसारो वृक्षः । वकुलः स्वनामप्रसिद्धः । धन्वनं धनुर्वृक्षफलं धामणं इति लोके । अश्मन्तको यमलपत्रकः आसन्त इति लोके । अश्वकर्णः पूर्व्वदेशे गन्धसुण्डोऽश्वत्थसदृशः । फल्गुः काकोदुम्बरिका, कटुम्बरीति लोके । परूषकोऽल्पास्थिमृदुफलः फालसा इति लोके । गाङ्गेरुकी नागबला । पुष्करवर्त्तिरामोदमिति उत्तरापथे । बिल्वः प्रसिद्धः । बिम्बी कुन्दरिका । प्रभृतिग्रहणात् टङ्कादयः । एषां सामान्यगुणमाह—फलान्येतानीत्यादि ॥ १६६ । १६७ ॥

तेषां केषाञ्चिद् गुणविशेषमाह क्षीरवृक्षफलमित्यादि । पूतिमारुतमिति पूतिः सुगन्धिर्मारुतो यस्येति तत् पूतिमारुतम् । पूतिशब्दोऽयं सुगन्धिवाची । यथा—पूतिः खट्टाङ्ग, वनजा मधुकर्कटी । पूतिपुष्पेति सुगन्धिपुष्पेत्यर्थः । एतेन पूतिमारुतं सुगन्धिगन्धं पक्वं भवतीत्यर्थः । केचिद् विगन्धिकुक्षिमारुतकरमित्याहुः, तन्नेच्छति गयी । बालपक्वयोर्मध्ये

कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम्।
कटुतिक्तकषायोष्णं बालं विल्वमुदाहृतम्॥
तदेव विद्यात् सम्पक्वं मधुरानुरसं गुरु।
विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम्॥ १७९॥
विम्बीफलं साध्वकर्णं स्तन्यकृत् कफपित्तजित्।
तृड्दाहज्वरपित्तासृक्-कासश्वासक्षयापहम्॥ १८०॥
तालनारिकेलपनसमोचप्रभृतीनि॥ १८१॥
स्वादुपाकरसान्याहुर्वातपित्तहराणि च।
बलप्रदानि स्निग्धानि बृंहणानि हिमानि च॥ १८२॥
फलं स्वादुरसं तेषां तालजं गुरु पित्तजित्।
तद्बीजं स्वादुपाकञ्च मूत्रलं वातपित्तजित्॥ १८३॥
नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम्।
बलामांसप्रदं हृद्यं बृंहणं वस्तिशोधनम्॥ १८४॥
पनसं सकषायन्तु स्निग्धं स्वादुरसं गुरु॥ १८५॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम्।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु॥ १८६॥
द्राक्षाकाश्मर्य्यमधूकपुष्पखर्ज्जूरप्रभृतीनि।
रक्तपित्तहराण्याहुर्गुरूणि मधुराणि च॥ १८७॥
तेषां द्राक्षा सरा स्वर्य्या मधुरा स्निग्धशीतला।
रक्तपित्तज्वरश्वास-तृष्णादाहक्षयापहा॥ १८८॥

केचित् पठन्ति—तद्वद् विद्यादसम्पक्वं मधुरानुरसं गुर्व्विति मध्यावस्थगुणम्। केचिद् बालं विल्वमुदाहृतमित्यस्य स्थाने आमं विल्वमुदाहृतमिति पठन्ति। तन्नेच्छति गयी॥ १७८—१८०॥

मधुरफलान्याह तालेत्यादि। तालः ताली, नारिकेलाः स्वनामप्रसिद्धाः। पनसो वहिःकण्टकी महाफलः कटहल कांटाल इति वा लोके। मोचं कदलीफलम्। प्रभृतिग्रहणादेवंजातीयानि अन्यानि। तेषां सामान्यगुणमाह—स्वाद्वित्यादि। तेषां कस्यचिद् गुणविशेषमाह—फलमित्यादि॥ १८१—१८६॥

अपराण्यपि मधुराण्याह—द्राक्षेत्यादि। द्राक्षा प्रसिद्धा। काश्मर्य्यं गाम्भारीफलं, मधुकं प्रसिद्धम्। खर्ज्जूरं द्विविधं, वृक्षविटपभेदेन, त्रिविधमित्यपरे। तैविध्यस्य वृक्षखर्ज्जूरं

हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम्।
केश्यं रसायनं मेध्यं काश्मर्य्यं फलमुच्यते ॥ १८९ ॥
क्षतक्षयापहं हृद्य शीतलं तर्पणं गुरु।
रसे पाके च मधुरं खार्ज्जूरं रक्तपित्तजित् ॥ १९० ॥
बृंहणीयमहृद्यञ्च मधूककुसुमं गुरु।
वातपित्तोपशमनं फलं तस्योपदिश्यते ॥ १९१ ॥
वातामाक्षोड़ाभिषुकनिचुलपिचुनिकोचकोरुमाणप्रभृतीनि ॥ १९२ ॥
पित्तश्लेष्महराण्याहुः स्निग्धोष्णानि गुरूणि च।
बृंहणान्यनिलघ्नानि बल्यानि मधुराणि च ॥ १९३ ॥
कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम्।
हृद्यं सुगन्धि विशदं लवलीफलमुच्यते ॥ १९५ ॥
वसिरं शीतपाक्यञ्च सारुष्करनिबन्धनम्।
विष्टम्भि दुर्ज्जरं रूक्षं शीतलं वातकोपनम्।
विपाके मधुरञ्चापि रक्तपित्तप्रसादनम् ॥ १९५ ॥
ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥ १९६ ॥
शीतं कषायं मधुरं टङ्कं मारुतकृद् गुरु ॥ १९७ ॥
स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम् ॥ १९८ ॥

द्विविधमिति कृत्वा, तत्र पारसीकेषु देशेषु महत् प्रमाणं स्वादु भिन्नं पिण्डखर्ज्जूरमित्यतो हेतोः। तेषां सामान्यगुणमाह—रक्तेत्यादि। तेषां केषाञ्चिद् गुणविशेषमाह—तेषामित्यादि ॥ १८७-१९१ ॥

अपरानपि मधुरविशेषफलानेकजातीयानाह—वातामेत्यादि। वातामादीनि उरुमाणान्तानि उत्तरापथे जातानि, तत्रैव प्रसिद्धानि। केचिद् व्याख्यानयन्ति—तत्र वातामो मज्जमधुरस्निग्धो दीर्घाकारः, अक्षोड़ो मदनफलाकारफलः मध्ये किञ्चिदुन्नतरेखान्वितः पर्व्वतपिलुः अखरोट इति लोके। अभिषुकोऽभिषुरिति लोके। निकोचकमुत्तरापथिकं कोल्लकफलमुत्तरापथादवगन्तव्यम्। प्रभृतिग्रहणाल्लवलीफलानि। तेषां सामान्यगुणमाह—पित्तश्लेष्महराण्याहुरित्यादि। तेषां मध्ये केषाञ्चिद् गुणविशेषमाह—कषायमित्यादि। लवलीफलं सुगन्धिफलं स्वनामप्रसिद्धम्। तल्लक्षणमुच्यते—"घनस्निग्धा हरितांशुः प्रपुन्नाटसदृक्छदा। सुगन्धिमूला लवली पाण्डुकोमलः वल्कला" इति। वसिरादीनां गुणमाह—वसिरमित्यादि। वसिरं सूर्य्यावर्त्तफलं, देशान्तरे ज्ञेयमित्यर्थः। शीतपाक्यं बलाफलं, सारुष्करनिबन्धनं भल्लातकवृन्तम्। ऐरावतदन्तशठयो- गुंणमाह—ऐरावतमित्यादि। ऐरावतं ऐरावणिका कृष्णलोहिताल्पफला, दन्तशठं जम्बीरफलं, अन्ये जम्बीरभेदमाहुः। शीतमित्यादि। टङ्कं काश्मीरे स्वनामप्रसिद्धं बहुप्रकारम्। स्निग्धोष्ण-

शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ॥ १९९ ॥
गुरु श्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ २०० ॥
करीराक्षिकपीलूनि तृणशून्यफलानि च।
स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ २०१ ॥
तिक्त ःपत्तकरं तेषां सरं कट्वविपाकि च।
तीक्ष्णष्णं कटुकं पोलु सस्नेहं कफवातजित् ॥ २०२ ॥
आरुष्करं तौवरकं कषायं कटुपाकि च।
उष्णं क्रिमिज्वरानाह-मेहोदावर्त्तनाशनम् ॥ २०३ ॥
कुष्ठगुल्मोदरार्शोघ्नं कटुपाकि तथैव च।
करञ्जकिंशुकारिष्ट-फलं जन्तुप्रमेहनुत् ॥ २०४ ॥
रूक्षोष्णं कटुकं पाके लघु वातकफापहम्।
तिक्तमीषद्विषहितं विडङ्गं क्रिमिनाशनम् ॥ २०५ ॥
व्रण्यमुष्णं सरं मेध्यं दोषघ्नं शोफकुष्ठनुत्।
कषायं दीपनञ्चाम्लं चक्षुष्यञ्चाभयाफलम् ॥ २०६ ॥
भेदनं लघु रुक्षोष्णं वैस्वर्य्यं क्रिमिनाशनम्।
चक्षुष्यं स्वादुपाक्याक्षं कषायं कफपित्तजित् ॥ २०७ ॥
कफपित्तहरं रूक्षं वक्त्रक्लेदमलापहम्।
कषायमीषन्मधुरं किञ्चित् पूगफलं सरम् ॥ २०८ ॥

मित्यादि। ऐङ्गुदं इङ्गुदीफलं, अन्ये पुत्रञ्जीवकमाहुः। शमीफलमिति। शमीफलं सङ्गरमुच्यते। करीरादि गुणमाह—करीरेत्यादि। करीरो मरुजद्रुमः स्वनामख्यातः। आक्षिकम् अक्षिकीफलं, रञ्जकफलं पीलु पीलुफलं, तृणशून्यं मल्लिका, केतकीफलमित्यन्ये। तेषां सामान्यगुणमाह—स्वादुतिक्तमित्यादि। तेषां मध्ये पीलुगुणमाह—तिक्तमित्यादि। आरुष्करतौवरकफलगुणमाह—आरुष्करमित्यादि। तुवरकः पश्चिमोदधितीरे ॥ १९२—२०३ ॥

करञ्जादीनाह करञ्जेत्यादि। करञ्जो वृक्षकरञ्जः, किंशुकः पलाशः, अरिष्टः निम्बः। अत्र जन्तुशब्दो विंशतिक्रिमिवाची। विडङ्गमाह—तिक्तमीषदित्यादि। हरीतकीमाह—व्रण्यमुष्णमित्यादि। व्रणेभ्यो हितं व्रण्यं, चक्षुषे हितं चक्षुष्यम्। विभीतकफलगुणमाह—भेदनमित्यादि। स्वादुपाक्याक्षमिति आक्षं विभीतकफलं, कीदृक्? स्वादुपाकि। पूगफलमाह—कफपित्तहरमित्यादि।

जातीकोशोऽथ कर्पूरं जातीकटुकयोः फलम् ।
कक्कोलकं लवङ्गञ्च तिक्तं कटु कफापहम् ।
लघु तृष्णापहं वक्त्रक्लेददौर्गन्ध्यनाशनम् ॥ २०९ ॥
सतिक्तः सुरभिः शीतः कर्पूरो लघु लेखनः ।
तृष्णायां मुखशोषे च वैरस्ये चापि पूजितः ॥ २१० ॥
लताकस्तूरिका तद्वच्छीता वस्तिविशोधनी ॥ २११ ॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ २१२
वैभीतको मदकरः कफमारुतनाशनः ॥ २१३ ॥
कषायो मधुरो मज्जा कोलानां पित्तनाशनः ।
तृष्णाच्छर्द्यनिलघ्नश्च तद्वच्चामलकस्य च ॥ २१४ ॥
वीजपूरकशम्पाक-मज्जा कोशाम्रसम्भवः ।
स्वादुपाकोऽग्निवलकृत् स्निग्धः पित्तानिलापहः ॥ २१५ ॥
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् ।
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत् ॥ २१६ ॥
फलेषु परिपक्वं यद् गुणवत् तदुदाहृतम् ।
विल्वादन्यत्र विज्ञेयमामं तद्धि गुणोत्तरम् ।
ग्राह्युष्णं दीपनं तद्धि कषायं कटु तिक्तकम् ॥ २१७ ॥

जातीकोशादीन्याह—जातीकोश इत्यादि। जातीकोशो जातीपत्रिका जातिवनीति लोके। कर्पूरं प्रसिद्धम्। जातीकटुकयोः फलमिति जातीफलं प्रसिद्धं, कटुकाफलम् लताकस्तूरिकेति पञ्जिकाकारौ, श्रीब्रह्मदेवस्तु लघुकक्कोलकमाह। कक्कोलकं वृहत्कक्कोलं, लवङ्गं श्रीचन्दनपुष्पम्। तेषां मध्ये कर्पूरगुणमाह—सतिक्त इत्यादि। लताकस्तूरिकामाह -लताकस्तूरिकेत्यादि। लताकस्तूरिका दक्षिणापथे विटपः, शकुनापि तुल्यः। वस्तिविशोधनी वस्तिविबन्धघ्नी। फलानां मज्जानमाह—पियालेत्यादि। पियालमज्जा चिरुउलीति लोके प्रसिद्धः। शम्पाकः किरमालकः। अनुक्तफलमज्जानमाह—यस्येत्यादि। यस्य यस्य फलस्य ये गुणा यानि कर्म्माणि चोक्तानि तस्य मज्ज्ञोऽपि तान्येव गुणकर्म्माणि वदेदित्यर्थः, येन कुर्व्वन्ति तद् वीर्य्यम् ॥ २०४—२१७ ॥

व्याधितं कृमिजुष्टञ्च पाकातीतमकालजम्।
वर्ज्जनीयं फलं सर्व्वमपर्य्यागतमेव च ॥ २१८ ॥

इति फलवर्गः ॥

शाकान्यत ऊर्द्ध्वं वक्ष्यामः ॥ २१९ ॥
तत्र पुष्पफलालाबूकालिन्दकप्रभृतीनि ॥ २२० ॥
पित्तघ्नान्यनिलं कुर्य्युस्तथा मन्दकफानि च।
सृष्टमूत्रपुरीषाणि स्वादुपाकरसानि च ॥ २२१ ॥
पित्तघ्नं तेषु कुष्माण्डं बालं मध्यं कफावहम्।
शुक्लं लघूष्णं सक्षारं दीपनं वस्तिशोधनम् ॥
सर्व्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥ २२२ ॥
दृष्टिशुक्रक्षयकरं कालिन्दं कफवातकृत् ॥ २२३ ॥
अलाबूर्भिन्नविट्का तु रुक्षा गुर्व्व्यतिशीतला ॥ २२४ ॥
तिक्तालाबूरहृद्या तु वामनी वातपित्तजित् ॥ २२५ ॥
त्रपुसैर्व्वारुककर्कारुकशीर्णवृन्तप्रभृतीनि ॥ २२६ ॥

किञ्चिच्छेषमाह—फलेष्वित्यादि। हि यस्मादर्थे। गुणोत्तरं गुणोत्कृष्टम्। ग्राहुयुष्णं दीपनं चद्धीति तत् विल्वं, हि स्फुटम्। फलेषु हेयादिदोषज्ञापनार्थमाह व्याधितमित्यादि। जुष्टं सेवितं, केचिज्जग्धमिति पठन्ति. तत्र जग्धं भक्षितमित्यर्थः। पाकातीतं पाकादतीतमतिगतं अतीतपाककालमित्यर्थः। अकालजम् अनुचितकालोत्पन्नम्। अपर्य्यागतमपक्कम् ॥ २१८ ॥

इति फलवर्गः।

शाकेत्यादि। पुष्पफलं कुष्माण्डकः। अलाबूः तुम्बिनी, सा च दीर्घवर्त्तुलादिभेदादनेकधा। कालिन्दं कृष्णवीजं कुष्माण्डसदृशं कलिन्दीति लोके। प्रभृतिग्रहणादेवंविधान्यपराण्यपि। एषां सामान्यगुणमाह,—पित्तघ्नानीत्यादि। सृष्टमूलपुरीषाणि मूत्रपुरीषप्रवृत्तिकराणि। तेषां विशिष्टगुणमाह—पित्तघ्नमित्यादि। कफमावहति कफं करोतीति कफावहम्। शुक्लं कार्पासवर्णं परिपक्कमित्यर्थः। सक्षारम् ईषत्क्षारं, वस्तिशोधनं वस्तिविबन्धघ्नम्। सर्व्वदोषहरमिति सर्व्वग्रहणं रक्तोपसंग्रहार्थं, सर्व्वदोषसहमित्यन्ये पठन्ति, तत्रायमर्थः—न करोति न शमयतीत्यर्थः। हृद्यं हृदयाय हितम्। चेतोविकारा उन्मादापस्मारमूर्च्छामदादयः। भिन्नविट्का द्रवमला। तिक्तेति ॥ २१९-२२५ ॥

अपराण्यपि फलशाकान्याह—त्रपुसेत्यादि। त्रपुसं सुधावासः, तेरसा इति लोके। एर्व्वारुः लोमशा कर्कटी, कर्कारुः वाडवं त्रपुषं खरवारु इति लोके। शीर्णवृन्तं सुवासकं त्रपुसभेदः, अन्ये तु शीर्णवृन्तं कर्व्वुरमाहुः, एके तु शीर्णवृन्तं पाकावस्थायां यस्य वृन्तं शटितं भवतीत्यर्थः, अपरे तु

स्वादुतिक्तरसान्याहुः कफवातकराणि च * ।
सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च † ॥ २२७ ॥
बालं सुनीलं त्रपुसं तेषां पित्तहरं स्मृतम् ।
तत् पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥ २२८ ॥
एर्व्वारुकं सकर्कारु सम्पक्व कफवातकृत् ।
सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥ २२९ ॥
सक्षारं मधुरञ्चैव शीर्णवृन्तं कफापहम् ।
भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥ २३० ॥

पिप्पली-मरिच-शृङ्गवेरार्द्रकहिङ्गजीरककुस्तुम्बुरुजम्बीरकसुमुखसुरसार्ज्जक-भूस्तृणसुगन्धककासमर्द्दककालमालकुठेरकक्षवक-खरपुष्पशिग्रु-मधुशिग्रु-फणिज्झक-सर्षप-राजिका-कुलाहलावगुत्थगण्डीरतिलपर्णिका-वर्षाभूचित्रक-मूलक-पोतिकालशुनपलाण्डुकलायप्रभृतीनि ॥ २३१ ॥

कर्व्वुरभेदं खुदपुत्रकमाहुः। प्रभृतिग्रहणाद् बालपाकाम्लावस्थायां गृह्यते। तेषां सामान्यगुणमाह—स्वाद्वित्यादि। तेषां केषाञ्चिद्गुणविशेषमाह—बालमित्यादि। अयं परिपक्वस्य गुणः, अपक्वस्य तु सामान्यगुणाः। शीर्णवृन्तस्यावस्थात्रयेण गुणमाह—सक्षारमित्यादि। सक्षारमित्यादयो बालस्य गुणाः, भेदनादयो मध्यस्य, आनाहेत्यादि जीर्णस्य। आनाह आमपक्वाशयजः द्विविधः—अष्ठीला मूत्राष्ठीला न पुनरनिलाष्ठीला। शीर्णवृन्तस्य मूत्रविकारहारित्वादवस्थात्रयस्यापि आनाहश्चाष्ठीला च आनाहाष्ठीलं तन्नुदतीति ॥ २२६—२३० ॥

वृद्धाः पिप्पल्यादीनि वर्गीकृत्य पठन्ति, तत्र किञ्चित् संस्कारकं किञ्चिद्व्यञ्जनं किञ्चिच्छाकं किञ्चिदाहारयोगीति तान्येवाह—पिप्पलीत्यादि। पिप्पलीमरिचे द्वे प्रसिद्धे। शृङ्गवेरकं शुण्ठी। आर्द्रकहिङ्गुजीरकाः प्रसिद्धाः। कुस्तुम्बुरुकं धान्यकं, जम्बीरो हरितशाकमुत्तरापथे जम्बीरगन्धि किञ्चिदम्लम्। सुमुखो वनबर्व्वरिका, सुरसा सुरभिपर्णी तुलसीति लोके। अर्ज्जकः श्वेतकुठेरकः, भूस्तृणं रोहिषं, तुम्बाकमन्ये। सुगन्धको गन्धतृणमल्पं भुस्तृणं, सुगन्धितृणमिति केचित्, तत्रापि नार्थभेदः। कासमर्द्दः प्रसिद्धः। कालमालः बर्व्वरिका, कुठेरकस्तद्भेद एव। क्षवकः छिक्काकरो छिंकणीति लोके। खरपुष्पो मरुबूकः। अन्ये क्षवकभेदमाहुः, केचिद्वोड़यिकेत्याहुः। शिग्रुः शोभाञ्जनकः सुरसमित्यन्ये। मधुशिग्रुर्लोहितकुसुमोऽल्पविटपः शोभाञ्जनभेदः शुण्ठ इत्यत्र क्वचित्, स च स्वनामख्यातः। फणिज्झकः फाणिज इति लोके, अन्ये मरुवकमाहुः। सर्षपराजिके प्रसिद्धे। कुलाहलो मुण्डितका, अवगुत्थं वेगनामा काकादनीत्यर्थः, गण्डीरोऽपि द्विविधः स्थलजो जलजश्चेति। तत्र स्थलजो हरितशाकः। तिलपर्णिका चोरकः, श्रीहुल्लिनीत्य-

---

* गुरुविष्टम्भिशीतानि स्वादूनि कफकृन्ति चेति वा पाठः। † रक्तपित्तहराणि चेति पाठान्तरम्।

कटून्युष्णानि रुच्यानि वातश्लेष्महराणि च।
कृतान्नेषूपयुज्यन्ते संस्कारार्थमनेकधा ॥ २३२ ॥
तेषां गुर्व्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा।
शुष्का कफानिलघ्नी सा वृष्या पित्ताविरोधिनी ॥ २३३ ॥
स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च।
कटूष्णं लघु तच्छुष्कमवृष्यं कफवातजित् ॥ २३४ ॥
नात्युष्णं नातिशीतञ्च वीर्य्यतो मरिचं सितम्।
गुणवन्मरिचेभ्यश्च चक्षूष्यञ्च विशेषतः ॥ २३५ ॥
नागरं कफवातघ्नं विपाके मधुरं कटु।
वृष्योष्णं रोचनं हृद्यं सस्नेहं लघु दीपनम् ॥ २३६ ॥
कफानिलहरं स्वर्य्यं विवन्धानाहशूलनुत्।
कटूष्णं रोचनं हृद्यं वृष्यञ्चैवार्द्रकं स्मृतम् ॥ २३७ ॥
लघूष्णं पाचनं हिङ्गु दीपनं कफवातजित्।
कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविवन्धनुत् ॥ २३८ ॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम्।
कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥ २३९ ॥
कारवी करवी तद्वद् विज्ञेया सोपकुञ्चिका।
भक्ष्यव्यञ्जनभोज्येषु विविधेष्ववचारिता ॥ २४० ॥

परे। वर्षाभूः पुनर्नवा। चित्रकमूलकलशुनाः प्रसिद्धाः। कलायोऽत्र त्रिपुटकभेदः, त्रिपुटकस्याग्रे वक्ष्यमाणत्वात्, केचित् पुनरुक्तभयादग्रेतनं पाठं न मन्यन्ते। तेषां मतेऽत्र कलायस्त्रिपुटकः, पलाण्डुलशुनभेदः। प्रभृतिग्रहणादेवंजातीयानि अपराणि ॥ २३१ ॥

एषां सामान्यगुणमाह कटू युष्णानीत्यादि।—कृतान्नेषु मुद्गयूषादिषु ॥ २३२ ॥

तेषां मध्ये केषाञ्चिद् गुणविशेषमाह– तेषामित्यादि। कफावहा स्ववर्गापेक्षया। पित्ताविरोधिनी ईषत् पित्ताविरोधिनी ईषत् पित्तशमनीत्यर्थः, पित्तप्रकोपणीति केचित् पठन्ति व्याख्यानयन्ति च–'सा पित्तशमनी पूर्व्वं दर्शिता वीर्य्यवादिना। शास्त्रकारेण निर्द्दिष्टा सा सत्यं पित्तकोपनी। यद्वार्द्रा पित्तशमनी शुष्का पित्तप्रकोपणी'इति। नात्युष्णं नातिशीतञ्चेति सितं मरिचं शोभाञ्जनकबीजं, शुक्लमपि मरिचमस्तीत्येके. गुणवन्मरिचेभ्यश्च इति मरिचेभ्यः सकाशादतिशयगुणकारीत्यर्थः। नागरमित्यादि। सस्नेहं ईषत् स्नेहम्। लघु आर्द्रकादिति बोद्धव्यम्। विवन्धानाहशूलनुदिति विवन्धो वाताद्यप्रवृत्तिः, आनाहः उदरापूरः। तीक्ष्णेत्यादि। जीरकद्वयं शुक्लपीत-

आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशनी ।
दोषघ्नी कटुका किञ्चित् तिक्ता स्रोतोविशोधनी ॥ २४१ ॥
जम्वीरः पाचनस्तीक्ष्णः क्रिमिवातकफापहः ।
सुरभिर्दीपनो रुच्यो मुखवैशद्यकारकः ।
कफानिलविषश्वास-कासदौर्गन्ध्यनाशनः ॥ २४२ ॥
पित्तकृत् पार्श्वशूलघ्नः सुरसः समुदाहृतः ।
तद्वत् तु सुमुखो ज्ञेयो विशेषाद्गरनाशनः ॥ २४३ ॥
कफघ्ना लघवो रुक्षास्तीक्ष्णोष्णाः पित्तवर्द्धनाः ।
कटुपाकरसाश्चैव सुरसार्ज्जकभूस्तृणाः ॥ २४४ ॥
मधुरः कफवातघ्नः पाचनः कण्ठशोधनः ।
विशेषतः पित्तहरः सतिक्तः कासमर्द्दकः ॥ २४५ ॥
कटुः सक्षारमधुरः शिग्रुस्तिक्तोऽथ पित्तलः । *
मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः ॥ २४६ ॥
विदाहि वद्धविण्मूत्रं रुक्षं तीक्ष्णोष्णमेव च ।
त्रिदोषं सार्षपं शाकं गाण्डीरं वेगनाम च ॥ २४७ ॥
चित्रकस्तिलपर्णी च कफशोफहरे लघू ॥ २४८ ॥
वर्षाभूः कफवातघ्नी हिता शोफोदरार्शसाम् ॥ २४९ ॥
कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ।
सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ॥ २५० ॥

भेदेन । कारवीति । कारवी कृष्णजीरकः, उत्तरापथे प्रसिद्धः ; कारवी यवानीत्येके, अजमोदेत्यपरे, अन्ये राजिकामाहुः । उपकुञ्चिका स्थूलजीरक ईषत्कृष्णो वृहज्जीरक इति लोके । भक्ष्याणि लड्डुकादीनि, व्यञ्जनानि शाकादीनि मसृतानि, भोज्यानि अन्नयवागूवादीनि, अवचारिता प्रक्षिप्ता । आर्द्रा कुस्तुम्बरीति । पुष्पफलोपेतो हरितधान्यविटप आर्द्रा कुस्तुम्बुरीत्युच्यते, अल्लेति लोके ॥ २३३—२४१ ॥

जम्वीर इत्यादि । सुरसे द्वे श्वेतकृष्णकुसुमे, प्रथमा श्वेता, इयन्तु कृष्णेति न पौनरुक्त्यप्रसङ्गः । विदाहीत्यादि । त्रिदोषं सार्षपमिति 'कफघ्नं सार्षपं शाकमासुरं शाकमेव चे'ति क्वचित् । तत्र आसुरी राजिका । चित्रक इति । कण्ठाय हिता कण्ठ्या । मूलकपोतिका बालमूलकम् ॥२४२—२५०

* पित्तल इत्यत्र पिच्छिल इति वा पाठः ।

महत् तद् गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत्।
तदेव स्नेहसिद्धन्तु पित्तनुत् कफवातजित् ॥ २५१ ॥
त्रिदोषशमनं शुष्कं विषदोषहरं लघु ॥ २५२ ॥
विष्टम्भि वातलं शाकं शुष्कमन्यत्र मूलकात् ॥ २५३ ॥

पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरं ते लघवः (गुरवः) प्रदिष्टाः।
तेषान्तु पुष्पं कफपित्तहन्तृ फलं निहन्यात् कफमारुतौ च ॥ २५४ ॥

स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसश्च बल्यः।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरो रसोनः॥
हृद्रोगजीर्णज्वरकुक्षिशूल-विबन्धगुल्मारुचिकासशोफान्।
दुर्नामकुष्ठानलसादजन्तु-समीरणश्वासकफांश्च हन्ति ॥ २५५ ॥

नात्युष्णवीर्य्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च।
बलावहः पित्तकरोऽथ किञ्चित् पलाण्डुरग्निश्च विवर्द्धयेच्च ॥ २५६ ॥

स्निग्धो रुचिस्थः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिदश्च।
स्वादुर्गुरुः शोणितपित्तशस्तः स पिच्छिलः क्षीरपलाण्डुरुक्तः ॥ २५७ ॥

कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु।
कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥ २५८ ॥

चुच्चूयूथिका-तरुणी-जीवन्तीबिम्बीतिकानन्दीभल्लातकच्छगलान्त्रीवृक्षादनी-फञ्जीशाल्मलीशेलुवनस्पतिप्रसवशणकर्व्वुदारकोविदारप्रभृतीनि ॥ २५९ ॥

आमम् अनग्निपक्वं, स्नेहसिद्धं घृततैलादिपक्वं, मूलकस्य बालमहदामसिद्धशुष्कभेदेनात्र गुणोक्तिः। विष्टम्भीत्यादि। अमुं केचिदनार्षमवेक्षन्ते, अन्ये तु मन्यन्ते ॥ २५१—२५३ ॥

पुष्पमित्यादि। मूलकविषयोऽयं, यादृक्मूलककन्देषु बालमध्यवृद्धस्निग्धसिद्धशुष्केषु फलनिर्देशस्तद्वत् पुष्पपत्रफलेष्वपि वाच्यः ॥ २५४ ॥

रसोनगुणमाह—स्निग्धेत्यादि। रसोनः पञ्चरसः स्वल्पकन्दः, लशुन इत्यर्थः। अनलसादः अग्निमान्द्यम्। जन्तवः क्रमयः। रसोनभेदमाह—नात्युष्णेत्यादि। पलाण्डुः स्थूलनालाग्रपत्रो गुन्द्रालिकाभेदः। स एव सक्षीरो मधुररसः क्षीरपलाण्डुरित्युच्यते। स्निग्धेत्यादि। कलायशाकमित्यादि ॥ २५७—२५८ ॥

कषायमधुरशाकमाह—चुच्चित्यादि। चुच्चूः नाडिकाकारपत्रः, चुचु इति लोके। यूथिका वृक्षविशेषः। सा द्विधा—ईषच्छ्वेतपुष्पा, अतिश्वेतपुष्पा (पीतपुष्पा) च, तरुणी स्वनामप्रसिद्धा, अन्ये वरुण इति पठन्ति, वरुणवत्तीक्ष्णशाको जलकूलजः। जीवन्ती जीवा तण्डुलीयसदृशी इत्यन्ये, डोडिकेत्यपरे। बिम्बीतिका कुन्दुरिका, तस्याः पत्राण्यत्र गृह्यन्ते। नन्दीभल्लातकः लोजनकः,

कषायस्वादुतिक्तानि रक्तपित्तहराणि च।
कफघ्नान्यनिलं कुर्य्युः संग्राहीणि लघूनि च॥ २६० ॥
लघुः पाके च जन्तुघ्नः पिच्छिलो व्रणिनां हितः।
कषायमधुरो ग्राही चुच्चूस्तेषां त्रिदोषहा॥ २६१ ॥
चक्षुष्या सर्व्वदोषघ्नी जीवन्ती समुदाहृता।
वृक्षादनी वातहरा फञ्जी त्वल्पबला मता॥ २६२ ॥
क्षीरवृक्षोत्पलादीनां कषायाः पल्लवाः स्मृताः।
शीताः संग्राहिणः शस्ता रक्तपित्तातिसारिणाम्॥ २६३ ॥
पुनर्नवावरुणतर्कार्य्युरुबूकवत्सादनीविल्वशाकप्रभृतीनि।
उष्णानि स्वादुतिक्तानि वातप्रशमनानि च॥ २६४ ॥
तेषु पौनर्नवं शाकं विशेषाच्छोफनाशनम्॥ २६५ ॥
तण्डुलीयकोपोदिकाश्वबलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि॥ २६६ ॥

अन्ये अनन्ताभल्लातक इति पठन्ति। तत्र अनन्ता लाङ्गलिका कलिकारीति लोके। भल्लातकवृक्षस्य फलान्यामानि, पल्लवाश्च शाकत्वेनाभिप्रेताः। छगलान्त्री वृद्धदारकः, तस्य पत्राणि, वृद्ध इत्यपरे। वृक्षादनी वन्दाकः, वृक्षकर्कलम्बुकेत्यन्ये, फञ्जीशाको वाइ इति प्रसिद्धः, भार्गीमिके मन्यन्ते। शाल्मली प्रसिद्धः। शेलुः श्लेष्मातकः ब्रिसाड़ इति लोके। वनस्पतिप्रसवाः वनस्पतिः उदुम्बरादिः, तस्य प्रसवाः पल्लवाः। शणः प्रसिद्धः। कर्व्वुदारः श्लेष्मातकभेदः। कोविदारः काञ्चनारः। प्रभृतिग्रहणादेवंजातीयानि अन्यान्यपि शाकानि॥ २५९ ॥

तेषां सामान्यगुणमाह—कषायेत्यादि। तेषां केषाञ्चिद् गुणविशेषमाह—लघुरित्यादि। क्षीरवृक्षाः पिप्पलादयः। उत्पलानि नीलोत्पलप्रभृतीनि, तेषां पल्लवाः॥ २६०—२६३ ॥

पुनर्नवेत्यादि। पुनर्नवा श्वेता, वरुणो वृक्षविशेषो स्वनामप्रसिद्धः। तर्कारी अरणिका, उरुबूकः शुक्लैरण्डः। वत्सादनी वत्सपुत्रकः वत्सवतिया इति लोके, गुड़ूचीत्यपरे। विल्वशाकं विल्वजम्। प्रभृतिग्रहणादन्यान्यपि। तेषां सामान्यगुणमाह—उष्णानीत्यादि। विशेषगुणमाह—तेष्वित्यादि॥ २६४। २६५ ॥

तण्डुलीयकः चुलाइ इति लोके। उपोदिका पोइ। अश्वबला तुरुष्कदेशे वृहत्पत्रा मेथिकाभेद एव, हिस्फित्थ इति लोके, तन्त्रान्तरे मेथिका हिस्फित्थयोः पृथग्गुणनिर्द्देशः कृतः। तत्राह—"वातपित्तहरा तिक्ता लघ्वी श्लेष्माविरोधिनी। मेथिका तत्समं किञ्चित् हिस्फित्थं पुष्टिदं गुरु" इति। चिल्ली क्षेत्रवास्तूकः, गौड़वास्तूकमित्यन्ये, यवशाकमाहुरेके, अन्ये तु यवशाकान्तरमाहुः। पालङ्क्या पालङ् इति लोके। वास्तूकः टङ्कवास्तूकः टङ्कचुच्चू इति लोके।

सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च।
मन्दवातकफान्याहू रक्तपित्तहराणि च॥ २६७॥
मधुरो रसपाकाभ्यां रक्तपित्तमदापहः।
तेषां शीततमो रुक्षस्तण्डुलीयो विषापहः॥ २६८॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा।
उपोदिका सरा स्निग्धा वल्या श्लेष्मकरी हिमा॥ २६९॥
कटुर्विपाके क्रिमिहा मेधाग्निवलवर्द्धनः।
सक्षारः सर्व्वदोषघ्नो वास्तूको रोचकः सरः॥ २७०॥
चिल्ली वास्तूकवज्ज्ञेया पालङ्क्या तण्डुलीयवत्।
वातकृद् वद्धविण्मूत्रा रुक्षा पित्तकफे हिता॥ २७१॥
शाकमाश्ववलं रुक्षं वद्धविण्मूत्रमारुतम्॥ २७२॥

मण्डूकपर्णी-सप्तला-सुनिषण्णक-सुवर्च्चला-ब्रह्मसुवर्च्चला-पिप्पलीगुडूची-गोजिह्वाकाकमाचीप्रपुन्नाड़ावल्गुजसतीनवृहतीकण्टकारिकाफल-पटोल-वार्त्ताकु-कारवेल्लक-कटुकिका-केवुकोरुवूक-पर्पटकाकिराततिक्तककर्कोटकारिष्ट-कोशातकी-वेत्रकरीराटरूषकार्कपुष्पीप्रभृतीनि॥ २७३॥

प्रभृतिग्रहणादपराण्यपि। तेषां सामान्यगुणमाह सृष्टमूत्रेत्यादि। तेषां विशेषगुणमाह—मधुर इत्यादि। मदापह इति मदो विषमद्यशोणितोत्थो विकारः। स्वादिवत्यादि॥ २६६—२७२॥

तिक्तप्रायाण्याह—मण्डूकपर्णीत्यादि। मण्डूकपर्णी ब्राह्मी। सप्तला सेहुण्डः, जेज्झटस्तु सप्तलां यवतिक्ताभेदमाह—सुनिषण्णकः सुपुणिशाकः, सिरिवालिकेति लोके। श्रीब्रह्मदेवस्तु चतुर्द्दलमाह—तल्लक्षणं कथ्यते—"चाङ्गेरीसदृशैः पत्रैः सुनिषण्णश्चतुर्द्दलः। शाको जलान्विते देशे चतुष्पत्रीति कथ्यते" इति। सुवर्च्चला सूर्य्यावर्त्तः, केचिन्मारिपसदृशदण्डं आर्त्तगलसदृशपत्रं लक्षणमाहुः। पिप्पलीगुडूच्यौ प्रसिद्धे। पूर्व्वं पिप्पलीफलमुक्तं अत्र तु पत्रम्। गोजिह्वा दार्व्विपत्रिका कर्कशा दीर्घपत्रा गोजिभीति लोके। काकमाचीप्रपुन्नाड़ौ प्रसिद्धौ। अवल्गुजो वाकुचीत लोके। सतीनो वर्त्तुलकलायः। वृहतीफलं सामान्याद्वृहतीद्वयस्य फलं, अन्ये तु कण्टकारिकामपि पठन्ति। पटोलस्य फलं पत्रञ्च। वार्त्ताकुर्वृन्ताको वर्त्तुलफलः, वेगुण इति लोके। कारवेल्लकः स्वनामप्रसिद्धः। कटुकिका अरण्यकासमर्द्दिका, अन्ये तिक्तारिकामाहुः, अपरे तु कटुतिक्तपुष्पामर्कफलाकारफलां प्रसिद्धामाहुः। केवुको ग्राम्यो वन्यश्च स्वनामप्रसिद्धः। उरुवूकः रक्तैरण्डः, अन्ये तु उरुवूकस्य पत्रमत्र गृह्यते। पर्पटकः प्रसिद्धः। किराततिक्तको भूनिम्बः। कर्कोटकः प्रसिद्धः। अरिष्टो निम्बः, कोशातकी घोषकः तोरइ इति लोके। वेत्रकरीरं वेताग्रं, आटरूषकः

रक्तपित्तहराण्याहुर्हृद्यानि सुलघूनि च ।
कुष्ठमेहज्वरश्वास-कासारुचिहराणि च ॥ २७४ ॥
कषाया तु हिता पित्ते स्वादुपाकरसा हिमा ।
लघ्वी मण्डूकपर्णी तु तद्वद् गोजिह्विका मता ॥ २७५ ॥
अविदाही त्रिदोषघ्नः संग्राही सुनिषण्णकः ॥ २७६ ॥
अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥ २७७ ॥
ईषत्तिक्तं त्रिदोषघ्नं शाकं कटु सतीनजम् ॥ २७८ ॥
नात्युष्णशीतं कुष्ठघ्नं काकमाच्यास्तु तद्विधम् ॥ २७९ ॥
कण्डूकुष्ठक्रिमिघ्नानि कफवातहराणि च ।
फलानि बृहतीनान्तु कटुतिक्तलघूनि च ॥ २८० ॥
कफपित्तहरं व्रण्यमुष्णं तिक्तमवातलम् ।
पटोलं कटुकं पाके वृष्यं रोचनदीपनम् ॥ २८१ ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु ।
वार्त्ताकं दीपनं प्रोक्तं जीर्णं सक्षारपित्तलम् ॥ २८२ ॥
तद्वत् कर्कोटकं प्रोक्तं कारवेल्लकमेव च ॥ २८३ ॥
अटरूषकवेत्राग्र-गुडूचीनिम्बपर्पटाः ।
किराततिक्तसहितास्तिक्ताः पित्तकफापहाः ॥ २८४ ॥
कफापहं शाकमुक्तं वरुणप्रपुनाड्योः ।
रूक्षं लघु च शीतञ्च वातपित्तप्रकोपणम् ॥ २८५ ॥
दीपनं कालशाकन्तु गरदोषहरं कटु ॥ २८६ ॥

वासकः, अर्कपुष्पी अर्कपत्रसदृशी लता, अन्ये अर्कपर्णमाहुः—प्रभृतिग्रहणादन्यानि तिक्तशाकानि ज्ञेयानि ॥ २७३ ॥

तेषां सामान्यगुणमाह—रक्तपित्तेत्यादि ॥ २७४ ॥

विशेषगुणमाह—कषायेत्यादि । तद्विधमिति त्रिदोषघ्नम् । कण्डूत्यादि । जीर्णं पक्वम् । तद्वत् इति । गुडूची इह कफपित्तहरा, चरके च "वायुं वत्सादनी हन्यात्" इति स्निग्धोष्णवीर्य्यत्वात्, तस्मात् त्रिदोषघ्नी । पूर्ववर्गपठितोऽपि वरुणः प्रपुन्नाडसामान्यगुणत्वादत्र पठितः । शीतञ्चेति चकारान्नात्युष्णशीतं, तेन संयुक्तवातपित्तकर्त्तृत्वं यदि वा शीतमपि पित्तकृत् प्रभावत्वात् । प्रभृतिशब्दग्रहणादन्यान्याह—दीपनमित्यादि । कालशाकं कालियाशाकं श्राद्धार्हम् श्राद्ध-

कौसुम्भं मधुरं रुक्षमुष्णं श्लेष्महरं लघु ॥ २८७ ॥
वातलं नालिकाशाकं पित्तघ्नं मधुरञ्च तत् ॥ २८८ ॥
ग्रहण्यर्शोविकारघ्नी साम्ला वातकफे हिता।
उष्णा कषायमधुरा चाङ्गेरी चाग्निदीपनी ॥ २८९ ॥

लोणिकाजातुकत्रिपर्णिकापत्तूर-जीवकसुवर्च्चला-डुडुरककुरुवककठिञ्जर-कुन्तलिकाकुरण्टिकाप्रभृतीनि ॥ २९० ॥

स्वादुपाकरसाः शीताः कफघ्ना नातिपित्तलाः।
लवणानुरसा रुक्षाः सक्षारा वातलाः सराः ॥ २९१ ॥
स्वादुतिक्ता कुन्तलिका सकषाया कुरण्टिका ॥ २९२ ॥
संग्राहि शीतलञ्चापि लघु दोषापहं तथा।
राजक्षवकशाकन्तु शटीशाकन्तु तद्विधम् ॥ १९३ ॥
स्वादुपाकरसं शाकं दुर्ज्जरं हरिमन्थजम् ॥ २९४ ॥
भेदनं मधुरं रुक्षं कलायमतिवातलम् ॥ २९५ ॥
स्रंसनं कटुकं पाके लघु वातकफापहम्।
शोफघ्नमुष्णवीर्य्यन्तु पत्रं पूतिकरञ्जजम् ॥ २९६ ॥

शाकमित्यर्थः। कौसुम्भमिति। कौसुम्भं प्रसिद्धम्। वातलमित्यादि। नालिका नालीति लोके। ग्रहणीत्यादि। चाङ्गेरी अम्लचाङ्गेरीति लोके ॥ २७५—२८९ ॥

लोणिकेत्यादि। लोणिका लोणिया, जातुकं शुक्लशालपर्णी, त्रिपर्णिका दुग्धिका, वनकार्पासीत्यपरे। पत्तूरः शालिञ्चः शिरवाल्किाभेदो महापत्रः। जीवकः स्वनामप्रसिद्धः। सुवर्च्चला सूर्य्यावर्त्तभेदः, डुडुरकः डोडीति हिन्दीभाषा, स्वनामप्रसिद्धः। कुरुवको द्रोणपुष्पः, कठिञ्जरः कुरुहञ्जनः कोलसुम्भ इति लोके, कुनाडिकेति क्वचित्, तत्र कुनाडिका गोनाडिकः। कुन्तलिका चुच्चूसदृशा दीर्घफला(पत्रा), कुरण्टिका अम्लानसदृशपत्रकुसुमा हरितपुष्पा, अन्ये कुनालिकाकुरण्टिके उत्तरापथजे इत्याहुः, केचित् त्रिपर्ण्यादीनां श्लोकेन निर्द्देशं कुर्व्वन्ति ॥ २९० ॥

तेषां सामान्यं गुणमाह—स्वादुपाकेत्यादि। विशेषगुणमाह—स्वाद्वित्यादि। प्रभृतिगृहीतमाह—संग्राहीत्यादि। दोषापहन्तथेत्यत्र दोषविरोधीति केचित् पठन्ति, तन्नेच्छन्ति जेजझटादयः। राजक्षवकशाकं कृष्णराजिका, अन्ये तु राजक्षवको वृहत्पत्रः क्षवथुकाकार इत्याहुः। शटी स्वनामप्रसिद्धा, तद्विधमिति राजक्षवकसदृशम्। स्वाद्वित्यादि। हरिमन्थश्चणकः। भेदनमित्यादि। पूर्व्वं सतीनो वर्त्तुलकलाय इह तु त्रिपुटककलायः। स्रंसनमित्यादि। पूतिकरञ्जः

ताम्बूलपत्रं तीक्ष्णोष्णं कटु पित्तप्रकोपणम् ।
सुगन्धि विशदं तिक्तं स्वर्य्यं वातकफापहम् ॥
स्रंसनं कटुकं पाके कषायं वह्निदीपनम् ।
वक्त्रकण्डूमलक्लेद-दौर्गन्ध्यादिविशोधनम् ॥ २९७ ॥

इति शाकवर्गः ।

कोविदारशणशाल्मलीपुष्पाणि मधुराणि मधुरविपाकानि रक्तपित्तहराणि च । वृषागस्त्ययोः पुष्पाणि तिक्तानि कटुविपाकानि क्षयकासापहानि च ॥ २९८ ॥

आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते ॥ २९९ ॥

करीरमधुशिग्रुकुसुमानि कटुविपाकानि वातहराणि सृष्टमूत्रपुरीषाणि च ।
रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ।
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥ ३०० ॥
सतिक्तं मधुरं शीतं पद्मं पित्तकफापहम् ॥ ३०१ ॥
मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥ ३०२ ॥
तस्मादल्पान्तरगुणे विद्यात् कुवलयोत्पले ॥ ३०३ ॥
सिन्धुवारं विजानीयाद्धितं(मं) पित्तविनाशनम् ॥ ३०४ ॥
मालतीमल्लिके तिक्ते सौरभ्यात् पित्तनाशने ॥ ३०५ ॥

कण्टकिकरञ्जः, अन्ये तु पूतिकः चिरविल्वः, करञ्जः नक्तमालः । ताम्बूलेत्यादि । ताम्बूलपत्रं नागवल्लीपत्रं पर्णमिति लोके । ( स्रंसनमित्यन्तं पर्णमुक्त्वा कषायमित्यादि पूगफलं, तस्य फलवर्गं एव पठितत्वान्न पठनीयमित्येके, अन्ये फलवर्गे पक्वमित्युक्तं शाकेषु त्वपक्वमार्द्रं न्वेत्याहुः । ) इति शाकवर्गः ॥ २९१—२९७ ।

अथ पुष्पशाकान्याह—कोविदारेत्यादि । कोविदारः काञ्चनारः, तद्भेदो वा । शणो वन्धनार्हत्वक् प्रसिद्धः । तेषां सामान्यगुणमाह—मधुराणीत्यादि । वृषेत्यादि । वृषो वासकः, अगस्त्यः अगथीया इति लोके ॥ २९८ ॥

तयोरगस्त्यपुष्पस्य गुणविशेषमाह—आगस्त्यमित्यादि । करीरेत्यादि । अत्रापि रसवीर्य्यविपाकप्रभावविभावितं कार्य्यं योजनीयम् । रक्तवृक्षस्येत्यादि । रक्तवृक्षस्य रक्तचन्दनस्य, मुष्ककस्य क्षारवृक्षस्य मोखउ इति लोके । असनो वीजकः, शेषं प्रसिद्धम् । सतिक्तमित्यादि । पद्मं पद्मपुष्पं सूर्य्योदयविकासि । मधुरमित्यादि । कुमुदं चन्द्रोदयविकासि । तस्मादित्यादि । कुवलयं कुमुदभेदः । उत्पलं स्वनामप्रसिद्धम् ॥ २९९—३०३ ॥

सिन्धुवारमित्यादि । सिन्धुवारं निर्गुण्डीपुष्पम् । मालतीत्यादि । मालती जाती, मल्लिका

सुगन्धि विशदं हृद्यं वाकुलं पाटलानि च ॥ ३०६ ॥
श्लेष्मपित्तविषघ्नन्तु नागं तद्वच्च कुङ्कुमम् ॥ ३०७ ॥
चम्पकं रक्तपित्तघ्नं शीतोष्णं कफनाशनम् ॥ ३०८ ॥
किंशुकं कफपित्तघ्नं तद्वदेव कुरुण्टकम् ॥ ३०९ ॥
यथावृक्षं विजानीयात् पुष्पं वृक्षोचितं तथा ॥ ३१० ॥
मधुशिग्रु करीराणि कटुश्लेष्महराणि च ॥ ३११ ॥

क्षवककुलेच(व)रवंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्रपुरीषाणि ॥ ३१२ ॥

क्षवकं क्रिमिलं तेषु स्वादुपाकं सपिच्छिलम् ।
विष्यन्दि वातलं नाति-पित्तश्लेष्मकरञ्च तत् ॥ ३१३ ॥
वेणोः करीराः कफला मधुरा रसपाकतः ।
विदाहिनो वातकराः * सकषाया विरुक्षणाः ॥ ३१४ ॥

उद्भिदानि पलालक्षुकरीषवेणुक्षितिजानि ॥ ३१५ ॥

तत्र पलालजातं मधुरविपाकं रुक्षं दोषप्रशमनञ्च। इक्षुजं मधुरं कषायानुरसं कटुकं शीतलञ्च। तद्वदेवोष्णं कारीषं कषायं वातकोपनञ्च। वेणुजातं कषायं वातकोपनञ्च। भूमिजं गुरु नातिवातलं भूमितश्चास्यानुरसः ॥ ३१६—३२० ॥

प्रसिद्धा। सौरभ्यात् सौगन्ध्यात्। सुगन्धीत्यादि। नागं नागकेशरम्। तद्वत् नागवत्। कुङ्कुमं प्रसिद्धम्। चम्पकमिति। किंशुकं पलाशपुष्पं, कुरुण्टकं सहचरपुष्पम्। उपसंहारमाह—यथेत्यादि। वृक्षोचितं वृक्षानुसारेणेत्यर्थः। मध्वित्यादि। मधुशिग्रुः रक्तशोभाञ्जनकः, तस्य करीराणि कोमला नालाः, अन्ये तु मधुशिग्रुकरीराणीत्यत्र मधुशिग्रुकरीरयोः पुष्पाणीति व्याचक्षते, ते तु करीरकुसुमानीति पूर्व्वपाठं न मन्यन्ते। इति पुष्पवर्गः ॥ ३०.—३११ ॥

उद्भिदशाकान्याह—क्षवकेत्यादि। क्षवकश्छत्रकः, कुलेच(व)रं खुखुण्डकः, वंशकरीरो वंशाङ्कुरः, अन्ये तु क्षवकं द्रोणपुष्पीसदृशं विटपमाहुः, तन्न; तस्य अनुद्भिदत्वात्। प्रभृतिग्रहणादन्यान्यप्युद्भिदानि। तेषां सामान्यगुणमाह—कफहराणीत्यादि। तेषां कस्यचिद्विशेषगुणमाह क्षवकमित्यादि। विष्यन्दि श्लेष्मस्रावि, एतेन श्लेष्मपित्तालपजनकत्वं वातवर्द्धकत्व-(श्लेष्मणो जनकप्रवर्त्तकत्व)मुक्तम्। वेणोः करीरा इति केचिन्मधुररसपाकित्वविदाहित्वयोर्विरोधमाहुः; तन्न, प्रभावात्। आधारविशेषेणापि उद्भिदानां गुणविशेषमाह—उद्भिदानीत्यादि। उद्भिदानि छत्रकादीनि। तद्वदिति इक्षुजसदृशम्। भूमितश्चास्यानुरस इति भूमिसदृशगुणमित्यर्थः। यद्यपि वेणुजस्य गुणा नोक्ताः, तथापि तदाधारसदृशगुणमूह्यम् ॥ ३१२—३२० ॥

* वातकरा इत्यत्र नातिबला इति पाठान्तरम्।

पिण्याकतिलकल्कस्थूणिकाशुष्कशाकानि सर्व्वदोषप्रकोपणानि ॥ ३२१ ॥

विष्टम्भिनः स्मृताः सर्व्वे वटका वातकोपनाः ॥ ३२२ ॥

सिण्डाकी वातला साद्रा रुचिष्यानलदीपनी ॥ ३२३ ॥

विड्भेदि गुरु रुक्षञ्च प्रायो विष्टम्भि दुर्ज्जरम् * ।

सकषायञ्च सर्व्वं हि स्वादु शाकमुदाहृतम् ॥ ३२४ ॥

पुष्पं पत्रं फलं नालं कन्दाश्च गुरवः क्रमात् ॥ ३२५ ॥

कर्कशं परिजीर्णञ्च क्रिमिजुष्टमदेशजम् ।

वर्ज्जयेत् पत्रशाकं तद् यदकालविरोहि च ॥ ३२६ ॥

कन्दानत ऊर्द्ध्वं वक्ष्यामः ॥ ३२७ ॥

विदारीकन्दशतावरीविसमृणालशृङ्गाटककशेरुकपिण्डालुकमध्वालुक-हस्त्यालुककाष्ठालुकशङ्खालुकरक्तालुकेन्दीवरोत्पलकन्दप्रभृतीनि ॥ ३२८ ॥

शुष्कशाकविशेषगुणमाह—पिण्याकेत्यादि । उमासर्षपादीनां यन्त्रादिपीड़ितानां निःस्नेहकल्कः पिण्याकः । तिलकल्कः तिलपिण्याकः, सोऽपि यन्त्रादिपीड़ितः । स्थूणिकाशुष्कशाकानि नानाशाकैः कृता वटकाः, न तु शुष्कशाकमिति भिन्नं, तस्योक्तगुणत्वात्; स्थूणिकारूपाणि शुष्कशाकानीति वार्थः, तत्रापि स्थूणिका वटकाः, अन्ये तु पिण्याकीतिलपत्रस्थूणिकाशुष्कशाकानीति पठन्ति व्याख्यानयन्ति च, पिण्याकीशाकं कच्छविषये प्रायशः, तिलपत्रं तिलविटपशाकं, स्थूणिका अतरुणशुष्कशाकं मूलकशाकं विहायान्यत् सर्व्वं, तन्नेच्छति गयी । स्थूणिकाशुष्कशाकानां गुणकर्म्माह—विष्टम्भिन इत्यादि । वटकाः पिष्टकासमर्द्दककुष्माण्डकमूलकादिकृताः मुद्गादिकृताश्च । सवाततोदशूला मलाप्रवृत्तिः विष्टम्भः । शुष्कशाकप्रकरणात् शुष्कशाकविशेषस्य गुणमाह—सिण्डाकीत्यादि । मूलकादिशाकमेव किञ्चित् स्विन्नं क्षुण्णं सुगन्धिकटुकद्रव्यान्वितं वटकीकृतं सूदेषु सिण्डाकी इत्युच्यते । सा द्विविधा—आर्द्रा, शुष्का च । शुष्का वटकान्तर्गता, आर्द्रायास्त्वयमेव गुणनिर्द्देशः । स्वादुशाकविषयां परिभाषामाह—विड्भेदीत्यादि । स्वादु यच्छाकं तत्सर्व्वमेवैवंगुणमित्यर्थः, पुष्पमित्यादि क्वचित्पाठः ॥ ३२१—३२५ ॥

वर्ज्जनीयपत्रशाकविषयां परिभाषामाह—कर्कशमित्यादि । कर्कशं खरस्पर्शं, परिजीर्णं पुरातनं, कृमिजुष्टं कृमिभक्षितं, अदेशजं अनुचितदेशोत्पन्नं, अकालविरोहि अकालजम् । इति शाकवर्गः ॥ ३२६ ॥

केचित् फलवदुपयुज्यमानत्वात् फलवर्गादनन्तरं कन्दान् पठन्ति, शाकविषयत्वादन्ये शाकानन्तरमिति कन्दानाह—कन्दानत इत्यादि । विदारी विदारीकन्दः । शतावरी शतमूली स्वनामप्रसिद्धा । विसं पद्ममूलम्, अन्ये स्थूलपद्मनालं विसमाहुः । मृणालं पद्ममूलात् स्थूलप्ररोहः, अन्ये

---

* दुर्ज्जरमित्यत्र शीतलमिति वा पाठः ।

रक्तपित्तहराण्याहुः शीतानि मधुराणि च।
गुरूणि बहुशुक्राणि स्तन्यवृद्धिकराणि च ॥ ३२९ ॥
मधुरो बृंहणो वृष्यः शीतः स्वर्य्योऽतिमूत्रलः।
विदारीकन्दो बल्यस्तु पित्तवातहरस्तु सः ॥ ३३० ॥
वातपित्तहरा वृष्या स्वादुतिक्ता शतावरी।
महती चैव हृद्या च मेधाग्निबलवर्द्धिनी ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी।
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ३३१ ॥
अविदाहि विसं प्रोक्तं रक्तपित्तप्रसादनम्।
विष्टम्भि दुर्ज्जरं रूक्षं विरसं मारुतावहम् ॥ ३३२ ॥
गुरु विष्टम्भिशीतौ च शृङ्गाटककशेरुकौ ॥ ३३३ ॥
पिण्डालुकं कफकरं गुरु वातप्रकोपणम् ॥ ३३४ ॥
सुरेन्द्रकन्दः श्लेष्मघ्नो विपाके कटुपित्तकृत् ॥ ३३५ ॥
वेणोः करीरा गुरवः कफमारुतकोपनाः ॥ ३३६ ॥

स्थूलशूरणमाणकप्रभृतयः कन्दा ईषत्कषायाः कटुका रुक्षा विष्टम्भिनो गुरवः कफवातलाः पित्तहराश्च ॥ ३३७ ॥

माणकं स्वादु शीतञ्च गुरु चापि प्रकीर्त्तितम् ॥ ३३८ ॥
स्थूलकन्दस्तु नात्युष्णः शूरणो गुदकीलहा ॥ ३३९ ॥
कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः।
कषायाः पित्तशमना विपाके मधुरा हिमाः ॥ ३४० ॥

सूक्ष्मनालमाहुः। शृङ्गाटकं जलमध्ये त्रिकण्टकं सिंघाड़ेति लोके। कशेरुकपिण्डालू प्रसिद्धौ। मध्वालुकं रोमशं मधुरस्वादमेव। हस्त्यालुकं महाकाष्ठालुकमित्येके। काष्ठालुकशङ्खालुक-रक्तालुकोत्पलकन्दाः स्वनामप्रसिद्धाः। प्रभृतिग्रहणात् केलूटमुञ्जातकादयः। तेषां सामान्य-गुणमाह—रक्तपित्तत्यादि ॥ ३२७—३२९ ॥

तेषां विशेषगुणमाह—मधुर इत्यादि। महदल्पभेदेन शतावरी द्विविधा, तस्या एवाङ्कुराः शतावर्य्यङ्कुरा इत्यर्थः। अविदाहीति। सुरेन्द्रकन्दो रक्त(वज्र)कन्दः। वेणोरित्यादि। वेणोः करीराः वंशमूलाङ्कुराः ॥ ३३०—३३६ ॥

अन्यानपि कन्दानेकगुणान् वर्गीकृत्याह—स्थूलेत्यादि। स्थूलकन्दः ग्राम्यकन्दः, केचित् समर-कन्द इति पठान्त, तत्रापि स एवार्थः। शूरणः स्वनामप्रसिद्धः। माणकं महापत्रं, यथापूर्व्वमधः-पत्रपरित्यागि। प्रभृतिशब्दात् कोविदारादिकन्दाः। तेषां सामान्यगुणमाह—ईषत्कषायेत्यादि। विशेषगुणमाह—माणकमित्यादि। तदन्यान् कन्दानाह—कुमुदेत्यादि। कुमुदं श्वेतोत्पलं,

वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः।
मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः॥ ३४१॥
तालनारिकेलखर्ज्जूरप्रभृतीनां मस्तकमज्जानः॥ ३४२॥
स्वादुपाकरसानाहू रक्तपित्तहरांस्तथा।
शुक्रलाननिलघ्नांश्च कफवृद्धिकरानपि॥ ३४३॥
वालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम्।
कन्दं विवर्ज्जयेत् सर्व्वं यो वा सम्यङ् न रोहति॥ ३४४॥

सैन्धवसामुद्रविड़सौवर्च्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि यथापूर्व्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि चेति॥ ३४५॥

चक्षुष्यं सैन्धवं हृद्यं रुच्यं लघ्वग्निदीपनम्।
स्निग्धं समधुरं वृष्यं शीतं दोषघ्नमुत्तमम्॥ ३४६॥
सामुद्रं मधुरं पाके नात्युष्णमविदाहि च।
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम्॥ ३४७॥
सक्षारं दीपनं रुक्षं शूलहृद्रोगनाशनम्।
रोचनं तीक्ष्णमुष्णञ्च विड़ं वातानुलोमनम्॥ ३४८॥

उत्पलं नीलोत्पलम्। तेषां सामान्यगुणमाह—कन्दा मारुतकोपना इत्यादि। वराहकन्द इति वराहकन्दश्चर्म्मकारालुक इति प्रसिद्धः, अन्ये तु वराहीति पठन्ति, वराही गृष्टिकोच्यते॥३३७-३४१॥

मूलप्रसङ्गेनाग्रगुणमपि केषाञ्चिदाह—तालेत्यादि। तालादयः प्रसिद्धाः। मस्तकमज्जानः तालादिवृक्षाग्रमज्जानः। सामान्यगुणमाह—स्वादुपाकेत्यादि॥ ३४२। ३४३॥

हेयमाह—वालं ह्यनार्त्तवमित्यादि। इति कन्दवर्गः॥ ३४४॥

अथ लवणानि। सैन्धवेति सैन्धवं प्रसिद्धं, दक्षिणसमुद्रसमीपभवं सामुद्रं, विड़ं कृत्रिमं स्वनाम्ना ख्यातम्। तच्च प्रसारणीकल्कभक्तलवणसंयोगादग्निदाहेन निर्वृत्तं, सौवर्च्चलम् प्रसिद्धम्, तदेव निर्गन्धं काललवणमित्युच्यते। रोमकं शाकम्भरीदेशोत्थं, रुमासरःसम्भवमित्यन्ये। भूमिमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्य्यरश्मिभिर्वह्निना वा क्वथनाद् यल्लवणमुत्पद्यते तद् औद्भिदम्। प्रभृतिग्रहणादूषरप्रसवादीनि। तेषां सामान्यगुणमाह—यथोत्तरमित्यादि। जेज्झटश्वरकमतानुसारेण सैन्धवानन्तरं सौवर्च्चलं पठन्ति, तदसम्यक्, सामुद्रात् सौवर्च्चलस्योष्णत्वात्, उत्तरोत्तरमुष्णानीति वचनादिति गयी॥ ३४५॥

तेषां विशेषमाह—चक्षुष्यमित्यादि। वृष्यत्वं पुनरस्योत्तमस्य जात्युत्कर्षात्। अन्येषामवृष्यत्वमाहुः—सामुद्रमित्यादि। सूक्ष्मं सूक्ष्मस्रोतोऽवगाहनशीलम्। वातानुलोमनं मार्गावृतवातस्य

लघु सौवर्च्चलं पाके वीर्य्योष्णं विशदं कटु।
गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रोचनम् ॥ ३४९ ॥
रोमकं तीक्ष्णमत्युष्णं व्यवायि कटुपाकि च।
वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥ ३५० ॥
लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम्।
सतिक्तं कटु सक्षारं विद्याल्लवणमौद्भिदम् ॥ ३५१ ॥
कफवातक्रिमिहरं लेखनं पित्तकोपनम्।
दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥ ३५२ ॥
ऊषसूतं वालुकैलं शैलमूलाकरोद्भवम्।
लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ ३५३ ॥
यवक्षारस्वर्ज्जिकाक्षारपाकिमटङ्कणक्षारप्रभृतयः ॥ ३५४ ॥
गुल्मार्शोग्रहणीदोष-शर्कराश्मरिनाशनाः।
क्षारास्तु पाचनाः सर्व्वे रक्तपित्तकराः सराः (स्मृताः) ॥ ३५५ ॥
ज्ञेयो वह्निसमौ क्षारौ स्वर्ज्जिकायावशूकजौ।
शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ ३५६ ॥
उष्णोऽनिलघ्नः प्रक्लेदी चोषक्षारो बलापहः ॥ ३५७ ॥
मेदोघ्नः पाकिमः क्षारो मूत्रवस्तिविशोधनः ॥ ३५८ ॥

स्रोतःशुद्धिकरत्वेन प्रवर्त्तनं, धातुक्षयकृतस्य तु सूक्ष्मत्वसामान्यान्नातिप्रशमनमित्यर्थः। लघ्वित्यादि। व्यवायि इति अपक्वमेव देहमखिलं व्याप्नोति पश्चाद्देहस्थमेव पाकमुपैति। लघ्वित्यादि। उत्क्लेदि आर्द्रीभावकारि, अन्ये प्रकोपयति श्लेष्मपित्तादीनित्याहुः। प्रभृतिशब्देन गृहीतं केचिद् गुडिकालवणं पठन्ति—दीपनमित्यादि। पाकाभिनिर्वृत्तत्वाद् गुडिकाभूतमेव गुडिकालवणं भवति; तच्च वृक्षलवणमिति ख्यातम्। अपरमपि प्रभृतिग्रहणोपगृहीतमाह—ऊषसूतमित्यादि। ऊषसूतं ऊषरजातम्। वालुकैलमिति बालुकाः सिकताः, ताभिः युक्ता इला पृथ्वी बालुकेला तत्र सम्भवं वालुकैलम्। मूलाकरोद्भवम् इति मूलभूत आकरो मूलाकरः, प्रशस्यतरतुरङ्गमोत्पत्तिभूमिः, तदुद्भवम्। कटु चोच्यते इति कटुलवणमिति प्रसिद्धमित्यर्थः ॥ ३४६—३५३ ॥

लवणस्वारूप्यादाह—यवक्षारेत्यादि। यवक्षारो यवशूकोद्भवः शीतलिका यवक्षार इति च लोके। सर्ज्जिक्षारः साजीति लोके। पाकेन निर्वृत्तो यः स पाकिमः क्षारपाकविधानेनोक्तः प्रतिसारणीयः पानीयश्च, पाकिमं तूषरपांशुकाभिनिर्वृत्तमित्यन्ये, अपरे पाकिमाद्भिन्नमूषरक्षारमाहुः।

विरूक्षणोऽनिलकरः श्लेष्मघ्नः पित्तदूषणः ।
अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणः क्षार उच्यते ॥ ३५९ ॥
सुवर्णं स्वादु हृद्यञ्च बृंहणीयं रसायनम् ।
दोषत्रयघ्नं शीतञ्च चक्षुष्यं विषसूदनम् ॥ ३६० ॥
रूप्यमम्लं सरं शीतं सस्नेहं पित्तवातनुत् ॥ ३६१ ॥
ताम्रं कषायं मधुरं लेखनं शीतलं सरम् ॥ ३६२ ॥
कांस्यं तिक्तं लेखनञ्च चक्षुष्यं कफवातजित् ॥ ३६३ ॥
वातकृच्छीतलं लोहं तृष्णापित्तकफप्रणुत् ॥ ३६४ ॥
कटुक्रिमिघ्ने लवणे त्रपुसीसे विलेखने ॥ ३६५ ॥
मुक्ताविद्रुमवज्रेन्द्र-वैदूर्य्यस्फटिकादयः ।
चक्षुष्या मणयः शीता लेखना विषसूदनाः ।
पवित्रा धारणीयाश्च पापालक्ष्मीमलापहाः ॥ ३६६ ॥
धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमिहाप्रमेयात् ।
आस्वादतो भूतगुणैश्च मत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ३६७ ॥
षष्टिका यवगोधूमा लोहिता ये च शालयः ।
मुद्गाढ़कीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३६८ ॥
लावतित्तिरिसारङ्ग-कुरङ्गैणकपिञ्जलाः ।
मयूरवर्म्मिकूर्म्माश्च श्रेष्ठा मांसगणेष्विह ॥ ३६९ ॥

टङ्कणक्षारः सौभाग्यापरपर्य्यायः सोहागा इति लोके, प्रभृतिग्रहणादेवंजातीयानां क्षाराणामवरोध। तेषां सामान्यगुणमाह—गुल्मेत्यादि। अत्र केचित् सुवर्णादीनामपि गुणमाह—सुवर्णमित्यादि ॥ ३५४—३६६ ॥

द्रव्यानन्त्यादनुक्तद्रव्यज्ञानोपायमाह—धान्येष्वित्यादि। चकारात् कन्दलवणद्रव्यकृतान्नादीनां समुच्चयः। इह इति शास्त्रे। अप्रमेयात् आनन्त्यादित्यर्थः। अप्रमोहादिति अप्रमादादिति च क्वचित् पाठः। अत्राप्रमोहो ज्ञानमेव। ( तेषु अनुक्तद्रव्येषु। ) परमौपयौगिकमुक्तं, न सर्व्वं विस्तरभयादित्यर्थः। तथा अप्रमादः सावधानत्वमेवास्माकम्। अस्वादतः रसात्। भूतगुणैरिति द्रव्यारम्भकभूतगुणैः। ( वीर्य्यपाकादिभिश्च अन्ये तु पठन्ति तेषां जड़त्वेन प्रमादपाठ एवायम् ) ॥ ३६७ ॥

उक्तेषु प्रधानतममाह—षष्टिकेत्यादि। धान्येषु रक्तशालिषष्टिकौ शूकधान्येषु, यवगोधूमौ कुधान्येषु, मुद्गाढ़कीमसूराः शमीधान्येषु। लावेत्यादि। लावतित्तिरिकपिञ्जलमयूरा विष्किरेषु पक्षिषु, सारङ्गकुरङ्गैणा जाङ्गलमृगेषु, सारङ्गोऽत्र गौरहरिणः, कुरङ्गश्चतुरङ्गो भेड्डलापातः। पुनः

दाड़िमामलकं द्राक्षा खर्ज्जूरं सपरूषकम्।
राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥ ३७० ॥
सतीनो वास्तुकश्चुच्चू-चिल्लिमूलकपोतिकाः।
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते।। ३७१ ॥
गव्यं क्षारं घृतं श्रेष्ठं सैन्धवं लवणेषु च।
धात्री दाड़िममम्लेषु पिप्पली नागरं कटौ ॥ ३७२ ॥
तिक्ते पटोलवार्त्ताके मधुरे घृतमुच्यते।
क्षौद्रं, पूगफलं श्रेष्ठं कषाये सपरूषकम् ॥ ३७३ ॥
शर्करेक्षुविकारेषु पाने मध्वासवौ तथा।
परिसंवत्सरं धान्यं मांसं वयसि मध्यमे।
अपर्य्युषितमन्नन्तु संस्कृतं मात्रया शुभम् ॥ ३७४ ॥
फलं पर्य्यागतं शाकमशुष्कं तरुणं नवम् ॥ ३७५ ॥

कृष्णहरिणः। वर्म्मिर्मत्स्येषु, वर्म्मी रोहितक इत्येके, रोहितो मत्स्यानामिति चरकवचनात्, अन्ये सर्पाकारमत्स्यमाहुः, श्रीब्रह्मदेवस्तु वर्मी महाशकलो रोहितभेदोऽत्र न पुनः सर्पाकारमत्स्य इत्याह। कूर्म्मः कच्छपः, स च पादिषु ॥ ३६८। ३६९ ॥

दाड़िमामलकमित्यादि। दाड़िमामलकमातुलुङ्गानि फलेषु अम्लेषु, द्राक्षाखर्ज्जूरराजादनानि मधुरफलेषु, खर्ज्जूरं पिण्डखर्ज्जूरं, राजादनं क्षीरिका, परूषकं कषायेषु परूषकं फलसा इति लोके, परूषकमातुलुङ्गे मधुराम्लेष्विति केचित्। सतीन इति सतीनादयः शाकवर्गे। सतीनः वर्त्तुलकः, वास्तुकश्चक्रवास्तुकः, चूच्चूः चूक इति लोके। चिल्ली क्षेत्रवास्तुकः, मूलकपोतिका बालमूलकं, मण्डूकपर्णी ब्राह्मी, जीवन्ती डोडीति लोके, जीवन्ती जीवा तण्डूलीयकसदृशीत्यन्ये। शाकमांसफलेषूक्ता इत्यादौ विशेषानुक्तावप्येषामेव प्राधान्याद् ग्रहणम् ॥ ३७०।३७१ ॥

गव्यमिति गोरसेषु गव्यं क्षीरघृतं श्रेष्ठम्। सैन्धवमिति लवणेषु सैन्धवम्। धात्रीत्यादि ईषदम्लैरनम्लैर्वा इत्यादौ अम्लीकरणे अनुक्तयोरपि धात्रीदाड़िमयोरेव प्रयोगः, एवं कटुकादिष्वपि ज्ञेयम्। धात्रीदाड़िमेत्यादिरसद्वारेणेति न पुनरुक्तम्। पिप्पलीत्यादि। घृतं क्षौद्रञ्च मधुरे, कषाये पूगफलं परूषकञ्च। शर्करेक्षुविकारेष्विति अनुक्तविशेषेषु शर्करा। पाने इत्यादि मधुशब्देन मार्द्वीकं, आसवशब्देन द्राक्षासवः। परिसंवत्सरमिति परिसंवत्सरोषितं वर्षोत्थितं धान्यमित्यर्थः। मांसमित्यादि मध्यमे वयस्येणादेर्मांसं प्रधानमित्यर्थः। अपर्य्युषितमिति अपर्य्युषितमन्नं तद्दिनसिद्धं, मात्रयेति मात्रया प्रयुक्तमित्यर्थः, शुभं पथ्यम्। फलमिति पर्य्यागतं पक्वमित्यर्थः। शाकमशुष्कमित्यादि। अशुष्कं आर्द्रं, तरुणं प्रत्यग्रं, नवं तत्कालप्ररोदितं। सलिलदध्यादितैलमाक्षिकमूत्राणां स्ववर्ग एव प्राधान्यमिति न पुनरिह कथनं कृतम् ॥ ३७२—३७५ ॥

अतः परं प्रवक्ष्यामि कृतान्नगुणविस्तरम् ॥ ३७६ ॥
लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः।
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥ ३७७ ॥
स्वेदाग्निजननी लघ्वी दीपनी वस्तिशोधनी।
क्षुत्तृट्श्रमग्लानिहरी पेया वातानुलोमनी ॥ ३७८ ॥
विलेपी तर्पणी हृद्या ग्राहिणी बलवर्द्धिनी।
पथ्या स्वादुरसा लघ्वी दीपनी क्षुत्तृषापहा ॥ ३७९ ॥
हृद्या सन्तर्पणी वृष्या बृंहणी बलवर्द्धिनी।
शाकमांसफलैर्युक्ता विलेप्यम्ला च दुर्ज्जरा ॥ ३८० ॥
सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता।
विलेपी बहुसिक्था स्याद् यवागूर्विरलद्रवा ॥ ३८१ ॥

संस्कृतानां गुणमाह—अत इत्यादि। अतः परमिति अत ऊर्द्ध्वम्। कृतान्नं संस्कृतान्नमित्यर्थः। लाजेत्यादि। केचिदत्र अविशुद्धानामिति ईषदर्थमकारमुत्पाद्य मन्दविरेचनादविशुद्धानामित्यर्थं वदन्ति; चरकाभिप्रायेण तु विशुद्धानामित्येव पाठः, नत्वविशुद्धानामिति। पथ्यो हित इत्यर्थः, पाचन आमादीनाम्, दीपनो जठराग्नेः, हृदयाय हितो हृद्यः, आयुत ईषद् युक्तः। पेयामाह स्वेदाग्निजननीत्यादि। उष्णत्वात् स्वेदजननी। क्षुत्तृट्श्रमग्लानिहरीत्यत्र क्षुधां तृष्णां द्रवत्वात्, श्रमग्लानिहरी तृप्तिजनकत्वात, हरतीत्येके व्याचक्षते; वृद्धवैद्यास्तु तृट्श्रमेभ्य उत्पन्नां ग्लानिं हरतीति व्याख्यानयन्ति। पेया यवागूः सा विरलद्रवा, तदुपरितनो भागो मण्डः, एतद्द्वयमपि पेयम्। यवागूगुणकर्म्माभिधाय विलेपीगुणकर्म्माह—विलेपीत्यादि। विलेपी घनसिक्था सा च लेह्या। तत्र मण्डपेयाविलेपीनां तण्डुलजलप्रमाणादिकं सूपकारा एव जानन्ति, विस्तरभयात् परिभाषार्थानवस्थानाच्च न प्रमाणं लिखितम्। तस्या एव विलेप्याः अन्यसंयोगे कर्मगुणमाह—हृद्येति। हृद्या हृदयाय हिता हृद्या, सन्तर्पणी तृप्तिजननी, वृष्या शुक्रला, बृंहणी शरीरवृद्धिकरी, अम्ला अम्लादिभिः कृतसंस्कारा। जेज्झटस्तु हृद्या सन्तर्पणीत्यादिश्लोकार्द्धं विमुच्य "शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्ज्जराः" इत्येवं पठति ॥ ३७६—३८० ॥

केषु पुनर्मण्डादीनां भेदा इत्याह—सिक्थैरित्यादि। पेया सिक्थसमन्वितेति अत्र पेया यवागूरुच्यते, सा च सिक्थसमन्विता भवति। विलेपी बहुसिकथा स्यादिति बहुसिक्था घनसिक्था पृथग्द्रवरहिता, अतएव लेह्या। प्रागुक्ता पेया या यवागूपरपर्य्याया तस्या विलेप्याः सकाशाद् भेदख्यापनायाह—यवागूर्विरलद्रवेति। यवागूः पेया इत्यर्थः। एतेनासिक्थो मण्डः। पेया यवाग्वापरपर्य्याया सिक्थसमन्विता विरलद्रवा, विलेपी घनसिक्था लेह्या पृथग् द्रवरहितेति भेदत्रयं सिक्थैर्विरहित इत्यादिना श्लोकेनोक्तम्। केचित् "अन्नं पञ्चगुणे तोये यवागूं षड्गुणे पचेत्। चतुर्द्दशगुणे मण्डं विलेपीं तु चतुर्गुणे" इति परिभाषादर्शनात् पेयायवाग्वोर्भेदमाहुः ॥ ३८१ ॥

विष्टम्भी पायसो वल्यो मेदःकफकरो गुरुः ॥ ३८२ ॥
कफपित्तकरी वल्या कृशरानिलनाशिनी ॥ ३८३ ॥
धौतस्तु विमलः शुद्धो मनोज्ञः सुरभिः समः।
स्विन्नः सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघुः ॥ ३८४ ॥
अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥ ३८५ ॥
लघुः सुगन्धिः कफहा विज्ञेयो भृष्टतण्डुलः ॥ ३८६ ॥
स्नेहैर्मांसैः फलैः कन्दैर्वैदलाम्लैश्च संयुताः।
गुरवो बृंहणा वल्या ये च क्षीरोपसाधिताः ॥ ३८७ ॥
सुस्विन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्हितः ॥ ३८८ ॥
स्विन्नं निष्पीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम्।
अस्विन्नं स्नेहरहितमपीड़ितमतोऽन्यथा ॥ ३८९ ॥
मांसं स्वभावतो वृष्यं स्नेहनं वलवर्द्धनम्।
स्नेहगोरसधान्याम्ल-फलाम्लकटुकैः सह।
सिद्धं मांसं हितं वल्यं रोचनं बृंहणं गुरु ॥ ३९० ॥

विलेपीसाधर्म्यात् पायसस्यापि गुणमाह—विष्टम्भीत्यादि। पायसो दुग्धतण्डुलसिद्धः, विष्टम्भी प्रभावात्, सवाततोदशूला मलाप्रवृत्तिर्विष्टम्भः। कृशरागुणमाह—कफेत्यादि। कृशरा तिलतण्डुलमाषकृता यवागूः ॥ ३८२।३८३ ॥

भक्तगुणमाह—धौतस्त्वित्यादि। शुद्धः स्वयमेव धवलः, विगतमलस्तु कण्डनात् धौतत्वेन चापगतविशिष्टमलः, मनोज्ञो मनोरमः, सुरभिः सुगन्धिः, समः स्विन्नः सर्व्वोऽपि स्विन्न इत्यर्थः, सुप्रस्रुतः सुष्ठुगालितः, उष्णः प्रसिद्धः, विशदः सुसिद्धः, स च रक्तादिदोपरहितः एवम्भूत ओदनो लघुः। पूर्व्वोक्तविपरीतगुणमाह—अधौत इत्यादि। एवम्भूत ओदनो गुरुः। भृष्टतण्डुलगुणमाह—लघुरित्यादि। भृष्टतण्डुलो भृष्टतण्डुलसाधित ओदन इत्यर्थः। ओदनविशेषेण विशिष्टद्रव्यसंयोगानां गुणमाह—स्नेहैरित्यादि। स्नेहैर्घृतादिभिः। मांसफलकन्दाः प्रसिद्धाः। विदलं शमीधान्यावयवः, चकाराच्छाकादीनामवरोधः। क्षीरोपसाधिता उदकादिसंयुक्ताः पायसादन्ये। प्रहितमाह—सुस्विन्न इत्यादि। ईषत् सूप इति ईषद्भृष्ट इति सम्बन्धः। तत्र अभर्ज्जितापेक्षया भर्ज्जितमुद्गादिसूपस्य लाघवम्, मापसूपस्य तु भर्ज्जितादिना लाघवमित्येके, भर्ज्जितस्यापि न लाघवमित्यन्ये, अन्ये तु ईषत्सूप इति न पठन्ति, किन्तु पाठान्तरं पठन्ति, तच्चादृष्टत्वान्न लिखितम्। प्रहितमभिधायापराण्यपि व्यञ्जनान्याह—स्विन्नमित्यादि। अतः पूर्व्वोक्तात्, अन्यथेति अहितमित्यर्थः ॥ ३८४—३८९ ॥

मांसस्य व्यञ्जनोत्तमस्य संयोगसंस्कारजं गुणकर्म्म निर्द्दिशन्नाह—मांसमित्यादि। स्नेहो

तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम्।
विद्यात पित्तकफोद्रेकि वलमांसाग्निवर्द्धनम्॥ ३९१॥
परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु।
रोचनं वलमेधाग्नि-मांसौजःशुक्रवर्द्धनम्॥ ३९२॥
तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति पाचकाः।
परिशुष्कगुणंर्युक्तं वह्नौ पक्कमतो लघु॥ ३९३॥
तदेव शूलिकाप्रोतमङ्गारे परिपाचितम्।
ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः॥ ३९४॥
उल्लुप्तं भर्ज्जितं पिष्टं प्रतप्तं कन्दुपाचितम्।
परिशुष्कं प्रदिग्धञ्च शूल्यं यच्चान्यदीदृशम्॥ ३९५॥

घृतादिः, गोरसो दध्यादिः, धान्याम्लं काञ्जिकं, फलाम्लं दाड़िमादि, कटुकं मरिचादि, प्रकृत्यनुरूपं संस्कारानुरूपञ्च बल्यत्वादि ज्ञेयम्। अयं ललितमांसानां गुण उक्तः। तस्यैव मांसस्य प्रदिग्धत्वेन सिद्धस्य गुणमाह—तदेवेत्यादि। तदेवेति मांसम् आदानं घनद्रव्यावापः, सुरभिद्रव्य-संस्कृतं हिङ्गुमरिचाजाजिप्रभृतिसंस्कृतम्। अयं प्रलेहमांसानां गुण उक्तः। मांसस्य परिशुष्कत्वेन सिद्धस्य गुणमाह परिशुष्कमित्यादि। परिशुष्कप्रदिग्धयोरयं विशेषः—"सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु। जीरकाद्यर्घनं मांसं परिशुष्कं तदुच्यते। तदेव गोरसादानं प्रदिग्ध-मिति विश्रुतम्" इति। स्थिरं कठिनं, हर्षणं हर्षोत्पादकं, बलमुत्साहः, ओजो हृदि स्थितं धातुधाम। अयं शूल्यगुण उक्तः। परिशुष्कस्य शूलस्य प्रसङ्गेन शूल्यविशेषाणामपि गुणमाह—तदेवेत्यादि। तदेव परिशुष्कमेव, ऊर्द्ध्वं निरन्तरं छेदनातिशयेनाणुशश्छिन्नत्वात् पिष्टमिव उल्लुप्त-पिष्टम्। उल्लुप्तमिति पाचका इति वदन्तीति शेषः। पाचकाः सूपकाराः। तस्यैवाङ्गारपक्वस्य परिशुष्कस्य गुणमाह—परिशुष्केत्यादि। वह्नाविति अङ्गारतापितत्वात्, अतः पूर्व्वोक्तपरिशुष्काल्लघु भवति॥ ३९०—३९३॥

उल्लुप्तपिष्टप्रदिग्धगुणमाह—तदेवेत्यादि। तदेव शूलिकाप्रोतमिति लोहादिशलाकारोपितम्, प्रदिग्धमिति स्नेहधान्याम्लतक्रादिना प्रदिग्धं परिशुष्काद् गुरुपाकात् किञ्चिद्गुरुतरम्, स्नेहादि-प्रदिग्धत्वादेव। उक्तानुक्तशूल्यान्याह—उल्लुप्तमित्यादि। उल्लुप्तं पूर्व्ववत्। भर्ज्जितादीनि व्याख्या नयन्ति—"भर्ज्जितं स्याद् घृतादौ तु पिष्ठा यत् साधितं पुनः। अपूपादिकृतं पिष्टं दधिदाड़िम-सौरभैः। सिद्धं साज्यैस्तथाजाजी-सामुद्रमरिचैरपि। अङ्गारादिषु यत् पक्वं प्रतप्तं तदुदाहृतम्। पिशितं सौरभैर्लिप्तं कन्दुपक्वं मधुप्रभम्। राजिकाकल्कलिप्तञ्च कन्दुपाचितमुच्यते।" परिशुष्क-प्रदिग्धे पूर्व्ववत्। "हिङ्गूदके परिक्षिप्तं शूले निष्पीड़ितं ततः। सिक्त्वा सिक्ताम्बुधाराभिर्धूमेऽग्नौ

मांसं यत् तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु *।
लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम्।
अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम्॥ ३९६॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः।
वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः॥
स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम्।
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम्॥
आप्यायनः संहननः शुक्रदो बलवर्द्धनः।
स दाड़िमयुतो वृष्यः संस्कृतो दोषनाशनः॥ ३९७॥
प्रीणनः सर्व्वधातूनां विशेषान्मुखशोषिणाम्।
क्षुत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः॥
यन्मांसमुद्धतरसं न तत् पुष्टिवलावहम्।
विष्टम्भि दुर्ज्जरं रुक्षं विरसं मारुतावहम्॥ ३९८॥
दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः॥ ३९९॥

प्रतापयेत्। फलाम्लेनापि यत् पक्वं शूल्यं तत् सौरभान्वितम्" इति। यच्चान्यदीदृशमिति यदेवंविधं मांसं तैले साधितं भवति तदुष्णादिगुणकं ज्ञेयम्। घृतसाधितमाह— लघ्वित्यादि॥ ३९३—३९६॥

शूल्यं मांसमुक्तं प्रदिग्धपरिशुष्कभेदाभ्यां द्विभेदमेव तदभिधाय द्रवमभिधातुमाह—प्रीणन इत्यादि। आप्यायन इति स्मृतिस्वरहीनज्वरक्षीणकृशाल्परेतसां स्वास्थ्यकरः, संहनन इति क्षतोरसां तथा भग्नविश्लिष्टसन्धीनां सन्धानकरः। शुक्रद इति अल्परेतसाम्, बलवर्द्धनः ओजोहीनस्य। एणादिप्रकृत्यनुविधानेन रसस्योत्कर्षापकर्षौवृद्धौ, अन्यथा प्रतिगुणाभिधानं व्यर्थं स्यात्। तस्यैव संयोगजं गुणमाह— सदाड़िमेत्यादि। स इति मांसरसः। संस्कृतः कटुकादिना, दोषशमनः

* इतः परमित्यधिकः पाठः पुस्तकान्तरेषु दृश्यते—
भर्ज्जितं स्याद् घृताद्यै तु पिष्ट्वा यत् साधितं पुनः।
अपूपादिकृतं पिष्टं दधिदाड़िमसौरभैः॥
सिद्धं साज्यैस्तथाजाजीसामुद्रमरिचैरपि।
अङ्गारादिषु यत् पक्वं प्रतप्तं तदुदाहृतम्॥
निशितं सौरभैर्लिप्तं कन्दुपक्वं मधुप्रभम्।
राजिकाकल्कलिप्तञ्च कन्दुपाचितमुच्यते॥
हिङ्गूदके परिक्षिप्तं शूले निष्पादितं ततः।
सिक्ता सिक्तान्बुधाराभिर्विधूमेऽग्नौ प्रतापयेत्।
फलाम्लेनापि यत् पक्वं शूल्यं तत् सौरभान्वितम्॥

मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम्।
पिप्पलीशुण्ठिमरिच-गुड़सर्पिःसमन्वितम्।
एकत्र पाचयेत् सम्यग् वेशवार इति स्मृतः॥
वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः। ४००।४०१॥
कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि।
ज्ञेयः पथ्यतमश्चापि मुद्गयूपः कृताकृतः॥ ४०२॥
स तु दाड़िममृद्वीका-युक्तः स्याद्रागषाड़वः।
रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत्॥ ४०३॥
मसूरमुद्गगोधूम-कुलत्थलवणैः कृतः।
कफपित्ताविरोधी स्याद् वातव्याधौ च शस्यते॥ ४०४॥
मृद्वीकादाड़िमैर्युक्तः स एवोक्तोऽनिलार्दिते।
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते॥ ४०५॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ।
पित्तघ्नौ दीपनौ हृद्यौ क्रिमिकुष्ठज्वरापहौ॥ ४०६॥

त्रिदोषहरः। सौरावगुणमाह—प्रीणन इत्यादि। सौरावो रसस्योपरितनोऽच्छो भागः। मांसरसप्रसङ्गेनोद्धृतरसमांसस्य गुणमाह—यदित्यादि। यतः पिष्टक्वथितगलितमांसाद्रसो गृहीतः, तन्निःसारत्वादुक्तगुणः। केचिदत्र खानिष्कगुणं पठन्ति—दीप्ताग्नीनामित्यादि। तमन्ये परिशुष्कभेदं मन्यन्ते, अन्ये वेसवारभेदं खानिष्कमाहुः। वेशवारगुणमाह—मांसमित्यादि। अत्र गुडं विहाय हिङ्गुसर्पिःसमन्वितमिति केचित् पठन्ति, तन्न; सर्व्वैराचार्य्यैर्निषिद्धत्वात्। वेसवारमप्यन्ये परिशुष्कं मन्यन्ते॥ ३९७—४०१॥

रसस्य प्रसङ्गेण मुद्गयूषस्य गुणमाह—कफघ्न इत्यादि। कृतयूषस्य व्यवहारार्थं स्वयमेव लक्षणं वक्ष्यति, कफघ्नस्थाने केचिद् वातघ्न (ज्वरघ्न) इति पठन्ति। मुद्गयूषस्य संयोगान्तरेण नामान्तरं दर्शयन्नाह—स त्वित्यादि। स इति मुद्गयूषः, दोषाणाञ्चाविरोधकृदिति वातादीनामीषद्विरोधकृद् वातादीनामीषच्छमन इत्यर्थः। मसूरादिपञ्चकयूषमाह—मसूरेत्यादि। वातव्याधौ च शस्यते इति कथं मुद्गमसूरयोर्यूषो वाते शस्तः, कथं कुलत्थलवणयोर्योगे पित्ताविरोधीत्युच्यते, मसूरादित्रयाणां शैत्यात् कुलत्थलवणयोश्चापि पित्ताविरोधित्वम्। कुलत्थलवणयोगादेव च वाते शस्तः संयोगशक्तेर्वा अचिन्त्यत्वात्। तस्य पञ्चकयूषस्य संयोगान्तरेण गुणान्तरमाह—मृद्वीकेत्यादि। मसूरादियूषो मृद्वीकादाड़िमाभ्यां संयुक्तोऽतीव वातहरः॥ ४०२—४०५॥

अन्ययूषानाह—पटोलेत्यादि। पटोलादियूषस्य सूपयोनित्वात् मुद्गादिकं त्रिगुणमिच्छन्ति।

मांसं यत् तैलसिद्धन्तु वीर्य्योष्णं पित्तकृद्गुरु *।
लघ्वग्निदीपनं हृद्यं रुच्यं दृष्टिप्रसादनम्।
अनुष्णवीर्य्यं पित्तघ्नं मनोज्ञं घृतसाधितम्॥ ३९६॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः।
वातपित्तश्रमहरो हृद्यो मांसरसः स्मृतः॥
स्मृत्योजःस्वरहीनानां ज्वरक्षीणक्षतोरसाम्।
भग्नविश्लिष्टसन्धीनां कृशानामल्परेतसाम्॥
आप्यायनः संहननः शुक्रदो वलवर्द्धनः।
स दाड़िमयुतो वृष्यः संस्कृतो दोषनाशनः॥ ३९७॥
प्रीणनः सर्व्वधातूनां विशेषान्मुखशोषिणाम्।
क्षुत्तृष्णापहरः श्रेष्ठः सौरावः स्वादुशीतलः॥
यन्मांसमुद्धतरसं न तत् पुष्टिवलावहम्।
विष्टम्भि दुर्ज्जरं रुक्षं विरसं मारुतावहम्॥ ३९८॥
दीप्ताग्नीनां सदा पथ्यः खानिष्कस्तु परं गुरुः॥ ३९९॥

प्रतापयेत्। फलाम्लेनापि यत् पक्वं शूल्यं तत् सौरभान्वितम्" इति। यच्चान्यदीदृशमिति यदेवंविधं मांसं तैले साधितं भवति तदुष्णादिगुणकं ज्ञेयम्। घृतसाधितमाह—लघ्वित्यादि॥ ३९३—३९६॥

शूल्यं मांसमुक्तं प्रदिग्धपरिशुष्कभेदाभ्यां द्विभेदमेव तदभिधाय द्रवमभिधातुमाह—प्रीणन इत्यादि। आप्यायन इति स्मृतिस्वरहीनज्वरक्षीणकृशाल्परेतसां स्वास्थ्यकरः, संहनन इति क्षतोरसां तथा भग्नविश्लिष्टसन्धीनां सन्धानकरः। शुक्रद इति अल्परेतसाम्, बलवर्द्धनः ओजोहीनस्य। एणादिप्रकृत्यनुविधानेन रसस्योत्कर्षापकर्षौ वूह्यौ, अन्यथा प्रतिगुणाभिधानं व्यर्थं स्यात्। तस्यैव संयोगजं गुणमाह—सदाड़िमेत्यादि। स इति मांसरसः। संस्कृतः कटुकादिना, दोषशमनः

---

* इतः परमित्यधिकः पाठः पुस्तकान्तरेषु दृश्यते—
भर्जितं स्याद् घृताद्यै तु पिष्ट्वा यत् साधितं पुनः।
अपूपादिकृतं पिष्टं दधिदाड़िमसौरभैः॥
सिद्धं साज्यैस्तथाजाजीसामुद्रमरिचैरपि।
अङ्गारादिषु यत पक्वं प्रतप्तं तदुदाहृतम्॥
गिशितं सौरभैर्लिप्तं कन्दुपक्वं मधुप्रभम्।
राजिकाकल्कलिप्तञ्च कन्दुपाचितमुच्यते॥
हिङ्गूदके परिक्षिप्तं शूले निष्पाड़ितं ततः।
सिक्ता सिक्ताम्बुधाराभिर्विधूमेऽग्नौ प्रतापयेत्।
फलाम्लेनापि यत् पक्वं शूल्यं तत् सौरभान्वितम्॥

मांसं निरस्थि सुस्विन्नं पुनर्दृषदि चूर्णितम् ।
पिप्पलीशुण्ठिमरिच-गुडसर्पिःसमन्वितम् ।
एकत्र पाचयेत् सम्यग् वेशवार इति स्मृतः ॥
वेशवारो गुरुः स्निग्धो बल्यो वातरुजापहः । ४००।४०१ ॥
कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ।
ज्ञेयः पथ्यतमश्चापि मुद्गयूपः कृताकृतः ॥ ४०२ ॥
स तु दाड़िममृद्वीका-युक्तः स्याद्रागषाड़वः ।
रुचिष्यो लघुपाकश्च दोषाणामविरोधकृत् ॥ ४०३ ॥
मसूरमुद्गगोधूम-कुलत्थलवणैः कृतः ।
कफपित्ताविरोधी स्याद् वातव्याधौ च शस्यते ॥ ४०४ ॥
मृद्वीकादाड़िमैर्युक्तः स एवोक्तोऽनिलार्द्दिते ।
रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥ ४०५ ॥
पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ।
पित्तघ्नौ दीपनौ हृद्यौ क्रिमिकुष्ठज्वरापहौ ॥ ४०६ ॥

त्रिदोषहरः । सौरावगुणमाह—प्रीणन इत्यादि । सौरावो रसस्योपरितनोऽच्छो भागः । मांसरसप्रसङ्गेनोद्धृतरसमांसस्य गुणमाह—यदित्यादि । यतः पिष्टक्वथितगलितमांसाद्रसो गृहीतः, तन्निःसारत्वादुक्तगुणः । केचिदत्र खानिष्कगुणं पठन्ति—दीप्ताग्नीनामित्यादि । तमन्ये परिशुष्कभेदं मन्यन्ते, अन्ये वेसवारभेदं खानिष्कमाहुः । वेशवारगुणमाह—मांसमित्यादि । अत्र गुडं विहाय हिङ्गुसर्पिःसमन्वितमिति केचित् पठन्ति, तन्न ; सर्व्वैराचार्य्यैर्निषिद्धत्वात् । वेसवारमप्यन्ये परिशुष्कं मन्यन्ते ॥ ३९७—४०१ ॥

रसस्य प्रसङ्गेन मुद्गयूपस्य गुणमाह—कफघ्न इत्यादि । कृतयूपस्य व्यवहारार्थं स्वयमेव लक्षणं वक्ष्यति, कफघ्नस्थाने केचिद् वातघ्न ( ज्वरघ्न ) इति पठन्ति । मुद्गयूपस्य संयोगान्तरेण नामान्तरं दर्शयन्नाह—स त्वित्यादि । स इति मुद्गयूपः, दोषाणाञ्चाविरोधकृदिति वातादीनामीषद्विरोधकृद् वातादीनामीषच्छमन इत्यर्थः । मसूरादिपञ्चकयूषमाह—मसूरेत्यादि । वातव्याधौ च शस्यते इति कथं मुद्गमसूरयोर्यूषो वाते शस्तः, कथं कुलत्थलवणयोर्योगे पित्ताविरोधीत्युच्यते, मसूरादित्रयाणां शैत्यात् कुलत्थलवणयोश्चापि पित्ताविरोधित्वम् । कुलत्थलवणयोगादेव च वाते शस्तः संयोगशक्तेर्वा अचिन्त्यत्वात् । तस्य पञ्चकयूपस्य संयोगान्तरेण गुणान्तरमाह—मृद्वीकेत्यादि । मसूरादियूषो मृद्वीकादाड़िमाभ्यां संयुक्तोऽतीव वातहरः ॥ ४०२—४०५ ॥

अन्ययूषानाह—पटोलेत्यादि । पटोलादियूषस्य सूपयोनित्वात् मुद्गादिकं त्रिगुणमिच्छन्ति ।

कासश्वासप्रतिश्याय-प्रसेकारोचकज्वरान्।
हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥ ४०७ ॥
कुलत्थयूषोऽनिलहा श्वासपीनसनाशनः।
तूणीप्रतूणीकासार्शो-गुल्मोदावर्त्तनाशनः * ॥
दाड़िमामलकैर्यूषो हृद्यः संशमनो लघुः।
प्राणाग्निजननो मूर्च्छा-मेदोघ्नः पित्तवातजित् ॥ ४०८
मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ४०९ ॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥ ४१० ॥
सर्व्वधान्यकृतस्तद्वद् बृंहणः प्राणवर्द्धनः ॥ ४११ ॥
खलकाम्बलिकौ हृद्यौ तथा वातकफे हितौ ॥ ४१२ ॥
वल्यः कफानिलौ हन्ति दाड़िमाम्लोऽग्निदीपनः ॥ ४१३ ॥
दध्यम्लः कफकृद्वल्यः स्निग्धो वातहरो गुरुः ॥ ४१४ ॥

इमौ द्वावपि यूषौ भिन्नौ ज्ञेयौ, न तु द्वयोरप्येकः। कासेत्यादि। मूलकयूषः बालशुष्कमूलकयूषः, जेज्झटस्तु—यद्यपि बालमूलकं त्रिदोषघ्नं तथापि तस्य न यूषकरणे श्रुतिरस्तीत्याह। अयमपि मुद्गादिसहितो ज्ञेयः। कुलत्थयूष इति अयमेक एव समुद्गश्च। न विरेकं करोति नापि वमनं, किन्तु तत्स्थमेव दोषं शमयतीति संशमनः। प्राणः भारहरणादिशक्तिः। मुद्गेति। ग्राही अतिसारादीनां संग्राही, अयमप्येकः। यवकोलेत्यादि। अयमप्येकः। सर्व्वधान्येत्यादि। सर्व्वधान्यकृतः इत्यभिधानेऽपि अयूषयोनित्वाच्छूकधान्यान् विहाय मुद्गादिशमीधान्यानामपथ्यवर्ज्जं यूषः। अयं तन्त्रान्तरे नवमुष्टिनाम्नाभिहितः ॥ ४०६—४११ ॥

खलेत्यादि। खलकाम्बलिकौ यूषविशेषौ। तत्र खलो द्विविधः। सतक्रशमीधान्यः सतक्रशाकश्च। तथाहि—"सतक्राणि शमीधान्यानि स्निग्धानि संग्राहकाणि खलानि" इति, सतक्रशाकस्तु "तक्रकपित्थचाङ्गेरीमरिचाजाजीचित्रकैः। सुपक्वः खड्यूषोऽयमथ काम्बलिकोऽपरः ॥ दध्यम्ललवणस्नेहतिलमाषसमन्वितः" इति। तक्राम्ल इति तक्राम्लसिद्धः काम्बलिकः, अम्लानां बहुत्वात्। जेज्झटमते तु दधिदाडिममाषशाकस्नेहयुक्तं व्यञ्जनं खड इत्युच्यते। नलमते तु "तिलं सुलुञ्चितं कृत्वा पिष्टं क्षीरे ग्रहोपितम्। पटे पूतं पचेद्धामानार्द्रकावापिते घृते। मरिचाजाजीसामुद्रैर्युक्तस्तिलखड़ो भवेत्" इति। काम्बलिकलक्षणमत्रैवोक्तं "दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः। पुनः सौवर्च्चलाजाजीवीजपूरकसौरभैः। संयोज्य मथितः स्वच्छ एष काम्बलिको भवेत्" इति। येन येनाम्लेन सिद्धो यूषो यद्यद्गुणं करोति तत्तद्गुणं दर्शयन्नाह—वल्य इत्यादि। दाड़िमैः क्रियते योऽम्लो यूषः स दाड़िमाम्लः। दध्यम्ल इति दध्ना क्रियते योऽम्लो यूषः स दध्यम्लः। तक्राम्लोऽप्येवम्। प्रदूषणः प्रकोपणः, दाड़िमधान्याम्लदधि-

तक्राम्लः पित्तकृत् प्रोक्तो विषरक्तप्रदूषणः ॥ ४१५ ॥
खड़ाः खड़यवागवश्च षाड़वाः * पानकानि च ।
एवमादीनि चान्यानि क्रियन्ते वद्यवाक्यतः ॥ ४१६ ॥
अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना ।
विज्ञेयं लवणस्नेह-कटुकैः संयुतं कृतम् ॥ ४१७ ॥
अथ गोरसधान्याम्ल-फलाम्लैरन्वितश्च यत् ।
यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥ ४१८ ॥
दधिमस्त्वम्लसिद्धस्तु यूषः काम्बलिकः स्मृतः ॥ ४१९ ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढ़कम् ।
सिण्डाकी च गुरूणि स्युः कफपित्तकराणि च ॥ ४२० ॥
तद्वच्च वटकान्याहुर्विदाहीनि गुरूणि च ॥ ४२१ ॥
लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ।
तृष्णामूर्च्छाभ्रमच्छर्दि-श्रमघ्ना रागषाड़वाः ॥ ४२२ ॥

तक्रै रम्लत्वं काम्बलिकस्यैवेत्येके । खड़ा इत्यादि । खड़ाः पूर्व्वोक्ताः, खड़यवागव इति खड़ैरुक्तलक्षणैः सिद्धाः यवागव खड़यवागवः । पाड़वलक्षणमुच्यते । "स्पष्टाम्लमधुरोऽस्पष्टकषायलवणोषणः । अतिक्तः पा(खा)ड़वः कोलकपित्थाद्य पद्व हितः" इति । पा(खा)ड़वा इति बहुवचनं पा(खा)ड़वभूयस्त्वग्राहये, तच्च विस्तरभयान्न लिखितम् । पानकानि अम्लिकाद्राक्षादिकृतानि, एवमादिग्रहणात् सट्टकप्रभृतीनि ॥ ४१२—४१६ ॥

व्यवहारार्थं कृताकृतयूषयोः परिभाषां दर्शयन्नाह—अस्नेहलवणमित्यादि । कटुकैः शुण्ठ्यादिभिः । तयोर्यूषयोरम्लान्तरसंयोगेन संस्कृतयोरपि गुरुलाघवं दर्शयन्नाह—अथेत्यादि । नपुंसकनिर्द्देशाद्रसमिति सामान्येनाभीष्टं, तेन यूपरसयोरुभयोरपि गुरुलाघवमुक्तं भवति, संस्कृतादसंस्कृतं लघ्विति सम्बध्यते, रसोऽत्र मांसरसः । यूषकाम्बलिकलक्षणमुच्यते—दधीत्यादि । शुष्कशाकविशेषाणां कृतान्नानां गुणं निर्द्दिशन्नाह—तिलेत्यादि । तिलविकृतिः मोदकादिः, पिण्याकविकृतिः (फुट्टाकादि) सुद्दकल्कादिः । तिलपिण्याकस्य शुष्कशाकस्य विरूढ़कस्य व्यञ्जनानि देशपुरुषविशेषतो ज्ञेयानि । विरूढम् अङ्कुरितं विगतरोहं वा, अन्ये शाकमेवात्यन्तरूढं विरूढमाहुः । सिण्डाकी अनासुताद्रा शुक्तेपु, मूलादिष्वासुतसिण्डाकी शुक्तगुणा नोक्तगुणा इत्येके, अनासुतसिण्डाकी शाकवर्गे उक्तगुणेति आसुतसिण्डाक्या एवायं गुण इत्येके, मूलकादिशाकमेव किञ्चित् खिन्नं क्षुण्णं सुगन्धिकटुकद्रव्यान्वितं वटकीकृतं ब्रह्मसु (सुह्मेपु) सिण्डाकीत्युच्यते, अन्ये तु शाकसिक्थमण्डासुतिः सिण्डाकीत्याहुः । तद्वदित्यादि । वटकानीति सिण्डाकीवटकानि । रागपाड़वगुणमाह—लघव इत्यादि । तत्र रागः—"सिताऽरुचकसिन्धूत्थैः

* खाड़वा इति पाठान्तरम् ।

रसाला बृंहणी बल्या स्निग्धा वृष्या च रोचनी ॥ ४२३ ॥
स्नेहनं गुड़संयुक्तं हृद्यं दध्यनिलापहम् ॥ ४२४ ॥
सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ।
नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते ॥ ४२५ ॥
मन्थः सद्योबलकरः पिपासाश्रमनाशनः ॥ ४२६ ॥
साम्लस्नेहगुड़ो मूत्र-कृच्छ्रोदावर्त्तनाशनः ।
शर्करेक्षुरसद्राक्षा-युक्तः पित्तविकारनुत् ॥ ४२७ ॥
द्राक्षामधूकसंयुक्तः कफरोगनिवर्हणः ॥ ४२८ ॥
वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥ ४२९ ॥
गौड़मम्लमनम्लं वा पानकं गुरु मूत्रलम् ॥ ४३० ॥
तदेव खण्डमृद्वीका-शर्करासहितं पुनः ।
साम्लं सुतीक्ष्णं सहिमं पानकं स्यान्निरत्ययम् ॥ ४३१ ॥
मार्द्वीकन्तु श्रमहरं मूर्च्छादाहतृषापहम् ॥ ४३२ ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ४३३ ॥
द्रव्यसंयोगसंस्कारं ज्ञात्वा मात्राश्च सर्व्वतः ।
पानकानां यथायोगं गुरुलाघवमादिशेत् ॥ ४३४ ॥

सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो राजिकया कृतः” इति । पाड़वाः पुनर्मधुराम्ललवण-संयोगजा नानाविधाः ॥ ४१७—४२२ ॥

रसाला गुणमाह—रसालेत्यादि । रसाला शिखरिणी । सगुड़दधिगुणमाह—स्नेहनमित्यादि । सक्तुमन्थमाह—सक्तव इत्यादि । मन्थः सद्योबलकर इति सद्योबलकरोऽयं नोत्तरकाले बलकरो रूक्षत्वात्, अविशेषोक्तावपि यवादिशक्तवो ग्राह्याः । मन्थस्यैव द्रव्यान्तरसंयुक्तस्य गुणान्तरमाह—साम्लस्नेहेत्यादि—उदावर्त्तनाशनत्वेनास्य वातहरत्वमुक्तम् । पानकगुणमाह—गौड़मित्यादि । गुड़शब्दोपलक्षणत्वात् सर्व्वेक्षुविकारपानकगुण उक्तः । अनम्लम् ईषदम्लम् । पानकस्य नाना-द्रव्यपरिभाषामाह—तदेवेत्यादि । तदेव गौड़मेव, साम्लं सतिन्तिड़ीकादिद्रव्यं, सतीक्ष्णमिति मरिचादितीक्ष्णद्रव्यसहितं, सहिमं सकर्पूरं, पानकं स्याद् भवेत्, निरत्ययं श्रेष्ठं, एवं खण्डमृद्वीका-शर्करपानकेष्वम्लादिद्रव्यसंस्कारो ज्ञेयः, मृद्वीकाग्रहणं पानकयोनिफलोपलक्षणम् । द्राक्षापानक-गुणमाह—मार्द्वीकमित्यादि । परूषककोलपानकयोर्गुणमाह—परूषकाणामित्यादि । अनुक्तपानक-गुणमाह—द्रव्येत्यादि । सर्व्वतः सर्व्वस्मिन् पानके, उक्तानुक्तपानकगुणोऽयमित्येके । इति कृतान्नवर्गः ॥ ४२३—४३४ ॥

वक्ष्याम्यतः परं भक्ष्यान् रसवीर्य्यविपाकतः ॥ ४३५ ॥
भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः।
अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥ ४३६ ॥
तेषां प्राणकरा हृद्या घृतपूराः कफावहाः।
वातपित्तहरा वृष्या गुरवो रक्तमांसलाः ॥ ४३७ ॥
वृंहणा गौड़िका भक्ष्या गुरवोऽनिलनाशनाः।
अदाहिनः पित्तहराः शुक्रलाः कफवर्द्धनाः ॥ ४३८ ॥
मधुमस्तकसंयावाः पूपा ह्यते विशेषतः।
गुरवो वृंहणाश्चैव मोदकास्तु सुदुर्ज्जराः ॥ ४४९ ॥
रोचनो दीपनः स्वर्य्यः पित्तघ्नः पवनापहः।
गुरुर्मृष्टतमश्चैव सट्टकः प्राणवर्द्धनः ॥ ४४० ॥
हृद्यः सुगन्धिर्मधुरः स्निग्धः कफकरो गुरुः।
वातापहस्तृप्तिकरो बल्यो विष्यन्दनः स्मृतः ॥ ४४१ ॥

भक्ष्यान्निर्द्देष्टुमाह—भक्ष्यानित्यादि। भक्ष्या लड्डुकादयः, रसवीर्य्यविपाकत इति रसादिभिः कृत्वेत्यर्थः। भक्ष्याणां योनिविशेषेण गुणविशेषं निर्द्दिशन्नाह—भक्ष्या इत्यादि। गोधूमपिष्टविकृतिं क्षीरेणालोड्य ये क्रियन्ते ते क्षीरकृता भक्ष्याः। बल्या इति उत्साहकराः, अदाहिन इति ईषद् दाहिनः, दीपनाः पुनः स्ववर्गापेक्षया वातोपहताग्नेः संस्कारप्रभावाद् वा। क्षीरभक्ष्यविशेषमाह—तेषामित्यादि। "मर्द्दितां समितां क्षीरनारिकेलसितादिभिः। अवगाह्य घृते पक्वो घृतपूरोऽयमुच्यते।" घिओर इति लोके। गुड़कृतान् भक्ष्यानाह—वृंहणा इत्यादि। गौड़िका इति समितावेष्टिता गुड़प्रधानोदरा गौड़िका इत्युच्यते। मध्वित्यादि। समितावेष्टिताः पाकघनीभूतां मधुरा घृतोदरा मधुमस्तकाः, त एव मधुशीर्षका उच्यन्ते, केचिन्मधुमस्तकशब्देन सट्टकमाहुः। संयावाः पुनः—"समितां मधुदुग्धेन मोदयित्वा सुशोभनाम्। पचेत् घृतोत्तरे खण्डे क्षिपेत्खाण्डे नवे ततः। संयावोऽसौ युतश्चूर्णैः खण्डैलामरिचार्द्रकैः" इति। पूपाः पूया इति लोके। मोदकाः लड्डुकाः। सट्टकगुणमाह—दीपन इत्यादि। मृष्टतमः अतिशयेन स्वादुः। सट्टकभेदा बहवः। तत्रैक एव लिख्यते—"लवङ्गव्योषखण्डैस्तु दधि निर्म्मथ्य गालितम्। दाड़िमवीजसंयुक्तं चन्द्रचूर्णावचूर्णितम्। सट्टकं सुप्रमोदाख्यं नलादिभिरुदाहृतम् ॥" इति। अपरे विस्तरभयान्न लिखिताः। विष्यन्दगुणमाह—हृद्य इत्यादि। "आमगोधूमचूर्णञ्च सर्पिःक्षीरगुड़ान्वितम्। नातिसान्द्रो नातिघनो विष्यन्दो नाम नामतः" इति। अन्ये तु घृतभृष्टतण्डुलान् विष्यन्दशब्देनाहुः, तन्नेच्छति गयी ॥ ४३५—४४१ ॥

बृंहणा वातपित्तघ्ना भक्ष्या बल्यास्तु सामिताः।
हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥ ४४२ ॥
मुद्गादिवेसवाराणां पूर्णा विष्टम्भिनो मताः।
वेशवारैः सपिशितैः सम्पूर्णा गुरुबृंहणाः ॥ ४४३ ॥
पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः ॥ ४४४ ॥
वीर्य्योष्णाः पैष्टिका भक्ष्याः कफपित्तप्रकोपणाः।
विदाहिनो नातिबला गुरवश्च विशेषतः ॥ ४४५ ॥
वदला लघवो भक्ष्याः कषाया सृष्टमारुताः।
विष्टम्भिनः पित्तसमाः श्लेष्मघ्ना भिन्नवर्च्चसः ॥ ४४६ ॥
बल्या वृष्यास्तु गुरवो विज्ञेया माषसाधिताः ॥ ४४७ ॥
कूर्च्चिका विकृता भक्ष्या गुरवो नातिपित्तलाः ॥ ४४८ ॥
विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः।
विदाहोत्क्लेशजनना रुक्षा दृष्टिप्रदूषणाः ॥ ४४९ ॥
हृद्याः सुगन्धिनो वृष्या लघवा घृतपाचिताः।
वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥ ४५० ॥
विदाहिनस्तैलकृता गुरवः कटुपाकिनः।
उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥ ४५१॥

समिताकृतं सामान्यगुणं क्वचित् किञ्चिन्निराकुर्व्वन्नाह—बृंहणा इत्यादि। सामिता इति फेनकादिविशेषणं, समिता गोधूमचूर्णं तया कृताः सामिताः, अन्ये बृंहणा इत्यादयः समिताकृत-भक्ष्याणां सामान्यगुणाः। हृद्या इत्यादयस्तु समिताकृतभक्ष्यविशेषफेनकादिगुणा इत्याहुः, तत्र फेनकाः "विमर्द्य विमलां शुक्लां समितां नातिशर्करां। संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत्। फेनकं फेनसङ्काशं सम्पूर्णशशिसन्निभम् ॥" इति ॥ ४४२ ॥

एत एव सामितादयो मुद्गादिन्यस्तगर्भा भवन्ति, तदा तद्गुणं निर्द्दिशन्नाह—मुद्गादीत्यादि। खिन्नपिष्टमुद्गादिकल्का वेसवाराः, पूर्णा भरिता। पिशितवेसवारैर्भरितगुणमाह—वेशवारैः सपिशितैरिति पिशितवेसवारैरित्यर्थः, अपरे वेसवारं शुण्ठ्यादिकृतमाहुः। सम्पूर्णा भरिताः। इमेऽपि सामिताः। पालला इति पललं तिलपिष्टं गुडाद्युपेतं, तेन कृताः पाललाः, इमेऽपि सामिताः। शष्कुल्य इति। शष्कुल्यः शांकुलीति लोके। सामितान् भक्ष्यानभिधाय पिष्टभक्ष्यान् निर्द्दिशन्नाह—वीर्य्योष्णा इत्यादि। पैष्टिकाः तण्डुलपिष्टकृताः। वैदला इति वैदला मुद्गादि कृताः। बल्या वृष्यास्त्विति। विग्रथितं क्षीरं घनत्वमापन्नं कूर्च्चिका, तया विविधप्रकाराः कृताः कूर्च्चिकाविकृताः। विरूढककृता इत्यादि। विरूढककृता अङ्कुरितमुद्गाविकृताः ॥ ४४३—४४९ ॥

घृततैलपक्वभक्ष्यस्य गुणविशेषमाह—हृद्या इत्यादि ॥ ४५०।४५१ ॥

फलमांसेक्षुविकृति-तिलमाषोपसंस्कृताः ।
भक्ष्या वल्यास्तु गुरवो बृंहणा हृदयप्रियाः ॥ ४५२ ॥
कपालाङ्गारपक्कास्तु लघवो वातकोपनाः ।
सुपक्कास्तनवश्चापि भूयिष्ठं लघवो मताः ॥ ४५३ ॥
सकिलाटादयो भक्ष्या गुरवः कफवर्द्धनाः ॥ ४५४ ॥
कुल्माषा वातला रुक्षा गुरवो भिन्नवर्च्चसः ॥ ४५५ ॥
उदावर्त्तहरो वाट्यः कासपीनसमेहनुत् ॥ ४५६ ॥
धानोल्लुम्बास्तु लघवः कफमेदोविशोषणाः ॥ ४५७ ॥
शक्तवो बृंहणा वृष्यास्तृष्णापित्तकफापहाः ।
पीताः सद्योवलकरा भेदिनः पवनापहाः ॥ ४५८ ॥
गुर्व्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ४५९ ॥
लाजाश्छर्द्द्यतिसारघ्ना दीपनाः कफनाशनाः ।
वल्याः कषायमधुरा लघवस्तृण्मलापहाः ॥ ४६०।४६१ ॥
तृट्छर्द्दिदाहघर्म्मार्त्ति-नुदस्तत्सक्तवो मताः ।
रक्तपित्तहराश्चैव दाहज्वरविनाशनाः ॥ ४६२ ॥

योनिविशेषेण भक्ष्याणां गुणागुणविशेषं दर्शयन्नाह—फलेत्यादि । फलानि तालादीनि । कपालाङ्गारपक्कानां स्नेहसिद्धाल्लघुत्वं दर्शयन्नाह—कपालाङ्गारपक्कास्त्वित्यादि । कपालं कर्परः, तत्र पक्का मण्डकादयः, अङ्गारपक्काः अङ्गारककर्कटीप्रभृतयः । सकिलाटादय इत्यादि । किलाटः क्षीरकूर्च्चिकापिण्डः, आदिशब्दात् तक्रपिण्डकादयः ॥ ४५२—४५४ ॥

कुल्माषा इत्यादि । यवपिष्टमुष्णोदके सिक्तमीषत्स्विन्नमृदितं शृङ्गाटादिप्रकारं कुल्माषमाहुः ; यवादयः स्विन्ना इत्येके । भिन्नवर्च्चसो द्रवमलाः । उदावर्त्तहरा उदावर्त्तनाशकाः । वाट्येत्यादि । वाट्यो यवगोधूमादिभिर्दलितैः कृतः ; अन्ये तु भृष्टयवकृतो भक्ष्य इत्याहुः । धानेत्यादि । धाना भृष्टयवाः, उल्लुम्बा होलका ; अत्र मुद्गकलायादिसिम्बा अग्निपक्का होलका इत्युच्यते । वाट्यधानाप्रसङ्गेन यवशक्तूनाह—शक्तव इत्यादि । शक्तवो यवशक्तवः, बृंहणा न लेखना मांसकरा इत्यर्थः । तृष्णापित्तकफापहा इत्यत्र तृष्णापित्तमलापहा इति क्वचित्, तत्र मलापहत्वमल्पमलकर्त्तृत्वात् । सद्योवलकरत्वं रौक्ष्यान्नोत्तरकालम् । खरमार्दवभेदेन गुरुलाघवमाह—गुर्व्वीत्यादि । खरा कठिनेत्यर्थः । विपर्य्ययादिति मृदुरित्यर्थः । पिण्डीमभिधायावलेहिकामाह—शक्तूनामित्यादि । शक्तूनामवलेहिकेति सम्बन्धः ॥ ४५५—४५९ ॥

अधुना लाजगुणमाह—लाजा इत्यादि । मलापहत्वमल्पकर्त्तृत्वात् । लाजशक्तुगुणमाह—

पृथुका गुरवः स्निग्धा बृंहणाः कफवर्द्धनाः।
बल्याः सक्षीरभावात् तु वातघ्ना भिन्नवर्च्चसः ॥ ४६३ ॥
सन्धानकृत् पिष्टमामं तण्डुलं क्रिमिमेहनुत् ॥
सुदुर्ज्जरः स्वादुरसो बृंहणस्तण्डुलो नवः ॥ ४६४ ॥
सन्धानकृन्मेहहरः पुराणस्तण्डुलः स्मृतः ॥ ४६५ ॥
द्रव्यसंयोगसंस्कार-विकारान् समवेक्ष्य तु।
यदा कारणमासाद्य भोक्तृणां छन्दतोऽपि वा।
अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥ ४६६ ॥
अतः सर्व्वाण्यनुपानान्युपदेक्ष्यामः ॥ ४६७ ॥
अम्लेन केचिद् विहता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति।
तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदन्ति पथ्यम् ॥ ४६८ ॥
शीतोष्णतोयासवमद्ययूष-फलाम्लधान्याम्लपयोरसानाम्।
यस्यानुपानन्तु हितं भवेद्यत् तस्मै प्रदेयं त्विह मात्रया तत् ॥ ४६९ ॥
व्याधिञ्च कालञ्च विभाव्य धीरैर्द्रव्याणि भोज्यानि च तानि तानि ॥४७०॥

तृडित्यादि। ततसक्तवः लाजशक्तवः। पृथुकागुणमाह—पृथुका इत्यादि। आर्द्रशालिधान्यं भृष्टं मुषलघातचिप्पटीभूतावयवं पृथुका इत्युच्यते, चिँड़ेति लोके। धान्यपिष्टगुणमाह—सन्धानकृदित्यादि। सन्धानं भग्नस्य, आममपक्वमित्यर्थः। नवानवतण्डुलगुणमाह—सुदुर्ज्जर इत्यादि। किं बहुना आनन्त्याद्द्रव्यसंयोगसंस्काराणां न शक्यन्ते सर्व्वेऽपि संग्रहाः कर्त्तुं, तस्मादुक्तानुक्तसंग्रहायाह—द्रव्येत्यादि। विकारान् भक्ष्यविशेषान्, कारणमासाद्य इति दोषादिप्रकोपं प्राप्येत्यर्थः, भोक्तृणां छन्दतोऽपि वेति पुरुषाभिलाषत इत्यर्थः। इति भक्ष्यवर्गः ॥ ४६०—४६६ ॥

अनुपानं निर्द्देष्टुमाह—अनुपानानीत्यादि। अन्नादनु पश्चात् पीयत इति अनुपानम्। अनुपानं कुत्र हितावहमित्याह—अम्लेनेत्यादि। विहता उद्वेजिताः, माधुर्य्ययोगे इति माधुर्य्योपयोगे इत्यर्थः प्रणयीभवन्ति सुखीभवन्तीति, तथा अम्लयोगे इत्यत्रापि प्रणयीभवन्तीति सम्बन्धनीयम्। तेषाम् उभयेषामपि अम्लतृप्तानां मधुरतृप्तानाञ्चेत्यर्थः, यथेष्टं यथाभिलषितं अम्लतृप्तस्य मधुरं पथ्यं, मधुरतृप्तस्य चाम्लमित्यर्थः। तस्माद्रसषट्केऽपि परस्परविरुद्धमनुपानं ज्ञेयं, रसद्वयस्योपलक्षणत्वात्; अथवा शेषरसानां तृप्त्या भोक्तुमशक्यत्वाच्छेषरसानामनुक्तिः। अनुपानद्रव्याणि सङ्कलय्याह—शीतोष्णेत्यादि। द्रवप्रधान आसवः, द्रवप्रधानं द्रव्यप्रधानञ्च मद्यमुच्यते। यूषो मुद्गादीनां, फलाम्लानि बीजपूरादीनि, धान्याम्लं काञ्जिकं, पयो दुग्धं, रसो मांसरसः, यस्य पुरुषस्य, व्याधिं व्रणज्वरादिकं, कालमावस्थिकं आर्त्तवञ्च, विभाव्य विशेषेण ज्ञात्वा, द्रव्याणि तैलादीनि,

सर्व्वानुपानेषु वरं वदन्ति मेध्यं यदम्भः शुचिभाजनस्थम्।
लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्व्वरसाश्च दृष्टाः॥ ४७१॥
सङ्क्षेप एषोऽभिहितोऽनुपानेष्वतःपरं विस्तरतो विधास्ये॥ ४७२॥

उष्णोदकानुपानन्तु स्नेहानामथ शस्यते।
ऋते भल्लातकस्नेहात् स्नेहात् तौवरकात् तथा॥ ४७३॥
अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिके॥ ४७४॥
शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्व्वशः।
दधिपायसमद्यार्त्ति-विषजुष्टे तथैव च॥ ४७५॥
केचित् पिष्टमयस्याहुरनुपानं सुखोदकम्॥ ४७६॥
पयो मांसरसो वापि शालिमुद्गादिभोजिनाम्।
युद्धाध्वातपसन्ताप-विषमद्यरुजासु च॥ ४७७॥
माषादेरनुपानन्तु धान्याम्लं दधिमस्तु वा॥ ४७८॥
✓मद्यं मद्योचितानान्तु सर्व्वमांसेषु पूजितम्॥ ४७९॥
अमद्यपानामुदकं फलाम्लं वा प्रशस्यते॥ ४८०॥
क्षीरं घर्म्माध्वभाष्यस्त्री-क्लान्तानाममृतोपमम्॥ ४८१॥
सुरा कृशानां स्थूलानामनुपानं मधूदकम्॥ ४८२॥

भोज्यानि रक्तशाल्यादीनि, एतत्सर्व्वमूहापोहविदा ज्ञात्वा अनुपानं विधेयमिति, किं बहुना सर्व्वानुपानेष्वपि मेध्यमान्तरिक्षं जलम्॥ ४६७—४७२॥

सङ्क्षेपमभिधाय विस्तरमाह—अतःपरमित्यादि। ऋते विना इत्यर्थः। भल्लातकस्यात्यन्तोष्णत्वाच्छीतजलम्। तौवरकादिति "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः। वृक्षास्तुवरनामानः पश्चिमार्णवतीरजाः" इति, तद्भवस्तौवरकः। स्नेहप्रसङ्गेन एकीयमतं तैलानुपाने निर्द्दिशन्नाह—अनुपानमित्यादि। उष्णकाले यूषं, शीतकाले काञ्जिकम्। शीतोदकं माक्षिकस्येति माक्षिकस्य मधुनः, पिष्टान्नस्य तण्डुलपिष्टस्य, दधि प्रसिद्धं, पायसं क्षीरसिद्धास्तण्डुलाः, पायसस्य गुरुत्वेन विदाहसम्भवाच्छीतोदकं पेयम्, मद्यार्त्तिः मद्यविदाहः, विषजुष्टे विषव्यामोहे, तथैव चेति शीतोदकमेव। केचिदित्यादि सुखोदकं ईषदुष्णमुदकम्। पय इत्यादि। युद्धं संग्रामः, आतपो घर्म्मः, सन्ताप अग्न्यादीनाम्। विषमद्यरुजासु इति विषरोगेषु मदात्यये चेत्यर्थः। शालिषु पयोऽनुपानं सामान्यमप्यौचित्यात् (समानमप्यचिन्त्यत्वात्) संयोगशक्तीनां, जेज्झटस्तु पयःस्थाने मस्तु इच्छति, पयोग्रहणस्य गोरसोपलक्षणत्वात् तदपि लभ्यत एवेत्यन्ये। माषादेरित्यादि। धान्याम्लं काञ्जिकम्। मद्यमिति मद्योचितानां मद्ययोग्यानां, पूजितं प्रशस्तम्। अमदेत्यादि। फलाम्लं दाडिमादि। क्षीरमित्यादि। घर्म्मादिक्लान्तानाम् आतपादिपीडितानाम्। सुरा कृशानामिति कृशानां दुर्व्वलानां,

निरामयानां चित्रन्तु भक्तमध्ये प्रकीर्त्तितम् ॥ ४८३ ॥
स्निग्धोष्णं मारुते पथ्यं कफे रुक्षोष्णमिष्यते।
अनुपानं हितञ्चापि पित्ते मधुरशीतलम् ॥ ४८४ ॥
हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥ ४८५ ॥
अर्कश्लेलुशिरीषाणामासवास्तु विषार्त्तिषु ॥ ४८६ ॥
अतः परन्तु वर्गाणामनुपानं पृथक् पृथक्।
प्रवक्ष्याम्यानुपूर्व्व्येण सर्व्वेषामेव मे शृणु ॥ ४८७ ॥

तत्र पूर्व्वशस्यजातीनां बदराम्लम्। वैदलानां धान्याम्लम्। जङ्गालानां धन्वजानाञ्च पिप्पल्यासवः। विष्किराणां कोलबदरासवः। प्रतुदानां क्षीरवृक्षासवः। गुहाशयानान्तु खर्ज्जूरनारिकेलासवः। प्रसहानामश्वगन्धासवः। पर्णमृगाणां कृष्णगन्धासवः। विलेशयानां फलसारासवः, एकशफानां त्रिफलासवः। अनेकशफानां खदिरासवः। कूलचराणां शृङ्गाटककशेरुकासवः। कोशवासिनां पादिनाञ्च तदेव। प्लवानामिक्षुरसासवः। नादेयानां मत्स्यानां मृणालासवः। सामुद्राणां मातुलुङ्गासवः। अम्लानां फलानां पद्मोत्पल-

सुरा अनु शस्तेति सम्बन्धः। मधूदकं मधुमिश्रजलम्। निरामयानामिति निरामयानां स्वस्थानां, चित्रं नानाप्रकारम् ॥ ४७२—४८३ ॥

स्निग्धोष्णमिति अनुपानमिति सम्बन्धः। शोणितपित्तिभ्यो रक्तपित्तिभ्य इत्यर्थः। अत्रापि अनुपानमित्यनुवर्त्तते। अर्कश्लेल्वित्यादि। विषार्त्तिषु विषपीड़ासु, अर्कादीनामासवा अनुपानानि। श्लेलुः श्लेष्मान्तकः। अत इत्यादि। आनुपूर्व्व्येण यथाक्रमेण, सर्व्वेषामेव शाल्यादिवर्गाणामित्यर्थः। मे मत्सकाशात् ॥ ४८४—४८७ ॥

तत्रेत्यादि। पूर्व्वशस्यजातीनां प्रागुक्तान्नसमूहानां, तानि च शूकधान्यकुधान्यशमीधान्यानि। वैदलानामिति। जङ्गालानामेणादीनां, धन्वजानां वर्त्तकादीनां पक्षिणाम्। विष्किराणामिति। विष्किराणां तेषामेव वर्त्तकादीनाम्, एतेन विष्किराणां पिप्पलीकोलबदरासवौ द्वावप्यनुपानं, कोलं स्वल्पबदरं, बदरं मध्यमप्रमाणं बदरम्। प्रतुदानामिति। कृष्णगन्धः शोभाञ्जनकः। विलेशयानामिति। एकशफानाम् अश्वादीनाम्। अनेकशफानामिति अनेकशफाः छागादयः। एवमयं मांसवर्गो जङ्गालादिभेदेनाष्टविधोऽनुपानेनोक्तः। अनूपवर्गस्य पञ्चविधस्यानुपानं निर्दिशन्नाह—कूलचराणामित्यादि। तदेव इति शृङ्गाटककशेरुकासवोऽनुपानमित्यर्थः। प्लवानामिति अनूपवर्गमपि पञ्चविधमभिधाय फलानामनुपानं निर्दिशन्नाह—अम्लानामित्यादि। अम्लफलानां दाड़िमादीनाम्।

कन्दासवः । कषायाणां दाड़िमवेत्रासवः । मधुराणां त्रिकटुकयुक्तः कन्दासवः* । तालफलादीनां धान्याम्लम् । कटुकानां दूर्व्वानलवेत्रासवः । पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः । कुष्माण्डादीनां दार्व्वीकरीरासवः । चुच्चुप्रभृतीनां लोध्रासवः । जीवन्त्यादीनां त्रिफलासवः । कुसुम्भशाकस्य स एव । मण्डूकपर्ण्यादीनां महापञ्चमूलासवः । तालमस्तकादीनामम्लफलासवः । सैन्धवादीनां सुरासव आरनालश्च । तोयं वा सर्व्वत्रेति ॥ ४८८ ॥

भवन्ति चात्र

सर्व्वेषामनुपानानां माहेन्द्रतोयमुत्तमम् ।
सात्म्यं वा यस्य यत् तोयं तत् तस्मै हितमुच्यते ॥ ४८९ ॥
उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥ ४९० ॥
दोषवद् गुरु वा भुक्तमतिमात्रमथापि वा ।
यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति ॥ ४९१ ॥
रोचनं बृंहणं वृष्यं दोषसङ्घातभेदनम् ।
तर्पणं मार्द्दवकरं श्रमक्लमहरं सुखम् ।
दीपनं दोषशमनं पिपासाच्छेदनं परम् ।
बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥ ४९२ ॥

कषायाणामिति कषायाणां क्षीरवृक्षादिफलानाम् । मधुराणामिति मधुराणां द्राक्षादीनां वातामाभिषुकादीनाञ्च । तालेत्यादि । कटुकानां फलानामित्यर्थः । पिप्पल्यादीनामित्यादि । श्वदंष्ट्रा गोक्षुरकः, वसुकः वुकः, केदारगिरौ वगहुल इति प्रसिद्धः । शाकानामनुपानं निर्द्दिशन्नाह—कुष्माण्डकादीनामित्यादि । चुच्चूः चुचूः । जीवन्त्यादीनामित्यादि । जीवन्ती डोड़ी । कुसुम्भेत्यादि । स एव त्रिफलासवः । मण्डूकेत्यादि । मण्डूकपर्णी ब्राह्मी । तालमस्तकादीनामनुपानमाह—तालमस्तकादीनामित्यादि । तालमस्तकादीनां तालमस्तकमज्जादीनाम् । सैन्धवादीनामिति । सर्व्वत्र सर्व्ववर्गेषु ॥ ४८८ ॥

सर्व्वेष्वेवानुपानेषु तोयस्य प्राधान्यं दर्शयन्नाह—सर्व्वेषामित्यादि । माहेन्द्रतोयम् आन्तरीक्षमुदकम् । शेषमपि भौममुदकं नियमयन्नाह—सात्म्यं वेत्यादि । यत्तोयमिति नदीनदसरस्तड़ागकूपोदकमित्यर्थः । उष्णशीतभेदेनानुपानमाह—उष्णमित्यादि । सर्व्वेषामेवानुपानानामुक्तानां गुणं निर्द्दिशन्नाह—दोषवदित्यादि । दोषवदिति वातादिदोषकरम् । सुखमिति अदोषमित्यर्थः । दोषसङ्घातभेदनं दोषसमूहपृथक्करणं, तर्पणं तृप्तिजनकं, मार्द्दवकरं शरीरकोमलतोत्पादकं, सुखं स्वास्थ्योत्पादकं, दोषशमनं वातादिशमनं, पिपासाच्छेदनं पिपासाविनाशकं, परमतिशयेन,

* कन्दासव इत्यत्र खण्डासव इति क्वचित् पाठः ।

तदादौ कर्शयेत् पीतं स्थापयेन्मध्यसेवितम्।
पश्चात् पीतं बृंहयति तस्माद् वीक्ष्य प्रयोजयेत् ॥ ४९३ ॥
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम्।
भवत्याबाधजननमनुपानमतः पिबेत् ॥ ४९४ ॥
न पिबेच्छ्वासकासार्त्तो रोगे चापूर्द्ध्वजत्रुगे।
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥ ४९५ ॥
पीत्वाध्वभाष्याध्ययन-गेयस्वप्नान् न शीलयेत् ॥ ४९६ ॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम्।
स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद् बहून् ॥ ४९७ ॥
गुरुलाघवचिन्तेयं स्वभावं नातिवर्त्तते।
तथा संस्कारमात्रान्न-कालांश्चाप्युत्तरोत्तरम् ॥ ४९८ ॥

सदोच्यत इति एवंविधमनुपानं सर्व्वदा कथ्यते। अन्ये दोषवदित्याद्यनुपानस्य फलं, रोचनमित्यादयस्तु सामान्यानुपानगुणा इत्याहुः ॥ ४८९—४९२ ॥

तदनुपानं भोजनादिमध्यान्तविभागेन गुणविशेषं करोतीति दर्शयन्नाह—तदादावित्यादि। तदनुपानं, आदौ भोजनस्य, कर्शयेदतिशयेन शरीरस्य कृशत्वमापादयेत्। स्थापयेत् न कर्शयति नापि स्थूलयति, अपि तु मध्यं करोतीत्यर्थः। पश्चात् पीतं बृंहयति पुष्टिमापादयति, तस्माद् वीक्ष्य प्रयोजयेदिति कार्श्यमिच्छन्नादौ, मध्यवपुरिच्छन् मध्य एव, पुष्टिमिच्छन्नन्त इति। अनुपानमिति अनुशब्दं लक्ष्यार्थमाहुः, आहारं लक्षीकृत्य पानमिति, आहारमाश्रित्य यत् पीयत इत्यर्थः; तेन मध्यान्तयोरप्यनुपानशब्दः प्रयुक्तो भवति ॥ ४९३ ॥

अनुपानव्यतिरेके दोषं दर्शयन्नाह—स्थिरतामित्यादि। स्थिरतामचलतां, अक्लिन्नं शुष्कमित्यर्थः। अद्रवपायिनामनुपानमपिबतां, आबाधजननं पीड़ाकरम्। कस्यचित् पुरुषविशेषस्यानुपाननिषेधमाह—न पिबेदित्यादि। आर्त्तः पीड़ितः, ऊर्द्ध्वं जत्रुगे इति जत्रुर्ग्रीवामूलं तस्योर्द्ध्वं भागे, क्षतोरस्क इति उरःक्षतरोगवानित्यर्थः। प्रसेकी लालास्रावी, उपहत इति वातादिभिरित्यर्थः। अनुपाने पीते सति यद् वर्ज्जनीयं तदाह—पीत्वेत्यादि। अध्वा मार्गः, भाष्यं बहुभाषणं, अध्ययनं पठनं, गेयं गीतं, न शीलयेदिति न सेवेतेत्यर्थः। कस्मादेतान् न शीलयेदित्याह—प्रदूष्येत्यादि। प्रदूष्य वातादीनां प्रकोपं कृत्वा। तद्धीति तदनुपानं, हि यस्मादर्थे। तस्य पुरुषस्य, स्यन्दं श्लेष्मस्रवणम् ॥ ४९४—४९७ ॥

गुरुलाघवस्य द्रव्यरसवीर्य्यविपाकाश्रयस्य च शरीरादि भेदेनोक्तस्य यथास्वातिशयेन व्यवस्थां कुर्व्वन्नाह—गुर्व्वित्यादि। नातिवर्त्तते न त्यजति। जङ्गाला जाङ्गलचारिणः कुतो लघव इत्युक्तेऽवश्यमेव स्वभावो वाच्यः, एवं शरीरधात्ववयवादिष्वपि वाच्यम्, तथा संस्कार नातिवर्त्तते, यथा स्वभावाद् गुरोरपि व्रीहेर्लाजा लघवः, लघोरपि शालेः संस्कारात् पिष्टमेव गुरु, तथा मात्रां

मन्दकर्म्मानलारोग्याः सुकुमाराः सुखोचिताः ।
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्त्त्यते ॥
बलिनः खरभक्ष्या ये ये च दीप्ताग्नयो नराः ।
कर्म्मनित्याश्च ये तेषां नावश्यं परिकीर्त्त्यते ॥ ४९९ ॥

इति सर्व्वानुपानवर्गः ।

अथाहारविधिं वत्स विस्तरेणाखिलं शृणु ॥ ५०० ॥
आप्तान्वितमसङ्कीर्णं शुचि कार्य्यं महानसम् ॥ ५०१ ॥
तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् ।
शुचौ देशे सुसंगुप्तं समुपस्थापयेद् भिषक् ॥ ५०२ ॥
विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः ।
सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् ॥ ५०३ ॥

नातिवर्त्तते, यथा—"गुरूणामर्द्धलौहित्यं लघूनां तृप्तिरिष्यते" इति। अन्नञ्च नातिवर्त्तते, तद् यथा—मण्डपेयाविलेपीभक्तापूपादि यथोत्तरं गुरु, यथापूर्व्वं लघ्विति। कालञ्च नातिवर्त्तते, यथा "नवं धान्यमभिष्यन्दि लघु सम्वत्सरोषितम्" इति। उत्तरोत्तरमिति स्वभावात् संस्कारं, संस्कारान्मात्रां, मात्रातोऽन्नं, अन्नात् कालं, गुरुलाघवचिन्ता नाति वर्त्तते इत्यर्थः। चकारादिहापि चराद्याश्चानुक्ता अपि समुच्चीयन्ते ॥ ४९८ ॥

इयं गुरुलाघवचिन्ता विशिष्टपुरुषाश्रयेति ज्ञापनायाह—मन्दकर्म्मेत्यादि। मन्दकर्म्माणो ऽलसाः, मन्दानला मन्दाग्नयः, मन्दारोग्या रोगिणः, सुकुमारा मृदुदेहाः, सुखोचिताः सुखिनः, जन्तवः प्राणिनः, चिन्तेयमिति गुरुलाघवलक्षणा, परिकीर्त्त्यते कथ्यते इत्यर्थः। यान् प्रति नेयं चिन्ता तानपि दर्शयन्नाह—बलिन इत्यादि। बलिनः शक्त्युपचययुक्ताः, एतेनवारोग्यत्वमुक्तं, खरभक्ष्याः असृदुभोजनाः, कर्म्मनित्याः सदा कर्म्मकारिणः। परिकीर्त्त्यते इति गुरुलाघवचिन्तेयमिति शेषः ॥ ४९९ ॥ इति सर्व्वानुपानवर्गः ।

अथाहारविधिमाह—अथेत्यादि। अखिलं समस्तं, शृणु आकर्णय। पाकस्थानं कीदृक् कार्य्यमित्याह—आप्तान्वितमित्यादि। आप्ता अव्यभिचारिणः, तैरन्वितं आश्रितं, असङ्कीर्णम् असङ्कटं, महानसमिति पाकस्थानं, रन्धनागारमिति लोके; सुसंस्कृतस्यान्नस्य स्थानमाह—तत्रेत्यादि। आप्तैः सुसंस्कृतमिति सम्बन्धः। गुणसम्पन्नमिति गुणसम्पन्नम् इष्टरसगन्धस्पर्शवर्णोपेतं, भक्ष्यम् अन्नं अभ्यवहरणीयं, सुसंगुप्तम् अतिशयेनादृश्यं, समुपस्थापयेत् निवेशयेत्, शुचौ देशे इति सम्बन्धः, भिषक् वैद्यः। तस्याहारस्यैवंगुणस्य दूषणकरविषनाशनं निर्द्दिशन्नाह—विषघ्नैरित्यादि। विषघ्नैर्विषहारिभिः, अगदैरौषधैः, स्पृष्टं युक्तं, प्रोक्षितं व्यजनोदकैरिति अथर्व्वमन्त्रैरभिमन्त्रितं; अन्ये तु व्यजनोदकैरिति अगदस्यैव विशेषणं कथयन्ति, तेषां मते अगदोदकक्षालितव्यजनैर्वीजितमविषीभवत्यन्नम्। तन्त्रमभिधाय मन्त्रमपि निर्द्दिशन्नाह—सिद्धैरित्यादि। सिद्धैरव्यभिचारिभिः कुरुकुल्लाफेरुण्डाप्रभृतिभिर्हतविषमन्नमिति सम्बन्धः। निवेदयेत् नृपतये इति शेषः ॥५००—५०३॥

वक्ष्याम्यतः परं कृत्स्नामाहारस्योपकल्पनाम्।
घृतं कार्ष्णायसे देयं पेया देया तु राजते॥
फलानि सर्व्वभक्ष्यांश्च प्रदद्याद् वै दलेषु च।
परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत्॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत्।
कट्वराणि खड्डांश्चैव सर्व्वान् शैलेषु दापयेत्॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः।
पानीयं पानकं मद्यं मृन्मयेषु प्रदापयेत्॥
काचस्फटिकपात्रेषु शीतलेषु शुभेषु च।
वैदूर्य्यचित्रेषु रागषाड़वसट्टकान्॥
पुरस्ताद् विमले पात्रे सुविस्तीर्णे मनोरमे।
सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान्॥

वक्ष्यामीत्यादि। कृत्स्नां समस्तां, उपकल्पनां समीपढौकनां। आधारापेक्षणीयमेव प्रथमं कल्पनं निर्द्दिशन्नाह—घृतमित्यादि। कार्ष्णायसे कृष्णलोहपात्रे, कान्तलोहपात्रे इत्यन्ये। पेयेति राजते रौप्यमये। फलानीति। भक्ष्या लड्डुकादयः। वैशब्दः पादपूरणे। दलेषु पत्रेषु, अन्ये तु वैदलेषु चेत्यत्र वेत्रवंशादित्वग्ग्रथितेषु पर्णमयेष्विति मन्यन्ते। परिशुष्केत्यादि। "सिक्तं बहुघृते भृष्टं मुहुरुष्णाम्बुना मृदु। जीरकाद्यैर्घनं मांसं परिशुष्कं तदुच्यते। तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्॥"

प्रद्रवाणीत्यादि। प्रद्रवाणि प्रकृष्टद्रवाणि मण्डादीनि, रसो मांसरसः, उपहारयेद् दद्यात्। कट्वरं तक्रं, अन्ये तु—"सौवीराम्लमथात्यम्लं काञ्जिकं कट्वरं विदुः। अन्ये तु तदधोभागं तक्रं वा ह्यम्लतां गतम्। सस्नेहं दधिजं तक्रमाहुरन्ये तु कट्वरम्॥" इति। खड्डो यूषविशेषः, सतक्रशमीधान्यः सतक्रशाकश्च, शैलेषु पाषाणमयेषु। दद्यादित्यादि। पयः क्षीरम्। पानीयमित्यादि। मृन्मयेषु मृत्तिकादिमयेषु शरावादिषु। काचेत्यादि। शुभेषु भव्येषु, वैदूर्य्यं रत्नविशेषः, चित्रेषु विचित्रेषु, तत्र रागः "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूपकैः। जम्बूफलरसैर्युक्तो रागो राजिकया कृतः" इति। षाड़वाः पुनर्मधुराम्ललवणसंयोगजा नानाविधाः, विशेषतः सूदेभ्यो ज्ञेयाः। सट्टकस्तु "लवङ्गव्योषखण्डैस्तु दधि निर्म्मथ्य गालितं। दाड़िमीवीजसंयुक्तं चन्द्रचूर्णविचूर्णितम्। सट्टकन्तु प्रमोदाख्यं नलादिभिरुदाहृतम्॥" इति। दद्याद् वैदूर्य्यचित्रेष्वित्यस्य स्थाने वज्रवैदूर्य्यचित्रेष्विति केचित् पठन्ति, तत्र वज्रं शतकोटिकं रत्नं हीरक इत्यर्थः। एष्वाधारेषु दीयमानानामेषां हितकारित्वम्।

आधारविशेषमभिधाय देशविशेषं आहारविशेषं दर्शयन्नाह—पुरस्तादित्यादि। पुरस्ताद् अग्रतः, पुरौदनं हि ग्रहणसौकर्य्यात्, पात्रे स्थाल्यादिके, सुविस्तीर्णे बहुले, मनोरमे रुचिजनके,

फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च ।
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खड़ान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥
सर्व्वान् गुड़विकारांश्च रागषाड़वसट्टकान् ।
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ५०४ ॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ।
भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ ।
सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् ॥ ५०५ ॥
विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टै रसादिभिः ।
मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् ॥ ५०६ ॥
पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ ।
पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥ ५०७ ॥

सूदः सूपकारः, सूपसहितम् ओदनं भक्तं, प्रदेहान् प्रलेहान् । फलानीति । परिशुष्काणि पूर्व्ववत् । दक्षिणपार्श्वे दक्षिणभागे, भुञ्जानस्य भोजनं कुर्व्वतः, उपकल्पयेत् समीपं ढौकयेत् । प्रद्रवाणीति । प्रद्रवादयः पूर्व्ववत् । सव्ये पार्श्वे वामभागे । सर्व्वानिति । रागषाड़वसट्टकाः पूर्व्ववत्, पुरस्तात् अग्रत इत्यर्थः । न केवलं पुरस्तात्, द्वयोरपि च मध्यतः द्वयोः पक्षयोर्मध्ये एकस्मिन् पक्षे दद्यात् । एतेन सर्व्वत्र दातव्यमित्युक्तं भवति ॥ ५०४ ॥

एवमित्यादि । एवमुक्तप्रकारेण भोजनस्योपकल्पनां विज्ञाय भोक्तारञ्च विज्ञायेति सम्बन्धः । विजने एकान्ते, विजने हि भुञ्जानस्य दुष्टदृष्टिनिपातादिदोषो न भवति, रम्ये मनोहरे, निःसम्बाधे लोष्ठरहिते, तत्र भुञ्जानस्य पांशुप्रक्षेपादिदोषो न भवति । शुभे वास्तुदोषरहिते, शुचौ पवित्रे तत्र न भूताद्यावेशः । समे निम्नोन्नतत्वरहिते । कीदृगशनं हितमित्याह—विशिष्टमित्यादि । विशिष्टं श्रेष्ठं, कः कृत्वा ? इष्टसंस्कारैः । पथ्यैरिष्टै रसादिभिरिति । पथ्यैर्हितैः, इष्टैः प्रियैः, आदिशब्दात् गन्धवर्णस्पर्शा गृह्यन्ते । प्रत्यग्रम् अभिनवं, अशनं भोजनम् ॥ ५०५ । ५०६ ॥

कालभेदेनाप्याहारविधिं निर्द्दिशन्नाह—पूर्व्वमित्यादि । बुभुक्षिते पुरुषे वातपित्तप्रशमनाय प्रथमं मधुरो रसः पक्काशयगतं वायुं जयति । अम्ललवणौ मध्यभोजनस्थौ पित्ताशये अग्निदीप्तिं

आदौ फलानि भुञ्जीत दाड़िमादीनि बुद्धिमान्।
ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम्।
घनं पूर्व्वं समश्नीयात् केचिदाहुर्विपर्य्ययम् ॥ ५०८ ॥
आदावन्ते च मध्ये च भोजनस्य तु शस्यते।
निरत्ययं दोषहरं फलेष्वामलकं नृणाम् ॥ ५०९ ॥
मृणालविसशालूक-कन्देक्षुप्रभृतीनि च।
पूर्व्वं योज्यानि भिषजा न तु भुक्ते कथञ्चन ॥ ५१० ॥
सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः।
काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम्।
बुभुक्षितोऽन्नमश्नीयान्मात्रावद् विदितागमः ॥ ५११ ॥
काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते।
लघु शीघ्रं व्रजेत् पाकं स्निग्धोष्णं बलवह्निदम् ॥

कुरुतः, अन्ते कफजयाय कट्वादयः। आदाविति आदौ फलानि भुञ्जीत वातजयार्थं दाड़िमाद्यम्लोपयोगः। आदाविति मतान्तरे इत्यन्ये। ततः पेयान् पातव्यान् दाड़िमादिकठिनाहार-मृदुकरणार्थं वयःस्थापनार्थञ्च, ततो भोज्यं रक्तशाल्यादि, चित्रान् नानाप्रकारान्। घनमिति घनं भोज्यं भक्ष्यादि कठिनं, विपर्य्ययम् उक्तविपर्य्ययं पूर्व्वं द्रवं पश्चात् कठिनमिति, घृतं पूर्व्वं समश्नीयादिति केचित् पठन्ति। अम्लफलस्यादावेव नियतस्य कस्यचिदेव फलस्य आदिमध्यान्तेषु प्रयोगं दर्शयन्नाह—आदावित्यादि। निरत्ययम् अबाधं चक्षुष्यमित्यर्थः। मृणालेति। मृणालं पद्मनालं, विसं विसण्डकं, शालूकं प्रसिद्धम् ॥ ५०७—५१० ॥

भुञ्जानः कथं भुञ्जीतेत्याह—सुखमुच्चैरित्यादि। समासीन इति सम्यगासीन उपविष्टः। अन्नतत्पर इति न कामादिव्यग्रमनाः। भुञ्जानः किम्भूतः कदा कीदृशं भुञ्जीतेत्याह—काले सात्म्यमित्यादि। कालो द्विविधः नित्यग आवस्थिकश्च, तत्र नित्यगः आर्त्तवः, स पुनरतीवायतयामा इत्यादिना नियमितः। आवस्थिकः पुनर्जीर्णलक्षणापेक्षः। सात्म्यं देशामयादिभेदेनानेकविधम्, असात्म्यं पुनर्दोषकारि। क्षिप्रं नातिद्रुतं नातिविलम्बितम्, अतिद्रुतातिविलम्बितयोर्दोषकारित्वात्, द्रवोत्तरं द्रवप्रधानम्। बुभुक्षितग्रहणम् अकालबुभुक्षानिषेधाय, वक्ष्यति च "भवत्यकालेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति" इति। मात्रालक्षणमाह—"अपीड़नं भवेत् कुक्षेः पार्श्वयोरविपाटनम्। अन्नेन हृदयाबाधो जठरस्य तु गौरवम् ॥ प्रीणनञ्चक्षुरादीनां शमनं क्षुत्पिपासयोः। उच्छ्वासश्वासहास्यादिकथासु सुखवर्त्तनम् ॥ सुखेन परिणामः स्यादन्ने भुक्ते निवानिशि ॥" इति। विदितागम इति हेयोपादेयविवेकार्थं विदितं हिताहितं येन स विदितागमः। एषां कालादिभोजनानां फलानुशंसां दर्शयन्नाह—काले भुक्तमित्यादि। प्रीणयति तृप्तिं जनयति, सात्म्यमन्नं भुक्तं न बाधते न पीड़ां जनयति। लघ्वित्यादि। लघ्वन्नं भुक्तमिति

क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् ।
सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च ॥ ५१२ ॥
अतीवायतयामास्तु क्षपा यष्वृतुषु स्मृताः ।
तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु ॥ ५१३ ॥
येषु चापि भवेयुश्च दिवसा भृशमायताः ।
तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥ ५१४ ॥
रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ।
कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् ॥ ५१५ ॥
नाप्राप्तातीतकालं वा हीनाधिकमथापि वा ॥
अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः ।
तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति ॥
अतीतकाले भुञ्जानो वायुनोपहतेऽनले ।
कृच्छ्राद् विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति ॥

सम्बन्धः । स्निग्धोष्णं बलवह्निदमिति स्निग्धं बलप्रदम्, उष्णं वह्निप्रदमित्यर्थः । क्षिप्रमित्यादि । समम् एककालम् । अदोषं द्रवोत्तरमिति द्रवोत्तरमन्नं भुक्तं सददोषं दोषरहितं पाकं याति । सुखमित्यादि । मात्रावदन्नं भुक्तं सुखेन पाकं गच्छति धातुसाम्यञ्च करोति ; धातुशब्दोऽयं दोषधातुमलेषु वर्त्तते ॥ ५११ । ५१२ ॥

आर्त्तवलक्षणं कालमाह अतीवायतयामा इत्यादि । अतीवायतयामा अतीवदीर्घप्रहराः, क्षपाः रजन्यः, येष्वृतुष्विति हेमन्ते शिशिरे च । तत्प्रत्यनीकाढ्यमिति कालबलप्रवृत्तदोषगुणानां बाधकभूतं विरोधिद्रव्यगुणबहुलमित्यर्थः । प्रातरिति सपादे यामे । येष्विति येषु ऋतुषु ग्रीष्मप्रावृषोः, भृशमायता दीर्घतराः, तत्कालविहितं द्रवस्निग्धमधुरप्रायम्, अपराह्ण इति अर्द्धतृतीययामोपरि । रजन्य इत्यादि । येषु ऋतुषु शरदि वसन्ते च, सममहोरात्रं मध्याह्ने इत्यर्थः, अयमेकाशनस्य पुरुषस्य विधिः ; द्विरश्नतः पुनः प्रातर्भोजनमात्राया अर्द्धमात्रं त्रिभागं वा लघु भुक्त्वा, तच्च प्रातर्भोजनं सपादे प्रहरे । द्वितीयं भोजनं त्वर्द्धचतुर्थप्रहरोपरीति पञ्जिकाकारः । जेज्झटस्तु सत्रिभागे प्रहरे दिवसस्य रात्रेश्च सत्रिभागे प्रहरे भुञ्जानस्य रजनीदिवसयोः समत्वं भवतीत्याह । अयमार्त्तवकाल उक्तः । आवस्थिकं पुनः स्वास्थ्यवृत्तिकेऽध्याये दशौषधकालानभिधाय वक्ष्यति ॥ ५१३—५१५ ॥

कालमात्रावतो विपर्य्ययमकालमात्रावत्त्वञ्च निर्दिशन्नाह—नाप्राप्तेत्यादि । अप्राप्तकालमतीतकालं वा न भुञ्जीतेत्यर्थः । हीनाधिकमिति हीनमात्रमधिकमात्रं वा न भुञ्जीत । तयोरप्राप्तातीतकालयोरधिकन्यूनयोश्च दोषं दर्शयन्नाह— अप्राप्तकाल इत्यादि । अप्राप्तकाले भुञ्जानो नरः शरीरे अलघौ सति तांस्तान् शिरोरुजादीन् व्याधीन् नियच्छतीति प्राप्नोति । अतीतकाले इत्यादि ।

हीनमात्रमसन्तोषं करोति च बलक्षयम्।
आलस्यगौरवाटोप-सादांश्च कुरुतेऽधिकम् ॥ ५१६ ॥
तस्मात् सुसंस्कृतं युत्तया दोषैरेतैर्विवर्ज्जितम्।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम्।
विभज्य कालदोषादीन् कालयोरुभयोरपि ॥ ५१७ ॥
अचोक्षं दुष्टमुच्छिष्टं पाषाणतृणलोष्ट्रवत्।
द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्ज्जयेत्॥
चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः।
अशान्तमुपदग्धञ्च तथा स्वादु न लक्ष्यते ॥ ५१८ ॥
यद्यत् स्वादुतरं तत्तत् विदध्यादुत्तरोत्तरम् ॥ ५१९ ॥
प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्म्मुहुः।
विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्व्ववत् ॥ ५२० ॥
स्वादुना तस्य रसनं प्रथमेनापि तर्पितम्।
न तथा स्वादयेदन्यत् तस्मात् प्रक्षाल्यमन्तरा ॥ ५२१ ॥

असन्तोषं अतृप्तिम्, आटोपः उदरस्याध्मानं, सादोऽङ्गग्लानिः। अधिकमिति अधिकमन्नं भुक्तमित्यर्थः। कीदृक् पुनरन्नं सेवितव्यमित्याह - तस्मादित्यादि। युत्तया मात्रया। कालयोरुभयोरपि प्रातः सायञ्च ॥ ५१६। ५१७ ॥

सम्यगुपादेयं प्रदर्श्य हेयं दर्शयन्नाह—अचोक्षमित्यादि। अचोक्षं अपवित्रं, मलिनमित्यन्ये। दुष्टं विषादिसिर्दोषकरत्वात्। उच्छिष्टं भुक्तोत्सृष्टं, पाषाणतृणलोष्टवदिति पाषाणादियुक्तमित्यर्थः; द्विष्टं मनःप्रतिघाति, व्युषितं विशेषेण उषितं, पूति शटितम्। पूति चान्नमिति चकारादत्र शत्रुगणगणिकादीनामप्यन्नं बाह्यदूषणान्वितं वर्ज्जनीयमिति समुच्चीयते। अस्वादु अन्नं पूर्व्वं वर्ज्जनीयमुक्तमिति तन्निदानाह—चिरसिद्धमित्यादि। स्थिरं कठिनम्, अशान्तं किञ्चिदवशिष्टविस्रावणम्। उपदग्धमिति अतिपाकित्वेन ज्वलितम्। चकारेण दुःसिद्धमपि समुच्चीयते। तथा स्वादु न लक्ष्यते इति यदन्नञ्च स्वादु न लक्ष्यते, तदपि वर्ज्जयेदिति सम्बन्धः ॥ ५१८ ॥

अन्नेषु स्वादुषु सत्सु विधानं दर्शयन्नाह—यद् यदित्यादि। स्वादुशब्दः संस्कृते रसे वर्त्तते, न तु मधुरार्थके एव। विदध्यात् दद्यात्, कथम्? उत्तरोत्तरम् एकस्मिन् स्वादुनि दत्ते सति तस्मादधिकतरस्वादु दद्यात्, तस्मिन्नपि दत्ते तस्मादधिकतरस्वादु दद्यादित्यर्थः। प्रक्षालयेदद्भिरास्यं गण्डूषं कारयेदित्यर्थः। गण्डूषकरणस्य फलमाह—विशुद्धेत्यादि। स्वादुना मिष्टेन। तस्य

सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् ।
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम् ॥ ५२२ ॥
भुक्त्वा च यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् ॥ ५२३ ॥
अशितश्चोदकं युक्त्या भुञ्जानश्चान्तरा पिबेत् ॥ ५२४ ॥
दन्तान्तरगतश्चान्नं शोधनेनाहरेच्छनैः ।
कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ५२५ ॥
जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु ।
भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत् कफम् ॥
धूमेनापोह्य हृद्यै र्वा कषायकटुतिक्तकैः ।
पूगकक्कोलकर्पूर-लवङ्गसुमनःफलैः ॥
कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ५२६ ॥
भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ।
ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ॥
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ।
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥

भुञ्जानस्य । अन्यत् अपरं स्वादोरस्वादोर्वा । तस्य गुणमाह—सौमनस्यमित्यादि । सौमनस्यं सुमनस्कता, बलं सर्व्वधातुस्नेहः, पुष्टिः शरीरोपचयः, उत्साहः प्रसिद्धः, हर्षणं तुष्टिः, सुखं नीरोगता । स्वादु सञ्जनयत्यन्नं स्वाद्वन्नं सौमनस्यादीन् सम्यग् जनयतीति सम्बन्धः । अस्वाद्वित्यादि । अस्वाद्वन्नं सौमनस्यादीनां विपर्य्ययं विपरीततां जनयतीत्यर्थः ॥ ५१९—५२२ ॥

स्वादोरेवान्नस्य लक्षणं निर्द्दिशन्नाह—भुक्त्वेत्यादि । भुक्तवान् हि यत् प्रार्थयते तदेव भवद्वयं स्वादु विज्ञेयम् । अन्ये तु तत्साधु भोजनमिति पठन्ति । मात्रावद् भुञ्जीतेति तस्यैव लक्षणमिति च वदन्ति, तन्नेच्छति गयी । अशित इत्यादि । अशितः कृतभोजनः उदकं जलं युक्त्या पिबेदिति सम्बन्धः । कया युक्त्या ? मात्रया ; भुञ्जानश्चान्तरा पिबेत् भोजनमध्ये इत्यर्थः ॥ ५२३ । ५२४ ॥

अन्यदपि भुक्ते कार्य्यान्तरं दर्शयन्नाह—दन्तेत्यादि । शोधनेन तृणादिना । कुर्य्यादिति । भोजनोत्तरकालक्रियाप्रसङ्गेन जरणजीर्णकालयोरपि दोषप्रकोपं दर्शयन्नाह—जीर्णे इत्यादि । जीर्णे परिणामं गते विदग्धे किञ्चित् पक्वे । भुक्ते सति कुपितश्लेष्मणः प्रतिकारमाह—तस्मादित्यादि । भुक्ते भोजने सञ्जाते । अपोह्य स्फोटयित्वा । कषायकटुतिक्तकैरिति अत्र फलैर्द्रव्यैरिति विज्ञेयम् । फलैः कटुतिक्तकषायैर्वेति वक्ष्यमाणत्वात्, सुमनःफलैः जातीफलैः । तदनन्तरं किं कुर्य्यादित्याह—तत इत्यादि । संविशेत् शय्यायां शयीत ।

अन्नस्य सौस्थ्यजनकहेतून् शब्दादिविषयानाह—शब्देत्यादि । साधु तिष्ठति सम्यक् स्थितिं

शब्दरूपरसस्पर्श-गन्धाश्चापि जुगुप्सिताः।
अशुच्यन्नं तथा भुक्तमतिहास्यञ्च वामयेत्॥ ५२७॥
शयनञ्चासनं वापि नेच्छेद् वापि द्रवोत्तरम्।
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम्॥
न चैकरससेवायां प्रसज्येत कदाचन।
शाकावरान्नभूयिष्ठमम्लञ्च न समाचरेत्॥
एकैकशः समस्तान् वा नाध्यश्नीयाद्रसान् सदा।
प्रागभुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत्॥
पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम्।
मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः॥
पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः।
द्विगुणञ्च पिबेत् तोयं सुखं सम्यक् प्रजीर्य्यति॥ ५२८॥

करोति, शब्दादीन् विषयांश्चेत्यन्ये पठन्ति। कुतः पुनरेते प्रिया अप्रिया इत्याह—शब्देत्यादि। जुगुप्सिता निन्दिताः, अशुचि अपवित्रम्॥ ५२५—५२७॥

अन्यदपि सर्व्वं वर्ज्जनीयमाह—शयनमित्यादि। शयनमासनं वा नेच्छेत् चिरकालमित्यर्थः। द्रवोत्तरं द्रवाढ्यं भोजनम्। नाग्न्यातपादीन् इच्छेदिति सम्बन्धः। प्लवनं स्नानं जलप्रतरणं वा, यानं गमनम्, वाहनं रथाश्वादि। न प्रसज्येत नाभ्यसेत् न पुनःपुनः शीलयेदित्यर्थः। न चैकेत्यादि। शाकं प्रसिद्धं, अवरान्नं वैदलान्नं, एतद्भूयिष्ठं तद्बहुलं, न समाचरेत् न भक्षयेत्, तथा अम्लञ्च।

रसानामतिमात्राशनदोषं दर्शयन्नाह—एकैकश इत्यादि। एकैकश एकैकरसं, समस्तान् वा रसान् नाध्यश्नीयात् नाधिकं भक्षयेदित्यर्थः। दोषरोगापेक्षया एकैकरसस्य विधिः, स्वस्थापेक्षया तु समस्तरसविधिः। नात्यश्नीयादित्यन्ये, अपरे तु 'एकशोऽथ समस्तान् वा न भुञ्जीत रसान् सदा' इति पठन्ति व्याख्यानयन्ति च—एकीकृत्य न सर्व्वमश्नीयात्, यथाक्रममेव षड्रसं स्वस्थेन भोक्तव्यं, वाशब्दः समुच्चये। अग्नौ मन्दे द्विरन्नसमभ्यवहारनिषेधं दर्शयन्नाह—प्रागित्यादि। प्रागभुक्ते प्रातर्भोजने कृते, अविविक्ते अग्नौ द्विरन्नं न समाचरेत् इति द्वितीयं वारं न भुञ्जीतेत्यर्थः। कुत इत्याह—पूर्व्वभुक्ते इत्यादि। विदग्धे जठरानलेन किञ्चित्पक्वे किञ्चिदामे, भुञ्जानः द्विर्भुञ्जानः इत्यर्थः। पावकं जठरानलम्। मन्दाग्नेरेवाहारविशेषपरिहारार्थं निर्दिशन्नाह—मात्रेत्यादि। मुद्गादीनां लघूनामपि मात्रया गुरुमाहारं परिहरेत्, द्रव्यतो गुरुं माषमहिषवराहपिशितादिकम्। संस्कारगुरोर्द्रव्यविशेषस्य निषेधं दर्शयन्नाह—पिष्टान्नमित्यादि। अथ कथञ्चित् पिष्टान्नं यदि सेवेत तदा क्षुधितस्य मात्रयैव नान्यथेति, तत्र मात्राशब्दोऽल्पतावाचकः। पिष्टान्नभोजने द्विगुणञ्च

पेयलेह्याद्यभक्ष्याणां गुरु विद्याद् यथोत्तरम् ॥ ५२९ ॥
गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते ॥ ५३० ॥
द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते ।
द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते ॥
विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ।
पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति ॥ ५३१ ॥
स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति ।
विदाहि भुक्तमन्यद् वा तस्याप्यन्नं विदह्यते ॥ ५३२ ॥
शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ।
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५३३ ॥

पिबेत्तोयम् । गुरुत्वप्रसङ्गेन चतुर्णां पेयलेह्यादीनां गुरुत्वं निर्द्दिशन्नाह—पेयेत्यादि । पेयं पानीयादि, लेह्यं मध्वादि, आद्यं भक्तादि, भक्ष्यं मोदकादि ॥ ५२८ । ५२९ ॥

तन्त्रोक्तानां पेयादीनां लघूनां गुरूणाञ्च का मात्रा यामपेक्ष्य गुरुरित्युपदिश्यत इत्याह—गुरूणामित्यादि । गुरूणां संस्कारस्वभावकृतानां मोदकमाषादीनां संस्कारस्वभावाभ्यामेव गुरुतराणां पिष्टमयवराहपिशितादीनां त्रिभागसौहित्यमेव, अयं चार्थोऽर्द्धशब्दादवयववचनाल्लभ्यते । लघूनां तृप्तिरिष्यते इति लघुतराणामेव तृप्तिः, लघूनां पुनरीषत्तृप्तिः । न च द्रवद्रवोत्तरयोः पेयत्वाल्लघुलघुतरयोः कदाचित् किञ्चिन्मात्रागौरवेण तौ भजेतेत्याह—द्रवोत्तर इत्यादि । द्रवोत्तरस्तक्राद्यधिकः, द्रवः पेयादिः । शुष्कस्यापि स्रोतोऽवरोधकारणस्य संयोगान्तरेण अदोषं प्रतिपादयन्नाह—द्रवाढ्यमित्यादि । शुष्कमपि द्रवाढ्यं सम्यगेवोपपद्यते अदोषकरं सम्यग्भवतीत्यर्थः । केवलविशुष्कस्य पुनराहरणे दोषं निर्द्दिशन्नाह—विशुष्कमित्यादि । अभ्यस्तं सेवितं, साधु सम्यग्ेन । कथं तर्हि पाकं गच्छतीत्याह—पिण्डीकृतमित्यादि । असंक्लिन्नं असम्यगार्द्रीभावमापन्नं, विदाहमुपगच्छति विदग्धतामुपयाति । शुष्कान्नस्य विप्रकृष्टविदाहप्रसङ्गेन सन्निकृष्टं हेतुजमपि विदाहं दर्शयन्नाह—स्रोतसीत्यादि । स्रोतस्यन्नवहे आमाशये, पक्तौ अग्निस्थाने, विदाहि शुष्कमिति अन्नं, अन्यद् वा इति अविदाह्यन्नं विदह्यते विदग्धतामुपयाति । शुष्कान्नप्रसङ्गेन शुष्कस्येतरस्य च वह्निमान्द्यकरत्वमाह—शुष्कमित्यादि । शुष्कं पिष्टान्नादि, विरुद्धं क्षीरमत्स्यादिकं, विष्टम्भि चणकमसूरादि, वह्निव्यापदं अग्निमान्द्यं, आवहेत् कुर्य्यात् । तामेव वह्निव्यापदं विप्रकृष्टकारणोपजनितामभिधाय सन्निकृष्टवातादिजाजीर्णलक्षणां निर्द्दिशन्नाह—आममित्यादि । आहारस्यैव पक्वस्य उद्गिरतो रसः रसशेषः । तस्मादल्पदोषदूषितत्वान्न तस्य दोषव्यपदेशो भवति ॥ ५३०—५३३ ॥

अत्यम्बुपानाद् विषमाशनाद् वा सन्धारणात् स्वप्नविपर्य्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ ५३४ ॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीड़ितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति ॥ ५३५ ॥
माधुर्य्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम् ।
किञ्चिद् विपक्वं भृशतोदशूलं विष्टब्धमावद्धविरुद्धवातम् ॥ २३६ ॥
उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य ।
रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् ॥ ५३७ ॥

मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ।
उपद्रवा भवन्त्येते मरणञ्चाप्यजीर्णतः ॥ ५३८ ॥
तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम् ।
विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च ॥ ५३९ ॥

कस्मादजीर्णं भवतीत्याह—अत्यम्बुपानादित्यादि । रात्रौ जागरणं दिवसे च स्वप्नः स्वप्नविपर्य्ययः । कायिककारणमभिधाय मानसरजस्तमोदोषकृतमजीर्णमाह—ईर्ष्येत्यादि । ईर्ष्या परसम्पत्त्यसहिष्णुता, भयं परस्मात् त्रासः, क्रोधः पराभिद्रोहलक्षणः । परिक्षतेन ईर्ष्यादिभिः परिभूतेन । लुब्धेन लोभसहितेन । रुग्दैन्यनिपीड़ितेन रोगदैन्यव्याप्तेन, दैन्यं निर्गतित्वं । प्रद्वेषः मात्सर्य्यम् ॥ ५३४ । ५३५ ॥

तेषामेवाजीर्णानां लक्षणं दर्शयन्नाह—माधुर्य्यमित्यादि । श्लेष्मदूषणप्रभावोपजनितं माधुर्य्यगतमामं तदेव कफदूषितं वा तत्स्वभावकत्वमापन्नं, कफकार्य्याणि तु तत्र गौरवस्नेहकण्डूप्रभृतीनि च द्रष्टव्यानि । विदग्धसंज्ञमिति किञ्चिद् विपक्वं अम्लभावं गतमन्नं विदग्धसंज्ञं कथ्यते । तत् कथम्भूतम् ? किञ्चिद्विपक्वम् । अत्रापि शुक्ततिक्ताम्लोद्गारादीनि पित्तकार्य्याणि द्रष्टव्यानि । आवद्धविरुद्धवातं विष्टब्धं कथ्यते । तत् कथम्भूतम् ? भृशतोदशूलमिति । आवद्धः अप्रवृत्तः, विरुद्धो विशेषेण रुद्धो वातो यस्मिन् तत्तथा । अत्रापि वातकार्य्याणि जृम्भाङ्गमर्दशिरोरुजादीनि द्रष्टव्यानि । भृशतोदशूलं अत्यर्थंतोदशूलम् । उद्गारशुद्धावित्यादि । यस्य जीर्णिनो भक्तकाङ्क्षा न जायते नोत्पद्यते, हृद्गुरुता हृदयगौरवञ्च भवति, रसावशेषेण कृत्वा सप्रसेकं लालास्रावसहितम् । एतानि सङ्क्षेपेण अजीर्णलक्षणानि उक्तानि ॥ ५३६ । ५३७ ॥

अजीर्णदोषलिङ्गं प्रदर्श्य व्याधिसामान्यलक्षणभूतप्रभावोपजनितकार्य्याणि निर्दिशन्नाह—मूर्च्छेत्यादि । मूर्च्छा चेतनाच्युतिः, प्रलापः असम्बद्धभाषणं, वमथुश्छर्द्दिः, सदनम् अङ्गग्लानिः, अन्ये तु स्फुटन्नमित्राङ्गानामिति वदन्ति । भ्रमश्चक्रारूढस्येव ॥ ५३८ ॥

अजीर्णानां चिकित्सामाह—तत्रेत्यादि । आमे लङ्घनं कार्य्यम्, उत्क्लेदे तत्रापि वमनमावश्यकम्, विदग्धे वमनं हितमिति रसस्याम्लस्य व्यापन्नत्वादनुद्धरणे क्षुधाबाधभयात् । तत्र केचित्

वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना।
कार्य्यश्चानशनं तावद् यावन्न प्रकृतिं भजेत्॥ ५४०॥
लघुकायमतश्चैनं लङ्घनैः समुपाचरेत्।
यावन्न प्रकृतिस्थः स्याद् दोषतः प्राणतस्तथा॥ ५४१॥
हिताहितोपसंयुक्तमन्नं समशनं स्मृतम्।
बहु स्तोकमकाले वा विज्ञेयं विषमाशनम्॥
अजीर्णे भुज्यते यत् तु तदध्यशनमुच्यते।
त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति वा॥ ५४२॥

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात्॥
विदह्यते यस्य तु भुक्तमात्रे दह्येत हृत्कोष्ठगलश्च यस्य।
द्राक्षाभयां माक्षिकसम्प्रयुक्तां लीढ्वाभयां वा स सुखं लभेत॥

'आमेतु वमनं कार्य्यं विदग्धे लङ्घनं हितम्' इति पठन्ति, तन्नेच्छति गयी, विदग्धे स्वेदनमिति स्वेदनस्यामवातविजयकारिपाचनत्वात्। रसशेषे शयीत चेति चकारेण स्वेदोऽपि रसशेषे तथा पाचनमपि, तच्च पाचनमन्नकालेऽन्नसहितं देयमिति समुच्चीयते। तत्र विदग्धे वमनं कर्त्तव्यं तत् केनेत्याह—वामयेदित्यादि। आमे लङ्घनमिति तत् कियन्तं कालं इत्यवधिं दर्शयन्नाह—कार्य्यमित्यादि। वाशब्दः समुच्चये। प्रकृतिः अत्राजीर्णनिवृत्तिः। लघ्वित्यादि। अतः पूर्व्वोक्तविधानादनन्तरं, एनम् अजीर्णिनम्। प्राणो बलम्। तत्राजीर्णप्रसङ्गेन तस्य अजीर्णे भुज्यमानस्य अन्नस्य अत्यशनसंज्ञकस्य अनर्थावहत्वात् तत्तुल्यानां समशनादीनामपि लक्षणं निर्द्दिशन्नाह—हिताहितेत्यादि। हिताहितोपसंयुक्तमिति हितमहितं चान्नमैकध्यमुपसंयुक्तम्। यथा—"धान्यं नवं पुराणं यच्छाकं जीर्णञ्च कोमलम्। ऐकध्यं तद्विरुद्धं स्याच्छीतोष्णञ्च स्वजातितः॥" इति। अन्ये तु हितमेवाहितं येन सम्पद्यते तत् हिताहितोपसंयुक्तम्। यथा—गोक्षीरं मत्स्येन सहितमहितं सम्पद्यते। विषमाशनं निर्द्दिशन्नाह—बहु स्तोकमिति। बहु प्रचुरं, स्तोकम् अल्पम्, अकाले इति अकालोऽप्राप्तोऽतीतो वा कालस्तत्र भुक्तम्। अध्यशनं निर्द्दिशन्नाह—अजीर्णे इत्यादि। त्रयाणामपि समशनादीनां फलमाह—त्रयमित्यादि॥ ५३९—५४२॥

पुनरपि विदग्धाजीर्णस्य चिकित्सामाह—अन्नमित्यादि। तत् शीताम्बु, हिशब्दो यस्मादर्थे, अस्य नरस्य, आक्लेदिभावात् पित्तं निहन्ति। केचिदन्नं विदग्धं हीत्यारभ्य विषवन्निहन्तीति यावत् सकलमपि पाठमनार्षं वर्णयन्ति, तन्न, गयदासेनाङ्गीकृतत्वात्। आमाशयगतान्नविदाहस्य चिकित्सामाह—विदह्यते इत्यादि। यस्य पुरुषस्य भुक्तमात्रे सति आमाशयो विदह्यते विशेषेण दाहवान् भवति, हृत् हृदयं कमलमुकुलाकारमधोमुखं, कोष्ठमुदरम्, द्राक्षायुक्तामभयां लीढ्वेति सम्बन्धः, अयमेको योगः; माक्षिकसंयुक्तां लीढ्वाभयाम्इति द्वितीयो योगः। अन्ये तु भुक्तमात्रमिति

भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
प्रातः सशुण्ठीमभयामशङ्को भुञ्जीत सम्प्राश्य हितं हितार्थी ॥ ५४३ ॥
स्वल्पं यदा रोगविबद्धमामं लीनं न तेजःपथमावृणोति।
भवत्यजीर्णेऽपि तदा वुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति ॥ ५४४ ॥

अत ऊर्द्ध्वं प्रवक्ष्यामि गुणानां कर्म्मविस्तरम्।
कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ ५४५ ॥
ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्स्वेददाहजित्।
उष्णस्तद्विपरीतः स्यात् पाचनश्च विशेषतः ॥
स्नेहमार्द्दवकृत् स्निग्धो बलवर्णकरस्तथा।
रुक्षस्तद्विपरीतः स्याद् विशेषात् स्तम्भनः खरः ॥
पिच्छिलो जीवनो बल्यः सन्धानः श्लेष्मलो गुरुः।
विशदो विपरीतोऽस्मात् क्लेदाचूषणरोपणः ॥
दाहपाककरस्तीक्ष्णोऽस्रावणो मृदुरन्यथा ॥

पठन्ति, भुक्तमात्रमेव प्राप्यामाशयो विदह्यते इत्यर्थः। रसावशेषाजीर्णविषयसंशमनमाह—भवेदित्यादि। प्रातर्यस्याजीर्णशङ्का भवति स पुरुषः शुण्ठीमभयासमेतामन्नकाले सम्प्राश्य भक्षयित्वा अशङ्कः निःशङ्कः सन् भुञ्जीत। अजीर्णेऽपि वुभुक्षां दर्शयन्नाह—स्वल्पमित्यादि। स्वल्पमित्यामविशेषणं, अन्ये तु स्वल्पमपि तेजःपथं नावृणोतीति तेजःपथस्येदं विशेषणमाहुः। लीनं तद्गतेन वायुना एकपार्श्वे लीनमित्यामविशेषणं, तेजःपथं जठरानलमार्गं, सा वुभुक्षा मन्दबुद्धिं प्राणिनं विषवन्निहन्तीति सम्बन्धः। अत्र केचित् पठन्ति—"अन्नेन कुक्षेर्द्वावंशौ पानेनैकन्तु पूरयेत्। आश्रयं पवनादीनाञ्चतुर्थमवशेषयेत्" इति। सर्व्वैर्निबन्धकारैरपठित्वान्न पठनीयम् ॥ ५४३।५४४ ॥

पूर्व्वं हि सम्पादितं 'तद्धरस्य शैत्येन निहन्ति पित्तम्' इति, तत्र न ज्ञायन्ते के पुनस्ते शीतादय इति तान् निर्द्दिशन् लक्षणमाह—अत इत्यादि। कर्म्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणा इति। अतः शीतगुणः कथं ज्ञायत इत्याह—ह्लादन इत्यादि। ह्लादनः सुखकारीत्यर्थः, पाचनो व्रणादीनाम्। स्नेहेत्यादि। स्निग्धो गुणः स्नेहादिकारण इत्यर्थः। रूक्ष इति। रूक्षः गुणस्तद्विपरीतो रौक्ष्यकाठिन्यकर इत्यर्थः। विशेषात् विशेषतः स्तम्भनोऽतीसारादीनां, खरो कर्कशः। पिच्छिल इति पिच्छिलो गुणः, जीवनः प्राणधारणः, सन्धानो भग्नस्य। विशद इति विशदो गुणः। विपरीतोऽस्मादिति असन्धानोऽजीवनः, अश्लेषी च। क्लेदाचूषणः आर्द्रभावविनाशकर इत्यर्थः। दाहेत्यादि। अन्यथेति अदाहपाककरः अस्रावण इत्यर्थः।

सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः ।
लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥ ५४६ ॥
दशाद्याः कर्म्मतः प्रोक्तास्तेषां कर्म्मविशेषणैः ।
दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तान् निबोध मे ॥ ५४७ ॥
द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद् बन्धकारकः ।
श्लक्ष्णः पिच्छिलवज्ज्ञेयः कर्कशो विशदो यथा ॥
सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ।
दुर्गन्धो विपरीतोऽस्माद्हृल्लासारुचिकारकः ॥
सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः ।
व्यवायी चाखिलं देहं व्याप्य पाकाय कल्पते ॥
विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ।
आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥

सादेत्यादि सादोऽङ्गग्लानिः, उपलेपो मलवृद्धिः, बलं श्लेष्मा । गुरुं गुणः, तर्पणः तृप्तिजनकः, बृंहणः देहवृद्धिकरः । लघुरित्यादि । लघुस्तद्विपरीत इति असादानुपलेपकृत् कफहरश्चेत्यर्थः । लेखनः पत्तलीकरणः । दशाद्या इति दशसंख्योपेता आद्याः शीतादयो गुणाः । कर्म्मतः प्रोक्ताः कर्म्मभिः सह प्रोक्ता इत्यर्थः । तेषामिति तेषां मध्ये, कर्म्मविशेषणैः कृत्वा ॥ ५३५—५४७ ॥

द्रव इति । द्रवो गुणः, प्रक्लेदन आर्द्रभावकरः । सान्द्रो गुणः, बन्धकारक उपचयकारकः इत्यर्थः, 'द्रवः प्रक्लेदनो व्यापी शुष्कः स्याद् बन्धकारकः' इति केचित् पठन्ति । शुष्को गुणः, बन्धकारकः शुष्कस्य शोषणत्वेनावयवपृथक्त्वमित्यर्थः । श्लक्ष्ण इत्यादि । श्लक्ष्णो गुणः पिच्छिलवज्ज्ञेयः, जीवनः श्लेष्मसन्धानकृदित्यर्थः । कर्कश इति कर्कशो गुणः । विशदो यथेति अजीवनोऽश्लेष्मी च तथा असन्धानकार्य्यकृच्च । सुखानुबन्धीति सुखानुबन्धी सुखोत्पादक इत्यर्थः । सूक्ष्मः अवगाहकः । सुगन्धः गुणः । दुर्गन्ध इत्यादि । हृल्लासारुचिकारक इति पुनररुचिग्रहणं द्विविधारुचिप्रापणार्थं, तेनाहारं न काङ्क्षति क्रियमाणाच्च विरसीभवति; हृल्लासस्थूत्करणं छर्द्दिरित्यन्ये । सर इत्यादि सरो गुणः, अनुलोमनः वातमलप्रवर्त्तनः । मन्द इति मन्दो गुणः, यात्राकर इति शरीरस्थायित्वाद्देहस्य यात्रां वर्त्तनं करोति । व्यवायीत्यादि व्यवायी गुणः अखिलमित्यादि, अपक्व एवाखिलं देहं व्याप्नोति पश्चान्मद्यविषवत्पाकं याति, अन्ये भावाय कल्पते इति पठन्ति, तत्रापि स्थितये कल्पते नोर्द्ध्वमधो वा प्रवर्त्तते इति स एवार्थः, अपरे तु पुनर्भावशब्दमभिप्रायार्थमिच्छन्ति, तत्र नियतद्रवप्रभावेणात्मशक्त्यनुरूपं तत्तद् द्रव्यं मद्यविषवद् विशिष्टाभिप्रायाय कल्पते इत्यर्थः ।

व्यवायिनः सकाशाद् विकासिद्रव्यस्य किञ्चिद्भेदं दर्शयन्नाह—विकासीत्यादि । विकासी गुणः विकसन् प्रसर्पन्, एवमिति, अपक्व एव सकलं देहं व्याप्य धातुबन्धान् विमोक्षयेत् धातुशैथिल्य

सूक्ष्मस्तु सौक्ष्म्यात् सूक्ष्मेषु स्रोतःस्वनुसरः स्मृतः।
गुणा विंशतिरित्येवं यथावत् परिकीर्त्तिताः ॥ ५४८ ॥
संप्रवक्ष्याम्यतश्चोर्द्ध्वमाहारगतिनिश्चयम्।
पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः।
विपक्कः पञ्चधा सम्यग् गुणान् स्वानभिवर्द्धयेत् ॥
अविदग्धः कफं पित्तं विदग्धः पवनं पुनः।
सम्यग्विपक्को निःसार आहारः परिबृंहयेत् ॥
विण्मूत्रमाहारमलः सारः प्रागीरितो रसः।
स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् प्रतर्पयेत् ॥ ५४९ ॥

करोतीत्यर्थः। अन्ये तु सरविशेषो व्यवायी, तीक्ष्णविशेषो विकासीति ब्रुवते ; तन्नेच्छति गयी। आशुकारीति आशुकारी गुणः आशुत्वात्। सूक्ष्म इति सूक्ष्मो गुणः, अत्र स्थूलगुणमपि केचित् पठन्ति, स च पाठोऽभावान्न लिखितः। गुणा इति। नन्वत्र स्थूलगुणेन सह त्रयोविंशतिर्गुणा भवन्ति, कथं विंशतिः कथ्यन्ते ? उच्यते, केचिदत्र संख्याभङ्गभयाद् व्यवायिविकास्याशुकारिणामपाठमेव मन्यन्ते, अन्ये पुनराहुः—अधिकायामपि विंशतावुक्तायां गुणा विंशतिरुक्ता न चात्र नियमो विंशतिरेवेति ; व्यवायिविकास्याशुकारिणान्तु स्वतस्त्वे परतन्त्वे च दर्शनात् पाठो न्याय्य एव, अपरे पुनः प्रागेव दर्शौवान्यानित्यस्य स्थाने दश चान्यानिति चकारं पठन्ति, तेन व्यवायिविकास्याशुकारिणोऽपि समुच्चीयन्ते ॥ ५४८ ॥

सम्प्रवक्ष्यामीत्यादि। आहारस्य गतिनिश्चयो यद्यदात्मकमन्नमभ्यवहृतं पक्वं यद्‌द्रव्यगुणं याति गतमपि यच्च पुष्णाति तस्य निर्णय इत्यर्थः। तमेवाहारगुणं निर्दिशन्नाह—पञ्चेत्यादि। पञ्चभूतात्मके इति पृथिव्यादिपञ्चभूतहेतुके। आहारः पाञ्चभौतिक इति आहारोऽपि पञ्चमहाभूतस्वरूपः। विपक्कः पञ्चधा सम्यगिति पञ्चभिर्महाभूताग्निभिः। गुणानिति गुणशब्देनात्र गुणिनः पृथिव्यादय उच्यन्ते। तेन पार्थिवाः पार्थिवानभिवर्द्धयन्ति, एवं शेषेष्वपि। अन्ये तु गुणानिति गन्धादीन्, स्वानिति पञ्चगुणिनो द्रव्याणि पार्थिवादीनि, एतेन गन्धादीनात्मनश्च पार्थिवादीनि द्रव्याण्यभिवर्द्धयेदित्यर्थः। दोषाणामाहारावस्थापाकात् प्रकोपवर्द्धनलक्षणं प्रतिपादयन्नाह—अविदग्ध इत्यादि। अविदग्धो मधुराहारः, कफं परिबृंहयेत् अतिशयेन वर्द्धयेदित्यर्थः, पित्तं विदग्धोऽम्लीभूत आहारः परिबृंहयेत्। पवनं पुनः सम्यग्विपक्क आहारः, निःसारो निर्गतसारः रूक्षत्वेन परिबृंहयेदित्यर्थः। एवं दोषाणामवस्थापाकाद् वर्द्धनं प्रतिपाद्य पर्य्यन्तपाकाद्विण्मूत्रयो र्मलयो रसस्य धातुस्वभावस्य चोत्पत्तिं दर्शयन्नाह—विण्मूत्रेत्यादि। प्रागीरितः पूर्व्वं कथितः शोणितवर्णनीये। तस्मादेव रसादन्येषामपि धातूनामुत्पत्तिं दर्शयन्नाह—स त्विति। स रसः, व्यानेन वातविशेषेण विक्षिप्तः प्रेरितः प्रतर्पयेत् अतिशयेन वर्द्धयेत्, व्यानस्य सर्व्वाङ्गव्यापित्वेन

कफः पित्तं मलः खेषु स्वेदः स्यान्नखरोम च ।
नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥ ५५० ॥
दिवा विबुद्धे हृदये जाग्रतः पुण्डरीकवत् ।
अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि ॥
हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः ।
क्लिन्नविस्रस्तधातुत्वादजीर्णे न हितं दिवा ॥ ५५१ ॥
इमं विधिं योऽनुमतं महामुनेर्नृपर्षिमुख्यस्य पठेद्धि यत्नतः ।
स भूमिपालाय विधातुमौषधं महात्मनाऽर्हति सूरिसत्तमः ॥ ५५२ ॥

इति सुश्रुतसंहितायां सूत्रस्थानेऽन्नपानविधिर्नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

दोषधातुमलव्याप्तत्वात्, स च कुल्याकेदारन्यायेन सर्वान् धातून् प्रतर्पयति । तेषामेव दोषमलानां यतो यतो यस्योत्पत्तिस्तां दर्शयन्नाह—कफ इत्यादि । तत्राहारस्य मलौ विण्मूत्रे प्रागुक्ते । कफो रसस्य मलः । पित्तं रक्तस्य मलम् । खेष्विति खेषु कर्णश्रोत्रमुखादिषु स्रोतःसु मांसस्य । स्वेदः प्रस्वेदः स मेदसो मलः । नखरोम पुनरस्थ्नो मलः । नेत्रविट् त्वक्षु च स्नेह इति नेत्रविट् अक्षिपुरीषं, त्वक्षु च स्नेहः त्वचाञ्च यः स्नेहः स मज्ज्ञो मलः । धातूनामित्यादि रसादिमज्जान्तानां, यथाक्रमं मला इत्यर्थः । शुक्रं पुनरमलं सहस्रधा ध्मातात्क्षयसुवर्णवदिति, आकृष्टाण्डकोषस्य पुंसः श्मश्रुपातात् श्मश्रु एव शुक्रमल इत्येके, तन्नेच्छति गयी ॥ ५४९ । ५५० ॥

ननु यदन्नमजीर्णे भुज्यते तदध्यशनमुच्यते, प्रातर्भुक्ते यद्दिनान्ते भुज्यते तत् कथमध्यशनं न भवतीत्याह—दिवेत्यादि । दिवा दिवसे, पुण्डरीकवत् पद्मवत्, विबुद्धे विकसिते हृदये जाग्रतः पुरुषस्य, अक्लिन्नधातुत्वाद् अनार्द्रधातुत्वादजीर्णेऽप्यन्नं हितमिति सम्बन्धः । यथा—अजाते पयसि अन्यदाहृतं पयः । दिवा विबुद्धे हृदये इत्युक्तेऽपि यज्जाग्रत इति कृतं तदेतदधिकं बोधयति अजाग्रतोऽपि स्वभावादेव विबुद्धं हृदयं भवति । सायं भुक्तेऽजीर्णे प्रातर्भोजनं न हितमित्यर्थमाह—हृदीत्यादि । रात्रौ हृदि हृदये सम्मीलिते सङ्कुचिते, प्रसुप्तस्य विशेषतः सम्मीलित इति सम्बन्धः । क्लिन्नविस्रस्तधातुत्वात् आर्द्रशिथिलधातुत्वाद् । अजीर्णे सायं भुक्ते इति शेषः । न हितं दिवेति दिवा अन्नं हितं न भवतीत्यर्थः ॥ ५५१ ॥

उक्तसूत्रपाठानुशंसां दर्शयन्नाह—इममित्यादि । इमं विधिं सूत्रस्थानोदितमाहारविधिं यः यत्नतः पठेद् इति सम्बन्धः । महामुनेः धन्वन्तरेः । किम्भूतस्य महामुनेः ? नृपर्षिमुख्यस्य राजर्षिप्रधानस्य, स सूरिसत्तमः पण्डितप्रधानः, विधातुं कर्त्तुं, महात्मनां राजसदृशानां, अर्हति योग्यो भवति ॥ ५५२ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्यायश्रीडल्हणविरचिते निबन्धसंग्रहे
अन्नपानविधिव्याख्यानाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

सूत्रस्थानं समाप्तम् ॥ १ ॥

# सुश्रुत-संहिता।

## निदानस्थानम्।

### प्रथमोऽध्यायः।

अथातो वातव्याधिनिदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धन्वन्तरिं धर्म्मभृतां वरिष्ठममृतोद्भवम्।
चरणावुपसंगृह्य सुश्रुतः परिपृच्छति ॥
वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः।
स्थानं कर्म्म च रोगांश्च वद मे वदतां वर ॥ २ ॥

हेतुलिङ्गौषधज्ञानवीजभूतेन सूत्रस्थानेन सङ्क्षिप्तोद्दिष्टस्य हेतुलिङ्गौषधस्य विवरणे सर्व्वाण्येव स्थानानि प्रस्तुतानि। तेषु च प्रस्तुतेषु स्वाधिकाराणां शल्यतन्त्रव्याधीनां हेतुलक्षणप्रतिपादकतया निदानस्थानस्य आरम्भः। तत्रापि दोषाणां वातस्य प्रधानत्वात् तद्व्याधिहेतुलक्षणाभ्यां प्राक् प्रतिपादनं युज्यते इत्याह—अथात इत्यादि। वातव्याधे आक्षेपकादेर्निदानं हेतुलक्षणनिर्द्देशः। अथातो वातव्याधिनिदानमिति यद्यपि प्रथममेव सूत्रमस्ति तथापि प्राब्रवीद् भिषजां वर इत्यनन्तरं द्रष्टव्यम्, अनुपार्र तस्य अप्रार्थितस्य गुरोः शिष्याणां समीपे व्याख्याने नाधिकारात् ॥ १ ॥

कः पुनरेवं प्रतिज्ञातवानिति तमेव प्रकारेण दर्शयन्नाह—धर्म्मभृतां धार्म्मिकाणां, वरिष्ठं श्रेष्ठम्। अमृतेन सार्द्धं उद्भव उत्पत्तिर्यस्य तम्। चरणावुपसंगृह्य इति भक्त्यतिशयार्थम्। किं पृच्छतीत्याह—वायोरित्यादि। प्रकृतिभूतस्य स्वभावस्थितस्य, व्यापन्नस्य विकृतस्य, कोपनैः द्रव्यगुणकर्म्मभिर्वायुसमानैः, स्थानं श्रोणिगुदादि, तच्च प्रकृतस्य वायोः ; विकृतस्य तु सर्व्वशरीरम्। कर्म्म सामान्यं विशिष्टञ्च ; सामान्यमिन्द्रियार्थोपसम्प्राप्तिमित्यादि; विशिष्टं स प्राणो नाम देहधृगित्यादि। रोगांश्चेति हिक्काश्वासादिकान्। यदाह—"प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्" इति। ( विकारान् नाम च व्याख्यास्यामि। अहमिति यावत्।) हे वदतां व्याख्यातॄणां नृणां मध्ये वर! श्रेष्ठ! कोपनैरित्यत्र 'भूपते' इति केचित् पठन्ति, वद मे इत्यत्र च वदस्व

तस्य तद् वचनं श्रुत्वा प्राब्रवीद् भिषजां वरः।
स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः॥
स्वातन्त्र्यान्नित्यभावाच्च सर्व्वगत्वात् तथैव च।
सर्व्वेषामेव सर्व्वात्मा सर्व्वलोकनमस्कृतः॥
स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम्।
अव्यक्तो व्यक्तकर्म्मा च रूक्षः शीतो लघुः खरः॥
तिर्य्यग्गो द्विगुणश्चैव रजोबहुल एव च।
अचिन्त्यवीर्य्यो दोषाणां नेता रोगसमूहराट्।
आशुकारी मुहुश्चारी पक्वाधानगुदालयः॥ ३॥

इति पठन्ति, तत्र भूपते इति धन्वन्तरिसम्बोधनं, वदस्व वद इति च एक एवार्थः। मे मम। कर्म्मग्रहणं केचिन्न पठन्ति, तन्मतेस्थानं रोगविभागञ्चेति पाठः॥ २॥

तस्येत्यादि। तस्य सुश्रुतस्य, तत् पूर्व्वोक्तं; भिषजां वरो वैद्यश्रेष्ठो धन्वन्तरिः। गुरुरिति केचित् पठन्ति, प्राब्रवीत् जगाद एष, वायुरिति सम्बन्धः। भगवान् समस्तैश्वर्य्यगुणयुक्तः, अणिमादिगुणयुक्त इत्यर्थः। अभिशब्दितः कीर्त्तितः।

स्वयम्भूत्वे हेतुत्रितयमाह—स्वातन्त्र्यादित्यादि। स्वातन्त्र्यादिति स्वकर्म्मविषये नान्येन प्रेर्य्यत इत्यर्थः। नित्यभावात् नित्यस्य हि कारणरहितत्वेन स्वातन्त्र्यमतश्च स्वयम्भूत्वमित्यर्थः। सर्व्वगत्वाच्चेति यो हि सर्व्वगतः स स्वयम्भूः, आकाशवत्। चकारात् सूक्ष्मत्वमपि परमाणोरिव स्वयम्भूत्वे हेतुः समुच्चीयते। कथं पुनरस्य सर्व्वगत्वं यावता पार्थिवद्रव्यमूर्त्तिषु वायुर्नास्तीत्याह—सर्व्वेषामित्यादि। सर्व्वेषां स्थावरजङ्गमानां, सर्व्वात्मा कारणकार्य्यात्मकत्वेन, सर्व्वरूपः सर्व्वप्रयोजनहेतुरिति केचित्। सर्व्वलोकनमस्कृत इति कुत इत्याह—स्थित्युत्पत्तिविनाशेष्वित्यादि। स्थितिर्जीवनम्। अव्यक्तोऽदृश्यमूर्त्तिः। व्यक्तकर्म्मा प्रकटक्रियः। शीत इति असंयुक्तस्य वायोर्गुणोऽयं संयुक्तस्तूष्णोऽपि खरः खरस्पर्शः, कर्कोटिकफलवत्। तिर्य्यग्गस्तिर्य्यग्गामी, द्विगुणः शब्दस्पर्शगुणः। रजोबहुल इति त्रिगुणत्वेऽप्युत्कर्षविशेषात् रजःप्रबलत्वमस्य। अचिन्त्यवीर्य्यः अचिन्त्यशक्तिः अभाव्यशक्तिरिति यावत्। सा चास्य शक्तिः शरीरे रसदोषमूत्रपुरीषादिविभागोऽवयवादिसंस्थानकारणम्, दोषधातुमलसंवाहनादिश्च, शरीराद् वहिस्तु सञ्चरतो धरणीधारणादिः। दोषाणां नेता दोषधातुमलानां प्रेरक इत्यर्थः। अन्ये तु वायोरपि वायुरेव नेतेति बहुवचनं समर्थयन्ति। रोगसमूहराडिति रोगसमूहे रोगहेतुवृन्दे पित्तकफरक्तादौ राजते शोभते इति रोगसमूहराट्। ननु राट्शब्दो राजपर्य्यायः, 'स रोगानीकराट् स्मृतः' इत्यग्रेतनेन सह विरोधापत्तेः। आशुकारी शीघ्रमत्ययकारित्वात्। मुहुर्म्मुहुः प्रकृतिभूतोऽपि चरतीति मुहुश्चारी। पक्वाधानगुदालय इति पक्वाशयगुदौ स्थानमस्येत्यर्थः॥ ३॥

देहे विचरतस्तस्य लक्षणानि निबोध मे ॥ ४ ॥
दोषधात्वग्निसमतां सम्प्राप्तिं विषयेषु च।
क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिलः ॥ ५ ॥
यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः।
भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयः॥
प्राणोदानौ समानश्च व्यानश्चापान एव च।
स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥ ६ ॥
वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते।
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ ७ ॥

निबोध मे इति निबोध जानीहि, मे मत्सकाशात्। धातुशब्दानन्तरमादिशब्दो लुप्तो द्रष्टव्यः। तेन मलोपधातूनामपि ग्रहणम्; अथवा धातुशब्देन मलोपधातव उच्यन्ते, शरीरधारणकारणात्। विषयेषु शब्दस्पर्शरूपरसगन्धेषु। क्रियाणां कायवाङ्मानसीनाम्। आनुलोम्यं प्रवर्त्तकत्वम्। गयदासाचार्य्यस्तु इमं श्लोकमिन्द्रियार्थोपसम्प्राप्तिमित्यादीनि कृत्वा पठति। स च विस्तरभयान्न लिखितः ॥ ४।५ ॥

तदेवं सर्व्वानिलस्य सामान्येन स्वास्थ्यहेतुत्वं प्रदर्श्य स्थानोपाधिभेदेन भिन्नस्य नामान्तरविशिष्टस्य प्रति स्थान विशिष्टस्वस्थरोगांश्च दर्शयन्नाह—यथाग्निरित्यादि। यथा—अग्निः पित्तग एक एव पाचकरञ्जकालोचकभ्राजकसाधकेति नाम्ना (न पुनरत्र बाह्याग्नेर्गार्हपत्याहवनीयदक्षिणाग्न्यावसथ्यसभ्यलक्षणा भेदाः), स्थानेनामपक्वाशयादिना, क्रियया अन्नपचनादिकया, आमयेनाम्लपाकादिना पञ्चविधः; एवमनिलोऽप्येक एव नामादिभिः पञ्चविधः (?)। अन्ये तु पुनरत्र बाह्याग्नेर्गार्हपत्याहवनीयदक्षिणाग्न्यावसथ्यसभ्यलक्षणान् पञ्चभेदानाहुः, तन्नेच्छति गयदासाचार्य्यः। तत्र वायोर्नामान्याह—प्राणोदानावित्यादि। स्थानस्थाः स्थानशब्देनात्र स्वास्थ्यमुच्यते। यापयन्ति धारयन्ति ॥ ६ ॥

वक्त्रसञ्चारित्वस्योपलक्षणं, तेन मूर्द्धोरःकण्ठनासिका अपि प्राणस्य स्थानं, अन्तः अभ्यन्तरमन्नं प्रवेशयति देहधारणाय। प्राणांश्चाप्यवलम्बते इति प्राणान् अग्न्यादीन्, अवलम्बते स्वक्रियासु योजयति। गयदासाचार्य्यस्तु एवं मन्यते—प्राणानामग्निसोमादीनामवलम्बनवचनेन आधारभूतहृदयावलम्बनम् एवोच्यते। एतेन प्राणाधारहृदयधारणेन प्राणधारणमेवोक्तम्। अतएव प्राणनामवलम्बनेन मरणमूलत्वमुच्यते। यदुक्तं श्रुतौ—"यथा सैन्धवोऽश्वः शङ्कुमुत्पाट्य धावति एवमेव प्राणो लब्धः सर्व्वान् वायूनुत्पाट्य प्रयाणकाले धावति" इति। श्वासादिकानित्यादिशब्दात् प्रतिश्यायस्वरभेदकासादयः ॥ ७ ॥

उदानो नाम यस्तूर्द्ध मुपैति पवनोत्तमः ।
तेन भाषितगीतादि-विशेषोऽभिप्रवर्त्तते ।
ऊर्द्ध जत्रुगतान् रोगान् करोति च विशेषतः ॥ ८ ॥
आमपक्काशयचरः समानो वह्निसङ्गतः ।
सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि ।
गुल्माग्निषङ्गातीसार-प्रभृतीन् कुरुते गदान् ॥ ९ ॥
कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः ।
स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि ।
क्रुद्धश्च कुरुते रोगान् प्रायशः सर्व्वदेहगान् ॥ १० ॥
पक्काधानालयोऽपानः काले कर्षति चाप्ययम् ।
समीरणः शकृन्मूत्र-शुक्रगर्भार्त्तवान्यधः ।
क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥ ११ ॥
शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः ।
युगपत् कुपिताश्चापि देहं भिन्द्युरसंशयम् ॥ १२ ॥

उदानस्य प्रकृतिभूतस्य स्थानादि व्यापन्नस्य च रोगान् निर्द्दिशन्नाह—उदान इत्यादि । उदैति गच्छति । स्थानं पुनरनुक्तमप्यस्य नाभ्युरःकण्ठादि । भाषितगीतादिरिति आदिशब्दादुच्छ्वासादि-विशेषः । विशेषोऽभिप्रवर्त्तते इत्यत्र केचित्तु विषयेऽभिप्रवर्त्तते इति पठन्ति, केचिद् विषयोऽभिवर्त्तते इति पठन्ति । ऊर्द्धं जत्रुगतानिति नयनवदनघ्राणश्रवणशिरःसंश्रयान्, चकारादन्यानपि कासादीन् करोति ॥ ८ ॥

आमपक्वेत्यादि । पाकः पक्वं नपुंसके भावे क्तः । आमस्य पक्वमामपक्वं, तस्याशयः पच्यमानाहाराशय इत्यर्थः, तत्र चरतीति आमपक्काशयचरः । वह्निसङ्गत इत्यत्राग्निसहायवानिति केचित् पठन्ति, तत्रापि स एवार्थः । सोऽन्नं पचति इत्यग्निसन्धुक्षणाद् भक्ताकार इव । तज्जान् अन्नपाकजान्, विशेषान् रसदोषमूत्रपुरीषाणि, विविनक्ति पृथक् करोति ॥ ९ ॥

रससंवहनोद्यत इत्यत्रादिशब्दो द्रष्टव्यः । तेन रसादिसंवहनोद्यत इत्यर्थः । संवहनं प्रेरणम् । पञ्चधा चेष्टयत्यपि इति प्रसारणाकुञ्चनविनमनोन्नमनतिर्य्यग्गमनानि पञ्च चेष्टाः; अन्ये तु गतिप्रसारणोत्क्षेपणनिमेषोन्मेषैः पञ्चभिः प्रकारैः पञ्चधेति व्याख्यानयन्ति । सर्व्वदेहगान् ज्वरातीसाररक्तपित्तप्रभृतीन् । पक्काधानालयः पक्काशयस्थान इत्यर्थः । वस्त्याश्रयान् अश्मर्य्यादीन्, गुदाश्रयान् भगन्दरादीन् ॥ १० । ११ ॥

इदानीमुपलक्षणार्थं विकृतवातद्वयादि कर्म्म दर्शयन्नाह—शुक्रदोषप्रमेहास्त्वित्यादि । शुक्रस्य सर्व्वाङ्गगतत्वात् प्रमेहस्य सर्व्वदेहगतरसादिदूष्यप्रभवत्वाद् व्यानकृतत्वं, मेढ्रद्वारसंश्रितत्वादपान-कृतत्वञ्च । तेषां पञ्चानां युगपत् प्रकोपे नियमेन देहनाशं दर्शयन्नाह—युगपदित्यादि । युगपद् एककालमित्यर्थः । भेदोऽत्र देहविनाशोऽभिप्रेतः ॥ १२ ॥

अत ऊर्द्ध्वं प्रवक्ष्यामि नानास्थानान्तराश्रितः।
बहुशः कुपितो वायुर्विकारान् कुरुते हि यान्॥ १३॥
वायुरामाशये क्रुद्धश्छर्द्द्यादीन् कुरुते गदान्।
मोहं मूर्च्छां पिपासाञ्च हृद्ग्रहं पार्श्ववेदनाम्॥ १४॥
पक्वाशयस्थोऽन्त्रकूजं शूलं नाभौ करोति च।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम्॥ १५॥
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः॥ १६॥
वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमु-चुमायनम्।
त्वक्स्थो निस्तोदनं कुर्य्यात् त्वग्भेदं परिपोटनम्॥ १७॥
व्रणांश्च रक्तगो ग्रन्थीन् सशूलान् मांससंश्रितः।
तथा मेदःश्रितः कुर्य्याद् ग्रन्थीन् मन्दरुजोऽव्रणान्।
कुर्य्याच्छिरागतः शूलं शिराकुञ्चनपूरणम्॥ १८॥
स्नायुप्राप्तः स्तम्भकम्पौ शूलमाक्षेपणं तथा॥ १९॥

अत इत्यादि। नानास्थानान्तराश्रितः कुपितः सन् वायुर्बहुशो यान् विकारान् कुरुते तान् प्रवक्ष्यामीति सम्बन्धः। छर्द्द्यादीनिति आदिशब्दाद् रुजः पार्श्वोदरहृत्स्तम्भतोदादिका ग्राह्याः, अथवा ऊर्द्ध्वगरक्तपित्तादिकाः। मोहो नैवात्यन्तचित्तनाशः। मूर्च्छा चेतनाच्युतिः॥ १३।१४॥

पक्वेत्यादि। अन्त्रकूजं अन्त्रे अव्यक्तशब्दम्। चकारात् वातविण्मूत्रसङ्गं जङ्घोरुत्रिकपार्श्वपृष्ठादीन् प्रति शूलञ्च करोति। शूलं नाभावित्यत्र शूलानाहाविति केचित् पठन्ति, व्याख्यानयन्ति च—पक्वाशय आनह्यते समन्ताद् विवध्यते इवेति वेदनाप्रकार एक आनाहः, द्वितीयस्तु विसूचिकाप्रतिषेधे प्रोक्तलक्षण एव॥ १५॥

श्रोत्रादिषु क्रुद्धः सन् समीरण इन्द्रियवधं कुर्य्यादिति सम्बन्धः। श्रोत्रादिषु श्रोत्रघ्राणदर्शनरसनत्वक्षु, इन्द्रियवधमित्यनेनाश्रुत्यघ्राणादर्शनारसनास्पर्शानि वेदितव्यानि। त्वक्स्थः रसस्थः समीरणो वैवर्ण्यादि कुर्य्यादिति सम्बन्धः। सुप्तिं स्पर्शाज्ञानम्। चुमुचुमायनं सर्षपकल्कावलिप्तानामिवाङ्गानां वेदनाम्। त्वग्भेदं त्वचो भेदमेव। परिपोटनं सर्व्वतः परिपुटनं त्वच एव॥ १६।१७॥

व्रणांश्च रक्तगः कुर्य्यादिति शेषः। अमुं पाठं केचिन्न पठन्ति, तन्न, गयदासाचार्य्यस्य सम्मतत्वात्। ग्रन्थीन् सशूलान् मांससमाश्रितः समीरण इति सम्बन्धः। अव्रणान् व्रणरहितान्। शिराकुञ्चनं कुटिला शिरेति लोके वदन्ति। स्तम्भः निश्चलीकरणम्। आक्षेपणं चालनम्।

हन्ति सन्धिगतः सन्धीन् शूलशोफौ करोति च ॥ २० ॥
अस्थिशोषञ्च भेदञ्च कुर्य्याच्छूलञ्च तच्छ्रितः ॥ २१ ॥
तथा मज्जगते रुक् च न कदाचित् प्रशाम्यति ॥ २२ ॥
अप्रवृत्तिः प्रवृत्तिर्वा विकृतिः(ता) शुक्रगेऽनिले ॥ २३ ॥
हस्तपादशिरोधातूंस्तथा सञ्चरति क्रमात्।
व्याप्नुयाद् वाखिलं देहं वायुः सर्व्वगतो नृणाम् ॥ २४ ॥
स्तम्भनाक्षेपणस्वाप-शोफशूलानि सर्व्वगः।
स्थानेषूक्तेषु मिश्रश्च संमिश्राः कुरुते रुजः ॥ २५ ॥
कुर्य्यादवयवप्राप्तो मारुतस्त्वमितान् गदान्।
दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ २६ ॥
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥ २७ ॥
सूचीभिरिव निस्तोदः स्पर्शद्वेषः प्रसुप्तता।
शेषाः पित्तविकाराः स्युर्मारुते शोणितान्विते ॥ २८ ॥

हन्ति इत्यादि। एतेनाकुञ्चनप्रसारणयोरभाव उक्तः। तच्छ्रित इति अस्थ्याश्रित इत्यर्थः। तथा मज्जगते यथाऽस्थ्याश्रितोऽस्थिशोषं तथा मज्जाश्रितो मज्जशोषं कुर्य्यादित्यर्थः। किंविशिष्टा प्रवृत्तिरित्याह—विकृतिः(ता) अतिशीघ्रातिमन्दग्रथितविवर्णादियुक्तत्यर्थः ॥ १८—२३ ॥

एकाङ्गगत एकधातुगतो वाप्युपेक्षितः सर्व्वाङ्गगतः सर्व्वधातुगतो वा भवतीति दर्शयन्नाह—हस्तेत्यादि। वायुस्तथा हस्तपादशिरः क्रमात् सञ्चरति यथाऽखिलं देहं व्याप्नुयात्, तथा उपेक्षितः सन् धातून् क्रमात् सञ्चरति यथा सर्व्वगतो वा भवति सर्व्वधातुगश्च भवतीत्यर्थः। व्याप्नुयाद् वा इति वाशब्दो भिन्नक्रमे, सर्व्वगतो वेत्यत्र द्रष्टव्यः। तस्येदानीं सर्व्वाङ्गगतस्य लिङ्गं दर्शयन्नाह—स्तम्भनेत्यादि। सर्व्वगो वायुः, सर्व्वस्मिन् शरीरे स्तम्भनादिकं करोति। तस्य वायोः प्रसरणे पित्तादिसंयुक्तस्य पित्ताद्यावरणप्रतिपत्तिहेतुं दर्शयन्नाह—स्थानेष्वित्यादि। मिश्रः पित्तादिभिः। पित्तादीनामौष्ण्यादिस्वभावलिङ्गदर्शनाद् दाहादिकार्य्यलिङ्गदर्शनाच्च पित्ताद्यावरणं ज्ञेयम्। केवलस्य वायोः शीतस्वभावत्वाद् दाहः पित्तं विना नोत्पद्यत इति ॥ २४। २५ ॥

तस्येदानीमवयवगतस्यानेकरोगकारणत्वं दर्शयन्नाह—कुर्य्यादित्यादि। इदानीं संमिश्राः कुरुते रुज इति सूत्रितमावरणं विवृण्वन्नाह—दाहेत्यादि। दाहः अग्निदग्धस्येव, सन्तापो घर्म्मादिसंस्थितस्येव। शैत्यशोफेत्यादि। तस्मिन्नेव वायौ ॥ २६।२७ ॥

सूचीभिरित्यादि। सदनमङ्गग्लानिः, क्लमोऽनायासश्रमः, हर्षो रोमहर्षः, कफाधिकं श्लेष्मबहुलं विड्मूत्रम्। असृग्दरः स्त्रीणामेव। अस्थिपर्व्वणामस्थिसन्धीनां, चेष्टा गमनादिकाः ॥ २८—३८ ॥

प्राणे पित्तावृते च्छर्द्दिर्दाहश्चवोपजायत ॥ २९ ॥
दौर्ब्बल्यं सदनं तन्द्रा वैरस्यञ्च * कफावृते ॥ ३० ॥
उदाने पित्तसंयुक्ते मूर्च्छादाहभ्रमक्लमाः ॥ ३१ ॥
अस्वेदहर्षौ मन्दाग्निः शीतस्तम्भौ कफावृते ॥ ३२ ॥
समाने पित्तसंयुक्ते स्वेददाहौष्ण्यमूर्च्छनम् ॥ ३३ ॥
कफाधिकञ्च विण्मूत्रं रोमहर्षः कफावृते ॥ ३४ ॥
अपाने पित्तसंयुक्ते दाहौष्ण्ये स्यादसृग्दरम् ॥ ३५ ॥
अधःकाये गुरुत्वञ्च तस्मिन्नेव कफावृते ॥ ३६ ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ३७ ॥
गुरूणि सर्व्वगात्राणि स्तम्भनश्चास्थिपर्व्वणाम् ।
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥ ३८ ॥
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
शोकाच्च † प्रमदामद्यव्यायामश्चातिपीड़नात् ॥
ऋतुसात्म्यविपर्य्यासात् स्नेहादीनाञ्च विभ्रमात् ।
अव्यवाये तथा स्थूले वातरक्तं प्रकुप्यति ॥ ३९ ॥
हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं यातः कारणैः सेवितैः स्वैः ।
तीक्ष्णोष्णाम्लक्षारशाकादिभोज्यैः सन्तापाद्यैर्भूयसा सेवितैश्च ॥

सूचीभिरिव निस्तोद इत्यादिवाक्येनाप्रकुपितशोणितावृतवातस्य लक्षणमुक्त्वा इदानीं प्रकुपितशोणितावृतवातरक्तस्य प्रकोपकारणं दर्शयन्नाह—प्रायशः सुकुमाराणामित्यादि। सुकुमाराणां वातरक्तं प्रकुप्यतीति सम्बन्धः। मिथ्याहारविहारिणामिति मिथ्या अनुचितः, विहारः कायवाङ्मनोव्यापारः, व्यायामः शरीरायासजननं कर्म्म, विभ्रमोऽन्यथाकरणम्, अव्यवाये मैथुनवर्ज्जिते। केचित् प्रायशः सुकुमाराणामित्यादिग्रन्थं वातरक्तं प्रकुप्यतीति यावन्न पठन्ति, चिकित्सिते पठिष्यमाणत्वात् ॥ ३९ ॥

तस्य सम्प्राप्तिं दर्शयन्नाह—हस्तीत्यादि। अन्यैश्चेति अन्यैर्भारहरणादिभिः कारणैरित्यर्थः। कोपं यातः गच्छत इत्यर्थः। कारणैः सेवितैः स्वैर्विदाह्यादिभिः। तच्च रक्तं वायोर्मार्गं संरुणद्धि।

* वैरस्यञ्चेत्यत्र वैवर्ण्यञ्चेति वा पाठः।

† रोगाच्चेति पाठान्तरम्।

क्षिप्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्धयाशु यातः।
क्रुद्धोऽत्यर्थं मार्गरोधात् स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु॥
तत् संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम्॥ ४०॥
तद्वत् पित्तं दूषितेनासृजाक्तं श्लेष्मा दुष्टो दूषितेनासृजाक्तः॥ ४१॥
स्पर्शोद्विग्नौ तोदभेदप्रशोष-स्वापोपेतौ वातरक्तेन पादौ।
पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोफौ मृदू च।
कण्डूमन्तौ श्वेतशोतौ सशोफौ पोनस्तब्धौ श्लेष्मदुष्टे तु रक्ते॥ ४२॥
सर्व्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं रूपं पादयोर्दर्शयन्ति॥ ४३॥

प्राग्रूपे शिथिलौ स्विन्नौ शीतलौ सविपर्य्ययौ।
वैवर्ण्यतोदसुप्तत्व-गुरुत्वौषसमन्वितौ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति॥
आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतञ्च यत्।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः।
शोणितं तदसाध्यं स्याद् याप्यं संवत्सरोत्थितम्॥ ४४॥

कथम्भूतस्य वायोरित्याह—आशु यातः शीघ्रं गच्छत इत्यर्थः। अत्युद्रिक्तमतिशयेन वृद्धिं गतं रक्तम्। तत् सम्पृक्तमिति तत् रक्तं सम्पृक्तं संसृष्टम्। वायुना दूषितेनेति दूषितेन वायुना सह। तत्प्राबल्याद् वातप्राबल्यात् शोणितस्याप्राबल्यात्, तयोर्वातरक्तयोः प्राबल्यादिति कश्चित्। तद्वत् पित्तमिति दुष्टं पित्तमित्यर्थः, दूषितेनासृजाक्तमिति दूषितेन रक्तेन मिश्रम्॥ ४०।४१॥

तस्येदानीं वातादिविशेषेण विशिष्टलिङ्गं दर्शयन्नाह—स्पर्शोद्विग्नावित्यादि। स्पर्शोद्विग्नौ स्पर्शासहौ पादाविति सम्बन्धः। प्रशोषः शुष्कता, स्वापः स्पर्शाज्ञानम्। एतेन वातप्रबलवातरक्तलक्षणमुक्तम्। पित्तासृग्भ्यामिति वातशोणित एव यदा पित्तमसृक् च बलवत्तरं भवति तदेत्यर्थः। रक्तशोफौ रक्तवर्णशोफौ। कण्डूमन्तौ पादाविति सम्बन्धः। पीनौ स्थूलौ॥ ४२।४३॥

तस्य पूर्व्वरूपमाह—प्राग्रूपे इत्यादि। सविपर्य्ययाविति कठिनास्विन्नोष्णौ पादावित्यध्याहारः। ओषो दाहः। केचिदत्र पूर्व्वरूपं न पठन्ति, चिकित्सायां पठिष्यमाणत्वात्। तस्येदानीं पादमात्रेऽभिजातस्य कालेनावयवान्तरानुसरणं निर्द्दिशन्नाह—पादयोरित्यादि। मूलमास्थाय कन्दं प्राप्य। आखोरित्यादि उन्दुरस्य विषं मूलमास्थाय पश्चात् कुपितं सद् देहं सकलमेवानुयाति।

तस्येदानीमसाध्यादिलक्षणं दर्शयन्नाह—आजानुस्फुटितमित्यादि। आजानुस्फुटितं जानुपर्य्यन्तमुत्स्फुटितम्, प्रभिन्नं विदीर्णं, प्रस्रुतं स्रावयुक्तम्। उपद्रवैः प्राणमांसक्षयादिभिर्यथोक्तैः। आदिग्रहणात् अङ्गुलिवक्रताखञ्जत्वादयोऽपि ग्राह्याः। जुष्टं सहितं, यदाजानुपर्य्यन्तं

यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः।
तदाक्षिपत्याशु मुहुर्म्मुहुर्देहं मुहुश्चरः।
मुहुर्म्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः॥ ४५॥
सोऽपतानकसंज्ञो यः पातयत्यन्तरान्तरा।
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति॥
स दण्डवत् स्तम्भयति कृच्छ्रो दण्डापतानकः।
हनुग्रहस्तदात्यर्थं सोऽन्नं कृच्छ्रान्निषेवते॥ ४६।४७॥
धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः।
अङ्गुलीगुल्फजठर-हृद्वक्षोगलसंश्रितः॥
स्नायुप्रतानमनिलो यदाक्षिपति वेगवान्।
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्॥ ४८॥

स्फुटितं वातप्राबल्यात्, यच्च जानुपर्य्यन्तं प्रभिन्नं प्रस्नुतञ्च पित्तरक्तप्राबल्यात्, तदप्यसाध्यमेव॥ ४४॥

इदानीं वातरक्तमभिधायाक्षेपकमाह—यदा तु धमनीरित्यादि। धमन्यः नाड्यः, अभ्येति व्याप्नोति। आक्षिपति चालयति। मुहुश्चर इति वारंवारं चरणशीलो वायुः, मुहुश्चरत्वेनैव मुहुर्म्मुहुराक्षेपणं युक्तम्, अन्ये तु वहिश्चर इति पठन्ति, तन्नेच्छति गयदासाचार्य्यः। तदाक्षेपात् देहाक्षेपात्। इदमाक्षेपकस्य सामान्यलक्षणमुक्तम्॥ ४५॥

आक्षेपकविशेषानाह—सोऽपतानक इत्यादि। यः आक्षेपकोऽन्तराऽन्तरा पातयति सोऽपतानक इत्यर्थः। इदं सामान्यापतानकलक्षणमुक्तं, गयदासाचार्य्येणापतानकलक्षणं येनापतान्यंत' इत्यादिवाक्येनाभिधाय व्याख्यातम्—तथा येन वायुना कर्तृभूतेन हेतुभूतेन वा पुमान् अपतान्यते तमो दृश्यते मोह्यते इति यावत् सोऽपतानक इति। स एवापतानकः हृदिस्थमनोऽधिष्ठानेन सकफेन वायुना जन्यत इति। स एवापतानकस्त्रिधा—दण्डापतानकः, अन्तरायामः, वहिरायामश्च। तत्र दण्डापतानकलक्षणमाह—कफान्वितो भृशमित्यादि। तास्वेव सर्व्वासु धमनीषु भृशं तिष्ठतीति सम्बन्धः। कृच्छ्रः कष्टसाध्यः। हनुग्रहस्तु दण्डापतानके अन्यत्रापि वायौः स्यात्। स दण्डापतानकवान् पुरुषः॥ ४६। ४७॥

धनुःस्तम्भसंज्ञकमन्तरायामं दर्शयन्नाह—धनुस्तुल्यमित्यादि। तस्यैव भाष्यं वक्तुमाह—अङ्गुलीत्यादि। अङ्गुल्योऽत्र पादाङ्गुल्यः। गुल्फः पादपार्श्वयोरुपरिग्रन्थिः। जठरम् उदरं, हृत् हृदयं, वक्षः स्तनयोरन्तरालम्, गलः कण्ठः। एतेषु स्थानेषु संश्रित आश्रितो वायुः। प्रतानं

अभ्यन्तरं धनुरिव यदा नमति मानवः।
तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली॥
वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च।
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम्॥ ४९।५०॥
कफपित्तान्वितो वायुर्वायुरेव च केवलः।
कुर्य्यादाक्षेपकन्त्वन्यं चतुर्थमभिघातजम्॥ ५१॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः।
अभिघातनिमित्तश्च न सिध्यत्यपतानकः॥ ५२॥
अधोगमाः सतिर्य्यग्गा धमनीरूर्द्ध्वदेहगाः।
यदा प्रकुपितोऽत्यर्थं मातरिश्वा प्रपद्यते॥
तदान्यतरपक्षस्य सन्धिवन्धान् विमोक्षयन्।
हन्ति पक्षं तमाहुर्हि पक्षाघातं भिषग्वराः॥ ५३॥
यस्य कृत्स्नं शरीरार्द्धमकर्म्मण्यमचेतनम्।
ततः पतत्यसून् वापि जहात्यनिलपीड़ितः॥ ५४॥

स्नायुविस्तारम्। वहिरायामं निर्द्दिशन्नाह—वाह्यस्नायुप्रतानस्थ इत्यादि। वाह्यस्नायुप्रतानस्थः वाह्यस्नायुविस्तारस्थः, वाह्यस्नायवः पादमूलपिण्डिकाकटीपृष्ठग्रीवापश्चिमभागाश्रयाः। वक्षःकट्यूरुभञ्जनमिति। वक्षःकट्यूरुभञ्जनत्वे सत्येवासाध्यत्वम्। अभग्नवक्षःकट्यादिकस्तु नर उपक्रम्य एव॥ ४८—५०॥

तस्याक्षेपकस्य इतरदोषस्य संसर्गेण निदानविशेषाच्च वायोः संख्याभेदं दर्शयन्नाह— कफपित्तान्वित इत्यादि। एकः कफान्वितः, द्वितीयः पित्तान्वितः, तृतीयः केवलवातकृतः, चतुर्थोऽभिघातजः। चतुर्थमभिघातजमिति निदानविशेषात्। दण्डापतानकादयस्त्रयश्चतुर्थः पुनरभिघातज इति श्रीजेज्झटाचार्य्यः, तन्नेच्छति गयदासाचार्य्यः, गर्भपातनादिनिमित्तभेदेन संख्यातिरेकात्। श्रीब्रह्मदेवस्तु आक्षेपकश्चतुर्द्धा—अपतानकः, संसृष्टाक्षेपकः, केवलाक्षेपकः, अभिघातजश्च। तत्रापतानकः सोऽपतानकेत्यादिना वक्षःकट्यूरुभञ्जनमिति पर्य्यन्तेनोक्तः। कफान्वितो वायुरिति संसृष्टाक्षेपकः। वायुरेव च केवल इति केवलाक्षेपकः, चतुर्थः पुनरभिघातज इत्याह। तस्यैवाक्षेपकस्यापतानकसंज्ञां प्राप्तस्यासाध्यत्वं दर्शयन्नाह—गर्भपातनिमित्तश्चेत्यादि। गर्भपातादिनिमित्तास्त्रयोऽप्यागन्तवोऽसाध्याः। यदि कथञ्चिद्दैवयोगात् सिध्यन्ति तदा वैकल्यं जनयन्ति॥ ५१।५२॥

पक्षाघातमाह—अधोगमा इत्यादि। एकतरशरीरार्द्धधमनीरूर्द्ध्वाधस्तिर्य्यग्गता यदा स मातरिश्वा वायुः प्रपद्यते आश्रयतीत्यर्थः, तदान्यतरपक्षस्य एकतरशरीरार्द्धस्य, सन्धिवन्धान् विमोक्षयन् विमोचयन् पक्षं शरीरार्द्धं हन्ति। यस्य कृत्स्नमित्यादि। अकर्म्मण्यम् ईषत्कर्म्मक्षमम्। अचेतनम् अल्पचेतनं; यदा अकर्म्मण्यं भवति तदा पतति, यदाऽचेतनं भवति

शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः।
साध्यमन्येन संसृष्टमसाध्यं क्षयहेतुकम् ॥ ५५ ॥
वायुरूर्द्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः।
शङ्खौ च पीड़यत्यङ्गान्याक्षिपेन्नमयेच्च सः ॥
निमीलिताक्षो निश्चेष्टः स्तब्धाक्षो वापि कूजति।
निरुच्छ्वासोऽथवा कृच्छ्रादुच्छ्वस्यान्नष्टचेतनः ॥
स्वस्थः स्याद्धृदये मुक्ते ह्यावृते च प्रमुह्यति।
कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रकः ॥ ५६ ॥
दिवास्वप्नासन(म)स्थान-विकृतोर्द्ध्वनिरीक्षणैः *।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः ॥ ५७ ॥
गर्भिणीसूतिकाबाल-वृद्धक्षीणेष्वसृक्क्षये।
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ॥
हसतो जृम्भतो भाराद् विषमाच्छयनादपि।
शिरोनासौष्ठचिवुक-ललाटेक्षणसन्धिगः ॥
अर्द्दयित्वाऽनिलो वक्त्रमर्द्दितं जनयत्यतः।
वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम्।
ग्रीवाचिवुकदन्तानां तस्मिन् पार्श्वे तु वेदना ॥

तदा असून् प्राणान् परित्यजति। पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह—शुद्धवातहतमित्यादि। शुद्धः कफाद्यसंसृष्टः, अन्येन संसृष्टमितरदोषसम्बद्धम् ॥ ५३—५५ ॥

अपतन्त्रकमाह—वायुरूर्द्ध्वमित्यादि। हृदयं शिरः शङ्खौ च पीड़यतीति हृदयं कमलमुकुलाकारमधोमुखम्, भ्रुवोरन्ते कर्णललाटयोर्मध्ये शङ्खौ, अङ्गानि हस्तपादादीनि। आक्षिपेत् चालयेत्। कूजति कपोत इव शब्दं करोति, अथवा कृच्छ्रादुच्छ्वस्यादिति कष्टेनोच्छ्वासं कुर्य्यात्। केचिदपतन्त्रकमसुं न पठन्ति, अपतन्त्रकापतानकयोरैक्यात्। मन्यास्तम्भमाह—दिवास्वप्नेत्यादि। आसनम् उपवेशनं, स्थानम् ऊर्द्ध्वीभवनम्। विकृतोर्द्ध्वनिरीक्षणैः सततविकृतावलोकनैः। स एव वायुः। मन्यास्तम्भं केचिदपतानकपूर्व्वरूपं मन्यन्ते ॥ ५६।५७ ॥

अर्द्दितमाह—गर्भिणीत्यादि। सूतिका प्रसूता स्त्री। व्याहरतः शब्दं कुर्व्वतः। विषमाद् भाराद् विषमाच्च शयनादित्यर्थः। अन्ये तु विषमाच्छ्वसनादिति पठन्ति। अर्द्दयित्वा व्यथयित्वा। अपवर्त्तते वक्रीभवति। वाक्सङ्गः वाचोऽनिर्गमः। नेत्रादीनामित्यादिशब्दात् भ्रूगण्डाद्युप-

* विकृतोर्द्ध्वनिरीक्षणैस्तथा विकृताध्वनिरीक्षणैरिति च पाठान्तरम्।

यस्याग्रजो रोमहर्षौ वेपथुर्नेत्रमाविलम् ।
वायुरूर्द्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ।
तमर्द्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः ॥
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ।
न सिद्ध्यत्यर्द्दितं वा(गा)ढं त्रिवर्षं वेपनस्य च ॥ ५८ ॥
पार्ष्णीप्रत्यङ्गुलीनान्तु कण्डरा यानिलार्द्दिता ।
सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता ॥ ५९ ॥
तलं प्रत्यङ्गुलीनान्तु कण्डरा वाहुपृष्ठतः ।
वाह्वोः कर्म्मक्षयकरी विश्वाचीति हि सा स्मृता ॥ ६० ॥
वातशोणितजः शोफो जानुमध्ये महारुजः ।
शिरः क्रोष्टुकपूर्व्वन्तु स्थूलः क्रोष्टुकमूर्द्धवत् ॥ ६१ ॥

संग्रहः । तस्मिन् पार्श्वे इति यस्मिन् पार्श्वे अर्द्दितं भवति, तस्मिन् पार्श्वे ग्रीवादयो वक्रीभवन्ति, चिवुकं मुखकुहरस्याधोभागः । तस्य रूपमाह—यस्येत्यादि । अग्रजः पूर्व्वभावी । आविलं समलम् । वायुरूर्द्ध्वं प्रसर्पतीति शेषः । त्वचि स्वापः त्वचः स्पर्शाज्ञानम् । तस्यासाध्यत्वमाह—क्षीणस्येत्यादि । अनिमिषाक्षस्य स्तब्धाक्षस्य, प्रसक्ताव्यक्तभाषिणः सतताव्यक्तपदभाषिणः । अन्ये तु प्रसक्तं व्यक्तभाषिणः इति पठन्ति, प्रसक्तं प्रकर्षेण लग्नमित्यर्थः । वाढमतिशयेन, न सिध्यतीति सम्बन्धः । त्रिवर्षमिति संवत्सरत्रयान्वितम् । अन्ये तु नासाक्षिमुखस्राविणं त्रिवर्षमाहुः । वेपनस्य कम्पनशीलस्य । "गर्भिणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षये" इति अमुं पाठं श्रीजेज्जटादय आचार्य्या न पठन्ति । उच्चैर्व्याहरतोऽत्यर्थमित्यादौ कृत्वा पठन्ति, बहुवैद्यपठितत्वादस्माभिः पठितः ॥ ५८ ॥

गृध्रसीमाह—पार्ष्णीत्यादि । या कण्डरा सक्थ्नः क्षेपं निगृह्णीयात् गृध्रसीति हि सा स्मृतेति सम्बन्धः । पार्ष्णी गुल्फस्य पाश्चात्याधोभागः । प्रत्यङ्गुल्यः अङ्गुल्य एव, एतेनोपर्य्यधोभागगतकण्डराद्वयं गृह्यते । कण्डरा महास्नायुः । गुल्फादिविटपान्तं सक्थि, तस्य क्षेपं प्रसारणं निगृह्णीयात् अवरुन्ध्यादित्यर्थः । गृध्रसी रन्ध्रिणीति लोके । सा च वातात् वातकफाच्च । खञ्जनवाते न सातिशयव्यथा यथा गृध्रस्याम् । केचित् पार्ष्णीं प्रत्यङ्गुलीनामिति द्वितीयान्तं पठन्ति । तत्रापि पार्ष्णीं लक्ष्यीकृत्य या कण्डरा अङ्गुलीनाञ्च या कण्डरा इति कण्डराद्वयम् ॥ ५९ ॥

गृध्रसीसदृशीमेकवाहुगतां विश्वाचीमाह—तलेत्यादि । तलशब्दोऽयमुपरि वर्त्तते, तेन करस्याभ्यन्तरकण्डरा गृहीता, वाहुपृष्ठत इत्यनेन वाह्यकण्डरा गृहीता । वाह्वोरिति द्विवचनं सामान्यापेक्षया, कदाचित् कस्मिंश्चिद् वाहौ भवति । अनिलार्द्दितेत्यत्रापि सम्बध्यते । चकारोऽत्र गृध्रसीविश्वच्योर्नामान्तरमनुक्तं खल्ल्यभिधानं समुच्चिनोति । अन्ये त्वत्रापि तलं प्रत्यङ्गुलीनामिति पूर्व्ववद् द्वितीयान्तं पठन्ति, तेन तलं लक्ष्यीकृत्य या कण्डरा वाहुपृष्ठतश्च या कण्डरेति कण्डराद्वयं गृह्यते ॥ ६० ॥

क्रोष्टुकशिर आह— वातेत्यादि । यो जानुमध्ये वातशोणितजो महारुजः क्रोष्टुकमूर्द्धवत्

वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद् यदा।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ६२ ॥
प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ६३ ॥
न्यस्ते तु विषमे पादे रुजः कुर्य्यात् समीरणः।
वातकण्टक इत्येष विज्ञेयः खुड्काश्रितः ॥ ६४ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः।
विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ६५ ॥
हृष्यतश्चरणौ यस्य भवतश्च प्रसुप्तवत्।
पादहर्षः स विज्ञेयः कफवातप्रकोपजः ॥ ६६ ॥
अंसदेशस्थितो वायुः शोषयित्वांसवन्धनम्।
शिरास्त्वाकुञ्च्य तत्रस्थो जनयत्यववाहुकम् ॥ ६७ ॥

स्थूलः शोफो भवति, स क्रोष्टुक शिर इति ज्ञेयः। वातशोणितज इति वातशोणिताभ्यां जातः वातशोणितजः, न पुनः वातरक्तेन व्याधिना जनितः; अन्ये तु वातेन शोणितेन च जात इति नेच्छन्ति, किन्तर्हि वातरक्तज इति रोगकारणमेव रोगमिच्छन्ति। शिरःक्रोष्टुकपूर्व्वमिति क्रोष्टुकशब्दपूर्व्वं शिरः। तस्य रोगस्य क्रोष्टुकशिर इति नामेत्यर्थः। क्रोष्टुकमूर्द्धवत् शृगालमस्तकवत् ॥ ६१ ॥

खञ्जपङ्गुलवातावाह—वायुरित्यादि। आक्षिपेदिति ईषत् क्षिपेत्, खञ्जे विकलगतेर्दर्शनात्। सक्थ्नोर्द्वयोर्वधादिति सर्व्वथागतिदर्शनात् पङ्गुरित्यर्थः। द्वयोरिति पौनरुक्त्यप्रसङ्गात् युगपत् सन्धिद्वयवधादित्यर्थः ॥ ६२ ॥

कलायखञ्जमाह—प्रक्रामन्नित्यादि। प्रक्रामन् पादविक्रमं कुर्व्वन्, गमनारम्भे एव वेपते कलायखञ्ज इत्ययं खञ्जाद् विशेषः। मुक्तसन्धिप्रबन्धनमिति शिथिलसन्धिबन्धनमित्यर्थः ॥ ६३ ॥

वातकण्टकमाह—न्यस्ते इत्यादि। न्यस्ते तु विषमे पादे इति विषमस्थाने निक्षिप्तपादे इत्यर्थः। खुड्काश्रित इति पादजङ्घासन्धिसंश्रय इत्यर्थः। पार्ष्णीस्थित इत्यन्ये ॥ ६४ ॥

पाददाहमाह—पादयोरित्यादि। विशेषतश्चंक्रमतः विशेषेण गच्छतः। तिष्ठतस्तु सामान्येन ॥ ६५ ॥

पादहर्षमाह—हृष्यतश्चरणावित्यादि। हृष्यत इति हर्षो रोमाञ्चप्रायो वेदनाविशेषोऽन्तः शीतकरः। भवतश्च प्रसुप्तवदिति स्पर्शाज्ञानात् सुप्ताविव भवत इत्यर्थः ॥ ६६ ॥

अंसशोषाववाहुकावाह—अंसदेशेत्यादि। अंससमीपोपलक्षितो देशः अंसदेशः, अंसः वाहुशिरः। अंसबन्धनं श्लेष्माणमित्यर्थः। अंसबन्धनं शोषयित्वा अंसशोषं रोगं करोतीति वाक्यशेषो ज्ञेयः। तत्रस्थः अंसदेशस्थित इत्यर्थः ॥ ६७ ॥

यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति।
शुद्धः श्लेष्मान्वितो वापि वाधिर्य्यं तेन जायते॥ ६८॥
हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिलः।
कर्णयोः कुरुते शूलं कर्णशूलं तदुच्यते॥ ६९॥
आवृत्य सकफो वायुः धमनीः शब्दवाहिनीः।
नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्॥ ७०॥
अधो या वेदना याति वर्च्चोमूत्राशयोत्थिता।
भिन्दतीव गुदोपस्थं सा तूणीत्युपदिश्यते॥ ७१॥
गुदोपस्थोत्थिता सव प्रतिलोमविसर्पिणी।
वेगैः पक्वाशयं याति प्रतितूणी तु सा स्मृता॥ ७२॥
साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्।
आध्मानमिति जानीयाद् घोरं वातनिरोधजम्॥ ७३॥
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्।
प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्॥ ७४॥
नाभेरधस्तात् सञ्जातः सञ्चारी यदि वाचलः।
अष्ठीलावद् घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः।
वाताष्ठीलां विजानीयाद् वहिर्मार्गावरोधिनीम्॥ ७५॥

वाधिर्य्यमाह—यदेत्यादि। शुद्धः केवलः। अपिशब्दाद् रक्तपित्तावरणयोरुपसंग्रहः। यद्यप्ययं व्याधिः शालाक्येऽपि पठ्यते, तथाप्यत्रापि पठनीयः, वृद्धसम्मतत्वात्॥ ६८॥

कर्णशूलमाह—हनुशङ्खेत्यादि। जिह्वागतवातरोगं दर्शयन्नाह—आवृत्येत्यादि। आवृत्य अवरुध्येत्यर्थः। मूकः वचनरहितः, मिन्मिनः सानुनासिकवाक्, गद्गदः अव्यक्तवाक्। तूणीवातमाह—अधो येत्यादि। भिन्दतीव गुदोपस्थमिति भेदं कुर्व्वतीव गुदोपस्थस्येत्यर्थः॥ ६९—७१॥

प्रतितूणीवातमाह—गुदोपस्थेत्यादि। प्रतिलोमविसर्पिणी अध उत्थितोर्द्ध्वगामिनी। वेगैरिति वेदनावेगैर्मुहुर्म्मुहुः स्वभावोपशमोपलक्षितैः, प्रतिलोमं प्रधाविता इति केचित्॥ ७२॥

आध्मानमाह—साटोपमित्यादि। आटोपं सञ्चलनं तेन सह वर्त्तते इति साटोपम्। उदरमत्र पक्वाशयः, घोरं कष्टकारि॥ ७३॥

प्रत्याध्मानमाह—विमुक्तेत्यादि। तदेव आध्मानमेव, आमाशयोत्थितं नाभिस्तनान्तरोत्थितम्, अतएव हृदयपार्श्वयोरप्यधिष्ठानमस्य प्राप्तं निरस्यन्नाह—विमुक्तपार्श्वहृदयमिति। व्याकुलितः आवृतः॥ ७४॥

वाताष्ठीलामाह—अष्ठीलावदित्यादि। अष्ठीला उत्तरापथे दीर्घवर्त्तुलपाषाणविशेष इत्येके। च(क)संकाराणां वर्त्तुलदीर्घा लौही आ(डा)मिरित्यपरे। घनः संहतावयवः। आयतो दीर्घः। वहि-

एनामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम् ॥ ७६ ॥

इति सुश्रुतसंहितायां निदानस्थाने वातव्याधिनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥

मार्गाणि वातविण्मूत्राणि। अन्येऽत्र "नाभेरधस्तात् सञ्जातं चलं वा यदिवाऽचलम्" इति पठन्ति ॥ ७५ ॥

प्रत्यष्ठीलामाह—एनामेवेत्यादि। एनामेव अष्ठीलां तिर्य्यगुत्थितत्वेनाष्ठीलायाः सकाशात् प्रत्यष्ठीलाया भेदः। अस्याऽग्रे केचिदूरुस्तम्भं पठन्ति, तन्न ; चिकित्सायां पठिष्यमाणत्वात् ॥ ७६ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
वातव्याधिव्याख्यानाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः।

अथातोऽर्शसां निदानं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

षड़र्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति ॥ २ ॥

तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गोत्कटुकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकुपिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याधो गत्वा गुदमागम्य प्रदूष्य बलीर्मांसप्ररोहान् जनयन्ति विशेषतो मन्दाग्नेः, तथा तृणकाष्ठोपललोष्ठवस्त्रादिभिः शीतोदकसंस्पर्शनाद् वा कन्दाः परिवृद्धिमासादयन्ति, तान्यर्शांसीत्याचक्षते ॥३॥

तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुः। तस्मिन् वलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरसम्भूताः प्रवाहणी विसर्जनी संवरणी चेति। चतुरङ्गुलायताः सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः ॥ ४ ॥

शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः।

गजतालुनिभाश्चापि वर्णतः संप्रकीर्त्तिताः ॥ ५ ॥

अथेत्यादि। निदानं हेतुलक्षणनिर्देशः। षड़र्शांसीत्यादि। ननु वातादीत्यनेनैव षट्संख्याया लब्धत्वात् कथं षड़िति संख्यानिर्देशः? उच्यते—द्विदोषजनितगणनापरिहारार्थम्। यद्यपि शोणिताधिष्ठाना वातादयो रक्तार्शःसमारम्भकास्तथाप्युपचारात् शोणितजान्युच्यन्ते। यथा घृताधिष्ठानेनाग्निना दग्धो घृतदग्ध इत्युच्यते। अर्शसां हेतून् सम्प्राप्तिञ्च दर्शयन्नाह—तत्रेत्यादि। विशेषतो मन्दाग्नेः प्रकुपिता दोषा मांसप्ररोहान् जनयन्तीति सम्बन्धः। अनात्मवतामजितेन्द्रियाणाम्, यथोक्तैः प्रकोपणैर्बलवद्विग्रहादिक्रोधशोकादिदिवास्वप्नादिभिः। विरुद्धं बहुधा हिताहितीयोक्तम्। विरुद्धाशनशब्देन गुरुशीताभिष्यन्दिविदाह्यसात्म्यप्रमिताशनादीनि गृह्यन्ते। स्त्रीप्रसङ्ग इत्यत्र प्रशब्देन अत्यन्तासक्तिः प्रतिपाद्यते। 'गुदपार्ष्णीसमायोगः प्राहुरुत्कटुकासनम्'। उभड़ इति लोके। यानमश्वादीनां पृष्ठतः। वेगविधारणादिशब्देन वातविण्मूत्रादीनां वेगधारणं। विशेषैः भेदैः। तेषां निदानमभिधाय सम्प्राप्तिमाह—यथोक्तमित्यादि। प्रसृता इति किण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवतीत्यादिक्रमेण प्रसृताः। प्रधानधमनीः पुरीषवाहिनीः, अनु पश्चात्, प्रपद्य प्राप्य। गुदबलिरिति बलिस्त्वक्सङ्कोचः। मन्दाग्नेर्विशेषतः अतिशयेन मांसप्ररोहान् जनयन्तीति सम्बन्धः। तथा तृणेत्यादि। परिवृद्धिमासादयन्ति प्राप्नुवन्तीत्यर्थः। आचक्षते इति पूर्व्वाचार्य्या इत्यध्याहारः ॥ १—३ ॥

इदानीं गुदं गुदबलिञ्च विवृण्वन्नाह—तत्रेत्यादि। स्थूलान्त्रं कटग्रन्थं गुदान्त्रमिति प्रसिद्धम्। अर्द्धपञ्चाङ्गुलमिति अर्द्धपञ्चममङ्गुलं यस्मिन् तत् तथा। एतेन सार्द्धचतुरङ्गुलप्रमाणं गुदमित्यर्थः। अध्यर्द्धाङ्गुलान्तरसम्भूता इति सार्द्धैकाङ्गुलान्तरसञ्जाताः। तत्रोपरितनं बलिद्वयं शङ्खावर्त्तनिभं

रोमान्तेभ्यो यवाध्यर्द्धो गुदौष्ठः परिकीर्त्तितः ॥ ६ ॥

प्रथमा तु गुदौष्ठाद ङ्गुलमात्रे। तेषान्तु भविष्यतां पूर्व्वरूपाणि अन्ने न श्रद्धा कृच्छ्रात् पक्तिरम्लीका (परीदाहो विष्टम्भः पिपासा) सक्थिसदनमाटोपः कार्श्यमुद्गारवाहुल्यमक्ष्णोश्च श्वयथुरन्त्रकूजनं गुदपरिकर्त्तनमाशङ्का पाण्डुरोगग्रहणीदोषशोषाणां कासश्वासौ बलहानिर्भ्रमस्तन्द्रानिद्रेन्द्रियदौर्बल्यञ्च। जातेष्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति ॥ ७ ॥

तत्र मारुतात् परिशुष्कारुणवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाड़ीमुखसूचीमुखाकृतीनि च भवन्ति। तैरुपहतः सशूलं संहतमुपवेश्यते कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना, गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ८ ॥

पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति;

प्रत्येकमन्तरेण सह सार्द्धैकाङ्गुलं, प्रथमा तु बलिमन्तरेण विना एकाङ्गुलोच्छ्राया। अर्द्धाङ्गुलस्तु गुदौष्ठ ईदृशं बोद्धव्यम्। अतएव प्रथमा तु गुदौष्ठादङ्गुलमात्रे इत्यग्रे वक्ष्यति। तासां नामान्याह—प्रवाहणीत्यादि। प्रवाहयतीति प्रवाहणी, विसृजतीति विसर्ज्जनी, संवृणोतीति संवरणी। गुदौष्ठप्रमाणमाह—रोमान्तेभ्य इत्यादि। रोमान्तेभ्यो रोमप्रान्तेभ्यो रोममालिकायाः, यवाध्यर्द्धः सार्द्धो यवः, अर्द्धाङ्गुलप्रमाण इत्यर्थः, अङ्गुलस्य त्रियवप्रमाणत्वात् ॥ ४—६ ॥

प्रथमा बलिर्गुदौष्ठात् कियद्दूरे भवतीत्याह—प्रथमेत्यादि। प्रथमा बलिरिति शेषः। तेषान्तु भविष्यतामित्यादि। भविष्यतां भवितुकामानां, अम्लीका अम्लोद्गारः, सक्थिसदनं ऊरुग्लानिः, स्फुटनमित्येके। आटोपः आध्मानं, पाण्डुरोगादीनामाशङ्का विकल्पः। कासश्वासौ भ्रमस्तन्द्रा निद्रा इन्द्रियदौर्बल्यञ्च जायते इति शेषः। तेषां सामान्यरूपमाह- जातेष्वित्यादि। एतानि पूर्व्वोक्तानि ॥ ७ ॥

विशिष्टरूपमाह—तत्रेत्यादि। परिशुष्काणि अनास्रावीणि, अरुणानि ईषद्रक्तानि, विवर्णानि विविधवर्णानि, विषममध्यानि निम्नोन्नतमध्यानि, केचिदत्र विषमश्यामानीति पठन्ति व्याख्यानयन्ति च—विषमाणि निम्नोन्नतत्वेन, श्यामानि दग्धेष्टकादिवस्तुवर्णानि। तुण्डिकेरी वनकार्पासिका तत्पुष्पाकृतीनि। अन्ये त्वत्र तुण्डिकेरीनाड़ीमुकुलसूचीमुखसदृशानि भवन्तीति पठन्ति व्याख्यानयन्ति च—तुण्डिकेरी बिम्बी तस्या नाड़ी नालिका, मुकुलं पुष्पमुकुलं, सूची सीवनद्रव्यम्, एषां मुखसदृशानि भवन्ति। उपहतः अभिभूतः। संहतं घनम्। उपवेश्यते विट्संसर्गीक्रियते। गुल्मादीनि चास्य तन्निमित्तानीति उपद्रवकथनम् ॥ ८ ॥

तैरुपहतः सदाहं सरुधिरमतिसार्य्यते, ज्वरदाहपिपासामूर्च्छाश्चास्योपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ ९ ॥

श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति; तैरुपहतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्य्यते, शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति, शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ १० ॥

रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्तलक्षणानि च, यदावगाढ़पुरीषप्रपीड़ितानि भवन्ति तदात्यर्थं दुष्टमनल्पमसृक् सहसा विसृजन्ति, तस्यवातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ ११ ॥

सन्निपातजानि सर्व्वदोषलक्षणयुक्तानि ॥ १२ ॥

सहजानि दुष्टशोणितशुक्रनिमित्तानि, तेषां दोषत एव प्रसाधनं कर्त्तव्यम् । विशेषतश्चैतानि दुर्द्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्म्मुखाणि; तैरुपद्रुतः कृशोऽल्पभुक् शिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निप्राणः परमलसश्च तथा घ्राणशिरोऽक्षिनासाश्रवणरोगवान् सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥ १३ ॥

पित्तादित्यादि । विसर्पीणि प्रसरणशीलानि, संस्थानमाकारः । यवमध्यानीति स्फीतमध्यानि, मूलाग्रयोस्तनूनि । प्रक्लिन्नानि क्लेदस्राविणि ॥ ९ ॥

श्लेष्मजानीत्यादि । स्थिराणि कठिनानि, पाण्डूनि धूसराणि, करीरो मरुदेशेषु अतिप्रवृद्धो वृक्षविशेषः, पनसो वहिःकण्टकिफलः 'कटहल' इति लोके, तस्य फलसदृशानि, अनल्पं बहु, शीतज्वरः शीतप्रधानज्वरः ॥ १० ॥

रक्तजानीत्यादि । न्यग्रोधप्ररोहः वटप्ररोहः, विद्रुमः प्रवालः, काकणन्तिका गुञ्जा चिरिहिंटीकेति लोके, काकादनीत्यपरे । चकारेणानुबन्धभूतवातकफरूपमनुक्तमपि समुच्चीयते । शोणितातियोगोपद्रवा आक्षेपकादयः ॥ ११ ॥

सन्निपातजानीति । सर्व्वेषां चार्शसां यानि लक्षणानीति जेज्झटः, गयदासस्तु 'सन्निपातजानि सर्व्वलक्षणानि' इति पठति व्याख्यानयतिच—सर्व्वेषामेषां वातादीनां यानि लक्षणानि स्वभावकार्य्यभूतानि येषु तानि ॥ १२ ॥

शरीरेण सह जातानामेतेषामर्शसां दोषेभ्यो भिन्नहेतुं दर्शयन्नाह—सहजानीत्यादि । दुष्टशोणितशुक्रनिमित्तानि, गर्भगुदारम्भकमातं वीजं दुष्टं न सर्व्वं, सर्व्वदुष्टत्वे हि प्रजोत्पत्तिरेव न स्यात् । तेषां दोषत एव प्रसाधन कर्त्तव्यमिति येन दोषेण यस्य शुक्रशोणितं दूषितं सम्भवेत्

भवति चात्र

वाह्यमध्यबलिस्थानां प्रतिकुर्य्याद् भिषग्वरः।
अन्तर्व्वलिसमुत्थानां प्रत्याख्यायाचरेत् क्रियाम्॥ १४॥

प्रकुपितास्तु दोषा मेढ्रमभिप्रपन्ना मांसशोणिते प्रदूष्य कण्डूं जनयन्ति, ततः कण्डूयनात् क्षतं समुपजायते, तस्मिंश्च क्षते दुष्टमांसजाः प्ररोहाः पिच्छिलरुधिरस्राविणो जायन्ते कूर्च्चकिनोऽभ्यन्तरमुपरिष्टाद् वा, ते तु शेफो विनाशयन्त्युपघ्नन्ति च पुंस्त्वम्; योनिमभिप्रपन्नाः सुकुमारान् दुर्गन्धान् पिच्छिलरुधिरस्राविणश्छत्राकारान् करीरान् जनयन्ति, ते तु योनिमुपघ्नन्त्यार्त्तवञ्च; नाभिमभिप्रपन्ना सुकुमारान् दुर्गन्धान् पिच्छिलान् गण्डूपदमुखसदृशान् करीरान् जनयन्ति, त एवोर्द्ध्वमागताः श्रोत्राक्षिघ्राणवदनेष्वर्शांस्युपनिर्व्वर्त्तयन्ति; तत्र कर्णजेषु वाधिर्य्यं शूलं पूतिकर्णता च। नेत्रजेषु वर्त्मावरोधो वेदना स्रावो दर्शननाशश्च, घ्राणजेषु प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्च, वक्त्रजेषु कण्ठौष्ठतालूनामन्यतमस्मिंस्तैर्गद्गदवाक्यता रसाज्ञानं मुखरोगाश्च भवन्ति।

व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य वहिःस्थिराणि कोलवदर्शांसि निर्व्वर्त्तयति, तानि चर्म्मकीलान्यर्शांसीत्याचक्षते॥ १५॥

तस्य दोषस्य लक्षणवर्णवेदनाकृतिभिः प्रसाधनं विज्ञानमित्येके। अन्ये तु दोषत इति दोषलिङ्गं समीक्ष्य प्रसाधनं चिकित्सा इत्याहुः। दुर्दर्शनानि इति दुःखेन दृश्यन्ते, अन्तर्व्विद्रधिवदित्यर्थः। पाण्डूनि धूसराणि, दारुणानि अतिदुःखकराणि॥ १३॥

स्थानाश्रयं साध्यादित्वं दर्शयन्नाह—भवति चात्रेत्यादि। अन्तर्व्वलिः अभ्यन्तरवलिः। प्रत्याख्याय असाध्यान्येतान्यर्शांसि इति निराकृत्य॥ १४॥

मेढ्रादिष्वर्शांस्याह—प्रकुपितास्त्वित्यादि। अभिप्रपन्नाः आश्रिताः, कूर्च्चकिनः सूक्ष्मदीर्घाङ्कुरसन्तानवतः। अभ्यन्तरमिति मणौ। उपरिष्टादिति वाह्यचर्म्मणि। पुंस्त्वं शुक्रम् पुंश्चिह्नञ्च। योनिमभिप्रपन्ना इत्यादि। अभिप्रपन्ना दोषा इति सम्बन्धः। करीरान् अङ्कुरान्। नाभिमभिप्रपन्ना इत्यादि। दोषा इत्यत्रापि सम्बध्यते। त एव दोषा इत्यर्थः। उपनिर्व्वर्त्तयन्ति जनयन्तीत्यर्थः। तत्रेत्यादि। वर्त्मावरोध इति वर्त्माक्षिपुटः। घ्राणजेष्वित्यादि। क्षवथुश्छिक्का। वक्त्रजेष्वित्यादि। अन्यतमस्मिन् एकतमस्मिन्, उत्पन्नेष्वर्शःसु इति शेषः। त्वगधिष्ठानमेव चर्म्मकीलाख्यमर्शो दर्शयन्नाह—व्यानस्त्वित्यादि। वहिः गुदौष्ठाद् वहिः, अन्ये तु वहिःशब्देनान्यत्रापीति कथयन्ति। कीलवत् शङ्कुतुल्यानीत्यर्थः॥ १५॥

भवन्ति चात्र

तेषु कीलेषु निस्तोदो मारुतेनोपजायते।
श्लेष्मणा तु सवर्णत्वं ग्रन्थित्वञ्च विनिर्द्दिशेत्॥
पित्तशोणितजं रौक्ष्यं कृष्णत्वं शुक्रता तथा।
समुदीर्णखरत्वञ्च चर्म्मकीलस्य लक्षणम्॥ १६॥
अर्शसां लक्षणं व्यासादुक्तं सामान्यतस्तु यत्।
तत् सर्व्वं प्राग्विनिर्द्दिष्टात् साधयेद् भिषजां वरः॥ १७॥
अर्शःसु दृश्यते रूपं यदा दोषद्वयस्य तु।
संसर्गं तं विजानीयात् संसर्गः स च षड्विधः॥
त्रिदोषाण्यल्पलिङ्गानि याप्यानि तु विनिर्द्दिशेत्।
द्वन्दजानि द्वितीयायां वलौ यान्याश्रितानि च॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च।
सन्निपातसमुत्थानि सहजानि तु वर्ज्जयेत्॥ १८॥

तेषां चर्म्मकीलानां दोषलिङ्गमाह—भवन्ति चात्रेत्यादि। सवर्णत्वमिति श्लेष्मणः समानवर्णत्वमित्यर्थः। ग्रन्थित्वं ग्रन्थिभावः। पित्तेत्यादि। तेषु चर्म्मकीलेषु। रौक्ष्यमित्यादि पित्तशोणितजं विनिर्द्दिशेत्। समुदीर्णखरत्वं अतीवकठिनत्वम्। चर्म्मकीलस्य लक्षणमिति एतद्वातादिदोषतश्चर्म्मकीलस्य लक्षणमुक्तम्। केचिच्चर्म्मकीलानां दोषलिङ्गं न पठन्ति॥ १६॥

इदानीं सर्व्वेषामेव मेढ्रादिजानां वातादिलक्षणमतिदेशेन निर्द्दिशन्नाह—अर्शसामित्यादि। अर्शसां मेढ्रादिजानां वातादिलक्षणं विना यत् सङ्क्षेपलक्षणमुक्तं तत् सर्व्वं साधयेत् जानीयात् चिकित्सेद् वा। कथमित्याह—प्राग्विनिर्द्दिष्टादिति प्राक् पूर्व्वं व्यासेन प्रत्येकं वातादिजार्शोलक्षणमुक्तं वीक्ष्येत्यर्थ इति गयदासाचार्य्यः; अन्ये तु सङ्क्षेपतः षोढा, व्यासतः विस्तरेण प्राग्विनिर्द्दिष्टात् पञ्चदशधाप्रसरात् साधयेदिति मन्यते॥ १७॥

इदानीं षड्विधेष्वर्शःसु अत ऊर्द्ध्वं संसर्गमौषधकल्पनार्थं दर्शयन्नाह—अर्शःस्वित्यादि। संसर्गः स च षड्विध इति—वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते, एवं संसर्गः षड्विधः। स च सूत्रस्थानोक्तवर्णलक्षणादवगन्तव्यः। इदानीं कृच्छ्रसाध्यासाध्यान्यर्शांसि दर्शयन्नाह—त्रिदोषाणीत्यादि। द्वन्द्वजानि द्विदोषोत्थानि, तान्यपि याप्यानीत्यर्थः। परिसंवत्सराणि इति परितः संवत्सरमभिव्याप्य स्थितानि कृच्छ्रसाध्यानीत्यर्थः। केचित् सन्निपातसमुत्थानीत्यादौ कृत्वा पठन्ति। स च पाठो समग्रोऽदर्शनान्न लिखितः॥ १८॥

सर्व्वाः स्युर्बलयो येषां दुर्नामभिरुपद्रुताः।
तस्तु प्रतिहतो वायुरपानः सन्निवर्त्तते।
ततो व्यानेन सङ्गम्य ज्योतिर्मृद्नाति देहिनाम्॥ १९॥

इति सुश्रुतसंहितायां निदानस्थानेऽर्शोनिदानं नाम द्वितीयोऽध्यायः॥ २॥

सर्व्वबलिव्यापिनामर्शसां पञ्चात्मकस्याप्यग्नेर्महानर्थकरत्वं दर्शयन्नाह—सर्व्वा इत्यादि। येषां देहिनां, दुर्नामभिरर्शोभिः, तैस्तु अर्शोभिरित्यर्थः। अपानः वायुरिति सम्बन्धः। सन्निवर्त्तते स्थितिं बध्नाति न निःसरतीत्यर्थः। सङ्गम्य मिलित्वा, ज्योतिः पञ्चात्मकमग्निं, मृद्नाति मन्दीकरोति। अयं सोपद्रवः, प्रायेण सहजेष्वर्शःसु ज्ञेयः॥ १९॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
अर्शसां निदानव्याख्यानाम द्वितीयोऽध्यायः॥ २॥

———

## तृतीयोऽध्यायः ।

अथातोऽश्मरीणां निदानं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

चतस्रोऽश्मर्य्यो भवन्ति श्लेष्माधिष्ठानाः । तद्यथा—श्लेष्मणा वातेन पित्तेन शुक्रेण चेति ॥ २ ॥

तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति ॥ ३ ॥

तासां पूर्व्वरूपाणि—वस्तिपीड़ारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्राज्ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति ॥ ४ ॥

यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम् ।
पूर्व्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः ॥ ५ ॥

अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारा-सङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदकप्रकाशमनाविलं ससिकतं विसृजति, धावनलङ्घनप्लवनपृष्ठयानाध्वगमनश्चास्य वेदना भवति ॥ ६ ॥

अथेत्यादि । निदानं हेतुलक्षणनिर्द्देशः । चतस्र इत्यादि । चतस्रोऽश्मर्य्यो भवन्तीति छेदः । तिस्र एव श्लेष्माधिष्ठानाः, शुक्राश्मरी शुक्राधिष्ठाना । अन्ये तु शुक्राश्मर्य्यपि श्लेष्माधिष्ठानैव, शुक्रन्तु सौम्यमिति वचनात् । श्लेष्माधिष्ठानाः श्लेष्मोपादानकारणाः श्लेष्माणमुपादाय भवन्तीत्यर्थः । चतस्रोऽश्मर्य्यो भवन्तीत्यस्य विवरणं कुर्व्वन्नाह—तद् यथेत्यादि ॥ १।२ ॥

तासां सम्प्राप्तिं दर्शयन्नाह—तत्रेत्यादि । मूत्रसंपृक्तः मूलेण सहितः ॥ ३ ॥

तासां पूर्व्वरूपमाह—तासामित्यादि । वस्तिशिरः मूत्राशयोपरितनभागः । मुष्कोऽण्डम् । शेफः पुंचिह्नम् । कृच्छ्रात् बलादाकृष्य । वस्तगन्धित्वं वृहत्तमच्छागलगन्धित्वम् । यथास्वं दोषानतिक्रमेण, वेदना वर्णञ्च यस्मिन् मूले तत्तथा, दुष्टं वातादिभिः, आविलं कलुषम्, अश्मनः अश्मर्य्याः ॥ ४ । ५ ॥

अथ सर्व्वासामपि सामान्यलक्षणमाह—अथेत्यादि । जातासु सर्व्वास्वप्यश्मरीषु । सङ्गो निरोधः । मूत्रविकिरणमिति विकिरणं विक्षेपः इतश्चेतश्च गमनं, गोमेदको मणिः पीतः, ससिकतं बालुकासहितं, विसृजति विमुञ्चति, मूत्रमिति शेषः । लङ्घनं परिखादीनां, प्लवनं प्रतरणं, अध्वगमनं दीर्घमार्गगमनम् ॥ ६ ॥

तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद् दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति, अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतिकाशा मधूकपुष्पवर्णा वा भवति, तां श्लैष्मिकीमिति विद्यात् ॥ ७ ॥

पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तं परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतीघातादूष्यते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति; अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात् ॥ ८ ॥

वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतीघातात् तीव्रा वेदना भवति, तथात्यर्थं पीड्यमानो दन्तान् खादति, नाभिं पीड़यति, मेढ्रं मृद्नाति, पायुं स्पृशति, विशर्द्धते, विदहति, वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति; अश्मरी चात्र श्यामा परुषा विषमा खरा कदम्बपुष्पवत् कण्टकाचिता भवति, तां वातिकीमिति विद्यात् ॥ ९ ॥

इदानीं श्लेष्माद्यश्मरीणां प्रत्येकं विशिष्टलक्षणमाह—तत्रेत्यादि। श्लेष्मलमन्नमभ्यवहरतः पुंसः श्लेष्माश्मरी ( शरीरे ) स्रोतो निरुणद्धीति सम्बन्धः। उपलिप्य नवघटपङ्कन्यायेन, अधिष्ठाय आश्रित्य। दाल्यते विशीर्य्यते इव स्फुटतीवेत्यर्थः, भिद्यते विदीर्य्यते इव, निस्तुद्यते सूचीभिरिव ॥ ७ ॥

पित्तयुक्तस्त्वित्यादि। पित्तयुक्तस्तु श्लेष्मा स्रोतो निरुणद्धीति सम्बन्धः। सङ्घातमुपगम्य काठिन्यं प्राप्येत्यर्थः। तस्य पुरुषस्य, मूत्रप्रतीघातात् मूत्रनिरोधात्, ऊष्यते समीपाग्निनैवोपतप्यते, चूष्यते आकृष्यते इव, दह्यते इव कक्षाग्निनेव, पच्यते इव क्षारेणेव, उत्क्राथ्यते इवेत्येके। उष्णवातः उत्तरतन्त्रे पठितो मूत्ररोगः, सरक्ता ईषद्रक्ता ॥ ८ ॥

वातयुक्तस्त्वित्यादि। अत्रापि पूर्व्ववत् सम्बन्धः। दन्तान् खादति परस्परं दन्तपीड़नं करोति, विशर्द्धते गुदेन कुत्सितं शब्दं करोति, केचित् विशर्द्धते इत्यत्र विवर्द्धते इति पठन्ति व्याख्यानयन्ति च—मेढ्रं विमर्द्दनात् विवर्द्धते इत्यर्थः। विदहति विदाहयुक्तं मेढ्रं भवति, मेहतः मुञ्चत इत्यर्थः, खरा कठिना ॥ ९ ॥

प्रायेणैतास्तिस्रोऽश्मर्य्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहार-प्रियत्वाद् विशेषेण बालानां भवन्ति ; तेषामेवाल्पवस्तिकायत्वादनुपचितमांस-त्वाच्च वस्तेः सुखग्रहणाहरणा भवन्ति ॥ १० ॥

महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ ११ ॥

मैथुन(अभि)विघातादतिमैथुनाद् वा शुक्रं चलितमनिर्गच्छद् विमार्गगमना-दनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति, संहृत्य चोपशोषयति ; सा मूत्रमार्गमावृणोति, मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति, पीड़ित-मात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते ; तां शुक्राश्मरीमिति विद्यात् ॥ १२ ॥

भवन्ति चात्र

शर्करा सिकता मेहो भस्माख्योऽश्मरीवैकृतम्।
अश्मर्य्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना ॥
पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः।
सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते ॥

प्रायेणेत्यादि। प्रायेणैतास्तिस्रोऽश्मर्य्यो बालानां भवन्तीति सम्बन्धः। कस्मादित्याह— विशेषेण दिवास्वप्नादिप्रियत्वात्तेषामिति, प्रायोग्रहणाद् यूनामपि बोधयति। तेषामेव बालानाम्। अल्पवस्तिकायत्वादिति अल्पवस्तित्वात् अल्पकायत्वाच्चेत्यर्थः। अल्पवस्तित्वादिति आयामेन अल्पकायत्वम्, अनुपचितवस्तिमांसत्वाच्च वस्तेरित्यनेन परिणाहेन अल्पत्वमुक्तम्। सुखग्रहणा-हरणा इति सुखेनाह्रियन्ते चाश्मर्य्यः। महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ १०।११ ॥

हेतुसम्प्राप्तिलक्षणानि शुक्राश्मर्य्या दर्शयन्नाह— मैथुनेत्यादि। सा अश्मरी, मैथुनविघाता-दतिमैथुनाद् वा इति हेतुः। शुक्रं चलितमनिर्गच्छदित्यादिसम्प्राप्तिः। मूत्रकृच्छ्रं वस्तिवेदना-मित्यादि लक्षणम्। मैथुनविघातात् मैथुनकार्य्यस्य शुक्रस्य विघातत्वात्। अतिमैथुनादिति केचित् पठन्ति। तत्र शुक्रबाहुल्यं शुक्रचलने हेतुः, अनिर्गच्छत् अनिःसरत्। अनिर्गच्छन्निति केचित् पठन्ति, तत्र वायोर्विशेषणम्। विमार्गगमनादनिलोऽभितः संगृह्येति विमार्गगमनात् उत्मार्गगमनात्, अनिलो वायुः। अभितः उभयतः ऊर्द्ध्वमधश्चेत्यर्थः। संगृह्य विधार्य्य। मेढ्रवृष-णयोरन्तरे वस्तिद्वारस्याध इत्यर्थः। संहरति वर्त्तुलीकरोति। वृषणयोश्चेति चकारात् वङ्क्षण-देशेऽपि, दोषजास्वश्मरीषु वृषणशोफो नास्त्येव। प्रविलयमापद्यते अश्मरी विलीयतेऽल्पत्वात्; अन्ये तु पुनरश्मरीकृतवृषणशोफो विलयमापद्यते इत्याचक्षते ॥ १२ ॥

भवन्ति चात्रेत्यादि। भस्माख्य इति मूत्रशुक्रनामा उत्तरतन्त्रे मूत्ररोगः। अश्मरीवैकृतम् अश्मरीविकारा उपद्रवा इत्यर्थः। अश्मर्य्या इत्यादि। अश्मर्य्यास्तुल्यव्यञ्जनवेदना शर्करा ज्ञेयेत्यर्थः। पवन इत्यादि। सा अश्मरी यदाल्पा स्यात् तदा वातेऽनुगुणे अनुकूले निरेति निर्गच्छति।

हृत्पीड़ा सक्थिसदनं कुक्षिशूलः सवेपथुः।
तृष्णोर्द्ध गोऽनिलः कार्ष्ण्यं दौर्ब्बल्यं पाण्डुगात्रता ॥
अरोचकाविपाकौ तु शर्करार्त्तं भवन्ति च।
मूत्रमार्गप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान् ॥
दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्।
पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीड़नं वमिम् ॥ १३ ॥
नाभिपृष्ठकटीमुष्क-गुदवङ्क्षणशेफसाम्।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः ॥
अलाब्वा इव रूपेण शिरास्नायुपरिग्रहः।
वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम् ॥
एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः।
मूत्राशयो मलाधारः प्राणायतनमुत्तमम् ॥
पक्काशयगतास्तत्र नाड्यो मूत्रवहास्तु याः।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः।
नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्।
जाग्रतः स्वपतश्चैव स निष्यन्देन पूर्य्यते ॥

शर्करालक्षणमाह—सेत्यादि। सक्थिसदनमूरुग्लानिः। अश्मर्य्या एव मूत्रमार्गगतायाः लक्षणनिर्द्देशमाह—मूत्रमार्गेत्यादि। सा अश्मरी, सक्ता अनिर्गता, दौर्ब्बल्यं बलहानिः, सदनम् अङ्गग्लानिः, स्फुटनिकेत्यपरे। कार्श्यं मांसक्षयः ॥ १३ ॥

इदानीमश्मर्य्या एव आधारस्य वस्तेः स्थानसंस्थानद्वाराणि निर्द्देष्टुमाह—नाभीत्यादि। नाभ्यादीनां मध्ये वस्तिरिति स्थानम्। एकद्वार अधोमुख इत्यनेनोपरि द्वाराभावं सूचयति। तनुत्वक्कः सूक्ष्मत्वक्। तनुत्वक इति वक्ष्यमाणं चालाब्वा इव रूपेणेति च संस्थानम्। पुनर्वस्त्यवयवमाह—अलाब्वा इवेत्यादि। परिग्रहः आश्रयः, प्रसङ्गेन वस्तिसन्निहितानाञ्चापरेषां स्थानमाह—वस्तिरित्यादि। पौरुषं मेढ्रम्। मूत्राशयपर्य्यायो मलाधार इति। प्राणानामग्निषोमादीनाम् आयतनं संस्थानं। यथा च सर्व्वदाऽसावक्षीणमूत्रो भवति तथाह—पक्काशयगता इत्यादि। ता नाड्यो मूत्रं तर्पयन्ति वर्द्धयन्तीत्यर्थः। मूत्रवाहिन्यौ मूत्रधमन्यौ द्वे तच्छाखाभूता दशधा शतधा सहस्रधा भिद्यन्ते इति दर्शयन्नाह—सूक्ष्मेत्यादि। आसां नाड़ीनाम्। याभिरेवायं सिरास्नायुभिरावृतास्ताभिरेवायं मूत्रेण पूर्य्यतेऽधोमुखत्वेनेति दर्शयन्नाह—नाड़ीभिरित्यादि। आमाशयान्तरात्

आ मुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः।
घटो यथा तथा विद्धि वस्तिमूत्रेण पूर्य्यते ॥ १४ ॥
एवमेव प्रवेशेन वातं पित्तं कफोऽपि वा।
मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम् ॥
अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे घटे।
कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा ॥
संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः।
तद्वद् बलासं वस्तिस्थमूष्मा संहन्ति सानिलः ॥
मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते।
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥
मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च।
मूत्रदोषाश्च ये केचिद् वस्तावेव भवन्ति हि ॥ १५ ॥

इति सुश्रुतसंहितायां निदानस्थानेऽश्मरीनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥

आमपक्वाशयान्तरात् स निष्यन्देन उपस्नेहेन पूर्य्यते। अधोमुखत्वेन वस्तेरनूर्द्ध्वमुखस्यापि पूरणमुपमानेनाह—आमुखादित्यादि। न्यस्तः धृतः, विद्धि जानीहि ॥ १४ ॥

मूत्रप्रवेशे तुल्यमेव वातादीनामपि प्रवेशं दर्शयन्नाह—एवमेवेत्यादि। एवमेव प्रवेशेनेति पूर्व्वोक्तप्रवेशेनेत्यर्थः। उपस्नेहात् समीपक्लेदनात्। ननु द्रवरूपत्वात् सर्व्वेषां वायोश्चामूर्त्तत्वात् कथं घनता तदाह—अप्सु स्वच्छास्वपीत्यादि। निषिक्तासु प्रक्षिप्तासु। पङ्कसमत्वेऽपि कथमश्मरीसाम्यमाह—संहन्तीत्यादि। यथा संहन्ति काठिन्यं करोति वर्षोपलान् करोतीत्यर्थः। कः काठिन्यं करोति ? वायुवद्युतोऽग्निश्च काठिन्यं करोति। आपो जलानि, दिव्याः मेघजाः। तथा बलासं श्लेष्माणं वस्तिस्थं संहन्ति कठिनं करोति। कः ? ऊष्मा पित्तमित्यर्थः। कथम्भूतः ? सानिलः सवात इत्यर्थः। वस्तिगतानामन्येषामपि विकाराणां वायुरेव हेतुरिति दर्शयन्नाह—मारुत इत्यादि। प्रगुणे अनुकूले, अनुगुणे इति केचित् पठन्ति। तत्रापि स एवार्थः। प्रतिलोमे विगुणे। वाते विगुणे सति वस्तौ ये विकारास्तानेवाह—मूत्राघाता इत्यादि ॥ १५ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्हणविरचिते निबन्धसंग्रहे अश्मरीव्याख्यानाम तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः।

अथातो भगन्दराणां निदानं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्रावशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्वाः पिड़काः, पक्वास्तु भगन्दराः। तेषान्तु पूर्व्वरूपाणि कटीकपालवेदना कण्डूर्दाहः शोफश्च गुदस्य भवति ॥ २ ॥

तत्रापथ्यसेविनां वायुः प्रकुपितः सन्निवृत्तः स्थिरीभूतो गुदमभितोऽङ्गुले द्व्यङ्गुले वा मांसशोणिते प्रदूष्यारुणवर्णां पिड़कां जनयति। सास्य तोदादीन् वेदनाविशेषान् जनयति; अप्रतिक्रियमाणा च पाकमुपैति, मूत्राशयाभ्यासगतत्वाच्च व्रणः प्रक्लिन्नः शतपोनकवदणुमुखैश्छिद्रैरापूर्य्यते, तानि च छिद्राण्यजस्रं फेनानुविद्धमधिकमास्रावं स्रवन्ति, व्रणश्च ताड्यते भिद्यते छिद्यते सूचीभिरिव निस्तुद्यते, गुदश्चावदीर्य्यते, उपेक्षिते च वातमूत्रपुरीषरेतसामप्यागमश्च तरेव च्छिद्रै भवति; तं भगन्दरं शतपोनकमित्याचक्षते ॥ ३ ॥

पित्तन्तु प्रकुपितमनिलेनाधः प्रेरितं पूर्व्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति। सास्य चोषादीन् वेदनाविशेषान् जनयति; अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्चाग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णम्

अथेत्यादि। वातपित्तेत्यादि। संख्येयनिर्द्देशादेव संख्यासिद्धौ पञ्चेतिवचनं शोणितजादिनिषेधार्थम्। भगन्दरनिरुक्तिमाह—ते त्वित्यादि। पूर्व्वरूपमाह—तेषान्त्वित्यादि। तेषान्तु पूर्व्वरूपाणि भवन्तीत्यर्थः। कटीकपालः कटीफलकः ॥ १।२ ॥

पूर्व्वरूपानन्तरं पिड़िकोत्पत्तिपाकोपद्रवनिरुक्तीर्दर्शयन्नाह—तत्रापथ्येत्यादि। सन्निवृत्तः व्यावृत्तः। गुदमभितः गुदस्य सर्व्वतः; अन्ये गुदसन्निधावित्याहुः। अभ्यासः समीपम्। शतपोनकः शूकदोषपरिपठितो व्याधिः; चालनिकेति जेज्झटाचार्य्यः, तन्नेच्छति गयदासाचार्य्यः। लोकशास्त्रयोश्चालनिकायां शतपोनकशब्दस्य अप्रसिद्धत्वात्। अश्वपुच्छबालरचितं शताक्षकमित्यन्ये। तुद्यते व्यथ्यते, ताड्यते दण्डेनेवाभिहन्यते इत्यर्थः, भिद्यते त्वक् विदार्य्यते इव, छिद्यते द्विधा क्रियते इव ॥ ३ ॥

आस्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते ॥ ४ ॥

श्लेष्मा तु प्रकुपितः समीरणेनाधः प्रेरितः पूर्व्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिड़कां जनयति। सास्य कण्ड्वादीन् वेदनाविशेषान् जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति, उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति; तं भगन्दरं परिस्राविणमित्याचक्षते ॥ ५ ॥

वायुः प्रकुपितः प्रकुपितौ पित्तश्लेष्माणौ परिगृह्याधो गत्वा पूर्व्ववदवस्थितः पादाङ्गुष्ठप्रमाणां सर्व्वलिङ्गां पिड़कां जनयति। सास्य तोददाहकण्ड्वादीन् वेदनाविशेषान् जनयति, अप्रतिक्रियमाणा च पाकमुपैति, व्रणश्च नानाविधवर्णमास्रावं स्रवति, पूर्णनदीशम्बूकावर्त्तवच्चात्र समुत्तिष्ठन्ति वेदनाविशेषाः; तं भगन्दरं शम्बूकावर्त्तमित्याचक्षते ॥ ६ ॥

मूढ़ेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदावगाढ़पुरीषोन्मिश्रमपानेनाधःप्रेरितमसम्यगागतं गुदं क्षिणोति, तत्र क्षतनिमित्तः कोथ उपजायते, तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथे भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्ते, ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तैर्मार्गैः क्रिमिकृतैर्वातमूत्रपुरीषरेतांस्यभिनिःसरन्ति; तं भगन्दरमुन्मार्गिणमित्याचक्षते ॥ ७ ॥

भवन्ति चात्र

उत्पद्यतेऽल्परुक्शोफा(त्) क्षिप्रश्चाप्युपशाम्यति।
पाय्वन्तदेशे पिड़का सा ज्ञेयान्या भगन्दरात् ॥

पित्तन्त्वित्यादि। पूर्व्ववदवस्थितमिति गुदमभितोऽङ्गुले द्व्यङ्गुले वेत्यर्थः। विसृजति व्रण इति सम्बन्धः ॥ ४ ॥

वेदनाविशेषा इति पूर्णनदीशम्बूकावर्त्तवन्नैरन्तर्य्येण वेदना उत्तिष्ठन्तीत्येके। अन्ये तु तथाविधगत्यारम्भकस्य शोफस्य पूर्णनद्यावर्त्तशम्बूकावर्त्ताकारेणेवावगाढ़त्वात् अवगाढ़वेदना भवन्तीत्यर्थः। शम्बूकाख्याः शङ्खाः ॥ ५—६ ॥

उन्मार्गिणः सम्प्राप्तिं दर्शयन्नाह—मूढ़ेनेत्यादि। कोथः पूतिभावः। पार्श्वतो दारयन्ति पक्षतो दारयन्ति। अस्याग्रे अर्शोभगन्दरं केचित् पठन्ति, तन्न; सर्व्वैर्निबन्धकारैर्निराकृतत्वात् ॥ ७ ॥

अभागन्दरीं भागन्दरीमपि पिड़कामाह— भवन्ति चात्रेत्यादि। पाय्वन्तदेशे पिड़का शोफात्

पायोः स्याद् द्व्यङ्गुले देशे गूढमूला सरुग्ज्वरा।
भागन्दरी तु विज्ञेया पिड़काऽतो विपर्य्ययात्॥ ८॥
यानयानान्मलोत्सगात् कण्डूरुग्दाहशोफवान्।
पायुर्भवेद्रुजः कट्यां पूर्व्वरूपं भगन्दरे॥ ९॥
घोराः साधयितुं दुःखाः सर्व्वं एव भगन्दराः।
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः॥ १०॥

इति सुश्रुतसंहितायां निदानस्थाने भगन्दरनिदानं नाम चतुर्थोऽध्यायः॥ ४॥

उत्पद्यते इति सम्बन्धः। अल्परुक् अल्पवेदना, पाय्वन्तदेशे गुदस्यान्ते, अन्या भगन्दरादपरा भगन्दरेभ्य इत्यर्थः। एतेनाभागन्दरी पिड़कोक्ता, यतोऽस्या भगन्दरो नोत्पद्यते। या तु भगन्दरेणोत्पद्यते तामाह—पायोरित्यादि। अतोऽभागन्दर्य्याः पिड़कायाः, विपर्य्ययात् विपरीतत्वात्, भगन्दरकरी भवतीत्यर्थः॥ ८॥

यानेत्यादि। यानयानात् रथादिगमनात्, मलोत्सर्गात् पुरीषत्यागात्। कण्डूरुग्दाहशोफवान् पायुर्भवेत्, ततोऽनन्तरं कट्यां कण्डूरुग्दाहशोफादिकं पूर्व्वरूपं भवेत्। अयं चापठनीयः पूर्व्वो वा, पूर्व्वरूपग्रन्थद्वयं वा पठनीयं, पूर्व्वश्चाप्रसिद्धः, अयन्तु प्रसिद्धः॥ ९॥

तत्र केषाञ्चिदसाध्यत्वं दर्शयन्नाह—घोरा इत्यादि। घोरा दुःखप्रदाः। साधयितुं दुःखाः कष्टसाध्याः, भवन्तीत्यध्याहारः॥ १०॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे भगन्दरव्याख्यानाम चतुर्थोऽध्यायः॥ ४॥

---

# पञ्चमोऽध्यायः ।

अथातः कुष्ठनिदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

मिथ्याहाराचारस्य विशेषाद् गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्म्मसेविनो ग्राम्यानूपौदकमांसानि वा पयसाभीक्ष्णमश्नतो, यो वा मज्जत्यप्सूष्माभितप्तः सहसा च्छर्दिं वा प्रतिहन्ति, तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्य्यग्गाः शिराः सम्प्रतिपद्य समुद्धूय वाह्यं मार्गं प्रति समन्ताद् विक्षिपति। यत्र यत्र च दोषो विक्षिप्तो निःसरति तत्र तत्र मण्डलानि प्रादुर्भवन्त्येवमुत्पन्नस्त्वचि दोषस्तत्र तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्यते धातून् दूषयन्।

तस्य पूर्व्वरूपाणि—त्वक्पारुष्यमकस्माद्रोमहर्षः कण्डूः स्वेदवाहुल्यमस्वेदनं वाङ्गप्रदेशानां स्वापः क्षतविसर्पणमसृजः कृष्णता चेति ॥ २ ॥

तत्र सप्त महाकुष्ठानि, एकादश क्षुद्रकुष्ठानि, एवमष्टादश कुष्ठानि भवन्ति। तत्र महाकुष्ठान्यरुणौडुम्वरर्ष्यजिह्वकपालकाकणकपुण्डरीकदद्रुकुष्ठानीति॥ ३ ॥

क्षुद्रकुष्ठान्यपि स्थूलारुष्कं महाकुष्ठमेककुष्ठं चर्मदलं विसर्पः परिसर्पः सिध्मं विचर्च्चिका किटिमं पामा रकसा चेति ॥ ४ ॥

सर्व्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्ति, उत्सन्नतस्तु दोषग्रहणमभिभवात् ॥ ५ ॥

अथेत्यादि। इदानीं हेतुमाह—मिथ्येत्यादि। मिथ्याहाराचारस्य शास्त्रोक्तविधिभ्रष्टाहाराचारस्येत्यर्थः। सम्प्राप्तिमाह—तस्येत्यादि। तस्य मिथ्याहाराचारस्येत्यादिकस्य। समुद्धूय आक्षिप्य, समन्तात् सर्व्वत्र। एतेन सर्व्वदेहगतत्वं रोगस्य सूचयति।

पूर्व्वरूपमाह—तस्येत्यादि। अकस्मात् कारणं विना, स्वापः स्पर्शाज्ञानम् ॥ १। २ ॥

इदानीं संख्यामाह—तत्रेत्यादि। महत्त्वमुत्तरोत्तरधात्वनुप्रवेशात्। एकादशकुष्ठानां क्षुद्रत्वमुत्तरोत्तरधात्वननुप्रवेशात्। अष्टादश कुष्ठानि भवन्तीति दिङ्मात्रं दर्शितं, कुष्ठानामनियतसङ्ख्यत्वात्। तथा च चरकः—"सप्तविधा अष्टादशविधा असंख्येयविधा वा" इति। महाकुष्ठानि नामतः प्राह—तत्र महाकुष्ठानीत्यादि ॥ ३ ॥

क्षुद्रकुष्ठानि नामतः प्राह—क्षुद्रकुष्ठान्यपीत्यादि। सर्व्वेष्वेव कुष्ठेषु सर्व्वेषामेव दोषाणां क्रिमीणाञ्च सम्भवं दर्शयन्नाह—सर्व्वाणीत्यादि। सर्व्वाणि क्षुद्राणि महान्ति च। कथं तर्हि वातेनारुणमित्यादीत्याशङ्क्याह—उत्सन्नतस्तु दोषग्रहणमभिभवादिति; उत्सन्नत औत्कट्यतो दोषग्रहणम्। अभिभवात् इतरदोषयोरिति शेषः ॥ ४। ५ ॥

तत्र वातेनारुणं, पित्तेनौडुम्बरर्ष्यजिह्वकपालकाकणकानि, श्लेष्मणा पुण्डरीकं दद्रुकुष्ठञ्चेति। तेषान्तु महत्त्वं क्रियागुरुत्वमुत्तरोत्तरं धात्वनुप्रवेशाद् असाध्यत्वञ्चेति॥ ६॥

तत्र वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि, पित्तेन पक्वोडुम्बरफलाकृतिवर्णान्यौडुम्बराणि, ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि, कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि, काकणन्तिकाफलसदृशान्यतीव रक्तकृष्णानि काकणकानि। तेषां चतुर्णामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म च सामान्यानि लिङ्गानि॥७॥

पुण्डरीकपत्रप्रकाशानि पुण्डरीकाणि श्लेष्मणा ; अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिड़कावन्ति च दद्रुकुष्ठानि। तयोर्द्वयोरप्युत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वञ्चेति सामान्यरूपाणि॥ ८॥

यस्य दोषस्य यस्मिन् कुष्ठे प्राधान्यं तद् दर्शयन्नाह—तत्रेत्यादि। तत्रारुणादीनां सप्तानां महत्त्वादिषु हेतुं दर्शयन्नाह—तेषामित्यादि। अनुशब्देन पश्चादर्थवाचिना महत्त्वेऽपि साध्यत्वं काकणकवर्ज्जं कालान्तरञ्च सूच्यते; काकणकं पुनरुत्पत्तावेवासाध्यं, व्याधिस्वभावात्। असाध्यत्वञ्चेति चकारो धात्वनुप्रवेशाच्चेत्यनन्तरं द्रष्टव्यम्। तेन अनुक्तमारम्भकदोषमहत्त्वं समुच्चिनोति॥ ६॥

तत्र महाकुष्ठानां लक्षणं दर्शयन्नाह—तत्र वातेनेत्यादि। ऋष्यजिह्वाप्रकाशानीति ऋष्यजिह्वाया इव प्रकाशः सादृश्यं येषां तानि खरत्वयुक्तानि, ऋष्यो नीलाण्ड रोरु इति प्रसिद्धः, अन्ये ऋक्ष इति पठन्ति, ऋक्षो रीच्छ् इति लोके। कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि। कृष्णकपालिका शर्करा। काकणन्तिकाफलसदृशान्यतीव कृष्णरक्तानि काकणन्तिकानि। काकणन्तिका गुञ्जा, चिरिहण्टिकेति प्रसिद्धा, तत्फलवद्रक्तानि मध्ये कृष्णानि। उडूम्बरादीनां पित्तकृतत्वं दर्शयन्नाह—तेषामित्यादि। ओषः तुषानलसमीप इव तापः, प्लुष्टस्येव वेदनाविशेषः इत्यन्ये। चोषः आचूष्यत इव वेदनाविशेषः, पिपासेत्यन्ये। परिदाहः सर्व्वतोदाहः। धूमायनं धूमोपहतस्येव, धूमोद्गमनमिवाङ्गानामित्येके॥ ७॥

पुण्डरीकदद्रु कुष्ठयोर्लक्षणं दर्शयन्नाह—श्लेष्मणेत्यादि। पुण्डरीकं श्वेतपद्मम्। दद्रु कुष्ठं द्विविधं सितमसितञ्च, असितस्य महोपक्रमसाध्यत्वादनुबन्धित्वप्रकर्षाच्च महाकुष्ठेषु मध्ये सुश्रुते पाठः। सितदद्रु कुष्ठस्य सुखसाध्यत्वादुत्तरोत्तरधात्वनुप्रवेशाभावात् तथात्यर्थपीड़ारहितत्वाच्च चरके क्षुद्रकुष्ठेषु मध्ये पाठ इत्यदोषः। दद्रु सिध्मयोः सुश्रुतचरकादिष्वेतयोरभिधानभेद इति जेज्झटाचार्य्यः समादधाति, तन्नेच्छति गयदासाचार्य्यः। तयोः पुण्डरीकदद्रु कुष्ठयोः पित्तकफकृतत्वं दर्शयन्नाह—तयोरित्यादि। परिमण्डलता परिपूर्णमण्डलता॥ ८॥

क्षुद्रकुष्ठान्यत ऊर्द्ध्वं वक्ष्यामः ॥ ९ ॥

स्थूलानि सन्धिष्वतिदारुणानि स्थूलारुषि स्युः कठिनान्यरूंषि ।
त्वक्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्व्वयुते भवन्ति ॥
कृष्णारुणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यम् ।
स्युर्येन कण्डूव्यथनौषचोषास्तलेषु तच्चर्म्मदलं वदन्ति ॥
विसर्पवत् सर्पति सर्व्वतो यस्त्वग्रक्तमांसान्यभिभूय शीघ्रम् ।
मूर्च्छाविदाहारतितोदपाकान् कृत्वा विसर्पः स भवेद् विकारः ॥
शनैः शरीरे पिड़काः स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः ।
कण्ड्वन्वितं श्वेतमपायि सिध्म विद्यात् तनु प्रायश ऊर्द्ध्वकाये ॥
राज्योऽतिकण्डूर्त्तिरुजः सरुक्षा भवन्ति गात्रेषु विचर्च्चिकायाम् ।
कण्डूमती दाहरुजोपपन्ना विपादिका पादगतेयमेव ॥
यत् स्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं क्रिटिभं(मं) वदन्ति ।
सास्रावकण्डूपरिदाहकाभिः पामाणुकाभिः पिड़काभिरूह्या ॥

क्षुद्रकुष्ठेषु प्राक् स्थूलारुष्कमाह—स्थूलानीत्यादि । स्थूलानि स्थूलमूलानि, दारुणानि कृच्छ्रसाध्यानि, अरूंषि व्रणाः । महाकुष्ठलक्षणमाह—त्वक्को वेत्यादि । त्वक्शब्दः कोचभेदस्वापशब्दैः सह प्रत्येकं सम्बध्यते, तेन त्वक्कोचः त्वक्सङ्कोचः, त्वग्भेदः त्वग्विदारणं, त्वक्स्वपनं त्वचोऽचेतनत्वम्, अङ्गसादः अङ्गग्लानिः । कुष्ठे महत्पूर्व्वयुते इति महाकुष्ठे इत्यर्थः । एककुष्ठमाह—कृष्णारुणमित्यादि । चर्म्मदलमाह—स्युर्येनेत्यादि । चोष आचूषणमिव । तलेषु हस्तपादतलेषु । विसर्पकुष्ठलक्षणमाह—विसर्पवदित्यादि । अत्रोक्तविसर्पाख्यकुष्ठस्य वक्ष्यमाणविसर्परोगस्य च चिरविसर्पणशीघ्रवीसर्पणतो भेदः । परिसर्पमाह—शनैः शरीर इत्यादि । सिध्मकुष्ठमाह—कण्ड्वन्वितमित्यादि । अपायि अकष्टकारि । प्रायश ऊर्द्ध्वकाये इति प्रायःशब्दोपादानाद् अधःकायेऽपि कदाचिद् भवति । सिध्मकुष्ठं द्विविधं—सिध्मं पुष्पिकासिध्मञ्च ; पुष्पिकासिध्मस्य सुखसाध्यत्वात् सुश्रुते क्षुद्रकुष्ठेषु पाठः, सिध्मस्य दुःखसाध्यत्वात् चरके महाकुष्ठे पाठ इत्यदोषः ।

विचर्च्चिकामाह—राज्योऽतिकण्डूर्त्तिरुज इत्यादि । राज्यो रेखाः, ताश्च सरुक्षा भवन्ति । कण्डूर्त्तिं खर्ज्जूरीपीड़ा, रुजो वेदनाः, अतिशब्दः कण्डूर्त्तिरुग्भ्यां सम्बध्यते । गात्रेषु पाणिपादेषु । कण्डूमतीत्यादि । इयमेव विचर्च्चिका पादगता यदा स्यात्, तदा विचर्च्चिकासंज्ञां विहाय विपादिका संज्ञां प्राप्नोतीत्यर्थः । किटिभमाह—यत् स्रावि वृत्तमित्यादि । रक्तकृष्णमिति केचित् पठन्ति । अथ पामामाह—सास्रावेत्यादि । सहास्रावकण्डूपरिदाहकैर्वर्त्तन्ते याः पिड़कास्ताश्चाविधाः, ताभिः ऊह्या पामेति सम्बन्धः, ये तु 'सास्रावकण्डूपरिदाहवद्भिः' इति पठन्ति ते तु व्याख्यानयन्ति—

स्फोटः सदाहैरति सैव कच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्या।
कण्ड्वन्विता या पिड़का शरीरे संस्रावहीना रकसोच्यते सा ॥ १० ॥
अरुः ससिध्मं रकसा महच्च यच्चैककुष्ठं कफजान्यमूनि।
वायोः प्रकोपात् परिसर्पमेकं शेषाणि पित्तप्रभवाणि विद्यात् ॥ ११ ॥

किलासमपि कुष्ठविकल्प एव। तत् त्रिविधं—वातेन पित्तेन श्लेष्मणा चेति। कुष्ठकिलासयोरन्तरं त्वग्गतमेव किलासमपरिस्रावि च। तद् वातेन मण्डलमरुणं परुषं परिध्वंसि च, पित्तेन पद्मपत्रप्रतीकाशं सपरिदाहञ्च, श्लेष्मणा श्वेतं स्निग्धं बहलं कण्डूमच्च। तेषु सम्बद्धमण्डलमन्तेजातं रक्तरोम चासाध्यमग्निदग्धञ्च ॥ १२ ॥

कुष्ठेषु रुक्त्वक्सङ्कोचस्वापस्वेदशोफभेदकौण्यस्वरोपघाता वातेन, प्राकाव-

सात्रावौ यौ कण्डूपरिदाहौ तद्युक्तैः पुरुषैः कृत्वा, अणुकाभिः पिड़काभिः कृत्वा, पामा ऊह्या वैद्यैरिति शेषः। सैव कच्छूरिति सैव पाण्योः स्फिचोश्च तीव्रदाहैः स्फोटैरुपगता कच्छूरुच्यते। रकसामाह—कण्ड्वन्वितेत्यादि। शरीरे सकले काये ॥ ९।१० ॥

इदानीं कस्मिन् क्षुद्रकुष्ठे कस्याधिक्यमित्याह—अरुः ससिध्ममित्यादि। अरुः स्थूलारुष्कम्। शेषाणि विसर्पकिटिभविचर्च्चिकापामाचर्म्मदलानि। अरुः ससिध्मरकसेत्यादि जेज्झटाचार्य्येण स्वकपोलकल्पितः श्लोक इति गयदासाचार्य्यो न मन्यते, यस्मादेककुष्ठं महाकुष्ठञ्च वातादिभिर्भवति न कफात्, परिसर्पं पित्तात्, पाठान्तरञ्चात्रारुष्कमित्यादि पठति, तच्चाभावान्न लिखितम् ॥ ११ ॥

किलासं दर्शयन्नाह—किलासमपीत्यादि। अपिशब्दः सम्भावनायां, तेन किलासं कुष्ठविकृतिरिति सम्भाव्यते। अन्ये तु किमपि किलासं कुष्ठविकल्पो न भवतीत्यपिशब्दादाहुः, किं तत् किलासं कुष्ठविकल्पो न भवति ? उच्यते, त्वग्गतमपरिस्रावि चेति ; अन्तरं भेदः। त्वग्गतमिति कुष्ठं त्वग्रक्तमांसमधिष्ठाय त्वचि दर्शयत्यात्मानं, किलासन्तु त्वचमेव, केवलां त्वचमधितिष्ठतीत्यर्थः। अन्ये तु त्वग्गतमेव किलाससंज्ञं तदेव धात्वनुप्रवेशात् श्वित्रसंज्ञमित्याहुः। तथा च विश्वामित्रः—"त्वग्गतन्तु यदस्रावि किलासं तत् प्रकीर्त्तितम्। यदा त्वचमतिक्रम्य तद् धातूनवगाहते। हित्वा किलाससंज्ञाञ्च श्वित्रसंज्ञां लभेत तत्" इति। वातादिजानां किलासानां लक्षणमाह—तद् वातेनेत्यादि। परिध्वंसीति घृष्टं सद्रजो मुञ्चतीत्यर्थः। बहलं स्थूलं, अतःपरमसाध्यावधारणं—तेष्वित्यादि। तेषु वातपित्तश्लेष्मजेषु किलासेषु। सम्बद्धमण्डलमिति परस्परमभिन्नमण्डलमित्यर्थः। अन्ते जातमोष्ठपाणिपादगुह्यजं, अन्ये त्वन्तान्तर्ज्जातरक्तरोम चेति पठन्ति। अन्तः मध्ये जातानि रक्तानि लोमानि यत्र तत्तथा, तेष्वसाध्यमग्निदग्धञ्चेति चकारेण पाणिपादगुह्यौष्ठोजमनुक्तमपि असाध्यं समुच्चिन्वन्ति ॥ १२ ॥

कुष्ठानां संक्षेपेणोक्तत्वात् अनुक्तमपि लिङ्गं दर्शयन्नाह—कुष्ठेष्वित्यादि। वातकार्य्येषु स्वेद [illegible]। त्वक्सङ्कोचस्वापस्वेदादिरित्यन्ये पठन्ति। तत्र [illegible] स्वेदनिषेधार्थं, व्याधिस्वभावात्

दरणाङ्गुलिपतनकर्णनासाभङ्गाक्षिरागसत्त्वोत्पत्तयः पित्तेन, कण्डूवर्णभेदशोफास्रावगौरवाणि श्लेष्मणा। तत्रादिबलप्रवृत्तं पौण्डरीकं काकणञ्चासाध्यम् ॥ १३ ॥

भवन्ति चात्र

यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्।
अन्तर्भूमिं विगाहेत मूलैर्वृष्टिविवर्द्धितैः॥
एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः।
क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः॥ १४ ॥
स्पर्शहानिः स्वेदनत्वमीषत्कण्डूश्च जायते।
वैवर्ण्यं रुक्षभावश्च कुष्ठ त्वचि समाश्रिते॥ १५ ॥
त्वक्स्वापो रोमहर्षश्च स्वेदस्याभिप्रवर्त्तनम्।
कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते॥ १६ ॥
वाहुल्यं वक्त्रशोषश्च कार्कश्यं पिड़कोद्गमः।
तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते॥ १७ ॥

स्वेदोऽपि स्यादित्यपरे। कौण्यं नष्टकरता, सत्त्वोत्पत्तयः क्रिमीणां जन्मानि। तेषामसाध्यत्वं दर्शयन्नाह—तत्रादिबलप्रवृत्तमित्यादि। पुण्डरीकमादिबलप्रवृत्तं शुक्रशोणितदोषजमसाध्यम्। ननु चादिबलप्रवृत्तमन्यदपि कुष्ठमसाध्यमेव, यदाह चरकः—'ये चापि केचित् कुलजा विकारास्तांश्चाप्यसाध्यान् प्रवदन्ति तज्ज्ञाः' इति, कुलजा इत्यनेन दुष्टशोणितजा उच्यन्ते। पुण्डरीकग्रहणं सर्वेषामेव महाकुष्ठानामुपलक्षणं; तेषामेवोत्तरोत्तरधात्वनुक्रमेण शुक्रधातोर्दुष्टिजननसामर्थ्यात्। एतेन क्षुद्रकुष्ठेष्वादिबलप्रवृत्तत्वं नास्ति, उत्तरोत्तरधात्वनुक्रमेण शुक्रदोषकरणेऽसामर्थ्यात्। काकणकं चासाध्यं, उत्पत्तावेव त्रिदोषबलप्रवृत्तत्वात्; धात्वनुक्रमेण हि महाकुष्ठानामस्थिमज्जशुक्रगतानामसाध्यत्वमुपरिष्टादेव वक्ष्यति ॥ १३ ॥

इदानीमप्रतिकारिण उत्तरोत्तरधात्वनुक्रमणे दृष्टान्तं दर्शयन्नाह—भवन्ति चात्रेत्यादि। यथा वनस्पतिर्वृक्षः कालप्रकर्षणं कालाधिक्यं प्राप्य, मूलैः कृत्वा अन्तर्भूमिं विगाहेत इति सम्बन्धः। त्वचीति अत्र त्वक्शब्देन रस उक्तः, रसारब्धत्वात्, तेन रसस्थमित्यर्थः ॥ १४ ॥

धातुगतकुष्ठानां लक्षणमाह—स्पर्शहानिरित्यादि। प्रागेव रसधातुं क्रोडीकृत्य, दोषाः कुष्ठारम्भकाः। अतो रसधातुलक्षणं नोक्तमित्येके। अपरे त्वक्शब्देन रसमाहुः। जायते इत्यत्रापि सम्बध्यते। विपूयको दुर्गन्धता, जायत इत्यत्रापि सम्बध्यते। बाहुल्यं स्थूलमण्डलता। स्फोटः त्वचः स्फुटनम्। स्थिरत्वं कठिनमण्डलता। केचिदत्रान्यथा पठन्ति, स च पाठोऽप्रमाण

दौर्गन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा।
गात्राणां भेदनञ्चापि कुष्ठे मेदःसमाश्रिते ॥ १८ ॥
नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः।
भवेत् स्वरोपघातश्च ह्यस्थिमज्जसमाश्रिते ॥ १९ ॥
कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्।
शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथव च ॥ २० ॥
स्त्रीपुंसयोः कुष्ठदोषाद् दुष्टशोणितशुक्रयोः।
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २१ ॥
कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम्।
मेदोगतं भवेद् याप्यमसाध्यमत उत्तरम् ॥ २२ ॥
ब्रह्मस्त्रीसज्जनवध-परस्वहरणादिभिः।
कर्म्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम् ॥ २३ ॥
म्रियते यदि कुष्ठेन पुनर्ज्जातेऽपि गच्छति।
नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्त्तितम् ॥ २४ ॥
आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम्।
औषधीनां विशिष्टानां तपसश्च निषेवणात्।
यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात् ॥ २५ ॥

लिखितः। अत्रापि जायत इत्यध्याहारः। उपदेहो मलवृद्धिः। अत्रापि केचिदन्यथा श्लोकं पठन्ति, सोऽपि पाठोऽभावान्न लिखितः ॥ १५—१९ ॥

शुक्रगतस्य कुष्ठस्य लिङ्गं दर्शयन्नाह—कौण्यमित्यादि। कुष्ठिनं वेति पाठः। तदपीत्यपिशब्दात् पूर्व्वोक्तान्यपि रसादिमज्जगतानि लिङ्गानि भवन्ति। कुष्ठितं सञ्जातकुष्ठम्। अन्ये तु कुष्ठवदिति पठन्ति, कुष्ठसहितमित्यर्थः। अन्ये कुष्ठिलमिति पठन्ति, तत्रापि स एवार्थः ॥ २० । २१ ॥

यदा स्त्रीपुंसयोः कुष्ठिनोर्वीजमुपहतं स्यात् तदा तयोः प्रजा नोत्पद्यते। उपतप्तमात्रवीजयोः पुनः प्रजोपताप उत्पद्यते। इदानीं धात्वनुक्रमेऽपि साध्यादिभेदं दर्शयन्नाह—कुष्ठमित्यादि। आत्मवतो जितेन्द्रियस्य। कुष्ठस्य कर्म्मजत्वं दर्शयन्नाह—ब्रह्मस्त्रीत्यादि। सज्जनः सत्पुरुषः, परस्वं परद्रव्यम्। कुष्ठं दीर्घरोगाणां प्रधानमिति जन्मान्तरेऽपि तदनुबन्धं दर्शयन्नाह—म्रियत इत्यादि। गच्छति अनुगतं भवतीत्यर्थः। कुष्ठजनकस्य कर्म्मणोऽक्षीणत्वात् पुनर्भवः। आस्थाय आश्रित्य। स पुण्यां गतिमाप्नुयात् क्षीणपापत्वात् ॥ २३—२५ ॥

प्रसङ्गाद् गात्रसंस्पर्शान्निश्वासात् सहभोजनात् ।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ २६ ॥

इति सुश्रुतसंहितायां निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

संसर्गसम्भवप्रधानं कुष्ठमाश्रित्य कुष्ठिप्रभृतीनां संसर्गपरिहारं दर्शयन्नाह—प्रसङ्गादित्यादि । प्रसङ्गादिति प्रसङ्गेन अभ्यासेन कृतात्, पुनःपुनः कृतादित्यर्थः । इदं विशेषणं गात्रसंस्पर्शादिभिः सर्व्वैः सह प्रत्येकं सम्बध्यते । सहशय्यासनादिति एकशय्यासनस्थितेः । माल्यं पुष्पम् । औपसर्गिकरोगाः शीतलिकादयः । संक्रामन्ति आविशन्ति ॥ २६ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे
कुष्ठनिदानव्याख्यानाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ।

## अथातः प्रमेहनिदानं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

दिवास्वप्नाव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमेद्यद्रवान्नपानसेविनं पुरुषं जानीयात् प्रमेही भविष्यतीति ॥ २ ॥

तस्य चैवंप्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्व-मुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा वस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति ॥ ३ ॥

तेषान्तु पूर्व्वरूपाणि—हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम् ॥ ४ ॥

तत्राविलप्रभूतमूत्रलक्षणाः सर्व्वे एव प्रमेहाः, सर्व्वे एव सर्व्वदोषसमुत्थाः सह पिड़काभिः ॥ ५ ॥

अथात इत्यादि । प्रमेहहेतुमाह—दिवास्वप्नेत्यादि । प्रसक्तं प्रकर्षेण सक्तमतिशयेन अनु-षङ्गिणम् । मेद्यं मेदुरं मेदोजनकमित्यर्थः । पुरुषं जानीयात् प्रमेही भविष्यति । तत्राहुरेके—स्त्रीणां प्रमेहा न भवन्ति । तथाच तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति सर्व्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः" इति । एतत् तु न युक्तं, सर्व्वतन्त्राप्रसिद्धेः प्रत्यक्ष-विरोधाच्च ॥ १ । २ ॥

सम्प्राप्तिं दर्शयन्नाह—तस्येत्यादि । अपरिपक्वा आमाः । मेदसेति अत्रादिशब्दो लुप्तो द्रष्टव्यः, तेन वसादयो ग्राह्याः । अन्ये तु मेदश्चापरिपक्वमिति पठन्ति । चकारेण अनुक्तान् वसादीन् समुच्चिन्वन्ति । उपेत्य गत्वा । निर्भिद्यन्ते निःसरन्तीत्यर्थः । अन्ये तु विनिर्भिद्यन्ते इति पठित्वा तत्रैव स्थितिं कुर्व्वन्तीति व्याख्यानयन्ति ; अपरे त्वतिद्रवत्वं यान्तीत्याहुः ॥ ३ ॥

पूर्व्वरूपमाह—तेषामित्यादि । केशानां जटिलीभावः अन्योऽन्यमिलनं, स्वेदमलबाहुल्यात् रोगप्रभावाच्च ॥ ४ ॥

प्रमेहाणां सामान्यलक्षणमाह—तत्राविलेत्यादि । आविलं समलम् । तेषां प्रमेहाणां प्रमेह-पिड़कानाञ्च दोषं दर्शयन्नाह—सर्व्वे एवेत्यादि । एतेन प्रमेहाणां प्रमेहपिड़कानाञ्च कुष्ठवत् सर्व्व-दोषजत्वमुक्तम् ॥ ५ ॥

तत्र कफादुदकेक्षुवालिकासुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहा दश साध्याः, दोषदूष्याणां समक्रियत्वात् ॥ ६ ॥

पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्याः ; दोषदूष्याणां विषमक्रियत्वात् ॥ ७ ॥

वातात् सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमाः ; महात्ययिकत्वात् ॥ ८ ॥

तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति, वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्, कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान् ॥ ९ ॥

तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति ; इक्षुरसतुल्यमिक्षुवालिकामेही, सुरामेही सुरातुल्यं, सरुजं सिकतानुविद्धं सिकतामेही, शनैः सकफं मृत्स्नं शनैर्मेही, विशदं लवणतुल्यं लवणमेही, हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही, आविलं सान्द्रं सान्द्रमेही, शुक्रतुल्यं शुक्रमेही, स्तोकं स्तोकं सफेनं फेनमेही मेहति ॥ १० ॥

अत ऊर्द्ध्वं पित्तनिमित्तान् वक्ष्यामः। सफेनमच्छं नीलं नीलमेही मेहति ; सदाहं हरिद्राभं हरिद्रामेही, अम्लरसगन्धमम्लमेही, स्रुतक्षारप्रतिमं क्षारमेही, मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही, शोणितप्रकाशं शोणितमेही मेहति ॥ ११ ॥

सर्व्वेषां सर्व्वदोषजत्वेऽपि उत्कर्षतो दोषग्रहणं दर्शयन्नाह—तत्र कफादित्यादि। उदकमेहः, इक्षुवालिकामेहः, सुरामेहः, सिकतामेहः, शनैर्मेहः, लवणमेहः, पिष्टमेहः, सान्द्रमेहः, शुक्रमेहः, फेनमेहश्चेति दश प्रमेहाः साध्या यद्यतिशयेन मेदो दूषितं न भवति। दोषदूष्याणां समक्रियत्वादिति। अत्र दोषः श्लेष्मा, दूष्याणि रसमांसमेदोमज्जशुक्रलसीकौजांसि, एषां कटुतिक्तकषायादिभिः समैव क्रिया ॥ ६ ॥

पित्तादित्यादि। याप्या इति अत्रापि यद्यतिशयेन मेदो दूषितं न भवति। दोषदूष्याणां विषमक्रियत्वादिति। अत्र दोषः पित्तं, दूष्याणि रसमांसादीनि, एतेषान्तु विषमा क्रिया पित्तहन्त्री रसमांसाद्यपादिकेति ॥ ७ ॥

वातादित्यादि। महात्ययिकत्वात् शीघ्रं विनाशकारित्वादिति; महात्ययिकत्वं पुनरेषामुत्तरोत्तरसारतरधातुस्रावकरत्वात्, विषमक्रियत्वाच्चेत्यत्रापि सम्बध्यते ॥ ८ ॥

इदानीं सर्व्वेषामेव सर्व्वजत्वं प्रकटयन्नाह—तत्रेत्यादि। कफजानामनुक्रमेण लक्षणं दर्शयन्नाह—तत्रेत्यादि। सिकतानुविद्धं बालुकामिश्रं। मृत्स्नं पिच्छिलम्, लवणतुल्यं लवणाम्बुतुल्यं, हृष्टरोमा प्रहृष्टरोमाञ्चः, पिष्टरसतुल्यं पिष्टमिश्रोदकतुल्यम्, आविलमत्यर्थं कलुषं, पुनर्वचनात्। मेहति मूत्रयतीत्यर्थः ॥ ९ । १० ॥

अत ऊर्द्ध्वमित्यादि। स्रुतक्षारप्रतिमं गलितक्षारद्रवतुल्यं, मञ्जिष्ठोदकप्रकाशं शोणितप्रकाशञ्च

अत ऊर्द्ध्वं वातनिमित्तान् वक्ष्यामः। सर्पिःप्रकाशं सर्पिर्मेही मेहति; वसाप्रकाशं वसामेही, क्षौद्ररसवर्णं क्षौद्रमेही, मत्तमातङ्गवदनुप्रवद्धं(न्धं) हस्तिमेही मेहति ॥ १२ ॥

मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिर्निद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः ॥ १३ ॥

वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रत्वञ्चेति पैत्तिकानाम् ॥ १४ ॥

हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं वद्धपुरीषत्वञ्चेति वातजानाम् ॥१५

एवमेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः ॥ १६ ॥

तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिड़का जायन्ते। तद्यथा—शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति ॥ १७ ॥

शरावमात्रा तद्रूपा निम्नमध्या शराविका ॥ १८ ॥
गौरसर्षपसंस्थाना तत्प्रमाणा च सार्षपी ॥ १९ ॥
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ २० ॥
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ २१ ॥

मूत्रं रक्तपित्तेऽपि भवति। ततः कोऽयं प्रमेहविशेषः? अत्रोच्यते—रक्तपित्ते प्रमेहपूर्व्वरूपं न भवति। मञ्जिष्ठाशोणितमेहयोस्तु प्रमेहपूर्व्वरूपसम्भव इति विशेषः। अत इत्यादि अनुप्रबद्धं सततम् ॥ ११। १२ ॥

इदानीं प्रतिदोषमुपद्रवान् दर्शयन्नाह—मक्षिकोपसर्पणमित्यादि। अवदरणं विदरणं, अम्लीका अम्लोद्गारः, वमथुश्छर्द्दिः, परिधूमायनं समन्तात् धूमाः। दाहोऽग्निदग्धस्येव। लौल्यं सर्व्वरसाभिकाङ्क्षा वातजग्रहणीवत् ॥ १३—१६ ॥

पिड़कानामुपद्रवविशेषाणां सम्प्राप्तिं दर्शयन्नाह—तत्र वसामेदोभ्यामित्यादि। वसा मांसस्नेहः, सकलशरीरस्नेह इत्यन्ये। अभिपन्नशरीरस्य व्याप्तशरीरस्य। अनुगतधातोर्व्याप्तधातोः, पिड़कास्तु प्रायेणाधःकाये एव। तासां पिड़कानां नामान्याह—तद् यथेत्यादि ॥ १७ ॥

तासां लक्षणमाह—शरावमात्रेत्यादि। गौरसर्षपसंस्थाना गौरसर्षपाकारा। जालिनीत्यादि। यद्यपि—"ये यन्मया स्मृता मेहास्तेषामेतास्तु तत्कृताः" इत्यग्रे एव वक्ष्यति, तथापि

अवगाढ़रुजाक्लेदा पृष्ठे वाप्युदरेऽपि वा ।
महती पिड़का नीला पिड़का विनता स्मृता ॥ २२ ॥
महत्यल्पाचिता ज्ञेया पिड़का सा तु पुत्रिणी * ॥ २३ ॥
मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका ॥ २४ ॥
रक्तसिता स्फोटवती दारुणा त्वलजी भवेत् ॥ २५ ॥
विदारीकन्दवद् वृत्ता कठिना च विदारिका ॥ २६ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः ॥ २७ ॥
ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः ॥ २८ ॥
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मणि चोत्थिताः ।
सोपद्रवा दुर्व्वलस्य † पिड़काः परिवर्ज्जयेत् ॥ २९ ॥
कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः ।
अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः ॥ ३० ॥
प्रमेहपूर्व्वरूपाणामाकृतिर्यत्र दृश्यते ।
किञ्चिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत् ॥ ३१ ॥
कृत्स्नान्यर्द्धानि वा यस्मिन् पूर्व्वरूपाणि मानवे ।
प्रवृद्ध(त्त)मूत्रमत्यर्थं तं प्रमेहिणमादिशेत् ॥ ३२ ॥

जालिनी पित्तोत्तरा ज्ञेया, तद्वचनस्य बाहुल्येनोक्तत्वात् । महती स्थूला । अल्पाचितेति सूक्ष्मपिड़कावेष्टिता ॥ १८—२७ ॥

पिड़काजनकान् दोषानाह—य इत्यादि । ये यन्मया यद्दोषारब्धाः, तेषां प्रमेहाणां, एता इति पिड़काः ॥ २८ ॥

तासामसाध्यतां दर्शयन्नाह—गुदे हृदीत्यादि । अंसो बाहुशिरः । सोपद्रवा इति "तृट्कासमांससंकोथमोहहिक्कामदज्वराः । विसर्पमर्म्मसंरोधाः पिड़कानामुपद्रवाः ॥" सोपद्रवाल्पकायाग्नेः पिड़काः परिवर्ज्जयेदिति केचित् पठन्ति । तत्र सोपद्रवेति पुरुषविशेषणम् ॥ २९ ॥

वातजानामसाध्यत्वे हेतुं दर्शयन्नाह—कृत्स्नं शरीरमित्यादि । निष्पीड्य निश्च्योतयित्वा मूत्रमार्गेण समस्तान् धातून् प्रवाहयित्वा इत्यर्थः । दत्स्युपलक्षणं, तेन ओजोलसीकयोर्ग्रहणम् । अधः प्रक्रमते अधः स्फीतीभवति प्रबलीभवतीत्यर्थः । गयदासाचार्य्यस्तु आपातनिकापूर्व्वं प्रमेहपूर्व्वरूपाणामित्यादिश्लोकद्वयमन्यथा पठति । असाध्यास्त्वति पूर्व्वहेतुभ्याच्चेति तुशब्दार्थः ॥३०॥

इदानीं प्रमेहहेतुयुक्तस्य पुरुषस्य सामान्याकारेण लक्षणमाह—प्रमेहपूर्व्वरूपाणामित्यादि । प्रमेहस्य पूर्व्वोक्तसामान्यलक्षणस्य शेषं लक्षणमाह—कृत्स्नानीत्यादि । गयदासस्त्वापातनिकापूर्व्वं

* पुत्रिणी महती भूरिसुसूक्ष्मपिटिकावृतेति पाठान्तरम् । † दुर्व्वलाग्नेरिति वा पाठः ।

पिड़कापीड़ितं गाढ़मुपसृष्टमुपद्रवैः।
मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः॥ ३३॥
स चापि गमनात् स्थानं स्थानादासनमिच्छति।
आसनाद् वृणुते शय्यां शयनात् स्वप्नमिच्छति॥ ३४॥

यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवलवभ्रुकपिलकपोतमेचकादीनां वर्णानामनेकेषामुत्पत्तिर्भवति, एवमेव दोषधातुमलाहारविशेषेणोत्कर्षापकर्षकृतेन संयोगविशेषेण प्रमेहाणां नानाकरणं भवति॥ ३५॥

भवति चात्र

सर्व्वं एव प्रमेहास्तु कालेनाप्रतिकारिणः।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि॥ ३६॥

इति सुश्रुतसंहितायां निदानस्थाने प्रमेहनिदानं नाम षष्ठोऽध्यायः॥ ६॥

प्रमेहपूर्व्वरूपाणामित्यादिश्लोकमन्यथा पठति; यथा—इदानीं प्रमेहपिड़काचिकित्सितनिर्द्दिष्टमर्थं पञ्चगुणाश्रयं पूर्व्वरूपशोफपिड़कावस्थाख्यं प्रतिपादयन्नाह—प्रमेहपूर्व्वरूपाणामित्यादि। तस्मिन् मेहो भविष्यतीति मेहस्य तत् पूर्व्वरूपम्। तत्र च पूर्व्वरूपेऽपतर्पणं वनस्पतिकषायपानादिकञ्च कर्त्तव्यम्। प्रवृत्तमूत्रमत्यर्थमिति रूपज्ञानम्। तत्र रूपज्ञानं चिकित्साविशेषार्थम्। तदुक्तम्—"एवमकुर्व्वतस्तस्य हीनप्रथमकर्म्मगुणस्य मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति प्रमेहश्चाभिव्यक्तो भवति। तत्रोभयतः संशोधनम्। एवमकुर्व्वतस्तस्य दोषाः प्रवृद्धा मांसशोणिते प्रदूष्य शोथं जनयन्त्युपद्रवांश्च कांश्चित्, तत्रोक्तः प्रतीकारः सिरामोक्षश्च, एतदकुर्व्वतः पिड़काः, तत्कर्म्माण्यकुर्व्वतः पञ्चत्वमिति॥ ३१। ३२॥

सर्व्वप्रमेहाणामवस्थान्तरप्राप्तानां संज्ञान्तरमसाध्यत्वञ्च दर्शयन्नाह—पिड़कापीड़ितमित्यादि। स चासाध्य इति चकार उत्पन्नानां वातजानामसाध्यत्वं समुच्चिनोति। उत्पत्तौ च सहजो याप्यत्वादसाध्यः, पित्तजः पुनरसाध्यतरः, वातजः पुनरुत्पत्तिक्रमेणासाध्यतमः। इदानीं मधुमेहिनो विकाराख्यं पञ्चविधक्रियाश्रयं लिङ्गं दर्शयन्नाह—स चापीत्यादि। स्थानमूर्द्ध्वं भवममिच्छतीति सम्बन्धः। वृणुते प्रार्थयते, शयनात् शय्यायाः॥ ३३। ३४॥

इदानीं दोषाणां त्रयाणामपि यथा विंशतिप्रमेहसम्भवस्तथोपमानेनाह—यथेत्यादि। पञ्चानां वर्णानां सितहरितकृष्णपीतरक्तानां, उत्कर्षापकर्षकृतेन वृद्धिह्रासकृतेन, बभ्रुः कपिलः पिङ्गलः, कपोतः कपोताभः, मेचकः श्यामलः। मलग्रहणमुपधातुभूतवसालसीकयोरुदकस्य चोपलक्षणम्॥ ३५॥

इदानीं सर्व्वेष्वेव प्रमेहेषु पूर्व्वरूपादीनामुपेक्षालक्षणमनर्थं दर्शयन्नाह—भवति चात्रेत्यादि। कालः प्रथमक्रियाकालादिकः। अप्रतिकुर्व्वतः अप्रतिक्रियमाणस्य॥ ३६॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे प्रमेहनिदानव्याख्यानाम षष्ठोऽध्यायः॥ ६॥

## सप्तमोऽध्यायः ।

अथात उदराणां निदानं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धन्वन्तरिर्धर्म्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमोऽभवद् यः ।
ब्रह्मर्षिपुत्रं विनयोपपन्नं शिष्यं शुभं सुश्रुतमन्वशात् सः ॥२॥
पृथक्समस्तैरपि चेह दोषैः प्लीहोदरं बद्धगुदं तथैव ।
आगन्तुकं सप्तममष्टमञ्च दकोदरञ्चेति वदन्ति तानि ॥ ३ ॥
सुदुर्ब्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद् वा ।
स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः ।
गुल्माकृतिव्यञ्जितलक्षणानि कुर्व्वन्ति घोराण्युदराणि दोषाः ॥४॥
कोष्ठादुपस्नेहवदन्नसारो निःसृत्य दुष्टोऽनिलवेगनुन्नः ।
त्वचः समुन्नम्य शनैः समन्ताद् विवर्द्धमानो जठरं करोति ॥ ५ ॥

अथात इत्यादि । यो धन्वन्तरिरभवत् स सुश्रुतमन्वशादिति सम्बन्धः, शिक्षितवानित्यर्थः । धर्म्मभृतां धार्म्मिकाणां मध्ये, इन्द्रप्रतिमः ज्ञानैश्वर्य्यादिभिः, ब्रह्मर्षिः विश्वामित्रः, राजर्षिरपि तपसा ब्रह्मर्षित्वं प्राप्तवान् । विनयोपपन्नं जितेन्द्रियम् । शुभमिति पूर्व्वोक्तैरन्वयवयःशीलादिगुणैरुपेतम् । उदराणां संख्यामाह—पृथगित्यादि । पृथग्दोषैस्त्रीणि, समस्तैर्दोषैरेकम्; एतेन चत्वारि दोषप्रधानानि । इहेति अस्मिन् शास्त्रे । तानीति उदराणीत्यर्थः । प्लीहोदरादीनि चत्वारि दूष्यप्रधानानि । अष्टममिति संख्योक्त्या प्लीहोदरयकृद्दाल्युदरयोरैक्यमेव ज्ञातव्यम् ॥ १—३ ॥

उदराणां हेतुं दर्शयन्नाह— सुदुर्ब्बलाग्नेरित्यादि । सुदुर्ब्बलाग्नेरत्यन्तनष्टाग्नेः । अहिताशनस्येति विरुद्धसमशनाध्यशनविषमाशनस्य । स्नेहादीत्यादिशब्दाद् वमनविरेचनास्थापनानुवासनपरिग्रहः । मिथ्याचरणं यथोक्तानुष्ठानपरित्यागः । जन्तोः प्राणिनः । अभिप्रपन्नाः प्राप्ता इत्यर्थः । किंविशिष्टान्युदराणि कुर्व्वन्ति ? गुल्माकृतिव्यञ्जितलक्षणानि गुल्माकृत्या गुल्मरूपेण व्यञ्जितानि प्रकटितानि लक्षणानि येषां तानि तथा । पुनरपि किंविशिष्टानि ? घोराणि कृच्छ्रतमानि ॥ ४ ॥

सम्प्राप्तिं दर्शयन्नाह—कोष्ठादित्यादि । उपस्नेहवदिति नवघटाद्युपस्नेहो यथाऽशुतमध्योभिर्व्वहिःस्रवत् दृश्यते, तद्वत् कोष्ठादन्नसारोऽन्नरसो निःसृत्य शनैः क्रमेण जठरमुदराख्यं रोगं करोतीति सम्बन्धः । कोष्ठशब्देनात्राहारपाकाधार उच्यते । किम्भूतोऽन्नसारः ? दुष्टः । पुनः किम्भूतः ? अनिलवेगनुन्नो वातवेगप्रेरितः । किं कृत्वा ? त्वचः समुन्नम्य आनद्धाः कृत्वा । पुनः किम्भूतो रसः ? समन्तात् विवर्द्धमानः सर्व्वतो वृद्धिं गच्छन् ॥ ५ ॥

तत्पूर्व्वरूपं बलवर्णकाङ्क्षा-वलीविनाशो जठरे हि राज्यः।
जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोफः॥ ६॥
संगृह्य पार्श्वोदरपृष्ठनाभीर्यद् वर्द्धते कृष्णशिरावनद्धम्।
सशूलमानाहवदुग्रशब्दं सतोदभेदं पवनात्मकं तत्॥ ७॥
यच्चोषतृष्णाज्वरदाहयुक्तं पीतं शिरा यत्र भवन्ति पीताः।
पीताक्षिविण्मूत्रनखाननस्य पित्तोदरं तत् त्वचिराभिवृद्धि॥ ८॥
यच्छीतलं शुक्लशिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य।
स्निग्धं महच्छोफयुतं ससादं कफोदरं तच्च चिराभिवृद्धि॥ ९॥
स्त्रियोऽन्नपानं नखरोममूत्र-विड़ार्त्तवैर्युक्तमसाधुवृत्ताः।
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद् वा॥
तेनाशु रक्तं कुपिताश्च दोषाः कुर्व्वन्ति घोरं जठरं त्रिलिङ्गम्।
तच्छीतवाताभ्रसमुद्भवेषु विशेषतः कुप्यति दह्यते च॥
स चातुरो मूर्च्छति सम्प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च।
प्रकीर्त्तितं दूष्युदरन्तु घोरं——————————॥ १०॥
—————————— प्लीहोदरं कीर्त्तयतो निबोध॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च।
प्लीहाभिवृद्धिं सततं करोति प्लीहोदरं तत् प्रवदन्ति तज्ज्ञाः॥

पूर्व्वरूपमाह—तदित्यादि। विनाशशब्दो बलादिभिः प्रत्येकं सम्बध्यते। काङ्क्षा अन्नाभिलाषः। वली त्वक्सङ्कोचः। राज्यो रेखाः, भवन्तीति शेषः। जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुज इति जीर्णापरिज्ञानविदाहौ विद्येते यासु वस्तिरुजासु तास्तथा। जीर्णापरिज्ञानमन्नपरिणामानिश्चयः। जीर्णापरिज्ञानन्तु यथासम्भवत्वात् पुरुषस्यैव ज्ञेयम्॥ ६॥

वातोदरमाह—संगृह्येत्यादि। पित्तोदरमाह—यच्चोपेत्यादि। अचिराभिवृद्धि शीघ्रवर्द्धनशीलम्। श्लेष्मोदरमाह - यच्छीतलमित्यादि। स्थिरं कठिनं, ससादमङ्गग्लानियुक्तम्॥ ७—९॥

सन्निपातोदरमाह—स्त्रियोऽन्नपानमित्यादि। स्त्रियोऽन्नपानं नखरोममूत्रविड़ार्त्तवयुक्तं यस्मै पुरुषाय प्रयच्छन्ति ददति। किम्भूताः स्त्रियः? असाधुवृत्ताः दुराचाराः। स्त्रीग्रहणमत्रोपलक्षणं, तेनान्येऽपि सन्निहिता अविवेकिनो ग्राह्याः। अरयः शत्रवः। गरान् कृत्रिमविषाणि यस्मै प्रयच्छन्ति। दुष्टाम्बु सविषमत्स्यादिसम्बन्धात्। विषमेव दावाग्निवातातपाद्यभिभवेन मन्दतां गतं विषपीतस्य वा विषं दूषीविषं; तेन नखरोमादिना विषकल्पेन गरेण दूषीविषेण वाशु शीघ्रं रक्तं कुपितमिति बोद्धव्यम्। त्रिलिङ्गं वातपित्तश्लेष्मलिङ्गम्। प्रसक्तं निरन्तरम्। दूष्युदरमिति यदेव सान्निपातिकोदरं तदेव दूष्युदरम्। एतेन न संख्यातिरेकः। घोरं भयानकं न पुनर्घोरं कष्टकारि। निबोध जानीहि। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेद-

वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ।
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥ ११ ॥
सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १२ ॥
यस्यान्त्रमन्नैरुपलेपिभिर्वा वालाश्मभिर्वा सहितैः पृथग् वा ।
सञ्चीयते तत्र मलः सदोषः क्रमेण नाड्यामिव सङ्करो हि ॥
निरुध्यते चास्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ।
हृन्नाभिमध्ये परिवृद्धिमेति यच्चोदरं विट्समगन्धिकञ्च ।
प्रच्छर्दयन् बद्धगुदी विभाव्यः ——— ———.——— ॥ १३ ॥
——————.————ततः परिस्राव्युदरं निबोध ।
शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा ॥
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाशः स्रावः स्रवेद् व गुदतस्तु भूयः ।
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च ।
एतत् परिस्राव्युदरं प्रदिष्टं—————.————— —॥ १४ ॥
——   ————दकोदरं कीर्त्तयतो निबोध ।
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः ।
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥

प्रासिजनकम् । असृक् कफश्चेति असृग्ग्रहणेन पित्तस्यापि ग्रहणम् । प्लीहा उदरस्य वामपार्श्वस्थितः । सीदति अङ्गग्लानियुक्तो भवति । अत्र प्लीहोदरे ॥ १० । ११ ॥

प्लीहोदर एव यकृद्दाल्युदरस्यैवावरोधं दर्शयन्नाह—सव्येतरस्मिन्नित्यादि । सव्येतरस्मिन् दक्षिणपार्श्वे, तदेव प्लीहोदरं यकृद्दाल्युदरं ज्ञेयम् । क ज्ञेयमित्याह— यकृति कालखण्डे। किम्भूते ? प्रदुष्टे । एतेन न संख्यातिरेकः ॥ १२ ॥

बद्धगुदं दर्शयन्नाह—यस्येत्यादि । यस्य पुरुषस्य अन्त्रं निरुध्यते इति सम्बन्धः । कैर्निरुध्यते इत्याह—अन्नैरित्यादि । उपलेपिभिः पिच्छिलादिभिः । वा अत्र समुच्चये । सहितैरिति एकत्र मिलितैः समुदितैरित्यर्थः । पृथग् वेति एकैकैरित्यर्थः । मलः पुरीषं, सदोषः दोषत्रयसहितः । नाड्यां प्रणालिकायां, सङ्करः अवकरः, प्रचुरतृणादिसमूह इत्यर्थः । निरेति निःसरति । बद्धगुदी विभाव्यः स पुरुषो बद्धगुदी ज्ञेयः ॥ १३ ॥

परिस्राव्युदरमाह—तत इत्यादि । यत् शल्यं अन्नोपहितमन्नसम्बद्धं भुक्तम्, तद् अन्त्रं भिनत्ति विदारयति । यस्य पुरुषस्य । शल्यं शर्कराकाष्ठास्थिकण्टकादिकम् । आगतमन्यथा वेति वाशब्दोऽवधारणे, तेनान्यथैव विलोमेन तिर्य्यगेवागतं नत्वनुलोमेन । स्रुतः गलितः ॥ १४ ॥

स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्व्ववदभ्युपैति।
स्निग्धं महत् सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च।
यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्॥ १५॥

आध्मानं गमनेऽशक्तिर्दौर्ब्बल्यं दुर्ब्बलाग्निता।
शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः।
दाहस्तृष्णा च सर्व्वेषु जठरेषु भवन्ति हि॥ १६॥
अन्ते सलिलभावन्तु भजन्ते जठराणि तु।
सर्व्वाण्येव परीपाकात् तदा तानि विवर्ज्जयेत्॥ १७॥

इति सुश्रुतसंहितायां निदानस्थाने उदरनिदानं नाम सप्तमोऽध्यायः॥ ७॥

दकोदरमाह—दकोदरमित्यादि। दकोदरमुदकोदरमित्यर्थः। तद्वहानि तोयवहानि। स्नेहोपलिप्तेष्वथवापि तेष्विति स्नेहादिपानं विनापि तेषु स्रोतःसु स्नेहोपलिप्तेषु यदा शीतलं जलं पिबेत् तदापीत्यर्थः। पूर्व्ववदिति क्षतान्त्रोदरे यथा सलिलस्याधोगामित्वादधो नाभेरुदरोत्पत्तिर्यथा च गुदादास्रावसद्वदिति; जेज्झटाचार्य्येण पुनः पूर्व्ववत् इत्यत्रान्यान्युदराणि यथा भवन्ति तथा इदमपीति व्याख्यातम्, तन्नेच्छति गयदासाचार्य्यः। परिवृत्तनाभि उच्छलितनाभि। दृतिः खल्ला। क्षुभ्यति चलति, कम्पते चेति कम्पनमतिशयेन चलनम्। तेषामष्टानामपि सामान्यं लिङ्गं दर्शयन्नाह— आध्मानमित्यादि। जेज्झटाचार्य्येण पुनरेते उपद्रवा व्याख्याताः; तन्नेच्छति गयदासाचार्य्यः। साध्यासाध्यविभागमाह—अन्त इत्यादि। परिपाकात् परिणामेन दकोदरता सर्व्वेषामेव; अन्यान्युदराणि परिपाकादुदकभावं भजन्ते, दकोदरं प्रागेवेति विशेषः॥१५—१७॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे उदररोगव्याख्यानाम सप्तमोऽध्याय॥ ७॥

---

# अष्टमोऽध्यायः ।

अथातो मूढगर्भनिदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

ग्राम्यधर्म्म-यान-वाहनाध्वगमन-प्रस्खलन-प्रपतन-प्रपीड़नधावनाभिघात-विषमशयनासनोपवासवेगाभिघातातिरुक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः, फलमिव वृन्तवन्धनादभिघातविशेषैः ॥ २ ॥

स विमुक्तवन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति। तस्या जठरसङ्क्षोभाद् वायुरपानो मूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण। तमेव कदाचिद् विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानम् अपानवैगुण्यसम्मोहितं गर्भं मूढगर्भमित्याचक्षते ॥ ३ ॥

ततः स कीलः प्रतिखुरो वीजकः परिघ इति। तत्र ऊर्द्ध्वबाहुशिरःपादो

अथात इत्यादि। मूढो निरुद्धगतिः। तदुक्तं—"सर्व्वावयवसम्पूर्णो मनोबुद्ध्यादिसंयुतः। विगुणापानसंमूढो मूढगर्भोऽभिधीयते" इति। तस्य हेतुं दर्शयन्नाह—ग्राम्यधर्म्मेत्यादि। ग्राम्यधर्म्मः मैथुनं, यानं रथादि, वाहनमश्वादि, अध्वगमनं पद्भ्यां मार्गगमनं, प्रस्खलनमाखुड़नादि, प्रपतनं प्रासादादेः सकाशादतिशयेन पतनम्, प्रपीड़नम् अतिशयेन पीड़नं, प्रधावनमतिशयेन धावनं, अभिघातः शस्त्रलोष्टकशादिभिः प्रहारः, वेगाभिघातो वाताद्यवरोधः, प्रेङ्खोलनं हिन्दोलनम्, गर्भशातनं भेषजेन गर्भपातनम्। केचिदेतद् गद्यमन्यथा पठन्ति, तत्त्वभावान्न लिखितम्। बन्धनमत्र गर्भाशयप्रतिबद्धाः शिराः पेश्यश्च। मोचने उपमानमाह—फलमित्यादि। एतेनैतदुक्तं भवति यथा वृक्षे अपरिपक्वफलमभिघातैरकाल एव पतति, तद्वद् यथोक्तपातनहेतुसामर्थ्यादप्रसवकाल एव गर्भः पतति। अतिक्रम्य उल्लङ्घ्य विवरैरन्तरालैः अपस्रंसमानोऽधःपतन् कोष्ठशब्देनामाशयपक्वाशयादिस्थानं, संक्षोभश्चलनम्, तस्याः स्त्रियाः मूढो विमार्गगामी अन्यतममेकतमम् आपाद्य निर्वर्त्त्य, तरुणं गर्भमपानो मूढः सन् च्यावयतीति सम्बन्धः। तरुणमघनाङ्गमव्यक्तचेतनम्।

मूढगर्भस्य निरुक्तिमाह—तमेवेत्यादि। असम्यगागतं विलोमभावेनागतम्, अवाग्गमनात्। अपत्यपथं योनिम्, अनुप्राप्तम् आश्रितम्, अनिरस्यमानम् अनिःसरन्तम्, सम्मोहितं मूर्च्छितम् ॥ १—२ ॥

तस्य चातुर्व्विध्यमाह—तत इत्यादि। ततः असम्यगागमनात्। तान् प्रकारान् प्रकटयन्नाह—

यो योनिमुखं निरुणद्धि कील इव स कीलः ; निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः ; यो निर्गच्छत्येकशिरोभुजः स वीजकः ; यस्तु परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघः ; इति चतुर्व्विधो भवतीत्येके भाषन्ते। तत् तु न सम्यक्। कस्मात् ? स यदा विगुणानिलप्रपीड़ितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते। तत्र कश्चिद् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते ; कश्चिदाभुग्नैकसक्थिरेकेन ; कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्य्यगागतः ; कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते ; अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना ; कश्चिदाभुग्नशिरा बाहुद्वयेन ; कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः ; कश्चिदेकेन सक्थ्ना योनिमुखं प्रतिपद्यतेऽपरेण पायुम् ; इत्यष्टविधा मूढ़गर्भगतिरुद्दिष्टा समासेन। तत्र द्वावन्त्यावसाध्यौ मूढ़गर्भौ। शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल्लश्वासकासभ्रमनिपीड़ितान परिहरेत् ॥ ४ ॥

भवन्ति चात्र

कालस्य परिणामेन मुक्तं वृन्ताद् यथा फलम्।
प्रपद्यते स्वभावेन नान्यथा पतितुं ध्रुवम् ॥

तत्रोर्द्ध्वबाहुशिर इत्यादि। कायसङ्गी निरुद्धकायः। एकशिरोभुज इति एको भुजः शिरसा सह यस्य निर्गच्छतीत्यर्थः। परिघ इवेति परिघोऽर्गलादण्डः।

तानेवानेकप्रकारान् दर्शयन्नाह तत्रेत्यादि। आभुग्नं सङ्कुचितम्। एकेन सक्थ्ना योनिमुखं प्रतिपद्यते इति सम्बन्धनीयम्। कश्चिदिति। आभुग्नं सक्थिशरीरं यस्येत्यर्थः। योनिमुखं प्रतिपद्यते इत्यत्रापि सम्बन्धनीयम्। कश्चिदुर इति। पिधाय आच्छाद्य। अन्तःपार्श्वापवृत्तशिराः पार्श्वमध्यनिक्षिप्तशिराः। एकेन बाहुना योनिमुखं प्रतिपद्यते इति सम्बन्धनीयम्। कश्चिदित्यादि। अत्रापि योनिमुखं प्रतिपद्यते इति सम्बन्धनीयम्। कश्चिदाभुग्नमध्य इत्यादि योनिमुखं प्रतिपद्यते इत्यत्रापि सम्बन्धनीयम्। कश्चिदिति। अष्टविधा समासेन, विस्तरेण तु तिर्य्यग्ग्रीवाजङ्घाप्रकारेणानन्ता।

तेष्वसाध्यान् निर्द्दिशन्नाह—तत्रेत्यादि। द्वावन्त्यौ सप्तमाष्टमौ असाध्यौ स्वभावेनैव। अन्येष्वप्यवस्थया असाध्यत्वं दर्शयन्नाह—शेषानपीत्यादि। विपरीतेन्द्रियार्थादिभिः पीड़िता जननीर्मूढ़गर्भैस्ते तथाविधास्तान्। विपरीतेन्द्रियार्था रूपाद्यर्थग्रहणभ्रान्ताः। योनिभ्रंशो योनिवहिर्गमनम्। योनिसंवरणं योनिसङ्कोचः। प्रसूताया वायुरसृग् आरोध्य वस्तिशिरःप्रभृतिषु शूलं करोति स मक्कल्लः। भ्रमश्चक्राधिरूढस्येव भ्रमणम् ॥ ४ ॥

स्वभावप्रजननकाले यथा मूढो गर्भो न भवति तथा श्लोकद्वयेन दर्शयन्नाह—कालस्येत्यादि। यथा कालस्य परिणामेन कालकृतपरिपाकेन वृन्तात् मुक्तं फलं स्वभावेन पतितुं प्रपद्यते पतनं

एवं कालप्रकर्षेण मुक्तो नाड़ीविवन्धनात् ।
गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ ५ ॥
कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् ।
पतत्यकालेऽपि यथा तथा स्याद् गर्भविच्युतिः ॥ ६ ॥
आ चतुर्थात् ततो मासात् प्रस्रवेद् गर्भविच्युतिः * ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ ७ ॥
प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ।
नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥ ८ ॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।
भवत्युच्छ्वासपूतित्वं शूलश्चान्तमृ ते शिशौ ॥ ९ ॥
मानसागन्तुभिर्मातुरुपतापैः प्रपीड़ितः ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीड़ितः ॥ १० ॥

प्राप्नोति, अन्यथा कालपरिपाकाभावेन पतितुं न प्रपद्यते पतनं न प्राप्नोति । एवं कालप्रकर्षेण नाड़ीविवन्धनात् मुक्तो यो गर्भाशयस्थो गर्भः स जननाय प्रपद्यते जन्म प्राप्नोतीत्यर्थः । मूढ़गर्भो यथा भवति तथा दर्शयन्नाह—कृमिवाताभिघातैरित्यादि । गर्भविच्युतिर्द्विविधा द्रवस्य स्रावरूपेण, घनावयवस्य पातेन । तत्र द्रवस्य स्रवणे मूढ़गर्भनाम नास्ति, विगुणानिलसम्मोहानिर्गमलक्षणस्याभावात् ॥ ५ । ६ ॥

परतस्त्वस्तीति दर्शयन्नाह—आ चतुर्थादित्यादि । गर्भविच्युतिः गर्भविमुक्तिः प्रस्रवेत् स्रावरूपा भवेत् । एतेन मासचतुष्टयं यावत् मूढ़गर्भता नास्तीत्युक्तम् । तत इत्यादि । ततश्चतुर्थमासादूर्द्ध्वं स्थिरशरीरस्य विच्युतिः पातः पातरूपा भवेत् । एतेन विच्युतिरियं न स्रावरूपा, तस्माच्चतुर्थमासानन्तरं घनावयवत्वान्मूढ़गर्भो भवतीत्युक्तम् । असाध्यमूढ़गर्भगर्भिण्योर्लक्षणं दर्शयन्नाह—प्रविध्यतीत्यादि । प्रविध्यति ताड़यति अतिशयेन धुनोतीत्यर्थः । अन्ये 'अपविद्धशिरा' इति पठन्ति तत्रावनतशीर्षेत्यर्थः । या स्त्री शीताङ्गी, निरपत्रपा लज्जारहिता, नीलोद्धतशिरा कृष्णोद्धतशिरा, सा गर्भं स च तां तथेति सा स्त्री गर्भं हन्ति, स च गर्भवतीं स्त्रीं हिनस्तीत्यर्थः । तथानेन प्रकारेण ॥ ७ । ८ ॥

गर्भिणीरक्षार्थं अन्तमृ तस्य गर्भस्यापकर्षणे यल्लक्षणं तद् दर्शयन्नाह—गर्भास्पन्दनमित्यादि । आवी प्रसववेदना, अथवा आवीशब्देन योनेर्मूत्रकफप्रसेकादीन्यावीलिङ्गान्युच्यन्ते । मानसागन्तुभिरिति ॥ ९ । १० ॥

* गर्भविद्रव इति पाठान्तरम् ।

वस्तमारविपन्नायाः * कुक्षिः प्रस्पन्दते यदि।
तत्क्षणाज्जन्मकाले तत् पाटयित्वोद्धरेद् भिषक् ॥ ११ ॥

इति सुश्रुतसंहितायां निदानस्थाने मूढगर्भनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥

मातुर्मृताया अपि जीवतो गर्भस्य अपकर्षणं दर्शयन्नाह—वस्तमारेत्यादि। वस्तमारः छगलवत् मरणम्। एतेन श्रीवामोटनेन आशुतमं अक्लिष्टं मरणमुक्तं, तेन विपन्नायाः मृतायाः स्त्रिय इत्यर्थः। अयमभिप्रायः—यथा वस्तं निरुच्छ्वासं कृत्वा याज्ञिका मारयन्ति एवं या मृता तस्या इत्यर्थः। तत्क्षणात् घटिकाद्वयमध्ये, परतस्तु गर्भोऽपि म्रियत इति भावः। अन्ये तत्क्षणादित्यत्र मुहूर्त्तादिति पठन्ति, तत्रापि स एवार्थः। जन्मकाले नवममासादिकाले इत्यर्थः। तं गर्भं। पाटयित्वा स्त्रीकुक्षिं विदार्य्य। अत्र केचित्—"यदा सोऽन्तर्मृतो गर्भः शूलो वस्तिरिवाततः। तेनावृताया नार्य्यास्तु कुक्षिरानह्यते भृशम्। उत्क्षिप्यन्त इवाङ्गानि मूत्रवस्तिश्च भिद्यते। क्लोम प्लीहा यकृच्चैव फुफ्फुसं हृदयं तथा। गर्भेण पीडितं ह्येतदूर्द्ध्वं प्रक्रामति स्त्रियाः। सा शूयते मुह्यति च कृच्छ्रोच्छ्वासा च जायते। पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति। वेपते भ्राम्यति तथा जीवितं चोपरुध्यते। एतैर्लिङ्गैर्विजानीयात् मृतं गर्भं चिकित्सकः॥" इति पठन्ति, तत् न पठनीयं पुनरुक्तत्वात्, जेज्झटाचार्य्यादिभिः परिहृतत्वाच्च। श्रीब्रह्मदेवेन तु किञ्चिद् व्याख्यातम्, तेन तु आर्षानार्षचिन्ता न कृता ॥ ११ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निवन्धसंग्रहे
मूढगर्भव्याख्यानामाष्टमोऽध्यायः ॥ ८ ॥

---

* वस्तिद्वारे विपन्नायां इति पाठान्तरम्।

# नवमोऽध्यायः।

अथातो विद्रधीनां निदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

सर्व्वामरगुरुः श्रीमान् निमित्तान्तरभूमिपः।
शिष्यायोवाच निखिलमिदं विद्रधिलक्षणम् ॥ २ ॥
त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः।
दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ ३ ॥
महामूलं रुजावन्तं वृत्तञ्चाप्यथवायतम्।
तमाहुर्विद्रधिं धीरा विज्ञेयः स च षड्विधः ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा।
षण्णामपि हि तेषान्तु लक्षणं संप्रवक्ष्यते ॥ ४ ॥
कृष्णोऽरुणो वा परुषो भृशमत्यर्थवेदनः।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः ॥ ५ ॥
पक्वोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान्।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः ॥ ६ ॥

अथात इत्यादि। सर्व्वामरगुरुरिदं निखिलं विद्रधिलक्षणं शिष्यार्थमुवाचेति सम्बन्धः। अमृतदानेन सर्व्वे देवा अमराः कृताः, तेनासौ धन्वन्तरिः सर्व्वेषां देवानां गुरुरित्यर्थः। श्रीमान् ज्ञानातिशयेन ऐश्वर्य्येण च युक्त इत्यर्थः। निमित्तान्तरभूमिप इति निमित्तान्तरेण कारणान्तरेण नरेष्वपि भैषज्यप्रदानलक्षणेन भूपालतां गत इत्यर्थः। अन्ये तु अपुत्रस्य काशिराजस्य परमाराधनया निर्व्वाणे चित्तमधिष्ठाय पुत्रत्वमापन्न इति कारणान्तरं व्याख्यानयन्ति। शिष्यायोवाच शिष्यार्थं कथितवानित्यर्थः। निखिलं समस्तं, इदं वक्ष्यमाणम्। अनेन धन्वन्तरिस्वरूपोपवर्णनेन विद्रधेर्गरीयस्त्वं ख्यापितं भवति ॥ १ । २ ॥

सम्प्राप्तिं सामान्यलक्षणञ्च दर्शयिष्यन्नाह—त्वग्रक्तेत्यादि। भृशमित्यतिशयेनोच्छ्रिता इति सम्बन्धनीयम्। धीरा धीमन्तः, एतेन सम्प्राप्तिरुक्ता। महामूलमित्यादि सामान्यलक्षणमुक्तं, विशिष्टं कृष्णोऽरुण इत्यादि। कारणन्तु सामान्यं शोफकारणाभिधानेनैवोक्तम्। संख्यामाह—विज्ञेयः स च षड्विध इति। तदेव षड्विधत्वमाह—पृथगित्यादि। समस्तैश्चेत्येकः, क्षतेनाप्येकः, असृजाप्येक इति षट् ॥ ३ । ४ ॥

वातविद्रधिलक्षणमाह—कृष्ण इत्यादि। चित्रोत्थानप्रपाक इति नानाप्रकोपपाकश्चेत्यर्थः।

शरावसदृशः पाण्डुः शीतः स्तब्धोऽल्पवेदनः।
चिरोत्थानप्रपाकश्च सकण्डूश्च कफोत्थितः।
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः॥ ७॥
नानारूपरुजास्रावो घाटालो विषमो महान्।
विषमं पच्यते वापि विद्रधिः सान्निपातिकः॥ ८॥
तैस्तैर्भावैरभिहते क्षते वापथ्यसेविनः।
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत्॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः।
एष विद्रधिरागन्तुः पित्तविद्रधिलक्षणः॥ ९॥
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्व(क)रः।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते॥ १०॥
उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्व्वजः॥ ११॥
आभ्यन्तरानतस्तूर्द्ध्वं विद्रधीन् परिचक्षते॥ १२॥
गुर्व्वसात्म्यविरुद्धान्न-शुष्कसंसृष्ट(क्लिन्न)भोजनात्।
अतिव्यवायव्यायाम-वेगाघातविदाहिभिः॥

पित्तविद्रधिमाह—पक्कोडुम्बरसङ्काश इत्यादि। कफजमाह—शरावसदृश इत्यादि। सादृश्येन महत्त्वमुक्तम्। तेषां विद्रधीनां यथाक्रममास्रावानाह—तनुपीतसिता इत्यादि। एषां वातपित्तकफोत्थानां विद्रधीनाम्॥ ५—७॥

सान्निपातिकमाह—नानारूपेत्यादि। नानारूपाः कृष्णपीतशुक्लाः, नानारुजास्तोददाहकण्ड्वाद्याः, नानास्रावाः तनुपीतशुक्लाः, ते यस्य सन्ति स तथोक्तः। घाटाल इति ऊर्द्ध्वं भागो महान् यस्यास्तीति स घाटालः। विषमः असाध्यत्वात्। विषमं पच्यते चापीति चिराचिरगम्भीरोत्तानानुन्नतोन्नतभेदेन॥ ८॥

आगन्तोः सम्प्राप्तिं दर्शयन्नाह—तैस्तैर्भावैरित्यादि। तैस्तैरिति अश्वपतनगूढप्रहारादिभिरित्यर्थः। तेन स्रुतशोणितपिच्चितादीनां ग्रहणम्। क्षते वेत्यत्र तैस्तैर्भावैरिति तीक्ष्णप्रहारादिभिरित्यर्थः। अनेन च स्रुतशोणितानां छिन्नादीनां ग्रहणम्। क्षतोष्मा वायुविसृतो वातेन विस्तारितः, पित्तविद्रधिलक्षणो भवतीत्यध्याहारः॥ ९॥

रक्तविद्रधिलक्षणमाह—कृष्णस्फोटावृत इत्यादि। बाह्येषु असाध्यमाह—उक्ता विद्रधय इति। सर्व्वजः सान्निपातिकः॥ १०। ११॥

अन्तर्विद्रधेर्हेतुसंप्राप्तिलक्षणान्याह—[illegible] ... कदशनभोजनात्।

पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणम्।
वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम् ॥ १३ ॥
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा।
वृक्कयोर्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा।
तेषां लिङ्गानि जानीयाद् बाह्यविद्रधिलक्षणैः ॥ १४ ॥
आमपक्वैषणीयेन पक्वापक्वं विनिर्द्दिशेत् ॥ १५ ॥
अधिष्ठानविशेषेन लिङ्गं शृणु विशेषतः ॥ १६ ॥
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतकोपनम् ॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ।
वृक्कयोः पार्श्वसङ्कोचः प्लीह्न्युच्छ्वासावरोधनम् ॥
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि शूलश्च * दारुणः।
श्वासो यकृति तृष्णा च † पिपासा क्लोमजेऽधिका ॥ १७ ॥
आमो वा यदि वा पक्वो महान् वा यदि वेतरः।
सर्व्वौ मर्म्मोत्थितश्चापि विद्रधिः कष्ट उच्यते ॥ १८ ॥

सम्भूय मिलित्वा। वल्मीकवत् समुन्नद्धं विद्रधिं कुर्व्वन्तीति सम्बन्धः। गुल्मरूपिणं काठिन्येन। वल्मीकवत् समुन्नद्धं सर्व्वत उन्नतम्। गुर्व्वसात्म्येत्यादि विदाहिभिरिति यावत् हेतुः। पृथक् सम्भूय वेति सम्प्राप्तिः। गुल्मरूपिणं वल्मीकवत् समुन्नद्धमिति च सामान्यलक्षणम्। तत्रापि वल्मीकवत् समुन्नद्धत्वं पच्यमानावस्थायाम्। तेषां वातादिभेदभिन्नानां विशेषवर्णसंस्थ-लिङ्गादिकं बाह्यविद्रधिवज्ज्ञेयम्। जेजझटाचार्य्यस्तु आभ्यन्तरस्य आगन्तोरभावमेव मन्यते। तेषां बाह्यानामाभ्यन्तराणाञ्च स्थानमाह—गुदे वस्तीत्यादि। गुदादिषु स्थानेषु दोषा विद्रधिं कुर्व्वन्तीति सम्बन्धः। वस्तिमुखे न तु वस्तौ, तत्र मांसमेदसोरभावात्। वङ्क्षण ऊरुमूलाश्रयः, कुँचकी इति लोके। वृक्कौ मांसपिण्डद्वयं, एको वामपार्श्वस्थितः, द्वितीयो दक्षिणपार्श्वस्थितः। यकृत् कालखण्डं दक्षिणपार्श्वस्थं। प्लीहा उदरवामपार्श्वे स्थितः। हृदयं कमलमुकुलाकार-मधोमुखम्। क्लोम कालखण्डादधःस्थात् स्थितं, दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम्। तेषां लिङ्गानि जानीयात् बाह्यविद्रधिलक्षणैरिति तेषां आभ्यन्तराणामित्यर्थः ॥ १२—१५ ॥

बाह्यानामाभ्यन्तराणाञ्च अधिष्ठानविशेषेण लक्षण दर्शयन्नाह—अधिष्ठानेत्यादि। आटोपः संक्षोभः। पार्श्वसङ्कोचः पार्श्वोत्पाटनमिव। हृदीति हृदयोत्थविद्रधौ सर्व्वाङ्गप्रग्रहादय उपद्रवा भवन्तीत्यर्थः। क्लोम्नि पिपासेत्यादि पाठान्तरं केचित् पठन्ति, तच्चाभावान्न लिखितम् ॥ १६।१७ ॥

तत्र मर्म्मोत्थितानां सर्व्वावस्थासु कष्टत्वं दर्शयन्नाह—आमो वेत्यादि। यदि वेतर इति इतरः

* कासश्चेति पाठान्तरम्।
† हिक्का चेति पाठान्तरम्।

नाभेरुपरिजाः पक्का यान्त्यूर्द्ध्वमितरे त्वधः।
जीवत्यधो निःस्रुतेषु स्रुतेषूर्द्ध्वं न जीवति॥
हृन्नाभिवस्तिवर्ज्ज्या ये तेषु भिन्नेषु बाह्यतः।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन॥ १९॥
स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः।
दाहज्वरकरो घोरो जायते रक्तविद्रधिः॥
अपि सम्यक्प्रजातानामसृक् कायादनिःसृतम्।
रक्तजं विद्रधिं विद्यात् कुक्षौ मक्कल्लसंज्ञितम्।
सप्ताहान्नोपशान्तश्चेत् ततोऽसौ संप्रपच्यते॥ २०। २१॥
विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः॥ २२॥
गुल्मदोषसमुत्थानाद् विद्रधेर्गुल्मकस्य च।
कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च॥ २३॥
न निबन्धोऽस्ति गुल्मानां विद्रधिः सनिबन्धनः।
गुल्माकाराः स्वयं दोषा विद्रधिर्मांससशोणिते॥

अल्पः। अवस्थाविशेषादसाध्यत्वमाह—नाभेरित्यादि। नाभेरुपरिजाः प्लीहयकृत्क्लोमकुक्षिहृदयजाः। पक्का ऊर्द्ध्वं यान्ति स्रवन्ति। इतरे गुदवस्तिवृक्कवङ्क्षणजा अधो यान्ति। एषु चाधोनिःस्रुतेषु जीवति नोर्द्ध्वं निःसृतेषु। हृन्नाभिवस्तिवर्ज्ज्या हृन्नाभिवस्तिजान् वर्ज्जयित्वा ये अन्ये गुदकुक्षिवङ्क्षण-वृक्कप्लीहयकृत्क्लोमजाः तेषु अन्तर्विद्रधिषु बाह्यतो भिन्नेषु कदाचित् दैववशात् जीवेत्, न पुनरितरेषु अभ्यन्तरभिन्नेष्वित्यर्थः। हृन्नाभिवस्तिजानां चासाध्यत्वमग्रे वाच्यम्॥ १८। १९॥

अभ्यन्तररक्तजान् विद्रधीनेव दर्शयन्नाह—स्त्रीणामित्यादि। स्त्रीणां रक्तविद्रधिर्जायते इति सम्बन्धः। किम्भूतानां स्त्रीणाम्? अपप्रजातानां पतितगर्भाणां, पुनरपि किम्भूतानां? प्रजा-तानां सम्यक्कालप्रसूतानाम्। अहितैः शीतरुक्षाहारविहारैः। तस्यैव रक्तविद्रधेर्विशेषमाह—अपि सम्यगिति। मक्कल्लसंज्ञितं मक्कल्लजनितं, कारणे कार्य्योपचारात्; घृतमायुरिति यथा। सप्तरात्रमप्रशान्तः पित्तोष्मणान्तः प्रपच्यते। पक्वश्चासाध्यः॥ २०। २१॥

पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणमित्यत्रैकरुपत्वादन्तर्विद्रधिगुल्मयोः कुतो गुल्मादस्य विद्रधेः पाककृतो विशेष इत्याह—विशेषमित्यादि। विशेषं भेदम्। समुत्थानं कारणं, दोषा एव समुत्थानं तच्च द्वयोस्तुल्यम्। सिद्धान्तमाह—न निबन्धोऽस्तीति निश्रित्य बध्नातीति निबन्धो मूलं, तद् गुल्मानां मूलं नास्तीति, रसरक्तादिदूष्याणामभावात्। कुतः पुनरेषां शोफरुपाणामपि मूलं नास्तीत्याह—गुल्माकाराः गुल्मरूपाः, स्वयमात्मनैव, दोषाः वातादयः, न पुनर्दूष्यसंश्रयाः। विद्रधेर्मूलसम्भवे हेतुमाह—विद्रधिर्मां[illegible] इति, भवतीति शेषः।

विवरानुचरो ग्रन्थिरप्सु बुद्बुदको यथा।
एवंप्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति॥
मांसशोणितवाहुल्यात् पाकं गच्छति विद्रधिः।
मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति॥
गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते।
विद्रधिः पच्यते तस्माद् गुल्मश्चापि न पच्यते॥ २४॥
हृन्नाभिवस्तिजः पक्को वर्ज्यो यश्च त्रिदोषजः॥ २५॥
अथ मज्जपरीपाको घोरः समुपजायते।
सोऽस्थिमांसनिरोधेन द्वारं न लभते यदा।
ततः स व्याधिना तेन ज्वलनेनेव दह्यते॥
अस्थिमज्जोष्मणा तेन शीर्य्यते दह्यमानवत्।
विकारः शल्यभूतोऽयं क्लेशयेदातुरं चिरम्॥

तत्र कथं पित्ते कफे वा द्रवे वातजनितस्य गुल्मस्य स्थितिरित्याह—विवरानुचर इत्यादि। यथाप्सु बुद्बुदकः, एवंप्रकारो विवरानुचरः स्रोतोऽनुसारी वातग्रन्थिरूपो गुल्मः कफपित्तयोरिति शेषः। तस्मात् पूर्व्वोक्ताद् हेतोः पाकं न याति। अमुमेवार्थं नियमयन्नाह—मांसशोणित-वाहुल्यादित्यादि। विद्रधिगुल्मयोर्मूलसम्भवालम्भवाभ्यां पक्कापक्कौ प्रतिपाद्य स्थानविशेषादपि हेतोः पाकापाकौ प्रतिपादयन्नाह—गुल्मस्तिष्ठतीत्यादि। गुल्मश्चापि न पच्यते इति अपि-शब्देन पच्यते गुल्म इति कायचिकित्सायामुक्तं गुल्मपाकित्वं समुच्चीयते॥ २२—२४॥

हृन्नाभिवस्तिज इत्यादि। एतेन सान्निपातिकः पक्को यत्र कुत्रचित् स्थितो विद्रधिर्वर्ज्जनीयः। केचित् गुल्मविद्रध्योर्मानकथनाय श्लोकं पठन्ति—"मुष्टिप्रमाणो गुल्मस्तु विद्रधिश्च ततः परम्" इति, ततः परमिति मुष्टेरधिक इत्यर्थः। प्राक्तनकर्मवशाद् तदुपेक्षणाद् वा यो विद्रधिः अस्थ्यन्तर्गतः पक्को भवति तस्य लक्षणमाह—अथ मज्जेत्यादि। सर्व्वविद्रधयो वातादिना यदास्थ्याश्रित्य जायन्ते उपेक्षणादनन्तरं तद्गतमज्जा च परिपच्यते तदा एतद्रूपमुक्तम्। सोऽस्थिमांसनिरोधेनेति स मज्जपरिपाकः। ततः स व्याधिना तेनेति तदा स पुरुषः, तेन व्याधिना मज्जपरिपाकेन। अस्थिमज्जोष्मणा तेन शीर्य्यते दह्यमानवदिति तेन मज्जोष्मणा। अथ उपेक्षणात्

अथास्य कर्म्मणा व्याधिद्वारन्तु लभते यदा।
ततो मेदःप्रभं स्निग्धं शुक्लं शीतमथो गुरु॥
भिन्नेऽस्थ्नि निःस्रवेत् पूयमेतदस्थिगतं विदुः।
विद्रधिं शास्त्रकुशलाः सर्वदोषरुजावहम्॥ २६॥

इति सुश्रुतसंहितायां निदानस्थाने विद्रधिनिदानं नाम नवमोऽध्यायः॥ ९॥

अनन्तरं, शीर्य्यते विनश्यति, किंवत् दह्यमानवत्। अथास्य कर्म्मणेति कर्म्मणा शस्त्रकर्म्मणा, व्याधिः पूयादिः॥ २५। २६॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
विद्रधिनिदानव्याख्यानाम नवमोऽध्यायः॥ ९॥

---

# दशमोऽध्यायः ।

## अथातो विसर्पनाड़ीस्तनरोगनिदानं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

त्वङ्मांसशोणितगताः कुपितास्तु दोषाः सर्व्वाङ्गसारिणमिहास्थितमात्मलिङ्गम् ।
कुर्व्वन्ति विस्तृतमनुन्नत-*-माशु शोफं तं सर्व्वतो विसरणाच्च विसर्पमाहुः ॥ २ ॥
वातात्मकोऽसितमृदुः परुषोऽङ्गमर्द-सम्भेदतोदपवनज्वरलिङ्गयुक्तः ।
गण्डैर्यदा तु विषमैरतिदूषितत्वाद् युक्तः स एव कथितः खलु वर्ज्जनीयः ॥ ३ ॥
पित्तात्मको द्रुतगतिर्ज्वरदाहपाक-स्फोटप्रभेदबहुलः क्षतजप्रकाशः ।
दोषप्रवृद्धिहतमांसशिरो यदा स्यात् स्रोतोजकर्द्दमनिभो न तदा स सिध्येत् ॥४॥
श्लेष्मात्मकः सरति मन्दमशीघ्रपाकः स्निग्धः सितः श्वयथुरल्परुगुग्रकण्डुः ॥ ५ ॥

अथात इत्यादि । इदानीं सम्प्राप्तिहेतुस्वरूपनिरुक्तीराह—त्वङ्मांसेत्यादि । त्वङ्मांसशोणितगताः कुपिता दोषाः शोफं कुर्व्वन्तीति सम्बन्धः । किम्भूतं शोफं ? सर्व्वाङ्गसारिणम् । इह अस्मिन् शास्त्रे, तं विसर्पमाहुरिति सम्बन्धः । पुनरपि किम्भूतं ? अस्थितं अनवस्थितं, देशात् देशान्तरगमनात्; अन्ये तु आस्थितं सम्प्राप्तं, किं तत् ? आत्मलिङ्गं, एतेन वातादिदोषलिङ्गं ग्राह्यमित्यर्थः; अन्ये तु इहास्थितं क्वचिदेवावयवे स्थितमिति व्याख्यानयन्ति । विस्तृ(स्)तं विस्तीर्णं, अनुन्नतं तनुत्वात् शोफस्य । विसरणाच्चेति चकारात् नानाप्रकारं विसर्पतीत्यर्थः समुच्चीयते । त्वङ्मांसशोणितगता इति सम्प्राप्तिः । कुपिता दोषा इति हेतुः । सर्व्वाङ्गसारिणमित्यादि स्वरूपम् । सर्व्वतो विसरणाच्चेति निरुक्तिः ॥ १ । २ ॥

तेषां दोषभेदेन विशिष्टं लक्षणं दर्शयन्नाह—वातात्मक इत्यादि । असितः कृष्णः । अङ्गमर्दः वेदनाविशेषः । इदं शुद्धवातविसर्पलक्षणमुक्तम् । गण्डैरित्यादि । गण्डैरनिदग्धसदृशैः स्फोटैर्युक्त इति सम्बन्धः । अतिदूषितत्वात्, काभ्यां ? वातपित्ताभ्याम् । इदं पित्तानुगतविसर्पलक्षणमुक्तम् । अपरे तु सकलेनापि श्लोकेन शुद्धवातविसर्पलक्षणमाहुः, तन्मतेऽतिदूषितत्वं वातेनैवेति बोद्धव्यम् ॥ ३ ॥

पित्तात्मक इत्यादि । ज्वरादिभिः प्रभेदान्तैर्बहुलशब्दः प्रत्येकं सम्बध्यते । क्षतजप्रकाश इति रक्तमिव यः प्रकाशत इत्यर्थः । पूर्व्वार्द्धेन केवलपित्तारब्धो विसर्प उक्तः । दोषप्रवृद्धीत्यादि । दोषप्रवृद्धया पित्तकफवृद्धया हतं मांसं शिराश्च यस्मिन् स तथा । स्रोतोजकर्द्दमनिभ इति अञ्जनसदृशकर्द्दमद्रव्यतुल्यः । अनेन उत्तरार्द्धेन कफपित्तात्मको विसर्प उक्तः ॥ ४ ॥

श्लेष्मात्मक इत्यादि । सरति विसर्पति । कफवाताभ्यां ग्रन्थिविसर्पः । स असाध्य एव । स पुरस्तादेव ग्रन्थिनिर्देश इति नात्र निर्दिष्टः । तस्यैव वातकफविसर्पलिङ्गेन निर्दिष्टेनावरुध्यते इत्यन्ये ॥ ५ ॥

---

* कुर्व्वन्ति विस्तृतमनुन्नतमित्यत्र यं विसृतमुन्नतमिति पाठान्तरम् ।

सर्व्वात्मकस्त्रिविधवर्णरुजोऽवगाढ़ः पक्को न सिध्यति च मांसशिराप्रणाशात् ॥६॥
सद्यःक्षतव्रणमुपेत्य नरस्य पित्तं रक्तञ्च दोषबहुलस्य करोति शोफम्।
श्यावं सलोहितमतिज्वरदाहपाकं स्फोटैः कुलत्थसदृशैरसितैश्च कीर्णम् ॥ ७ ॥
सिध्यन्ति वातकफपित्तकृता विसर्पाः सर्व्वात्मकः क्षतकृतश्च न सिद्धिमेति।
पैत्तानिलावपि च दर्शितपूर्व्वलिङ्गौ सर्व्वे च मर्म्मसु भवन्ति हि कृच्छ्रसाध्याः ॥८
शोफं न पक्कमिति पक्कमुपेक्षते यो यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य स्थानानि पूर्व्वविहितानि ततः स पूयः॥
तस्यातिमात्रगमनाद् गतिरित्यतश्च नाड़ीव यद् वहति तेन मता तु नाड़ी ॥ ९ ॥
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥१०॥

सान्निपातिकं दर्शयन्नाह—सर्व्वात्मक इत्यादि। त्रिविधवर्णरुज इति प्रत्येकं वातादिदोषनिर्द्दिष्टकृष्णपीतसितादिवर्णः। वातादिदोषजनितविसर्पनिर्द्दिष्टतोददाहकण्ड्वादिवेदनः। अवगाढ़ः अभ्यन्तरमूलः। प्रणाशः शटनं, मांसशिराप्रणाशात् परतो न सिध्यति, मांसशिराप्रणाशात् पूर्व्वं कृच्छ्रतः सिध्यति ॥ ६ ॥

सद्यःक्षतव्रणमित्यादि। दोषबहुलस्य पित्तं रक्तञ्च शोफं करोतीति सम्बन्धः। किं कृत्वा? सद्यःक्षतव्रणमुपेत्य प्राप्य। किम्भूतं शोफं? श्यावमित्यादिविशेषणविशिष्टम्। दोषबहुलस्येति कुष्ठवातरक्तादिपूर्व्वरूपदोषदूषितधातोः, तदुक्तं तयोः पूर्व्वरूपे क्षतविसर्पणमिति, अन्ये तु त्रिदोषबहुलस्येत्यर्थमाहुः। कीर्णं व्याप्तम् ॥ ७ ॥

तेषां साध्यासाध्यत्वमाह—सिध्यन्तीत्यादि। न सिद्धिमेति न साध्यतां याति, दर्शितपूर्व्वलिङ्गौ इति गण्डयुक्तवातविसर्पः, स्रोतोजकर्द्दमनिभः पित्तविसर्प इति। अन्ये तु पित्तात्मकाञ्जनवपुश्च तथा न सिध्येदिति पठन्ति। चकारेण गण्डैर्यदातिविषमैरित्येवंविशिष्टो वातिकोऽप्यसाध्य इति समुच्चीयत इति व्याख्यानयन्ति। गण्डैर्यदा तु विषमैरित्यादिना वातजस्य स्रोतोजकर्द्दमनिभैरित्यादिना पित्तजस्य असाध्यत्वमुक्तम् यत् पुनरुच्यते तत् क्षतजस्यासाध्यताप्रसङ्गेणोक्तं, प्रसङ्गोक्तञ्च न पौनरुक्त्यमर्हति ॥ ८ ॥

नाड़ीं निर्द्दिशन्नाह—शोफमित्यादि। व्रणमित्यत्रोपेक्षत इति सम्बन्धः। असाधुवृत्तः अहिताहाराचारः। स्थानानि त्वगादीनि व्रणवास्तुशब्दाभिहितानि। तस्य पूयस्य। अतश्चेति चकारो नाड़ीनिरुक्तिपक्षान्तरसमुच्चये। तामेव नाड़ीनिरुक्तिमाह—नाड़ीव यद् वहति तेन मता तु नाड़ी, येन हेतुना नाड़ीवत् प्रणालीवद् वहति याति तेन हेतुना नाड़ी मता इत्यर्थः। शोफं न पक्कमित्यादि हेतुः। अभ्यन्तरमित्यादि सम्प्राप्तिः। नाड़ीवेत्यादि निरुक्तिः। सङ्ख्यां नियमयन्नाह—दोषैरित्यादि। दोषः पृथगिति तिस्रः, एकशश्च सन्निपातैरन्या, अपराश्च तिस्रः संमूर्च्छितैरपि च द्विदोषसंयोगोत्थाः, अन्यथा अपिचकारौ निरर्थकौ स्याताम्। संमूर्च्छितैर्मिश्रीभूतैरित्यर्थः। शल्यनिमित्ततोऽन्या अभिघातजा अपरेत्यर्थः। [illegible] त्रिभिर्द्दोषैः पृथक

तत्रानिलात् परुषसूक्ष्ममुखी सशूला फेनानुविद्धमधिकं स्रवति क्षपायाम्॥ ११॥
तृट्तापतोदसदनज्वरभेदहेतुः पीतं स्रवत्यधिकमुष्णमहःसु पित्तात् ॥ १२ ॥
ज्ञेया कफाद् बहुघनार्ज्जुनपिच्छिलास्रा रात्रिस्रुतिः स्तिमितरुक्कठिना सकण्डूः॥१३
दोषद्वयाभिहितलक्षणदर्शनेन तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १४ ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा यस्यां भवन्त्यभिहितानि च लक्षणानि।
तामादिशेत् पवनपित्तकफप्रकोपाद् घोरामसुक्षयकरीमिव कालरात्रिम् ॥ १५ ॥
नष्टं कथञ्चिदनुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति।
सा फेनिलं मथितमच्छमसृग्विमिश्रमुष्णं स्रवेत सहसा सरुजा च नित्यम्* ॥१६॥

यावत्यो गतयो यैश्च कारणैः सम्भवन्ति हि।
तावन्तः स्तनरोगाः स्युः स्त्रीणां तैरेव हेतुभिः ॥ १७ ॥
धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः।
दोषाविस-(त)रणात् तासां न भवन्ति स्तनामयाः ॥ १८ ॥

तिस्रः, एकशश्च संमूर्च्छितरन्या सान्निपातिकी, शल्यनिमित्ता च पञ्चमीति पञ्चैव नाड्य इति व्याख्यानयन्ति ॥ ९ । १० ॥

तेषां वातादीनां प्रत्येकं विशिष्टलक्षणमाह—तत्रानिलादित्यादि। फेनानुविद्धं फेनमिश्रम्। तृट्तापेत्यादि। तृट्तापादीनां हेतुः, तृषादीन् करोतीत्यर्थः। ज्ञेया कफादित्यादि। बहुघनार्ज्जुनपिच्छिलास्रा इति विपुलसान्द्रधवलपिच्छिलस्राववतीत्यर्थः। अत्रास्रशब्दः स्राववाची चिन्त्य एव। अन्ये तु कफाद् बहुघनार्ज्जुनपिच्छिलस्रुत् इति पठन्ति तत्र स्रुत् स्राव इत्यर्थः। स्तिमितरुगिति मन्दवेदनेत्यर्थः। द्वन्द्वजा आह—दोषद्वयाभिहितेत्यादि। व्यतिकरप्रभवाः द्वन्द्वजाः। वातपित्तजा पित्तकफजा वातकफजा चेति तिस्रः। गयदासाचार्य्यास्तु दोषद्वयाभिहितेत्यादि द्वन्द्वजानां लक्षणं न पठन्ति ॥ ११—१४ ॥

सान्निपातिकीमाह—दाहज्वरेत्यादि। असुक्षयकरीं प्राणापहारिणीं, कामिव कालरात्रिमिव यमभगिनीमिव ॥ १५ ॥

शल्यनिमित्तां दर्शयन्नाह—नष्टमित्यादि। उदीरितेषु स्थानेषु त्वगादिषु। मथितं उन्मथितमिव। उष्णं उष्णस्पर्शम्। उष्णं करोतीति पाठे स्रावमित्यध्याहारः ॥ १६ ॥

इदानीं स्तनरोगाणां संख्यां हेतुञ्च दर्शयन्नाह—यावत्य इत्यादि। यावत्यो यावत्प्रमाणाः गतयः। यैश्च कारणैः वातपित्तकफसन्निपाताभिघातैः। तावन्तस्तावत्प्रमाणाः ॥ १७ ॥

इदानीं समानायामपि जातावसम्भूतगर्भाणां ते दोषा न भवन्तीति दर्शयन्नाह—धमन्य इत्यादि। कन्यानामसम्भूतगर्भाणां स्त्रीणामित्यर्थः। अविसरणम् अप्रसरणम् ॥ १८ ॥

---

* स्रवेतेत्यत्र करोति नित्यमित्यत्र च पित्तमिति क्वचित् पाठः।

तासामेव प्रजातानां गर्भिणीनान्तु ताः पुनः।
स्वभावादेव विवृता जायन्ते सम्भवन्त्यतः ॥ १९ ॥
रसप्रसादो मधुरः पक्काहारनिमित्तजः।
कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥ २० ॥
विशस्तेष्वपि देहेषु यथा शुक्रं न दृश्यते।
सर्व्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ २१ ॥
तदेव चेष्टयुवतेर्दर्शनात् स्मरणादपि।
शब्दसंश्रवणात् स्पर्शात् संहर्षाच्च प्रवर्त्तते ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते।
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥
तदेवापत्यसंस्पर्शाद् दर्शनात् स्मरणादपि।
ग्रहणाच्च शरीरस्य शुक्रवत् सम्प्रवर्त्तते ॥
स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥ २२ ॥

तासामेव सगर्भाणां प्रजातानाञ्च ता एव धमन्यो विवृतद्वारा भवन्तीति दर्शयन्नाह—तासामेवेत्यादि। प्रजातानां प्रसूतानाम्। ता इति धमन्यः। विवृताः प्रसृतद्वाराः, जायन्ते भवन्ति इत्यर्थः। सम्भवन्ति इति स्तनरोगा इति शेषः ॥ १९ ॥

सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषा इति स्त्रीक्षीरस्य स्तनरोगाणां हेतुत्वेनोक्तत्वात् क्षीरस्यैव सम्भवमाह—रसप्रसाद इत्यादि। रसप्रसादो रसस्य प्रसादः उत्तमसारः तेज इत्यर्थः। प्राधान्यात् पक्काहारनिमित्तशब्देन रसः कथ्यते, तेन रसज इत्यर्थः। स्तन्यनिरुक्तिमाह—कृत्स्नदेहादित्यादि। रसधातोर्व्यानविक्षिप्तस्य सर्व्वदेहगतत्वात्। तस्य शरीराभ्यन्तरस्थस्यादृश्यस्य प्रसिद्धोपमानेन प्रवर्त्तने हेतुं दर्शयन्नाह—विशस्तेष्वपीत्यादि। शुक्रलक्षणं स्तन्यमुच्यते इति शेषः। कुत इत्याह—यथा शुक्रं विशस्तेषु छिन्नेष्वपि गात्रेषु न दृश्यते तस्मात्। द्वितीयं हेतुमाह—सर्व्वदेहाश्रितत्वादिति शुक्रवत् समस्तशरीरसंश्रितत्वात् ॥ २० । २१ ॥

शुक्रदृष्टान्तेन स्तन्यस्य अभ्यन्तरदर्शनं प्रतिपाद्य तेनैव दृष्टान्तेन सामग्रीतस्तस्य प्रवर्त्तनात् वहिः प्रत्यक्षतां प्रतिपादयन्नाह—तदेवेत्यादि। तदेव शुक्रं प्रवर्त्तते वहिर्निःसरति, संहर्षात् विशिष्टस्पर्शसङ्कल्पलक्षणात्। विशिष्टस्पर्शसङ्कल्पे हेतुचतुष्टयं निर्दिशन्नाह—इष्टयुवतेरित्यादि। इष्टयुवतिदर्शनादिहेतुचतुष्टयेन संहर्षः सुप्रसन्न एव मनसि भवतीति मनसोऽपि सुप्रसन्नकारणत्वं दर्शयन्नाह—सुप्रसन्नमित्यादि। सुप्रसन्नमीर्ष्याद्यनभिभूतम्। एवं स्तन्यमपि स्त्रियाः प्रवर्त्तते, शुक्रमाहाररसयोनित्वात् प्रवर्त्तते स्तन्यमपि तथा तस्मात् प्रवर्त्तते।

ननु शुक्रमाहारयोन्यपि संहर्षात् कारणात् प्रवर्त्तते। अत्र च किं कारणमित्याह—तदेवेत्यादि। तदेव स्तन्यं शुक्रवत् संप्रवर्त्तते। अपत्यसंस्पर्शादिकारणचतुष्टयेऽपि स्नेहो मूलकारणमिति तदेव

तत् कषायं भवेद् वातात् क्षिप्तञ्च प्लवतेऽम्भसि ।
पित्तादम्लं सकटुकं राज्योऽम्भसि च पीतिकाः ॥
कफाद् घनं पिच्छिलञ्च जले चाप्यवसीदति ।
सर्व्वैर्दुष्टैः सर्व्वलिङ्गमभिघाताच्च दुष्यति ॥ २३ ॥
यत् क्षीरमुदके क्षिप्तमेकीभवति पाण्डुरम् ।
मधुरञ्चाविवर्णञ्च प्रसन्नं तद् विनिर्द्दिशेत् ॥ २४ ॥
सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ।
रक्तं मांसञ्च सन्दूष्य स्तनरोगाय कल्पते ॥
पञ्चानामपि तेषान्तु हित्वा शोणितविद्रधिम् ।
लक्षणानि समानानि वाह्यविद्रधिलक्षणैः ॥ २५ ॥

इति सुश्रुतसंहितायां निदानस्थाने विसर्पनाडीस्तनरोगनिदानं नाम दशमोऽध्यायः ॥ १० ॥

दर्शयन्नाह—स्नेह इत्यादि । प्रस्रवे स्तन्यस्रवणे । अत्रापि चत्वारो हेतवः, परमिष्टयुवतिस्थानेऽत्रापत्यग्रहणं, मूलहेतुहर्षस्थाने स्नेहः ॥ २२ ॥

स्तन्यस्य प्रवर्त्तनं प्रभवञ्चाभिधाय प्रकृतिमभिधातुकामः परित्याज्यतया प्रथमं विकृतिं दर्शयन्नाह—तदित्यादि । क्षिप्तञ्चेति चकारेण अनुक्तमपि तनुत्वादिकं समुच्चीयते । पित्तादम्लमित्यादि । सकटुकं ईषत्तिक्तं, तिक्तेऽपि कटुशब्दस्य प्रवृत्तेः । अम्भसि चेति चकाराच्चीललोहिताश्च राज्यो द्रष्टव्याः । कफादित्यादि । पिच्छिलञ्चेति चकारेण दोषसंप्लवः सूच्यते । अवसीदति मज्जति । सर्व्वैर्दुष्टैरित्यादि । अभिघातात् पतनपीड़नादिकात् ॥ २३ ॥

निर्द्दोषस्य स्तन्यस्य लक्षणमाह—यदित्यादि । एकीभवति एकत्वं याति मिलतीत्यर्थः । अविवर्णमीषत्पीतादिवर्णं, प्रसन्नं प्रकृतिस्थम् ॥ २४ ॥

स्तनरोगहेतुं स्तन्यं प्रकृतिविकृतिभिरभिनिर्द्दिश्य स्तनरोगसम्प्राप्तिं दर्शयन्नाह—सक्षीरावित्यादि । सक्षीरौ गर्भिण्याः, तस्या दोहस्यासम्भवात् । अदुग्धौ प्रसूतायाः, तस्या दोहस्य सम्भवात् । तत्र यदा दोह्यावदुग्धौ भवतः, तदा क्षीरभरपीड़िता दोषाः कुपिताः स्तनरोगाय जायन्ते । स्तनरोगाय कल्पते स्तनरोगार्थं समर्थो भवति । तेषामपि सङ्क्षेपार्थं लक्षणमतिदेशेन निर्द्दिशन्नाह—पञ्चानामपीत्यादि । लक्षणानि तेषां स्तनरोगानां, समानानि तुल्यानि, भवन्तीत्यध्याहारः ॥ २५ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
विसर्पनाडीस्तनरोगव्याख्यानाम दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।

अथातो ग्रन्थ्यपच्यर्व्वुदगलगण्डानां निदानं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वातादयो मांसमसृक् च(प्र)दुष्टाः सन्दूष्य मेदश्च कफानुविद्धम् ।
वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ २ ॥
आयम्यते व्यथ्यते एति तोदं प्रत्यस्यते कृत्यत एति भेदम् ।
कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ ३ ॥
दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि ।
रक्तः सपीतोऽप्यथवापि पित्ताद् भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ ४ ॥
शीतोऽविवर्णोऽल्परुजोऽतिकण्डूः पाषाणवत् संहननोपपन्नः ।
चिराभिवृद्धिश्च कफप्रकोपाद् भिन्नः स्रवेच्छुक्लघनञ्च पूयम् ॥ ५ ॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डूः ।
मेदःकृतो गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः ॥ ६ ॥

अथात इत्यादि । तेषां हेतुसम्प्राप्तिलक्षणनिरुक्तीराह—वातादय इत्यादि । वातादयो दोषा दुष्टा मांसमसृक् च संदूष्य शोफं कुर्व्वन्तीति सम्बन्धः । एतेन त्रयो ग्रन्थय उक्ताः । मेदश्च कफानुविद्धं कफसंसृष्टं वायुदूषितत्वात् शोफं करोतीति सम्बन्धः । भोजेनापि वातकर्त्तृत्वं मेदोग्रन्थावभिहितम् । तथा च—"वायुर्मेदो यदा मांसे संक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति कण्डुलः" इत्यादि । अयं चतुर्थो ग्रन्थिः । चकारात् सिराजग्रन्थिः पञ्चमोऽपि ग्राह्यः । दुष्टा वृद्धिं गता इत्यर्थः । वृत्तो वर्त्तुलः, उन्नत उच्छ्रितः, विग्रथितः अतिकठिनः । वातादयो दुष्टा इत्यनेन हेतूपदेशः, मांसमसृक् च संदूष्येति सम्प्राप्तिः, वृत्तोन्नतं विग्रथितञ्च शोफमिति लक्षणोपदेशः, अतो ग्रन्थिरिति प्रदिष्ट इति निरुक्तिः ॥ १ । २ ॥

तेषां वातादिजानां प्रत्येकं विशिष्टं लक्षणमाह—आयम्यते इत्यादि । आयम्यते वायोराकर्षणेन दीर्घ इव क्रियते, ग्रन्थिरिति शेषः । व्यथ्यते विधूयते । एति गच्छति । तोदं व्यथाम् । प्रत्यस्यते क्षिप्यते । कृत्यते छिद्यते । एति भेदमिति भेदञ्च गच्छति । अमृदुः कर्कशः । वस्तिरिवाततश्चेति मूत्राशयवद् दीर्घः । अस्रं रुधिरम् । दन्दह्यते भृशं दह्यते इव । धूप्यति चातिमात्रमतिशयेन सन्तापं करोति । पापच्यते भृशं पच्यते इव । प्रज्वलतीव भस्मीभवतीव । अविवर्णं ईषद्विवर्णः । पाषाणवत् पाषाण इव कठिन इत्यध्याहारः । संहननोपपन्नः सङ्घातान्वितो महानित्यर्थः । शरीरवृद्धिक्षयवृद्धिहानिरिति देहाप्यायनह्रासाभ्यामाप्यायनह्रासौ यस्य स तथा । गच्छति स्रवति

व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि शिराप्रतानम्।
संपीड्य * सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्॥
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद् यदि स्यात् सरुजश्चलश्च।
अरुक् स एवाप्यचलो महांश्च मर्म्मोत्थितश्चापि विवर्ज्जनीयः॥ ७॥
हन्वस्थिकक्षाक्षकबाहुसन्धि-मन्यागलेषूपचितन्तु मेदः।
ग्रन्थिं स्थिरं वृत्तमथायतं वा स्निग्धं कफश्चाल्परुजं करोति॥ ८॥
तं ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः।
अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति॥ ९॥
कण्डूयुतास्तेऽल्परुजः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये।
मेदःकफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी॥ १०॥

मेद इति सम्बन्धः। अत्र मेदोग्रन्थौ भिन्ने सति, पिण्याकसर्पिःप्रतिमं तिलकल्कस्त्यानघृतसदृशम्॥ ३—६॥

शिराजस्य ग्रन्थेः सम्प्राप्तिं दर्शयन्नाह—व्यायामजातैरित्यादि। व्यायामजातैर्व्यायामसमूहैः। अबलस्य पुरुषस्य, शिराप्रतानं शिराविस्तारम्। शिराजस्य कृच्छ्रसाध्यत्वमाह—स तु कृच्छ्रसाध्य इत्यादि। तस्यासाध्यत्वमाह—अरुगित्यादि। महांश्चेति चकारेण वातादिजा अप्येवंरूपा विवर्ज्जनीयाः। मर्म्मोत्थितश्चेति चकारेण अरुजोऽपि विवर्ज्जनीयः। अन्ये पुनरत्र "मांसात्तजं चार्व्वुदलक्षणेन तुल्यं हि दृष्टमथ लक्षणज्ञैः" इति षष्ठं ग्रन्थिं पठन्ति। तच्च जेज्झटाचार्य्यादिभिः परिहृतम्॥ ७॥

इदानीमपच्याः सम्प्राप्त्यादीनाह—हन्वस्थीत्यादि। हन्वोरस्थि हन्वस्थि; सन्धिशब्दो हन्वस्थ्यादिभिर्बाह्वन्तैः प्रत्येकं सम्बध्यते। बाहुसन्धिशब्देन कूर्परसन्धिरुच्यते। अक्षकं कोष्ठकं तस्य सन्धिः। एतेन ग्रीवाधःसन्धिरुच्यते। मन्या ग्रीवापश्चिमभागस्था धमनी। हन्वस्थीत्यादि सम्प्राप्तिः, ग्रन्थिं स्थिरं वृत्तमित्यादि लक्षणम्॥ ८॥

तं ग्रन्थिभिरित्यादि। तं पूर्व्वोक्तं ग्रन्थिम्। अनन्यवर्णैः समानवर्णैः। उपचीयमानं वर्द्धमानम्। चयप्रकर्षादिति उपचयातिशयादित्यर्थः। चयप्रकर्षादपचीमिति निरुक्तिः॥ ९॥

खलुशब्दोऽप्यर्थः। तेन मेदःकफौ वातादिदोषान्तरानुविद्धौ ज्ञेयौ। तथाहि भोजः—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम्। जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून्। कुर्व्वन्ति ग्रथितांस्तेभ्यः पुनः प्रकुपितोऽनिलः। तान् दोषानूर्द्धगो वक्षःकक्षामन्यागलाश्रितः। नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची स्मृता। व्यामिश्रदोषजातस्य कृच्छ्रसाध्या प्रकीर्त्तिता। तासां वातोत्तरा रूक्षा वातवेदनयान्विता। क्षिप्रपाकसमुत्थाना दाहयुक्ता तु पैत्तिकी। गूढ़ा वाऽपाकठिना कफात् स्निग्धाल्परुक्करा। मेदोऽधिका श्लैष्मिकी च विशेषादतिमाईवा। तान्तु

* संपिण्ड्येति पाठान्तरम्।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य।
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्॥
कुर्व्वन्ति मांसोपचयञ्च शोफं तदर्व्वुदं शास्त्रविदो वदन्ति।
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च।
तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति॥ ११॥
दोषः प्रदुष्टो रुधिरं शिरास्तु संपीड्य सङ्कोच्य गतस्तु पाकम्।
सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम्।
स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद् रुधिरात्मकं स्यात्॥
रक्तक्षयोपद्रवपीड़ितत्वात् पाण्डुर्भवेदर्व्वुदपीड़ितस्तु॥ १२॥
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं प्रकरोति शोफम्।
अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम्॥ १३॥

मालाकृतिं विद्यात् कण्ठहृद्वङ्क्षुसन्धिषु। गण्डमालां विजानीयादपचीतुल्यलक्षणाम्॥' इति। चरकशास्त्रे गण्डमाला गण्डे एव पठिता। "मेदःकफाच्छोणितसम्भवोत्थो गण्डस्य पार्श्वे गलगण्ड एकः। स्याद् गण्डमाला बहुभिश्च गण्डैर्दोषानिले यूनि वलान्विते च। साध्या स्मृता पीनस-पार्श्वशूल-कासज्वरच्छर्दियुता त्वसाध्या", इति। अन्ये तु "मेदःकफाभ्यां पुनरेष रोगः" इति पठन्ति। पुनःशब्दादधिकार्थात् दोषान्तरसम्बन्धः स्थापितो भवतीति वदन्ति। तत्रापि स एवार्थः। वर्षगणानुबन्धी वर्षसमूहसम्बन्धीत्यर्थः। एतेन दीर्घरोगित्वं सूचितम्। मेदःकफाभ्यामिति हेतुदेशः॥ १०॥

इदानीमर्व्वुदादीनां सम्प्राप्त्यादीनाह—गात्रप्रदेशे इत्यादि। क्वचिदेव गात्रप्रदेशे दोषा शोफं कुर्व्वन्तीति सम्बन्धः। संमूर्च्छिता वृद्धिं गताः। क्वचिदेवानियतप्रदेशे न पुनरपचीवत् हन्यस्थ्यादि-सन्धिष्वेव। अपाकमविद्यमानपाकं, मांसोपचयं मांससङ्घातम्। गात्रप्रदेशे क्वचिदेवेति संप्राप्तिः। संमूर्च्छिता दोषा इति हेतुः। वृत्तं स्थिरमित्यादि स्वलक्षणं। गयदासाचार्य्यास्तु "कुर्व्वन्ति मांसोच्छ्रयमत्यगाधमिति पठन्ति। तज्जायते तदर्व्वुदं भवतीत्यर्थः। तस्य च लक्षणानि वातपित्त-कफभेदैः॥ ११॥

तस्यार्व्वुदस्य लक्षणमाह—दोषः प्रदुष्ट इत्यादि। प्रदुष्टदोषः सिरासु गतो रुधिरं संपीड्य सङ्कोच्य मांसपिण्डमुन्नह्यतीति सम्बन्धः। उन्नह्यति उद्बध्नातीव। अन्ये तु प्रदुष्टो दोष उन्नह्यति उच्छ्रितो भवति। आशुवृद्धिं शीघ्रवर्द्धनशीलं करोतीति व्याख्यानयन्ति॥ १२॥

मांसजस्य सम्प्राप्तिं दर्शयन्नाह—मुष्टिप्रहारादिभिरित्यादि। अपाकमीषत्पाकम्।

प्रदुष्टमांसस्य नरस्य बाढ़-*-मेतद् भवेन्मांसपरायणस्य ।
मांसार्ब्बुदन्त्वेतदसाध्यमुक्तं साध्येष्वपीमान्युपवर्ज्जयेत् तु ॥ १४ ॥
संप्रस्नुतं मर्म्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम् ।
यज्जायतेऽन्यत् खलु पूर्व्वजाते ज्ञेयं तदध्यर्ब्बुदमर्ब्बुदज्ञैः ॥
यद् द्वन्द्वजातं युगपत् क्रमाद् वा द्विरर्ब्बुदं तच्च भवेदसाध्यम् ॥ १५ ॥
न पाकमायान्ति कफाधिकत्वान्मेदोऽधिकत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वाद् ग्रथनाच्च तेषां सर्व्वार्ब्बुदान्यत्र निसर्गतस्तु ॥ १६ ॥
वातः कफश्चैव गले प्रवृद्धो मन्ये तु संसृत्य तथैव मेदः ।
कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥ १७ ॥
तोदान्वितः कृष्णशिरावनद्धः श्यावोऽरुणो वा पवनात्मकस्तु ।
मेदोऽन्वितश्चोपचितश्च कालाद् भवेत् † मदिग्धे च गलेऽरुजश्च ॥ १८ ॥
पारुष्ययुक्तश्चिरवृद्धपाको यदृच्छया पाकमियात् कदाचित् ।
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रशोषः ॥ १९ ॥

बाढमतिशयेन । मांसपरायणस्य मांसभक्षणशीलस्य । मुष्टिप्रहारादिभिरित्यत्र केचित् काष्ठप्रहारादिभिरिति पठन्ति । साध्येष्वपीत्यादि । साध्येष्वपीमानि विवर्ज्जयेदिति साध्येषु मध्ये इमानि वक्ष्यमाणानि विवर्ज्जयेदित्यर्थः ॥ १३ । १४ ॥

अध्यर्ब्बुदमपि द्विरर्ब्बुदमेव, अन्येऽध्यर्ब्बुदमिति पठन्ति । यद् द्वन्द्वजातमित्यादि द्वन्द्वेन युग्मेन जातं द्वन्द्वजातं, न केवलमध्यर्ब्बुदं द्विरर्ब्बुदं यद् द्वन्द्वजातं तदपि द्विरर्ब्बुदमित्यर्थः । भेदश्च तयोरुपरिजातत्वेन पार्श्वजातत्वेन च । एतेन द्विरर्ब्बुदद्वितयमप्यसाध्यमित्युक्तम् ॥ १५ ॥

तेषां पाकाभावहेतुं दर्शयन्नाह—न पाकमित्यादि । ग्रन्थ्यादिष्वपि कफादयश्चत्वारो हेतवः सन्ति, परमर्ब्बुदेषु विशेषतः कफस्य मेदसश्चाधिक्य, तस्मात्, तथा विशेषतो दोषस्थिरत्वात् दोषकार्य्यस्य मांसोच्चयस्य तेनैव स्वरूपेण चिरकालावस्थानशीलत्वात्, तथा ग्रथनात् ग्रन्थिरूपत्वात् तेषां मेदःप्रभृतीनां, निसर्गतस्त्वति तुशब्दोऽप्यर्थः, तेन स्वभावादपि अर्ब्बुदा विपाकं न गच्छन्तीत्यर्थः ॥ १६ ॥

इदानीं गलगण्डसम्प्राप्तिं दर्शयन्नाह—वात इत्यादि । वातादयो गण्डं क्रमशः कुर्व्वन्तीति सम्बन्धः । किंविशिष्टं गण्डम् ? स्वलिङ्गैः समन्वितम् । वातेन कफेन च गलगण्डो भवति, न च पित्तेन, स्वभावेन पित्तजस्य गलगण्डस्याभावात् ॥ १७ ॥

तस्यैव वातादिविशेषलिङ्गानि निर्दिशन्नाह -तोदान्वित इत्यादि । अरुज इति सोऽपि वातगलगण्डः । यदा कालात् कालेन कृत्वा मेदोऽन्वितो भवति, तदा अरुजो भवतीत्यर्थः ।

* बाढमित्यत्र गाढमिति पाठान्तरम् । † अतिस्निग्धतर इति प्रतिसिद्धगल इति च पाठः क्वचित् ।

स्थिरः सवर्णोऽल्परुगुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु।
चिराभिवृद्धिं कुरुते चिराद् वा प्रपच्यते मन्दरुजं कदाचित्।
माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत् तथा तालुगलप्रलेपः * ॥ २० ॥
स्निग्धो मृदुः † पाण्डुरनिष्टगन्धो मेदःकृतो नीरुगथातिकण्डूः।
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः।
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम् ॥ २१ ॥
कृच्छ्राच्छ्वसन्तं मृदुसर्व्वगात्रं संवत्सरातीतमरोचकार्त्तम्।
क्षीणन्तु वद्यो गलगण्डिनं तं भिन्नस्वरञ्चैव विवर्ज्जयेत् तु ॥ २२ ॥
निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान् वा यदि वा ह्रस्वस्तं गण्डमिति निर्दिशेत् ‡ ॥ २३ ॥

इति सुश्रुतसंहितायां निदानस्थाने ग्रन्थ्यपच्यर्व्वुदगलगण्डनिदानं नामैकादशोऽध्यायः ॥ ११ ॥

यदृच्छया अज्ञातहेतुनियमेन पाकं इयात् गच्छेत्। कदाचित् न सर्व्वकालम्। वातजं कफजञ्चोक्त्वा मेदोजमाह—स्निग्ध इत्यादि। गलेन शब्दं गलेन नादं प्रतिशब्दमित्यर्थः ॥ १८—२१ ॥

इदानीं गलगण्डस्यासाध्यतामाह—कृच्छ्रादित्यादि। न सर्व्व एव गलाश्रयो गण्डो गलगण्डः, किन्तर्हि कश्चिदेव वक्ष्यमाणस्वरूप इति दर्शयन्नाह—निबद्ध इत्यादि। नियमेन बद्धो निबद्धः। मुष्कवत् अण्डवत् ॥ २२। २३ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे ग्रन्थ्यपच्यर्व्वुदगलगण्डव्याख्यानामैकादशोऽध्यायः ॥ ११ ॥

---

* तालुगलप्रशोष इति वा पाठः। † गुरुरिति पाठान्तरम्। ‡ गलगण्डं तमादिशेदित्यपि पाठः।

## द्वादशोऽध्यायः ।

अथातो वृद्ध्युपदंशश्लीपदानां निदानं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः। तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ २ ॥

अधःप्रकुपितोऽन्यतमो हि दोषः फलकोषवाहिणीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति, तां वृद्धिमित्याचक्षते ॥ ३ ॥

तासां भविष्यतीनां पूर्व्वरूपाणि वस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोषशोफश्चेति ॥ ४ ॥

तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिमित्तानिलरुजं वातवृद्धिमाचक्षते, पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीश्चाशुसमुत्थानपाकां पित्तवृद्धिम्, कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिम्, कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां रक्तवृद्धिम्, मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिम्, मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति, सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रं वेदनां वृषणयोः श्वयथुं कोशयोश्चापादयति, तां मूत्रवृद्धिं विद्यात् ।

अथात इत्यादि। वृद्धीनां संख्यामाह—वातेत्यादि। संख्येयनिर्द्देशादेव सप्तसंख्यासिद्धौ सप्तसंग्रहणं द्वन्द्वजादिवृद्धिनिषेधार्थम्। तासां पुनरसम्भवो व्याधिस्वभावात्। धातुमलकृतायामपि वृद्धौ दोषस्यैव चिकित्सार्थं सम्भवं दर्शयन्नाह—तासामित्यादि। वातसमुत्थे वातात् सम्यक् उत्तिष्ठेते वृद्धिं गच्छत इत्यर्थः। जननहेतुः पुनरन्यतम इति तं प्रतिपादयन्नाह—केवलमुत्पत्तिहेतुरन्यतम इति। केवलं परमुत्पत्तेरुत्पादकस्य हेतोः कारणमन्यतमं मूत्रमन्त्रं वा। अन्ये तु अनयोर्व्याध्योः य उत्पत्तेर्हेतुर्वायुः सोऽन्यतमो भिन्नो ज्ञेयः। एतेन मूत्रसन्धारणकुपितो वायुर्मूत्रवृद्धेः कारणं, भारहरणादिभिः कुपितस्तु अन्त्रवृद्धेः कारणमित्यर्थः। तासां सम्प्राप्तिमाह—अधःप्रकुपित इत्यादि। फलकोषयोरित्यनेन द्विवचनेन मुष्कद्वय एव वृद्धिरिति न ज्ञेयम्। किं तर्हि ? एकस्मिन् पक्षे वृद्धिः परिज्ञातव्या। तासां पूर्व्वरूपाण्याह—तां वृद्धिं मुष्कवृद्धिमिति ॥ १—३ ॥

तासां पूर्व्वरूपमाह—तासां भविष्यतीनामित्यादि। तासां वातादिजानां लक्षणमाह—तत्रानिलेत्यादि। आततम् आध्माताम्। मेदोवृद्धिमिति कफेन सह। मूत्रेत्यादि। क्षीणं

भारहरणबलवद्विग्रह-वृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं द्विगुणमादायाधो गत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाप्रतिक्रियमाणे च कालान्तरेण फलकोषं प्रविश्य मुष्कशोफमापादयति, आध्मातो वस्तिरिवाततः प्रदीर्घः स शोफो भवति, सशब्दमवपीड़ितश्चोर्द्ध्वमुपैति, विमुक्तश्च पुनराध्मायते, तामन्त्रवृद्धिमसाध्यामित्याचक्षते ॥ ५।६ ॥

तत्रातिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढ़रोमामल्पद्वारां महाद्वाराममियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनादर्द्दनाद् हस्ताभिघाताच्चतुष्पदीगमनादचोक्ष्यसलिलप्रक्षालनादवपीड़नाच्छुक्रमूत्रवेगावधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रभागस्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते ॥ ७ ॥

स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः ॥ ८ ॥

स्वभावः। क्षुभ्यति सञ्चलति। आध्मातो वस्तिरिव पूर्णो मूत्राशय इव। आततो विस्तीर्णः, उपैति उद्गच्छति, विमुक्तश्च सशब्दमेवाध्मायते ॥ ४—६ ॥

वृद्धेरनन्तरमुपदंशानां हेत्वाद्यभिधानमाह— तत्रातिमैथुनेत्यादि। अतिब्रह्मचारिण्या मैथुनातिनिवृत्त्या सङ्कुचितकर्कशयोनिमुखत्वात्। चिरोत्सृष्टां प्रभूतकालत्यक्ताम्, अत्रापि स एव हेतुः। ब्रह्मचारिण्या जन्मनः प्रभृत्येव मैथुनाभावः, चिरोत्सृष्टायाः कदाचिदेवेत्यनयोर्भेदः। रजस्वला दुष्टार्त्तवप्रसङ्गात्। दीर्घकर्कशरोमाभिस्तर्पणे पीड़नाभिघातप्रसङ्गात्। सङ्कीर्णरोमां घनरोमां, निगूढ़रोमामभ्यन्तररोमाम्, अल्पद्वारायामपि स एव हेतुः। महाद्वारायां शोफहेतुश्चिन्त्य एव, तस्मान्न केचिन्न पठन्ति। अप्रियायां लिङ्गानुत्थानेन इतस्ततोऽभिघातप्रसङ्गात्, अकामायाः सक्थिसङ्कोचनेन द्वारालपत्वात्, अचौक्ष्यसलिलप्रक्षालितयोनिः सलिलदोषात्, अचोक्ष्यं अपवित्रम्। अप्रक्षालितयोनेः स्वेदमलदोषात्। योनिरोगोपसृष्टायां रोगदोषानुसारेण दोषोदयात्, स्वभावतो वा दुष्टयोनेर्वातादय एव कारणम्। वियोनि हस्तजङ्घान्तर, तस्य कर्कशत्वात्। करजा नखाः, दशनाः दन्ताः। शूकस्य शुँया इति प्रसिद्धस्य सविषमलक्षकंटस्य; निपातनात् लिङ्गादिशरीरे पातनात् अथवा तेषामर्द्दनात् पीड़नात्। चतुष्पद्योऽजादयो रासभाद्यो वा, तासामत्यल्पारम्ययोनित्वात्। अचोक्ष्यसलिलप्रक्षालनादिभिरिति अचोक्ष्यसलिलप्रक्षालनमत्र लिङ्गस्य, न तु योनेः ॥ ७ ॥

तेषां संख्यामाह—स पञ्चविध इत्यादि। त्रिभिर्दोषैः पृथगिति त्रयः, समस्तैरेकः, असृजा चैकः, एवं पञ्च ॥ ८ ॥

तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः ॥ ९ ॥

पैत्तिके ज्वरः श्वयथुः पक्वोदुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनाश्च ॥ १० ॥

श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनाश्च ॥ ११ ॥

रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च याप्यश्चैव कदाचित् ॥ १२ ॥

सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः क्रिमिप्रादुर्भावो मरणञ्चेति ॥ १३॥

कुपितास्तु दोषा वातपित्तश्लेष्माणोऽधःप्रपन्ना वङ्क्षणोरुजानुजङ्घास्ववतिष्ठमानाः कालान्तरेण पादमाश्रित्य शनैः शोफं जनयन्ति, तं श्लीपदमित्याचक्षते ॥ १४ ॥

तत् त्रिविधं वातपित्तकफनिमित्तमिति ॥ १५ ॥

तत्र वातजं रूक्षं कृष्णं परुषमनिमित्तानिलरुजं परिस्फुटति च बहुशः। पित्तजन्तु पीतावभासमीषन्मृदु ज्वरदाहप्रायश्च। श्लेष्मजन्तु श्वेतं स्निग्धावभासं मन्दवेदनं भारिकं महाग्रन्थिकं कण्टकैरुपचितञ्च ॥ १६ ॥

तत्र संवत्सरातीतमतिमहद् वल्मीकजातं प्रस्रुतमिति वर्ज्जनीयानि ॥ १७ ॥

तेषां वातादिजानां प्रत्येकं लक्षणमाह—तत्र वातिके इत्यादि। "मेढ्रसन्धौ व्रणाः केचित् केचित् सर्व्वाश्रयाः स्मृताः। कुलत्थाकृतयः केचित् केचित् मुद्गदलोपमाः। रुजादाहपरीताश्च तृष्णामोहसमन्विताः। शीघ्रं केचिद् विसर्पन्ति शनैः केचित् तथापरे। स्त्रीणाञ्च पुंसां जायन्ते उपदंशाः सुदारुणाः॥" इति तन्त्रान्तरे ॥ ९—१३ ॥

अथ श्लीपदस्य हेत्वादीनाह— कुपितास्तु दोषा इत्यादि। वङ्क्षणावस्थानमेवास्य पूर्व्वरूपम् शनैरिति क्रमेण। तं श्लीपदमाचक्षत इति निरुपाधिरयम्। शिलावत् पदमिति श्लीपदं। वातजमाह—तत्रेत्यादि। खरं कर्कशं, अनिमित्तानिलरुजं कारणं विना वातजवेदनायुक्तम्। कफजमाह—श्लेष्मजमित्यादि। भारिकमिति भारयुक्तम् ॥ १४ १५ ॥

असाध्यश्लीपदमाह— तत्रेत्यादि—अतिमहदिति प्रकाण्डाकारं, वल्मीकजातं वल्मीकवज्जातं, अतिबहुतरशिखरैर्ग्रन्थिभिरुपचितत्वात्; परपदार्थेषु हि प्रवृत्ताः शब्दा वतिमन्तरेणापि वत्यर्थं जनयन्ति। प्रस्रुतमिति स्रावयुक्तम् ॥ १६ । १७ ॥

भवन्ति चात्र

त्रीण्यप्येतानि जानीयात् श्लीपदानि कफोच्छ्रयात्।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात्॥ १८॥
पुराणोदकभूयिष्ठाः सर्व्वर्त्तुषु च शीतलाः।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः॥ १९॥
* पादयोर्हस्तयोश्चापि श्लीपदं जायते नृणाम्।
कर्णाक्षिनासिकौष्ठेषु केचिदिच्छन्ति तद्विदः॥ २०॥

इति सुश्रुतसंहितायां निदानस्थाने वृद्ध्युपदंशश्लीपदनिदानं नाम द्वादशोऽध्यायः॥ १२॥

श्लीपदेषु कफस्याव्यभिचारेण प्राधान्यमाह—त्रीण्यप्येतानीत्यादि। कफोच्छ्रयादिति कफकारणात्। देशविशेष एवास्योत्पत्तिं दर्शयन्नाह—पुराणोदकभूयिष्ठा इत्यादि। अनूपदेशस्य पुराणोदकभूयिष्ठता। जाङ्गलस्योन्नतसमभूतलत्वात् सलिलं पतितं न तिष्ठति, स्थितमपि रूक्षोष्णशुष्करवाद् देशस्य शोषमुपैति। तेन जाङ्गलदेशस्य शीतेऽप्यशीतता। श्लीपदानामुत्पत्तिक्षेत्राण्याह पादयोरित्यादि। हस्तपदेषु श्लीपदं जायते, अन्ये तु कर्णादिष्वपि भवति इत्याहुः॥ १८—२०॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
वृद्ध्युपदंशश्लीपदव्याख्यानाम द्वादशोऽध्यायः॥ १२॥

---

* पादयोरित्यत्र पादवदिति पाठान्तरम्।

## त्रयोदशोऽध्यायः।

अथातः क्षुद्ररोगाणां निदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति। तद्यथा—अजगल्लिका यवप्रख्याऽन्धालजी विवृता कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जालगर्द्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराव्वुदं पामा विचर्च्चिका रकसा पाददारिका कदरमलसेन्द्रलुप्तौ दारुणकोऽरुंषिका पलितं मसूरिका यौवनपिड़का पद्मिनीकण्टको जतुमणिर्मशकश्चर्म्मकीलस्तिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशो निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति ॥ २ ॥

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ ३ ॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता।
पिड़का श्लेष्मवाताभ्यां यवप्रख्येति सोच्यते ॥ ४ ॥
घनामवक्त्रां पिड़कामुन्नतां परिमण्डलाम्।
अन्धालजीमल्पपूयां तां विद्यात् कफवातजाम् ॥ ५ ॥

अथात इत्यादि। यद्यपि क्षुद्ररोगेषु रोहिणीवल्मीकादयो महाव्याधयः सन्ति, तथापि क्षुद्ररोगाणां बहुत्वात् तैरेव व्यपदेशः; यथा बहुषु छत्रिषु गच्छत्सु अच्छत्रिष्वपि केषुचित् गच्छत्सु छत्रिणो यान्तीति व्यपदेशः तथा अत्रापीति न दोषः। अन्ये तु क्षुद्रा लघवस्तिलकाद्यपेक्षया, अग्निरोहिणीवल्मीकाद्यपेक्षया क्षुद्राः सूक्ष्माः, अथवा पूर्व्वाचार्य्यप्रसिद्धा निर्हेतुकेयं संज्ञा। संख्यामाह—समासेनेत्यादि। समासेन सङ्क्षेपेण, विस्तरेण प्रमाणन्तु नास्त्येव। श्रीब्रह्मदेवस्तु गर्द्दभिकेरिवेल्लिकागन्धपिड़िकातिलकालकानां संग्रहणेनाष्टचत्वारिंशदिति पठति। श्रीजेज्झटाचार्य्येण तु गर्द्दभिकादयश्चत्वारो न पठिताः। पूर्व्वव्याख्यातारोऽपि सुवीरनन्दिवाराहादयः समानतन्त्रापाठात् गर्द्दभिकादीनां चतुर्णां पाठं गर्हितं मन्यन्ते। गयदासाचार्य्यस्तु समानतन्त्रादर्शनेऽपि सर्व्वेष्वेव पाठेषु पातात् गर्द्दभिकादीन् पठति, पामादींश्च क्षुद्रत्वेऽपि चतुरः कुष्ठ एव पठति ॥ १ । २ ॥

तेषां प्रत्येकं लक्षणमाह—स्निग्धेत्यादि। प्रायोग्रहणमत्र लुप्तनिर्द्दिष्टं द्रष्टव्यम्। तेन क्वचिद् बालेष्वपीत्येके मन्यन्ते। यवेत्यादि। यवाकारा अन्तर्निम्नमध्योन्नतत्वेन स्थूलयवाकारा। घनामित्यादि। अवक्त्रामिति अल्पमुखीं, परिमण्डलां वर्त्तुलामित्यर्थः। अन्धालजीं स्नायुप्रसृतान्तर्मुखीम् ॥ ३—५ ॥

विवृतास्यां महादाहां पक्वोडुम्बरसन्निभाम्।
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम्॥ ६॥
ग्रन्थयः पञ्च वा षड़् वा दारुणाः कच्छपोन्नताः।
कफानिलाभ्यामुद्भूतां विद्यात् तां कच्छपीमिति॥ ७॥
पाणिपादतले सन्धौ ग्रीवायामूर्द्ध्वजत्रुणि।
ग्रन्थिर्वल्मीकवद् यस्तु शनैः समुपचीयते॥
तोदक्लेदपरीदाह-कण्डूमद्भिर्व्रणैर्वृतः।
व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः॥ ८॥
पद्मपुष्करवन्मध्ये पिड़काभिः समाचिताम्।
इन्द्रवृद्धान्तु तां विद्याद् वातपित्तोत्थितां भिषक्॥ ९॥
कर्णौपरि समन्ताद् वा पृष्ठे वा पिड़कोग्ररुक्।
शालूकवत् पनसिकां तां विद्यात् श्लेष्मवातजाम्॥ १०॥
हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम्।
पाषाणगर्द्दभं विद्याद् बलासपवनात्मकम्॥ ११॥
विसर्पवत् सर्पति यो दाहज्वरकरस्तनुः।
अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्द्दभः॥ १२॥
( पिड़िकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम्।
सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिवेल्लिकाम्॥ )
वाहुपार्श्वांसकक्षासु कृष्णस्फोटां सवेदनाम्।
पित्तप्रकोपात् सम्भूतां कक्षामिति विनिर्द्दिशेत्॥ १३॥
( एकामेवंविधां दृष्ट्वा पिटिकां स्फोटसन्निभाम्।
त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षते॥ )
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः।
क्वचित् सर्व्वत्र वा देहे स्मृता विस्फोटका इति॥ १४॥

विवृतास्यामिति व्यात्तमुखीम्। दारुणाः कठिनाः। पञ्चेत्यादि। पद्मपुष्करं पद्मकर्णिका। गयदासाचार्य्यस्तु गर्द्दभिकां पठति, यथा—"मण्डलां वृत्तमुत्सन्नां सरक्तां पिड़काचिताम्। रुजाकरीं गर्द्दभिकां तां विद्याद् वातपित्तजाम्" इति॥ ६—१४॥

कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणाः।
अन्तर्द्दाहज्वरकरा दीप्तपावकसन्निभाः॥
सप्ताहाद् वा दशाहाद् वा पक्षाद् वा घ्नन्ति मानवम्।
तामग्निरोहिणीं विद्यादसाध्यां सन्निपाततः॥ १५॥
नखमांसमधिष्ठाय पित्तं वातश्च वेदनाम्।
करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्।
तदेव क्षतरोगाख्यं तथोपनखमित्यपि॥ १६॥
अभिघातात् प्रदुष्टो यो नखो रुक्षोऽसितः खरः।
भवेत् तं कुनखं विद्यात् कुलीनमिति संज्ञितम्॥ १७॥
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम्।
कफादन्तःप्रपाकां तां विद्यादनुशयीं भिषक्॥ १८॥
विदारीकन्दवद् वृत्तां कक्षावङ्क्षणसन्धिषु।
रक्तां विदारिकां विद्यात् सर्व्वजां सर्व्वलक्षणाम्॥ १९॥

कक्षाभागेष्वित्यादि। असाध्यामिति अतएवास्याश्चिकित्सितेषु न चिकित्साभिधानम्। मांसदारणा इत्यपि पाठः। तथाहि तन्त्रान्तरम्—"पित्तोत्कटा नृणां दोषाः प्रदीप्ताङ्गारसन्निभान्। कक्षाभागेषु कुर्व्वन्ति तीव्रदाहरुजाज्वरान्। मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमान्। पक्षाद् दशाहादर्व्वाक् वा सा ज्ञेया वह्निरोहिणी" इति। तत्र वाताधिकैः सप्ताहात्, पित्ताधिकैर्दशाहात्, कफाधिकैः पक्षात्। नखेत्यादि। चिप्पमिति तन्त्रान्तरेऽङ्गुलिवेष्टकमिति प्रसिद्धम्। गम्भीरामित्यादि। अन्तःपाकेन गम्भीराम्। अल्पसंरम्भामल्पशोथाम्, उपरिस्थितां मस्तके स्थिताम्। विदारीकन्दवदित्यादि। वङ्क्षणसन्धिः गुण्डकः। रक्तां लोहितां, सर्व्वजां सन्निपातजाम्, परं तथापि साध्या, न हि सर्व्व एव सन्निपातजा व्याधयोऽसाध्याः। सर्व्वलक्षणां दोषसमुच्चयलक्षणां, न तु प्रत्येकदोषलक्षणाम्, दोषेभ्यो दोषसमुदायस्यान्यत्वात्, चूर्णहरिद्रासंयोगस्येव। अन्ये तु सर्व्वेभ्यो वातपित्तकफेभ्यः पृथक् द्विशस्त्रिशो वा जायते इति सर्व्वजा इत्यस्याः साप्तविध्यं दोषलिङ्गैः सूक्ष्ममतिनानुक्तमप्यूह्यमित्याचक्षते; तन्नेच्छति गयदासाचार्य्यः, येन क्षुद्ररोगसामान्यन्यायेनास्याः साप्तविध्यं न प्रपद्यते, न हि क्षुद्ररोगेषु कोऽपि व्याधिः पठितो यः प्रत्येकदोषजः, अपि च यद्याचार्य्यस्य साप्तविध्यमभिप्रेतं स्यात् तदा दोषैः सप्तविधा तु सा इति पाठं कुर्य्यात्, तन्त्रान्तरे चेयं वातकफान्विता पठिता, तस्माद् वातकफाधिक्येन हीनपित्ततया अस्या उत्पत्तिर्ज्ञेयेति॥ ६—१९॥

प्राप्य मांसशिरास्नायूः श्लेष्मा मेदस्तथाऽनिलः।
ग्रन्थिं कुर्व्वन्ति भिन्नोऽसौ मधुसर्पिर्वसानिभम्॥
स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिलः।
मांसं विशोष्य ग्रथितां शर्करां जनयेत् पुनः॥
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः शिराः।
स्रवन्ति सहसा रक्तं तद् विद्याच्छर्कराव्वुर्दम्॥ २०॥
पामाविचर्च्चौ कुष्ठेषु रकसा च प्रकीर्त्तिता॥ २१॥
परिक्रमणशीलस्य वायुरत्यर्थरुक्षयोः।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्॥ २२॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः।
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम्॥
सकीलकठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपि वा।
कोलमात्रः सरुक् स्रावी जायते कदरस्तु सः॥ २३।२४॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ।
दुष्टकर्द्दमसंस्पर्शादलसं तं विनिर्दिशेत्॥ २५॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः।
तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते॥ २६॥

प्राप्येत्यादि। इयञ्च शर्करासम्प्राप्तिरुक्ता, सा च शर्करा हेतुः शर्कराव्वुर्दस्य। काठिन्यादेव शर्करा-साहश्येन शर्करा। अत्यगाधोच्छ्रयाभ्यामव्वुर्दम्। नानावर्णं मधुघृतरससन्निभम्। तत इत्यादि। ततः शर्करायाः शिरा रक्तं स्रवन्तीत्यर्थः। केचित् शर्करा शर्कराव्वुर्दञ्चेति व्याधिद्वयं वदन्ति, तन्नेच्छति गयदासाचार्य्यः, संख्यातिरेकात् शर्करायाः पृथक्त्वेनोक्तेरदर्शनाच्च। पामेत्यादि। कुष्ठेष्विति कुष्ठनिदाने इत्यर्थः। परीत्यादि। परिक्रमणशीलस्य सर्व्वतो भ्रमणस्वभावस्य। दारीमिति विपादिकाम्। शर्करेत्यादि। शर्करा घटकर्परखण्डादयः, ताभिरुन्मथिते पीड़िते। कीलेन सदृशः सकीलमित्यव्ययीभावः, सकीलश्चासौ कठिनश्चेति सकीलकठिनः। हस्तयोरपीति भोजः। क्लिन्नमित्यादि। अयं कफेन सशोणितेन। रोमकूपानुगमित्यादि। खालित्यं पुंसामेव न तु योषिताम्। तथाच विदेहः—"अत्यन्तसुकुमाराया रजो दुष्टं स्रवत्यपि। अव्यायामरता यस्मात्

दारुणा कण्डुरा रुक्षा केशभूमिः प्रजायते *।
कफवातप्रकोपेण विद्याद् दारुणकन्तु तम् ॥ २७ ॥
अरूंषि वहुवक्त्राणि वहुक्लेदानि मूर्द्धनि।
कफासृक्क्रिमिकोपेन नृणां विद्यादरुंषिकाम् ॥ २८ ॥
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः।
पित्तश्च केशान् पचति पलितं तेन जायते ॥ २९ ॥
दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः।
गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥ ३० ॥
शाल्मली कण्टकप्रख्याः कफमारुतशोणितैः।
जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ॥ ३१ ॥
कण्टकैराचितं वृत्तं कण्डूमत् पाण्डुमण्डलम्।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ३२ ॥
नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम्।
स ंरक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥ ३३ ॥

तस्मान्न खलितिः याः।" दारुणेत्यादि। दारुणा कठिना। कण्डुरा कण्डूयुक्ता, प्रजायते प्रकर्षेण जायते। पित्तरुधिरयोरप्यनुवन्धो ज्ञेयः, विदेहवचनात्। दारुणकम् पहा इति लोके। अरुंषीत्यादि। अरूंषि व्रणान्। क्रोधादिकृतेन शरीरोष्मणा शिरोगतेन वैकृतपित्तेन पुनः प्राकृतं पलितम्, अन्यथा पित्तोष्मणोरभेदात् पुनरुक्तिदोषः स्यात्। पञ्जिकाकारस्तु शरीरोष्मा पावकः, पित्तं तदाश्रयः, एतौ पित्तपावकावेकीभूय केशान् पचतः, एतेन केवलोष्मकृतस्य विकृतस्यादोषजप्रसङ्गो निराकृत इति मन्यते। दाहेत्यादि। ताम्रत्त्वेन शोणितानुबन्धोऽप्येषां; तथाहि तन्त्रान्तरं—"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम्। तदा करोति पिड़काः सर्व्वगात्रेषु देहिनः। मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि। मसूरिकास्तु विज्ञेयाः पिड़का रक्तपित्तजाः" इति। एतासां शीतलिका इति लोकाश्रया संज्ञा ॥ २०—३० ॥

शाल्मलीत्यादि। शाल्मलीकण्टकप्रख्याः शाल्मलीकण्टकसदृशाः। यूनां तरुणानाम्। कण्टकैरित्यादि। पद्मिनीकण्टकप्रख्यैः पद्मिनीकण्टकसदृशैः, आचितं व्याप्तम्, तदाख्यं पद्मिनीकण्टकाख्यम्। नीरुजमित्यादि। समं सूक्ष्मं, उत्सन्नमुन्नतं, सहजं जन्मावधिप्रवृत्तम्। श्लक्ष्णमकर्कशम्।

* प्रपाट्यते इति पाठान्तरम्।

अवेदनं स्थिरञ्चैव यस्य गात्रेषु दृश्यते
माषवत् कृष्णमुत्सन्नमनिलान्मशकं दिशेत् ॥ ३४ ॥
कृष्णानि तिलमात्राणि नीरुजानि समानि च।
वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान् ॥ ३५ ॥
मण्डलं महदल्पं वा श्यावं वा यदि वा सितम्।
सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥ ३६ ॥
समुत्थाननिदानाभ्यां चर्म्मकीलं प्रकीर्त्तितम् ॥ ३७ ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः।
सहसा मुखमागम्य मण्डलं विसृजेत् ततः।
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ३८ ॥
मर्द्दनात् पीड़नाच्चापि तथैवात्यभिघाततः।
मेढ़चर्म्म यदा वायुर्भजते सर्व्वतश्चरः ॥
तदा वातोपसृष्टन्तु चर्म्म प्रतिनिवर्त्तते।
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥
सवेदनः सदाहश्च पाकञ्च व्रजति क्वचित्।
मारुतागन्तुसम्भूतां विद्यात् तां परिवर्त्तिकाम् ॥
सकण्डूः कठिना चैव सैव श्लेष्मसमुत्थिता ॥ ३९ ॥

जतुमणिः जड्डुल इति लोकाश्रया तत्संज्ञा। अवेदनमित्यादि। स्थिरं कठिनम्। कृष्णानीत्यादि। वातपित्तकफोद्रेकादिति वातपित्ताभ्यां कफस्य उद्रेकात् आधिक्यात् इत्यर्थः। अन्ये तु वातपित्तासृगुच्छोपादिति पठन्ति, व्याख्यानयन्ति च—वातपित्ताभ्यां रक्तस्य शोषादित्यर्थः। अतएव तिलकालके कार्ष्ण्यम्। वातात् न च कफोद्रेकादिति पाठः, तस्मिन् पाठे कफोद्रेकलक्षणं तिलकालके नास्ति। मण्डलमित्यादि। सहजं जन्मावधिप्रवृत्तम्। न्यच्छं लोका लाञ्छनमिति वदन्ति, पित्तरक्तान्वितो वायुरस्य कारणम्। समुत्थानेत्यादि। समुत्थानं सम्प्राप्तिः। निदानं हेतुलक्षणनिर्द्देशः। गयदासाचार्य्यस्तु समुत्थाननिदानाभ्यामित्यादि चर्म्मकीलप्रतिपादकं वाक्यमेव न पठति। क्रोधेत्यादि। व्यङ्गमेव स्थानान्तरेण वर्णान्तरेण च नीलिकेत्यन्ये। मर्द्दनादित्यादि। अतीति मर्द्दनपीड़नाभ्यां प्रत्येकं सम्बध्यते। सम्यक्कृतौ हि मर्द्दनपीड़नौ वायुप्रशान्तिकरावेव भवतः। भजते आश्रयति। सर्व्वतश्चरो वायुर्व्यानः। चर्म्म प्रतिनिवर्त्तते इति मणिं विहाय सर्व्वत्र घटतीत्यर्थः। कोपश्चर्म्मकोषः। सैव परिवर्त्तिकेत्यर्थः ॥ ३१—३९ ॥

अल्पीयःखां यदा हर्षाद् बालां गच्छेत् स्त्रियं नरः ।
हस्ताभिघातादथवा चर्म्मण्युद्वर्त्तिते बलात् ॥
मर्द्दनात् पीड़नाद् वापि शुक्रवेगविघाततः ।
यस्यावपाट्यते चर्म्म तां विद्यादवपाटिकाम् ॥ ४० ॥
वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् ।
मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् ।
मूत्रं प्रवर्त्तते जन्तोर्मणिर्न च विदीर्य्यते * ॥
निरुद्धप्रकशं विद्याद् दुरूढ़ाश्चावपाटिकाम् † ॥ ४१ ॥
वेगसन्धारणाद् वायुर्विहतो गुदमाश्रितः ।
निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ।
सन्निरुद्धगुदं व्याधिमेतं विद्यात् सुदुस्तरम् ॥ ४२ ॥
शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ॥
कण्डूयनात् ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ४३ ॥

अल्पीयःखामित्यादि । अल्पीयःखामल्पतरयोनिद्वाराम्, चर्म्मण्युद्वर्त्तिते उत्तानीभूय व्याघुटिते यस्य चर्म्म मर्द्दनादिभिरवपाट्यते विदार्य्यते तस्य तामवपाटिकां विद्यादित्यर्थः । चर्म्म वृद्वर्त्तते निश्चितमूर्द्ध्वं प्रवर्त्तते इत्यन्ये । वातोपसृष्टमित्यादि । एवमिति मर्द्दनपीड़नाभिघातादिनेत्यर्थः । संश्रयते समग्रं श्रयते । दुरूढ़ां चावपाटिकामिति अवपाटिकापि दुरूढ़ा निरुद्धप्रकाशाख्यां लभते । वेगसन्धारणादित्यादि । विहतो निरुद्धगतिः । महत्स्रोतो गुदः । शकृदित्यादि । शकृन्मूत्रसमायुक्ते अपाने गुदे अधौते अक्रियमाणे शौचे, शिशो रक्तकफोद्भवा कण्डूर्भवेदिति सम्बन्धः । कथम्भूतस्य ? स्विन्नस्य अस्नाप्यमानस्य च । एकीभूतमपानं व्रणैः सहेत्यध्याहार्य्यम् । अहिपूतनं कफरक्तजं

* मणिर्विभ्रियते न च इति वा पाठः ।　　　　† सरुजं वातसम्भवमिति पाठान्तरम् ।

स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः।
प्रक्लिद्यते यदा स्वेदात् स कण्डूं जनयेत् तदा॥
तत्र कण्डूयनात् क्षिप्रं स्फोटः स्रावश्च जायते।
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम्॥ ४४॥
प्रवाहणातिसाराभ्यां निर्गच्छति गुदं वहिः।
रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत्॥ ४५॥

इति सुश्रुतसंहितायां निदानस्थाने क्षुद्ररोगनिदानं
नाम त्रयोदशोऽध्यायः॥ १३॥

ज्ञेयम्। स्नानोत्सादनेत्यादि। उत्सादनमुद्वर्त्तनम्। प्रवाहणेत्यादि। प्रवाहणं प्रकर्षेण निर्वाहणम्। अयं वातकोपजः॥ ४०—४५॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
क्षुद्ररोगनिदानव्याख्यानाम त्रयोदशोऽध्यायः॥ १३॥

---

## चतुर्दशोऽध्यायः।

अथातः शूकदोषनिदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

लिङ्गवृद्धिमिच्छतामक्रमप्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते। तद्यथा—सर्षपिका, अष्ठीलिका, ग्रथितं, कुम्भीका, अलजी, मृदितं, सम्मूढपिडका, अवमन्थः, पुष्करिका, स्पर्शहानिः, उत्तमा, शतपोनकः, त्वक्-पाकः, शोणितार्बुदं, मांसार्बुदं, मांसपाकः, विद्रधिः, तिलकालकश्चेति ॥२॥

गौरसर्षपतुल्या तु शूकदुर्भग्नहेतुका।
पिड़काकफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥ ३ ॥
कठिना विषमैरन्तैर्मारुतस्य प्रकोपतः।
शूकैस्तु विषसंभुग्नैः पिड़काष्ठीलिका भवेत् ॥ ४ ॥
शूकैर्यत् पूरितं शश्वद् ग्रथितं तत् कफोत्थितम् ॥ ५ ॥

अथात इत्यादि। शूकदोपनिदानमिति अत्रादिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः। तेन शूकादिदोष-निदानमित्यर्थः। आदिशब्दाच्च दुष्टयोनिगूढान्तर्लोमयोनिदुर्भगागमनाभिघातश्चाभिप्रेतः। तन्नैवं पठति गयदासाचार्य्यः। दुष्टयोन्यादीनामुपदंशहेतुत्वात्। शूकः जलमलजः कीटः, लिङ्ग-वृद्धिकरो योगो वा; दोपोऽत्र दुष्टिः, असम्यक्करणाद् वैकृतम्; अथवा दोपो वातादिः, वातादिकृतो वा विकारः; तेषां लक्षणस्यैव निर्देशात् निदानं, न तु हेतोः; हेतुः पुनरत्र शूक एव। स च प्रतिज्ञासूत्रेणैवाभिहितः। तेषां शूकदोपजानां व्याधीनां सामान्यसम्प्राप्तिमाह—लिङ्गवृद्धि-मित्यादि। लिङ्गवृद्धिः लिङ्गस्थूलीकरणम्; आयामपरिणाहाभ्यामित्यन्ये। वात्स्यायनाद्युक्तलिङ्ग-वृद्धियोगस्य अक्रमोऽनाचारः; उत्तरवस्तिकर्म्मणोऽनाचार इत्यन्ये। संख्येयनिर्देशादेव संख्यायां लब्धायामष्टादशवचनं सङ्ख्येयनिर्देशभ्रान्तिनिरासार्थम् ॥ १। २ ॥

शूकदोपाणां पृथग्रूपेण लक्षणान्याह— गौरसर्पपेत्यादि। शूकदुर्भग्नहेतुकेति दुरवचारितशूकहेतु-केत्यर्थः। अन्ये शूकदुर्भगहेतुकेति पठन्ति, व्याख्यानयन्ति च—शूको दुष्टभगश्च हेतुर्यस्याः सा तथा। तन्नेच्छति गयदासाचार्य्यः। कठिनेत्यादि। शूकैरष्ठीलिका भवेदिति सम्बन्धः। विपमैरप्रशस्तैः। अन्तैरिति कोऽर्थः? पतितैः। अन्ये तु विपमैरन्तैरुपलक्षितेति व्याचक्षते। एतेन विषमान्त-सहितेत्युक्तम्। विपसंभुग्नैः विपेण कृत्वा वक्रैरित्यर्थः। शूकैरित्यादि। शश्वत् प्रतिदिनं, एतेन एकदिनान्तरपूरणं प्रशस्तमिच्छन्ति कामतन्त्राचार्य्याः। नित्यपूरणाद ग्रथितनाम्नो रोगस्योत्पत्तिः।

कुम्भीका रक्तपित्तोत्था जाम्ववास्थिनिभाऽशुभा ॥ ६ ॥
अलजीलक्षणैर्युक्तामलजीञ्च वितर्कयेत् ॥ ७ ॥
मृदितं पीड़ितं यत् तु संरब्धं वायुकोपतः ॥ ८ ॥
पाणिभ्यां भृशसंमूढ़े संमूढ़पिड़का भवेत् ॥ ९ ॥
दीर्घा वह्वयश्च पिड़का दीर्य्यन्ते मध्यतस्तु याः।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥ १० ॥
पित्तशोणितसम्भूता पिड़का पिड़काचिता।
पद्मपुष्करसंस्थाना ज्ञेया पुष्करिकेति सा ॥ ११ ॥
जनयेत् स्पर्शहानिन्तु शोणितं शूकदूषितम् ॥ १२ ॥
मुद्गमाषोपमा रक्ता पिड़का रक्तपित्तजा।
उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥ १३ ॥
छिद्रैरणुमुखैर्वस्तु चितं मेढ़ं समन्ततः।
वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः ॥ १४ ॥
पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान् ॥ १५ ॥

कुम्भीकेत्यादि। कुम्भीका कुम्भीफलमिव। अशुभेति शुभा शुक्ला तद्विरोधेन अशुभा कृष्णेत्यर्थः। इयमपि दुरवचारितशूकजा। आशुजा इति केचित् पठन्ति। तत्र शूकपातानन्तरं शीघ्रं जायते इत्यर्थः। अलजीलक्षणैः प्रमेहपिड़कालजीलक्षणैरित्यर्थः, इयमपि दुष्टशूकावचारणात् ज्ञेया। यत् पुनर्लिङ्गं पातितशूकं सत् हस्ताभ्यां भृशपीड़ितं, अतएव वातकोपतः संरब्धं सशोफं, सन्मृदिताख्यरोगाक्रान्तं ज्ञेयम्। पाणिभ्यामित्यादि। भृशसंमूढ़ेऽत्यर्थं पञ्चिताव(?)नते, पातितशूके लिङ्गे इत्यध्याहार्य्यम्। संमूढ़पिड़का मृदितञ्च वातरक्तात्। बह्वयः प्रभूताः। अवमन्थोऽपि स्थूलीकरणशूककर्म्मोपचारेण ज्ञेयः ॥ ३—१० ॥

पित्तशोणितेत्यादि। पद्मपुष्करं पद्मकर्णिका। एषापि शूककर्म्मोपचारजा ज्ञेया। जनयेदित्यादि। स्पर्शहानिं स्पर्शहानिनामानं व्याधिविशेषम्। शूकदूषितं शूकेन दुष्टिं नीतम्। मुद्गेत्यादि। उत्तमा व्याधिविशेषः। शूकाजीर्णनिमित्तजेति शूकाजीर्णं पुनःपुनर्दुरवचारितशूकं विकृतिलक्षण एव परिणामः, तदेव निमित्तं ततो जाता इति ; अन्ये तु शूकाजीर्णं शूकेनाजीर्णं प्रतिक्षणपतितशूकनिमित्ताभ्यां रक्तपित्ताभ्यां जायते इत्याहुः। छिद्रैरित्यादि। छिद्रैर्दुरवचारितशूकनिमित्तवातशोणितजः। वस्तु अधिष्ठानमित्यर्थः। पित्तरक्तेत्यादि। पित्तरक्तकृत इति दुःखचारितशूकजनितपित्तशोणितज इत्यर्थः। गयदासाचार्य्यास्तु दुःखचारितशूकदूषितवातपित्तज इत्याहुः ॥ ११—१५ ॥

कृष्णैः स्फोटैः सरक्ताभिः पिड़काभिश्च पीड़ितम् ।
यस्य वास्तु रुजश्चोग्रा ज्ञेयं तच्छोणिताव्र्वुदम् ॥ १६ ॥
मांसदोषेण जानीयादर्व्वुदं मांससम्भवम् ॥ १७ ॥
शीर्य्यन्ते यस्य मांसानि यस्य सर्व्वाश्च वेदनाः ।
विद्यात् तं मांसपाकन्तु सर्व्वदोषकृतं भिषक् ॥ १८ ॥
विद्रधिं सन्निपातेन यथोक्तमभिनिर्द्दिशेत् ॥ १९ ॥
कृष्णानि चित्राण्यथवा शूकानि सविषाणि च ।
पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ २० ॥
कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः ।
सन्निपातसमुत्थानं तं विद्यात् तिलकालकम् ॥ २१ ॥
तत्र मांसार्व्वुदं यच्च मांसपाकश्च यः स्मृतः ।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ २२ ॥

इति सुश्रुतसंहितायां निदानस्थाने शूकदोषनिदानं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

कृष्णैरित्यादि । यस्य वास्तु अधिष्ठानं स्फोटैः पिड़काभिश्च पीड़ितं भवति तत् शोणितार्व्वुदं ज्ञेयमिति सम्बन्धः । अयमपि दुःखचारितशूकेभ्यः । मांसेत्यादि । मांसदोषेण मांसवृद्ध्या । इदमपि दुरवचारितशूके लिङ्गे प्रहारादिभिर्जायते । शीर्य्यन्ते गलन्ति । एषोऽपि दुरवचारित-शूकदूषितदोषजः । विद्रधिमित्यादि । अयमपि दुरवचारितशूकदूषितदोषत्रयजः । कृष्णानीत्यादि । कृष्णानि कृष्णवर्णानि, चित्राणि विचित्राणि शुक्लपीतनीलादिवर्णानीत्यर्थः । कालानि परिणत-तिलफलवर्णानि । शीर्य्यन्ते गलन्ति । शूकदोषजानामसाध्यान् निर्द्दिशन्नाह—तत्रेत्यादि । ये चेति चकारात् कदाचित् सिध्यन्तीत्युक्तम् ॥ १६—२१ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
शूकदोषनिदानव्याख्यानाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातो भग्नानां निदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पतनपीडनप्रहाराक्षेपणव्यालमृगदशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भग्नमुपदिशन्ति । तत् तु भग्नजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते—सन्धिमुक्तं काण्डभग्नञ्च ॥ २ ॥

तत्र सन्धिमुक्तम्—उत्पिष्टं विश्लिष्टं विवर्त्तितमधःक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम् ॥ ३ ॥

तत्र प्रसारणाकुञ्चनविवर्त्तनाक्षेपणाशक्तिरुग्ररुजत्वं स्पर्शासहत्वञ्चेति सामान्यं सन्धिमुक्तलक्षणमुक्तम् ॥ ४ ॥

विशेषेणोत्पिष्टे सन्धावुभयतः शोफो वेदनाप्रादुर्भावो विशेषतश्च नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति । विश्लिष्टेऽल्पः शोफो वेदनासातत्यं सन्धिविक्रिया च । विवर्त्तिते तु सन्धिपार्श्वापगमनाद् विषमाङ्गता वेदना च । अधःक्षिप्ते सन्धिविश्लेषस्तीव्ररुजत्वञ्च । अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च । तिर्य्यक्क्षिप्ते त्वेकास्थिपार्श्वापगमनमत्यर्थं वेदना चेति ॥ ५ ॥

अथात इत्यादि । भग्नानां हेतुं निर्दिशन्नाह—पतनपीडनेत्यादि । प्रहारो मुष्टिलगुडकृपाणबाणादीनां, आक्षेपणमतिशयेन चालनं, व्यालमृगदशनं व्याघ्रादिभक्षणम्, प्रभृतिग्रहणात् बलवद्भिग्रहादीनामवरोधः । अनेकविधं बहुप्रकारम् । तेषां द्वैविध्यमाह—तत्त्वित्यादि । भग्नजातमिति जातं समूहः । अनुसार्य्यमाणमनुसरत् प्रेर्य्यमाणम् । अनुश्रियमाणमित्येके पठन्ति । सन्धिमुक्तकाण्डभग्नयोर्लक्षणमाह—तत्र पर्व्वणीत्यादि ; अयं पाठोऽभावान्न लिखितो न च व्याख्यातः ॥ १ । २ ॥

सन्धिमुक्तस्य षाड्विध्यमाह—तत्रेत्यादि । सन्धिमुक्तं षड्विधमिति सम्बन्धः । तत्र सन्धिमुक्तस्य सामान्यलक्षणमाह—तत्र प्रसारणेत्यादि । सामान्यं सन्धिभग्नलक्षणमुक्तम् । विवर्त्तनं विपरीतावर्त्तनम्, आक्षेपणमतिशयेन चालनम् ॥ ३—४ ॥

उत्पिष्टादिलक्षणमाह—विशेषेणोत्पिष्टे इत्यादि । उत्पिष्टे चूर्णिते । विश्लिष्टे घट्टिते सन्धाविति शेषः । सन्धिविक्रिया मध्यनिम्नत्वम् । विवर्त्तिते विपरीतं वर्त्तिते, सन्धाविति शेषः । सन्धिसंश्रययोरस्थ्नोर्व्यावर्त्तनेन पार्श्वागमनाद् विषमाङ्गता, वेदना चेति चकाराद् वेदनापि विषमेत्यर्थः । अधःक्षिप्ते सन्धावधोगते । अतिक्षिप्ते दूरं गते सन्धौ । अतिक्रान्तता दूरगमनम् । अतिवेदना चेति चकारार्थः । तिर्य्यक्क्षिप्ते सन्धाविति शेषः । अत्रैकस्यैवास्थ्नः पार्श्वगमनं, विवर्त्तिते द्वयोरपीति विशेषः ॥ ५ ॥

काण्डभग्नमत ऊर्द्धं वक्ष्यामः—कर्क्कटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छल्लितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधम् ॥ ६ ॥

श्वयथुबाहुल्यं स्पन्दनविवर्त्तनस्पर्शासहिष्णुत्वमवपीड्यमाने शब्दः स्रस्ताङ्गता विविधवेदनाप्रादुर्भावः सर्व्वास्ववस्थासु न शर्म्मलाभ इति समासेन काण्डभग्नलक्षणमुक्तम् ॥ ७ ॥

विशेषतस्तु संमूढमुभयतोऽस्थि मध्ये भग्नं ग्रन्थिरिवोन्नतं कर्क्कटकम्। अश्वकर्णवदुद्गतमश्वकर्णकम्। स्पृश्यमानं शब्दवच्चूर्णितमवगच्छेत् *। पिच्चितं पृथुतां गतमनल्पशोफम्। पार्श्वयोरस्थि हीनोद्गतमस्थिच्छल्लितम्। खल्लते प्रकम्पमाणं काण्डभग्नम्। अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यतीति मज्जानुगतम्। अस्थि निःशेषतश्छिन्नमतिपातितम्। आभुग्नमविमुक्तास्थि वक्रम्। अन्यतरपार्श्वावशिष्टं छिन्नम्। पाटितमणुबहुविदारितं वेदनावच्च। शूकपूर्णमिवाध्मातं विपुलं विस्फुटीकृतं स्फुटितमिति। तेषु चूर्णितच्छिन्नातिपातितमज्जानुगतानि कृच्छ्रसाध्यानि, कृशवृद्धबालानां क्षतक्षीणकुष्ठश्वासिनां सन्ध्युपगतञ्चेति ॥ ८ ॥

काण्डभग्नमित्यादि। तेषां सामान्यलक्षणमाह – श्वयथुबाहुल्यमित्यादि। शर्म्म सुखम् ॥६।७॥

तेषां प्रत्येकं विशिष्टलक्षणमाह—विशेषतस्त्वित्यादि। विशेषतः संमूढमिति अतिशयेन स्पर्शं जानातीत्यर्थः। गयदासाचार्य्यस्तु उभयतः संमूढमिति उभयोः पार्श्वयोर्निपीडनेनाततावनतं मध्ये ग्रन्थिरिवोन्न(द्ग)तमिति व्याख्यानयति। कर्क्कटकं कर्क्कटसदृशम्। अश्वकर्णवदुद्गतमश्वकर्णकम् अश्वकर्णसदृशमित्यर्थः। स्पृश्यमानं शब्दवच्चूर्णितमवगच्छेदिति चूर्णितं चूर्णीकृतम्; अवगच्छेत् जानीयात्। पिच्चितमित्यादि। पिच्चितं पीडितसदृशम्, पृथुतां गतं विस्तीर्णतां गतम्। अस्थि छल्लमिव विद्यते यस्मिन् तत् अस्थिच्छल्लितम्। अस्थिच्छल्लिकमित्यन्ये। खल्लते प्रकम्पमानमिति खल्लते चलति। यद्यपि काण्डभग्नव्यपदेशो द्वादशानामपि, तथापि विशेषतः कस्यचित् व्यपदेशः। यथा सर्व्वेषामेव मृगपक्षिणां विद्यमानजङ्घत्वेऽपि विशिष्टजङ्घायोगेन एणादीनामेव जङ्घालत्वम्। अस्थ्यवयव इति। आभुग्नम् ईषद्जिह्मम्। छिन्नमन्यतरपार्श्वे एकपार्श्वे इत्यर्थः। पाटितमिति। अणूनि बहूनि विदारितानि यस्य तत्तथा। गयदासाचार्य्यास्तु स्फुटितलक्षणमेतत् पठन्ति, अग्रेतनं पाटितलक्षणमिति। शूकपूर्णमिति। शूको यवादीनामग्रभागः तत्पूर्णमिव वेदनाविशेषः। आध्मातं शूनं, विस्फुटीकृतं विपुलस्फुटितं, गयदासाचार्य्यास्तु विपुलैकदारीति पठन्ति। कृच्छ्रसाध्यान् निर्द्दिशन्नाह—तेष्वित्यादि। चकारात् काण्डोपघातमिति ॥ ८ ॥

* चूर्णितमस्थि शब्दस्पर्शाभ्यां बोद्धव्यमिति पाठान्तरम्।

भवन्ति चात्र।

भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम्।
जघनं प्रति पिष्टञ्च वर्ज्जयेत् तच्चिकित्सकः ॥ ९ ॥
असंश्लिष्टं कपालन्तु ललाटे चूर्णितञ्च यत्।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्द्ध्नि च वर्ज्जयेत् ॥ १० ॥
आदितो यच्च दुर्ज्जातमस्थि सन्धिरथापि वा।
सम्यग्यमि-(संहि)-तमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात्।
सङ्क्षोभाद् वापि यद् गच्छेद् विक्रियां तत् तु वर्ज्जयेत् ॥ ११ ॥
मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्त्तिताः।
तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता ॥ १२ ॥
तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु।
कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥ १३ ॥

इति सुश्रुतसंहितायां निदानस्थाने भग्ननिदानं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

असाध्यान् निर्दिशन्नाह—भिन्नमित्यादि। भिन्नं कपालं काण्डभग्नं, सन्धिमुक्तमसाध्यं षड्‌विधमपि, तथा च्युतं विश्लिष्टं लम्बितमसाध्यं, सन्धिमुक्तशब्देन च्युतस्यापि सन्धिमुक्तभेदस्या साध्यत्वे लब्धे तदुपादानं विशेषार्थम्। जघनं प्रतीति जघनस्थाने पिष्टं, सन्धिमुक्तभेदोऽयम्। असंश्लिष्टं विघट्टितसन्धि। ललाटे चूर्णितञ्च यदिति चूर्णितं काण्डभग्नमेतत्। भग्नं सन्धिमुक्तं काण्डभग्नं द्वयमपि बोद्धव्यम् ॥ ९।१० ॥

इदानीं द्विविधस्यापि सर्व्वस्थानगतस्यावस्थायामसाध्यत्वं दर्शयन्नाह—आदित इत्यादि। आदितो यच्च दुर्ज्जातमिति आदित उत्पत्तावेव दुःसन्धानोपपादितं यदस्थिभग्नमिति शेषः, तदसाध्यम्। अस्थिसन्धिरथापि वेति सन्धिरस्थ्नोरन्तरालम्, सोऽपि दुर्ज्जातोऽसाध्यः। सम्यक यमितमप्यस्थि सम्यक् संहितमप्यस्थि। दुर्न्यासाद् दुःस्थापनात्, दुर्निबन्धनाद् दुर्बन्धाद्, संक्षोभाद व्यवायादिना चलनात्, विक्रियां विकृतिम्। मध्यस्येत्यादि। तिस्रो अवस्था इति षोड़शवर्षादूर्द्ध्वं चत्वारिंशत् यावत् पूर्य्यते ॥ ११। १२ ॥

अस्थिविशेषेणापि भग्नविशेषं दर्शयन्नाह—तरुणास्थीनीत्यादि। घ्राणकर्णकण्ठाक्षिकूटेषु तरुणास्थीनि, नम्यन्ते वक्रीभवन्ति, एतेन वक्रलक्षणं भग्नमुक्तम्। नलकानि शाखास्थीनि, भज्यन्ते त्रुटन्ति। कपालानि मस्तकादिखर्पराणि, विभिद्यन्ते इत्यनेन कपालेषु विदारणलक्षणो भग्न उक्तः स्फुटितपाटितादिः। रुचका दन्ताः, तेषु स्फुटितं भग्नमुक्तम्। चकारेण बलयेष्वपि स्फुटितं समुच्चीयते। एतेन पञ्चविधान्यस्थीनि तरुणनलककपालवलयरुचकान्युक्तानि ॥ १३ ॥

इति सौश्रुते सूत्रस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
भग्ननिदानव्याख्यानाम पञ्चदशोऽध्यायः ॥ १५ ॥

## षोड़शोऽध्यायः।

अथातो मुखरोगाणां निदानं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु। तत्रायतनानि—ओष्ठौ दन्तमूलानि दन्ताः जिह्वा तालु कण्ठः सर्व्वाणि चेति ॥ २ ॥

तत्राष्टावोष्ठयोः। पञ्चदश दन्तमूलेषु। अष्टौ दन्तेषु। पञ्च जिह्वायाम्। नव तालूनि। सप्तदश कण्ठे। त्रयः सर्व्वेष्वायतनेषु ॥ ३ ॥

तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः ॥ ४ ॥

कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ।
दाल्येते परिपाट्येते ह्योष्ठौ मारुतकोपतः ॥ ५ ॥
आचितौ पिड़काभिस्तु सर्षपाकृतिभिर्भृशम्।
सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ ६ ॥
सवर्णाभिस्तु चीयेते पिड़काभिरवेदनौ।
कण्डूमन्तौ कफाच्छूनौ * पिच्छिलौ शीतलौ गुरू ॥ ७ ॥
सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च।
सन्निपातेन विज्ञेयावनेकपिड़काचितौ ॥ ८ ॥
खर्ज्जूरफलवर्णाभिः पिड़काभिः समाचितौ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ९ ॥

अथात इत्यादि। मुखरोगाणां संख्यामाह—मुखरोगाः पञ्चषष्टिरित्यादि। अन्ये सप्तषष्टिरित्याहुः, तन्नेच्छन्ति निबन्धकाराः। अथ कियत्सु स्थानेषूत्पद्यन्ते इत्याह—सप्तस्वायतनेष्विति। आयतनेषु स्थानेषु ; तान्येव स्थानान्याह—तत्रायतनान्यष्टावित्यादि ॥ १—३ ॥

अष्टविधानामोष्ठरोगाणां हेतूनाह—तत्रौष्ठप्रकोपा इत्यादि। ओष्ठप्रकोपाः ओष्ठरोगाः ॥ ४ ॥

तेषामोष्ठरोगाणां प्रत्येकं विशिष्टलक्षणमाह—कर्कशावित्यादि। कर्कशौ शाकपत्रसदृशौ, परुषौ रुक्षौ, स्तब्धौ निश्चलौ, दाल्येते द्विविधौ भवत इव। परिपाट्येते पुटपुटायेते। आचितौ व्याप्तौ। चीयेते व्याप्येते। शूनौ शोफयुक्तौ। सकृत् किञ्चिदित्यर्थः। अनेकपिड़काचितौ अनेकवर्णपिड़काव्याप्तावित्यर्थः।

---

* _ कफाच्छ्वेताविति पाठान्तरम्।

मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति सृक्कस्योभयतो मुखात् ॥ १० ॥
मेदसा घृतमण्डाभौ कण्डूमन्तौ स्थिरौ मृदू ।
अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू ॥ ११ ॥
क्षतजाभौ विदीर्य्यते पाट्येते चाभिघाततः ।
ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ १२ ॥

दन्तमूलगतास्तु—शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशो दन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति ॥ १३ ॥

शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ १४ ॥
दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् ।
दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ १५ ॥
स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ १६ ॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः ॥ १७ ॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते ।
दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते ।
यस्मिन् स सर्व्वजो व्याधिर्महाशौषिरसंज्ञकः ॥ १८ ॥

अयमसाध्यो ज्ञेयः । रक्तोपसृष्टौ रक्तजव्याधियुक्तौ, शोणितप्रभौ रक्तच्छायौ । मांसदुष्टावित्यादि । जन्तवः क्रिमयः, अत्र अस्मिन्, मूर्च्छन्ति भवन्ति । उभयतः सृक्कभागयोरित्यर्थः । सृक्क ओष्ठप्रान्तः । मेदसा दूषिताविति शेषः । घृतमण्डो घृतस्योपर्य्यच्छभागः । स्थिरौ अचलौ । क्षतजाभौ रक्तच्छायौ, विदीर्य्येते विदारणयुक्तौ भवतः । पाट्येते द्विधा भिद्येते इव । ग्रथितौ ग्रन्थियुक्तौ । ओष्ठप्रकोपे वातजे शुद्धो वातः कारणं, अभिघातजे तु कफरक्तसहित इति परस्परं भेदः ॥ ५—१२ ॥

दन्तमूलगतास्त्वित्यादि । तेषां प्रत्येकं लक्षणमाह—शोणितमित्यादि । दन्तवेष्टेभ्यो दन्तमांसेभ्यः । शीर्य्यन्ते गलन्ति । दन्तयोरित्यादि । दन्तयोरिति द्विवचनात् द्वयोः । तालु चाप्यवदीर्य्यत इति चकारेण दन्ताश्चावदीर्य्यन्ते ओष्ठावपि च । सर्व्वजः सर्व्वदोषेभ्य जातः । अयं सुश्रुतात्रात्र मारयति ।

दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ १९ ॥
वेष्टेषु दाहः पाकश्च तेभ्यो दन्ताश्चलन्ति च ।
आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ।
यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतो गदः ॥ २० ॥
घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
भवन्ति च चला दन्ताः स वैदर्भोऽभिघातजः ॥ २१ ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
वर्द्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥ २२ ॥
हान्वये पश्चिमे दन्ते महाञ्छोथो महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ २३ ॥
दन्तमूलागता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २४ ॥

दन्तगतास्तु—दालनः क्रिमिदन्तको दन्तहर्षो भञ्जनकः शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति ॥ २५ ॥

दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः ।
दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ २६ ॥
कृष्णश्छिद्री * चलः स्रावी ससंरम्भो महारुजः ।
अनिमित्तरुजो वाताद् विज्ञेयः क्रिमिदन्तकः ॥ २७ ॥

दन्तमांसानीत्यादि । ष्ठीवति चाप्यसृगिति रोगी लोहितं थूत्करोतीत्यर्थः । वेष्टेषु दन्तवेष्टनमांसेषु । तेभ्यो वेष्टेभ्यः । आघट्टिताः प्रचालिताः । घृष्टेष्वित्यादि । संरम्भः अत्र श्वयथुः । मारुतेनेत्यादि । जाते रुक् च प्रशाम्यतीति व्याधिप्रभावात् । हान्वय इत्यादि । हान्वये हनुसम्भवे । दन्तमूलगता इत्यादि । यथेरिता इति यथा कथिताः ॥ १३—२४ ॥

दन्तगतान् रोगानाह —दन्तगतास्त्वित्यादि । तेषां प्रत्येकं लक्षणमाह—दाल्यन्ते इत्यादि । दाल्यन्ते विदार्य्यन्ते । सदागतिनिमित्तजः सदागतिर्वातः, तन्निमित्तजः ; असाध्योऽयं व्याधिः । कृष्ण इत्यादि । कृष्णः कृष्णदन्तकः, छिद्री सच्छिद्रदन्तकः क्रिमिकृतच्छिद्रवान् । चलश्चलदन्तः ।

* कृष्णच्छिद्र इति पाठान्तरम् ।

दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च।
यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात्॥ २८॥
वक्त्रं वक्रं भवेद् यस्मिन् दन्तभङ्गश्च तीव्ररुक्।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः॥ २९॥
शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै।
सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा॥ ३०॥
दलन्ति दन्तवल्कानि यदा शर्करया सह।
ज्ञेया कपालिका सैव दशनानां विनाशिनी॥ ३१॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः॥ ३२॥
वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः।
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः॥ ३३॥

जिह्वागतास्तु—कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका चेति॥ ३४॥

जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा।
पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च।
कफेन गुर्वी बहुला चिता च मांसोद्गमैः शाल्मलिकण्टकाभैः॥ ३५॥
जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः।
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्॥ ३६॥

संरम्भः श्वयथुः। वक्त्रमित्यादि। असाध्योऽयं व्याधिः। शर्करेत्यादि। शर्करा कर्परस्य सूक्ष्मखण्डः। गुणघ्नी शुक्लादिगुणहरणशीला। दलन्तीत्यादि दलन्ति स्फुटन्ति, दन्तवल्कानि दन्तत्वचः। य इत्यादि। असाध्योऽयं व्याधिः। तैस्तैरुच्चैर्व्याहरणकठिनभक्षणजृम्भणादिभिः। विसंहतो विघट्टितः। हनुमोक्षव्याधिरपि दन्तस्थानसामीप्यात् दन्तपीडाकरत्वात् दन्तरोग इति व्यपदिश्यते॥ २५—३३॥

जिह्वागतास्त्वित्यादि। तेषां प्रत्येकं लक्षणमाह—जिह्वानिलेनेत्यादि। शाको वृक्षविशेषो महाखरपत्रलक्षणः। छदनं पत्रम्। पित्तेनेत्यादि। चिता व्याप्ता। बहुला स्थूला। मांसोद्गमैः मांसाङ्कुरैः। चिता व्याप्ता। जिह्वातल इत्यादि। प्रगाढः प्रकर्षेण दारुणः। कफरक्तमूर्त्तित्वेन कफरक्तयोः प्राधान्यं, जिह्वास्तम्भेन तु वायुरप्यस्ति। मूले पाकेन तु पित्तमप्यस्ति। अतएव

जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः।
प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति॥ ३७॥

तालुगतास्तु—गलशुण्डिका तुण्डिकेर्य्यध्रुषो मांसकच्छपोऽर्व्वुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति॥ ३८॥

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत् संप्रदिष्टो व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना॥ ३९॥
शोफः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु॥ ४०॥
शोफः स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः॥ ४१॥
कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्माऽरक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात्॥ ४२॥
पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्व्वुदं प्रोक्तलिङ्गम्॥ ४३॥
दुष्टं मांसं श्लेष्मणा नीरुजश्च ताल्वन्तःस्थं मांससङ्घातमाहुः॥ ४४॥
नीरुक् स्थायी कोलमात्रः कफात् स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥ ४५॥
शोषोऽत्यर्थं दीर्य्यते चापि तालुः श्वासो वातात् तालुशोषः सपित्तात्॥ ४६॥
पित्तं कुर्य्यात् पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति॥ ४७॥

कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूकमधिजिह्वो वलयो वलास एकवृन्दो वृन्दः शतघ्नी गिलायुर्गलविद्रधिर्गलौघः स्वरघ्नो मांसतानो विदारो चेति॥ ४८॥

त्रिदोषत्वेनासाध्यत्वमपि, दुरुपक्रमत्वात्। जिह्वाग्ररूप इत्यादि। जिह्वामुन्नम्य ऊर्द्ध्वीकृत्य जातः उत्पन्नः; एतेन जिह्वाया अधोभवतीत्युक्तम्। कफरक्तयोनिः श्लेष्मरक्तकारणः॥ ३४—३७॥

तालुगतास्त्वित्यादि। तेषां प्रत्येकं लक्षणमाह—श्लेष्मासृग्भ्यामित्यादि। कण्ठशुण्डी गलशुण्डीत्यर्थः। शोफ इत्यादि। तोददाहप्रपाकीति तोददाहप्रपाकयुक्त इति शेषः। प्रागुक्ताभ्यां श्लेष्मासृग्भ्याम्। तुण्डिकेरी कार्पासिका, तत्फलानुकारी व्याधिरयम्। कूर्म्मेत्यादि। कूर्म्मोत्सन्नः कूर्म्मवदुन्नतः। अशीघ्रजन्मा मन्दानुसारी। अरक्तः पाण्डुरः। पद्माकारं पद्मकर्णिकाकारम्। प्रोक्तलिङ्गं यथोक्तरक्तार्व्वुदलिङ्गम्। असाध्योऽयं व्याधिः। दुष्टमित्यादि। स्थायी स्थिरः। पुप्पुट इत्यत्र तालुशब्दो लुप्तो द्रष्टव्यः, तेन तालुपुप्पुट इत्यर्थः। शोषोऽत्यर्थमित्यादि। एनमिति एनं पाकम्॥ ३८—४७॥

कण्ठगतास्त्वित्यादि। एकवृन्दो वृन्द इति एकवृन्द एव दोषविशेषानुगमेनावस्थान्तरं प्राप्तो वृन्दत्वं प्रतिपद्यते, अतो सूत्रोक्ता सप्तदशसंख्या न विरुध्यत इति जेज्झटाचार्य्यः। गयदासाचार्य्यस्तु वृन्द इति पाठं कल्पितमेव मन्यते। अन्ये तु वृन्दमुदाहरन्तीत्यत्र छन्दोऽनुरोधादेकवृन्द एव

गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम्।
प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी॥ ४९॥
जिह्वां समन्ताद् भृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः।
तां रोहिणीं वातकृतां वदन्ति वातात्मकोपद्रवगाढयुक्ताम्॥ ५०॥
क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्ततः स्यात्॥ ५१॥
स्रोतोनिरोधिन्यपि मन्दपाका गुर्व्वी स्थिरा सा कफसम्भवा वै॥ ५२॥
गम्भीरपाकाप्रतिवारवीर्य्या त्रिदोषलिङ्गा त्रयसम्भवा स्यात्॥ ५३॥
स्फोटाचिता पित्तसमानलिङ्गाऽसाध्या प्रदिष्टा रुधिरात्मिकेयम्॥ ५४॥
कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः।
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालकमिति ब्रुवन्ति॥ ५५॥
जिह्वाग्ररूपः श्वयथुः कफात् तु जिह्वाप्रबन्धोपरि रक्तमिश्रः।
ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्ज्जयेदागतपाकमेनम्॥ ५६॥
बलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य।
तं सर्व्वथैवाप्रतिवारवीर्य्यं विवर्ज्जनीयं वलयं वदन्ति॥ ५७॥
गले च शोफं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम्।
मर्म्मच्छिदं दुस्तरमेतदाहुर्बलाससंज्ञं निपुणा विकारम्॥ ५८॥
वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च।
नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः॥ ९॥

वृन्दशब्देनोक्तः। तेषां प्रत्येकं लक्षणमाह—गलेऽनिल इत्यादि। पृथगिति तिस्रः। समस्ता इति एका, शोणितमित्येका एवं पञ्च। मूर्च्छितौ वृद्धौ। असुहरा प्राणहरा। गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसञ्च तथैव शोणितम्। गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून् व्याधिरियन्तु रोहिणी इत्यपि पाठान्तरम्। वातपित्तकफसम्बन्धिक्रियापदं न विद्यते इति पाठ एवेति निबन्धकाराः। त्रिदोषजा असाध्याः। उक्तञ्च—"वातात् पित्तात् कफात् क्षिप्रो रक्ताद्रोहिण्य ईरिताः। अन्त्ये सद्यो मारयत आद्यास्तिस्रः क्रियां विना" इति। जिह्वामित्यादि। जिह्वां समन्तादिति जिह्वां व्याप्य सम्भवतीत्यर्थः। अप्रतिवारवीर्य्या दुर्निवारशक्तिरित्यर्थः। कोलेत्यादि। कण्टकशूकभूतः कण्टक इव शूकः कण्टकशूकः, तद्वत्त्वं भूतः प्राप्तः। अतएव पिशिताङ्कुराचितत्वात् शालूकाकारत्वमस्य। जिह्वेत्यादि। जिह्वाप्रबन्धस्योपरि जिह्वामूलस्योपरिष्टादित्यर्थः। आगतपाकत्वेन पित्तमप्यस्तीति। बलास एवेत्यादि। बलासः श्लेष्मा। गल इत्यादि। उपपन्नं सहितम्। निपुणाः धीमन्तः। वृत्तोन्नत इत्यादि। सदाहः मन्ददाहः। अपाकी ईषत्पाकी। बलासक्षतजप्रसूतः श्लेष्मरक्तजातः। भेदेन वृन्दत्वं प्रतिपाद्यते। एतेन एकवृन्दो

समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति।
तञ्चापि पित्तक्षतजप्रकोपाद् विद्यात् सतोदं पवनात्मकन्तु * ॥ ६० ॥
वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः।
नानारुजोच्छ्रायकरी त्रिदोषाज् ज्ञेया शतघ्नीव शतघ्न्यसाध्या ॥ ६१ ॥
ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्पलक् स्यात् कफरक्तमूर्त्तिः।
संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ ६२ ॥
सर्व्वं गलं व्याप्य समुत्थितो यः शोफो रुजो यत्र च सन्ति सर्व्वाः।
स सर्व्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य ॥ ६३ ॥
शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्त्यतेऽसौ ॥ ६४ ॥
योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः।
कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ ६५ ॥
प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण।
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्व्वकृतो विकारः ॥ ६६ ॥
सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसम्।
पित्तेन विद्याद् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥ ६७ ॥

वृन्दश्च द्वावप्येकात्मकौ मतौ। एवञ्चैते कण्ठरोगाः सप्तदशेति। पञ्जिकायां पुनरादावेव वृन्द इति पाठः ॥ ४८—६० ॥

वर्त्तिर्घनेत्यादि। "अयःकण्टकसञ्छन्ना शतघ्नी महती शिला"। ग्रन्थिरित्यादि। कफरक्तमूर्त्तिः कफरक्तकारणः। सक्तमिव लग्नमिव। अशनं भोजनम्। सर्व्वमित्यादि। तस्यैव तुल्यः खलु सर्व्वजस्येति तस्यैव सान्निपातिकविद्रधेः सदृश इत्यर्थः। शोफ इत्यादि। अतिप्रताम्यन् अत्यर्थं प्रकर्षेण ताम्यन् तमः पश्यन्। श्वसिति निःश्वसितीत्यर्थः। प्रसक्तं निरन्तरम्। कफोपदिग्धेषु श्लेष्मरुद्धेषु। अनिलायनेषु वायुमार्गेषु। श्वसनात् वातात्। प्रतानवानित्यादि। प्रतानवान् विस्तारवान्। अवलम्बी लम्बनशीलः। प्राणप्रणुत् प्राणप्रेरकः। सदाहेत्यादि। पूतिविशीर्णमांसं दुर्गन्धिशटितमांसम्। पार्श्वे विशेषात् स तु येन शेते इति येनैव पार्श्वेन विशेषात् शेते तेनैव पार्श्वेन विदारी विशेषेण भवति। अन्यत्रापि अस्याः सम्भवः, सामान्यतो न निवार्य्यते ॥ ६१—६७ ॥

---

* पवनात्मजन्तु इति वा पाठः।

सर्व्वसरास्तु वातपित्तकफशोणितनिमित्ताः ॥ ६८ ॥
स्फोटः सतोदर्वेदनं समन्ताद् यस्याचितं सर्व्वसरः स वातात् ॥ ६९ ॥
रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितं वापि स पित्तकोपात् ॥ ७० ॥
कण्डूयुतैरल्परुजैः सवर्णैर्यस्याचितश्चापि स वै कफेन ॥ ७१ ॥
रक्तेन पित्तोदित एक-एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञः ॥ ७२ ॥

इति सुश्रुतसंहितायां निदानस्थाने मुखरोगनिदानं नाम षोड़शोऽध्यायः ॥ १६ ॥

निदानस्थानं समाप्तम् ॥ २ ॥

सर्व्वसरास्त्वित्यादि। वातनिमित्तपित्तनिमित्तरक्तनिमित्तश्चैक एवेति। वातादिनिमित्तास्त्रय एव सर्व्वसराः। सर्व्वस्मिन् मुखे ये भवन्ति ते सर्व्वसराः। स्फोटैरित्यादि। रक्तैः स्फोटैरिति शेषः। कण्डूयुतैरित्यादि स्फोटैरिति शेषः। रक्तेनेत्यादि। रक्तेन कृत्वा योऽसौ सर्व्वसरः। कैश्चित् आचार्य्यैः, मुखपाकसंज्ञः प्रदिष्टः कथितः। स च पित्तोदित एक एव, न चत्वारः सर्व्वसराः, किन्तु त्रय एव। एवमेते पञ्चषष्टिर्मुखरोगाः सप्तस्वायतनेष्विति ॥ ६८—७२ ॥

इति सौश्रुते निदानस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
मुखरोगनिदानव्याख्यानाम षोड़शोऽध्यायः ॥ १६ ॥

---

निदानस्थानं समाप्तम्।

---

# सुश्रुत-संहिता।

## शारीरस्थानम्।

### प्रथमोऽध्यायः।

अथातः सर्व्वभूतचिन्ताशारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं वहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्॥ २॥

हेतुलक्षणप्रतिपादकान्निदानस्थानादधिगतव्याधिहेतुलक्षणस्य वैद्यस्य चिकित्सायाः अवसरः। चिकित्सा चाधिष्ठानविशेषज्ञानमन्तरेण न सम्भवतीत्यधिष्ठानज्ञापनाय शारीरस्थानमारभ्यते। शारीरस्थानेऽपि प्रतिपाद्ये आदौ सर्व्वशरीरकारणानां भूतानामेव चिन्ता कर्त्तुं युज्यते इत्याह— अथात इत्यादि। सर्व्वाणि भूतानि स्थावरजङ्गमानि, महाभूतानि पृथिव्यादीनि वा, तेषां चिन्ता हेतुस्वलक्षणकार्य्यैश्चिन्तनं—कुत उत्पन्नानि कानि चैषां स्वलक्षणानि कानि कार्य्याणीति चिन्तनं; सैव यस्मिन्नध्यायेऽस्तीति मत्वर्थे पूर्व्ववच्छप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावञ्च प्रतिपाद्य सर्व्वभूतचिन्तेति निष्पाद्यते। सर्व्वभूतचिन्ता च तच्छारीरञ्चेति पश्चात् कर्म्मधारयः। गयी तु सर्व्वभूतचिन्तानाम शारीरमिति पठति॥ १॥

तत्रादौ हेतुचिन्तामाह—सर्व्वभूतानामित्यादि। एवम्भूतमव्यक्तं मूलप्रकृत्यपरपर्य्यायं सर्व्वभूतानां कारणमिति पिण्डार्थः। किंविशिष्टम्? अकारणं न विद्यते कारणं यस्य तदकारणं, अविकृतिरूपं न कस्यचित् कार्य्यमित्यर्थः। स्वरूपविशेषणमाह—सत्त्वरजस्तमोलक्षणं सत्त्वरजस्तमःस्वरूपम्। पुनरपि किम्भूतमित्याह—अष्टरूपमिति। प्रकृतिभावेनैवाव्यक्तं महानहङ्कारः पञ्चतन्मात्राणीत्यष्टौ रूपाणि यस्य तत्तथा। प्रकृतित्वञ्चाष्टानामव्यक्तादीनां सांख्येऽपि प्रतिपादितमस्ति। शिलापुत्रकन्यायेन रूपत्वं रूपित्वञ्चाव्यक्तस्य। अव्यक्तं महानहङ्कारः पञ्चभूतानीत्यष्टौ रूपाणीत्येके। अन्ये तु धर्म्मज्ञानवैराग्यैश्वर्य्याधर्म्माज्ञानावैराग्यानैश्वर्य्याण्यष्टौ रूपाण्याहुः। अपरे तु मनोबुद्ध्यहङ्कारमहाभूतान्याहुः। पुनरपि किम्भूतम्? अखिलस्य जगतः सम्भवहेतुरभिव्यक्तिकारणम्।

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसो भूतादिरिति ॥ ३॥

तत्र वैकारिकादहङ्कारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्म्मेन्द्रियाणि, उभयात्मकं मनः ॥ ४।५ ॥

तत्र सर्व्वभूतानां कारणमित्यनेन कार्य्यकारणयोस्तादात्म्यं दर्शितं, अखिलस्य जगतः सम्भवहेतुरित्यनेन चाभिव्यक्तिहेतुत्वमिति न पौनरुक्तम्। गयी त्वन्यथा व्याख्याति, यथा—सर्व्वभूतानां कारणमित्यस्यैव भाष्यं निर्द्दिशन्नाह—अखिलस्य जगतः सम्भवहेतुरित्यनेनोपादानकारणत्वम् अव्यक्तस्य जगदुत्पत्तौ प्रतिपादितम्। न व्यज्यते स्मेत्यव्यक्तं, प्रकृतिः प्रधानं मूलप्रकृतिरिति यावत् अव्यक्तपर्य्यायाः। तदव्यक्तमेकं शिलापट्टवदविवेच्यावयवं न पुनस्त्रिदण्डवत् विवेच्यावयवम्। क्षेत्रज्ञानां कर्म्मपुरुषाणाम्। अधिष्ठानं शरीरभावाय विषयः। अत्रोपमानमाह—समुद्र इवेत्यादि। उदकभवा औदका नदीनदसरस्तडागादयः। अन्ये त्वौदकभावाः चराचरा मत्स्यपद्मादय इत्याहुः ॥ २ ॥

ननु कथमेकमव्यक्तमनेकधर्म्मणां सर्व्वभूतानां कारणमित्याशङ्क्याव्यक्तात् सर्व्वभूतानामुत्पत्तिक्रममाह—तस्मादित्यादि। तस्मात् क्षेत्रज्ञाधिष्ठितात्। अव्यक्तात् महानिति बुद्धितत्त्वं, तत् तु सत्त्वसमुद्रेकात् निर्म्मलस्फटिकोपलप्रख्यं चिच्छायासंक्रान्तिप्राप्तचैतन्यं पुरुषवन्नानात्मकमध्यवसेयविषयं निश्चितार्थकारणमित्यर्थः। उत्पद्यते व्यक्तीभवति; तल्लिङ्ग एवेति सत्त्वरजस्तमःस्वभाव एव। तल्लिङ्गात् इति सत्त्वरजस्तमःस्वभावात्। महत इति बुद्धितत्त्वात्। तल्लक्षण एवेति सत्त्वरजस्तमःस्वभाव एवेत्यर्थः। अहङ्कारः अभिमानव्यापारलक्षणः। तल्लिङ्गादिति विशेषणेन शुद्धसत्त्वस्वरूपान्महत्तत्त्वान्नाहङ्कारस्योत्पत्तिरिति सूच्यते। तथा च चरकेऽप्यभिहितम्—"शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते। यया भिनत्त्यतिबलं महामोहमयं तमः। सर्व्वभावस्वभावज्ञो यया भवति निःस्पृहः। यया नोपैत्यहङ्कारं नोपास्ते कारणं यया" इत्यादि। वैकारिकादिसंज्ञास्तु पूर्व्वाचार्य्यैः संव्यवहाराय कृताः। तत्र वैकारिकः सात्त्विकः, तैजसो राजसः, भूतादिस्तामसः ॥ ३ ॥

तस्य त्रिविधस्यापि कार्य्यमाह—तत्रेत्यादि। तत्र सात्त्विकादहङ्काराद्राजससहायात् तमोमात्रयाऽनुविद्धादेकादशेन्द्रियाणि, तल्लक्षणानि प्रकाशलक्षणानि, सत्त्वस्य प्रकाशकत्वात्। तान्यहङ्कारादुत्पन्नान्यहङ्कारकार्य्याणीति सांख्ये, वैद्यके तु भौतिकानि। पूर्व्वाणि पञ्च श्रोत्रादीनि बुद्धीन्द्रियाणि बुद्धेराश्रयत्वात्। इतराणि वाक्प्रभृतीनि कर्म्मेन्द्रियाणि कर्म्मण आश्रयत्वात्। तेषामुभयात्मकं बुद्ध्यात्मकं कर्म्मात्मकञ्च मनः, बुद्धीन्द्रियाणां कर्म्मेन्द्रियाणाञ्च मनोऽधिष्ठाना-

भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः। तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्व्विंशतिर्व्याख्याता ॥ ६ ॥

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथासङ्ख्यं वचनादानानन्दविसर्गविहरणानि। अव्यक्तं महानहङ्कारः पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतयः, शेषाः षोड़श विकाराः। स्वः स्वश्चैषां विषयोऽधिभूतम्।

नामेव प्रवृत्तेः। भूतादेरिति तामसादहङ्काराद्राजसहायात्, सत्त्वमात्रयानुविद्धात्तल्लक्षणान्येव मोहादिलक्षणान्येव। तत्रानुद्भूतस्वभावानि बाह्येन्द्रियाग्राह्याणि शब्दादीन्येव तन्मात्राणि, तानि च योगिभिरेव ग्राह्याणि। सा मात्रा यस्मिन् तत् तन्मात्रम्। तेषामित्यादि। तेषां तन्मात्राणाम्। विशेषा इति अनुभवयोग्यैः सुखदुःखमोहरूपैर्धर्म्मैर्व्विशिष्यन्त इति विशेषाः शब्दादयः, तन्मात्राणि त्वविशेषाणि, यतस्तानि पुनरनुभवयोग्यैः सुखदुःखादिभिर्व्विशेष्टुं न शक्यन्ते, सूक्ष्मत्वात्। तेभ्यः पञ्चभ्यः शब्दतन्मात्रादिभ्य एकोत्तरपरिवृद्ध्या व्योमादय उत्पद्यन्ते। तद्-यथा—शब्दतन्मात्राच्छब्दगुणं व्योम, शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुः, शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्राच्छब्दस्पर्शरूपगुणं तेजः, शब्दस्पर्शरूपतन्मात्रसहिताद्रस-तन्मात्राच्छब्दस्पर्शरूपरसगुणा आपः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूप-रसगन्धगुणा पृथिवी। पतञ्जलिमतानुसारिणश्च शब्दादिभ्य एव व्योमादीनामुत्पत्तिमिच्छन्ति। शब्दादीनां व्योमादिमहाभूतगुणानां धर्म्मिणोऽभिन्नत्वेन पृथक्त्वं निरस्यन्नुक्तस्योपसंहारमाह—एवमित्यादि ॥ ४—६ ॥

तत्रेत्यादि। विषया ग्राह्याः वचनादानानन्दविसर्गविहरणानीत्यत्र विषया इति सम्बध्यते, तेनोच्यते यत्तद् वचनं वक्तव्यमुच्यते, एवं कर्म्मप्रत्ययान्तत्वादादानमादातव्यम्, आनन्द आनन्दनीयम्, विसर्गो विसर्ज्जितव्यम्, विहरणं विहर्त्तव्यं स्थानम्।

उक्तायास्तत्त्वचतुर्व्विंशतेरुक्तमेव धर्म्मान्तरं क्वचित् किञ्चिन्निदर्शयन्नाह—अव्यक्तमित्यादि। प्रकृतय इति अपरेषां कारणभूताः, अव्यक्तमिति विच्छिद्य पाठः केवलहेतुभावेनाव्यक्तं प्रकृतिरेवेति बोधनार्थम्। तन्मात्राणि चेति चकारः प्रकृतयश्चेत्यत्र सम्बन्धनीयः। तेन महदादयः सह कार्य्यत्वेन विकृतयोऽपि। शेषा इति एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोड़श विकाराः कार्य्याणीत्यर्थः।

अस्मिंश्चतुर्व्विंशतिके तत्त्वराशौ प्रकाशकत्वेन बुद्ध्यादयः प्रधानभूताः, अतस्ते यत्रस्थं प्रकाश्यं यत्र स्थिता यदनुग्रहेण च प्रकाशयन्ति, तत् प्रकारत्रयमधिभूतादिभेदेनाह - स्वः स्व इत्यादि। एषां बुद्ध्यहङ्कारश्रोत्रादिबुद्धीन्द्रियाणां वागादिकर्म्मेन्द्रियाणां मनसश्च स्वः स्व आत्मीय आत्मीयो विषयोऽध्यवसेयोऽभिमन्तव्यः स्वकल्पनीयादिलक्षणः। अधिभूतं भूतेष्वधि, भूतानि महाभूतानि प्राणिनो वा। एतेन बुद्ध्यादेरध्यवसायादिव्यापारस्याध्यवसेयादिविषयो भूतेष्विति प्रतिपादितम्। केचित् स्वः स्व एषां विषयोऽधिभूतसंज्ञ इति व्याख्यानयन्ति।

स्वयमध्यात्मं, अधिदैवतन्तु—बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्य्यश्चक्षुषोः, रसनस्यापः, पृथिवी घ्राणस्य, वचसोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति ॥७॥

तत्र सर्व्व एवाचेतन एष वर्गः; पुरुषः पञ्चविंशतितमः कार्य्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति। क्षीरादींश्च हेतूनुदाहरन्ति ॥ ८ ॥

अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्म्यवैधर्म्म्ये व्याख्यास्यामः; तद्यथा—उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभावपि नित्यौ, उभावप्यपरौ

स्वयमित्यादि। एतानि बुद्ध्यादीनि त्रयोदश स्वयमध्यात्मम्। आत्मन्यधि अध्यात्मं, आत्मशब्दोऽत्र स्वशरीरवचनः, तेन स्वशरीरे बुद्ध्यादिकमात्मनः परमात्मपर्य्यायस्य वा योग्यो विषयोऽध्यात्मम्। अन्ये तु बुद्ध्यादिकं स्वयमध्यात्मसंज्ञमिति व्याख्यानयन्ति। अधिदैवतमिति देवतानमधिकृतत्वमधिदैवतम्। तदेव बुद्ध्यादिषु प्रकटीकरोति—अथ बुद्धेर्ब्रह्मेत्यादि। या या देवता विश्वरूपस्य विष्णोरवयवादुत्पन्ना सा सा तस्यावयवस्याधिदैवत्वमापन्ना बोद्धव्या। अयञ्चाधिभूतादिभावो वेदान्तेऽपि वर्णितः। यथा—बुद्धिरध्यात्मं, बोद्धव्यमधिभूतं, ब्रह्माधिदैवतं; अहङ्कारोऽध्यात्मं, अहङ्कर्त्तव्यमधिभूतं, रुद्रोऽधिदैवतं; मनोऽध्यात्मं, मन्तव्यमधिभूतं, चन्द्रोऽधिदैवतं; श्रोत्रमध्यात्मं, श्रोतव्यमधिभूतं, दिशोऽधिदैवतं; त्वगध्यात्मं, स्पर्शनीयमधिभूतं, वायुरधिदैवतं; चक्षुरध्यात्मं, द्रष्टव्यमधिभूतं, सूर्य्योऽधिदैवतं; रसनाध्यात्मं, रसनीयमधिभूतं, वरुणोऽधिदैवतं घ्राणमध्यात्मं, घ्रातव्यमधिभूतं, भूमिरधिदैवतं; वागध्यात्मं, वक्तव्यमधिभूतं, अग्निरधिदैवतं; हस्तावध्यात्मं, आदातव्यमधिभूतम्, इन्द्रोऽधिदैवतं; पादावध्यात्मं, गन्तव्यमधिभूतं, विष्णुरधिदैवतं; पायुरध्यात्मं, विसर्ज्जनीयमधिभूतं, मित्रोऽधिदैवतं; उपस्थोऽध्यात्मं; आनन्दनीयमधिभूतं, प्रजापतिरधिदैवतमित्यादि। तत्र सर्व्व एवेत्यादि। सर्व्व एवैष वर्गोऽव्यक्तादिकोऽचेतनत्वेन तत्कार्य्यस्य महदादेरचेतनत्वात्। पुरुषः पञ्चविंशतितमः कार्य्यकारणसंयुक्त इति कार्य्येण महदादिविकारगणेन, कारणेन मूलप्रकृत्या संयुक्तः संयोगी। तस्य कैवल्यार्थं मोक्षार्थं, प्रधानस्य मूलप्रकृतेः, प्रवृत्तिमुपदिशन्त्याचार्य्याः। कथमचेतनः प्रवर्त्तते इत्याह—क्षीरादीनित्यादि। यथा क्षीरमज्ञं वत्सविवृद्ध्यर्थं प्रवर्त्तते। आदिशब्दाच्च यथैकान्ते कमनीयकामिनीसुरतमहोत्सवे तत्सुखातिशयोत्पादनार्थमसंज्ञं रेतः प्रवर्त्तते, तद्वदित्यर्थः ॥ ७। ८ ॥

अत इत्यादि। प्रकृतिरव्यक्तं, पुरुषः आत्मा, साधर्म्म्यं समानो धर्म्मः, वैधर्म्म्यं विसदृशो धर्म्मः, ते व्याख्यास्यामः कथयिष्यामः। उभावप्यलिङ्गौ इति न विद्यते लिङ्गं ययोस्तावलिङ्गौ, नित्याविति उभावपि लयं क्वचिदपि न गच्छत इत्यर्थः। न विद्यतेऽपरो याभ्यां तौ अपरौ,

उभौ च सर्व्वगताविति। एका तु प्रकृतिरचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति, वहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अवीजधर्म्माणोऽप्रसवधर्म्माणो मध्यस्थधर्म्माणश्चेति ॥ ९ । १० ॥

तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व्वं एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति, तदञ्जनत्वात् तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते ॥ ११ ॥

यतस्तावेव प्रकृतिपुरुषौ महदादिभ्यः परौ। सर्व्वगतौ सर्व्वं व्याप्य स्थितौ। साधर्म्म्यमुक्त्वा वैधर्म्म्यमाह—एकेत्यादि। तयोर्मध्ये एका प्रकृतिरव्यक्तापरपर्य्याया, सा च त्रिगुणा सत्त्वरजस्तमोगुणा। तेषां गुणानां साम्यावस्थायां स्थिता सर्व्वेषां महदादिविकाराणां वीजभावेनावस्थिता वीजधर्म्मिणी इत्युच्यते। यद्वी तु संहारे भूतेन्द्रियतन्मात्राहङ्कारमहदादीनामाधारभूतेति वीजधर्म्मिणी। सैव सिसृक्षुणा विभुना पुरुषेण सार्द्धं क्षोभमागम्य साम्यावस्थातः प्रच्युता महदहङ्कारादिक्रमेण चराचरस्य जगतः प्रसविलीत्वात् प्रसवधर्म्मिणी इत्युच्यते। अमध्यस्थधर्म्मिणी इति सत्त्वादिगुणराशितया सुखादिरूपत्वात्। सुखी हि सुखमभिलिप्सन् दुःखी दुःखं विद्विषन् अमध्यस्थो भवति। प्रकृतिश्च सत्त्वादिरूपा, ततो न मध्यस्था। वहव इति युगपन्मरणासम्भवादनेकपुरुषाः; पुरुषशब्देन महदादिकृतं सूक्ष्मं लिङ्गशरीरमुच्यते, तच्च योगिनामेव दृश्यम्, तत्र पुरौ शेरते इति पुरुषाः। अगुणा इति अविद्यमानसत्त्वादिगुणाः। अवीजधर्म्माण इति महदादीनां महाप्रलये प्रकृताविव तेष्वनवस्थानात्। मध्यस्थधर्म्माण इति प्रीत्यप्रीतिविषादाद्ययोगेनेच्छाद्वेषशून्यत्वात्। तदुक्तं साङ्ख्ये—"तस्मात् तु विपर्य्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थं द्रष्टृत्वमकर्त्तृभावश्च" इति ॥ ९ । १० ॥

इदानीमुक्तमेव तदुपसंहरन्नाह—तत्रेत्यादि। कारणस्य प्रकृतेः अनुरूपं सदृशं कार्य्यं महदादिकम्। विशेषाः प्रकारा महदादिकाः। संयुक्तस्य पञ्चविंशतितमस्य पुरुषस्यापि सत्त्वादिगुणत्वं दर्शयन्नाह—तदञ्जनत्वादित्यादि। तेषां सत्त्वरजस्तमसां अञ्जनं लक्षणं व्यक्तिर्वा येषु ते तदञ्जनाः पुरुषाः सत्त्वादिलक्षणा इत्यर्थः, तेषां भावस्तत्त्वं, तस्मात्तदेव। कुत इत्याह—तन्मयत्वादिति सत्त्वादिमयत्वात्। सत्त्वादिमयत्वं पुनः पुरुषाणां सत्त्वादिरूपे महदादौ प्रतिविम्बनात्; यथा—तडागोदके प्रतिविम्बितो विधुस्तडागोदकप्रकम्पनेन प्रकम्पनात्मकः कथ्यते, एवं सत्त्वादिरूपे महदादौ प्रतिविम्बिताः पुरुषाः सत्त्वादिमया इव भवन्ति, न तु वास्तव सत्त्वादिमयत्वं तादृशाच्च तन्मयत्वात् तल्लक्षणास्तद्गुणाः सुखिनो दुःखिनो मूढाश्च पुरुषा भवन्ति। यद्वी तु तैः सत्त्वादिभिरञ्जनं व्यक्तिर्यस्य महदादेस्तत्तदञ्जनं, तदस्यास्तीति मत्वर्थीयोऽकारप्रत्यय इति, तत्सम्बन्धात् पुरुषस्य। सत्त्वादिभिरेवाञ्जनं महदादीनां कुत इत्याह—तन्मयत्वात्, सत्त्वादिप्रकृतिकारणत्वात्। तेषां तदञ्जनत्वञ्च निर्व्विकारस्यापि विकारित्वसंयोगात्; यथा सन्ध्यारागगैरिकरनिकरसंयोगादरुणगगनतलोपलम्भ इति। पूर्व्वोक्तस्य सर्व्वस्याप्येकीयमतत्वं दर्शयन्नाह—इत्येके इत्यादि ॥ ११ ॥

वैद्यके तु—

**स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा।**
**परिणामञ्च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥**

स्वमतं दर्शयन्नाह वैद्यके त्वित्यादि। अत्रैके स्वभाववादिनः स्वभावं सर्व्वस्य प्रकृतिं कारणमूचुः। तथाहि—"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, चित्रं विचित्रं मृगपक्षिणाञ्च। माधुर्य्यमिक्षौ कटुतां मरीचे, स्वभावतः सर्व्वमिदं प्रवृत्तम्" इति। अन्ये आचार्य्या ईश्वरं प्रकृतिमूचुः। ईश्वर एवोर्व्वीपर्व्वततर्व्वादिजन्तूनां स्वर्गनरकादेश्च कारणम्। उक्तञ्च "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव च"— इति। काल एव जगतः सृष्टिस्थितिप्रलयनिमित्तमिति कालकारणिकाः। उक्तञ्च ज्योतिःशास्त्रविदा श्रीपतिना—"प्रभवविरतिमध्यज्ञानवन्ध्या नितान्तं विदितपरमतत्त्वा यत्र ते योगिनोऽपि। तमहमिह निमित्तं विश्वजन्मात्ययानामनुमितमभिवन्दे प्रग्रहैः कालमीशम्"— इति। यो यतो भवति तत्तन्निमित्तमिति यादृच्छिकाः; यथा तृणारणिनिमित्तो वह्निरिति, पूर्व्वजन्मार्ज्जितौ धर्म्माधर्म्मौ नियतिः, सैव सर्व्वस्य कारणमिति नियतिवादिनः। प्रधानमेव महदहङ्कारादिरूपतया परिणतं सर्व्वस्य निमित्तमिति परिणामवादिनः। एतत् सर्व्वमत्रानुमतं, सर्व्ववेदपारिषदत्वादायुर्व्वेदस्य। सुश्रुताचार्य्येणापि स्वभावादिभेदभिन्नायाः षड्विधाया अपि प्रकृतेरुदाहरणान्यभिहितानि। तत्र स्वभावस्य तावत् कारणत्वमाह "अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते" पुनश्च—"सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ। तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः"—इति। पुनश्चोक्तं "धातुषु क्षीयमाणेषु वर्द्धेते द्वावेमौ सदा। स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः" इति। पुनरप्याह—"निद्राहेतुस्तमःसत्त्वं बोधने हेतुरुच्यते। स्वभाव एव वा हेतुर्गरीयानेव कीर्त्त्यते" इति। अन्यत्राप्युक्तं—"स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः। स्वभावाद् गुरवो माषाः वराहमहिषादयः"— इति। ईश्वरोऽपि वह्निरूपो जीवितादेः कारणत्वेनोदाहृतः। तथाहि—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते। अग्निमूलं बलं पुंसां बलमूलं हि जीवितम्"— इति। कालस्तु शीतोष्णलक्षणः; उक्तञ्च महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः। काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः"—इति। अयञ्च ऋतुचर्य्याध्याये दोषाणां सञ्चयप्रकोपोपशमद्वारेण हेतुरुक्तः। यदृच्छा पुनरलक्षित आकस्मिकपदार्थाविर्भावः। उक्तञ्च—"यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद् विधिज्ञः" इति। नियतिरत्रापि धर्म्माधर्म्मौ, तद्धेतुत्वमाह— ब्रह्मस्त्रीसज्जनबधपरस्वहरणादिभिः। कर्म्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम्॥" "कर्म्मजा व्याधयः केचित्" इति चोक्तम्। परिणामस्य हेतुत्वमाह— "जाठराग्नेस्तु संयोगात् यदुदेति रसान्तरम्। रसानां परिणामान्ते स विपाक इति स्मृतः॥" "ता एवौषध्यः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च" "सम्यक् परिणतस्याहारस्य सारो रसः"। "एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति" इति। इत्यमेताः षट् प्रकृतयो वैद्यकानुगता दर्शिताः। ननु स्वभावादयः षट् पदार्थाः प्रकृतेरष्टरूपायाः

तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥ १२ ॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा ।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते ॥ १३ ॥

पर्य्यायाः स्युरथवान्यार्थाभिधायित्वेन भिन्नार्थाः, तत्र भिन्नार्थत्वेऽपि विकल्पद्वयम्। किमेतैः स्वभावादिभिर्मिलित्वाथः किञ्चित् स्वभावेन किञ्चिदीश्वरेण इत्येवंप्रकारेण मिलित्वा जगदारभ्यते ? उत एते स्वभावादयः पृथक् पृथगेव विश्वजननसमर्थाः ? इत्यनेकधा विकल्पमुत्पाद्य जंजुझटा चार्य्यैणेश्वरं विहाय स्वभावादयः प्रकृतेरष्टरूपायाः पर्य्यायत्वेनाभिहिताः। यत् वैद्यके स्वभावमीश्वरं कालमित्यादिवाक्येन विपुलदर्शिभिः स्वभावादीनां भिन्नमेव प्रकृतित्वं प्रतिपादितं, तत्तथास्वरूपेण तेषाम भासनात्। परमार्थतस्तु गुणत्रयात्मिका प्रकृतिरेव कारणम्। यतः स्वभावादयश्चत्वारः प्रकृतिपरिणामस्य धर्म्मविशेषतया प्रकृतावेवान्तर्भवन्ति। तथाहि स्वभावस्तावत् सत्त्वरजस्तमसां तद्विकाराणां पृथिव्यादिमहाभूतानाञ्च परिणामस्य ईदृशो विशेष इति प्रकृतिपरिणामादन्यो न भवति; नियतेरपि पूर्व्वकृतमदसत्कर्म्मरूपाया रजोगुणपरिणामलक्षणत्वेन न प्रकृतेरन्यत्वम्; कालोऽपि चन्द्रार्कादिगतिक्रियालक्षणः, तत्र तु महाभूतानां परिणामविशेषात् शीतोष्णादयो भवन्ति. तदुक्त "महाभूतविशेषास्तु शीतोष्णद्वयभेदतः। काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः" इति। क्रियात्वेन रजोगुणपरिणामत्वात् महाभूतपरिणामविशेषत्वाच्च न कालस्य प्रकृतेरन्यत्वम्। ईश्वरश्च पञ्चविंशतितमः पुरुषः प्रकृतेः क्षोभकतया कारण त्वेनोदाहृत एव; यदृच्छा च कादाचित्कत्वाद् भूतपरिणामविशेषान्नान्या। किञ्चास्मिन् शास्त्रे प्रकृतिपरिणामात्मकं विश्व पठ्यते। तथाहि—सात्त्विकं कायलक्षणं, राजसं कायलक्षणं, तथा सत्त्वबहुलमाकाशमित्यादि। गयी त्वन्यथा व्याख्याति; यथा—वैद्यके तु विपुलदर्शिनः स्वभावादीनां षण्णां प्रकृतित्वं प्रतिपादयन्ति; ते च स्वभावादयः समुच्चयेन जगदुत्पत्तौ कारणभूताः; तत्रापि प्रकृतिपरिणामस्योपादानकारणत्वं स्वभावादीनाञ्च पञ्चानां निमित्तकारणत्व मिति। कीयमतेन कारणानुरूप कार्य्यमित्यादिवाक्यात् कारणमयत्वं कार्य्यस्य प्रतिपाद्य स्वमतेऽपि कारणमयत्वं प्रतिपादयन्नाह -तन्मयानीत्यादि। तन्मयानीति अवकाशचलोष्णद्रवखरस्वभावादिधर्म्मविशेषाक्रान्तप्रकृतिपरिणाममयानि भूतान्याकाशादीनि, तद्गुणान्येवेति सत्त्वरजस्तमोगुणान्येवेत्यर्थः। सत्त्वबहुलमाकाशमित्याद्युक्तत्वात्। गयी तु ततो जातानि भूतानीति पठित्वा व्याख्याति ततः स्वभावादेः निमित्तकारणत्वात् प्रकृतिपरिणामाच्चोपादानकारणानि भूतान्याकाशादीनि तद्गुणानि कारणगुणानि। तैश्चेत्यादि। तैराकाशादिभिर्भूतैः, तल्लक्षणः भूतलक्षणः, कृत्स्नः समस्तः, भूतग्राम स्थावरजङ्गमात्मकः, व्यजन्यत विविधो जनितः। भूतानां पृथिव्यादीनां पुनर्लक्षणं स्थिरगुरुकठिनत्वमित्यादि, तल्लक्षणश्च स्थावरजङ्गमात्मको भूतग्रामः। तस [illegible] परस्परोपकार्य्योपकारकत्वेन व्यवस्थितस्य, उपयोगः

यतोऽभिहितं तत्सम्भवद्रव्यसमूहो भूतादिरुक्तः, भौतिकानि चेन्द्रियाण्यायुर्व्वेदे वर्ण्यन्ते, तथेन्द्रियार्थाः ॥ १४ ॥

भवति चात्र।

इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥ १५ ॥

न चायुर्व्वेदशास्त्रेषूपदिश्यन्ते सर्व्वगताः क्षेत्रज्ञा नित्याश्च। असर्व्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषव्यापकान् हेतूनुदाहरन्ति ॥ १६ ॥

प्रयोजनम्, अभिहितः कथितः, चिकित्सां प्रति रोगापनयनं लक्षीकृत्य सर्व्वदा नित्यगे चावस्थिके काले। कुतः? यस्मात् तेभ्यः पञ्चमहाभूतारब्धभूतग्रामेभ्यः परं चिकित्साचिन्ता नास्ति। तदुक्तमादेरध्याये—"तत्रास्मिन् पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। तस्मिन् क्रिया, सोऽधिष्ठानं, कस्मात्? लोकस्य द्वैविध्यात्, लोको हि द्विविधः—स्थावरो जङ्गमश्च, तस्मिन् पुरुषः प्रधानं तस्योपकरणमन्यत्" इति। तेन पञ्चमहाभूतारब्धस्यैव भूतग्रामस्य चिकित्सोपकरणत्वम्। अतो भूतेभ्योऽपि परं यदव्यक्तादि तत्र चिन्ता नास्ति ॥ १२। १३ ॥

अयमेवार्थोऽन्यत्रापि निर्दिष्ट इति दर्शयन्नाह—यत इत्यादि। एतत् सूत्रं वीजाध्याये व्याख्यातम्, अत्रापि किञ्चित् शिष्यबोधार्थं व्याख्यायते—यतस्तस्य पुरुषस्य सम्भवद्रव्याणि शुक्रशोणितादीनि, तेषां समूहः संयोगविशेषः। कथम्भूतः? भूतादिः भूतं पृथिव्यादिकमादि मूलकारणं यस्य स तथा। न परं पुरुषसम्भवद्रव्यस्य भूतादित्वाभिधानात् भूतेभ्यः परं चिन्ता नास्ति किन्त्वेतस्मादपीत्याशङ्क्याह—भौतिकानि चेत्यादि। इन्द्रियाणि श्रवणस्पर्शनरसनघ्राणानि भौतिकानि। तथा चोक्तं पञ्चभूतात्मकत्वेऽपि—"खं श्रोत्रे स्पर्शने वायुर्दर्शने तेज उत्कटम्। सलिलं रसने भूमिर्घ्राणे तज्ज्ञैर्निरूपितम्"—इति। इन्द्रियाणामर्थाः शब्दस्पर्शरूपरसगन्धाः, ते चायुर्व्वेदशास्त्रे तथा भौतिका इत्यर्थः। उक्तञ्च—"शब्दो वैहायसः स्पर्शो वायवीयः प्रकीर्त्तितः। रूपमाग्नेयमाप्योऽत्र रसो गन्धस्तु पार्थिवः" इति ॥ १४ ॥

इन्द्रियाणामिन्द्रियार्थानाञ्च पाञ्चभौतिकत्वेऽपि यस्य भूतस्य यत्र यत्रेन्द्रिये आधिक्यं तेन तेनेन्द्रियेण तस्य तस्यैव गुणाः शब्दादयो गृह्यन्ते इति दर्शयितुमाह—इन्द्रियेणेत्यादि। इन्द्रियेण चक्षुरादिना रूपादिकमात्मीयमात्मीयं मानव उपादत्ते। तद् यथा—तैजसं चक्षुस्तैजसमेव रूपमादत्ते, पार्थिवं घ्राणेन्द्रियं पार्थिवमेव गन्धमादत्ते, एवं शेषेष्वपि बोद्धव्यम्। नियतमात्मीयमेव कुत इत्याह—तुल्ययोनित्वादिति एकभूतहेतुत्वात्, भूतं हि स्वयोनिमेवाभिधावति जलमिव जलम्। तमेव स्पष्टीकुर्व्वन्नाह—नान्येनान्यमिति ॥ १५ ॥

अपरमपि साङ्ख्यादिभ्यो भेदमायुर्व्वेदस्यात्मनि दर्शयन्नाह—न चेत्यादि। किं तर्हि आयुर्व्वेदशास्त्रेष्वसर्व्वगताः पुरुषा उपदिश्यन्ते सत्त्वोपाधिवशात्। सांख्यादिषु पुनः सर्व्वगता एव क्षेत्रज्ञा उपदिश्यन्ते। एवमायुर्व्वेदपुरुषस्य प्रदेशवर्त्तिनोऽपि नित्यत्वं स्यादित्याह—

आयुर्व्वेदशास्त्रेष्वसर्व्वगताः क्षेत्रज्ञा नित्याश्च, तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्म्माधर्म्मनिमित्तम् । त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते, यतोऽभिहितं पञ्चमहाभूत-शरीरिसमवायः पुरुष इति । स एष कर्म्मपुरुषश्चिकित्साधिकृतः ॥ १७ ॥

तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनःसङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः ॥ १८ ॥

नित्याश्च, उपदिश्यन्ते इति शेषः । नित्यत्वञ्च कथमित्याह—असर्व्वगतेष्वित्यादि । हेतूनिति सदकारणवन्नित्यमित्यादीन् । तथाहि - सन्नात्मा, सुखादिलिङ्गोपलम्भात् । अविषयोऽकारणश्च, अतो नित्यः । तथाहि भोजः—"शुभाशुभाभ्यां कर्म्मभ्यां प्रेरणान्मनसो गतेः । देहाद् देहान्तरं याति क्रिमिवत् शाश्वतोऽव्ययः । नित्य इत्युच्यते सद्भिः सन्नकारणवान् यतः ॥" इति ॥ १६ ॥

तदेवोपसंहरन्नाह—आयुर्व्वेदेत्यादि । असर्व्वगतत्वेऽपि सर्व्वयोनिगमनं निर्द्दिशन्नाह—तिर्य्यगित्यादि । तत्र बहुशः संसरणे तिर्य्यग्योनीनां प्रकृष्टत्वम्, अतस्तेषां प्रागुपादानम्, ततो मनुष्यनिर्द्देशः । देवास्तु कदाचित् क्वचत् सम्भवन्तीति पश्चान्निर्द्दिष्टाः । तत्र प्रायेणाधर्म्म-निमित्तं तिर्य्यग्योनयः, धर्म्माधर्म्मनिमित्तं मनुष्याः, धर्म्मनिमित्तं देवाः । ननु कथमप्रत्यक्षा अध्यात्मानोऽभ्युपगम्यन्ते इत्याह त एते अनुमानग्राह्या इति । सुखदुःखाद्युपलब्धिरूपेण लिङ्गेना व्यभिचारिणा एत आत्मान उपलभ्यन्तेऽनुमानतया । प्रत्यक्षप्रमाणेनापि क्षेत्रज्ञाः कथं न गृह्यन्ते इति ? आह—परमसूक्ष्मा इति । परमसूक्ष्मा हि परमाणव इव सन्तोऽपि ते प्रत्यक्षेण नैवोपलभ्यन्ते । चेतनावन्त इति नित्यं चेतनायुक्ताः । शाश्वता इति नित्याः । कथं तर्हि जायन्ते इत्युच्यत इत्याह—लोहितरेतसोरित्यादि । आत्मानः परमसूक्ष्माः पञ्चभूतात्मकयोः शुक्रशोणितयोः सन्निपातेषु संयोगेषु अभिव्यज्यन्ते । एष एव च सूक्ष्मपुरुषाणां पञ्चमहाभूतानाञ्च संयोगो वैद्यके षड्धातुकः पुरुषः परिभाषितः । कुतः परिभाषित इत्याशङ्क्याद्याध्यायोक्तं वाक्यं दर्शयति—यत इत्यादि । तस्य चिकित्सोपयोगितां निदर्शयन्नाह स एषेत्यादि । कर्म्मपुरुष इति कर्म्मफलभागि-त्यर्थः । तेन चिकित्सितकर्म्मफलमप्ययमाप्नोतीत्युक्तं भवति ॥ १७ ॥

इदानीं तस्यैव कर्म्मपुरुषस्य शरीरात्मनोः संयोगकारकेण मनसा संयोगे ये गुणा उत्पद्यन्ते तानाह - तस्येत्यादि । तत्र सुखं स्वभावतोऽनुकूलवेदनीयम्, दुःखं स्वभावतः प्रतिकूलवेद-नीयम्, इच्छा अभिलाषः, द्वेषोऽप्रीतिलक्षणः, प्रयत्नः कार्य्यारम्भेषूत्साहः, प्राणवायुः वक्त्रसञ्चारी, अपानः पक्वाशयस्थितिरधोगमनशीलः, उन्मेषनिमेषौ चक्षुषोरुन्मीलननिमीलने, बुद्धिः निश्चया-त्मिका, मनः संशयात्मकं, तस्य सङ्कल्पः मनसः कर्म्म, विचारणा पुनरूहापोहाभ्यां वस्तुविमर्शः; स्मृतिः पूर्व्वानुभूतस्यार्थस्य स्मरणम्, विज्ञानं शिल्पशास्त्रादिबोधः । अध्यवसायो बुद्धेर्व्यापारः । विषयाणां शब्दादीनामुपलब्धिरवगतिर्विषयोपलब्धिः । गयी तु सुखं प्रीतिः, दुःखमप्रीतिः, इच्छा सुखहेतुरभिलाषः, द्वेषः दुःखहेतोरनःप्रत्यायनं, प्रयत्नः मनःप्रवृत्तिकर उत्साहः, मनः सङ्कल्पा-

सात्त्विकास्तु आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म्म आस्तिक्यं ज्ञानं बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च। राजसास्तु दुःखबहुलताटनशीलता धृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामः क्रोधश्च। तामसास्तु विषादित्वं नास्तिक्यमधर्म्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्म्मेधस्त्वमकर्म्मशीलता निद्रालुत्वञ्चेति॥ १९॥

आन्तरिक्षास्तु शब्दः शब्देन्द्रियं सर्व्वच्छिद्रसमूहो विविक्तता च। वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्व्वचेष्टासमूहः सर्व्वशरीरस्पन्दनं लघुता च। तैजसास्तु रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्च।

त्मकलक्षणं, तस्य सङ्कल्पः विषयेषु दोषगुणकल्पनम्, शेषं सुगमम्। एते कर्म्मपुरुषस्य षोड़श गुणाः। अतएव कला इत्युच्यन्ते॥ १८॥

पुरुषगुणानभिधाय शेषान् सत्त्वादियुक्तस्य मनसो गुणान् निर्द्दिशन्नाह- सात्त्विका इत्यादि। आनृशंस्यं अक्रूरकर्म्मकारित्वम्। संविभागरुचिता संविभज्य भोक्तुमभिलाषुकता। तितिक्षा क्षमा। सत्यं भूतहितं तथ्यं वचो वा। धर्म्मः कायवाङ्मनोभिः सुचरितम्। अस्ति धर्म्ममोक्ष परलोकादिकमिति बुद्ध्या चरतीत्यास्तिकः, तद्भाव आस्तिक्यम्। ज्ञानम् आत्मज्ञानम्। बुद्धिः तत्कालविषया। मेधा ग्रन्थावधारणशक्तिः। पूर्व्वानुभूतस्यार्थस्य स्मरणं स्मृतिः। धृतिः मनसो नियमात्मिका बुद्धिः। फलनिरपेक्षया बुद्ध्या श्रेयः कर्म्मकरणमनभिषङ्गः।

राजसास्तु दुःखबहुलेत्यादि। अधृतिर्मनसोऽधीरता, आनृतिकत्वं मिथ्यावचनशीलता। गयी तु आनृतिकत्वमिति पठित्वा मनसः खलतेत्याह। अकारुण्यं निर्दयत्वम्। दम्भः कुहकवृत्तिता, मान आत्मन्युत्कर्षबुद्धिः। अहङ्कारादयः पूर्व्वं व्याख्याताः। गयी तु अटनशील इत्यत्र ताड़नशीलतेति पठन्ति, मान इत्यत्र मद इति पठन्ति।

तामसास्तु विषादित्वमित्यादि। विषादोऽस्तीति विषादी, तद्भावः विषादित्वं मूढ़ता। अधर्म्मे शीलं स्वभावो यस्य तद्भावोऽधर्म्मशीलत्व, दुर्म्मेधस्त्वं दुष्टबुद्धित्वं, अकर्म्मशीलता अकर्म्मण्युत्साहः॥ १९॥

महाभूतगुणान्निर्दिदिक्षन्नाह आन्तरिक्षा इत्यादि। आन्तरिक्षाः आकाशभूतगुणाः। शब्देन्द्रियं श्रवणेन्द्रियं, विविक्तता शारीराणां भावानां शिरास्नाय्वस्थिपेशीप्रभृतीनां जातिव्यक्तिभ्यां मिथः पृथक्त्वम्। गयी तु विविक्तता इत्यस्य स्थाने विरिक्तता इति पठति व्याख्यानयति च—विरिक्तता शारीराणां भावानां रिक्तता पृथक्त्वमिति यावत्। वायव्या इत्यादि। स्पर्शेन्द्रियं त्वक्। सर्व्वचेष्टासमूहः नमनोन्नमनादिसर्व्वक्रियासमूहः, कायवाङ्मनःक्रियासमूह इत्यन्ये। स्पन्दनं चलनम्। तैजसास्त्वित्यादि। रूपं लावण्यं, रूपेन्द्रियं चक्षुः, वर्णः गौरादिः, सन्तापः औष्ण्यं, भ्राजिष्णुता

आप्यास्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च। पार्थिवास्तु गन्धो गन्धेन्द्रियं सर्व्वमूर्त्तसमूहो गुरुता चेति॥ २०॥

तत्र सत्त्ववहुलमाकाशम्। रजोवहुलो वायुः। सत्त्वरजोवहुलोऽग्निः। सत्त्वतमोवहुला आपः। तमोवहुला पृथवीति॥ २१॥

श्लोकौ चात्र भवतः।

अन्योऽन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्दिशेत्।
स्वे स्वे द्रव्ये तु सर्व्वेषां व्यक्तं लक्षणमिष्यते॥ २२॥

दीप्तता, पक्तिः अग्निकृताहारपरिणतिः, अमर्षः क्रोधः, तैक्ष्ण्यमाशुक्रिया, शौर्य्यं विक्रान्तता। आप्यास्त्वित्यादि। सर्व्वद्रवसमूहः दोपधातुमलेपु द्रुतिमद्द्रव्यनिवहः। पार्थिवास्त्वित्यादि। सर्व्वमूर्त्तसमूहः दोपधातुमलेपु यः कश्चित् काठिन्यनिवहः॥ २०॥

अथाकाशादिभूतानां सत्त्वादिगुणमयत्वं दर्शयन्नाह तत्रेत्यादि। सत्त्ववहुलमाकाशं प्रकाशकत्वात्, रजोबहुलो वायुश्चलत्वात्, सत्त्वरजोबहुलोऽग्निः प्रकाशकत्वात् चलत्वाच्च, सत्त्वतमोबहुला आपः स्वच्छत्वात् प्रकाशकत्वात् गुरुत्वादावरणत्वाच्च। तमोबहुला पृथिवी अत्यन्तावरकत्वात्॥ २१

अन्योऽन्येत्यादि। तत्र शब्दगुणमाकाशं मारुते प्रविष्टं शब्दस्पर्शगुणत्वान्मारुतस्य। आकाशमारुतौ तेजसि प्रविष्टौ, शब्दस्पर्शरूपगुणत्वात् तेजसः। आकाशमरुत्तेजांसि तोयद्रव्ये प्रविष्टानि, शब्दस्पर्शरूपरसगुणत्वात् तोयस्य। आकाशमरुत्तेजस्तोयानि पृथिव्यामनुप्रविष्टानि, शब्दस्पर्शरूपरसगन्धगुणत्वात् पृथिव्याः। एवं व्योमानिलानलजलोर्व्वीणां परस्परमनुप्रवेशकानुप्रवेश्यत्वेनावस्थितानामन्योन्यानुप्रविष्टत्वमुक्तम्। अन्ये पुनरन्योऽन्यानुप्रविष्टत्वमन्यथा व्याचक्षते। तत्राकाशेऽपि भूमरणुरूपेणावस्थिता, सूक्ष्मरूपतोयतेजोऽनुगतमारुतस्य सञ्चरणादाकाशे पवनदहनतोयान्यपि वाद्धव्यानि, तथा वायावप्याकाशं व्यवस्थितं व्यापकत्वात्। "अनुष्णशीतस्पर्शोऽयं द्रव्यश्चैर्वायुरिष्यते। दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात्" इत्युक्तत्वात्, वायौ तेजोऽम्बुनी अपि तिष्ठतः, भूरप्यणुना विशेषेण मारुते तिष्ठति। तथा तेजोद्रव्येऽप्याकाशं व्यवस्थितं व्यापकत्वात्, पवनोऽपि प्रेरणात्मकत्वात्; तेजोद्रव्ये पानीयमप्यनुमीयते कार्य्यकारणयोरैक्यात्, कारणं तोयं कार्य्यञ्च तेजः, अद्भ्योऽग्निरित्युक्तत्वात्; भूमिरपि धूमादिरूपेण तेजसि व्यवस्थिता। अथ तोयद्रव्येऽप्याकाशं व्यवस्थितं व्यापकत्वात्; वायुरपि तोये व्यवस्थितः, तरङ्गबुद्बुदादिकारणत्वात्, वह्निरपि तोये व्यवस्थितः, तत एवोत्पन्नत्वात्; उक्तञ्च—"अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्। एषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति" इति। भूमिरपि तोयेऽणुरूपेणावस्थिता तथा पृथिव्यामपि आकाशपवनदहनतोयानि स्थितान्येव, भूमिप्रविभागीये पञ्चविधाया भूमेः प्रोक्तत्वात्। इत्थमाकाशादिभूतानामन्योऽन्यानुप्रविष्टत्वमाहुः। व्यक्तेन तु लक्षणेन पार्थिवादिव्यपदेशं दर्शयन्नाह—स्वे स्वे इत्यादि। स्वे स्वे स्वकीये स्वकीये मङ्गलद्रव्ये, सर्व्वेषामाकाशादीनां, व्यक्तं लक्षणमिति आकाशद्रव्ये तल्लक्षणं व्यक्तमित्यादि बोद्धव्यम्॥ २२॥

अष्टौ प्रकृतयः प्रोक्ता विकाराः षोड़शैव तु।
क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥ २३ ॥

इति सुश्रुतसंहितायां शारीरस्थाने सर्व्वभूतचिन्ताशारीरं नाम प्रथमोऽध्यायः ॥ १ ॥

अष्टावित्यादि। अष्टौ प्रकृतयः अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणीत्यष्टौ। विकाराः षोड़शैवेति श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीत्येवमेकादशेन्द्रियाणि, आकाशपवनदहनतोयभूमय इति पञ्चभूतानीत्येवं षोड़श विकाराः। क्षेत्रं स्थूलसूक्ष्मदेहं जानातीति क्षेत्रज्ञः पुरुषः, समासेन संक्षेपेण। एवं पञ्चविंशतितत्त्वान्युक्तानि। स्वतन्त्रे शल्यतन्त्रे। परतन्त्रे शालाक्यतन्त्रे साङ्ख्ये च ॥ २३ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
सर्व्वभूतचिन्ताशारीरव्याख्यानाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अथातः शुक्रशोणितशुद्धिं शारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वातपित्तश्लेष्मशोणितकुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषरेतसः प्रजोत्पादने न समर्था भवन्ति ॥ २ ॥

तेषु वातवर्णवेदनं वातेन, पित्तवर्णवेदनं पित्तेन, श्लेष्मवर्णवेदनं श्लेष्मणा, शोणितवर्णवेदनं कुणपगन्ध्यनल्पञ्च रक्तेन, ग्रन्थिभूतं श्लेष्मवाताभ्याम्, पूतिपूयनिभं पित्तश्लेष्मभ्याम्, क्षीणं प्रागुक्तं पित्तमारुताभ्याम्, मूत्रपूरीषगन्धि सन्निपातेनेति। तेषु कुणपग्रन्थिपूतिपूयक्षीणरेतसः कृच्छ्रसाध्याः, मूत्रपूरीषरेतसस्त्वसाध्याः, साध्यमन्यच्चेति ॥ ३ ॥

सर्व्वंभूतचिन्ताशारीरे शुक्रशोणितयोः सन्निपातेष्वभिव्यज्यन्ते इति यदुक्तं तत्र शुक्रशोणितयोः शुद्धयोरेव सन्निपातेषु क्षेत्रज्ञा अभिव्यज्यन्तेऽतस्तयोः शुद्धिं प्रतिपादयितुकामः प्राह— अथात इत्यादि । शोणितशब्दोऽत्र आर्त्तवशोणिते वर्त्तते, शुद्धिः दुष्टदोषासम्पर्कता । सा च शुद्धिर्वातादिदुष्टशुक्रस्येति वातादिभिः पृथक्समुदितैर्दुष्टशुक्रानाह—वातेत्यादि । एवंभूतरेतसः पुरुषा गर्भोत्पत्तौ न क्षमा भवन्तीति पिण्डार्थः ॥ १ । २ ॥

तेष्वित्यादि । तेषु वातादिषु दुष्टेषु मध्ये वातेन यच्छुक्रं दूषितं तद् वातवर्णवेदनं भवति ; तत्र वातवर्णा अरुणकृष्णादयः। यद्यप्यव्यक्तस्य वायोर्वर्णो न सम्भवति, तथापि वातदुष्टे दूष्येऽरुणकृष्णौ वातेन वर्णौ भवत इत्यदोषः। वातवेदनास्तोदभेदादयः। ननु कथमेकस्माद् वायोरनेकवेदनाविशेषास्तोदादयः ? सत्यं, बहुकारणप्रकोपात् तस्येति । गन्धस्तु वायोर्नास्त्येव । पित्तेन यच्छुक्रं दूषितं तत् पित्तवर्णवेदनं भवति । पित्तवर्णाः पीतनीलादयः, पित्तवेदना ओषचोषादयः । पित्तदुष्टे शुक्रेऽनुक्तोऽपि गन्धः कुणपे पूतिपूयाभे च वक्ष्यमाणो द्रष्टव्यः । श्लेष्मणा यच्छुक्रं दूषितं तत् श्लेष्मवर्णवेदनं भवति ; श्लेष्मवर्णः शुक्लः, श्लेष्मवेदनाः कण्ड्वादयः, गन्धस्त्वनुक्तोऽपि विस्रो द्रष्टव्यः । रक्तेन यच्छुक्रं दूषितं तत् कुणपगन्ध्यनल्पञ्च भवति ; चकारात् शोणितवर्णं पित्तवेदनञ्च । कुणपं शवस्तस्येव गन्धोऽस्येति कुणपगन्धिः । अनल्पं बहुलम् । अत्र रक्तेनेति व्यपदेशो घृततैलदग्धवत् । ( अग्निदग्धघृततैलाभ्यां दग्धं द्रव्यं यथा घृततैलदग्धमित्युच्यते न त्वग्निना दग्धमिति, तथात्रापि वातादिदूषितरक्तेन दुष्टं रक्तदूषितमिति व्यपदेशः।) यतो रक्तस्यापि दोषा एव दूषयितारः । श्लेष्मवाताभ्यां यत् शुक्रं दूषितं तद् ग्रन्थिभूतं ग्रन्थिसदृशं ग्रन्थिलं भवतीत्यर्थः । पित्तश्लेष्मभ्यां यद् दूषितं तत् पूतिपूयसदृशं भवति । क्षीणं पित्तमारुताभ्यां भवति ; तस्य लक्षणं प्राग् दोषधातुमलक्षयवृद्धिविज्ञानीये उक्तम् । ग्रन्थ्यादयस्तु ये द्विदोषजास्ते द्विदोषवर्णवेदना बोद्धव्याः । सन्निपातेन यत् शुक्रं दूषितं तन्मूत्रपुरीषगन्धि भवति । तेषां

आर्त्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमवीजं भवति, तदपि दोषवर्णवेदनादिभिर्विज्ञेयम्। तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्र-पुरीषप्रकाशमसाध्यं साध्यमन्यच्चेति ॥ ४ ॥

भवन्ति चात्र।

तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत्।
क्रियाविशेषैर्मतिमांस्तथा चोत्तरवस्तिभिः ॥ ५ ॥
पाययेत नरं सर्पिर्भिषक् कुणपरेतसि।
धातकीपुष्पखदिर-दाड़िमार्ज्जुनसाधितम्।
पाययेदथवा सर्पिः सालसारादिसाधितम् ॥ ६ ॥
ग्रन्थिभूते शटीसिद्धं पालाशे वापि भस्मनि ॥ ७ ॥
परूषकवटादिभ्यां पूयप्रख्ये च साधितम् ॥ ८ ॥
प्रागुक्तं वक्ष्यते यच्च तत् कार्य्यं क्षीणरेतसि ॥ ९ ॥

कृच्छ्रसाध्यादिभेदं दर्शयन्नाह—तेष्वित्यादि। तेषु मध्ये कुणपादयश्चत्वारः कृच्छ्रसाध्याः, मूत्र-पुरीषगन्धिरन्तिमोऽसाध्यः, शेषा अर्थत एव साध्याः ॥ ३ ॥

इदानीं शुक्रविषयं प्रतिपाद्य आर्त्तवशोणितविषयमपि प्रतिपादयितुमाह—आर्त्तवमित्यादि। आर्त्तवमपि यदा पृथग्दोषैः शोणितचतुर्थैर्द्वन्द्वैः समस्तैश्चोपसंसृष्टं तदा अवीजं भवतीत्यर्थपिण्डः। तस्य विज्ञानोपायं दर्शयन्नाह—तदपीत्यादि। तदपीति आर्त्तवमपि, दोषवर्णवेदनाभिः शुक्रदोषे व्याख्याताभिः। तेषां साध्यासाध्यभेदं दर्शयन्नाह—तेष्वित्यादि। मूत्रपुरीषप्रकाशमिति गन्ध-वर्णादिभिर्मूत्रपुरीषतुल्यम्। साध्यमन्यच्चेति एकैकदोषजनितत्रयम्। शुक्रार्त्तवदोषा याप्या न भवन्ति, व्याधिस्वभावात् ॥ ४ ॥

इदानीं शुक्रदोषाणां चिकित्सामाह—भवन्तीत्यादि। तेषु शुक्रदोषेषु मध्ये आद्यान् त्रीन् शुक्रदोषान् स्नेहस्वेदादिभिः क्रियाविशेषैर्जयेदिति सम्बन्धः। आदिग्रहणात् वमनविरेचन-निरूहानुवासनोत्तरवस्तयो यथादोषं शमनानि चावगन्तव्यानि। तथेति पुनरुत्तरवस्तिकथनं क्रियासु प्राधान्यसूचनार्थम्। पाययेदित्यादि धातक्यादेः कल्ककषायाभ्यां साधितम्। साल-सारादिसाधितमित्यत्रापि कल्ककषायाभ्यामेव। ग्रन्थीत्यादि। शठीसिद्धमिति शट्याः कल्क-कषायाभ्यां सिद्धम्। पालाशे वेत्यादि पलाशभस्मादकं षड्भिः सलिलाढकैः क्वथितं पादशेषं सप्त-कृत्वः परिस्रुतमाढकशेषं प्रस्थघृतपाकाय प्रयोज्यम्। परूपकवटादिभ्यामित्यादि। परूषक-वटादिभ्यां परूपकादिन्यग्रोधादिगणाभ्यामित्यर्थः। प्रागुक्तमित्यादि। प्रागुक्तं स्वयोनिवर्द्धनं द्रव्यम्। वक्ष्यते यच्चेति यच्च क्षीणबलीयेऽध्याये वाजीकरणे वक्ष्यते ॥ ५—९ ॥

विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः ॥ १० ॥
स्निग्धं वान्तं विरिक्तञ्च निरूढ़मनुवासितम् ।
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना ॥ ११ ॥
स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च ।
शुक्रमिच्छन्ति केचित् तु तैलक्षौद्रनिभं तथा ॥ १२ ॥
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ।
स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु ।
कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च ॥ १३ ॥
ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च ॥ १४ ॥
दुर्गन्धिपूयसङ्काशे मज्जतुल्ये तथार्त्तवे ।
पिबेद् भद्रश्रियः क्वाथं चन्दनक्वाथमेव च ॥ १५ ॥

विड़ित्यादि । विट्प्रभे मूत्रपुरीषप्रकाशे रेतसि । विट्ग्रहणेनात्र पुरीषं मूत्रञ्च गृह्यते, मलमूलमात्रवाचकत्वाद् विट्शब्दस्य । सर्पिरित्यत्राप्यनुवर्त्तनीयम् । विण्मूत्राभेऽसाध्येऽपि दुःख-कारिविट्गन्धापनयनार्थं चित्रकादिभिः कल्कीकृतैर्घृतं पेयं न तु सर्व्वथा सिद्ध्यर्थं, असाध्यो नैति साध्यत्वमिति वचनात् । सर्व्वेषां कुणपादीनां सामान्यचिकित्सितमाह—स्निग्धमित्यादि ॥१०।११

इदानीमदुष्टशुक्रस्य लक्षणमाह—स्फटिकेत्यादि । इदानीमैकीयमतमाह—केचिदित्यादि । विधिमित्यादि । उत्तरवस्त्यन्तं उत्तरवस्त्यवसानं, तत्र यथादोषं वमनादि, उत्तरवस्तिः पुनः सर्व्वेष्वेव, वातादिहरक्वाथस्नेहाभ्यां नैरूहिकः स्नैहिकश्च । आर्त्तवग्रहणादेव स्त्रीग्रहणे लब्धे पुनः स्त्रीग्रहणं समत्वागतयौवनप्रापणार्थम् । चतसृषु इति वातपित्तश्लेष्मशोणितकृतासु । गयी तु चतसृष्वित्यत्र चतुर्थीं शोणितप्रकृतिभूतविस्रगन्धिशोणितार्त्तवार्त्तिं मन्यते, तस्या एव साध्यत्वात्, न तु कुणपगन्ध्यार्त्तवार्त्तिं तस्या वक्ष्यमाणत्वात् । कल्कादयस्तु योनिव्यापत्सु कथिता वातादि-दोषहरद्रव्यकृताः । आचमनं योनिप्रक्षालनोदकं, तदपि वातादिदोषहरद्रव्यकृतम् । ग्रन्थीत्यादि । दुर्गन्धिपूयसङ्काशे पूतिगन्धपूयोपमे कफपित्तदुष्टे इत्यर्थः । मज्जतुल्ये त्रिदोषमलिने । तथा-शब्दाद् दुर्गन्धिनीत्यत्रापि योजनीयं, तेन मूत्रपुरीषगन्धिनीति गम्यते । गयी त्वत्र दुर्गन्धे कुणप-गन्धिनि, पूयसङ्काशे पूतिपूयोपमे, मज्जतुल्ये त्रिदोषमलिने इति व्याख्याति, क्षीणञ्च प्रागुक्त-मित्यग्रे सूचयिष्यति । अत्र कुणपादीनां पञ्चानामसाध्यानामपि दुर्गन्धापनयनार्थं चिकित्सित-प्रतिपादनं, न तु सर्व्वथा सिद्ध्यर्थं, तेषामसाध्यत्वात् । भद्रश्री चन्दनम्, चन्दनं रक्तचन्दनम् । गयी तु भद्रश्रियं श्वेतचन्दनम्, चन्दनं गोशीर्षाख्यं चन्दनं न तु रक्तचन्दनम्, तस्य हि

शुक्रदोषहराणाञ्च यथास्वमवचारणम्।
योगानां * शुद्धिकरणं शेषास्वप्यार्त्तवार्त्तिषु।
अन्नं शालियवं मद्यं हितं मांसञ्च पित्तलम् ॥ १६ ॥
शशासृक्प्रतिमं यत् तु यद् वा लाक्षारसोपमम्।
तदार्त्तवं प्रशंसन्ति यद् वासो न विरञ्जयेत् ॥ १७। १८ ॥
तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि।
असृग्दरं विजानीयादतोऽन्यद् रक्तलक्षणात् ॥ १९ ॥
असृग्दरो भवेत् सर्व्वः साङ्गमर्दः सवेदनः।
तस्यातिवृत्तौ दौर्ब्बल्यं भ्रमो मूर्च्छा तमस्तृषा।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः ॥ २० ॥
तरुण्या हितसेविन्यास्तमल्पोपद्रवं भिषक्।
रक्तपित्तविधानन यथावत् समुपाचरेत् ॥ २१ ॥

गन्धापहरणशक्तेरभावात्। वातादिदुष्टार्त्तवार्त्तिष्वन्यामपि चिकित्सामतिदेशेन निर्द्दिशन्नाह—शुक्रदोपहराणामित्यादि। शुक्रदोपहराणां स्नेहस्वेदादिपूर्व्वाणां, यथास्वं यथादोपम्। योगानां रसायनवाजीकरणमूत्रदोपप्रतिपेधोक्तानां शेपासु वातादेयकैकदोपजनितास्वार्त्तवार्त्तिपु, शुद्धिकरणं कार्य्यमिति सम्बन्धः। अशेपार्त्तवदुष्टानां पथ्यमाह—अन्नमित्यादि। अन्नं भोजनार्थम् ॥१२—१६॥

अदुष्टार्त्तवलक्षणमाह—शशासृगित्यादि। यदार्त्तवं वासःस्थितं शुष्कमुदकप्रक्षालितं वासो न विरञ्जयेत् रागोपेतं वस्त्रं न कुर्य्यात् तत् प्रशंसन्ति गर्भजननायेति शेषः ॥ १७। १८ ॥

तस्यैवातिप्रवृत्तस्यासृग्दरत्वं, तत्र च दोपदुष्टिलक्षणमाह—तदेवातिप्रसङ्गेनेत्यादि। तदेव आर्त्तवमेव न तु रक्तपित्तम्। ऋतावतिप्रसङ्गेन इति अतिप्राचुर्य्येण दीर्घकालानुवन्धेन वा प्रवृत्तं प्रसृतम्। न परं ऋतावेवेत्याह—अनृतावपीति। अनृतावल्पमप्यदीर्घकालमपि प्रवृत्तमसृग्दरं विजानीयात्। किंस्वरूपं तदित्याह—अत इत्यादि। अत एतस्मात् शशासृक्प्रतिममित्यादिवाक्यप्रतिपादिताद् रक्तलक्षणात्, अन्यदन्यादृक् लक्षणं फेनिलं शीघ्रमच्छमित्यादिवाक्येन शोणितवर्णनीये यादृशमभिहितं तादृशमपीत्यर्थः। दोषानुवन्धकृतं लक्षणमतिदेशेन निर्द्दिश्य स्वभावव्याधिकृतं सामान्यं लक्षणमाह—असृगित्यादि। अङ्गमर्दः वेदनाविशेपः, सवेदनः सशूलः। तस्यातिस्रुतस्य लक्षणमाह—तस्येत्यादि। अतिवृत्तौ अतिप्रवृत्तावित्यर्थः। तमः अन्धकारदर्शनं श्वासो वा। प्रलापः असम्बद्धभाषणम्। तन्द्रा निद्राभेदः, वातजा रोगा आक्षेपकादयः ॥ १९। २० ॥

यस्या यद्रूपं यादृशेन प्रकारेणोपचरणीयं तदाह—तरुण्या इत्यादि। तरुण्याः षोड़शवर्ष-

---

* दोषाणामिति वा पाठः।

दोषैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः।
तत्र मत्स्यकुलत्थाम्ल-तिलमाषसुरा हिताः।
पाने मूत्रमुदश्विच्च दधि शुक्तश्च भोजने॥ २२॥
क्षीणं प्रागीरितं रक्तं सलक्षणचिकित्सितम्।
तथाप्यत्र विधातव्यं विधानं नष्टरक्तवत्॥ २३॥

एवमदुष्टशुक्रः शुद्धार्त्तवा च।

ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्ग-नखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किं कारणम्? दिवा स्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद् विकृतदृष्टिः, स्नानानुलेपनाद् दुःखशीलः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्त्तनात् कुनखी, प्रधावनाच्चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्, अतिशब्दश्रवणाद् वधिरः, अवलेखनात् खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत्॥ २४॥

प्राज्ञायाः, हितसेविन्याः पथ्याशिन्याः। अतिप्रवृत्तिलक्षणामार्त्तवस्य विकृतिं निर्दिश्याप्रवृत्तिलक्षणां सचिकित्सां निर्दिशन्नाह—दोषैरित्यादि। अत्र दोषाः कफो वायुर्वातकफौ च; न तु पित्तं, पित्तवृद्धौ तस्यातिप्रवृत्तिवृद्धयोरुक्तत्वात्, कुलत्थादिवातकफहरद्रव्यावचारणत्वाच्च। नश्यतीति प्रवर्त्तमानं न दृश्यते, न तु सर्व्वथा क्षयं याति। अम्लं काञ्जिकं, मूत्रं गोमूत्रम्, उदश्विदर्द्धोदकं तक्रं, शुक्तं चुक्रम्। पुनरुक्तिशङ्कां निरस्यन्नाह—क्षीणमित्यादि। यद्यपि प्राग् दोषधातुमलक्षयवृद्धिविज्ञानीये क्षीणलक्षणं सचिकित्सितमभिहितम्, तथाप्यत्रोपादानान्नष्टार्त्तववद् विधानं कर्त्तव्यम्। रक्तमार्त्तवरक्तम्॥ २१—२३॥

प्रकरणप्रयोजनमुपसंहरन्नाह— एवमित्यादि। एवं पूर्व्वोक्तेन प्रकारेण अदुष्टशुक्रः पुरुषः शुद्धार्त्तवा च स्त्री, भवतीत्यत्राध्याहारः।

ऋतौ पुत्रीयमाचारं निर्दिशन्नाह—ऋतावित्यादि। ऋतुकाले प्रथमदिवसं मर्य्यादीकृत्य नारी ब्रह्मचारिणी स्यात्। ऋतुदर्शनात् पूर्व्वं मासं ब्रह्मचर्य्यस्य वक्ष्यमाणस्य विशिष्टप्रजोत्पादनं प्रयोजनम्। अस्मिंश्च ऋतुदर्शने दिनत्रयं ब्रह्मचर्य्यस्य स्वयमेवाचार्य्योऽग्रे प्रयोजनं कथयिष्यति। दिवास्वप्नादींश्च परिहरेत्। कथनं बहुभाषणं, अवलेखनं कङ्कतिकादिना केशसम्मार्ज्जनम्, आयासः कष्टम्। किं कारणमित्यादि। उन्मत्तो वातुलः॥ २४॥

दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमे भोजिनीं हविष्यं, त्र्यहञ्च भर्त्तुः संरक्षेत्। ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत् ॥ २५ ॥

तत् कस्य हेतोः ?

पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना।
तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः ॥ २६ ॥
ततो विधानं पुत्रीयमुपाध्यायः समाचरेत्।
कर्म्मान्ते च क्रमं ह्येनमारभेत विचक्षणः ॥ २७ ॥

ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयात्

परिहार्य्यमुक्त्वा भर्त्तारं प्रति नार्य्याः करणीयं निर्द्दिशन्नाह—दर्भेत्यादि। हविष्यं सघृतशाल्योदनादि, क्षीरसंस्कृतं यवान्नमित्येके। भर्त्तुः संरक्षेद् वैद्य इति शेषः, तस्मै दर्शनमपि न दापयेदित्यर्थः। तत इत्यादि। शुद्धा जीर्णशोणितापगमेन, अनन्तरं स्नाताम्, तदुक्तं—"नवे तनौ च सञ्जाते विगते जीर्णशोणिते। नारी भवति संशुद्धा पुंसा संसृज्यते तदा॥" इति। दर्शयेत् इत्यत्र वैद्य इति शेषः। तत् कस्य हेतोरित्यत्र तच्छब्दः संबोधने, तेनाहो कस्य हेतोः। अन्ये तत्रापीति प्रश्नार्थं पठन्ति। तत्रापि प्रश्ने ॥ २५ ॥

पूर्व्वमित्यादि। पुत्रेभ्यो हितं पुत्रीयमिति। गयी तु "तत्राचार्य्यो ब्राह्मणप्रयुक्तोऽनुपहतश्वेतवस्त्रेण संवीतश्चार्षभे चर्म्मण्युपविष्टो राजन्यप्रयुक्तो वैयाघ्रे आनडुहे वा वैश्यप्रयुक्तो रौरवे शूद्रप्रयुक्तो वास्ते वा चतुर्हस्तं स्थण्डिलमुपलिप्योल्लिख्य दर्भैरास्तीर्य्य वेणुयूपं दक्षिणेन ब्रह्माणं व्यवस्थाप्य शुक्लकुसुमगन्धबलिभिरभ्यर्च्च्याग्निं प्रणीय संस्कृत्य पालाशीभिः समिद्भिरग्निमुपसमाधाय मन्त्रोदकपूर्णपात्रमग्नेरग्रे स्थापयित्वा पुत्रजन्माशास्याज्यं जुहुयान्महाव्याहृतिभिः। योषिच्च पुत्रार्थिनी सह भर्त्रा पश्चिमतोऽग्नेः ऋत्विजो दक्षिणतः समुपविशेत्। ततोऽस्याः ब्राह्मणः प्रजापतिमुद्दिश्य यथाभिलषितं सम्पादनाय मनसा योनौ काम्यामिष्टिं निर्व्वपेत्। अनयोर्विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशत्विति, ततश्चाज्येन स्थालीपाकमभिघार्य्य त्रिर्जुहुयात्। यथाम्नायं चीपमन्त्रितमुदपात्रमस्मै दद्यात्, सर्व्वानुदकार्थान् कुरुष्वेति। ततः समाप्ते कर्म्मणि पूर्व्वं दक्षिणं पादमभिहरन्ती प्रदक्षिणमग्निमुपक्रमेत्। ततः परिक्रम्य ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्रा आज्यशेषं प्राश्नीयात्, पूर्व्वं पुमान् जघन्यं स्त्री न चोच्छिष्टमवशेषयेदिति पुत्रीयविधानम्" इति। कर्म्मान्ते पुत्रीयविधानान्ते, एनं क्रमं वक्ष्यमाणम् ॥ २६। २७ ॥

तमेव क्रमं वक्तुमाह—ततोऽपराह्णे इत्यादि। पुंसो मासं ब्रह्मचारित्वेन स्त्रीणामपि ब्रह्मचारित्वे लब्धे मासं ब्रह्मचारिणीमिति यदुक्तं—तन्मनःसंकल्पमात्रस्यापि निरासार्थम्। तैल-

रात्रौ सामादिभिरभिविश्वास्य, विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्याञ्चोपेयादिति पुत्रकामः ॥ २८ ॥

एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च।
प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै ॥ २९ ॥

अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः। त्रयोदशी-प्रभृतयो निन्द्याः ॥ ३० ॥

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति; यश्च तत्राधीयते गर्भः, स प्रसवमानो विमुच्यते। द्वितीयेऽप्येवं सूतिकागृहे वा, तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति। चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति। न च प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति, यथा नद्यां प्रतिस्रोतः प्लावि द्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम्। तस्मान्नियमवतीं त्रिरात्रं परिहरेत्। अतः परं मासादुपेयात् ॥ ३१ ॥

लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा विन्दून् दद्याद् दक्षिणे नासापुटे पुत्रकामायै। न च तान् निष्ठीवेत् ॥ ३२ ॥

माषोत्तराहारां तैलमाषप्रधानाहारां, उपेयात् गच्छेत्। सामान्यापत्यजननकालमृतुसंज्ञं निर्द्दिश्यापत्यविशेषजननसमर्थकालमुद्दिशन्नाह—विकल्प्यैवमित्यादि। एषु दिवसेषु उत्तरोत्तरमायुरित्यादिकं विद्यादित्येवं विकल्प्य विचार्य्य चतुर्थ्यादिषु रात्रिषु नारीमुपेयात्। अतःपरं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः उपेयादित्यत्रापि सम्बध्यते ॥ २८—३० ॥

तत्रेत्यादि। प्रथमे दिवसे—विमुच्यते प्राणैरिति शेषः। द्वितीये इत्यादि। एवमिति पूर्व्वोक्तं भवतीत्यर्थः। सूतिकागृहे दशदिवसाभ्यन्तरं वा गर्भः प्राणैर्विमुच्यते इत्यर्थः। न च प्रवर्त्तमाने इत्यादि। प्रतिस्रोतः धारासंमुखमित्यर्थः। प्लाविद्रव्यं प्रतरणशीलं वस्तु। प्रतिनिवर्त्तते व्यावृतति। गयी तु तत्र प्रथमदिवसे इत्यादि तस्मान्नियमवतीं त्रिरात्रं परिहरेदिति यावद् ग्रन्थमग्रे तनेऽध्याये ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तव इत्यस्याग्रे पठति। अतःपरमित्यादि। मासादिति ऊर्द्ध्वमिति शेषः। अर्व्वाग्गमनन्तु गर्भद्वारविघट्टनेन स्थितमपि गर्भं च्यावयति। केचित्त्वतःपरं मासादुपेयादित्यत्र 'परतस्तु पुष्पदर्शनेनागर्भलाभनिश्चय एव, लब्धगर्भान्तु नैव' इति पठन्ति, उपेयादित्यध्याहृत्य च व्याख्यानयन्ति ॥ ३१ ॥

लब्धगर्भाया इत्यादि। लक्ष्मणालक्षणन्तु—"पुत्रकाकाररक्ताल्पविन्दुभिर्लाञ्छितच्छदा। लक्ष्मणा पुत्रजननी वस्तगन्धाकृतिर्भवेत् ॥" इति। ताञ्च शरत्काले पुष्पफलोपेतां दृष्ट्वा शनिदिने सन्ध्यायां

ध्रुवं चतुर्णां सान्निध्याद् गर्भः स्याद् विधिपूर्व्वकः।
ऋतुक्षेत्राम्बुवीजानां सामग्र्यादङ्कुरो यथा॥
एवं जाता रूपवन्तः सत्त्ववन्त-*-श्चिरायुषः।
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे(णो) हिताः॥ ३३॥

तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः। स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णं, पृथिव्याकाशधातुप्रायः कृष्णश्यामं, तोयाकाशधातुप्रायो गौरश्यामम्। यादृग् वर्णमाहारमुपसेवते गर्भिणी तादृग् वर्णप्रसवा भवतीत्येके भाषन्ते॥ ३४॥

तस्याश्चतुर्भागेषु खदिरकीलकान्निखायापरेद्युर्हस्तमूलपुष्यैर्योगं गते दिवाकरे मन्त्रवद् गृहीत्वा समानवर्णवत्सायाा गोः क्षीरेण यथाविधि नस्यं दद्यात्। वटशुङ्गा वटप्ररोहाः। सहदेवा बला-भेदः पीतपुष्पा काङ्कहि इति लोके। विश्वदेवा गाङ्गेरुकी गुड़शर्करेति लोके; अन्ये सितकुसुमां बलामाहुः। अभिपुत्य पेषयित्वा, न निष्ठीवेत् न श्रुतकुर्य्यात्। चकारादलब्धगर्भायाः सर्व्वमेव लक्ष्मणादीनां नस्यदानं सहस्राभिहुतं गर्भग्रहणाय पश्चाद् ग्राम्यधर्म्मसेवनमिति। तदुक्तं तन्त्रान्तरे—"पूर्व्वमौषधं सहस्राभिहुतं कृत्वा माङ्गल्यदेशे गोः क्षीरेण पेषयित्वा तस्मात् त्रीन् विन्दून् दक्षिणे नासापुटे दद्यात्। न निष्ठीवेत् तान् कण्ठप्राप्तान्, सा पञ्चदिनानि पयसोदनमश्नीयात् तदूर्द्ध्वं ग्राम्यधर्म्मसेवनम्" इति। लब्धगर्भायाश्च लक्ष्मणादिनस्यदानं गर्भस्थापनार्थं, स्थित-गर्भायाश्च मासत्रयाल्पान्तरे पुत्रापत्यजननार्थं नस्यदानमिति॥ ३२॥

नास्यैकमेव शुक्रशोणितं गर्भजननं किं तर्हि सामग्र्येणैवेति दर्शयन्नाह— ध्रुवमित्यादि। यथा—ऋतुक्षेत्राम्बुवीजानां सामग्र्यादनुपघातादङ्कुरो जायते, एवं ध्रुवं निश्चितं चतुर्णां ऋत्वादीनां नैकद्वित्रिसंख्यानां विधिपूर्व्वकं सान्निध्यात् यथोक्तसंयोगाद् गर्भो जायते। ऋतुः अङ्गनाया रजःसमयः, क्षेत्रं गर्भाशयः, अम्बु पुनराहारपाकजो व्यापी रसधातुः, वीजं स्त्रीपुंसयो-रार्त्तवशुक्रे। विधिपूर्व्वकस्य गर्भस्य फलं दर्शयन्नाह—एवमित्यादि। रूपमत्रावयवसन्निवेशो लोचनसुखप्रदः। सत्त्ववन्तः रजस्तमोभ्यामनभिभूताः। ऋणस्य मोक्तारः इति पितॄणामृणत्रय-मोक्षणशीलाः। सत्पुत्रा इति साधवः पुत्राः॥ ३३॥

एवंविधपूर्व्वजन्मनां रूपवत्त्वमुक्त्वा, रूपञ्च तैजसं वर्णादिप्रभास्वरत्वमतो वर्णसम्भवहेतुं दर्शयन्नाह—तत्रेत्यादि। तेजोधातुः तेजोभूतम्। सर्व्ववर्णानां प्रभवः कारणम्। स तेजोधातुः गर्भोत्पत्तौ गर्भाधानकाले यदा अब्धातुप्रायो भवति आप्यधातुबहुलो भवतीत्यर्थः। एकीयमत-माह—यादृगित्यादि॥ ३४॥

* महासत्त्वा इति पाठान्तरम्।

तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति, तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गलाक्षं, श्लेष्मानुगतं शुक्लाक्षं, वातानुगतं विकृताक्षमिति ॥३५॥

भवन्ति चात्र ।

घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते ।
विसर्पत्यार्त्तवं नार्य्यास्तथा पुंसां समागमे ॥ ३६ ॥
वीजेऽन्तर्वायुना भिन्न द्वौ जीवौ कुक्षिमागतौ ।
यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ ॥ ३७ ॥
पित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत् ।
स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् ॥ ३८ ॥
यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः ।
स योनिशेफसोर्गन्धमाघ्राय लभते वलम् ॥ ३९ ॥

तेजोधातुरूपवर्णप्रसङ्गेन तन्मयाद्यधिष्ठानविकृत्या जात्यन्धरक्तपिङ्गशुक्लविकृताक्षाणां सम्भवं दर्शयन्नाह—तत्र दृष्टीत्यादि । चतुर्थे मासि कस्यचित् पूर्व्वकर्म्मवशात् दृष्टिभागं चक्षुरिन्द्रियाधिष्ठानम् अप्रतिपन्नम् अप्राप्तं तेजः जात्यन्धं जन्मान्धं करोति ॥ ३५ ॥

ननु पुराणमार्त्तवमुपचयाद् दिनत्रयं स्रुत्वा स्वयमेव विनिवृत्तं नूतनं त्वल्पं स्त्यानीभूतमिव प्रवर्त्तितुमक्षमं, तत् कथमार्त्तवसञ्चारो येन तत्संसृष्टं शुक्रं गर्भजननसमर्थं भवतीत्याशङ्क्याह—घृतेत्यादि । पुंसां समागमे इन्द्रियद्वयसंघर्षजेनोष्मणा विलीनमार्त्तवं विसर्पति । तच्च विसर्पितं शुक्रोपगतं गर्भाशयमनुप्राप्तं जीवोपगतं गर्भसम्भवहेतुर्भवति । आर्त्तवं ऋतुकालजं शोणितं, शुक्रमप्यासां पुंसां समागमे क्षरति, न तु तद्गर्भोपयोगीति तत्क्षरणप्रतिपादनं न युक्तम् । तथा च वृद्धवाग्भटः—"योषितोऽपि स्रवन्त्येव शुक्रं पुंसां समागमे । तन्न गर्भस्य किञ्चित् तु करोतीति न चिन्त्यते" ॥ ३६ ॥

गर्भद्वयोत्पत्तिहेतुमाह - वीजे इत्यादि । धर्म्मेतरपुरःसरौ धर्म्माधर्म्मपुरगामिनौ । गयी तु धर्म्मेतरोऽधर्म्मः तत्पुरःसरौ अधर्म्मपुरोगामिनौ न तु धर्म्माधर्म्मपुरःसरौ । यतः श्रुतिस्मृतिष्वधर्म्मादेव यमोत्पत्तिरिष्टा । अतएव तदुत्पत्तौ प्रायश्चित्तमप्युपदिष्टमिति व्याख्याति ॥ ३७ ॥

पित्रोरित्यादि । पित्रोः पितृमात्रोरत्यल्पवीजत्वात् आसेक्यो नाम पुरुषो भवेत् जायते । स शुक्रं प्राश्येति स पुरुषोऽन्यपुरुषात् निजमुखेन व्यवायं कारयित्वा ततः सिक्तं शुक्रं प्राश्य आस्वाद्य ध्वजोच्छ्रायं लभते, आसेक्यनामायं पण्डो मुखयोन्यपरपर्य्यायः ॥ ३८ ॥

यः पूतियोनावित्यादि । योनिशेफसोर्गन्धमाघ्राय सिक्त्वा ; अयं सौगन्धिकनामा पण्डो नासायोन्यपरपर्य्यायः ॥ ३९ ॥

स्वे गुदेऽब्रह्मचर्य्याद् यः स्त्रीषु पुंवत् प्रवर्त्तते।
कुम्भीकः स च विज्ञेय ईर्ष्यकं शृणु चापरम्॥
दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते।
ईर्ष्यकः स च विज्ञेयः षण्डकं शृणु पञ्चमम्॥
यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते।
ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः॥ ४०—४२॥
ऋतौ पुरुषवद् वापि प्रवर्त्तेताङ्गना यदि।
तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता॥ ४३॥
आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा।
सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः॥ ४४॥
अनया विप्रकृत्या तु तेषां शुक्रवहाः शिराः।
हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत्॥ ४५॥

स्वे गुदे इत्यादि। यः पुरुषः स्वे गुदे स्वकीयपायौ, अब्रह्मचर्य्यादन्यपुरुषपार्श्वाद् व्यवायं कारयित्वा पश्चात् स्त्रीषु विषये पुमानिव प्रवर्त्तते पुरुषवद् व्यवायं करोति स कुम्भीकनामा षण्डो ज्ञेयः। अन्ये तु प्रथमं स्त्रीषु विषये तासामेव स्वकीयगुदविवरे पशुवत् पृष्ठभागे शिथिलेनैव मेहनेन प्रवर्त्तते। किं निमित्तमेतदित्याह—अब्रह्मचर्य्यात् क्लैब्यात् सञ्जातशुक्रस्याप्रवृत्तित्वात्। यतस्तस्यानया विप्रकृत्या ध्वजोच्छ्राये सञ्जाते स एव स्त्रीषु पुरुषवत् प्रवर्त्तते स कुम्भीकनामा नपुंसकभेदः। गुदयोनिरयम्। अस्योत्पत्तिहेतुस्तन्त्रान्तरे वर्णितः। यथा—"मातुर्व्यवायप्रतिघेन वक्री स्याद् वीजदौर्ब्बल्यतया पितुश्च"। गयी तु कुम्भीकोत्पत्तिहेतौ काश्यपोक्तं श्लोकमाह। यथा—"अरजस्कां यदा नारीं श्लेष्मरेता व्रजेदृतौ। अन्यसक्ता भवेत् प्रीतिर्जायते कुम्भिलस्तदा" इति। ईर्ष्यकं शृणु चापरमिति। दृग्योनिरयमीर्ष्यकापरपर्य्यायः। अत्रापि तन्त्रान्तरपठितो हेतुर्यथा—"ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्याह्वयस्यापि वदन्ति हेतुम्" इति। षण्डकं शृणु पञ्चममित्यादि। यः पुमान् मोहवशादृतौ भार्य्याविषये अङ्गनावदुत्तानो भूत्वा व्यवाययति, ततः स्त्रीचेष्टिताकारः पण्डो जायते। स पुमान् स्वस्त्राकृतिः स्त्रीचेष्टितश्च स्त्रीवदधोभूतः स्वमेढ्रस्योर्द्ध्वं प्रदेशे अपरपुरुषात् वीर्य्यच्युतिं कारयति॥ ४०—४२॥

नरपण्डं प्रदिश्य नारीषण्डं निर्द्दिशन्नाह - ऋतावित्यादि। यत्र पुनरबला पुरुषमधः कृत्वा व्यवायं कुरुते यदि तत्र कन्या भवति, सा नरचेष्टिता। सा स्त्रीरूपापि पुंवत् स्त्रियमारुह्य तद्योनौ स्वयोनिघर्षणं करोति। उक्तमेव सुखस्मरणाय संग्रहश्लोकेनाह—आसेक्य इत्यादि। यदि तेषां शुक्रमस्ति तत् किं षण्डत्वमुच्यते इत्याशङ्क्याह—अनयेत्यादि। विप्रकृत्येति विरुद्धया विशिष्टया वा प्रकृत्या। एते पुरुषदोषाः, योषितामप्येते एव द्रष्टव्याः, चरकेण नरनारीषण्डा-

आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥ ४६ ॥
यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योऽन्यमनस्थिस्तत्र जायते ॥ ४७ ॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत्।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणैः ॥ ४८ ॥
सर्पवृश्चिककुष्माण्ड-विकृताकृतयश्च ये।
गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम् ॥ ४९ ॥
गर्भो वातप्रकोपेण दौहृदे चावमानिते।
भवेत् कुब्जः कुणिः पङ्गुर्मूको मिन्मिन एव च ॥ ५० ॥
मातापित्रोस्तु नास्तिक्यादशुभैश्च पुराकृतैः।
वातादीनाञ्च कोपेन गर्भो विकृतिमाप्नुयात् ॥ ५१ ॥

वित्युक्तः। अनुक्तं कायवाङ्मनसां भेदस्य हेतुं दर्शयन्नाह—आहारेत्यादि। समुपेयातां संयोगं गच्छेताम्। अतिशयेनैव पापेन षण्डादपि निकृष्टानां विकृतापत्यानामुत्पत्तिहेतुं दर्शयन्नाह—यदेत्यादि। उपेयातां संयोगं कुर्य्याताम्। वृषस्यन्त्यौ रतार्थिन्यौ। अनस्थिरिति ईषदर्थे नञ्, तेनाल्पकोमलास्थिः ॥ ४३-४७ ॥

ऋतुस्नातेत्यादि। आर्त्तवं ऋतुकालजं शुद्धशोणितम्। कललं सिंहानप्रख्यम्। पैतृकैर्गुणैरिति केशश्मश्रुलोमनखदन्तशिरास्नायुधमनीरेतःप्रभृतिभिः। इमौ द्वावपि श्लोकौ जेज्झटाचार्य्येण न पठितौ ॥ ४८ ॥

सर्पेत्यादि। सर्पादिरूपा ये गर्भास्तत्प्रसवित्र्यः स्त्रियास्ते पापकृताः पापकृत्यादिकृता ज्ञेयाः। ननु मानुषशरीरात् कथं सर्पादीनामुत्पत्तिरित्याह—पापकृता भृशमिति, कर्म्मजमेवैतद्वैचित्र्यमित्यर्थः ॥ ४९ ॥

इदानीं गर्भस्थकुब्जादीनां दृष्टमेव वातादिदोषदुष्टिं हेतुञ्च निर्दिशन्नाह—गर्भ इत्यादि। दौहृदे चावमानिते इति गर्भिण्याः श्रद्धायां खण्डितायाम्। कुणिः विकृतपाणिः ॥ ५० ॥

किमात्मीयेनैवाशुभेन कर्म्मणा गर्भ एवंविधो भवति उतान्यापराधादपीत्याशङ्क्याह—मातापित्रोरित्यादि। नास्तिक्यादिति नास्ति परलोक इत्यादि मतिर्येषां ते नास्तिकाः, तेषां भावो नास्तिक्यं तस्मात् ॥ ५१ ॥

मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च।
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि॥
जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते।
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति॥
निश्वासोच्छ्वाससंक्षोभ-स्वप्नान् गर्भोऽधिगच्छति।
मातुर्निश्वसितोच्छ्वास-सङ्क्षोभस्वप्नसम्भवान्॥ ५२॥
सन्निवेशः शरीराणां दन्तानां पतनोद्भवौ।
तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः॥ ५३॥ रोम्णा-
भाविताः पूर्व्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्त्वभूयिष्ठाः पूर्व्वजातिस्मरा नराः॥ ५४॥
कर्म्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्व्वदेहे ये तानेव भजते गुणान्॥ ५५॥

इति सुश्रुतसंहितायां शारीरस्थाने शुक्रशोणितशुद्धिशारीरं नाम द्वितीयोऽध्यायः॥ २॥

अथ कस्माद् गर्भाशयस्थो वातादिकं न करोतीत्याह—मलाल्पत्वादित्यादि। वायोरयोगात् इति नञ् ईषदर्थे, तेनेषद्योगात्।

जरायुणा मुखे इत्यादि। वायोर्मार्गनिरोधादिति दोषजनकस्य वायोर्मार्गनिरोधादित्यर्थः। निश्वासादिरूपस्य तु वायोर्निःसरणमग्रे वक्ष्यति, यतस्तदभावे जीविताभाव एव भवति गर्भस्य। निःश्वासेत्यादि। संक्षोभः संचलनम्। माता याश्चेष्टा निश्वासादिकाः कुरुते ता गर्भोऽपि करोतीत्यर्थः॥ ५२॥

शरीरावयवानां चरणादीनां सन्निवेशादौ हेतुं निर्द्दिशन्नाह—सन्निवेशः शरीराणामित्यादि। शरीराणां शरीरावयवादीनां चरणादीनाम्। सन्निवेशो रचनाविशेषः। तलेष्विति हस्तपादतलेषु॥५३

इत्थं कार्य्यविशेषं निर्द्दिश्यात्मनो गुणभूताया बुद्धेरपि भावनाबलविशेषेण विशेषं निर्द्दिशन्नाह—भाविता इत्यादि। पूर्व्वदेहेष्वतिक्रान्तशरीरेषु सत्त्वभूयिष्ठाः सत्त्वगुणबहुलाः सन्तः सततम् अनवरतं, ये भाविताः शास्त्रभावनया भावितान्तःकरणास्ते शास्त्रबुद्धयो भवन्ति। तथा भाविता एव ये सत्त्वबहुलाः ते रजस्तमसोरावरकयोरभावात् पूर्व्वातिक्रान्तामपि जातिं स्मरन्ति। काये योऽसौ शरीरसन्निवेशस्तथा दोषकोपेण कुब्जत्वखञ्जत्वादि तथा वाचि मूकमिन्मिनत्वादि, मनसि च शास्त्रज्ञानपूर्व्वजातिस्मरणं, सर्व्वमेव स्वभावादिसिद्धमपि कर्म्मणैवेत्याह—कर्म्मणेत्यादि। कुतस्तदाप्नोतीत्याह—अभ्यस्ता इत्यादि॥ ५४। ५५॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शुक्रशोणितशुद्धिव्याख्यानाम द्वितीयोऽध्यायः॥ २॥

## तृतीयोऽध्यायः ।

**अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च ॥ २ ॥

तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद् वायुरुदीरयति । ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन । ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भाशयमनुप्रतिपद्यते क्षेत्रज्ञो वेदयिता स्प्रष्टा

शुद्धशुक्रार्त्तवसम्भवत्वाद् गर्भस्य शुक्रशोणितशुद्ध्यनन्तरं गर्भावक्रमणं युज्यते इत्याह—अथे-त्यादि । अत्र हि शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारमूर्च्छितं गर्भ इत्युच्यते, तस्याव-क्रान्तिरुपगमनमवतरणमिति यावत् गर्भावक्रान्तिः, साऽस्मिन्नस्तीति पूर्व्ववच्छप्रत्ययलुकौ । गर्भस्य शुक्रार्त्तवमूलत्वाच्छुक्रार्त्तवयोः स्वरूपमाह—सौम्यमित्यादि । सौम्यं सोमगुणभूयिष्ठं, आग्नेयम् अग्निगुणभूयिष्ठम् । ननु सर्व्वं पाञ्चभौतिकं तत् कथं भूतद्वयेनारम्भ इत्याह—इतरेषामित्यादि । इतरेषां पृथिवीवाय्वाकाशानां, अणुना विशेषेण सूक्ष्मप्रकारेण, सान्निध्यमाश्रितत्वमस्ति । कुत इत्याह—परस्परोपकारादित्यादि । भूजलानलानिलाकाशानां धारणसंहननपरिणामव्यूहावकाश-दानैः परस्परमुपकारस्तस्मात्, यथा—पार्थिवद्रव्ये पृथिव्याख्यं भूतं बलवदेकं शेषाणि सलिलादीनि चत्वारि दुर्व्वलानि आश्रयदानेनानुगृह्णाति, द्रव्यान्तरे तु सलिलादिभिरपि चतुर्भिर्बलवद्भिः दुर्व्वलं पृथिवीभूतमनुगृह्यते, एवंविधात् परस्परानुग्रहाच्च । परस्परानुप्रवेशश्च "अन्योऽन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्द्दिशेद्" इत्यनेन प्रागेव प्रतिपादितस्तस्मात् ॥ १ । २ ॥

इदानीं शुक्रार्त्तवयोः स्वरूपमभिधाय गर्भावतरणप्रक्रियामाह—तत्रेत्यादि । तत्र इति वाक्योपक्रमे । संयोगे विशिष्टस्पर्शेच्छासमारब्धप्रयोगे । तेजः स्त्रीपुरुषेन्द्रियद्वयसंघर्षज उष्मा, तं वायुरुदीरयति उत्कटं करोति । ततस्तदनन्तरं तेजोऽनिलसन्निपातात् शुक्रं च्युतमिति सुरतलक्षणव्यायामजोष्मविलीनविद्रुतमनिलाच्च्युतमित्यर्थः । योनिमभिप्रतिपद्यते इति योनि-मभितः सर्व्वतः प्रतिपद्यते, तेन योनेस्तृतीयावर्त्तावस्थितगर्भशय्यां प्रतिपद्यते इत्यर्थः । तत्र प्रागुक्तप्रकारविसर्पितेनार्त्तवेन च संसृज्यते । तस्य शुक्रार्त्तवस्य पञ्चात्मकस्य षष्ठचेतनाधातुसंयोगे-नैव गर्भत्वमिति तत्संयोगं दर्शयन्नाह—तत इत्यादि । ततस्तस्मादग्नीषोमसंयोगात् । अन्वक्षं तत्क्षणमेव, न क्षणान्तरे । क्षेत्रज्ञः पञ्चमहाभूतशरीरक्षेत्रवित् कर्म्मपुरुषः, गर्भाशयं गर्भशय्यां, अनुप्रतिपद्यते प्राप्नोति । केन सह ? भूतात्मना भौतिकशरीरेण सूक्ष्मेण लिङ्गशरीरेणेत्यर्थः । कीदृशः ? संसृज्यमानः । कैः ? सत्त्वरजस्तमोभिः प्राकृतैर्गुणैः । पुनः किं विशिष्टः ? दैवासुरै-

घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता यः कोऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते ॥ ३ ॥

तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकमिति। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः। अदृष्टार्त्तवाप्यस्तीत्येके भाषन्ते ॥ ४ । ५ ॥

रपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणः, भावः सत्त्वं मन इत्यर्थः। तेन देवादीनां सप्तानां सप्तभिः सात्त्विकैर्भावैः, असुरादीनां षण्णां षड्भिः राजसैर्भावैः, पश्वादीनामपरैश्च त्रिभिस्तामसैर्भावैः। सत्त्वस्य च मनःपर्य्यायस्य प्रेरकत्वं तन्त्रान्तरे प्रतिपादितम्। तदुक्तं चरके—"अस्ति खलु सत्त्वमौपपादुकं यज्जीवस्पृक् शरीरेणाभिसंबध्नाति" इति। ननु कः क्षेत्रज्ञः य एवंविधः सन् गर्भाशयमनुप्रतिपद्यते इत्याह—यः कोऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते महर्षिभिरिति शेषः। य कः इति सर्व्वनामपदद्वयं तस्य दुर्बोधत्वज्ञापनार्थम्। असाविति सर्व्वनामपदं तस्य सर्व्वगतत्वं सद्गुरूपदिष्टत्वञ्च ज्ञापयति। इत्येवमादिभिः कैर्नामभिरित्याह—वेदयितेत्यादि। वेदयिता मनसो ज्ञापयिता। इन्द्रियाणाञ्च पञ्चानामयमेव ज्ञापक इति दर्शयन्नाह—स्प्रष्टेत्यादि। स्प्रष्टा स्पर्शनेन्द्रियस्य स्पर्शबोधहेतुत्त्वात्। एवं घ्रातेत्यादिष्वपि योज्यम्। अस्य कर्म्मपुरुषस्यानाधारां स्थितिं निराकुर्व्वन्नाह—पुरुष इति ; पुरि भौतिकशरीरे वसतीति पुरुषः। तस्य सुकृतिफलभोक्तृत्वं दर्शयन्नाह—स्रष्टेत्यादि। स्रष्टा चेतनायोगेन, तस्यैव कर्त्तृत्वात्। तदुक्तं चरके—"चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते" इति। गन्ता संसरणशीलः। तथा साक्षी ज्ञत्वात्। तथा धाता शरीरादिसंयोगधारणहेतुत्वात्। वक्ता वदत्ययमेव, एतेन कर्म्मेन्द्रियाणामपि वचनादानविहरणोत्सर्गादेश्चाप्ययमेव हेतुः। यदि वेदयितेत्यादि स्वरूपोपेतः परमर्षिभिरभिधीयते तत् कथं क्लेशकारिणि गर्भाशये तिष्ठतीत्याशङ्क्याह—दैवसंयोगादिति ; दैवस्य प्राक्तनजन्मकर्म्मणो धर्म्माधर्म्माभिधानस्य सम्बन्धात्। अक्षयोऽव्ययोऽचिन्त्योऽपि गर्भाशयमनुप्रविश्यावतिष्ठते गर्भाशये कर्म्मवशात् गर्भभावेनावस्थितिं करोति ॥ ३ ॥

कथमविशिष्टकारणाद् विशिष्टकार्य्योत्पाद इत्याह—तत्रेत्यादि। ननु शुक्रबाहुल्यात् पुमान् इति कस्मादुक्तम्? यत आर्त्तवस्यैव बाहुल्यमुक्तम्, आर्त्तवं हि चतुरञ्जलिप्रमाणं, शुक्रन्तु प्रसृतिमात्रमिति, नैवं, यावन्मात्रमार्त्तवं गर्भाशयावस्थितं मलरहितं गर्भजननं तावदेव ग्राह्यम्। अथवा स्वमानापेक्षया शुक्रशोणितयोर्बाहुल्यमल्पत्वं चाभिप्रेतम्। शुक्रन्तु कदाचिदत्यन्तहर्षवशात् बहु स्रवति, कदाचिद् वैमनस्यादल्पमिति। अन्ये त्वाचार्य्या एवं ब्रुवन्ति—शुक्रार्त्तवयोन्यूनाधिकसमत्वं वीर्य्येण भवति। यद्येवं तर्हि प्रागुक्तं पुत्रीयकरणं निरर्थकं? नैतदस्ति, किन्तु श्रेयसा कर्म्मणा विना नैव रूपादिसङ्गमिनो भवन्ति पुत्राः। उक्तं हि—"एवं जाता रूपवन्तः सत्त्ववन्तश्चिरायुषः। भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः॥" इति। तस्मात् पुत्रीयकरणं सार्थकमेव। स्त्रीपुंसयोः

भवन्ति चात्र।

पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्।
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्॥
स्फुरद्भुजकुचश्रोणि-नाभ्यूरुजघनस्फिचम्।
हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति॥ ६॥
नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा।
ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥
मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत्॥ ७॥
तद् वर्षाद् द्वादशात् काले वर्त्तमानमसृक् पुनः।
जरापक्कशरीराणां याति पञ्चाशतः क्षयम्॥ ८॥
युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला।
पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्॥ ९॥

संयोगो यस्मिन् कालेऽपत्यफलप्रदो भवति तं कालविशेषमाह—ऋतुरित्यादि। दृष्टमार्त्तवं यस्मिन् काले स दृष्टार्त्तवः कालः ऋतुः, स च द्वादशरात्रं भवति। द्वादशरात्रमिति षोड़शदिनेषु मध्ये आद्यं दिनत्रयमन्तिमञ्च षोड़शं योनिसङ्कोचदिनं न गणनीयम्। एकीयमतमाह—अदृष्टे त्यादि॥ ४।५॥

अदृष्टार्त्तवाया ऋतुमत्या लक्षणमाह—पीनेत्यादि। प्रक्लिन्ना प्रकर्षेण क्लेदमापन्ना आत्मादयो यस्याः, आत्मा देहः, देहत्वेऽप्यत्यन्तक्लेदज्ञापनाय मुखस्य पुनरुक्तिः। द्विजशब्देन द्विजसमीपवर्त्तिनो दन्तवेष्टका अभिप्रेताः, द्विजानां प्रक्लेदासम्भवात्। हर्षौत्सुक्यं रतौ सातिशयोऽभिलाषः॥ ६॥

योनिसङ्कोचेन वीजस्य गर्भाशयाप्राप्तिं दर्शयन्नाह—नियतमित्यादि। योनिः गर्भाशयः, संव्रियते सङ्कोचं याति। अत एव वीजं न प्रविशति।

मासेनेत्यादि। काले द्वादशवर्षादौ षष्टेश्चार्व्वाक्, अन्ये पञ्चाशद्वर्षाणि यावत्। तमेव कालं निर्द्दिशन्नाह—तद् वर्षाद् द्वादशादित्यादि। तत् आर्त्तवं द्वादशवर्षादूर्द्ध्वं वर्त्तमानमुपचीयमान शरीरधातूनां योषितां काले मासि मासि प्रवर्त्तमानं, तासामेव पञ्चाशत ऊर्द्ध्वं जरापचीयमान शरीरधातूनां क्षयं याति शनैरिति शेषः। तस्मिन् ऋतुकालेऽपि समविषमदिवसयोः पुंस्त्रियोर्जन्म दर्शयन्नाह—युग्मेष्वित्यादि। युग्मेष्विति समेषु दिवसेषु, अन्यथेति विषमेषु दिवसेषु, शुचिः कायशुचिः। ननु प्रागुक्तं शुक्रबाहुल्यात् पुमानार्त्तवबाहुल्यात् स्त्रीति किमयं विकल्प उत समुच्चय

तत्र सद्योगृहीतगर्भाया लिङ्गानि—श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः॥ १०॥

स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा।
अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात्।
प्रसेकः सदनश्चापि गर्भिण्या लिङ्गमुच्यते॥ ११॥

तदा प्रभृत्येव व्यायामं व्यवायमतितर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कटुकासनञ्चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणञ्चाकाले वेगविधारणञ्च न सेवेत॥ १२॥

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ १३॥

तत्र प्रथमे मासि कललं जायते; द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते; यदि पिण्डः पुमान्, स्त्री चेत् पेशी, नपुंसकं

इति १ समुच्चयोऽयम्, तदुक्तं विदेहे—"युग्मेषु तु दिनेष्वासां भवत्यल्पतरं रजः। संयोगं तत्र या गच्छेत् सा पुमांसं प्रसूयते। अयुग्मेषु दिनेष्वासां भवेद् बहुतरं रजः। संयोगं तत्र या गच्छेत् सा तु कन्यां प्रसूयते" इति॥ तथा भोजोऽपि—"अयुग्मे स्त्री पुमान् युग्मे सन्ध्यायान्तु नपुंसकम्। शुक्राधिकत्वात् पुरुषः प्रमदा रजसोऽधिकात्। शुक्रशोणितयोः साम्यात् तृतीया प्रकृतिर्भवेत्॥' इति॥ ७—९॥

परिहार्य्यपरिहारार्थं सद्योगृहीतगर्भलक्षणं निर्दिशन्नाह—तत्र सद्योगृहीतेत्यादि। श्रमः खेदः, ग्लानिः क्लमः, सक्थिसदनमूरुग्लानिः, अवबन्धोऽप्रवृत्तिः, स्फुरणं कम्पनम्॥ १०॥

उत्तरकालीनं गृहीतगर्भाया लक्षणमाह—स्तनयोरित्यादि। प्रसेकस्थूत्करणम्॥ ११॥

तदेत्यादि। अकालशब्द एतत् ज्ञापयति—काले अष्टमे मासि गर्भिण्या अपि स्नेहादिक्रियान्तर्गते आस्थापनानुवासने देये॥ १२। १३॥

तत्रेत्यादि। कललं सिङ्घानप्रख्यम्। द्वितीय इत्यादि। शीतः श्लेष्मा, उष्मा पित्तं, कफानिलयोरप्युष्मसम्भवात् परिणामहेतुत्वम्। तदुक्तं चरके—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" इति। घनः कठिनः। यदीत्यादि। पिण्डः वर्त्तुलाकृतिः। पेशी दीर्घाकृतिः। अर्बुदं वर्त्तुलफलार्द्धमिति। गयी तु भोजदर्शनात् पिण्डादीनामन्यथाकारं पठति; यथा—'चतुरस्रा भवेत् पेशी वृत्तः पिण्डो घनः स्थूलः। शाल्मलीमुकुलाकारमर्बुदं परिचक्षते॥" इति

चेद्वत्तु दमिति। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्तेऽङ्गप्रत्यङ्ग-विभागश्च सूक्ष्मो भवति। चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति, गर्भहृदय-प्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति; कस्मात्? तत्स्थानत्वात्। तस्माद् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदयाञ्च नारीं दौर्हृदिनी-माचक्षते। दौर्हृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति। तस्मात् सा यद् यदिच्छेत् तत्तत् तस्यै दापयेत्। लब्धदौर्हृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति॥ १४॥

भवन्ति चात्र

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी।<br>
गर्भाबाधभयात् तांस्तान् भिषगाहृत्य दापयेत्॥<br>
सा प्राप्तदौर्हृदा पुत्रं जनयेत गुणान्वितम्।<br>
अलब्धदौर्हृदा गर्भे लभेतात्मनि वा भयम्॥<br>
येषु येष्विन्द्रियार्थेषु दौर्हृदे वै विमानना।<br>
प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये॥<br>
राजसन्दर्शने यस्या दौर्हृदं जायते स्त्रियाः।<br>
अर्थवन्तं महाभागं कुमारं सा प्रसूयते॥<br>
दुकूलपट्टकौषेय-भूषणादिषु दौर्हृदात्।<br>
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते॥

तृतीये इत्यादि। शाखाश्चतस्रो मूर्द्धोरःपृष्ठोदराण्यङ्गानि। चिवुकनासौष्ठश्रवणाङ्गुलिपार्ष्णिप्रभृतीनि प्रत्यङ्गानि। चतुर्थे इत्यादि। तत्स्थानत्वात् हृदयस्थानत्वात्। इन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः। द्विहृदयामिति द्वितीयं हृदयं यस्याः सा द्विहृदया, ताम्। दौर्हृदेत्यादि। कुणिं विकृतहस्तम्। तत्र कुब्जादिष्ववयवसमुदायेन्द्रियाधिष्ठानजो दोषो दौर्हृदविमाननाजनितो यथाशास्त्रमूह्यः॥ १४॥

गद्योक्तमेवार्थं पद्यैराह—भवन्तीत्यादि। भोक्तुमित्यस्योपलक्षणत्वात् द्रष्टुं श्रोतुमित्यादिक-मपि बोद्धव्यम्। सा प्राप्तेत्यादि। अलब्धदौर्हृदा अप्राप्ताभिलषितपदार्था। गर्भे गर्भविषये, भयं लभेत, आत्मनि वा आत्मविषये वा भयं लभेत प्राप्नुयात्। येष्वित्यादि। येषु येष्विन्द्रियार्थेषु शब्दादिषु, दौर्हृदे श्रद्धायां, विमानना खण्डितत्वं, तस्मिन् तस्मिन्निन्द्रिये तस्य तस्येन्द्रियार्थस्य ग्राहके इन्द्रिये सुतस्यार्त्तिः पीड़ा प्रजायते।

इदानीं दौर्हृदविशेषैर्गुणविशेषाक्रान्तानामपत्यानामुत्पत्तिं सूचयन्नाह—राजसन्दर्शने इत्यादि। महाभागं महापुण्यवन्तम्। दुकूलमित्यादि। दुकूलपट्टं पट्टवस्त्रम्। कौशेयं क्रिमिकोशोत्थम्। भूषणानि मुक्ताहारप्रभृतीनि, ललितं शृङ्गारचेष्टायुक्तम्। 'दुकूले पट्टकौशेये भूषणादिषु' इति

आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते।
दवताप्रतिमायान्तु प्रसूते पार्षदोपमम्॥
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते।
गोधामांसाशने पुत्रं सुषुप्सुं धारणात्मकम्।
गवां मांसे च बलिनं सर्व्वक्लेशसहं तथा॥
माहिषे दौर्हृदाच्छूरं रक्ताक्षं लोमसंयुतम्।
वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम्॥
मार्गाद् विक्रान्तजङ्घालं सदा वनचरं सुतम्।
सृमराद् विग्नमनसं नित्यभीतञ्च तैत्तिरात्॥
अतोऽनुक्तेषु या नारी समभिध्याति दौर्हृदम्।
शरीराचारशीलैः सा समानं जनयिष्यति॥
कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्।
यथा तथा दैवयोगाद् दौर्हृदं जनयेद् हृदि॥ १५॥

पञ्चमे मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः। सप्तमे सर्व्वाङ्गप्रत्यङ्ग-विभागः प्रव्यक्ततरः। अष्टमेऽस्थिरीभवत्योजः, तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च, ततो बलिं मांसौदनमस्मै दापयेत्। नवमदशमैकादश-द्वादशानामन्यतमस्मिन् जायते। अतोऽन्यथा विकारी भवति॥ १६॥

केचित् पठन्ति, व्याख्यानयन्ति च— दुकूलं सूक्ष्मं वस्त्रं, पट्टं पट्टवस्त्रम्। आश्रमे इत्यादि। यस्या आश्रमे तपस्विनामधिष्ठाने श्रद्धा भवेत् सा एवम्भूतं जनयेदिति पिण्डार्थः। संयतात्मानं संयतेन्द्रियम्। देवताप्रतिमेत्यादि। पार्षदोपममिति पार्षदेषु सभापुरुषेषूपमा यस्य स तथा तं सभ्यसमम्। दर्शने इत्यादि। व्याला व्याघ्रादयो हिंस्राः पशवः। गोधेत्यादि। सुषुप्सुं स्वप्तुमिच्छुं धारणात्मकं हृदयगृहीतवस्तूनाममोचकम्। गवामित्यादि। वराहमांसादिति अभिलषितादिति शेषः। मार्गादित्यादि मार्गात् मृगमांसात्। विक्रान्तम् उद्योगिनं, जङ्घालं वेगवन्तम्। सृमरादित्यादि सृमरः महाशूकरः, अन्ये महाश्वाकारश्चमरानूकः। नित्यभीतञ्च तैत्तिरादित्यत्र नित्यशीलञ्च तैत्तिरादित्यपरे, शीलं शीलवन्तम्। अनुक्तदौर्हृदसंग्रहार्थं श्लोकमाह— अतोऽनुक्तेष्वित्यादि। यादृशेषु दौर्हृदं श्रद्धां समभिध्याति चेतसि करोति, तेन समानमित्यर्थः। कर्म्मणेत्यादि। दैवयोगात् दौर्हृदं हृदि तथा जनयेत्, यथा पुनर्जन्तोः कर्म्मणा चोदितं प्रेरितं भवितव्यं भवेत्॥ १५

पञ्चमे इत्यादि। प्रतिबुद्धतरं भवति जागर्त्तीत्यर्थः। अष्टमे इत्यादि। ओजः अशेषधातुधाम हृदि स्थितम्। नैर्ऋतभागत्वात् रक्षसामंशत्वात्, "नैर्ऋताय भागश्च बालेषु रुद्रेण दत्तः" इति कुमारतन्त्रे प्रतिपादितम्। ततस्तस्मात् कारणादष्टमे मासि अस्मै नैर्ऋताय बलिं दापयेत्॥ १६॥

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, सास्य मातुराहाररसवीर्य्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात् प्रभृति सर्व्वशरीरावयवानुसारिणीनां रसवहानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति॥ १७॥

गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः, शिरोमूलत्वाद् देहेन्द्रियाणाम्। हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात्। नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः। पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाद् चेष्टाया गर्भस्य। मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य। तत् तु न सम्यक्। सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवत् चूतफलवच्च। तद्यथा— चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथक् पृथग् दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्, तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति; एतेनैव वंशाङ्कुरोऽपि व्याख्यातः। एवं गर्भस्य तारुण्ये सर्व्वष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति।। १८॥

तत्र गर्भस्य पितृजमातृजरसजात्मजसत्त्वजसात्म्यजानि शरीरलक्षणानि

निराहारस्यापि गर्भस्य वर्द्धने हेतुं निर्दिशन्नाह—मातुरित्यादि। मातुर्गर्भिण्याः रसवहायां नाड्यां गर्भनाभिनाड़ी या प्रतिबद्धा सा अस्य गर्भस्य मातृभुक्तमाहाररसवीर्य्यमभिवहति प्रापयतीत्यर्थः। नन्वङ्गप्रत्यङ्गप्रव्यक्तीभावे गर्भनाभिनाड़ी मातुराहाररसवीर्य्यमभिवहति, अङ्गप्रत्यङ्गप्रव्यक्तीभावात्तु पूर्व्वं कथं गर्भपुष्टिः स्यादित्याह—असञ्जाताङ्गप्रत्यङ्गविभागमित्यादि। आ निषेकात् प्रभृति इति आ समन्ततो भावेन निषेचनमानिषेको योनौ शुक्रस्य निषेचनं, तत्प्रभृति गर्भाधानं मर्य्यादीकृत्येत्यर्थः। धमनीनामुपस्नेहो जीवयति यथा—पूर्णसरःसलिलोपस्नेहः तीरजाततरुकदम्बकं जीवयति तद्वत् प्राणधारणं करोतीत्यर्थः। तथाच भोजः—"गर्भो रुणद्धि स्रोतांसि रसरक्तवहानि वै। रक्ताज्जरायुर्भवति नाड़ी चैव रसात्मिका। सा नाड़ी गर्भमाप्नोति तया गर्भस्य वर्द्धनम्। यद् यदश्नाति मातास्य भोजनं हि चतुर्व्विधम्। तस्मादन्नाद्रसीभूतं वीर्य्यं त्रिधा प्रवर्त्तते। भागः शरीरं पुष्णाति स्तन्यं भागेन वर्द्धते। गर्भः पुष्यति भागेन वर्द्धते च यथाक्रमम्। गर्भं कुल्येव केदारं नाड़ी प्रीणाति तर्पिता" ॥ इति ॥ १७॥

"गर्भस्य हि सम्भवतः पूर्व्वमिति" शौनकादिनानामुनिभिर्गर्भस्योत्पत्तेर्मतान्तरं दर्शितं, तत् समस्तं धन्वन्तरिणा निरस्तं मीमांसितञ्च ॥ १८॥

तत्र गर्भस्येत्यादि। लक्ष्यन्ते इति लक्षणानि, कर्म्मणि ल्युट्प्रत्ययः। तेन लक्षणीयानि

व्याख्यास्यामः। गर्भस्य केशश्मश्रुलोमास्थिनखदन्तशिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि। मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि। शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि। इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि। सत्त्वजान्युत्तरत्र वक्ष्यामः। वीर्य्यमारोग्यं वलवर्णौ मेधा च सात्म्यजानि ॥ १९ ॥

तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति, दक्षिणाक्षिमहत्त्वञ्च, पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति, बाहुल्याच्च पुंनामधेयेषु द्रव्येषु दौर्हृदमभिध्यायति, स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुंनामान्येव, प्रसन्नमुखवर्णा च भवति, तां ब्रूयात् पुत्रमियं जनयिष्यतीति ; तद्विपर्य्यये कन्याम्। यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणञ्च तस्यां नपुंसकमिति विद्यात्। यस्या मध्ये निम्नं द्रोणीभूतमुदरं सा युग्मं प्रसूयत इति ॥ २० ॥

भवन्ति चात्र।

देवताब्राह्मणपराः शौचाचारहिते रताः।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान् ॥ २१ ॥

ज्ञातव्यानीत्यर्थः। तान्येव ज्ञातव्यानि पितृमातृभ्यः कारणेभ्यः प्रत्येकं निर्द्दिशन्नाह—गर्भस्येत्यादि। आत्मजानीति आत्मसन्निधानजातानि, न त्वात्मनो जातानि, आत्मनो निर्व्विकारस्य विकारजनकत्वाभावात् प्रकृतिभावानुपपत्तेश्च स्वाभाविकप्रकृतिभावे च मोक्षानुपपत्तिः, तस्य हि तत्स्वभावत्वे भावस्यापरित्याज्यत्वादिति। आदिशब्दाज्ज्ञानायोनिजन्मादिकञ्च। सत्त्वेत्यादि। उत्तरत्र गर्भव्याकरणे ॥ १९ ॥

गर्भस्याप्रत्यक्षस्यापि स्तन्यदर्शनादिलक्षणेन स्त्रीपुंनपुंसकलक्षणानि निर्द्दिशन्नाह—तत्रेत्यादि। प्रसन्नमुखवर्णा चेत्यत्र चकारादूर्द्ध्वरोमराजित्वादीनि ग्राह्याणि। प्रागभिहितलक्षणमिति स्त्रीलक्षणं पुरुषलक्षणञ्च प्रतिपादितं तद्द्वयमपि च भवति। यस्या मध्ये इत्यादि। द्रोणीभूतं द्रोणीसदृशं, द्रोणी जलक्षेपणी। अन्यत्राप्युक्तं—"रोमराजी भवेद्भिन्ना यस्याः सा सूयते यमौ" इति ॥ २० ॥

अङ्गप्रत्यङ्गनिर्वृत्तिः स्वभावादेव जायते ।
अङ्गप्रत्यङ्गनिर्वृत्तौ ये भवन्ति गुणागुणाः ।
ते ते गर्भस्य विज्ञेया धर्म्माधर्म्मनिमित्तजाः ॥ २२ ॥

इति सुश्रुतसंहितायां शारीरस्थाने गर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥

कायवाक्चित्तगुणवद्गर्भप्रसवज्ञानं दर्शयन्नाह—देवतेत्यादि । स्वभावमीश्वरमित्यादिश्लोकेन या स्वभावादङ्गप्रत्यङ्गनिर्वृत्तिः सूचिता तां प्रतिपाद्य तन्निर्वृत्तौ प्राक्तनश्लोकाभिहितगुणागुणोपपत्तिं धर्म्माधर्म्महेतुतया निर्द्दिशन्नाह अङ्गप्रत्यङ्गेत्यादि ॥ २१ । २२ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे गर्भावक्रान्तिशारीरव्याख्यानाम तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः।

अथातो गर्भव्याकरणशारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः ॥ २ ॥

तस्य खल्वेवंप्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमावभासिनी नाम, या सर्व्ववर्णानवभासयति पञ्चविधाश्च च्छायां प्रकाशयति; सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्म-कण्टकाधिष्ठाना। द्वितीया लोहिता नाम व्रीहिषोड़शभागप्रमाणा तिलकालक-न्यच्छव्यङ्गाधिष्ठाना। तृतीया श्वेता नाम व्रीहिद्वादशभागप्रमाणा चर्म्मदलाजगल्ली-

गर्भावक्रान्तिशारीरानन्तरमवक्रान्तस्य गर्भस्य व्याकरणार्हत्वात् गर्भव्याकरणं वक्तुं युज्यते इत्याह—अथेत्यादि। गर्भव्याकरणं गर्भविवरणमित्यर्थः। तत्र प्राणास्त्वक्कलादयश्च विवरणीयाः, तेषु प्राणानामतीव देहस्थितिहेतुत्वात् प्रागुपादानमाह—अग्निरित्यादि। अग्निरत्र पाचकभ्राजका-लोचकरञ्जकसाधकानां पाञ्चभौतिकानां सर्व्वधात्वनुगतानाञ्चोष्मणां शक्तिरूपतयावस्थितो वाचोऽधिदेवत्वमापन्नो बोद्धव्यः। श्लेष्मरसशुक्रादीनां तोयात्मकानां भावानां रसनेन्द्रियस्य च शक्तिरूपतयावस्थितो मनसोऽधिदेवत्वमापन्नः सोम इति। वायुः पञ्चात्मकः प्राणादिभेदेन। सत्त्वरजस्तमांसि तु प्रकृतेरष्टरूपाया गुणाः। इन्द्रियाणि श्रवणदर्शनस्पर्शनरसनघ्राणानीति पञ्च। भूतात्मा शुभाशुभकर्म्मभिः परिगृहीतः कर्म्मपुरुषः; एते चाग्नीषोमादयः प्राणयन्ति जीवयन्तीति प्राणाः। तत्राग्निस्तावदाहारपाकादिकर्म्मणा प्राणयति। सोमश्च सौम्यधातोरोजःप्रभृतेः पोषणेन। वायुश्च दोषधातुमलादीनां सञ्चारणेनोच्छ्वासनिःश्वासाभ्याञ्च। सत्त्वं रजस्तमश्च मनो रूपतया परिणतं भूतात्मनः शरीरान्तरग्रहणमोक्षणे हेतुरिति तदपि प्राणयति। पञ्चेन्द्रियाणि चक्षुरादीनि रूपादिग्रहणकर्म्मणा प्राणयन्ति। एवं भूतात्मा कर्म्मपुरुषोऽप्यशेषस्यैव कर्म्मराशे-श्चेतनाहेतुरिति प्राणयति ॥ १ । २ ॥

प्राणसद्भाव एव शुक्रशोणितस्य परिणामेन त्वगादिसम्भव इत्यनन्तरं त्वगादिव्याकरणं कुर्व्वन्नाह—तस्येत्यादि। तस्य शुक्रशोणितस्य। एवंप्रवृत्तस्य भूतात्माधिष्ठितस्य। तासामित्यादि। सर्व्ववर्णान् गौरादिकान्। अवभासयतीति भ्राजकेनाग्निनेति शेषः। पञ्चविधां पञ्चात्मिकां पञ्च-महाभूतकृतत्वात्। चशब्दात् प्रभापि ग्राह्या। "आसन्ना लक्ष्यते च्छाया प्रभा दूरात् प्रकाशते" इति तयोर्भेदः। तस्यास्त्वचः प्रमाणं निर्दिशन्नाह सेत्यादि। व्रीहिरत्र यवः, प्रत्येकं व्रीहिविस्तारस्य विंशतिर्भागाः परिकल्पनीयाः, ते चाष्टादशभागाः अवभासिन्या प्रमाणं, एवं वक्ष्यमाणेष्वपि।विंशति-

मशकाधिष्ठाना। चतुर्थी ताम्रा नाम व्रीहेरष्टभागप्रमाणा विविधकिलास-कुष्ठाधिष्ठाना। पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना। षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्ब्बुदश्लीपदगलगण्डाधिष्ठाना। सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना। यदेतत् प्रमाणं निर्द्दिष्टं तन्मांसलेष्ववकाशेषु, न ललाटे सूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढ़ं विध्येदिति॥ ३॥

कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः॥ ४॥

भवतश्चात्र।

यथा हि सारः काष्ठेषु छिद्यमानेषु दृश्यते।
तथा धातुर्हि मांसेषु छिद्यमानेषु दृश्यते॥ ५॥
स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः॥ ६॥

तासां प्रथमा मांसधरा नाम, यस्यां मांसे शिरास्नायुधमनीस्रोतसां प्रताना भवन्ति॥ ७॥

भवति चात्र।

यथा विसमृणालानि विवर्द्धन्ते समन्ततः।
भूमौ पङ्कोदकस्थानि तथा मांसे शिरादयः॥ ८॥

भागेषु षोड़शप्रभृतयो भागा बोद्धव्याः। अङ्गुष्ठोदरप्रमाणमिति एतेनैतदुक्तं भवति—सप्तानां त्वचां समुदायेनाङ्गुष्ठोदरप्रमाणमस्ति। अङ्गुष्ठोदरन्तु विंशतितमभागोनषड्यवप्रमाणम्॥ ३॥

कला इत्यादि। दधतीति धातवो रसरक्तमांसादयः। कफपित्तपुरीषाण्यपि प्राकृतानि स्वकर्म्मणा दधतीति धातवः, तेषामाशया अवस्थानप्रदेशा धात्वाशयाः, तेषामन्तरेषु मर्य्यादाः सीमाभूता इत्यर्थः। तासामन्तःस्थितत्वेनाप्रत्यक्षाणामस्तित्वं प्रत्युपमानं प्रमाणं निर्द्दिशन्नाह—भवत इत्यादि। एतेन कलासाधितपृथग्धातूपलम्भकार्य्येणाव्यक्तमेव कलानामस्तित्वं साधितं भवेत्। तासामुपष्टम्भकं निर्द्दिशन्नाह—स्नायुभिरित्यादि। कलाभागान् कलाविभागविशेषान्, सन्ततान् सम्यक्प्रकारेण व्याप्तान्। जरायुरुल्वाकारो येन वेष्टिताः प्राणिनो जायन्ते, कलावेष्टकोऽपि तद्वदेव। वृद्धवाग्भटेन कलास्वरूपमभिहितम्; यथा—"यस्तु धात्वाशयान्तरेषु क्लेदोऽवतिष्ठते यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुरसशेषोऽल्पत्वात् कलासंज्ञः" इति॥ ४—६॥

तासामित्यादि। यस्यां कलायामधिष्ठिते मांसे शिरादीनां प्रताना विस्तारा भवन्ति। अमुमेवार्थं दृष्टान्तेन द्रढयन्नाह—यथा विसमृणालानीत्यादि। तथा मांसे इत्यादि तथा प्रथमकलायां मांसस्थाः

द्वितीया रक्तधरा नाम मांसस्याभ्यन्तरतः, तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति ॥ ९ ॥

भवति चात्र।

वृक्षाद् यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत्।
मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते ॥ १० ॥

तृतीया मेदोधरा नाम। मेदो हि सर्व्वभूतानामुदरस्थमण्वस्थिषु च, महत्सु च मज्जा भवति ॥ ११ ॥

भवति चात्र।

स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः।
अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते ॥ १२ ॥
शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता ॥ १३ ॥

चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति ॥ १४ ॥

भवति चात्र।

स्नेहाभ्यक्ते यथा ह्यक्षे चक्रं साधु प्रवर्त्तते।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥ १५ ॥

पञ्चमी पुरीषधरा नाम, यान्तःकोष्ठे मलमभिविभजते पक्वाशयस्था ॥१६॥

शिरादयो भवन्ति। ननु रसानन्तरं रक्तं ततो मांसं, तत् कथं प्रागेव मांसधरा पठिता ततो रक्तधरेति ? उच्यते, पोषणे क्रमोऽयं ननु धारणे; अतएव यस्यामित्याधारत्वेन कलाः निर्द्दिष्टाः ॥ ७। ८ ॥

द्वितीयेत्यादि। अत्र दृष्टान्तेन दार्ष्टान्तिकं द्रढयन्नाह—वृक्षादित्यादि। संप्रसिच्यते प्रस्रवतीत्यर्थः ॥ ९। १० ॥

तृतीयेत्यादि। अण्वस्थिषु अल्पास्थिषु। ननु मज्जा अस्थ्नामन्तर्भवति, तत् कथं मेदस्त्वन्तरित्याह—महत्स्वित्यादि। अण्वस्थिषु मेदः, महत्सु मज्जेति। गद्योक्तमर्थं श्लोकेन स्पष्टीकुर्व्वन्नाह—स्थूलेत्यादि। इतरेषु अल्पास्थिषु सर्व्वेषु। ननु मेदोमज्जानुकारी उपधातुर्वसाख्यः कः ? इत्याह—शुद्धेत्यादि ॥ ११—१४ ॥

तथा धृतस्य श्लेष्मणो गुणकर्म्माणि दर्शयन्नाह—स्नेहेत्यादि। अक्ष इति चक्रच्छिद्रान्तर्गतकाष्ठमित्यर्थः ॥ १५ ॥

पञ्चमीत्यादि। अन्तःकोष्ठ इति कोष्ठस्यान्तर्मध्यमन्तःकोष्ठं, तस्मिन् मलं मूत्रपुरीषरूपतया विभजति। गयी तु अन्तःकोष्ठे कोष्ठमध्ये, तत्रापि रसविभागे किट्टस्य पुरीषत्वात् तत् पुरीषं कोष्ठे विभजति कोष्ठात् पृथक् करोति, स चात्र पुरीषविभागोऽग्निमारुतकृतोऽपि, तत्राग्निकृतः

अस्रजः श्लेष्मणश्चापि यः प्रसादः परो मतः।
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः।
उदरे पच्यमानानामाध्मानाद् रुक्मसारवत्॥ २६॥
कफशोणितमांसानां सारो जिह्वा प्रजायते॥ २७॥
यथार्थमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्।
अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥ २८॥
मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्।
शिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः।
आशय्याभ्यासयोगेन करोत्याशयसम्भवम्॥ २९॥

रक्तमेदःप्रसादाद् वृक्कौ। मांसासृक्कफमेदःप्रसादाद् वृषणौ। शोणितकफप्रसादजं हृदयं, यदाश्रया हि धमन्यः प्राणवहाः। तस्याधो वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम च॥ ३०॥

तद् हृदयं विशेषेण चेतनास्थानम्, अतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति॥ ३१॥

भवति चात्र।

पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्।
जाग्रतस्तद् विकशति स्वपतश्च निमीलति॥ ३२॥

अन्त्रादिकोत्पत्तिं दर्शयन्नाह—अस्रज इत्यादि। आध्मानात् पच्यमानानां वायुनाग्नेः समिन्धनात् पच्यमानानामित्यर्थः। गयी तु, हृदये पच्यमानानामिति पाठं पठति। यथार्थमित्यादि। उष्मणा पित्तेन सह युक्तो वायुः स्रोतांसि दारयेत् दारणं कुर्य्यात्। कथं? यथार्थं यथाप्रयोजनमित्यर्थः। अनुप्रविश्येत्यादि। वायुः पिशितं मांसं अनुप्रविश्य पेशीर्विभजते, पेशी मांसखण्डम्। मेदस इत्यादि। शिरास्नायुत्वमाप्नुयादिति शिराः स्नायूंश्च वायुः कुर्य्यादित्यर्थः। आशय्येत्यादि। आशय्य अभ्यासयोगेन वायुः स्थितिं कृत्वेत्यर्थः॥ २६—२९॥

रक्तेत्यादि। प्रसादः सारः, वृक्कौ कुक्षिगोलकौ। मांसेत्यादि। वृषणौ अण्डौ। शोणितेत्यादि। तस्य हृदयस्य अधो वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम. चेति क्लोम तिलकम्॥ ३०॥

तद् विशेषेण चेतनास्थानं चैतन्यास्पदं, सामान्येन तु सकलशरीरमेव चेतनास्थानम्। तदुक्तं चरके—"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रवगुणैर्विना" इति। चेतनासहचरितं मनोऽपि विशेषेण हृदयाधिष्ठानं मतम्। अतस्तस्मिन् हृदये तमसावृते तमसा तमोगुणेनोच्छ्रितेन आवृते निरुद्धे सति, सर्व्वप्राणिनः स्वपन्ति। तस्याकारं दर्शयति—पुण्डरीकेणेत्यादि। हृदयं कमलमुकुलाकारमधोमुखम्॥ ३१। ३२॥

भवन्ति चात्र।

यथा पयसि सर्पिस्तु गुडश्चेक्षो रसे यथा * ।
शरीरेषु तथा शुक्रं नृणां विद्याद् भिषग्वरः ॥ २१ ॥
द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः ।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते ॥ २२ ॥
कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा ।
स्त्रीषु व्यायच्छतश्चापि हर्षात् तत् सम्प्रवर्त्तते ॥ २३ ॥

गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद् गृहीतगर्भाणामार्त्तवं न दृश्यते। ततस्तदधःप्रतिहतमूर्द्ध्वमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते। शेषश्चोर्द्ध्वतरमागतं पयोधरावभिप्रतिपद्यते, तस्माद् गर्भिण्यः पीनोन्नतपयोधरा भवन्ति ॥ २४ ॥

गर्भस्य यकृत्प्लीहानौ शोणितजौ। शोणितफेनप्रभवः फुप्फुसः। शोणितकिट्टप्रभव उण्डुकः ॥ २५ ॥

शुक्रस्य सर्व्वाङ्गव्यापित्वे उपमानप्रमाणं दर्शयन्नाह—यथेत्यादि। पयोदृष्टान्तोऽल्पमैथुनत्वाद् बहुशुक्रे। इक्षुदृष्टान्तस्त्वतिपीडनशुक्रक्षरणत्वात् मन्दशुक्रे पुंसि। तस्यैवेदानीं सर्व्वाङ्गव्यापिनोऽपि क्षरणमार्गमाह—द्व्यङ्गुले इत्यादि। वृद्धवाग्भटेनोक्तम्—"सप्तमी शुक्रधरा द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्त्तयति" इति। ननु यथा पयसि संलीनं सर्पिरेवं शरीरसंलीनं शुक्रं कथं पृथग्भूय मूत्रमार्गेण क्षरतीत्याह—कृत्स्नेत्यादि। प्रसन्नमनसः क्रोधादिरहितचित्तस्य, तथा स्त्रीषु व्यायच्छतः व्यवायं (व्यायामं) कुर्व्वतो रतं कुर्व्वत इत्यर्थः ॥ २१—२३ ॥

कस्माद् गृहीगर्भाणां गर्भग्रहणकालादूर्द्ध्वमाप्रजाजननादार्त्तवं न दृश्यते इति ? आह— गृहीतेत्यादि। वर्त्मान्यवरुध्यन्ते मुखान्यवरुध्यन्ते। अपराममलामित्याहुः स्त्रियः। शेषं चोर्द्ध्वमसृक् प्रपद्यते ; तस्मात् पीनपयोधरकपोलता कृष्णचूचुकत्वञ्च, स्तनाश्रयमेव कफोपरञ्जितं स्तन्यतामुपगतं प्रसूतायाः पुनराहाररसेनाप्याय्यते ॥ २४ ॥

गर्भस्येत्यादि। यकृत् कालखण्डं दक्षिणपार्श्वस्थं, प्लीहा अनेनैव नाम्ना प्रसिद्धो वामपार्श्वस्थितः। यकृत्प्लीहानावित्युपलक्षणं, तेन क्लोमापि शोणितजः ; तथा च वृद्धवाग्भटः—"रक्तादनिलयुक्तात् कालीयकम्" इति। शोणितेत्यादि। फुप्फुसो हृदयनाडिकालग्नः स्वनामख्यातः। शोणितकिट्टेत्यादि। उण्डुकः पोट्टलकः ॥ २५ ॥

* गुडश्चेक्षौ रसो यथेति पाठान्तरम्।

अस्रजः श्लेष्मणश्चापि यः प्रसादः परो मतः।
तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति॥
ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः।
उदरे पच्यमानानामाध्मानाद् रुक्मसारवत्॥ २६॥
कफशोणितमांसानां सारो जिह्वा प्रजायते॥ २७॥
यथार्थमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्।
अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥ २८॥
मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्।
शिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः।
आशय्याभ्यासयोगेन करोत्याशयसम्भवम्॥ २९॥

रक्तमेदःप्रसादाद् वृक्कौ। मांसासृक्कफमेदःप्रसादाद् वृषणौ। शोणितकफ-प्रसादजं हृदयं, यदाश्रया हि धमन्यः प्राणवहाः। तस्याधो वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम च॥ ३०॥

तद् हृदयं विशेषेण चेतनास्थानम्, अतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति॥ ३१॥

भवति चात्र।

पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्।
जाग्रतस्तद् विकशति स्वपतश्च निमीलति॥ ३२॥

अन्त्रादिकोत्पत्तिं दर्शयन्नाह—असृज इत्यादि। आध्मानात् पच्यमानानां वायुनाग्नेः समिन्धनात् पच्यमानानामित्यर्थः। गयी तु, हृदये पच्यमानानामिति पाठं पठति। यथार्थ-मित्यादि। उष्मणा पित्तेन सह युक्तो वायुः स्रोतांसि दारयेत् दारणं कुर्य्यात्। कथं? यथार्थं यथाप्रयोजनमित्यर्थः। अनुप्रविश्येत्यादि। वायुः पिशितं मांसं अनुप्रविश्य पेशीर्विभजते, पेशी मांसखण्डम्। मेदस इत्यादि। शिरास्नायुत्वमाप्नुयादिति शिराः स्नायूंश्च वायुः कुर्य्यादि-त्यर्थः। आशय्येत्यादि। आशय्य अभ्यासयोगेन वायुः स्थितिं कृत्वेत्यर्थः॥ २६—२९॥

रक्तेत्यादि। प्रसादः सारः, वृक्कौ कुक्षिगोलकौ। मांसेत्यादि। वृषणौ अण्डौ। शोणितेत्यादि। तस्य हृदयस्य अधो वामतः प्लीहा फुप्फुसश्च, दक्षिणतो यकृत् क्लोम. चेति क्लोम तिलकम्॥ ३०॥

तद् विशेषेण चेतनास्थानं चैतन्यास्पदं, सामान्येन तु सकलशरीरमेव चेतनास्थानम्। तदुक्तं चरके—"चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रवगुणैर्विना" इति। चेतनासहचरितं मनोऽपि विशेषेण हृदयाधिष्ठानं मतम्। अतस्तस्मिन् हृदये तमसावृते तमसा तमोगुणेनोच्छ्रितेन आवृते निरुद्धे सति, सर्व्वप्राणिनः स्वपन्ति। तस्याकारं दर्शयति—पुण्डरीकेणे-त्यादि। हृदयं कमलमुकुलाकारमधोमुखम्॥ ३१। ३२॥

निद्रान्तु वैष्णवीं पाप्मानमुपदिशन्ति। सा स्वभावत एव सर्व्वप्राणिनोऽभिस्पृशति॥ ३३॥

तत्र यदा संज्ञावहानि स्रोतांसि तमोभूयिष्ठः श्लेष्मा प्रतिपद्यते तदा तामसी नाम निद्रा सम्भवत्यनवबोधिनी सा प्रलयकाले। तमोभूयिष्ठानामहःसु निशासु च भवति, रजोभूयिष्ठानामनिमित्तम्, सत्त्वभूयिष्ठानामर्द्धरात्रे, क्षीणश्लेष्मणामनिलबहुलानां मनःशरीराभितापवताञ्च नैव, सा वैकारिकी भवति॥ ३४॥

भवन्ति चात्र।

हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्।
तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनम्॥
निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते।
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्त्यते॥
पूर्व्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥

अथ केयं निद्रा? तामाह—निद्रामित्यादि। विष्णोरियं वैष्णवी मायैव। पाप्मानं कस्मात् आमनन्ति? कृत्स्नशुभव्यापारनिरोधात्॥ ३३॥

यद्यपि तन्त्रान्तरीयैः सप्तविधा निद्रा पठिता तथाऽपि त्रिविधैव—तामसी स्वाभाविकी वैकारिकी चेति भेदेन; ताः क्रमेण दर्शयन्नाह—तत्र यदेत्यादि। यद्यपि सर्व्वासामपि निद्राणां तमो हेतुस्तथापि प्रकृष्टतमस्त्वात् तामसीरूपा निद्रा कथ्यते। स्वाभाविकीमाह—तम इत्यादि। अनिमित्तं अनियतकालम्। चलत्वाद् रजसः कदाचिद् दिवा कदाचिद् रात्रावित्यर्थः। सत्त्वभूयिष्ठानां अर्द्धरात्रे इति तस्मिन् काले किञ्चिदल्पीभूतं सत्त्वमुत्कटं तमो भवति। तस्मादर्द्धरात्रे सात्त्विकाः स्वपन्ति। वैकारिकीमाह—क्षीणेत्यादि। एवम्भूतानां पुरुषाणां निद्रा नैव भवति, यदि च भवति तदा वैकारिकी नाम निद्रा भवति। ननु यदा लङ्घनश्रमादिभिर्वायुर्वर्द्धते श्लेष्मा च क्षीयते तदा कथं निद्रा उदेति? उच्यते—मनसः श्रान्तत्वाद् भूतात्मनो विषयनिवृत्तौ प्राणिनः स्वपन्ति। तदुक्तं चरके—"यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः। विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः"॥ ३४॥

इदानीं गद्योक्तस्यार्थस्य सुखबोधनार्थं श्लोकानाह—भवन्ति चात्रेत्यादि। सत्त्वादीनां सदा सान्निध्यात् परस्परविरोधिनोः स्वापबोधयोरनुपपत्तिं मन्यमान आह—स्वभाव एवेत्यादि। ननु बोधाभावः स्वापः, स्वापाभावो बोधस्तत् कथं स्वपतः स्वप्नदर्शनं भवतीत्याह—पूर्व्वेत्यादि। ननु च

करणानान्तु वैकल्ये तमसाभिप्रवर्द्धिते।
अस्वपन्नपि भूतात्मा प्रसुप्त इव चोच्यते॥ ३५॥

सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धोऽन्यत्र ग्रीष्मात्। प्रतिषिद्धेष्वपि तु बालवृद्धस्त्रीकर्षितक्षतक्षीण-मद्यनित्ययानवाहनाध्वकर्म्मपरिश्रान्तानामभुक्तवतां मेदःस्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्च मुहूर्त्तं दिवास्वपनमप्रतिषिद्धम्। रात्रावपि जागरितवतां जागरितकालादर्द्धमिष्यते दिवास्वप्नः। विकृतिर्हि दिवास्वप्नो नाम। तत्र स्वपतामधर्म्मः सर्व्वदोषप्रकोपश्च। तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकज्वराग्निदौर्ब्बल्यानि भवन्ति। रात्रावपि जागरितवतां वातपित्तनिमित्तास्त एवोपद्रवा भवन्ति॥ ३६॥

भवन्ति चात्र।

तस्मान्न जागृयाद्रात्रौ दिवास्वप्नञ्च वर्ज्जयेत्।
ज्ञात्वा दोषकरावेतौ बुधः स्वप्नं मितं चरेत्॥ ३७॥
अरोगः सुमना ह्येवं बलवर्णान्वितो वृषः।
नातिस्थूलकृशः श्रीमान् नरो जीवेत् समाः शतम्॥ ३८॥

यः कश्चिदर्थावबोधः स सर्व्वोऽपि बाह्यार्थावलम्बनो दृष्टः, न च स्वप्ने बाह्यार्थस्य सत्त्वं विद्यते, तत् कथं तत्रार्थावबोध इति? उच्यते—स्मृतिरेवेयं पूर्व्वाऽनुभूतेऽर्थे, न चाननुभूतविषयाः परिस्फुरन्ति। ननु तादृग् विधस्यार्थस्यादृष्टाश्रुताननुभूतत्वात् कथं स्मृतित्वमित्याह—पूर्व्वदेहानुभूतांस्त्वित्यादि। एतच्चोपलक्षणमतोऽनेनापि देहेनानुभूतान्। भूतात्मेति किं भूतैर्घटित आत्मा शरीरलक्षणः, उत भूतैरुपलक्षित आत्मा भूतात्मा क्षेत्रज्ञः इति? आह—स्वपतः प्रभुरिति स्वपतः स्वापयुक्तस्य शरीरस्य प्रभुः स्वामी क्षेत्रज्ञ इत्यर्थः, तद्वशेन सर्व्वक्रियाप्रवृत्तेः। कथं पुनरर्थानिन्द्रियग्राह्यान् निद्रालुष्विन्द्रियेषु गृह्णातीत्याह—मनसेति। मनसः सर्व्वदैव सम्भवात् सदा स्वप्नदर्शनप्रसङ्ग इत्याह—रजोयुक्तेनेति रजःप्रेरितेनेत्यर्थः, रजसः प्रवर्त्तकत्वात्। तमोयुक्तेन च मनसा न किमपि सुप्तः पश्यति, तमस आवरणात्मकत्वात्। इन्द्रियग्रामस्य तमसा वैकल्ये आपादिते आत्मा निर्व्विकारोऽपि सुप्त इव भवतीति प्रतिपादयन्नाह—करणानामित्यादि। अभिप्रवर्द्धिते इति अभि सर्व्वतो बहिरन्तश्च प्रवर्द्धिते। तत्र बहिरिन्द्रियाणां विषयभूतेऽर्थे,अन्तर्म्मनोऽर्थे, शब्दादौ सुखदुःखादौ च॥३५

दिवास्वप्नस्य प्रवृत्तिनिवृत्ती आह– सर्व्वेत्यादि। अन्यत्र ग्रीष्मादिति ग्रीष्मं वर्ज्जयित्वा। प्रतिषिद्धेष्वपीत्यादि। प्रतिषिद्धेष्वपि ऋतुषु। मुहूर्त्तं घटिकाद्वयम्। रात्रावित्यादि। कस्मादर्द्धमेव सुप्यान्नाधिकमिति दर्शयन्नाह—विकृतिरित्यादि। सर्व्वशब्देन रक्तमपि गृह्यते। यद्यपि दिवास्वप्नेऽधर्म्मस्तथापि शरीररक्षार्थं ग्रीष्मे दिवास्वप्न उक्तः। रात्रावित्यादि। त एव कासश्वासादय एव॥ ३६॥

निद्रा सात्म्यीकृता यैस्तु रात्रौ च यदि वा दिवा * ।
न तेषां स्वपतां दोषो जाग्रतां वा विधीयते † ॥ ३९ ॥
निद्रानाशोऽनिलात् पित्तान्मनस्तापात् क्षयादपि ।
सम्भवत्यभिघाताच्च प्रत्यनीकैः प्रशाम्यति ॥ ४० ॥
निद्रानाशेऽभ्यङ्गयोगो मूर्द्धि तैलनिषेवणम् ।
गात्रस्योद्वर्त्तनञ्चैव हितं संवाहनानि च ॥
शालिगोधूमपिष्टान्न-भक्ष्यैरैक्षवसंस्कृतैः ।
भोजनं मधुरं स्निग्धं क्षीरमांसरसादिभिः ।
रसैर्विलेशयानाञ्च विष्किराणां तथैव च ॥
द्राक्षासितेक्षुद्रव्याणामुपयोगो भवेन्निशि ।
शयनासनयानानि मनोज्ञानि मृदूनि च ।
निद्रानाशे तु कुर्व्वीत तथान्यान्यपि बुद्धिमान् ॥ ४१ ॥
निद्रातियोगे वमनं हितं ‡ संशोधनानि च ।
लङ्घनं रक्तमोक्षश्च मनोव्याकुलनानि च ॥ ४२ ॥
कफमेदोविषार्त्तानां रात्रौ जागरणं हितम् ।
दिवास्वप्नश्च तृट्शूल-हिक्काजीर्णातिसारिणाम् ॥ ४३ ॥

भवन्तीत्यादि। एवमुक्तेन प्रकारेण वर्त्तमानः, वृषः स्त्रीरमणशक्तियुक्तः, श्रीमान् शरीरशोभायुक्तः॥३७।३८ ॥

ये पुनर्निद्रासात्म्यास्तेषामदोष एव दिवास्वाप इत्यत आह—दिवेत्यादि ॥ ३९ । ४० ॥

ये पुनर्निद्रानाशहेतवस्तान् आह—निद्रानाश इत्यादि। अनिलादिभ्यो निद्रानाशः सम्भवतीति सम्बन्धः, स निद्रानाशः प्रत्यनीकैरभ्यङ्गादिभिः प्रशाम्यति उपशमं याति। कानि पुनः प्रत्यनीकानि ? तान्याह—निद्रानाशेऽभ्यङ्गेत्यादि। निद्रानाशेऽभ्यङ्गयोगादिः हितो भवेत्। संवाहनं मृदुमर्द्दनम्। ऐक्षवसंस्कृतैरिति खण्डादिसंस्कृतैः। शयनादीनि च मनोज्ञानि निद्रानाशे कुर्व्वीत। तथान्यान्यपि इति प्रावरणादीनि ॥ ४१ ॥

निद्रातियोगे प्रतिकारमाह—निद्रातियोगे इत्यादि। संशोधनादेव वमने लब्धे यद् वमनस्य पृथगुपादानं तद् विशेषेण निद्रानाशहेत्वर्थम् ॥ ४२ ॥

रात्रौ विहितः स्वप्नः केषाञ्चिन्निषिध्यते इत्याह—कफेत्यादि। निषिद्धोऽपि दिवास्वप्नः केषाञ्चित् प्रशस्यते इत्याह—दिवेत्यादि। हित इत्यत्रापि सम्बन्धनीयम् ॥ ४३ ॥

---

* दिवा रात्रौ च ये नित्यं स्वप्नजागरणोचिताः इति पाठान्तरम्।

† वापि जायते इति वा पाठः। ‡ वमेन्निद्रातियोगे तु कुर्य्याद्वित् क्वचित् पाठः।

इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः ।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत् ॥ ४४ ॥
पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृताननः ।
यं मुञ्चति सनेत्रास्रं स जृम्भ इति संज्ञितः ॥ ४५ ॥
योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्ज्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ ४६ ॥
सुखस्पर्शप्रसंङ्गित्वं दुःखद्वेषणलोलता ।
शक्तस्य चाप्यनुत्साहः कर्म्मस्वालस्यमुच्यते ॥ ४७ ॥
उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् ।
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्द्दिशेत् ॥ ४८ ॥
वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ।
नचान्नमभिकाङ्क्षेत ग्लानिं तस्य विनिर्द्दिशेत् ॥ ४९ ॥
आर्द्रचर्म्मावनद्धं वा ( हि ) यो गात्रमभिमन्यते ।
तथा गुरु शिरोऽत्यर्थं गौरवं तद् विनिर्द्दिशेत् ॥ ५० ॥
मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद् भ्रमः ।
तमोवातकफात् तन्द्रा निद्रा श्लेष्मतमोभवा ॥ ५१ ॥

निद्रायास्तमोभवाया मोहरूपाया अनुषङ्गात् तत्सदृशीं तन्द्रामप्याह—इन्द्रियेत्यादि । इन्द्रियार्थाः शब्दादयः । तेषामसंप्राप्तिः अग्रहणम् । निद्रार्त्तस्येव निद्रायुक्तस्येव । परं निद्रायां प्रबोधितस्य क्लमाभावः, तन्द्रायान्तु प्रबोधितोऽपि क्लाम्यति, अतएवात्र क्लमग्रहणम् ॥ ४४ ॥

इदानीं तन्द्रालक्षणप्रतिपादितानां जृम्भणादीनां लक्षणमाह—पीत्वेत्यादि । अत्र जृम्भाप्रसङ्गेन केचित् छिक्कालक्षणं पठन्ति । यथा—"प्राणोदानौ समौ स्यातां मूर्द्ध्नि स्रोतःपथि स्थितौ । नस्तः प्रवर्त्तते शब्दः क्षवथुं तं विनिर्द्दिशेत्" इति । तच्च टीकाकारैरपठितत्वान्न पठनीयम् । क्लममाह—य इत्यादि । क्लमानन्तरं कर्म्मप्रवृत्तिसाम्यादसूत्रितमप्यालस्यमाह—सुखेत्यादि । केचिदुत्क्लेशग्लान्योर्लक्षणमाहुः—उदित्यादि, वक्त्रे इत्यादि च । एतदपि टीकाकारैरपठितत्वान्न पठनीयम् ॥ ४५—४९ ॥

आर्द्रेत्यादि । आर्द्रचर्म्मावनद्धं वा इत्यत्र वाशब्द इवार्थे, तेनार्द्रचर्म्मावनद्धमिवेत्यर्थः । तद् विनिर्द्दिशेदिति तस्येति शेषः ॥ ५० ॥

मोहरूपाया निद्रायाः प्रसङ्गेन तन्द्रादिकं मोहरूपं निर्द्दिश्य मूर्च्छादिकमपि दर्शयन्नाह—मूर्च्छेत्यादि । भ्रमश्चक्रारूढस्येव भ्रमणम् । लक्षणत उक्तायास्तन्द्राया हेतुतोऽपि निर्द्देशं कुर्व्वन्नाह—

गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धिर्भवति ॥ ५२॥

भवन्ति चात्र।

तस्यान्तरेण * नाभेस्तु ज्योतिःस्थानं ध्रुवं स्मृतम्।
तदाधमति वातस्तु देहस्तेनास्य वर्द्धते ॥ ५३ ॥
उष्मणा सहितश्चापि दारयत्यस्य मारुतः।
ऊर्द्ध्वं तिर्य्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥ ५४ ॥
दृष्टिश्च रोमकूपाश्च न वर्द्धन्ते कदाचन।
ध्रुवाण्येतानि मर्त्यानामिति धन्वन्तरेर्मतम् ॥ ५५ ॥
शरीरे क्षीयमाणेऽपि वर्द्धते द्वाविमौ सदा।
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥ ५६ ॥

तमोवातेत्यादि। उक्तापि निद्रा तमसा मनोदोषेण मूर्च्छादिप्रसङ्गेन शरीरदोषेणापि पुनरभिहिता। गयी तु क्लमालस्यादीनां लक्षणं न पठति, असूत्रितत्वेन हेतुना ॥ ५१ ॥

गर्भस्य वृद्धौ पूर्व्वोक्तहेतुमनूद्य द्वितीयमपि हेतुं दर्शयन्नाह—गर्भस्येत्यादि। रसनिमित्ता इति मातुरिति शेषः। तदुक्तं प्राक् "मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ीप्रतिबद्धा" इत्यादिना। मारुताध्माननिमित्ता चेति मारुतेन वायुना आध्मानं स्रोतसां पूरणं तदेव निमित्तं यस्यां सा मारुताध्माननिमित्ता। वक्ष्यमाणेनानलानिलकृतेन गर्भस्रोतसामाध्मानेनामितो विशालभूतत्वात् गर्भपरिवृद्धिः ॥ ५२ ॥

तत्र स्रोतसामेवाध्मानसंप्राप्तिं दर्शयन्नाह—भवन्तीत्यादि। तस्य गर्भस्य नाभेरन्तरेण मध्ये ज्योतिःस्थानमग्निस्थानं ध्रुवं निश्चितं स्मृतम्। तच्च वायुराधमति। तेन चाध्मातेन वह्निना समारुतेन स्रोतसामाध्मापने अस्य गर्भस्य देहो वर्द्धते। ज्योतिःस्थानाध्मानेन मध्यस्रोतोवृद्धौ कथं सर्व्वतो वृद्धिरित्याह—उष्मणेत्यादि। यथातथाशब्दावत्रान्तर्भूतवीप्सार्थौ ज्ञातव्यौ, तेनोष्मणा सहितोऽनिलो यथा यथोर्द्ध्वं तिर्य्यक् अधस्ताच्च स्रोतांसि दारयति विवृतानि करोति तथा तथा देहो वर्द्धत इति पूर्व्ववाक्यात् सम्बन्धनीयम् ॥ ५३। ५४ ॥

यथा शरीरं वर्द्धते तथा दृष्ट्यादयोऽपि कथं न वर्द्धन्ते इत्याह—दृष्टिरित्यादि। यस्मादेतानि दृष्टिरोमकूपाणि ध्रुवाणि निश्चलानि(निश्चितानि), मर्त्यानां पुरुषाणाम् ॥ ५५ ॥

शरीरवृद्ध्यापि कस्यचिदवयवस्यावृद्धिं प्रतिपाद्य शरीरक्षयेऽपि कस्यचिदतिवृद्धिं दर्शयन्नाह—शरीरे इत्यादि। स्वभावं प्रकृतिं कृत्वा स्वभावं कारणं कृत्वेत्यर्थः ॥ ५६ ॥

* तस्यान्तरे चेति पाठान्तरम्।

सप्त प्रकृतयो भवन्ति। दोषैः पृथक् द्विशः समस्तैश्च ॥ ५७ ॥

शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः।
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु ॥ ५८ ॥

तत्र जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यो गान्धर्व्वचित्तः स्फुटितकरचरणोऽतिरुक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति ॥

अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी।
द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः ॥
अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसञ्चयमित्रः।
किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥ ५९ ॥
वातिकाश्चाजगोमायु-शशाखूष्ट्रशुनां तथा।
गृध्रकाकखरादीनाम् * अनूकैः कीर्त्तिता नराः ॥ ६० ॥

प्रकृतिप्रसङ्गेनान्यदपि प्राकृतं रूपं प्रतिपादयितुकामो यादृग्विधा प्रकृतिर्यद्धेतुकी यच्चास्याः स्वलक्षणं तत् क्रमेणाह—सप्तेत्यादि। पृथक् तिस्रः, द्विशस्तिस्रः, समस्तैश्चैकेत्येवं सप्त। सप्तविधत्वं प्रतिपाद्य तस्या उत्पत्तौ हेतुमाह—शुक्रेत्यादि। यो भवेद् दोष उत्कट इति स्वभावस्थितो न प्रकुपितः। द्विविधा ह्युत्कटा वातादयः, प्राकृता वैकृताश्च। तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः, वैकृताश्च गर्भव्याघातकाः। गयी तु अन्यथैवाशङ्क्य समादधाति; यथा—ननु स्वभावतः शुद्धं वीजं कर्म्मणा वा समधातु गर्भं निष्पादयति, अनिलादिदोषदुष्टन्तु गर्भजननाय न समर्थमिति शुक्रशोणितशुद्धावुक्तं, तत् कथमुत्कटेन दोषेण प्रकृतिरिति? उच्यते—न हि सर्व्वमेव वीजं दूषितं, किं तर्हि वीजावयवो दूषितः? न चावयवगतदोषेण गर्भप्रतिबन्धो जात्यन्धमूकादेर्गर्भस्य दर्शनात्, तस्माद् अत्र य एवांशो वीजस्य दुष्टो भवति तत्कार्य्यस्यैव गर्भावयवस्य विकृतिरभावो वा भवति, यथा दृष्ट्यारम्भके वीजभागे दुष्टे जात्यन्धो गर्भो भवति न तु गर्भ एव न भवति, तथा दोषाख्ये वीजभागे दुष्टे तत्कार्य्यस्यैव गर्भशरीरभागस्य समधातोरपेक्षया विकृतिः स्फुटितकरचरणादिलक्षणा भवति, न तु गर्भव्याघातः। तदुक्तम्—"शुद्धं स्वभावकर्म्मभ्यां वातादैरदुष्टमंशतः। दुष्टं वीजार्थंकृत् वीजं तत्र प्रकृतिरुत्तरम्" इति ॥५७।५८ ॥

दोषाणां हि वातस्य प्राधान्यमतस्तत्प्रकृतिलक्षणमाह—तत्रेत्यादि। जागरूकः अतिशयेन जागरणशीलः। दुर्भगः अमनोरमाकारः। स्तेनश्चौरः। मत्सरी परगुणासहनशीलः। अनार्य्यः असत्पुरुषः। गान्धर्व्वचित्तः गीतादिनिरतः। क्रोधी हिंसाशीलः। दन्तखादी सुप्तः सन् दन्तान् किटिकिटायते। अधृतिरधैर्य्ययुक्तः। द्रुतगतिरटनः शीघ्रगामी शीघ्रभाषी च भवतीत्यर्थः। अनवस्थितात्मा चञ्चलचित्तः। अव्यवस्थितमतिः अनवस्थितबुद्धिनिश्चयः ॥ ५९ ॥

* गृध्रकाकखरावीनामिति पाठान्तरम्।

स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनताल्वुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो वहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति ॥ ६१ ॥

मेधावी निपुणमतिर्विगृह्य वक्ता तेजस्वी समितिषु दुर्निवारवीर्य्यः।
सुप्तः सन् कनकपलाशकर्णिकारान् सम्पश्येदपि च हुताशविद्युदुल्काः ॥६२॥
न भयात् प्रणमेदनतेष्वमृदुः प्रणतेष्वपि सान्त्वनदानरुचिः।
भवतीह सदा व्यथितास्यगतिः स भवेदिह पित्तकृतप्रकृतिः ॥ ६३ ॥

भुजङ्गोलूकगन्धर्व्व-यक्षमार्ज्जारवानरैः।
व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः ॥ ६४ ॥

दूर्व्वेन्दीवरनिस्त्रिंशार्द्रारिष्टकशरकाण्डानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवांश्चिरग्राही दृढ़वैरश्च भवति ॥ ६५ ॥

शुक्लाक्षः स्थिरकुटिलातिनीलकेशो लक्ष्मीवान् जलदमृदङ्गसिंहघोषः।
सुप्तः सन् सकमलहंसचक्रवाकान् सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥६६॥
रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः।
क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः॥
दृढ़शास्त्रमतिः स्थिरमित्रधनः परिगण्य चिरात् प्रददाति बहु।
परिनिश्चितवाक्यपदः सततं गुरुमानकरश्च भवेत् स सदा ॥ ६७ ॥

ब्रह्मरुद्रेन्द्रवरुणः सिंहाश्वगजगोवृषैः।
तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः ॥ ६८ ॥

अनूकैः शीलैः। स्वेदन इति। मेधावीत्यादि। विगृह्य वक्तेति परवाक्यमुच्छिद्य वक्तुं शीलः। समितिषु संग्रामेषु। पलाशः किंशुकः। सान्त्वनमुपशमः। व्यथितास्यगतिर्व्यथितमुखः, मुखपाकत्वात्; धावनक्लेशासहत्वात् पीड़ावहगमनः ॥ ६०—६४ ॥

दूर्व्वेत्यादि। इन्दीवरं नीलोत्पलम्। निस्त्रिंशः खड्गः। अरिष्टः कृष्णवर्त्तुलफलो रीठा इति लोके प्रसिद्धः, स चार्द्रः। धृतिमान् धैर्य्ययुक्तः। सुविभक्तगात्रः सुष्ठुपृथग्भूतसकलावयवः। केचिद् वातादिप्रकृतिषु "वातिकाश्चाजगोमायु-शशाखूष्ट्रशुनां तथा। गृध्रकाकखरावीनामनूकैः कीर्त्तिता नराः" इति, तथा—"भुजगोलूकगन्धर्व्व-यक्षमार्ज्जारवानरैः। व्याघ्रर्क्षनकुलानूकाः पैत्तिकास्तु नराः स्मृताः" इति, तथा—"दृढ़शास्त्रमतिः स्थिरमित्रधनः परिगण्य चिरात् प्रददाति बहु। परिनिश्चितवाक्यपदः सततं गुरुमानकरश्च भवेत् स सदा" इति, तथा—"ब्रह्मेन्द्ररुद्रवरुणैः

द्वयोर्वा तिसृणां वापि प्रकृतीनान्तु लक्षणैः ।
ज्ञात्वा संसर्गजा वद्यः प्रकृतीरभिनिर्दिशेत् ॥ ६९ ॥
प्रकोपो वान्यथाभावः क्षयो वा नोपजायते ।
प्रकृतीनां स्वभावेन जायते तु गतायुषः ॥ ७० ॥
विषजातो यथा कीटो न विषेण विपद्यते ।
तद्वत् प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ७१ ॥
प्रकृतिमिह नराणां भौतिकीं केचिदाहुः पवनदहनतोयैः कीर्त्तितास्तास्तु तिस्रः ।
स्थिरविपुलशरीरः पार्थिवश्च क्षमावान् शुचिरथ चिरजीवी नाभसः खैर्महद्भिः ॥७२॥
शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ।
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥
माहात्म्यं शौर्य्यमाज्ञा च सततं शास्त्रबुद्धिता ।
भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणम् ॥
शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता ।
प्रियवादित्वमित्येतद् वारुणं कायलक्षणम् ॥

सिंहाश्वगजगोवृषैः । तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नराः । इत्येतान् चतुःसंख्यकान् श्लोकान् पठन्ति । ते तु श्लोका निबन्धकारैरपठितत्वात् न पठनीयाः ॥ ६५—६८ ॥

संसर्गजाः प्रकृतीराह—द्वयोरित्यादि । ते च प्राकृता भावा अन्यथावर्त्तिनः ( अन्यावर्त्तिनः ) इति दर्शयन्नाह—प्रकोप इत्यादि । वातादिप्रकृतीनां ये दोषास्ते कस्मात् न रुजन्ति इत्याह—विषेत्यादि । एतदारम्भकदोषमधिकृत्योक्तं तस्याबाधकत्वं प्रागेव व्याख्यातम् । शक्नुवन्ति न बाधितुमिति नञयमीषदर्थे, तेन किञ्चिद् बाधितुं शक्नुवन्ति न तु भृशम् । यथा हि विषकीटो विषस्वभावजनितदाहादिना किञ्चिदेव बाधते न तु भृशम्, एवं वातादिहेतुजः प्राणिकायो वातादिजेन स्फुटितकरचरणादिकेन दोषेण तथा स्वेददौर्गन्ध्यादिना च किञ्चिदेव बाध्यते। अतएव—"वातलाद्याः सदातुराः" इति वातादिप्रकृतिषु नित्यातुरत्वमभिहितम् ॥ ६९—७१ ॥

एकीयमतमाह—प्रकृतिमित्यादि । पवनदहनतोयैः कीर्त्तित इति वातपित्तश्लेष्मलक्षणैः कथिता इत्यर्थः । शेषे द्वे प्रकृती आह—स्थिरेत्यादि । खैर्महद्भिरिति नासाकर्णादिच्छिद्रैर्विपुलैरित्यर्थः । अनेन श्लोकेन पृथिव्यप्तेजोवाय्वाकाशीयामपि प्रकृतिमाहुः, अन्ये तु सा चैकशो द्विशस्त्रिशश्चतुर्भिर्वा भूतैः प्रस्तर्य्यमाणा बहुधा संजायते इति वदन्ति । उक्तञ्च—"एकैकेन वदन्ति पञ्चदश तु द्वाभ्यां त्रिभिस्तावतीर्भूतैः पञ्चचतुर्भिरेव भिषजस्त्वेकां समस्तैरपि । एकत्रिंशतमत्र भूमिसलिलस्वाहाप्रियस्पर्शनाकाशैश्च प्रकृतीर्गुणैरपि पुनः प्राहुः स सप्ताऽपरा" इति । गुणैः सत्त्वरजस्तमोभिरेकशो द्विशः समस्तैश्च सप्त महाप्रकृतयो भवन्ति । सप्त दोषतः, सप्त गुणतः, इति नागार्जुनाचार्य्योक्तत्वात् । सत्त्वादिगुणभेदेन चित्तप्रकृतिं निर्दिशन्नाह—शौचमित्यादि । इज्या यागः । माहात्म्यमित्यादि । माहात्म्यं महाशयत्वम् । शीतेत्यादि । पैङ्गल्यं पिङ्गाक्षता । हरिकेशता

मध्यस्थता सहिष्णुत्वमर्थस्यागमसञ्चयौ।
महाप्रसवशक्तित्वं कौवेरं कायलक्षणम्॥
गन्धमाल्यप्रियत्वञ्च नृत्यवादित्रकामिता।
विहारशीलता चैव गान्धर्व्वं कायलक्षणम्॥
प्राप्तकारी दृढ़ोत्थानो निर्भयः स्मृतिमान् शुचिः।
रागमोहभयद्वेषैर्वर्ज्जितो याम्यसत्त्ववान्॥
जपव्रतब्रह्मचर्य्य-होमाध्ययनसेविनम्।
ज्ञानविज्ञानसम्पन्नमृषिसत्त्वं नरं विदुः॥
सप्तते सात्त्विकाः कायाः——————
—————— राजसांस्तु निवोध मे॥ ७३॥
ऐश्वर्य्यवन्तं रौद्रञ्च शूरं चण्डमसूयकम्।
एकाशिनञ्चौदरिकमासुरं सत्त्वमीदृशम्॥
तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा।
विहाराचारचपलं सर्पसत्त्वं विदुर्नरम्॥
प्रवृद्धकामसेवी चाप्यजस्राहार एव च।
अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम्॥
एकान्तग्राहिता रौद्रमसूया धर्म्मबाह्यता।
* भृशमात्मस्तवश्चापि राक्षसं कायलक्षणम्॥

कपिलकेशता। मध्यस्थतेत्यादि। महाप्रसवशक्तित्वं प्रजोत्पादनसामर्थ्यम्। गन्धेत्यादि। विहारशीलता भ्रमणशीलता। प्राप्तेत्यादि। प्राप्तकारी युक्तकारी। दृढ़ोत्थानो दृढारम्भः। निर्भयः साहसिकः॥ ७२। ७३॥

ऐश्वर्य्यवन्तमित्यादि। रौद्रं भयानकं, चण्डं तीव्रकोपं, असूयकं परगुणेषु मत्सरिणं, एकाशिनं एकाक्येव चाश्नातीत्यर्थः। औदरिकं घस्मरम्। गयदासस्तु औदरिकमित्यत्रौपधिकमिति पठित्वा औपधिकं छद्मपरमिति व्याख्याति। तीक्ष्णेत्यादि। 'भीरुं' अक्रोधे सतीत्यध्याहारः। तदुक्तं चरके—"क्रुद्धं शूरमक्रुद्धं" भीरुम् इति। चण्डं कोपनम्। प्रवृद्धेत्यादि। अजस्राहारः अनवरताहारशीलः। एकान्तेत्यादि। एकान्तग्राहिता एकान्तग्रहणशीलता, असूया गुणेषु

* भृशमात्वं तमश्चापीति पाठान्तरम्।

उच्छिष्टाहारता तक्ष्ण्यं साहसप्रियता तथा ।
स्त्रीलोलुपत्वं नैर्लज्ज्यं पैशाचं कायलक्षणम् ॥
असंविभागमलसं दुःखशीलमसूयकम् ।
लोलुपश्चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ॥
षड़ेते राजसाः कायाः ——————
——————— तामसांस्तु निवोध मे ॥ ७४ ॥
दुर्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता ।
निराकरिष्णुता चव विज्ञेयाः पाशवा गुणाः ॥ ७५ ॥
अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता ।
परस्पराभिमर्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥ ७६ ॥
एकस्थानरतिर्नित्यमाहारे केवले रतः ।
वानस्पत्यो नरः सत्त्व-धर्म्मकामार्थवर्ज्जितः ॥ ७७ ॥
इत्येते त्रिविधाः कायाः प्रोक्ता वै तामसास्तथा ।
कायानां प्रकृतीर्ज्ञात्वा त्वनुरूपां क्रियां चरेत् ॥ ७८ ॥
महाप्रकृतयस्त्वेता रजःसत्त्वतमःकृताः ।
प्रोक्ता लक्षणतः सम्यग् भिषक् ताश्च विभावयेत् ॥ ७९ ॥

इति सुश्रुत-संहितायां शारीरस्थाने गर्भव्याकरणशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥

दोषारोपणम् । भृशमात्मस्तवः अतिशयेनात्मस्तुतिः । उच्छिष्टेत्यादि । तैक्ष्ण्यं कोपनत्वम् । मन्दता जिह्मता । प्रकृतिज्ञाने प्रयोजनमाह– कायानामित्यादि ॥ ७४—७९ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे गर्भव्याकरणशारीरव्याख्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातः शरीरसङ्ख्याव्याकरणं शारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसंमूर्च्छितं गर्भ इत्युच्यते। तं चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्द्धयति। एवं विवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते। तच्च षडङ्गं—शाखाश्चतस्रः, मध्यं पञ्चमं, षष्ठं शिर इति ॥ २ ॥

अतः परं प्रत्यङ्गानि वक्ष्यन्ते। मस्तकोदरपृष्ठनाभिललाटनासाचिबुकवस्तिग्रीवा इत्येता एकैकाः। कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषणपार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे। विंशतिरङ्गुलयः। स्रोतांसि च वक्ष्यमाणानि। एष प्रत्यङ्गविभाग उक्तः ॥ ३ ॥

गर्भव्याकरणानन्तरमुत्पन्नस्य सञ्जाताङ्गप्रत्यङ्गतया लब्धशरीरसंज्ञस्य शरीरावयवानां संख्याकर्त्तुं युज्यते इत्याह—अथात इत्यादि। पञ्चमहाभूतशरीरिसमवायः शरीरमुक्तं, तस्य संख्या अवयवशः संख्या, तस्या व्याकरणं यत्र शारीरे तद् व्याख्यास्यामः। अथवा शरीरशब्दोऽयं समुदायवृत्तिरवयवेष्वपि वर्त्तते, तेषां संख्या।। शेषं पूर्ववत् ॥ १ ॥

शरीरावयवसंख्याविवरणं प्रतिपादयितुकामः शरीरशब्दव्यपदेश्यमेव तावत् क्रमेणाह—शुक्रशोणितमित्यादि। आत्मप्रकृतिविकारसंमूर्च्छितमिति आत्मा क्षेत्रज्ञः, प्रकृतयः प्रधानादयोऽष्टौ, विकाराः पञ्चभूतान्येकादशेन्द्रियाणि चेति षोडश, तैः संमूर्च्छितं मिश्रीभूतं गर्भं इति संज्ञां लभते, एतेन योगिनामुपयोगी पञ्चविंशतिको राशिरुक्तः। तमिदानीं भिषजामुपयोगिनं षड्धातुकं कृत्वा निर्दिशन्नाह—तमित्यादि। चेतनया हेतुभूतया यावद् गर्भप्रसवकालमवस्थितं चेतनावस्थितं, अन्यथा कुथितविशीर्णं स्यात्। तं वायुर्विभजति दोषधातुमलाङ्गप्रत्यङ्गविभागेन। तेज एनं पचति रूपाद्रूपान्तरेणावस्थानं प्रापयति। आपः क्लेदयन्ति विभागपरिणामकारिणोरनिलानलयोः शोषणेऽप्यार्द्रतां जनयन्ति, पृथिवी संहन्ति अद्भिः क्लिन्नमपि कठिनं मूर्त्तिमत् करोति। संहरतीत्यन्ये पठन्ति, तन्न, संपूर्वहृधातोर्विनाशार्थत्वात्। आकाशं विवर्द्धयति अनिलानलविदारितस्रोतसामाध्मापनेनोर्द्ध्वमधस्तिर्य्यग्विवर्द्धितमवकाशदानेन विवर्द्धयति। मध्यमिदं कण्ठादिगुदपर्य्यन्तम् ॥ २ ॥

अपरमप्यवयवविभागं संख्याश्रयं शरीरे निर्दिशन्नाह—अतःपरमित्यादि। अंसो बाहुशिरः, गण्डो गल्लः, स्फिक् पादः, ऊरू जङ्घेति लोके। बाहूरुप्रभृतयो द्वे द्वे इत्यत्र प्रभृतिग्रहणाच्चोष्ठ-

तस्य पुनः सङ्ख्यानम्—त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जवः सेवन्यः सङ्घाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्म्माणि शिरा धमन्यो योगवहानि स्रोतांसि च ॥ ४ ॥

त्वचः सप्त। कलाः सप्त। आशयाः सप्त। धातवः सप्त। सप्त शिराशतानि। पञ्च पेशीशतानि। नव स्नायुशतानि। त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धिशते। सप्तोत्तरं मर्म्मशतम्। चतुर्व्विंशतिर्धमन्यः। त्रयो दोषाः। त्रयो मलाः। नव स्रोतांसि, ( शोड़श कण्डराः, षोड़श जालानि, षट् कूर्चाः, चतस्रो रज्जवः, सप्त सेवन्यः, चतुर्दश सङ्घाताः, चतुर्दश सीमन्ताः, द्वाविंशतिर्योगवहानि स्रोतांसि, द्विकान्यन्त्राणि ) चेति समासः ॥ ५ ॥

विस्तारोऽत ऊर्द्ध्वम्। त्वचोऽभिहिताः, कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयं वृक्कौ च ॥ ६ ॥

आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः, स्त्रीणां गर्भाशयोऽष्टम इति ॥ ७ ॥

सृक्कणीकुकुन्दराणामवरोधः। ननु स्रोतांसि प्रत्यङ्गेषु किमिति न निर्द्दिष्टानीत्याह—स्रोतांसीत्यादि। वक्ष्यमाणानीति आश्रितेषु त्वगाद्यवयवेष्वित्यर्थः ॥ ३ ॥

एतान्यङ्गप्रत्यङ्गान्याश्रयभूतानि प्रतिपाद्य एतेष्ववयवेषु ये समाश्रितास्त्वगाद्यवयवास्तेषां व्याकरणमाह—तस्य पुनरित्यादि। तस्येति अङ्गप्रत्यङ्गात्मकस्य शरीरस्य, संख्यानमिति संख्यायते येन शरीरं तत् संख्यानम्। किं तदित्याह—त्वचः कला इत्यादि। त्वगादिकं योगवहस्रोतोऽन्तमेकोनत्रिंशत्। योगवहानीति धमन्या सह योगं वहन्ति यानि स्रोतांसि तानि योगवहानि धमनीव्याकरणोदितानि प्राणोदकान्नादिवहानीत्यर्थः ॥ ४ ॥

केचित् सुश्रुताध्यायिनः सङ्क्षेपेण त्वगादीन् कतिचित् संख्ययोपेतान् पठन्ति। तन्मतमाह—त्वचः सप्तेत्यादि। समासः सङ्क्षेपः ॥ ५ ॥

सङ्क्षेपेणाभिहितानां त्वगादीनां विस्तारमाह—विस्तारोऽत इत्यादि। त्वचोऽभिहिता इति संख्यया नामभिश्च गर्भव्याकरणे, कलादयश्चाभिहिताः ॥ ६ ॥

आशयानाह—आशयास्त्वित्यादि। आशयः अधिष्ठानं, पित्ताशयादधः पक्वाशयः, तस्यैकदेशे च विभक्तमलाधार उण्डुको विद्यते, अत उण्डुकात् पक्वाशयो भिन्न इत्यर्थः। आशयक्रमस्तु वाग्भटेनोक्तः; यथा—"रक्तस्याद्यः क्रमात् परे। कफामपित्तपक्वानां वायोर्मूत्रस्य च क्रमात्। गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरा" इति ॥ ७ ॥

सार्द्धत्रिव्यामान्यन्त्राणि पुंसां, स्त्रीणामर्द्धव्यामहीनानि ॥ ८ ॥

श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतांसि नराणां वहिर्मुखाणि। एतान्येव स्त्रीणामपराणि च त्रीणि ;—द्वे स्तनयोरधस्ताद्रक्तवहञ्च ॥ ९ ॥

षोड़श कण्डराः; तासां चतस्रः पादयोस्तावत्यो हस्तग्रीवापृष्ठेषु। तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहाः। ग्रीवाहृदयनिबन्धिनीनामधोभागगतानां मेढ्रम्। श्रोणिपृष्ठनिबन्धिनीनामधोभागगतानां बिम्बः। मूर्द्धोरुवक्षोऽंसपिण्डादीनाञ्च ॥ १० ॥

मांसशिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि। तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति; यैर्गवाक्षितमिदं शरीरम् ॥ ११ ॥

अन्त्राण्याह—सार्द्धमित्यादि। व्यामः बाह्वोः सकरयोस्ततयोस्तिर्य्यगन्तरम् ॥ ८ ॥

श्रवणेत्यादि। नन्वन्यान्यपि धमनीव्याकरणोदितानि स्रोतांसि वक्तव्यानीत्याह—वहिर्मुखानीति। धमनीव्याकरणोदितानि चान्तर्मुखानि। अधस्ताद् रक्तवहं स्मरातपत्रस्याध आर्त्तववहम्। स्मरातपत्रं भगस्योपरितने भागे। उक्तञ्च—"विपुलपिप्पलपत्रसमाकृतेरवयवस्य शिरस्तलमाश्रितम्। सकलकामशिरामुखचुम्बितं निगदितं मदनातपवारणम् ॥" इति ॥ ९ ॥

षोड़शेत्यादि। कण्डरा महास्नायुः। तावत्यो हस्तग्रीवापृष्ठेष्विति हस्तयोश्चतस्रः, ग्रीवायां चतस्रः, पृष्ठे चतस्रः। हस्तादिगतानां कण्डराणामग्रिमभागमाह—तलेत्यादि। जेज्झटस्तु "हस्तपादतलानां कण्डराणामस्थ्नाञ्च नखा अग्रप्ररोहा" इति पठति। ग्रीवया सह हृदयनिबन्धिनीनां चतसृणां मेढ्रं 'प्ररोह' इति शेषः। श्रोण्या सह पृष्ठनिबन्धिनीनां पृष्ठनिश्चलबन्धं कुर्वतीनां पृष्ठजातानां चतसृणामधोभागगतानां बिम्बं मण्डलमर्थाच्चितस्त्रस्य। मूर्द्धोरुवक्षोऽंसपिण्डादीनाञ्चेति पूर्ववाक्यात् बिम्बमनुवर्त्तते, तेन मस्तकस्य यत् बिम्बं मण्डलं तत् ग्रीवाश्रितानां प्रागुक्तानामेव चतसृणामुपरिगतानां कण्डराणामग्रप्ररोहः, तथा पादगतानां चतसृणामुपरिगतानामूरुमण्डलमग्रप्ररोहः, तथा पृष्ठगतानां चतसृणां कण्डराणामुपरिगतानां वक्षोमण्डलं, आदिशब्दगृहीतस्य स्तनस्य च मण्डलमग्रप्ररोहः। हस्तगतानां चतसृणामुपरिगतानामंसपिण्डो बाहुशिरोऽग्रप्ररोह इति। मस्तकस्य तथैवोर्व्वोः तथा वक्षसस्तथा अंसपिण्डयोश्च यद् बिम्बं मण्डलं, आदिशब्दात् स्तनपिण्डयोरपि मण्डलकम्, तासां षोड़शानां यथासमीपं प्ररोहः ॥ १० ॥

जालान्याह—मांसेत्यादि। मांसादीनां चतुर्णां प्रत्येकं चत्वारि जालानि। तेषां मांसादिजालानां चत्वार्य्येकैकस्मिन् मणिबन्धे गुल्फे च। तद् यथा—मांसस्यैकैकमेकस्मिन् मणिबन्धे गुल्फे च, एवं शिराणां स्नायूनामस्थ्नां चैकैकं जालकमिति चत्वारि जालकानि। परस्परगवाक्षितानि सञ्जातपरस्परच्छिद्राणीत्यर्थः। यैर्गवाक्षितमिति विरचितनिरन्तरजालकाकाररन्ध्रनिकरपरिकलितमित्यर्थः ॥ ११ ॥

षट् कूर्चाः, ते हस्तपादग्रीवामेढ्रेषु। हस्तयोर्द्वौ, पादयोर्द्वौ, ग्रीवामेढ्रयोरेकैकः ॥ १२ ॥

महत्यो मांसरज्जवश्चतस्रः—पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे ॥ १३ ॥

सप्त सेवन्यः; शिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैका। ताः परिहर्त्तव्याः शस्त्रेण ॥ १४ ॥

चतुर्दशास्थ्नां सङ्घाताः। तेषां त्रयो गुल्फजानुवङ्क्षणेषु, एतेनेतरसक्थि बाहू च व्याख्यातौ, त्रिकशिरसोरेकैकः ॥ १५ ॥

चतुर्दशैव सीमन्ताः। ते चास्थिसङ्घातवद् गणनीयाः, यतस्तैर्युक्ता अस्थिसङ्घाताः। ये ह्युक्ताः संङ्घातास्ते खल्वष्टादशैकेषाम् ॥ १६ ॥

त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते। शल्यतन्त्रे तु त्रीण्येव शतानि। तेषां सविंशमस्थिशतं शाखासु, सप्तदशोत्तरं शतं श्रोणिपार्श्वपृष्ठोदरोरस्सु। ग्रीवां प्रत्यूर्द्ध्वं त्रिषष्टिः। एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते ॥१७॥

एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि—तानि पञ्चदश, तलकूर्च्चगुल्फ-

षट् कूर्चा इत्यादि। कूर्चा इव कूर्चाः, नाम्नैवाकृतिरुन्नेया, ते पुनर्मांसास्थिशिरास्नायूनां जालकप्रभवाणां सन्ततिविरचिताः ॥ १२ ॥

महत्य इत्यादि। पेशीनिबन्धनार्थमिति प्रयोजनकथनम्। गयी तु महत्यो मांसरज्जवश्चतस्रः चतस्रः पृष्ठवंशमुभयत इत्यष्टौ प्रतिपादयति ॥ १३ ॥

सप्त सेवन्य इति। शेफो मेढ्रं। परिहर्त्तव्याः शस्त्रेणेति शस्त्रपातनकाले न सेवनी कर्त्तनीया इति सावधानो भवेत् ॥ १४ ॥

सङ्घातानाह—चतुर्दशास्थ्नामित्यादि। त्रयो गुल्फजानुवङ्क्षणेषु, तावन्तोऽन्यस्मिन् सक्थ्नि, बाह्वोरेवमेव, एवं चतुर्भिस्त्रिकैर्द्वादश; त्रिकशिरसोरेकैकः—त्रिके एकः, एकः शिरसीत्येवं चतुर्दश। यद्यपि श्रोणिकाण्डभागो त्रिकं प्रसिद्धं, तथाप्यत्र बाहुग्रीवास्थित्रयसंघातस्त्रिक उच्यते ॥ १५ ॥

सीमन्तानाह—चतुर्दशैव सीमन्ता इत्यादि। तैर्युक्ता अस्थिसङ्घाता इति। तथाच भोजः—"सङ्घाताः सञ्चिता यैस्तु सीमन्तांस्तान् प्रचक्ष्महे" इति। परमतमाह—ये ह्युक्ता इत्यादि। एकेषां आचार्य्याणां मते सङ्घाता अष्टादश। तद् यथा—पूर्वोक्ताश्चतुर्दश, श्रोणिकाण्डमुपर्य्येकः, वक्षउपर्य्येकः, उदरोरःसन्धाने एकः, अंसकूटमुपर्य्येकः, एवमष्टादश ॥ १६ ॥

अस्थिसङ्ख्यां कुर्वन्नाह—त्रीणीत्यादि। वेदवादिनो भाषन्ते इत्यत्रायुर्वेदवादिन इति द्रष्टव्यं, न पुनर्वेद एव; तदा तु त्रीण्येवास्थिशतानीत्यत्रत्यं वचो वेदविरुद्धत्वादप्रमाणं स्यात्। स्वमतमाह—शल्यतन्त्रे इत्यादि। कथं शाखासु विंशत्यधिकं शतं पूर्य्यंते तदाह—एकैकस्यान्त्वि-

संश्रितानि दश, पार्ष्ण्यामेकम्, जङ्घायां द्वे, जानुन्येकम्, एकमूराविति त्रिंशदेवमेकस्मिन् सक्थनि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ ॥ १८॥

श्रोण्यां पञ्च, तेषां गुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकम्, पार्श्वे षट्त्रिंशदेकस्मिन्; द्वितीयेऽप्येवम्। पृष्ठे त्रिंशत्, अष्टावुरसि, द्वे अक्षकसंज्ञे ॥ १९॥

ग्रीवायां नवकम्, कण्ठनाड्यां चत्वारि, द्वे हन्वोः, दन्ता द्वात्रिंशत्, नासायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेष्वेकैकम्, षट् शिरसि ॥ २०॥

एतानि पञ्चविधानि भवन्ति; तद् यथा—कपालरुचकतरुणवलयनलकसंज्ञानि। तेषां जानुनितम्बांसगण्डतालुशङ्खशिरःसु कपालानि, दशनास्तु रुचकानि, घ्राणकर्णग्रीवाक्षिकोषेषु तरुणानि, पाणिपादपार्श्वपृष्ठोदरोरःसु वलयानि, शेषाणि नलकसंज्ञानि ॥ २१॥

भवन्ति चात्र।

अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्।
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम् ॥
मांसान्यत्र निबद्धानि शिराभिः स्नायुभिस्तथा।
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥ २२॥

त्यादि। तलकूर्च्चगुल्फेत्यादि। तले पादतले पञ्च शलाकाः, तत्प्रबन्धनमेकमस्थि, द्वे द्वे कूर्च्चगुल्फयोरिति दश। त्रिंशच्चतुष्केण सविंशमेकशतम्। यथा श्रोणिपार्श्वपृष्ठोरःसु सप्तदशोत्तरं शतं पूर्य्यते तथाह—श्रोण्यां पञ्चेत्यादि। श्रोण्यां पञ्चेति यदुक्तं तस्यैव विवरणमाह—तेषामित्यादि। गुदभगनितम्बद्वये चत्वारि, एवं श्रोणिगतपञ्चकमारभ्य अक्षकाश्रितद्वयं यावत् सर्व्वैः सप्तदशोत्तरं शतं पूर्य्यते। ग्रीवां प्रत्यूर्द्ध्वं यथा त्रिषष्टिस्तथाह—ग्रीवायामित्यादि। गण्डकर्णशङ्खेष्वित्यत्र गण्डौ च कर्णौ च शङ्खौ चेति विग्रहे षडस्थीनि भवन्ति ॥ १७—२०॥

एतानीत्यादि। कपालानि कर्परसंज्ञानि। दशना दन्ता इत्यर्थः। तरुणानि तरुणसंज्ञानि। वलयानि वलयसंज्ञानि। अस्थ्नां स्थानविशेषेण धर्म्मविशेषान्नामविशेषः पञ्चविधः। शेषाणि नलकसंज्ञानीति हस्तपादाङ्गुलितलकूर्च्चनलकादिषु। तदुक्तं भोजे—"हस्तपादाङ्गुलितले कूर्च्चेषु मणिबन्धयोः। बाहुजङ्घाद्वये चापि जानीयान्नलकानि तु" इति। नामविशेषकथनं रचनाविशेषज्ञापनार्थम् ॥ २१॥

शरीरधारणविषये अस्थ्नां प्राधान्यं दर्शयन्नाह—भवन्ति चात्रेत्यादि। अवाचिन ॥ २२॥

सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च।
शाखासु हन्वोः कट्यांश्च चेष्टावन्तस्तु सन्धयः।
शेषास्तु सन्धयः सर्व्वे विज्ञेया हि स्थिरा बुधैः॥ २३॥

सङ्ख्यातस्तु दशोत्तरे द्वे शते। तेषां शाखास्वष्टषष्टिः, एकोनषष्टिः कोष्ठे, ग्रीवां प्रत्यूर्द्ध्वं त्र्यशीतिः॥ २४॥

एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे, ते चतुर्द्दश। जानुगुल्फवङ्क्षणेष्वेकैकः, एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ॥ २५॥

त्रयः कटीकपालेषु, चतुर्विंशतिः पृष्ठवंशे, तावन्त एव पार्श्वयोः, उरस्यष्टौ, तावन्त एव ग्रीवायाम्, त्रयः कण्ठे, नाड़ीषु हृदयक्लोमनिबद्धास्त्वष्टादश, दन्तपरिमाणा दन्तमूलेषु, एकः काकलके नासायाञ्च, द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ, गण्डकर्णशङ्खेष्वेकैकः, द्वौ हनुसन्धी, द्वावुपरिष्टाद् भ्रुवोः शङ्खयोश्च, पञ्च शिरःकपालेषु, एको मूर्द्ध्नि॥ २६। २७॥

त एते सन्धयोऽष्टविधाः—कोरोदूखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डल-

अस्थ्याश्रितान् सन्धीनाह—सन्धयस्त्वित्यादि। चेष्टावन्तश्चलाः, स्थिरा अचलाः। कट्याञ्चेति चकाराद् ग्रीवायामपि चलाः॥ २३॥

सङ्ख्यातस्त्वित्यादि। शाखास्वष्टषष्टेर्विवरणमाह—एकैकस्यामित्यादि। पादाङ्गुष्ठेऽस्थित्रितयान्वितेऽपि सन्धिद्वयमेव स्यात्। हस्ताङ्गुष्ठेऽस्थित्रितयसंयुक्तेऽपि सन्धिद्वयमेव गणनीयम्, तृतीयस्य हस्ताङ्गुष्ठसन्धेर्मणिबन्धसन्धावेवान्तर्भावात्॥ २४।२५॥

इदानीं शाखासन्धीनभिधाय कोष्ठसन्धीनूर्द्ध्वाङ्गभागसन्धींश्च दर्शयन्नाह—त्रयः कटीत्यादि। तावन्त एव ग्रीवायामष्टावित्यर्थः। त्रयः कण्ठे गलनलकास्थनि। नाड़ीषु कण्ठपार्श्वनाड़ीषु, हृदयक्लोमनिबद्धासु अन्नपानवहासु मण्डलास्थिसंज्ञकास्त्वष्टादश। काकलकं गलमणिः, घण्टिकेति लोके; तत्रैकः, नासायाञ्चैकः, द्वौ वर्त्ममण्डलयोस्तरुणास्थिसन्धी। गण्डौ च कर्णौ च शङ्खौ चेति विग्रहे षट् सन्धयः। शङ्खयोश्चेत्यत्राप्युपरिष्टाद् द्वाविति सम्बन्धनीयम्। तदुक्तं—"ग्रीवास्वष्टौ त्रयः कण्ठे कण्ठनाड्यां नवद्वयम्। वर्त्ममण्डलगण्डाद्ध-कर्णशङ्खहनुद्वये। भ्रूशङ्खद्वितयस्योर्द्ध्वं सहस्त्रेषु द्वयं द्वयम्। कपाले पञ्च मूर्द्ध्न्येको नासाकाकलयोर्द्वयम्। द्वात्रिंशता त्र्यशीतिः स्यादेवं दन्ताश्रितैः सह" इति॥ २६। २७॥

त एते सन्धय इत्यादि। यद्यप्येषां नामभिरेवाकृतयो व्याख्यातास्तथापि केषाञ्चित् सन्धीनां सुखावबोधनार्थमाकृतिर्लिख्यते। कोरो नाम गर्त्तस्तदाकृतयः कोराः, कोरः कलिका तदाकृतय इत्यन्ये। उदूखलस्तण्डुलकण्डनोपयोगी, तदाकृतयः सन्धयोऽप्युदूखलाः; समुद्गः सम्पुटस्तदा-

शङ्खावर्त्ताः। तेषामङ्गुलिमणिवन्धगुल्फजानुकूर्परेषु कोराः सन्धयः। कक्षावङ्क्षण-दशनेषूदूखलाः। अंसपीठगुदभगनितम्बेषु सामुद्गाः, ग्रीवापृष्ठवंशयोः प्रतराः, शिरःकटीकपालेषु तुन्नसेवन्यः, हन्वोरुभयतस्तु वायसतुण्डाः, कण्ठहृदयनेत्र-क्लोमनाड़ीषु मण्डलाः, श्रोत्रशृङ्गाटकेषु शङ्खावर्त्ताः, तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ २८ ॥

अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः।
पेशीस्नायुशिराणान्तु सन्धिसंज्ञा न विद्यते ॥ २९ ॥

नव स्नायुशतानि। तासां शाखासु षट् शतानि, द्वे शते त्रिंशच्च कोष्ठे, ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः ॥ ३० ॥

एकैकस्यान्तु पादाङ्गुल्यां षट् निचितास्तास्त्रिंशत्। तावत्य एव तलकूर्च्चगुल्फेषु, तावत्य एव जङ्घायाम्, दश जानुनि, चत्वारिंशदूरौ, दश वङ्क्षणे, शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ ॥ ३१ ॥

षष्टिः कट्याम्, अशीतिः पृष्ठे, पार्श्वयोः षष्टिः, उरसि त्रिंशत्, षट्त्रिंशद् ग्रीवायाम्, मूर्द्ध्नि चतुस्त्रिंशत्, एवं नव स्नायुशतानि व्याख्यातानि ॥३२।३३॥

भवन्ति चात्र।

स्नायूश्चतुर्व्विधा विद्यात् तास्तु सर्व्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ ३४ ॥
प्रतानवत्यः शाखासु सर्व्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह ॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥ ३५ ॥

कृतौ भवाः सामुद्गाः। प्रतरत्यनेनेति प्रतरो मेलकः, तदाकृतयः प्रतराः। मण्डलो मण्डलाकृतिः। शेषाणाञ्च नामभिरेवाकृतयो ज्ञेयाः। अस्थिमात्राश्रिताः सन्धयोऽभिहिताः, नान्याश्रिताः सन्धय इति दर्शयन्नाह—अस्थ्नान्त्वित्यादि ॥ २८—३० ॥

यथा शाखासु स्नायूनां षट् शतानि पूर्य्यन्ते, तथाह— एकैकस्यान्त्वित्यादि। षट् निचिता इति षट् स्नायवो निबद्धा इत्यर्थः। कोष्ठस्थाः कथ्यन्ते—षष्टिः कट्यामित्यादि। ग्रीवां प्रत्यूर्द्ध्वं स्थाः कथ्यन्ते— षट्त्रिंशदित्यादि। महास्नायोस्तु कण्डरा इति संज्ञा ॥ ३१—३३ ॥

भवन्ति चात्रेत्यादि। वृत्ता वर्त्तुलाः ॥ ३४।३५ ॥

नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः॥
न ह्यस्थीनि न वा पेश्यो न शिराः न च सन्धयः।
व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम्॥
यः स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा।
स गूढं शल्यमाहर्त्तुं देहाच्छक्नोति देहिनाम्॥ ३६॥

पञ्च पेशीशतानि भवन्ति। तासां चत्वारि शतानि शाखासु। कोष्ठे षट्षष्टिः। ग्रीवां प्रत्यूर्द्ध्वं चतुस्त्रिंशत्॥ ३७॥

एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश, दश प्रपदे, पादोपरि कूर्च्चसन्निविष्टास्तावत्य एव, दश गुल्फतलयोः, गुल्फजान्वन्तरे विंशतिः, पञ्च जानुनि, विंशतिरूरौ, दश वङ्क्षणे, शतमेवमेकस्मिन् सक्थनि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ॥ ३८॥

तिस्रः पायौ, एका मेढ्रे, सेवन्याञ्चापरा, द्वे वृषणयोः, स्फिचोः पञ्च पञ्च, द्वे वस्तिशिरसि, पञ्चोदरे, नाभ्यामेका, पृष्ठोर्द्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः, षट् पार्श्वयोः, दश वक्षसि, अक्षकांसौ प्रति समन्तात् सप्त, द्वे हृदयामाशययोः, षट् यकृत्प्लीहोण्डुकेषु॥ ३९॥

ग्रीवायां चतस्रः, अष्टौ हन्वोः, एकैका काकलकगलयोः, द्वे तालुनि, एका

तासाञ्च सर्व्वशरीरावयवनिबन्धनं दर्शयन्नाह—नौरित्यादि। नृयुक्ता प्राणिसहिता, सुसमाहिता सुघटिता। यथा स्नायुर्व्यापादिता सती शरीरिणं पुरुषं हन्ति न तथा अस्थ्यादीनि हन्युः॥ ३४—३६॥

पञ्चपेशीशतानीत्यादि। मांसावयवसङ्घातः परस्परं विभक्तः पेशी इत्युच्यते। गयी तु कोष्ठे षष्टिः ग्रीवां प्रत्यूर्द्ध्वं चत्वारिंशदिति पठति। एकैकस्यान्त्वित्यादि। प्रपदं पादाग्रम्। कोष्ठगता आह—तिस्रः पायावित्यादि। गयी तु एका मेढ्रसेवन्यां, द्वे अपरे वृषणयोः स्फिचोश्च द्वयोर्दश, तिस्रो बलिसंज्ञका गुदे, द्वे वस्तिशिरसि, सहोदरफलके यकृदादिभिः सह, नाभ्यामेका, पृष्ठे सन्धिनिविष्टाः पञ्च, पार्श्वयोः सन्धिदीर्घाः पञ्च, दश वक्षसि, अक्षकांसौ प्रति सर्व्वतः सप्त, द्वे हृदि, एका आमाशये, द्वे अभ्यन्तरतः कोष्ठे, इति कोष्ठे षष्टिं पठति। वृद्धवाग्भटोऽपि कोष्ठे षष्टिमेवाह—ग्रीवां प्रत्यूर्द्ध्वंगा आह—ग्रीवायामित्यादि। गयी तु ग्रीवायां

जिह्वायाम्, ओष्ठयोर्द्वे, घोणायां द्वे, द्वे नेत्रयोः, गण्डयोश्चतस्रः, कर्णयोर्द्वे, चतस्रो ललाटे, एका शिरसीति, एवमेतानि पञ्च पेशीशतानि ॥ ४० ॥

शिरास्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम्।
पेशीभिः संवृतान्यत्र वलवन्ति भवन्त्यतः ॥ ४१ ॥

स्त्रीणान्तु विंशतिरधिका। दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धिः, अपत्यपथे चतस्रः—तासां प्रसृतेऽभ्यन्तरतो द्वे, मुखाश्रिते वाह्ये च वृत्ते द्वे, गर्भच्छिद्रसंश्रितास्तिस्रः। शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव ॥४२॥

पित्तपक्काशययोर्मध्ये गर्भाशयो यत्र गर्भस्तिष्ठति ॥ ४३ ॥

तासां बहुलपेलवाणुस्थूलपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति ॥ ४४ ॥

भवति चात्र।

पुंसां पेश्यः पुरस्ताद् याः प्रोक्ता लक्षणमुष्कजाः।
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः ॥ ४५ ॥

चतस्रः, एका कण्ठे, तथा काकलकेऽप्येका, तालुनि द्वे, रसनायां षट्, अधरयोर्द्वे, घोणायाञ्च द्वे, द्वे कर्णयोः, प्रत्येकं हन्वोश्चतस्रः, अक्ष्णोर्द्वे, अलीके चतस्रः, मूर्द्धनि षडित्यूर्द्ध्वकाये चत्वारिंशत् पठति ॥ ३७—४१ ॥

स्त्रीणामित्यादि। अधिकाया विंशतेर्विवरणमाह—दश तासामित्यादि। अपत्यपथे योनौ चतस्रः। चतसृणामेव विवरणमाह—तासामित्यादि। मुखाश्रिते योनिमुखाश्रिते। अभ्यन्तरतः प्रसृते योनेरभ्यन्तरतः प्रसारं प्राप्ते मूत्रस्रोतःस्वरूपे इत्यर्थः। वाह्ये निर्गते, वृत्ते वर्त्तुले। योनिकर्णिकास्रोतःपार्श्वद्वयगतत्वेन द्वे मांसपेश्यौ। गर्भच्छिद्रसंश्रिता इति गर्भमार्गमाश्रितास्तिस्रः आवर्त्तत्रयरूपेण, तृतीये चावर्त्ते मत्स्यमुखाकारा गर्भशय्या यत्र गर्भस्तिष्ठति। तासां शुक्रार्त्तवप्रवेशिन्यश्च तिस्रः पेश्यः। का गर्भशय्येत्याह—पित्तपक्काशययोरित्यादि ॥ ४२। ४३ ॥

इदानीं तासां पेशीनां स्थानवशान्नानारूपत्वमाह—तासामित्यादि। तासां पेशीनां, बहुलाः बहुतराः, पेलवाः अल्पाः, अणवः सूक्ष्माः, तद्विपरीताः स्थूलाः, पृथवो विस्तीर्णाः, वृत्ता वर्त्तुलाः, ह्रस्वा अदीर्घाः, दीर्घा आयताः, स्थिराः कठिनाः, मृदवः कोमलाः, श्लक्ष्णाः स्पर्शसुखाः, तद्विपरीताः कर्कशाः ॥ ४४ ॥

केचित्तन्त्रकाराः स्त्रीणां मेढ्रमुष्काभावात् तदाश्रितानां पेशीनामन्यत्रावस्थानं पठन्ति। तन्मतमाह—भवति चात्रेत्यादि। लक्षणमुष्कजा इति लक्ष्यते ज्ञायते पुमाननेनेति लक्षणं लिङ्गं शिश्नमिति यावत्। फलं गर्भाशयः, ता इति पेश्यः। गयी तु अमुं तन्त्रान्तरीयश्लोकं न पठति। किन्तु एवमेतानि पञ्च पेशीशतानीत्यत्र पुंसामिति पदं पठित्वा पुंसामेव पञ्च पेशीशतानि, स्त्रीणान्तु त्रिसप्तिन्यूनानि पञ्चशतानीति व्याख्याति। अत्रार्थे च भोजवाक्यं दृष्टान्ती-

मर्म्मशिराधमनीस्रोतसामन्यत्र प्रविभागः ॥ ४६ ॥

शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः ।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ ४७ ॥
आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः ।
स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥ ४८ ॥
त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः ।
शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित् ॥
तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता ।
शोधयित्वा मृतं सम्यग् द्रष्टव्योऽङ्गविनिश्चयः ॥
प्रत्यक्षतो हि यद् दृष्टं शास्त्रदृष्टञ्च यद् भवेत् ।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम् ॥ ४९ ॥

तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीड़ितमवर्षशतिकं निःसृष्टान्त्र-पुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कलकुशशणादीना-मन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत् । सम्यक् प्रकुथितञ्चोद्धृत्य ततो देहं सप्तरात्रादुशीरवालवेणुवल्कलकूर्च्चानामन्यतमेन शनैःशनैरवघर्षयंस्त्वगादीन् सर्व्वानेव बाह्याभ्यन्तरानङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेच्चक्षुषा ॥ ५० ॥

करोति । तथाच भोजवाक्यं—'पञ्चपेशीशतान्येव स्त्रीवर्ज्जं विद्धि भूमिप । अतश्च तिस्रो हीयन्ते स्त्रीणां शेफसि मुष्कयोः' इति । परिशिष्टमर्म्मशिरादिव्याकरणं चास्तीति मन्यमान आह—मर्म्मेत्यादि । अन्यत्रेति प्रत्येकमर्म्मनिर्द्देशे शिरावर्णनविभक्तौ धमनीव्याकरणे च ॥ ४५।४६ ॥

गर्भशय्यामनन्तरकीर्त्तितां प्रतिपादयितुमाह—शङ्खनाभ्याकृतिरित्यादि । तत्संस्थानामिति अल्पमुखामन्तर्म्महासुषिरामित्यर्थः । मूढगर्भोद्धरणार्थं तत्र गर्भस्थितिस्वरूपमाह—आभुग्न इत्यादि । आभुग्नः सङ्कुचिताङ्गः, स्वभावात् पूर्व्वकर्म्मापेक्षात् ॥ ४७ । ४८ ॥

इदानीं शल्यतन्त्रस्योत्कर्षं दर्शयन्नाह—त्वक्पर्य्यन्तस्येत्यादि । सर्व्वावयवपरिमाणं प्रत्यक्ष-लक्ष्यं संशयच्छेदनाय स्यात्, तस्मात् तदुपायं दर्शयन्नाह—तस्मान्निःसंशयमित्यादि ॥ ४९ ॥

कथं पुनः शास्त्रदृष्टं प्रत्यक्षतो दृश्यते इत्याह—तस्मात् समस्तगात्रमित्यादि । अङ्गहीने आगमोक्तावयवसंख्याद्यप्रत्ययात्, विषोपहते विषज्वालाविशीर्णत्वगादिः स्यात्, दीर्घव्याधिपीड़िते हि त्वगादिमानासम्भवः, मुञ्जाद्यवेष्टने मत्स्यादिभक्षितत्वादसम्पूर्णावयवता । अपञ्जरस्थे

श्लोकौ चात्र भवतः।

न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च॥
शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः॥ ५१॥

इति सुश्रुतसंहितायां शारीरस्थाने शरीरसंख्याव्याकरणशारीरं नाम पञ्चमोऽध्यायः॥ ५॥

जलरयेण श्वयति। प्रकाशे गृध्रादिभक्षणभयम्। त्वक्पर्य्यन्तो देहश्चक्षुरिन्द्रियग्राह्यो न क्षेत्रज्ञ इत्याह—न शक्य इत्यादि। विभुरात्मा स चक्षुषा द्रष्टुं न शक्यः, यतः सूक्ष्मतमः। दृश्यते ज्ञानचक्षुर्भिरिति सद्गुरूपदेशजज्ञानान्येव चक्षूंषि तैर्दृश्यते, तपांसि चान्द्रायणादीनि तानि चक्षूंषि दृष्टयस्तैरपि। शास्त्रतः प्रत्यक्षतश्च दर्शनं सन्देहापोहकारणं, तदाह—शरीरे चैवेत्यादि। अवापोह्य निराकृत्येत्यर्थः॥ ५०। ५१॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शरीरसङ्ख्याव्याकरणव्याख्यानाम पञ्चमोऽध्यायः॥ ५॥

---

# षष्ठोऽध्यायः ।

अथातः प्रत्येकमर्म्मनिर्द्देशं शारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

सप्तोत्तरं मर्म्मशतम् । तानि मर्म्माणि पञ्चात्मकानि । तद्यथा—मांसमर्म्माणि, शिरामर्म्माणि, स्नायुमर्म्माणि, अस्थिमर्म्माणि, सन्धिमर्म्माणि चेति । न खलु मांसशिरास्नाय्वस्थिसन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति, यस्मान्नोपलभ्यन्ते ॥ २ ॥

तत्रैकादश मांसमर्म्माणि, एकचत्वारिंशत् शिरामर्म्माणि, सप्तविंशतिः

शरीरसंख्याव्याकरणे हि मांसशिरादिव्याकरणमभिहितं, मर्म्माणि च मांसशिरादिसंश्रितानि, अतस्तदनन्तरं मर्म्मणां निर्द्देशो युज्यते इत्याह—अथात इत्यादि । प्रत्येकशब्दादग्रे मांसादिशब्दो लुप्तो द्रष्टव्यः, तेन प्रत्येकं मांसादिमर्म्मणां निर्द्देशो विवरणं यस्मिन् तत् तथा ॥ १ ॥

तेषां संख्यामाह—सप्तोत्तरमित्यादि । पञ्चात्मकानि पञ्चप्रकाराणि । तान्येव पञ्चप्रकाराण्याह — तद् यथेत्यादि । ननु कथं मांसादीनि पञ्चैव मर्म्माणि नाधिकानीति दर्शयन्नाह—न खल्वित्यादि । ननु स्रोतःप्रभृतीनामपि मारणात्मकत्वात् मर्म्मत्वमस्त्येव, तत् कथं मांसादिव्यतिरेकेणान्यानि मर्म्माणि नोपलभ्यन्त इत्युक्तम् ? उच्यते—मारयन्तीति मर्म्माण्युच्यन्ते । स्रोतसि च क्षतेऽपि नावश्यतया मरणं ; यतो वक्ष्यति—'स्रोतोविद्धन्तु प्रत्याख्यायोपचरेत्' इति । यदेवं तर्हि रुक्करवैकल्यकराणाममारणात्मकत्वात् मर्म्मत्वं न स्यादिति चेत् ? तन्न ; रुक्करवैकल्यकरेष्वपि अग्नीषोमादिप्राणानां मध्ये कस्यचित् प्राणस्य हानेः, अथवा स्रोतःप्रभृतीनि मांसादीन्यव्यतिरिच्य वर्त्तन्ते । यतो मांसादिष्वेव स्रोतःप्रभृतीनि सन्ति, तस्मान्मांसादीनि पञ्चैव मर्म्माणीति ॥ २ ॥

इदानीं मांसादिभेदेन मर्म्मसंख्यां निर्द्दिशन्नाह—तत्रेत्यादि । एकादशेति चत्वारि तलहृदयानि, सावन्त्येवेन्द्रवस्तीनि, गुदमेकं, द्वे स्तनरोहिते ; एवमेकादश मांसमर्म्माणि । एकचत्वारिंशदिति ; चतस्रो धमन्यः, अष्टौ मातृकाः, चत्वारि शृङ्गाटकानि, द्वे अपाङ्गे, एका स्थपनी, द्वे फणे, द्वे स्तनमूले, द्वावपस्तम्भौ, द्वावपलापौ, एकं हृदयं, एका नाभिः, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, चत्वारि लोहिताक्षाणि, चतस्र ऊर्व्यः ; एवमेकचत्वारिंशत् शिरामर्म्माणि । सप्तविंशतिरिति चतस्र आण्यः, द्वौ विटपौ, द्वौ कक्षधरौ, चत्वारः कूर्चाः, चत्वारि कूर्च्चशिरांसि, एको वस्तिः, चत्वारि क्षिप्राणि,

स्नायुमर्म्माणि, अष्टावस्थिमर्म्माणि, विंशतिः सन्धिमर्म्माणि चेति, तदेतत् सप्तोत्तरं मर्म्मशतम् ॥ ३ ॥

तेषामेकादशैकस्मिन् सक्थनि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। उदरोरसोर्द्वादश, चतुर्दश पृष्ठे, ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत् ॥४॥

तत्र सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्यूर्व्वी-लोहिताक्षाणि विटपञ्चेति। एतेनेतरं सक्थि व्याख्यातम् ॥ ५ ॥

उदरोरसोस्तु गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति ॥ ६ ॥

पृष्ठमर्म्माणि तु कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति ॥ ७ ॥

बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोमणिवन्धेन्द्रवस्तिकूर्पराण्यूर्व्वी-लोहिताक्षाणि कक्षधरञ्चेति। एतेनेतरो बाहुर्व्याख्यातः ॥ ८ ॥

जत्रुण ऊर्द्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वे फणे द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेका स्थपनी पञ्च सीमन्ताश्चत्वारि शृङ्गाटकान्येकोऽधिपतिरिति ॥ ९ ॥

द्वावंसौ, द्वे विधुरे, द्वावुत्क्षेपौ ; एवं सप्तविंशतिः स्नायुमर्म्माणि। अष्टाविति द्वे कटीकतरुणे, द्वौ नितम्बौ, द्वे अंसफलके, द्वौ शङ्खौ ; एवमष्टावस्थिमर्म्माणि। विंशतिरिति द्वे जानुनी, द्वौ कूर्परौ, पञ्च सीमन्ताः, एकोऽधिपतिः, द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वे कुकुन्दरे, द्वावावर्त्तौ, द्वे कृकाटिके ; एवं विंशतिः सन्धिमर्म्माणि। पुनः सप्तोत्तरं मर्म्मशतमिति वचनमुपसंहारे प्रयुक्तमतो न पौनरुक्त्यम् ॥ ३ ॥

मांसादिमर्म्मणां सप्तोत्तरशतसंख्यकानां देशविशेषज्ञापनार्थं संख्यया विभज्य शाखाद्याश्रयं निर्द्दिशन्नाह—तेषामित्यादि ॥ ४ ॥

शाखादिषु संख्यया विभक्तानां मर्म्मणां नामान्याह—तत्रेत्यादि। अत्र क्षिप्रादेरेकैकं गणयितव्यम्, एवमेकादश। क्षिप्रादीनां लक्षणमाचार्य्यः स्वयमेवाग्रे करिष्यति, अतोऽत्रेमानि न व्याख्यातानि ॥ ५ ॥

उदरेत्यादि गुदादिहृदयान्तमेकैकं गणयितव्यम्, स्तनमूलादीनि द्वे द्वे ; एवं द्वादश। पृष्ठेत्यादि कटीकतरुणादीनि द्वे द्वे ; एवं चतुर्द्दश। बाह्वित्यादि। अत्रापि क्षिप्रादिकमेकैकं गणयितव्यम्। जत्रुण ऊर्द्ध्वमिति। धमन्यादिसप्तत्रिंशत् संख्या ज्ञेया ॥ ६—९ ॥

तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि ॥ १० ॥

नीलधमनी-मातृका-शृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भहृदय-नाभिपार्श्वसन्धिबृहतीलोहिताक्षोर्व्व्यः शिरामर्म्माणि ॥ ११ ॥

आणी-विटप-कक्षधर-कूर्च्च-कूर्च्चशिरो-वस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायु-मर्म्माणि ॥ १२ ॥

कटीकतरुणनितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि ॥ १३ ॥

जानुकूर्परसीमन्ताधिपतिगुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धि-मर्म्माणि ॥ १४ ॥

तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति। तद् यथा—सद्यःप्राण-हराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोनविंशतिः, कालान्तरप्राणहराणि त्रयस्त्रिंशत्, त्रीणि विशल्यघ्नानि, चतुश्चत्वारिंशद् वैकल्यकराणि, अष्टौ रुजाकराणीति ॥ १५ ॥

भवन्ति चात्र।

शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरा गुदम्।
हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि तु ॥ १६ ॥
वक्षोमर्म्माणि सीमन्त-तलक्षिप्रेन्द्रवस्तयः।
कटीकतरुणे सन्धी पार्श्वजौ बृहती च या।
नितम्बाविति चैतानि कालान्तरहराणि तु ॥ १७ ॥
उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत् ॥ १८ ॥
लोहिताक्षाणिजानूर्व्वी-कूर्च्चा विटपकूर्पराः।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ।।

तत्रैकादश मांसमर्म्माणीत्यादिवाक्यैः प्रागुद्दिष्टानां मांसादिमर्म्मणां नामान्याह – तत्रेत्यादि। एतेषां मांसादिमर्म्मणां संख्या प्रागेवात्राध्याये व्याख्याता, तेनात्र न व्याख्यायते ॥ १० – १५ ॥

तान्येतानि पञ्चेत्यादिना यानि मर्म्माण्युक्तानि, तान्येव सुखपाठार्थं श्लोकैर्दर्शयन्नाह—भवन्तीत्यादि। चत्वारि शृङ्गाटकानि, एकः अधिपतिः, शङ्खौ द्वौ, कण्ठशिरा अष्टौ मातृकाः, गुदं, हृदयं, वस्तिर्नाभी चेत्येकैकं, एवमेकोनविंशतिः सद्योघ्नानि ॥ १६ ॥

वक्षोमर्म्माणीति स्तनमूले द्वे, स्तनरोहिते द्वे, अपलापौ द्वौ, अपस्तम्भौ द्वौ, एवमष्टौ वक्षो-मर्म्माणि। सीमन्ताः पञ्च, तलानि चत्वारि, क्षिप्राणि चत्वारि, इन्द्रवस्तयश्चत्वारः, द्वे कटीकतरुणे, द्वौ पार्श्वसन्धी, द्वे बृहत्यौ, द्वौ नितम्बौ, एवं त्रयस्त्रिंशत् कालान्तरप्राणहराणि ॥ १७ ॥

उत्क्षेपाविति उत्क्षेपौ द्वौ, एका स्थपनी, एवं त्रीणि विशल्यघ्नानि। लोहितेत्यादि चत्वारि

अंसांसफलकापाङ्गा नीले मन्ये फणे तथा।
वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च ॥ १९ ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च
रुजाकराणि जानीयादष्टावेतानि बुद्धिमान् ॥ २० ॥
क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च ॥ २१ ॥

मर्म्माणि नाम मांसशिरास्नाय्वस्थिसन्धिसन्निपाताः। तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति, तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते ॥२२॥

तत्र सद्यःप्राणहराण्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयानि, अग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यप्राणहराणि वायव्यानि, शल्यमुखनिरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति, उद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति ; तस्मात् सशल्यो जीवत्युद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि, विशेषतश्च तौ रुजाकरौ, पाञ्चभौतिकीञ्च रुजामाहुरेके ॥ २३ ॥

लोहिताक्षनामधेयानि, आणयश्चतस्रः, जानुनी द्वे, चतस्र ऊर्व्व्यः, चत्वारः कूर्चाः, विटपादीनामावर्त्तान्तानां त्रयोदशानां प्रत्येकं द्वौ द्वौ, इति चतुश्चत्वारिंशत् वैकल्यकरणानि ॥ १८। १९ ॥

गुल्फावित्यादि द्वौ गुल्फौ, द्वौ मणिबन्धौ, द्वे द्वे कूर्च्चशिरांसि चेति द्वे कूर्च्चशिरसी हस्तयोः, द्वे कूर्च्चशिरसी पादयोः, एवं चत्वारि कूर्च्चशिरांसि, इत्यष्टौ सद्यःप्राणहराणि। भेदेन यत् पञ्चप्रकारत्वमुक्तं तद् यद्यपि वक्ष्यमाणेन 'मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति' इत्यादिश्लोकप्रतिपादितेन प्राणहरवैकल्यकरेति द्वित्वेन बाध्यते, तथापि न दोषो भिषजामादरख्यापनार्थत्वात् द्वित्वस्येति ॥२०।२१॥

इदानीं प्राणहरादिकं कर्म्म मर्म्मणां सयुक्तिकं दर्शयन्नाह— मर्म्माणीत्यादि। सन्निपातः संश्लेषः अत्यन्तमिश्रीभाव इति यावत्। सर्व्वेषां सर्व्वत्र मर्म्मणि संश्लेषेऽपि मांसमर्म्मशिरामर्म्मादिव्यवहार आधिक्यमाश्रित्य, पार्थिवादिव्यवहारवत्। स्वभावत इति हेत्वन्तरनिरपेक्षतया। प्राणाः अग्न्यादयः। तांस्तानिति 'इन्द्रियार्थेष्वसंप्राप्तिर्म्मनोबुद्धिविपर्य्ययः' इत्यादिकानत्रैवोक्तान्। अन्ये तु 'भ्रमः प्रलापः पतनं प्रमोहः' इत्यादिकान् सूत्रस्थानोक्तान् आहुः ॥ २२ ॥

कस्माद् पुनरत्र समानेऽपि प्राणोपघाते सद्यःप्राणहरकालान्तरप्राणहरादिविशेष इत्याह— तत्रेत्यादि। आग्नेयानीति यद्यपि सोममारुततेजांसि रजःसत्त्वतमांसि च मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते इत्युक्तं, तथाप्याग्नेयेषु मर्म्मस्वधिकं तेजः, सौम्येषु सोम इत्यादि ज्ञेयम्। अग्निगुणेष्वाशु क्षीणेष्विति अग्नेराशुकारित्वादित्यर्थः। ताविति अग्निवायू विशेषेण रुजाकरौ। सामान्येन पुनः सोमोऽपि, कफव्रणे वेदनासम्भवात् रुजायामेव द्वितीयमेकीयमतं दर्शयन्नाह— पाञ्चभौतिकीमित्यादि ॥ २३ ॥

केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विवृद्धानाञ्च समवायात् सद्यः-प्राणहराणि, एकहीनानामल्पानां वा कालान्तरप्राणहराणि, द्विहीनानां विशल्य-प्राणहराणि, त्रिहीनानां वैकल्यकराणि, एकस्मिन्नेव रुजाकराणीति। नैवम्, यतश्चास्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं भवति॥ २४।२५॥

भवन्ति चात्र।

चतुर्व्विधा यास्तु शिराः शरीरे प्रायेण ता मर्म्मसु सन्निविष्टाः।
स्नाय्वस्थिमांसानि तथैव सन्धीन् सन्तर्प्य देहं प्रतिपालयन्ति॥ २६॥
ततः क्षते मर्म्मणि ताः प्रवृद्धः समन्ततो वायुरभिस्तृणोति।
विवर्द्धमानस्तु स मातरिश्वा रुजः सुतीव्राः प्रतनोति काये॥ २७॥

सद्यःप्राणहरादिविशेषस्य द्वितीयदर्शने व्यवहारं दर्शयन्नाह—केचिदित्यादि। यद्यपि गुद-वस्तिनाभिहृदयेषु सद्यःप्राणहरमर्म्मस्वस्थीनि न व्यक्तानि तथाप्यव्यक्तानामस्थ्नां शक्तिरूपेणा-वस्थानात् पञ्चानां समवाय उत्पद्यते एव। एकहीनानामित्यत्र हीनशब्दोऽत्यन्ताभावे वर्त्तते, न तु न्यूनत्वे। एकहीनानि पुनः स्तनमूलापलापापस्तम्भसीमन्तकटीकतरुणपार्श्वसन्धिबृहती-नितम्बानि मांसहीनानि। स्तनरोहिततलहृदयक्षिप्रेन्द्रवस्तयोऽस्थिहीनाः। द्विहीनानि पुनः उत्क्षेपौ मांससन्धिहीनौ। त्रिहीनानि पुनः स्थपनी मांसशिरास्नायुहीना। लोहिताक्षाणि स्नायु-सन्ध्यस्थिहीनानि, जानुनी मांसशिरास्नायुहीने, ऊर्व्व्योऽस्थिमांसस्नायुहीनाः, विटपे मांसशिरास्थि-हीने, कूर्परौ मांसशिरास्नायुहीनौ, कुकुन्दरे मांसस्नायुशिराहीने, कक्षधरे शिरास्थिसन्धिहीने, विधुरे मांसशिरासन्धिहीने, कृकाटिके मांसशिरास्नायुहीने, अंसौ मांसशिरासन्धिहीनौ, अंस-फलके मांसस्नायुसन्धिहीने, नीले मन्ये फणे च मांससन्ध्यस्थिहीने, आवर्त्तौ मांसशिरास्नायु-हीनौ, अपाङ्गौ मांसस्नायुसन्धिहीनौ। एकस्मिन्निति मांसादिसन्ध्यन्तानामेकस्मिन्नवशिष्टे रुजा-कराणि भवन्ति, गुल्फमणिबन्धा मांसशिरास्नाय्वस्थिहीनाः। नैवमिति स्वदर्शने सर्व्वमर्म्मणां मांसशिरास्नाय्वस्थिसन्धिसन्निपातत्वादेव द्वित्र्यादिहीनमसम्यगित्यर्थः। कुतः स्वदर्शने सर्व्वाणि सर्व्वत्र सन्तीत्याह—यत इत्यादि। यतश्चैवास्थिविद्धेष्वपि शोणितदर्शनं भवत्यतः प्रत्यक्षात् प्रमाणात् सर्व्वाणि मांसादीनि सर्व्वत्र मर्म्माणि भवन्तीति ज्ञातव्यम्॥ २४। २५॥

अतः एतदेव दर्शयन्नाह—चतुरित्यादि। चतुर्व्विधा इति वातपित्तश्लेष्मरक्तवहाः। मर्म्म-स्वित्यादि। एतेन शिराणां स्नाय्वस्थिमांससन्धिगतत्वं बोधितं, अत एवास्थिविद्धेऽपि शोणिता-गमनमित्यर्थः॥ २६॥

इदानीं यथैकदेशजेऽपि प्रहारे मर्म्मविद्धस्य क्रमेण सकलशरीरे वातादिदोषव्याप्त्या रुजावेगेन चेतनाधातोर्वियोगस्तथा दर्शयन्नाह—तत इत्यादि। ताः शिराः, प्रवृद्धो वायुः समन्ततः सर्व्वतः

रुजाभिभूतन्तु पुनः शरीरं प्रलीयते नश्यति चास्य संज्ञा।
अतो हि शल्यं विनिहर्त्तुमिच्छन् मर्म्माणि यत्नेन परीक्ष्य कर्षत्॥ २८॥
एतेन शेषं व्याख्यातम्॥ २९॥

तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति। कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति, * विशल्यप्राणहरञ्च वैकल्यकरं कालान्तरं क्लेशयति रुजाश्च करोति। रुजाकरमतीव्रवेदनं भवति॥ ३०॥

तत्र सद्यःप्राणहराणि सप्तरात्राभ्यन्तरान्मारयन्ति। कालान्तरप्राणहराणि पक्षान्मासाद् वा। तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति॥ ३१॥

अत ऊर्द्ध्वं प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः॥ ३२॥

तत्र पादाङ्गुष्ठाङ्गुल्योर्म्मध्ये क्षिप्रं नाम मर्म्म, तत्र विद्धस्याक्षेपकेण मरणम्॥३३

मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम, तत्रापि रुजाभिर्मरणम्॥ ३४॥

अभिस्तृणोति सञ्छादयति। शरीरं प्रलीयते प्रलयं गच्छति शरीरयन्त्रं विघट्टयतीत्यर्थः। तस्मिन् पाञ्चभौतिके शरीरे प्रलीने संज्ञापष्ठश्चेतनाधातुरपि नश्यति। ताः प्रवृद्ध इत्यत्र तासु वृद्ध इति केचित् पठन्ति व्याख्यानयन्ति च—तासु सिरासु वृद्धो वायुः समन्ततः सकलशरीरमभिस्तृणोति सञ्छादयतीत्यर्थः। एतेनेति रुगादिरूपेण वायोर्लक्षणेन, शेषमिति दाहादि स्रोतोनिरोधादि च पित्तश्लेष्मणोर्लक्षणं व्याख्यातमेवेत्यर्थः॥ २७–२९॥

तेषां सद्यःप्राणहरादीनां स्वकर्म्म यत् नियतं तत् कारणवैकल्याद् व्यभिचारयन्नाह—तत्रेत्यादि। अन्ते विद्धं समीपे विद्धं, मध्ये विद्धन्तु सद्य एवेत्यर्थः, एतेन पूर्व्वं पूर्व्वं मर्म्म कारणवैकल्यात् परस्य परस्य कार्य्यं करोति। एवं परं परमपि मर्म्मातिविद्धादिकारणवशात् पूर्व्वस्य पूर्व्वस्य कर्म्म करोति। अतएव तेष्वित्यादिना क्षिप्राणि कदाचिदाशु मारयन्तीत्यग्रे वक्ष्यति॥ ३०॥

इदानीं सद्यःप्राणहरादिमर्म्मणां मारणे कालावधिं दर्शयन्नाह—तत्र सद्य इत्यादि। यद्यपि सद्यःशब्दस्तत्क्षणवाची तथापि सद्यःप्राणहराणीत्यत्र सद्यःशब्दः सप्ताहाभ्यन्तरपरो ज्ञातव्यः, सप्तरात्रान्मारयन्तीति उक्तत्वात्। तेष्वपीति कालान्तरप्राणहरेष्वपीत्यर्थः। कदाचिदाशु मारयन्ति अतिहतानीति शेषः। अनतिहतानि तु कालान्तरेणैव मारयन्ति, एतच्चोपलक्षणं तेन रुजाकराण्येवं वैकल्यं जनयन्ति। एवं वैकल्यादिष्वपि स्वनियतकर्म्मव्यभिचारः॥ ३१॥

अत ऊर्द्ध्वमित्यादि। तत्र पादाङ्गुष्ठेत्यादि। स्नायुमर्म्मेदं अर्द्धाङ्गुलं कालान्तरप्राणहरञ्च। मध्यमाङ्गुलीत्यादि मध्यमाङ्गुलिमनुलक्ष्यीकृत्य क्रमेण पादतलस्य मध्ये तलहृदयं, मांसमर्म्मेदं अर्द्धाङ्गुलं कालान्तरप्राणहरञ्च॥ ३२–३४॥

* विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयतीति पाठान्तरम्।

क्षिप्रस्योपरिष्टादुभयतः कूर्च्चौ नाम ; तत्र पादस्य भ्रमणवेपने भवतः ॥३५॥

गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम ; तत्र रुजाशोफौ ॥ ३६ ॥

पादजङ्घयोः सन्धाने गुल्फो नाम ; तत्र रुजः स्तब्धपादता खञ्जता वा ॥३७॥

पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम ; तत्र शोणितक्षयेण मरणम् ॥ ३८ ॥

जङ्घोर्व्वोः सन्धाने जानु नाम ; तत्र खञ्जता ॥ ३९ ॥

जानुन ऊर्द्ध्वमुभयतस्त्र्यङ्गुलमाणी नाम ; तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च । ऊरुमध्य ऊर्व्वी नाम ; तत्र शोणितक्षयात् सक्थिशोषः ॥ ४० । ४१ ॥

ऊर्व्या ऊर्द्ध्वमधो वङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम ; तत्र लोहितक्षयेण पक्षाघातः ॥ ४२ ॥

वङ्क्षणवृषणयोरन्तरे विटपं नाम ; तत्र षाण्ड्यमल्पशुक्रता वा भवति । एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि । एतेनेतरसक्थि बाहू च व्याख्यातौ ॥ ४३ । ४४ ॥

विशेषतस्तु यानि सक्थ्नि गुल्फजानुविटपानि, तानि बाहौ मणिबन्ध-कूर्परकक्षधराणि । यथा वङ्क्षणवृषणयोरन्तरे विटपमेवं वक्षःकक्षयोर्मध्ये कक्षधरम् ; तस्मिन् विद्धे त एवोपद्रवाः । विशेषतस्तु मणिबन्धे कुण्ठता । कूर्पराख्ये कुणिः । कक्षधरे पक्षाघातः ॥ ४५ ॥

क्षिप्रस्येत्यादि । उपरिष्टादित्यत्र द्व्यङ्गुले इति शेषः । उभयत इति ऊर्द्ध्वमधश्च, तस्य कूर्च्चः इति नाम, विद्धि इति शेषः । स्नायुमर्म्मेदं चतुरङ्गुलं वैकल्यकरञ्च ॥ ३५ ॥

गुल्फेत्यादि । इदमपि स्नायुमर्म्म एकाङ्गुलं वैकल्यकरञ्च । पादेत्यादि । सन्धिमर्म्मेदं द्व्यङ्गुलप्रमाणं वैकल्यकरञ्च । पार्ष्णिमित्यादि । मांसमर्म्मेदमर्द्धाङ्गुलं पार्ष्णिं प्रति त्रयोदशेऽङ्गुले स्थितं कालान्तरप्राणहरञ्च ; भोजस्तु द्व्यङ्गुलप्रमाणमाह - भोजदर्शनात् गयदासोऽपि मर्म्ममानसूत्रे द्व्यङ्गुलमिन्द्रवस्तिमर्म्मेति पठित्वा व्याख्याति । जङ्घेत्यादि । सन्धिमर्म्मेदं त्र्यङ्गुलप्रमाणं वैकल्यकरञ्च । जानुन इत्यादि । जानुन ऊर्द्ध्वं त्र्यङ्गुले उभयत ऊर्द्ध्वमधश्च, स्नायुमर्म्मेदमर्द्धाङ्गुलं वैकल्यकरञ्च । गयी तु त्र्यङ्गुलमानमेतदाह । ऊर्व्वित्यादि । शिरा-मर्म्मेदमर्द्धाङ्गुलं वैकल्यकरञ्च ॥ ३६—४१ ॥

ऊर्व्या इत्यादि । शिरामर्म्मेदमर्द्धाङ्गुलं वैकल्यकरञ्च । वङ्क्षणेत्यादि । स्नायुमर्म्मेदमेकाङ्गुलं वैकल्यकरञ्च । एवमित्यादि । एतेनैकादशमर्म्मनिर्द्देशेन ॥ ४२—४४ ॥

विशेषत इत्यादि । मणिबन्धः पाणिमूलं, कूर्परः कफोणिः कुहनी इति लोके । तस्मिन्निति मणिबन्धादौ । त एव इति गुल्फादिवधजाताः । विशेषतस्त्वित्यादि । कुण्ठता करस्याकर्म्मण्यत्वम् । कुणिः सङ्कुचितबाहुमध्यः । एतेनेतरबाहुर्व्याख्यातः ॥ ४५ ॥

एवमेतानि चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि ॥ ४६ ॥

अत ऊर्द्ध्वमुदरोरसोर्मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम मर्म्म ; तत्र सद्योमरणम् ॥ ४७।४८ ॥

अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम ; तत्रापि सद्योमरणमश्मरीव्रणादृते। तत्राप्युभयतो भिन्ने न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति, स तु यत्नेनोपक्रान्तो रोहति ॥ ४९ ॥

पक्वामाशययोर्मध्ये शिराप्रभवा नाभिर्नाम ; तत्रापि सद्य एव मरणम् ॥५०॥

स्तनयोर्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम ; तत्र सद्य एव मरणम् ॥ ५१ ॥

स्तनयोरधस्ताद् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्म्मणी ; तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते ॥ ५२ ॥

स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम ; तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते ॥ ५३ ॥

उपसंहारमाह—एवमित्यादि ॥ । ४६ ॥

अत इत्यादि। निरसनं प्रेरकम्। मांसमर्म्मैदं चतुरङ्गुलं सद्योघाति च ॥ ४७।४८ ॥

अल्पेत्यादि। कट्यामित्युपलक्षणं तेन नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफांसि गृह्यन्ते। तदुक्तं—"नाभिपृष्ठकटीमुष्क गुदवङ्क्षणशेफसां। एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः" इति। सद्योमरणं अश्मरीव्रणादृते भवतीति सम्बन्धः। तत्रापीति अश्मरीनिमित्ते इत्यर्थः। उभयतो भिन्ने वस्ताविति शेषः। स्नायुमर्म्मैदं चतुरङ्गुलं सद्योघाति च ॥ ४९ ॥

पक्वेत्यादि। शिरामर्म्मैदं चतुरङ्गुलञ्च। स्तनयोरित्यादि। शिरामर्म्मैदं कमलमुकुलाकारमधोमुखं चतुरङ्गुलञ्च ॥ ५०।५१ ॥

स्तनयोरधस्तादित्यादि। उभयतः स्तनयोरधस्तात् द्व्यङ्गुलप्रदेशे स्तनमूले मर्म्मणि। उभयतो ग्रहणात् पृथक् पृथक् स्तनस्याधः स्तनमूलं मर्म्मेति गम्यते, अन्यथा स्तनयोरधस्तादित्युक्ते मिलितयोरेः स्तनयोरधस्तादितीदृशेऽर्थे स्तनयुगमध्यस्याधस्तात् स्तनमूलाख्यं मर्म्मद्वयमित्यनिष्टं स्यात्। इमे शिरामर्म्मणी द्व्यङ्गुले कालान्तरप्राणहरे च ॥ ५२ ॥

स्तनचूचुकयोरित्यादि। स्तनयोश्चूचुके स्तनचूचुके, पूर्व्ववाक्यात् द्व्यङ्गुले इत्यनुवर्त्तते, तेन स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुले स्तनरोहिते द्वे मर्म्मणी। तदुक्तं—"स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलात् स्तनरोहिते। अर्द्धाङ्गुलमिते मांसमर्म्मणी परिकीर्त्तिते। लोहितपूर्णकोष्ठस्य कालान्मरणकारिणी" इति—वृद्धवाग्भटेन "स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहिते" इत्युक्तं, मांसमर्म्मणी

भ्रु वोरुपरि निम्नयोरावर्त्तौ नाम ; तत्राप्यान्ध्यं दृष्ट्युपघातश्च ॥ ७३ ॥

भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम ; तत्र सद्योमरणम् ॥ ७४ ॥

शङ्खयोरुपरि केशान्ते उत्क्षेपौ नाम ; तत्र सशल्यो जीवति पाकात् पतितशल्यो वा, नोद्धृतशल्यः ॥ ७५ ॥

भ्रुवोर्मध्ये स्थपनी नाम ; तत्रोत्क्षेपवत् ॥ ७६ ॥

पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम ; तत्रोन्मादभयचित्तनाशैर्मरणम् ॥ ७७ ॥

घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां शिराणां मध्ये शिरासन्निपातः शृङ्गाटकानि, तानि चत्वारि मर्म्माणि ; तत्रापि सद्योमरणम् ॥ ७८ ॥

मस्तकाभ्यन्तरोपरिष्टाच्छिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिः ; तत्रापि सद्योमरणम् ॥ ७९ ॥

एवमेतानि सप्तत्रिंशदूर्द्ध जत्रुगतानि मर्म्माणि व्याख्यातानि ॥ ८० ॥

भवन्ति चात्र।

ऊर्व्यः शिरांसि विटपे च सकक्षपार्श्वे एकैकमङ्गुलमितं स्तनपूर्व्वमूलम्।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥

भ्रु वोरुपरीत्यादि। भ्रु वोरुपरि निम्नयोरिति प्रदेशकथनम्, सन्धिमर्म्मणी अर्द्धाङ्गुले वैकल्यकारिणी च। भ्रु वोरित्यादि अस्थिमर्म्मणी अर्द्धाङ्गुले। शङ्खयोरित्यादि। केशान्ते केशपर्य्यन्ते, स्नायुमर्म्मणी अर्द्धाङ्गुले विशल्यप्राणहरे च ॥ ७३—७५ ॥

भ्रु वोर्मध्य इत्यादि। तत्रोत्क्षेपवदिति सशल्यः स्वयं पतितशल्यो वा जीवति, उद्धृतशल्यो म्रियते इत्यर्थः। शिरामर्म्म अर्द्धाङ्गुलं विशल्यघ्नञ्च ॥ ७६ ॥

पञ्च सन्धय इत्यादि। पञ्च सन्धयो ये शिरसि विभक्ताः शरीरसंख्याव्याकरणे ते सीमन्ता इत्यर्थः। इमानि सन्धिमर्म्माणि चतुरङ्गुलप्रमाणानि कालान्तरप्राणहराणि च ॥ ७७ ॥

घ्राणश्रोत्रेत्यादि। घ्राणादीन्द्रियचतुष्कतर्पणीनां शिराणां शिरामुखानां सन्निपातः संयोगस्थानं शृङ्गाटकानि, तानि चत्वारि घ्राणादितर्पणशिराणां चतुर्भेदात्। इमानि शिरामर्म्माणि चतुरङ्गुलप्रमाणानि ॥ ७८ ॥

मस्तकेत्यादि। मस्तकाभ्यन्तरोपरिष्टादिति मस्तकाभ्यन्तरोर्द्ध्वमित्यर्थः, शिरासन्ध्योः सन्निपातो रोमावर्त्तः। बहिरस्य लक्षणमुपरिष्टाद् रोमावर्त्तः, एतत् सन्धिमर्म्म अर्द्धाङ्गुलप्रमाणञ्च ॥ ७९।८० ॥

इदानीं सर्व्वेषामेव मर्म्मणां सूत्रे मानमाह—भवन्ति चात्रेत्यादिना। शिरांसि कूर्च्चशिरांसि, कक्षपार्श्वे कक्षधरे इत्यर्थः। एकैकमङ्गुलमितमिति एकैकं यथा भवति तथा ऊर्व्यादयो मर्म्मविशेषा अङ्गुलमिता ज्ञेयाः। स्तनपूर्व्वमूलमित्यादि। मणिबन्धगुल्फं स्तनमूलं चाङ्गुलद्वयमितं

स्तनमूलादृजूभयतः पृष्ठवंशस्य बृहती नाम; तत्र शोणितातिप्रवृत्ति-निमित्तरुपद्रवैर्म्रियते ॥ ६२ ॥

पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम; तत्र बाह्वोः स्वापः शोषो वा ॥ ६३ ॥

बाहुमूर्द्धग्रीवामध्येऽसपीठस्कन्धनिबन्धनावंसौ नाम; तत्र स्तब्धबाहुता ॥६४॥

एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि ॥ ६५ ॥

अत ऊर्द्ध्वं मूर्द्ध जत्रुगतानि व्याख्यास्यामः। तत्र कण्ठनाडीमुभयतश्चतस्रो धमन्यः, द्वे नीले द्वे च मन्ये व्यत्यासेन; तत्र मूकता स्वरवैकृतमरस-ग्राहिता च ॥ ६६ । ६७ ॥

ग्रीवायामुभयतश्चतस्रः शिरामातृकाः, तत्र सद्योमरणम् ॥ ६८ ॥

शिरोग्रीवयोः सन्धाने कृकाटिके नाम; तत्र चलमूर्द्धता ॥ ६९ ॥

कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम; तत्र वाधिर्य्यम् ॥ ७० ॥

घ्राणमार्गेमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम; तत्र गन्धाज्ञानम् ॥ ७१ ॥

भ्रू पुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम; तत्रान्ध्यं दृष्ट्युपघातो वा॥७२

स्तनमूलादित्यादि शिरामर्म्मणी अर्द्धाङ्गुले कालान्तरप्राणहरे च ॥ ६२ ॥

पृष्ठोपरीत्यादि। पृष्ठवंशस्यायतत्वात् प्रदेशनियमार्थं पृष्ठोपरीत्युक्तम्, त्रिकसम्बद्धे इति ग्रीवाया अंसद्वयस्य च यः संयोगः स त्रिकः, तत्र सम्बद्धे अंसफलके अस्थिमर्म्मणी अर्द्धाङ्गुले वैकल्यकारिणी च ॥ ६३ ॥

बाहुमूर्द्धग्रीवेत्यादि। बाहुमूर्द्धा बाहुशिरः, ग्रीवा तु कन्धरा, तयोर्मध्ये ( अंसपीठस्कन्धयोः ) अंसफलकभुजशिखरयोर्बन्धनौ अंसौ, स्नायुमर्म्मणी अर्द्धाङ्गुले वैकल्यकारिणी च ॥ ६४ । ६५ ॥

अत ऊर्द्ध्वमित्यादि। व्यत्यासेन वैपरीत्येन। एका नीला, एका मन्या चैकस्मिन् पार्श्वे, अन्या नीला, अन्या मन्या चापरस्मिन् पार्श्वे, शिरामर्म्मणी चतुरङ्गुले वैकल्यकारिणी च। ६६ । ६७ ॥

ग्रीवायामित्यादि। उभयतश्चतस्र इति एकस्मिन् एकस्मिन् पार्श्वे चतस्रश्चतस्र इत्यर्थः। शिरामर्म्माणि चतुरङ्गुलप्रमाणानि मातृकाः। शिर इत्यादि सन्धिमर्म्मणी अर्द्धाङ्गुले वैकल्य-कारिणी च ॥ ६८ । ६९ ॥

कर्णेत्यादि स्नायुमर्म्मणी किञ्चिन्निम्नाकारे वैकल्यकारिणी च। घ्राणेत्यादि। घ्राणमार्गस्य द्वयोः पार्श्वयोरभ्यन्तरविवरद्वारसम्बद्धे फणे, शिरामर्म्मणी अर्द्धाङ्गुले वैकल्यकारिणी च ॥ ७० । ७१ ॥

भ्रूपुच्छेत्यादि सिरामर्म्मणी अर्द्धाङ्गुले वैकल्यकरे च ॥ ७२ ॥

भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम; तत्राप्यान्ध्यं दृष्ट्युपघातश्च ॥ ७३ ॥

भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम; तत्र सद्योमरणम् ॥ ७४ ॥

शङ्खयोरुपरि केशान्ते उत्क्षेपौ नाम; तत्र सशल्यो जीवति पाकात् पतितशल्यो वा, नोद्धृतशल्यः ॥ ७५ ॥

भ्रुवोर्मध्ये स्थपनी नाम; तत्रोत्क्षेपवत् ॥ ७६ ॥

पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम; तत्रोन्मादभयचित्तनाशैर्मरणम् ॥ ७७ ॥

घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां शिराणां मध्ये शिरासन्निपातः शृङ्गाटकानि, तानि चत्वारि मर्म्माणि; तत्रापि सद्योमरणम् ॥ ७८ ॥

मस्तकाभ्यन्तरोपरिष्टाच्छिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिः; तत्रापि सद्योमरणम् ॥ ७९ ॥

एवमेतानि सप्तत्रिंशदूर्द्ध्वजत्रुगतानि मर्म्माणि व्याख्यातानि ॥ ८० ॥

भवन्ति चात्र।

ऊर्व्व्यः शिरांसि विटपे च सकक्षपार्श्वे एकैकमङ्गुलमितं स्तनपूर्व्वमूलम्।
विद्ध्यङ्गुलद्वयमितं मणिबन्धगुल्फं त्रीण्येव जानु सपरं सह कूर्पराभ्याम् ॥

भ्रुवोरुपरीत्यादि। भ्रुवोरुपरि निम्नयोरिति प्रदेशकथनम्, सन्धिमर्म्मणी अर्द्धाङ्गुले वैकल्यकारिणी च। भ्रुवोरित्यादि अस्थिमर्म्मणी अर्द्धाङ्गुले। शङ्खयोरित्यादि। केशान्ते केशपर्य्यन्ते, स्नायुमर्म्मणी अर्द्धाङ्गुले विशल्यप्राणहरे च ॥ ७३—७५ ॥

भ्रुवोर्मध्य इत्यादि। तत्रोत्क्षेपवदिति सशल्यः स्वयं पतितशल्यो वा जीवति, उद्धृतशल्यो म्रियते इत्यर्थः। शिरामर्म्म अर्द्धाङ्गुलं विशल्यघ्नञ्च ॥ ७६ ॥

पञ्च सन्धय इत्यादि। पञ्च सन्धयो ये शिरसि विभक्ताः शरीरसंख्याव्याकरणे ते सीमन्ता इत्यर्थः। इमानि सन्धिमर्म्माणि चतुरङ्गुलप्रमाणानि कालान्तरप्राणहराणि च ॥ ७७ ॥

घ्राणश्रोत्रेत्यादि। घ्राणादीन्द्रियचतुष्कतर्पणीनां शिराणां शिरामुखानां सन्निपातः संयोगस्थानं शृङ्गाटकानि, तानि चत्वारि घ्राणादितर्पणशिराणां चतुर्भेदात्। इमानि शिरामर्म्माणि चतुरङ्गुलप्रमाणानि ॥ ७८ ॥

मस्तकेत्यादि। मस्तकाभ्यन्तरोपरिष्टादिति मस्तकाभ्यन्तरोर्द्ध्वमित्यर्थः, शिरासन्ध्योः सन्निपातो रोमावर्त्तः। वहिरस्य लक्षणमुपरिष्टाद् रोमावर्त्तः, एतत् सन्धिमर्म्म अर्द्धाङ्गुलप्रमाणञ्च ॥ ७९।८० ॥

इदानीं सर्व्वेषामेव मर्म्मणां मूले मानमाह—भवन्ति चात्रेत्यादिना। शिरांसि कूर्च्चशिरांसि, कक्षपार्श्वे कक्षधरे इत्यर्थः। एकैकमङ्गुलमितमिति एकैकं यथा भवति तथा ऊर्व्व्यादयो मर्म्मविशेषा अङ्गुलमिता ज्ञेयाः। स्तनपूर्व्वमूलमित्यादि। मणिबन्धगुल्फं स्तनमूलं चाङ्गुलद्वयमितं

हृद्बस्तिकूर्च्चगुदनाभि वदन्ति मूर्ध्नि चत्वारि पञ्च च गले दश यानि च द्वे।
तानि स्वपाणितलकुञ्चितसम्मितानि शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम्॥
एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म।
पार्श्वाभिघातितमपीह निहन्ति मर्म्म तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम्॥८१॥
छिन्नेषु पाणिचरणेषु शिरा नराणां सङ्कोचमीयुरसृगल्पमतो निरेति।
प्राप्यामितव्यसनमुग्रमतो मनुष्याः सञ्छिन्नशाखतरुवन्निधनं न यान्ति॥
क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं गच्छत्यतीव पवनश्च रुजं करोति।
एवं विनाशमुपयान्ति हि तत्र विद्धा वृक्षा इवायुधविघातनिकृत्तमूलाः॥
तस्मात् तयोरभिहतस्य तु पाणिपादं छेत्तव्यमाशु मणिबन्धनगुल्फदेशे॥८२॥
मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति यस्माच्च मर्म्मसु हता न भवन्ति सद्यः।
जीवन्ति तत्र यदि वैद्यगुणेन केचित् ते प्राप्नुवन्ति विकलत्वमसंशयं हि॥८३॥

विद्धि जानीहीति सम्बन्धः। त्रीण्येव जानु सपरमिति सपरं द्वितीयजानुसहितं जानु त्रीणि त्र्यङ्गुलानि विद्धीत्यर्थः। मूर्ध्नि चत्वारि पञ्च चेति यानि मूर्ध्नि चत्वारि मर्म्माणि शृङ्गाटकसंज्ञकानि, तथा तत्रैव पञ्चसीमन्तसंज्ञकानि। गले दश यानि च द्वे इति गले कण्ठे यानि दश द्वे च कथितानि तत्राष्टौ मातृकाः द्वे नीले च मन्ये, तानि मर्म्माणि स्वपाणितलकुञ्चितसम्मितानि चतुरङ्गुलप्रमाणानीत्यर्थः। शेषाणि षट्पञ्चाशत् मर्म्माणि। अवेहि जानीहि। अन्ये तु इमानि षट्पञ्चाशत् मर्म्माणि तलप्रमाणान्याहुः। गयी तु अन्यादृशं सूत्रं पठित्वा स्तनमूले द्वे गुल्फे च, इन्द्रवस्तयश्चत्वारः, द्वौ मणिबन्धाविति दश मर्म्माणि द्व्यङ्गुलानि भोजदर्शनाद् व्याख्याति, तथा जानु सपरमित्यत्र सह परेण परप्रदेशावस्थितेनाणिमर्म्मणा वर्त्तते यत् तत् सपरं, तेन जानुनी द्वे, आपयश्चत्वारः, कूर्परे द्वे; इत्यष्टौ त्र्यङ्गुलानि व्याख्यातानि। शेषं समम्। मानकथनप्रयोजनमाह—एतदित्यादिना। मर्म्मसदनमिति मर्म्मस्थानम्॥८१॥

करचरणच्छेदे जीवन्ति तदवयवभूतमर्म्मच्छेदे तु न जीवन्तीति विशेषं दर्शयन्नाह—छिन्नेष्वित्यादि। सङ्कोचमीयुः सङ्कोचं जग्मुरतोऽल्पं रुधिरं प्रवर्त्तते। क्षिप्रेष्वित्यादि। तत्र पाण्योश्चरणयोर्वा। गयी तु वृक्षा इवायुधविघातेत्यादिस्थाने किञ्जल्कपत्रमथनादिव पङ्कजानि इति पठति॥८२॥

मर्म्ममानकथनप्रयोजनं पूर्व्वतरवाक्ये प्रतिपाद्य मर्म्मस्थानविषयं निर्द्दिशन्नाह—मर्म्माणीत्यादि। शल्यस्य मनःशरीराबाधकरस्य विषयः शल्यविषयः, स च शस्त्रादिप्रयोगान्मरणामरणकारकत्वेन द्विविधः; तत्र मरणकारकः शल्यविषयो मर्म्माख्यः शरीरदेशः, यस्मात् तत्र हताः सद्य एव न भवन्ति, सप्ताहाभ्यन्तरे एव म्रियन्ते इत्यर्थः, तस्मान्मरणकारकत्वेन मर्म्माणि

सम्भिन्नजर्ज्जरितकोष्ठशिरःकपाला जीवन्ति शस्त्रविहतश्च शरीरदेशः ।
छिन्नैश्च सक्थिभुजपादकरैरशेषैर्येषां न मर्म्मपतिता विविधाः प्रहाराः * ॥८४॥

सोममारुततेजांसि रजःसत्त्वतमांसि च ।
मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते ।
मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः ॥ ८५ ॥
इन्द्रियार्थेष्वसम्प्राप्तिर्मनोबुद्धिविपर्य्ययः ।
रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते ॥
हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम् ।
ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति ॥
हते वैकल्यजनने केवलं वैद्यनैपुणात् ।
शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात् ॥
विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम् ।
रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः ।
कुर्व्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि ॥ ८६ ॥
छेदभेदादिघातेभ्यो दहनाद् दारणादपि ।
उपघातं विजानीयान्मर्म्मणां तुल्यलक्षणम् ॥ ८७ ॥

मर्म्माभिघातश्च न कश्चिदस्ति योऽल्पात्ययो वापि निरत्ययो वा ।
प्रायेण मर्म्मस्वभिताडितास्तु वैकल्यमृच्छन्त्यथ वा म्रियन्ते ॥ ८८ ॥

शल्यविषयस्यार्द्धमुदाहरन्ति पूर्व्वाचार्य्या इति शेषः । ननु केचिन्मर्म्महता अपि जीवन्तो दृश्यन्ते तत् कथं मरणकारकत्वेन मर्म्माणि शल्यविषयार्द्धमित्याशङ्क्याह—जीवन्तीत्यादि । प्रसङ्गतोऽपरं शल्यविषयार्थं प्रतिपादयितुकामः अमर्म्महतास्तु विविधैरपि छेदभेदादिभिर्न म्रियन्ते इति दर्शयन्नाह—सम्भिन्नेत्यादि ॥ ८३ । ८४ ॥

इदानीं मर्म्मणां शरीरमनोदोषनिवासभूतानां शरीरमनोदोषैरेव मर्म्मविद्धकुपितैर्मनः शरीरञ्च नश्यति, तयोराधारभूतयोर्नाशादाधेयभूतोऽपि भूतात्मापि नश्यतीति दर्शयन्नाह—सोमेत्यादि ॥८५

सद्यःप्राणहरादिमर्म्मपञ्चकस्य लक्षणं निर्दिशन्नाह—इन्द्रियार्थेष्वित्यादि । आशुहरे सद्यःप्राणहरे । पूर्व्वोक्तमिति शल्यमुखावरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवतीत्याद्युक्तमेव कारणं ज्ञेयं लक्षणत्वेनेत्यर्थः । इदानीं मर्म्मघाततुल्यं मर्म्मसमीपस्यापि देशस्य घातं महानर्थकरं दर्शयन्नाह— छेदेत्यादि । उपघातं समीपघातम् ॥ ८६ । ८७ ॥

मर्म्माभिघाते वैद्यस्य यत्नपरतां दर्शयन्नाह—मर्म्माभिघात इत्यादि । अल्पात्यय इति

---

* विविधैः प्रहारैरिति पाठान्तरम् ।

मर्म्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम्।
प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरपि साध्यमानाः ॥ ८९ ॥

इति सुश्रुतसंहितायां शारीरस्थाने प्रत्येकमर्म्मनिर्द्देशशारीरं नाम षष्ठोऽध्यायः ॥ ६ ॥

अल्पव्यापत्। निरत्यय इति निर्गतव्यापत्। गयी तु एतद् वाक्यं न पठति। शारीरदोषेणापि मर्म्मणां ( मर्म्मसमीपदेशस्यापि ) नियतं महानर्थं दर्शयन्नाह—मर्म्माण्यधिष्ठायेत्यादि। मूर्च्छन्ति समुच्छ्रायं गच्छन्ति। यस्मादेवंविधो मर्म्माभिघातस्तस्माद् वैद्येन यत्नः कार्य्यं इति सूचितम् ॥ ८८।८९ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
प्रत्येकमर्म्मनिर्द्देशशारीरव्याख्यानाम षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः ।

अथातः शिरावर्णनविभक्ति नाम शारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

सप्त शिराशतानि भवन्ति ; याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः । द्रुमपत्रसेवनीनामिव च तासां प्रतानाः । तासां नाभिर्मूलं, ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च ॥ २ ॥

भवतश्चात्र ।

यावत्यस्तु शिराः काये सम्भवन्ति शरीरिणाम् ।
नाभ्यां सर्व्वा निवद्धास्ताः प्रतन्वन्ति समन्ततः ॥ ३ ॥
नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता ।
शिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ ४ ॥

मर्म्मशिरास्नायुधमनीः परिहरन्नित्यादौ मर्म्मानन्तरं शिराणां निर्द्देशात् प्रत्येकमर्म्मनिर्द्देशशारीरानन्तरं शिरावर्णनविभागशारीरारम्भो युज्यत इत्याह—अथेत्यादि । विभक्तिर्विभागः समुदायात् पृथक्करणमित्यर्थः । शिरावर्णनमित्यत्र शिरावर्णविभक्ति इति पाठान्तरम् । शिराणां वातादिवहानां तद्वर्णानाञ्चारुणनीलशुक्ललोहितानां विभक्तिर्यस्मिन् शारीरे तत् तथाविधम् ॥ १ ॥

तासामनुशोऽपरिसंख्यातानामपि भूयस्त्वाश्रयसमुदायसंख्यां निर्दिशन्नाह—सप्तेत्यादि । तासां सर्व्वासामपि सामान्यं कर्म्म निर्दिशन्नाह—याभिरित्यादि । याभिः शिराभिः । आरामः नानावृक्षसमुदायविशेषः । जलहारिणीभिः प्रणालीभिः । कुल्याभिः कृत्रिमाल्पसरिद्भिः । एतद दृष्टान्तद्वयं स्थूलसूक्ष्मशिराप्रापणार्थम् । उपस्निह्यते पुष्टिं नीयते तरुणानां शरीरम् । वृद्धानां शरीरपरिणामात्तेनोपस्नेहेन शरीरं याप्यते । उक्तञ्च—स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वादप्रीणनो भवतीति । अनुगृह्यते परिपाल्यते । आकुञ्चनादिभिरित्यत्रादिशब्दात् भाषणस्वप्नावबोधादयो गृह्यन्ते । शिराणां सूक्ष्मविशेषप्रदर्शनाय दृष्टान्तमाह—द्रुमेत्यादि । प्रताना विस्ताराः, तत इति नाभित इत्यर्थः ॥ २ ॥

भवतश्चात्रेत्यादि । प्रतन्वन्ति ऊर्द्ध्वमधस्तिर्य्यक् च काये इति सम्बध्यते । इदानीं शिराणां प्राणानां चाधाराधेयत्वं प्रतिपादयन्नाह—नाभिस्था इत्यादि । नाभिस्था इत्यनेन नाभ्यावरकासु शिरासु अवस्थिताः । प्राणा इति शिराणां प्राणाधारत्वं प्रतिपादितम् ॥ ३ । ४ ॥

तासां मूलशिराश्चत्वारिंशत्—तासां वातवाहिन्यो दश, पित्तवाहिन्यो दश, कफवाहिन्यो दश, दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं भवति, तावत्य एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने, रक्तवाहिन्यश्च यकृत्प्लीह्नोः—एवमेतानि सप्त शिराशतानि॥ ५॥

तत्र वातवाहिन्यः शिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थि बाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्;—तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ, द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य एव चोदरे, दश वक्षसि। एकचत्वारिंशज्जत्रुण ऊर्द्ध्वं;—तासां चतुर्द्दश ग्रीवायां, कर्णयोश्चतस्रः, नव जिह्वायां, षट् नासिकायाम्, अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां शिराणां व्याख्यातम्॥ ६॥

एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे। एवं रक्तवहाः कफवहाश्च। एवमेतानि सप्त शिराशतानि सविभागानि व्याख्यातानि॥ ७॥

भवन्ति चात्र।

क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्।
करोत्यन्यान् गुणांश्चापि स्वाः शिराः पवनश्चरन्॥
यदा तु कुपितो वायुः स्वाः शिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते वातसम्भवाः॥ ८॥

इदानीं शिरापिण्डमभिधाय विभजन्नाह—तासामित्यादि। वातादिवहाः शिराः सामान्यतः सङ्ख्यया अभिधाय प्रत्यङ्गविभागेन ता एव प्रतिपादयितुमाह—तत्र वातवाहिन्य इत्यादि। कोष्ठे चतुस्त्रिंशदिति याः प्रतिपादितास्तासां विवरणमाह—तासामित्यादि। एकचत्वारिंशत् जत्रुण ऊर्द्ध्वमित्युद्दिष्टानां विवरणमाह—तासां चतुर्द्दशेत्यादि। पञ्चसप्ततिशतमिति पञ्चसप्तत्यधिकं शतमित्यर्थः। एष इत्यादि। एष एव विभागः पूर्व्वोक्तो वातवाहिशिराविभाग इत्यर्थः। शेषाणामिति पित्तश्लेष्मरक्तवहानामित्यर्थः। एतेन पित्तादिवाहिनीनामपि शिराणां प्रत्येकं पञ्चसप्तत्यधिकं शतं भवतीत्युक्तम्। उपसंहारमाह—एवमित्यादि॥ ५—७॥

इदानीं वातादिवहशिरासु वातादीनां प्रकृतिभूतानां प्राकृतं कर्म्म विकृतिभूतानां वैकृतञ्च कर्म्म निर्द्दिशन्नाह—क्रियाणामित्यादि। क्रियाणां कायक्रियाणां प्रसारणाकुञ्चनादीनां, वाक्क्रियाणां भाषितादीनाम्। अप्रतीघातम् अप्रतिहननम्। बुद्धिकर्म्मणामिति पञ्चानां बुद्धीन्द्रियाणां मनसो बुद्धेश्च स्वे स्वे विषये प्राकृतायां प्रवृत्तौ मोहस्याभावं करोति। अन्यान् गुणान् तत्र प्रस्प(स्प)न्दनोद्वहनपूरणेत्यादिकान्॥ ८॥

भ्राजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्।
संसर्पत् स्वाः शिराः पित्तं कुर्य्याच्चान्यान् गुणानपि ॥
यदा प्रकुपितं पित्तं सेवते स्ववहाः शिराः।
तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः ॥ ९ ॥
स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम्।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः शिराश्चरन् ॥
यदा तु कुपितः श्लेष्मा स्वाः शिराः प्रतिपद्यते।
तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः ॥ १० ॥
धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्।
स्वाः शिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि ॥
यदा तु कुपितं रक्तं सेवते स्ववहाः शिराः।
तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥ ११ ॥
न हि वातं शिराः काश्चिन्न पित्तं केवलं तथा।
श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः ॥
प्रदुष्टानां हि दोषाणां मूर्च्छितानां प्रधावताम्।
ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः ॥ १२ ॥
तत्रारुणा वातवहाः पूर्य्यन्ते वायुना शिराः।
पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः स्थिराः कफात्।
असृग्वहास्तु रोहिण्यः शिरा नात्युष्णशीतलाः ॥ १३ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि न विध्येद् याः शिरा भिषक्।
वैकल्यं मरणञ्चापि व्यधात् तासां ध्रुवं भवेत् ॥ १४ ॥

भ्राजिष्णुतामित्यादि। भ्राजिष्णुतां दीप्तिमत्त्वं, संसर्पत् गच्छत्। अन्यान् गुणान् पित्तसम्भवान् रागपक्त्योज इत्यादिकान् ॥ ९ ॥

स्नेहमित्यादि। अन्यान् गुणान् सन्धिश्लेषणादिकान्। धातूनामित्यादि। अन्यान् गुणान् "रक्तं वर्णप्रसादं मांसपुष्टिञ्च करोति" इत्याद्युक्तान् ॥ १०। ११ ॥

प्राकृतवातादिवहानामपि शिराणां सर्व्वत्र सर्व्वकार्य्योपलम्भात् सर्व्ववहत्वं दर्शयन्नाह—न हि वातमित्यादि। इदानीं प्रकुपितवातादिवहानामपि शिराणां सर्व्ववहत्वं दर्शयन्नाह—प्रदुष्टानामित्यादि। मूर्च्छितानामिति परस्परं मिश्रितानामित्यर्थः ॥ १२ ॥

शिराविभक्तिं प्रतिपाद्य तद्वर्णविभक्तिं प्रतिपादयन्नाह—तत्रेत्यादि ॥ १३। १४ ॥

शिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्।
षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिश्च मूर्द्धनि॥
शाखासु षोड़श शिराः कोष्ठे द्वात्रिंशदेव तु।
पञ्चाशज्जत्रुणश्चोर्द्धमव्यध्याः परिकीर्त्तिताः॥ १५॥

तत्र शिराशतमेकस्मिन् सक्थ्नि भवति। तासां जालधरा त्वेका, तिस्रश्चाभ्यन्तराः—तत्रोर्व्वीसंज्ञे द्वे, लोहिताक्षसंज्ञा चैका, एतास्त्वव्यध्याः। एतेनेतरसक्थि वाहू च व्याख्यातौ। एवमशस्त्रकृत्याः षोड़श शाखासु॥ १६॥

द्वात्रिंशत् श्रोण्याम्। तासामष्टावशस्त्रकृत्याः—द्वे द्वे विटपयोः, कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे, तासामेकैकामूर्द्ध्वगां परिहरेत्, पार्श्वसन्धिगते च द्वे। चतस्रो विंशतिश्च पृष्ठे पृष्ठवंशमुभयतः। तासामूर्द्धगामिन्यौ द्वे द्वे परिहरेद् बृहतीशिरे। तावत्य एवोदरे, तासां मेढ्रोपरि रोमराजीमुभयतो द्वे द्वे परिहरेत्। चत्वारिंशद् वक्षसि। तासां चतुर्द्दशाशस्त्रकृत्याः—हृदये द्वे, द्वे द्वे स्तनमूले, स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ—एवं द्वात्रिंशदशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति॥ १७—२१॥

तत्र व्यध्याव्यध्यविभागज्ञानाय पूर्व्वोक्तानि सप्तशिराशतानि षड़ङ्गेष्वनूद्य प्रतिज्ञाता अव्यध्याः शिराः प्राह—शिराशतानीत्यादि। शिराशतानि चत्वारीति एकैकशाखागतत्वात्‌ द्विशतानां शिराणां पञ्चविंशत्या चत्वारि शतानि भवन्ति। चतुःषष्टिश्चेति शतमित्यत्रापि योजनीयं, तेन चतुःषष्ट्यधिकं शतं मूर्द्धनि ज्ञातव्यम्॥ १५॥

कास्ताः षोड़श अव्यध्याः? इत्याह—तत्र शिराशतमित्यादि। जालधरा इति जालानीव जालानि मांसशिरास्नाय्वस्थिसन्धिजानि कूर्च्चशिरोव्यापीनि तानि धारयन्ति यास्ता जालधरा इत्यर्थः। कास्तास्तिस्रोऽभ्यन्तरा इत्याह—तत्रोर्व्वीसंज्ञे द्वे इत्यादि। द्वे अपि ते ऊर्व्वीसंज्ञे अतिसान्निध्यात् प्राक् मर्म्मविभागीयशारीरे ऊर्व्वीसंज्ञे कमर्म्मतया निर्द्दिष्टे॥ १६॥

द्वात्रिंशदित्यादि। कटीकतरुणयोश्चेति अत्रापि द्वे द्वे इति सम्बन्धः। पार्श्वसन्धिगते द्वे इति जघनपार्श्वमध्ययोर्ये पार्श्वसन्धिसंज्ञके मर्म्मणी तत्संज्ञां प्राप्ते द्वे। चतस्र इत्यादि पृष्ठगतचतुर्विंशतिसिरासु द्वे द्वे बृहतीसिरे परिहरेदित्यर्थः। तावत्य इति चतुर्विंशतिरित्यर्थः। चत्वारिंशदित्यादि उभयतोऽष्टाविति उभयत्वेत्यर्थः। उभयत इति स्तनमूलादिषु योजनीयम्, तेनोभयत्र स्तनमूले वामदक्षिणाश्रिते द्वे द्वे इति चतस्रः। तथोभयत्र स्तनरोहितापलापापस्तम्भेष्वष्टौ। तत्र स्तनरोहितयोर्द्वे द्वे, अपलापयोरेकैका, अपस्तम्भयोरप्येकैका, एवमष्टावित्यर्थः। उपसंहारमाह—एवमित्यादि। पृष्ठोदरोरःस्वित्यत्र पृष्ठशब्देन श्रोणिपार्श्वानामपि ग्रहणं, तेन श्रोणिगता अष्टौ, पार्श्वगता एकैका, चतस्रः पृष्ठे, चतस्र उदरे, चतुर्द्दश वक्षसि, एवं द्वात्रिंशदव्यध्याः॥ १७—२१॥

चतुःषष्टिशिराशतं जत्रुण ऊर्द्ध्वं भवति। तत्र षट्पञ्चाशच्छिरोधरायाम्; तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत्, द्वे कृकाटिकयोः, द्वे विधुरयोः; एवं ग्रीवायां षोड़शाव्यध्याः। हन्वोरुभयतोऽष्टावष्टौ; तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्॥ २२॥

षट्त्रिंशज्जिह्वायाम्, तासामधः षोड़शाशस्त्रकृत्याः—रसवहे द्वे, वाग्वहे च द्वे, द्विर्द्वादश नासायाम्, तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे॥ २३। २४॥

अष्टत्रिंशदुभयोर्नेत्रयोः। तासामेकैकामपाङ्गयोः परिहरेत्॥ २५॥

कर्णयोर्दश। तासां शब्दवाहिनीमेकैकां परिहरेत्॥ २६॥

नासानेत्रगतास्तु ललाटे षष्टिः। तासां केशान्तानुगताश्चतस्रः। आवर्त्तयोरेकैका स्थपन्याञ्चैका परिहर्त्तव्या॥ २७। २८॥

चतुःषष्टीत्यादि। चतुःषष्टिशिराशतमिति चतुःषष्ट्यधिकं शिराशतमित्यर्थः। तत्र षडित्यादि। तत्रेति चतुःषष्ट्यधिकशिराशतमध्ये। अष्टौ चतस्रश्च मर्म्मसंज्ञा इति तत्राष्टौ मातृकाः, द्वे नीले, द्वे च मन्ये, एता द्वादश मर्म्मसंज्ञा इत्यर्थः। तथा द्वे कृकाटिकयोर्द्वे विधुरयोः। एवं ग्रीवायां षोड़शाव्यध्याः। गयी तु वातादिवहानां चतुर्भिरष्टकैर्द्वात्रिंशद् ग्रीवायाम्। तत्र षोड़श अव्यध्या इति प्रतिपादयति। हन्वोरित्यादि। सन्धिधमन्याविति हनुसन्धिधमन्यावित्यर्थः। हन्वोः षोड़श शिरा ग्रीवाशिरास्वेवान्तर्भवन्तीत्यतो न पृथग् गणनीयाः। गयी तु हनुगताः पृथगेव षोड़श, तत्र द्व सन्धिबन्धनमर्म्मणी परिहरेदित्याह॥ २२॥

षट्त्रिंशदित्यादि। तासामधः षोड़शेति तासां जिह्वागतषट्त्रिंशच्छिराणां मध्ये अधो जिह्वायाः षोड़श शिरा भवन्ति। शेषा विंशतिश्च जिह्वाया ऊर्द्ध्वं भवन्ति। अशस्त्रकृत्या रसवहे वाग्वहे चेति रसवहे द्वे, वाग्वहे च द्वे। गयी तु अष्टाविंशतिर्जिह्वायां, तासां रसवाहिन्यः षट् शस्त्रकृत्या इति ब्रूते। द्विर्द्वादशेति चतुर्विंशतिरित्यर्थः। औपनासिक्यः नासासमीपवर्त्तिन्यः। मृदावुद्देशे इति घोणासमीपे इत्यर्थः। गयी तु षोड़श नासायां, तासु पञ्च अव्यध्या इत्याह। अष्टत्रिंशदिति। गयी तु 'चतुर्विंशतिरुभयोर्नेत्रयोः, तासामेकैकामपाङ्गयोः परिहरेत्' इत्याचष्टे॥ २३—२५॥

कर्णयोरिति। गयी तु 'कर्णयोः षोड़श, तासामेकैकां शब्दवहां परिहरेत्' इति ब्रूते। नासानेत्रेत्यादि। याश्चतुर्विंशतिर्नासागता याश्च षट्त्रिंशन्नेत्रगतास्ता एव षष्टिर्ललाटे विज्ञातव्याः, अतो न पृथग्गणनीयाः। ननु नेत्रगता अष्टत्रिंशत्, तत् कथं त्रिंशन्नेत्रगता इति व्याख्याय षष्टिं पूरयति? सत्यं, यद्यप्यष्टत्रिंशन्नेत्रयोः शिरा उक्तास्तथापि तन्मध्ये द्वयोरपाङ्गाश्रितत्वात् तत्राभावः, अतो नेत्रगता अष्टत्रिंशदपि ललाटे पुनः षट्त्रिंशदेवेति। केशान्तानुगता इति आवर्त्तमर्म्मसमीपकेशान्तानुगता इत्यर्थः। गयी तु ललाटस्थिताभिः शिराभिः सह नासा-

शङ्खयोर्दश, तासां शङ्खसन्धिगतामेकैकां परिहरेत् ॥ २९ ॥

द्वादश मूर्द्धि, तासामुत्क्षेपयोर्द्व परिहरेत्, सीमन्तेष्वेकैकामेकामधिपताविति ॥ ३० ॥

एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्धमिति ॥ ३१ ॥

भवति चात्र।

व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः शिराः।
प्रतानाः पद्मिनीकन्दाद् विसादीनां यथा जलम् ॥ ३२ ॥

इति सुश्रुत-संहितायां शारीरस्थाने शिरावर्णनविभक्तिशारीरं नाम सप्तमोऽध्यायः ॥ ७ ॥

नेत्रगताः शिराः ललाटे षष्टिः, तासु सप्ताव्यध्या इति ब्रूते। शङ्खयोरित्यादि। शङ्खयोर्दश इत्येता अपि नासानेत्रगता बोद्धव्याः, अतो न पृथग्गणनीयाः। गयी तु शङ्खयोरष्टौ पृथगेव पठति, तासु द्वे शङ्खसन्धिगतेऽव्यध्ये इति प्रतिपादयति ॥ २६—२९ ॥

द्वादशमूर्द्धीत्यादि। सीमन्तेषु पञ्चसु एकैकां परिहरेत्, तथा अधिपतावेकां परिहरेत्, एतासामपि नासानेत्रगतत्वात् पृथग्गणना न कर्त्तव्या। गयी तु मूर्द्ध्नि पृथगेव द्वादश पठित्वा तास्वष्टावव्यध्या इत्याह ॥ ३० । ३१ ॥

इदानीं सर्व्वत्र शिरासम्भवत्वेन नियतव्याख्यातसङ्ख्याव्यभिचारोऽस्तीति दर्शयन्नाह—व्याप्नुवन्तीत्यादि। यथा विसादीनां प्रताना विस्तारा पद्मिनीकन्दात् प्रसृता जलं व्याप्नुवन्ति, तथा नाभितः प्रसृताः शिराः सर्व्वतः शरीरं व्याप्नुवन्ति ॥ ३२ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
शिरावर्णनविभक्तिव्याख्यानाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातः शिराव्यधविधिशारीरं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

बालस्थविररूक्ष-क्षत-क्षीणभीरु-परिश्रान्तमद्याध्वस्त्रीकर्षित-वान्तविरिक्ता-स्थापितानुवासितजागरितक्लीवकृशगर्भिणीनां कासश्वासशोषप्रवृद्धज्वराक्षेपक-पक्षाघातोपवासपिपासामूर्च्छाप्रपीड़िताना‍ञ्च शिरां न विध्येत्, याश्चाव्यध्याः, व्यध्याश्चादृष्टाः, दृष्टाश्चायन्त्रिताः, यन्त्रिताश्चानुत्थिता इति ॥ २ ॥

शोणितावसेकसाध्याश्च ये विकाराः प्रागभिहितास्तेषु चापक्वेष्वन्येषु चानुक्तेषु यथाभ्यासं यथान्यायञ्च शिरां विध्येत् ॥ ३ ॥

प्रतिषिद्धानामपि च विषोपसर्गात्ययिकेषु शिराव्यधनमप्रतिषिद्धम् ॥ ४ ॥

शिरावर्णनविभक्त्यनन्तरं ज्ञातव्यध्याव्यध्यशिरस्य शिराव्यधविधिरुच्यते इत्याह—अथात इत्यादि । बालेत्यादि । बालस्थविरयोरसम्पूर्णक्षीणधातुत्वात् सिरां न विध्येत् । क्षत इति उरःक्षतयुक्तः खड्गाद्यभिहतो वा, क्षीणः क्षीणधातुः ; गयी तु क्षतेन क्षीणः क्षतक्षीणस्तस्यानिल-व्याधिभयान्न विध्येदिति व्याख्याति । भीरोश्च तमोबहुलत्वाल्लोहितदर्शनेन मूर्च्छाभयान्न विध्येत् । परिश्रान्तस्य श्रमकुपितो वातः शोणितावसेचनेनातिप्राबल्यं प्राप्य शरीरव्यापादकः स्यात् । मद्यपस्य मदविक्षिप्तचित्तस्यातिमूर्च्छाकरत्वात् । अध्वस्त्रीकर्षितस्य वातप्रकोपभयान्न विध्येत् । वान्त-विरिक्तयोरकृतसंसर्ज्जनयोरशीतस्नेहयोर्वमनविरेकानन्तरमेव वातप्रकोपभयात् शिरां न विध्येत् । आस्थापितजागरितयोर्मरुत्प्रकोपभयान्न विध्येत् । अनुवासितस्य मन्देऽग्नौ भूयोऽग्निमान्द्यभयात्, क्लीवस्य प्रधानधातुक्षयेणाल्पसत्त्वत्वेन च निश्चितविनाशात्, कृशस्य गर्भिणीनाञ्चोपक्षीणधातुत्वाद् देहसन्देहभयात् । कासश्वासशोषिणामपि अपचीयमानधातुत्वेन देहसन्देहभयान्न विध्येत् । प्रवृद्ध-ज्वरस्यासृक्स्रावेण प्रलापादिभयात् शिरां न विध्येत् । याश्चाव्यध्या इति अशेषाव्यध्यप्रसङ्गेनोक्त-मिति न पुनरुक्तम् ॥ १ । २ ॥

शोणितावसेकसाध्या इति 'त्वग्दोषा ग्रन्थयः शोफाः' इत्यादयः शोणितवर्णनीये उक्ताः । तेषु चापक्वेष्विति यद्यपि रक्ताभावात् पक्वानां रक्तस्रुतिर्न क्रियते इत्यर्थादेवापक्वग्रहणं लभ्यते, तथापि बाह्योपक्रमेषु मध्ये शोणितावसेकस्य प्राधान्यख्यापनायापक्वग्रहणं कृतम् । अन्येषु चानुक्तेष्विति ये विपाकाभिमुखाः शोणितावसेकसाध्येषु अनभिहितास्तेष्वित्यर्थः । यथाभ्यासमिति यथासमीपमित्यर्थः । यथान्यायमिति न्यायस्य स्नेहस्वेदादिकस्य अनतिक्रमेण यथान्यायम् ॥ ३ ॥

इदानीं कारणवशान्निषिद्धानामपि शोणितावसेकं दर्शयन्नाह—प्रतिषिद्धानामित्यादि । प्रति-

तत्र स्निग्धस्विन्नमातुरं यथादोषप्रत्यनीकं द्रवप्रायमन्नं भुक्तवन्तं यवागूं पीतवन्तं वा यथाकालमुपस्थाप्यासीनं स्थितं वा प्राणानबाधमानो वस्त्रपट्टचर्म्मान्तर्वल्कललतानामन्यतमेन यन्त्र यित्वा नातिगाढ़ं नातिशिथिलं शरीरप्रदेशमासाद्य यथोक्तं शस्त्रं गृहीत्वा शिरां विध्येत् ॥ ५ ॥

नैवातिशीते नात्युष्णे न प्रवाते न चाभ्रिते।
शिराणां व्यधनं कार्य्यमरोगे वा कदाचन ॥ ६ ॥

तत्र व्यध्यशिरं पुरुषं प्रत्यादित्यमुखमरत्निमात्रोच्छ्रिते उपवेश्यासने सक्थ्नोराकुञ्चितयोर्निवेश्य कूर्परौ सन्धिद्वयस्योपरि हस्तावन्तर्गूढ़ाङ्गुष्ठकृतमुष्टी मन्ययोः स्थापयित्वा यन्त्रणशाटकं ग्रीवामुष्ट्योरुपरि परिक्षिप्यानेन पुरुषेण पश्चात्स्थितेन वामहस्तेनोत्तानेन शाटकान्तद्वयं ग्राहयित्वा ततो वैद्यो ब्रूयाद् दक्षिणहस्तेन शिरोत्थापनार्थं नात्यायतशिथिलं यन्त्रणमावेष्टयेति, असृक्स्रावणार्थं यन्त्रं पृष्ठमध्ये च पीड़येति, कर्म्मपुरुषश्च वायुपूर्णमुखं स्थापयेत्, एष उत्तमाङ्गगतानामन्तर्म्मुखवर्ज्जानां शिराणां व्यधने यन्त्रणविधिः ॥ ७ ॥

पिद्धानामिति बालस्थविरादीनाम्। आत्ययिकेष्विति अत्ययो विनाशो भवत्यस्मादिति आत्ययिकः विद्रध्यादिरनन्यसाध्यः ॥ ४ ॥

सम्प्रति शिराव्यधस्य पूर्व्वकर्म्मविधिं प्रदर्श्य प्रधानकर्म्मविधिं दर्शयन्नाह—तत्रेत्यादि। तत्रेति वाक्योपक्रमे। आतुरमिति अत्र आतुरग्रहणं स्वस्थस्य रक्तं न स्रावयेदिति बोधनार्थम्। द्रवप्रायमिति रक्तोत्क्लेशनार्थं द्रवाधिकमन्नं भुक्तवन्तम्। यवागूं पीतवन्तं वेति सात्म्यापेक्षया। यथाकालमिति वर्षादिषु व्यभ्रादिकालानतिक्रमेण। उपस्थाप्य सन्निधाने स्थापयित्वा। आसीनम् उपविष्टं, स्थितं ऊर्द्ध्वीभूतम्। नातिगाढं नातिशिथिलमिति नातिगाढमुत्तमाङ्गे, नातिशिथिलं शाखासु। शरीरप्रदेशमासाद्येति मर्म्मरहितं शरीरप्रदेशं गृहीत्वेत्यर्थः। यथोक्तं शस्त्रमिति उपयुक्तं शस्त्रमित्यर्थः ॥ ५ ॥

नैवातिशीते इत्यादि। अभ्रिते इति अभ्राणि संजातानि यत्र दिने तदभ्रितं दिनं, तस्मिन्नित्यर्थः ॥ ६ ॥

इदानीमुत्तमाङ्गसक्थिपाणिद्वयपृष्ठोदरवक्षोमेढ्रजिह्वादिषु शिराणां येन प्रकारेणोत्थापनं तं दर्शयन्नाह—तत्र व्यध्यशिरमित्यादि। अरत्निमात्रोच्छ्रिते इति कनिष्ठाङ्गुलिप्रमितहस्तमात्रोच्छ्रिते इत्यर्थः। सन्धिद्वयस्योपरीति जानुसन्धिद्वयस्योपरि कूर्परे निवेश्येत्यर्थः। कर्म्मपुरुषमिति यस्य शिराव्यधनं कर्म्म क्रियते स कर्म्मपुरुषः। अन्तर्म्मुखवर्ज्जानामिति मुखान्तर्गतवर्ज्जितानामित्यर्थः ॥ ७ ॥

तत्र पादव्यध्यशिरस्य पादं समे स्थाने सुस्थिरं स्थापयित्वान्यं पादमीषत्-सङ्कुचितमुच्चैः कृत्वा व्यध्यपादं जानुसन्धेरधः शाटकेनावेष्ट्य हस्ताभ्यां प्रपीड्यागुल्फं व्यध्यप्रदेशस्योपरि चतुरङ्गुलं प्लोतादीनामन्यतमेन बद्धा वा पादशिरां विध्येत् ॥ ८ ॥

अथोपरिष्टाद्धस्तौ गूढाङ्गुष्ठकृतमुष्टी सम्यगासने स्थापयित्वा सुखोपविष्टस्य पूर्व्ववद् यन्त्रं बद्धा हस्तशिरां विध्येत् ॥ ९ ॥

गृध्रसीविश्वाच्योः सङ्कुचितजानुकूर्परस्य श्रोणीपृष्ठस्कन्धेषून्नामितपृष्ठस्या-वाक्शिरस्कस्योपविष्टस्य विस्फूर्ज्जितपृष्ठस्य विध्येत् ॥ १० । ११ ॥

उदरोरसोः प्रसारितोरस्कस्योन्नामितशिरस्कस्य विस्फूर्ज्जितदेहस्य ॥ १२ ॥

बाहुभ्यामवलम्ब्यमानदेहस्य पार्श्वयोः । अवनामितमेढ्रस्य मेढ्रे ॥१३।१४॥

उन्नामितविदष्टजिह्वाग्रस्याधोजिह्वायाम् । अतिव्यात्ताननस्य तालुनि दन्त-मूलेषु च ॥ १५ । १६ ॥

एवं यन्त्रोपायानन्यांश्च शिरोत्थापनहेतून् बुद्ध्यावेक्ष्य शरीरवशेन व्याधि-वशेन च विदध्यात् ॥ १७ ॥

मांसलेष्ववकाशेषु यवमात्रं शस्त्रं निदध्यादतोऽन्येष्वर्द्धयवमात्रं व्रीहिमात्रं वा व्रीहिमुखेन ॥ १८ ॥

तत्र पादव्यध्येत्यादि । प्लोतादीनामिति प्लोतं वस्त्रं, आदिशब्दाद् वल्कलादीनां ग्रहणम् । अथोपरिष्टादित्यादि । पूर्व्ववदिति व्यध्यप्रदेशस्योपरि चतुरङ्गुल इत्यर्थः । गृध्रसीत्यादि गृध्रस्यां सङ्कुचितजानोः विश्वाच्यां सङ्कुचितकूर्परस्य । शिरां विध्येत् इति पूर्व्ववाक्यात् सम्बध्यते । श्रोणीपृष्ठस्कन्धेष्विति शिरामिति पूर्व्वतरवाक्यात् सम्बध्यते । कीदृशस्य पुरुषस्येत्याशङ्क्य विशेषण-त्रयमाह—उन्नामितपृष्ठस्येत्यादि । विस्फूर्ज्जितं आयामितं पृष्ठं येन स तस्य । उदरोरसोः प्रसारितोरस्कस्योन्नामितशिरस्कस्य विस्फूर्ज्जितदेहस्य शिरां विध्येदिति शेषः । विस्फूर्ज्जित-देहस्येति आयामितमध्यशरीरस्येत्यर्थः ॥ ८—१२ ॥

बाहुभ्यामित्यादि । अवनामितमेढ्रस्येति अवनामितं स्तब्धीकृतं मेढ्रं यस्य स तथा, तस्य मेढ्रे शिरां विध्येदिति शेषः । उन्नामितविदष्टजिह्वाग्रस्य अधो जिह्वायाम्, अतिव्यात्ताननस्य तालुनि, दन्तमूलेषु च विध्येदिति शेषः । अनुक्तानामपि यन्त्रणप्रकाराणां बुद्ध्या वीक्षणेन करणीयतां दर्शयन्नाह—एवमित्यादि ॥ १३—१७ ॥

इदानीं प्रदेशविशेषेण शस्त्रप्रणिधानप्रमाणं शस्त्रविशेषञ्च दर्शयन्नाह—मांसलेष्वित्यादि ।

अस्थ्नामुपरि कुठारिकया विध्येदर्द्धयवमात्रकम् ॥ १९ ॥

भवन्ति चात्र।

व्यभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले।
हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयः स्मृताः ॥ २० ॥
सम्यक्शस्त्रनिपातेन धारया या स्रवेदसृक्।
मुहूर्त्तं रुद्धा तिष्ठेच सुविद्धां तां विनिर्द्दिशेत् ॥ २१ ॥
यथा कुसुम्भपुष्पेभ्यः पूर्व्वं स्रवति पीतिका।
तथा शिरासु विद्धासु दुष्टमग्रे प्रवर्त्तते ॥ २२ ॥
मूर्च्छितस्यातिभीतस्य श्रान्तस्य तृषितस्य च।
न वहन्ति शिरा विद्धास्तथानुत्थितयन्त्रिताः ॥ २३ ॥
क्षीणस्य बहुदोषस्य मूर्च्छयाभिहतस्य च।
भूयोऽपराह्णे विस्राव्या सापरेद्युस्त्र्यहेऽपि वा ॥ २४ ॥
रक्तं सशेषदोषन्तु कुर्य्यादपि विचक्षणः।
न चातिस्रुतं कुर्य्याच्छेषं संशमनैर्जयेत् ॥ २५ ॥

मांसलेषु जठरस्फिगादिषु, यवमात्रं यवप्रमाणम्। व्रीहिरत्र प्रधानकल्पनया शूकधान्यं, तत्रापि रक्तशालिरेव ॥ १८। १९ ॥

नित्यगस्य कालस्य शीतोष्णवर्षाभेदेन त्रिविधत्वात् त्रिष्वपि कालेषु विशेषमाह—व्यभ्रे वर्षास्वित्यादि। विगतानि अभ्राणि यस्मिन् दिने तत् व्यभ्रं दिनं तस्मिन् व्यभ्रे दिने वर्षासु वर्षाकाले शिरां विध्येदित्यर्थः। ग्रीष्मकाले तु शीतले इति तृतीयप्रहरानन्तरमित्यर्थः। हेमन्तकाले इति हेमन्तग्रहणं शीतकालोपलक्षणम्। एतच्चात्यन्तिकव्याधिवशेन, न पुनः स्वस्थस्य; तस्य हि शरदादिसाधारण एवैकः काल इति ॥ २० ॥

सुविद्धशिरालक्षणमाह—सम्यगित्यादि। मुहूर्त्तमिति मुहूर्त्तशब्दः स्रवेदसृगित्यत्र सम्बध्यते। इदानीं शिरायां विद्धायां सत्यां पूर्व्वं दुष्टमेव रक्तं प्रवर्त्तते इति दर्शयन्नाह—यथेत्यादि।

शिराणां सम्यग्विद्धानामप्यस्रवणे कारणं दर्शयन्नाह—मूर्च्छितस्येत्यादि। अतिभीतादिषु अतिभयादिजनितवातेन शिरामुखनिरोधात्, अनुत्थितयन्त्रितानां शोणितस्य प्रवृत्तावनभिमुखीभावात् न वहन्तीत्यर्थः ॥ २१—२३ ॥

यद्यपि मदमूर्च्छाश्रमार्त्तानामित्यादिना सूत्रस्थानोदितेनायमर्थं उक्तस्तथापि प्रकरणान्तरत्वान्न पौनरुक्त्यं। क्षीणस्यावश्यस्रावणीये शोणिते क्रमस्रावणं दर्शयन्नाह—क्षीणेत्यादि। मूर्च्छयाभिहतस्येति अक्षीणस्यापीत्यर्थः ॥ २४ ॥

क्षीणसम्बन्धे विस्रावणस्य बहुदोषकरत्वाद्विशेषं कुर्व्वन्नाह—रक्तमित्यादि ॥ २५ ॥

बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः।
परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥ २६ ॥

तत्र पाददाहपादहर्षाववाहुकचिप्पविसर्पवातशोणितवातकण्टकविचर्च्चिका-पाददारीप्रभृतिषु क्षिप्रमर्म्मण उपरिष्टाद् द्व्यङ्गुले व्रीहिमुखेन शिरां विध्येत्, श्लीपदे तच्चिकित्सिते यथा वक्ष्यते ॥ २७। २८ ॥

क्रोष्टुकशिरःखञ्जपङ्गुलवातवेदनासु जङ्घायां गुल्फस्योपरि चतुरङ्गुले। अपच्यामिन्द्रवस्तेरधस्ताद् द्व्यङ्गुले। जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले गृध्रस्याम्। ऊरुमूलसंश्रितानान्तु गलगण्डे। एतेनेतरसक्थि बाहू च व्याख्यातौ ॥ २९-३३ ॥

विशेषतस्तु वामबाहौ कूर्परसन्धेरभ्यन्तरतो बाहुमध्ये प्लीह्नि कनिष्ठिका-नामिकयोर्मध्ये वा ॥ ३४ ॥

एवं दक्षिणबाहौ यकृद्दाल्ये कफोदरे चैतामेव च कासश्वासयो-रप्यादिशन्ति ॥ ३५ ॥

बलिन इत्यादि। प्रस्थं सार्द्धत्रयोदशपलानि। तथा चोक्तं—"वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति ॥ २६ ॥

इदानीं नियतदेहविशेषगतरोगविशेषेषु व्यध्यानां शिराणां देहदेशविशेषं नियमयन्नाह—तत्रे-त्यादि। प्रभृतिग्रहणादन्येऽपि पादरोगा रक्तानुबन्धिदोषजाता गृह्यन्ते। तच्चिकित्सिते यथा वक्ष्यते इति श्लीपदचिकित्सिते येन प्रकारेण वक्ष्यते, तथा श्लीपदे शिरां विध्येदित्यर्थः। क्रोष्टुकशिर इत्यादि। क्रोष्टुकशीर्षादिषु वातवेदनासु जङ्घायां शिरां विध्येत्। तत्रापि प्रदेशविशेषज्ञान-माह—गुल्फस्योपरीत्यादि। अपच्यामिति उत्पन्नमात्रायामित्यर्थः, न तु रूढायां, तस्यां 'पार्ष्णिं प्रति द्वे दश चाङ्गुलानि' इत्यादिना चिकित्सितस्योक्तत्वात्। एतेनेत्यादि। यस्माद्धस्तयोरपि दाहादयो रोगा भवन्त्यतो बाहुग्रहणं कृतम् ॥ २७—३३ ॥

किं सर्व्वत्रैव सक्थिबाह्वोः समानः शिराव्यधः, आहोस्वित् कुत्रचिद् भिन्न इति दर्शयन्नाह—विशेषत इत्यादि। कूर्परसन्धेरित्यत्र सन्धिशब्देन सन्धिसमीप उच्यते, सन्धौ शस्त्रप्रणिधानस्य निषिद्धत्वात्। यकृद्दाल्ये इति। यकृद्दाल्युदरस्य सर्व्वावस्थायामित्यर्थः। एतामेव दक्षिण-बाहुमध्याश्रितामित्यर्थः। कासश्वासयोरिति कफोत्थयोः कफावृतमारुतजन्ययोर्वा। गयी तु कास श्वासयोरल्पयोर्मार्गविशुद्ध्यर्थं, नतूद्रिक्तयोः, तत्र शिराव्यधप्रतिषेधस्य प्रागेव प्रतिपादितत्वादिति व्याख्याति ॥ ३४। ३५ ॥

गृध्रस्यामिव विश्वाच्याम्। श्रोणिं प्रति समन्ताद् द्व्यङ्गुले प्रवाहिकायां शूलिन्याम्। परिवर्त्तिको-*-पदंशशूकदोषशुक्रव्यापत्सु मेढ्रमध्ये॥ ३६—३८॥ (वृषणयोः पार्श्वे मूत्रवृद्ध्याम्। नाभेरधश्चतुरङ्गुले सेवन्या वामपार्श्वे दकोदरे।) वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च। बाहुशोषाववाहुकयोरप्येके वदन्त्यंसयोरन्तरे। त्रिकसन्धिमध्यगतां तृतीयके। अधःस्कन्धसन्धिगतामन्यतरपार्श्वसंस्थितां चतुर्थके। हनुसन्धिमध्यगतामपस्मारे। शङ्खकेशान्तसन्धिगतामुरोऽपाङ्गललाटेषु चोन्मादे। जिह्वारोगेष्वधोजिह्वायां

गृध्रस्यामिव विश्वाच्यां यथा गृध्रस्यां जानुसन्धेरुपर्य्यधो वा चतुरङ्गुले, एवं विश्वाच्यां कूर्परसन्धेरुपर्य्यधो वा चतुरङ्गुले इत्यर्थः। श्रोणिमित्यादि। शूलिन्यामिति कालेनानुबन्धभूतरक्तावृतवातकृतशूलयुक्तायामित्यर्थः। परिवर्त्तिका मर्द्दनात् पीड़नाद् वायुरित्यादिप्रोक्तलिङ्गा॥ ३६—३८॥

वृषणयोरित्यादि मूत्रवृद्ध्यामिति परिपक्वायामित्यर्थः। सेवन्या वामपार्श्वे इति सेवनीप्रदेशाद् वामपार्श्वे इत्यर्थः। वामपार्श्वे इत्यादि। वृद्धवाग्भटे तु 'विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरस्थाम्' इति सामान्येनैव पार्श्वशब्दोपादानं कृतं, तस्मादत्रापि वामपार्श्वग्रहणं दक्षिणपार्श्वोपलक्षणम्। तेन दक्षिणपार्श्वे यदा शूलविद्रधी भवतस्तदा दक्षिणपार्श्वे कक्षास्तनान्तरस्थां शिरां विध्येदित्यर्थः। अस्याग्रे एतामेव कफोदर इति केचित् पठन्ति। स पाठो न समीचीनः। दक्षिणबाहौ यकृद्दाल्ये कफोदरे चेति प्रागेव कफोदरे शिराव्यधस्य प्रतिपादितत्वात्। बाहुशोषेत्यादि। शोणितावृतवातजनितयोर्बाहुशोषाववाहुकयोरप्यंसयोः शिराव्यधः, न तु केवलवातकृतयोरित्येके वदन्ति, परमतं चाप्रतिषिद्धमनुमतमेवेति जेज्झटाचार्य्यः। गयी तु 'बाहुमध्ये बाहुशोषाववाहुकयोरप्येके वदन्त्यंसयोरन्तर इति पठित्वा व्याख्याति—बाहुशोषाऽववाहुकयोः बाहुमध्ये कूर्परांसयोर्मध्ये इत्यर्थः। मतान्तरमाह—एके वदन्ति अंसयोरन्तरे इति। ननु चान्यत्राववाहुकादिति शिराव्यधप्रतिषेधात् कथमत्र शिराव्यधो विहितः? नैवम्। अन्यत्राववाहुकादित्यनेन वातव्याधिचिकित्सितावेक्षणस्य प्रतिषेधः, न तु शिराव्यधस्येति तत्रैव वातव्याधिचिकित्सिते वर्णयिष्यामः। बाहुशोषे च केवलानिलजेऽप्यवस्थावशात् शिराव्यधः। तथा हुरुष्णाम्लुलवणादेर्वातहरस्योपयोगात् कुपितेन शोणितेनावृतो यदा वेदनाकारी तदा शिराव्यध इति। त्रिकेत्यादि। अंसयोरन्तरे इत्यत्रापि सम्बध्यते। तेन अंसयोरन्तरे यस्त्रिकसन्धिः, तत्समीपगतां, न पुनस्त्रिकसन्धिमध्यगतां, त्रिकसन्धेर्मर्म्मत्वात्। अध इत्यादि। स्कन्धसन्धेरधोगतां वामदक्षिणपार्श्वयोरेकतरपार्श्वसंस्थितां शिरां विध्येदिति समुदायार्थः।

हन्वित्यादि। हनुसन्धिमध्यगतां हनुसमीपसन्धिमध्यगतामित्यर्थः। शङ्खेत्यादि। केचिदत्र 'उन्मादेऽपस्मारे च' इति पठन्ति, तत्रापस्मारस्य पाठो न सङ्गच्छते, तथाच वाग्भटः—"उरोऽपाङ्ग

* परिकर्त्तिकेति पाठान्तरम्।

दन्तव्याधिषु च। तालुनि तालव्येषु। कर्णयोरुपरि समन्तात् कर्णशूले तद्रोगेषु च। गन्धाग्रहणे नासारोगेषु च नासाग्रे ॥ ३९—५० ॥

तिमिराक्षिपाकप्रभृतिष्वक्ष्यामयेषूपनासिके ललाटव्यामपाङ्ग्याञ्चता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति ॥ ५१ ॥

अत ऊर्द्ध्वं दुष्टव्यधनमनुव्याख्यास्यामः ॥ ५२ ॥

तत्र दुर्व्विद्धातिविद्धा कुञ्चिता पिच्चिता कुट्टिताऽप्रस्रुताऽत्युदीर्णा अन्तेऽभिहता परिशुष्का कूणिता वेपिता अनुत्थितविद्धा शस्त्रहता तिर्य्यग्विद्धा अपविद्धा अव्यध्या विद्रुता धेनुका पुनःपुनर्व्विद्धा मांसशिरास्नाय्वस्थि-सन्धिमर्म्मसु चेति विंशतिर्दुष्टव्यधाः ॥ ५३ ॥

तत्र या सूक्ष्मशस्त्रविद्धाव्यक्तमसृक् स्रवति रुजाशोफवती च सा दुर्व्विद्धा। प्रमाणातिरिक्तविद्धायामन्तः प्रविशति शोणितं शोणितातिप्रवृत्तिर्वा सातिविद्धा। कुञ्चितायामप्येवम्। कुण्ठशस्त्रप्रमथिता पृथुलीभावमापन्ना पिच्चिता। अनासादिता पुनःपुनरन्तयोश्च बहुशः शस्त्राभिहता कुट्टिता। शीत-भयमूर्च्छाभिरप्रवृत्तशोणिता अप्रस्रुता। तीक्ष्णमहामुखशस्त्रविद्धा अत्युदीर्णा। अल्परक्तस्राविण्यन्तेविद्धा अन्तेऽभिहता। क्षीणशोणितस्यानिलपूर्णा परि-शुष्का। चतुर्भागासादिता किञ्चित्प्रवृत्तशोणिता कूणिता। दुःस्थानबन्धनाद् वेपमानायाः शोणितसम्मोहो भवति सा वेपिता। अनुत्थितविद्धायामप्येवम्।

ललाटस्थामुन्मादेऽपस्मृतौ पुनः। हनुसन्धौ समुद्भूतां शिरां भ्रूमध्यगामिनीम्" इति। जिह्वेत्यादि। जिह्वारोगेषु कण्टकादिषु, दन्तव्याधिषु कृमिदन्तादिषु। तालुनीत्यादि। तालव्येष्विति तालुभवेषु विकारेषु। कर्णयोरित्यादि। अत्रोपरिग्रहणमधोनिवृत्त्यर्थं, विधुरमर्म्माश्रितत्वादधोभागस्य। कर्णशूल इति रक्तावृतानिलजे इत्यर्थः। कर्णरोगद्वारेणैव कर्णशूले प्राप्ते तदुपादानं विशेषार्थम्। तद्रोगेषु कर्णरोगेषु। गन्धेत्यादि। नासारोगद्वारेणैव गन्धाग्रहणे प्राप्ते विशेषार्थमुपादानम्। तिमिरेत्यादि। पाकोऽक्षिपाकः। उपनासिके नासासमीपस्थे शिरे। अपाङ्ग्या भ्रूपुच्छान्तस्था। एता एव शिरोरोगाधिमन्थप्रभृतिषु रोगेष्विति प्रभृतिग्रहणात् क्षुद्ररोगे पठितारुंषिकादेरपि ग्रहणम्। सर्व्वेषु पूर्व्वोक्तेषु रक्तानुबन्धजेषु रक्तजेषु वा शिराव्यधो नान्यादृशेषु ॥ ३९—५१ ॥

अत इत्यादि। दुष्टो व्यधो यासां ता दुष्टव्यधाः। कतिसंख्या इत्याह—विंशतिः। कथं विंशतिरित्याह—दुर्व्विद्धेत्यादि। इदानीं दुष्टव्यधानां विवरणमाह—तत्रेत्यादि। अव्यक्तमिति अल्पतया अस्पष्टम्। अन्तःप्रविशतीति शरीराभ्यन्तरं प्रविशतीत्यर्थः। कुञ्चितायामिति कुटिलीभूतायामित्यर्थः। पृथुलीभावमापन्नेति कुण्ठशस्त्राभिपातेन चिप्पटतया प्रसरं प्राप्ता। अनासादिता अप्राप्ता। चतुर्भागासादितेति चतुर्भागेन प्राप्ता। वेपमानाया इति कम्पमानायाः।

छिन्नातिप्रवृत्तशोणिता क्रियासङ्गकरी शस्त्रहता। तिर्य्यक्प्रणिहितशस्त्रा किञ्चिच्छेषा तिर्य्यग्विद्धा। बहुशः क्षता हीनशस्त्रप्रणिधानेनापविद्धा। अशस्त्रकृत्या अव्यध्या। अनवस्थितविद्धा विद्रुता, प्रदेशस्य बहुशोऽवघट्टनादारोहद्व्यधा मुहुर्म्मुहुःशोणितस्रावा धेनुका। सूक्ष्मशस्त्रव्यधनाद् बहुशो भिन्ना पुनः पुनर्विद्धा। मांसस्नाय्वस्थिशिरासन्धिमर्म्मसु विद्धा वा रुजां शोफं वैकल्यं मरणञ्चापादयति ॥ ५४ ॥

भवन्ति चात्र।

शिरासु शिक्षितो नास्ति चला ह्येताः स्वभावतः।
मत्स्यवत् परिवर्त्तन्ते तस्माद् यत्नेन ताड़येत् ॥
अजानता गृहीते तु शस्त्रे कायनिपातिते।
भवन्ति व्यापदश्चैता बहवश्चाप्युपद्रवाः ॥
स्नेहादिभिः क्रियायोगैर्न तथा लेपनैरपि।
यान्त्याशु व्याधयः शान्तिं यथा सम्यक् शिराव्यधात् ॥
शिराव्यधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः।
यथा प्रणिहितः सम्यग् वस्तिः कायचिकित्सिते ॥ ५५ ॥

तत्र स्निग्धस्विन्नवान्तविरिक्तास्थापितानुवासितशिराविद्धैः परिहर्त्तव्यानि—

शोणितसम्मोहः शोणिताप्रवृत्तिः। छिन्नेति द्विधाभूता। क्रियासङ्गकरीति गमनादिक्रियाविनाशकरी। प्रदेशस्येति सिराव्यधनप्रदेशस्य बहुशो घट्टनादिति बहून् वारान् ताड़नात्। आरोहद्व्यधा उपर्य्युपर्य्यारोपितशस्त्रपदा, अतएव तैः शस्त्रपदैर्धेनुस्तनैरिव स्रवणाद् धेनुका। बहुशो भिन्नेति एकस्थाने एवेति शेषः। आशुव्यापत्सु प्रागेव व्यापत्कारणप्रतिषेधः, जातासु तत्कारणविपरीतगुणाचरणं, तत्कारणजेषु विकारेषु यथास्वं शमनेन प्रशमनमिति ॥ ५२—५४ ॥

इदानीं सिराव्यधने यत्नं दर्शयन्नाह—सिरास्वित्यादि। शिक्षितोऽभ्यासेन निपुणः, सिरासु नास्ति, मत्स्यवच्चलनात्; तस्माद् तद्व्यधे यत्नो विधेय इत्यर्थः। इदानीं शस्त्रकर्म्मानिपुणवैद्यात् व्यापत्सम्भवं दर्शयन्नाह—अजानता इत्यादि। इदानीं स्नेहादिकर्म्मणः सिराव्यधस्य गुणोत्कर्षं प्रतिपादयन्नाह—स्नेहादिभिरित्यादि। अधुना सिराव्यधस्य चिकित्सार्द्धत्वं दर्शयन्नाह—शिरेत्यादि। चिकित्सार्द्धमिति चिकित्सामध्ये प्रधानमित्यर्थः; अपरे अर्द्धशब्दं संख्यावाचकमाहुः। "मांसमेदोऽस्थिमज्जानः शोणितस्यावसेचनात्। धमन्यश्च विशुध्यन्ति दुष्टरक्तास्रवच्च याः। रसस्वेदादिनिष्यन्दाद् विशुध्यन्ति न पुष्कलम्" इति ॥ ५५ ॥

इदानीं स्निग्धादिभिः पुरुषैः क्रोधादीनि सामान्येन परिहर्त्तव्यानीति दर्शयन्नाह—तत्रेत्यादि।

क्रोधायासमैथुन-दिवास्वप्न-वाग्व्यायाम-यानाध्ययनस्थानासनचंक्रमण-शीतवातातपविरुद्धासात्म्याजीर्णान्यावलब्धलाभात्, मासमेके मन्यन्ते। एतेषां विस्तरमुपरिष्टाद् वक्ष्यामः ॥ ५६ ॥

भवतश्चात्र।

शिराविषाणतुम्बैस्तु जलौकाभिः पदैस्तथा।
अवगाढं यथापूर्वं निर्हरेद् दुष्टशोणितम् ॥ ५७ ॥
अवगाढे जलौकाः स्यात् प्रच्छानं पिण्डिते हितम्।
शिराङ्गव्यापके रक्ते श्रृङ्गालाबू त्वचि स्थिते ॥ ५८ ॥

इति सुश्रुत संहितायां शारीरस्थाने शिराव्यधविधिशारीरं नामाष्टमोऽध्यायः ॥ ८ ॥

स्थानमूर्द्ध्वीभवनं, आसनमुपवेशनम्। एतेषां क्रोधायासादीनां पञ्चदशानां, उपरिष्टादातुरोपद्रवचिकित्सिते ॥ ५६ ॥

इदानीं शिराविषाणादीनां रक्तावसेचनोपायानां यथापूर्वं गुरुतां दर्शयन्नाह—शिराविषाणेत्यादि। पदैः प्रच्छानैः, अवगाढमभ्यन्तराश्रयं, यथापूर्वं पूर्वानतिक्रमेण; एतेनोक्तानं पदैः, अवगाढं जलौकोभिः, अवगाढतरं तुम्बैः, अवगाढतमं विषाणेन, सार्व्वाङ्गिकमवगाढतमञ्च सिराभिरिति। तत्र सिराविषाणतुम्बजलौकःप्रच्छानानां विषयं कश्चिदाह—अवगाढ इत्यादि ॥ ५७ । ५८ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
शिराव्यधविधिशारीरव्याख्यानामाष्टमोऽध्यायः ॥ ८ ॥

## मोऽध्यायः ।

### अथातो धमनीव्याकरणं नाम शारीरं व्याख्यास्यामः, यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिराधमनीस्रोतसामविभागः, सिराविकारा एव हि धमन्यः स्रोतांसि चेति। तत् तु न सम्यक्। अन्यथा एव हि धमन्यः स्रोतांसि च शिराभ्यः। कस्मात्? व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च। केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति ॥ २ ॥

सिराव्यधविधिशारीरानन्तरं सिराधमनीस्रोतसां सदृशत्वाद् धमणीव्याकरणारम्भो युज्यत इत्याह—अथेत्यादि। ध्मानादनिलपूरणाद् धमन्यः, तासां व्याकरणं विवरणं यस्मिन् शारी इति विग्रहः ॥ १ ॥

तास्वतीतावेक्षणं निर्दिशन्नाह—चतुर्विंशतिरित्यादि। तत्र धमनीसिरास्रोतःस्वेकीयमतं स्वमतेन हेतुमता निराकर्त्तुमाह—तत्रेत्यादि। अविभागोऽपृथक्त्वं, सरणात् सिराः, सिरा एव ध्मानाद् धमन्यः, स्रवणात् स्रोतांसीति। अपृथक्त्वे स्वयमेव हेतुमाह—सिराविकारा इत्यादि। सिराविकारा इति सिरानामेवाकारान्तरेण परिणामाः, पिष्टविकारक्षीरविकारवद्। पुनरपि तैरुक्तम्—'आकाशीयावकाशानां देहे नामानि देहिनाम्। सिराः स्रोतांसि मार्गाः खं धमन्यो नाड्य आशयाः' इत्यादि। परमतोच्छेदमाह—तत् तु न सम्यगित्यादि। व्यञ्जनान्यत्वात् लक्षणान्यत्वात्; तत्र सिराणां वातादिवहानामरुणनीलशुक्ललोहितवर्णत्वं लक्षणम्, शब्दादिवहधमनीनान्तु वर्णायुक्तः स्वधातुसमवर्णत्वम्, एवं स्रोतसामपि। तदुक्तं चरके—"स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च। स्रोतांसि दीर्घाण्याकृत्या" इत्यादिकम्। मूलसन्नियमो द्वितीयो भेदो यथा—तासां मूलसिराश्चत्वारिंशदित्यारभ्य यावदेवमेतानि सप्त शिराशतानि; धमनीनान्तु चतुर्विंशतिर्धमन्यः; स्रोतसां पुनर्द्वाविंशतिः स्रोतांसि। कर्म्मवैशेष्यं विशिष्टकर्म्मकरत्वम्, तच्च तृतीयभेदकारणं; तद् यथा—कर्म्मणामप्रतीघातमित्यादिनोक्तं सिराणां कर्म्मवैशेष्यम्, शब्दरूपरसगन्धवहत्वादिकं धमनीनाम्, प्राणान्नवारिरसशोणितमांसमेदोवाहित्वं स्रोतसाम्। आगमोऽत्रायुर्व्वेदः, स चतुर्थभेदहेतुः; तद् यथा—'सिरा धमन्यो योगवहानि स्रोतांसि' इति, तथा 'मर्म्मसिरास्नायुधमनीः परिहरन्' इत्यादिषु सिरादीनां यदि विभक्तत्वं नामविष्यत् तदा पृथग् विवरणं नाकरिष्यदिति। इदानीमेतेषां सिराधमनीस्रोतसां परस्परभिन्नानामपि कर्म्मस्वविभाग इव भवतीति दर्शयन्नाह—केवलमित्यादि। सन्निकर्षो नैकट्यम्,

तासान्तु नाभिप्रभवाणां धमनीनामूर्द्ध्वगा दश, दश चाधोगामिन्यः, चतस्रस्तिर्य्यग्गाः ॥ ३ ॥

ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते—तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश। शब्दरूपरसगन्धानष्टाभिर्गृह्णीते, द्वाभ्यां भाषते, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते। द्वे चाश्रुवाहिण्यौ। द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते; ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरूर्द्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च ॥ ४ ॥

भवति चात्र।

ऊर्द्ध्वं गतास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः।
अधोगमास्तु वक्ष्यामि कर्म्म तासां यथायथम् ॥ ५ ॥

अविभाग इव अपृथक्त्वमिव कर्म्मसु भवति, अतिसन्निकर्षादिहेतुचतुष्टयेन कर्म्मस्वपृथक्त्वमिव भवति। कथम्? यथातिसन्निकर्षयुक्तीकृतानां तृणानां प्रत्येकं भिन्नज्वलनक्रियाणामभिन्नमिव ज्वलनं प्रतीयते। सदृशागमत्वादिति आप्तानां वचनमागमः, तस्य सदृशत्वात्। तथाहि—"आकाशीयावकाशानां देहे नामानि देहिनाम्। सिराः स्रोतांसि मार्गाः खं धमन्यः" इत्याप्तोपदिष्टेन सिरादिसादृश्येन न निर्द्धार्य्यं ज्ञायते सिरादिषु कस्येदं तोयादि वहनं कर्म्म। सदृशकर्म्मत्वाच्च यथा—सह गायतां गायकानां भिन्नगीतक्रियाणामप्यभिन्नगीतक्रियात्वप्रतीतिः। सौक्ष्म्याद् यथा—घटस्थितमृत्परमाणूनां प्रत्येकमुदाहरणं कुर्व्वतामेकक्रियाकारित्वप्रतीतिः ॥ २ ॥

तासामित्यादि। प्रश्वासोऽन्तःप्रविशद्वायुः, उच्छ्वास ऊर्द्ध्वमुत्तिष्ठद्वायुः, जृम्भितं स्वप्नप्रकृतधमनीधर्म्मः, क्षुद्धसितकथितानि घोषभाषयोर्विशेषाः, रुदितमश्रुवाहिण्योः कर्म्म, आदिशब्दाद् रूपादिवाहिनीधमनीसम्बन्धिनां प्रेक्षितादिकर्म्मविशेषाणामवरोधः। तास्त्वित्यादि। शब्दादींश्चतुरः प्रत्येकं द्वाभ्यां द्वाभ्यामित्यष्टाभीरजःप्रवर्त्तितात्मप्रयत्नप्रबोधमनोऽनुगताभिर्धमनीभिर्गृह्णीते। मनसश्चाणुत्वादेकत्वाच्च तासां युगपत् प्रवृत्तिर्नास्तीति तासां या धमनी मनसानुयुज्यते तयैव रूपादिष्वन्यतममात्मा गृह्णीते, न पुनर्युगपदेव रूपादिकं सर्व्वं सर्व्वाभिरिति। स्पर्शग्रहणं पुनरत्रैवाध्याये तिर्य्यग्गाणां कर्म्म वक्ष्यति। भाषत इति ताल्वादिस्थानव्यापारनिष्पादिताकारादिवर्णव्यक्तियुक्तं शब्दं करोति, घोषश्च तद्विपरीतोऽव्यक्तः शब्दः। द्वाभ्यां स्वपिति तमोविषयाभ्याम्, सत्त्वविषयाभ्यान्तु बुध्यते। एताभिरूर्द्ध्वं नाभेरुदरादयो धार्य्यन्ते, अङ्गादिभिः सहैताभिरुदरादीनां बन्धनेन दृढीकृतत्वात्; वातादिवहनेन चैताभिरेव याप्यन्ते ॥ ३—५ ॥

अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्र(ति)पन्नास्तत्रस्थमेवान्नपानरसं विपक्कमौष्ण्याद् विवेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्ति, अर्पयन्ति चोर्द्ध्वं गतानां तिर्य्यग्गतानाञ्च, रसस्थानञ्चाभिपूरयन्ति, मूत्रपुरीषस्वेदांश्च विवेचयन्ति, आमपक्काशयान्तरे च त्रिधा जायन्ते, तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वेऽन्नवाहिन्यावन्त्राश्रिते, तोयवहे द्वे, मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे विसर्गाय, ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्। द्वे वर्च्चोनिरसन्यौ स्थूलान्त्रप्रतिवद्धे, अष्टावन्यास्तिर्य्यग्गाणां धमनीनां स्वेदमर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरधो नाभेः पक्काशयकटीमूत्रपुरीषगुदवस्तिमेढ्रसक्थीनि धार्य्यन्ते याप्यन्ते च॥ ६॥

भवति चात्र।

अधोगमास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः।
तिर्य्यग्गाः सम्प्रवक्ष्यामि कर्म्म तासां यथायथम्॥ ७॥

वाताद्यभिवहनमासां सामान्यं कर्म्म। आर्त्तवादीनीत्यादिशब्दादन्नतोयादीनां स्वीकारः। स्थानान्तरगतानां तासामेव कर्म्माह—तास्त्वित्यादि। अभिप्रपन्ना अभिमुखं प्राप्ताः। विपक्कमौष्ण्यादिति अग्नेरिति शेषः। विवेचयन्त्य इति यथा यथा विपक्कमशनरसं तथा तथा पृथक् कुर्व्वन्त्य इत्यर्थः। अभिवहन्त्य इति अभितः सर्व्वतो वहन्त्यः। तर्पयन्ति प्रीणयन्ति। कथं पुनः सकलमेव शरीरं तास्तर्पयन्तीत्याशङ्क्याह—अर्पयन्तीत्यादि। कथमर्पयन्तीत्यत्र युक्तिमाह—रसस्थानञ्चाभिपूरयन्तीति। अयमभिप्रायः आमपक्काशये अधोगाभिरेवमन्नरसो वर्त्तुलीकृतो रसस्थानस्य पूरणं ततश्चोर्द्ध्वगाभिस्तिर्य्यग्गाभिश्च तत्र तत्रोपनीयत इति सकलशरीरतर्पणमधोगतानामेव कर्म्म; रसस्थानञ्च हृदयम्, तत्पूरणञ्च तन्निष्पादित रसपरम्परया न पुनः साक्षादेव, अधोगमत्वेनासां हृदयगमनमेव नास्तीति। तत्र मूत्रपुरीषस्वेदांश्च विवेचयन्ति पृथक् कुर्व्वन्ति, पक्कानुरसादिति शेषः। पित्ताशये कर्म्म तासां निर्द्दिश्य आमपक्काशयान्तरे निर्द्दिशन्नाह—आमपक्काशयान्तर इत्यादि। पचनं पक्वं भावे क्तः तस्याशयः पक्काशयः, एतेनामस्य पच्यमानस्य यदन्तरं तत्रेत्यर्थः। द्वे अन्नवाहिन्यावन्त्राश्रिते। न हि पित्ताशये रसमूत्रपुरीषभावेन विविच्यमानस्याहारस्यान्नभावोऽस्ति, नापि तोयस्य तोयभावना; तेन तोयमत्र भविष्यतो मूत्रस्य कारणभूतं पक्काहाराविवेकजं द्रवमयमुदकमिवोदकं, तदपि द्वे एव वहतः, तदेवोदकं बस्तिविवरप्राप्तं मूत्रमित्युच्यते, तद्वहे द्वे मूत्रवस्तिसम्बद्धे एव; एवमन्नमत्र भविष्यतः किट्टस्य कारणभूतं पक्काहारविवेकजं घनमन्नमिवान्नम्, तदपि द्वे एव वहतः, तदेवोण्डुकप्राप्तं पुरीषमित्युच्यते॥ ६। ७॥

तिर्य्यग्गाणान्तु चतसृणां धमनीनामेकैका शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते, तास्त्वसङ्ख्येयाः। ताभिरिदं शरीरं गवाक्षितं विवद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिवद्धानि; यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्वहिश्च, तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तःशरीरमभिप्रतिपद्यन्ते त्वचि विपक्वानि, तैरेव च स्पर्शं सुखमसुखं वा गृह्णाति। तास्त्वेताश्चतस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः ॥ ८ ॥

भवति चात्र।

यथा स्वभावतः खानि मृणालेषु विसेषु च।
धमनीनां तथा खानि रसो यैरुपचीयते ॥ ९ ॥
पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति।
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥ १० ॥

विभज्यन्ते स्वयमेव विभक्ता भवन्ति। गवाक्षितं जालकैरिव व्याप्तम्। रसञ्चेत्यादि रसं रसधातुं, अन्तरभ्यन्तरे, यैसु खैः सम्यक् परिणताहाररसवाहिभिः, सन्तर्पयन्ति सर्व्वतस्तर्पयन्ति, वहिश्च सन्तर्पयन्ति त्वचमिति शेषः, तैरेव चाभ्यङ्गादीनां वीर्य्याणि त्वचि भ्राजकेनाग्निना विपक्वानि शरीरान्तः प्रविशन्ति। तैरेव मनोऽनुगतैः सुखासुखरूपं स्पर्शं कर्म्मात्मा गृह्णीते। ताः सर्व्वाङ्गगताः स्पर्शग्रहणायाधिकृतत्वात्, तद्गतं मनोऽपि सर्व्वाङ्गस्रोतोगतमेव ; तेनोर्द्ध्वगानां चानियत एव देशो भवति ॥ ८ ॥

यथेत्यादि। खानि स्रोतांसि। रसो यैरुपचीयत इति रसः प्रधानभूतः, तेनान्यदभ्यङ्गपरिषेकादिवीर्य्यम् ॥ ९ ॥

इदानीं शब्दादिग्राहिणीनां सर्गस्थितिप्रलयेषु प्रकृतिभूतानामप्रकृतिभूतानाञ्च क्रियोपदेशमाह—पञ्चाभिभूता इत्यादि। अस्यार्थः—भावयन्ति योजयन्ति, काः ? पञ्चाभिभूताः पञ्चभ्यो भूतेभ्योऽभि समन्ताद् भूताः, शब्दस्पर्शरूपरसगन्धैर्वा पञ्चभिरभिभूता व्याप्ताः, आकाशपवनदहनतोयभूमिभिर्वा पञ्चभिरभिभूता व्याप्ता धमन्यः ; कं ? पञ्चेन्द्रियं कर्म्मपुरुषं, केषु ? पञ्चसु श्रोत्रादिष्विन्द्रियाधिष्ठानेषु, कथं ? पञ्चकृत्वः पञ्चवारान्, भावयन्ति योजयन्ति, आयान्ति आगच्छन्ति, काः ? धमन्यः, किं ? पञ्चत्वम्, किं कृत्वा ? भावयित्वा संयोज्य, किं तत् ? पञ्चेन्द्रियं इन्द्रियपञ्चकं सूक्ष्मरूपं, केषु ? पञ्चस्वाकाशादिषु महाभूतेषु ; एतेनैतदुक्तं भवति—आकाशादिपञ्चभूतसमुदायसमुत्पन्ना धमन्यः कर्म्मपुरुषमिन्द्रियाधिष्ठानेषु पञ्चवारान् भावयन्ति, ततश्चेन्द्रियपञ्चकमाकाशादिषु भूतेषु संयोज्य विनाशकाले धमन्यो विनाशं यान्ति। अन्ये तु 'पञ्चादिभूतान्यथ पञ्चकृत्वा' इति पठन्ति, व्याख्यानयन्ति च— आदिभूतान्याकाशादीनि पञ्चमहाभूतानि पञ्चेन्द्रियं कर्म्मपुरुषं पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु भावयित्वा

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः ॥ ११ ॥

तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि, येष्वधि-

संयोज्य तानि पञ्च आदिभूतानि विनाशकाले पञ्चत्वमायान्ति। अपरे तु पञ्चाभिभूतास्त्वथ पञ्चधा वा इति पठन्ति व्याख्यानयन्ति च—भावयन्ति योजयन्ति, काः? पञ्चाभिभूता धमन्यः, आयान्ति किं? पञ्चत्वं विनाशम्, क? विनाशकाले, किं कृत्वा? भावयित्वा संयोज्य, किं तत्? पञ्चेन्द्रियं बुद्धीन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकञ्च, केषु? शब्दादिषु वचनादिषु च स्वकीयेष्वर्थेषु। अथवा पञ्चानामाकाशपवनदहनतोयभूमीनां पृथगाभिमुख्येन भूताः सत्ता-रूपेण व्यवस्थिता धमन्यः, पञ्चेन्द्रियं कर्म्मपुरुषं, यथास्वं पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु, भावयन्ति योजयन्ति।

गयी त्वन्यथापतनिकां विधाय व्याख्याति, यथा—अत्र रूपादिग्राहिणीनां धमनीनां पञ्चत्वात् पञ्चभिर्धमनीभिः पञ्चानामपि रूपादीनां युगपद्ग्रहणेन भवितव्यमित्याशङ्क्याह—पञ्चाभिभूता इत्यादि। अस्यायमर्थः—पञ्चसु रूपादिषु पञ्चेन्द्रियं चक्षुरादिकं पञ्च धमन्यो भावयन्ति वेदयन्ति, स्वयं तावत् पञ्चेन्द्रियाणि रूपादिकं विदन्ति, ताश्च पञ्च धमन्यस्तेषु वेदयन्ति। कथं? पञ्चकृत्वः पञ्चवारान्। न चैकवारमेव पञ्चापि धमन्यः पञ्चापीन्द्रियाणि पञ्चस्वपि रूपादिषु वेदयन्ति, तत् कुतः पुनरिति हेतुगर्भं विशेषणमाह—अभिभूता अभिमुखं प्राप्ताः। केन? मनसा इति शेषः। कस्मात्? कर्त्तृमनःपुरःसरेन्द्रियार्थग्रहणात्, मन्ता हि शरीरे एक एव, मनोऽप्येकमेव, तेन मनसा यैव धमनी शब्दादिवहासु धमनीस्वभिप्रपन्ना सैव धमनी स्वधर्म्मं ग्राहयति मन्तारं नान्येति, यतो मनःपुरःसरैवेन्द्रियप्रवृत्तिः। इदानीं स्वस्थस्यैव रूपादिग्राहिणीत्वमासां न पुनरतिदोषाभिपन्नस्य मरणेऽपीत्याह—पञ्चत्वमित्यादि। विशिष्टनाश-काले पञ्चत्वं यान्ति, धमन्यः पाञ्चभौतिका विनाशकाले पृथक्पृथग्भूतभावेनावस्थानात् पञ्चतां गता उच्यन्ते। पञ्चेन्द्रियं पञ्चसु भावयित्वेति पुनरप्यनुवादस्तेषां नियतस्वविषयग्राहित्व-दर्शनार्थः। ग्रन्थान्तरे 'रसवहनं कुर्व्वन्ति धमन्यः सततं तथा। शब्दादिग्रहणोच्छ्वास-निश्वास-वचनानि च। भावयन्ति पृथक् पश्चात् प्रत्ययाः खलु पञ्चसु। तत् सङ्कराकरणं यान्ति नाश-काले तु पञ्चताम्। शरीरं हि गते तस्मिन् शून्यागारमचेतनम्। पञ्चतत्त्वावशेषत्वात् पञ्चतां गतमुच्यते' इति ॥ १० ॥

अत ऊर्द्ध्वमित्यादि। मूलस्य स्थूलत्वेन तद्विद्धलक्षणस्यैव साध्यासाध्यपरिच्छेदकत्वात् तद्विद्धलक्षणव्याख्यानमेव प्रतिज्ञातम्। स्वरूपन्तु "स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च। स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च" इति तन्त्रान्तराज् ज्ञेयम्। तान्येव विवृण्वन् आह—तानि त्वित्यादि। प्राणादीनामार्त्तवान्तानामेकादशानां प्रत्येकं वहने द्वे द्वे स्रोतसी। अस्थिमज्जस्वेदवाहिषु स्रोतःसु सत्स्वप्यनधिकारः, कथम्? तत्रास्थिवहानां सकलानामेव मेदो मूलम्। मज्जवहानाञ्च तेषां सकलान्येवास्थीनि सकलशरीरगतानि, न च सकलशरीरगत-

कारः, एकेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः; तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे, तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यः; तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे, तयोर्मूलं तालु क्लोम च; तत्र विद्धस्य पिपासा सद्यो मरणञ्च। रसवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः; तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि च। रक्तवहे द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यः; तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता च। मांसवहे द्वे, तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यः; तत्र विद्धस्य श्वयथुर्मांसशोषः शिराग्रन्थयो मरणं वा। मेदोवहे द्वे, तयोर्मूलं कटी वृक्कौ च; तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च। मूत्रवहे द्वे, तयोर्मूलं वस्तिर्मेढ्रञ्च; तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च। पुरीषवहे द्वे, तयोर्मूलं पक्वाशयो गुदञ्च; तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च; तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे, तयोर्मूलं गर्भाशय आर्त्तववाहिन्यश्च धमन्यः; तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद्रुजाप्रादुर्भावः। वस्तिगुदविद्ध-

विद्धलक्षणं साध्यादिज्ञाननिश्चायकं, एवं स्वेदवहानामपि केवलं मेदो मूलमिति पूर्व्वेणैव समानम्, अतः शल्यतन्त्रे तेषां मूलविद्धलक्षणानधिकारः। अमुमेवार्थं चेतसि कृत्वाह—येष्वधिकार इति। शल्यतन्त्रे इति शेषः, कायचिकित्सायान्तु स्रोतोदुष्टिलक्षणं वाच्यं, तेन सकलाङ्गगतानामपि स्रोतसां कायचिकित्सायामधिकारः। शल्यतन्त्राधिकारिषु नियतदेशस्थितेषु विद्धेषु वेदनाविशेषस्य साध्यादिज्ञाननिश्चायकत्वमिति कायचिकित्साधिकारिणां स्रोतसां कृत्स्नशरीरगतत्वेन सूक्ष्माणामाश्रितस्य वेदनाविशेषस्यातिसूक्ष्मत्वान्न साध्यादिज्ञाननिश्चायकत्वमिति तेषामनधिकारः। परमतमाह—एकेषां बहूनि—एकेषामाचार्य्याणां मते बहूनि स्रोतांसि, तान्यत्रानधिकृतानीति शेषः। एतेषां विशेषा बहवः एतेषां पूर्व्वोक्तानां प्राणादिवहानां स्वतन्त्रे द्वाविंशतिसंख्योपेतानां स्रोतसां विशेषा भेदाः। तत्र प्राणवहे इत्यादि। क्रोशनमार्त्तस्वरै रोदनं, विनमनं विशेषेण नमनम्। त्वक्शब्देन रसोऽत्र, तात्स्थ्यात्। शुक्रवहस्रोतःसन्निहितसेवनीच्छेदनलक्षणमश्मरीचिकित्सिते वक्षिप्रसङ्गेनोक्तमत्रासूचितमपि मूत्रपुरीषस्रोतोमूलवस्तिगुदविद्धलक्षणाति-

अत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः ॥ ११ ॥

तानि तु प्राणान्नोदकरसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि, येष्वधि-

संयोज्य तानि पञ्च आदिभूतानि विनाशकाले पञ्चत्वमायान्ति। अपरे तु पञ्चाभिभूतास्त्वथ पञ्चधा वा इति पठन्ति व्याख्यानयन्ति च—भावयन्ति योजयन्ति, काः? पञ्चाभिभूता धमन्यः, आयान्ति किं? पञ्चत्वं विनाशम्, क्व? विनाशकाले, किं कृत्वा? भावयित्वा संयोज्य, किं तत्? पञ्चेन्द्रियं बुद्धीन्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकञ्च, केषु? शब्दादिषु वचनादिषु च स्वकीयेष्वर्थेषु। अथवा पञ्चानामाकाशपवनदहनतोयभूमीनां पृथगाभिमुख्येन भूताः सत्तारूपेण व्यवस्थिता धमन्यः, पञ्चेन्द्रियं कर्म्मपुरुषं, यथास्वं पञ्चसु चक्षुरादिष्विन्द्रियाधिष्ठानेषु, भावयन्ति योजयन्ति।

गयी त्वन्यथापतनिकां विधाय व्याख्याति, यथा—अत्र रूपादिग्राहिणीनां धमनीनां पञ्चत्वात् पञ्चभिर्धमनीभिः पञ्चानामपि रूपादीनां युगपद्ग्रहणेन भवितव्यमित्याशङ्क्याह—पञ्चाभिभूता इत्यादि। अस्यायमर्थः—पञ्चसु रूपादिषु पञ्चेन्द्रियं चक्षुरादिकं पञ्च धमन्यो भावयन्ति वेदयन्ति, स्वयं तावत् पञ्चेन्द्रियाणि रूपादिकं विदन्ति, ताश्च पञ्च धमन्यस्तेषु वेदयन्ति। कथं? पञ्चकृत्वः पञ्चवारान्। न चैकवारमेव पञ्चापि धमन्यः पञ्चापीन्द्रियाणि पञ्चस्वपि रूपादिषु वेदयन्ति, तत् कुतः पुनरिति हेतुगर्भं विशेषणमाह—अभिभूता अभिमुखं प्राप्ताः। केन? मनसा इति शेषः। कस्मात्? कर्त्तृमनःपुरःसरेन्द्रियार्थग्रहणात्, मन्ता हि शरीरे एक एव, मनोऽप्येकमेव, तेन मनसा यैव धमनी शब्दादिवहासु धमनीस्वभिप्रपन्ना सैव धमनी स्वधर्म्मं ग्राहयति मन्तारं नान्येति, यतो मनःपुरःसरैवेन्द्रियप्रवृत्तिः। इदानीं स्वस्थस्यैव रूपादिग्राहिणीत्वमासां न पुनरतिदोपाभिपन्नस्य मरणेऽपीत्याह—पञ्चत्वमित्यादि। विशिष्टनाशकाले पञ्चत्वं यान्ति, धमन्यः पाञ्चभौतिका विनाशकाले पृथक्पृथग्भूतभावेनावस्थानात् पञ्चतां गता उच्यन्ते। पञ्चेन्द्रियं पञ्चसु भावयित्वेति पुनरप्यनुवादस्तेषां नियतस्वविषयग्राहित्वदर्शनार्थः। ग्रन्थान्तरे 'रसवहनं कुर्व्वन्ति धमन्यः सततं तथा। शब्दादिग्रहणोच्छ्वास-निश्वासवचनानि च॥ भावयन्ति पृथक् पश्चात् प्रत्ययाः खलु पञ्चसु। तत् सङ्कराकरणं यान्ति नाशकाले तु पञ्चताम्। शरीरं हि गते तस्मिन् शून्यागारमचेतनम्। पञ्चतत्त्वावशेषत्वात् पञ्चतां गतमुच्यते' इति ॥ १० ॥

अत ऊर्द्ध्वमित्यादि। मूलस्य स्थूलत्वेन तद्विद्धलक्षणस्यैव साध्यासाध्यपरिच्छेदकत्वात् तद्विद्धलक्षणव्याख्यानमेव प्रतिज्ञातम्। स्वरूपन्तु "स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च। स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च" इति तन्त्रान्तराज् ज्ञेयम्। तान्येव विवृण्वन् आह—तानि त्वित्यादि। प्राणादीनामार्त्तवान्तानामेकादशानां प्रत्येकं वहने द्वे द्वे स्रोतसी। अस्थिमज्जस्वेदवाहिषु स्रोतःसु सत्स्वप्यनधिकारः, कथम्? तत्रास्थिवहानां सकलानामेव मेदो मूलम्। मज्जवहानाञ्च तेषां सकलान्येवास्थीनि सकलशरीरगतानि, न च सकलशरीरगत-

लक्षणं प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपचरेदुद्धतशल्यन्तु क्षतविधानेनोपचरेत् ॥ १२ ॥

भवति चात्र।

मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्।
स्रोतस्तदिति विज्ञेयं शिराधमनिवर्ज्जितम् ॥ १३ ॥

इति सुश्रुत-संहितायां शारीरस्थाने धमनीव्याकरणशारीरं नाम नवमोऽध्यायः ॥ ९ ॥

देशेन सुखप्रतिपत्तये निर्द्दिशन्नाह—वस्तीत्यादि। वस्तिविद्धलक्षणं 'तत्र विद्धस्यानद्धवस्तिता' इत्यादि। गुदविद्धलक्षणञ्च—'तत्र विद्धस्यानाह' इत्यादि। इदानीं चिकित्सासूत्रं निर्द्दिशन्नाह—स्रोतोविद्धमित्यादि। उपचरेदिति 'शल्योद्धरणप्रकारेण' इति शेषः। उद्धृतशल्यमिति अत्रापि प्रत्याख्यायेति योजनीयम् ॥ ११। १२ ॥

मूलादित्यादि। मूलात् खादिति हृदयादिच्छिद्रात्। प्रसृतमभिवहनशीलं, यदन्तरमवकाशः, तत् स्रोतो विज्ञेयम् ॥ १३ ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे धमनीव्याकरणशारीरव्याख्यानाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः।

अथातो गर्भिणीव्याकरणं शारीरं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्ति-मङ्गलदेवताब्राह्मणगुरुपरा च भवेत्, मलिनविकृतहीनगात्राणि न स्पृशेत्, दुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः, शुष्कं पर्य्युषितं कुथितं क्लिन्नञ्चान्नं नोपभुञ्जीत, वहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोध-भयसङ्करांश्च भावानुच्चैर्भाष्यादिकञ्च परिहरेद् यानि च गर्भं व्यापादयन्ति, तैलाभ्यङ्गोत्सादनादीनि निषेवेत, नचायासयेच्छरीरं, पूर्व्वोक्तानि च परि-हरेत्। शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधञ्च विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत्, सामान्य-मेतदा प्रसवात् ॥ २ ॥

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुप-सेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेत्, चतुर्थे दध्ना, पञ्चमे पयसा, षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांस-सहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टम्। षष्ठे श्वदंष्ट्रासिद्धस्य

धमनीव्याकरणे शुक्रार्त्तवस्रोतःसङ्कीर्त्तनाच्छुक्रार्त्तवमूलस्य गर्भस्य व्याकृतस्याश्रयभूता गर्भिणी व्याकर्त्तुं युज्यत इत्याह—अथात इत्यादि। चैत्यं देवताधिष्ठितो वृक्षः, अन्ये बौद्धालय-माहुः। श्मशानं मृतमर्त्त्यदाहस्थानम्। पूर्व्वोक्तानि ऋतुमत्यां निषिद्धानि दिवास्वप्नादीनि। अपाश्रयोपेतं प्रतिवाहकसहितम्, असम्बाधमसङ्कटं, विदध्यात् कुर्य्यात्। हृष्टादिस्वरूपा नित्यं भवेत्। मलिनादि न स्पृशेदिति निषिद्धस्पर्शवर्ज्जनम्, दुर्गन्धदुर्दर्शनादिपरिहारेण निषिद्धगन्धरूप-वर्ज्जनम्, उद्वेजनीयाश्च कथा इत्यनेन निषिद्धश्रुतिवर्ज्जनम्, शुष्कपर्य्युषितेत्यादिना निषिद्धरस-वर्ज्जनम्, वहिर्निष्क्रमणादिपरिहारेण कायक्रियानियमः, क्रोधादिपरिहारेण मनःक्रियानियमः, उच्चैर्भाष्यादिपरिहारेण वाग्विषयनियमः। यानि च गर्भं व्यापादयन्तीति गर्भावक्रान्तावुक्तानि ग्राम्यधर्म्मयानवाहनादीनि। विहारं नियम्याहारं नियमयन्नाह—हृद्यं द्रवमित्यादि। हृद्य-मोजस्यत्वात्, द्रवं जीवनीयत्वात्, मधुरं सकलशरीरधातूनां सात्म्यत्वात्, उपयोजनीयम्। द्रवा-दीनामग्निमान्द्यहेतुत्वात् तत्प्रतीकारायाह—दीपनीयसंस्कृतमिति ॥ १। २॥

विशेषत इति अतिशयेनेत्यर्थः। परमतमाह—विशेषत इत्यादि। स्वमतमाह—चतुर्थे

सर्पिषो मात्रां पाययेद् यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम् एवमाप्याय्यते गर्भः। अष्टमे वदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेत्, अनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदा प्रसवकालात्, एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते। नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ। तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु विल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम् ॥ ३ ॥

जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने।
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ४ ॥

तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद् वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ॥ ५ ॥

प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमा कण्ठात् पाययेत्। ततः कृतोपधाने मृदुनि विस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति ॥ ६ ॥

अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्याद् ब्रूयाच्चनामेका सुभगे प्रवाहस्वेति नचाप्राप्तावी प्रवाहस्व, ततो विमुक्ते गर्भनाड़ीप्रबन्धे सशूलेषु श्रोणि-

इति। पृथक्पर्ण्यादिर्विदारिगन्धादिः। तत्र तस्मिन् प्रसवावसरे, अरिष्टं सूतिकागृहम्। एवम्भूतं विधेयमिति सम्बन्धः ॥ ३ ॥

जाव इत्यादि। सशूले जघने सशूलायां कट्याम्। प्रजायिनी प्रसवमाना। तत्रोपस्थितेत्यादि ॥ ४।५ ॥

अशङ्कनीया यासां लज्जाभयादिकं न करोति गर्भिणी ॥ ६ ॥

अथास्या इत्यादि। विशिखान्तरमपत्यमार्गम्, अनुलोमं लोमानुकूलं, अनुसुखं यथासुखम्। एतां गर्भिणीम्। एका उत्कृष्टा, अन्ये त्वेका चतसृणां स्त्रीणां मध्ये इति व्याख्यानयन्ति। प्रवाहस्वेति निकुन्थनं कुरु; वाहप्रयत्ने इत्यस्य धातोरात्मनेपदिनः प्रयोगः। आवी प्रसववेदना।

वङ्क्षणवस्तिशिरःसु च प्रवाहेथाः शनैः शनैः । ततो गर्भनिर्गमे प्रगाढ़म् । ततो गर्भे योनिमुखं प्रपन्ने गाढ़तरमा विशल्यभावात् ॥ ७ ॥

अकालप्रवाहणाद् वधिरं मूकं व्यस्तहनुमूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति । तत्र प्रतिलोममनुलोमयेत् ॥ ८ । ९ ॥

गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्म्मोकेण पिण्डीतकेन वा । वध्नीयाद् हिरण्यपुष्पीमूलं हस्तपादयोः, धारयेत् सुवर्च्चलां विशल्यां वा ॥ १० ॥

अथ जातस्योल्वमपनीय मुखञ्च सैन्धवसर्पिषा विशोध्य, घृताक्तं मूर्द्धि पिचुं दद्यात् । ततो नाभिनाड़ीमष्टाङ्गुलमायम्य सूत्रेण वद्ध्वा च्छेदयेत्, तत्सूत्रैक-देशञ्च कुमारस्य ग्रीवायां सम्यग् वध्नीयात् ॥ ११ ॥

अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्तचूर्ण-मङ्गुल्यानामिकया लेहयेत् । ततो वलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्व्व-गन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च ॥ १२ ॥

ततो विमुक्ते गर्भनाड़ीप्रबन्ध इति गर्भनाड़ीनां प्रकृष्टो बन्धस्तस्मिन् । स्वस्थानाद् गर्भस्य निःसरणाय गमनं गर्भनिर्गमस्तस्मिन् गर्भनिर्गमे । प्रगाढ़मित्यत्र प्रवाहेथा इति सम्बध्यते । आ विशल्यभावादिति ल्यग्रहणमपरासहितगर्भप्राप्त्यर्थम् । अकालेत्यादि । व्यस्तहनुं विघटितमुख-सन्धिम् । ऊर्द्धाभिघातिनमूर्द्ध्वं जत्रुगतरोगिणम् । उपद्रुतमुपद्रवैर्व्याप्तम् । विकटमयथास्थान-निवेशितावयवम् । तत्रेत्यादि । प्रतिलोमता चानेकप्रकारा मूढ़गर्भनिदानोक्तया दिशा ज्ञातव्या । अनुलोमयेदिति मूढ़गर्भचिकित्सितोक्तप्रकारेणेत्यर्थः । अप्रतिलोमन्तु प्राञ्जलमाकर्षेत् ॥ ७—९ ॥

गर्भसङ्गे त्वित्यादि । हिरण्यपुष्पी कलिकारिका, सुवर्च्चला सूर्य्यभक्ता, विशल्या पाटला ॥ १० ॥

अथेत्यादि । उल्वं जरायुं, विशोध्य अपनीय, मुखञ्च विशोध्य निर्म्मलीकृत्य, तदपि मुख-कण्ठगतजरायुकफापनयनेन । तदुक्तम्—"जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते" इति । ब्रह्मदेवस्तु घृताक्तमिति पदं परित्यज्य पिचुं दद्यादित्यत्र 'बलातैलाक्तमिति शेषः' इति व्याख्याति । ततो नाभिनाड़ीमिति आयस्य आकृष्य, ग्रीवायां सम्यग् बन्धीयात् स्रावपरिहारार्थम् । गयी तु 'गर्भनाड़ीमष्टाङ्गुलमायम्य नातिगाढ़ं नातिशिथिलमग्रे सूत्रेणाबध्य वर्द्धयित्वा कुष्ठतैलेन सिक्त्वा पत्यमाश्वास्य मधुसर्पिर्मिश्रमङ्गुल्यानामिकया कनकचूर्णं लेहयेत्' इति पठति ॥ ११ ॥

अथ कुमारमित्यादि । आश्वास्य योनियन्त्रपीड़नमूर्च्छितम् । अनन्तचूर्णं सुवर्णचूर्णं, तेन मिश्रं मध्वादि लेहयेत् । चूर्णप्रमाणन्तु जातमात्रस्य गुञ्जमात्रम् । सर्व्वगन्धा एलादिकाः । यथाकालं कालानतिक्रमेण । कोष्णेन ईषदुष्णेन । यथादोषं दोषानतिक्रमेण । क्षीरिवृक्ष-कषायेण पित्तघ्नेन, सर्व्वगन्धोदकेन वा वातघ्नेन, विभवानतिक्रमेण, रूप्यहेमतप्तेन वारिणा,

धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्।
चतूरात्रात् त्रिरात्राद् वा स्त्रीणां स्तन्यं प्रवर्त्तते॥ १३॥

तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद् द्वितीये लक्षणासिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत्॥ १४॥

अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिःक्वाथेनोपचरेत्। सशेषदोषान्तु तदहः पिप्पली-पिप्पलीमूल-हस्तिपिप्पली-चित्रक-शृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत्। एवं द्विरात्रं त्रिरात्रं वा कुर्य्यादा दुष्टशोणितात्। विशुद्धे ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत् त्रिरात्रम्। ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद् बलमग्निबलञ्चावेक्ष्य। अनेन विधिनाध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात्, पुनरार्त्तवदर्शनादित्येके॥ १५॥

धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत्। पिप्पल्यादिकषायानुपानं स्नेहनित्या च स्यात् त्रिरात्रं पञ्चरात्रं वा बलवतीमबलां यवागूं

कपित्थपत्रकषायेण वा स्नापयेत्। अत्र केषुचित् पुस्तकेषु तु "मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्" इत्ययं पाठो दृश्यते, परमसौ टीकाकारैर्न व्याख्यातः। वृद्धवाग्भटेन त्वन्यथा प्राशनमभिहितम्, यथा—"ऐन्द्रीब्राह्मीशङ्खपुष्पीवचाकल्कं मधुघृतोपेतं हरेणुमात्रं कुशाभिमन्त्रितं सौवर्णेनाश्वत्थपत्रेण वा मेधायुर्बलजननं प्राशयेद् वा ब्राह्मीवचानन्ताशतावर्य्यन्यतमचूर्णम्" इति॥ १२॥

मधुसर्पिर्मिश्रं सुवर्णचूर्णं कुतो लेहयितव्यमित्याह—धमनीनामित्यादि। अनन्तमिश्रमनन्तस्य सुवर्णस्य गुञ्जाप्रमाणेन मिश्रितम्। मधुसर्पिषश्च मानं वक्ष्यमाणं स्वपाणितलसम्मितं, त्रिकालं पाययेदिति बोद्धव्यम्। तत इत्यादि। ततश्चतुर्थदिवसे प्रातर्मध्याह्नादिलक्षणे मधुसर्पिः प्राशयेत्। तदनन्तरं चतुर्थदिवसस्य तृतीयकालमारभ्य पञ्चमादिदिवसेषु यथेष्टं स्तन्यपानं कारयेत्। कं? बालम्, किं विशिष्टं? प्राङ्निवारितस्तन्यं प्राक् पूर्वं निवारितं स्तन्यं यस्य तम्। वृद्धवाग्भटे च "अनन्तामिश्रे मधुसर्पिषी" इति पाठः। तत्र चानन्ता दूर्वा व्याख्याता॥ १३। १४॥

अथ सूतिकामित्यादि। वातहरौषधानि भद्रदार्व्वादीनि। उपचरेत् पानपरिषेकादिभिरिति शेषः। सशेषदोषामित्यत्र दोषशब्दो रक्तवचनः। विशुद्धे तत इति ततस्तृतीये चतुर्थे वा दिने विशुद्धे शोणिते विदारीगन्धादिक्काथेन सिद्धां स्नेहबहुलां यवागूमग्निबलमवेक्ष्य क्षीरयवागूं वा पाययेत्। अध्यर्द्धमासं त्रीणि पक्षाणि॥ १५॥

धन्वेत्यादि। जाङ्गलदेशजातान्तु सूतिकां बुभुक्षायुतां सात्म्यानुरोधेन घृतस्य तैलस्य वा मात्रामह्नः परिणामिनीं पाययेत्। स्नेहनित्या च स्यात् ... कियन्ति दिनानि घृततैलयो-

पाययेत् त्रिरात्रं पञ्चरात्रं वा। अत ऊर्द्धं स्निग्धेनान्नसंसर्गेणोपचरेत्। प्रायश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत्। क्रोधायासमैथुनादीन् परिहरेत्॥ १६॥

भवतश्चात्र।

मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात्॥
तस्मात् तां देशकालौ च व्याधिसात्म्येन कर्म्मणा।
परीक्ष्योपचरेन्नित्यमेवं नात्ययमाप्नुयात्॥ १७॥

अथापरापतन्त्यानाहाध्मानौ कुरुते, तस्मात् कण्ठमस्याः केशवेष्टितयाङ्गुल्या प्रमृजेत्, कटुकालाबुकृतवेधनसर्षपसर्पनिर्म्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्, लाङ्गलीमूलकल्केन वास्याः पाणिपादतलमालिम्पेत्, मूर्द्ध्नि वास्याः महावृक्षक्षीरमनुषेचयेत्, कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्, शालमूलकल्कं वा पिप्पल्यादिं वा मद्येन, सिद्धार्थककुष्ठ-

अन्यतरमात्रां पाययेदित्याशङ्क्याह—त्रिरात्रमित्यादि। बलवती बलयुक्ता सूतिका। बलहीनायाश्च किं कर्त्तव्यमित्याशङ्क्याह—अबलामित्यादि। यवागूमिति पूर्व्वोक्तौषधसाधितां स्नेहयुक्तामिति शेषः। अत ऊर्द्धमित्यादि। स्नेहपानयवागूपानाभ्यां प्रेरितत्रिरात्रपञ्चरात्रादूर्द्धं स्निग्धेन पेयादिक्रमेण वह्नेर्बलस्य च बृंहणार्थं वातजयार्थञ्चोपचरेत्। अत्रार्थे वृद्धवाग्भटः "अथ सूतिकां बलातैलेनाभ्यज्यात्, बुभुक्षिताञ्च पञ्चकोलचूर्णेन यवान्युपकुञ्चिकाचव्यचित्रकव्योषसैन्धवचूर्णेन वा युक्तामहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत् स्नेहयोरन्यतम्, वातहरौषधकाथं ह्रस्वपञ्चमूलीकाथं वा पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरं वस्त्रेण, तथा न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात्, जीर्णे तु स्नेहे पूर्व्वौषधैरेव सिद्धां विदार्य्यादिगणकाथेन वा क्षीरेण यवागूं सुस्निग्धां द्रवां मात्रया पाययेत्" इति। अपरमपि प्रसूतामधिकृत्य सामान्येन क्रियाविशेषमाह—प्रायशश्चेत्यादि। एनां स्त्रियं परिषिञ्चेत् धारया, गर्भक्षोभकृतरक्तस्रावणार्थं वातजयार्थञ्च। आयासो व्यायामः, मैथुनं पुरुषसेवा, क्रोधादयः पञ्चदश आतुरोपद्रवचिकित्सितोक्ताः॥ १६॥

उक्ताहाराचारव्यतिक्रमेण किं भवतीत्याह—मिथ्याचारादित्यादि। अत्यपतर्पणादिति असाध्यभवने हेतुः। तां प्रसूतां, देशकालौ परीक्ष्य व्याधिसात्म्येन कर्म्मणा नित्यमुपचरेदिति सम्बन्धः। अत्ययो विनाशः। गयी तु 'देशकालौकव्याधिसात्म्येन कर्म्मणा' इति पठित्वा देशादिभिः सह पृथक् सात्म्यशब्दं सम्बध्नाति। ओकसात्म्यमभ्याससात्म्यं, ओकशब्दोऽयं 'उच' समवाय इत्यनेन धातुना व्युत्पादित इति व्याख्याति॥ १७॥

लाङ्गलीमहावृक्षक्षीरमिश्रेण सुरामण्डेन वास्थापयेत्, एतैरेव सिद्धेन सिद्धार्थक-तैलेनोत्तरवस्तिं दद्यात्, स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत् ॥ १८ ॥

प्रजातायाश्च नार्य्या रूक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधः पार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभिवस्त्युदरशूलानि भवन्ति, सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः। समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम्। तत्र ( सर्पिषा सुखोदकेन वा लवणचूर्णेन ) वीरतर्व्वादिसिद्धं जलमुषकादिप्रतीवापं पाययेत्, यवक्षारचूर्णं वा पिप्पल्यादिक्वाथेन, पिप्पल्यादिचूर्णं वा सुरा-मण्डेन, वरुणादिक्वाथं वा पञ्चकोलैलाप्रतीवापं, पृथक्पर्ण्यादिक्वाथं वा भद्रदारु-मरिचसंसृष्टं, पुराणगुडं वा त्रिकटुकचतुर्ज्जातककुस्तुम्बुरुमिश्रं खादेदच्छं वा पिबेदरिष्टमिति ॥ १९ ॥

अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्। पीलुबदरी-निम्बपरूषकशाखाभिश्चैनं वीजयेत्। मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत्। धूपयेच्चैनं रक्षोघ्नैर्धूपैः। रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत्। तिलातसीसर्षपकणांश्चात्र प्रकिरेत्। अधिष्ठाने चाग्निं प्रज्वालयेत्। व्रणितो-पासनीयश्चावेक्षेत ॥ २० ॥

ततो दशमेऽहनि मातापितरौ कृतमङ्गलकौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं नक्षत्रनाम वा ॥ २१ ॥

अथापरेत्यादि। कृतवेधनः कोशातकः। शालमूलकल्कमित्यत्र शालिमूलकल्कमिति केचित् ॥ १८ ॥

प्रजाताया इत्यादि। प्रजातायाः प्रजननशोणितसंजनितशूलं मक्कल्लः, अवरुद्धरक्तपाक-जनितो विद्रधिरपि मक्कल्लः, कार्य्ये कारणोपचारात्। मक्कल्लचिकित्सामाह— तत्रेत्यादि। जलं क्वाथम्। यवक्षारचूर्णं सुखोदकेन मन्दाग्नौ, कफप्रकृतीनां पिप्पल्यादिक्वाथेन, पिप्पल्यादि-चूर्णं वा सुरामण्डेन, एवमन्येऽपि योगा दोषादीनवेक्ष्य योजनीयाः। अच्छं केवलम्। अरिष्टम् अभयारिष्टादिकम् ॥ १९ ॥

अथ बालमित्यादि। अधिष्ठाने सूतिकागारे। व्रणितोपासनीयश्चावेक्षेतेति तेन प्राक्शीर्ष-शयनमजस्रदीपस्रक्दामादि सर्व्वमत्रापि तत्रोक्तं वेदितव्यम्। रक्षोघ्नैर्धूपैरिति वचादिभिः, क्षौमं दुकूलम् ॥ २० ॥

तत इत्यादि। नक्षत्रनामेति नक्षत्रदेवताकृतं नामेत्यर्थः ॥ २१ ॥

ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयस्कामरोगां शीलवतीम् अचपलामलोलुपामकृशामस्थूलां प्रसन्नक्षीरामलम्बौष्ठीमलम्बोर्द्ध्वस्तनीमव्यङ्गाम व्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्म्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामामारोग्यवलवृद्धये बालस्य। तत्रोर्द्ध्वस्तनी करालं कुर्य्यात्। लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत्। ततः प्रशस्तायां तिथौ शिरःस्नातमहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत्।

चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः।
भवन्तु सुभगे नित्यं बालस्य वलवृद्धये॥
पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने।
दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा॥ २२॥

अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद् व्याधिजन्म भवति। अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानात् उत्सुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः। तस्मादेवंविधानां स्तन्यं न पाययेत्॥ २३॥

क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति। अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरस-सुरा-सौवीरक-पिण्याक-लशुन-मत्स्य-कशेरुक-शृङ्गाटक-विस-विदारिकन्द-मधुक-शतावरी-नलिकालाबू-कालशाकप्रभृतीनि विदध्यात्॥ २४॥

तत इत्यादि। यथावर्णमिति ब्राह्मणस्य ब्राह्मणीं, क्षत्रियस्य क्षत्रियामित्यादि। धात्रीमुपेयात् स्तनदायिनीं समीपं गच्छेत्, भिषक् बालग्राहको वेति शेषः। श्यामा हि प्रायशः प्रचुरक्षीरा भवति। उक्तविपर्य्यासेन दोषस्य दिङ्मात्रं दर्शयन्नाह—तत्रेत्यादि। इतिशब्दोऽयमेवम्प्रकारे, तेनान्येऽपि दोषा एवम्प्रकाराः स्वयमप्यूह्य ज्ञातव्याः। अभिमन्त्रणमाह—चत्वार इत्यादि॥ २२॥

नियतधात्र्या अभावे दोषं दर्शयन्नाह—अतोऽन्यथेत्यादि। कुत ईषत्परिस्रुतं स्तन्यं पाययेदित्याशङ्क्य तद्विपर्य्यये दोषं वक्तुमाह—अपरिस्रुत इत्यादि। उत्सुहितस्रोतस इति ऊर्द्ध्वपूरितस्रोतस इत्यर्थः। 'उत्स्तुहितस्रोतसः' इति पाठे तु ऊर्द्ध्वं स्तुहितमुद्गीर्णं स्रोतो यस्येति समासः॥ २३॥

क्रोधशोकेत्यादि। अवात्सल्यमममत्वम्। आदिशब्दाल्लङ्घनव्यायामादयः। अथास्या इत्यादि। नालिका शाकविशेषः, नालिकेर इति क्वचित् पाठः॥ २४॥

अथास्याः स्तन्यमप्सु परीक्षेत; तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात्, तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। नच क्षुधित-शोकार्त्तश्रान्तप्रदुष्टधातु-गर्भिणीज्वरितातिक्षीणातिस्थूलविदग्धभक्ष्यविरुद्धाहार-तर्पितायाः स्तन्यं पाययेन्नाजीर्णौषधञ्च बालं, दोषौषधमलानां तीव्रवेगोत्-पत्तिभयात्॥ २५॥

भवन्ति चात्र।

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति॥ २६॥
मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः।
दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः।
भवन्ति कुशलस्तांश्च भिषक् सम्यग्विभावयेत्॥ २७॥
अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते।
मुहुर्म्मुहुः स्पृशति तं स्पृश्यमाने च रोदिति॥
निमीलिताक्षो मूर्द्धस्थे शिरो रोगे न धारयेत्।
वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति॥
विण्मूत्रसङ्गवैवर्ण्यच्छर्द्द्याध्मानान्त्रकूजनैः।
कोष्ठे दोषान् विजानीयात् सर्व्वत्रस्थांश्च रोदनैः॥ २८॥

तेषु च यथाविहितं मृद्वच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात्, क्षीरान्नादस्यात्मनि धात्र्याश्च; अन्नादस्य कषाया-दीनात्मन्येव न धात्र्याः। तत्र मासादूर्द्ध्वं क्षीरपायाङ्गुलिपर्व्वद्वयग्रहणसम्मिता-मौषधमात्रां विदध्यात्, कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय, कोल-सम्मितामन्नादायेति॥ २९॥

अथास्याः स्तन्यमित्यादि। अवसीदति वेत्यत्रापि निषेधः सम्बन्धनीयः॥ २५—२७॥

व्याधिस्वरूपं प्रतिपादयितुमज्ञानां बालानां रोगज्ञानोपायमाह—अङ्गप्रत्यङ्गेत्यादि॥ २८॥

तेषु च रोगेषु यथाविहितं यद् यदौषधं यत्र यत्र रोगे विहितं तत्तत् तत्र कुर्य्यात्। तदपि मृदु अतीक्ष्णं, अच्छेदनीयं कफमेदसोरच्छेदकारि। मात्रया वक्ष्यमाणया। क्षीरसर्पिषा सह बालस्य क्षीरसर्पिः सात्म्यत्वात्, धात्र्याश्च केवलमेव न क्षीरयुक्तं नापि सर्पिर्युक्तमित्यर्थः। क्षीरान्नादस्य पूर्व्ववत् क्षीरसर्पिषा युक्तं, धात्र्यास्तु केवलमेव। तामेव मात्रां निर्द्दिशन्नाह--तत्र मासादूर्द्ध्व-मित्यादि। अङ्गुलिपर्व्वद्वयग्रहणसम्मितामिति 'क्षीराज्यालोड़ितौषधस्य' इति शेषः। तन्त्रान्तरे चाःयथाभिहितं, यथा—"प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका। अवलेह्या तु कर्त्तव्या मधु-

येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः ।
तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ ॥ ३० ॥
एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे ।
स्तन्यपायाहितं सर्पिरितराभ्यां यथार्थतः ॥ ३१ ॥
न च तृष्णाभयादत्र पाययेत शिशुं स्तनौ ।
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात् ॥ ३२ ॥
मस्तुलुङ्गक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत् ।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः श्रृतम् ।
पानाभ्यञ्जनयोर्योज्यं शीताम्बूद्वेजनं तथा ॥ ३३ ॥
वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ।
मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥ ३४ ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ३५ ॥

क्षीराहाराय सर्पिः पाययेत् सिद्धार्थकवचामांसीपयस्यापामार्गशतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धं, क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धम्, अन्नादाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुविडङ्गद्राक्षाद्विब्राह्मीसिद्धम् । तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति ॥ ३६ । ३७ ॥

क्षीरसिताघृतैः ॥ एकैकां वर्द्धयेत् तावद् यावत् सम्वत्सरो भवेत् । तदूर्द्ध्वं माषवृद्धिः स्याद् यावत् षोडशकाब्दिकः ॥" इति ॥ २९ ॥

प्रकारान्तरेणौषधोपयोगमाह—येषां गदानामित्यादि । ज्वरे विशेषमाह—एकमित्यादि । स्तन्यपायाहितं सर्पिः, 'सात्म्याद्दत्तं' इति वाक्यशेषः । इतराभ्यां क्षीरान्नादान्नादाभ्यां, यथार्थतो यथाप्रयोजनतः, हितं सर्पिरित्यर्थः । न चेत्यादि । अत्रेति ज्वरे, अत्ययादिति विनाशकारकाद् विकाराद् विनेत्यर्थः ॥ ३०—३२ ॥

तालुनि पतिते चिकित्सामाह—मस्तुलुङ्गक्षयादित्यादि । मस्तुलुङ्गो विलीनघृताकारा मस्तकमज्जा । मधुरकैः श्रृतमिति काकोल्यादिभिः पक्वम् । शीताम्बूद्वेजनमिति शीताम्बुचुलकैरासेचनात् त्रासनम् ॥ ३३ ॥

वातेनाध्मापितामित्यादि । पानालेपनयोर्हितमित्यन्तं श्लोकद्वयं निबन्धसंग्रहकारैर्न पठितम् ॥ ३४ । ३५ ॥

सर्पिःसात्म्यत्वाद् बालस्य स्वस्थेऽपि सर्पिरेव भेषजसिद्धं दर्शयन्नाह—क्षीरेत्यादि । पयस्या अर्कपुष्पी ॥ ३६ । ३७ ॥

बालं पुनर्गात्रसुखं गृह्णीयात्; न चैनं तर्ज्जयेत्, सहसा न प्रतिबोधयेत् वित्रासभयात्, सहसा नापहरेदुत्क्षिपेद् वा वातादिविघातभयात्, नोपवेशयेत् कौब्ज्यभयात्, नित्यञ्चैनमनुवर्त्तेत प्रियशतैरजिघांसुः। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमुदग्रसत्त्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृ(ग्र)हच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत्॥ ३८॥

नाशुचौ विसृजेद् बालं नाकाशे विषमे न च।
नोष्ममारुतवर्षेषु रजोधूमोदकेषु च॥
क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा।
दद्यादा स्तन्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया॥ ३९॥

षण्मासञ्चनमन्नं प्राशयेल्लघु हितञ्च। नित्यमवरोधरतश्च स्यात् कृतरक्ष उपसर्गभयात्। प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति॥ ४०॥

अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्द्ध्वं निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्ब्बलो म्लानाङ्गो मत्स्यच्छुछुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तनमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तं, विस्तरेणोत्तरे वक्ष्यामः॥ ४१॥

इदानीं बाले परिजनस्य करणीयं निर्द्दिशन्नाह—बालमित्यादि। अनुवर्त्तेत अनुकूलयेत्। प्रियशतैर्बालक्रीडनकदानादिभिरित्यर्थः। अजिघांसुरिति अहन्तुमिच्छुः सन्, बालग्राहक इति शेषः। उक्तप्रकारानुकूलने फलमाह—एवमित्यादि। पादपलताशून्यागारेत्यत्र केचित् पादपलतानानागारनिम्नस्थानगृहच्छायेति पठन्ति। नाशुचावित्यादि। विषमे निम्नोन्नतप्रदेशे। स्त्रीस्तन्याभावे च क्षीरान्तरं निर्द्दिशन्नाह—क्षीरसात्म्यतयेत्यादि। आस्तन्यपर्य्याप्तेरिति यावत् स्तन्यस्य पुनः पर्य्याप्तिः परि समन्ततोभावेन प्राप्तिर्भवति, अथवा यावत् स्तन्यपानस्य योग्यता तावदित्यर्थः। अन्नदानकालमाह—षण्मासमित्यादि। गयी तु षण्मासादिति पठित्वा षण्मासादूर्द्ध्वमिति व्याख्याति। नित्यमवरोधरत इति सततं परिजनावृतोऽन्तःपुरस्थो वा कृतरक्षणक्रियो भवेत्। कुतः कारणादित्याह—उपसर्गभयात्। अस्यैवार्थस्य प्रयत्नकरणीयतां दर्शयन्नाह—प्रयत्नतश्चेत्यादि। रक्ष्या इति रक्षणीया इत्यर्थः॥ ३८—४०॥

किं पुनर्ग्रहोपसर्गलक्षणं तदाह—अथ कुमार इत्यादि। तस्य कुमारस्य पुरुषार्थसाधनहेतु-

शक्तिमन्तञ्चैनं ज्ञात्वा यथावर्णं विद्यां ग्राहयेत्। अथास्मै पञ्चविंशति-वर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति ॥ ४२ ॥

ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेज्जीवेद् वा दुर्ब्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ ४३ ॥

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्व्वीत। पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति ॥ ४४ ॥

तत्र पूर्व्वोक्तैः कारणैः पतिष्यति गर्भे गर्भाशयकटीवङ्क्षणवस्तिशूलानि रक्त-दर्शनञ्च। तत्र शीतैः परिषेकावगाहप्रदेहादिभिरुपचरेज्जीवनीयशृतक्षीरपानैश्च। गर्भस्फुरणे मुहुर्म्मुहुस्तत्सन्धारणार्थं क्षीरमुत्पलादिसिद्धं पाययेत् ॥ ४५ ॥

प्रस्रंसमाने सदाहपार्श्वं पृष्ठ-शूलासृग्दरानाह-मूत्रसङ्गाः, स्थानात् स्थानञ्चोपक्रामति गर्भे कोष्ठे संरम्भः; तत्र स्निग्धशीताः क्रियाः ॥ ४६ ॥

भूतां क्रियां निर्द्दिशन्नाह—शक्तिमन्तञ्चेत्यादि। शक्तिमन्तं विद्यार्ज्जनक्लेशक्षमम्। यथावर्ण-मिति ब्राह्मणस्त्रयीं, राजन्यो दण्डनीतिं, वैश्यो वार्त्तामिति। विद्याग्रहणवत् परमपि कुमारस्य दृष्टादृष्टकारणसाधनभूतं निर्द्दिशन्नाह—अथास्मै इत्यादि। आवहेत् विदध्यात्। किमर्थमित्याह—पित्र्येत्यादि। पितृहितं कर्म्म पित्र्यं श्राद्धदानादि, धर्म्मः श्रुतिस्मृतिविहितं यज्ञाद्यनुष्ठानम्, अर्थः सुवर्णादिः, कामः स्वेषु विषयेष्विन्द्रियाणामानुकूल्यतः प्रवृत्तिः, प्रजाः पुत्रपौत्रादयः ॥ ४१। ४२ ॥

अप्राप्तपञ्चविंशतेरूनषोड़शवर्षया सह संयोगे दोषं दर्शयन्नाह—ऊनषोड़शवर्षायामित्यादि। अतिवृद्धादिष्वपि गर्भाधाननिषेधमाह—अतिवृद्धायामित्यादि। पुरुषस्याप्येवंविधस्य गर्भाधाने ऽनधिकार इति शेषः। कुतो गर्भाधाननिषेध इत्याह—त एवेत्यादि। एतेन कुक्षिस्थः स विपद्यत इत्यादिवाक्योक्ताः ॥ ४३। ४४ ॥

इदानीं गर्भस्रावलक्षणानि सहेतुकानि सप्रतिकाराण्याह—तत्रेत्यादि। पूर्व्वोक्तैरिति मूढ़-गर्भनिदानोक्तैर्ग्राम्यधर्म्मयानवाहनादिभिः। गर्भाशयादिशूलानि गर्भपातनिमित्तानिलजनितानि रक्तदर्शनञ्चामगर्भान्वयं कृच्छ्रसाध्यम्। गयी तु गर्भस्य स्रंसनेनार्त्तववहस्रोतोमुखविवृतेरार्त्तव-क्षरणाद् रक्तदर्शनमित्याह। चिकित्सामाह—तत्रेत्यादि। जीवनीयानि काकोल्यादीनि। पृथक् पृथगवस्थाश्रितं चिकित्सितमाह—गर्भेत्यादि। उत्पलरक्तोत्पलेत्यादि। प्रस्रंसमाने पतनाय किञ्चिच्चलति सदाहपार्श्वशूलादयो मूत्रसङ्गान्ता भवन्ति। कोष्ठे संरम्भ आमपच्यमानपक्का-शयादौ क्षोभः। स्थानञ्चेति चकारेण पूर्व्वोक्ताः शूलादयोऽपि। तेषु चिकित्सामाह—तत्रेत्यादि। स्निग्धशीताः सात्म्यतो न सर्व्वेषु ॥ ४५। ४६ ॥

वेदनायां महासहाक्षुद्रसहामधुकश्वदंष्ट्राकण्टकारिकासिद्धं पयः शर्कराक्षौद्रमिश्रं पाययेत्; मूत्रसङ्गे दर्भादिसिद्धम्; आनाहे हिङ्गुसौवर्च्चललशुनवचासिद्धम्। अत्यर्थं स्रवति रक्ते कोष्ठागारिकागारमृत्पिण्डसमङ्गाधातकीकुसुमनवमालिकागैरिकसर्ज्जरसरसाञ्जनचूर्णं मधुनावलिह्याद् यथालाभम्। न्यग्रोधादित्वक्प्रवालकल्कं वा पयसा पाययेदुत्पलादिकल्कं वा कशेरुशृङ्गाटकशालूककल्कं वा शृतेन पयसोडुम्बरफलौदककन्दक्वाथेन वा शर्करामधुमधुरेण शालिपिष्टम्। न्यग्रोधादिस्वरसपरिपीतं वा वस्त्रावयवं योन्यां धारयेत् ॥ ४७॥

अथादृष्टशोणितवेदनायां मधुकदेवदारुमञ्जिष्ठापयस्यासिद्धं पयः पाययेत्, तदेवाश्मन्तकशतावरीपयस्यासिद्धं विदारिगन्धादिसिद्धं वा, बृहतीद्वयोत्पलशतावरीसारिवापयस्यामधुकसिद्धं वा, एवं क्षिप्रमुपक्रान्ताया उपावर्त्तन्ते रुजो गर्भश्चाप्यायते ॥ ४८ ॥

व्यवस्थिते च गर्भे गव्येनोडुम्बरशलाटुसिद्धेन पयसा भोजयेत्। अतीते लवणस्नेहवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत यावन्तो मासा गर्भस्य तावन्त्यहानि। वस्त्युदरशूलेषु पुराणगुडं दीपनीयसंयुक्तं पाययेदरिष्टं वा ॥ ४९ ॥

पार्श्वशूलादिषु चतुर्थं क्रियाविशेषं निर्दिशन्नाह—वेदनायामित्यादि। दर्भादिभिः सिद्धं तृणपञ्चमूलसिद्धम्। आनाहे लशुनसिद्धं पयो हिङ्गुसौवर्चलप्रक्षेपम्। अत्यर्थं स्रवति रक्ते असृग्दर इत्यर्थः। कोष्ठवदागारं कोष्ठागारं तेन चरतीति कोष्ठागारिका गृहकारिका कीटविशेषः, तद्गृहमृत्तिका। औदकाः कन्दाः कसेरुशालूकनदीमाषकादयः ॥ ४७ ॥

दृष्टशोणितायां रुजि चिकित्सां निर्दिश्यादृष्टशोणितायां चिकित्सां निर्दिशन्नाह—अथादृष्टशोणितेत्यादि। पयस्या अर्कपुष्पी। सिद्धं पयः पाययेत् इति सम्बन्धः। अश्मन्तकः कर्बुदाराकारः। उपावर्त्तन्ते उपशमं यान्ति। गर्भश्चाप्यायते रक्तस्रुतिकर्शितः। 'एवं क्षिप्रमुपक्रान्ते नीरुजाया उपावर्त्तते गर्भ आप्यायते च' इति क्वचित् पाठः। तन्त्रान्तरे चोपविष्टकाख्योऽयं गर्भः कथितः। तथा च चरके—'यस्याः पुनरुष्णतीक्ष्णोपयोगाद् गर्भिण्या महति जातसारे गर्भे पुष्पदर्शनमन्यो वा योनिस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात्, स कालान्तरमवतिष्ठते ऽस्पन्दश्च भवति, तमुपविष्टकमित्याचक्षते' इति ॥ ४८ ॥

व्यवस्थिते चेत्यादि। उदुम्बरशलाटुसिद्धेनेति उदुम्बरस्य कोमलैः फलैः पक्वेन क्षीरेण। क्षीरपाकस्तु तन्त्रान्तराभिहितो यथा—"द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः" इति। अतीते इत्यादि। अतीते पतिते इत्यर्थः। उद्दालक आरण्यकोद्रवः, एतच्च यवागूदानं लङ्घनपूर्व्वम्। तथा च वाग्भटः—"आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम्। उपवासो घनोशीरं गुडूच्यब्दलघुधान्यकाः। कथिताः सलिले पानं तृणधान्यादिभोजनम्" इति। वस्त्युदरशूलेष्वित्यादि। दीपनीयसंयुक्तं पञ्चकोलचूर्णसंयुक्तम्, अरिष्टमभयारिष्टादिकम् ॥४९॥

वातोपद्रवगृहीतत्वात् स्रोतसां लीयते गर्भः; सोऽतिकालमवतिष्ठमानो व्यापद्यते, तां मृदुना स्नेहादिक्रमेणोपचरेत्। उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत्। माषतिलबिल्वशलाटुसिद्धान् वा कुल्माषान् भक्षयेत्, मधु माध्वीकञ्चानुपिबेत् सप्तरात्रम्। कालातीतस्थायिनि गर्भे विशेषतः सधान्यमुदूखलं मुषलेनाभिहन्याद् विषमे वा यानासने सेवेत ॥ ५० ॥

वाताभिपन्न एव शुष्यति गर्भः। स मातुः कुक्षिं न पूरयति मन्दं स्पन्दते च, तं बृंहणीयैः पयोभिर्मांसरसैश्चोपचरेत्। शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरम्। तत् कदाचिद यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते। तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः; तत्रापि लीनवत् प्रतीकारः ॥ ५१।५२ ॥

उत्करकस्तुतिनिमित्तोपविष्टकप्रसङ्गेनापरां चिरकालस्थायिनीं गर्भविकृतिं दर्शयन्नाह—वातेत्यादि। लीयते श्लिष्यति, कुत इत्याह—स्रोतसां गर्भनिर्गममार्गाणां वातोपद्रवेण सङ्कोचादिना गृहीतत्वात्। व्यापद्यते विनश्यतीत्यर्थः। मृदुना अतीक्ष्णेन, तीक्ष्णस्य गर्भोपघातकत्वात्। स्नेहादिनेत्यत्रादिशब्दो न व्यवस्थावाची, तीक्ष्णस्वेदस्य वमनविरेचनयोश्च गर्भोपघातकत्वात्; अत आदिशब्दः प्रधानवाची, तेन स्नेहप्रधानानुक्रमेणेत्यर्थः। अन्ये पुनर्मृदुनेति अच्छपानवर्ज्जितावचारणास्नेहेनेति मन्यन्ते। तामेवावचारणां निर्दिशन्नाह—उत्क्रोशरससंसिद्धामित्यादि। उत्क्रोशः कुररभेदः, अनल्पस्नेहां प्रभूतस्नेहां, अन्ये पुनरल्पस्नेहामिति पठन्ति तदसम्यक्, यवाग्वाः पवनावजयार्थमुपयुज्यमानत्वात् परतन्त्रदर्शनाच्च। तदुक्तं चरके—'यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते तां श्येनमत्स्यगवयशिखिताम्रचूडतित्तिरीणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा भोजयेत्' इति। बिल्वशलाटुसिद्धानिति बिल्वस्य कोमलफलैः सिद्धान्। एवं स्रोतसामवरोधहेतोर्वातस्योपशमविधिमुक्त्वा वातोपशममृदुभूतानां स्रोतसां विकाशार्थं विधिं दर्शयन्नाह—कालातीत इत्यादि। लीन एवायं विधिः ॥ ५० ॥

वाताभिपन्न इत्यादि। वाताभिपन्नो गर्भः शुष्यति, न तु पुनर्लीनवन्मार्गावरोधात् तिष्ठति। गर्भशोषलक्षणं पुनः कुक्षेरपूरणं, वातशोषणेनैव विहतौजस्त्वाद् गर्भो मन्दमेव चलति। बृंहणीयैः पयोभिरिति बृंहणीयसंस्कृतैः क्षीररित्यर्थः। मांसरसैश्चेति चकाराल्लीनप्रतिकारसमुच्चयः। वृद्धकाश्यपेन शुष्कलक्षणमभिहितं यथा—"गर्भनाड्यास्त्ववहनादल्पत्वाद् वा रसस्य च। चिरेणाप्यायते गर्भस्तथैवाकालभोजनात्। अकुक्षिपूरणं गर्भस्पन्दनं मन्दमेव च" इति। अपरमपि वाताभिपन्नं गर्भं दर्शयन्नाह—शुक्रेत्यादि। शुक्रशोणितमिति वचनादसञ्जाताङ्गप्रत्यङ्गमेव, वायुनाभिप्रपन्नं वायुनोपरुद्धम्, अवक्रान्तजीवं जीवनोपगतम्, अतएवाकुथितमवतिष्ठते। शुक्रार्तवावरोधको वायुरेवोदरमाध्मापयति, तदाध्मानं कदाचिद् यदृच्छया अनियतहेतुना उपशान्तं लीनभूतं दृष्ट्वा नैगमेषेण बालग्रहेणापहृतमिति वदन्ति। वाताभिपन्नमेव गर्भावस्थाविशेषं दर्शय-

अत ऊर्ध्वं मासानुमासिकं वक्ष्यामः।

मधुकं शाकबीजञ्च पयस्या सुरदारु च।
अश्मन्तकस्तिलाः कृष्णास्ताम्रवल्ली शतावरी॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा।
अनन्ता सारिवा रास्ना पद्मा मधुकमेव च॥
बृहत्यौ काश्मरी चापि क्षीरिशुङ्गास्त्वचो घृतम्।
पृश्निपर्णी बला शिग्रु श्वदंष्ट्रा मधुपर्णिका।
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता॥
वत्सैते सप्त योगाः स्युरर्द्धश्लोकसमापनाः।
यथासंख्यं प्रयोक्तव्या गर्भस्रावे पयोयुताः॥ ५३॥
कपित्थबृहतीविल्व-पटोलेक्षुनिदिग्धिकाः।
मूलानि क्षीरसिद्धानि पाययेद् भिषगष्टमे॥ ५४॥
नवमे मधुकानन्ता-पयस्यासारिवाः पिबेत्।
क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद् दशमे हितम्॥
सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च।
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति॥ ५५—५७॥

आह—तमेवेत्यादि। तमेव वाताभिपन्नमेव, पुनःपुनः प्रविलीयमानमल्पीभवन्तं नागोदरमिति ब्रुवन्ति। तत्रेति नागोदरे। अपिशब्दान्नैगमेयेण हृतेऽपि लीनोक्तप्रतीकारः॥ ५१।५२॥

शाको महावृक्षः कर्कशपत्रः, तस्य बीजम्। पयस्या अर्कपुष्पी, गयी तु पयस्यां क्षीरविदारीं क्षीरकाकोलीं वा ब्रुते। अश्मन्तकः कोविदारसदृशोऽम्लपत्रः अम्ललोटक इति लोके। ताम्रवल्ली रामतरुणी, मञ्जिष्ठामपरे। लता प्रियङ्गुः। अनन्ता उत्पलसारिवा, पद्मा पद्मचारिणी, भार्गीमपरे। बृहत्यौ स्थूलफला चणकबृहती च। क्षीरिशुङ्गाः क्षीरिवृक्षाणां वटादीनामविकसिताः प्रवालाः। मधुपर्णी मधुयष्टिका। यथासङ्ख्यमिति प्रथममासमारभ्य सप्तमासान् यावदनुक्रमेणेत्यर्थः। पयोयुता इति चूर्णादिप्रयोगे एते योगाः पयसा युताः प्रयोज्या इत्यर्थः॥ ५३॥

कपित्थेत्यादि। कपित्थादीनां मूलानि क्षीरसिद्धान्यष्टमे मासि, नवमे मधुकादयः सारिवान्ताः क्षीरसिद्धाः पिबेत्। पयस्या क्षीरविदारी। दशमे मासि शुण्ठीपयस्याभ्यां क्षीरपाककल्पनया सिद्धं क्षीरं हितं भवेत्. अथवा सक्षीरा शुण्ठ्यादयः प्रशस्यन्ते, वाग्भटेऽप्येतैः सिद्धं क्षीरं प्रतिपादितम्। तथाच—"कपित्थबिल्वबृहती पटोलेक्षुनिदिग्धिजैः। मूलैः श्रुतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे। नवमे सारिवानन्ता-पयस्यामधुयष्टिभिः। योजयेद् दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुक-नागरामरदारुभिः" इति। गयदासेन चैते गर्भस्रावचिकित्सितयोगाः प्रागेव गर्भश्चाप्यायत इत्यनन्तरं पठिताः॥ ५४—५७॥

निवृत्तप्रसवायास्तु पुनः षड्भ्यो वर्षेभ्य ऊर्द्ध्वं प्रसवमानाया नार्य्याः कुमारोऽल्पायुर्भवति॥ ५८॥

अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेत्, मधुराम्लेनान्नोपहितेनानुलोमयेच्च, संशमनीयञ्च मृदु विदध्यादन्नपानयोः, अश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च, गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः॥ ५९॥

भवन्ति चात्र।

सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा।
मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम्॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा।
हेमचूर्णानि कैटर्य्यः श्वेता दूर्व्वा घृतं मधु॥
चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि।
कुमाराणां वपुर्मेधाबलबुद्धिविवर्द्धनाः॥ ६०॥

इति सुश्रुत-संहितायां शारीरस्थाने गर्भिणीव्याकरणशारीरं नाम दशमोऽध्यायः॥ १०॥

शारीरस्थानं समाप्तम्।

---

इदानीं पूर्व्वगर्भजन्मनो या उत्तरगर्भजननावधिस्तामतिक्रम्य गर्भग्राहिण्या दोषं दर्शयन्नाह—निवृत्तेत्यादि। एतेन षड्भ्यो वर्षेभ्य ऊर्द्ध्वं निवृत्तप्रसवेत्युच्यते। षट्सु षडवयवेषु पञ्चचतुस्त्रिद्विवर्षेषु गर्भानुजननस्य जन्मकाल इति; कुतः पुनरस्याः कुमारोऽल्पायुर्भवति? उच्यते, गर्भाशययोन्यादिदोषेण हि निवर्त्तते प्रसवः; तत्र तच्छोधनक्रियामन्तरेणाहारविहारादिगुणमात्रेण यदृच्छयोपगृहीताया योनिगर्भाशयादिष्वस्फुटितदोषेषु जातोऽल्पायुरेवेति॥ ५८॥

गर्भव्याघातकत्वेन निषिद्धाया वमनादिक्रियायाः क्वचिदत्ययकारिणि व्याधौ मृदुना द्रव्येण प्रतिप्रसवं निर्द्दिशन्नाह—अथ गर्भिणीमित्यादि। अत्यये विनाशहेतौ। अनुलोमयेच्चेति मधुराम्लेनान्नोपहितेनेति सम्बन्धः। आहारं नियमयन्नाह—अश्नीयाच्चेत्यादि। विहारमप्यस्य नियमयन्नाह—गर्भाविरुद्धा इत्यादि। यथायोगमहीनातिमिथ्यायोगेनेत्यर्थः॥ ५९॥

इदानीं योगान्तरैः सह कुमारस्य सुवर्णचूर्णं निर्द्दिशन्नाह—सौवर्णमित्यादि। मत्स्याक्षको ब्राह्मी, पत्तूर इत्येके, अन्ये रक्तपुष्पमानूपं मत्स्याक्षक इति लोके प्रसिद्धमाहुः। अर्कपुष्पी पयस्या अर्कसदृशपत्रपुष्पा लतैव, श्वेतदूर्व्वाविशेषं केचिदाहुः, वृक्षजातिमन्ये। कैटर्य्यः पर्व्वतनिम्बः।

संवत्सरं यावदेते योगाः प्रयोज्याः ; अन्ये द्वादशवर्षाण्याहुः। मात्रा उक्तैव। गयी प्राक्तनमात्राप्रतिपादकं वाक्यमपठित्वा मात्राज्ञानार्थं विश्वामित्रोक्तं वाक्यमभिदधति, यथा—"विडङ्गफलमात्रन्तु जातमात्रस्य भेषजम्। एतेनैव प्रमाणेन मासि मासि प्रवर्द्धितम्। कोलास्थिमात्रं क्षीरादे दद्याद् भैषज्यकोविदः। क्षीरान्नादे कोलमात्रमन्नादे डुम्बुरोपमम्" इति ॥ ६० ॥

इति सौश्रुते शारीरस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे गर्भिणीव्याकरणशारीरव्याख्यानाम दशमोऽध्यायः ॥ १० ॥

---

शारीरस्थानं समाप्तम्।

---

# सुश्रुत-संहिता।

## चिकित्सितस्थानम्।

### प्रथमोऽध्यायः।

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

द्वौ व्रणौ भवतः—शारीर आगन्तुश्चेति। तयोः शारीरः पवनपित्तकफ-शोणितसन्निपातनिमित्तः। आगन्तुरपि पुरुष-पशुपक्षिव्यालसरीसृपप्रपतन-पीड़नप्रहाराग्निक्षारविष-तीक्ष्णौषध-शकलकपालशृङ्ग-चक्रेषुपरशुशक्तिकुन्ताद्या-

शारीरानन्तरं चिकित्सास्थानमारभ्यते। द्वौ व्रणावधिकृत्य कृतं द्विव्रणीयम्। चिकित्सितं विकारप्रतीकारः ॥ १ ॥

कथं द्वौ व्रणौ भवत इत्याह—शारीर आगन्तुश्च, अत्र केचित् 'शरीरसमुत्थश्च आगन्तुश्च' इति पठन्ति, व्याख्यानयन्ति च उभयत्र चकारकरणमुभयोश्च व्याकरणमुभयोः परस्परानुबन्ध-सूचनार्थम्। अभिघातशब्दः पुरुषादिभिः प्रत्येकं सम्बन्धनीयः। पशवो गोमहिषादयः, ( मृगा एणादयः ), पक्षिणः काककङ्कगृध्रादयः, व्याला व्याघ्रादयो दुष्टजीवाः, सरीसृपाः कृष्णसर्पादयो मीनमकरौ च, प्रपतनं प्रकर्षेण पतनं, प्रहारो लगुड़ादिकुट्टनं, तीक्ष्णौषधानि चिरविल्वचित्रकादीनि, शकलं काष्ठादीनां खण्डं, कपालं घटादीनां कर्परं, चक्रमायुधविशेषः स्वनामख्यातः, इषुर्वाणः, परशु रायुधविशेषः कुठाराकारः, शक्तिरायुधविशेषस्त्रिमुखी, कुन्तः प्रसिद्धः, आदिशब्दात् खड्गादयः।

युधाभिघातनिमित्तः। तत्र तुल्ये व्रणसामान्ये द्विकारणोत्थानप्रयोजनसामर्थ्याद् द्विव्रणीय इत्युच्यते ॥ २ ॥

सर्व्वस्मिन्नेवागन्तुव्रणे तत्कालमेव क्षतोष्मणः प्रसृतस्योपशमार्थं पित्तवच्छीत-क्रियावचारणविधिविशेषः, सन्धानार्थञ्च मधुघृतप्रयोग इत्येतद् द्विकारणो-त्थानप्रयोजनम्। उत्तरकालन्तु दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः॥ ३॥

दोषोपप्लवविशेषः पुनः समासतः पञ्चदशप्रकारः, प्रसरणसामर्थ्यात्, यथोक्तो व्रणप्रश्नाधिकारे। शुद्धत्वात् षोड़शप्रकार इत्येके ॥ ४ ॥

तस्य लक्षणं द्विविधं—सामान्यं वैशेषिकञ्च। तत्र सामान्यं रुक्। व्रण गात्रविचूर्णने व्रणयतीति व्रणः। विशेषलक्षणं पुनर्वातादिलिङ्गविशेषः ॥ ५॥

व्रणसामान्यं व्रणजातिर्व्रणत्वमित्यर्थः। तस्मिंस्तुल्ये सत्यपि द्विकारणोत्थानप्रयोजनसामर्थ्याद् 'द्विव्रणीय' इत्युच्यते ; द्विकारणं द्विहेतुकं यदुत्थानमुत्पत्तिः, तस्य प्रयोजनं शीतक्रियादि, तस्य सामर्थ्यं शक्तिः, तस्माद् 'द्विव्रणीय' इत्युच्यते ॥ २ ॥

अथागन्तुव्रणस्य कर्म्मविशेषप्रयोजनं दर्शयन्नाह—सर्व्वस्मिन्नित्यादि। तत्कालमेवेति यत्कालमेवाभिघातात् क्षतमुत्पद्यते तस्मिन्नेव काले। क्षतोष्मण इति ऊष्मा प्रहारसंघट्ट-जनिततेजः। प्रसृतस्य विस्तृतस्य। विधिविशेषो विधानभेदः। हेतुप्रत्यनीकं कर्म्माभिधाय व्याधिप्रत्यनीकं दर्शयन्नाह—सन्धानार्थञ्चेत्यादि। चकारः क्षतोष्मणो निर्व्वापणार्थं, तथा मार्गावरोधक्रुद्धवातरक्तशमनार्थञ्च। वक्ष्यमाणशारीरव्रणोत्थानप्रयोजनं मनसि सम्प्रधार्य्याह—एतद् द्विकारणोत्थानप्रयोजनमिति। उत्तरकालमिति सप्ताहादूर्द्ध्वमित्यर्थः। यतः सद्योव्रणत्वं सप्ताह-मेव। दोषोपप्लवविशेषादिति दोषैरनिलादिभिरुपप्लवो दूषणं तद्भेदात् ॥ ३ ॥

दोषोपप्लवविशेषं दर्शयन्नाह—दोषेत्यादि। समासतः सङ्क्षेपतः, वातादीनां शोणितचतुर्थानां पृथगन्योऽन्यसंसर्गेण पञ्चदशभेदाः, विस्तरः पुनरेषां धातुमलसंसर्गजोऽपरिसंख्येयः। शुद्धत्वा-दित्यादि पञ्चदशप्रकारदोषोपप्लवयुक्तत्वात् पञ्चदशप्रकारो व्रणः, षोड़शश्च शुद्धः सकलदोषोपप्लव-रहितो व्रण इत्यर्थः ॥ ४ ॥

इदानीं व्रणस्य शुद्धाशुद्धभेदेन लक्षणद्वैविध्यमाह—तस्य लक्षणमित्यादि। तस्य व्रणस्येत्यर्थः। सामान्यलक्षणं व्रणस्य किमित्याह—तत्र सामान्यं रुगिति। रुक् पीड़ामात्रमित्यर्थः। व्रणस्य व्युत्पत्तिमाह व्रण गात्रविचूर्णने, इत्येवं धातुः गात्रविवर्णनमित्यस्यार्थः। व्रणयतीति गात्रवैवर्ण्यं करोतीत्यर्थः। एतेनादोषलिङ्गाधिष्ठितो रोपणचिकित्साविषयः शुद्ध एव व्रण उक्तः। विशेष-लक्षणमाह—विशेषलक्षणमित्यादि। अयमशुद्धो व्रण उक्तः ॥ ५ ॥

तत्र श्यावारुणाभस्तनुः शीतास्रपिच्छिलस्रावी रुक्षश्चटचटायनशीलः स्फुरणायामतोदभेदवेदनावहुलो निर्म्मांसश्चेति वातात् ॥ ६ ॥

क्षिप्रजः पीतनीलाभः किंशुकोदकाभोष्णस्रावी दाहपाकरागविकारी पीतपिड़काजुष्टश्चेति पित्तात् ॥ ७ ॥

प्रततचण्डकण्डूवहुलः स्थूलौष्ठः स्तब्धशिरास्नायुजालावततः कठिनः पाण्डवभासो मन्दवेदनः शुक्लशीतसान्द्रपिच्छिलास्रावी गुरुश्चेति कफात् ॥ ८ ॥

प्रवालदलनिचयप्रकाशः कृष्णस्फोटपिड़काजालोपचितस्तुरङ्गस्थानगन्धिः सवेदनो धूमायनशीलो रक्तस्रावी पित्तलिङ्गश्चेति रक्तात् ॥ ९ ॥

तोददाहधूमायनप्रायः पीतारुणाभस्तद्वर्णस्रावी चेति वातपित्ताभ्याम् ॥ १० ॥

कण्डूयनशीलः सनिस्तोदो रुक्षो गुरुर्दारुणो मुहुर्म्मुहुः शीतपिच्छिलस्रावी चेति वातश्लेष्मभ्याम् ॥ ११ ॥

गुरुः सदाह उष्णः पीतपाण्डुस्रावी चेति पित्तश्लेष्मभ्याम् ॥ १२ ॥

रुक्षस्तनुस्तोदवहुलः सुप्त इव च रक्तारुणाभस्तद्वर्णस्रावी चेति वातशोणिताभ्याम् ॥ १३ ॥

इदानीं वातादिव्रणलक्षणमाह—तत्रेत्यादि । चटचटायनशीलः चटचटायनस्वभावः । चटचटायनादयो वेदनाविशेषाः । स्फुरणं पुनःपुनश्चलनं, आयामः सङ्कुचिताङ्गदेशस्य दीर्घीकरणमिव, तोदः सूचीभिरिव, भेदनं तद्विदारणमिव ॥ ६ ॥

क्षिप्रजः शीघ्रजन्मा । किंशुकोदकाभोष्णस्रावी किंशुकसुमनःप्रक्षालनसलिलसदृशोष्णस्रवणशील इत्यर्थः ॥ ७ ॥

प्रततचण्डकण्डूवहुलः विशालकण्डूयनप्रायः, स्थूलौष्ठः विशालोन्नतव्रणवर्त्स्येत्यर्थः । स्तब्धसिरास्नायुजालावततः अमृदुसिरास्नायुसमूहेन बद्ध इत्यर्थः ॥ ८ ॥

प्रवालदलनिचयप्रकाशः प्रवालखण्डसमूहसदृशः, प्रवालो विद्रुमः, स च समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः । कृष्णस्फोटेत्यादि । कृष्णस्फोटपिड़कासमूहव्याप्तः । तुरङ्गस्थानगन्धिः तीक्ष्णक्षारगन्धिः । धूमायनशीलः प्रकर्षेण धूमोद्वमनमिव कर्त्तुं शीलः । तोदेत्यादि । तद्वर्णस्रावी अत्रानुक्तपरिशिष्टेन वातपित्तयोर्वर्णेन स्रावेण च युक्त इत्यर्थः ॥ ९ । १० ॥

कण्डूयनेत्यादि । सनिस्तोदो व्यथायुक्तः । दारुणः कठिनः । रुक्षेत्यादि । सुप्त इवेति अज्ञायमानस्पर्श इव । अत्रानुक्तपरिशिष्टेन वातशोणितयोर्वर्णेन स्रावेण च युक्त इत्यर्थः ।

घृतमण्डाभो मीनधावनतोयगन्धिमृदुर्विसर्प्युष्णकृष्णस्रावी चेति पित्तशोणिताभ्याम्। रक्तो गुरुः पिच्छिलः कण्डूप्रायः स्थिरः सरक्तपाण्डुस्रावी-चेति श्लेष्मशोणिताभ्याम्॥ १४। १५॥

स्फुरणतोददाहधूमायनप्रायः पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः। कण्डूस्फुरणचुमचुमायनप्रायः पाण्डुघनरक्तास्रावी चेति वातश्लेष्मशोणितेभ्यः। दाहपाकरागकण्डूप्रायः पाण्डुघनरक्तास्रावी चेति श्लेष्मपित्तशोणितेभ्यः। त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः॥ १६—१९॥

निर्द्दहननिर्म्मथनस्फुरणतोददाहपाकरागकण्डूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपित्तकफशोणितेभ्यः। जिह्वातलाभो मृदुः स्निग्धः श्लक्ष्णो विगतवेदनः सुव्यवस्थितो निरास्रावश्चेति शुद्धो व्रण इति॥ २०। २१॥

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति। तद्यथा—अपतर्पणमालेपः परिषेकोऽभ्यङ्गः स्वेदो विम्लापनमुपनाहः पाचनं विस्रावणं स्नेहो वमनं विरेचनं छेदनं भेदनं दारणं लेखनमेषणमाहरणं व्यधनं विद्रावणं सीवनं सन्धानं पीड़नं शोणितास्थापनं निर्व्वापणमुत्कारिका कषायो वर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनं व्रणधूपनमुत्सादनमवसादनं मृदुकर्म्म दारुणकर्म्म क्षारकर्म्माग्निकर्म्म कृष्णकर्म्म पाण्डुकर्म्म प्रतिसारणं रोमसञ्जननं लोमापहरणं वस्तिकर्म्मोत्तरवस्तिकर्म्म वन्धः पत्रदानं कृमिघ्नं बृंहणं विषघ्नं शिरोविरेचनं नस्यं कवलधारणं धूमो मधु सर्पिर्यन्त्रमाहारो रक्षाविधानमिति॥ २२॥

घृतमण्डो घृतस्योपरिस्थोऽच्छो भागो मण्डः। मीनधावनतोयगन्धिः मत्स्यप्रक्षालनोदकगन्धिः, विस्रगन्धिरित्यर्थः। कण्डित्यादि। चुमचुमायमानं राजिकासर्षपलिप्त इव वेदना ११—१९॥

निर्द्दहनेत्यादि। निर्द्दहनम् भस्मसात् करणमिव, निर्म्मथनं निःशेषेण मन्थानविलोड़नमिव॥२०॥

इदानीं शुद्धव्रणमाह—जिह्वेत्यादि। अत्र जिह्वातलाभशब्दो मृदुस्निग्धश्लक्ष्णशब्दैः प्रत्येकं सम्बध्यते। आभाशब्देन वर्णः कथ्यते। मृदुः कोमलः। श्लक्ष्णो मसृणः। सुव्यवस्थितः शोभनाकृतिः। एतेन नात्युन्नतो नातिनीचः किन्तु सम इति बोधयति। इतिशब्दः सूत्रनिर्द्दिष्टसमाप्तौ॥ २१॥

तस्येत्यादि। एषां मध्ये प्रतिसारणं न गणनीयम्, शुक्लकृष्णकर्म्मणोरविशेषत्वात्, अतो न संख्यातिरेकः। केचिदत्र रोमसञ्जननलोमापहरणादीन् सप्तोपक्रमान् विहाय कषायादीन् सप्त शोधनरूपान् सप्त रोपणरूपानिति द्विरूपान् गणयित्वा षष्टिमुपक्रमान् पूरयन्ति। तत्र कषायादयोऽवान्तरभेदविवक्षया चतुर्द्दशापि सामान्याकारेण सप्तैव। अतः सप्तैव गणनीयाः, रोमसञ्जननादयश्चावश्यं पठनीयाः। अपरञ्च गयदासः पाचनं न पठति। जेज्झटस्तु लोमापहरणं न पठति। अतोऽमीभ्यां परस्परमत्यन्तं विवादः कृतः, स च विस्तरभयात् न लिखितः; तौ च यथा युक्त्या षष्टिं पूरयतः सापि विस्तरभयान्न लिखिता॥ २२॥

तेषु कषायो वर्त्तिः कल्कः सर्पिस्तैलं रसक्रियावचूर्णनमिति शोधनरोपणानि सप्त। तेष्वष्टौ शस्त्रकृत्याः। शोणितास्थापनं क्षारोऽग्निर्यन्त्रमाहारो रक्षाविधानं बन्धविधानञ्चोक्तानि। स्नेहस्वेदनवमनविरेचनवस्त्युत्तरवस्तिशिरोविरेचननस्यधूमकवलधारणान्यन्यत्र वक्ष्यामः। यदन्यदवशिष्टमुपक्रमजातं तदिह वक्ष्यते ॥ २३ ॥

षड्विधः प्रागुपदिष्टः शोफस्तस्यैकादशोपक्रमा भवन्त्यपतर्पणादयो विरेचनान्ताः; ते च विशेषेण शोथप्रतीकारे वर्त्तन्ते, व्रणभावमापन्नस्य च न विरुध्यन्ते। शेषास्तु प्रायेण व्रणप्रतीकारहेतव एव। अपतर्पणन्त्वाद्य उपक्रमः, एष सर्व्वशोफानां सामान्यः प्रधानतमश्च ॥ २४ ॥

इदानीमुपक्रमेषु मध्ये कषायादीनामुभयार्थकारित्वमाह—तेष्वित्यादि। कषायादयः सप्त। तेषु अपतर्पणादिषु मध्ये अष्टौ छेदनादयो दारणवर्ज्याः सीवनान्ताः शस्त्रकृत्या शस्त्रेण कर्त्तुं शक्या उपक्रमाः अष्टविधशस्त्रकर्म्मोपेताः। शोणितेत्यादि। शोणितास्थापनं चतुर्व्विधं कषायशीतक्रियापचनदहनभेदेन, तदुक्तं शोणितवर्णनीये। क्षारः पानीयप्रतिसारणीयभेदेन द्विविधश्चोक्तः। जीर्णशाल्योदनमित्यादिना व्रणितोपासनीयोक्तेनाहारश्चोक्तः। रक्षाविधानं द्विविधं रक्षोघ्नगुग्गुल्वादिना धूपेन लक्ष्मीगुहाद्योपधिधारणेन चेत्येतदुक्तमग्रोपहरणीये व्रणितोपासनीये च। मन्त्रेण च कृत्यानां प्रतिषेधार्थमित्यादिनाऽग्रोपहरणीये। बन्धविधानं व्रणालेपनाध्याये। शोणितास्थापनादयः सप्त। स्नेहेत्यादि अन्यत्रेति पञ्चकर्म्मनिर्द्देशे इत्यर्थः। स्नेहादयो दश। यदित्यादि अवशिष्टमुपक्रमजातमुर्व्वरित उपक्रमसमूहोऽष्टाविंशतिसंख्यः, एवं सर्व्वमीलने षष्टिरुपक्रमा भवन्ति ॥ २३ ॥

इदानीमपतर्पणादीनि एकादशव्रणकारणशोफविषयत्वेन विषयभेदेनापि निर्द्दिशन्नाह—षड्विध इत्यादि। अपतर्पणादय इत्यत्र बहुव्रीहेरतद्गुणसंविज्ञानत्वाच्छेषा एकादश ग्राह्याः। अपतर्पणम् उपक्रममध्ये प्राधान्याद् गृह्यते। ननु अपतर्पणादीनां शोफविषयत्वात् शोफस्य च व्रणाद् भिन्नत्वेन कथं षष्टिरुपक्रमा भवन्तीत्याह—व्रणभावमित्यादि। आपन्नस्य प्राप्तस्य, शोफस्येति शेषः। शेषा इत्यादि। एकादशभ्य उपक्रमेभ्योऽन्ये शेषास्ते व्रणप्रतीकारभूता एव। प्रथममपतर्पणं निर्द्दिशन्नाह—अपतर्पणमित्यादि। अपतर्पणमभोजनम्; न च यत्किञ्चिदेवापतर्पणं वमनादि, वमनादीनां पृथगेवोपादानात्। सर्व्वशोफानामिति पञ्चदशानां, नागन्तोः, दोषोच्छ्रायोपशान्त्यर्थमिति वचनात्। अत्र वातजेऽपि शोफेऽपतर्पणं विकारप्रत्यनीकत्वात्। अथवा वातेऽपि प्रागामताभावात्। तदुक्तं—वाते सामेऽपि लङ्घनमिति। सामान्यः सर्व्वशोफहितः। प्रधानतमश्च आशुरोगहरत्वात् ॥ २४ ॥

भवन्ति चात्र।

दोषोच्छ्रायोपशान्त्यर्थं दोषानद्धस्य देहिनः।
अवेक्ष्य दोषं प्राणञ्च कार्य्यं स्यादपतर्पणम्॥
ऊर्द्ध्वमारुततृष्णाक्षुन्मुखशोषश्रमान्वितैः।
न कार्य्यं गर्भिणीवृद्ध-बालदुर्व्वलभीरुभिः॥ २५॥
शोफेषूत्थितमात्रेषु व्रणेषूग्ररुजेषु च।
यथास्वैरौषधैर्लेपं प्रत्येकश्येन कारयेत्॥ २६॥
यथा प्रज्वलिते वेश्मन्यम्भसा परिषेचनम्।
क्षिप्रं प्रशमयत्यग्निमेवमालेपनं रुजः॥ २७॥
प्रह्लादने शोधने च शोफस्य हरणे तथा।
उत्सादने रोपणे च लेपः स्यात् तु तदर्थकृत्॥ २८॥

अपतर्पणस्यैव फलं विषयं कालावधिञ्च दर्शयन्नाह—दोषेत्यादि। दोषोच्छ्रायोपशान्तिः फलम्। दोषानद्धत्वं विषयः, अवेक्ष्य दोषं प्राणञ्चेति कालावधिः। दोषोच्छ्रायो दोषोत्कटत्वम्। दोषानद्धत्व दोषैरामैरानद्धाशेषस्रोतसः पुरुषस्येति शेषः। दोषाः कफादयः, तद्दुष्टा धातवो मलाश्च। देहिनः उपचितशरीरस्येत्यर्थः। दोषं प्राणञ्चेति युगपदेव लङ्घनावधिः प्राणञ्चेत्यत्र चकाराद् वयः प्रकृत्यादीनि चेष्टितानि अवेक्ष्य विविच्य। अपतर्पणस्य निषेधविषयं दर्शयन्नाह—ऊर्द्ध्वमारुतेत्यादि। ऊर्द्ध्वमारुताः श्वासकासादिरोगिणः। अन्ये तु ऊर्द्ध्वमारुतं रोगान्तरमाहुः। तद्यथा—"भुक्तेऽभुक्ते तथा सुप्ते यस्योद्गारो भृशं भवेत्। ऊर्द्ध्ववातन्तु तं विद्यादुदानव्यानसम्भवम्" इति। अपरे तु तद्धि मारुतेत्यादि पठन्ति। मारुतोऽत्र मारुतकृताक्षेपकादिरामयः। क्षुद् बुभुक्षा। मुखशोषो निरामवातपित्तकृतः। श्रमान्वितैरित्यत्र केचिद् भ्रमान्वितैरिति पठन्ति। श्रमो निराम-वातपित्तकृतः। सामवातपित्तकृतमार्गावरणौ तु तावपि लङ्घ्यावेव। गर्भिण्यादिष्वपि अनात्ययिके व्याधौ लङ्घनप्रतिषेधः॥ २५॥

आलेपनविषयं दर्शयन्नाह—शोफेष्वित्यादि। उत्थितमात्रेषु जातमात्रेषु। यथास्वैरिति वातादि शोफे मातुलुङ्गादिदूर्व्वाचजगन्धादिभिरात्मीयैरित्यर्थः। यथोक्तैरिति केचित् पठन्ति; तत्रापि स एवार्थः। प्रत्येकश्येन एकैकेन। दृष्टान्तदर्शनेन आलेपस्य फलमाह—यथा प्रज्वलित इत्यादि। एवमालेपनं रुज इति आलेपनं रुजो वेदनाः शोफस्य शमयतीत्यर्थः। न केवलमालेपः शोफस्य रुजापहः, किन्तु प्रह्लादनादीन्यपि करोति इत्याह—प्रह्लादन इत्यादि। प्रह्लादने सुखकरणे रुजापनयनात्। शोधने व्रणस्य दोषप्रकोपस्फोटनात्। उत्सादने निम्नव्रणस्योन्नतिकरणे। रोपणे चेति चकारात् अवसादनसवर्णकरणादीनि समुच्चीयन्ते। तदर्थकृत् प्रह्लादनादिप्रयोजनकारी। अस्य प्रयोगः पुनरालेपाध्याये, द्रव्याणि तु मिश्रकादिषु॥ २६—२८॥

वातशोफे तु वेदनोपशमार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिःक्काथैरशीतैः परिषेकान् कुर्व्वीत ॥ २९ ॥

पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिःक्काथैरनुष्णैः परिषेकान् कुर्व्वीत ॥ ३० ॥

श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्काथरशीतैः परिषेकान् कुर्व्वीत ॥ ३१ ॥

यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ ३२ ॥

अभ्यङ्गस्तु दोषमालोक्योपयुक्तो दोषोपशमं मृदुताञ्च करोति ॥ ३३ ॥

स्वेदविम्लापनादीनां क्रियाणां प्राक् स उच्यते ।
पश्चात् कर्म्मसु चादिष्टः स च विस्रावणादिषु ॥ ३४ ॥
रुजावतां दारुणानां कठिनानां तथव च ।
शोफानां स्वेदनं कार्य्यं ये चाप्येवंविधा व्रणाः ॥ ३५ ॥
स्थिराणां रुजतां मन्दं कार्य्यं विम्लापनं भवेत् ।
अभ्यज्य स्वेदयित्वा तु वेणुना वा शनैः शनैः * ।
विमर्द्दयेद् भिषक् प्राज्ञस्तलेनाङ्गुष्ठकेन वा ॥ ३६ ॥

परिषेकस्य फलं प्रयोगञ्च दर्शयन्नाह—वातेत्यादि । वातशोफादिविषयः, वेदनोपशमः फलम् । सर्पिरित्यादिः प्रयोगः । धान्याम्लं काञ्जिकम् । वातहरौषधानि भद्रदार्व्वादीनि । शर्करामिश्रमुदकं शर्करोदकम्, मधुरौषधानि काकोल्यादीनि, क्षीरवृक्षाः वटादयः । क्षारोदकमिति क्षारं गालयित्वा यदुदकं गृह्यते, तत् क्षारोदकम् । कफघ्नानि कालेयकागुरुप्रभृतीनि ॥ २९—३२ ॥

अभ्यङ्गस्य प्रयोगं फलञ्च दर्शयन्नाह—अभ्यङ्ग इत्यादि । वाते कफे च तैलेन, पित्ते रक्ते विषादिषु च शतधौतादिघृतेन । तस्य कालावधारणं निर्दिशन्नाह—स्वेदेत्यादि । स्वेदविम्लापनादीनां विरेचनान्तानां स्नेहवर्ज्जितानाम् सप्तानामुपक्रमाणां प्राग् भवति । विस्रावणादिषु सेचनान्तेषु स्नेहवमनविरेचनव्यतिरिक्तेषु कर्म्मसु सोऽभ्यङ्गः पश्चादादिष्टः ॥ ३३ । ३४ ॥

स्वेदविषयं दर्शयन्नाह—रुजावतामित्यादि । रुजावतां वातकफवेदनायुक्तानाम् । दारुणादिविशेषणस्य एतद्विषयत्वात् । दारुणानामिति दारुणत्वं वायुना रूक्षजठरीभावः । अचलत्वमित्यपरे । प्रयोगः पञ्चकर्म्मनिर्द्देशे वक्ष्यमाणः । विम्लापनविषयं प्रयोगञ्च दर्शयन्नाह—स्थिराणामित्यादि । स्थिराणां कठिनानाम् । मन्दं रुजताम् कफाधिकानामित्यर्थः, वातकफाधिकानामित्यन्ये । तलेन पाणिपादतलेन । विम्लापनमङ्गुल्यादिमर्द्दनेन शोफविलयनम् ॥ ३५ । ३६ ॥

* वेणुनाड्या ततः शनैरिति पाठान्तरम् ।

शोफयोरुपनाहन्तु कुर्य्यादामविदग्धयोः ।
अविदग्धः शमं याति विदग्धः पाकमेति च ॥ ३७ ॥
निवर्त्तते न यः शोफो विरेकान्तरुपक्रमैः ।
तस्य सम्पाचनं कुर्य्यात् समाहृत्यौषधानि तु ॥
दधितक्रसुराशुक्त-धान्याम्लैर्योजितानि तु ।
स्निग्धानि लवणीकृत्य पचेदुत्कारिकां शुभाम् ।
सैरण्डपत्रया शोफं नाहयेदुष्णया तया ॥ ३८ ॥
हितं सम्भोजनञ्चापि पाकायाभिमुखो यदि ॥ ३९ ॥
वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोफे कुर्य्याच्छोणितमोक्षणम् ॥ ४० ॥
सशोफे कठिने श्यामे सरक्ते वेदनावति ।
संरब्धे विषमे वापि व्रणे विस्रावणं हितम् ॥
सविषे च विशेषेण जलौकोभिः पदैस्तथा ।
वेदनायाः प्रशान्त्यर्थं पाकस्याप्राप्तये तथा ॥ ४१ ॥

उपनाहमाह—शोफयोरित्यादि । उपनाहः वातकफशोफविषय एव । अविदग्धः आमः । विदग्धः किञ्चित् पक्वः ॥ ३७ ॥

पाचनविषयमाह—विरेकान्तैरित्यादि । अपतर्पणाद्यैर्विरेकान्तैरित्यर्थः । समाहृत्यौषधानीति औषधानि मिश्रकोक्तानि शणमूलकबीजादीनि समभागप्रमाणानि, तथा चतुर्गुणदध्यादिद्रवाणि च समाहृत्य एकीकृत्य, लवणीकृत्य स्पष्टलवणीकृत्य, नातिशुष्काम् उपनाहयोग्यामुत्कारिकां पाचयेत् । उत्कारिका लप्सिकाकृतिः, अन्ये पूपलिकाकृतिमाहुः । नाहयेत् बध्नीयात् । तया उत्कारिकया । हितं सम्भोजनमिति सम्भोजनं यथेष्टभोजनम्, तच्च कीदृशं ? हितं हितकारि नात्यर्थकफकारि नैवोपद्रवकारीत्यर्थः । एतेन आहारविधानोक्तैरुष्णस्निग्धादिभिरेव सम्भोजनं कार्य्यमित्युक्तम् । सुधीरस्तु पथ्यापथ्यमिहैकत्र भुक्तं सम्भोजनं मतमित्याह । तच्च जेज्जटगयदासौ नेच्छतः । उपनाहनिष्पाद्यं कर्म्म पाचनमिति मत्वा पाचनं पृथगुपक्रमं गयदासो न पठति ॥३८।३९॥

विस्रावणविषयमाह—वेदनेत्यादि । अचिरोत्पतिते तत्कालोत्पन्ने । जलौकोभिः प्रच्छानैर्वा शोणितमोक्षणं कुर्य्यादित्युक्तम् । व्रणेऽपि यादृशे शोणितं स्रावणीयं तादृशमाह—सशोफ इत्यादि । श्यामे कृष्णारुणे । सरक्ते रक्तवर्णे । वेदनावति वेदनायुक्ते । संरब्धे विशालमूले । विषमे निम्नोन्नते । विशेषेण अतिशयेन । सविषे च विशेषेण रक्तमोक्षणम् ॥ ४० । ४१ ॥

सोपद्रवाणां रूक्षाणां कृशानां व्रणशोषिणाम् ।
यथास्वमौषधैः सिद्धं स्नेहपानं विधीयते ॥ ४२ ॥
उत्सन्नमांसशोफे तु कफजुष्टे विशेषतः ।
संक्लिष्टश्यामरुधिरे व्रणे प्रच्छर्द्दनं हितम् ॥ ४३ ॥
वातपित्तप्रदुष्टेषु दीर्घकालानुवन्धिषु ।
विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥ ४४ ॥
अपाकेषु तु रोगेषु कठिनेषु स्थिरेषु च ।
स्नायुकोथादिषु तथा च्छेदनं प्राप्तमुच्यते ॥ ४५ ॥
अन्तःपूयेष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि ।
गतिमत्सु च रोगेषु भेदनं प्राप्तमुच्यते ॥ ४६ ॥

स्नेहपानविषयं निर्दिशन्नाह—सोपद्रवाणामित्यादि । सोपद्रवाणामिति नात्र व्रणस्योपद्रवाः गन्धवर्णस्राववेदनाकृतयः पञ्च, किं तर्हि ? व्रणितस्योपद्रवाः वेपथुक्षवथु(पक्षवधा)दयः । व्रणशोषिणां व्रणनिमित्तक्षीणानाम् । यथास्वमौषधैरिति यस्य यदात्मीयमौषधं तैः सिद्धं स्नेहस्य पानं विधिसिद्धम्, नावचारणभिल्लाच्छपानमित्यर्थः ॥ ४२ ॥

वमनविषयं दर्शयन्नाह—उत्सन्नेत्यादि । उत्सन्नमांसशोफ इति उच्छ्रितमांसशोफे, कफजुष्टे कफाक्रान्ते, संक्लिष्टं दुष्टं श्यामम् ईषत्कृष्णं रुधिरं यस्मिन् एवम्भूते व्रणे प्रच्छर्द्दनं वमनं हितं युक्तम् ॥ ४३ ॥

विरेचनविषयमाह—वातेत्यादि । वातेन सहितं पित्तं वातपित्तम्, पित्तप्रधानसंसर्गः ; न तु वातश्च पित्तञ्चेति, केवलवाते वस्तिविधानात् । अनेनैव न्यायेन वातोपसर्ज्जने कफसंसर्गे च वमनं हितम् । एषु स्नेहादिषु त्रिषु शोफस्यानुक्तावपि शोफाधिकारत्वादेव स्नेहादयस्त्रयो विशिष्टावस्थायां शोफस्याप्युपक्रमा बोद्धव्याः । व्रणकोविदाः व्रणपण्डिताः ॥ ४४ ॥

छेदनमाह—अपाकेष्वित्यादि । अपाकेषु अविद्यमानपाकेषु मेदःकफग्रन्थिमांसकन्यादिषु । अथवा अपाकेषु ईषत्पाकेषु वल्मीकादिषु इत्यर्थः । नञ्शब्दस्योभयार्थत्वात् । गयी तु अपाकवत्सु इति पठति । तत्रापि स एवार्थः । परं तं पाठं न साधुं मन्यते श्रीजेज्जटः । कठिनेषु दृढेषु । स्थिरेषु अचलेषु । स्नायुकोथादिष्वित्यत्र आदिशब्दात् शिराधमन्यादिपरिग्रहः । प्राप्तं युक्तमित्यर्थः ॥ ४५ ॥

भेदनविषयं दर्शयन्नाह—अन्तःपूयेष्वित्यादि । अवक्त्रेषु अविद्यमानमुखेषु । उत्सङ्गवत्सु चिरस्थितपूयावदारणगम्भीरशुषिरव्रणवस्तुप्रदेश उत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते तद्वत्सु, रोगेषु व्रणेषु । गतिमत्सु गतियुक्तेषु । प्राप्तं युक्तम् ॥ ४६ ॥

बालवृद्धासहक्षीण-भीरूणां योषितामपि।
मर्म्मोपरि च जातेषु रोगेषूक्तेषु दारणम्॥
सुपक्वे पिण्डिते शोफे पीड़नैरवपीड़िते।
पाकोद्वृत्तेषु दोषेषु तत् तु कार्य्यं विजानता।
सुपिष्टैर्दारणद्रव्यैर्युक्तैः क्षारेण वा पुनः॥ ४७॥
कठिनान् स्थूलवृत्तौष्ठान् दीर्य्यमाणान् पुनःपुनः।
कठिनोत्सन्नमांसांश्च लेखनेनाचरेद् भिषक्॥
समं लिखेत् सुलिखितं लिखेन्निरवशेषतः।
वर्त्मनान्तु प्रमाणेन * समं शस्त्रेण निर्लिखेत्॥
क्षौमं प्लोतं पिचुं फेनं यावशूकं ससैन्धवम्।
कर्क्कशानि च पत्राणि लेखनार्थे प्रदापयेत्॥ ४८॥

दारणविषयमाह—बालवृद्धेत्यादि। पीड़नैरिति पीड़नद्रव्यैरित्यर्थः। पाकोद्वृत्तेषु उच्चानेषु त्वग्गतेष्वित्यर्थः। दारणद्रव्यैर्मिश्रकोक्तैश्चिरविल्वादिभिः, क्षारेण प्रतिसारणीयेन, यवक्षारेणेत्यन्ये॥ ४७॥

लेखनविषयमाह—कठिनानित्यादि। कठिनान् मांसहीनान् सममहीनाधिकं लिखेत्। स्थूलवृत्तौष्ठान् सुलिखितमतिशयलिखितं लिखेत्। पुनःपुनर्दीर्य्यमाणान् निरवशेषतो लिखेत्। कठिनोत्सन्नमांसान् वर्त्मनां प्रमाणेन समं लिखेत्। अन्ये तु पुनरन्यथा व्याख्यानयन्ति—समलेखनम् अवगाढलेखनं, सुलेखनं तिरश्चीनम्, निरवशेषलेखनं निर्लेखनं निःशेषलेखनमिति। श्रीसुवीरजेज्जटब्रह्मदेवाश्चतुरो विषयानाहुः। तथाहि—कठिनान् इत्येको विषयः। स्थूलवृत्तौष्ठानिति द्वितीयः। दीर्य्यमाणान् पुनःपुनरिति तृतीयः। कठिनोत्सन्नमांसांश्चेति चतुर्थः। अपरे तु समं लिखेदित्याद्यन्यथा व्याख्यानयन्ति—कठिनस्थूलवृत्तौष्ठादीन् यथा सुलिखितं भवति, एवं लिखेदिति सम्बन्धः, कथं सुलिखितं भवतीत्याह—समं लिखेत्, निरवशेषं लिखेत्, वर्त्मनान्तु प्रमाणेन समं निर्लिखेदिति। समं सुलिखितलक्षणम्। निर्लिखेत् पुनःपुनर्लिखेदिति भणनं बहुशो लेखने शस्त्रावचारणं सूचयति। अत्र व्रणवर्त्मशब्देन व्रणगताश्चत्वारः पार्श्वा वाच्याः। शस्त्रेण निर्लिखेत्, न तु गोजीशेफालिकादिपत्रेण। शस्त्राभावे क्षौमादिभिर्लिखेदित्याह—क्षौममित्यादि। क्षौमम् अतसीवस्त्रम्। प्लोतं कर्पटम्। पिचुं कार्पासतूलाम्। फेनं समुद्रफेनम्। यावशूको यवक्षारः॥ ४८॥

* वर्त्मनान्तुप्रमाणेनेति पाठान्तरम्।

नाड़ीव्रणान् शल्यगर्भानुन्मार्ग्युत्सङ्गिनः शनैः।
करीरवालाङ्गुलिभिरेषण्या वैषयेद् भिषक्॥ ४९॥
नेत्रवर्त्मगुदाभ्यास-नाड्योऽल्पवक्त्राः सशोणिताः।
चुच्चूपोदकजैः श्लक्ष्णैः करीरैरेषयेत् तु ताः॥ ५०॥
संवृतासंवृतास्येषु व्रणेषु मतिमान् भिषक्।
यथोक्तमाहरेच्छल्यं प्राप्तोद्धरणलक्षणम्॥ ५१॥
रोगे व्यधनसाध्ये तु यथोद्देशं प्रमाणतः।
शस्त्रं निदध्याद् दोषञ्च स्रावयेत् कीर्त्तितं यथा॥ ५२॥
अपाकोपद्रुता ये च मांसस्था विवृताश्च ये।
यथोक्तं सीवनं तेषु कार्य्यं सन्धानमेव च॥ ५३॥
पूयगर्भानणुद्वारान् व्रणान् मर्म्मगतानपि।
यथोक्तैः पीड़नद्रव्यैः समन्तात् परिपीड़येत्॥

एषणमाह—नाड़ीत्यादि। नाड्यश्च व्रणाश्च इति नाड़ीव्रणास्तान्। शल्यगर्भान् अभ्यन्तर-शल्यानित्यर्थः। उन्मार्गी भगन्दरः। उत्सङ्गी शम्बूकावर्त्ताभिध इत्येके, तन्न; तयोरसाध्यत्वेन एषणानर्हत्वात्। तत्र, उत्सृष्टो मार्गो विद्यते येषां ते उन्मार्गिणो व्रणाः। ऋजुं मार्गं परित्यज्य कुटिलया गत्या ये यान्तीत्यर्थः। उत्सङ्गिनः ऊर्द्धं सङ्गिनः। करीराः चुच्चूपोदकजादीनां कोमला नालाः। वालाः करिशूकरादीनाम्। विवृतास्यान् कोष्ठाश्रितान् अङ्गुल्या वा एषयेदित्यर्थः। एषणी शलाकाशस्त्रम्। एषयेत् करीरादिनिक्षेपणंन तल सम्यनिश्चयं कुर्य्यादित्यर्थः॥ ४९॥

करीराणां विषयं निर्द्दिशन्नाह—नेत्रवर्त्मेत्यादि। गुदाभ्यासः गुदसमीपम्। अवक्त्राः अल्पवक्त्राः। चुच्चूः चीचुरिति लोके। उपोदकः पोइ पुँइ इति वा लोके। आहरणविषयमाह—संवृतासंवृतेत्यादि॥ ५०। ५१॥

व्यधनस्रावणविषयमाह—रोग इत्यादि। व्यधनसाध्यो रोगः दकोदरमूत्रवृद्ध्यादिः। यथोद्देशं प्रमाणत इति उद्देशानतिक्रान्तप्रमाणमित्यर्थः। तत्र दकोदरोद्दिष्टं प्रमाणमङ्गुष्ठोदरप्रमाण-मवगाढमिति ज्ञेयम्। विद्रध्यादिषु पुनः महत्स्वपि च पाकेषु द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं वा शस्त्रनिपातनम् इति। शस्त्रं निदध्यादित्यन्तेन व्यधनमुक्तं, दोषञ्च स्रावयेत् कीर्त्तितं यथेति स्रावणमुक्तम्। एवमनेन श्लोकेनोपक्रमद्वयमुक्तम्॥ ५२॥

सीवनसन्धानविषयमाह—अपाकेत्यादि। अपाकोपद्रुताः पाकोपद्रवरहिताः। विवृताः व्यात्तमुखाः। यथोक्तमष्टविधशस्त्रकर्म्मीये। सन्धानमेव चेति न केवलं सीवनं सन्धानमपि। सन्धानं व्रणौष्ठादिसंयोजनम्। अनेन श्लोकेनोपक्रमद्वयमुक्तम्॥ ५३॥

पीड़नमाह—पूयगर्भेत्यादि। यथोक्तैः मिश्रकपठितैः। पीड़नद्रव्यैस्त्वक् मूलादिभिः। समन्तात्

शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति।
न चाभिमुखमालिम्पेत् तथा दोषः प्रसिच्यते॥ ५४॥
तैस्तैर्निमित्तैर्बहुधा शोणिते प्रस्रुते भृशम्।
कार्य्यं यथोक्तं वैद्येन शोणितास्थापनं भवेत्॥ ५५॥
दाहपाकज्वरवतां व्रणानां पित्तकोपतः।
रक्तेन चाभिभूतानां कार्य्यं निर्व्वापणं भवेत्॥
यथोक्तैः शीतलद्रव्यैः क्षीरपिष्टैर्घृतप्लुतैः।
दिह्यादवहलान् सेकान् * सुशीतांश्चावचारयेत्॥ ५६॥
व्रणेषु क्षीणमांसेषु तनुस्राविष्वपाकिषु।
तोदकाठिन्यपारुष्य शूलवेपथुमत्सु च॥
वातघ्नवर्गेऽम्लगणे काकोल्यादिगणे तथा।
स्नैहिकेषु च वीजेषु पचेदुत्कारिकां शुभाम्।
तेषाञ्च स्वेदनं † कार्य्यम्———॥ ५७॥
————स्थिराणां वेदनावताम्।
दुर्गन्धानां क्लेदवतां पिच्छिलानां विशेषतः।
कषायैः शोधनं कार्य्यं शोधनैः प्रागुदीरितैः॥ ५८॥

सर्व्वतः। प्रदेहं प्रलेपनमित्यर्थः। दोषः पूयः। प्रसिच्यते स्वयं प्रक्षरति। पीड़नम् औषधः पचनम्॥ ५४॥

शोणितास्थापनमाह–तैस्तैरित्यादि। तैस्तैः शिराव्यधादिभिः। यथोक्तं शोणितास्थापनं शोणितातिप्रवृत्तिस्तम्भनम्। तच्चतुर्विधम् "सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा" इति। निर्व्वापनमाह—दाहेत्यादि। निर्व्वापणं नाम पित्तरक्तव्रणस्य पच्यमानस्य ज्वरेणाभिभूतस्य औषधादिभिर्वेदनोपशमः। यथोक्तैः मिश्रकोक्तैर्दूर्व्वादिभिः। क्षीरपिष्टैरिति क्षीरेण पिष्टैः। दिह्यात् लिम्पेत। अवहलान् स्वल्पान् श्लक्ष्णस्य दाहपाककारित्वात्। अनेन श्लोकेन सेकलेपौ द्वौ निर्व्वापणावुक्तौ॥ ५५। ५६॥

उत्कारिकाविषयमाह – व्रणेष्वित्यादि। क्षीणमांसत्वादिकं वातकार्य्यम्। वातघ्नवर्गे भद्रदार्व्वादौ। अम्लगणे सौवीरकतुषोदकादौ। स्नैहिकेषु च वीजेषु तिलातसीसर्षपैरण्डादिवीजेषु। वातघ्नवर्गकाकोल्यादिगणस्नैहिकवीजानि समभागानि, तच्चतुर्गुणमम्लानां गृहीत्वा नातिघनां नातिसान्द्रां पेयानुकारिणीम् उत्कारिकां पचेत्॥ ५७॥

इदानीं कषायादींश्चूर्णान्तान् सप्त शोधनरोपणान् विषयभेदेन दर्शयन्नाह – दुर्गन्धानामित्यादि। शोधनैः कषायैः प्रागुदीरितैर्मिश्रकोक्तैः शङ्खिन्यङ्कोटसुमनादिभिः कृतैः क्वाथैः शोधनं कार्य्यम्॥५८॥

* लेपानिति पाठान्तरम्। † स्नेहनमिति क्वचित् पाठः।

अन्तःशल्यानणुमुखान् गम्भीरान् मांससंश्रितान् ।
शोधनद्रव्ययुक्ताभिर्वर्त्तिभिस्तान् यथाक्रमम् ॥
पूतिमांसप्रतिच्छन्नान् महादोषांश्च शोधयेत् ।
कल्कीकृतैर्यथालाभं वर्त्तिंद्रव्यैः पुरोदितैः ॥
पित्तदुष्टान् सुगम्भीरान् दाहपाकप्रपीड़ितान् ।
कार्पासीफलमिश्रेण जयेच्छोधनसर्पिषा ॥
उत्सन्नमांसानस्निग्धानल्पास्रावान् व्रणांस्तथा ।
सर्षपस्नेहयुक्तेन धीमांस्तैलेन शोधयेत् ॥
तैलेनाशुध्यमानानां शोधनीयां रसक्रियाम् ।
व्रणानां स्थिरमांसानां कुर्य्याद् द्रव्यैरुदीरितैः ॥
कषाये विधिवत् तेषां कृते चाधिश्रयेत् * पुनः ।
सुराष्ट्रजां सकासीसां दद्याच्चापि मनःशिलाम् ॥

शोधनद्रव्ययुक्ताभिरिति शोधनद्रव्याणि अजगन्धाजश्रृङ्ग्यादीनि मिश्रकोक्तानि। तान् व्रणान्, शोधयेदिति शेषः। यथाक्रममिति प्रथमं सूक्ष्माभिस्ततः स्थूलस्थूलतराभिरित्यर्थः। पूतिमांसप्रतिच्छन्नानिति अवगाढान्, न पुनरभ्यन्तरान्। महादोषांश्चेति अतिदुष्टानित्यर्थः। दोषौ चात्र वातकफौ गृह्येते, न पुनः पित्तं, पित्तदुष्टस्तु सर्पिर्विषयः। शोधनद्रव्याणि कासीसाजगन्धादीनि, तैः सिद्धेन सर्पिषा घृतेन। कल्पना चेयम्—यावन्ति कासीसाजगन्धादीनि शोधनद्रव्याणि तावन्मात्रं कार्पासफलम्, एतान्येकीकृत्य कल्कचतुर्गुणं घृतम्, घृतचतुर्गुणं जलञ्च गृहीत्वा घृतं साधनीयम्। व्रणानिति कफवाताधिकानित्यर्थः, उत्सेधस्य कफकृतत्वात्, अस्नेहाल्पस्रावयोर्वातकृतत्वाच्च। सर्षपस्नेहयुक्तेनेति सर्षपस्नेहाधिकेन तिलतैलेन, मिश्रकोक्तेन पूयादिशोधनद्रव्यसिद्धेनेति शेषः। द्रव्यैरुदीरितैरिति मिश्रकोक्तैः शालसारादिभिर्द्रव्यैः। कल्पनामाह—कषाये विधिवत् तेषामिति। तेषां शालसारादीनां विधिवत् कृते कषाये द्रव्यापेक्षया षोड़शगुणोदकेऽष्टभागावशिष्टे, अष्टगुणोदके चतुर्भागावशिष्टे वा। अधिश्रयेत् पुनरिति पूतं कषायं पुनरधिश्रयेत् पचेदित्यर्थः। सुराष्ट्रजादीनि चूर्णितानि मात्रया शेषकषायपादे कषायस्य पुनः पाकात् फाणितीभावे सति आवपेत्। सुराष्ट्रजां तुवरमृत्तिकाम्।

* न्यामिश्रयेदिति पाठभेदः।

हरितालञ्च मतिमांस्ततस्तामवचारयेत्।
मातुलुङ्गरसोपेतां सक्षौद्रामतिमर्द्दिताम्।
व्रणेषु दत्त्वा तां तिष्ठेत् त्रींस्त्रींश्च दिवसान् परम् ॥ ५९ ॥
मेदोजुष्टानगम्भीरान् दुर्गन्धांश्चूर्णशोधनैः।
उपाचरेद् भिषक् प्राज्ञः श्लक्ष्णैः शोधनवर्त्तिजैः ॥ ६० ॥
शुद्धलक्षणयुक्तानां कषायं रोपणं हितम्।
तत्र कार्य्यं यथोद्दिष्टैर्द्रव्यैर्वेदेन जानता ॥ ६१ ॥
अवेदनानां शुद्धानां गम्भीराणां तथैव च।
हिता रोपणवर्त्त्यङ्गकृता रोपणवर्त्तयः ॥ ६२ ॥
अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कः संरोहणः कार्य्यस्तिलजो मधुसंयुतः ॥
स माधुर्य्यात् तथौष्ण्याच्च स्नेहाच्चानिलनाशनः।
कषायभावान्माधुर्य्यात् तिक्तत्वाच्चापि पित्तहृत्।
औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः ॥

ततस्तामवचारयेदिति ततोऽनन्तरं रसक्रियां समवचारयेत् प्रयोजयेत्। अतिमर्द्दितामौषधानामेकीभावार्थम्। मातुलुङ्गमधुमात्रा तु संस्कारमात्रैव। त्रींस्त्रींश्च दिवसान् परमिति परमित्यवधारणे, तान् त्रींस्त्रीनेव दिवसान् तिष्ठेत् नाधिकम्। व्रणवर्त्मवदारणभयात् ॥ ५९ ॥

अगम्भीरान् उत्तानान्, 'गम्भीरान् मेदसा जुष्टान्' इत्येके पठन्ति। तन्नेच्छति गयी। चूर्णशोधनैः कासीसादिभिः। शोधनवर्त्तिजैरजगन्धादिभिः। अशुद्धव्रणस्य शोधनानि कषायादीन् योगान् निर्द्दिश्य शुद्धस्य तानेव रोपणान् निर्द्दिशन्नाह— शुद्धलक्षणयुक्तानामित्यादि। शुद्धव्रणलक्षणानि त्रिभिर्दोषैरनाक्रान्त इत्यादीनि जिह्वातलाभ इत्यादीनि चोक्तानि। यथोद्दिष्टैः वटादिभिः। अवेदनानां सर्व्वथा वेदनाहीनानामित्यर्थः। अन्ये अवेदनानाम् अल्पवेदनानामित्याहुः। रोपणवर्त्त्यङ्गकृता इति रोपणवर्त्त्यङ्गानि सोमामृताश्वगन्धाकाकोल्यादीनि, तैः कृता रोपणवर्त्तयो हिताः ॥ ६०—६२ ॥

अपेतपूतिमांसानामिति निर्गतशठितमांसानाम्। मांसस्थानां मांसमात्रस्थितानामित्यर्थः। कल्कः मिश्रकाध्याये कथितः, स तु समङ्गासोमसरलेत्यादिः। विशेषार्थमत्रापि कल्कं निर्द्दिशन्नाह— तिलजो मधुसंयुत इति। तिलकल्कस्य त्रिदोषहरत्वमाह— स इत्यादि। स इति तिलकल्कः। तिलकल्कस्य तिक्तकषायत्वे उष्णत्वे स्निग्धत्वे मधुरत्वे च सत्यपि कथं वाताद्यप्रकोपकरत्वम्? उच्यते—स्वभावात् आमलकवत्। अस्यैव तिलकल्कस्य योगवाहित्वं सविशेषं

शोधयेद् रोपयेच्चापि युक्तः शोधनरोपणैः।
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः।
पूर्व्वाभ्यां सर्पिषा चापि युक्तश्चाप्युपरोपणः॥ ६३॥
तिलवद् यवकल्कन्तु केचिदाहुर्मनीषिणः॥ ६४॥
शमयेदविदग्धञ्च विदग्धमपि पाचयेत्।
पक्वं भिनत्ति भिन्नञ्च शोधयेद् रोपयेच्च तम्॥ ६५॥
पित्तरक्तविषागन्तून् गम्भीरानपि च व्रणान्।
रोपयेद् रोपणीयेन क्षीरसिद्धेन सर्पिषा॥ ६६॥
कफवाताभिभूतानां व्रणानां मतिमान् भिषक्।
कारयेद् रोपणं तैलं भेषजैस्तद् यथोदितैः॥ ६७॥

दर्शयन्नाह—शोधयेदित्यादि। अशुद्धान् शोधयेत्, रोपयेच्चेत्ययमर्थश्चकारेण ज्ञेयः (१)। केन शोधनेन युक्तः शोधयेदित्याह—निम्बपत्रमधुभ्यामित्यादि। मधुसंयुत इत्यनेनैव लब्धे पुनरिह मधुग्रहणं केवलस्यैव तिलकल्कस्य प्रागुक्ता माधुर्य्यादयोऽवगन्तव्याः, न मधुयुक्तस्येति ज्ञापयति। केन रोपणेन शोधनेन युक्तो व्रणान् शोधयेत् रोपयेच्चेत्याह—पूर्व्वाभ्यामित्यादि। पूर्व्वाभ्यां निम्बपत्रमधुभ्यामित्यर्थः। युक्तश्चाप्युपरोपण इति अपिशब्दो भिन्नक्रमे; तेन निम्बपत्रमधुघृतयुक्तः शुध्यन्तो व्रणस्य शोधनो रोपणोऽपीति तिलकल्कस्य योगवाहित्वादित्यर्थः। अन्ये तु युक्तः संरोपणो भवेत् इति च पठन्ति; ते तु पूर्व्वोक्तं चकारार्थं न मन्यन्ते; किञ्च निम्बपत्रमधुघृतयुक्तस्य तिलकल्कस्य रोपणत्वमेवाङ्गीकुर्व्वन्तीति न शोधनत्वम्॥ ६३॥

इदानीमन्यमपि कल्कं सर्व्वावस्थासु सर्व्वव्रणयोगित्वेन सविशेषमेकीयमतेन निर्द्दिशन्नाह—तिलवदित्यादि। तिलवत् तिलसदृशो यवकल्कोऽपि त्रिदोषघ्न इत्यनेन प्रकारेण केचित् एकीयमतं व्याख्यानयन्ति; जेज्जटगयदासौ तु अन्यथा, यथा—तिला विद्यन्तेऽस्मिन्निति तिलवान्, तिलवांश्चासौ यवकल्कश्च तिलवद्यवकल्कः, तं तिलवद्यवकल्कं केचिदाहुरिति। सर्व्वावस्थासु सर्व्वशारीरव्रणयोग्यत्वमाह—शमयेदविदग्धञ्चेत्यादि। एतेन तिलयुक्तः कल्कः पञ्चानामुपक्रमाणां विम्लापनपाचनपाटनशोधनरोपणानामर्थं करोतीत्युक्तम्। तिलकल्कस्तु रोपणशोधनकरणेनोपक्रमद्वयार्थंकरः। तदुभयकरणेनोपक्रमत्रयार्थंकरो वा, अत एवानयोः कल्कयोर्भेदः। रोपयेच्चेति चकारेण तिलकल्कतिलवद्यवकल्कयोरपि व्रणवैकृत्यापहरत्वं भवतीति समुच्चीयते॥ ६४। ६५॥

शस्त्राद्यभिघातनिमित्ता व्रणाः सद्याहाद्व्वागेव अदोषोपप्लुता आगन्तवः। रोपणीयेनेति मिश्रकोदितेन पृथक्पर्ण्यात्मगुप्ता चेत्यादिना॥ ६६॥

यथोदितैरिति मिश्रकोक्तैः कालानुसार्य्यागुरुप्रभृतिभिः॥ ६७॥

अवन्ध्यानां चलस्थानां शुद्धानाञ्च प्रदुष्यताम्।
द्विहरिद्रायुतां कुर्य्याद् रोपणार्थां रसक्रियाम्॥ ६८॥
समानां स्थिरमांसानां त्वक्स्थानां रोपणं भिषक्।
चूर्णं विदध्यान्मतिमान् प्राक्स्थानोक्तो विधिर्यथा॥ ६९॥
शोधनो रोपणश्चैव विधिर्य्योऽयं प्रकीर्त्तितः।
सर्व्वव्रणानां सामान्येनोक्तो दोषाविशेषतः॥
एष आगमसिद्धत्वात् तथैव फलदर्शनात्।
मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथञ्चन॥
स्वबुद्ध्या चापि विभजेत् कषायादिषु सप्तसु।
भेषजानि यथायोगं यान्युक्तानि पुरा मया॥ ७०॥

अवन्ध्याः पित्तरक्तविषाभिघातजादयः। चलस्थानामिति चलाः चेष्टावन्तः सन्धयः, तत्रस्थाश्चलस्थाः तेषां, शुद्धानाञ्च प्रदुष्यतां पुनरित्यर्थः। शुद्धानां वाऽप्ररोहतामिति सुधीराभिप्रायेण केचित् पठन्ति। तत्र चलस्थानत्वादिना हेतुना अप्ररोहतामिति द्रष्टव्यम्। अत्र कल्पना—न्यग्रोधादिवर्गस्य त्रिफलायाश्च द्रव्यापेक्षया अष्टगुणे चतुर्गुणे वाऽम्भसि अष्टभागावशिष्टे चतुर्भागावशिष्टे वा कषायं पुनरधिसृत्य फाणितीभावे अवशिष्टकषायपादमात्रया हरिद्राद्वयचूर्णं प्रक्षिप्य सुमर्द्दितां मधुयुतां रसक्रियामवचारयेत्। अत्र शोधनरसक्रियावत् कालावधिर्नास्त्येव, यावत् व्रणरोपणमेव कार्य्यमिति। समानामित्यादि। स्थिरमांसानाममृदुमांसानाम्। प्राक्स्थानोक्तो विधिर्यथेति प्राक्स्थाने सूत्रस्थाने उक्तो विधिः येन प्रकारेण, स च प्रकारः किंशुकत्रिफलालोध्रमित्यादिना निर्द्दिष्ट इत्यर्थः॥ ६८। ६९॥

इदानीं कषायादिभेदेन प्रत्येकं सप्तविधस्य शोधनस्य रोपणस्य च सर्व्वव्रणविषयत्वं दर्शयन्नाह—शोधन इत्यादि। अत्र सुधीरः—सर्व्वव्रणानां शारीरागन्तूनां सामान्येनोक्तो विधिः। कस्मात्? दोषाविशेषतः। अवशिष्टा हि वातपित्तश्लेष्माणो दूषकाः। शारीराणामागन्तूनाञ्च व्रणानामिति। उक्तञ्च—"कालान्तरेण दोषोपप्लवविशेषाच्छारीरवत् प्रतीकारः" इति। दोषविशेषत इति पठित्वा वशिष्ठजेजटौ च नार्थ्यं वदतः। दोषविशेषतः दोषभेदात्। शेषं समम्। केचित्तु सामान्येनोक्तो विधिस्तिलनिम्बकल्कादिः। तथा दोषविशेषतश्चोक्त आदेन द्वे पञ्चमूल्यावित्यादि, इति लुप्तनिर्द्दिष्टं चकारं वर्णयन्ति। गयी तु सर्व्वव्रणानां विद्रध्याद्यशेषव्रणानामयमेव विधिरुक्तः। कुतः? यतः व्रणसामान्येनोक्तः, स च विधिर्दोषविशेषत इति दोषविशेषमपेक्ष्य कार्य्य इति व्याख्यानयति। एषः शोधनरोपणविधिः। आगमसिद्धत्वादिति आगमः शिष्टशास्त्रं तेन सिद्धत्वात् प्रसिद्धत्वादित्यर्थः। फलदर्शनादारोग्यदर्शनादित्यर्थः। न मीमांस्यो न विचार्य्यः इत्यर्थः। आगमोक्तयोगविषयिणीममीमांसां निर्द्दिश्य अनिर्द्दिष्टयोगविषयिणीं मीमांसामेव

आदेश द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः।
स वातदुष्टे दातव्यः कषायादिषु सप्तसु ॥ ७१ ॥
न्यग्रोधादिर्गणो यस्तु काकोल्यादिश्च यः स्मृतः।
तौ पित्तदुष्टे दातव्यौ कषायादिषु सप्तसु ॥ ७२ ॥
आरग्वधादिस्तु गणो यश्चोष्णः परिकीर्त्तितः।
तौ देयौ कफदुष्टे तु ——————— ॥ ७३ ॥
——————— संसृष्टे संयुता गणाः ॥ ७४ ॥
वातात्मकानुग्ररुजान् सास्रावानपि च व्रणान्।
सक्षौमयवसर्पिर्भिर्धूपनाङ्गैश्च धूपयेत् ॥ ७५ ॥
परिशुष्काल्पमांसानां गम्भीराणां तथैव च।
कुर्य्यादुत्सादनीयानि सर्पींष्यालेपनानि च ॥
मांसाशिनाञ्च मांसानि भक्षयेद् विधिवन्नरः।
विशुद्धमनसस्तस्य मांसं मांसेन वर्द्धते ॥ ७६ ॥
उत्सन्नमृदुमांसानां व्रणानामवसादनम्।
कुर्य्याद् द्रव्यैर्यथोद्दिष्टैश्चूर्णितैर्मधुना सह ॥ ७७ ॥

कथयन्नाह—स्ववुद्धेत्यादि। कषायादिषु सप्तसु कषायवर्त्तिकल्कसर्पिस्तैलरसक्रियाचूर्णेषु। उष्णः उष्णवीर्य्यो मुष्ककादिः श्लेष्मघ्नः सुरसादिर्वा। संसृष्टे संयुता गणाः सर्व्वेऽपि शोधनरोपणविषयाः ॥ ७०—७४ ॥

धूपनविषयमाह—वातात्मकानित्यादि। उग्ररुजान् सास्रावानिति पदद्वयेन वातकफात्मकत्व मुक्तम्। सक्षौमेत्यादि। क्षौममतसीवस्त्रम। धूपनाङ्गानि श्रीवेष्टके सर्ज्जरसे इत्यादीनि ॥ ७५ ॥

उत्सादनविषयमाह—परिशुष्केत्यादि। परिशुष्काल्पमांसानां वातात्मकानाम्। गम्भीराणाम् रक्तपित्तात्मकानाम्। प्रयोगे उत्सादनीयानीति अपामार्गाश्वगन्धादीनि उत्सादनद्रव्याणीत्यर्थः। एतैः सर्पिःसंस्कार आलेपनञ्च कर्त्तव्यम्। उत्सादनं निम्नव्रणस्योन्नतिकरणम्। आभ्यन्तरमुत्सादनमाह—मांसाशिनामित्यादि। व्याघ्रादीनामित्यर्थः। विशुद्धमनसः शोक क्रोधाद्यनभिभूतमनस इत्यर्थः। जेज्जटस्तु व्याघ्रादीनां मांसानि छद्मोपहितानि, एवं विशुद्धमनस इति व्याख्यानयति ॥ ७६ ॥

अवसादनविषयमाह—उत्सन्नमृदुमांसानामित्यादि। उत्सन्नमुद्धृतं मृदु मांसं येषां ते तथाभूतानाम्। अवसादनम् उन्नतव्रणस्य निम्नत्वकरणम्। यथोद्दिष्टैर्द्रव्यैः कासीसादिभिः।

कठिनानाममांसानां दुष्टानां मातरिश्वना।
मृद्वी क्रिया विधातव्या शोणितञ्चापि मोक्षयेत्।
वातघ्नौषधसंयुक्तान् स्नेहान् सेकांश्च कारयेत् ॥ ७८ ॥
व्रणेषु मृदुमांसेषु दारुणीकरणं हितम्।
धवप्रियङ्ग्वशोकानां रोहिण्याश्च त्वचस्तथा ॥
त्रिफलाधातकीपुष्प-रोध्रसर्ज्जरसान् समान्।
कृत्वा सूक्ष्माणि चूर्णानि व्रणं तैरवचूर्णयेत् ॥ ७९ ॥
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान्।
तथैव खलु दुःशोध्याञ्छोधयेत् क्षारकर्म्मणा ॥ ८० ॥
स्रवतोऽश्मभवान् मूत्रं ये चान्ये रक्तवाहिनः।
निःशेषच्छिन्नसन्धींश्च साधयेदग्निकर्म्मणा ॥ ८१ ॥
दुरूढ़त्वात् तु शुक्लानां कृष्णकर्म्म हितं भवेत्।
भल्लातकान् वासयेत् तु क्षीरे प्राङ्मूत्रभावितान् ॥
ततो द्विधा च्छेदयित्वा लौहे कुम्भे निधापयेत्।
कुम्भेऽन्यस्मिन् निखाते तु तं कुम्भमथ योजयेत् ॥
मुखं मुखेन सन्धाय गोमयैर्दाहयेत् ततः।
यः स्नेहश्च्यवते तस्माद् ग्राहयेत् तं शनैर्भिषक् ॥

मृदुकर्म्मविषयमाह—कठिनानामित्यादि। अमांसानामल्पमांसानाम्। मातरिश्वना वायुना। मृद्वी क्रिया मधुरस्निग्धकोष्णलवणैरन्तर्वहिश्च पुनःपुनः क्रियमाणैर्लेपादिभिः। शोणितमित्यादि। तत्र रक्तानुगते मातरिश्वनि रक्तमोक्षणम्, कफानुगते स्नेहान् सेकांश्चेति। दारुणकर्म्मविषयमाह—व्रणेष्वित्यादि। दारुणीकरणं कठिनीकरणम्। रोहिण्याः कटुतुम्ब्या वल्कलस्य ॥ ७७—७९ ॥

क्षारविषयमाह—उत्सन्नमांसानित्यादि। अग्निकर्म्मविषयमाह—स्रवत इत्यादि। अश्मभवान् अश्मरीनिर्हरणच्छेदसम्भवान् व्रणान् अग्निकर्म्मणा साधयेदिति सम्बन्धः। किंविशिष्टान् व्रणान् अश्मभवान्? मूत्रं स्रवतः। यद्यपि ते व्रणा मूत्रस्राविणस्तथापि सद्योव्रणे मूत्रं यावत् तावत् तेऽदहनीयाः। सप्ताहादूर्द्ध्वं पुनर्यदा व्रणानामसन्धानेन मूत्रं स्वमार्गं न प्रतिपद्यते, तदैवाग्निना दहेत्। इदानीं रूढस्यैव व्रणस्य प्रकृतिभावार्थं पश्चात् कर्म्मारम्भः। तत्र पूर्व्वं शुक्लस्यैव कृष्णीकरणमाह—दुरूढत्वादित्यादि। प्राक् पूर्व्वं सप्ताहं गव्यमूत्रभावितान् भल्लातकान् गव्यक्षीरे वासयेत् स्थापयेत्। अत्र कालस्यानुक्तत्वात् वक्ष्यमाणरोहिणीफलक्षीरवासनवत् सप्तरात्रमेव वासनं कार्य्यम्। कुम्भेऽन्यस्मिन् इत्यादि। अन्यस्मिन् कुम्भे निखाते तं कुम्भं योजयेत् यत्र कुम्भे भल्लातकानि निक्षिप्यन्ते। कथं योजयेदित्याह—मुखं मुखेनेत्यादि। तमपि कुम्भं

ग्राम्यानूपशफान् दग्ध्वा सूक्ष्मचूर्णानि कारयेत् ।
तैलेनानेन संसृष्टं शुक्लमालेपयेद् व्रणम् ॥ ८२ ॥
भल्लातकविधानेन सारस्नेहांस्तु कारयेत् ।
ये च केचित् फलस्नेहा विधानं तेषु पूर्ववत् * ॥ ८३ ॥
दुरूढ़लात् तु कृष्णानां पाण्डुकर्म्म हितं भवेत् ।
सप्तरात्रं स्थितं क्षीरे च्छागले रोहिणीफलम् ।
तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम् ॥ ८४ ॥
नवं कपालिकाचूर्णं वैदुलं सर्ज्जनाम च ।
कासीसं मधुकञ्चैव क्षौद्रयुक्तं प्रलेपयेत् ॥ ८५ ॥
कपित्थमुद्धृते मांसे मूत्रेणाजेन पूरयेत् ।
कासीसं रोचनां तुत्थं हरितालं मनःशिलाम् ॥
वेणुनिर्लेखनञ्चापि प्रपुन्नाड़रसाञ्जनम् ।
अधस्तादर्ज्जुनस्यैतन्मासं भूमौ निधापयेत् ।
मासादूर्द्ध्वं ततस्तेन कृष्णमालेपयेद् व्रणम् ॥ ८६ ॥

निरन्तरच्छिद्रितापिधानं कृत्वा योजयेत् । अन्यथा अनावृतमुखादुपरिगतकुम्भाद् भल्लातका श्च्यन्ते । ग्राम्यानूपशफानिति ग्राम्या अश्वादयः, अनूपा महिषादयः, शफान् खुरान् । कृष्णीकरणे स्नेहानपरानपि निर्द्दिशन्नाह—भल्लातकेत्यादि । ये च केचित् पिण्डितकविभीतकादि-स्नेहाः तेषां मध्ये भल्लातकस्नेहनिष्पादनवद् विधानम्, तेषु मध्ये ये कृष्णीकरणार्थास्तेषां ग्राम्यादिशफदाहभस्मचूर्णमिश्राणामवचारणमिति भावः ॥ ८०—८३ ॥

इदानीं कृष्णानां पाण्डुकर्म्मणा सवर्णीकरणमाह—दुरूढ़त्वादित्यादि । गयी तु छागले इत्यत्र वार्करे इति पठति, तत्र वर्करी तरुणछागी, तस्या इदं वार्करं, अन्ये तु वृद्धवत्सायाः क्षीरं वष्कयणीक्षीरं वा वार्करमाहुः, तन्न शास्त्रलोकप्रसिद्धिरिति गयी । रोहिणीफलमिति रोहिणी हरीतकीभेदस्तत्फलम् । अन्ये तु कटुतुम्बीफलमाहुः । कटुकाफलमिति पाठान्तरम् । तेनैव क्षीरेणेत्यर्थः । योगान्तरमाह—नवमित्यादि । कपालिका शरावकर्परिका तच्चूर्णं नवम्, सा पुनरपाकोद्धृतैव नवा कपालिका भवति । अन्ये तु नवं प्रलेपनमाहुः । तत्र नवमपर्य्युषित-मित्यर्थः । विदुलो वेतसस्तद्भवं वैदुलं मूलमिति शेषः । सर्ज्जनाम च सर्ज्जवृक्षमूलम् । योगान्तरमाह—कपित्थमुद्धृते मांस इत्यादि । मांसमत्र आभ्यन्तरो भागः, तमुद्धृत्य आजमूत्रेण कासीसादिमिश्रं कपित्थं पूरयेत् । वेणुनिर्लेखनं वंशतक्षणं वंशत्वगित्यर्थः । अर्ज्जुनः ककुभस्तस्याध-स्तले निधापयेत् स्थापयेत् ॥ ८४—८६ ॥

* पूर्व्ववदित्यत्र कीर्त्तितमिति वा पाठः ।

कुक्कुटाण्डकपालानि कतकं मधुकं समम्।
तथा समुद्रमण्डूकी-मणिचूर्णंश्च दापयेत्।
गुटिका मूत्रपिष्टास्ता व्रणानां प्रतिसारणम्॥ ८७॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
रोमाण्येतेन जायन्ते लेपात् पाणितलेष्वपि॥ ८८॥
चतुष्पदानां त्वग्रोम-खुरशृङ्गास्थिभस्मना।
तैलाक्ता चूर्णिता भूमिर्भवेद् रोमवती पुनः॥ ८९॥
कासीसं नक्तमालस्य पल्लवांश्चैव संहरेत्।
कपित्थरसपिष्टानि रोमसञ्जननं परम्॥ ९०॥
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति।
क्षुरकर्त्तरिसन्दंशैस्तस्य रोमाणि निर्हरेत्॥ ९१॥
शङ्खचूर्णस्य भागौ द्वौ हरितालश्च भागिकम्।
शुक्तेन सह पिष्टानि लोमशातनमुत्तमम्॥ ९२॥
तलं भल्लातकस्याथ स्नुहीक्षीरं तथैव च।
प्रगृह्यैकत्र मतिमान् रोमशातनमुत्तमम्॥ ९३॥
कदलीदीर्घवृन्ताभ्यां भस्मालं लवणं शमी-
वीजं शीतोदपिष्टं वा रोमशातनमाचरेत्॥ ९४॥

तयोरेव शुक्लकृष्णव्रणयोः स्वप्रयोगैरवशिष्टशुक्लत्वकार्ष्ण्ययोः सवर्णकरणं निर्दिशन्नाह- कुक्कुटाण्डेत्यादि। समुद्रमण्डूकी जलशुक्तिः। मणिचूर्णानि स्फटिकादिचूर्णानि। श्रीब्रह्मदेवस्तु समुद्रमण्डूकीं मुक्ताशुक्तिमाह - जेज्जटाचार्य्येण छेद्यरोगप्रतिषेधे व्याख्यातत्वं मणेश्चूर्णं मौक्तिकचूर्णमिति। प्रतिसारणम् घर्षणम्। अस्य तु सावर्ण्यमेव कर्म्मेति कृष्णपाण्डुकर्म्मस्यास्य भेदः, नेदमुपक्रमान्तरं, शुक्लकृष्णकर्म्मणोरेव शेषत्वादतो न संख्यातिरेकः॥ ८७॥

लोमसञ्जननमाह- हस्तिदन्तेत्यादि। मुख्यं श्रेष्ठमित्यर्थः। एतेन हस्तिदन्तमसी रसाञ्जनेन, 'अजाक्षीर सहितेन' इति वाक्यशेषः। पाणितलं हस्ततलम्। अयं योगः केशशाते सति बहुशो दृष्टप्रत्ययः। चतुष्पदानामित्यादि। चतुष्पदाः अश्वगोमहिषादयः। तैलाभ्यक्ता पश्चात् चूर्णिता त्वग्रोमादिभस्मचूर्णसंयुक्ता रोमवती भवेदित्यर्थः॥ ८८। ८९॥

कासीसमित्यादि। नक्तमालस्य पल्लवान् करञ्जस्य कोमलपल्लवानित्यर्थः। रोमशातनमाह- रोमाकीर्ण इत्यादि। कर्त्तरी श्मश्रुकर्त्तनाङ्गप्रयुक्तं शस्त्रम्। सन्दंशः नासालोमापहो यन्त्रभेदः, नासावोटिकेति लोके॥ ९०—९२॥

औषधकृतं लोमशातनमाह—तैलमित्यादि। दीर्घवृन्तः श्योनाकः। आलम् हरितालम्।

आगारगोधिकापुच्छं रम्भालं वीजमैङ्गुदम्।
दग्ध्वा तद् भस्मतैलाम्बु सूर्य्यपक्वं कचान्तकृत् ॥ ९५ ॥
वातदुष्टो व्रणो यस्तु रुक्षश्चात्यर्थवेदनः।
अधःकाये विशेषेण तत्र वस्तिर्विधीयते ॥ ९६ ॥
मूत्राघाते मूत्रदोषे शुक्रदोषेऽश्मरीव्रणे *।
तथैवार्त्तवदोषे च वस्तिरप्युत्तरो हितः ॥ ९७ ॥
यस्माच्छुध्यति वन्धेन व्रणो याति च मार्दवम्।
रोहत्यपि च निःशङ्कस्तस्माद् वन्धो विधीयते ॥ ९८ ॥
स्थिराणामल्पमांसानां रौक्ष्याद‌नुपरोहताम्।
पत्रदानं भवेत् कार्य्यं यथादोषं यथर्त्तु च ॥
एरण्डभूर्ज्जपूतीक- हरिद्राणान्तु वातजे।
पत्रमाश्ववलं यच्च काश्मरीपत्रमेव च ॥
पत्राणि क्षीरवृक्षाणामौदकानि तथैव च।
दूषिते रक्तपित्ताभ्यां व्रणे दद्याद् विचक्षणः ॥

श्लोकार्द्धगतमपि शमीवीजमिति समस्तपदम्। तत्र रक्तफला शमी प्रलेपे भक्षणे च केशघ्नीति वृद्धवैद्या वदन्ति। शीतोदपिष्टमिति। एतद सर्व्वं शीतजलपिष्टमित्यर्थः। आगारगोधिका गृहगोधिका ब्राह्मणीति लोके। रम्भा कदली। आलं हरितालम्। वीजमैङ्गुदम् इङ्गुदीवृक्षवीजम्। कचान्तकृत् केशान्तकारीत्यर्थः। अत्र गयी तु तैलं भल्लातकस्येत्यादि सर्व्वं योगान्तरं कृत्वा कोशातकीभिरित्यादि पठति। तच्चाभावान्न लिखितम् ॥ ९२—९५ ॥

वस्तिविषयमाह—वातदुष्ट इत्यादि। वस्तिरत्र निरूहः स्नैहिकश्च। उत्तरवस्तिविषयमाह—मूत्राघात इत्यादि। मूत्राघातादयो यदा व्रणनिमित्ता भवन्ति तदोत्तरवस्तिविधानम् ॥ ९६। ९७ ॥

व्रणस्य वन्धकरणे हेतुमाह—यस्मादित्यादि। निःशङ्कः निर्गता शङ्का निर्वातमक्षिकादिपतनानां यत्र सः। निःसङ्ग इति केचित् पठन्ति। तत्र निर्गतोऽभिघातहेतोः सङ्गः सम्बन्धो यस्येत्यर्थः सः। आलेपविधौ वन्ध्यावन्ध्यस्योक्तत्वाद् विषयोऽस्य प्रयोगश्चोक्तः। अत्र केचित् यस्माच्छुध्यतीत्यतः प्राक् "अदृष्टिः समवर्त्तित्वं वेदनोपशमः सुखम्। आलेपनाद्यैः शोफस्य साधुबन्धाद् विधीयते" इति पठन्ति। स तु पाठो निबन्धकारैर्न धृतः, इत्यस्माभिर्न लिखितः न व्याख्यातश्च ॥ ९८ ॥

पत्रदानविषयमाह—स्थिराणामित्यादि। दोषविशेषेण पत्रविशेषमाह—एरण्डेत्यादि। सुगमम्। पत्रमाश्ववलमिति अश्ववला उपोदकी (पुँइ इति लोके) तस्या इदमाश्ववलम्। ब्रह्मदेवस्तु अश्ववलामुपवनभूमौ मेथिकाकारवृक्षं कथयति। क्षीरवृक्षा वटादयः। औदकानि च कुमुदादीनि।

* तथानिले इति पाठान्तरम्।

पाठामूर्व्वागुड़ूचीनां काकमाचीहरिद्रयोः।
पत्रञ्च शुकनासाया योजयेत् कफजे व्रणे ॥ ९९ ॥
अकर्कशमविक्लिन्नमजीर्णं सुकुमारकम्।
अजन्तुजग्धं मृदु च पत्रं गुणवदुच्यते ॥ १०० ॥
स्नेहमौषधसारञ्च पट्टः पत्रान्तरीकृतः।
नादत्ते यत् ततः पत्रं लेपस्योपरि दापयेत् ॥ १०१ ॥
शैत्यौष्ण्यजननार्थाय स्नेहसंग्रहणाय च।
दत्तौषधेषु दातव्यं पत्रं वैद्येन जानता ॥ १०२ ॥
मक्षिका व्रणजातस्य निःक्षिपन्ति यदा क्रिमीन्।
श्वयथुर्भक्षिते तैस्तु जायते भृशदारुणः ॥
तीव्रा रुजो विचित्राश्च रक्तास्रावश्च जायते।
सुरसादिर्हितस्तत्र धावने पूरणे तथा ॥
सप्तपर्णकरञ्जार्क-निम्बराजादनत्वचः।
हिता गोमूत्रपिष्टाश्च सेकः क्षारोदकेन वा ॥
प्रच्छाद्य मांसपेश्या च क्रिमीनपहरेद् व्रणान्।
विंशतिं कृमिजातीस्तु वक्ष्याम्युपरिभागशः ॥ १०३ ॥

कफजे पत्रदानमाह—पाठामूर्व्वेत्यादि। मूर्व्वा धनुर्गुणोपयुक्ते लताभेदे। शुकनासा चर्म्मकार-वटः। कुंप्यकं इति कान्यकुब्जे, चर्म्मकारजम्बूपलासिकेति मालवीया वदन्ति। अजीर्णं नवम्। सुकुमारकं तनु। अजन्तुजग्धं न क्रिमिभक्षितम्। मृदु कोमलम् ॥ ९९। १०० ॥

पत्रदानस्य प्रयोजनमाह—स्नेहमित्यादि। ततस्तस्माल्लेपस्योपरि पत्रं दापयेदिति सम्बन्धः। यत् यस्मात् कारणात् पट्टो व्रणबन्धनद्रव्यं नादत्ते न गृह्णात्येव। किंविशिष्टः पट्टः? पत्रान्तरीकृतः पत्रेण अन्तरीकृतो व्यवधापितः। किं नादत्ते? स्नेहं शतधौतघृतादिकम्। न केवलं स्नेहम्, औषधसारञ्च; औषधस्य सारं वीर्य्यम्। अन्ये तु "स्नेहमौषधसारञ्च पट्टवस्त्रान्तरीकृतम्। न दूषयति यत् पत्रं तल्लेपोपरि दापयेत्" इति पठन्ति ॥ १०१ ॥

अपरमपि पत्रदानप्रयोजनमाह—शैत्यौष्ण्येत्यादि। पित्तरक्तव्रणे शैत्यं करणीयम्, वात-कफव्रणे औष्ण्यम्, तदर्थं पत्रम्। दत्तौषधेषु व्रणेष्विति शेषः ॥ १०२ ॥

कृमिघ्नविषयमाह—मक्षिकेत्यादि। भक्षिते व्रणे इति शेषः। तैः कृमिभिर्भृशदारुणः अत्यर्थं कष्टकारी। विचित्रा- तोददाहकण्ड्वादिनानारूपा रुज इत्यर्थः। धावने प्रक्षालने। सप्तपर्ण-करञ्जेत्यादयो हिता इति शेषः। सेकः परिषेकः। प्रच्छाद्य व्रणमिति शेषः। मांसपेश्या मांसखण्डेन। वक्ष्याम्युपरीति उपर्य्युत्तरतन्त्रे कृमिप्रतिषेधीये इत्यर्थः ॥ १०३ ॥

दीर्घकालातुराणान्तु कृशानां व्रणशोषिणाम् ।
बृंहणीयो विधिः सर्व्वः कायाग्निं परिरक्षता ॥ १०४ ॥
विषजुष्टस्य विज्ञानं विषनिश्चयमेव च ।
चिकित्सितञ्च वक्ष्यामि कल्पे तु प्रतिभागशः ॥ १०५ ॥
कण्डूमन्तः सशोफाश्च ये च जत्रूपरि व्रणाः ।
शिरोविरेचनं तेषु विदध्यात् कुशलो भिषक् ॥ १०६ ॥
रुजावन्तोऽनिलाविष्टा रूक्षा ये चोर्द्ध्वं जत्रुजाः ।
व्रणेषु तेषु कर्त्तव्यं नस्यं वेदेन जानता ॥ १०७ ॥
दोषप्रच्यावनार्थाय रुजादाहक्षयाय च ।
जिह्वादन्तसमुत्थस्य हरणार्थं मलस्य च ॥
शोधनो रोपणश्चैव व्रणस्य मुखजस्य व ।
उष्णो वा यदि वा शीतः कवलग्रह इष्यते ॥ १०८ ॥
ऊर्द्ध्वं जत्रुगतान् रोगान् व्रणांश्च कफवातजान् ।
शोफस्रावरुजायुक्तान् धूमपानैरुपाचरेत् ॥ १०९ ॥
क्षतोष्मणो निग्रहार्थं सन्धानार्थं तथैव च ।
सद्योव्रणेष्वायतेषु क्षौद्रसर्पिर्विधीयते ॥ ११० ॥

बृंहणविषयमाह—दीर्घेत्यादि । बृंहणीयो देहोपचयकरो विधिः कार्य्यः । कार्य्योऽग्निं परिरक्षता इति कर्त्तव्ये यत् कायग्रहणं तद्देहगतकार्श्यदोषसात्म्याद्यनुक्तग्रहणार्थम् । 'कार्य्योऽग्निं परिरक्षता' इति केचित् पठन्ति ॥ १०४ ॥

विषघ्नं निर्द्दिशन्नाह—विषजुष्टस्येत्यादि । विषजुष्टस्य अन्नपानादेरिति शेषः । विज्ञानं लक्षणमित्यर्थः । विषनिश्चयं स्थावरजङ्गमादिविषस्य सम्यक् ज्ञानम् । प्रतिभागशः प्रत्येकमित्यर्थः ॥ १०५ ॥

शिरोविरेचनविषयमाह—कण्डूमन्त इत्यादि । जत्रु वक्षोऽंसयोः सन्धिः । शिरोविरेचनं नस्यभेदः । नस्यविषयमाह—रुजावन्त इत्यादि । नस्यं स्नैहिकमेव । कवलग्रहविषयमाह—दोषप्रच्यावनार्थायेत्यादि । दोषप्रच्यावनं त्रिफलाद्राक्षादिकषायादिभिः । शोधनः शोधनद्रव्यकृतः । रोपणो रोपणद्रव्यकृतः । उष्णो वातकफजे व्रणे, रक्तपित्तजे शीतः । धूमविषयमाह—ऊर्द्ध्वमित्यादि । धूमपानैरिति शोफस्रावरुजापहरद्रव्याणामित्यर्थः ॥ १०६—१०९ ॥

मधुसर्पिर्विषयमाह—क्षतोष्मण इत्यादि । सन्धानं घातविशेषाद् द्विधाभूतस्यावयवस्यैकभावः ॥ ११० ॥

अवगाढ़ास्त्वणुमुखा ये व्रणाः शल्यपीड़िताः।
निवृत्तहस्तोद्धरणा यन्त्रं तेषु विधीयते ॥ १११ ॥
लघुमात्रो लघुश्चैव स्निग्ध उष्णोऽग्निदीपनः।
सर्व्वव्रणेभ्यो देयस्तु सदाहारो विजानता ॥ ११२ ॥
निशाचरेभ्यो रक्ष्यस्तु नित्यमेव क्षतातुरः।
रक्षाविधानैरुद्दिष्टैर्यमैः सनियमस्तथा ॥ ११३ ॥
षण्मूलोऽष्टपरिग्राही पञ्चलक्षणलक्षितः।
षष्ट्या विधानैर्निर्द्दिष्टैश्चतुर्भिः साध्यते व्रणः ॥ ११४ ॥

यन्त्रविषयमाह—अवगाढ़ा इत्यादि। अवगाढ़ा गम्भीराः। निवृत्तहस्तोद्धरणा हस्तेनाक्रष्टुमशक्याः। आहारविषयमाह—लघुमात्र इत्यादि। लघुमात्रः मात्रया लघुरित्यर्थः। लघुरिति रक्तशालिजाङ्गलमांसादिद्रव्येण लघुः, अग्निदीपन इति यावद् देयः गव्यघृतादिः। अयमाहारो व्रणितोपासनीयोक्तोऽपि पुनरुपक्रमप्रसङ्गेनोक्त इति न पौनरुक्त्यम् ॥ १११ । ११२ ॥

विहारविशेषमाह—निशाचरेभ्य इत्यादि। नित्यमेवेति दिवारात्रमपीत्यर्थः। रक्षाविधानैरुद्दिष्टैरिति गुग्गुल्वादिधूपादिभिः, मन्त्रैश्चायुर्व्वेदविहितैः। यमैः सनियमैरिति पञ्च यमा नियमाश्च पञ्च। उक्तञ्च—"अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं तथैव च। व्यवहारनिवृत्तिश्च यमाः पञ्च प्रकीर्त्तिताः। अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमादश्च पञ्चैते नियमाः परिकीर्त्तिताः" इति। एवं यथाविषयं यथाक्रमं षष्टिरुपक्रमा उक्ताः ॥ ११३ ॥

अथ व्रणः कतिमूलः, कत्यधिष्ठानः, कतिलक्षणलक्षितः, कतिभिरौषधैः कियद्भिश्च पदार्थैः साध्यत इत्याह—षण्मूल इत्यादि। वातपित्तकफशोणितसन्निपातागन्तवः षडेव मूलं कारणानि यस्य स षण्मूलः। तथा संसर्गः पृथगर्थवशादत्र सन्निपातेनावरुद्धः, यस्मात् समेत्य सम्भूय द्वयोर्बहूनां वा निपातः सन्निपातः ( संघातः, संयोगः, संहितीभावः, संश्लेषः, समवायः, सम्बन्धः, सन्निपात इत्यनर्थान्तरम् )। त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्म्माणीत्यष्टौ व्रणवस्तूनि परिगृह्णातीति अष्टपरिग्राही; परिग्रहोऽधिष्ठानम्, आश्रय इत्यर्थः। पञ्चलक्षणलक्षित इति पञ्चानां वातपित्तकफसन्निपातागन्तूनां लक्षणानि तैर्लक्षितः। रक्तजस्य पृथग्लक्षणमपि पित्तवद्रक्तज इति वचनात्। एवं तद्वदागन्तोरपि पृथग्लक्षणं नास्ति, यदाह—पित्तरक्तलक्षण आगन्तुरिति। तर्ह्यन्यथैव पञ्चलक्षणलक्षितत्वं व्याख्यायते—गन्धवर्णस्राववेदनाकृतिभिर्लक्षणैर्लक्षित इति। षष्ट्या विधानैर्निर्द्दिष्टैरिति षष्टिसंख्यैर्विधानैः पूर्व्वमुद्दिष्टैः कृत्वा। चतुर्भिः साध्यते चतुर्भिर्वैद्यातुरपरिचारकौषधैरित्यर्थः। ब्रह्मदेवस्तु षष्ट्युपक्रमनिर्द्दिष्ट इति पठति; षष्टिरुपक्रमा निर्द्दिष्टा यस्येति च व्याख्यानयति ॥ ११४ ॥

योऽल्पौषधकृतो योगो बहुग्रन्थभयान्मया।
द्रव्याणां तत्समानानां तत्रावापो न दुष्यति॥ ११५॥
प्रसङ्गाभिहितो यो वा बहुदुर्लभभेषजः।
यथोपपत्ति तत्रापि कार्य्यमेव चिकित्सितम्॥ ११६॥
गणोक्तमपि यद् द्रव्यं भवेद् व्याधावयौगिकम्।
तदुद्धरेद् यौगिकन्तु प्रक्षिपेदप्यकीर्त्तितम्॥ ११७॥
उपद्रवास्तु द्विविधा व्रणस्य व्रणितस्य च।
तत्र गन्धादयः पञ्च व्रणस्योपद्रवाः स्मृताः॥ ११८॥
ज्वरातीसारौ मूर्च्छा च हिक्का च्छर्दिररोचकः।
श्वासकासाविपाकाश्च तृष्णा च व्रणितस्य च॥ ११९॥

इदानीमल्पौषधेषु शोधनरोपणादियोगेष्वावापविषयमूहवीजं निर्द्दिशन्नाह—य इत्यादि। तत्समानानामिति तेषां शोधनरोपणद्रव्याणां रसगुणवीर्य्यविपाकैः समानानि तुल्यानि द्रव्याणि तत्समानानि, तेषामावापो निक्षेपः। तत्र तस्मिन् अल्पौषधे योगे न दुष्यति। अल्पग्रन्थं मृगयता योगो योऽल्पौषधैः कृत इति केचित् पठन्ति। तत्र मृगयता अन्वेषयता ग्रन्थकारेणे-त्यर्थः। इदानीं यथालाभमौषधप्रयोगमाह—प्रसङ्गाभिहितो यो बहुभेषजो दुर्लभभेषजो वा, तत्र यथोपपत्ति यथालाभं चिकित्सितं भेषजं कार्य्यम्। प्रसङ्गाभिहितो यथा—"पिण्डीतकत्रयं रोध्रं पूर्व्वं ये च प्रकीर्त्तिताः। वर्गास्त्रयः प्रलेपे ते शोफे सर्व्वकृते हिताः" इति, अत्र हि वातपित्तकफशोफोक्तौषधगणत्रयं प्रकरणसमानत्वात् सन्निपातौषधप्रसङ्गाभिहितम्; तत्र यथालाभं भेषजानां चिकित्सितं कार्य्यम्। बहुभेषजो यथा—"आदेय द्वे पञ्चमूल्यौ तु गणो यश्चानिलापहः" इति। अत्र भद्रदार्व्वादिगणस्य बहुभेषजत्वाद् यथालाभमेव चिकित्सितं कार्य्यम्। दुर्लभभेषजो यथा—किञ्चिदेव भेषजं क्वचिद् देशकालादौ दुर्लभम्; तत्र यथालाभं चिकित्सितं कार्य्यमिति। एकत्वैव व्याधौ यौगिकस्यानुक्तस्याप्युपयोगमयौगिकस्य परित्यागं चोपदर्शयन्नाह—गणोक्तमित्यादि॥ ११५—११७॥

इदानीमुपद्रवानाह—उपद्रवा इत्यादि। मूर्च्छा चेति चकारेणानुक्तानामपि विसर्पादीनां समु-

व्रणक्रियास्त्वेवमासु व्यासेनोक्तास्वपि क्रियाम्।
भूयोऽप्युपरि वक्ष्यामि सद्योव्रणचिकित्सिते ॥१२०॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने द्विव्रणीयचिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥

न्वयः। इदानीमनागतावेक्षणं निर्दिशन्नाह—व्रणेत्यादि। एवमनेन प्रकारेण पूर्व्वोक्तेन आसु अमूषु व्रणक्रियासु व्यासेन विस्तरेणोक्तास्वपि भूयोऽपि पुनरपि उपरि सद्योव्रणचिकित्सिते क्रियां वक्ष्यामि। गयी तु "व्रणक्रियास्विमास्वेव संक्षेपोक्तास्विह क्रियाम्" इति पठति। तत्र व्रणक्रियासु इमासु इह संक्षेपेणोक्तासु, उपरि विस्तरतः क्रियां वक्ष्यामीत्यर्थः ॥ ११८—१२० ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
द्विव्रणीयचिकित्सितव्याख्यानाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अथातः सद्योव्रणचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धन्वन्तरिर्धर्म्मभृतां वरिष्ठो वाग्विशारदः ।
विश्वामित्रात्मजमृषिं शिष्यं सुश्रुतमन्वशात् ॥ २ ॥
नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः ।
नानारूपा व्रणा ये स्युस्तेषां वक्ष्यामि लक्षणम् ॥ ३ ॥
आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा ।
अर्द्धचन्द्रप्रतीकाशा विशालाः कुटिलास्तथा ॥
शरावनिम्नमध्याश्च यवमध्यास्तथापरे ।
एवम्प्रकाराकृतयो भवन्त्यागन्तवो व्रणाः ॥
दोषजा वा स्वयं भिन्ना न तु वैद्यनिमित्तजाः ॥ ४ ॥
भिषग्व्रणाकृतिज्ञो हि न मोहमधिगच्छति ।
भृशं दुर्द्दर्शरूपेषु व्रणेषु विकृतेष्वपि ॥ ५ ॥

अथात इत्यादि । गुरुपूर्व्वक्रमं निर्द्दिशन्नाह—धन्वन्तरिरित्यादि । धर्म्मभृतामन्येषामपि राजर्षीणां मध्ये वरिष्ठः प्रधानतमः । वाग्विशारद इति अर्थवतीं सलक्षणां हृदयग्राहिणीमपुनरुक्तां वाचं वदतीति वाग्विशारदः । अन्वशात् शिक्षितवान् । व्रणाकृतिमात्रे विशेषहेतुं निर्द्दिशन्नाह—नानाधारमुखैरित्यादि । नानास्थानानि देहस्थानानि तेषु निपातितैः निक्षिप्तैरित्यर्थः । अनेन श्लोकेन नानाप्रकारशस्त्रधारा नानाप्रकारशस्त्रमुखानि नानाप्रकारदेहस्थानानि च त्रीणि व्रणाकृतिकारणान्युक्तानि ॥ १—३ ॥

इदानीं व्रणाकृतिमाह—आयता इत्यादि । चतुरस्राश्चतुष्कोणाः, त्र्यस्रास्त्रिकोणाः, मण्डलिनो वर्त्तुलाः, विशाला विस्तीर्णाः, कुटिला वक्राः, स्वयं भिन्नाः पक्वभिन्ना इत्यर्थः, न तु वैद्यनिमित्तजाः, तेषामायतविशालसमप्रविभक्तलक्षणा आकृतयो व्रणगुणत्वेनैवोक्ताः, यतस्ता आकृतीर्भिषजः प्रदेशविशेष एव कुर्व्वन्ति ॥ ४ ॥

व्रणाकृतिज्ञानफलमाह—भिषग्व्रणाकृतिज्ञ इत्यादि । दुर्द्दर्शरूपेषु गोशृङ्गवदुन्नतमांसप्ररोहा-

अनेकाकृतिरागन्तुः स भिषग्भिः पुरातनैः।
समासतो लक्षणतः षड्विधः परिकीर्त्तितः॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम्॥ ६॥
तिरश्चीन ऋजुर्वापि यो व्रणश्चायतो भवेत्।
गात्रस्य पातनश्चापि छिन्नमित्युपदिश्यते॥ ७॥
कुन्तशक्त्यृष्टिखड्गाग्र-विषाणादिभिराशयः।
हतः किञ्चित् स्रवेत् तद्धि भिन्नलक्षणमुच्यते॥ ८॥
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥ ९॥
तस्मिन् भिन्ने रक्तपूर्ण ज्वरो दाहश्च जायते।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति॥
मूर्च्छाश्वासतृड़ाध्मानमभक्तच्छन्द एव च।
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च।
हृच्छूलं पार्श्वयोश्चापि विशेषश्चात्र मे शृणु॥ १०॥

दिषु। आगन्तुव्रणाकृतिमाह—अनेकाकृतिरित्यादि। तदेव षड्विधत्वमाह—छिन्नं भिन्नमित्यादि। छिन्नं भिन्नञ्च सधारशस्त्रेण, विद्धं पुनरणुमुखेन शस्त्रेण, क्षतादीनि पाषाणलगुडादिभिरपि स्युः॥ ५।६॥

तेषां प्रत्येकं लक्षणमाह—तिरश्चीन इत्यादि। तिरश्चीनस्तिर्य्यग्व्यवस्थित इत्यर्थः, ऋजुरवक्रः, अनयोर्द्वयोरपि आयत इति विशेषणम्। गात्रपातनं शस्त्रादिप्रहारेण हस्तादिपातनं, चकारादपातनञ्च किञ्चित् छिन्नम्॥ ७॥

भिन्नमाह—कुन्तेत्यादि। शक्तिस्त्रिमुखी, ऋष्टिः शर्व्वला; अग्रशब्दः कुन्तादिभिः प्रत्येकं सम्बध्यते। विषाणं शृङ्गम्, आशयः आमादिस्थानम्। किञ्चित् स्रवेदिति किमप्यनिर्द्दिष्टमित्यर्थः। तत्रोदरं यकृत् प्लीहा च रक्तं, वस्तिमूलं, पुरीषाशयः पुरीषम्॥ ८॥

के पुनराशया इत्याह—स्थानान्यामाग्निपक्वानामित्यादि। स्थानशब्दः आमादिभिः प्रत्येकमभिसम्बध्यते॥ ९॥

तस्मिन्नित्यादि। तस्मिन् कोष्ठे इत्यर्थः। रक्तपूर्ण इति सर्व्वदैव रक्तस्य विद्यमानत्वात्। अत्राधो नाभे रक्तं गुदमूत्रमार्गाभ्यां प्रवर्त्तते, नाभेरूर्द्ध्वं मुखघ्राणाभ्यामिति। अभक्तच्छन्दो भोजनानभिलाषः। विड़ादिसङ्गः पुरीषादिनिरोधः। स्वेदास्रावः स्वेदस्रुतिः। लोहगन्धित्वं लोहगन्धि-

आमाशयस्थे रुधिरे रुधिरं छर्दयेत् पुनः।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम्॥ ११॥
पक्वाशयगते चापि रुजो गौरवमेव च।
शीतता चाप्यधो नाभेः खेभ्यो रक्तस्य चागमः॥ १२॥
अभिन्नेऽप्याशयेऽन्त्राणां खैः सूक्ष्मैरन्त्रपूरणम्।
पिहितास्ये घटे यद्वल्लक्ष्यते तस्य गौरवम्॥ १३॥
सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयाद् विना।
उत्तुण्डितं निर्गतं वा तद् विद्धमिति निर्दिशेत्॥ १४॥
नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम्।
विषमं व्रणमङ्गे यत् तत् क्षतं त्वभिनिर्दिशेत्॥ १५॥
प्रहारपीड़नाभ्यान्तु यदङ्गं पृथुतां गतम्।
सास्थि तत् पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम्॥ १६॥
विगतत्वग् यदङ्गं हि सङ्घर्षादन्यथापि वा।
उषास्रावान्वितं तत् तु घृष्टमित्युपदिश्यते॥ १७॥

भावो मुखस्य। विशेषमित्यादि। पक्वाशयगते पक्वाशयस्थे, रुधिर इति शेषः। खेभ्यः स्रोतोभ्यः॥ १०—१२॥

अभिन्ने इत्यादि। कथमभिन्नेऽप्यन्त्राशये रक्तेनान्त्रपूरणं युज्यते इत्याह—पिहितास्य इत्यादि। यथा पिहितास्ये आच्छादितमुखे घटे सूक्ष्मैः खैरन्ध्रैरुदकपूरणं लक्ष्यते इत्यर्थः। तस्य चान्त्राशयस्य गौरवम्, भवतीति शेषः॥ १३॥

विद्धलक्षणमाह—सूक्ष्मास्येत्यादि। आशयाद् विनेति आशयमामादिस्थानम्, उत्तुण्डितम् उन्नमितमुखं, निर्गतं निर्गतशल्यम्॥ १४॥

क्षतलक्षणमाह—नातिच्छिन्नमित्यादि। नातिच्छिन्नं नात्यर्थं द्विधाभूतं, नातिभिन्नं नात्यर्थविदीर्णम्, उभयोरिति छिन्नभिन्नयोरित्यर्थः। विषमं व्रणमिति व्रणस्य वैषम्यं निम्नोन्नतत्वं न तु कृच्छ्रसाध्यत्वम्॥ १५॥

पिच्चितलक्षणमाह—प्रहारेत्यादि। प्रहारो मुद्गराद्यभिघातः, पीड़नं कपाटादियन्त्रेण, पृथुतां विस्तीर्णतां गतमिति। सास्थि अस्थियुक्तं, मज्जरक्तपरिप्लुतमिति मज्जरक्ताभिव्याप्तमित्यर्थः॥ १६॥

घृष्टलक्षणमाह—विगतत्वगित्यादि। विगतत्वक् त्वग्रहितम्। सङ्घर्षात् द्रव्यान्तरेण इत्यर्थः। अन्यथा अन्येन प्रकारेणेत्यर्थः। अन्यथापि वेत्यस्य स्थाने केचिदन्यजादपि इति पठन्ति, तत्रान्यजात् सङ्घर्षात् द्रव्यान्तरजात् सङ्घर्षणादित्यर्थः। उषा दाहविशेषः॥ १७॥

छिन्ने भिन्ने तथा विद्धे क्षते वासृगतिस्रवेत्।
रक्तक्षयाद्रुजस्तत्र करोति पवनो भृशम्॥
स्नेहपानं हितं तत्र तत्सेको विहितस्तथा।
वेशवारैः सकृशरैः सुस्निग्धश्चोपनाहनम्॥
धान्यस्वेदांश्च कुर्व्वीत स्निग्धान्यालेपनानि च।
वातघ्नौषधसिद्धैश्च स्नेहैर्वस्तिर्विधीयते॥ १८॥
पिच्चिते च विघृष्टे च नातिस्रवति शोणितम्।
अगच्छति भृशं तस्मिन् दाहः पाकश्च जायते॥
तत्रोष्मणो निग्रहार्थं तथा दाहप्रपाकयोः।
शीतमालेपनं कार्य्यं परिषेकश्च शीतलः॥ १९॥
षट्स्वेतेषु यथोक्तेषु छिन्नादिषु समासतः।
ज्ञेयं समर्पितं सर्व्वं सद्योव्रणचिकित्सितम्॥ २०॥
अत ऊर्द्ध्वं प्रवक्ष्यामि छिन्नानान्तु चिकित्सितम्।
ये व्रणा विवृताः केचिच्छिरःपार्श्वावलम्बिनः।
तान् सीव्येद् विधिनोक्तेन बध्नीयाद् गाढ़मेव च॥ २१।२२॥

लक्षणैः षड्विधं सद्योव्रणं निर्दिश्य इदानीं चतुर्षु छिन्नादिषु चिकित्सामाह—छिन्ने भिन्ने तथेत्यादि। तत्सेको विहित इति कोष्णस्नेहसेक इत्यर्थः। वेशवारैर्निरस्थिस्विन्नस्निग्धपिष्टमांसैः। कृशरा तिलतण्डुलमाषकृता यवागूः। उपनाहनं बन्धनम्। धान्यस्वेदानित्यादि। धान्यस्वेदो माषादिकोष्णधान्यस्वेद इत्येके, अन्ये तु धान्यं धान्याम्लम्, अम्लशब्दोत्तरपदलोपेन। आलेपनशब्दो लेपने। स्नेहपानमूर्द्ध्वनाभिजेषु, नाभेरधोगतेषु वस्तिरिति। ( नाभेर्व्वाह्यम्। ) वातघ्नौषधसिद्धैरित्यादि॥ १८॥

इदानीं पिच्चितघृष्टयोरस्रुतशोणितत्वेन समानधर्म्मिणोरेकमेव चिकित्सितमाह—पिच्चित इत्यादि। अगच्छति अस्रवति सति। तस्मिन् रुधिरे, भृशमत्यर्थम्। अन्ये तु "शीतमालेपनं कार्य्यं" इत्यस्य स्थाने शीतमालेपनं सेकः शुद्धी रक्तविमोक्षणम् इति पठन्ति।' शुद्धिर्वमनादि, तत्रोर्द्ध्वनाभिजेषु वमनम्। दाहोत्तरे मध्यकायजे रेचनम्, अधोनाभिजेषु पुनरास्थापनं, ह यावरक्तेषु रक्तमोक्षणम्॥ १९॥

उक्तमेवोपसंहरन्नाह—षट्स्वित्यादि। समर्पितं सम्यक् अर्पितम्, ज्ञेयं ज्ञातव्यम्॥ २०॥

अथ मूर्द्धाद्यवयवाश्रयं चिकित्साविशेषमाह—अत ऊर्द्ध्वमित्यादि। विवृता व्यात्तमुखाः, शिरःपार्श्वावलम्बिनः मस्तकपार्श्वावलम्बनशीलाः, अन्ये तु शिरोऽवलम्बिनस्तथा पार्श्वावलम्बिनश्च इत्येवं व्याख्यानयन्ति। विधिनोक्तेन ऋजुग्रन्थित्वेन सेवन्यादिना सीव्येदित्यर्थः॥ २१। २२॥

कर्णं स्थानादपहृतं स्थापयित्वा यथास्थितम्।
सीव्येद् यथोक्तं तैलेन स्रोतश्चाप्यभितर्पयेत्॥ २३॥
कृकाटिकान्ते च्छिन्ने तु गच्छत्यपि समीरणे।
सम्यङ्निवेश्य बध्नीयात् सीव्येच्चापि निरन्तरम्॥
आजेन सर्पिषा चत्र परिषेकन्तु कारयेत्।
उत्तानोऽन्नं समश्नीयाच्छयीत च सुयन्त्रितः॥ २४॥
शाखासु पतितांस्तिर्य्यक् प्रहारान् विवृतान् भृशम्।
सीव्येत् सम्यङ् निवेश्याशु सन्ध्यस्थीन्यनुपूर्व्वशः॥
वद्ध्वा वेल्लितकेनाशु ततस्तैलेन सेचयेत्।
चर्म्मणा गोफणावन्धः कार्य्यो यो वा हितो भवेत्॥ २५॥
पृष्ठे व्रणो यस्य भवेदुत्तानं शाययेत् तु तम्।
अतोऽन्यथा चोरसिजे शाययेत् पुरुषं व्रणे॥ २६।२७॥
छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन बुद्धिमान्।
बध्नीयात् कोशवन्धेन प्राप्तं कार्य्यश्च रोपणम्॥

कर्णमित्यादि। स्थानादपहृतमनिःशेषनश्छिन्नम्। तैलेन वातघ्नौषधसिद्धेन। कृकाटिकान्ते इत्यादि कृकाटिकान्ते कृकाटिकापर्य्यन्ते, ग्रीवायाः पश्चात्। गच्छत्यपि समीरणे इति वाते निर्वहत्यपि सीव्येदित्यर्थः। असाध्या वायुनिर्वाहिण इत्यस्यायमपवादः। सम्यङ् निवेश्य यथास्थानं स्थापयित्वा। उत्तानोऽन्नं समश्नीयादिति तथैव कृकाटिकायाः सुस्थितत्वात्, अन्नमित्युपलक्षणं तेन शयनमूत्रपुरीषोत्सर्गादि चोत्तानस्यैवेति। शयीत च सुयन्त्रित इति यथा कृकाटिका स्थिरा भवति। शाखासु पतितानित्यादि। शाखासु चतसृषु। सम्यङ् निवेश्येत्यादि आशु सन्ध्यस्थीनि सम्यङ् निवेश्य यथास्थानं स्थापयित्वा सीव्येत्। अनुपूर्व्वश इति अनुशब्दः सदृशार्थस्तेन पूर्व्वसदृशेन। वेल्लितकेनेति बन्धेनेति शेषः॥ २३—२५॥

पृष्ठे इत्यादि। उत्तानं शाययेदिति दोषस्रुत्यर्थम्, अन्यथा अनिर्गच्छन् अन्तर्व्यवस्थितो दोष उत्सङ्गं कृत्वा विकरोति, अन्यथेति अधोमुख इत्यर्थः। उक्तञ्च "उरोव्रणी उत्तानशय्यां परिहरेत्। पृष्ठव्रणी तु स्तनोरोऽवष्टभ्य, दोषस्त्वन्यथा न प्रसिच्यते, अनिर्गच्छन् विकारान् उत्पादयति" इति जेजटः। गयी तु "पृष्ठे व्रणो यस्य भवेत् अनुत्तानः शयीत सः। अतोऽन्यथा चोरसिजे शयीत पुरुषो व्रणे" इति पठति, व्याख्यानयति च—अनुत्तानोऽवाङ्मुख अधोमुखः शयीत, उरसिजेषु व्रणेषु अन्यथा उत्तान एव शयीतेति॥ २६। २७॥

शाखानां निःशेषच्छेदे विधानान्तरमाह—छिन्नामित्यादि। कोशवन्धेन स्थगिकाबन्धेन, प्राप्तं

चन्दनं पद्मकं रोध्रमुत्पलानि प्रियङ्गवः।
हरिद्रा मधुकञ्चैव पयः स्यादत्र चाष्टमम्।
तैलमेभिर्विपक्वन्तु प्रधानं व्रणरोपणम्॥
चन्दनं कर्कटाख्या च सहे मांस्याह्वयामृते *।
हरेणवो मृणालञ्च त्रिफला पद्मकोत्पले॥
त्रयोदशाङ्गं त्रिवृतमेतद् वा पयसान्वितम्।
तलं विपक्वं सेकार्थे हितन्तु व्रणरोपणे॥ २८॥
अत ऊर्द्ध्वं प्रवक्ष्यामि भिन्नानान्तु चिकित्सितम्।
भिन्नं नेत्रमकर्म्मण्यमभिन्नं लम्बते तु यत्।
तन्निवेश्य यथास्थानमव्याविद्धशिरं शनैः॥
पीड़येत् पाणिना सम्यक् पद्मपत्रान्तरेण तु।
ततोऽस्य तर्पणं कार्य्यं नस्यञ्चानेन सर्पिषा॥

युक्तं, रोपणमिति शोधनस्याग्निनैव कृतत्वात्। अस्य रोपणार्थं तैलमाह—चन्दनमित्यादि। पयो दुग्धं स्यात् भवेत् तच्चतुर्गुणमानम्। ननु संख्येयनिर्द्देशादेव संख्यासिद्धावष्टमग्रहणं किमर्थम्? उच्यते—नात्र पाको जलेन पयसैव पाकं मन्यते। अन्ये तु अष्टमग्रहणेन अष्टाङ्गसंज्ञकमिदं तैलमिति बोधयन्ति। अस्य रोपणार्थं द्वितीयं चन्दनादितैलमाह— चन्दनमित्यादि। कर्कटाख्या कर्कटश्रृङ्गी, सहे माषपर्णी मुद्गपर्णी च, अमृता गुड़ूची, हरेणवः कलायाः, मृणालमुशीरम्, उत्पलं नीलोत्पलं, त्रिवृतमिति त्रिभिर्घृतवसामज्जभिर्वृतं तैलं त्रिवृतम्, एतत् त्रयोदशाङ्गं तैलम्। पयसा क्षीरेण चतुर्गुणेन पक्वम्। वाशब्दः पूर्व्वोक्ततैलापेक्षया। मांस्याह्वयेति स्थाने सोमाह्वयेति केचित् पठन्ति। सोमाह्वया त्रिसन्धिका, सोमलतेत्यपरे। गयी तु मज्जवर्ज्जं स्नेहस्त्रिवृतमित्याह, तन्मते त्रिवृतं पयसा विपक्वं व्रणरोपणमिति व्याख्यानम्॥ २८॥

अत ऊर्द्ध्वमित्यादि। यद्यपि आशयविषये भिन्नलक्षणं प्रागुक्तं तथापि नेत्रमप्याशय एव व्याहर्त्तव्यमत आह—भिन्नं नेत्रमित्यादि। अकर्म्मण्यमवलोकनादिस्वकर्म्मणोऽसम्पादकं, अन्ये तु अकर्म्मण्यमसाध्यमित्यर्थः। तच्च अभिन्नं कर्म्मण्यञ्च साध्यं चिकित्सितव्यम्। निवेश्य स्थापयित्वा। अव्याविद्धशिरम् अनाकुलितशिरम्, अन्ये तु "ऋजुविद्धशिरम्" इति पठित्वा अकुटिलविद्धमस्तकमिति व्याख्यानयन्ति। पाणिना हस्तेन। पद्मपत्राणामन्तरत्वं उष्मत्वव्युदासार्थं माहेवार्थञ्च। ततो मधुसर्पिर्दानान्तरं तर्पणं पूरणं कार्य्यम्। अनेन वक्ष्यमाणेन इत्यर्थः। अन्ये

* सहा माषाह्वयामृते इति वा पाठः।

आजं घृतं क्षीरपात्रं मधुकश्चोत्पलानि च ।
जीवकर्षभकौ चव पिष्ट्वा सर्पिर्विपाचयेत् ।
सर्व्वनेत्राभिघाते तु सर्पिरेतत् प्रशस्यते ॥ २९ ॥
उदरान्मेदसो वर्त्तिर्निर्गता यस्य देहिनः ।
कषायभस्ममृत्कीर्णां बद्धा सूत्रेण सूत्रवित् ॥
अग्नितप्तेन शस्त्रेण छिन्द्यान्मधुसमायुतम् ।
वद्धा व्रणं सुजीर्णेऽन्ने सर्पिषः पानमिष्यते ॥
स्नेहपानादृते चापि पयःपानं विधीयते ।
शर्करामधुयष्टिभ्यां लाक्षया वा श्वदंष्ट्रया ।
चित्रासमन्वितञ्चव रुजादाहविनाशनम् ॥ ३० ॥

तु अनेन इत्यस्य स्थाने आजेनेति पठन्ति । तदेवाजं घृतमुत्पादयन्नाह—आजं घृतमित्यादि । अजाघृतं मधुकादिभिः समांशं पिष्ट्वा सर्पिर्गव्यं क्षीरपात्रं क्षीराढकं दत्त्वा विपाचयेत् । ननु चाजघृतस्य किं पेषणेन ? उच्यते—यथासम्भवं पेषणं कार्य्यम् । द्रव्यसमत्वमत्राभिधीयते—यथा अन्येषु योगेषु अर्कत्वक्क्षीरादीनां, ततश्च पञ्चद्रव्याणि यथा मात्रयाष्टौ पलानि भवन्ति तथा मात्रां परिकल्प्य घृतस्य प्रस्थं क्षीराढकमास्थाप्य विपचेदित्येष शास्त्रवृद्धव्यवहारः । अन्ये तु आजं घृतं गव्यञ्च तुल्यं कृत्वा मधुकादिकल्केन पचेत् । शेषं पूर्व्ववत् । नैवं, वृद्धा आढकशब्देन द्रवद्रव्यस्य द्विगुणतया परिभाषितत्वात् अष्टाविंशत्यधिकपलशतं गृह्णन्ति । पिष्ट्वा सर्पिर्विपाचयेदिति सर्पिरिति च सर्पिषो द्विरुच्चारणं नियमार्थं, तेन, अनेनैव घृतेन तर्पणं नस्यञ्च प्रशस्तं न तु अन्येनेति । गयी तु अजाघृतस्य प्रस्थं, क्षीरस्य पुनराढकं, मधुकादीनि चत्वारि द्विपलिकानि अष्टपलत्वेन घृतस्य पादिकानीत्याह ॥ २९ ॥

उदरमेदश्चिकित्सितमाह—उदरादित्यादि । कषायभस्ममृत्कीर्णां तां वर्त्तिमिति शेषः । कषायाः सर्ज्जकार्ज्जुनादयः, तेषां भस्म क्षारः, मृत् कृष्णमृत् । कीर्णां गुण्डितामित्यर्थः । अन्ये तु कषायचूर्णमृत्कीर्णामिति पठन्ति । बद्ध्वेति मूलमिति शेषः । सूत्रवित् शास्त्रवित् । अग्नितप्तेन शस्त्रेण छिन्द्यात्, अन्यथा अतप्तशस्त्रच्छेदने पाकभयं स्यात्, सा पुनः क्षतं यदा प्रवेश्यमाना न प्रविशति प्रविष्टा वा नावतिष्ठते तदा तस्याश्छेदः । चित्रा एरण्डः, दन्तीत्यन्ये । कल्पना चेयं—क्षीरस्य यष्टिमधुक्वथितस्य सशर्करैरण्डतैलप्रक्षेपस्य पानमित्येको योगः । श्वदंष्ट्राक्वथितं क्षीरं सलाक्षाचित्रातिलतैलप्रक्षेपं पीयत इति द्वितीयो योगः । वाशब्दात् केचिदेकमेव योगमामनन्ति, तथा च वृद्धवाग्भटः—"सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् । क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः श्रुतम् । रुग्दाहजित् सयष्ट्याह्वैः परं पूर्व्वोदितो विधिः" इति । क्षीरपाकविधिरयम्, यथा—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः" इति । प्रतिदिनं क्षीरचतुष्पलं पेयम् । शर्करैरण्डतैलन्तु प्रत्येकं कार्षिकम् । एवं द्वितीययोगेऽपि रुजादाहविनाशनमिति पयःपानमिति सम्बन्धः ॥ ३० ॥

आटोपो मरणं वा स्याच्छूलो वाऽच्छिद्यमानया।
मेदोग्रन्थौ च यत् तैलं वक्ष्यते तच्च योजयेत्॥ ३१।३२॥
त्वचोऽतीत्य शिरादीनि भित्त्वा वा परिहृत्य वा।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान्॥ ३३॥
तत्रान्तर्लोहितं पाण्डुं शीतपादकराननम्।
शीतोच्छ्वासं रक्तनेत्रमानद्धञ्च विवर्ज्जयेत्॥ ३४॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम्।
आस्थापनञ्च निःस्नेहं कार्य्यमुष्णैर्विशोधनः॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम्॥ ३५।३६॥
अतिनिःस्रुतरक्तो वा भिन्नकोष्ठः पिबेदसृक्॥ ३७॥
स्वमार्गप्रतिपन्नास्तु यस्य विण्मूत्रमारुताः।
व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवति मानवः॥ ३८॥

मेदोवर्त्तेरच्छेदे फलमाह—आटोप इत्यादि। अच्छिद्यमानया अकृन्त्यमानया। मेदोग्रन्थौ तु यत्तैलमिति द्विकरञ्जेत्यादिकम्॥ ३१।३२॥

मेदोवर्त्तिप्रत्यासत्त्या जठरगतशल्यलक्षणमाह त्वचोऽतीत्येत्यादि। त्वचोऽतीत्य त्वचोऽतिक्रम्य, त्वचः सप्त, सिरादीनि सिरामांसस्नायुसन्ध्यस्थीनि। शिराच्छेदलिङ्गन्तु सुरेन्द्रगोपप्रतिममित्यादिपूर्व्वमुक्तम्। प्रतिष्ठितमवस्थितम्। उक्तानुपद्रवानिति शल्यापनयनीये 'कोष्ठगते त्वाटोपानाहविद्रध्यादीन्' इति॥ ३३॥

कोष्ठगतशल्यस्य असाध्यस्य लक्षणमाह—तत्रान्तर्लोहितमित्यादि। अन्तर्लोहितं कोष्ठमध्यपतितरुधिरमित्यर्थः। पाण्डुं श्वेतं। शीतपादकराननं शीतचरणहस्तमुखम्। आनद्धं स्वमार्गादप्रवर्त्तमानदोषमलम्। एवंविधं शल्यवन्तं पुमांसं विवर्ज्जयेत् परिहरेदित्यर्थः॥ ३४॥

साध्यस्य चिकित्सितमाह—आमाशयस्थ इत्यादि। पक्वाशयस्थे पित्ताशयस्थे इत्यर्थः। वाताशयस्थे पुनरास्थापनमेव। उष्णैर्विशोधनैर्गोमूत्रादिभिरास्थापनं कार्य्यमिति सम्बन्धः। विशुद्धस्य रक्तानुलोमनमाह—यवकोलेत्यादि॥ ३५।३६॥

अतिसङ्क्षितरक्तस्य चिकित्सामभिधाय अतिनिःस्रुतरक्तस्य चिकित्सां निर्द्दिशन्नाह—अतिनिःस्रुतेत्यादि। पिबेदसृग् इति जीवानुबन्धनार्थम्॥ ३७॥

भिन्नकोष्ठस्य साध्यस्य लक्षणमाह—स्वमार्गेत्यादि। व्युपद्रवः विगता उपद्रवा यस्य सः। उपद्रवाः ज्वराध्मानादयः॥ ३८॥

अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं नान्यथा भवेत् ।
पिपीलिकाशिरोग्रस्तं तदप्येके वदन्ति तु ॥ ३९ ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ।
प्रवेशयेत् कृत्तनखो घृतेनाक्तं शनैः शनैः ॥ ४० ॥
प्रवेशयेत् क्षीरसिक्तं शुष्कमन्त्रं घृताप्लुतम् ॥ ४१ ॥
अङ्गुल्याभिमृशेत् कण्ठं जलेनोद्वेजयेदपि ।
हस्तपादेषु संगृह्य समुत्थाप्य महाबलाः ॥
भवत्यन्तःप्रवेशस्तु यथा निर्धुनुयुस्तथा ।
तथान्त्राणि विशन्त्यन्तः स्वां कलां पीडयन्ति च ॥ ४२।४३ ॥
व्रणाल्पत्वाद् बहुत्वाद् वा दुष्प्रवेशं भवेत् तु यत् ।
तदापाट्य प्रमाणेन भिषगन्त्रं प्रवेशयेत् ॥ ४४ ॥
यथास्थानं निविष्टे च व्रणं सीव्येदतन्द्रितः ॥ ४५ ॥

इदानीं कोष्ठगतान्त्रभेदमाह—अभिन्नेत्यादि । नान्यथेति यथैव स्थितानि तथैव प्रवेश्यानि तेनैव प्रकारेण इत्यर्थः । अपरे तु अन्यथा व्याख्यानयन्ति यथा—अभिन्नादन्यथा अपरप्रकारं भिन्नमन्त्रं प्रवेश्यं न भवेत्, तथाच वृद्धवागभटः—"अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न ह्यतोऽन्यथा" इति । भिन्नमपि मतान्तरेण प्रवेश्यमिति निर्दिशन्नाह—पिपीलिका शिरोग्रस्तमित्यादि । तदपि भिन्नमपि, अन्त्रं प्रवेश्यमिति सम्बन्धः । पिपीलिकाशिरोग्रस्तमित्यनेन पिपीलिकावदनसन्दंशसहिते अन्त्रे तासाञ्च कवन्धच्छेदः कार्य्यं इति व्याख्यानयन्ति । गयी तु अलाङ्कुलशिरोग्रस्तमिति पठति । तत्र अलाङ्कुलः स्थूलपिपीलिकः । प्रक्षाल्येत्यादि । पयसा क्षीरेण, दिग्धं गुण्डितं, आवृतमित्यर्थः । पांशुः धूलिः । कृत्तनखश्छिन्ननखः ॥ ३९—४१ ॥

अप्रविष्टे अन्त्रे स्वस्थानानयनार्थम् अन्त्रस्य उपायत्रयमाह—अङ्गुल्येत्यादि । अभिमृशेत् स्पृशेत् । उद्वेजयेत् त्रासयेत् । समुत्थाप्य ऊर्द्धं नीत्वा अन्त्रभेदवन्तं पुरुषं महाबलाः पुरुषाः तथा निर्धुनुयुः, यथा अन्त्रस्य अन्तःप्रवेशो भवतीति सम्बन्धः । निर्धुनुयुः आलोडयेयुरित्यर्थः । एभिः प्रयोगैः किं भवतीत्याह—तथान्त्राणि इत्यादि । अन्त्राणि यथा अन्तः विशन्ति तथा स्वां कलां पीडयन्ति स्वकीया कला पञ्चमी मलधरा तां पीडयन्ति । दुष्प्रवेशस्य चिकित्सामाह—व्रणाल्पत्वादित्यादि । व्रणाल्पत्वाद् व्रणसूक्ष्मत्वात् बहुत्वाद् व्रणस्य बहुलत्वात् । तत्र विपुलत्वे सति स व्रणः सीव्यः । केचिद् बहुत्वादिति अन्त्रविशेषणमङ्गीकृत्य व्रणसूक्ष्मत्वे व्रणबहुत्वे चोभयत्रापि पाटनपूर्व्वं प्रवेशं मन्यन्ते, तच्च पाटनं यावता अन्त्रं प्रविशति तावत् कार्य्यम् । अतन्द्रितः

स्थानादपेतमादत्ते प्राणान् गुम्फितमेव वा ॥ ४६ ॥
वेष्टयित्वा तु पट्टेन घृतसेकं प्रदापयेत्।
घृतं * पिबेत् सुखोष्णञ्च चित्रातैलसमन्वितम्।
मृदुक्रियार्थं शकृतो वायोश्चाधःप्रवृत्तये ॥ ४७ ॥
ततस्तैलमिदं कुर्य्याद्रोपणार्थं चिकित्सकः।
त्वचोऽश्वकर्णधवयोर्मोचकीमेषशृङ्गयोः ॥
शल्लक्यर्ज्जुनयोश्चापि विदार्य्याः क्षीरिणां तथा।
बलामूलानि चाहृत्य तैलमेतैर्विपाचयेत्।
व्रणं संरोपयेत् तेन वर्षमात्रं यतेत च ॥ ४८ ॥
पादौ निरस्तमुष्कस्य जलेन प्रोक्ष्य चाक्षिणी।
प्रवेश्य तुन्नसेवन्या मुष्कौ सीव्येत् ततः परम् ॥
कार्य्यो गोफणिकाबन्धः कट्यामावेश्य यन्त्रकम्।
न कुर्य्यात् स्नेहसेकञ्च तेन क्लिद्यति हि व्रणः ॥ ४९ ॥
कालानुसार्य्यगुर्व्वेला-जातीचन्दनपद्मकैः।
शिलादार्व्व्यमृतातुत्थैस्तैलं कुर्व्वीत रोपणम् ॥ ५० ॥

अनलसः। स्वस्थानेऽनिविष्टं व्याकुलितं चान्त्रं किं करोतीत्याह—स्थानादपेतमित्यादि। अपेतम् अपगतम्। प्राणान् आदत्ते गृह्णाति मारयतीत्यर्थः। गुम्फितं व्याकुलितं परस्परमतिक्रान्तमित्यर्थः ॥ ४२—४६ ॥

अतःपरं क्रियाविधिः। वेष्टयित्वेत्यादि। मधुघृताभ्यक्तं पट्टवेष्टितं घृतेन कोष्णेन सिञ्चेत्। चित्रातैलसमन्वितमिति चित्रातैलं एरण्डतैलं, तत्फलं पुरीषमार्द्दवं वातानुलोमनञ्च। इदं वक्ष्यमाणम्। त्वचोऽश्वकर्णेत्यादि। अश्वकर्णः पूर्व्वदेशप्रसिद्धः अश्वत्थसदृशः, मोचकी शाल्मली, मेषशृङ्गं कर्कटशृङ्गं, पुत्रञ्जीवक इत्यन्ये। क्षीरिण्यो न्यग्रोधोडुम्बराश्वत्थप्लक्षगर्द्दभाण्डाः, एषां त्वग्भिर्बलामूलैश्च तैलपादेन कल्कीकृतैर्जलं दत्त्वा चतुर्गुणं तैलप्रस्थं पाचयेत् इति जेज्जटः। गयी तु एषां द्रव्याणामाढकं सलिलाढकैश्चतुर्भिः क्वथितम् आढकशेषेण कषायेण अश्वकर्णादित्वक्पादकल्कं तैलप्रस्थं पाचयेदित्याह। वर्षमात्रं यतेतेति मैथुनव्यायामादि परिहरन् यत्नं कुर्व्वीतेत्यर्थः ॥ ४७।४८ ॥

मुष्कभेदचिकित्सितमाह—पादौ निरस्तमुष्कस्येत्यादि। पादौ अक्षिणी च जलेन प्रोक्ष्य सिक्त्वेत्यर्थः। मुष्कौ अण्डकोषौ, तुन्नसेवन्या सेवनीविशेषेण, प्रवेश्य सीव्येत्। गोफणिका कौपीनं कच्छोटक इत्यर्थः। कट्यामावेश्य यन्त्रकमित्यादि। पट्टयन्त्रमावेश्य, चलनभयादित्यर्थः। कालानुसारीत्यादि। कालानुसारी तगरं. शिला मनःशिला ॥ ४९। ५० ॥

* घृतमित्यत्र पय इति वा पाठः।

शिरसोऽपहृते शल्ये बालवर्त्तिं प्रवेशयेत्।
बालवर्त्यामदत्तायां मस्तुलुङ्गं व्रणात् स्रवेत्॥
हन्यादेनं ततो वायुस्तस्मादेवमुपाचरेत्।
व्रणे रोहति चैकैकं शनैर्बालमपक्षिपेत्॥ ५१॥
गात्राद् व्यपहृतेऽन्यस्मात् स्नेहवर्त्तिं प्रवेशयेत्।
कृते निःशोणिते चापि विधिः सद्यःक्षते हितः॥ ५२॥
दूरावगाढ़ाः सूक्ष्माः स्युय व्रणास्तान् विशोणितान्।
कृत्वा सूक्ष्मेण नेत्रेण चक्रतैलेन तर्पयेत्॥ ५३॥
समङ्गां रजनीं पद्मां त्रिवर्गं तुत्थमेव च।
विड़ङ्गं कटुकां पथ्यां गुड़ूचीं सकरञ्जिकाम्।
संहृत्य विपचेत् काले तैलं रोपणमुत्तमम्॥ ५४॥

अतःपरं विद्धचिकित्सारम्भः। तत्र प्रागेवोत्तमाङ्गे विद्धचिकित्सितमाह—शिरस इत्यादि। अपहृते कर्षिते। बालवर्त्तिमिति केशरचितवर्त्तिं व्रणमुखपिधानार्थं निरवशेषेण प्रवेशयेत्। बालवर्त्तिदानव्यतिरेकेण दोषमाह—बालवर्त्यामित्यादि। मस्तुलुङ्गमिति शिरसो बलाधानं स्त्यानघृताकारं मस्तुलुङ्गमुच्यते। एनमातुरं, ततः मस्तुलुङ्गस्रवणात्. एवमिति पूर्व्वोक्तेन प्रकारेण, उपाचरेत् चिकित्सां कुर्य्यात्। अपक्षिपेत् कर्षेत्॥ ५१॥

सामान्यशरीरावयवस्य चिकित्सामाह—गात्राद् व्यपहृते इत्यादि। गात्रादिति स्फुटम्। अन्यस्माद् गात्रादवयवात्, अपहृते शल्य इति शेषः। स्नेहवर्त्तिः स्नेहयुक्ता पट्टवर्त्तिः, स्नेहोऽत्र तैलं पूर्व्वोक्तं चक्रतैलं वा। प्रवेशयेदिति अपहृतशल्ये गात्र इति विभक्तिविपरिणामेन सम्बन्धः। तस्मिन्नपि गात्रे पाकभयात् निःशोणिते कृते, विधिः सद्यःक्षते हित इति सद्यःक्षतविषये यो विधिः, सोऽत्रापि हितः हितकारको मधुघृतादिः सन्धानार्थम्॥ ५२॥

विषयविशेषेण विद्धचिकित्सितमाह—दूरावगाढा इत्यादि। दूरावगाढा दूरानुप्रविष्टा इत्यर्थः। सूक्ष्मेण नेत्रेणेति नेत्रेण व्रणप्रक्षालनयन्त्रेण, तच्च अष्टाङ्गुलं मुद्गतुल्यस्रोतः। चक्रतैलेनेति तिलतैलपीड़नोपकरणकाष्ठेभ्योऽणुतैलन्यायेन गृहीतं तैलं चक्रतैलं, सद्यःपीड़नोद्धृतमात्रं वा। तर्पयेत् पूरयेत्॥ ५३॥

समङ्गामित्यादि। समङ्गा मञ्जिष्ठा, रजनी हरिद्रा, पद्मा भार्गी, त्रिवर्गस्त्रिफला, पथ्या हरीतकी, त्रिवर्गग्रहणेनैव पथ्यायां लब्धायां पुनः पथ्याग्रहणं भागद्वयप्रक्षेपार्थं, यदुक्तं—"घृते तैले च योगे च यद् द्रव्यं पुनरुच्यते। तज्ज्ञातव्यमिहाचार्य्यैर्भागतो द्विगुणं भवेत्" इति। करञ्जिका नक्तमालफलमित्यर्थः। काले इति अदोषोपप्लवकारिणि व्रणसंरोहणकाले इत्यर्थः॥ ५४॥

तालीशं पद्मकं मांसी हरेण्वगुरुचन्दनम्।
हरिद्रे पद्मबीजानि सोशीरं मधुकञ्च तैः।
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम्॥ ५५॥
क्षते क्षतविधिः कार्य्यः पिच्चिते भग्नवद् विधिः॥ ५६॥
घृष्टे रुजो निगृह्याशु चूर्णैरुपचरेद् व्रणम्॥ ५७॥
विश्लिष्टदेहं पतितं मथितं हतमेव च।
वासयेत् तैलपूर्णायां द्रोण्यां मांसरसाशनम्।
अयमेव विधिः कार्य्यः क्षीणे मर्म्महते तथा॥ ५८॥
रोपणे सपरीषेके पाने च व्रणिनां सदा।
तैलं घृतं वा संयोज्यं शरीरर्त्त नवेक्ष्य हि॥ ५९॥
घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ।
सद्योव्रणेषु देयानि तानि वैद्येन जानता॥ ६०॥

अपरमपि रोपणतैलमाह—तालीशमित्यादि। हरेणु रेणुकानाम गन्धद्रव्यम्॥ ५५॥

क्षतपिच्चितयोश्चिकित्सितमाह—क्षते क्षतविधिरित्यादि। क्षते इति नातिभिन्नं नातिच्छिन्नमित्यादिना परिभाषिते, क्षतविधिः क्षौद्रघृततैलाभ्यङ्गादिः सर्व्वः, भग्नवद् विधिः भग्नाभिहितः बन्धसेकरूक्षभोजनादिः॥ ५६॥

घृष्टचिकित्सितमाह—घृष्टे रुज इत्यादि। रुजो निगृह्य मधुमधुरशीतादिभिर्निगृह्य निर्व्वाप्य। गयी तु विहितमधुघृतसेकादिना निर्व्वाप्येति व्याख्याति। चूर्णैः शालसर्ज्जार्ज्जुनादीनाम्। इदानीं सद्योव्रणप्रसङ्गेन विश्लिष्टादिदेहस्य सद्यःक्षतव्रणसामान्येन चिकित्सां निर्द्दिशन्नाह—विश्लिष्टदेहमित्यादि। विश्लिष्टदेहमिति नमनाकर्षणारोहणयानपतनबधसाहसादिभिः स्वस्थानच्युतावयवं देहं, पतितं वृक्षादिभ्यः, मथितं बलीयसा विलोडितं, हतं वेगवता द्रव्येण दण्डमुष्ट्यादिभिर्वा। वासयेत् स्थापयेत्। द्रोणी दारुरचिता नौसदृशी। अयमेवेत्यादि। क्षीणे अध्वादिक्षीणे। मर्म्महत इति मर्म्माणि हृदयादीनि॥ ५७। ५८॥

इदानीं विषयविशेषोक्तस्यापि तैलस्य सद्योव्रणेषु निषेधमनुक्तस्यापि घृतस्य विधिं दर्शयन्नाह—रोपणे इत्यादि। वातकफप्रकृतिकं शरीरं कालं शिशिरादिकमपेक्ष्य तैलं प्रयोज्यं, रक्तपित्तप्रकृतिकं शरीरं कालं शरदादिकं पुनरवेक्ष्य घृतं प्रयोज्यमिति॥ ५९॥

अथ सङ्क्षेपार्थं घृतान्यभिनिर्द्दिशन्नाह—घृतानीत्यादि। तानीति प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैरित्यादीनि। अथ यस्यामवस्थायां घृततैलपरीषेकाः कार्य्यास्तान्निर्द्दिशन्नाह—

सद्यःक्षतव्रणं वद्यः सशूलं परिषेचयेत्।
सर्पिषा नातिशीतेन बलातैलेन वा पुनः॥ ६१॥
समङ्गां रजनीं पद्मां पथ्यां तुत्थं सुवर्च्चलाम्।
पद्मकं मधुकं रोध्रं विडङ्गानि हरेणुकम्॥
तालीशपत्रं नलदं चन्दनं पद्मकेशरम्।
मञ्जिष्ठोशीरलाक्षाश्च क्षीरिणाश्चापि पल्लवान्॥
प्रियालवीजं तिन्दुक्यास्तरुणानि फलानि च।
यथालाभं समाहृत्य तैलमेभिर्विपाचयेत्।
सद्योव्रणानां सर्व्वेषामदुष्टानान्तु रोपणम्॥ ६२॥
कषायमधुराः शीताः क्रियाः स्निग्धाश्च योजयेत्।
सद्योव्रणानां सप्ताहं पश्चात् पूर्व्वोक्तमाचरेत्॥ ६३॥
दुष्टव्रणेषु कर्त्तव्यमूर्द्ध्वाधश्च शोधनम्।
विशोषणं तथाहारः शोणितस्य च मोक्षणम्॥
कषायं राजवृक्षादौ सुरसादौ च धावनम्।
तयोरेव कषायेण तैलं शोधनमिष्यते।
क्षारकल्पेन वा तैलं क्षारद्रव्येषु साधितम्॥ ६४॥

सद्य इत्यादि। सर्पिषा नातिशीतेनेति पित्तरक्तप्रकृतिके शरीरे काले च शरदादिके परिषेकः; बलातैलेन वातकफप्रकृतौ देहे काले च शीतले इति॥ ६०। ६१॥

सामान्येन सर्व्वव्रणानामदुष्टानां रोपणार्थं तैलमाह—समङ्गामित्यादि। समङ्गा मञ्जिष्ठा, पद्मा भार्गी, सुवर्च्चला सूर्य्यभक्ता, हरेणुकं रेणुका, तरुणानि आमानि। अथ कियन्तं कालं सद्योव्रणक्रियेत्याह—कषायेत्यादि। पूर्व्वोक्तं द्विव्रणीयोक्तम्। अमुं श्लोकं जेज्जटाचार्य्योऽनार्षमाह, गयी त्वार्षम्, इत्यस्माभिरप्यङ्गीकृतः॥ ६२। ६३॥

सर्व्वेषामदुष्टानां रोपणमुक्तं, दुष्टानां किं विधानमिति तदाह - दुष्टव्रणेष्वित्यादि। ऊर्द्ध्वशोधनं वमनशिरोविरेचने, अधःशोधनं विरेचनास्थापनं, विशोषणं लङ्घनम्, आहारोऽपि विशोषण एव तिक्तकटुकषायादिः। तत्रोर्द्ध्वनाभिजेषु कफजेषु वमनं, पित्तजेषु पित्ताशयजेषु च विरेचनं, वाताशयाधःकायजेषु मलेन मार्गावरणदुष्टसमीरणदूषितेषु पुनरास्थापनम्, शिरसिजेषु तु कफजेषु शिरोविरेचनम्। राजवृक्षादाविति आरग्वधादावित्यर्थः। तयोरेव गणयोः कषायेण पादकल्कं तैलं शोधनं साध्यते। क्षारकल्पेन वेति क्षारप्रस्थमुदकप्रस्थैः षड्भिरेकविंशतिवारान् स्रावितं तस्मिन् तैलप्रस्थाच्चतुर्गुणे क्षारोदके तैलं पाचयेत्, अत्र तु क्षारद्रव्याण्येव कल्कानि इत्येके। अकल्कमेवैतत् तैलमित्यन्ये। क्षारद्रव्येषु मुष्ककपलाशादिषु॥ ६४॥

द्रवन्ती चिरविल्वश्च दन्ती चित्रकमेव च।
पृथ्वीका निम्बपत्राणि कासीसं तुत्थमेव च॥
त्रिवृत् तेजोवती नीली हरिद्रे सैन्धवं तिलाः।
भूमिकदम्बः सुवहा शुकाख्या लाङ्गलाह्वया॥
नपाली जालिनी चव मदयन्ती मृगादनी।
सुधामूर्व्वार्ककीटारि-हरितालकरञ्जिकाः॥
यथोपपत्ति कर्त्तव्यं तलमेतैस्तु शोधनम्।
घृतं वा यदि वा प्राप्तं कल्काः संशोधनास्तथा॥ ६५।६६॥
सैन्धवत्रिवृदेरण्ड-पत्रकल्कस्तु वातिके।
त्रिवृद्धरिद्रामधुक-कल्कः पत्ते तिलैर्युतः।
कफजे तिलतेजोह्वा दन्तीस्वर्ज्जिकचित्रकाः॥ ६७॥
दुष्टव्रणविधिः कार्य्यो मेहकुष्ठव्रणेष्वपि॥ ६८॥
षड् विधः प्राक् प्रदिष्टो यः सद्योव्रणविनिश्चयः।
नातः शक्यं परं वक्तुमपि निश्चितवादिभिः॥

इदानीं सर्व्वदुष्टव्रणानां तैलघृतयोगान् तथा व्रणकल्कद्रव्ययोगान् निर्द्दिशन्नाह—द्रवन्तीत्यादि। द्रवन्ती चीरितपत्रिका दन्ती, शतमूलीत्यन्ये। चिरविल्वः करञ्जकः, दन्ती उडुम्बरपर्णी, पृथ्वीका स्थूलजीरकः, एलेत्यन्ये, हिङ्गुपत्रिकेत्यपरे; तेजोवती काकमर्द्दनिका, नीली नीलाञ्जनिका शारदा, भूमिकदम्बः मुण्डितिका, सुवहा गोधापदी, शुकाख्या चर्म्मकारवटः, लाङ्गलाह्वया गणिकारिका, नैपाली मनःशिला, जालिनी कोशातकी, मदयन्ती मेदिका नखरञ्जनी, मृगादनी इन्द्रवारुणी, सुधा सेहुण्डः, मूर्व्वा चोरस्नायुः, कीटारिर्विडङ्गः, कीटमारणीत्यन्ये; करञ्जिका नक्तमालफलं, यथोपपत्ति यथालाभं, प्राप्तमिति युक्तं पूर्व्वोक्तशरीरकालाद्यपेक्षया। कल्का इति प्राप्ता इति शेषः। तैलं प्राप्तम् एषु 'उत्सन्नमांसानस्निग्धानल्पस्रावान् व्रणांस्तथा' इत्यादिषु, घृतं पुनरेषु प्राप्तं पित्तप्रदुष्टान् गम्भीरान् दाहपाकप्रपीडितान् इत्यादिषु, कल्काः पुनरेषु युक्ताः 'पूतिमांस-प्रतिच्छन्नान् महादोषांश्च' इत्यादिषु॥ ६५। ६६॥

अथ वातादिभेदेन कल्कानाह—सैन्धवमित्यादि॥ ६७। ६८॥

इदानीं छिन्नादिषट्के कस्यचिद्विप्रतिपत्तिं निराकुर्व्वन्नाह—षड् विध इत्यादि। अतः षड्-विधत्वात् परं सप्तविधत्वादि, नियमेन वक्तुं शीघ्रैरपि वक्तुं न शक्यमित्यर्थः, नियमेन वक्तुं न

उपसर्गैर्निपातश्च तत्र तु पण्डितमानिनः ।
केचित् संयोज्य भाषन्ते बहुधा मानगर्व्विताः ॥
बहु तद् भाषितं तेषां षट्स्वेष्वेवावतिष्ठते ।
विशेषा इव सामान्ये षट्त्वन्तु परमं मतम् ॥ ६९ ॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने सद्योव्रणचिकित्सितं
नाम द्वितीयोऽध्यायः ॥ २ ॥

शक्यमित्यर्थः । उपसर्गैरित्यादि । उपसर्गाः प्र-परादयः, निपाताश्चादयः, तैः संयोज्य भाष्यन्ते, यथा—सम्यक् छिन्नं सञ्छिन्नं, सुष्टु छिन्नं सुच्छिन्नम्, अल्पं हि छिन्नमाच्छिन्नमिति ; निपातैर्यथा—अतिक्रमाच्छिन्नमतिच्छिन्नं, पूजितं छिन्नं सुच्छिन्नं, अल्पं छिन्नमीषत्छिन्नमाच्छिन्नमिति । तथापि षट्कमेवेति दृष्टान्तेन दर्शयन्नाह— बहु तद् भाषितमित्यादि । तेषां तद् बहुभाषितं षट्स्वेवावतिष्ठते, अन्तर्भवतीत्यर्थः । विशेषा इव सामान्ये इति यथैव हि कर्म्मसामान्ये गमनप्रसारणाकुञ्चनादीनां कर्म्मविशेषाणामवरोधः, तथा छेदसामान्ये सर्व्वेषामेव सञ्छिन्नपरिछिन्नातिछिन्नादीनां छेदविशेषाणामवरोधः ; एवं शेषेष्वपि पञ्चसु । षट्त्वन्तु इति तुशब्दोऽवधारणे, तेन षट्कमेवेत्यर्थः ॥ ६९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
सद्योव्रणचिकित्सितव्याख्यानाम द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः ।

अथातो भग्नानां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ २ ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रुक्षान्नमेव च ॥ ३ ॥
शालिर्मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ।
बृंहणञ्चान्नपानं स्याद् देयं भग्नाय जानता ॥ ४ ॥
मधूकोडुम्बराश्वत्थ-पलाशककुभत्वचः ।
वंशसर्ज्जवटानां वा कुशार्थमुपसंहरेत् ॥ ५ ॥
आलेपनार्थं मञ्जिष्ठां मधुकं रक्तचन्दनम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च संहरेत् ॥ ६ ॥

अथात इत्यादि । तत्र प्रथमं भग्नस्य कृच्छ्रसाध्यत्वमाह—अल्पाशिन इत्यादि । अनात्मवतः अजितेन्द्रियस्य अपथ्यसेविन इत्यर्थः । वातात्मकस्य वातप्रकृतेः । उपद्रवैरिति उपद्रवा ज्वराध्मान-मूत्रपुरीषसङ्गादयः । अमुं पाठं जेज्जटो न मन्यते, गयी तु मन्यते इत्यस्माभिरङ्गीकृतः ॥ १।२ ॥

इदानीमसेव्यानाह—लवणमित्यादि ॥ ३ ॥

इदानीं सेव्यानाह—शालिरित्यादि । क्षीरं व्रणे सामान्योक्त्या निषिद्धमपि भग्ने अपवादत्वात् प्रयुज्यते । अन्ये पुनरव्रणे एव भग्ने उष्णं क्षीरं देयमित्याहुः । केचित्तु भग्ने क्षीर-दानं विरुद्धम्, नवधान्यादिवर्गपठितत्वेन पाकपूयजनकत्वादित्याहुः । केचित् क्षीरसर्पिरिति च समस्तमेकपदं पठन्ति, व्याख्यानयन्ति च क्षीरादुत्थितं सर्पिः क्षीरसर्पिरिति । सतीनो वर्त्तुल-कलायः, सतीनानां वातकराणामपि सर्पिरादिसंस्कृतत्वात् यूषो भग्ने युज्यते एव । बृंहणं देह-वृद्धिकरम् ॥ ४ ॥

भग्नव्रणबन्धनद्रव्यं कुशा, तदर्थं द्रव्यं निर्द्दिशन्नाह—मधूकोडुम्बराश्वत्थेत्यादि । उपसंहरेत् एकस्थं कुर्य्यात् । वंशसर्ज्जवटानाञ्चेति त्वच इति शेषः । कुशाशब्देन भग्नबन्धनार्थं वंशादिकं प्रोच्यते । अन्ये कुश्यमिति पठन्ति, तत्रापि स एवार्थः ॥ ५ ॥

भग्नलेपनद्रव्याणि निर्द्दिशन्नाह— आलेपनार्थमित्यादि । संहरेत् एकत्र कुर्य्यात् । शालिपिष्ट-मित्यस्य स्थाने अम्लपेषितमाहरेत् इति केचित् पठन्ति । अम्लपेषितं काञ्जिकपिष्टम् ॥ ६ ॥

सप्ताहादथ सप्ताहात् सौम्येष्वृतुषु वन्धनम् ।
साधारणेषु कर्त्तव्यं पञ्चमे पञ्चमेऽहनि ।
आग्नेयेषु त्र्यहात् कुर्य्याद् भग्नदोषवशेन वा ॥ ७ ॥
तत्रातिशिथिलं वद्धे सन्धिस्थैर्य्यं न जायते ।
गाढेनापि त्वगादीनां शोफो रुक् पाक एव च ।
तस्मात् साधारणं वन्धं भग्ने शंसन्ति तद्विदः ॥ ८ ॥
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने ।
पञ्चमूलीविपक्वन्तु क्षीरं कुर्य्यात् सवेदने ।
सुखोष्णमवचार्य्यं वा चक्रतैलं विजानता ॥ ९ ॥
विभज्य कालं दोषञ्च दोषघ्नौषधसंयुतम् ।
परिषेकं प्रदेहञ्च विदध्याच्छीतमेव च ॥ १० ॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः ॥ ११ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य्यं कषायैस्तु शेषं भग्नवदाचरेत् ॥ १२ ॥

भग्नव्रणविशेषे बन्धनकालावधिं निर्द्दिशन्नाह—सप्ताहादित्यादि । इदानीं त्रिविधो बन्धो व्रणे निर्द्दिष्टो गाढः, समः, शिथिल इति । तत्र भग्नेषु गाढशिथिलयोर्बन्धयोर्दोषावहत्वात् सममेव बन्धं निर्द्दिशन्नाह—तत्रातिशिथिलमित्यादि । सन्धिस्थैर्य्यं सन्धीनां स्थिरता ॥ ७ । ८ ॥

तस्य पित्तप्रकृतौ काले चोष्णे परिषेकं निर्द्दिशन्नाह—न्यग्रोधादीत्यादि । सन्धानार्थं पाकादि-परिहारार्थञ्च वातोत्तरे सपित्ते सशूले च परिषेकान्तरमाह—पञ्चमूलीत्यादि । पञ्चमूली स्वल्पा, तस्याः शीतवीर्य्यत्वात् । वातकफप्रकृतौ सशूले सशीते च काले चक्रतैलमाह—सुखोष्णमित्यादि । अवचार्य्यं परिषेके इति शेषः । चक्रतैलं सद्यःपीडितोद्धृतमेके वदन्ति । अन्ये पुनरणुतैलकल्पेन गृहीतमपक्वं तैलं चक्रतैलमाहुः । विभज्य कालमित्यादि । शीतमेव चेति चकाराद् दोषाद्य-पेक्षया उष्णमपि । भग्ने आभ्यन्तरमौषधं निर्द्दिशन्नाह—गृष्टिक्षीरमित्यादि । गृष्टिः प्रथमप्रसूता गौः, मधुरौषधानि काकोल्यादीनि, प्रातःपिवेन्नतु भुक्ते । कल्पना चेयम्—काकोल्यादीनां मधुराणां कर्षमात्रद्रव्यमष्टगुणं क्षीरं चतुर्गुणोदकसिद्धं क्षीरशेषं सर्पिर्लाक्षाकर्षमात्रप्रक्षेपान्वितम् । तच्च लघौ कोष्ठे देयम्, इयञ्च दिनं प्रति मात्रा ॥ ९—११ ॥

इदानीं सव्रणस्य भग्नस्य चिकित्सितमाह—सव्रणस्येत्यादि । व्रणं प्रतिसार्य्यं लेपयित्वेत्यर्थः । कैः प्रतिसार्य्यं ? कषायैः, किं विशिष्टैः ? सर्पिर्मधूत्तरैः घृतमधुप्रधानैः, कषायोऽत्र न्यग्रोधादि-कल्कः, शेषमाहारादिकमित्यर्थः ॥ १२ ॥

प्रथमे वयसि त्वेवं भग्नं सुकरमादिशेत्।
अल्पदोषस्य जन्तोस्तु काले च शिशिरात्मके ॥ १३ ॥
प्रथमे वयसि त्वेवं मासात् सन्धिः स्थिरो भवेत्।
मध्यमे द्विगुणात् कालादुत्तरे त्रिगुणात् स्मृतः ॥ १४ ॥
अवनामितमुन्नह्येदुन्नतश्चावपीडयेत्।
आञ्छेदतिक्षिप्तमधोगतश्चोपरि वर्त्तयेत् ॥ १५ ॥
आञ्छनैः पीडनैश्चैव सङ्क्षेपैर्बन्धनस्तथा।
सन्धीञ्छरीरे सर्व्वांस्तु चलानप्यचलानपि।
एतैस्तु स्थापनोपायैः स्थापयेन्मतिमान् भिषक् ॥ १६ ॥
उत्पिष्टमथ विश्लिष्टं सन्धिं वैद्यो न घट्टयेत्।
तस्य शीतान् परीषेकान् प्रदेहांश्चावचारयेत् ॥ १७ ॥
अभिघाते हृते सन्धिः स्वां याति प्रकृतिं पुनः ॥ १८ ॥

इदानीं कालदोषाश्रयं सुखसाध्यत्वं भग्ने निर्द्दिशन्नाह—प्रथमे इत्यादि। एवमिति उक्ताहाराचारेणेत्यर्थः। सुकरं सुखसाध्यम् ॥ १३ ॥

तस्यैव कालस्य सुकरत्वे अवधिं दर्शयन्नाह—प्रथमे इत्यादि। स्थिरो दृढ इत्यर्थः। द्विगुणात् कालात् द्वाभ्यां मासाभ्यामित्यर्थः। त्रिगुणादिति त्रिभिर्मासैरित्यर्थः ॥ १४ ॥

इदानीं द्विविधानामपि सन्धिमुक्तकाण्डभग्नानां प्रतीकारोपायानाह—अवनामितमित्यादि। अवनामितम् अधोगतम्। उन्नहेयद् ऊर्द्ध्वं कुर्य्यादित्यर्थः। अतिक्षिप्तमतिप्रेरितम्, उपरि वर्त्तयेत् उपरि नयेदित्यर्थः। गयी तु अवनामितमित्यादि पठित्वा पञ्च स्थापनोपायानाह, स च पाठोऽभावान्न लिखितः ॥ १५ ॥

इदानीं सङ्क्षेपतः स्थापनोपायानाह—आञ्छनैरित्यादि। पीडनग्रहणेन नमनोन्नमनपरिवर्त्तनानि गृह्यन्ते। सङ्क्षेपः सम्यक् प्रेरणमित्यर्थः, तस्य च पिच्चितं विषयः; एतेन आञ्छनादिभिरुपायैः प्राक् सन्धाय बन्धनैरुपाचरेदित्यर्थः। सन्धीनिति बाहुल्येन निर्द्देशः, तेन काण्डभग्नामप्येतैरुपायैः स्थापयेत्। चलानप्यचलानपीति हस्तपादकटीहनुगताः सन्धयश्चलाः, तद्विपरीता अचलाः। गयी तु सङ्क्षेपशब्देन आकुञ्चनमाह, पीडनग्रहणेन च नमनोन्नमनाकुञ्चनानि गृह्यन्ते इति सङ्क्षेपग्रहणमनर्थकमिति कृत्वा जेज्जटस्य पाठं दूषयित्वापातनिकापूर्व्वकं पाठान्तरं पठति। तथाहि—"तत्र स्थापनमुक्तमेवोपसंहरन्ननुक्तञ्च सन्धिस्थानेषु निर्द्दिशन्नाह—आञ्छनोत्पीडनोन्नामसंक्षोभैर्बन्धनैस्तथेत्यादि। शेषं पूर्व्ववत् ॥ १६ ॥

इदानीमुत्पिष्टविश्लिष्टयोश्चिकित्सितमाह—उत्पिष्टमित्यादि। उत्पिष्टं चूर्णितं, विश्लिष्टं

घृतदिग्धेन पट्टेन वेष्टयित्वा यथाविधि ।
पट्टोपरि कुशान् दत्त्वा यथावद् बन्धमाचरेत् ॥ १९ ॥
प्रत्यङ्गभग्नस्य विधिरत ऊर्द्ध्वं प्रवक्ष्यते ॥ २० ॥
नखसन्धिं समुत्पिष्टं रक्तानुगतमारया ।
अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत् ॥ २१ ॥
भग्नां वा सन्धिमुक्तां वा स्थापयित्वाङ्गुलीं समाम् ।
अणुनावेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ॥ २२ ॥
अभ्यज्य सर्पिषा पादं तलभग्नं कुशोत्तरम् ।
वस्त्रपट्टेन बध्नीयान्न च व्यायाममाचरेत् ॥
अभ्यज्यायामयेज्जङ्घामूरुञ्च सुसमाहितः ।
दत्त्वा वृक्षत्वचः शीता वस्त्रपट्टेन वेष्टयेत् ॥ २३ ॥
मतिमांश्चक्रयोगेन ह्याञ्छेदूर्व्वस्थि निर्गतम् ।
स्फुटितं पिच्चितञ्चापि बध्नीयात् पूर्व्ववद् भिषक् ॥ २४ ॥
आञ्छेदूर्द्ध्वमधो वापि कटिभग्नन्तु मानवम् ।
ततः स्थानस्थिते सन्धौ वस्तिभिः समुपाचरेत् ॥ २५ ॥

विघटितं, स्वस्थानाच्च्युतमित्यर्थः । प्रदेहो लेपः । प्रत्यङ्गभग्नचिकित्सितमाह—प्रत्यङ्गभग्नस्येत्यादि । अङ्गमङ्गं प्रति प्रत्यङ्गं, नखादीन् आरभ्य यावच्छिर इति । नखसन्धिमित्यादि । समुत्पिष्टं चूर्णितं, रक्तानुगतं दुष्टरक्तसम्बद्धम्, आरया चर्म्मकारास्त्रेण अवमथ्य रक्तं स्रावयेदित्यर्थः॥१७–२१॥

अङ्गुलिभग्नचिकित्सितमाह—भग्नामित्यादि । स्थापयित्वा संस्थापनैर्नमनोन्नमनादिभिः, अणुना सूक्ष्मेण इत्यर्थः, स्थूलपट्टेन तु आबाधा स्यात् ॥ २२ ॥

तलभग्नचिकित्सितमाह—अभ्यज्येत्यादि । जङ्घा पादस्योपरि नलकाश्रया, सुसमाहितः सावधानः । दत्त्वा वृक्षत्वचः शीता इति न्यग्रोधादिशीतवृक्षाणां कुशान् दत्त्वेत्यर्थः । चक्रयोगेनाञ्छेदिति वर्त्तुलान् कुशान् दत्त्वा नामयित्वा चक्रवदाञ्छेत् बध्नीयादित्यर्थः । गयी तु सम्भ्रमभ्रमाद् बलवत्तरपुरुषहस्तद्वयोपरि गृहीतपार्ष्णिपादद्वयत्वात् भ्रमणजवेन निरन्तरभ्रान्तस्य भग्नवतः पुरुषकायस्य चक्राकारोपलम्भाद्उक्तश्चक्रयोग इत्याह । स्फुटितं पिच्चितं वापीति ऊर्व्वस्थीति सम्बन्धनीयम् । अपिशब्दात् स्फुटितपिच्चितसदृशेष्वन्येषु भग्नेषु यदस्थिनिर्म्मुक्तं त्वगादिभिरसंश्लिष्टं तदपनीय बध्नीयादित्यर्थः । पूर्व्ववत् सममित्यर्थः ॥ २३ । २४ ॥

कटिभग्नचिकित्सामाह—आञ्छेदूर्द्ध्वमित्यादि । आञ्छेदूर्द्ध्वमधो वापीति ऊर्द्ध्वं गतमस्थि अधः कृत्वा बध्नीयात्, अधोगतन्तु ऊर्द्ध्वं कृत्वा बध्नीयादित्यर्थः, वास्तिभिः स्नेहवस्तिभिः । ननु कटिभग्नमसाध्यमुक्तं, तद्यथा—"भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम् । जघनं प्रति पिष्टञ्च

पर्शुकास्वथ भग्नासु घृताभ्यक्तस्य तिष्ठतः।
दक्षिणास्वथवा वामास्वनुमृज्य निबन्धनीः ॥
ततः कवलिकां दत्त्वा वेष्टयेत् सुसमाहितः।
तैलपूर्णे कटाहे वा द्रोण्यां वा शाययेन्नरम् ॥ २६ ॥
मुषलेनोत्क्षिपेत् कक्षामंससन्धौ विसंहते।
स्थानस्थितञ्च वध्नीत स्वस्तिकेन विचक्षणः ॥ २७ ॥
कौर्परन्तु तथा सन्धिमङ्गुष्ठेनानुमार्ज्जयेत्।
अनुमृज्य ततः सन्धिं पीड़येत् कूर्पराच्च्युतम् ॥
प्रसार्य्याकुञ्चयेच्चैनं स्नेहसेकञ्च दापयेत्।
एवं जानुनि गुल्फे च मणिवन्धे च कारयेत् ॥ २८।२९ ॥
उभे तले समे कृत्वा तलभग्नस्य देहिनः।
वध्नीयादामतैलेन परिषेकञ्च कारयेत् ॥

वर्ज्जयेत्तु विचक्षणः" इति, व्यर्थमेव चिकित्सितम् ? नैवम्, प्रति पिष्टञ्चेति चकारो वर्ज्जयेदित्य
द्रष्टव्यः, तेनानेन याप्यत्वं समुच्चीयते। एतदुक्तं भवति—कपालभेदो वर्ज्ज्यः, सन्धि
मुक्तसन्धिच्युते तु याप्ये, तेन तद्विषयचिकित्सितमिदं सार्थकमिति गयी। जेज्जटस्तु वर्ज्जये
इत्यत्र वर्ज्जनशब्दः कृच्छ्रसाध्यत्वप्रतिपादनार्थः, न तु निषेधार्थं इत्याह ॥ २५ ॥

पर्शुकाभग्नचिकित्सितमाह—पर्शुकास्वथेत्यादि। पर्शुकाः पृष्ठभागनिबन्धनानि अस्थीनि
तेषां नमनमेव भग्नत्वम्। तिष्ठत इति। ऊर्द्ध्वस्थितशरीरस्य नोपविष्टस्य इत्यर्थः। दक्षिणा
अथवा वामासु पर्शुकास्विति सम्बन्धः। अनुमृज्य घृताक्तहस्तेन समीकरणार्थमवमृज्य
निबन्धनीः मांसरज्जव इत्यर्थः। कवलिका वंशादिविदलशकला, वस्त्रमयीत्यन्ये। वेष्टयेदि
वेल्लितकबन्धेनेति शेषः। सुसमाहितः सावधानो वैद्यः। द्रोणी काष्ठविरचिता नौरिव। स्कन्धभग्न
चिकित्सितमाह—मुषलेनेत्यादि। उत्क्षिपेत् ऊर्द्ध्वं नयेत्, अंससन्धौ बाहुशिरःसन्धौ, विसंहते
विश्लिष्टे, स्वस्तिकेन वन्धविशेषेणेत्यर्थः ॥ २६। २७ ॥

कूर्परसन्धिभग्नचिकित्सितमाह— कौर्परमित्यादि। बाहुमध्ये कूर्परसन्धिः। अनुमार्ज्जयेत् अ
मर्द्दयेत् प्रच्युतस्य सन्ध्यस्थ्नो मार्गोपलम्भार्थं मार्ज्जनं विधेयम्। कूर्परसन्धिचिकित्सितं सङ्क्षेपा
मन्यत्रातिदिशन्नाह—एवमित्यादि। एवं कूर्परसन्धिचिकित्सितप्रकारेणेत्यर्थः। गुल्फः पार्ष्ण
परिग्रन्थिः, मणिवन्धो हस्ततलस्योपरितनः सन्धिः ॥ २८। २९ ॥

प्राक् पादतलचिकित्सितमुक्तम्। अथ हस्ततलचिकित्सितमाह—उभे तले इत्यादि। उ
तले इति एकं पाणितलं द्वितीयं पादतलम्, इत्युभे तले इति जेज्जटः। गयी तु उभे अ
हस्ततले; तत्रैकस्य भङ्गे वामं दक्षिणेन, दक्षिणं वामेन, उभयोस्तु भङ्गे तत्समेन काष्ठमये

मृत्पिण्डं धारयेत् पूर्व्वं लवणञ्च ततः परम्।
हस्ते जातबले चापि कुर्य्यात् पाषाणधारणम्॥ ३०॥
सन्नमुन्नमयेत् स्विन्नमक्षकं मुषलेन तु।
तथोन्नतं पीडयेच्च बध्नीयाद् गाढ़मेव च।
ऊरुवच्चापि कर्त्तव्यं बाहुभग्नचिकित्सितम्॥ ३१।३२॥
ग्रीवायान्तु विवृत्तायां प्रविष्टायामधोऽपि च।
अवटावथ हन्वोश्च प्रगृह्योन्नमयेन्नरम्।
ततः कुशां समं दत्त्वा वस्त्रपट्टेन वेष्टयेत्।
उत्तानं शाययेच्चैनं सप्तरात्रमतन्द्रितः॥ ३३॥
हन्वस्थिनी समानीय हनुसन्धौ विसंहते।
स्वेदयित्वा स्थिते सम्यक् पञ्चाङ्गीं वितरेद् भिषक्।
वातघ्नमधुरैः सर्पिः सिद्धं नस्ये च पूजितम्॥ ३४॥

कृत्वा द्वे अपि बध्नीयादेवं दार्ढ्यं भवतीति। मृत्पिण्डादिधारणमात्मकर्म्मप्राप्त्यर्थम्। जेज्जटस्तु मृत्पिण्डं धारयेत् पूर्व्वमित्यादि पाठं न मन्यते, किन्तु 'प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः' इति पठति॥ ३०॥

नतोन्नतयोरक्षकयोश्चिकित्सितमाह—सन्नमित्यादि। सन्नमधःप्रविष्टम् उन्नमयेत् मुषलेनेति सम्बन्धः, स्विन्नमुन्नतं मुषलेनाधः पीडयेत्, अक्षकः अंससन्धेरुपरिष्टाद् भवति। बाहुभग्नचिकित्सिते ऊरुभग्नचिकित्सितमतिदिशन्नाह—ऊरुवदित्यादि। कूर्परांसयोर्मध्ये बाहुः॥ ३१।३२॥

ग्रीवायान्तु विवृत्तायामित्यादि। विवृत्तायां वक्रायां, कृकाटिकाभागसन्धौ गर्त्तोऽवटुः, हनू मुखसन्धी, अवटौ हन्वोश्च गृहीत्वा उन्नमयेदिति जेज्जटः। गयी तु अधः प्रविष्टायामवटौ गृहीत्वा, विवृत्तायां हन्वोरिति क्रममाह। कुशां समं दत्त्वेति सममिति दत्त्वेत्यस्य विशेषणम्, वेष्टयेदित्यस्य विशेषणमिदमित्यन्ये, एतेन नातिगाढं नातिशिथिलमित्यर्थः। अतन्द्रितोऽनलसः, वैद्य इति शेषः॥ ३३॥

हनुभग्नचिकित्सितमाह—हन्वस्थिनीत्यादि। समानीयेति दक्षिणं वामेन, वामं दक्षिणेन समानीयेत्यर्थः। विसंहते विश्लिष्टे स्वस्थानाच्च्युते इत्यर्थः। पञ्चाङ्गी बन्धविशेषः। वातघ्नमधुरैरिति वातघ्नानि भद्रदार्वादीनि, विदारीगन्धादीनीत्यन्ये, मधुराणि काकोल्यादीनि, तैः सिद्धं सर्पिर्घृतं, कल्ककषायाभ्यामित्यर्थः॥ ३४॥

अभग्नांश्चलितान् दन्तान् सरक्तानवपीड़येत्।
तरुणस्य मनुष्यस्य शीतैरालेपयेद् वहिः ॥
सिक्त्वाम्बुभिस्ततः शीतैः सन्धानीयैरुपाचरेत्।
उत्पलस्य च नालेन क्षीरपानं विधीयते।
जीर्णस्य तु मनुष्यस्य वर्ज्जयेच्चलितान् द्विजान् ॥ ३५ ॥
नासां सन्नां विवृत्तां वा ऋज्वीं कृत्वा शलाकया।
पृथङ्नासिकयोर्नाड्यौ द्विमुख्यौ संप्रवेशयेत्।
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ ३६ ॥
भग्नं कर्णञ्च वध्नीयात् समं कृत्वा घृतप्लुतम्।
सद्यःक्षतविधानञ्च ततः पश्चात् समाचरेत् ॥ ३७ ॥
मस्तुलुङ्गाद् विना भिन्ने कपाले मधुसर्पिषी।
दत्त्वा ततो निवध्नीयात् सप्ताहञ्च पिवेद् घृतम् ॥ ३८ ॥
पतनादभिघाताद् वा शूनमङ्गं यदक्षतम्।
शीतान् प्रदेहान् सेकांश्च भिषक् तस्यावचारयेत् ॥ ३९ ॥
अथ जङ्घोरुभग्नानां कपाटशयनं हितम्।
कीलका वन्धनार्थञ्च पञ्च कार्य्या विजानता ॥

दन्तभग्नचिकित्सितमाह—अभग्नानित्यादि। सन्धानीयैरिति मधुघृतादिभिः, न्यग्रोधादीनां कषायाणां कल्कैश्चूर्णैश्चेत्यर्थः ॥ ३५ ॥

नासाभग्नचिकित्सितमाह—नासामित्यादि। सन्नामभिघातेनान्तःप्रविष्टाम्। विवृत्तां वक्राम्। तत्र सन्नां शलाकया उन्नम्य वक्रां पुनः ऋजूकृत्वेत्यर्थः। द्विमुख्यौ नाड्यौ अन्तर्व्वहिर्मुख्यौ, निःश्वासोच्छ्वाससिंहानकादिनिर्गमार्थम्। घृतसेकं घृतपरिषेकम् ॥ ३६ ॥

कर्णभग्नचिकित्सितमाह—भग्नमित्यादि। भग्नं कुटिलमन्तःप्रविष्टं वा। सद्यःक्षतविधानमिति मधुघृताभ्यङ्गशीतपरिषेकादि। 'अत्र सद्यःक्षतविधिश्चापि नयने निर्गते वहिः' इति केचित् पठन्ति; तन्न पठनीयम्, भिन्नं नेत्रमकर्म्मण्यमित्यादिनैव सिद्धत्वात्। अन्ये तु चक्षुर्भग्नद्वयप्रतिपादनार्थं पठनीयमिति मन्यन्ते ॥ ३७ ॥

कपालभग्नचिकित्सितमाह—मस्तुलुङ्गाद् विनेत्यादि। मस्तुलुङ्गस्रावे तु प्रागभिहितैव बालवर्त्तिरित्यभिप्रायः। शीतान् प्रदेहान् सेकांश्च शीतान्, नोष्णान् कथमपि, अतिस्रुतरक्तत्वेन पाकभयात् ॥ ३८ । ३९ ॥

जङ्घोरुभङ्गेषु पश्चात् कर्म्मविशेषं निर्दिशन्नाह—अथ जङ्घेत्यादि। भग्नानां काण्डभग्नानाम्

यथा न चलनं तस्य भग्नस्य क्रियते तथा ।
सन्धेरुभयतो द्वौ द्वौ तले चकश्च कीलकः ॥
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।
भग्नसन्धिविमोक्षेषु विधिमेनं समाचरेत् ॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धान् स्विन्नान् मृदूकृतान् ।
उक्तैर्विधानबुद्ध्या च सम्यक् प्रकृतिमानयेत् ॥ ४० ॥
काण्डभग्ने प्ररूढ़े तु विषमोल्वणसंहिते ।
आपोथ्य समयेद् भग्नं ततो भग्नवदाचरेत् ॥ ४१ ॥
कल्पयेन्निर्गतं शुष्कं व्रणान्तेऽस्थि समाहितः ।
सन्धन्ते वा क्रियां कुर्य्यात् सव्रणे व्रणभग्नवत् ॥ ४२ ॥

द्विविधानामपीत्यपरे । कपाटशयनमवश्यं कार्य्यम् । चलनं कपाटशयनेनैव सह देशान्तर-नयनार्थम्, आधारभूतशयनचालनार्थमित्यन्ये । आधेयभूतशरीरावयवचलनपरिहारार्थं कीलाः । कीलानां पञ्चसंख्यात्वम् जङ्घोर्व्वोर्द्वयोरेकतरस्य भग्नमपेक्ष्य ; तत्र जङ्घाभग्ने तु गुल्फसन्धे-रुभयतो द्वौ द्वौ, एकश्च तले, एवं पञ्च । ऊरुभग्ने जानुसन्धेरुभयतो द्वौ, द्वौ वङ्क्षणसन्धे-रुभयतः, तले चैक इत्यत्रापि पञ्च । उभयभङ्गापेक्षया तु सप्तभिरेव कीलैर्यन्त्रणम् । तथाहि—उभयतो वहिर्द्वौ गुल्फयोर्द्वौ च जानुनोः, द्वौ च वङ्क्षणयोः, तले चैक एवं सप्त । अत्र जङ्घोर्व्वोः पार्श्वयोर्द्वौ द्वौ तले चैकश्च कीलक इति केचित् पठन्ति, तन्निबन्धकारैर्न पठितम्, तस्मान्न पठनीयम् । गयदासश्चात्र पाठान्तरं किमपि पठति ; तच्चाभावान्न लिखितम् । अमुमेव जङ्घोरुभग्नकपाटशयनादिविधिमन्यत्रापि दर्शयन्नाह—श्रोण्यामित्यादि । श्रोणिः कटिः । वक्ष उरः । अक्षकः अंससन्धेरुपरिभागः । भग्नसन्धिविमोक्षेष्विति भग्नेषु तथा सन्धिविमोक्षेष्वपि द्विविधेषु भग्नेषु समाचरेदित्यर्थः । विधिमेनमिति कपाटशयन-कीलकनियमनादिकम् । सद्योभग्नविधानं निर्दिश्य चिरभग्नविधानमाह—सन्धीनित्यादि । बुद्ध्या चेति स्वयमपूहेयति शेषः ॥ ४० ॥

चिरविमुक्तसन्धिमभिधाय चिरकाण्डभग्नविधिमाह—काण्डभग्न इत्यादि । आपोथ्य विश्लेष्य । समयेत् समं कुर्य्यादित्यर्थः ॥ ४१ ॥

कल्पयेत् छिन्द्यात् । व्रणान्ते व्रणैकदेशे । समाहितः सावधानः, यथा अन्यत्र व्रणो न भवति तथा छिन्द्यादित्यर्थः । सन्ध्यन्ते सन्धिसमीपे इत्यर्थः । किंविशिष्टे सन्ध्यन्ते ? सव्रणे व्रणयुक्ते इत्यर्थः ॥ ४२ ॥

ऊर्द्ध्वकाये तु भग्नानां मस्तिष्क्यं कर्णपूरणम्।
घृतपानं हितं नस्यं प्रशाखास्वनुवासनम्॥ ४३॥
अत ऊर्द्ध्वं प्रवक्ष्यामि तैलं भग्नस्य साधकम्॥ ४४॥
रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत्॥
तृतीयं सप्तरात्रं वा भावयेन्मधुकाम्बुना।
ततः क्षीरे पुनः पीतान् सुशुष्कांश्चूर्णयेद् भिषक्॥
काकोल्यादिं सयष्ट्याह्वं मञ्जिष्ठां शारिवां तथा।
कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनम्॥
शतपुष्पाञ्च संचूर्ण्य तिलचूर्णेन योजयेत्।
पीड़नार्थञ्च कर्त्तव्यं सर्व्वगन्धशृतं पयः॥
चतुर्गुणेन पयसा तत् तैलं विपचेद् भिषक्।
एलामंशुमतीं पत्रं जीवकं तगरं तथा॥

इदानीं कायविशेषेण भग्नक्रियाविशेषं निर्द्दिशन्नाह—ऊर्द्ध्वकाय इत्यादि। मस्तिष्क्यं शिरोवस्तिप्रकारः, स च स्नेहाक्तपिचुप्लोतादिभिः। नस्यं प्रशाखास्विति प्रकृष्टाः शाखाः प्रशाखास्तासु, जानुजङ्घाबाहुद्वयगते भग्ने नस्यं, घृतपानं वस्तिश्च सर्व्वत्रैवेति जेज्जटः। गयी तु मस्तिष्क्यादिकं नस्यान्तं सर्व्वमूर्द्ध्वकायभग्न एव, प्रशाखासु वस्तिरिति व्याख्यानयति॥ ४३। ४४॥

तदेवं वस्तिकर्णपूरणपाननस्यानुवासनसाधनतैलं निर्द्दिशन्नाह—अत इत्यादि। वासयेदिति प्रथमं सप्तरात्रं यावत्। अस्थिरे जले वहति पानीये। गवां क्षीरेणेति भाव्यद्रव्यसमेनेति शेषः, भावयेत् द्वितीयं सप्तरात्रं। तृतीयं सप्तरात्रं वा मधुकाम्बुनेति भाव्यद्रव्यसमेनेति शेषः। ततः क्षीरे पुनः पीतानिति क्षीरेण भाव्यद्रव्यसमेन पुनर्भावितान्, चतुर्थसप्तरात्रमिति तात्पर्य्यार्थः। काकोल्यादिं सयष्ट्याह्वमिति यष्टिमधुनि काकोल्यादावुक्तेऽपि पुनर्यष्टिकाग्रहणं द्विभागार्थम्, यथालाभपरिभाषापरिहारेणावश्यं प्रक्षेपार्थं वा। काकोल्यादिशतपुष्पान्तानां चूर्णपादं तिलचूर्णपादैस्त्रिभिर्योजयन्ति तन्त्रान्तरदर्शिनो वृद्धवैद्या इति जेज्जटादयः। गयी तु तिलचूर्णसमं मिलितं चूर्णमिष्यत इत्याह। (तिलचूर्णस्य चत्वारो भागा भागश्चैकः प्रकीर्त्तितानां काकोल्यादीनां, तथा यष्ट्याह्वादीनां शतपुष्पान्तानां द्वितीयो भाग इति षड्भागा इति व्याख्यानयति। वङ्गदत्तस्तु) सर्व्वगन्धशृतं पय इत्यत्र सर्व्वगन्धा एलादयः, अन्ये च कटुकफलादयः, तैः शृतं क्वथितं, पयः क्षीरम्। अत्र च क्षीरपाके इयं परिभाषा स्मरणीया—"क्वाथ्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः"। यावता च क्षीरेण तिलचूर्णमुत्सादनीयं भवति तावन्मात्रं शृतं करणीयम्। ततः शृतेन क्षीरेण उष्णेनैव काकोल्यादिचूर्णसहितं तत्तिलचूर्णमार्द्रीकृत्य चक्रेण पीड़येत्। पीड़नादुत्पन्नं तैलं यथा संस्कार्य्यं तं प्रकारमाह—चतुर्गुणेनेत्यादि। अंशुमती शालपर्णी।

रोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिणम् ।
सैरेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकञ्चैव पूर्व्वोक्तान्योषधानि च ।
एभिस्तद् विपचेत् तैलं शास्त्रविद् मृदुनाग्निना ॥
एतत् तैलं सदा पथ्यं भग्नानां सर्व्वकर्म्मसु ।
आक्षेपके पक्षवधे तालुशोषे तथार्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
वाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥
मुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्व्ववातविकारनुत् ।
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः ॥ ४५ ॥
त्रपुसाक्षप्रियालानां तैलानि मधुरैः सह ।
वसां दत्त्वा यथालाभं क्षीरे दशगुणे पचेत् ॥
स्नेहोत्तममिदञ्चाशु कुर्य्याद् भग्नप्रसाधनम् ।
पानाभ्यञ्जननस्येषु वस्तिकर्म्मणि सेचने ॥ ४६ ॥

कालानुसारिणमिति तगरम्, तगरस्य द्विरुच्चारणं भागद्वयप्रतिपादनार्थम् । सैरेयकं कण्टशेलुकः । क्षीरशुक्ला क्षीरविदारी । अनन्ता उत्पलसारिवा । मधूलिका मर्कटतृणविशेषः । शृङ्गाटकं त्रिकण्टकं जलजं फलम् । पूर्व्वोक्तान्यौषधानि काकोल्यादीनि शतपुष्पान्तानि । एतानि सर्व्वाणि च तावता भागेन समेन कल्पयितव्यानि, यावता तैलपादिकानि भवन्ति । मृदुनाग्निनेति वह्नेर्मानमुच्यते । "शास्त्रवित् तु भिषक् तेन मृदुना वह्निना शनैः । पचेत् स्नेहमधश्चोर्द्ध्वं चालयित्वा निरन्तरम् । भवत्येवं पाकसिद्धिरन्यथा दग्धतां व्रजेत्" इति । सर्व्वकर्म्मसु पानाभ्यङ्गादिषु । गन्धतैलमिदं नाम्नेति अस्य तैलस्य गन्धतैलमिति संज्ञा; वैतरगे पुनरस्य अणुतैलसंज्ञा । राज्ञामेवेति राज्ञामेवेदं तैलं पण्डितैर्विधातव्यं, महासम्भार-साध्यत्वात्, न पुनरन्येषां निषिद्धम् ॥ ४५ ॥

त्रपुसं कर्कटीभेदः । अक्षो विभीतकः । प्रियालश्चारः । मधुरैः काकोल्यादिभिः । तानि च स्नेहात् पादिकानि । वसां दत्त्वा यथालाभमिति यदि लभ्यते तदा निक्षिपेदित्यर्थः । सेचने परिषेके । अमुं पाठं केचिदनार्षं मन्यन्ते ॥ ४६ ॥

भग्नं नैति यथा पाकं प्रयतेत तथा भिषक्।
पक्वमांसशिरास्नायु तद्धि कृच्छ्रेण सिध्यति॥ ४७॥
भग्नं सन्धिमनाविद्धमहीनाङ्गमनुल्वणम्।
सुखचेष्टाप्रचारञ्च संहितं सम्यगादिशेत्॥ ४८॥

इति सुश्रुत संहितायां चिकित्सितस्थाने भग्नानां चिकित्सितं नाम तृतीयोऽध्यायः॥ ३॥

इदानीं भग्ने बाह्यानामाभ्यन्तराणाञ्च पाककारिणां परिहाराय पाकप्रशमकारिणाञ्च सेवनायाह—भग्नं नैतीत्यादि। नैति न गच्छतीत्यर्थः। प्रयतेत प्रयत्नं कुर्व्वीतेत्यर्थः॥ ४७॥

सम्यग्रूढलक्षणमाह—भग्नमित्यादि। अनाविद्धम् अनाकुलम्। अनुल्वणम् अनुन्नतम्। सुखचेष्टाप्रचारमिति चेष्टाप्रचार आकुञ्चनप्रसारणादिकः॥ ४८॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे भग्नचिकित्सितव्याख्यानाम तृतीयोऽध्यायः॥ ३॥

---

# चतुर्थोऽध्यायः ।

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

आमाशयगते वाते च्छर्दयित्वा यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥ २ ॥
चित्रकेन्द्रयवे पाठा कटुकातिविषाभया ।
वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥ ३ ॥
पक्वाशयगते चापि देयं स्नेहविरेचनम् ।
वस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ ४ ॥

प्रथममामाशयगतवायोश्चिकित्सितमाह—आमाशयेत्यादि । छर्दयित्वा वमनं कारयित्वा । वमनञ्च सोत्क्लेशे पुरुषे बहुदोषे बलवति ज्ञेयम् । आमाशयगते छर्दनं कफस्थानत्वात् । यथाक्रममिति अत्र यथाक्रमशब्देन पूर्व्वकालापरकालकर्त्तव्याः सर्व्वा एव आक्षिप्ताः स्नेहस्वेदनपानलैङ्गिकवैगिकमानिककायशुद्धिसंसर्ज्जनभोजनादयः । देय इति दातुमर्हः । षड्धरण इति षण्णां चित्रकादीनां धरणा मानविशेषा यत्र योगे स षड्धरणो योगः । तत्र धरणप्रमाणं मध्यमैरेकविंशतिभिर्निष्पावैर्भवति । सुखाम्बुना ईषदुष्णाम्बुनेत्यर्थः । षड्धरणानि कथं सप्तदिनान्युपयुज्यन्ते ? उच्यते, एकस्मिन् दिने कर्षयोगः, स चाष्टादशनिष्पावैर्भवति, तत्र षड्धरणेभ्यः प्रतिदिनं त्रयस्त्रयो निष्पावा उच्छ्रिता भवन्ति । ततः षड्भिस्त्रिकैरष्टादशनिष्पावाः, तैरष्टादशभिः सप्तमं दिनं पूर्य्यते । अथवा संज्ञैषा षड्धरण इति । इदानीं षड्धरणयोगमाह—चित्रकेत्यादि । कटुकातिविषाक्षपेति केचित् पठन्ति । वातव्याधिप्रशमन इति आमाशयगत एव वातव्याधिः गृहीतव्यो न पुनराक्षेपकादयः, रूक्षविषयत्वेन वातकारित्वादस्य । अन्ये तु 'महाव्याधिप्रशमनम्' इति पठन्ति, महाव्याधिरिह मेदोयुतोऽनिलो नान्यः ॥ १—३ ॥

पक्वाशयगतवायोश्चिकित्सामाह—पक्वाशयेत्यादि । स्नेहविरेचनं तिल्वकसर्पिरादिविरेचनम् । वस्तयः शोधनीयाश्चेति शोधनद्रव्यनिःक्वाथास्तत्कल्कस्नेहसंयुताः इत्याद्याः । प्राशाश्च लवणोत्तरा इति स्नेहलवणकल्याणकलवणादयः ; अन्ये तु प्राश्यन्त इति प्राशा आहाराः, न तु लेहाः । लवणोत्तरा लवणप्रधानाः । गयी त्वत्राह—पक्वाशयः पुनरिह द्विविधः पित्तवाताशयभेदेन ; तयोर्मध्ये पित्ताशयगते वायौ स्नेहविरेचनं तिल्वकसिद्धमेरण्डतैलादिभिर्वा, वाताशयगतस्य तु वायोर्मलकफपित्तैरावृतस्य यथादोषं कषायकल्कस्नेहवस्तयः, तत्र मलावृतवायौ विदारिकल्कसिद्धः स्नेहयुक्तो व्यक्तोष्णक्षारश्च वस्तिः, श्लेष्मावरणवायौ व्यक्तक्षारोष्णो वस्तिः, त्रिवृदादिद्रव्यमूलविदारिकल्कसिद्धः पित्तावृते, स पुनरक्षारवस्तिः शीतः । शेषं समम् ॥ ४ ॥

कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ५ ॥
श्रोत्रादिषु प्रकुपिते कार्य्यश्चानिलहा क्रमः।
स्नेहाभ्यङ्गोपनाहाश्च मर्द्दनालेपनानि च ॥ ६ ॥
त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥ ७ ॥
स्नेहोपनाहाग्निकर्म्म-बन्धनोन्मर्द्दनानि च।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद् वायावतन्द्रितः ॥ ८ ॥
निरुद्धेऽस्थनि वा वायौ पाणिमन्थेन दारिते।
नाडीं दत्त्वास्थनि भिषक् चूषयेत् पवनं बली ॥ ९ ॥
शुक्रप्राप्तेऽनिले कार्य्यं शुक्रदोषचिकित्सितम् ॥ १० ॥

वस्तिगतस्य वायोश्चिकित्सितमाह—कार्य्यं इत्यादि। वस्तिविशोधनो विधिरिति अश्मरी-चिकित्सितोक्तो मूत्राघाताद्युक्तश्च ॥ ५ ॥

श्रोत्रादिषु प्रकुपितवायोश्चिकित्सितमाह—श्रोत्रेत्यादि। आदिशब्दात् त्वग्घ्राणजिह्वानेत्राणीन्द्रियाणि गृह्यन्ते। अत्र क्रमः—स्नेहः स्वेदस्तथाभ्यङ्ग इत्यादिको दोषदूष्यप्रत्यनीको यथायथं कर्त्तव्यः, स चेन्द्रियसात्म्यमपेक्ष्य कर्त्तव्यः; तेन स्नेहशब्दसामान्येन नेत्रयोः क्षीरसर्पिस्तर्पणं, तैलतर्पणं पुनः कर्णादिष्विति। धातूपधातुगतस्य वायोश्चिकित्सितमाह—त्वगित्यादि। स्नेहाभ्यङ्गोपनाहाश्चेत्यत्र चकारेण त्वग्गतवायौ ह्यमप्यन्नपानमनुक्तं समुच्चीयते। त्वगत्र रसः, शिराः पुनरसृज उपधातुः, प्राप्ते गते इत्यर्थः। रक्तगते वायौ रक्तस्रावो रक्ताधिष्ठानवातनिवृत्त्यर्थः। यदा द्रव्यभावविशेषेण खर्ज्जूरमातुलुङ्गसौवर्च्चलादिस्नेहाभ्यङ्गादिभिर्न प्रशममेति, तदा नियमेन रक्तावरणं परिज्ञाय रक्तमोक्षणं कर्त्तव्यम्, न पुनरन्यथा। मेदोगते पुनरिहानिले चिकित्सा नोपदिष्टा, तस्य स्नेहाविषयत्वेन वातव्याधिकर्म्मणामविषयत्वात्। महावातव्याधौ पुनरावरण-प्रसङ्गेन मेदोगतमनिलं वक्ष्यति ॥ ६। ७ ॥

स्नायुगतस्य सन्ध्यस्थिगतस्य च वायोश्चिकित्सामाह—स्नेहेत्यादि। स्नेहोऽत्र बाह्य आभ्यन्तरश्च। अतन्द्रितः अनलसः; एतेन चिरकालं निरन्तरक्रियेति दर्शयति ॥ ८ ॥

अस्थनि गते मज्जस्थे च कर्म्म निर्द्दिशन्नाह—निरुद्ध इत्यादि। त्वङ्मांसं शस्त्रेण विपाट्य, अस्थि पाणिमन्थेन आराशस्त्रेण विद्ध्वा, तत्र रन्ध्रे द्विमुखीं नालीं प्रणिधाय मुखमारुता चूषणेन पवनापकर्षणं करणीयमिति। बली बलयुक्तः। बाह्याभ्यन्तरस्नेहैश्चेत्यादि केचित् पठन्ति। तत्र बाह्यस्नेहः परिषेकावगाहाभ्यङ्गमस्तिष्क्यशिरोऽभ्यङ्गादिः, आभ्यन्तरस्तु पानवस्त्यादिः, अस्य पाठस्याभावान् निर्णयो न कृतः ॥ ९ ॥

शुक्रगतस्य वायोश्चिकित्सामाह—शुक्रेत्यादि। शुक्रदोषचिकित्सितमिति शुक्रशोणितशुद्ध्युक्तं चिकित्सितं वाजीकरणोक्तं मूत्रदोषचिकित्सितोक्तञ्च कार्य्यम्; 'तेष्वाद्यान् शुक्रदोषांस्त्रीन्' इत्यादिकम् ॥ १० ॥

अवगाहकुटीकर्पू-प्रस्तराभ्यङ्गवस्तिभिः।
जयेत् सर्व्वाङ्गजं वातं शिरामोक्षश्च बुद्धिमान्॥ ११॥
एकाङ्गगञ्च मतिमान् शृङ्गैश्चावस्थितं जयेत्॥ १२॥
वलासपित्तरक्तस्तु संसृष्टमविरोधिभिः॥ १३॥
सुप्तिवाते त्वसृङ्मोक्षं कुर्य्यात् तु वहुशो भिषक्।
दिह्याच्च लवणागार-धूमैस्तैलसमन्वितैः॥ १४॥
पञ्चमूलीशृतं क्षीरं फलाम्लो रस एव च।
सुस्निग्धो धान्ययूषो वा हितो वातविकारिणाम्॥ १५॥

धातूपधातुगतमभिधाय सर्व्वाङ्गगतस्य वायोश्चिकित्सामाह—अवगाहेत्यादि। तत्र वातहर क्काथपूर्णद्रोण्यादिषु अवगाहो द्रवस्वेदः। कुटी चतुर्द्वारा भूमावारोपितापनीतविधूमाङ्गारवात-हरद्रवसिक्ता, सा चोष्मस्वेदः। कर्पूः पुरुषायाममात्रनिखातदग्धावनिप्रदेशे वातहरद्रवसिक्ते शयनं, स चोष्मस्वेदविशेषः। स्विन्नतुषधान्यादिभिरास्तृतायां भूमौ परिशयनं प्रस्तरः, सोऽपि चोष्मस्वेदविशेष एव। स्नेहपूर्व्वा अवगाहादयः। एते च सर्व्वाङ्गगते वाते सर्व्वाङ्गयोगिनः, उपनाह-स्वेदस्त्ववयवगेऽपि वाते। तापस्वेदस्त्वत्र रूक्षत्वादयुक्त एव। यद्यपि सर्व्वाङ्गगो वातप्रकोपः प्रायो धातुक्षयनिमित्तः, तथापि शोणिताधिष्ठानत्वात् रक्तमोक्षोऽपि युक्तः। शिरामोक्षैरिति बहुवचनात् पञ्चानां सिराणां मोक्षणं स्नेहादिभिरप्रशाम्यति वाते। एकाङ्गगतस्य वायोश्चिकित्सितमाह—एकाङ्गगमित्यादि। शृङ्गैश्चेति बहुवचनमसकृत्प्रयोगज्ञापनाय। चकारेण सर्व्वाङ्गवातोक्ता-वगाहादयोऽप्यनुकृष्यन्ते। तैश्चावगाहादिभिरेकाङ्गगतमनवस्थितमेव वातं जयेत्, अवस्थितं शृङ्गैरेव। संसर्गजस्य चिकित्सामाह—वलासपित्तेत्यादि। वलासपित्तरक्तैस्तु संसृष्टं वात-मविरोधिभिः प्रतिकुर्य्यादित्युपस्कारः॥ ११—१३॥

सुप्तिवातचिकित्सामाह—सुप्तीत्यादि। रक्तावरणक्रियया सुप्त्या लक्षितो वातः सुप्तिवातः। सुप्तिः स्पर्शाज्ञानम्। न पुनः रसावरणकृतया सुप्ततया लक्षितो वातः, तस्य स्नेहोपनाहादिविषय त्वात्; अन्यधातुगतवायौ रक्तापकर्षणस्यायुक्तत्वात्। बहुशः बहून् वारान्, अल्पाल्पस्रावणात्, अन्यथा वातकोपः स्यात्। दिह्यात् लेपयेत्। अन्ये तु सुप्तवातस्त्वग्गतवातः, 'वैवर्ण्यं स्फुरणं रौक्ष्यं सुप्तिं चुमचुमायनम्' इत्युक्तत्वात्। तेषां मते त्वङ्मांसेत्यादिना प्रागुक्तमपि शोणित-मोक्षणमिह पुनस्तदेवोक्तम्। लवणागारधूमैरित्यादिप्रदेहोऽधिक उक्तः॥ १४॥

सर्व्ववातविकारिणां भोजनान्याह—पञ्चमूलीत्यादि। पञ्चमूली आद्या द्वितीया च। फलै-र्दाडिमादिभिरम्लैः। रसो मांसरसः। धान्ययूषः कुलत्थादिवातहरो धान्ययूषः। सुस्निग्धशब्दो यूषरसाभ्यां सह सम्बध्यते। दोषप्रकृतिसात्म्यापेक्षया क्षीरादि प्रयोज्यम्। वा तेभ्यो भोजनं हितमिति केचित् पठन्ति॥ १५॥

काकोल्यादिः सवातघ्नः सर्व्वाम्लद्रव्यसंयुतः।
सानूपौदकमांसस्तु सर्व्वस्नेहसमन्वितः॥
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः।
तेनोपनाहं कुर्व्वीत सर्व्वदा वातरोगिणाम्॥
कुञ्च्यमानं रुजार्त्तं वा गात्रं स्तब्धमथापि वा।
गाढ़ं पट्टैर्निवध्नीयात् क्षौमकार्पासकौर्णिकैः॥
विड़ालनकुलोन्द्राणां चर्म्मगोण्यां मृगस्य वा।
प्रवेशयेद् वा स्वभ्यक्तं शाल्वणनोपनाहितम्॥ १६॥
स्कन्धवक्षस्त्रिकप्राप्तं वायुं मन्यागतं तथा।
वमनं हन्ति नस्यश्च कुशलेन प्रयोजितम्॥ १७॥
शिरोगतं शिरोवस्तिर्हन्ति वासृग्विमोक्षणम्।
स्नेहं मात्रासहस्रन्तु धारयेत् तत्र योगतः॥ १८॥

उपनाहस्वेदमाह—काकोल्यादिरित्यादि। काकोल्यादिः प्रसिद्धः। सवातघ्न इति सह वातघ्नै-र्भद्रदार्व्वादिभिर्विदारिगन्धादिभिर्वर्त्तत इति सवातघ्नः। सर्व्वाम्लद्रव्यसंयुत इति अम्लद्रव्याणि शुक्तकाञ्जिकसुरासौवीरकदधिमस्त्वादीनि केचिदाचार्य्या एवं वदन्ति—अम्लद्रव्याणि दाड़िमादीनि। आनूपौदकमांसेन सह वर्त्तत इति सानूपौदकमांसः; अत्रानूपशब्दोऽयं कूलचरेष्वेव वर्त्तते। औदक-शब्देन तु कोशस्थाः पादिनो मत्स्याश्च गृह्यन्ते। ये पुनरुदकग्रहणं न पठन्ति ते तु पञ्चस्वपि वर्त्तयन्ति। सर्व्वस्नेहा घृततैलवसामज्जानस्तैः समन्वितः। सुखोष्णः ईषदुष्णः। स्पष्टलवण इति स्पष्टानि व्यक्तानि सैन्धवादीनि लवणानि यत्र स स्पष्टलवणः। उल्वणेन सह वर्त्तत इति सोल्वणः। उप-नाहो बन्धनम्। एषाञ्च भागमानमाह—"मांसेनात्रौषधं तुल्यं यावताम्लेन चाम्लता। तावन्तश्च चतुःस्नेहाः स्थिरधत्वञ्च यथा भवेत्" इति। द्रव्यस्वभावं स्वेद्यदेशमप्यवेक्ष्य कल्पनीयमित्येके वदन्ति। अनग्निमेव स्वेदं दर्शयन्नाह—कुञ्च्यमानमित्यादि। कुञ्च्यमानं सङ्कोच्यमानं, तच्च शिरागतेन वायुना, यदाह—"कुर्य्यात् शिरागतः शूलं शिराकुञ्चनपूरणम्" इति। रुजार्त्तं वेदनार्त्तम्। अत्र प्रधानेन वायुना; एतेन पित्तरक्तावृते वाते बन्धनविधिर्निषिद्धः। अन्ये तु वाल्ककार्पासिकौर्णिकैरिति पठन्ति। तत्र वाल्कं वल्कलमयम्। उन्द्रः पानीयविड़ालः। चर्म्मगोणी चर्म्मप्रसेवकः, छगलादिगञ्ज इत्यर्थः॥ १६॥

अवयवविशेषगते वायौ क्रियाविशेषमाह—स्कन्धेत्यादि। वक्षः स्तनान्तरालम्। त्रिक-मूर्द्धंसिकम्। नस्यमत्र शिरोविरेचनम्। कुशलेन क्रियाविदा अवस्थाविदा भिषजा इत्यर्थः॥ १७॥

शिरोगतेऽपि विशेषमाह- शिर इत्यादि। चकारोऽत्र वमनं शिरोविरेचनं वानुक्तमपि समुच्चिनोति। रक्तमोक्षणं पुनरस्य क्रियान्तरेणाप्रशाम्यति वाते कर्त्तव्यम्। शिरोवस्तिधारणे कालाव-धारणं निर्दिशन्नाह- स्नेहमित्यादि। मात्रा कालविशेषः। तथाहि—"निमिषोन्मेषणे पुंसां

सर्व्वाङ्गगतमेकाङ्ग-स्थितं वापि समीरणम् ।
रुणद्धि केवलो वस्तिर्वायुवेगमिवाचलः ॥ १९ ॥
स्नेहस्वेदस्तथाभ्यङ्गो वस्तिः स्नेहविरेचनम् ।
शिरोवस्तिः शिरःस्नेहो धूमः स्नैहिक एव च ॥
सुखोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च ।
रसाः क्षीराणि मांसानि स्नेहाः स्नेहान्वितश्च यत् ॥
भोजनानि फलाम्लानि स्निग्धानि लवणानि च ।
सुखोष्णाश्च परीषेकास्तथा संवाहनानि च ॥
कुङ्कुमागुरुपत्राणि कुष्ठैलातगराणि च ।
कौशेयौर्णिकरोमाणि कार्पासानि गुरूणि च ॥
निवातातपयुक्तानि तथा गर्भगृहाणि च ।
मृद्वी शय्याग्निसन्तापो ब्रह्मचर्य्यं तथैव च ।
समासेनैवमादीनि योज्यान्यनिलरोगिषु ॥ २० ॥

स्फोटनं वा तथाङ्गुलेः । अक्षरस्य लघोर्वापि मात्रा तूच्चारणं भवेत्" इति । योगतः युक्तितः । युक्तिं चोत्तरतन्त्रे क्रियाकल्पे व्याख्यास्यामः । ननु वाते दशसहस्राण्युक्तानि, अत्र तु सहस्रमात्राधारणमुक्तमिति विरोधः, सत्यम्, तत्र अक्षिणि स्थितानां शिराणामत्यन्तसूक्ष्मत्वात् तावतैव कालेन गुणो भवतीति जेज्जटः । गयी तु योगत इति योगे स्वस्थवृत्ते मात्रासहस्रधारणोपदेशं मन्यते । तत्र हि शालाक्यक्रियाकल्पोक्ते शिरोवस्तौ यथादोषं षड्ष्टदशसहस्राणि धारणमात्रा उक्ता, न स्वस्थस्य शिरोवस्तिधारणमात्रा तत्रोक्ता, अत इह स्वस्थस्य मात्रासहस्रधारणोपदेशः कृत इति ॥ १८ ॥

तत्र स्नेहवस्तिमेव वातव्याधौ दर्शयन्नाह— सर्व्वाङ्गेत्यादि ॥ १९ ॥

इदानीं सर्व्ववातव्याधीनामुक्तानामनुक्तानाञ्च सामान्येन सकलं प्रत्यनीकं दर्शयन्नाह— स्नेहस्वेद इत्यादि । स्नेहस्वेद इति स्नेहस्वेदो न रूक्षस्वेदः, तस्य वातकारित्वात् । अन्ये तु स्नेहः स्वेद इति विच्छिद्य पठन्ति । तन्मते स्नेहान्वितञ्च यदिति स्नेहग्रहणं पुनरुक्तम् । रसाः मांसरसाः, स्नेहाः घृतादयः । स्नेहान्वितञ्च यदिति यत्किञ्चिद् वस्तु घृतादियुक्तमित्यर्थः, अथवा स्नेहगुणयुक्तं किञ्चिद् वस्तु । फलाम्लानि दाडिमाद्यम्लीकृतानि । संवाहनं सुखकरस्पर्शः । कौशेयेत्यादि आवरणानीति शेषः । कौशेयं कोशकारकृमिलालोद्भूतं तसर इति लोके । और्णिकरोमाणि मेषादिजातानि रोमाणीत्यर्थः । गर्भगृहाणि अभ्यन्तरगृहादीनीत्यर्थः । एतानि च यथावस्थं यथाव्याधि च प्रयोज्यानि ॥ २० ॥

त्रिवृद्दन्तीसुवर्णक्षीरीसप्तलाशङ्खिनीत्रिफलाविडङ्गानामक्षसमाः कल्काः, विल्वमात्रः कल्कस्तिल्वकमूलककम्पिल्लकयोः, त्रिफलारसदधिपात्रे द्वे द्वे, घृतपात्रमेकं, तदैकध्यं संसृज्य विपचेत्; तिल्वकसर्पिरेतत् स्नेहविरेचनमुपदिशन्ति वातरोगिषु। तिल्वकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः॥ २१॥

तिलपरिपीड़नोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वावक्षुद्य महति कटाहे पानीये आप्लाव्य क्काथयेत्, ततः स्नेहमम्बुपृष्ठाद् यदुदेति तत् सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतिवापञ्च स्नेहपाककल्पेन विपचेत्, एतदणुतैलमुपदिशन्ति वातरोगेषु। अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम्॥ २२॥

अथ महापञ्चमूलकाष्ठैर्बहुभिरवदह्यावनिप्रदेशमसितमुषितमेकरात्रमुपशान्तेऽवापोह्य भस्म निवृत्तां भूमिं विदारीगन्धादिसिद्धेन तैलघटशतेन तुल्यपयसा

तिल्वकसर्पिरुत्पादयति—त्रिवृदित्यादि। त्रिवृदादयो विडङ्गान्ताः अक्षसमाः कर्षप्रमाणा इत्यर्थः। सुवर्णक्षीरी कङ्कुष्ठम्। सप्तला यवतिक्ताभेदः। शङ्खिन्यपि तद्भेदः। विल्वमात्र इत्यादि। तिल्वकः पट्टिकारोध्रः, कम्पिल्लकः एलावृक्षः (रोचनिका), एतयोः प्रत्येकं कल्को विल्वमात्रः विल्वप्रमाण इत्यर्थः। त्रिफलेत्यादि त्रिफलाक्काथपात्रे द्वे दधिपात्रे ऽपि द्वे, पात्रमाढ़कञ्चतुःषष्टिपलानि, स च द्रवत्वाद् द्विगुणो ज्ञेयः। घृतपात्रमप्येवम्। तिल्वकविधिमतिदिशन्नाह—तिल्वकेत्यादि। कल्पना चेयम्—तिल्वकस्थानेऽशोकः, अन्ये तु रम्यकः। शेषं पुनः कम्पिल्लकत्रिवृद्दन्त्यादि त्रिफलारसादि समानं पूर्व्वेण। रम्यको द्रेक्का पर्व्वतनिम्वः राजनिम्वः इति लोके॥ २१॥

अणुतैलमुत्पादयन्नाह—तिलेत्यादि। अणुभ्यस्तैलद्रव्येभ्यो निष्पीड्यत इत्यणुतैलम्। तिलपरिपीड़नोपकरणकाष्ठानि चक्रयष्टिमर्कटिकाप्रभृतीनि। अनल्पकालं तैलपरिपीतानि चिरकालं तैलभावितानीत्यर्थः। अणूनि सूक्ष्माणि। खण्डशः कल्पयित्वा कृत्वेत्यर्थः। अवक्षुद्य सुष्ठु पिष्ट्वा चूर्णयित्वा च। आप्लाव्य प्रक्षिप्य। अम्बुपृष्ठात् पानीयोपरि यदुदेति यदुत्पद्यते, तत् सरकपाण्योरन्यतरेण एकेन आदाय गृहीत्वा, सरकं मृन्मयं पात्रं शराव इति लोके; गयी तु सरकं कांस्यताम्रादिभाजनम्, पाणिर्हस्तः। वातघ्नौषधानि भद्रदार्व्वादीनि। प्रतिवापः कल्कः। स्नेहपाककल्पेन विपचेदिति स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रव इत्यर्थः। द्रवाः पुनरत्र वक्ष्यमाणतैलोदिताः क्काथमांसरसक्षीराम्लानि चत्वारि समभागानि। अणुभ्य इत्यादि कारणाणुत्वेन कार्य्येष्वणुत्वव्यपदेश इत्यर्थः॥ २२

सहस्रपाकं व्युत्पादयन्नाह—पञ्चमूलप्रमाणं तैलं भूमिभागप्रमाणेन परिस्राव्य। असितं कृष्णभूमिप्रदेशमित्यर्थः। उषितं स्थितम्। अपोह्य भूमिं पयसा स्फोटयित्वा। निवृत्ताम् उपशान्ततापामित्यर्थः। विदारिगन्धादीत्यादि। कल्ककषायकल्पेन विदारिगन्धादिपक्वेन तैलं

अभिषिच्यैकरात्रमवस्थाप्य ततो यावती मृत्तिका स्निग्धा स्यात् तामादायोष्णोदकेन महति कटाहेऽभ्यासिञ्चेत्, तत्र यत् तैलमुत्तिष्ठेत् तत् पाणिभ्यां पर्य्यादाय स्वनुगुप्तं निदध्यात्; ततस्तैलं वातहरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं विपचेद् यावता कालेन शक्नोति पक्तुम्; प्रतिवापश्चात्र हैमवता दक्षिणापथगाश्च गन्धा वातघ्नानि च, तस्मिन् सिध्यति शङ्खानाध्मापयेद् दुन्दुभिं घातयेच्छत्रं धारयेद् वालव्यजनैश्च वीजयेद् ब्राह्मणसहस्रं भोजयेत्, तत् साधुसिद्धमवतार्य्य सौवर्णे राजते मृन्मये वा पात्रे स्वनुगुप्तं निदध्यात्। तदेतत् सहस्रपाकमप्रतिवारवीर्य्यं राजार्हं तैलम्; एवं भागशतविपक्वं शतपाकम् ॥ २३ ॥

घटशतेन तुल्यपयसा भूमिमभिषिञ्चयेत्। तैलमत्र तिलतैलम्। स्निग्धेति तैलक्षीराभ्यामार्द्रीकृतेत्यर्थः। महति कटाहे अत्रैकवचनं जात्यपेक्षया। तेनैकस्मिन् द्वयोस्त्रिषु वा। अभ्यासिञ्चेत् प्लावयेत्। वातहरौषधानि भद्रदार्व्वादीनि। क्वाथः क्वाथकल्पेन सिद्धः। मांसरसः जाङ्गलमांसरसकल्पेन सिद्धः। क्षीरं गोक्षीरं, अम्लं काञ्जिकम्। भागसहस्रेणेति अत्र भागश्चतुर्थांशः। तेन वातहरक्वाथमांसरसक्षीराम्लानां प्रत्येकं भागसहस्रं; तेनैतदुक्तं भवति—प्रतिपाकं क्वाथादिभिस्तैलापेक्षया प्रत्येकं पादिकैः समुदायतस्तैलसमैः सहस्रपाकं यथा भवति एवं वारसहस्रं पचेदिति गयी। जेज्जटस्तु क्वाथादीनां समुदायतस्तैलापेक्षया चतुर्थांशानां सहस्रमपि एकवारमेव निक्षिप्य विपचेदिति मन्यते। सहस्रपाकमिति तु संज्ञा, प्रत्येकं सहस्रवारान् पाके सति तैलोपक्षयः स्यात्। एतच्च गयदासेन दूषितम्। तद्यथा—न हि सर्व्वतैलोपक्षयो भवति, किन्तु किञ्चिदेव, प्रतिपाकं क्षीरस्य पादिकस्य प्रवेशात्। अल्पः पुनरुपक्षयो राज्ञां महाधनानां यत्किञ्चिदेवेति। तस्मात् महाचार्य्याभ्यां व्याख्यातत्वात् पाकप्रकारद्वयमपि प्रमाणम्। यद्यपि द्रवसहस्रभागेन शतं वारान् विपचेदिति केनचिदुक्तं, तथापि ईदृशं न बोद्धव्यम्, प्रमादव्याख्यानत्वात्। प्रतिवापश्चात्र पत्रकल्कस्यावाप इत्यर्थः। हैमवता इति हैमवता उत्तरापथसम्भूताः, ते पुनः कस्तूरीशटीकुष्ठमांसीसरलसुरदारुसुरात्वगादयः। दक्षिणपथगाः चन्दनजातीफलकक्कोलकङ्कादयः। तैः कल्कीकृतैस्तैलपादिकैः। वातघ्नानि चेति वातघ्नैस्तैरपि शतपुष्पामिसिप्रभृतिभिर्वातहरगणपरिपठितैः। तत्र शङ्खाध्मापनादेरचिन्त्यशक्तित्वात् अतिशयव्युत्पादनार्थाः। अन्ये तु तैलघटशतेन दुग्धवसाभ्यामभ्यासिञ्चेदिति पठन्ति, तन्न पठितव्यम्, विवेककर्त्तृभिरुपाध्यायैरव्याख्यातत्वात्। शतपाकमुत्पादयन्नाह—एवं भागशतेत्यादि। एतत् सुबोधम् ॥ २३ ॥

गन्धर्व्वहस्तकमुष्कक नक्तमालाटरूषक पूतीकारग्वध-चित्रकादीनां पत्राण्यार्द्राणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेत्; एतत् पत्रलवणमुपदिशन्ति वातरोगेषु। ( पत्रलवणम् )॥ २४॥

एवं स्नुहीकाण्डवार्त्ताकुशिग्रुलवणानि संक्षुद्य घटं पूरयित्वा सर्पिस्तैलवसामज्जभिः प्रक्षिप्यावलिप्य गोशकृद्भिर्दाहयेत्; एतत् स्नेहलवणमुपदिशन्ति वातरोगेषु ( काण्डलवणम् )॥ २५॥

गण्डीरपलाशकुटजविल्वार्कस्नुह्यपामार्गपाटलापारिभद्रकनादेयीकृष्णगन्धानीप-निम्बनिर्दहन्यटरूषक-नक्तमालक-पूतीकबृहती-कण्टकारिकाभल्लातकेङ्गुदी-वैजयन्तीकदली-वाष्पद्वयेक्षुरकेन्द्रवारुणी-श्वेतमोक्षकाशोका इत्येवं वर्गं समूलपत्रशाखमार्द्रमाहृत्य लवणेन सह संसृष्टं पूर्ववद् दग्ध्वा क्षारकल्पेन परिस्राव्य विपचेत्, प्रतिवापश्चात्र हिङ्ग्वादिभिः पिप्पल्यादिभिर्वा। इत्येतत् कल्याणकलवणं वातरोगेषु गुल्मप्लीहाग्निसङ्गाजीर्णार्शोऽरोचकार्त्तानां कासादिभिः क्रिमिभिरुपद्रुतानाञ्चोपदिशन्ति पानभोजनेष्वपि ( कल्याणकलवणम् )॥ २६॥

वातप्रधानेषु कफप्रधानेषु च तथा सङ्कुचिताध्मातादिषु च भोजनोपयोगीनि लवणान्युत्पादयन्नाह—गन्धर्व्वेत्यादि। गन्धर्व्वहस्तः एरण्डः। मुष्ककः कृष्णपुष्पमुष्ककः। नक्तमालः करञ्जः। पुतीकश्चिरविल्वः। सर्व्वपत्रसमं लवणं सैन्धवं देयमिति वृद्धवैद्याः। एतद् वातरोगेषु कफप्रायेषु॥ २४॥

एवमित्यादि। स्नुहीकाण्डः सेहुण्डयष्टिः। चतुःस्नेहस्य लवणस्य सैन्धवस्य च सर्व्वद्रव्येण समत्वं बोद्धव्यम्। वातरोगेषु वातप्रायेषु॥ २५॥

गण्डीरेत्यादि। गण्डीरो द्विविधः, स्थलजो जलजश्च; तत्र स्थलजो हरितशाकपठितः, जलजो जलपिप्पलीगण्डीरः। पलाशः शटी। नादेयी जलजम्बूः। कृष्णगन्धा शोभाञ्जनकः। नीपो महाकदम्बः; निर्दहनी मोरटः, अग्निमन्थ इत्येके, अपरे चित्रकमाहुः। वैजयन्ती अरणिका। वाष्पद्वयं वाष्पिकाद्वयं तच्च शोणितं कृष्णञ्च सिन्धुविषये, केचिद् वर्षाभूद्वयमिति पठन्ति। इक्षुरकस्तालमाखना। सर्व्वद्रव्यसमं सैन्धवलवणम्; एतत् सर्व्वमुदूखले संक्षुद्य दहेत्। तद् भस्म पृथक् कृत्वा लवणात् क्षारकल्पेन परिस्राव्य तत्र लवणं प्रक्षिप्य क्षारवत् मृद्वग्निना पचेत्। प्रतिवापश्चात्र लवणपादः पिप्पल्यादेर्हिङ्ग्वादेर्वा। अग्निसङ्गोऽग्निमान्द्यम्। अजीर्णमलसकविसूचिकादि। कासादिभिरिति आदिशब्दात् श्वासहिक्कादयः कफवातजाः। केचित् प्रतिवापं पिप्पल्यादिं मन्यन्ते, हिङ्ग्वादिमपरे, हिङ्ग्वादिं पिप्पल्यादिञ्चान्ये। एतत् त्रयमपि प्रमाणम्, पूर्व्वेषामाचार्य्याणां सम्मतत्वात्॥ २६॥

भवति चात्र ।

विष्यन्दनादुष्णभावाद् दोषाणाञ्च विपाचनात् ।
संस्कारपाचनाच्चेदं वातरोगेषु शस्यते ॥ २७ ॥

इति सुश्रुत संहितायां चिकित्सितस्थाने वातव्याधिचिकित्सितं
नाम चतुर्थोऽध्यायः ॥ ४ ॥

लवणफलानुशंसामाह—विष्यन्दनादित्यादि । विष्यन्दनात् स्रवणात् । लवणफलानुशंसां केचिदभिदधति । अन्ये त्वनार्षमाहुरिमं पाठम् ॥ २७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
वातव्याधिचिकित्सितव्याख्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो महावातव्याधिचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

द्विविधं वातशोणितमुत्तानमवगाढ़ञ्चेत्येके भाषन्ते, तत् तु न सम्यक्; तद्धि कुष्ठवदुत्तानं भूत्वा कालान्तरेणावगाढ़ीभवति, तस्मान्न द्विविधम् ॥ २ ॥

तत्र वलवद्विग्रहादिभिः प्रकुपितस्य वायोर्गुरूष्णाध्यशनशीलस्य प्रदुष्टं शोणितं मार्गमावृत्य वातेन सहैकीभूतं युगपद् वातरक्तनिमित्तां वेदनां जनयतीति वातरक्तम् । तत् तु पूर्व्वं हस्तपादयोरवस्थानं कृत्वा पश्चाद् देहं व्याप्नोति । तस्य पूर्व्वरूपाणि—तोददाहकण्डूशोफस्तम्भत्वक्पारुष्यशिरास्नायुधमनीस्पन्दनसक्थिदौर्ब्बल्यानि श्यावरक्तमण्डलोत्पत्तिश्चाकस्मात् पाणिपादतलाङ्गुलिगुल्फमणिवन्धप्रभृतिषु । तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्तस्तस्य लक्षणमुक्तम् । तत्राप्रतिकारिणो वैकल्यं भवति ॥ ३ ॥

भवति चात्र ।

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनाञ्चापि वातरक्तं प्रकुप्यति ॥ ४ ॥

प्रतिज्ञानन्तरं तन्त्रान्तरोक्तद्वैविध्यनिराकरणमाह— द्विविधमित्यादि । उत्तानं त्वङ्मांसाश्रयम् । अवगाढ़मन्तराश्रयम् ॥ १ । २ ॥

तस्येदानीं सम्प्राप्तिपूर्व्विकां निरुक्तिं निर्द्दिशन्नाह—तत्रेत्यादि । बलवद्विग्रहादयः व्रणप्रश्नोक्ताः । गुरूष्णाध्यशनशीलादयश्च तत्रैवोक्ताः । युगपदेककालम् । तस्येत्यादि । मणिबन्धः पाणिमूलम् । तत्र वलवद्विग्रहादिभिरित्यारभ्य यावदपचारिणश्चेत्यत्र ग्रन्थस्यार्थो निदानपरिपठितोऽपि वातरक्तस्य दुःसाध्यत्वज्ञापनायात्रापि पठनीयः । तत्रेत्यादि तत्रेति पूर्व्वरूपे । अपचारिणः अयथार्थकारिणः । रोगो व्यक्तः विकारः प्रकटो भवतीत्यर्थः । तत्रेति रोगव्यक्तौ, वैकल्यम् विकलता । एतेनासाध्यत्वमुक्तम् ॥ ३ ॥

इदानीं विशेषेण वातशोणिताश्रयं निर्द्दिशन्नाह—भवति चात्र । प्रायश इत्यादि । सुकुमाराणां स्थूलानां सुखितानाञ्च प्रायेण व्यायामाभावात्; व्यायामेन मिथ्याहारविहारयोरपि अदोषत्वात् अल्पदोषत्वाद् वा विकारासम्भवः ॥ ४ ॥

तत्र प्राणमांसक्षयपिपासाज्वरमूर्च्छाश्वासकासस्तम्भारोचकाविपाकविसरण-सङ्कोचनैरनुपद्रुतं बलवन्तमात्मवन्तमुपकरणवन्तञ्चोपक्रमेत् ॥ ५ ॥

तत्रादावेव बहुवातरूक्षम्लानाङ्गादृते मार्गावरणाद् दुष्टशोणितमसकृदल्पाल्पमवसिञ्चेद् वातकोपभयात्। ततो वमनादिभिरुपक्रमरुपपाद्य प्रतिसंसृष्टभक्तं वातप्रबल पुराणघृतं पाययेदजाक्षीरश्चार्द्धतैलं मधुकाक्षयुक्तं शृगालविन्नासिद्धं वा शर्करामधुमधुरं शुण्ठीशृङ्गाटककशेरुकसिद्धं वा, श्यामारास्नासुषवीशृगालविन्नापीलुशतावरीश्वदंष्ट्राद्विपञ्चमूलीसिद्धं वा ॥ ६ ॥

द्विपञ्चमूलीकाथाष्टगुणसिद्धेन च पयसा मधुकमेषशृङ्गी-*श्वदंष्ट्रासरलभद्रदारुवचासुरभिकल्कप्रतीवापं तैलं पाचयित्वा पानादिषूपयुञ्जीत, शतावरी-

कीदृश उपक्रम्यस्तदाह—तत्रेत्यादि। बलवन्तमिति उपचयशक्तिलक्षणोभयबलयुक्तम्; प्राणमांसक्षयशब्देन उभयलक्षणस्य निवृत्तिविषयत्वादेव प्रवृत्तिविषयमप्युभयलक्षणमेव युक्तम् ॥ ५ ॥

तत्र दोषदूष्ययोः पूर्वं दूष्यचिकित्सितमेव निर्दिशन्नाह—तत्रेत्यादि। बहुवातत्वेन हेतुना रूक्षमस्निग्धं म्लानं शुष्यदङ्गं यस्य देहिनस्तस्मादृते इत्यर्थः। मार्गावरणं मार्गावरोधनं, तस्मात् दुष्टशोणितं प्रकुपितरुधिरम्। असकृत् अनेकवारान्। अवसिञ्चेत् स्रावयेदित्यर्थः। दोषचिकित्सितमाह—ततो वमनादिभिरित्यादि। आदिशब्दाद् विरेचनास्थापनानुवासनादिभिरुपक्रमैः चिकित्साधिकारोक्तैः। उपपाद्य योजयित्वा। प्रतिसंसृष्टभक्तमिति प्रतिसंसृष्टं पेयादिक्रमेण त्यक्तं भक्तं यस्य पुरुषस्येत्यर्थः। वातप्रबले वातरक्ते। पुराणघृतं कालेनैव पक्वम्। तत्र पाणिगतं वातरक्तमूर्द्ध्वगतदोषेण, पादगतं वातरक्तमधोगतेन दोषेण भवति। तत्र पाणिगते कफपित्तानुबन्धे वमनविरेचने, तत्रैव जीर्णघृतपानम्। पादगते वातानुबन्धे आस्थापनपूर्वकमनुवासनम्। तत्रैकं शुद्धिदिनम्, संसर्ज्जनदिनानि षट्, अष्टमे स्नेहाङ्गभोजनं, नवमे पुराणघृतपानमिति। अजाक्षीरमर्द्धतैलं यष्टिमधुकर्षयुक्तम्। तदेव पृश्निपर्ण्यादिसिद्धं, शुण्ठ्यादिसिद्धं, श्यामादिसिद्धं वा इत्येवं त्रिषु योगेषु अजाक्षीरमर्द्धतैलमभिसम्बध्यते। तत्रार्द्धतैलमिति अजाक्षीरस्य भागद्वयं तैलस्य एक इत्यर्थः। शृगालविन्ना पृश्निपर्णी, तया सिद्धं क्षीरपाककल्पनया। श्यामा त्रिवृद्विशेषः, वृद्धदारक इत्यन्ये। रास्ना सुरसा काँटा आमरुल इति भाषा। सुषवी पानीयवल्ली ॥ ६ ॥

पुराणघृततैलं निर्दिश्य पक्वतैलं निर्दिशन्नाह—द्विपञ्चमूलीत्यादि। द्विपञ्चमूलीं कषायकल्पेन विपाच्य पादशेषेण तेनाष्टगुणेन क्षीरं साधयेत्। क्षीरशेषमवतार्य मधुकादिकल्कयुक्ततैलं साधयेदिति। सुरभिः रास्ना। प्रतिवापः प्रक्षेपः। पानादिष्वित्यादि। पानादिषु इत्यादि-

* शार्ङ्गेष्टा इत्यधिकः पाठः क्वचित्।

मयूरककिणिह्यजमोदामधुकक्षीरविदारीवलातिवलातृणपञ्चमूलीकाथसिद्धं वा, काकोल्यादिप्रतिवापं बलातैलं शतपाकञ्चेति। वातहरमूलसिद्धेन च पयसा परिषेचनमम्लैर्वा कुर्व्वीत। यवमधुकैरण्डतिलवर्षाभूभिर्वा प्रदेहः कार्य्यः॥७॥

तत्र चूर्णितेषु यवगोधूमतिलमुद्गमाषेषु प्रत्येकशः काकोली-क्षीरकाकोली-जीवकर्षभक--वलातिबला-विसमृणाल--शृगालविन्ना--मेषशृङ्गी-प्रियाल--शर्करा-कशेरुकसुरभिवचाकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसा व्याख्याताः। स्नैहिकफलसारोत्कारिका वा, चूर्णितेषु यवगोधूम-तिलमुद्गमाषेषु मत्स्यपिशितवेशवारो वा, विल्वपेशिकातगरदेवदारु-सरलारास्नाहरेणुकुष्ठशतपुष्पैलासुरादधिमस्तुयुक्त उपनाहः, मातुलुङ्गाम्ल-सैन्धवघृतमिश्रं मधुशिग्रुमूलमालेपस्तिलकल्कश्चेति वातप्रवले॥८॥

शब्दादम्भङ्गपरिषेकादयः। शतावरीत्यादि। सिद्धं तैलमिति शेषः। मयूरकः अपामार्गः। क्षीरविदारी दीर्घकन्दा भृशं मधुरा। तृणपञ्चमूली कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञा। शतपाकमिति बलाक्काथकल्काभ्यां शतशः कृत्वा विपाच्य प्रयोज्यम्। श्रीजेज्जटस्तु बलातैलं सूद्गर्भोक्तमाह। शतपाकन्तु सहस्रपाकतुल्यमेवाह। एते च योगा दोषादीनवेक्ष्य यथावस्थं योज्याः। अन्तःपरिमार्ज्जनमभिधाय वहिःपरिमार्ज्जनं निर्दिशन्नाह—वातहरेत्यादि। वातहरं दशमूलम्। अम्लैरिति सुरासौवीरकतुषोदकादिभिः। प्रदेहः प्रलेपः॥७॥

तत्रेत्यादि। तत्र चूर्णितेषु यवादिषु पञ्चसु प्रत्येकं काकोल्यादिवचान्तकल्कमिश्रेषूपनाहार्थं सपिस्तैलवसामज्जदुग्धसिद्धाः पञ्च पायसाः व्याख्याताः। ते तु नातिद्रवा नातिसान्द्राः प्रदेहयोग्या योज्याः। पयसा संस्कृताः पायसाः। यद्यपि सर्पिरादीनि संस्कारकत्वेनोपन्यस्तानि तथापि पय एव प्रधानमिति तद्व्यपदेशः। स्नैहिकफलानि तिलैरण्डातसीविभीतकादीनि। तेषां यथासम्भवं सारो मज्जा। अत्रानुक्तमपि क्षीरं स्नेहफलकल्कपाकनिष्पत्तये कल्पनीयम्। उत्कारिका लप्सिका। चूर्णितेष्वित्यादि। पिशितवेशवारः मांसमयो वेशवारः। अन्ये तु नलमीनमत्स्यामिषवेशवारो वेति पठन्ति, व्याख्यानयन्ति च—नलमीनः रोहितभेदः, पामरेषु मिउक इति प्रसिद्धः, मण्डि इत्यन्ये, तीरभुक्तौ तु जनास्तं अङ्गपिङ्गमाहुः। मीनग्रहणं विशेषकरणार्थं, मत्स्यशब्देन तु सामान्यमत्स्य एव गृह्यते। अन्ये तु आनूपमत्स्यामिषवेशवारैरिति पठन्ति, आमिषशब्देन आनूप-मांसमाहुः। तथाच वातरक्ते चरकः—"औदकप्रशस्तवेशवारसुसंस्कृता जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने" इति। "विचित्रमत्स्यपिशितवेशवारो वा" इति क्वचित्। विल्वेत्यादि विल्वपेशिकादि पेष्यं, सुरादि तस्य पेषणाय द्रव्यं, विल्वपेशिका बालविल्वगिरः, वेलशुण्ठ्या इति भाषा। सरला त्रिवृत्। मातुलुङ्गेत्यादि। मातुलुङ्गादिभिः सह शोभाञ्जनकमूलं ससैन्धवमालेपः। तिलकल्कश्चेति तिलानां मातुलुङ्गादिरसपिष्टानां पूर्व्ववदेवालेप इत्येके, केवल एव तिलकल्क इत्यन्ये॥८॥

पित्तप्रबले द्राक्षारेवतकट्फलपयस्यामधुकचन्दनकाश्मर्य्यकषायं शर्करामधुमधुरं पाययेत्, शतावरीमधुकपटोलत्रिफलाकटुरोहिणीकषायं, गुडूचीकषायं वा, पित्तज्वरहरं वा चन्दनादिकषायं शर्करामधुमधुरं मधुरतिक्तकषायसिद्धं वा सर्पिः ॥ ९ ॥

बिसमृणालभद्रश्रियपद्मकषायेणार्द्धक्षीरेण परिषेकः। क्षीरेक्षुरसमधुशर्करातण्डुलोदकैर्वा द्राक्षेक्षुकषायमिश्रैर्मस्तुमधुधान्याम्लैः, जीवनीयसिद्धेन वा सर्पिषाभ्यङ्गः शतधौतघृतेन वा, काकोल्यादिकल्कविपक्वेन वा सर्पिषा ॥ १० ॥

शालि-षष्टिक-नलवञ्जुलतालीश-शृङ्गाटक-गलोड्यगौरी-शैरिकशवलपद्मकपद्मपत्रप्रभृतिभिर्धान्याम्लपिष्टैः प्रदेहो घृतमिश्रः, वातप्रबलेऽप्येष सुखोष्णः प्रदेहः कार्य्यः। रक्तप्रबलेऽप्येवं, बहुशश्च शोणितमवसेचयेत् शीततमाश्च प्रदेहाः कार्य्या इति ॥ ११ ॥

श्लेष्मप्रबले त्वामलकहरिद्राकषायं मधुमधुरं पाययेत्। त्रिफलाकषायं वा, मधुकशृङ्गवेरहरीतकीतिक्तरोहिणीकल्कं वा सक्षौद्रं मूत्रतोययोरन्यतरेण गुडहरीतकीं वा भक्षयेत् ॥ १२ ॥

पित्तानुबन्धस्य चिकित्सां निर्दिशन्नाह- पित्तेत्यादि। आरेवतकः किरमालकः। पयस्या अर्कपुष्पी, क्षीरविदारिकेत्यन्ये। शतावरीत्यादि। मधुराणि काकोल्यादीनि, तिक्तानि पटोलादीनि, कषायाणि त्रिफलादीनि, तेषां कषायकल्काभ्यां सिद्धं घृतं पाययेदित्यर्थः ॥ ९ ॥

बिसेत्यादि। बिसं भिसण्टकमिति लोके, मृणालं पद्मनालम्, भद्रश्रियं शुक्लचन्दनम्। परिषेकः सर्व्वतो धारासेचनम्। क्षीरेत्यादि क्षीरेक्षुरसाभ्यामेको योगः। मध्वादिभिर्द्वितीयो योगः। द्राक्षादिकषायमिश्रैर्मस्त्वादिभिस्तृतीयः। जीवनीयेत्यादि काकोल्यादिकषायकल्कविपक्वेन सर्पिषाभ्यङ्गः, शतधौतघृतेन वाऽभ्यङ्ग इत्यर्थः ॥ १० ॥

शालीत्यादि। वञ्जुलो वेतसः। गलोड्यं पद्मबीजम्। गौरी हरिद्रा। शैवलं शैवालम्। धान्याम्लं काञ्जिकम्। अयञ्च प्रदेहः शीतोऽबहुलश्च कर्त्तव्यः। पित्तप्रबलचिकित्सितमुक्तमन्यत्राप्यतिदिशन्नाह—रक्तेत्यादि ॥ ११ ॥

रोहिणीकल्कमित्यत्रापि चूर्णमित्येके, तत् सक्षौद्रं मूत्रतोययोरन्यतरेण गुडहरीतकीं वा भक्षयेत् ॥ १२ ॥

तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिःक्वाथः परिषेकः, आरग्वधादि-कषायैर्वोष्णैः। मस्तुमूत्रसुराशुक्तमधुकसारिवापद्मकसिद्धं वा घृतमभ्यङ्गः। तिलसर्षपातसीयवचूर्णानि श्लेष्मातककपित्थमधुशिग्रु मिश्राणि क्षारमूत्रपिष्टानि प्रदेहः; श्वेतसर्षपकल्कः तिलाश्वगन्धाकल्कः प्रियालशेलुकपित्थकल्कः मधुशिग्रु-पुनर्नवाकल्कः व्योषतिक्तापृथक्पर्णीबृहतीकल्क इत्येते पञ्च प्रदेहाः सुखोष्णाः क्षारोदकपिष्टाः। शालिपर्णी पृश्निपर्णी बृहत्यौ वा क्षीरपिष्टास्तर्पण-मिश्राः ॥ १३। १४ ॥

संसर्ग सन्निपाते च क्रियापथमुक्तं मिश्रं कुर्य्यात् ॥ १५ ॥

सर्व्वषु च गुड़हरीतकीमासेवेत, पिप्पलीर्वा क्षीरपिष्टा वारिपिष्टा वा पञ्चाभिवृद्ध्या दशाभिवृद्ध्या वा पिबेत् क्षीरौदनाहारो दशरात्रं, भूयश्चाप-कर्षयेत्, एवं यावत् पञ्चदश चेति। तदेतत् पिप्पलीवर्द्धमानकं वातशोणित-विषमज्वरारोचक-पाण्डुरोग-प्लीहोदरार्शः-कासश्वास-शोफशोषाग्निसाद-हृद्रोगोद-राण्युपहन्ति ॥ १६ ॥

जीवनीयप्रतिवापं सर्पिः पयसा पाचयित्वाभ्यञ्ज्यात् * ॥ १७ ॥

सहासहदेवाचन्दन-मूर्व्वामुस्ताप्रियालशतावरीकशेरुपद्मकमधुक-शतपुष्पा † कुष्ठानि क्षीरपिष्टः प्रदेहो घृतमण्डयुक्तः, सैरेयकाटरुषकबलातिबलाजीवन्ती-

तैलेत्यादि। तैलादिभिः कोष्णैः परिषेक इति शेषः। आरग्वधादीत्यादि परिषेक इति शेषः। मस्त्वित्यादि। प्रत्येकं मस्त्वादिभिश्चतुर्भिर्घृतसमैः, मधुकादिभिस्त्रिभिः पादकल्कैः पक्वेन सर्पिषाभ्यङ्गः। तिलेत्यादि श्लेष्मातकः शेलुः बहुयार इति लोके। अपरान् पञ्च प्रदेहानाह—श्वेतेत्यादि। प्रथम एकाङ्गः, द्वितीयो द्व्यङ्गः, तृतीयस्त्र्यङ्गः, चतुर्थो द्व्यङ्गः, पञ्चमः षडङ्ग इति। अपरमेकं प्रदेहमाह—शालिपर्णीत्यादि। तर्पणमिश्रा यवशक्तुयुताः ॥ १३। १४ ॥

अनुबन्धभूतदोषद्वयलयजन्मनो वातशोणितस्य चिकित्सितं दर्शयन्नाह—संसर्ग इत्यादि। तत्र संसर्गे द्वयोर्द्वयोर्दोषयोर्मिश्रीकृत्य, सन्निपाते तु त्रयाणामपि एते चोपक्रमाः ॥ १५ ॥

शुद्धदेहस्य सामान्यं चिकित्सितं रोगमात्रप्रत्यनीकं निर्दिशन्नाह—सर्व्वष्वित्यादि। पिप्पली-वर्द्धमानके त्रिभिर्वृद्ध्या, सप्तभिर्वृद्ध्या वेति केचित् पठन्ति। स तु नातिप्रसिद्धः पाठः। स त्यादि। सहा माषपर्णी, सहदेवा गाङ्गेरुकीति प्रसिद्धा, मूर्व्वा चोरस्नायुः, प्रियालश्चारः, घृतमण्डो घृतस्योपरि अच्छो भागः। सैरेयकेत्यादि। सैरेयकादिकल्को वा छागीक्षीरयुक्तः।

* अभ्यञ्जेत् इति वा पाठः। † इतःपरम्—विदारीत्यधिकः पाठः क्वचित्।

सुषवीकल्को वा छागक्षीरपिष्टः, गोक्षीरपिष्टः काश्मर्य्यमधुकतर्पणकल्को वा, मधूच्छिष्टमञ्जिष्ठासर्ज्जरससारिवाक्षीरसिद्धं पिण्डतैलमभ्यङ्गः ॥ १८—२० ॥

सर्व्वेषु च पुराणघृतमामलकरसविपक्वं वा पानार्थे; जीवनीयसिद्धं परिषेकार्थं, काकोल्यादिक्काथकल्कसिद्धं वा, सुषवीकाथकल्कसिद्धं वा, कारवेल्लककाथमात्रसिद्धं वा; वलातैलं वा परिषेकावगाहवस्तिभोजनेषु। शालिषष्टिकयवगोधूमान्नमनवं भुञ्जीत पयसा जाङ्गलरसेन वा मुद्गयूषेण वानम्लेन ॥ २१ ॥

शोणितमोक्षञ्चाभीक्ष्णं कुर्व्वीत। उच्छ्रितदोषे च वमनविरेचनास्थापनानुवासनकर्म्म कर्त्तव्यम् ॥ २२ ॥ *

भवन्ति चात्र।

एवमाद्यैः क्रियायोगैरचिरोत्पतितं सुखम्।
वातासृक् साध्यते वैद्यैर्याप्यते तु चिरोत्थितम् ॥
उपनाहपरीषेक-प्रदेहाभ्यञ्जनानि च।
शरणान्यप्रवातानि मनोज्ञानि महान्ति च ॥
मृदुगण्डोपधानानि शयनानि सुखानि च।
वातरक्ते प्रशस्यन्ते मृदुसंवाहनानि च ॥

सैरेयकः कटशेलुवाकः, मधूच्छिष्टेत्यादि। क्षीरमत्र चतुर्गुणम्। पिण्डतैलमिति अपरिस्रुतं किञ्चिद्युक्तं; कैश्चित् पिण्डतैले शतावरीत्यभिधीयते ॥ १८—२० ॥

सर्व्वेष्वित्यादि। सर्व्वेषु पञ्चस्वपि वातरक्तेषु, एकद्वित्रिदोषजेषु अप्रयोगः। जीवनीयेत्यादि। काकोल्यादिक्काथकल्कमात्रसिद्धं घृतमिति शेषः। सुषवीत्यादि कारवेल्लादिक्काथकल्कमात्रसिद्धं घृतमिति शेषः। वलेत्यादि बलातैलं मूढगर्भोक्तम्। शालीत्यादि पयसा पित्तोत्तरे, जाङ्गलरसेन वातोत्तरे, मुद्गरसेन कफोत्तरे; सात्म्यापेक्षया वा। शोणितेत्यादि। अभीक्ष्णम् अनवरतम्। स्निग्धादिभिर्जितवाते निश्चिते तु शोणितावरणे पुरुषव्याधिबलकालमवलोक्य कुर्व्वीत। वमनेत्यादि। वमनादिकं यद्यपि सामान्येनोक्तं, तथापि कफोत्कटे वमनं, विरेचनं पित्तरक्तोत्कटे, अनुवासनास्थापनकर्म्मणी वातोत्कटे च कर्त्तव्ये ॥ २१ । २२ ॥

एवमाद्यैरेवंप्रकारैः क्रियायोगैरुपायैः अचिरोत्पतितमल्पकालोत्पन्नम्। क्रियायोगानुक्तानुक्तांश्च संग्रहार्थं निर्द्दिशन्नाह—उपनाहेत्यादि। शरणानि गृहाणि। अप्रवातानि निर्वातानि। मनोज्ञानि हर्षदानि। महान्ति विशालानि। गण्डोपधानानि गण्डमसूरिकादीनि; गण्डपदेन

* इतःपरं—पटोलत्रिफलाभीरु-गुडूचीकटुकाकृतम्।
क्काथं पीत्वा जयत्याशु वातशोणितजां रुजम् ॥ इत्यधिकः पाठः केषुचिद् ग्रन्थेषु दृश्यते।

व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम्।
दिवास्वप्नमभिष्यन्दि गुरु चान्नं विवर्ज्जयेत्॥ २३॥

अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवेपनमप्रलापिनमखट्वापातिनमवहिरायामिनश्चोपक्रमेत्॥ २४॥

तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीड़नेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थम्। अनन्तरञ्च विदारीगन्धादिक्काथमांसरसक्षीरदधिपक्वं सर्पिरच्छं पाययेत्, तथाहि नातिमात्रं वायुः प्रसरति। ततो भद्रदार्व्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थं सानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्रय सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापम्। तदेतत् त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विदध्यात्। यथोक्तैश्च स्वेदविधानैः स्वेदयेत्। बलीयसि वाते सुखोष्णतुषवूषकरीषपूर्णे

मस्तकादीनामप्युपधानानि बोध्यानि। सुखानि चेति चकारात् मृदूनि च। संवाहनानि करमर्द्दनानि। आहाराचारं निषिद्धं दर्शयन्नाह—व्यायाममित्यादि। व्यायाममैथुने कायकर्म्मणी। कोपः मानसं कर्म्म। उष्णमुष्णवीर्य्यम्, तेनानूपमांसं मधुरतिक्तं काकमाच्यादि कटु च यत्किञ्चिदुष्णवीर्य्यं तद् गृह्यते। अम्ललवणे तु विशेषार्थं पृथगेव पठिते। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्रासिजननम्॥ २३॥

अपतानकचिकित्सामाह—अपतानकिनमित्यादि। अस्रस्ताक्षमनतिपतितनयनम्। अप्रलापिनं नासम्बद्धभाषिणम्। अखट्वापातिनं खट्वाया न पततीति अखट्वापातिनम्; अयमर्थः—अपतानकवेगेन पतन्नेव पाणिभ्यां भूतलमवलम्बते, हस्तपादद्वयेन खट्वापादकल्पेन पतनशीलः खट्वापाती, नैतादृग्विध इत्यर्थः। अवहिरायामिनम् अपश्चान्मुखनामिनम्। शिरोविरेचनद्रव्याणि पिष्ट्वा अवपीड्य दीयत इत्यवपीड़ः। शुद्धवातापतानकेऽप्यत्र शिरोविरेचनं वायोः कफस्थानगतत्वेन सद्यः संज्ञाप्रबोधार्थम्। अनन्तरमिति शिरोविरेचनस्योर्द्ध्वमित्यर्थः। घृतञ्च विदारिगन्धादिक्काथादिभिश्चतुर्भिर्द्रव्यैर्विदारिगन्धादिकल्कपादिकं साधनीयमिति। पानार्हं घृतमुक्त्वा सर्व्वकार्य्योपयोगिनं महास्नेहमाह—भद्रेत्यादि। भद्रदार्व्वादिर्भद्रदारुकुष्ठहरिद्रावरुणेत्यादिः। भद्रदार्व्वादियवकोलाद्यानूपौदकपञ्चवर्गक्काथस्य काञ्जिकक्षीरयोश्च प्रत्येकं चत्वारो भागा इत्येके; गयदासस्तु अत्र क्षीरं स्नेहसमं मन्यते। आनूपौदकमांसं पञ्चवर्गमिति कूलचराः, प्लवाः कोशस्थाः, पादिनो मत्स्याश्चेति जेज्जटः; गयदासस्तु सानूपौदकमांसवर्गमित्येवं पाठं मन्यते; सानूपौदकमित्यन्ये; तेषां पञ्चानामपि वर्गाणां ग्रहणात्। अम्लानि सुरासौवीरकधान्याम्लादीनि। सर्पिर्विपचेत् तैलवसामज्जभिः सह, तैलादि प्रत्येकं घृततुल्यं दत्त्वा। मधुरकप्रतिवापं काकोल्यादिकल्कप्रक्षेपम्। त्रैवृतमिति सर्पिषोऽत्र त्रिभिर्वृतत्वात् त्रैवृतम्। स्वेदविधानैरिति स्वेदविचारणीयाभिहितैः

कूपे निदध्यादा मुखात्। तप्तायां वाङ्गारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्। कृशरावेशवारपायसैर्वा स्वेदयेत् ॥ २५ ॥

मूलकोरुवूक-स्फूर्ज्जार्ज्जकार्कसप्तला-शङ्खिनीस्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यम्। अम्लुकवता पीतमम्लं दधिमरिचवचायुक्तमपतानकं हन्ति, तैलसर्पिर्वसाक्षौद्राणि च ॥ २६ ॥

एतच्छुद्धवातापतानकविधानमुक्तम्, संसृष्टे संसृष्टं कर्त्तव्यम्। वेगान्तरेषु चावपीड़ं दद्यात्, ताम्रचूड़-कर्कट-कृष्णमत्स्यशिशुमारवराहवसाश्चासेवेत, क्षीराणि वा वातहरसिद्धानि, यवकोलकुलत्थमूलकदधिघृततैलसिद्धां वा यवागूम्। स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्राहृतवेगमुपक्रमेत्। वातव्याधिचिकित्सितश्चावेक्षेत, रक्षाकर्म्म च कुर्य्यादिति ॥ २७ ॥

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तश्चोपक्रमेत्। तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्। वैशेषिकश्चात्र मस्तिष्क्यशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थे, शाल्वणमुपनाहार्थे, वलातैलमनुवासनार्थे। एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत ॥ २८ ॥

निदध्यात् स्थापयेत्। ऊष्मस्वेदोऽयम्। अङ्गारचुल्ल्यां लौहकारचुल्ल्याम्। कृशरेत्यादि अयमुपनाहस्वेदः ॥ २४ । २५ ॥

उरुवूकः शुक्लैरण्डः। स्फूर्ज्जकः फणिज्झकाकारः प्रायशः पारियात्रे भवति। अर्ज्जकः कुठेरकः। शङ्खिनी यवतिक्ताभेदः। मूलकादीनां स्नेहचतुर्गुणेन रसेन सिद्धम्, मूलकादिपादकल्कमकल्कं वा पक्त्वा सुखोष्णं परिषेके द्रवस्वेदे इत्यर्थः। आदिशब्दादभ्यङ्गादिषु। मरिचवचायुक्तमित्यल्पत्वचामरिचम्। संसृष्टे संसृष्टं कर्त्तव्यमिति अनुबन्धभूतयोः पित्तकफयोः संसर्गमुपलभ्य पित्तकफहरं संसृष्टं तदेव कर्त्तव्यम्; जेज्जटस्तु संसृष्टे वातरक्तवच्चिकित्सा कर्त्तव्येत्याह। वेगान्तरेषु वेगोपरमेषु। ताम्रचूडः कुक्कुटः। कृष्णमत्स्यः कुलीरमत्स्याकारोऽशल्कः। ताम्रचूड़ादिवसासेवा भोजनम्, तदुक्तं वृद्धवाग्भटे—"कर्कटकुलीरशिशुमारवराहवसाः पाययेत्" इति ॥ २६ । २७ ॥

पक्षाघातचिकित्सितमाह—पक्षाघातेत्यादि। अम्लानगात्रमहीनगात्रम्। सरुजमिति सह रुजया वर्त्तते यः सः, तम्। यथाकालं कालस्यानतिक्रमेण, तद् यथा—वान्तस्य पक्षाद् विरेचनम्, विरिक्तस्य सप्तरात्रादनुवासनम्, अनुवासितस्य स्नेहलक्षणे सति आस्थापनम्, आस्थापितस्य सद्यः पुनरनुवासनमिति। आक्षेपकविधानेन अपतानकविधानेनेत्यर्थः, आक्षेपकापतानकयोरेकविषयत्वात्।

व्यायामं मैथुनं कोपमुष्णाम्ललवणाशनम्।
दिवास्वप्नमभिष्यन्दि गुरु चान्नं विवर्ज्जयेत्॥ २३॥

अपतानकिनमस्रस्ताक्षमवक्रभ्रुवमस्तब्धमेढ्रमस्वेदनमवेपनमप्रलापिनमखट्वापातिनमवहिरायामिनश्चोपक्रमेत्॥ २४॥

तत्र प्रागेव स्नेहाभ्यक्तं स्विन्नशरीरमवपीड़नेन तीक्ष्णेनोपक्रमेत शिरःशुद्ध्यर्थम्। अनन्तरञ्च विदारीगन्धादिक्वाथमांसरसक्षीरदधिपक्वं सर्पिरच्छं पाययेत्, तथाहि नातिमात्रं वायुः प्रसरति। ततो भद्रदार्व्वादिवातघ्नगणमाहृत्य सयवकोलकुलत्थं सानूपौदकमांसं पञ्चवर्गमेकतः प्रक्वाथ्य तमादाय कषायमम्लक्षीरैः सहोन्मिश्रत्र सर्पिस्तैलवसामज्जभिः सह विपचेन्मधुरकप्रतीवापम्। तदेतत् त्रैवृतमपतानकिनां परिषेकावगाहाभ्यङ्गपानभोजनानुवासननस्येषु विदध्यात्। यथोक्तैश्च स्वेदविधानैः स्वेदयेत्। वलीयसि वाते सुखोष्णतुषबूषकरीषपूर्णे

मस्तकादीनामप्युपधानानि बोध्यानि। सुखानि चेति चकारात् मृदूनि च। संवाहनानि करमर्द्दनानि। आहाराचारं निषिद्धं दर्शयन्नाह—व्यायाममित्यादि। व्यायाममैथुने कायकर्म्मणी। कोपः मानसं कर्म्म। उष्णमुष्णवीर्य्यम्, तेनानूपमांसं मधुरतिक्तं काकमाच्यादि कटु च यत्किञ्चिदुष्णवीर्य्यं तद् गृह्यते। अम्ललवणे तु विशेषार्थं पृथगेव पठिते। अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदप्राप्तिजननम्॥ २३॥

अपतानकचिकित्सामाह—अपतानकिनमित्यादि। अस्रस्ताक्षमनतिपतितनयनम्। अप्रलापिनं नासम्बद्धभाषिणम्। अखट्वापातिनं खट्वाया न पततीति अखट्वापातिनम्; अयमर्थः—अपतानकवेगेन पतन्नेव पाणिभ्यां भूतलमवलम्बते, हस्तपादद्वयेन खट्वापादकल्पेन पतनशीलः खट्वापाती, नैतादृग्विध इत्यर्थः। अवहिरायामिनम् अपश्चान्मुखनामिनम्। शिरोविरेचनद्रव्याणि पिष्ट्वा अवपीड्य दीयत इत्यवपीड़ः। शुद्धवातापतानकेऽप्यत्र शिरोविरेचनं वायोः कफस्थानगतत्वेन सद्यः संज्ञाप्रबोधार्थम्। अनन्तरमिति शिरोविरेचनस्योर्द्ध्वमित्यर्थः। घृतञ्च विदारिगन्धादिक्वाथादिभिश्चतुर्भिर्द्रव्यैर्विदारिगन्धादिकल्कपादिकं साधनीयमिति। पानार्हं घृतमुक्त्वा सर्व्वकार्य्योपयोगिनं महास्नेहमाह—भद्रेत्यादि। भद्रदार्व्वादिर्भद्रदारुकुष्ठहरिद्रावरुणेत्यादिः। भद्रदार्व्वादियवकोलाद्यानूपौदकपञ्चवर्गक्वाथस्य काञ्जिकक्षीरयोश्च प्रत्येकं चत्वारो भागा इत्येके; गयदासस्तु अत्र क्षीरं स्नेहसमं मन्यते। आनूपौदकमांसं पञ्चवर्गमिति कूलचराः, प्लवाः कोशस्थाः, पादिनो मत्स्याश्चेति जेज्जटः; गयदासस्तु सानूपौदकमांसवर्गमित्येवं पाठं मन्यते; सानूपौदकमित्यन्ये; तेषां पञ्चानामपि वर्गाणां ग्रहणात्। अम्लानि सुरासौवीरकधान्याम्लादीनि। सर्पिर्विपचेत् तैलवसामज्जभिः सह, तैलादि प्रत्येकं घृततुल्यं दत्त्वा। मधुरकप्रतिवापं काकोल्यादिकल्कप्रक्षेपम्। त्रैवृतमिति सर्पिषोऽत्र त्रिभिर्वृतत्वात् त्रैवृतम्। स्वेदविधानैरिति स्वेदावचारणीयाभिहितैः

कूपे निदध्यादा मुखात्। तप्तायां वाङ्गारचुल्ल्यां तप्तायां वा शिलायां सुरापरिषिक्तायां पलाशदलच्छन्नायां शाययेत्। कृशरावेशवारपायसैर्वा स्वेदयेत्॥ २५॥

मूलकोरुवूक-स्फूर्ज्जार्ज्जकार्कसप्तला-शङ्खिनीस्वरससिद्धं तैलमपतानकिनां परिषेकादिषूपयोज्यम्। अभुक्तवता पीतमम्लं दधिमरिचवचायुक्तमपतानकं हन्ति, तैलसर्पिर्वसाक्षौद्राणि च॥ २६॥

एतच्छुद्धवातापतानकविधानमुक्तम्, संसृष्टे संसृष्टं कर्त्तव्यम्। वेगान्तरेषु चावपीडं दद्यात्, ताम्रचूड़-कर्कट-कृष्णमत्स्यशिशुमारवराहवसाश्चासेवेत, क्षीराणि वा वातहरसिद्धानि, यवकोलकुलत्थमूलकदधिघृततैलसिद्धां वा यवागूम्। स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्राहृतवेगमुपक्रमेत्। वातव्याधिचिकित्सितञ्चावेक्षेत, रक्षाकर्म्म च कुर्य्यादिति॥ २७॥

पक्षाघातोपद्रुतमम्लानगात्रं सरुजमात्मवन्तमुपकरणवन्तञ्चोपक्रमेत्। तत्र प्रागेव स्नेहस्वेदोपपन्नं मृदुना शोधनेन संशोध्यानुवास्यास्थाप्य च यथाकालमाक्षेपकविधानेनोपचरेत्। वैशेषिकश्चात्र मस्तिष्क्यशिरोवस्तिश्चाणुतैलमभ्यङ्गार्थे, शाल्वणमुपनाहार्थे, वलातैलमनुवासनार्थे। एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुपसेवेत॥ २८॥

निदध्यात् स्थापयेत्। ऊष्मस्वेदोऽयम्। अङ्गारचुल्ल्यां लौहकारचुल्ल्याम्। कृशरेत्यादि अयमुपनाहस्वेदः॥ २४। २५॥

उरुवूकः शुक्लैरण्डः। स्फूर्ज्जकः फणिज्झकाकारः प्रायशः पारियात्रे भवति। अर्ज्जकः कुठेरकः। शङ्खिनी यवतिक्ताभेदः। मूलकादीनां स्नेहचतुर्गुणेन रसेन सिद्धम्, मूलकादिपादकल्कमकल्कं वा पक्त्वा सुखोष्णं परिषेके द्रवस्वेदे इत्यर्थः। आदिशब्दादभ्यङ्गादिषु। मरिचवचायुक्तमित्यल्पवचामरिचम्। संसृष्टे संसृष्टं कर्त्तव्यमिति अनुबन्धभूतयोः पित्तकफयोः संसर्गमुपलभ्य पित्तकफहरं संसृष्टं तदेव कर्त्तव्यम्; जेज्जटस्तु संसृष्टे वातरक्तवच्चिकित्सा कर्त्तव्येत्याह। वेगान्तरेषु वेगोपरमेषु। ताम्रचूड़ः कुक्कुटः। कृष्णमत्स्यः कुलीरमत्स्याकारोऽशल्कः। ताम्रचूड़ादिवसासेवा भोजनम्, तदुक्तं वृद्धवाग्भटे—"कर्कटकुलीरशिशुमारवराहवसाः पाययेत्" इति॥ २६। २७॥

पक्षाघातचिकित्सितमाह—पक्षाघातेत्यादि। अम्लानगात्रमहीनगात्रम्। सरुजमिति सह रुजया वर्त्तते यः सः, तम्। यथाकालं कालस्यानतिक्रमेण, तद् यथा—वान्तस्य पक्षाद् विरेचनम्, विरिक्तस्य सप्तरात्रादनुवासनम्, अनुवासितस्य स्नेहलक्षणे सति आस्थापनम्, आस्थापितस्य सद्यः पुनरनुवासनमिति। आक्षेपकविधानेन अपतानकविधानेनेत्यर्थः, आक्षेपकापतानकयोरेकविषयत्वात्।

मन्यास्तम्भेऽप्येतदेव विधानम्। विशेषतो वातश्लेष्महरैर्नस्यै रूक्षस्वेदैश्चोपचरेत्॥ २९॥

अपतन्त्रकातुरं नापतर्पयेत्। वमनानुवासनास्थापनानि न निषेवेत। वातश्लेष्मोपरुद्धोच्छ्वासं तीक्ष्णैः प्रधमापनैर्मोक्षयेत्। तुम्बुरुपुष्कराह्वहिङ्ग्वम्लवेतसपथ्यालवणत्रयं यवक्वाथेन पातुं प्रयच्छेत्, पथ्याशतार्द्धे सौवर्च्चलद्विपले चतुर्गुणे पयसि सर्पिःप्रस्थं सिद्धम्; वातश्लेष्मापनुच्च कर्म्म कुर्य्यात्॥ ३०॥

अर्दितातुरं बलवन्तमुपकरणवन्तश्च वातव्याधिविधानेनोपचरेत्, वैशेषिकैश्च मस्तिष्क्यशिरोवस्तिनस्यधूमोपनाहस्नेहनाड़ीस्वेदादिभिः। ततः सतृणं महापञ्चमूलं काकोल्यादिं विदारिगन्धादिमौदकानूपमांसं तथैवौदककन्दांश्च संहृत्य द्विगुणोदके,क्षीरद्रोण निःक्वाथ्य पादावशिष्टमवतार्य्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरग्नावधिश्रयेत्, ततस्तैलं क्षीरानुगतमवतार्य्य शीतीभूतमभिमथ्नीयात्, तत्र यः स्नेह उत्तिष्ठेत्, तमादाय मधुरौषधसहाक्षीरयुक्तं विपचेत्, एतत् क्षीरतैलमर्दितातुराणां पानाभ्यङ्गादिषूपयोज्यम्। तैलहीनं वा क्षीरसर्पिरक्षितर्पणमिति॥ ३१। ३२॥

वैशेषिकश्चेत्यादि। मस्तिष्क्यः शिरोवस्तिविशेषः। स च स्नेहाक्तपिचुप्लोतादिधारणेन योजनीयः। एवमित्यादि। अतन्द्रितः अनलसः। अत्र मन्यास्तम्भचिकित्सितं कैश्चिदभिधीयते मन्यास्तम्भे इत्यादि॥ २८। २९॥

अपतन्त्रकचिकित्सितमपि कैश्चिदभिधीयते—अपतन्त्रकातुरमित्यादि। तुम्बुर्वादिचूर्णाक्षं यवक्वाथपलद्वयेन प्रयच्छेत्। पथ्याशतार्द्धे इति पथ्याफलानां शतार्द्धे सर्पिःप्रस्थं सिद्धं पातुं प्रयच्छेदिति सम्बन्धः। न केवलमेतद् घृतमेव पातुं प्रयच्छेदित्याह—वातश्लेष्मेत्यादि। वातं श्लेष्माणञ्च यत् कर्म्म नुदति हन्ति तच्च कुर्य्यात्॥ ३०॥

अर्दितचिकित्सामाह—अर्दितेत्यादि। नस्यधूमावत्र स्नेहनौ। तत इत्यादि। कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञम्। महापञ्चमूलं विल्वादि। औदकमांसं मत्स्यकर्कटकशिशुमारप्रभृतीनाम्। आनूपं मांसं प्रधानकल्पनया वराहादीनाम्। औदकाः कन्दाः कशेरुशृङ्गाटकशालूकादयः। अन्ये "आनूपमांसान्यौदकान् कन्दांश्च संहृत्य" इति पठन्ति। सर्व्वद्रव्याणां समभागानामाढकं क्षीरद्रोणेन जलद्विद्रोणसहितेन विपचेत्। तैलप्रस्थेनेति तैलप्रस्थेन द्वात्रिंशत्पलात्मकेन। क्षीरानुगतं क्षीरेण सहैकावयवीभूतम्। मधुरौषधानि काकोल्यादीनि, सहा माषपर्णी, क्षीरं चतुर्गुणम्। केचिन्मधुरौषधसहास्थाने पूर्व्वोक्तक्वाथ्यद्रव्याणामेव पादिकं कल्कं प्रक्षिपन्ति, न तु मधुरकादीनि॥ ३१। ३२॥

गृध्रसीविश्वाचीक्रोष्टुकशिरःखञ्जपङ्गुलवातकण्टक-पाददाह-पादहर्षाववाहुक-वाधिर्य्यधमनीगतवातरोगेषु यथोक्तं यथोद्देशञ्च शिराव्यधं कुर्य्यादन्यत्राववाहुकात्; वातव्याधिचिकित्सितञ्चावेक्षेत ॥ ३३ ॥

कर्णशूले तु शृङ्गवेररसं तैलमधुसंसृष्टं सैन्धवोपहितं सुखोष्णं कर्णे दद्यात्, अजामूत्रमधुतैलानि वा, मातुलुङ्गदाडिमतिन्तिडीकस्वरसमूत्रसिद्धं तैलं, शुक्तसुरातक्रमूत्रलवणसिद्धं वा, नाडीस्वेदैश्च स्वेदयेत्, वातव्याधिचिकित्साञ्चावेक्षेत। भूयश्चोत्तरे वक्ष्यामः ॥ ३४ ॥

तूणीप्रतितूण्योः स्नेहलवणमुदकेन पाययेत्, पिप्पल्यादिचूर्णं वा, हिङ्गुयवक्षारप्रगाढं वा सर्पिः। वस्तिभिश्चनमुपक्रमेत् ॥ ३५ ॥

आध्माने त्वपतर्पणपाणितापदीपनचूर्णफलवर्त्तिक्रियापाचनीय(दीपनीय)-वस्तिभिरुपाचरेत्। लङ्घनानन्तरञ्चान्नकाले धान्यकजीरकादिदीपनसिद्धान्यन्नानि। प्रत्याध्माने छर्द्दनापतर्पणदीपनानि कुर्य्यात्। अष्ठीला-प्रत्यष्ठीलयोर्गुल्माभ्यन्तरविद्रधिवत् क्रियाविभाग इति ॥ ३६—३८ ॥

गृध्रस्यादीनां चिकित्साविधानमाह—गृध्रसीत्यादि। यथोद्देशञ्चेति चकारेण क्रोष्टुकशीर्षकवातशोणितचिकित्सावेक्षणञ्च। धातुक्षयनिमित्तवातकोपजनितोऽववाहुकः, अतोऽन्यत्राववाहुकादिति वाक्येन सिराव्यधो निषिध्यते। गयी तु अन्यत्राववाहुकात् वातव्याधिचिकित्सितमवेक्षेतेति संबध्नाति; तथाहि—वातव्याधिचिकित्सिते यत् स्नेहस्वेदादिकं तदववाहुके कफस्थानसम्भवत्वेन कफावृतवातजे विरुद्धम्, तत्र हि स्वेदनस्यादिकं विधेयं रूक्षमेव; न तु सिराव्यधं कुर्य्यादन्यत्राववाहुकादिति सम्बन्धः, यतोऽसशोषेऽववाहुके च सिरामोक्षस्य सिराव्यधविधाने चोक्तत्वात्। गृध्रस्यादिषु वातव्याधिचिकित्सिते कृते पश्चात् शोणितावरणं निश्चित्य सिराव्यधो विधेय इति ॥ ३३ ॥

कर्णशूलचिकित्सामाह—कर्णशूल इत्यादि। शृङ्गवेररसमार्द्रकरसम्। शुक्तं चुक्रम्। नाडीत्यादि नलादिशुषिरनाडीस्वेदः। वातव्याधिचिकित्सामिति चकारेण पित्तरक्तावरणेषु वातरक्तचिकित्सितमनुक्तं समुच्चिनोति। भूयश्चेत्यादि। कर्णरोगेषूत्तरतन्त्रे पुनरपि वदिष्यामः ॥ ३४ ॥

तूणीप्रतितूणीचिकित्सितमाह—तूणीत्यादि। सामान्यवस्तिग्रहणात् त्रिविधवस्त्यवरोधः ॥ ३५ ॥

आध्मानचिकित्सामाह—आध्मान इत्यादि। पाचनीयानि पञ्चकोलादीनि। प्रत्याध्मानचिकित्सितमाह—प्रत्याध्मान इत्यादि। अष्ठीलाचिकित्सितमाह—अष्ठीलेत्यादि ॥ ३६—३८ ॥

हिङ्गुत्रिकटुवचाजमोदाधान्याजगन्धादाडिमतिन्तिड़ीकपाठाचित्रकयवक्षार-सैन्धवविड़सौवर्च्चल स्वर्ज्जिका--पिप्पलीमूलाम्लवेतस-शठी -पुष्करमूलहपुषा-चव्याजाजीपथ्याश्चूर्णयित्वा मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रां गुटिकां कारयेत्, ततः प्रातरेकैकां वातविकारी भक्षयेत्। अथैष योगः कासश्वास-गुल्मोदरारोचकहृद्रोगाध्मानपार्श्वोदरवस्तिशूलानाह-मूत्रकृच्छ्रप्लीहार्शस्तूणीप्रति-तूणीरपहन्ति ॥ ३९ ॥

भवन्ति चात्र।

केवलो दोषयुक्तो वा धातुभिर्वाऽऽवृतोऽनिलः।
विज्ञेयो लक्षणोहाभ्यां चिकित्सा चाविरोधतः ॥ ४० ॥

हिङ्ग्वादिमुत्पादयति—हिङ्ग्वित्यादिना। अजगन्धा जोयान् इति भाषा, गयी तु अजगन्धा क्षेत्रयमानीत्याह। मातुलुङ्गाम्लः वीजपूरकरसः। एतच्चूर्णं गुटिका च, परतन्त्रप्रत्ययात्; हिङ्ग्वादिगुटिका वातगुल्मिनां कृते द्विगुणक्षारहिङ्ग्वम्लवेतसाः कार्य्याः, उक्तञ्च—"यच्चूर्णं गुटिका याश्च कर्त्तव्या वातगुल्मिनाम्। द्विगुणक्षारहिङ्ग्वम्ल-वेतसास्ता हिता इति" ॥ ३९ ॥

शुद्धवातचिकित्सामभिधाय संसृष्टावृतस्य चिकित्सामाह—भवन्तीत्यादि। केवलो दोषाद्य-संसृष्टः। अत्र हि संयुक्तस्यैव चिकित्साविधिरुच्यते, न तु केवलस्य, उक्तत्वादविरोधत इति वचनाच्च। न हि केवलस्य वायोश्चिकित्सायां विरोधोऽस्ति, एकमुख्यत्वात्। दोषैर्वातपित्तकफैर्युक्तो दोषयुक्तः; अनेन संयोगमात्रमभिहितं, नावरकत्वम्। धातुभिरिति रसरक्तमांसमेदोमज्जशुक्राणि स्वेदविण्मूत्राणि वातपित्तकफाश्चोच्यन्ते, तेषामपि शरीरधारकत्वात्, तैरावृतः। तस्य द्विविधस्यापि विज्ञानोपायं दर्शयन्नाह—लक्षणोहाभ्यामिति। वातस्य लक्षणं तोदादिकं कृष्णारुणत्वं कम्पा दिकञ्च, पित्तस्य चोषादिपीतादिदाहादिकम्। कफस्य कण्ड्वादिशुक्लादिप्रसेकादिकम्। ऊहः पुन-रश्रुतस्य परिकल्पना। ननु पित्तकफाभ्यां धातुभिश्चामूर्त्तैरावरणं युज्यते, कथं वातेनेत्याह—प्राणा-दीनां पञ्चानां वायूनां परस्परमावार्य्यावरकभेदेन विंशतिरावरणानि चरकाचार्य्येणोक्तानि। तथा च—"मारुतानान्तु पञ्चानामन्योऽन्यावरणं शृणु। लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ ॥ प्राणो वृणोत्युदानाद्यान् प्राणं वृण्वन्ति तेऽपि च। उदानाद्यास्तथाऽन्योन्यं सर्व्वं एव यथाक्रमम् ॥ विंशत्यावरणान्येतान्युल्वणानां परस्परम्। मारुतानान्तु पञ्चानां तानि सम्यक् प्रतर्कयेत्" इति। गयदासेनाप्युक्तम्—"अष्टावादेऽ द्वितीये षट् तृतीये च चतुष्टयम्। द्वे चतुर्थेऽनिलेऽप्येवं पञ्चधा-वृतिविंशतिः" इति। आवरणेषु वातानां प्राणोदानयोरेव गुरुतरमावरणं द्रष्टव्यम्, धात्वावरणेषु मेदोवृतवातस्य। तत्रोर्द्ध्वं गच्छन्नुदानः प्राणो वा अपानस्याधोगामिनो गतिनिरोधं कुर्व्वन्नावरक इत्युच्यते। अथवा द्वयोः संहितयोरभिमुखमभिसर्पतोर्बलवता दुर्ब्बलोऽभिभूतः प्रत्यावृतः सम्यगावृत इत्युच्यते ॥ ४० ॥

रुजावन्तं घनं शीतं शोफं मेदोयुतोऽनिलः ।
करोति यस्य तं वैद्यः शोथवत् समुपाचरेत् ॥ ४१ ॥
कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते ।
तदाङ्गमर्दस्तैमित्य-रोमहर्षरुजाज्वरैः ॥
निद्रया चार्दितौ स्तब्धौ शीतलावप्रचेतनौ ।
गुरुकावस्थिरावूरू न स्वाविव च मन्यते ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ४२ ॥
स्नेहवर्ज्जं पिवेत् तत्र चूर्णं षड्धरणं नरः ।
हितमुष्णाम्बुना तद्वत् पिप्पल्यादिगणैः कृतम् ॥
लिह्याद् वा त्रैफलं चूर्णं क्षौद्रेण कटुकान्वितम् ।
मूत्रैर्वा गुग्गुलुं श्रेष्ठं पिवेद् वापि शिलाजतु ॥
ततो हन्ति कफाक्रान्तं समेदस्कं प्रभञ्जनम् ।
हृद्रोगमरुचिं गुल्मं तथाभ्यन्तरविद्रधिम् ॥
सक्षारमूत्रस्वेदांश्च रुक्षाण्युत्सादनानि च ।
कुर्य्याद् दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥
भोज्याः पुराणश्यामाक-कोद्रवोद्दालशालयः
शुष्कमूलकयूषेण पटोलस्य रसेन वा ।
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितैः ॥
यदा स्यातां परिक्षीणे भूयिष्ठे कफमेदसी ।
तदा स्नेहादिकं कर्म्म पुनरत्रावचारयेत् ॥ ४३ ॥

मेदोवृतवातस्य लक्षणं चिकित्सितञ्च निर्द्दिशन्नाह - रुजावन्तमित्यादि । शोफमिति अपक्वशोफम् । मेदोवृतवातप्रसङ्गेन स्थानविशेषाश्रयं कफमेदोवृतं वातं निर्द्दिशन्नाह—कफेत्यादि । अस्थिरावकठिनौ । न स्वाविव च मन्यते अन्यस्येव मन्यते, स्पर्शाज्ञानात् परकीयाविव ॥ ४१।४२ ॥

तस्य चिकित्सितमाह स्नेहेत्यादि । स्नेहवर्ज्जं चतुःस्नेहरहितम्, कफमेदसोरतिरूक्षणीयत्वात् ; अन्यदपि क्षीरमांसादि स्निग्धं वर्ज्जनीयमेव । पिप्पल्यादिगणैः कृतं 'चूर्णम्' इति शेषः । प्रभञ्जनं वातमित्यर्थः । अभ्यन्तरचिकित्सामुपदिश्य वहिराश्रयामुपदिशति सक्षारेत्यादि । उत्सादनानि उद्वर्त्तनानि, सयवक्षारगोमूत्राणि । दिह्यात् लेपयेत्, करञ्जफलश्वेतसर्षपैर्गोमूत्रपिष्टैरुष्णैः । उद्दाल आरण्यकोद्रवः । अघृतैर्घृतरहितैः । सर्षपतैलं पुनरुष्णत्वात् कफमेदोहरत्वाच्च देयमपीति न प्रतिषिद्धं न विहितञ्च । अलवणैर्लवणरहितैः शाकैः, तदर्थन्तु यवक्षारादिक्षाराणां रौक्ष्येण कफमेदोहरत्वादवचारणम् । अवस्थायां स्नेहावचारणस्य प्रतिप्रसवं निर्द्दिशन्नाह—यदेत्यादि । परिक्षीणे सर्व्वतः क्षीणे ॥ ४३ ॥

सुगन्धिः सुलघुः सूक्ष्मस्तीक्ष्णोष्णः कटुको रसे।
कटुपाकः सरो हृद्यो गुग्गुलुः स्निग्धपिच्छिलः।
स नवो बृंहणो वृष्यः पुराणस्त्वपकर्षणः॥
तैक्ष्ण्यौष्ण्यात् कफवातघ्नः सरत्वान्मलपित्तनुत्।
सौगन्ध्यात् पूतिकोष्ठघ्नः सौक्ष्म्याच्चानलदीपनः॥
तं प्रातस्त्रिफलादार्व्वी-पटोलकुशवारिभिः।
पिवेदावाप्य वा मूत्रैः क्षारैरुष्णोदकेन वा॥
जीर्णे यूषरसैः क्षीरैश्च भुञ्जानो हन्ति मासतः।
गुल्मं मेहमुदावर्त्तमुदरं सभगन्दरम्॥
कृमिकण्डूरुचिश्वित्राण्यर्व्वुदं ग्रन्थिमेव च।
नाड्याढ्यवातश्वयथु-कुष्ठदुष्टव्रणांश्च सः।
कोष्ठसन्ध्यस्थिगं वायुं वृक्षमिन्द्राशनिर्यथा॥ ४४॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने महावातव्याधिचिकित्सितं नाम पञ्चमोऽध्यायः॥ ५॥

अस्मादनन्तरमूरुस्तम्भस्योपयोगार्हत्वाद् गुग्गुलुकल्पमाह—सुगन्धिरित्यादि। सूक्ष्ममार्गावगाहित्वात् सूक्ष्मः। अत्र त्रिफलादार्व्वीपटोलैः त्रिभिर्द्रव्यैरेको योगः, कुशेनेति द्वितीयः। वारिशब्दोऽत्र क्वाथे वर्त्तते, तर्हि द्विवचनमेव कथं न दत्तम्? सत्यम्, बहुवचनाच्चतुर्भिरपि द्रव्यैरन्यो योगो मन्तव्य इति। क्षारैरिति क्षारोदकैः। क्षीरैरित्यन्ये पठन्ति। पानं भोजनञ्च वातपित्तकफरोगापेक्षया प्रकृत्यपेक्षया सात्म्यापेक्षया वा। सुगन्धिरित्यादिपाठं जेज्जटाचार्य्योऽनार्षं वर्णयति, गयदासेन व्याख्यातत्वात् मयापि व्याख्यातः॥ ४४॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे महावातव्याधिचिकित्सितव्याख्यानाम पञ्चमोऽध्यायः॥ ५॥

---

# षष्ठोऽध्यायः ।

## अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः,
## यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

चतुर्व्विधोऽर्शसां साधनोपायः। तद्यथा—भेषजं क्षारोऽग्निः शस्त्रमिति। तत्राचिरकालजातान्यल्पदोपलिङ्गोपद्रवाणि भेषजसाध्यानि, मृदुप्रसृतावगाढ़ान्युच्छ्रितानि क्षारेण, कर्कशस्थिरपृथुकठिनान्यग्निना, तनुमूलान्युच्छ्रितानि क्लेदवन्ति च शस्त्रेण। तत्र भेषजसाध्यानामर्शसामदृश्यानाञ्च भेषजं भवति; क्षाराग्निशस्त्रसाध्यानान्तु विधानमुच्यमानमुपधारय॥ २॥

तत्र बलवन्तमातुरमर्शोभिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिलवेदनाभिवृद्धिप्रशमार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुपवेश्य सम्भृते * शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानं किञ्चिदुन्नतकटिकं वस्त्रकम्बलकोपविष्टं यन्त्रणशाटकेन परिक्षिप्तग्रीवासक्थं परिकर्म्मिभिः सुपरिगृहीतमस्पन्दनशरीरं कृत्वा घृताभ्यक्तं यन्त्रमृज्वणमुखं पायौ शनैः शनैः प्रवाहमाणस्य प्रणिधाय प्रविष्टे चार्शो वीक्ष्य शलाकयोत्पीड्य पिचुवस्त्रयोरन्यतरेण प्रमृज्य क्षारं पातयेत्,

तत्रेत्यादि। अचिरकालजातानि अवत्सराणि। स्थिराणि अविसर्पीणि। पृथूनि विशालानि। कठिनानि अकोमलानि॥ १। २॥

तत्र बलवन्तमित्यादि। बलवन्तमिति आतुरोपक्रमे कृतमपि बलग्रहणं पुनरिह कृतम्; अन्वर्थत्वे ह्यनर्थनिवृत्त्यर्थमुक्तमप्युच्यते, यथैव हि व्यसनसङ्कटे पथि शनैः शनैरहिरहिरिति; मनोजवस्य सत्त्वस्य प्राप्त्यर्थमित्यन्ये। उपचयलक्षणस्य बलस्य प्राप्त्यर्थमित्यपरे। अपरे त्वेवं वदन्ति—ननु अर्शोव्याध्युपद्रुतस्य कथं बलवत्त्वं स्यात्? अत्रोच्यते, बलवानत्र वृद्धत्वरहितो नात्यन्तहीनप्राणः सत्त्वभूयिष्ठो वा। अर्शोव्याधावभुक्तवतः कर्म्म कुर्व्वीतेति सूत्रस्थाने प्रोक्तम्, तदत्र कथं स्निग्धं द्रवप्रायमन्नं भुक्तवन्तमित्याद्युक्तम्? भुक्तवतो हि कर्म्मणि क्रियमाणे हिक्काश्वासादय उत्पद्येरन्निति वृद्धवैद्याः। तत्रैके द्वित्रिचतुःपञ्चदिनानि पूर्व्वाणि स्निग्धादिभोजनं न तु तदहरित्याहुः। अन्ये तु तदहरेव स्निग्धाल्पभोजनानन्तरमर्शःकर्म्मेत्याहुः। 'प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदातुरं भिषक्' इति प्रागेवोक्तत्वात्। यत् पुनरभुक्तवतः कर्म्मेत्युक्तं सूत्रस्थाने तन्मुखाश्रितानामर्शसां कर्म्मणि भोजनप्रतिषेधार्थमिति। साधारणे काले नातिशीतोष्णे। फलके काष्ठफलके। वस्त्रकम्बलकोपविष्टमिति वसनोन्दुकनिविष्टम्। परिकर्म्मिणः सर्व्वकर्म्मणां कर्त्तारः

---

* संवृते इति पाठान्तरम्।

पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्छतमात्रमुपेक्षेत। ततः प्रमृज्य क्षारवलं व्याधिवलञ्चावेक्ष्य पुनरालेपयेत्। अथार्शः पक्कजाम्वत्रप्रतीकाशमवसन्नमीषन्नतञ्चाभिसमीक्ष्योपावर्त्तयेत्। क्षारं प्रक्षालयेद्धान्याम्लेन दधिमस्तुशुक्तफलाम्लैर्वा। ततो यष्टीमधुकमिश्रेण सर्पिषा निर्व्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदकोपविष्टं शीताभिरद्भिः परिषिञ्चेदशीताभिरित्येके। ततो निर्व्वातमागारं प्रवेश्याचारिकमादिशेत्, सावशेषं पुनर्दहेत्। एवं सप्तरात्रात् सप्तरात्रादेकैकमुपक्रमेत। तत्र वहुषु पूर्व्वं दक्षिणं साधयेत्; दक्षिणाद् वामं, वामात् पृष्ठजं, ततोऽग्रजमिति ॥ ३ ॥

तत्र वातश्लेष्मनिमित्तान्यग्निक्षाराभ्यां साधयेत्, क्षारेणैव मृदुना पित्तरक्तनिमित्तानि। तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं वलवर्णोत्पत्तिर्मनस्तुष्टिरिति सम्यग्दग्धलिङ्गानि। अतिदग्धे तु गुदावदरणं दाहो मूर्च्छा ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति, श्यामाल्पव्रणता कण्डूरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे ॥ ४ ॥

महान्ति च प्राणवतश्छित्त्वा दहेत्। निर्गतानि चात्यर्थं दोषपूर्णानि यन्त्राद् विना स्वेदाभ्यङ्गस्नेहावगाहोपनाहविस्रावणालेपक्षाराग्निशस्त्रैरुपाचरेत्; प्रवृत्तरक्तानि च रक्तपित्तविधानेन, भिन्नपुरीषाणि चातीसारविधानेन, वद्धवर्च्चांसि स्नेहपानविधानेनोदावर्त्तविधानेन वा। एष सर्व्वस्थानगतानामर्शसां दहनकल्पः ॥ ५ ॥

परिचारकाः। क्षारं पातयेदत्र तन्त्रान्तरदृष्ट्या त्रिविधामपि क्षारमात्रामाह—"क्षारमात्रा नखोत्सेधप्रमाणाद्या प्रकीर्त्तिता। द्विगुणा मध्यमा मात्रा त्रिगुणा महती मता। पित्ते श्लेष्मणि वाते च यथासंख्यं प्रयोजयेत्" इति। यन्त्रमुखपिधानं दाहशक्त्युत्कर्षार्थम्। तीक्ष्णौषधशक्तिकृतं क्षारवलं, व्याधिवलम् अवगाढोत्तानादिभेदेन। अत्र सर्व्वमप्यर्शः क्षारेण सम्यग् दग्धं पक्वजाम्ववप्रतीकाशमिति सामान्यलक्षणमुक्तम्। तन्त्रान्तरीयास्तु पृथक्, तथाहि—"पक्कजाम्ववकाशमर्च्यवर्णं दग्धेऽनिलार्शसि। पित्तजे भृङ्गमायूर कण्ठवर्णं विनिर्दिशेत्॥ बृहतीपुष्पवर्णत्वं सम्यग्दग्धे कफार्शसि" इति। धान्याम्लं काञ्जिकम्, शुक्तं चुक्रम्, फलाम्लो वीजपूररसः। तत इत्यादि। उष्णोदकोपविष्टमिति कफवातानुवन्धे उष्णोदकावगाहः, केवलयोस्तु रक्तपित्तयोः शीतोदकावगाहः। तन्निमित्ताः शोणितस्रावनिमित्ताः। श्यामः कृष्णः ॥ ३। ४ ॥

महान्तीत्यादि। दाहः पुनरग्निकृतः, क्षारदाहस्योक्तत्वात्। दोषपूर्णानीति दोषैः वातपित्तकफरक्तैः पूरितानि। एष इत्यादि। अत्र सर्व्वशब्देन मेढ्रादिस्थानगतानामर्शसामवरोधः। दहनग्रहणमत्रोपलक्षणम्, तेन स्नेहादि शस्त्रञ्चानुक्तमुपलक्षयेत् ॥ ५ ॥

आसाद्य च दर्व्वीकूर्च्चकशलाकानामन्यतमेन क्षारं पातयेत् । भ्रष्टगुदस्य तु विना यन्त्रेण क्षारादिकर्म्म प्रयुञ्जीत । सर्व्वेषु च शालिषष्टिकयवगोधूमान्नं सर्पिःस्निग्धमुपसेवेत पयसा निम्बयूषेण पटोलयूषेण वा । यथादोषं शाकैर्वास्तूक-तण्डुलीयक-जीवन्त्युपोदिकाश्वबला-बालमूलक-पालङ्क्यसनचिल्लीचुच्चू-कलाय-वल्लीभिरन्यैर्वा । यच्चान्यदपि स्निग्धमग्निदीपनमर्शोघ्नं सृष्टमूत्रपुरीषञ्च तदुपसेवेत ॥ ६ ॥

दग्धेषु चार्शःस्वभ्यक्तोऽनलसन्धुक्षणार्थमनिलप्रकोपसंरक्षणार्थञ्च स्नेहादीनां सामान्यतो विशेषतस्तु क्रियापथमुपसेवेत । सर्पींषि च दीपनीयवातहर-सिद्धानि हिङ्ग्वादिभिश्चूर्णैः प्रतिसंसृज्य पिवेत्, पित्तार्शःसु पृथक्पर्ण्यादीनां कषायेण दीपनीयप्रतिवापं सर्पिः, शोणितार्शःसु मञ्जिष्ठामुरुङ्ग्यादीनां कषायैः, श्लेष्मार्शःसु सुरसादीनां कषायैः सर्पिः । उपद्रवांश्च यथास्वमुपाचरेत् ॥ ७ ॥

आसादेत्यादि । गोधूमस्य गुरुत्वेऽपि पूयवृद्ध्यर्थं क्षारव्रणे क्लेदनार्थञ्चोपयोगः, तत उक्तम्—गोधूमान्नं सर्पिःस्निग्धमुपसेवेतेति । वास्तूकष्टङ्कवास्तूकः । जीवन्ती डोडिका । अश्वबला हिस्फीत्थो मेथिकाभेदः । चिल्ली क्षेत्रवास्तूकः । चुच्चुः चुचुरिति लोके । अनुक्तमप्यन्नपानौषधद्रव्यं निर्द्दिशन्नाह—यदित्यादि । सृष्टमूत्रपुरीषञ्चेति सृष्टं विण्मूत्रं येनेति, अर्शःकृतमार्गावरोध-कुपितवातविबन्धस्य मूत्रस्य पुरीषस्य च विसर्गकरम् । पुरीषञ्चेति चकारेण तन्त्रोदितमन्यदपि पलाण्ड्वादि समुच्चीयते ॥ ६ ॥

दग्धेष्वित्यादि । सामान्यतः सामान्येन सर्व्वार्शोघ्नविधिना, विशेषतस्तु वाताद्यर्शसां दहन-विधिना । दग्धेषु चेति चकारेण अदग्धेष्वपि विधिरयम् । तमेव विशेषं निर्द्दिशन्नाह—सर्पींषी-त्यादि । सर्पींषि च दीपनीयवातहरसिद्धानीत्यत्र वातहराणि भद्रदार्व्वादीनि, दीपनीयानि पिप्पल्यादीनि । अत्र च क्वाथकल्कविधिः सामान्यकषायकल्कविधिना; तत्र सिद्धे घृते वातव्याधिपठितं हिङ्ग्वादिचूर्णमावाप्य योज्यम् । उत्तरेषु त्रिष्वपि पिप्पल्यादिकल्कमामनन्ति वृद्धाः । पित्तेत्यादि । पृथक्पर्ण्यादयो रोपणघृतसाधनमिश्रकोक्ताः । मुरुङ्गी मधुशिग्रुः, तदादि-मुरुङ्ग्यादिर्वरुणादिष्वन्तर्गणः । मधुशिग्रुः श्वेतकारी, मेषशृङ्गीत्येके । कषाय इति सिद्धं सर्पिरित्यत्रापि सम्बध्यते । श्लेष्मार्शःसु सुरसादीनां कषाये सिद्धं सर्पिरित्यत्रापि सम्बध्यते । सुरसादिः सुरसा श्वेतसुरसेत्यादिः । उपद्रवचिकित्सासूत्रमुपदर्शयन्नाह—उपद्रवानित्यादि । ये चोपद्रवा गुल्मादयो ज्वरादयश्च तानात्मीयेनौषधेन प्रतिकुर्य्यात् ॥ ७ ॥

परञ्च यन्त्रमास्थाय गुदे क्षाराग्निशस्त्राण्यवचारयेत्। तद्विभ्रमाद्धि पाण्ड्य-शोफदाहमदमूर्च्छाटोपानाहातीसारप्रवाहणानि भवन्ति मरणं वा ॥ ८ ॥

अत ऊर्द्ध्वं यन्त्रप्रमाणमुपदेक्ष्यामः। तत्र यन्त्रं लौहं दान्तं शाङ्गं वार्क्षं वा गोस्तनाकारं चतुरङ्गुलायतं पञ्चाङ्गुलपरिणाहं पुंसां, षड़ङ्गुलपरिणाहं नारीणां तलायतम्। तद् द्विच्छिद्रं—दर्शनार्थमेकं छिद्रम्, एकं छिद्रन्तु कर्म्मणि। एकद्वारे हि शस्त्रक्षाराग्नीनामतिक्रमो न भवति। छिद्रप्रमाणन्तु त्र्यङ्गुलायत-मङ्गुष्ठोदरपरिणाहम्। यदङ्गुलमवशिष्टं तस्यार्द्धाङ्गुलमधस्तादर्द्धाङ्गुलोच्छ्रितो-परिवृत्तकर्णिकम्। एष यन्त्राकृतिसमासः ॥ ९ ॥

अत ऊर्द्ध्वमर्शसामालेपान् वक्ष्यामः। स्नुहीक्षीरयुक्तं हरिद्राचूर्णमालेपः प्रथमः। कुक्कुटपुरीषगुञ्जाहरिद्रापिप्पलीचूर्णमिति गोमूत्रपित्तपिष्टो द्वितीयः। दन्तीचित्रकसुवर्च्चिकालाङ्गलीकल्को वा गोपित्तपिष्टस्तृतीयः। पिप्पली-सैन्धवकुष्ठशिरीषफलकल्कः स्नुहीक्षीरपिष्टोऽर्कक्षीरपिष्टो वा चतुर्थः। कासीस-हरिताल-सैन्धवाश्वमारक-विड़ङ्गपूतीककृतवेधनजम्ब्वर्कोत्तमारणीदन्तीचित्रका-लर्कस्नुहीपयःसु तैलं विपक्वमभ्यञ्जनेनार्शः शातयति ॥ १० । ११ ॥

इदानीं क्षारादीनामतितीक्ष्णत्वादियोगात् तेषां दुर्योगे बहुतरानर्थकरत्वात् सुयोगैकहेतुं निर्दिशन्नाह—परञ्चेत्यादि। परमुत्तमम् ॥ ८ ॥

अत इत्यादि। लौहं सुवर्णरौप्यादिलोहमयम्। शाङ्गं महिषादिशृङ्गमयम्। वार्क्षं वृक्षमयम्। वृक्षाः सारवृक्षाः शिंशपाशाल्मल्यादयः। आयतं दीर्घम्। परिणाहो वर्त्तुलता। तलायतमिति तलं स्वहस्ततलम्। केचिदत्र स्त्रियाः पृथग्यन्त्राभिधानग्रन्थमपठित्वा स्त्री-पुंसयोस्तुल्यमेव यन्त्रमित्याहुः। अन्ये तलायतमित्यत्र तदायतमिति पठित्वा व्याख्यानयन्ति—स्त्रीपुंसयोर्यन्त्रवर्त्तुलत्वे भेदः, दैर्घ्ये तु तदायतं पुरुषयन्त्रायतमित्यर्थः। अर्द्धाङ्गुलो-च्छ्रितोपरिवृत्तकर्णिकमिति अर्द्धाङ्गुलोच्छ्राये उपरिवृत्ता कर्णिका यस्येत्यर्थः। अपवृत्तकर्णिकमिति केचित् पठन्ति, अपकृष्टा वृत्तकर्णिका यस्येति ; तत्राप्युत्तरपदलोपेन समासः, अर्थोऽपि स एव। यन्त्राकृतिसमास इति यन्त्राकारसङ्क्षेप इत्यर्थः। विस्तरस्तु नानास्थानस्थितार्शःस्रोतःप्रमाणा-काराभ्यां द्रव्याकारप्रमाणच्छिद्रैरेवेति।

आलेपयोगेषु प्रथमादिवचनं प्रत्येकमेव योगानां महाबलत्वसूचनार्थम्, उत्तरोत्तरबलीयस्त्वेन प्रयोगकालावधारणार्थमित्यन्ये। गोमूत्रगोपित्तपिष्टो गोमूत्रगोपित्ताभ्यां पिष्टः। कृतवेधनः कोशा-तकी। जम्बूर्भूमिजम्बूः। उत्तमारणी भूम्यामलकी योधामल्ली। अर्कः अर्कक्षीरम्। अलर्कः श्वेतार्कवृक्षः ॥ ९—११ ॥

अत ऊर्द्ध्वं भेषजसाध्येषु दुश्येष्वर्शःसु योगान् यापनार्थं (पातनार्थं) वक्ष्यामः। प्रातःप्रातर्गुडहरीतकीमासेवेत, ब्रह्मचारी गोमूत्रद्रोणसिद्धं वा हरीतकीशतं प्रातःप्रातर्यथाबलमुपयुञ्जीत क्षौद्रेण, अपामार्गमूलं वा तण्डुलोदकेन सक्षौद्रमहरहः, शतावरीमूलकल्कं वा क्षीरेण, चित्रकचूर्णयुक्तं वा सीधुपरार्द्ध्यम्, भल्लातकचूर्णयुक्तं वा शक्तुमन्थमलवणं तक्रेण, कलसे वान्तश्चित्रकमूलकल्कावलिप्ते निषिक्तं तक्रमम्लमनम्लं वा पानभोजनेषूपयुञ्जीत; एष एव भार्ग्यास्फोतायवान्यामलकगुडूचीषु तक्रकल्पः ॥ १२ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकविडङ्गशुण्ठीहरीतकीषु च पूर्व्ववदेव, निरन्नो वा तक्रमहरहर्मासमुपसेवेत। शृङ्गवेरपुनर्नवाचित्रककषायसिद्धं वा पयः। कुटजमूलत्वक्फाणितं वा पिप्पल्यादिप्रतीवापं क्षौद्रेण, वातव्याध्युक्तं हिङ्ग्वादिचूर्णमुपसेवेत तक्राहारः, क्षीराहारो वा क्षारलवणान् चित्रकमूलक्षारोदकसिद्धान् वा कुल्माषान् भक्षयेच्चित्रकमूलक्षारोदकसिद्धं वा पयः, पलाशतरुक्षारसिद्धान् वा

अत इत्यादि। हरीतक्यादियुक्तो गुडोऽपि अग्निदीपनः संयोगशक्तित्वात्। उक्तञ्च—"गुडः कर्त्तांग्निसादस्य, सह नत्वभयादिभिः। कुष्ठं तत्कार्य्यकारी च दन्तीभल्लातकैः सह" इति। भल्लातकचूर्णयुक्तञ्चेत्यादियोगं यावदासेवेतेति क्रियापि सम्बध्यते। ब्रह्मचारीत्यादि। गोमूत्रहरीतकीगाढ़विट्कस्य मन्दाग्नेः। ब्रह्मचर्य्यं योगस्य रौक्ष्यात्। अपामार्गमूलयोगः पित्तरक्तार्शसि, गयदासस्तु कफानुबद्धरक्तजेषु। शतावरीमूलकल्कं वातपित्तानुबद्धरक्तजेषु। चित्रकेत्यादि। सीधुः मद्यम्, परार्द्ध्यं श्रेष्ठम्। चूर्णं कर्षप्रमाणम्, एतच्च कफमन्दाग्नौ बद्धपुरीषे च। भल्लातकेत्यादि। भल्लातकचूर्णं षडङ्गादिवदाहारत्वेन कर्षमात्रम्, भल्लातकचूर्णाद् यवशक्तवस्तु षोड़शगुणा एव। तक्रप्रमाणं पुनरत्र यावता नात्यच्छं नातिसान्द्रञ्चेति। जेज्जटाचार्य्यस्तु पुनश्चतुर्थांशं भल्लातकचूर्णमिच्छति, तन्नेच्छति गयी। तत्र प्रसङ्गेन अपरार्शोहरतक्रप्रयोगं निर्द्दिशन्नाह—कलसे वान्त इत्यादि। आस्फोता सारिवा ॥ १२ ॥

पिप्पलीत्यादि। निरन्नोऽन्नवर्ज्जम्। एते च तक्रप्रयोगाः कफवातजेषु शुष्कार्शःसु। शुष्कार्शसां वातकफजानामन्नपाने तक्रं निर्द्दिश्य आर्द्राणां रक्तपित्तजानामन्नपाने गोरसमेव निर्द्दिशन्नाह—शृङ्गवेरेत्यादि। औषधशृतक्षीरपानपक्षे "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः"—इति न्यायेन, तृष्णापनयनपक्षे तु षडङ्गकल्पनया कर्षमात्रेणैव। शृङ्गवेरादिसिद्धं पय इत्यन्ये पठन्ति; तत्र पिप्पल्याद्यन्तर्गततः शृङ्गवेरादिः। अथवा प्रकारवाची अत्रादिशब्दः। अयं योगः कफवातानुबन्धरक्तजेषु। कुटजेत्यादि। कुटजत्वचां शतपलफाणिते पिप्पल्यादिचूर्णं षट्पलम्, क्षौद्रप्रमाणन्तु प्रयोगकाले यावतावलेहः स्यात्। कुटजफाणितन्तु कफपित्तानुबद्धरक्तजेषु। हिङ्ग्वित्यादि। हिङ्ग्वादिकं वातकफजेषु, तक्राहारो वातकफानुबद्धरक्तजेषु, वातपित्तानुबद्धजेषु क्षीराहारः। क्षीरेत्यादि। कुल्माषा यवौदनः। चित्रक-

कुल्माषान्, पाटलापामार्गबृहतीपलाशक्षारं वा परिस्रुतमहरहर्घृतसंसृष्टम्, कुटजवन्दाकमूलकल्कं वा तक्रेण, चित्रकपूतीकनागरकल्कं वा पूतीकक्षारेण। क्षारोदकसिद्धं वा सर्पिः पिप्पल्यादिप्रतीवापम्, कृष्णतिलप्रसृतं प्रकुञ्चं वा प्रातःप्रातरनुसेवेत शीतोदकानुपानम्। एभिरभिवर्द्धतेऽग्निरर्शांसि चोपशाम्यन्ति ॥ १३ ॥

द्विपञ्चमूलीदन्तीचित्रकपथ्यानां तुलामाहृत्य जलचतुर्द्रोणे विपाचयेत्। ततः पादावशिष्टं कषायमादाय सुशीतं गुड़तुलया सहोन्मिश्र्य घृतभाजने निःक्षिप्य मासमुपेक्षेत यवपल्ले, ततः प्रातःप्रातर्मात्रां पाययेत; तेनार्शोग्रहणीदोषपाण्डुरोगोदावर्त्तारोचका न भवन्ति, दीप्तोऽग्निश्च भवति ॥

पिप्पलीमरिचविड़ङ्गेलवालुकलोध्राणां द्वे द्वे पले, इन्द्रवारुण्याः पञ्च पलानि, कपित्थमध्यस्य दश, पथ्याफलानामर्द्धप्रस्थः, प्रस्थो धात्रीफलानाम्, एतदैकध्यं जलचतुर्द्रोणे विपाच्य पादावशेषं परिस्राव्य, सुशीतं गुड़तुलाद्वयेनोन्मिश्र्य, घृतभाजने निःक्षिप्य पक्षमुपेक्षेत यवपल्ले। ततः प्रातःप्रातर्यथाबलमुपयुञ्जीत। एष खल्वरिष्टः प्लीहाग्निसङ्गार्शोग्रहणीहृत्पाण्डुरोग-शोफ-कुष्ठगुल्मोदर-कृमिहरो बलवर्णकरश्चेति ॥ १४ ॥

मूलस्यापि षड़ङ्गोदककल्पेन कषायः। तानेव यवक्षारेण लवणान् लवणीकृतान्। चित्रकेत्यादि। अत्रापि पलाशक्षारप्रमाणस्य तदुदकप्रमाणस्य च षड़ङ्गोद्देशतः सिद्धिः। पाटलेत्यादि। क्षारपलं विकर्षमर्द्धपलं वा क्वाथकल्पेन क्वथितमर्द्धावशेषितं सुपरिस्रुतं सघृतकर्षं पेयम्; जीर्णे च तस्मिन् सद्योघृतक्षीरमधुररसमेवान्नं भोज्यम्, ओजोभ्रंशभयात्। कुटजेत्यादि। कुटजमूलवन्दाकयोः पलं त्रिकर्षमर्द्धपलं वा तक्रपलद्वयेन। घृतक्षीरमधुररसभोजनश्चित्रकादिकल्कं पूतीकक्षारोदकेन पिबेत्। क्षारोदकसिद्धमिति पूतीकक्षारोदकादकसिद्धं पाटलाक्षारोदकादकसिद्धं वा सर्पिः प्रस्थमात्रं पानकाले पिप्पल्यादिचूर्णपादप्रक्षेपं पेयम्। भोजनमत्रापि सद्योघृतक्षीरमधुररसम्, क्षारस्य खरतीक्ष्णत्वात्। एतच्च वातजेषु रूक्षकोष्ठेषु चावसन्नानलेषु ॥ १३ ॥

द्विपञ्चमूलीत्यादि। एषां समभागानां तुलां पलशतम्। अस्मिन्नरिष्टे धातकीपुष्पाणि पलद्वयं त्रयं वा अनुक्तान्यप्यधिवासनार्थं वृद्धा आमनन्ति। तुलां तुलामित्यन्ये पठन्ति, व्याख्यानयन्ति च — द्विपञ्चमूल्यादीनाञ्च प्रत्येकं तुलां पलशतम्; तन्नेच्छति गयी। यवपल्ले यवराशावित्यर्थः। तन्त्रान्तरे चास्य दन्त्यरिष्ट इति संज्ञा। पिप्पलीत्यादि। इन्द्रवारुण्याः प्रोक्तऽपि पलपञ्चके कटुकत्वपरिहारायार्द्धं क्षिपन्ति वृद्धवैद्याः। चरकेऽप्ययं पठ्यतेऽभयारिष्टः ॥ १४ ॥

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धम् । पित्तजेषु विरेचनम्, एवं रक्तजेषु संशमनम् । कफजेषु शृङ्गवेरकुलत्थोपयोगः । सर्व्वदोषहरं यथोक्तं सर्व्वजेषु, यथास्वौषधसिद्धं वा पयः सर्व्वेष्विति ॥ १५ ॥

अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः । भल्लातकानि परिपक्वान्यनुपहतान्याहृत्य तत एकमादाय द्विधा त्रिधा चतुर्द्धा वा च्छेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्तताल्वोष्ठजिह्वः प्रातःप्रातरुपसेवेत ; ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहारः । एवमेकैकं वर्द्धयेत् यावत् पञ्चेति । ततः पञ्च पञ्चाभिवर्द्धयेत् यावत् सप्ततिरिति । प्राप्य च सप्ततिमपकर्षयेद् भूयः

अचिरोत्पन्नानामल्पदोषलिङ्गानां साधनार्थमदृश्यानां याप्यानां यापनार्थञ्च स्नेहादिकर्म्माणि निर्द्दिशन्नाह - तत्र वातप्रायेष्वित्यादि । तत्राशःसु वमनस्य निषिद्धस्यापि कफप्रसेकादिष्ववस्थासु कर्त्तव्यताप्रसङ्गः । केचिद् वातप्रायेष्वित्यादिकं ग्रन्थमनार्षमित्याचक्षते, गयदासव्याख्यातत्वान्मयापि व्याख्यातः । पित्तजेष्वित्यादि । न वामयति नापि विरेचयति व्याधिना सहैकीभूय तमेव व्याधिं शमयेदिति संशमनम् ॥ १५ ॥

अचिरोत्पन्नानामल्पलिङ्गानाञ्च साधनार्थं चिरजातानामदृश्यानाञ्च यापनार्थं विशिष्टप्रयोगं निर्द्दिशन्नाह—अत ऊर्द्ध्वं भल्लातकमित्यादि । फलं पर्य्यागतमिति पूर्व्वोक्तत्वात् परिपक्वान्येव लब्धानि, भूमिविभागोक्तौषधदोषपरिहारेण अनुपहतान्यपि लब्धानि, पुनस्तद्वचनं प्रयोगस्य महाफलत्वेन गौरवोत्पादनार्थम् । कषायस्य शुक्तिमिति अत्र एकापेक्षया शुक्तिमानम्, यथा चात्र भल्लातकानां क्वाथ्यानां परिवृद्धिस्तथा क्वाथोदकस्यापि बुद्ध्या वृद्धिः परिकल्पनीया । भल्लातकानि तदस्थीनि पक्वानि ( तन्त्रान्तरदर्शनात् ) शुचौ शुक्रे वा मासि गृहीत्वा यवपल्ले माषपल्ले वा निधाय, मार्गशीर्षे पौषे वा प्रयुञ्जीत । एवमुक्तप्रकारेण सप्ततिं यावदुत्कर्षेण भल्लातकसहस्रं पञ्चत्रिंशता दिवसैः पूर्य्यते, शतं यावदुत्कर्षेण सहस्रद्वयविधानं स्यात् । तत्रादौ दिनचतुष्टयं संस्कारमात्रजनकत्वादन्त्यञ्च भल्लातकसंस्कारापकर्षणत्वान्न वृद्धा भिषजो गणयन्ति, ततः सहस्रद्वयं पूर्य्यत एव । एवं भल्लातकप्रयोगश्च त्रिविधः । तत्र शतान्तः शरीरबलदोषापेक्षया प्रवरः, सप्तत्यन्तो मध्यमः, त्रिंशदन्तः पुनरधमः प्रयोगः ; एवं तन्त्रान्तराद् व्याख्यायते । ग्रीष्मकाले गृहीतान्यापूर्णरसान्यनामयानि भल्लातकास्थीनि यवपल्ले माषपल्ले वा चतुर्मासावस्थितानि हेमन्ते प्रयोक्तुमारभेत । मधुरस्निग्धशीतोपसंसृष्टशरीरः प्रथमं दश भल्लातकानि संक्षुद्याष्टगुणेन सलिलेन क्वाथं कृत्वा अष्टभागावशेषं सद्गव्यघृतेनान्तर्मुखमभ्यज्य पिबेत् ; तानि एकैकशो भल्लातकोत्कर्षेण त्रिंशत् कृत्वा पुनरेकैकमपकर्षयेद् यावद्दशभल्लातकप्रयोगः । नातः परमुत्कर्षः कर्त्तव्यः । अनेन क्रमेण सहस्रभल्लातकप्रयोगः परं न घटते, यथात्र घटते तथाविधः पारम्पर्य्योपदेशो व्याख्यायते, त्रिंशत् रात्रौ सप्तरात्रं त्रिंशत्प्रयोगः कर्त्तव्यः, तत एकैकमपकर्षयेत् यावद्दश, पुनरन्यस्मिन्नपि दिने

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनास्थापनानुवासनमप्रतिषिद्धम् । पित्तजेषु विरेचनम्, एवं रक्तजेषु संशमनम् । कफजेषु शृङ्गवेरकुलत्थोपयोगः । सर्व्वदोषहरं यथोक्तं सर्व्वजेषु, यथास्वौषधसिद्धं वा पयः सर्व्वेष्विति ॥ १५ ॥

अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः । भल्लातकानि परिपक्वान्यनुपहतान्याहृत्य तत एकमादाय द्विधा त्रिधा चतुर्द्धा वा च्छेदयित्वा कषायकल्पेन विपाच्य तस्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्तताल्जिह्वौष्ठः प्रातःप्रातरुपसेवेत; ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहारः । एवमेकैकं वर्द्धयेत् यावत् पञ्चेति । ततः पञ्च पञ्चाभिवर्द्धयेत् यावत् सप्ततिरिति । प्राप्य च सप्ततिमपकर्षयेद् भूयः

अचिरोत्पन्नानामल्पदोषलिङ्गानां साधनार्थमदृश्यानां याप्यानां यापनार्थञ्च स्नेहादिकर्म्माणि निर्द्दिशन्नाह - तत्र वातप्रायेष्वित्यादि । तत्रार्शःसु वमनस्य निषिद्धस्यापि कफप्रसेकादिष्ववस्थासु कर्त्तव्यताप्रसङ्गः । केचिद् वातप्रायेष्वित्यादिकं ग्रन्थमनार्षमित्याचक्षते, गयदासव्याख्यातत्वान्मयापि व्याख्यातः । पित्तजेष्वित्यादि । न वामयति नापि विरेचयति व्याधिना सहैकीभूय तमेव व्याधिं शमयेदिति संशमनम् ॥ १५ ॥

अचिरोत्पन्नानामल्पलिङ्गानाञ्च साधनार्थं चिरजातानामदृश्यानाञ्च यापनार्थं विशिष्टप्रयोगं निर्द्दिशन्नाह—अत ऊर्द्ध्वं भल्लातकमित्यादि । फलं पर्य्यागतमिति पूर्व्वोक्तत्वात् परिपक्वान्येव लब्धानि, भूमिविभागोक्तौषधदोषपरिहारेण अनुपहतान्यपि लब्धानि, पुनस्तद्वचनं प्रयोगस्य महाफलत्वेन गौरवोत्पादनार्थम् । कषायस्य शुक्तिमिति अत्र एकापेक्षया शुक्तिमानम्, यथा चात्र भल्लातकानां क्वाथ्यानां परिवृद्धिस्तथा क्वाथोदकस्यापि बुद्ध्या वृद्धिः परिकल्पनीया । भल्लातकानि तदस्थीनि पक्वानि ( तन्त्रान्तरदर्शनात् ) शुचौ शुक्रे वा मासि गृहीत्वा यवपल्ले माषपल्ले वा निधाय, मार्गशीर्षे पौषे वा प्रयुञ्जीत । एवमुक्तप्रकारेण सप्ततिं यावदुत्कर्षेण भल्लातकसहस्रं पञ्चत्रिंशता दिवसैः पूर्य्यते, शतं यावदुत्कर्षेण सहस्रद्वयविधानं स्यात् । तत्राद्यं दिनचतुष्टयं संस्कारमात्रजनकत्वादन्त्यञ्च भल्लातकसंस्कारापकर्षणत्वान्न वृद्धा भिषजो गणयन्ति, ततः सहस्रद्वयं पूर्य्यत एव । एवं भल्लातकप्रयोगश्च त्रिविधः । तत्र शतान्तः शरीरबलदोषापेक्षया प्रवरः, सप्तत्यन्तो मध्यमः, त्रिंशदन्तः पुनरधमः प्रयोगः ; एवं तन्त्रान्तराद् व्याख्यायते । ग्रीष्मकाले गृहीतान्यापूर्णरसान्यनामयानि भल्लातकास्थीनि यवपल्ले माषपल्ले वा चतुर्मासावस्थितानि हेमन्ते प्रयोक्तुमारभेत । मधुरस्निग्धशीतोपसंसृष्टशरीरः प्रथमं दश भल्लातकानि संक्षुद्याष्टगुणेन सलिलेन क्वाथं कृत्वा अष्टभागावशेषं सदुग्धघृतेनान्तर्मुखमभ्यज्य पिबेत्; तानि एकैकशो भल्लातकोत्कर्षेण त्रिंशत् कृत्वा पुनरेकैकमपकर्षयेद् यावद्दशभल्लातकप्रयोगः । नातः परमुत्कर्षः कर्त्तव्यः । अनेन क्रमेण सहस्रभल्लातकप्रयोगः परं न घटते, यथात्र घटते तथाविधः पारम्पर्य्योपदेशो व्याख्यायते, त्रिंशत् रात्रौ सप्तरात्रं त्रिंशत्प्रयोगः कर्त्तव्यः, तत एकैकमपकर्षयेद् यावद्दश, पुनरन्यस्मिन्नपि दिने

पञ्च पञ्च यावत् पञ्चेति ; पञ्चभ्यश्चकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्व्वकुष्ठार्शोभिविमुक्तो बलवानरोगः शतायुर्भवति ॥ १६ ॥

द्विव्रणीयोक्तेन विधानेन भल्लातकनिश्च्युतितं स्नेहमादाय प्रातःप्रातः शुक्तिमात्रमुपयुञ्जीत, जीर्णे पूर्व्ववदाहारः फलप्रकर्षश्च। भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं वोपयुञ्जीत। तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः। एवं मासमुपयुज्य मासत्रयमादिष्टाहारो रक्षेदात्मानम्। ततः सर्व्वोपतापानपहृत्य वर्णवान् बलवान् श्रवणग्रहणधारणशक्तिसम्पन्नो वर्षशतायुर्भवति। मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति। एवं दश मासानुपयुज्य वर्षसहस्रायुर्भवति ॥ १७ ॥

भवन्ति चात्र।

यथा सर्व्वाणि कुष्ठानि हतः खदिरवीजकौ।
तथैवार्शांसि सर्व्वाणि वृक्षकारुष्करौ हतः ॥ १८ ॥
साध्या नाप्यतिवर्त्तन्ते प्रमेहा रजनीं यथा।
क्षाराग्निं नातिवर्त्तन्ते तथा दृश्या गुदोद्भवाः ॥ १९ ॥

दशेति, एवं भल्लातकसहस्रमुपयुज्यत इति घटते। सर्व्वत्र कुष्ठार्शोभिर्विमुक्त इति वचनं न यथार्थवचनम्, काकणकस्य कुष्ठस्यादिबलप्रवृत्तानाञ्च कुष्ठानां तथा त्रिदोषजानाञ्चार्शसां सहजानाञ्चासाध्यत्वात्, रक्तपित्तजानामप्यर्शसां भल्लातकाविषयत्वात्। तुवरकभल्लातकयोर्वीर्य्युष्णं निषिद्धम्, अतोऽल्पश्शृतशीतजलं पेयम् ॥ १६ ॥

भल्लातकप्रयोगान्तरं दर्शयति—द्विव्रणीयेत्यादि। प्रतिसंसृष्टभक्त इति यवागवादिक्रमभुक्त इत्यर्थः। द्वादशभिरत्र कालैः षट् दिनानि, विरेचनदिवसेन सह सप्त दिनानि च, तदुत्तरं भोजनमष्टमे ; तस्यापोहे सप्त, तदा सप्तमे वाहनि भोजनं, नवमे पुनरहनि भल्लातकमज्जस्नेहं पिबेत्। यथाबलमिति पुरुषरोगबलानतिक्रमेण प्रसृतिं प्रकुञ्चं वाष्टभागमधुयुक्तं द्विगुणघृतं पूर्व्ववद् घृताभ्यक्तताल्वोष्ठः शीतं पिबेत्, शीतोदकाद्युपचारश्च। प्रसृतिः पलद्वयम्। प्रकुञ्चः पलम्। रक्षेदात्मानं क्रोधादिभ्य इति शेषः ॥ १७ ॥

खदिरादीनां कुष्ठादिहरत्वं पुरातनागमनिर्दिष्टैः श्लोकैराह—भवन्ति चात्रेत्यादि। द्वाभ्यां कुटजभल्लातकाभ्यां यथास्वं विषयमुपयुज्यमानाभ्यां प्रत्येकशो वातादिदोषत्रयजनितानि अर्शांसि निवर्त्तन्ते। तद् यथा—वातकफजानि भल्लातकेन, रक्तपित्तजानि कुटजेन। एवमेवाभिप्रेत्य सर्व्वाणि, न पुनः सान्निपातिकसर्व्वदोषजापेक्षया सर्व्वाणीति। एवं कुष्ठेष्वपि साध्यत्वेन दार्ष्टान्तिकं द्रष्टव्यम्। हरिद्राप्रयोगेण प्रमेहा इव षोड़श, क्षाराग्नीन् नातिवर्त्तन्ते तथा दृश्या गुदोद्भवाः, षोड़श प्रमेहाः वातजप्रमेहचतुष्टयं विहाय। अन्यदपि चिकित्सितं दोषोच्छ्रायापेक्षयाह—

घृतानि दीपनीयानि लेहायस्कृतयः सुराः ।
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितिम् ॥ २० ॥
वेगावरोधस्त्रीपृष्ठ-यानान्युत्कटुकासनम् ।
यथास्वं दोषलञ्चान्नमर्शःसु परिवर्ज्जयेत् ॥ २१ ॥

इति सुश्रुत संहितायां चिकित्सितस्थानेऽर्शश्चिकित्सितं
नाम षष्ठोऽध्यायः ॥ ६ ॥

घृतानीत्यादि । लेहाः कुटजावलेहादयः । नवायसादयोऽयस्कृतयो महाकुष्ठमधुमेहादिचिकित्सितनिर्द्दिष्टाः । सुरा नानाविधाः पैष्टिकादिभेदेन विरेचनाध्यायविधिविधेयाः । आसवाश्च नानाविधौषधक्वाथगुडादिकृता धातक्यादिचूर्णाधिवासिताः । वीक्ष्य दोषं यथाफलमित्यन्ये पठन्ति, तत्र फलमुक्तमनतिक्रम्येत्यर्थः ॥ १८—२० ॥

वर्ज्यान् निर्द्दिशन्नाह—वेगावरोधेत्यादि । वातमूत्रपुरीषादीनां स्वमार्गेण स्वभावतः प्रवृत्त्यभिमुखीभावो वेगः । उत्कटुकासनमुत्कटिकस्य चिरासनस्थितिः ॥ २१ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
अर्शश्चिकित्सितव्याख्यानाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातोऽश्मरीचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ।
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥ २ ॥
तस्य पूर्व्वेषु रूपेषु स्नेहादिक्रम इष्यते ।
तेनास्यापचयं यान्ति व्याधेर्मूलान्यशेषतः ॥
पाषाणभेदो वसुको वशिराश्मन्तकौ तथा ।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥
कपोतवङ्कार्त्तगलः कच्चकोशीरकुब्जकाः ।
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ।
ऊषकादिप्रतीवापमेषां क्वाथैर्घृतं कृतम् ।
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् वातनाशने ॥ ३ ॥

अश्मरीत्यादि। तरुणः तत्कालोत्पन्नः। येन स्नेहादिक्रमेण व्याधिमूलानि दोषदूष्यरूपाणि अशेषतः प्रशमं यान्ति तं निर्दिशन्नाह—तस्येत्यादि। वसुकः वकपुष्पम्। वशिरः मर्कटसंज्ञस्तृणजातिविशेषः, सूर्य्यावर्त्तभेद इत्यन्ये। अश्मन्तकोऽम्ललोटः कोविदारसदृशपत्रकः। कपोतवङ्का कटभीसदृशपत्रो विटपी मध्यदेशे प्रसिद्धः। आर्त्तगलः ककुभकः सुगन्धिमूलः कत्रहा इति नाम्ना पूर्व्वदेशे प्रसिद्धः, अन्ये तु आर्त्तगलः ककुभ इत्याहुः, वहिःकेशरः कण्टकितफलो विटप इत्यन्ये। कच्चको मध्यलेखानिचितो ऋजुकपत्र ईषद्रक्तमूलः कत्रहक इति मालवके प्रसिद्धः। अन्ये तु कच्चकस्थाने ककुभ इति पठन्ति स च प्रसिद्धः। कुब्जः गुञ्जा। वृक्षादनी बन्दाकः। भल्लुकः श्योनाकः। शाकः कर्कशमसृणपृष्ठोदरपत्रो वृक्षः तस्य फलम्। कतकफलमम्बुप्रसादनं शशकशुष्कपुरीषप्रतिमम्। एषां सामान्यस्नेहकषायपरिभाषया कषायः, कषायद्रव्याणां स्नेहपादेन कल्कः घृतौषधवर्गसङ्क्षेपार्थमन्यत्राप्यतिदिशन्नाह—क्षारानित्यादि। क्षाराश्चात्र पातव्याः, ते च चूर्णत्वात् कर्षमात्रया सलिलेन मस्त्वादिवस्तिशोधनद्रव्येण वा पलद्वयचतुष्टयप्रमाणेन, क्षारोदकपक्षे तु कर्षद्वयं त्रयं वा षड्गुणेनाष्टगुणेन वा जलेन बहुशः परिस्राव्य पूतं पेयम्। यवाग्वादयश्चतुष्पलद्रव्यक्काथेन कर्त्तव्याः। भोजनानि भक्तादयः। चकारात् चूर्णादीनामपि समुच्चयः। एवं पित्तकफहरद्रव्यवर्गेऽप्यूह्यम्। क्षारादीनां कल्पना परिभाषाबलात्; स्वयमप्यूहः कर्त्तव्यः॥ १—३॥

कुशः काशः शरो गुन्द्रा उत्कटो मोरटोऽश्मभित् ।
वरी विदारी वाराही शालिमूलत्रिकण्टकम् ॥
भल्लूकः पाटला पाठा पत्तूरोऽथ कुरुण्टिका ।
पुनर्नवा शिरीषश्च कथितास्तेषु साधितम् ॥
घृतं शिलाजमधुक-वीजैरिन्दीवरस्य च ।
त्रपुसैर्व्वारुकादीनां वीजैश्चावापितं शुभम् ।
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् पित्तनाशने ॥ ४ ॥
गणो वरुणकादिस्तु गुग्गुल्वेलाहरेणवः ।
कुष्ठभद्रादिमरिच-चित्रकैः ससुराह्वयैः ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूर्यूषांश्च कषायाणि पयांसि च ।
भोजनानि च कुर्व्वीत वर्गेऽस्मिन् कफनाशने ॥ ५ ॥
पिचुकाङ्कोलकतक-शाकेन्दीवरजैः फलैः ।
चूर्णितैः सगुडं तोयं शर्कराशमनं पिवेत् ॥ ६ ॥

पित्ताश्मरीचिकित्सामाह—कुश इत्यादि । उत्कटः महती खगाली । मोरट इक्षुमूलम् । पत्तूरः शरवालिका । कुरुण्टिका शरवालिकाभेदः । शिलाजं शिलाजतु । इन्दीवरं शरवालिका-भेदो दीर्घपत्रो वहुलपुष्पः ; जेजटस्तु इन्दीवरं नीलोत्पलम्, तन्नेच्छति गयी ॥ ४ ॥

कफाश्मरीचिकित्सामाह—गण इत्यादि । भद्रादिर्भद्रदारुकुष्ठहरिद्रेत्यादिः । अजासर्पिः केचिन्न पठन्ति, ते प्रकरणात् पूर्व्वोदितात् सामान्येन गव्यघृतमेव ददति । कफाश्मरीचिकित्सितेनैव शुक्राश्मरीचिकित्सितमुक्तं मन्तव्यं, तुल्यगुणत्वात् कफशुक्रयोरिति ॥ ५ ॥

इदानीं शर्करापवनाय शमनाय वा योगोपदेशः । पिचुकः पक्करी, कार्पासस्य फलमित्येके । इन्दीवरं कर्णपूरकाख्यो महापुष्पः शरवालिकाभेदः, अन्ये नीलोत्पलमाहुः, तन्नेच्छति गयी । अङ्कोलोऽङ्कोठः । कतकः प्रागुक्तः शाकोऽपि । गुडोऽत्र चूर्णसमो ज्ञेयः, "चूर्णे चूर्णसमो देयो मोदके द्विगुणो गुडः" इत्युक्तत्वात् । उष्णोदकेन सह पातव्यम् ॥ ६ ॥

क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालमूलिका।
अजमोदा कदम्बस्य मूलं नागरमेव च।
पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा॥
त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहमश्मरीभेदनं पिवेत्॥ ७॥
द्रव्याणान्तु घृतोक्तानां क्षारोऽविमूत्रगालितः।
ग्राम्यसत्त्वशकृत्क्षारैः संयुक्तः साधितः शनैः॥
तत्रोषकादिरावापः कार्य्यस्त्रिकटुकान्वितः।
एष क्षारोऽश्मरीं गुल्मं शर्कराश्च भिनत्त्यपि॥
तिलापामार्गकदली-पलाशयववल्कजः।
क्षारः पेयोऽविमूत्रेण शर्करानाशनः परः॥ ८॥
पाटलाकरवीराणां क्षारमेवं समाचरेत्॥ ९॥
श्वदंष्ट्रायष्टिकाब्राह्मी-कल्कं वाक्षसमं पिवेत्।
सहैड़काख्यौ पेयौ वा शोभाञ्जनकमार्कवौ॥
कपोतवङ्कामूलं वा पिवेदम्लसुरादिभिः।
तत्सिद्धं वा पिवेत् क्षीरं वेदनाभिरुपद्रुतः॥

क्रौञ्चेत्यादि। क्रौञ्चः क्रौञ्चपक्षी। तालमूलिका मूषली मूषकपुच्छाकारशिफा। त्रिकण्टको गोक्षुरकः। अन्ये तु मर्कटकस्य वीजानामिति पठन्ति। मकरा इति लोके। अन्ये अनर्त्तकवीजानामिति पठन्ति, तत्रापि स एवार्थः। अनेन योगेन भिद्यते अश्मरी, शर्करा तु शान्तिमुपैति। अविशेषोक्तेर्वातादीनां त्रयाणां दोषाणामपि गणानां, वर्गत्वाद् यथालाभेन; ति ऊनालादिदीपनेन क्षारीकृतानां भागः। ग्राम्या ग्रामभवा अश्वादयः, तेषां समभागपुरीषक्षारसंयुक्तः षड्गुणाविमूत्रगालितः। ततस्तस्य क्षारोदकस्य पाकसिद्धिसमये चतुर्थांशेनोषकादित्रिकटुकयोः समभागेन मिश्रितयोः प्रक्षेपः। तिलेत्यादि। तिलादेः कल्कजातस्य प्रत्येकं क्षारः समोऽविमूत्रपलद्वयेन पेयः। तिलादेः क्षारस्य कर्षद्वयं त्रयं वा अविमूत्रेण षड्गुणेन बहुशः स्रावितं पूतं पेयम्॥ ७।८॥

पाटलेत्यादि। एते च वातकफसम्भूतायामश्मर्य्यां मधुरक्षीरघृताशिनः क्षारयोगा योज्याः॥९॥

श्वदंष्ट्रेत्यादि। यष्टिका यष्टिमधु। ब्राह्मी लवनिका। पानमस्य अविमूत्रेणैव। एड़ाख्यया सह शोभाञ्जनमार्कवौ पातव्यावविमूत्रेणैव। मार्कवः भृङ्गराजः। कपोतवङ्का प्रसिद्धैव। अम्लैः काञ्जिकादिभिः। सुरादिभिः सुरासौवीरकमैरेयकमेदकैः। तदित्यादि तत्सिद्धं कपोतवङ्कासिद्धम्,

हरीतक्यादिसिद्धं वा वर्षाभूसिद्धमेव वा।
सर्व्वथैवोपयोज्यः स्याद् गणो वीरतरादिकः॥ १०॥
घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः।
यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः॥ ११॥
कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा।
उपक्रमो जघन्योऽयमतः स परिकीर्त्तितः॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत्।
तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा॥ १२॥

अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं कृतवलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य, ततो वलवन्तमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषञ्च, तस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानमुन्नतकटीकं वस्त्राधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा, ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वे विमृद्य मुष्टिनावपीड़येदधोनाभेर्यावदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानु सेवनीमासाद्य प्रयत्न-

द्रव्यादष्टगुणं क्षीरमित्यादिन्यायेन। हरीतक्यादिः त्रिफला, तत्सिद्धं क्षीरं पित्तजाश्मरीवेदनाभिरुपद्रुतः, वातकफजाश्मरीवेदनाभिरुपद्रुतस्तु पुनर्नवामूलसिद्धं पयः पिवेत्। अनुक्तमपि घृतादि विशिष्टद्रव्यगणैर्निर्द्दिशन्नाह - सर्व्वथेत्यादि। सर्व्वथा सर्व्वैः प्रकारैः घृतक्षीरकषाययवागूभोजनसाधनभेदेन तथावगाहस्वेदादिभिः॥ १०॥

क्रियाक्रमासिद्धावपरच्छेदविधिमाह—घृतैरित्यादि। उत्तरवस्तिरत्र अश्मरीहरद्रव्यसिद्धः नैरूहिकः स्नैहिकश्च। उत्तरो विधिश्छेदः॥ ११॥

अध्रुवा अनिश्चिता। अन्ये तु निश्चितस्यापि वैद्यस्येति पठन्ति, निश्चितं शास्त्रनिश्चितं कर्म्म करोतीति निश्चितो निश्चितकर्म्मकृत्। ननु मर्म्मोपघातेनातिदुःखकारणं मरणं वा, तत् किमर्थं क्रियत इत्याह—अक्रियायामित्यादि॥ १२॥

अन्यथा तस्मिन् अपृष्टे कर्म्मणि आतुरस्य मृत्युदण्डं कुर्य्यात्। तमेवोत्तरं छेदं पूर्व्वकर्म्मोत्तरकर्म्मभ्यां निर्द्दिशन्नाह—अथेत्यादि। अथशब्दोऽयं मङ्गलार्थे छेदक्रियायाम्। अपकृष्टदोषमूर्द्धाधोदोषनिर्हरणेन। ईषत्कर्शितमिति अतिकर्शनेन कर्म्माक्षमता, अकर्शनेनोपचितामल्पवस्तिकायत्वादश्मर्य्या अप्राप्तिरिति। अग्रोपहरणीयोक्तेनेत्यादि यन्त्रशस्त्रक्षारशलाकादिविधिना। अथारोग्यार्थिनमित्यन्ये पठन्ति। तत इत्यादि। वलवन्तमिति अपकृष्टदोषं विशुद्धमलसंसर्ज्जनेन सञ्जनितवलम्। इतरेण पुरुषेण सह। तत इत्यादि। अधःप्रपन्ना अधोगता। पायौ गुदे। प्रणिधाय प्रक्षिप्य। निर्व्वलीकं त्वक्सङ्कोचरहितम्। तदप्यविषमं निःक्षोभितत्व-

वलाभ्यां पायुमेढ्रान्तरमानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीड़येदङ्गुलिभ्यां यथा ग्रन्थिरिवोन्नतं शल्यं भवति।

स चेद् गृहीतशल्ये तु विवृताक्षो विचतनः।
हतवल्गुम्बशीर्षश्च निर्विकारो मृतोपमः॥
न तस्य निर्हरेच्छल्यं निर्हरेत् तु म्रियेत सः।
विना त्वेतेषु रूपेषु निर्हर्त्तुं समुपाचरेत्॥

सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वावचारयेत् शस्त्रमश्मरीप्रमाणम्; दक्षिणतो वा क्रियासौकर्य्यहेतोरित्येके। यथा च न भिद्यते चूर्ण्यते वा तथा प्रयतेत, चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति, तस्मात् समस्तामग्रवक्त्रेणाददीत॥१३॥

स्त्रीणान्तु वस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टः, तस्मात्तासामुत्सङ्गवच्छस्त्रं पातयेत्; अतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत्। पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्। अश्मरीव्रणादृते भिन्नो वस्तिरेकधा न भवति, द्विधाभिन्नवस्तिराश्मरिको न सिध्यति॥१४॥

रहितम्। अनायतमदीर्घम्। सन्निवेश्य संस्थाप्य। पुनरवस्थानेऽपि गृहीतेष्वश्मरीशल्येषु याद्दशस्य मरणभयान्नाहरणीयं तादृशं दर्शयन्नाह—स चेदित्यादि। विवृत्ताक्षः स्तब्धाक्षः। निर्विकारः निर्व्यापारः। क इव? मृत इवेत्यर्थः। अन्ये निर्व्यापार इति पठन्ति। निर्व्यापारो निरीहः; निर्विहार इत्यन्ये पठन्ति; तत्रापि स एवार्थः। प्रयतेत प्रयत्नं कुर्व्वीत। अग्रवक्त्रेण आहरणयन्त्रेण अतीक्ष्णमुखेन॥१३॥

स्त्रीणां पुनर्वस्तिप्रत्यासन्नमधिकमाशयान्तरमस्ति, अतः सामान्यहरणे दोषमभिवीक्ष्य छेदविशेषं निर्दिशन्नाह—स्त्रीणामित्यादि। उत्सङ्गवदिति ऊर्द्ध्वं सङ्गः स यस्यास्तीति तद्वदुत्सङ्गवत् उत्तानमित्यर्थः। अन्यथेति यदावगाढः शस्त्रपातः स्यात् तदा वहिर्गतं त्वङ्मांसं भित्वा वस्तित्वचा सह भगवस्तुवस्तिपार्श्वाश्रयस्य गर्भाशयस्यापि त्वचो भेदः स्यात्, ततस्तासां भगान्तर्गतो मूत्रस्रावी व्रणः स्यादित्यर्थः। तथा च वैतरणः—"भगस्याधः स्त्रिया वस्तिरूर्द्ध्वं गर्भाशयः स्थितः। गर्भाशयश्च वस्तिश्च महास्रोतःसमाश्रितौ। वस्तिभागं समुन्नम्य अवनम्याश्मरीं बुधः। स्फिगग्रे भेदनं तासां हितमन्यत्र दोषकृत्" इति। इदानीमुभयोरपि स्त्रीपुंसयोरपरप्रकारेण सामान्यं मूत्रस्राविणं व्रणं निर्दिशन्नाह—पुरुषस्येत्यादि। पुरुषस्य वेति वाशब्दश्चार्थे, तेन स्त्रियाः पुरुषस्य चेत्यर्थः। मूत्रप्रसेकस्रोतसी स्त्रीपुंसयोः, अभेदेनोक्तत्वात्। मूत्रप्रसेको नाम मूत्रं येन वस्तिमुखाश्रयेण स्रोतसा क्षरति, तस्य छेदनादित्यर्थः। इदानीमश्मरीनिमित्तमेवैकधा भिन्नवस्तिर्जीवति न पुनरन्योऽपि भिन्नवस्तिरिति दर्शयन्नाह—अश्मरीत्यादि। द्विधाभिन्नवस्तिराश्मरिको न सिध्यति; अश्मरीव्रणं विना एकधाभिन्नवस्तिर्न भवति न जीवतीत्यर्थः। अश्मरीणां व्रणे शास्त्रविहितच्छेदनत्वेन निःसृतनिःशेषमूत्रत्वात्॥१४॥

अश्मरीव्रणनिमित्तमेकधाभिन्नवस्तिर्जीवति क्रियाभ्यासात् शास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति। उद्धृतशल्यन्तूष्णोदकद्रोण्यामवताऱ्य स्वेदयेत्, तथा हि वस्तिरसृजा न पूर्य्यते। पूर्णे वा क्षीरवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥ १५ ॥

भवति चात्र ।

क्षीरवृक्षकषायस्तु पुष्पनेत्रेण योजितः ।
निर्हरेदश्मरीं तूर्णं रक्तं वस्तिगतञ्च यत् ॥ १६ ॥

मूत्रमार्गविशोधनार्थञ्चास्मै गुड़सौहित्यं वितरेत्। उद्धृत्य चैनं मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां यवागूं पाययेदुभयकालं त्रिरात्रम्। त्रिरात्रादूर्द्ध्वं गुड़प्रगाढ़ेन पयसा मृद्वोदनमल्पं भोजयेद् दशरात्रं मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थञ्च। दशरात्रादूर्द्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत् ॥ १७ ॥

ततो दशरात्रञ्चैनमप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा। क्षीरवृक्षकषायेण वास्य व्रणं प्रक्षालयेत्। रोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्कैर्व्रणं प्रतिग्राहयेत्; एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्वं व्रणाभ्यञ्जनमिति। स्त्यानशोणितश्चोत्तरवस्तिभिरुपाचरेत्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन

अश्मरीनिमित्ताघातेन पुनरेकधाभिन्नवस्तेर्जीविते हेतुं निर्दिशन्नाह—अश्मरीव्रणेत्यादि। क्रियाणामुष्णोदकस्वेदक्षीरवृक्षकषाययोजनादीनामभ्यसनं क्रियाभ्यासस्तस्मात्। अश्मरीप्रमाणमुखमात्रः सेवनीसव्यपार्श्वगः शास्त्रविहितच्छेदस्तस्मात्। निःस्यन्दो मूत्रं तेन परिवृद्धं शल्यं तस्मादित्यर्थः। एतदुक्तं भवति, येन निःस्यन्देन मूत्रेण वृद्धेन सता शल्यं परिवृद्धम्, तस्य शल्यापहरणेऽपि निःशेषापरिस्रुतत्वाद् भिन्नवस्तिर्जीवति। गयी तु शल्यस्येतिपदं परित्यज्य निःस्यन्दपरिवृद्धत्वादित्येवं पठति व्याख्यानयति च—निःस्यन्दस्य मूत्रस्य परिवृद्धत्वेन, अत एव मूत्रवृद्धिकरयवागूगुडक्षीरादिसौहित्यविधानं; शास्त्रविहिताक्रमच्छेदे तु मूत्रनिःशेषक्षरणान्मरणमिति। पुष्पनेत्रेण उत्तरवस्तिना ॥ १५ । १६ ॥

मूत्रमार्गेत्यादि। गुड़सौहित्यं गुड़वासितं भक्तं दद्यादित्यर्थः। उद्धृत्य चैनमिति उष्णोदकद्रोण्या इति शेषः। मधुघृताभ्यङ्गो व्रणस्य रोपणार्थम्। मूत्रविशोधनद्रव्याणि तृणपञ्चमूलीगोक्षुरककुष्माण्डकपाषाणभेदप्रभृतीनि। उभयकालं सायं प्रातरित्यर्थः। अप्रमत्तः सावधानः। क्षीरवृक्षा वटोडुम्बराश्वत्थप्लक्षगर्दभाण्डाः। प्रतिग्राहयेत् लेपयेदित्यर्थः। एतेष्वेव अनन्तरोद्दिष्टेषु रोध्रादिषु हरिद्रायुतेषु। संहतशोणिते तु प्रागुक्तद्रव्यकषायविधानेनोत्तरवस्तिरिति रक्तविलायनेनापकर्षणादित्यर्थः। स्वमार्गमप्रतिपन्ने मूत्रे इत्यर्थः। मधुराणि काकोल्यादीनि, कषायाणि क्षीरवृक्षादीनि, तैः; अन्ये मधुराणां कषायैरित्याहुः; अनुबन्धपरिहारार्थं वायो-

विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरेन्मधुरकषायैरिति। यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवञ्चाशक्ये विदार्य्य वा नाड़ीं शस्त्रेण वड़िशेनोद्धरेत्। रूढ़व्रणश्चाङ्गनाश्वनागनगरथद्रुमान् नारोहेत वर्षं नाप्सु प्लवेत भुञ्जीत वा गुरु ॥ १८ ॥

मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः, शुक्रवहच्छेदान्मरणं क्लैव्यं वा, मुष्कस्रोतउपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम्, सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः, वस्तिगुदविद्धलक्षणं प्रागुक्तमिति ॥ १९ ॥

भवतश्चात्र।

मर्म्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणाम्।
व्यापादयेद् बहून् मर्त्यान् शस्त्रकर्म्मापटुर्भिषक् ॥
सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेकं मूत्रवहं योनिर्वस्तिस्तथाष्टमः ॥ २० ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने अश्मरीचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

रज्जुलोमनाय चेति। कथमपि मूत्रपथागतानामश्मनां निर्हरणं निर्दिशन्नाह—यदृच्छयेत्यादि। स्रोतसा मूत्रपथेन। तथाप्याहर्त्तुमशक्यत्वे मेढ्रमपि विदार्य्यापकर्षयेत् ॥ १७। १८ ॥

मूत्रवहेत्यादि। अल्पक्षणनात् क्लैव्यं सर्व्वदा लिङ्गपातेनावस्थानम्। क्षणनात् छेदनात्। मूत्रक्षरणं मूत्रस्रवणम्। प्रागुक्तमिति प्रत्येकमर्म्मनिर्द्देशे ॥ १९ ॥

अतःपरं संग्रहश्लोकमाह—भवत इत्यादि। तान्येव मर्म्माणि सुखावबोधार्थं श्लोकेन निर्द्दिशन्नाह। दृष्टकर्म्मा कृतयोग्यो भिषक् कर्म्म कुर्य्यात्, एवं साध्यं भवति ॥ २० ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अश्मरीचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

# अष्टमोऽध्यायः ।

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पञ्च भगन्दरा व्याख्याताः, तेष्वसाध्यः शम्बूकावर्त्तः शल्यनिमित्तश्चेति ; शेषाः कृच्छ्रसाध्याः ॥ २ ॥

तत्र भगन्दरपिड़कोपद्रुतमातुरमपतर्पणादिविरेचनान्तेनैकादशविधेनोपक्रमेणोपक्रमेतापक्वपिड़कम् । पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्य पराचीनमवाचीनं वा ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण ॥ ३ ॥

अन्तर्मुखे चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यैषणीं दत्त्वा शस्त्रं पातयेत् । आसाद्य वाग्निक्षारञ्चेत्येतत् सामान्यं सर्व्वेषु ॥ ४ ॥

विशेषतस्तु—

नाड्यन्तरे व्रणान् कुर्य्याद् भिषक् तु शतपोनके ।
ततस्तेषूपरूढ़ेषु शेषा नाड़ीरुपाचरेत् ।
गतयोऽन्योन्यसम्बद्धा बाह्याश्छेद्यास्त्वनेकधा ॥

निदानेऽपि भगन्दराणां साध्यासाध्यविभागे पूर्व्वोक्ते पुनरिह चिकित्सितविधानायानुकथनं प्रकरणत्वादिति न पौनरुक्त्यम् ॥ १ । २ ॥

तत्रेत्यादि । अपतर्पणादिविरेचनान्त उपक्रमो द्विव्रणीयचिकित्सितोक्तः । पक्वेषु चेति चकारेण भिन्नेषु चेति द्रष्टव्यम् । तत्र बहिर्मुखं पराचीनम्, अन्तर्मुखमवाचीनम् । एषणी लोहादिशलाका । तत्र अन्तर्मुखमवाचीनमित्युक्तम्, तत्र विशेषं निर्द्दिशन्नाह—अन्तर्मुखे इत्यादि । सर्व्वेषु अग्निक्षारावासाद्यैव ॥ ३ । ४ ॥

नाड्यन्तरे इत्यादि । नाड़ीनां पूर्य्यमाणानां निकटस्थानां त्रिचतुराणामन्तरं मध्यं नाड्यन्तरं, तस्मिन् व्रणान् कुर्य्यात् । भिषक् सुशिक्षितो वैद्यः । यदि नाड़ीष्वनिश्रितनिकटासु छेदः

विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरे- न्मधुरकषायैरिति। यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवञ्चाशक्ये विदार्य्य वा नाड़ीं शस्त्रेण वड़िशेनो- द्धरेत्। रूढ़व्रणश्चाङ्गनाश्वनागनगरथद्रुमान् नारोहेत वर्षं नाप्सु प्लवेत भुञ्जीत वा गुरु॥ १८॥

मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः, शुक्रवहच्छेदान्मरणं क्लैव्यं वा, मुष्कस्रोत- उपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम्, सेवनीयोनिच्छेदाद्रुजः प्रादुर्भावः, वस्तिगुदविद्धलक्षणं प्रागुक्तमिति॥ १९॥

भवतश्चात्र।

मर्म्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणाम्।
व्यापादयेद् बहून् मर्त्त्यान् शस्त्रकर्म्मापटुर्भिषक्॥
सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेकं मूत्रवहं योनिर्वस्तिस्तथाष्टमः॥ २०॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने अश्मरीचिकित्सितं नाम सप्तमोऽध्यायः॥ ७॥

रनुलोमनाय चेति। कथमपि मूत्रपथागतानामश्मनां निर्हरणं निर्दिशन्नाह—यदृच्छयेत्यादि। स्रोतसा मूत्रपथेन। तथाप्याहर्त्तुमशक्यत्वे मेढ्रमपि विदार्य्यापकर्षयेत्॥ १७। १८॥

मूत्रवहेत्यादि। अल्पक्षणनात् क्लैव्यं सर्व्वदा लिङ्गपातेनावस्थानम्। क्षणनात् छेदनात्। मूत्रक्षरणं मूत्रस्रवणम्। प्रागुक्तमिति प्रत्येकमर्म्मनिर्द्देशे॥ १९॥

अतःपरं संग्रहश्लोकमाह—भवत इत्यादि। तान्येव मर्म्माणि सुखाववोधार्थं श्लोकेन निर्दिश- न्नाह। दृष्टकर्म्मा कृतयोग्यो भिषक् कर्म्म कुर्य्यात्, एवं साध्यं भवति॥ २०॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अश्मरीचिकित्सितं नाम सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः ।

अथातो भगन्दराणां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पञ्च भगन्दरा व्याख्याताः, तेष्वसाध्यः शम्बूकावर्त्तः शल्यनिमित्तश्चेति ; शेषाः कृच्छ्रसाध्याः ॥ २ ॥

तत्र भगन्दरपिड़कोपद्रुतमातुरमपतर्पणादिविरेचनान्तैरेकादशविधेनोपक्रमेणोपक्रमेतापक्वपिड़कम्। पक्वेषु चोपस्निग्धमवगाहस्विन्नं शय्यायां सन्निवेश्यार्शसमिव यन्त्रयित्वा भगन्दरं समीक्ष्य पराचीनमवाचीनं वा ततः प्रणिधायैषणीमुन्नम्य साशयमुद्धरेच्छस्त्रेण ॥ ३ ॥

अन्तर्मुखे चैवं सम्यग्यन्त्रं प्रणिधाय प्रवाहमाणस्य भगन्दरमुखमासाद्यैषणीं दत्त्वा शस्त्रं पातयेत्। आसाद्य वाग्निक्षारञ्चेत्येतत् सामान्यं सर्व्वेषु ॥ ४ ॥

विशेषतस्तु—

नाड्यन्तरे व्रणान् कुर्य्याद् भिषक् तु शतपोनके।
ततस्तेषूपरूढ़ेषु शेषा नाड़ीरुपाचरेत्।
गतयोऽन्योन्यसम्बद्धा वाह्याश्छेद्यास्त्वनेकधा ॥

निदानेऽपि भगन्दराणां साध्यासाध्यविभागे पूर्व्वोक्ते पुनरिह चिकित्सितविधानायानुकथनं प्रकरणत्वादिति न पौनरुक्त्यम् ॥ १ । २ ॥

तत्रेत्यादि। अपतर्पणादिविरेचनान्त उपक्रमो द्विव्रणीयचिकित्सितोक्तः। पक्वेषु चेति चकारेण भिन्नेषु चेति द्रष्टव्यम्। तत्र वहिर्मुखं पराचीनम्, अन्तर्मुखमवाचीनम्। एषणी लोहादिशलाका। तत्र अन्तर्मुखमवाचीनमित्युक्तम्, तत्र विशेषं निर्द्दिशन्नाह—अन्तर्मुखे इत्यादि। सर्व्वेषु अग्निक्षारावासाद्यैव ॥ ३ । ४ ॥

नाड्यन्तरे इत्यादि। नाड़ीनां पूर्य्यमाणानां निकटस्थानां त्रिचतुराणामन्तरं मध्यं नाड्यन्तरं, तस्मिन् व्रणान् कुर्य्यात्। भिषक् सुशिक्षितो वैद्यः। यदि नाड़ीष्वनिश्चितनिकटासु छेदः

नाडीरनभिसम्बद्धा यश्छिनत्त्येकधा भिषक्।
स कुर्य्याद् विवृतं जन्तोर्व्रणं गुदविदारणम्।
तस्य तद् विवृतं मार्गं विण्मूत्रमनुगच्छति॥
आटोपगुदशूलञ्च करोति पवनो भृशम्।
तत्राधिगततन्त्रोऽपि भिषङ् मुह्येदसंशयम्॥
तस्मान्न विवृतः कार्य्यो व्रणस्तु शतपोनके।
व्याधौ तत्र बहुच्छिद्रे भिषजा वै विजानता॥
अर्द्धलाङ्गलकश्छेदः कार्य्यो लाङ्गलकोऽपि वा।
सर्व्वतोभद्रको वापि कार्य्यो गोतीर्थकोऽपि वा।
सर्व्वतः स्रावमार्गांस्तु दहेद् वद्यस्तथाग्निना॥
सुकुमारस्य भीरोर्हि दुष्करः शतपोनकः।
रुजास्रावापहं तत्र स्वेदमाशु प्रयोजयेत्॥
स्वेदद्रव्यैर्यथोद्दिष्टैः कृशरापायसादिभिः।
ग्राम्यानूपौदकैर्मांसैर्लावाद्यैर्व्वापि विष्किरैः॥
वृक्षादनीमथैरण्डं विल्वादिश्च गणं तथा।
कषायं सुकृतं कृत्वा स्नेहकुम्भे निषेचयेत्॥
नाड़ीस्वेदेन तेनास्य तं व्रणं स्वेदयेद् भिषक्।
तिलैरण्डातसीमाष-यवगोधूमसर्षपान्॥

क्रियते तदा को दोषः स्यादित्याह—गतय इत्यादि। अनेकधा अनेकप्रकारा इत्यर्थः। आटोपम् आध्मानम्। विवृतो व्यात्तमुखः। व्याधावित्यादि। लाङ्गलं हलमुच्यते, अर्द्धलाङ्गल इव अर्द्धलाङ्गलकः। सर्व्वतोभद्रस्त्वासनविशेषः पर्य्यङ्किकाकारो मण्डलाकारसदृशो वा। गोतीर्थको गच्छतो गोर्मूत्रगतिसदृशः, अथवा गोतीर्थं गोयोनिरुच्यते, तदाकारो गोतीर्थकः, अथवा गोतीर्थं निपानं येन गावः पिबन्ति तत्खुराङ्कितवच्छेदविशेषः कर्त्तव्यः; तथाच तन्त्रान्तरम्—"द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः। ह्रस्वमेकतरं यत्र सोऽर्द्धलाङ्गलकः स्मृतः। सेवनीं वर्जयित्वा तु चतुर्द्धा दारिते गुदे। सर्व्वतोभद्रकं छेदमाहुश्छेदविदो जनाः। पार्श्वागतेन छिद्रेण छेदो गोतीर्थको भवेत्"—इति। छिन्ने पश्चात् कर्म्म निर्द्दिशन्नाह—सर्व्वत इत्यादि। अग्निनेति नात्रावधारणम्, तेन क्षारेणापि, नाड़ीनामनेकत्वात्। तत्र कृतकर्म्मणि रुजोपशमार्थं पश्चात्कर्म्म निर्द्दिशन्नाह—रुजास्रावेत्यादि। तिलतण्डुलमाषैर्यवागूः कृता कृशरा। क्षीरसिद्धास्तण्डुलाः पायसः। गयी तु रुजास्रावापहं तत्रेत्यत्र तत्र धीरो विधानज्ञ इति पठति।

लवणान्यम्लवर्गञ्च स्थाल्यामेवोपसाधयेत् ।
आतुरं स्वेदयेत् तेन तथा सिध्यति कुर्व्वतः ॥
स्विन्नञ्च पाययेदेनं कुष्ठञ्च लवणानि च ।
वचाहिङ्गजमोदञ्च समभागानि सर्पिषा ॥
मार्द्वीकेनाथवाम्लेन सुरासौवीरकेण वा ।
ततो मधुकतैलेन तस्य सिञ्चेद् भिषग् व्रणम् ॥
परिषिञ्चेद् गुदञ्चास्य तैलैर्वातरुजापहैः ।
विधिनानेन विण्मूत्रं स्वमार्गमधिगच्छति ॥
अन्ये चोपद्रवास्तीव्राः सिध्यन्त्यत्र न संशयः ।
शतपोनक आख्यातः ——————॥ ५ ॥
——————उष्ट्रग्रीवे क्रियां शृणु ।
अथोष्ट्रग्रीवमेषित्वा छित्त्वा क्षारं निपातयेत् ॥
पूतिमांसव्यपोहार्थमग्निरत्र न पूजितः ।
अथैनं घृतसंसृष्टैस्तिलैः पिष्टैः प्रलेपयेत् ॥
बन्धं ततोऽनुकुर्व्वीत परिषेकन्तु सर्पिषा ।
तृतीये दिवसे मुक्त्वा यथास्वं शोधयेद् भिषक्
ततः शुद्धं विदित्वा च रोपयेत् तु यथाक्रमम् ॥ ६ ॥

वृक्षादनी बन्दाकः । विल्वादिश्च गणो बृहत्पञ्चमूलम् । अम्लवर्गो रसविज्ञानीयोक्तः । मार्द्वीकेन द्राक्षामदेन । अम्लेन काञ्जिकेन । सौवीरकेण काञ्जिकभेदेन । अनेन विधानेन विण्मूत्राणि स्वमार्गमनुप्रपद्यन्ते अग्निश्च दीप्यते । ततो मन्दे पित्ते रक्ते वाते च प्रबले स्नेहपरिषेकं निर्दिशन्नाह – तत इत्यादि । सामान्यक्वाथकल्कविधिना मधुकतैलं साध्यम् । वातरुजापहैर्वातव्याधिनिर्दिष्टैः । अन्ये चोपद्रवा आध्मानगुदभ्रंशादयः ॥ ५ ॥

उष्ट्रग्रीवे पित्तभगन्दरे क्रियां निर्दिशन्नाह—अथेत्यादि । उष्ट्रग्रीवे पूतिमांसापकर्षणाय क्षारकर्म्म । गयी तु "एष्योष्ट्रग्रीवमात्रत्वे छित्त्वा क्षारं निपातयेत्" इति पठति । बन्धोऽप्यत्र चर्म्मणान्तश्छिद्रेण गोफणकः । सर्पिषा घृतेन परिषेकः । यथास्वं शोधनं पित्तापहरद्रव्यकृतम् । यथाक्रमं क्रमानतिक्रमेण रोपणावस्थायामित्यर्थः । रोपयेदित्यत्र पित्तव्रणरोपणैरेव । अस्य चैकनाडीत्वात् छेदविशेषानभिधानम ॥ ६ ॥

उत्कृत्यास्रावमार्गन्तु परिस्राविणि बुद्धिमान्।
क्षारेण वा स्रावगतिं दहेद्धुतवहेन वा।
सुखोष्णेनाणुतैलेन सेचयेद् गुदमण्डलम्॥
उपनाहाः प्रदेहाश्च मूत्रक्षारसमन्विताः।
वामनीयौषधैः कार्य्याः परिषेकाश्च मात्रया॥
मृदुभूतं विदित्वैनमल्पस्रावरुगन्वितम्।
गतिमन्विष्य शस्त्रेण छिन्द्यात् खर्ज्जूरपत्रकम्।
चन्द्रार्द्धं चन्द्रचक्रञ्च सूचीमुखमवाङ्मुखम्॥
छित्त्वाग्निना दहेत् सम्यगेवं क्षारेण वा पुनः।
ततः संशोधनैरेवं मृदुपूर्व्वैर्विशोधयेत्॥ ७॥
वहिरन्तर्मुखश्चापि शिशोर्यस्य भगन्दरः।
तस्याहितं विरेकाग्नि-शस्त्रक्षारावचारणम्॥
यद् यन्मृदु च तीक्ष्णञ्च तत्तत् तस्यावचारयेत्॥ ८॥

कफजस्य परिस्राविणश्चिकित्सां निर्दिशन्नाह—उत्कृत्येत्यादि। परितः सर्व्वतः स्रोतुं शीलं यस्य स परिस्रावी सर्व्वतःस्रावमुखः। अत एव स्रावमार्गानिति वहुवचनं केचित् पठन्ति। एतेन मध्यस्थनाड्याः परितः स्थितानि आस्रावमुखानि शस्त्रेणोत्कृत्य क्षारेण अग्निना वा दहेत्। तथा च स्रावमुखानां तथैवावस्थापनात्, मुखेषु पुनः प्रथमं दग्धेषु स्रावे च बलीयसि मन्दता मापन्ने नाड्यीं पुनर्मध्यमामन्विष्य छिन्द्यादित्येतदर्थमेवाग्रे छेदं वक्ष्यति। अणुतैलेन सेचनं शस्त्ररुजाशान्त्यर्थं, अणुतैलं वातव्याध्युत्पादितम्। उपनाहो वन्धनम्। प्रदेहः प्रलेपः। मूत्रं गोमूत्रम्। वामनीयं मदनफलादि। मात्रया अल्पश इत्यर्थः।

गतिमिति मध्यस्थां प्रधानामास्रावगतिं छिन्द्यात्। प्रागुत्कृत्येत्यनेनैव छेदनमभिहितम्, तस्य बह्वास्रावे मुख्यविषयत्वाद् विशेषमाह—खर्ज्जूरपत्रकमित्यादि। खर्ज्जूरपत्रमिव पत्रकं यस्य तत् खर्ज्जूरपत्रकम्, तच्च मध्यनाड़ीच्छेदस्य पार्श्वद्वयस्थानां मुखानां तिर्य्यक् छेदेन पङ्क्तिद्वयेन भवति। मध्यवक्रनाड्यनुलोमच्छेदस्यार्द्धचन्द्रतुल्यत्वादर्द्धचन्द्रः। मध्यस्थव्रणपदस्य एकमूल-पार्श्वद्वयगतनाड़ीद्वयेन एकमुखेन वहिर्मुखेन चन्द्रमण्डलतुल्यत्वाच्छेदस्य चन्द्रमध्यतनीयस्या-भग्नकुल्योर्विशालायां वा नाड्यनुरोधे मध्यैकच्छेदेन मूलाग्रयोस्त्रिशिष्येऽवच्छेदेन चक्राकार-साद्दश्याच्चक्रम्। अन्तर्मुखे स्थूलं मूलेऽणु तेन सूचीमुखं, तदेव अवाङ्मुखमधोमुखम्। ततः संशोधनैरित्यादि। ततः पूर्व्वं मृदु शोधयित्वा विज्ञातकोष्ठस्य तीक्ष्णं शोधनम्॥ ७॥

शिशोः क्रियाविशेषोपदेशात् क्रियान्तरनिषेधं दर्शयन्नाह—वहिरित्यादि। तस्यैव कर्त्तव्य-विशेषमुद्दिशन्नाह—यद् यदित्यादि। शस्त्रकर्म्मणि तु त्वक्सारादिचतुर्व्वर्गः। विरेके पुनश्चतुरङ्गुलादि। मृदु च तीक्ष्णञ्चेति परस्परविरोधवचनेन नातिशीतं नातिमृदु चावचारणीयम्; नात्युष्णशीता

आरग्वधनिशाकाला-चूर्णं मधुघृताप्लुतम् ।
अग्रवर्त्तिप्रणिहितं व्रणानां शोधनं हितम् ।
योगोऽयं नाशयत्याशु गतिं मेघमिवानिलः ॥ ९ ॥
आगन्तुजे भिषङ् नाड़ीं शस्त्रेणोत्कृत्य यत्नतः ।
जम्ब्वोष्ठेनाग्निवर्णेन तप्तया वा शलाकया ॥
दहेद् यथोक्तं मतिमांस्तं व्रणं सुसमाहितः ।
कृमिघ्नश्च विधिं कुर्य्याच्छल्यानयनमेव च ॥ १० ॥
प्रत्याख्यायैष चारभ्यो वर्ज्ज्यश्चापि त्रिदोषजः ।
एतत् कर्म्म समाख्यातं सर्व्वेषामनुपूर्व्वशः ॥ ११ ॥
एषान्तु शस्त्रपतनाद् वेदना यत्र जायते ।
तत्राणुतलेनोष्णेन परिषेकः प्रशस्यते ॥
वातघ्नौषधसम्पूर्णां स्थालीं छिद्रशराविकाम् ।
स्नेहाभ्यक्तगुदस्तप्तामध्यासीत सबाष्पिकाम् ॥
नाड्या वास्याहरेत् स्वेदं शयानस्य रुजापहम् ।
उष्णोदकेऽवगाह्यो वा तथा शाम्यति वेदना ॥
कदलीमृगलोपाक-प्रियकाजिनसंभृतान् ।
कारयेदुपनाहांश्च शाल्वणादीन् विचक्षणः ॥
कटुत्रिकं वचाहिङ्गु-लवणान्यथ दीप्यकम् ।
पाययेच्चाम्लकौलत्थ-सुरासौवीरकादिभिः ॥ १२ ॥

यथा काकमाची । आरग्वधः कृतमालकः । निशा हरिद्रा । काला अहिंस्रा । सूत्रमयी घनवर्त्तिता वर्त्तिरग्रवर्त्तिः । शल्यनिमित्तस्य भगन्दरस्य चिकित्सामुद्दिशन्नाह—आगन्तुज इत्यादि । जम्ब्वोष्ठं जम्बूफलसदृशसूक्ष्माग्रकृष्णपाषाणरचिता वर्त्तिः । शल्यानयनमिति शल्ये सति ॥ ८—१० ॥

शेषयोर्द्वयोरसाध्यत्वे एकस्य पाक्षिकीं सिद्धिमुपदिशन्नाह—प्रत्याख्यायेत्यादि । इदानीं सर्व्वभगन्दराणामेव शस्त्रपातनवेदनासु तच्छमनाय स्नेहपरिषेकादीनि निर्द्दिशन्नाह—एतत् कर्म्मेत्यादि । तत्राणुतैलं केवलं वातवेदनाविषयम् । वातघ्नौषधानि भद्रदार्व्वादीनि एरण्डादीनि च । वाष्पस्वेदस्तु कर्त्तव्यो वायौ रक्तपित्तसमन्विते । वातकफजे वेदनायामुपनाहस्वेदमुद्दिशन्नाह—कदलीत्यादि । कदलीमृगः पूर्व्वदेशे प्रायशः शवलो दृष्टः, स तु बृहत्तमविड़ालसमो व्याघ्राकारो विलेशयः । लोपाको लाङ्गलकः शृगालभेदः । प्रियकः ललितकः अजगरप्रायः श्लक्ष्णो दीर्घः । अजिनं चर्म्म । दीप्यकमजमोदा । अम्लं काञ्जिकम् । सुरा मद्यभेदः । एतदपि गुदकोष्ठगतवेदनोपशमार्थम् ॥ ११ । १२ ॥

ज्योतिष्मतीलाङ्गलकी-श्यामादन्तीत्रिवृत्तिलाः।
कुष्ठं शताह्वा गोलोमी तिल्वको गिरिकर्णिका।
कासीसं काञ्चनक्षीर्य्यौ वर्गः शोधन इष्यते॥ १३॥
त्रिवृत् तिला नागदन्ती मञ्जिष्ठा पयसा सह।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम्॥ १४॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः।
त्रिवृत्तेजोवतीदन्ती-कल्को नाड़ीव्रणापहः॥ १५॥
कुष्ठं त्रिवृत् तिला दन्ती मागध्यः सैन्धवं मधु।
रजनी त्रिफला तुत्थं हितं स्याद् व्रणशोधनम्॥ १६॥
मागध्यो मधुकं लोध्रं कुष्ठमेला हरेणवः।
समङ्गा धातकी चैव सारिवा रजनीद्वयम्॥
प्रियङ्गवः सर्ज्जरसः पद्मकं पद्मकेशरम्।
सुधा वचा लाङ्गलिका मधूच्छिष्टं ससैन्धवम्॥
एतत् संभृत्य सम्भारं तैलं धीरो विपाचयेत्।
एतद् वै गण्डमालासु मण्डलेष्वथ मेहिषु।
रोपणार्थं हितं तैलं भगन्दरविनाशनम्॥ १७॥
न्यग्रोधादिगणश्चैव हितः शोधनरोपणे।
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम्॥ १८॥

अतःपरं भगन्दरक्षतानां शोधनीयोत्सादनीयरोपणीयान् विशेषकान् निर्द्दिशन्नाह—ज्योतिष्मती-त्यादि। ज्योतिष्मती कुङ्कुमर्द्दनिका। लाङ्गली कलिहारिका। श्यामा त्रिवृद्विशेषः। गोलोमी दूर्व्वा। तिल्वकः पट्टिकारोध्रः। गिरिकर्णिका श्वेतस्यन्दा। काञ्चनक्षीर्य्यौ द्वे एकं कङ्कुष्ठम्, अन्या पीतदुग्धा यवतिक्ता। वर्गस्य यथालाभेन प्रयोगः। एष वर्गो भगन्दरशोधनः कषायादिषु॥ १३॥

त्रिवृदित्यादि। नागदन्ती दन्तिनी। उत्सादनं निम्नव्रणवस्तुनः पूरणं लेपनयोगेन। पयसा सहेत्यत्र सर्पिषा सहेति केचित् पठन्ति। रसाञ्जनादिकुष्ठादियोगौ शोधनरोपणौ। रजनीत्रिफले-त्यादि स्पष्टम्॥ १४ - १६॥

मागधी पिप्पली। समङ्गा गणिकारिका, वराहक्रान्तेत्यपरे। कल्पनामाह—स्नेहचतुर्थांशो भेषजकल्कः। स्नेहाच्चतुर्गुणो द्रवः, द्रवोऽत्र पानीयम्। "अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं स्मृतम्" इत्युक्तत्वात्। शोधनरोपणे कषायादिभिरिति शेषः॥ १७। १८॥

त्रिवृद्दन्तीहरिद्रार्क-मूलं लोहाश्वमारकौ ।
विडङ्गसारं त्रिफला स्नुह्यर्कपयसी मधु ॥
मधूच्छिष्टसमायुक्तैस्तैलमेतद्विपाचयेत् ।
भगन्दरविनाशार्थमेतद् योज्यं विशेषतः ॥ १९ ॥
चित्रकार्कौ त्रिवृत्पाठे मलपूं हयमारकम् ।
सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्च्चिकाम् ॥
ज्योतिष्मतीञ्च संभृत्य तैलं धीरो विपाचयेत् ।
एतद्धि स्यन्दनं तैलं भृशं दद्याद् भगन्दरे ॥
शोधनं रोपणञ्चैव सवर्णकरणं तथा ।
द्विव्रणीयमवेक्षेत व्रणावस्थासु बुद्धिमान् ॥ २० ॥
छिद्रादूर्द्धं हरेदौष्ठमर्शोयन्त्रस्य यन्त्रवित् ।
ततो भगन्दरे दद्यादेतदर्द्धेन्दुसन्निभम् ॥ २१ ॥
व्यायामं मैथुनं कोपं पृष्ठयानं गुरूणि च ।
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ २२ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने भगन्दरचिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

त्रिवृदित्यादि । लोहमगुरु । अश्वमारकः करवीरः । स्नुही सेहुण्डः । इदमपि तैलं सामान्य-कल्कपरिभाषया कर्त्तव्यम् ॥ १९ ॥

चित्रकेत्यादि । मलपूः काकोडुम्बरिका । हयमारकः करवीरः । सुधा स्नुही । सुवर्च्चिका स्वर्जिक्षारः । 'एतद्धि स्यन्दनम्' इत्यत्र विस्यन्दनमिति पाठे विशेषेण स्यन्दयति दोषांश्च्याव यतीति यथार्थं नाम विस्यन्दनम् ॥ २० ॥

भगन्दरयन्त्रमर्शोयन्त्रादवयवविशेषापनयने विशिष्टं निर्दिशन्नाह—छिद्रादूर्द्धमित्यादि । रूढभगन्दरस्यापि पुनरनुबन्धभयात् परिहार्य्यमुद्दिशन्नाह—व्यायाममित्यादि ॥ २१ । २२ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे भगन्दरचिकित्सितव्याख्यानामाष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

विरुद्धाध्यशनासात्म्यवेगविघातैः स्नेहादीनाञ्चायथारम्भैः पापक्रियया पुराकृतकर्म्मयोगाच्च त्वग्दोषा भवन्ति ॥ २ ॥

तत्र त्वग्दोषी मांसवसादुग्धदधितैलकुलत्थमाषनिष्पावेक्षुपिष्टविकाराम्ल-विरुद्धाध्यशनाजीर्णविदाह्यभिष्यन्दीनि दिवास्वप्नं व्यवायञ्च परिहरेत् ॥ ३ ॥

ततः शालिषष्टिकयवगोधूमकोरदूषश्यामाकोद्दालकादीननवान् भुञ्जीत मुद्गाढ़क्योरन्यतरस्य यूषेण सूपेन वा निम्बपत्रारुष्करव्यामिश्रेण, मण्डूकपर्णी-वल्गुजाटरूषकरूपिकापुष्पैः सर्पिःसिद्धैः सर्षपतैलसिद्धैर्वा, तिक्तवर्गेण वाभि-हितेन। मांससात्म्याय वा जाङ्गलमांसममेदस्कं वितरेत्। तैलं वज्रकमभ्यङ्गाथ। आरग्वधादिकषायमुत्सादनार्थे। पानपरिषेकावगाहादिषु च खदिरकषायम्, इत्येष आहाराचारविभागः ॥ ४ ॥

विरुद्धाध्यशनादीनि कुष्ठकराणि विशेषेण कुष्ठस्य जनकानीति प्रागुक्तान्यपि पुनरुक्तानि। निष्पावो राजशिम्बी। दोषधातुमलस्रोतसां क्लेदजननमभिष्यन्दि ॥ १ । २ ॥

तत्रेत्यादि। उद्दालकोऽरण्यकोद्रवः। उपकरणभूतं सूप्यद्रव्यद्वयं मुद्गाढ़कीलक्षणमभिधायापर-मप्युपकरणभूतं शाकद्रव्यमाह—निम्बपत्रेत्यादि। शाकरूपाभ्यां निम्बपत्रारुष्कराभ्यां व्यामिश्रेण सूपेन सह शाल्यादिकमन्नं भुञ्जीत, तथा मण्डूकपर्ण्यादिभिरपि शाकैः। मण्डूकपर्णी ब्राह्मीभेदः। रूपिकापुष्पैरर्कपुष्पैः। सार्षपतैलं केचिन्नेच्छन्ति रक्तपित्तप्रदूषणत्वात्, वातकफकुष्ठेषु वदन्त्यन्ये। तिक्तवर्गेण प्रपुन्नाड़ावल्गुजपटोलवार्त्ताकादिना। यद्यपि योषिन्मांससुरावर्ज्जी इत्यत्र मांसप्रतिषेधः, तथापि मांससात्म्याय जाङ्गलमांसममेदस्कं मेदोरहितं स्वभावतो वितरेत् दद्यात्। तत्र वज्रकं सप्तपर्णकरञ्जेत्यादिकं वक्ष्यते। आरग्वधादिकषायमुत्सादनार्थे इत्यत्र कषायोऽत्र कल्कश्चूर्णं वा योग्यतया, कषायशब्दो हि चरके स्वरसादिषु पञ्चसु परिभाषितः। उत्सादनार्थे उद्घर्षणार्थे, अथवा उद्वर्त्तनार्थे; अन्ये तु निम्नव्रणस्य उन्नतिकरणार्थे। इत्येष आहाराचारविभाग इति आहारस्य क्रियमाणस्य द्रव्यरसविभाजनम्। तत्र वज्रतैलस्य पानीयत्वात्, आरग्वधादेरप्यत्र संस्कारादौ प्रायोगिकत्वात्, आहारवर्गस्यैवोपदेशः ॥ ३ । ४ ॥

तत्र पूर्व्वरूपेषूभयतः संशोधनमासेवेत । तत्र त्वक्संप्राप्ते शोधनालेपनानि । शोणितप्राप्ते संशोधनालेपनकषायपानशोणितावसेचनानि । मांसप्राप्ते शोधनालेपनकषायपान-शोणितावसेचनारिष्टमन्थप्राशाः । चतुर्थकर्म्मगुणप्राप्तं याप्यमात्मवतः संविधानवतश्च ॥ ५ ॥

तत्र संशोधनाच्छोणितावसेचनाचोर्द्ध्वं भल्लातशिलाजतुधातुमाक्षिकगुग्गुल्व-गुरुतुवरकखदिरासनायस्कृतिविधानमासेवेत । पञ्चमं नैव चोपक्रमेत ॥ ६ ॥

तत्र प्रथममेव कुष्ठिनं स्नेहपानविधानेनोपपादयेत् । मेषशृङ्गीश्वदंष्ट्राशार्ङ्गेष्टा-गुडूचीद्विपञ्चमूलीसिद्धं तैलं घृतं वा वातकुष्ठिनां पानाभ्यङ्गयोर्विदध्यात् । धवाश्वकर्णककुभपलाशपिचुमर्दपर्पटकमधुकरोध्रसमङ्गासिद्धं सर्पिः पित्तकुष्ठिनाम् ।

तत्रेत्यादि । उभयतः संशोधनं वमनं विरेचनञ्च । त्वक्संप्राप्ते रसप्राप्ते, रसस्य तात्स्थ्यात् । अरिष्टमन्थप्राशा इत्यादि । अत्र अरिष्टग्रहणमुपलक्षणं, तेनासवसुरयोरप्यवरोधः । मेदःप्राप्ते चिकित्सितमुपदिशन्नाह—चतुर्थकर्म्मेत्यादि । चतुर्थकर्म्मगुणप्राप्तं याप्यमिति त्वग्धातोश्चतुर्थं मेदः, तस्य कर्म्माणि शोधनादीनि, तेषान्तु गुणाः फलम् । एतेनैतदुक्तम्—मेदोगतं कुष्ठं संशोधनादिगुणविशिष्टं याप्यं भवतीति । कथम्भूतस्य पुरुषस्य ? आत्मवत आत्मगुणोपपन्नस्य ; आत्मगुणाश्च सर्व्वमते पुंसां निरन्तररूपाः शौचाचाराः, अमङ्गलकार्य्येषु अस्पृहा चेति ; अथवा आत्मवतोऽपथ्यपरिहारपरायणस्य सम्यगाहाराचारस्येत्यर्थः । संविधानवतः परिच्छदवतः कर्म्मानुष्ठानपरस्य याप्यं नान्यथा । सम्यग्विधानवत इति केचित् पठन्ति, प्रभूतोपकरणयुक्तस्येत्यर्थः । अथवा चतुर्थे मेदसि स्थितं कुष्ठं चतुर्थम्, तस्य कुष्ठस्य कर्म्माणि गुणाश्च दौर्गन्ध्योपदेहपूयादयस्तैः प्राप्तं युक्तं याप्यम् । अन्ये तु चतुर्थोऽप्याप्तमिति पठन्ति, तत्रापि स एवार्थः । अत्र यापने संशोधनाच्छोणितावसेकाच्चोर्द्ध्वं भल्लातकादिविधानम् । तत्र भल्लातकविधानमर्शोनिर्दिष्टम्, शिलाजतुमाक्षिकधातुतुवरकविधानं प्रमेहपिडकाचिकित्सितनिर्द्दिष्टं, खदिरासनायस्कृतिविधानं महाकुष्ठविधावुद्दिष्टम् । पञ्चमं नैवेति असाध्यत्वादस्थ्यादिगतकुष्ठानाम् ।

तत्रेत्यादि । स्नेहपानविधानेनेति वमनादिशोधनाङ्गस्यैव स्नेहस्य पानविधानेन न पुनः स्वतन्त्रस्य, कुष्ठस्य रूक्षणीयत्वात् । स्निग्धस्य पुनः क्रमानुक्तावपि वमनविरेचनशोणितमोक्षणानि क्रमेणैव पूर्व्वरूपादौ, अनेनैव क्रमेण सर्व्वत्रोक्तत्वात् । उपपादयेत् उपक्रमेतेत्यर्थः । तानेव शोधनाङ्गस्नेहानुत्पादयन्नाह—मेषशृङ्गीत्यादि । मेषशृङ्गी कर्कटशृङ्गी, गयी तु पुत्रञ्जीवकमेदमाह । श्वदंष्ट्रा गोक्षुरकः । शार्ङ्गेष्टा काकतिक्ता, भुभुरटाक इति लोके ; गृध्रकरञ्ज इत्यपरे । शेषं प्रसिद्धम् । एतैः कषायकल्परूपैः सिद्धं सामान्यपरिभाषया तैलं घृतं वा वातकुष्ठे एव, कफानुबन्धे तैलं, पित्तानुबन्धे घृतम् ; अन्ये तु पानाय घृतं, अभ्यङ्गाय तैलमिति । अश्वकर्णेत्यादि ।

प्रियालशालारग्वधनिम्बसप्तपर्णचित्रकमरिचवचाकुष्ठसिद्धं श्लेष्मकुष्ठिनाम्। भल्लातकाभयाविडङ्गसिद्धं वा, सर्व्वेषां तुवरकतैलं भल्लातकतैलं वेति॥ ७।८॥

सप्तपर्णारग्वधातिविषा-पाठा-कटुरोहिण्यमृता त्रिफला-पटोल-पिचुमर्द्द-पर्पटकदुरालभात्रायमाणामुस्ताचन्दन-पद्मक-हरिद्रोपकुल्या-विशाला-मूर्व्वा--शतावरी-सारिवेन्द्रयवाटरूषक-षड्ग्रन्था-मधुक-भूनिम्ब-गृष्टिका इति समभागाः कल्कः स्यात्, कल्काच्चतुर्गुणं सर्पिः प्रक्षिप्य तद्द्विगुणो धात्रीफलरसस्तच्चतुर्गुणा आपः, तदैकध्यं समालोड्य विपचेत्। एतन्महातिक्तकं नाम सर्पिः कुष्ठ-विषमज्वर-रक्तपित्तहृद्रोगोन्मादापस्मार गुल्म-पिड़कासृग्दरगलगण्ड--गण्डमाला-श्लीपद-पाण्डुरोगविसर्पषाण्ढ्यकण्डूपामादींश्च शमयेदिति॥ ९॥

त्रिफलापटोलपिचुमर्द्दाटरूषककटुरोहिणीदुरालभात्रायमाणाः पर्पटकश्चैतेषां द्विपलिकान् भागान् जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कपेष्याणीमानि भेषजान्यर्द्धपलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकिराततिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेत्। एतत् तिक्तकं नाम सर्पिः कुष्ठ-विषमज्वरगुल्मार्शोग्रहणीदोषशोफपाण्डुरोगविसर्पषाण्ढ्यशमनञ्चेति॥ १०॥

अतोऽन्यतमेन घृतेन स्निग्धस्विन्नस्यैकां द्वे तिस्रश्चतस्रः पञ्च वा शिरा विध्येन्मण्डलानि चोत्सन्नान्यवलिखेदभीक्ष्णं प्रच्छयेद् वा। समुद्रफेनशाक-गोजीकाकोडुम्बरिकापत्रैर्वावघृष्य।लेपयेल्लाक्षासर्ज्जरसरसाञ्जनप्रपुन्नाड़ावल्गुज-तेजोवत्यश्वमारकार्ककुटजारेवतमूलकल्कैर्मूत्रपिष्टैः पित्तपिष्टैर्वा, स्वर्ज्जिकातुत्थ-

अश्वकर्णः पूर्व्वदेशे गन्धमुण्डोऽश्वत्थसदृशः। ककुभः सुगन्धिमूलो विटपी। पलाशः किंशुकः। पिचुमर्द्दः निम्बः। समङ्गा स्पर्शरोदनिका, लज्जालुरिति लोके। प्रियालेत्यादि। प्रियालश्चारः। सर्पिरिति पूर्व्वयोगादनुवर्त्तते, एवमग्रेऽपि। भल्लातकेत्यादि। तुवरकः पश्चिमसमुद्रभूमिषु प्रसिद्ध एव॥ ५—८॥

हरिद्रोपकुल्याविशालेत्यत्र तन्त्रान्तरदर्शनात् हरिद्राद्वयं, पिप्पली गजपिप्पली चेत्युपकुल्याद्वयञ्च बोद्धव्यम्। विशाला इन्द्रवारुणी। मूर्व्वा चोरस्नायुः। षड्ग्रन्था वचा। परिभाषाव्यापारो नास्त्येवात्र महातिक्तके, सामान्यकल्ककषायकल्पपरिमाणद्रव्यपरिमाणयोश्चोक्तत्वात्। षाण्ढ्यं षण्ढ्यभावः॥ ९।१०॥

शाको महाखरपत्रः, शाखोट इत्यन्ये। गोजी गोजिह्वा, काकोडुम्बरिका काष्ठोडुम्बरिका। तमेव प्रलेपं निर्द्दिशन्नाह—लाक्षासर्ज्जरसेत्यादि। आरेवतः किरमालकः। पित्तपिष्टैरिति

कासीस-विडङ्गागारधूम-चित्रक-कटुक-सुधा-हरिद्रा-सैन्धवकल्कैर्वा, एतान्येवावाप्य क्षारकल्पेन निःस्रुते पालाशे क्षारे ततो विपाच्य फाणितमिव सञ्जातमवतार्य्य लेपयेत्। ज्योतिष्कफललाक्षामरिचपिप्पलीसुमनःपत्रैर्वा हरितालमनःशिलार्कक्षीरतिलशिग्रुमरिचकल्कैर्वा स्वर्ज्जिकाकुष्ठतुत्थकुटजचित्रकविडङ्गमरिचमनःशिलाकल्कैर्वा हरीतकीकरञ्जिकाविडङ्गसिद्धार्थकलवणरोचनावल्गुजहरिद्राकल्कैर्वा।

सर्व्वे कुष्ठापहाः सिद्धा लेपाः सप्त प्रकीर्त्तिताः।
वैशेषिकानतस्तूर्द्ध्वं दद्रुश्वित्रेषु मे शृणु ॥ ११ ॥

लाक्षा कुष्ठं सर्षपाः श्रीनिकेतं रात्रिर्व्योषं चक्रमर्द्दस्य वीजम्।
कृत्वैकस्थं तक्रपिष्टः प्रलेपो दद्रुघ्नोक्तो मूलकाद् वीजयुक्तः ॥
सिन्धूद्भूतं चक्रमर्द्दस्य वीजमिक्षूद्भूतो केशरं तार्क्ष्यशैलम्।
पिष्टो लेपोऽयं कपित्थाद्रसेन दद्रूस्तूर्णं नाशयत्येष योगः ॥
हेमक्षीरी व्याधिघातः शिरीषो निम्बः सर्ज्जो वत्सकः साजकर्णः।
शीघ्रं तीव्रा नाशयन्तीह दद्रूः स्नानालेपोद्धर्षणेषु प्रयुक्ताः ॥ १२ ॥
भद्रासंज्ञोदुम्बरीमूलतुल्यं दत्त्वा मूलं क्षोदयित्वा मलप्वाः।
सिद्धं तोयं पीतमुष्णे गुखोष्णं स्फोटान् श्वित्रे पुण्डरीके च कुर्य्यात् ॥

गोपित्तपिष्टैः। एतान्येवेत्यादि निस्रुते गालिते। क्षारकल्पातिदेशेन तिलनालादिभिरादीपनं षड्गुणोदकस्रावणञ्च। स्वर्ज्जिका-(सुवर्च्चिका)-तुत्थकासीसादिचूर्णं परिवाप्य क्षाराद् द्वात्रिंशत्तमभागप्रमाणेन। ज्योतिष्कः काकमर्द्दनिका, तस्याः फलम्। सुमना जाती। शिग्रुर्विटपशाकः, शोभाञ्जनमन्ये। करञ्जिका वृक्षकरञ्जः। सिद्धा इति विशेषणं निश्चितफलसिद्धिबोधनार्थम्। वैशेषिकानित्यादि। श्रीनिकेतं नवनीतधूपः सरलनिर्य्यास इति। रात्रिर्हरिद्रा। सिन्धूद्भूतमित्यादि। सिन्धूद्भूतं सैन्धवम्। इक्षूद्भूतो गुडः। केशरं वकुलम्। तार्क्ष्यशैलं रसाञ्जनम्। हेमक्षीरी कङ्कुष्ठम्। व्याधिघातः किरमालकः। सर्ज्जो लघुसर्ज्जः। अजकर्णो महासर्ज्जः, गन्धमुण्ड इत्येके। स्नानेत्यादि। पानालेपोद्घर्षणेषु इत्यन्ये पठन्ति। लेपनोद्घर्षणयोः पेषणं तक्रमम्लं, कपित्थरसमन्ये अनुवर्त्तयन्ति ॥ १०—१२ ॥

दद्रुषु योगत्रयमभिधाय श्वित्रे विनिर्द्दिशन्नाह—भद्रेत्यादि। उदुम्बरी भद्रनामा काष्ठोदुम्बरिका महती, मलपूः सैवाल्पविटपा, तयोर्मूलं पलं षोडशभिः सलिलपलैः पक्वं चतुर्भागावशिष्टमुष्णकाले कोष्णं पीतमातपसंस्थस्य कटुतैलाभ्यक्तस्य च श्वित्रे स्फोटजननम्। जीर्णे गव्यमथितेन

द्वैपं दग्धं चर्म्म मातङ्गजं वा भिन्ने स्फोटे तैलयुक्तं प्रलेपः।
पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेको निहन्ति ॥ १३ ॥
कृष्णस्य सर्पस्य मसी सुदग्धा वैभीतकं तैलमथ द्वितीयम्।
एतत् समस्तं मृदितं प्रलेपाच्छ्वित्राणि सर्व्वाण्यपहन्ति शीघ्रम् ॥
अध्यर्द्धतोये सुमतिस्र तस्य क्षारस्य कल्पेन तु सप्तकृत्वः।
तैलं भृतं तेन चतुर्गुणेन श्वित्रापहं म्रक्षणमेतदग्र्यम् ॥ १४ ॥
घृतेन युक्तं प्रपुनाड़वीजं कुष्ठञ्च यष्टीमधुकञ्च पिष्ट्वा।
श्वेताय दद्याद् गृहकुक्कुटाय चतुर्थभक्ताय बुभुक्षिताय ॥
तस्योपसंगृह्य च तत् पुरीषमुत्पाचितं सर्व्वत एव लिम्पेत्।
अभ्यन्तरं मासमिमं प्रयोगं प्रयोजयेच्छ्वित्रमथो निहन्ति ॥ १५ ॥
क्षारे सुदग्धे गजलेण्डजे च गजस्य मूत्रेण बहुस्र ते च।
द्रोणप्रमाणे दशभागयुक्तं दत्त्वा पचेद् वीजमवल्गुजस्य ॥
एतद् यदा चिक्कणतामुपैति तदा समस्ता गुटिका विदध्यात्।
श्वित्रं प्रलिम्पेदथ सम्प्रघृष्य तया व्रजेदाशु सवर्णभावम् ॥ १६ ॥

दाड़िमयूषेण वा भोक्तव्यम्। सञ्जातभिन्नस्फोटस्य श्वित्रिण उत्तरकर्म्म निर्द्दिशन्नाह—द्वैपमित्यादि। द्वीपी चित्रकायो व्याघ्रः, तस्येदं चर्म्म द्वैपम्। मातङ्गो हस्ती, तस्माज्जातं मातङ्गजं चर्म्म। तैलमत्र विषाणिकासिद्धम्। तदुक्तम्—"आवर्त्तकीमूलसिद्धेन तैलेनाभ्यज्यावचूर्णयेत् गजद्वीपिचर्म्ममसी-चूर्णेन त्रिफलालोहचूर्णेन वा" इति। पूतिः कीटः शस्यादो वर्षाकाले कर्व्वूरकः नलिनीति प्रसिद्धः, पूर्व्वदेशे पुण्डालिकेति। स चारग्वधक्षारेण सहाक्तो मिश्रितः। राजवृक्ष आरग्वधः। एकः श्रेष्ठः। क्षारोदकेनात्र द्रवकार्य्यमित्यन्ये वदन्ति ॥ १३ ॥

कृष्णस्येत्यादि। कृष्णसर्पो यदा दह्यमानोऽतिकृष्णत्वं गच्छति, तदा तच्चूर्णं मसीत्युच्यते, स एवातिदह्यमानो यदा शुक्लत्वं याति तदा क्षार इत्युच्यते। अध्यर्द्धेत्यादि। कृष्णस्येत्यनु-वर्त्तते। क्षारादध्यर्द्धं तोयमधिकार्द्धमित्यर्थः। क्षारस्य कल्पेन क्षारपाकविधिना। सप्तकृत्वः सप्त वारान्। म्रक्षणमनुलेपनम्। अग्र्यं प्रधानमित्यर्थः ॥ १४ ॥

घृतेनेत्यादि। चतुर्थभक्तायेति एकाहमुपोषिताय द्वितीयेऽहनि सायं धवलाय ग्राम्यकुक्कुटाय अत्यन्तबुभुक्षिताय प्रपुन्नाड़वीजादिकं घृतयुक्तं भक्षयितुं दद्यात्। तस्य पुरीषमुपसंगृह्य गृहीत्वा तेन पुरीषेण मासमेकं श्वित्रमभ्यन्तरं धात्वन्तर्गतं मलप्वादिभिः प्रयोगैः स्फोटकादिभिरुत्पाचितं पाकं नीतं लिम्पेत्; स प्रलेपः तत् श्वित्रं निहन्तीत्यर्थः ॥ १५ ॥

क्षार इत्यादि। गजलेण्ड गजगण्डीरकः, नदीपिप्पलिकेत्यन्ये। गजलेण्डकक्षार इत्यन्ये पठन्ति, तच्च न पठनीयं, तन्त्रान्तरविरोधात्। दशभागयुक्तं दशभागयोजितमवल्गुजचूर्णं प्रक्षिपेदिति ॥ १६ ॥

कषायकल्पेन सुभावितान्तु दलत्वचं * चूतहरीतकीनाम् ।
तां ताम्रदीपे प्रणिधाय धीमान् वर्त्तिं वटक्षीरसुभावितान्तु ॥
आदीप्य तज्जातमसीं गृहीत्वा ताञ्चापि पथ्याम्भसि भावयित्वा ।
संम्रक्षितं तद् बहुशः किलासं तलेन सिक्तं कटुना प्रयाति ॥ १७ ॥
आवल्गुजं वीजमग्र्यं नदीजं काकाह्वानोडुम्बरी या च लाक्षा ।
लौहं चूर्णं मागधी तार्क्ष्यशैलं तुल्याः कार्य्याः कृष्णवर्णास्तिलाश्च ॥
वर्त्तिं कृत्वा तां गवां पित्तपिष्टां लेपः कार्य्यः श्वित्रिणां श्वित्रहारी ।
लेपात् पित्तं शखिनं श्वित्रहारि ह्रीवेरं वा दग्धमेतेन युक्तम् ॥ १८ ॥

तुत्थालकटुकाव्योष-सिंहार्कहयमारकाः ।
कुष्ठावल्गुजभल्लात-क्षीरिणीसर्षपाः स्नुही ॥
तिल्वकारिष्टपीलूनां पत्राण्यारग्वधस्य वा ।
बीजं विडङ्गाश्वहन्त्रोर्हरिद्रे बृहतीद्वयम् ।
आभ्यां श्वित्राणि योगाभ्यां लेपान्नश्यन्त्यशेषतः ॥ १९ ॥

कषायेत्यादि । चूतहरीतकीनां त्वचं छित्त्वा कषायकल्पेन क्वाथकल्पनया यज्जलीयक्वाथस्तेन सुभावितां पिचुवर्त्तिं कटुतैलेन सित्त्वा, तां ताम्रदीपे प्रणिधाय स्थापयित्वा, आदीप्य प्रज्वाल्य, तज्जातमसीं गृहीत्वा ततो वटक्षीरसुभावितां कृत्वा, ततस्तामेव पथ्याक्वाथेन भावयित्वा, कटुना तैलेन सित्त्वा, किलासं बहुशः संम्रक्षितं सत् अर्थात् लेपितमपयाति । "भाव्यद्रव्यसमं काथ्यं क्वाथश्चाष्टांशशेषितः" इति । अयं योगोऽन्यत्राप्युक्तः—"पथ्याम्रत्वक्कषायेण पिचुवर्त्तिः सुभाविता । कटुतैलयुते ताम्र-पात्रे प्रज्वालयेत्ततः ॥ मसीं तत्र वटक्षीरपथ्याक्वाथेन भावयेत् । म्रक्षितं कटु-तैलाक्तं तेन श्वित्रं प्रणश्यति" इति । गयदासस्तु वर्त्तिं पटवर्त्तिं पूर्व्वं वटक्षीरेण भावयेत् ततः कटुतैलेन इति व्याख्यानयति । "तैलेन सिक्तं कटुना समस्तमालेपयेदेवमुपैति शान्तिम्" इति केचित् पठन्ति ॥ १७ ॥

आवल्गुजमित्यादि । अग्र्यं श्रेष्ठं, नदीजं तापीनदीसमुत्थो माक्षिकधातुः । काकाह्वा-नोडुम्बरी काकसंज्ञोडुम्बरिका । तार्क्ष्यशैलं रसाञ्जनम्, तैस्तुल्याः कृष्णवर्णास्तिलाः कार्य्याः । तैर्वर्त्तिं कृत्वा तया लेपः कार्य्यः । अन्ये ताप्युद्भूतोऽवल्गुजं बीजमन्यदिति पठन्ति, तत्रापि ताप्युद्भूतो माक्षिकधातुः । शिखिन इदं शैखिनं पित्तं मयूरपित्तमित्यर्थः । तुत्थेत्यादि । आलं हरितालम् । सिंहो रक्तशोभाञ्जनः । क्षीरिणी अर्कपुष्पी, तुत्थालकटुकेत्यादिश्लोकद्वयेन योगद्वयं

---

* जलं त्वचमिति पाठान्तरम् ।

वायसीफल्गुतिक्तानां शतं दत्त्वा पृथक् पृथक्।
द्वे लोहरजसः प्रस्थे त्रिफलात्र्याढ़कं तथा ॥
त्रिद्रोणेऽपां पचेद् यावद् भागौ द्वावसनादपि।
शिष्टश्च विपचेद् भूय एतैः श्लक्ष्णप्रपेषितैः ॥
कल्कैरिन्द्रयवव्योष-त्वग्दारुचतुरङ्गुलैः।
पारावतपदीदन्ती वा कुचीकेशराह्वयैः।
कण्टकार्य्या च तत् पक्वं घृतं कुष्ठिषु योजयेत् ॥
दोषधात्वाश्रितं पानादभ्यङ्गात् त्वग्गतं तथा।
अप्यसाध्यं नृणां कुष्ठं नाम्ना नीलं नियच्छति ॥ २० ॥
त्रिफलात्वक् त्रिकटुकं सुरसा मदयन्तिका।
वायस्यारग्वधानाश्च तुलां कुर्य्यात् पृथक् पृथक् ॥
काकमाच्यर्कवरुण-दन्तीकुटजचित्रकात्।
दार्व्वीनिदिग्धिकाभ्यान्तु पृथग्दशपलं तथा ॥
त्रिद्रोणेऽपां पचेद् यावत् षट्प्रस्थं परिशेषितम्।
शकृद्रसदधिक्षीर-मूत्राणां पृथगाढ़कम् ॥
तद्वद् घृतस्य तत् साध्यं भूनिम्बव्योषचित्रकैः।
करञ्जफलनीलिका-श्यामावल्गुजपीलुभिः।
नीलिनीनिम्बकुसुमैः सिद्धं कुष्ठापहं घृतम् ॥
म्रक्षणादङ्गसावर्ण्यं श्वित्रिणां जनयेन्नृणाम्।
भगन्दरं कृमीनर्शो महानीलं नियच्छति ॥ २१ ॥

बोद्धव्यम्। वायसी काकतिक्ता, चिरपोटिकेति लोके, काकमाचीत्यपरे। फल्गुः काकोदुम्बरिका। 'अवल्गुः' इत्यपरे पठन्ति। अवल्गुः वाकुची। तिक्ता कटुका। पारावतपदी ईषल्लोहितो हंसपदीभेदः। केशराह्वयैः वकुलैः। त्रिद्रोणेऽपामित्यत्र अपां द्विगुणमात्रा, द्रवत्वात्। तेन जलषड्द्रोणाः प्रक्षिप्यन्ते। असनात् वीजकसारात् द्वौ भागौ अंशौ, चतुर्भागं सर्पिः, सर्पिषश्चतुर्थांशमिन्द्रयवादिकल्कं प्रक्षिप्य विपचेत् ॥ १८—२० ॥

त्रिफलेत्यादि। मदयन्तिका नखादिरागजननी, 'मेहन्दी' इति प्रसिद्धा। वायसी काकमाची। शकृदादीनि गवां ग्राह्याणि। नीलिका नीलाञ्जनिका शारदफला, नीलिनी नीलिका। म्रक्षणाद् अभ्यङ्गात्। अनार्षे नीलमहानीलघृते एते (महा)वैद्याभ्यां जेज्जटगयदासाभ्यां व्याख्याते, अतस्तन्मतानुसारिणा मयापि पठिते व्याख्याते च। जलापेक्षया क्वाथ्यद्रव्यस्यातिबाहुल्यमत्रयोगे, तस्माद् वृद्धवाग्भटीयं महानीलघृतं लिख्यते; यथा—"मदयन्त्याः सवायस्याः सुरभ्याः प्रग्रहस्य च।

मूत्रं गव्यं चित्रकव्योषयुक्तं सर्पिःकुम्भे क्षौद्रयुक्तं स्थितं हि ।
पक्षादूर्द्ध्वं श्वित्रिभिः पेयमेतत् कुर्य्याच्चास्मिन् कुष्ठदिष्टं विधानम् ॥ २२ ॥
पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवाः सौमनाश्च ।
लेपः श्वित्रं हन्ति दद्रुव्रणांश्च दुष्टान्यर्शांस्येष नाडीव्रणांश्च ॥ २३ ॥
अस्मादूर्द्ध्वं निःस्रुते दुष्टरक्ते जातप्राणं सर्पिषा स्नेहयित्वा ।
तीक्ष्णैर्योगैश्छर्दयित्वा प्रगाढ़ं पश्चाद् दोषं निर्हरेच्चाप्रमत्तः ॥ २४ ॥
दुर्व्वान्तो वा दुर्व्विरिक्तोऽपि वा स्यात् कुष्ठी दोषैरुद्धतैर्व्याप्तदेहः ।
निःसन्दिग्धं यात्यसाध्यत्वमाशु तस्मात् कृत्स्नान् निर्हरेत् तस्य दोषान् ॥२५॥
पक्षात् पक्षाच्छर्दनान्यभ्युपेयान्मासान्मासात् स्रंसनञ्चापि देयम् ।
स्राव्यं रक्तं वत्सरे हि द्विरल्पं नस्यं दद्याच्च त्रिरात्रात् त्रिरात्रात् ॥ २६ ॥
पथ्याव्योषं सेक्षुजातं सतैलं लीढ्वा शीघ्रं मुच्यते कुष्ठरोगात् ।
धात्रीपथ्याक्षोपकुल्याविडङ्गान् क्षौद्राज्याभ्यामेकतो वावलिह्यात् ॥
पीत्वा मासं वा पलांशां हरिद्रां मूत्रेणान्तं पापरोगस्य गच्छेत् ।
एवं पेयश्वित्रकः श्लक्ष्णपिष्टः पिप्पल्यो वा पूर्व्ववन्मूत्रयुक्ताः ॥ २७ ॥
तद्वत् तार्क्ष्यं मासमात्रञ्च पेयं तेनाजस्रं देहमालेपयेच्च ॥ २८ ॥

शतं पलानि(नां) प्रत्येकं वरायास्त्वाढकत्रयम् ॥ व्याघ्रीवह्निकपोतावत्सकखदिरार्कमूलदन्त्यैन्द्रयः । सनिशाद्वया दशपलाः क्वाथेऽमीषां क्षिपेत् पिष्ट्वा ॥ बीजं करञ्जेङ्गुदशिग्रुनिम्बान्नीलीं सनीलोत्पलचन्द्ररेखाम् । श्यामां किरातं कटुकत्रयञ्च पञ्चाढकं तत्र च पञ्चगव्यात् ॥ शमयत्यचिरेण घृत मृदुहुतवहसाधितं महानीलम् । न किलासमेव केवलमपि च व्रणगुह्यरोगवल्मीकान्" इत्यादि ॥२१॥

मूत्रमित्यादि । मूत्रमधुनी तुल्ये । चित्रकस्य व्योषस्य च तावती मात्रा, यावत्या किञ्चित् कटुकत्वमरिष्टस्य, कुम्भलेपार्थमेव तदित्यन्ये । किलासे कुष्ठचिकित्सितमेव सङ्क्षेपार्थमतिदेशेन निर्दिशन्नाह— कुर्य्याच्चास्मिन्नित्यादि । पूतीकश्चिरविल्वः । नरेन्द्रद्रुमः आरग्वधः । सुमना जाती ॥ २२ । २३ ॥

इदानीमादावपि कृतवमनस्य कृतविरेचनस्यापि कुष्ठिनः पुनःपुनरेव शोधनशोणितावसेकयोः कर्त्तव्यतामुपदिशन्नाह—अस्मादूर्द्ध्वमित्यादि ॥ २४ ॥

कुतः पुनरशेषेण शोणितं दोषाश्च हरणीया इत्याह - दुर्व्वान्त इत्यादि । अपिशब्दाद् दुष्टशोणितमनिर्ह्रियमाणमपि । केन क्रमेण शोधनशोणितावसेचनं कर्त्तव्यमित्याह— पक्षादित्यादि । वत्सरे हि द्विरल्पमिति वर्षे द्वौ वारौ षड्भिः षड्भिर्मासैरित्यर्थः ॥ २५ । २६ ॥

प्रायोगिकानेव योगान्निर्दिशन्नाह— पथ्याव्योषमित्यादि । सेक्षुजातं सगुडम् । तैलगुडयोः कुष्ठकारित्वेऽपि हरीतकीत्रिकटुसंयुक्तयोः कुष्ठहारित्वम्, संयोगशक्तेरचिन्त्यत्वात् । अन्ये त्वेवं पठन्ति— "पथ्याव्योषं तैलयुक्तं गुडं वा नित्यं भुक्त्वा मुच्यते कुष्ठरोगात्" इति । धात्रीत्यादि । अक्षो विभी-

आरिष्टत्वक् सप्तपर्णी च तुल्या लाक्षा मुस्तं पञ्चमूल्यौ हरिद्रे।
मञ्जिष्ठाक्षौ वासको देवदारु पथ्यावल्ली व्योषधात्रीविडङ्गम्॥
सामान्यांशं योजयित्वा विडङ्गश्चूर्णं कृत्वा तत्पलोन्मानमश्नन्।
कुष्ठाज्जन्तुर्मुच्यते त्रैफलं वा सर्पिर्द्रोणं व्योषयुक्तञ्च युञ्जन्॥ २९॥
गोमूत्राम्बुद्रोणसिद्धेऽक्षपीडे सिद्धं सर्पिर्नाशयेच्चापि कुष्ठम्।
आरग्वधे सप्तपर्णे पटोले सवृक्षके नक्तमाल सनिम्बे।
जीर्णं पक्वं तद्धरिद्राद्वयेन हन्यात् कुष्ठं मुष्कके चापि सर्पिः॥ ३०॥
रोध्रारिष्टं पद्मकं रक्तसारः सप्ताह्वाक्षौ वृक्षको वीजकश्च।
योज्याः स्नाने दह्यमानस्य जन्तोः पेया वा स्यात् क्षौद्रयुक्ता त्रिभण्डी॥३१॥
खादेत् कुष्ठी मांसपाते पुराणान् मुद्गान् सिद्धान् निम्बतोये सतैलान्।
निम्बक्वाथं जातसत्त्वः पिबेद् वा क्वाथं वार्कालकसप्तच्छदानाम्॥

तकः पलांशां पलमेव अंशो यस्याः सा तथा तां पलपरिमाणामित्यर्थः। एवं पूर्व्वोक्तप्रकारेण। पूर्व्ववत् हरिद्रावत्। क्रमेण पलमात्रां मासमेव। तद्वदित्यादि। तद्वत् तार्क्ष्यं तथा रसाञ्जनमपि अभ्यासेन पलमात्रं मासं पेयम्। त्रीण्यप्येतानि कुष्ठहराणि रसायनान्यपि। तेनाजस्रमित्यादि। तेन अनन्तरोक्तेन रसाञ्जनेन॥ २७। २८॥

आरिष्टत्वगित्यादि। अत्रापि क्रमाभ्यासेन पलं पलं मासमेव। त्रैफलं चेत्यादि। कुष्ठाजन्तुर्मुच्यत इत्यध्याहारः। अन्ये तु अन्यथा पठन्ति व्याख्यानयन्ति च, तच्च विस्तरभयान्न लिखितम्॥ २९॥

गोमूत्रेत्यादि। गोमूत्रमेवाम्बु गोमूत्राम्बु, गोमूत्रेणैव क्वाथो निर्व्वर्त्त्यत इत्यर्थः। गोमूत्राम्बुनो स्तुल्ययोर्द्रोण इत्येके। अक्षपीडो यवतिक्ता। सामान्यपरिभाषाकल्पेन सर्पिः साधनीयम्। आरग्वधे इत्यादि। व्याधिघातादिभिर्मुष्ककान्तैः सामान्यपरिभाषाकल्पनया। व्याधिघाताद्यं घृतं दह्यमानस्य पित्तकुष्ठिनः। "वासादार्व्वीतिक्तवल्लीकरञ्ज-व्याधिघ्नाग्निक्षारवृक्षादिभिश्च। वत्साख्यानारिष्टसप्तच्छदैश्च सिद्धं सर्पिः सर्व्वकुष्ठं निहन्ति" इति तन्त्रान्तरपठितो योगो न सौश्रुतः, जेज्जटाचार्य्येण नोक्तत्वात् न पठनीयः। तस्यैव बहुपित्तस्याबलवतो दाहप्रशमनहेतुं निर्द्दिशन्नाह— रोध्रेत्यादि। सप्ताह्वः सप्तपर्णः। रोध्रादिभिः षड़ङ्गोदककल्पनया, न तु कषायकल्पनया, नापि कषायेण स्नानम्। तस्यैव बहुपित्तस्य बलवतो दाहप्रशमने हेतुं निर्द्दिशन्नाह— पेया वेत्यादि। त्रिभण्डी त्रिवृत्॥ ३०। ३१॥

पित्तकुष्ठिनां मांसक्षरणे कृमिसम्भवेऽपि पानं निर्द्दिशन्नाह— खादेदित्यादि। षड़ङ्गकल्पेन निम्बतोयं परिकल्प्य मुद्गानां साधनम्। निम्बेत्यादि। जातसत्त्वो जातकृमिः; जातकृमिरेव पिबेद्।

जग्घेष्वङ्गेष्वश्वमारस्य मूलं लेपो युक्तः स्याद् विडङ्गैः समूत्रैः।
मूत्रैश्चैनं सेचयेद् भोजयेच्च सर्व्वाहारान् संप्रयुक्तान् विडङ्गैः ॥ ३२ ॥
कारञ्जं वा सार्षपं वा क्षतेषु क्षेप्यं तैलं शिग्रुकोशाम्रयोर्वा।
पक्वं सर्व्वैर्वा कटूष्णैः सतिक्तैः शेषञ्च स्याद् दुष्टवत् संविधानम् ॥ ३३ ॥

सप्तपर्णकरञ्जार्क-मालतीकरवीरजम्।
स्नुहीशिरीषयोर्मूलं चित्रकास्फोतयोरपि ॥
विषलाङ्गलवज्राख्य-कासीसालमनःशिलाः।
करञ्जवीजं त्रिकटु त्रिफलां रजनीद्वयम् ॥
सिद्धार्थकान् विडङ्गानि प्रपुन्नाडञ्च संहरेत्।
मूत्रपिष्टैः पचेदेतैस्तैलं कुष्ठविनाशनम्।
एतद् वज्रकमभ्यङ्गान्नाड़ीदुष्टव्रणापहम् ॥ ३४ ॥
सिद्धार्थकः करञ्जौ द्वौ द्वे हरिद्रे रसाञ्जनम्।
कुटजश्च प्रपुन्नाड़-सप्तपर्णौ मृगादनी ॥
लाक्षा सर्ज्जरसोऽर्कश्च सास्फोतारग्वधौ स्नुही।
शिरीषस्तुवराख्यस्तु कुटजारुष्करौ वचा ॥
कुष्ठं कृमिघ्नं मञ्जिष्ठा लाङ्गली चित्रकं तथा।
मालती कटुतुम्बी च गन्धाह्वा मूलकं तथा ॥

कृमजग्धेषु अङ्गेषु हयमारस्य मूलं सकृमिहरं गोमूत्रेण पिष्ट्वा लेपयेत्। मूत्रैरित्यादि। तत्रैव गोमूत्र-परिषेचनम्। भोजयेदित्यादि। करञ्जसर्षपशोभाञ्जनकोशाम्रवीजतैलानि स्वभावतो दुष्टव्रणयोगीनि तानि चापक्वान्येव। पक्वमित्यादि। तान्येव सर्व्वैः कटुकैर्मरिचादिभिः, तिक्तैस्तु निम्बादिभिः, सामान्यकषायपरिभाषया कषायीकृतैः पक्वानीति। अत्र पाठान्तरमप्यस्ति तद् विस्तरभयान्न लिखितम्। दुष्टवत् दुष्टव्रणवत्, तुल्यचिकित्सितत्वात्। अन्ये त्वत्र "शेषञ्च स्यात् पूर्व्ववत् संविधानम्" इति पठन्ति। तत्रापि पूर्व्वशब्देन दुष्टव्रणविधिरुच्यते "कुष्ठवत् संविधानम्" इति पाठान्तरम्; तन्नेच्छति गयी ॥ ३२। ३३ ॥

सप्तपर्णेत्यादि। मालती जाती। स्नुही सेहुण्डः। आस्फोता सारिवा। विषं प्रसिद्धम्। लाङ्गलशब्देन कलिहारिकोच्यते। वज्राख्यः द्वितीयसेहुण्डः, अभ्रं वा। कासीसं हीराकसम्। आलं हरितालम्। शेषं प्रसिद्धम्। स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रवः, इति न्यायेनैव

सैन्धवं करवीरश्च गृहधूमं विषं तथा।
कम्पिल्लकं ससिन्दूरं तेजोह्वातुत्थकाह्वये।
समभागानि सर्व्वाणि कल्कपेष्याणि कारयेत्॥
गोमूत्रं द्विगुणं दद्यात् तिलतैलाच्चतुर्गुणम्।
कारञ्जं वा महावीर्य्यं सार्षपं वा महागुणम्॥
अभ्यङ्गात् सर्व्वकुष्ठानि गण्डमालाभगन्दरान्।
नाड़ीदुष्टव्रणान् घोरान् नाशयेन्नात्र संशयः।
महावज्रकमित्येतन्नाम्ना तैलं महागुणम्॥ ३५॥
पित्तावापैर्मूत्रपिष्टैस्तैलं लाक्षादिकैः कृतम्।
सप्ताहं कटुकालाब्वां निदधीत चिकित्सकः॥
पीतवन्तं ततो मात्रां तेनाभ्यक्तञ्च मानवम्।
शोषयेदातपे तस्य दोषा गच्छन्ति सर्व्वशः॥
स्नु तदोषं समुत्थाप्य स्नातं खदिरवारिणा।
यवागूं पाययेदेनं साधितां खदिराम्बुना॥
एवं संशोधने वर्गे कुष्ठघ्नेष्वौषधेषु च।
कुर्य्यात् तैलानि सर्पींषि प्रदेहोद्घर्षणानि च॥

पक्तव्यम्। द्रवशब्देन गोमूत्रं, वज्रतैले गोमूत्रेणैव द्रवकार्य्यम्। तैलं तिलतैलम्। गयी तु वज्रकतैले दुष्टव्रणाधिकारात् प्रागपि सर्षपतैलस्य विधानात् सर्षपतैलं विपाच्यमाह। अस्याग्रे केचित् महावज्रकं पठन्ति, तच्च निबन्धकारैर्न पठितम्॥ ३४। ३५॥

कुष्ठदुष्टव्रणे बहिःशोधनं तैलं निर्द्दिश्य अन्तःशोधनार्थं तैलमुद्दिशन्नाह—पित्तेत्यादि। पित्तावापैः गोपित्तावापैः। पित्तं गोपित्तम्। मूत्रं गोमूत्रम्, तच्च तैलाच्चतुर्गुणम्। तैलं तिलतैलम्। लाक्षादिको लाक्षारेवतकुटजाश्वमारकट्फलेत्यादिको द्रव्यसंग्रहणीयोक्तः; अथवाऽत्रैव पठितो लाक्षासर्ज्जरसरसाञ्जनप्रपुन्नाडधान्याश्वमारकार्ककुटजारेवतादिकः, द्वयोरप्य ल्पान्तरत्वात्। कृतं संस्कृतमित्यर्थः। दोषा गच्छन्ति सर्व्वशः ऊर्द्ध्वमधस्तिर्य्यगित्यर्थः। गयी तु सर्व्वशः इति बह्वर्थाच्छस्, वैफल्यगमनापेक्षया कृत्स्नश इत्यर्थः। स्नु तदोषमित्यादि। खदिरवारिणा खदिरोदकेन षडङ्गोदककल्पनया कल्पितेन। उष्णाभितप्तस्य शीतखदिराम्बुना स्नानं कथं क्रियते? आतपसन्तप्तस्य शीतोदकस्नानं कुष्ठाक्षिरोगकृदिति चेत्, तत्र तोयावगाहो निषिद्धः, न पुनस्तोयपरिषेकः। "स्नु तदोषं ततः स्नानं शीतेन खदिराम्बुना" इति क्वचित् पाठः। संशोधने वर्गे इति संशोधनसंशमनीयाध्यायोक्तानि त्रिवृदादीनि कुष्ठघ्नान्यष्टौ।

प्रातःप्रातश्च सेवेत योगान् वैरेचनान् शुभान् ।
पञ्च षट् सप्त चाष्टौ वा यैरुत्थानं न गच्छति ॥
कारभं वा पिबेन्मूत्रं जीर्णे तत्क्षीरभोजनम् ।
जातसत्त्वानि कुष्ठानि मासैः षड्भिरपोहति ॥ ३६ ॥
दिदृक्षुरन्तं कुष्ठस्य खदिरं कुष्ठपीड़ितः ।
सर्व्वथैव प्रयुञ्जीत स्नानपानाशनादिषु ॥
यथा हन्ति प्रवृद्धत्वात् कुष्ठमातुरमोजसा ।
तथा हन्त्युपयुक्तस्तु खदिरः कुष्ठमोजसा ॥ ३७ ॥
नीचरोमनखः श्रान्तो हिताश्यौषधतत्परः ।
योषिन्मांससुरावर्ज्जी कुष्ठी कुष्ठमपोहति ॥ ३८ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने कुष्ठचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

कारभमित्यादि । करभा उष्ट्री । अयं प्रयोगः सौश्रुत इति जेज्जटगयदासाभ्यां व्याख्यातत्वात् मयापि व्याख्यातः । कुष्ठेषु खदिरस्य सर्व्वथोपयोगित्वं दर्शयन्नाह—दिदृक्षुरित्यादि । दिदृक्षुर्द्रष्टुमिच्छुः । अन्तं विनाशम् । खदिरः कुष्ठमोजसा इत्यत्र ओजःशब्देन प्रभावो वीर्य्यं शक्तिरुच्यते । इदानीं प्रतिषेधविधिमाह—नीचरोमेत्यादि ॥ ३६—३८ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
कुष्ठचिकित्सितव्याख्यानाम नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः ।

अथातो महाकुष्ठचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

कुष्ठेषु मेहेषु कफामयेषु सर्व्वाङ्गशोफषु च दारुणेषु।
कुशलमिच्छत्सु च मेदुरेषु योगानिमानग्र्यमतिर्विदध्यात् ॥ २ ॥

क्षुण्णान् यवान् निष्पूतान् रात्रौ गोमूत्रपर्य्युषितान् महति किलिञ्जे शोषयेत्, एवं सप्तरात्रं भावयेत् शोषयेच्च। ततस्तान् कपालभृष्टान् शक्तून् कारयित्वा प्रातःप्रातरेव कुष्ठिनं प्रमेहिणं वा सालसारादिकषायेण कण्टकिवृक्षकषायेण वा पाययेद् भल्लातकप्रपुन्नाडावल्गुजार्कचित्रकविडङ्गमुस्तचूर्णचतुर्भागयुक्तान्। एवमेव शालसारादिकषायपरिपीतानामारग्वधादिकषायपरिपीतानां वा गोशकृद्भूतानां वा यवानां शक्तून् कारयित्वा भल्लातकादीनां चूर्णान्यावाप्य खदिरासननिम्बराजवृक्षरोहितकगुडूचीनामन्यतमस्य कषायेण शर्करामधुमधुरेण द्राक्षायुक्तेन दाडिमवेतसाम्लेन सैन्धवलवणान्वितेन पाययेत्। एष सर्व्वमन्थकल्पः ॥ ३ ॥

यावकांश्च भक्ष्यान् धानोल्लुम्बककुल्माषापूपपूर्णकोशोत्कारिकाशष्कुलिकाकुणावीप्रभृतीन् सेवेत। यवविधानेन गोधूमवेणुयवानुपयुञ्जीत ॥ ४।५ ॥

अथात इत्यादि। अस्मिन्नध्याये महतां क्षुद्राणाञ्च कुष्ठानां चिकित्सितस्य प्रोक्तत्वात् महच्च तत् कुष्ठचिकित्सितञ्चेत्येके व्याचक्षते, तन्न ; कुष्ठानां महताञ्चापीत्यादिकेनाध्यापनसम्प्रदानीयोक्तेन विरोधात्। तस्माद्धात्वनुप्रविष्टानि सप्त कुष्ठानि महान्तीत्यतो महतां धात्वनुप्रविष्टानां कुष्ठानां चिकित्सितमिति व्याख्यानयन्ति। गयी तु महतां सप्तानां काकणकवर्जितानामित्याह। कुष्ठेष्वित्यादि। कुष्ठादीनां चतुर्णामपि दारुणेष्विति विशेषणम्। कफामया अग्निसादकफप्रसेकादयः। मेदुरा मेदस्विनः। अग्र्यमतिरिति वैद्यस्य विशेषणं विहितम्। अग्र्यमतिः कुशाग्रीयमतिः, प्रकृतिवयोबलशरीरादीनामवस्थान्तराणि यो जानातीत्यर्थः ॥ १। २ ॥

क्षुण्णानित्यादि। किलिञ्जो वंशादित्वग्ग्रथितपेटकाकारः। कपालो घटादिकर्परः। कण्टकिवृक्षाः खदिरबदरारिमेदस्नुग्दारुप्रभृतयः। भल्लातकादिचूर्णचतुर्भागानिति सर्व्वशक्तुप्रयोगेषु चूर्णप्रक्षेपमात्रापरिभाषेयम्। परिपीतानां भावितानाम्। दाडिमाम्लवेतससैन्धवादीनामत्र यावताम्ललवणता, तावती प्रक्षेपपरिमाणमात्रा। धानाः शुष्कभृष्टयवाः। कुल्माषाः यवपिष्टमया अम्लरसस्विन्ना शृङ्गाटादयः। अपूपाः स्थूलपूपाः। पूर्णकोशाः यवपिष्टमया एव कुष्ठहितशमीधान्य-

अरिष्टानतो वक्ष्यामः। पूतीकचव्यचित्रकसुरदारुसारिवादन्तीत्रिवृत्त्रिकटुकानां प्रत्येकं षट्पलिका भागा वदरकुड़वस्त्रिफलाकुड़व इत्येतेषां चूर्णानि ; ततः पिप्पलीमधुघृतरन्तःप्रलिप्ते घृतभाजने प्राक्कृतसंस्कारे सप्तोदककुड़वानयोरजोऽर्द्धकुड़वमर्द्धतुलाञ्च गुड़स्याभिहितानि चूर्णान्यावाप्य स्वनुगुप्तं कृत्वा यवपल्ले सप्तरात्रं वासयेत्, ततो यथाबलमुपयुञ्जीत। एषोऽरिष्टः कुष्ठमेहमेदःपाण्डुरोगश्वयथूनपहन्ति। एवं शालसारादौ न्यग्रोधादावारग्वधादौ चारिष्टान् कुर्व्वीत ॥ ६ ॥

आसवानतो वक्ष्यामः। पलाशभस्मपरिस्रुतस्योष्णोदकस्य शीतीभूतस्य त्रयो भागा द्वौ फाणितस्यकध्यमरिष्टकल्प न विदध्यात्। एवं तिलादीनां क्षारेषु शालसारादौ न्यग्रोधादावारग्वधादौ मूत्रेषु चासवान् विदध्यात् ॥ ७ ॥

अथ सुरा वक्ष्यामः। शिंशपाखदिरयोः सारमादाय उत्पाव्य चोत्तमारणीब्राह्मीकोशातकीस्तत्सर्व्वमेकतः कषायकल्पेन विपाच्योदकमाददीत मण्डोदकार्थं, किण्वपिष्टमभिषुणुयाच्च यथोक्तम्। एवं सुराः शालसारादौ न्यग्रोधादावारग्वधादौ च विदध्यात् ॥ ८ ॥

स्विन्नविदलादिपूर्णकोष्ठाः। उत्कारिका संयावप्रकारा। शष्कुल्यो यवप्रकारेण संस्कृतैस्तिलर्यवपिष्टेन शष्कुलीकल्पेन विधेयाः। कुणावी यवपर्पटी। प्रभृतिग्रहणादन्तर्गतगुड़ादयः। कुणावीत्यत्र अन्ये तु कोनालिकेति पठन्ति ; तत्रापि स एवार्थः। गयी तु उत्कारिकाग्रे चित्रेति पठति, चित्रा अपूपविशेषः। वेणुयवा वंशफलानि ॥ ३—५ ॥

इदानीं मद्यसात्म्यानां वातकफकुष्ठिनामरिष्टान् तत आसवसुरे चाह—अरिष्टानित्यादि। त्रिफलायाः समुदितायाः कुड़व इति केचित्, अन्ये तु संज्ञायाः संज्ञिन एव प्रधानत्वमिति प्रत्येकमेव कुड़वं मन्यन्ते। जलस्य सप्त कुड़वा अष्टाविंशतिपलानीति जेज्जटः ; तन्नेच्छति गयी, सर्व्वेष्वेव तन्त्रेष्वष्टपलद्रवस्य कुड़वत्वात्। एष पिण्डारिष्टसंज्ञकः कुष्ठहरखदिरादिकषायेणालोड्य पातव्यः। पिण्डासवस्य पलद्वयं पलं वा, कुष्ठहरस्य खदिरक्वाथस्य अञ्जलिमात्रं ; यथानलमुपयुञ्जीत इत्येके। अत्र चूर्णानामतिबाहुल्याद् पूत एवारिष्टः पेय इत्येके। पिण्डासववदपूत एव पेय इत्यन्ये। अस्मिन् योगे पाठान्तरं व्याख्यानान्तरमप्यस्ति, तच्च विस्तरभयान्न लिखितम् ॥ ६ ॥

पलाशेत्यादि। त्रयो भागा आढ़कत्रयम्। द्वौ भागौ फाणितस्य आढ़कद्वयम्। अरिष्टकल्पेनेति पूतीकादिवत्। अत्र त्रिफलायाश्चूर्णादि सर्व्वं पूर्व्वोक्तमुन्नेयम्। विदध्यात् कुर्य्यादित्यर्थः। तिलादीनामित्यादि तिलादिरश्मरीपठितस्तिलःपामार्गकदलीपलाशेत्यादिकः ॥ ७ ॥

सुराविधानमाह—अथेत्यादि। उत्तमारणी उत्तमकरणी। कोशातकी देवदाली। उदकशब्दोऽत्र क्वाथ वर्त्तते। किण्वपिष्टमभिषुणुयात् सन्दध्यात्। यथोक्तं सूत्रस्थाने विरेचनाधिकारे।

अतोऽवलेहान् वक्ष्यामः। खदिरासननिम्बराजवृक्षशालसारक्काथे तत्सारपिण्डान् श्लक्ष्णपिष्टान् प्रक्षिप्य विपचेत्, ततो नातिद्रवं नातिसान्द्रमवतार्य्य तस्य पाणितलपूर्णमप्रातराशो मधुमिश्रं लिह्यात्। एवं शालसारादौ न्यग्रोधादावारग्वधादौ च लेहान् कारयेत्॥ ९॥

अतश्चूर्णक्रियां वक्ष्यामः। शालसारादीनां सारचूर्णप्रस्थमाहृत्यारग्वधादिकषायपरिपीतमनेकशः शालसारादिकषायेणैव पाययेत्। एवं न्यग्रोधादीनां फलेषु, पुष्पेष्वारग्वधादीनां चूर्णक्रियां कारयेत्॥ १०॥

अत ऊर्द्ध्वमयस्कृतीर्वक्ष्यामः। तीक्ष्णलोहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशालसारादिकषायेण निर्व्वापयेत् षोड़शवारान्, ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद् गाढ़तान्तवपरिस्रावितानि, ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत। जीर्णे यथाव्याध्यनम्लमलवणमाहारं कुर्व्वीत। एवं तुलामुपयुज्य कुष्ठमेहमेदःश्वयथु-

कषायकल्पेन विपाच्येति शिंशपाखदिरयोः सारभागद्वयमादाय, एकञ्च भागमुत्तमारण्यादीनाम्। कुत एतदिति? साराणां कुष्ठहरत्वात, तुलामेकां चतुर्भिरुदकद्रोणैरुत्क्काथ्य द्रोणावशिष्टमवतार्य्यं किण्वपिष्टयोरासुतीबलवचनेन प्रमाणादिकल्पनम्। विदध्यात् कुर्य्यादित्यर्थः॥ ८॥

अतोऽवलेहानित्यादि। खदिरादीनां द्रोणमेकं पानीयस्य द्रोणचतुष्टयम्, एतद् द्रोणशेषं ग्राह्यम्। पुनःपाकात् घनीभवत्यस्मिन् कुटजावलेहचूर्णप्रक्षेपणप्रमाणेन वीजेन प्रत्येकं सार्द्धपलानां पञ्चानामेव श्लक्ष्णपिष्टानां पिण्डान् प्रक्षिप्य फाणितीभूतमवतारयेत्। यद्यपि पाणितलं कर्षमित्युक्तम्, तथापि पूर्णशब्दात् पाणितलं हस्ततलं अङ्गुलिरहितं व्याख्यातम्। अप्रातराशः सायमेव भुञ्जानः। गयी तु शालसारं न पठति, खदिरादीनि चत्वार्य्येव पठति॥ ९॥

अत इत्यादि। परिपीतं भावितम्। शालसारादिचूर्णप्रस्थे भाव्ये आरग्वधादिक्काथनीयद्रव्यस्यापि प्रस्थमेव। चतुर्भिरुदकप्रस्थैरुत्क्काथ्य अष्टभागावशिष्टमवतार्य्यं प्रागुक्तं चूर्णमार्द्रीकृत्य शोषयेत्। एवं सप्ताहं भावयित्वा ततश्चूर्णकर्षं शालसारादिद्रव्यपलं षोड़शभिरुदकपलैर्निःक्काथ्य पादावशिष्टेन तेन क्काथेन षोड़शगुणेन पिबेत्, कुष्ठानामुत्तममात्राहंत्वात्॥ १०॥

अत इत्यादि। तनूनि अघनानि तिलोत्सेधमात्राणि। लवणवर्गप्रदिग्धानि सैन्धवसौवर्च्चलौद्भिदविड़सामुद्रलवणादिकल्केन लिप्तानि। खदिराङ्गारतापनमपि षोड़शवारान्। गाढ़तान्तवं निविड़वस्त्रम्। मात्रामिति अल्पमित्यर्थः। पञ्चगुञ्जादिक्रमवृद्ध्या लौहमाषचतुष्टयम्। संसृज्य सम्यक् सृष्ट्वा, सम्यक्सृष्टिस्तु लौहमयपात्रे लौहदण्डमर्द्दनेन मधुघृतलौहैः सम्यगेकीभावः। उपयुक्ते पुनरस्मिन् षडङ्गकल्पेन कुष्ठहरखदिरादिकथितजलं षष्टिगुणमनुपानं पारम्पर्य्योपदेशात्। एवं प्रमेहादौ प्रमेहादिहरक्कथितमेव जलमनुपानम्। एवमाहारोऽपि यथाव्याधि यथारोगमेव

पाण्डुरोगोन्मादापस्मारानपहत्य वर्षशतं जीवति। तुलायां तुलायां वर्षशत-गुणोत्कर्षः। एतेन सर्व्वलौहेष्वयस्कृतयो व्याख्याताः॥ ११। १२॥

त्रिवृच्छ्यामाग्निमन्थसप्तलाकेवुक-शङ्खिनी-तिल्वक-त्रिफलापलाश-शिंशपानां स्वरसमादाय पालाश्यां द्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयःपिण्डं त्रिसप्त-कृत्वो निर्व्वाप्य तमादाय पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत्। ततश्चतुर्थभागावशिष्टमवतार्य्य परिस्राव्य भूयोऽग्नितप्तान्ययःपत्राणि प्रक्षिपेत्। सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागं द्वौ मधुनस्तावद् घृतस्येति दद्यात्। ततः प्रशान्तमायसे पात्रे स्वनुगुप्तं निदध्यात्। ततो यथायोगं शुक्तिं प्रकुञ्चं वोपयुञ्जीत, जीर्णे यथाव्याध्याहारमुपसेवेत। एषौषधायस्कृतिरसाध्यं कुष्ठं प्रमेहं वा साधयति, स्थूलमपकर्षति, शोफमुपहन्ति, सन्नमग्निमुद्धरति, विशेषेण चोपदिश्यते राजयक्ष्मिणाम्, वर्षशतायुश्चानया पुरुषो भवति॥ १३॥

शालसारादिकाथमासिच्य पालाश्यां द्रोण्यामयोघनं तप्तं निर्व्वाप्य कृत-

कुष्ठे कुष्ठहरः, मेहे मेहहर इति। अनम्ललवणस्तु सर्व्वथा व्याधिहरः। एतेनेत्यादि। एतेन कथितलौहरसायनक्रमेण सर्व्वलौहेषु त्रपुसीसताम्रसुवर्णेषु अयस्कृतयो विशेषेण व्याख्याताः प्रकर्षेण कथिताः॥ ११। १२॥

औषधेषु अयस्कृतिमुपदिशन्नाह—त्रिवृदित्यादि। श्यामा वृद्धदारकः। सप्तला यवतिक्ता, शङ्खिनी तद्भेदः। तिल्वकः पट्टिकारोध्रः। स्वरसमादायेति पञ्चशतपलानि; एषां स्वरसालाभे प्रतिनिधिस्तत्र चूर्णानामाढकमुदकद्रोणे रात्रिपर्य्युषितं स्वरसवद् ग्राह्यम्। वृद्धवैद्यास्तु क्वाथेऽपि स्वरसशब्दं मन्यन्ते। तत्र त्रिवृदादिक्काथस्य पञ्चशतपलानि। गयी तु त्रिवृदादीनां शिंशपान्तानां द्वादशानां द्रोणमपां चतुर्भिर्द्रोणैरुत्क्वाथ्य द्रोणावशिष्टं कषायं ग्राह्यमिति मन्यते। पालाश्यां द्रोण्यामभ्यासिच्येति द्रोणी जलप्रक्षेपणी, अभ्यासिच्य प्रक्षिप्य, सा च आर्द्रपलाशमयी कर्त्तव्या। खदिराङ्गारेत्यादि। लौहपिण्डं पञ्चाशत्पलप्रमाणम्। त्रिसप्तकृत्व इति एकविंशतिवारान्। तमादायेति द्रवं पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत्। ततश्चतुर्थभागावशिष्टमवतार्य्य परि-स्राव्य भूयोऽग्नितप्तानि अयःपत्राणि प्रक्षिपेदिति। तत्र कषाये पूर्व्वलोहपत्राणि खदिराङ्गारतप्तानि पुनरपि निर्व्वाप्य, एतानि लोहपत्राणि तेनैव कषायेण श्लक्ष्णपिष्टानि तस्मिन्नेव कषाये पुन-रापचेत्, सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागं दद्यात् लोहपिण्डसममेव, सिद्धशीते द्वौ मधुनः द्वौ गुडस्येति पलशतमित्यर्थः। घृतस्यापि तावत् पलशतं दद्यात्। गयी तु पिप्पल्यादि-मधुसर्पिषामन्यथा भागकल्पनं कृतवान्, तच्च विस्तरभयान्न लिखितम्। ततः प्रशान्तमित्यादि प्रशान्तं सिद्धमुच्यते। शुक्तिरर्द्धपलम्। प्रकुञ्चः पलम्। सन्नमग्निमुद्धरति उत्कर्षयति॥ १३॥

शालेत्यादि। शालसारादिकाथद्रोणं पलाशद्रोण्यामभ्यासिच्य, अपरे पञ्चशतपलानि

संस्कारे कलसेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं क्षौद्रं गुड़मिति च दत्त्वा खनुगुप्तं निदध्यात्। एतां महौषधायस्कृतिं मासमर्द्धमासं वा स्थितां यथाबलमुपयुञ्जीत। एवं न्यग्रोधादावारेवतादिषु च विदध्यात्॥ १४॥

अतः खदिरविधानमुपदेक्ष्यामः—प्रशस्तदेशजातमनुपहतं मध्यमवयस्कं खदिरं परितः खानयित्वा मध्यममूलं छित्त्वायोमयं कुम्भं तस्मिन्नन्तरे निदध्याद् यथा रसग्रहणसमर्थो भवति। ततस्तं गोमयमृदावलिप्तमवकीर्य्येन्धनैर्गोमयमिश्रैरादीपयेत् यथास्य दह्यमानस्य रसः स्रवत्यधस्तात्। यदा जानीयात् पूर्णं भाजनमिति, अथैनमुद्धृत्य परिस्राव्य रसमन्यस्मिन् पात्रे निधायानुगुप्तं निदध्यात्। ततो यथायोगं मात्रामामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत, जीर्णे भल्लातकविधानवदाहारः परिहारश्च। प्रस्थे चोपयुक्ते शतं वर्षाणामायुषोऽभिवृद्धिर्भवति॥ १५॥

खदिरसारतुलामुदकद्रोणे विपाच्य षोड़शांशावशिष्टमवतार्य्यानुगुप्तं निदध्यात्। तमामलकरसमधुसर्पिर्भिः संसृज्योपयुञ्जीत। एष एव सर्व्ववृक्षसारेषु कल्पः। खदिरसारचूर्णतुलां खदिरसारक्राथमात्रां वा प्रातः प्रातरुपसेवेत, खदिरसारक्राथसिद्धमाविकं वा सर्पिः॥ १६॥

मन्यन्ते। अयोघनं कर्म्मकारभा(डा)ण्डिभिस्तप्तायस्ताड़नाभिः पूर्व्ववदेकविंशतिवारानभिसंयोज्य शीतीकृत्य, तानि च निर्व्वापणसाधितलोहपत्राणि तेनैव कषायेण श्लक्ष्णपिष्टानि अरिष्टसंस्कारविधिना विहितसंस्कारे कलशे यावता च मन्दकटुकमरिष्टं स्यात् तावच्चूर्णांशं दत्त्वा मासं शीतेऽर्द्धमासमुष्णे च स्थापयेत्। अत्र मधु पुराणमत्रगन्तव्यम्, तच्च कषायचतुर्थांशेन, तत्समं एव जीर्णगुड़ः। अयोघनांस्तप्तान् इत्यत्र घनशब्देनैव लोहपिण्डे प्राप्ते अयःशब्दस्तीक्ष्णलौहप्रापणाय सीसकादिपरिहाराय च। अन्ये तु अत्र पिप्पल्यादि लोहसमम्, तद्द्विगुणं क्षौद्रं गुड़ञ्च दद्यात्। लौहप्रमाणन्तु पूर्व्वयोगे व्याख्यातम्। एवमित्यादि आरेवतादिषु आरग्वधादिषु। विदध्यात् अयस्कृतिं कुर्य्यात्॥ १४॥

अतः खदिरविधानमित्यादि। खदिररसेन तुल्य आमलकरसः। मधुघृते तु समस्ते तावती द्रव्यपादिके। भल्लातकविधानवदत्राहारे क्षीरं कुष्ठकरमपि न विरुद्धम्, रसायनशक्तेरचिन्त्यशक्तित्वात्। शेषं सुबोधम्। खदिरसारस्यार्द्रं स्वरसालाभे अनुकल्पितं स्वरसमुद्दिशन्नाह—खदिरसारेत्यादि। एष एवेति पूर्व्वमात्रयोपयोज्यः; स्नेहकषायपरिभाषाकल्पनया कषायं कृत्वा तस्य पादिकं सर्पिः, अपथ्यमप्याविकं सर्पिः पथ्यत्वेनात्राभिहितम्, द्रव्यसंयोगशक्तेरचिन्त्यत्वात्। अन्ये तु सर्पिरेव पठन्ति न पुनराविकम्॥ १५। १६।

अमृतवल्लीस्वरसं क्वाथं वा तत्सिद्धं वा सर्पिः प्रातःप्रातरुपसेवेत, अपराह्णे ससर्पिष्कमोदनमामलकयूषेण भुञ्जीत। एवं मासमुपयुज्य सर्व्वकुष्ठैर्विमुच्यत इति ॥ १७ ॥

कृष्णतिलभल्लातकतैलामलकरससर्पिषां द्रोणं शालसारादिकषायस्य च, त्रिफला-त्रिकटुकपरुषफलमज्ज-विडङ्गफल-सारचित्रार्कावल्गुज-हरिद्राद्वयत्रिवृद्-दन्तीन्द्रयवयष्टीमधुकातिविषारसाञ्जनप्रियङ्गूणां पालिका भागाः, तानैकध्यं स्नेहपाकविधानेन पचेत्। तत् साधुसिद्धमवतार्य्य परिस्राव्यानुगुप्तं निदध्यात्। तत उपसंस्कृतशरीरः प्रातःप्रातरुत्थाय पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत, जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मन्तं खदिरोदक-सिद्धं मृद्वोदनमश्नीयात् खदिरोदकसेवी, इत्येवं द्रोणमुपयुज्य सर्व्वकुष्ठैर्विमुक्तः शुद्धतनुः स्मृतिमान् वर्षशतायुररोगो भवति ॥ १८ ॥

भवति चात्र ।

सुरामन्थासवारिष्टान् लेहांश्चूर्णान्ययस्कृतीः ।
सहस्रशोऽपि कुर्व्वीत वीजेनानेन बुद्धिमान् ॥ १९ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने महाकुष्ठचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

अमृतेत्यादि। अमृतवल्ली गुडूची ॥ १७ ॥

स्नेहसामान्यात् मिश्रकं स्नेहविशेषं निर्दिशन्नाह—कृष्णतिलेत्यादि। कृष्णतिलानां भल्लातकानाञ्च तैलम्। तदेतत् सर्पिषा सह स्नेहद्रोणत्रयमामलकरसशालसारादिकषायद्रोणाभ्यां त्रिफलादिभिः कल्कीकृतैर्विपचेत्। उपसंस्कृतशरीरो वमनादिभिरित्यर्थः। पाणिशुक्तिः पलमित्यर्थः। सहस्रशोऽपीत्यपिशब्दात् खदिरसारप्रयोगेण सारस्नेहयोरनुक्तयोरुक्तेन कल्पेन कल्पनमिति समुच्चिनोति ॥ १८। १९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे महाकुष्ठचिकित्सितव्याख्यानाम दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः ।

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

द्वौ प्रमेहौ भवतः—सहजोऽपथ्यनिमित्तश्च । तत्र सहजो मातृपितृवीजदोषकृतः । अहिताहारजोऽपथ्यनिमित्तः । तयोः पूर्व्वेणोपद्रुतः कृशो रुक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति । उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति । तत्र कृशमन्नपानप्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत्, स्थूलमपतर्पणयुक्ताभिः ॥ २ ॥

सर्व्वं एव च परिहरेयुः सौवीरकतुषोदकशुक्तमैरेयसुरासवतोयपयस्तलघृतेक्षुविकारदधिपिष्टान्नाम्लपानकानि ग्राम्यानूपौदकमांसानि चेति ॥ ३ ॥

ततः शालिषष्टिकयवगोधूमकोद्रवोद्दालकाननवान् भुञ्जीत चणकाढ़कीकुलत्थमुद्गविकल्पेन, तिक्तकषायाभ्यां शाकगणाभ्यां निकुम्भेङ्गुदीसर्षपातसीतैलसिद्धाभ्यां वद्धमूत्रैर्वा जाङ्गलैर्मांसैरपहृतमेदोभिरनम्लै रघृतैश्चेति ॥ ४ ॥

तत्रादित एव प्रमेहिणं स्निग्धमन्यतमेन तैलेन प्रियङ्ग्वादिसिद्धेन वा

द्वावित्यादि । मातृपितृवीजदोषकृत इति अत्र केचिदाहुः स्त्रीणां प्रमेहा न भवन्तीति, तथा हि तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्व्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः" इति । एतत् तु न युक्तम्, सर्व्वतन्त्राप्रसिद्धेः, प्रत्यक्षविरोधाच्च । कृशं कार्श्यादिलक्षणयुक्तं सहजमित्यर्थः । स्थूलं स्थौल्यादिधर्म्मयुक्तं अहिताहारविहारजमित्यर्थः । अत्र अपतर्पयतीति अपतर्पणं लङ्घनम्, अपतर्पणानि व्यायामशोधनानि तिक्तकटुकानि च ॥ १ । २ ॥

सौवीरकं विरेचनाध्यायोक्तम् । तुषोदकं तत्रोक्तमेव काञ्जिकम् । शुक्तमुक्तम् । सुरासवयोः प्रत्येकनिष्पादितयोरेकीकृत्य पुनः सन्धानं मैरेयकम् । सुरा पिष्टमयी । द्रवप्रधान आसवः । आनूपा महिषादयः । औदका मत्स्यादयः । उद्दालका अरण्यकोद्रवाः । अनवाः पुराणाः । तिक्तगणः प्रपुन्नाडपटोलादिकः । कषायगणो वटशुङ्गादिकः । तेषां शाकानां साधनाङ्गानि निकुम्भादितैलानि । निकुम्भा दन्ती । वद्धमूत्रैरेणादिभिः । अपहृतमेदोभिरिति अविद्यमानमेदोभिः ॥ ३ । ४ ॥

रूक्षस्य मेहिनो वमननिषेधात् तदितरस्य मेहिनो बलवतश्च वमनमुपदिशन्नाह—तत्रेत्यादि । तैलेनान्यतमेनेति निकुम्भादितैलानामनन्तरनिर्द्दिष्टानामेकतमेन । अथवा स्नेहोपयोगिकोक्तमेहहरनिकुम्भसर्षपातसीपिचुमर्द्दातिमुक्तक स्नेहानामन्यतमेन स्निग्धम् । पैत्तिकेषु तु मेहेषु सामान्य-

घृतेन वामयेत् प्रगाढ़ं विरेचयेच्च। विरेचनादनन्तरं सुरसादिकषायेणास्थापयेन्महौषधभद्रदारुमुस्तावापेन मधुसैन्धवयुक्तेन, दह्यमानञ्च न्यग्रोधादिकषायेण निःस्नेहेन। ततः शुद्धदेहमामलकरसेन हरिद्रां मधुसंयुतां पाययेत्, त्रिफला-विशालादेवदारु मुस्तकषायं वा, शाल-कम्पिल्लकमुष्ककककल्कमक्षमात्रं वा मधुमधुरमामलकरसेन हरिद्रायुतम्, कुटज-कपित्थरोहितविभीतकसप्तपर्णपुष्पकल्कं वा, निम्बारग्वध-सप्तपर्ण-मूर्व्वा-कुटज-सोमवृक्षपलाशानां वा त्वक्पत्रमूलफलपुष्पकषायाणि। एते पञ्च प्रयोगाः सर्व्वमेहानामपहन्तारो व्याख्याताः ॥ ५ ॥

विशेषश्चात ऊर्द्धम्। तत्रोदकमेहिनं पारिजातकषायं पाययेत्, इक्षुमेहिनं वैजयन्तीकषायम्, सुरामेहिनं निम्बकषायम्, सिकतामेहिनं चित्रककषायम्, शनैर्मेहिनं खदिरकषायम्, लवणमेहिनं पाठागुरुहरिद्राकषायम्, पिष्टमेहिनं हरिद्रादारुहरिद्राकषायम्, सान्द्रमेहिनं सप्तपर्णकषायम्, शुक्रमेहिनं दूर्व्वा-शैवल प्लव-हठ-करञ्ज-कशेरुककषायं ककुभचन्दनकषायं वा, फेनमेहिनं

स्नेहपाक परिभाषार्थकल्पनया प्रियङ्ग्वादिसिद्धेन घृतेनोपस्निग्धं वामयेत्, प्रगाढ़ं विरेचयेच्च; कफमेहे वामयेत्, पित्तमेहे विरेचयेत्; आमाशयस्थे कफपित्ते वामयेत्, पक्वाशयस्थे पित्ते विरेचयेत्। विरेचनानन्तरं सप्तरात्रात् परतो वातविद्रध्यादावुक्तेन सुरसादिकषायेण महौषधादिकल्कयुक्तेन मधुप्रायेण, मधुसैन्धवादीनां सामान्यपरिभाषार्थकल्पेनैव सिद्धे पुनर्वचनं स्नेहनिषेधार्थमित्येके। दह्यमानञ्च न्यग्रोधादिकषायेण आस्थापयेत्। निःस्नेहेनेति वचनादल्पघृताभ्यनुज्ञानम्, अल्पस्नेहार्थमित्यन्ये। (दह्यमानं वा न्यग्रोधादिकषायेण निःस्नेहेन आस्थापयेदिति शेषः। निःस्नेहेनेति अल्पघृतेन, निःस्नेहेनेत्यत्र निस्तैलेनेति केचित् पठन्ति)।

ततः शुद्धदेहमित्यादि। कल्पनामाह—आमलकरसस्य चत्वारि पलानि, हरिद्रा कर्षप्रमाणा, तथा मधु च कर्षप्रमाणमेव, एवं विभज्य पिबेत्। त्रिफलेत्यादि। त्रिफलादीनां मुस्तान्तानां पले षोड़शगुणं जलं दत्त्वा चतुर्भागावशिष्टं ग्राह्यम्। तथाचोक्तं—"द्रव्यमापोत्थितं क्वाथ्यं दत्त्वा षोड़शिकं जलम्। पादशेषञ्च कर्त्तव्यमेष क्वाथविधिः स्मृतः" इति। कुटजकपित्थेत्यादि। कुटजादिभिः पुष्पशब्दः प्रत्येकं सम्बध्यते। अस्मिन् योगेऽपि मधु आमलकरसश्च अनुवर्त्तते। निम्बेत्यादि। निम्बादीनां यानि त्वक्पत्रमूलफलपुष्पाणि तैः कृतानि कषायाणि। एष पञ्चमो योगः। एते पञ्चापि सर्व्वमेहेषु साध्येष्वसाध्येष्वपीत्येके, यापनार्थमित्यपरे ॥ ५ ॥

विशेष इत्यादि। अत ऊर्द्धं वक्ष्यते इति वाक्यशेषः। पारिजातः पारिभद्रकः। वैजयन्ती अरणिका। शैवलं शैवालम्। प्लवो गोपालदमनकः। हठो जलकुम्भिका। ककुभः सुगन्धिमूलो

त्रिफलारग्वधमृद्वीकाकषायं कफजेषु मधु-*-मधुरमिति। पैत्तिकेषु नीलमेहिनं शालसारादिकषायमश्वत्थकषायं वा पाययेत्, हरिद्रामेहिनं राजवृक्षकषायम्। अम्लमेहिनं न्यग्रोधादिकषायं, क्षारमेहिनं त्रिफलाकषायम्, मञ्जिष्ठामेहिनं मञ्जिष्ठाचन्दनकषायम्, शोणितमेहिनं गुडूचीतिन्दुकास्थिकाश्मर्य्यखर्ज्जूरकषायं मधुमिश्रम्॥ ६॥

अत ऊर्द्ध्वमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः। तद्यथा—सर्पिर्मेहिनं कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्कं गुडूचीचित्रककषायेण पाययेत्, वसामेहिनमग्निमन्थकषायं शिंशपाकषायं वा, क्षौद्रमेहिनं कदरक्रमुककषायम्, हस्तिमेहिनं तिन्दुककपित्थशिरीषपलाशपाठामूर्व्वादुःस्पर्शाकषायं मधुमिश्रं, हस्त्यश्वशूकरोष्ट्रास्थिक्षारञ्चेति। दह्यमानमौदककन्दक्काथसिद्धां यवागूं क्षीरेक्षुरसमधुरां पाययेत्॥ ७॥

ततः प्रियङ्ग्वनन्तायूथिकापद्मात्रायन्तिकालोहितिकाम्बष्ठादाड़िमत्वक्-शालपर्णी-पद्म-तुङ्ग-केशर-धातकीवकुल-शाल्मली-श्रीवेष्टक-मोचरसेष्वरिष्टानयस्कृती-

विटपी। कफजेषु मधुमधुरमिति अन्ते स्थितं दशस्वपि सम्बध्नन्ति, एवं पैत्तिकेष्वपि; मधुनो योगवाहित्वात् मेहहरत्वाच्च। पैत्तिकेत्यादि। राजवृक्षः किरमालकः॥ ६॥

अत इत्यादि। कदर आपीतसारः खदिराकारः। क्रमुकः पूगफलम्। मूर्व्वा चौरस्नायुः। दुःस्पर्शा दुरालभा। मधुमधुरमिति वचनं सर्पिर्म्मेहादिकषायेष्वपि द्रष्टव्यम्। हस्त्यश्वादि क्षारोदकस्य शीतस्य पानं खरतीक्ष्णत्वात्। प्रमेहिणोऽब्धातौ क्षीणे तद्विरोधिनि पित्ते विवृद्धे दाहो भवतीति तच्चिकित्सितमुपदिशन्नाह - दह्यमानमित्यादि। औदककन्दक्काथेत्यादि षड़ङ्गकल्पकथितेन शालूकादिक्काथेन सह क्षीरेक्षुरससिद्धां सितां मधुमधुरां यवागूं पाययेत्। तथा चोक्तम् — "यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते। कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि॥ अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति। पूर्व्वनिषिद्धस्य यवागूपानस्यापवादः। क्षीरेक्षुरसमधुराया यवाग्वाः पानं पित्तमेहे एव, वातश्लेष्ममेहेषु पुनर्यवागूपानस्य प्रतिषेध एव॥ ७॥

तत्र सर्व्वेषां मेहानां प्रथमं सामान्यान् ततो वैशेषिकांश्च योगानभिधाय पुनररिष्टादीन् सामान्येनैव निर्द्दिशन्नाह— ततः प्रियङ्ग्वित्यादि। अनन्ता उत्पलसारिवा, पद्मा भार्गी, त्रायन्तिका मदयन्तिका, लोहितिका मञ्जिष्ठा, रामतरुणीत्यन्ये; अम्बष्ठा माचिका, साकुर इति लोके; शालपर्णीत्यत्र केचित् तालपर्णीति पठन्ति, तालपर्णी मुषली। तुङ्गः पुन्नागः, केशरं नागकेशरम्, श्रीवेष्टको नवनीतधूपः सरलनिर्य्यासः, मोचरसः शाल्मलीनिर्य्यासः। तत्रारिष्टादयः पूर्व्वेणैव

* लघु मधुरमिति वा पाठः।

लेहानासवांश्च कुर्वीत। शृङ्गाटकगिलोड्यविसमृणालकाशकशेरुक-मधुकाम्र-जम्ब्वसनतिनिश-ककुभकट्वङ्गरोध्रभल्लातक-पलाश-चर्म्मिवृक्षगिरिकर्णिकाशीत-शिवनिचुलदाड़िमाजकर्णहरिवृक्षराजादनगोपघोण्टाविकङ्कतेषु वा, यवान्न-विकारांश्च सेवेत। यथोक्तकषायसिद्धाश्चास्मै यवागूः प्रयच्छेत्, कषायाणि वा पातुम्। महाधनमहिताहारमौषधद्वेषिणमीश्वरं वा पाठाभयाचित्रकप्रगाढ़-मनल्पमाक्षिकमन्यतममासवं पाययेत्, अङ्गारशूल्यावदंशं वा माध्वीक-मभीक्ष्णम्। मधु-कपित्थमरिचानुविद्धानि चास्मै पानभोजनान्युपहरेत्॥ ८॥

उष्ट्राश्वतरखरपुरीषचूर्णानि चास्मै दद्यादशनेषु। हिङ्गुसैन्धवयुक्तंर्यूषैः सार्षपैश्च रागैर्भोजयेत्। अविरुद्धानि चास्मै पानभोजनान्युपहरेद्रसगन्धवन्ति।

प्रवृद्धमेहास्तु व्यायामनियुद्धक्रीड़ागजतुरगरथपदातिचर्य्यापरिक्रमणान्यस्त्रो-पास्त्रे वा सेवेरन्॥ ९—११॥

विधानेन विधेयाः। शृङ्गाटकं जलमध्ये त्रिकण्टकम्। गिलोड्यः कन्दः प्रावृड्जातः शण-पत्राकारो वल्लीयुक्तश्चर्म्मण्वतीनदीभवश्वेतवर्त्तुलपाषाणसदृशः, गुलाहडक इति लोके। विसं पद्ममूलम्, तस्य स्थूलप्ररोहो मृणालम्। असनो बीजकः। तिनिशः स्यन्दनः। कट्वङ्गोऽरलुकः। चर्म्मिवृक्षः चर्म्मलोह इति प्रसिद्धो लकुचद्रुमाकारो महावृक्षः। गिरिकर्णिका श्वेतस्यन्दः। शीतशिवः शतपुष्पाभेदः। निचुलो जलवेतसः। अजकर्णः सर्ज्जः, पूर्व्वदेशे प्रसिद्धः। हरिवृक्ष इन्द्रवृक्षः, धवाकार इत्येके, कुटज इत्यन्ये पठन्ति, हरिद्रावृक्ष इत्यपरे पठन्ति, तत्र हरिद्रा प्रसिद्धा, वृक्षः कुटजः। राजादनः क्षीरिका। गोपघोण्टा घोटाबदरी। विकङ्कतः कण्टकिका। एतेषु वा पूर्व्वकल्पेनारिष्टादयः कर्त्तव्याः। यवान्नविकारांश्चेत्यादि। गृञ्जनयवौदनधानादयः। यथोक्तेत्यादि। अनन्तरोक्तप्रियङ्ग्वादिशृङ्गाटकादिवर्गैः कृतामिति। महाधनो विपुलधनशाली। ईश्वरः ईशिता राजा। तत्र गुडस्थाने माक्षिकम्, अनल्पं प्रभूतं कषायसमम्। पाठाभया-चित्रकाणामनुक्तानां कषायं कर्षत्रयमनुक्तमपि देयमिति प्रगाढ़ार्थः। अन्ये तु अन्यतममासवं पूर्व्वोक्तं प्रियङ्ग्वाद्यासवम्। अङ्गारशूल्यावदंशमिति भटित्रोपदंशम्। माध्वीकं मधुयोनिमद्यं चिर संस्थितञ्च। अभीक्ष्णमत्यर्थम्। जेज्जटाचार्य्यस्तु द्राक्षासवमाह—तन्नेच्छति गयी। उष्ट्रादि-पुरीषचूर्णावचारितानि चान्नानि दद्यात्। सर्षपकल्करञ्जिता लेहाः, राजिकास्थाने रागेषु सर्षपाः; अन्ये तु पठन्ति—"सार्षपैस्तु शाकैर्भोजयेत्" इति। अन्यानि पानभोजनानि अविरुद्धानि प्रमेहिणस्तानि रसवन्ति गन्धवन्ति च प्रदद्यात्।

निर्दिष्टः कृशस्य प्रायशो विधिः, अतःपरं स्थूलस्यापकर्षणविधिमाह—प्रवृद्धमेहा इत्यादि। व्यायामोऽङ्गानां विविधप्रकार आयामः, तथा चोक्तम्—"तुलाश्रमगुणाकर्षधनुराकर्षणादिभिः। आयामो विविधाङ्गानां व्यायाम इति कीर्त्तितः" इति। नियुद्धं बाहुयुद्धम्। अद्भुव्यसेऽन्यथा

अधनस्त्वबान्धवो वा पादत्राणातपत्रविरहितो भैक्ष्याशी ग्रामैकरात्रानुवासी मुनिरिव संयतात्मा योजनशतमधिकं वा गच्छेत्, महाधनो वा श्यामाक-नीवारवृत्तिरामलककपित्थतिन्दुकाश्मन्तकफलाहारो मृगैः सह वसेत्, तन्मूत्र-शकृद्भक्षी सततमनुव्रजेद् गाः। ब्राह्मणो वा शीलोञ्छवृत्तिर्भूत्वा ब्रह्मरथमुप-धारयेत्, पठेत् सततम्। इतरः खनेद् वा कूपम्। कृशन्तु सततं रक्षेत् ॥ १२ ॥

भवति चात्र।

अधनो वद्यसन्देशादेवं कुर्व्वन्नतन्द्रितः।
संवत्सरादन्तराद् वा प्रमेहात् प्रतिमुच्यते ॥ १३ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने प्रमेहचिकित्सितं नामैकादशोऽध्यायः ॥ ११ ॥

नियुद्धं व्याख्यातम्, तच्च विस्तरभयान्न लिखितम्। क्रीड़ा लोकप्रसिद्धैर्हस्तपादप्रक्षेपनर्म्मपूर्व्वकं क्रीड़नम्। गजानामारोहणं हस्तिशिक्षायामतिविस्तृतं सांग्रामिकमाभ्यासिकञ्च। विक्रम-वाञ्छितोपशल्यसंहितासु धारासु हयारोहणम्। रथचर्य्यां पदातिचर्य्याञ्च जमदग्निराह, "सर्व्वदिग्भागभागेषु हस्त्यश्वरथपत्तिषु। शस्त्रास्त्रैर्यस्तु संयोगः स चर्य्येति प्रकीर्त्त्यते" इति। परिक्रमणं चंक्रमणम्, गतागतमित्यर्थः, सर्व्वतो भ्रमणमित्यन्ये। अस्त्रं शास्त्रितं धनुः। उपास्त्रं शास्त्रनियमवर्ज्जितं धनुरेव ॥ ८—११ ॥

अधिकमिति शतद्वयं त्रयं वा। नीवारं उड़िकाधान्यम्, तद् द्विविधम्—एकं धान्यसदृशविटपं धान्यक्षेत्रजं, द्वितीयं महादलकाण्डं तत्तु सलिलजम्; तत्र सलिलजं सलिलवृद्धिमात्रस्तम्बप्ररोहं रक्तशूकञ्च, तदेव प्रसाधिकेति तन्त्रान्तरे पठ्यते। तन्मूत्रशकृद्भक्षीत्यत्र तासां गवामेव मूत्रशकृती ग्राह्ये। भूमिपतितस्योत्सृष्टस्य कणशो शस्यग्रहणं शिलः, कणशो धान्यग्रहणमित्यर्थः। भूमिष्ठ-मात्रस्य शस्यस्य ग्रहणमुञ्छः। ब्रह्मरथं ब्राह्मणाधिष्ठितं शकटमुद्धरेत्, अथवा ब्रह्म एव रथो ब्रह्म-रथस्तमुद्धरेत्, धारयेद् वेदमित्यर्थः; पापरोगप्रायः प्रमेहो वेदाध्ययनान्नाशमुपैति। इतरः शूद्रः। अधन इत्यादि यावत् मृगैः सह संवसेदित्ययं विधिः क्षत्रियस्य, तन्मूत्रशकृद्भक्षः सततमनुव्रजेद् गा इति वैश्यस्यायं विधिः ॥ १२।१३ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे प्रमेहरोगचिकित्सितव्याख्यानामैकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः ।

अथातः प्रमेहपिड़काचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

शराविकाद्या नव पिड़काः प्रागुक्ताः, ताः प्राणवतोऽल्पास्त्वङ्मांसमात्रा मृद्व्योऽल्परुजः क्षिप्रपाकभेदिन्यश्च साध्याः ॥ २ ॥

ताभिरुपद्रुतं प्रमेहिणमुपचरेत्। तत्र पूर्व्वरूपेष्वपतर्पणं वनस्पतिकषायं वस्तमूत्रञ्चोपदिशेत्। एवमकुर्व्वतस्तस्य * मधुराहारस्य मूत्रं स्वेदः श्लेष्मा च मधुरीभवति, प्रमेहश्चाभिव्यक्तो भवति। तत्रोभयतः संशोधनमासेवेत। एवमकुर्व्वतस्तस्य दोषाः प्रवृद्धा मांसशोणितं प्रदूष्य शोफं जनयन्त्युपद्रवान् वा कांश्चित्। तत्रोक्तः प्रतीकारः शिरामोक्षश्च ॥ ३ ॥

एवमकुर्व्वतस्तस्य शोफो वृद्धोऽतिमात्ररुजो विदाहमापद्यते। तत्र शस्त्रप्रणिधानमुक्तं व्रणक्रियोपसेवा च ॥ ४ ॥

एताः शराविकाद्याः प्रमेहपिड़काः प्रमेहं विनापि भवन्ति ; उक्तञ्च—"विना प्रमेहमप्येता जायन्ते दुष्टमेदसः" इति। यद्यप्येवं तथापि प्रमेहानन्तरकालजातानां प्रमेहं विनापि जातानां चैकमिह चिकित्सितमासां, तुल्यदोषदूष्यत्वात् ॥ १ । २ ॥

ताभिरित्यादि । पिड़कानां पूर्व्वरूपं प्रमेहा इति तन्त्रान्तरोक्तत्वात् पिड़काचिकित्सितेऽपि प्रमेहचिकित्सितमुक्तम्, अथवा प्रमेहचिकित्सितेनैव पिड़कोपशमो भवतीति । तत्रेत्यादि । अपतर्पणमुपवासादि । वनस्पतिकषायं वस्तमूत्रं चोपदिशेत् ; वनस्पतयो वटादयः, वस्तश्छागः। एवमकुर्व्वतस्तस्य हीनप्रथमकर्म्मगुणस्य मधुराहारस्य मूत्रादयो मधुरीभवन्ति । तत्रोभयतः संशोधनमासेवेत वमनं विरेचनञ्च । एवमकुर्व्वतस्तस्य हीनद्वितीयकर्म्मगुणस्य, तत्रोक्तः प्रतीकारः तत्र शोफे, उक्तः प्रतिकारः सूत्रस्थाने द्विव्रणीये च, स पुनरपतर्पणादिरेकादशविधो विरेकान्तः । शिरामोक्षश्चेति न जलौकापातनमधःकायस्य पिड़काधिष्ठानस्यातिविपुलत्वात्। अत्र शोफप्रतिपादनेन तदनन्तरभाविनी प्रमेहपिड़कापि प्रतिपादिता । एवमकुर्व्वतस्तस्य हीनतृतीयकर्म्मगुणस्य शस्त्रप्रणिधानं छेद्यभेद्यादिना, व्रणक्रियोपसेवा चेति षष्टिव्रणोपक्रमाणाञ्च यथास्वमुपसेवनमित्यतीतावेक्षणम्। अत्र शोफस्य

* हीनप्रथमकर्म्मगुणस्येति क्वचिदधिकः पाठः ।

एवमकुर्व्वतस्तस्य पूयोऽभ्यन्तरमवदार्य्योत्सङ्गं महान्तमवकाशं कृत्वा प्रवृद्धो भवत्यसाध्यः, तस्मादादित एव प्रमेहिणमुपक्रमेत ॥ ५। ६ ॥

भल्लातकविल्वाम्बुपिप्पलीमूलोदकीर्य्यावर्षाभूपुनर्नवाचित्रकशठीस्तु ह्रीवरुणकपुष्करदन्तीपथ्या दशपलोन्मिताः यवकोलकुलत्थांश्च प्रास्थिकान् सलिलद्रोणे निःक्वाथ्य चतुर्भागावशिष्टेऽवतार्य्य वचात्रिवृत्कम्पिल्लकभार्गीनिचुलशुण्ठीगजपिप्पलीविड़ङ्गरोध्रशिरीषाणां भागैरर्द्धपलिकैर्घृतप्रस्थं विपाचयेत् मेहश्वयथुकुष्ठगुल्मोदराशःप्लीहविद्रधिपिड़कानां नाशनं नाम्ना धान्वन्तरम् ॥ ७ ॥

दुर्व्विरेच्या हि मधुमेहिनो भवन्ति मेदोऽभिष्यान्नशरीरत्वात्, तस्मात् तीक्ष्णमेतेषां शोधनं कुर्व्वीत। पिड़कापीड़िताः सोपद्रवाः सर्व्व एव प्रमेहा मूत्रादिमाधुर्य्ये मधुगन्धसामान्यात् पारिभाषिकीं मधुमेहतां लभन्ते। न चैतान् कथञ्चिदपि स्वेदयेत्, मेदोवहुलत्वादेतेषां विशीर्य्यते देहः स्वेदेन। रसायनीनाञ्च दौर्व्बल्यान्नोर्द्ध्वमुत्तिष्ठन्ति प्रमेहिणां दोषाः, ततो मधुमेहिनामधःकाये पिड़काः प्रादुर्भवन्ति। अपक्वानां पिड़कानां शोफवत् प्रतीकारः, पक्वानां व्रणवदिति। तैलन्तु व्रणरोपणमेवादौ कुर्व्वीत ॥ ८ ॥

विदग्धस्य याप्यत्वेन असाध्यत्वम्। एवमकुर्व्वतस्तस्य हीनचतुर्थकर्म्मगुणस्य ( नातिसकलोपद्रवस्यानतिमहाशयोत्सङ्गादौ शिलाजत्वाद्यनभ्यासे तु प्रयत्नाद्यतिशयाद् याप्यत्वेनासाध्यत्वम्। शिलाजत्वाद्यभ्यासे तु हीनपञ्चकर्म्मगुणस्य ) अनुपक्रम्यत्वादसाध्यतमत्वम्। उत्सङ्ग इव उत्सङ्गः, व्रणाशये हि चिरकालपूयावस्थानेनावदारितमन्तःप्रदेशान्तरं निम्नमुत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते। उत् ऊर्द्ध्वं पूयस्य सङ्ग उत्सङ्ग इत्यन्ये। आदित इति ल्यव्लोपे पञ्चमी। तस्मादादौ पूर्व्वरूपमेव वीक्ष्य प्रमेहिणमुपक्रमेत इत्यर्थः ॥ ३—६ ॥

भल्लातकेत्यादि। अनार्षोऽयं योगः, जेज्जटाचार्य्येण नोक्तत्वात्; तस्मान्न पठनीयः ॥ ७ ॥

दुर्व्विरेच्या इत्यादि। न चैतानित्यादि। स्वेदावचारणीये प्रमेहिणां निषिद्धमपि महादोषत्वप्रतिपादनाय पुनरपि निषिद्धम्। कुतः पुनरधोदेहे एव पिड़कासम्भव इत्याह—रसायनीनाञ्च दौर्व्बल्यादित्यादि। रसायनीनामित्यत्रादिशब्दो लुप्तनिर्द्दिष्टो द्रष्टव्यः, तेन रसपित्तकफशोणितवहानां धमनीनामित्यर्थः। दौर्व्बल्यादिति सर्व्वशरीरगतस्य सर्व्वद्रवधातोरपानव्यानाभ्यामधोऽनुलोम्यमानत्वाद् रसादिवहानामपि धमनीनामध एव वलत्वं नतूर्द्ध्वमित्यर्थः; रसहारिणीनामिति केचित् पठन्ति। अपक्वानामित्यादि। व्रणरोपणमिति रोपणद्रव्यसिद्धं मिश्रकाद्युक्तं, रोपणावस्थायां रोपणे कर्त्तव्ये आदौ तैलमेव, नान्यत् कषायादिकं, सर्व्वेष्वेव मेहेष्वतिप्रवृत्त्या वातवृद्धेः, तैलस्य वातदोषप्रत्यनीकत्वात्, तथा बद्धमूत्रत्वेन प्रमेहव्याधिप्रत्यनीकत्वाच्च। अन्ये तु एलादौ कुर्व्वीतेति पठन्ति। एलातगरकुष्ठेत्यादिः एलादिः ॥ ८ ॥

आरग्वधादिकषायमुत्सादनार्थं, शालसारादिकषायं परिषेचने, पिप्पल्यादिकषायं पानभोजनेषु, पाठाचित्रक--शार्ङ्गेष्टा-क्षुद्रा-बृहती-सारिवा-सोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णानि मधुमिश्राणि प्राश्नीयात्। शालसारादिवर्गकषायं चतुर्भागावशिष्टमवतार्य्य परिस्राव्य पुनरुपनीय साधयेत्, सिध्यति चामलकरोध्रप्रियङ्गुदन्तीकृष्णायस्ताम्रचूर्णान्यावपेत्, एतदनुपदग्धं लेहीभूतमवतार्य्यानुगुप्तं निदध्यात्। ततो यथायोगमुपयुञ्जीत। एष लेहः सर्व्वमेहानां हन्ता ॥ ९ ॥

त्रिफलाचित्रकत्रिकटुविडङ्गमुस्तानां नव भागास्तावन्त एव कृष्णायश्चूर्णस्य, तत्सर्व्वमैकध्यं कृत्वा यथायोगं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत। एतत् नवायसम्। एतेन जाठर्य्यं न भवति, सद्योऽग्निराप्यायते, दुर्नामशोथपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति ॥ १० ॥

शालसारादिनिर्य्यूहे चतुर्थांशावशेषिते ।
परिस्रुते ततः शीते मधु माक्षिकमावपेत् ॥
फाणितीभावमापन्नं गुडं शोधितमेव च ।
श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादिगणस्य च ॥

उत्सादनं निम्नव्रणस्य उन्नतिकरणम्। उत्पादनोपक्रमावस्थायामारग्वधादिनैवोत्सादनम्। एवं वक्ष्यमाणेषु परिषेचनादिष्वप्युक्तवर्गेणैव नियमः। पाठाचित्रकेत्यादि। शार्ङ्गेष्टा काकतिक्ता भुम्भुरुदारू इति लोके। क्षुद्रा लघुकण्टकारिका। सोमवल्कः कट्फलः। अयं योगः सामान्यचूर्णयोजनपरिभाषया योज्यः। तथाहि—"कर्षश्चूर्णस्य कल्कस्य गुटिकानाञ्च सर्व्वशः। द्रवशुक्त्यावलेह्यः पातव्यश्च चतुर्द्रवः" इति। शालसारेत्यादि। शालसारादिवर्गपलशतं षोडशगुणे जले क्वथितं पादावशेषं, तस्मिन् सिध्यत्यामलकादिचूर्णं पादिकमित्येके; अपरे च कुटजावलेहावापप्रमाणोहेनामलकादीनां षण्णां प्रत्येकं पलमावापः ॥ ९ ॥

नवायसमाह—त्रिफलेत्यादि। कृष्णायश्चूर्णस्य कृष्णलौहचूर्णस्य। जाठर्य्यं स्थौल्यम् ॥ १० ॥

शालसारादीत्यादि। शालसारादिद्रव्यपलशतस्य जलचतुर्द्रोणे पक्वस्य चतुर्थांशावशेषितो निर्य्यूहः क्वाथः। तस्मिन् पूते शीते पञ्चशतपलप्रमाणं मधु मदंर माक्षिकस्येदं माक्षिकम्, मध्वासवं प्रक्षिपेत्। गयी तु मध्वेव मन्यते। फाणितीभावमापन्नमिति क्रियाविशेषणम्। गुडं शोधितमेव चेति गुडस्तस्मिन्नेव च कषाये विलापितः पूतः शोधित उच्यते, तादृशस्य गुडस्यापि पञ्चाशत्पलानि। पिप्पल्यादिचूर्णस्य पञ्चविंशतिपलानि, तावन्त्येव लौहपत्राणाम्। गयी तु तत्र पुराणस्य मधुनः कषायमधुरीभावमात्रं प्रमाणम्। मधुमान एव जीर्णगुडः। पिप्पल्यादिचूर्णमानन्तु यावता

ऐकध्यमावपेत् कुम्भे संस्कृते घृतभाविते ।
पिप्पलीचूर्णमधुभिः प्रलिप्तेऽन्तः शुचौ दृढ़े ॥
श्लक्ष्णानि तीक्ष्णलोहस्य तत्र पत्राणि बुद्धिमान् ।
खदिराङ्गारतप्तानि बहुशः सन्निपातयेत् ॥
सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत् ।
मासांस्त्रींश्चतुरो वापि यावदा लोहसंक्षयात् ॥
ततो जातरसं तं तु प्रातःप्रातर्यथाबलम् ।
निषेवेत यथायोगमाहारश्चास्य कल्पयेत् ॥
काश्यकृद् बलिनामेष सन्नस्याग्नेः प्रसाधकः ।
शोफनुद् गुल्महृत् कुष्ठ-मेहपाण्ड्वामयापहः ॥
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनः ।
अभिष्यन्दापहरणो लोहारिष्टो महागुणः ॥ ११ ॥
प्रमेहिणो यदा मूत्रमपिच्छिलमनाविलम् ।
विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ १२ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने प्रमेहपिड़काचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

नातिव्यक्तं कटुत्वञ्च भवति । मधुप्रमाणपादिकं पिप्पल्यादिचूर्णस्य मानं, लौहपत्रप्रमाणमपि तावदेव इत्यन्ये । आहारञ्चास्य कल्पयेत् विशिष्टदोषारब्धरोगजातिप्रत्यनीकम् । अत्राभिष्यन्दशब्देन मूत्रनिःस्यन्द इत्यभिधीयते ॥ ११ ॥

प्रमेहिण इत्यादि । अनाविलं प्रसन्नम् । विशदं रूक्षम् । मूत्रस्य कटुतिक्तत्वं पिपीलिका-मक्षिकादीनामपसर्पणेन ज्ञातव्यम् । अन्ये त्वेवं पठन्ति—“प्रमेहिणो यदा मूत्रमनाविद्ध-मपिच्छिलम्” इति, तत्रापि अनाविद्धं प्रसन्नम् ॥ १२ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे प्रमेहपिड़काचिकित्सितव्याख्यानाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथातो मधुमेहचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

मधुमेहित्वमापन्नं भिषग्भिः परिवर्ज्जितम् ।
योगेनानेन मतिमान् प्रमेहिणमुपाचरेत् ॥ २ ॥
मासे शुक्रे शुचौ चैव शैलाः सूर्य्यांशुतापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ।
शिलाजत्विति विख्यातं सर्व्वव्याधिविनाशनम् ॥
त्रप्वादीनान्तु लोहानां षण्णामन्यतमान्वयम् ।
ज्ञेयं स्वगन्धतश्चापि षड्योनि प्रथितं क्षितौ ॥
लोहाद् भवति तद् यस्माच्छिलाजतु जतुप्रभम् ।
तस्य लोहस्य तद्वीर्य्यं रसश्चापि बिभर्त्ति तत् ॥
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ।
यथा तथा प्रयोगेऽपि श्रेष्ठे श्रेष्ठगुणाः स्मृताः ॥

मधुमेहित्वमित्यादि । शुक्रो मासो ज्यैष्ठः । शुचिराषाढः । यद्यप्यन्यस्मिन् काले शिलाजतु-प्रस्रवणं दृश्यते, तथापि शुचिशुक्रमासपरिगृहीतं खरतरतरणिकिरणतापिताभ्यः शिलाभ्यो गुणवत्तरं भवति । जतुप्रकाशं लाक्षाप्रकाशम् । सर्व्वव्याधिः मधुमेहादिः । ननु शिलानां रूक्ष-कठिनानां कथं स्निग्धद्रवः स्वरसः सम्भवतीत्याह - त्रप्वादीनामित्यादि । त्रप्वादीनि त्रपुसीसताम्र-रूप्यसुवर्णकृष्णलौहानि षट्, तेषामन्यतमान्वयमेकतमान्वयम् । षड्योनि षट्कारणकम् । यत् तु शिलाजतुचतुष्टयं तन्त्रान्तरे प्रोक्तम्, तत् तेषां चतुर्णामपि मुख्यानां गुणख्यापनाय, नान्ययोनिशिलाजतुनिवारणाय । रसश्चापीति चकारेण वर्णप्रभावञ्च बिभर्त्तीत्यनुक्तं समु-च्चीयते । तत्र यल्लौहजातं स्यात् तल्लौहस्यैव वीर्य्यरसौ बिभर्त्ति । तानि च लौहानि सुवर्णादीनि, तद्गुणांस्तु सुश्रुताध्यायिनोऽन्नपानविध्यध्यायान्ते पठन्ति । यद्यपि जतुप्रकाशो लाक्षासदृशः शिलास्रावः शिलाजतुशब्देनोक्तः, तथापि सुवर्णादिनिर्य्यासेऽपि शिलाजत्विति सम्प्रयोगः सर्षपादि-तैलवदौपचारिको द्रष्टव्यः । तेषां परस्परापेक्षं प्राधान्यं निर्द्दिशन्नाह—त्रप्वित्यादि । त्रपुसीसयो-र्लौहत्वस्य नातिप्रसिद्धत्वादय इति विशेषणम् । त्रपुसीसायःसमुद्भवं शिलाजतु त्रपुसीसायसं, तत् आदिभूतं येषां तानि त्रपुसीसायसादीनि त्रपुसीसताम्ररूप्यसुवर्णकृष्णलौहजानि । प्राधान्यं तेषां

तत् सर्व्वं तिक्तकटुकं कषायानुरसं सरम्।
कटुपाक्युष्णवीर्य्यञ्च शोषणं छेदनं तथा॥
तेषु यत् कृष्णमलघु स्निग्धं निःशर्करञ्च यत्।
गोमूत्रगन्धि यच्चापि तत् प्रधानं प्रचक्षते॥ ३॥
तद् भावितं सारगणैर्हृतदोषो दिनोदये।
पिवेत् सारोदकेनैव श्लक्ष्णपिष्टं यथाबलम्।
जाङ्गलेन रसेनान्नं तस्मिन् जीर्णे तु भोजयेत्॥ ४॥
उपयुज्य तुलामेवं गिरिजादमृतोपमात्।
वपुर्वर्णबलोपेतो मधुमेहविवर्ज्जितः।
जीवेद् वर्षशतं पूर्णमजरोऽमरसन्निभः॥
शतं शतं तुलायान्तु सहस्रं दशतौलिके।
भल्लातकविधानेन परिहारविधिः स्मृतः॥
मेहं कुष्ठमपस्मारमुन्मादं श्लीपदं गरम्।
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम्॥
अपोहत्यचिरात् कालाच्छिलाजतु निषेवितम्।
न सोऽस्ति रोगो यश्चापि निहन्यान्न शिलाजतु॥
शर्करां चिरसम्भूतां भिनत्ति च तथाश्मरीम्।
भावनालोड़ने चास्य कर्त्तव्ये भेषजैर्हितैः॥ ५॥

कुंत इत्याह—श्रेष्ठे श्रेष्ठगुणा इति। श्रेष्ठे श्रेष्ठद्रव्ये। इदानीं सामान्यलक्षणाभिधानमाह—तत् सर्व्वमित्यादि। शोषणं दुष्टरक्तादेः। छेदनं कफग्रन्थ्यादिच्छेदकृत्। तेषां प्रधानलक्षणमुपादानार्थमुपदिशन्नाह—तेष्वित्यादि॥ १-३॥

इदानीमस्योपयोगविधिं निर्द्दिशन्नाह—तद् भावितमित्यादि। सारगणैः शालसारादिभिः। तत्र भाव्यद्रव्यसमं क्वथनीयमष्टगुणे जले निःक्वाथ्याष्टभागावशिष्टेन कषायमानम्। दशाहं विंशतिदिनानि त्रिंशद्दिनानि वा भावयेत्। हृतदोषः संशुद्धदेहः। दिनोदये प्रभाते एव। सारोदकेनैव पिबेत्। जाङ्गलेन रसेन भोजयेत्; अन्यथा शोषणच्छेदनत्वाद् वातकोपः स्यात्। तुला पलशतम्। गिरिजात् शिलाजतुनः। न सोऽस्ति रोग इत्यत्र रोगशब्दो दोषेषु वर्त्तते। अथवा शस्त्रसाध्येषु अश्मर्य्यादिषु। नानाविधस्वास्थ्यकरद्रव्यभावनाञ्चोपदिशन्नाह—भावनालोड़ने इत्यादि॥ ४।५॥

एवञ्च माक्षिकं धातुं तापीजममृतोपमम् ।
मधुरं काञ्चनाभासमम्लं वा रजतप्रभम् ॥
पिबन् हन्ति जराकुष्ठ-मेहपाण्डामयक्षयान् ।
तद्भावितः कपोतांश्च कुलत्थांश्च विवर्ज्जयेत् ॥ ६ ॥
पञ्चकर्म्मगुणातीतं श्रद्धावन्तं जिजीविषुम् ।
योगेनानेन मतिमान् साधयेदपि कुष्ठिनम् ॥ ७ ॥
वृक्षास्तुवरका ये स्युः पश्चिमार्णवभूमिषु ।
वीचीतरङ्गविक्षेप-मारुतोद्धृतपल्लवाः ॥
तेषां फलानि गृह्णीयात् सुपक्कान्यम्बुदागमे ।
मज्जां तेभ्योऽपि संहृत्य शोषयित्वा विचूर्ण्य च ।
तिलवत् पीड़येद् द्रोण्यां स्रावयेद् वा कुसुम्भवत् ॥
तत्तैलं संहृतं भूयः पचेदा तोयसंक्षयात् ।
अवतार्य्य करीषे च पक्षमात्रं निधापयेत् ॥
स्निग्धः स्विन्नो हृतमलः पक्षादूर्द्धं प्रयत्नवान् ।
चतुर्थभक्तान्तरितः शुक्लादौ दिवसे शुभे ॥ ८ ॥

शिलाजतुप्रयोगेणव माक्षिकधातुप्रयोगमतिदिशन्नाह—एवञ्च माक्षिकमित्यादि । तापीजं तापीनदीजं सुवर्णमाक्षिकं रजतमाक्षिकञ्च । तद्भावित इत्यादि ताभ्यां शिलाजतुमाक्षिकधातुभ्यां भावितो व्याप्तदेहः कुलत्थकपोतौ यावज्जीवं विवर्ज्जयेत् । इदानीं मधुमेहहरमपि योगमुद्दिशन्नाह—पञ्चेत्यादि । पञ्चकर्म्मगुणातीतमित्यत्र वमनादीनां पञ्चकर्म्मगुणानामप्राप्तफलमित्येके ; तत् तु न सम्यक्, यतः पञ्चशब्देन पञ्चमधात्वस्थिस्थितं कुष्ठमुक्तम्, तत्र कर्म्माणि संशोधनसंशमनाभ्यङ्ग-गुग्गुलुशिलाजतुप्रभृतीनि, तेषां गुणाः फलानि, तान्यतीतम् । एतदुक्तं भवति—अस्थिगतं कुष्ठं संशोधनादिभिरप्राप्तविशेषं साधयेदिति । अन्ये तु पूर्व्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियासमूहः पञ्चकर्म्माणीति मन्यन्ते । प्रमेहस्य तु पञ्चकर्म्मगुणाः पश्चिमाध्याये कथिताः । जिजीविषुं प्रमेहिणं तावत् साधयेदेव कुष्ठिनमपीत्यपिशब्दार्थः ॥ ६ । ७ ॥

इदानीं जन्मभूमिमारभ्य तुवरकरसायनकल्पं प्रस्तौति वृक्षा इत्यादि । पश्चिमार्णवभूमिषु पश्चिमसमुद्रभूमिषु । वीचीतरङ्ग इत्यादि । ऊर्म्मिपरम्पराविक्षेपपवनोत्कम्पितपल्लवाः समुद्रोदकस्यात्यासन्ना इत्यर्थः । तेषां फलेभ्यो मज्जानमादाय कुसुम्भवद् कुसुम्भकुसुमवत् तैलं वा गालयेत् । तत्तैलगालनं सलिलापचयं यावत् । तत् तु करीषराशौ पक्षं निधातुं प्रयोजयेत्, विशिष्टतमशक्त्युत्पादनार्थम् । हृतं मलं पुरीषं कफादयोऽपि यस्य स तथा ; तत्र कफे वमनमेव, वमनात् पक्षादेव विरेचनम् । यदाहुः—पक्षाद विरेको वान्तस्येति । विरेचनादपि पक्षादेव तौवरकं तैलं, तस्यापि

मन्त्रपूतस्य तलस्य पिबेन्मात्रां यथाबलम्।
तत्र मन्त्रं प्रवक्ष्यामि येनेदमभिमन्त्र्यते ॥
मज्जसार महावीर्य्य सर्व्वान् धातून् विशोधय।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥
तेनास्योर्द्ध मधश्चापि दोषा यान्त्यसकृत् ततः।
अस्नेहलवणां सायं यवागूं शीतलां पिबेत् ॥
पञ्चाहं प्रपिबेत् तलमनेन विधिना नरः।
पक्षं परिहरेच्चापि मुद्गयूषौदनाशनः।
पञ्चभिदिवसैरेवं सर्व्वकुष्ठैर्विमुच्यते ॥ ९ ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम्।
निहन्ति पूर्व्ववत् पक्वं पिबेन्मासमतन्द्रितः ॥
तेनाभ्यक्तशरीरश्च कुर्व्वीताहारमीरितम्।
भिन्नस्वरं रक्तनेत्रं विशीर्णं क्रिमिभक्षितम्।
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ॥
सर्पिर्मधुयुतं पीतं तदेव खदिराम्बुना।
पक्षिमांसरसाहारं करोति द्विशतायुषम् ॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम्।
वपुष्मन्तं श्रुतिधरं करोति त्रिशतायुषम् ॥
शोधयन्ति नरं पीता मज्जानस्तस्य मात्रया।
महावीर्य्यस्तुवरकः कुष्ठमेहापहः परः ॥ १० ॥

शोधनत्वात्। एतेन पेयादिसंसर्ज्जनक्रमेण सञ्जातबलस्तुवरकस्नेहं पिबेदित्यर्थः। चतुर्थभक्तान्तरित इति पक्षादूर्द्ध्वं प्रथमेऽह्नि सायं प्रातः प्रकृतिभोजनद्वयम्। द्वितीयेऽह्नि प्रातर्भुक्त्वा सायं भोजनं न कार्य्यम्, फलाम्लमुष्णोदकं वा पाययेत् सायं भोजनस्थाने, ततस्तृतीयेऽहनि लघु-कोष्ठाय प्रातः स्नेहं दद्यात्, एवं चतुर्थभक्तमन्तरितं भवतीत्यर्थः। तैलस्यापि पिबेन्मात्रां पाणितलप्रमाणां कर्षप्रमाणामित्यर्थः। अस्नेहलवणामल्पस्नेहलवणाम्। यतो नञ् ईषदर्थे। पक्षं परिहरेत्, क्रोधादीनिति शेषः। महावीर्य्यो महाप्रभावः। परं उत्कृष्टतमः ॥ ९—१० ॥

सान्तर्धूमस्तस्य मज्जा तु दग्धः क्षिप्तस्तैले सैन्धवश्चाञ्जनश्च ।
ऐश्वर्यं * हन्याद्वर्त्मनक्तान्ध्यकाचान् नीलीरोगं तमिरश्चाञ्जनेन ॥ ११ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने मधुमेहचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

सान्तर्धूम इत्यादि । तैले तुवरकोत्थे, सैन्धवं लवणम् । अञ्जनं स्रोतोऽञ्जनम्, तस्योत्पत्तिस्थानं वर्णसा सिन्धुश्च महानदः । अथवा वर्णसोद्भवाञ्जनपरिहाराय सैन्धवमुक्तम्, तेन सिन्धु-महानदोद्भवमञ्जनमेव ग्राह्यम् । मज्जादिकं त्रितयमन्तर्धूमेन दग्धम् । एतेन तुवरकस्य षड्विधः प्रयोग उक्तः; तद्यथा—तैलं पञ्चाहिकप्रयोगेण कुष्ठहर एकः । तथा तदेव खदिराम्बुसिद्धं विशिष्टावस्थकुष्ठे द्वितीयः । तथा तदेव सर्पिर्मधुखदिरकषायविधिना तृतीयः । तथा परोऽपि पञ्चाशदाह्निको नस्यप्रयोगो रासायनिकश्चतुर्थः । मज्जप्रयोगः पञ्चमः, तथाहि शोधयन्ति नरं पीता इत्यादि । अञ्जनप्रयोगः षष्ठः सान्तर्धूम इत्यादि ॥ ११ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
मधुमेहचिकित्सितव्याख्यानाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

* पैल्यमिति वा पाठः ।

# चतुर्द्दशोऽध्यायः ।

अथात उदराणां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अष्टावुदराणि पूर्व्वमुद्दिष्टानि । तेष्वसाध्यं बद्धगुदं परिस्रावि च, अवशिष्टानि कृच्छ्रसाध्यानि, सर्व्वाण्येव च प्रत्याख्यायोपक्रमेत । तेष्वाद्यश्चतुर्वर्गो भेषजसाध्यः, उत्तरः शस्त्रसाध्यः । कालप्रकर्षात् सर्व्वाण्येव शस्त्रसाध्यानि वर्ज्जयितव्यानि वा ॥ २ ॥

उदरी तु गुर्व्वभिष्यन्दिरूक्षविदाहिस्निग्धपिशितपरिषेकावगाहान् परिहरेत् । शालिषष्टिकयवगोधूमनीवारान् नित्यमश्नीयात् ॥ ३ ॥

तत्र वातोदरिणं विदारिगन्धादिसिद्धेन सर्पिषा स्नेहयित्वा तिल्वकविपक्वेनानुलोम्य चित्राफलतैलप्रगाढ़ेन विदारिगन्धाकषायेणास्थापयेदनुवासयेच्च, शाल्वणेन चोपनाहयेदुदरम् । भोजयेच्चैनं विदारिगन्धादिसिद्धेन क्षीरेण जाङ्गलरसेन चाभीक्ष्णं स्वेदयेत् ॥ ४ ॥

निदानस्थाने कथितेऽप्यष्टत्वेऽत्र पुनरष्टसंख्याख्यापनं प्लीहोदरयकृदाल्युदरयोश्चिकित्सितैकत्वप्रख्यापनाय । अवशिष्टानि कृच्छ्रसाध्यानीति तेष्वपि यथोत्तरं कृच्छ्रकृच्छ्रतरत्वं ज्ञेयम् । तथाच— "वातात् पित्तात् कफात् प्लीह्नः सन्निपातात् तथोदकात् । परं परं कृच्छ्रतरमुदरं भिषगादिशेत्" इति । सर्व्वाण्येवेति षडिति केचित्, षट्स्वेव कृच्छ्रत्वप्रतिपादनात् । बद्धगुदपरिस्राविभ्यां सहाष्टावपीत्यन्ये, तयोरपि चिकित्सितोक्तेः, सर्व्वग्रहणाच्च । तेष्वित्यादि आद्यश्चतुर्व्वर्गः वातपित्तकफदूषीविषनिमित्तानि चत्वारि उदराणि । उत्तरस्तु प्लीहोदरबद्धगुदच्छिद्रोदकोदराणि । कालप्रकर्षादिति भेषजसाध्यकालातिक्रमात् शस्त्रसाध्यकालातिक्रमाच्च । सर्व्वाण्येव औषधसाध्यान्यपि शस्त्रसाध्यानि स्युः । शस्त्रसाध्यानि वर्ज्जयितव्यानीति शस्त्रसाधनानि वर्ज्जनार्हाणि वेत्यर्थः ॥ १। २ ॥

उदरीत्यादि । दोषधातुमलस्रोतसां क्लेदप्राप्तिजननमभिष्यन्दि । विदाहि काञ्जिकादि । स्निग्धं पिशितं मेदुरमांसम् । नीवार उड़िकाधान्यम् ॥ ३ ॥

तत्रेत्यादि । तिल्वकः पट्टिकारोध्रः । अनुलोम्य विरेच्य । चित्राफलतैलं दन्तीफलतैलम् । आस्थापयेत् निरूहयेत्, अनुवासयेच्च चित्राफलतैलेनैव । शाल्वणेनोपनाहयेत् बध्नीयात् । स्वेदयेच्चाभीक्ष्णमिति एवमग्रेतने कफारब्धेऽपि स्वेदो विधेयः, नतु पित्तारब्धे, स च स्वेद आ जलप्राप्तेः, अत ऊर्द्ध्वं सर्व्वेषामस्वेद्यत्वम् । कथमत्रोदरिणः स्नेहस्वेदास्थापनानुवासनानि सुश्रुताचार्य्यः प्राह, अग्रे 'अस्नेह्या अस्वेद्या नानुवास्या नास्थाप्याः' इति पठितत्वात्; एतन्न, यतश्छिद्रोदकोदरिणोरेव तत्र निषेधोऽन्येषु यथावस्थं स्नेहादयः प्रयोज्या इति ॥ ४ ॥

पित्तोदरिणन्तु मधुरगणविपक्वेन सर्पिषा स्नेहयित्वा श्यामात्रिफला-त्रिवृद्विपक्वेनानुलोम्य शर्करामधुघृतप्रगाढ़ेन न्यग्रोधादिकषायेणास्थापयेदनु-वासयेच्च, पायसेन उपनाहयेदुदरं, भोजयेच्चैनं विदारिगन्धादिसिद्धेनं पयसा ॥ ५ ॥

श्लेष्मोदरिणन्तु पिप्पल्यादिकषायसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीरविपक्वे-नानुलोम्य त्रिकटुकमूत्रक्षारतैलप्रगाढ़ेन मुष्ककादिकषायेणास्थापयेदनुवास-येच्च, शणातसीधातकीकिण्वसर्षपमूलकवीजकल्कैश्चोपनाहयेदुदरं, भोजयेच्चैनं त्रिकटुकप्रगाढ़ेन कुलत्थयूषेण पायसेन वा, स्वेदयेच्चाभीक्ष्णम् ॥ ६ ॥

दूष्योदरिणन्तु प्रत्याख्याय सप्तलाशङ्खिनीस्वरससिद्धेन सर्पिषा विरेचये-न्मासमर्द्धमासं वा, महावृक्षक्षीरसुरागोमूत्रसिद्धेन वा ; शुद्धकोष्ठन्तु मदनाश्व-मारकगुञ्जाकाकादनीमूलकल्कं पाययेत्, इक्षुकाण्डानि वा कृष्णसर्पेण दंशयित्वा भक्षयेद् वल्लीफलानि वा, मूलजं कन्दजं वा विषमासेवयेत् । तेनागदो भवत्यन्यं वा भावमापद्यते ॥ ७ ॥

पित्तोदरिणमित्यादि । मधुरगणः काकोल्यादीनि । श्यामा वृद्धदारकः । क्षीरसिद्धास्तण्डुलाः पायसः ॥ ५ ॥

श्लेष्मोदरिणमित्यादि । मुष्ककपलाशधावन्यादिर्मुष्ककादिः । आस्थापनवर्गसिद्धेन तैलेनानु-वासनम् । किण्वं सुरावीजम् ॥ ६ ॥

सान्निपातिकचिकित्सितमुपदिशन्नाह—दूष्योदरिणमित्यादि । शङ्खिनी यवतिक्ताभेदः । सान्नि-पातिकोदरे स्नेहादि यदुक्तं तद् वाताद्युदरोदितभेषजगणैः सर्व्वं साधनीयम् । यदाह चरकः— "सन्निपातोदरे सर्व्वास्तथोक्ताः कारयेत् क्रियाः" इति । लघुवाग्भटेऽपि "सन्निपातोदरे कुर्य्यान्नाति-क्षीणवलानिले । दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम्" इति । महावृक्षेत्यादि । विरेचये-दिति शेषः । महावृक्षः सेहुण्डः । महावृक्षक्षीरमात्रा अल्पप्रमाणम् । शुद्धेत्यादि । गुञ्जा चिरि-विण्टिका । काकादनी वायसतिन्दुका । इक्षुकाण्डानीत्यादि । यथा मदात्यये मद्यपानम्, अग्निदग्धे अग्निस्वेदः, अतीसारे स्विन्नपथ्यादि, छर्द्यां वमनम्, सर्पविषे विषभक्षणम्, तद्वत् विषाद्युत्पन्नो-दरेऽपि कृष्णसर्पदष्टेक्षुकाण्डभक्षणं विषभक्षणं वा । वल्लीफलानि कर्कटीप्रभृतीनि । अन्यं वा भावमापद्यते मरणं प्राप्नोति । कर्म्मेदं दारुणम् । अक्रियायां ध्रुवं मरणं क्रियायां संशये सत्येन कुर्य्यात्, तत्रापीश्वरानुज्ञातेनैव कार्य्यम् ॥ ७ ॥

भवति चात्र।

कुपितानिलमूलत्वात् सञ्चयित्वान्मलस्य च।
सर्व्वोदरेषु शंसन्ति बहुशस्त्वनुलोमनम् ॥ ८ ॥

अत ऊर्द्ध्वं सामान्ययोगान् वक्ष्यामः। तद् यथा—एरण्डतैलमहरहर्मासं द्वौ वा केवलमूत्रयुक्तं क्षीरयुक्तं वा सेवेतोदकवर्ज्जी, माहिषं वा मूत्रं क्षीरेण निराहारः सप्तरात्रम्। उष्ट्रीक्षीराहारो वान्नवारिवर्ज्जी पक्षं पिप्पलीं वा मासं पूर्व्वोक्तेन विधानेनासेवेत। सैन्धवाजमोदायुक्तं वा निकुम्भतैलम्। आर्द्रक-शृङ्गवेररसपात्रशतसिद्धं वा वातशूलेऽवचार्य्यम्। शृङ्गवेररसविपक्वं क्षीर-मासेवेत। चव्यशृङ्गवेरकल्कं वा पयसा सरलदेवदारुचित्रकमेव वा। मुरङ्गी-शालपर्णीश्यामापुनर्नवाकल्कं वा। ज्योतिष्कफलतैलं वा क्षीरेण स्वर्ज्जिका-हिङ्गुमिश्रं पिबेत् ॥ ९ ॥

गुड़द्वितीयां वा हरीतकीं भक्षयेत्। स्नुहीक्षीरभावितानां वा पिप्पलीनां सहस्रं कालेन, पथ्याकृष्णाचूर्णं वा स्नुहीभावितमुत्कारिकां पक्वां दापयेत् ॥१०॥

कुपितेत्यादि। सर्व्वोदररोगाण्येव मलवृद्ध्या वर्त्तन्ते, तस्मात् संशोधनं शस्तम्, तच्च बहुशोऽनल्पशः ॥ ८ ॥

अत इत्यादि। वारिवर्ज्जी सप्ताहं माहिषं मूत्रं क्षीरेण कृतोदकान्नकार्य्यः। केचिदत्र माहिष-मेव क्षीरमाहुः, अपरे पुनर्माहिषस्याग्निमान्द्यादिकरणाद् गव्यमेवाहुः। गूढ़पदभङ्गटिप्पने ईदृशं व्याख्यातम्—माहिषं मूत्रं क्षीरेण गव्येन पिबेत्। प्रमादव्याख्यानमिदम्, यस्माज्जेजटाचार्य्या-दीनामनुमतं न भवति। उष्ट्रीत्यादि। केचिदत्र क्षीरं त्रिकटुकसंयुक्तमाहुः, तन्त्रान्तरप्रामाण्यात्। पिप्पलीमित्यादि पूर्व्वोक्तेन वातशोणितोक्तेन। सैन्धवाजमोदाप्रक्षेपयुक्तं वा दन्तीतैलम, तदेव तैलं आर्द्रकशृङ्गवेररसादकशतपक्वं वातशूले वातरुजि अवचार्य्यम्। अन्ये तु तिलतैलमेव साधयन्ति, तन्त्रान्तरप्रामाण्यात्। आर्द्रशृङ्गवेरमार्द्रकं, तद्रसं चतुर्गुणम्। विपक्वं क्षीरावशिष्टं पक्वम्। चव्येत्यादि। पयसा चतुर्गुणेनैव। सरलदेवदारुचित्रकमेव पयसेत्यर्थः। मुरङ्गयादयो वा तथैव च। मुरङ्गी शोभाञ्जनकः। श्यामा वृद्धदारकः। ज्योतिष्कः काकमर्द्दनिका। हिङ्गुमाषकस्वर्ज्जिका-क्षारमाषकचतुष्टयसंयुक्तं मासमर्द्धमासं वेति शेषः। स्नुहीत्यादि। अत्र त्रिसप्तकृत्वो भावना। स्नुही सेहुण्डः, स च बहुकण्टकः श्रेष्ठः। कालेनेति यावता कालेन शक्नुयाद् भक्षयितुं पिप्पली-सहस्रमेकद्वित्रिचतुष्टयत्वेन विरेकार्थम्। उत्कारिकां लप्सिकाम् ॥ ९ । १० ॥

हरीतकीचूर्णं प्रस्थमाढ़के घृतस्यावाप्याङ्गारेष्वभिविलाप्य खजेनाभिमथ्यानुगुप्तं कलार्द्धमासं यवपल्ले वासयेत्, ततश्चोद्धृत्य परिस्राव्य हरीतकीक्वाथाम्लदधीन्यावाप्य विपचेत्, तद् यथायोगं मासमर्द्धमासं वा पाययेत् ॥ ११ ॥

गव्ये पयसि महावृक्षक्षीरमावाप्य विपचेत्, विपक्वञ्चावतार्य्य शीतीभूतं मन्थानेनाभिमथ्य नवनीतमादाय भूयो महावृक्षक्षीरेणैव विपचेत्, तद् यथायोगं मासं मासार्द्धं वा पाययेत् ॥ १२ ॥

चव्य-चित्रक-दन्त्यतिविषाकुष्ठ सारिवा-त्रिफलाजमोदहरिद्राशङ्खिनीत्रिवृत्-त्रिकटुकानामर्द्धकार्षिका भागाः, राजवृक्षफलमज्ज्ञामष्टौ कर्षाः, महावृक्षक्षीरपले द्वे, गवां क्षीरमूत्रयोरष्टावष्टौ पलानि ; एतत् सर्व्वं घृतप्रस्थे समावाप्य विपचेत् । तद् यथायोगं मासमर्द्धमासं वा पाययेत् ॥ १३ ॥

एतानि तिल्वकघृतचतुर्थानि सर्पींष्युदरगुल्मविद्रध्यष्ठीलानाहकुष्ठोन्मादापस्मारेषूपयोज्यानि विरेचनार्थम् । मूत्रासवारिष्टसुराश्चाभीक्ष्णं महावृक्षक्षीरसंभृताः सेवेत, विरेचनद्रव्यकषायं वा शृङ्गवेरदेवदारुप्रगाढ़म् ॥ १४ ॥

वमनविरेचनद्रव्याणां पालिका भागाः पिप्पल्यादिवचादि-हरिद्रादिपरिपठितानाञ्च द्रव्याणां श्लक्ष्णपिष्टानां यथोक्तानाञ्च लवणानाम् । तत् सर्व्वं

हरीतकीत्यादि । खजः मन्थानदण्डम् । हरीतकीक्वाथकाञ्जिकदधीनि प्रत्येकं घृतचतुर्गुणानि ॥ ११ ॥

गव्य इत्यादि । गव्ये पयसीति आढ़कप्रमाणे, महावृक्षक्षीरन्तु प्रस्थम्, महावृक्षः सेहुण्डः, तज्जञ्च नवनीतं महावृक्षक्षीरपादम् । द्रवानुक्तौ जलमत्र चतुर्गुणम् ॥ १२ ॥

चव्येत्यादि । त्रिफलात्रिकटुकद्रव्याणां प्रत्येकमर्द्धकार्षिका भागाः, न हि त्रिफला त्रिकटुकं वा द्रव्यमेकमिति । केचिद् द्रवस्याल्पत्वाज्जलमपि चतुर्गुणमित्याहुः । एषां विषयमाह—एतानीत्यादि । तिल्वकघृतं वातव्याध्युक्तं चतुर्थं येषां तानि तिल्वकघृतचतुर्थानि । मूत्रत्यादि । मूत्रद्रवेणासवादयोऽनुकल्पेन महावृक्षक्षीरप्रस्थप्रक्षेपेण सम्यक् कृताः । विरेचनद्रव्यकषायमित्यादि । त्रिवृदादिकषायं शुण्ठीदेवदारुचूर्णकर्षप्रक्षेपाढ्यम् । इदानीमनलदीपनीं कुपितानिलसेवितमलानुलोमनीमाभ्यन्तरीं मूत्रवर्त्तिं निर्द्दिशन्नाह—वमनेत्यादि । संशोधनसशमनीयाध्यायोदितानि वमनविरेचनद्रव्याणि मदनफलादित्रिवृदादीनि । द्रव्यसंग्रहणीयाध्याये पिप्पल्यादिवचादिहरिद्रादयो निर्द्दिष्टाः, लवणानि अन्नपानाध्याये परिपठितानि सैन्धवादीनि, मूत्रगणो गोमूत्रादिर्द्रवद्रव्यपठितः ; तेषां यथालाभं पालिका भागाः । यथालाभमेव गवादीनां

मूत्रगणे प्रक्षिप्य महावृक्षक्षीरप्रस्थश्च मृद्वग्निना घट्टयन् विपचेदमदग्धकल्कम्। तत् साधुसिद्धमवतार्य्य शीतीभूतमक्षमात्रा गुटिका वर्त्तयेत्; तासामेकां द्वे तिस्रो वा गुटिका बलापेक्षया मासांस्त्रींश्चतुरो वा सेवेत। एषानाहवर्त्तिक्रिया विशेषेण महाव्याधिषूपयुज्यते, कोष्ठजांश्च क्रिमीनपहन्ति, कासश्वासक्रिमिकुष्ठ-प्रतिश्यायारोचकाविपाकोदावर्त्तांश्च नाशयति॥ १५॥

मदनफलमज्जकुटज-जीमूतकेक्ष्वाकु-धामार्गवत्रिवृत्त्रिकटुसर्षप-लवणानि महावृक्षक्षीरमूत्रयोरन्यतरेण पिष्टाङ्गुष्ठमात्रां वर्त्तिं कृत्वोदरिण आनाहे तललवणाभ्यक्तगुदस्यैकां द्वे वा पायौ निदध्यात्। एषानाहवर्त्तिक्रिया वातमूत्र-पुरीषोदावर्त्ताध्मानानाहेषु विधेया॥ १६॥

प्लीहोदरिणः स्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ कूर्पराभ्यन्तरतः शिरां विध्येत्, विमर्दयेत् पाणिना प्लीहानं रुधिरस्यन्दनार्थम्। ततः संशुद्धदेहं समुद्र-शुक्तिकाक्षारं पयसा पाययेत्। हिङ्गुसौवर्च्चिकाक्षारेण स्रुतेन पलाशक्षारेण वा यवक्षारम्। पारिजातकेक्षुरकापामार्गक्षारं वा तैलसंसृष्टम्। शोभाञ्जन-कषायं वा पिप्पलीसैन्धवचित्रकयुक्तम्। पूतिकरञ्जक्षारं वाम्लस्रुतं विड़-लवणपिप्पलीप्रगाढ़म्॥ १७॥

मूत्रेण व्यस्तसमस्तेन पिष्ट्वा चतुर्गुणैरष्टगुणैर्वा विपाच्यम्। अङ्गुष्ठप्रमाणा वर्त्तयः कर्त्तव्याः। ताः पुनरधममध्यमोत्तमपुरुषादिबलापेक्षया एकद्वित्रिसंख्योपलक्षिता भक्षयितव्याः। तत्र च गवादि-मूत्रमेवानुपानम्। तासामभ्यासे कालावधिर्मासात्रयश्चत्वारो वा। फलन्तु मेहादिमहाव्याधिहरणं कोष्ठक्रिमिहरणञ्च। अभ्यन्तरवर्त्तिप्रसङ्गेन फलवर्त्तिं निर्दिशन्नाह— मदनफलेत्यादि। जीमूतको देवदाली, इक्ष्वाकुः कटुतुम्बी, धामार्गवो महाकोशातकी। विपाच्येत्यनुवर्त्तनीयम्। पाके तु मूत्र-मेवानुवर्त्तनीयम्। पायौ गुदे। न केवलं उदरानाहे, वातमूत्रपुरीषोदावर्त्ताध्मानानाहेषु विधेयेति। क्षारमूत्रयोरन्यतरेण इत्यन्ये पठन्ति; तत्र क्षारः क्षारोदकं पेषणवचनात्॥ १३। १६॥

प्लीहेत्यादि। दधिभोजनं रक्तोत्क्लेशाय कफव्याधौ वमने कर्त्तव्ये प्राक् कफोत्क्लेशकर-द्रव्योपयोगवत्। कूर्परं भुजमध्यम्। रुधिरस्यन्दनार्थं शिराव्यधविध्युक्तोऽपि शिराव्यधः पुन-रिहोक्तः, प्रकरणवशात्; अतो न पुनरुक्तदोषमावहति—तत इत्यादि। संशुद्धदेहो वमनविरेचना-भ्याम्। पारिजातः प्रसिद्धः। इक्षुरकः कोकिलाक्षकः। पारिभद्रकेक्षुरकेति केचित् पठन्ति। शोभाञ्जनेत्यादि। अम्लं काञ्जिकम्। पूतिकरञ्जश्चिरबिल्वः, कण्टकीकरञ्ज इत्यन्ये। कल्पनामाह— कण्टकीकरञ्जक्षारमर्द्धपलमात्रं षड्गुणाम्लकाञ्जिकेन बहुशः परिस्रुतं, पिप्पलीविड़लवणादि-प्रक्षेपम्। विड़स्थाने सैन्धवमिति केचित् पठन्ति॥ १७॥

पिप्पलीपिप्पलीमूलचित्रकशृङ्गवेरयवक्षारसैन्धवानां पालिका भागा घृतप्रस्थं तत्तुल्यं क्षीरं तदैकध्यं विपाचयेत्। एतत् षट्पलकं नाम सर्पिः प्लीहाग्निषङ्गगुल्मोदरोदावर्त्तश्वयथुपाण्डुरोग-कासश्वासप्रतिश्यायोर्द्ध्ववातविषमज्वरानपहन्ति। मन्दाग्निर्वा हिङ्ग्वादिकं चूर्णमुपयुञ्जीत। यकृद्दाल्येऽप्येष एव क्रियाविभागः। विशेषतस्तु दक्षिणबाहौ शिराव्यधः॥ १८॥

मणिबन्धं सकृन्नाम्य वामाङ्गुष्ठसमीरिताम्।
दहेच्छिरां शरेणाशु प्लीह्नो वैद्यः प्रशान्तये॥ १९॥

बद्धगुदे परिस्राविणि च स्निग्धस्विन्नस्याभ्यक्तस्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या उदरं पाटयित्वा चतुरङ्गुलप्रमाणान्यन्त्राणि निष्कृष्य निरीक्ष्य बद्धगुदस्यान्त्रप्रतिरोधकरमश्मानं वालं वापोह्य मलजातं वा ततो मधुसर्पिर्भ्यामभ्यज्यान्त्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत्। परिस्राविण्यप्येवमेव शल्यमुद्धृत्यान्त्रस्रावान् संशोध्य तच्छिद्रमन्त्रं समाधाय कृष्णपिपीलिकाभिर्दंशयेत्। दष्टे च तासां कायानपहरेन्न शिरांसि। ततः पूर्ववत् सीव्येत्। सन्धानञ्च यथोक्तं कारयेत्। यष्टीमधुकमिश्रया च

पिप्पलीत्यादि। केचिदत्र भिषजश्चतुर्गुणपानीयमाददते, तन्न; जेज्जटेन निषिद्धत्वात्। अस्मिन् योगे कोलकुलत्थपूतिकरोहिणीक्वाथं द्विगुणमावाप्येति केचित् पठन्ति, तन्न; सोऽपि जेज्जटेन निषिद्धत्वात्। यकृद्दाल्य इत्यादि। मणिबन्धः पाणिमूलम्। सकृत् किञ्चित् नामयित्वा वामाङ्गुष्ठं प्रति सम्यगीरितां गतां सिराम्। शरः प्रसिद्धः। तमग्निवर्णं कृत्वा दहेत्॥ १८। १९॥

ततो बद्धगुदपरिस्राविणोरुपक्रमप्राप्तां चिकित्सामुपदिशन्नाह—बद्धगुद इत्यादि। स्विन्नस्येति द्रवस्वेदेन। नाभेर्वामत इत्यादि वामभागे नाभेरधस्तात् चतुरङ्गुलमपहाय रोमराज्याश्चतुरङ्गुलप्रमाणस्तिर्य्यगङ्गच्छेदः, तत्र लोम्नि तिर्य्यगवस्थितेऽनुलोमगञ्च शस्त्रपातनम्। अन्त्रप्रतिरोधकरमश्मानं वालं वापोह्य मलजातं वेति तत्र मलरोधकारणमाभ्यन्तरमश्मकेशतृणादि, बाह्यन्तु विषमविहाराभिघातादि, तेनान्त्रावयवानां परस्परसम्मूर्च्छनम्, तथान्त्रच्छेदनमिति परिस्राव्युदराद् विशेषः। अत एव परिस्राविण्येव पृथगन्त्रसन्धानं विशेषेण वक्ष्यति। तत्राभ्यन्तरेऽश्मादावत्यन्ताबाधकरे शल्यनिमित्तमेवान्त्रच्छेदं कृत्वाश्मादिशल्यमपहरेत्। अन्त्रच्छिद्रन्तु वक्ष्यमाणन्यायेनानुसन्धातव्यम्, सर्पिर्मध्वक्तं निष्कृष्टमन्त्रमङ्गुष्ठाङ्गुलिशलाकादिभिर्यथास्थानं स्थापयेत्। मूर्च्छितमन्त्रन्तु वीक्ष्य पाणिना बन्धावमोक्षेणानुलोमयेत्। बाह्यव्रणं रक्तसेचनादिविधिमपेक्ष्य सम्यक् सीव्येत्। तैलसर्पिर्द्रोणीवासनमुदरस्य व्रणित्वेनाध्मानक्लेशनिवृत्त्यर्थम्। गुदपिच्छास्रावनिवृत्त्या सम्यगन्त्रस्य सन्धानदृढीभावनिश्चयः, अन्यथा खल्वाहारेण तत्किञ्चिन्न वा पिपीलिकामुखदंशसन्धानं मृदु विघटेत सम्यक् सन्धावपि, तस्मादनुक्रमेणैव पयो-

कृष्णमृदावलिप्य बन्धेनोपचरेत्, ततो निवातमागारं प्रवेश्याचारिकमुपदिशेद् वासयेच्चनं तैलद्रोण्यां सर्पिर्द्रोण्यां वा पयोवृत्तिमिति ॥ २०। २१ ॥

उदकोदरिणस्तु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्य स्थितस्याप्तैः सुपरिगृहीतस्या कक्षात् परिवेष्टितस्याधो नाभेर्वामतश्चतुरङ्गुलमपहाय रोमराज्या व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढ़ं विध्येत्। तत्र त्रप्वादीनामन्यतमस्य नाड़ीं द्विद्वारां पक्षनाड़ीं वा संयोज्य दोषोदकमवसिञ्चेत्। ततो नाड़ीमपहृत्य तैललवणेनाभ्यज्य व्रणं बन्धेनोपचरेत्। न चैकस्मिन्नेव दिवसे सर्व्वं दोषोदकमपहरेत्; सहसा ह्यपहृते तृष्णाज्वराङ्गमर्दातिसारश्वासपाददाहा उत्पद्येरन्नापूर्य्यते वा भृशतरमुदरमसञ्जातप्राणस्य, तस्मात् तृतीयचतुर्थपञ्चमषष्ठाष्टमदशमद्वादशषोड़शरात्राणामन्यतममन्तरीकृत्य दोषोदकमल्पाल्पमवसिञ्चेत्। निःस्रुते च दोषे गाढ़तरमाविककौशेयचर्म्मणामन्यतमेन परिवेष्टयेदुदरम्। तथा नाध्मापयति वायुः। षण्मासांश्च पयसा भोजयेज्जाङ्गलरसेन वा। ततस्त्रीन् मासानर्द्धोदकेन पयसा फलाम्लेन जाङ्गलरसेन वा, अवशिष्टं मासत्रयमन्नं लघु हितं वा सेवेत। एवं संवत्सरेणागदो भवति ॥ २२ ॥

भवति चात्र।

आस्थापने चैव विरेचने च पाने तथाहारविधिक्रियासु।
सर्व्वोदरिभ्यः कुशलैः प्रयोज्यं क्षीरं शृतं जाङ्गलजो रसो वा ॥ २३ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने उदरचिकित्सितं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

जाङ्गलमांसरसभोजनेन त्रिभागार्द्धभागवारिणा च प्राकृतभोजनप्राप्तिः। सांशयिकं चैतत् कर्म्म, तस्मादापृच्छेश्वरं प्रत्याख्यायाचरेत् ॥ २० । २१ ॥

षण्मासानित्यादि। मासान् षट् यावत् लघु हितमन्नं पयसा क्षीरेण भोजयेत्। क्षीरेणैवोदककार्य्यम्, अर्द्धोदकेन पयसा दोषापेक्षया जाङ्गलरसेन वा लघु हितमन्नं भोजयेत्, ताभ्यामेवोदककार्य्यं कारयेत्। अवशिष्टं मासत्रयं लघु हितमन्नं भोजयेत्। उदकेनैवोदकं कार्य्यम्। चरकमतानुसारिणा वाग्भटेन क्षीरेणैव षण्मासान् "स्यात् क्षीरवृत्तिः षण्मासान् त्रीन् पेयां पयसा पिबेत्। त्रींश्चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा। अल्पशः स्नेहलवणं जीर्णश्यामाककोद्रवम् ॥" इति ॥ २२ ॥

कृतकर्म्मणो जलनिषेवं तदभावे चोक्तं द्रवं निर्द्दिशन्नाह— भवतीत्यादि। चकारद्वयकरणेनोदरपाटनादावनुक्तेऽपीति समुच्चीयते ॥ २३ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे उदररोगचिकित्सितव्याख्यानाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

अथातो मूढगर्भचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

नातः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणम्। अत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म्म कर्त्तव्यं स्पर्शेन। उत्कर्षणापकर्षणस्थानापवर्त्तनोद्वर्त्तनोत्कर्त्तनभेदनच्छेदनपीडनर्ज्जूकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं वाऽहिंसता। तस्मादधिपतिमापृच्छ्य परञ्च यत्नमास्थायोपक्रमेत। तत्र समासेनाष्टविधा मूढगर्भगतिरुद्दिष्टा—स्वभावगता अपि त्रयः सङ्गा भवन्ति, शिरसोऽंसयोर्जघनस्य वा वैगुण्यात्। जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत। निर्हर्त्तुमशक्ये च्यावनान् मन्त्रानुपश्रृणुयात्, तान् वक्ष्यामः ॥ २ ॥

इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं प्रमुञ्चतु स्त्रि ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥
मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्य्येण रश्मयः ।
मुक्तः सर्व्वभयाद् गर्भ एह्येहि चिरमावितः ॥ ३ ॥

उत्कर्षणमधोगतस्योर्द्ध्वीकरणम्, अपकर्षणमूर्द्ध्वंगतस्याधः कर्षणम्, स्थानापवर्त्तनं स्थानेषु सक्तस्य गर्भशय्यात उत्तानस्यावाङ्मुखीकरणम्, उद्वर्त्तनमवाङ्मुखस्योत्तानीकरणम्। अत्र केचित् स्थानव्यावर्त्तनमिति पठन्ति, तत्र स्थाने गर्भशय्यायां तिर्य्यगादिस्थितस्योत्तानस्याधोव्यावृत्त्या स्थापनम्, ऊर्द्ध्वस्य कस्यचिदङ्गस्य छेदनमुत्कर्त्तनं, छेदनमिति मृतस्य तु तेषु तेषु स्थानेषु सक्तस्य तस्याङ्गस्य छेदनं द्वैधीकरणम्। गर्भकुक्षादेराध्मातस्य विदारणं भेदनम्। पीडनं वलनम्। ऋजूकरणं वक्रस्य प्राञ्जलीकरणम्। दारणं विदारणम्। शिरसो वैगुण्योपादानात् अंसयोर्जघनस्य च वैगुण्यमनुवर्त्तते, वैगुण्यं वक्रता, अंसो बाहुशिरः, जघनं कटेरग्रभागः। प्रयतेत यत्नं कुर्व्वीत। केचिदाचार्य्या मन्त्रव्याख्यानं कुर्व्वन्ति तदाह—इहेत्यादि। अमृतं समुद्रमन्थनोत्थिता सुधा। चित्रभानुरादित्यः, भामिनि हे वरस्त्रि, उच्चैःश्रवा अमृतमन्थनोत्पन्नस्तुरगः शक्रवाहनः। शर्म्म दिशन्तु प्रयच्छन्तु ॥ १—३ ॥

औषधानि च विदध्याद् यथोक्तानि। मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वननगवृत्तिकाशाल्मलीमृत्स्नघृताभ्यां म्रक्षयित्वा हस्तं योनौ प्रवेश्य गर्भमपहरेत् ॥ ४ ॥

तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्। एकसक्थ्ना प्रपन्नस्येतरसक्थि प्रसार्य्यापहरेत्। स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्द्ध्वमुत्क्षिप्य सक्थिनी प्रसार्य्यापहरेत्। तिर्य्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्द्धमूर्द्ध्वमुत्क्षिप्य पूर्व्वार्द्धमपत्यपथं प्रत्यार्ज्जवमानीयापहरेत्। पार्श्वापवृत्तशिरसमंसं प्रपीड्योर्द्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्। बाहुद्वयप्रतिपन्नस्योर्द्ध्वमुत्पीड्योर्द्ध्वं शिरोऽनुलोममानीयापहरेत्। द्वावन्त्यावसाध्यौ मूढ़गर्भौ। एवमशक्ये शस्त्रमवचारयेत् ॥ ५ ॥

सचेतनञ्च शस्त्रेण न कथञ्चन दारयेत्।
दार्य्यमाणो हि जननीमात्मानञ्चैव घातयेत्॥
अविषह्ये विकारे तु श्रेयो गर्भस्य पातनम्।
न गर्भिण्या विपर्य्यासः प्राप्तकालं न हापयेत् ॥ ६ ॥

मन्त्रान् निर्द्दिश्य औषधानि निर्द्दिशन्नाह—औषधानीत्यादि। तानि पुनः शारीरे अपरापातनोदितानि। वृथाभूते निष्फले मन्त्रे तन्त्रे च, भिषजा शल्याहरणोपायं निर्द्दिशन्नाह—मृते चेति। चकारादफलीभूतेषु मन्त्रतन्त्रप्रसूतिजननव्यापारेषु जीवत्यपीत्यनुक्तं समुच्चीयते। आभुग्नसक्थ्या इति सङ्कुचितसक्थ्याः। धन्वनो धनुर्वृक्षो बदरीसदृशवृक्षः। नगवृत्तिका शल्लकी। यद्यपि मृत्स्नशब्दः प्रशस्तायां मृदि वर्त्तते, तथाप्यत्र धनुर्वृक्षशल्लकीशाल्मलीनां पिच्छिलेष्वेव मृत्स्नशब्दो बोद्धव्यः। घृतं गव्यं घृतं, ताभ्यां पाणिं म्रक्षयित्वा विलिप्य मूढ़गर्भमपहरेत्। मृते चेति चकारात् अपहरणे विशेषेण विधिमाह—तत्रेत्यादि। आञ्छेदाकर्षेत्। एकसक्थ्नेति प्रथममेकसक्थि प्रतिपन्नं, द्वितीयसक्थि पुनराभुग्नं कृत्वागतं, तदपि प्रसार्य्य प्रगुणीभूतसक्थिद्वयमपहरणार्थमाञ्छेदिति पूर्व्वं माद् विशेषः। सक्थि जङ्घोच्यते, अयं द्वितीयः। स्फिगित्यादि अयं तृतीयः। तिर्य्यगित्यादि। परिघोऽर्गलादण्डः। आर्ज्जवमानीय ऋजुभावमानीयापहरेदिति, अयं चतुर्थः। पार्श्वेत्यादि। पार्श्वापवृत्तं पार्श्ववलितं शिरो यस्य, अपत्यपथो योनिः, अयं पञ्चमः। बाहुद्वयेत्यादि अयं षष्ठः। आद्यं मूढ़गर्भत्रितयं पादाभ्यामाहरणीयम्, तदितरत्तु त्रितयं शिरसा, द्वाविति शेषन्तु मूढ़गर्भद्वयमसाध्यम्, एवमष्टौ मूढ़गर्भाः। दार्य्यमाणश्छिद्यमानः। घातयेदिति सर्व्वथैवाशक्यहस्ताकर्षे द्वयोरपि गर्भगर्भिण्योर्विपत्तिसिद्धेः। शस्त्रमन्त्रादिनोपायेनासिद्धौ गर्भपातनं गर्भिणीरक्षार्थं कार्य्यमित्याह—अविषह्य इति। सोढुमशक्ये विकारे व्याधौ सति किं कर्त्तव्यमित्याह—श्रेयो गर्भस्येति श्रेयो भवतीत्यर्थः। प्राप्तकालं न हापयेन्नोपेक्षयेदित्यर्थः ॥ ४—६ ॥

ततः स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य्य शिरःकपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वापहरेत्। अभिन्ने शिरसि चाक्षिकूटे गण्डे वा, अंससंसक्तस्यांसदेशे बाहुं छित्त्वा, दृतिमिवाततं वातपूर्णोदरं वा विदार्य्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्। जघनसक्तस्य वा जघनकपालानीति ॥ ७ ॥

यद् यदङ्गं हि गर्भस्य तस्य सजति तद् भिषक्।
सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीञ्च यत्नतः ॥ ८ ॥
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः।
तत्रानल्पमतिर्वैद्यो वर्त्तेत विधिपूर्व्वकम् ॥ ९ ॥
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः।
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥
मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता।
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात् कदाचन ॥ १० ॥
अथापतन्तीमपरां पातयेत् पूर्व्ववद् भिषक्।
हस्तेनापहरेद् वापि पार्श्वाभ्यां परिपीड्य वा ॥
धुनुयाच्च मुहुर्नारीं पीड़येद् वांसपिण्डिकाम्।
तैलाक्तयोनेरेवं तां पातयेन्मतिमान् भिषक् ॥ ११ ॥
एवं निर्हृतशल्यान्तु सिञ्चेदुष्णेन वारिणा।
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत्।
एवं मृद्वी भवेद् योनिस्तच्छूलञ्चोपशाम्यति ॥ १२ ॥

मृते तु गर्भे शस्त्रावचरणं निर्द्दिशन्नाह—तत इति। मण्डलाग्रेणाङ्गुलीशस्त्रेणेति अन्तर्मुखसंज्ञितेन कृशतरशशधरानुकारिणार्द्धद्वयसंहतमध्यकीलितेन मध्यमाङ्गुल्यङ्गुष्ठप्रविष्टलोहकटकनियमितेन, अन्ये पुनरेकावयवेन मध्यमाङ्गुलीप्रविष्टलोहकटकेनेत्याहुः। तद्धि शस्त्रं हस्तान्तर्गतं योनौ सुप्रदेशप्रवेशितमपि सुखच्छेद्करं गर्भिणीं न हिनस्ति। शङ्कुना आकुञ्चिताकारेण वड़िशविशेषेण सम्यग् गृहीतं हृदये कक्षे वापहरेत्। पुनरवैगुण्येन निर्गतशिरसो विपुलांसदेशसक्तस्य विधिमुपादिशन्नाह—दृतिमिवेत्यादि। दृतिः पानीयपूर्णखल्ली। जघनसक्तस्येत्यादि। जघनसक्तं जघनकपालानि विदार्य्यापहृत्यापहरेत्। एवमुद्दिष्टानामाहरणोपायं निर्द्दिश्यानुक्तानामपि नानाप्रकाराणां निर्द्दिशति—गर्भस्येत्यादि। मृते तु दोषं निर्द्दिशन्नाह—नोपेक्षेतेत्यादि। स गर्भः, हि यस्मादर्थे, मण्डलाग्रेणेति मण्डलाग्रावचारणमुक्तमपि वृद्धिपत्रनिषेधोपदेशार्थं पुनरुच्यते। अथापतन्तीमित्यादि। अपरां गर्भावरणं जरायुसंज्ञं यं लोका आवलवमित्याचक्षते। पूर्व्ववत् शारीरोक्तविधिना ॥ ७—१२ ॥

कृष्णातन्मूलशुण्ठ्येला हिङ्गुभार्गीः सदीप्यकाः।
वचामतिविषां रास्नां चव्यं सञ्चूर्ण्य पाययेत्॥
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च।
क्वाथञ्चैषां तथा कल्कं चूर्णं वा स्नेहवर्ज्जितम्॥
शाकत्वग्घिङ्गुतिविषा-पाठाकटुकरोहिणीः।
तथा तेजोवतीञ्चापि पाययेत् पूर्व्ववद् भिषक्॥
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत्।
पाययेद् वासवं नक्तमरिष्टं वा सुसंस्कृतम्॥
शिरीषककुभाभ्याञ्च तोयमाचमने हितम्।
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत्॥
सर्व्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना।
स्वेदाभ्यङ्गपरा नित्यं भवेत् क्रोधविवर्ज्जिता॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम्।
रसं दशाहं शेषे तु यथायोगमुपाचरेत्॥ १३॥
व्युपद्रवां विशुद्धाञ्च ज्ञात्वा च बलवर्णिनीम्।
ऊर्द्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः॥ १४॥

व्यवस्थितविकल्पा ह्येते देशप्रकृतिसात्म्यापेक्षया। कृष्णा पिप्पली, तन्मूलं पिप्पलीमूलम्। दीप्यकः अजमोदा। प्रसवकाल एव जातमूढगर्भायाः कृतकर्म्मणापहृतापरायाः पार्श्वयोनिशूल-काठिन्यशान्त्यर्थं रक्तक्लेदादिदोषप्रसेकार्थञ्च तैलाक्तयोनेस्तैलेन कृष्णादिपानम्, अकालमूढ-गर्भायास्तु लङ्घितायाः पुनरन्नकाले उद्दालकादीनामन्नानामस्नेहलवणाभिर्यवागूभिरुपचारो यावन्तो मासा गर्भस्य तावन्त्यहानि, अनन्तरमासे तु स्नेहादिविधानमकालमूढगर्भाया अपि पूर्व्ववत्। त्रिरात्रमित्यादि। एवं त्रिरात्रं कृष्णादिचूर्णपानेन शाकत्वगादिचूर्णपानेन वाहृतकोष्ठरक्त-क्लेदादिदोषायाः सप्ताहं ह्रस्वमात्रया स्नेहपानम्। तेन विशुद्धवाताशयाया दशाहादूर्द्ध्वं स्निग्ध-पथ्याल्पभोजनम्। तत्र नित्यं स्वेदाभ्यङ्गाववश्यं कार्य्यौ, तत्र द्वितीयदशाहे वातहरसिद्धं पयो वक्ष्यमाणम्। तृतीये मांसरसः। ककुभः सुगन्धिमूलो विटपः। आचमनस्नानादौ षडङ्गकल्पना-कल्पितशिरीषककुभसलिलम्। उपद्रवा इति उपद्रवा वातरोगज्वराद्याः। वातहरैः शतपुष्पादिभिः। यथायोगमिति सात्म्याद्यपेक्षयेति भावः॥ १३। १४॥

योनिसन्तर्पणेऽभ्यङ्गे पाने वस्तिषु भोजने ।
बलातैलमिदश्चास्यै दद्यादनिलवारणम् ॥
बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसस्तथा ।
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः ॥
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ।
तथाऽगुरुं सर्ज्जरसं सरलं देवदारु च ॥
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ।
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ॥
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ।
तत् साधुसिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥
प्रक्षिप्य कलसे सम्यक् स्वनुगुप्तं निधापयेत् ।
बलातैलमिदं ख्यातं सर्व्ववातविकारनुत् ॥
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
वातक्षीणे मर्म्माहते मथितेऽभिहते तथा ।
भग्ने श्रमाभिपन्ने च सर्व्वथैवोपयुज्यते ॥
एतदाक्षेपकादीन् वै वातव्याधीनपोहति ।
हिक्कां कासमधीमन्थं गुल्मं श्वासश्च दुस्तरम् ॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राज्ञामेतद्धि कर्त्तव्यं राजमात्राश्च * ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥ १५ ॥

बलामूलक्काथस्य यवकोलकुलत्थानां क्काथस्य पयसश्च प्रत्येकमष्टावष्टौ भागाः, एकः स्नेहात्; एवं स्नेहाद् द्वात्रिंशद्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः। मधुरः काकोल्यादिगणः। कालानुसारिवा इत्यत्र केचिदाचार्य्या अस्मिन् तैले क्षीरशुक्लकं पठन्ति। क्षीरशुक्लकं क्षीरविदारी। स्वनुगुप्ते निरुपद्रवस्थाने। अधीमन्थः अक्षिरोगोऽभिष्यन्दपूर्व्वकः। षण्मासोपयोगात् कोपमप्राप्तमन्त्रवृद्धिं हन्ति, कोपप्राप्तं पुनरन्त्रवृद्धिमसाध्यमाहुः ॥ १५ ॥

* राजपात्राश्चेति पाठान्तरम्।

वलाकषायपीतेभ्यस्तिलेभ्यो वाप्यनेकशः।
तैलमुत्पाद्य तत्क्काथ-शतपाककृतं शुभम्॥
निवाते निभृतागारे प्रयुञ्जीत यथावलम्।
जीर्णेऽस्मिन पयसा स्निग्धमश्नीयात् षष्टिकौदनम्॥
अनेन विधिना द्रोणमुपयुज्यान्नमोरितम्।
भुञ्जीत द्विगुणं कालं बलवर्णान्वितस्ततः॥
सर्व्वपापैर्विनिर्म्मुक्तः शतायुः पुरुषो भवेत्।
शतं शतं तथोत्कर्षो द्रोणे द्रोणे प्रकीर्त्तितः॥ १६॥
वलाकल्पेनातिवला गुडूच्यादित्यपर्णिषु।
सैरेयके वीरतरौ शतावर्य्यां त्रिकण्टके।
तैलानि मधुके कुर्य्यात् प्रसारण्याश्च बुद्धिमान्॥ १७॥
नीलोत्पलं वरीमूलं गव्ये क्षीरे विपाचयेत्।
शतपाकं ततस्तेन तिलतैलं पचेद् भिषक्॥
वलातैलस्य कल्कांस्तु सुपिष्टांस्तत्र दापयेत्।
सर्व्वेषामेव जानीयादुपयोगं चिकित्सकः।
वलातैलवदेतेषां गुणांश्चैव विशेषतः॥ १८॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने मूढ़गर्भचिकित्सितं नाम पञ्चदशोऽध्यायः॥ १५॥

बलातैलानन्तरं वलासंस्कारेण शतपाकविधानमाह—बलेत्यादि। पीतेभ्यो भावितेभ्यः सप्तकृत्वः। तिलतुल्यबलाष्टगुणसलिलाष्टांशशेषितकषायभावितानां तिलानां तैलमादाय सामान्यक्काथपरिभाषाक्काथेन चतुर्गुणेन शतशः पचेत्। तत्क्काथं तत्कल्कमेव वेत्येके; पूर्व्वबलातैलसमुद्दिष्टैर्मधुरादिकल्कैरेवेत्यन्ये॥ १६॥

उक्तबलातैलविधेर्द्रव्यान्तरेष्वतिदेशमुद्दिशन्नाह—बलेत्यादि। आदित्यपर्णी सूर्य्यावर्त्तः। वीरतरुः स्वनामप्रसिद्धः, अर्ज्जुन इत्येके, कोकिलाक्ष इत्यपरे। अतिबलादितैलेषु च बलातैलोक्तकल्कप्रक्षेपः। अथवातिवलादीनामेव क्काथकल्काभ्यां तैलानि पक्तव्यानीति॥ १७॥

नीलोत्पलमित्यादि। वरीं शतावरीं॥ १८॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे मूढ़गर्भचिकित्सितव्याख्यानाम पञ्चदशोऽध्यायः॥ १५॥

## षोड़शोऽध्यायः।

अथातो विद्रधीनां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

उक्ता विद्रधयः षड् ये तेष्वसाध्यस्तु सर्व्वजः।
शेषेष्वामेषु कर्त्तव्या त्वरितं शोफवत् क्रिया॥ २॥

वातघ्नमूलकल्कैस्तु घृततैलवसायुतः।
सुखोष्णो वहलो लेपः प्रयोज्यो वातविद्रधौ॥
सानूपौदकमांसस्तु काकोल्यादिः सतर्पणः।
स्नेहाम्लसिद्धो लवणः प्रयोज्यश्चोपनाहने॥
वेशवारैः सकृशरैः पयोभिः पायसैस्तथा।
स्वेदयेत् सततञ्चापि निर्हरेच्चापि शोणितम्॥ ३॥

स चेदेवमुपक्रान्तः पाकायाभिमुखो यदि।
तं पाचयित्वा शस्त्रेण भिन्द्याद् भिन्नञ्च शोधयेत्॥ ४॥

पञ्चमूलकषायेण प्रक्षाल्य लवणोत्तरः।
तैलैर्भद्रादिमधुक-संयुक्तैः प्रतिपूरयेत्॥ ५॥

वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च।
पृथक्पर्ण्यादिसिद्धेन त्रैवृतेन च रोपयेत्॥ ६॥

षड्ग्रहणं द्वन्द्वजविद्रधिनिषेधार्थम्। पुनरसाध्यकीर्त्तनं चिकित्साप्रक्रमत्वादुपक्रमनिषेधार्थम्। शेषेषु पञ्चसु शोफवत् क्रियेति सा पुनरपतर्पणाद्या विरेचनान्तैकादशविधा॥ १। २॥

वातघ्नेत्यादि। वातघ्नानि भद्रदार्व्वादीनि, अन्ये तु वातघ्नः शोभाञ्जनकः। मुरङ्गीमूलकल्कैरित्यन्ये पठन्ति; मुरङ्गी शोभाञ्जनकः। सानूपेत्यादि अयं शाल्वणप्रकारः। आनूपा महिषादयः, औदकाः कोशस्थादयः, (वातपित्तहरा विदारीगन्धादयः), स्नेहाः सर्व्व एव, अम्लानि च। लवणैः संस्कृतो लवणः। वेशवारैरित्यादि वेशवारः संस्कृतमांसविशेषः। कृशरा तिलतण्डुलमापकृता यवागूः। क्षीरसिद्धास्तण्डुलाः पायसः। लवणोत्तरैरिति लवणप्रमुखैस्तैलैरित्यर्थः। भद्रादि भद्रदार्व्वादि। वैरेचनिकेत्यादि। वैरेचनिकयुक्तेनेति चूर्णीकृतत्रिवृदादिमिश्रेण। गयी तु वैरेचनिकयुक्तेन सिद्धेनेति व्याख्यानयति। त्रैवृतेन स्नेहेन। तैलघृतस्नेहानि पृथक्पर्ण्यादीनि रोपणघृतसाधने मिश्रकोक्तानि॥ ३—६॥

पैत्तिकं शर्कंरालाजा-मधुकैः सारिवायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ७ ॥
पाक्यैः शीतकषायैर्वा क्षीरैरिक्षुरसैस्तथा।
जीवनीयघृतर्वापि सेचयेच्छर्करायुतैः ॥
त्रिवृद्धरीतकीनाञ्च चूर्णं लिह्यान्मधुद्रवम्।
जलौकोभिर्हरेच्चासृक् पक्वञ्चापाव्य बुद्धिमान् ॥ ८ ॥
क्षीरवृक्षकषायेण प्रक्षाल्यौदकजेन वा।
तिलैः सयष्टिमधुकैः सक्षौद्रैः सर्पिषा युतैः।
उपदिह्य प्रतनुना वाससा वेष्टयेद् व्रणम् ॥ ९ ॥
प्रपौण्डरीकमञ्जिष्ठा-मधुकोशीरपद्मकैः।
सहरिद्रैः कृतं सर्पिः सक्षीरं व्रणरोपणम् ॥
क्षीरशुक्लापृथक्पर्णी-समङ्गारोध्रचन्दनैः।
न्यग्रोधादिप्रवालेषु तेषां तक्ष्वथवा कृतम् ॥ १० ॥
नक्तमालस्य पत्राणि तरुणानि फलानि च।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
प्रियङ्गुः कुशमूलञ्च निचुलस्य त्वगेव च ॥
मञ्जिष्ठाचन्दनोशीरमुत्पलं सारिवा त्रिवृत्।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
दुष्टव्रणप्रशमनं नाड़ीव्रणविशोधनम्।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम् ॥
दुष्टव्रणाश्च ये केचिद् ये चोत्सृष्टक्रिया व्रणाः।
नाड्यो गम्भीरिका याश्च सद्यश्छिन्नास्तथैव च ॥

पैत्तिकमित्यादि। पयस्या क्षीरकाकोली, जेज्जटाचार्य्यस्त्वर्कपुष्पीमाह। पाक्यैः क्वथितकषायैः। शीतकषायलक्षणं "द्रव्यमापोत्थितं सम्यगस्त्युष्णोदकसंस्थितम्। रात्रिपर्य्युषितं शीतकषायं फाणितं विदुः" इति। जीवनीयैः काकोल्यादिभिः सिद्धानि जीवनीयघृतानि, सेचयेत् परिषेचयेत्। दाहवेदनोपशमार्थं विरेचनमाह—त्रिवृदित्यादि। क्षीरवृक्षेत्यादि क्षीरवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षगर्द्दभाण्डाः। औदकानि कमलकुमुदकह्लारप्रभृतीनि। कृतं सर्पिः संस्कृतं सर्पिः। क्षीरेत्यादि क्षीरशुक्ला क्षीरविदारी। समङ्गा मञ्जिष्ठा, वराहक्रान्तेत्यपरे। न्यग्रोधादिर्द्रव्यसंग्रहणीये पठितः। प्रवालाः पल्लवाः ॥ ७—१० ॥

अग्निक्षारकृताश्चैव ये व्रणा दारुणा अपि ।
करञ्जादेरन हविषा प्रशाम्यन्ति न संशयः ॥ ११ ॥
इष्टकासिकतालोष्ट गोशकृत्तुषपांशुभिः ।
मूत्रैरुष्णैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥
कषायपानैर्वमनैरालेपैरुपनाहनैः ।
हरेद् दोषानभीक्ष्णश्चाप्यलाब्वासृक् तथैव च ॥ १२ ॥
आरग्वधकषायेण पक्वश्चाप्लाव्य धावयेत् ।
हरिद्रात्रिवृताशक्तु-तिलैर्मधुसमायुतैः ।
पूरयित्वा व्रणं सम्यग् बध्नीयात् कीर्त्तितं यथा ॥
ततः कुलत्थिकादन्ती-त्रिवृच्छ्यामार्कतिल्वकैः ।
कुर्य्यात् तैलं सगोमूत्रं हितं तत्र ससैन्धवम् ॥ १३ ॥
पित्तविद्रधिवत् सर्व्वाः क्रिया निरवशेषतः ।
विद्रध्योः कुशलः कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥ १४ ॥
वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेद् विद्रधिशान्तये ॥ १५ ॥
अनयोर्वर्गयोः सिद्धं सर्पिर्वैरेचनेन च ।
अचिराद् विद्रधिं हन्ति प्रातःप्रातर्निषेवितम् ॥ १६ ॥
एभिरेव गणैश्चापि संसिद्धं स्नेहसंयुतम् ।
कार्य्यमास्थापनं क्षिप्रं तथैवाप्यनुवासनम् ॥ १७ ॥

नक्तमालस्येत्यादि । तरुणानि तत्कालोत्पन्नानि आमानीत्यर्थः । सुमना जाती । निचुलः वेतसः । केचिदेनमनार्षं वदन्ति, तन्नेच्छति गयी, तस्मात् मयाप्यङ्गीकृतः ॥ ११ ॥

इष्टकेत्यादि । पांशुर्धूलिः । गोमूत्रेण द्रवस्वेदः । बध्नीयात् कीर्त्तितं यथेति "घनेन वाससा श्लैष्मिकं गाढतरम्" इति । अनयोरुक्तयोर्वरुणादेरूषकादेश्च, तत्र वरुणादेः कषायः, ऊषकादेः कल्कः । तेषां लवणत्वेन कषायकल्पनया दुःशक्यत्वात् । त्रिवृद्दन्तीनामपि कृतेन कषायेण तदेव सर्पिरिति चकारात् । प्रातःप्रातरिति वीप्सया इदं ज्ञापयति—अभ्यासेन निषेवितं सर्पिः विद्रधिं हन्तीति । वरुणादिगणक्वाथमित्युपचारोऽभ्यन्तरे । बाह्ये तु विद्रधावामे पाचनपाटन शोधनाद्युपचारः करणीय इति ॥ १२—१६ ॥

एभिरित्यादि । एभिरेव गणैर्वरुणादिवैरेचनिकैः । वरुणादिवैरेचनिकौ कषायतया प्रयोज्यौ,

पानालेपनभोज्येषु मधुशिग्रुद्रुमोऽपि वा।
दत्तावापो यथादोषमपक्वं हन्ति विद्रधिम् ॥ १८ ॥
तोयधान्याम्लमूत्रैस्तु पेयो वापि सुरादिभिः।
यथादोषगणक्वाथैः पिबेद्वापि शिलाजतु।
प्रधानं गुग्गुलुश्चापि शुण्ठीश्च सुरदारु च ॥ १९ ॥
स्नेहोपनाहौ कुर्य्याच्च सदा चाप्यनुलोमनम् ॥ २० ॥
यथोद्दिष्टां शिरां विध्येत् कफजे विद्रधौ भिषक्।
रक्तपित्तानिलोत्थेषु केचिद्वाहौ वदन्ति तु ॥ २१ ॥
पक्वं वा वहिरुन्नद्धं भित्त्वा व्रणवदाचरेत्।
स तेषूर्द्ध्वमधो वापि मैरेयाम्लसुरासवैः ॥
पेयो वरुणकादिस्तु मधुशिग्रुद्रुमोऽपि वा।
शिग्रुमूलजले सिद्धं ससिद्धार्थकमोदनम् ॥
यवकोलकुलत्थानां यूषैर्भुञ्जीत मानवः।
प्रातः प्रातश्च सेवेत मात्रया तैल्वकं घृतम्।
त्रिवृतादिगणक्वाथ-सिद्धं वाप्युपशान्तये ॥ २२ ॥

ऊपकादिश्च कल्कतया। पानेत्यादि। स्वभावत एवामविद्रधिप्रत्यनीको मधुशिग्रुः; कषायपाचनादिषु तस्यैव च दोषस्य प्रत्यनीकार्थं दोषानतिक्रमेण व्रणहितवायुपित्तकफहरद्रव्यप्रक्षेपः। तोयेत्यादि। तोयादिभिः सुरान्तैर्यथादोषं स एव मधुशिग्रुरिति। तत्र तोयेन पित्तविद्रधौ, धान्याम्लेन वातविद्रधौ, मूत्रेण कफविद्रधौ। अविदग्धे पुनः रक्ते सुरादिभिर्नान्यत्र। यथादोषगणक्वाथैरिति वातादिप्रत्यनीकैरित्यर्थः। प्रधानं गुग्गुलं महिषाक्षमित्यर्थः, प्रधानं मेदोहरत्वात्, विद्रधौ श्रेष्ठमित्यन्ये। तत्र गुग्गुलुकल्पेन वातिके देवदारु, श्लैष्मिके शुण्ठीति। स्नेहोपनाहानुलोमनादीनि बाह्यवातपित्तकफविद्रधिविषयाणि प्रागुक्तानि आभ्यन्तरेऽपि विद्रधौ यथा दोषं विभज्य योज्यानि ॥ १७—२० ॥

अन्तर्विद्रधौ दूष्यशोणितस्य गम्भीरानुगतत्वात् तत्र सिराव्यधमुद्दिशन्नाह—यथेत्यादि। यथोद्दिष्टामिति वामपार्श्वे कक्षास्तनयोरन्तरेऽन्तर्विद्रधौ पार्श्वशूले च इति। तेन कक्षान्तराश्रयदेशस्याधः स्तनयोरुपरिष्टात् पार्श्वविशेषे कफविद्रधौ। रक्तपित्तानिलोत्थेषु बाहौ केचिदाहुः। बाहौ बाहुमध्ये कूर्परे, तेन स्थानान्तराश्रयमेकीयमतम् ॥ २१ ॥

पक्वमित्यादि। सुरासवयोः प्रत्येकं निष्पादितयोरेकीकृत्य पुनः सन्धानं मैरेयः, अम्लं काञ्जिकम्, सुरा पिष्टमयी, द्रवप्रधान आसवः। अत्र संस्कार्य्य एव सिद्धार्थक्षेपः। मात्रया अल्पश इत्यर्थः। तिल्वकघृतं वातव्याधिपठितम्। सिद्धं सर्पिरित्यनुवर्त्तते ॥ २२ ॥

नोपगच्छेद् यथा पाकं प्रयतेत तथा भिषक् ।
पर्य्यागते विद्रधौ तु सिद्धिर्नैकान्तिकी स्मृता ॥ २३ ॥
प्रत्याख्याय तु कुर्व्वीत मज्जजातन्तु विद्रधिम् ।
स्नेहस्वेदोपपन्नानां कुर्य्याद्रक्तावसेचनम् ।
विद्रध्युक्तां क्रियां कुर्य्यात् पक्वे वास्थि तु भेदयेत् ॥
निःशल्यमथ विज्ञाय कर्त्तव्यं व्रणशोधनम् ।
धावेत् तिक्तकषायेण तिक्तं सर्पिस्तथा हितम् ॥
यदि मज्जपरिस्रावो न निवर्त्तेत देहिनः ।
कुर्य्यात् संशोधनीयानि कषायादीनि बुद्धिमान् ॥ २४ ॥
प्रियङ्गुधातकीरोध्र कट्फलं तिनिसैन्धवम् ।
एतैस्तैलं विपक्तव्यं विद्रधिव्रणरोपणम् ॥ २५ ॥

इति सुश्रुत संहितायां चिकित्सितस्थाने विद्रधिचिकित्सितं नाम षोड़शोऽध्यायः ॥ १६ ॥

प्रयतेत प्रयत्नं कुर्व्वीत । पर्य्यागते परिपाकमागते न सिद्धिः ॥ २३ ॥

परं मज्जविद्रधौ प्रत्याख्याय तु कुर्व्वीतेति चिकित्सामित्यध्याहारः । कां चिकित्सां कुर्व्वीत इत्याशङ्क्याह—स्नेहस्वेदोपपन्नानामिति । तिनिः तिनिशः, एकदेशेनापि समुदायो बुध्यते; यथा सत्या सत्यभामा, भीमो भीमसेन इति ॥ २४ । २५ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
विद्रधिचिकित्सितव्याख्यानाम षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

अथातो विसर्प-नाड़ी-स्तनरोगचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

साध्या विसर्पास्त्रय आदितो ये न सन्निपातक्षतजौ हि साध्यौ ।
साध्येषु तत्पथ्यगणविदध्याद् घृतानि सेकांश्च तथोपदेहान् ॥ २ ॥
मुस्ताशताह्वासुरदारुकुष्ठ-वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातात्मके चोष्णगणाः प्रयोज्याः सेकेषु लेपेषु तथा घृतेषु ॥
यत् पञ्चमूलं खलु कण्टकाख्यमल्पं महच्चाप्यथ वल्लिजञ्च ।
तच्चोपयोज्यं भिषजा प्रदेहे सेके घृते चापि तथैव तैले ॥ ३ ॥
कसेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥
ह्रीवेरलामज्जकचन्दनानि स्रोतोजमुक्तामणिगैरिकाश्च ।
क्षीरेण पिष्टाः सघृताः सुशीता लेपाः प्रयोज्यास्तनवः सुखाय ॥ ४ ॥
प्रपौण्डरीकं मधुकं पयस्या मञ्जिष्ठिका पद्मकचन्दने च ।
सुगन्धिका चेति सुखाय लेपाः पैत्ते विसर्पे भिषजा प्रयोज्याः ॥
न्यग्रोधवर्गैः परिषेचनञ्च घृतञ्च कुर्य्यात् स्वरसेन तस्य ।
शीतैः पयोभिश्च मधूदकैश्च सशर्करैरिक्षुरसैश्च सेकान् ॥ ५ ॥

साध्या इत्यादि । साध्यासाध्यविभागकरणं पुनश्चिकित्सितप्रक्रमात् । तेषां सर्व्वेषामेव सामान्यचिकित्सितसूत्रं निर्दिशन्नाह—साध्येष्वित्यादि । तत्पथ्यगणैर्यथाक्रमं वातपित्तकफजेषु वातादिदोषहरगणैः ॥ १ । २ ॥

मुस्तेत्यादि । कृष्णगन्धा शोभाञ्जनकः, शमीत्यपरे । उष्णगणा भद्रदार्व्वादयः पिप्पल्यादयश्च । तृणाख्यपञ्चमूलमपहाय शेषाणि चत्वारि पञ्चमूलानि ग्राह्याणि ॥ ३ ॥

पित्तविसर्पचिकित्सामाह—कसेवित्यादि । शृङ्गाटकं जलमध्ये त्रिकण्टकम् । गुन्द्रा भद्रमुस्ता । सशैवलाः शैवालयुक्ता इत्यर्थः । कर्दमः पङ्क इत्यर्थः । वस्त्रान्तराः वस्त्रेणान्तरीकृताः । ते हि सुखेनापनेतुं शक्यन्ते । ह्रीवेरेत्यादि । ह्रीवेरः बालकम् । लामज्जक उशीरमूलम् । स्रोतोजं सौवीराञ्जनम् । तनवः अच्छाः । सुखायेति तनुत्वान्नोष्माणमन्तः प्रवेशयतीत्यर्थः । श्रीवाग्भट आह—"श्लक्ष्ण शुष्कघनो लेपश्चन्दनस्यापि दाहकृत् । त्वग्गतस्योष्मणो रोधाच्छीतकृच्चान्यथागुरोः" इति ॥ ४ ॥

प्रपौण्डरीकमित्यादि । पयस्या क्षीरविदारी, जेज्जटाचार्य्यस्तु अर्कपुष्पीमाह । सुगन्धिका उत्पलसारिवा । मधूदकं मधुमिश्रमुदकम् ॥ ५ ॥

घृतस्य गौरीमधुकारविन्द-रोध्राम्बुराजादनगैरिकेषु।
तथर्षभे पद्मकसारिवासु काकोलिमेदाकुमुदोत्पलेषु॥
सचन्दनायां मधुशर्करायां द्राक्षास्थिरापृश्निशताह्वयासु।
कल्कीकृतासूदकमत्र दत्त्वा न्यग्रोधवर्गस्य तथा स्थिरादेः॥
गणस्य विल्वादिकपञ्चमूल्याश्चतुर्गुणं क्षीरमथापि तद्वत्।
प्रस्थं विपक्वं परिषेचनेन पैत्तीर्निहन्यात्तु विसर्पनाडीः॥
विस्फोटदुष्टव्रणशीर्षरोगान् पाकं तथास्यस्य निहन्ति पानात्।
ग्रहार्दिते शोषिणि चापि बाले घृतं हि गौर्य्यादिकमेतदिष्टम्॥ ६॥
अजाश्वगन्धा सरला सकाला सैकैषिका चाप्यथवाजशृङ्गी।
गोमूत्रपिष्टो विहितः प्रदेहो हन्याद् विसर्पं कफजं स शीघ्रम्॥
कालानुसार्य्यागुरुचोचगुञ्जा-रास्नावचाशीतशिवेन्द्रपर्ण्यः।
पालिन्दिमुञ्जातमहीकदम्बा हिता विसर्पेषु कफात्मकेषु॥ ७॥
गणस्तु योज्यो वरुणप्रवृत्तः क्रियासु सर्व्वासु विचक्षणेन।
संशोधनं शोणितमोक्षणञ्च श्रेष्ठं विसर्पेषु चिकित्सितं हि।
सर्व्वांश्च पक्वान् परिशोध्य धीमान् व्रणक्रमेणोपचरेद् यथोक्तम्॥ ८॥

गौर्य्यादिघृतमाह—घृतस्येत्यादि। गौरी हरिद्रा, गोरोचनेत्यन्ये। अरविन्दं पद्मम्। अम्बु बाला। राजादनं क्षीरिका। ऋषभः कूर्च्चशीर्षकः स्वनामप्रसिद्धः। मधुनः शर्करा मधुशर्करा। स्थिरा शालपर्णी। पृश्निः पृश्निपर्णी। गौर्य्यादिशताह्वान्तानां कल्कीकृतानां चत्वारि पलानि, न्यग्रोधादे र्विदारिगन्धादेर्महतोऽपि पञ्चमूलस्य त्रयाणां क्वाथश्चतुर्गुणो घृतस्य, क्षीरमपि गव्यं चतुर्गुणमिति; प्रस्थं घृतस्येति द्वात्रिंशत्पलानि द्रवद्रव्यत्वात्; अन्ये पुनः कल्कमानमष्टपलमाहुः॥ ६॥

कफविसर्पचिकित्सामाह—अजेत्यादि। अजा अजगन्धा जोयान् इति लोके। सरला त्रिवृत्, काला कासमर्दः। एकैषिका शतावरी, अन्ये त्रिवृद्भेदमाहुः। अजशृङ्गी छागलविषाणिका, गाड़लशिङ्गा उत्तमारणी इति लोके; गयदासाचार्य्येण कर्कटशृङ्गी व्याख्याता। कालानुसार्य्यं तगरम्। चोचः त्वक्। गुञ्जा चिरहिण्टिका। शीतशिवं शतपुष्पाभेदः। इन्द्रपर्णी इन्द्रवारुणी, अत्र गयदासाचार्य्येण इन्द्रपुष्पी पठिता व्याख्याता च; इन्द्रपुष्पी लाङ्गलकी। पालिन्दिः कालवल्ली। मुञ्जातः उत्तरापथजः स्वल्पकन्दः। महीकदम्बः अलम्बुषा मुण्डितिकेति लोके, जेज्जटाचार्य्यो भूकदम्बमाह॥ ७॥

गण इत्यादि। वरुणप्रवृत्तो वरुणादिः। क्रियासु सर्व्वासु पानादिकासु। आरम्भे सर्व्वेषां सामान्यचिकित्सिते संशमनमभिधाय सम्प्राप्तौ संशोधनमुद्दिशन्नाह—संशोधनमित्यादि। रक्ताव-सेचनञ्च जलौकाभिः, सर्व्वेषामेव रक्तपित्तप्रधानत्वादलाबुशृङ्गयोस्तत्र दुरवचारत्वात्॥ ८॥

नाड़ी त्रिदोषप्रभवा न सिध्येच्छेषाश्चतस्रः प्रतियत्नसाध्याः।
तत्रानिलोत्थामुपनाह्य पूर्व्वमशेषतः पूयगतिं विदार्य्य।
तिलैरपामार्गफलैश्च पिष्ट्वा ससैन्धवैर्बन्धनमत्र कुर्य्यात् ॥ ९। १० ॥
प्रक्षालने चापि सदा व्रणस्य योज्यं महद् यत् खलु पञ्चमूलम्।
हिंस्रां हरिद्रां कटुकां बलाञ्च गोजिह्विकाञ्चापि सबिल्वमूलाम्।
संहृत्य तैलं विपचेद् व्रणस्य संशोधनं पूरणरोपणञ्च ॥ ११ ॥
पित्तात्मिकां प्रागुपनाह्य धीमानुत्कारिकाभिः सपयोघृताभिः।
निपात्य शस्त्रं तिलनागदन्ती-यष्ट्याह्वकल्कैः परिपूरयेत् ताम्।
प्रक्षालने चापि ससोमनिम्बा निशा प्रयोज्या कुशलेन नित्यम् ॥ १२ ॥
श्यामात्रिभण्डीत्रिफलासु सिद्धं हरिद्रयो रोध्रकवृक्षयोश्च।
घृतं सदुग्धं व्रणतर्पणेन हन्याद् गतिं कोष्ठगतापि या स्यात् ॥ १३ ॥
नाड़ीं कफोत्थामुपनाह्य सम्यक् कुलत्थसिद्धार्थकशक्तकिण्वैः।
मृदूकृतामेष्य गतिं विदित्वा निपातयेच्छस्त्रमशेषकारी ॥
दद्याद् व्रणे निम्बतिलान् सुपिष्टान् सुराष्ट्रजान् सैन्धवसम्प्रयुक्तान्।
प्रक्षालने चास्य करञ्जनिम्ब-जात्यक्षपीलुस्वरसाः प्रयोज्याः ॥
सुवर्च्चिकासैन्धवचित्रकेषु निकुम्भतालीनलरूपिकासु।
फलेष्वपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलम् ॥ १४ ॥

नाड़ीनामवसरः—नाड़ीत्यादि। तत्रेत्यादि उपनाहः पाचनद्रव्यैरेव; तन्नेच्छति गयी, कस्मात्? नाड़ीवचनात्, नह्यपक्वे व्रणे नाड़ीति, तस्माद् वातहरद्रव्यैरेवोपनाहः। प्रक्षालन इत्यादि। संहृत्य एकीकृत्य। स्नेहचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रवः, अनेन न्यायेन प्रकृतद्रव्यप्रमाणम्। द्रवोऽत्र जलम्, "अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं स्मृतम्" इति वचनात् ॥ ९—११ ॥

पित्तेत्यादि। उत्कारिकाभिर्लप्सिकाभिः। सोमः सोम(काञ्जिक)संज्ञः, सोमलतेत्यन्ये, कट्फल इति जेज्जटाचार्य्यः; तन्नेच्छति गयी, तस्य तीक्ष्णोष्णत्वात् ॥ १२ ॥

श्यामेत्यादि। श्यामा वृद्धदारकः। त्रिभण्डी त्रिवृत्। वृक्षः वृक्षकः कुटजः ॥ १३ ॥

नाड़ीमित्यादि। किण्वः सुराबीजम्। अशेषकारी वैद्यः। सुराष्ट्रजा तुवरमृत्तिका। प्रक्षालने इत्यादि। निकुम्भो दन्ती। तालीतलं भूम्यामलकमूलं, नलमित्यन्ये पठन्ति, तत्र नलः शुषिरपर्व्वा स्वनामप्रसिद्धः। रूपिका श्वेतार्कः। नीलीफलरूपिकामिरिति केचित् पठन्ति; नीली शारदं फलम्, श्रीफलिकेति लोके ॥ १४ ॥

नाड़ीन्तु शल्यप्रभवां विदार्य्य निहृत्य शल्यं प्रविशोध्य मार्गम्।
संशोधयेत् क्षौद्रघृतप्रगाढ़ैस्तिलैस्ततो रोपणमस्य कुर्य्यात्॥
कुम्भीकखर्ज्जूरकपित्थविल्व-वनस्पतीनाञ्च शलाटुवर्गैः।
कृत्वा कषायं विपचेत् तु तैलमावाप्य मुस्तासरलाप्रियङ्गुः॥
सुगन्धिका मोचरसाहिपुष्पं रोध्रं विदध्यादपि धातकीञ्च।
एतेन शल्यप्रभवा च नाड़ी रोहेद् व्रणो वा सुखमाशु चत्र॥ १५॥

कृशदुर्व्वलभीरूणां नाड़ी मर्म्माश्रिता च या।
क्षारसूत्रेण तां छिन्द्यान्नतु शस्त्रेण बुद्धिमान्॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।
सूचीं निदध्याद् गत्यन्ते तथोन्नम्याशु निर्हरेत्॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत्।
ततः क्षारवलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत्॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता॥
अर्व्वुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत्।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः।
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद् व्रणम्॥ १६॥

या द्विव्रणीयेऽभिहितास्तु वर्त्त्यस्ताः सर्व्वनाड़ीषु भिषग्विदध्यात्॥ १७॥

नाड़ीमित्यादि। कुम्भीकः स्थलकुम्भीका, वनस्पतयो वटाद्याः, कुम्भीकादीनां शलाटूनि कोमलफलानि ग्राह्याणि। सरला त्रिवृत। सुगन्धिका उत्पलसारिवा। मोचरसः शाल्मलीचोचः। अहिपुष्पं नागकेशरम्॥ १५॥

कृशेत्यादि। क्षारसूत्रेण क्षाराक्तसूत्रेण। तत्र क्षारसूत्रावचारणाप्रकारं निर्दिशन्नाह—एषण्ये त्यादि। अर्व्वुदादिष्वित्यादिशब्दाद् ग्रन्थ्यादीनां ग्रहणम्। तनुमूलेषु अर्व्वुदादिषु उत्क्षिप्य मूले क्षारसूत्रं निधापयेत्, विशालमूलांश्चार्व्वुदादीन् क्षारसूत्रप्रतिष्ठापनार्थं सर्व्वतः सूचीभिराविध्य मूले क्षारसूत्रेण बध्नीयात्॥ १६॥

ततः परं सर्व्वनाड़ीनां सामान्यविधिमाह—या इत्यादि। मिश्रकोक्तातीवावेक्षणेन द्विव्रणीयेऽभिहिता अन्तःशल्याणुमुखानित्यादिवाक्ये वर्त्त्यः शोधनाः प्रयोज्याः। इहापि वर्त्तिं निर्दिशन्नाह—

घोण्टाफलत्वग्लवणानि लाक्षा-पूगीफलं वालवणञ्च पत्रम् ।
स्नुह्यर्कदुग्धेन तु कल्क एष वर्त्तीकृतो हन्त्यचिरेण नाड़ीः ॥ १८ ॥
विभीतकाम्रास्थिवटप्रवाला हरेणुकाशङ्खिनिवीजमस्यः * ।
वाराहिकन्दश्च तथा प्रदेयो नाड़ीषु तैलेन च मिश्रयित्वा ॥ १९ ॥
तथा च गोमांसमसी हिताय कोष्ठाश्रितास्वादरतो दिशन्ति ।
वर्त्तीकृतं माक्षिकसंप्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद् विहितञ्च तैलं तत् सर्व्वनाड़ीषु भिषग् विदध्यात् ॥ २० ॥
धुत्तूरजं मदनकोद्रवजञ्च वीजं कोशातकी शुकनसा मृगभोजनी च ।
अङ्कोटवीजकुसुमं गतिषु प्रयोज्यं लाक्षोदकाहृतमलासु विकृत्य चूर्णम् ॥
चूर्णीकृतैरथ विमिश्रितमेभिरेव तैलं प्रयुक्तमचिरेण गतिं निहन्ति ।
एवञ्च मूत्रसहितेषु विधाय तैलं तत्साधितं गतिमपोहति सप्तरात्रात् ॥ २१ ॥
पिण्डीतकस्य तु वराहविभावितस्य मूलेषु कन्दशकलेषु च सौवहेषु ।
तैलं कृतं गतिमपोहति शीघ्रमेतत् कन्देषु चामरवरायुधसाह्वयेषु ॥ २२ ॥

घोण्टेत्यादि। घोण्टाफलं बदरीफलम्, तस्य त्वक् बल्कलम्, लवणानि सैन्धवादीनि। अलवणा काकमर्द्दनिका, तस्या इदं पत्रमालवणम्। विभीतकेत्यादि। शङ्खिनी यवतिक्ता। विभीतकाम्रास्थ्यादीनां दाहेन मस्यः क्षारा इत्यर्थः। वाराहिकन्दः गृष्टिकाकन्दः। तथेत्यादि तेनैव प्रकारेण गोमांसस्यापि क्षारः। कोष्ठाश्रितासु नाड़ीषु हिताय आदरेण प्रतिपादयन्ति। वर्त्तीकृतमित्यादि पक्वमधुसैन्धववर्त्तिरपि नाड़ीहरा। दुष्टेत्यादि। दुष्टव्रणे यद् विहितञ्च तैलमिति सर्व्वव्रणे द्रवन्तीचिरविल्वमित्यादीनां वर्गेण यथोपपत्ति कर्त्तव्यं तैलमेतेषु शोधनमित्यभिहितम् ॥ १७—२० ॥

धुत्तूरजमित्यादि। धुत्तूरजं वीजम्। मदोत्पादका कोद्रवा मदनकोद्रवाः; अन्ये तु व्याख्यानयन्ति—मदनं कोद्रवजं वीजञ्चेति। कोशातकी देवदाली। शुकनसा चर्म्मकारवटः। मृगभोजनी इन्द्रवारुणी। अङ्कोठवीजपुष्पयुक्तैः कृतं चूर्णं गतिषु देयम्। लाक्षोदकाहृतमलासु लाक्षादिगणक्काथप्रक्षालनेन गतमलासु, दोषापनयनाच्छुद्धास्वित्यर्थः। अन्ये तु लाक्षोदकप्रक्षालनेन भेदनपीड़नाभ्याञ्च हृतमलासु गतिषु, धुत्तूरमदनकोद्रवादिचूर्णं विकृत्यालोड्य लाक्षोदकेनैव प्रयोज्यमिति सम्बन्धं कथयन्ति। चूर्णीकृतैरित्यादि। एतैश्चैव धुत्तूरादिभिर्मिश्रीकृत्य तैलं प्रयुक्तमचिरेण गतिं निहन्तीति जेज्जटः। गयी तु तैलं कृतं गतिमपोहति शीघ्रमेव इति पठित्वा कृतग्रहणात् तैलं सामान्यपाकपरिभाषया कृतं साधितं गतिमपोहतीति व्याख्याति। एवञ्च धुत्तूरकादिवीजादिष्वित्यर्थः ॥ २१ ॥

पिण्डीतकस्येत्यादि। वराहपिण्डीतकमूलसुवहकादिशकलेषु वज्रकन्देषु च स्नेहपाकसामान्यपरिभाषया सिद्धं तैलं नाड़ीहरम्। विस्तरमाह—पिण्डीतकस्त्रिविधः कृष्णपुष्पः, श्वेतपुष्पः, पीत-

* भस्मेति पाठान्तरम्।

भल्लातकार्कमरिचैर्लवणोत्तमेन सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं नाडीं कफानिलकृतामपचीं व्रणांश्च ॥ २३ ॥
स्तन्ये गते विकृतिमाशु भिषक् तु धात्रीं पीतां घृतं परिणतेऽहनि वामयेत् तु ।
निम्बोदकेन मधुमागधिकायुतेन वान्तागतेऽहनि च मुद्गरसाशना स्यात् ॥२४॥
एवं त्र्यहं चतुरहं षडहं वमेद् वा सर्पिः पिबेत् त्रिफलया सह संयुतं वा ॥२५॥
भार्गीं वचामतिविषां सुरदारु पाठां मुस्तादिकं मधुरसां कटुरोहिणीश्च ।
धात्री पिबेत् तु पयसः परिशोधनार्थमारग्वधादिषु वरं मधुना कषायम् ॥ २६ ॥
सामान्यमेतदुपदिष्टमतो विशेषाद् दोषान् पयोनिपतितान् शमयेद् यथास्वम् ।
रोगं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद् यद्विद्रधावभिहितं बहुशो विधानम् ॥२७॥

पुष्पश्च । तेष्वत्र वराहभावितः कृष्णपुष्पो ग्राह्यः । सुवहा गन्धनाकुली नापीणीति लोके, गोधापदीत्यपरे, कान्दालीत्यन्ये, तस्याः कन्दशकलेषु कन्दखण्डेषु, कृतं संस्कृतम् । कन्देषु चामरवरायुधसाह्वयेषु इत्यत्र अमरवर इन्द्रस्तस्यायुधं वज्रं तेन समान आह्वयः संज्ञा येषां ते अमरवरायुधसाह्वया वज्रकन्दास्तेषु । चकारात् तैलं कृतमित्यनुवृत्तम् । भल्लातकेत्यादि मार्कवरसेन भृङ्गराजरसेन ॥ २२ । २३ ॥

स्तन्य इत्यादि । स्तन्ये दोषैर्विकृतिं गते परिगते, परिणतेऽहनि सायंकाले, पीतां घृतं संशमनमेव घृतं पीतवतीम् । एतच्च प्रतप्तकनकनिकरपीतलोहिते सवितरि वस्य स्नेहपानकल्पस्यापवादः । सामान्योक्तमपि कफघ्नद्रव्यसंस्कृतं घृतम् । जेज्जटादयस्तु परिणते हि निष्पन्ने स्नेहफले सति स्निग्धामित्यर्थः । अहनि तस्मिन्नेव दिवसे ; तन्नेच्छति गयी, सामान्यवाक्येनैव स्निग्धाय वमनस्य विहितत्वात् । स्निग्धाय निम्बोदकेन निम्बक्वाथेन वामयेत् । वान्तागतेऽहनि च मुद्गरसाशना स्यात् न तु वमनदिवसे भोजयेदित्यर्थः । तत्र प्रथमवमने कफस्य निःशेषमनपहृतत्वादशुद्धदेहां स्नेहस्वेदावन्तरान्तरा सेवयित्वा षडहं वा चतुरहं त्र्यहं वा यावद् विशुद्धिरिति, शुद्धदेहायास्तु पुनर्वमनं त्याज्यम्, अन्यथा ग्लानिः स्तन्यक्षयश्च । तस्मात् शुद्धदेहाया वातपित्तानुबन्धे स्नेहपाकपरिभाषया त्रिफलासिद्धं सर्पिः पिबेद् वेति वाशब्दात् व्यवस्थितार्थात् लभ्यते । संशोधनमभिधाय संशमनमाह- भार्गीमित्यादि । मुस्तादिकं द्रव्यसंग्रहणीयोक्तम् । मधुरसा मूर्वा चोरस्नायुरिति लोके । भार्ग्यादिभिः सह मुस्तादेः कषायपानं वरं श्रेष्ठम् । पयो निपतितान् स्तन्यपतितान् । शमयेद् यथास्वमिति यस्य यदात्मकं प्रत्यनीकं तेन शमयेदिति ।

सम्पच्यमानमपि तन्तु विनोपनाहैः सम्भोजनेन खलु पाचयितुं यतेत।
शीघ्रं स्तनो हि मृदुमांसतयोपनद्धः सर्व्वं प्रकोपमुपयात्यवदीर्य्यते च ॥ २८ ॥
पक्वे च दुग्धहरिणीः परिहृत्य नाड़ीः कृष्णञ्च चूचुकयुगं विदधीत शस्त्रम्।
आमे विदाहिनि तथैव गते च पाकं धात्र्याः स्तनौ सततमेव च निर्दुहीत॥ २९॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने विसर्प-नाड़ी-स्तनरोगचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

सम्भोजनेनेति यथेष्टभोजनेनेत्यर्थः, एतच्चापत्यार्थम्। पाककारित्वादुपनाहनिषेधमाह—शीघ्रमित्यादि। हि स्फुटं, प्रकोपं पूतिमांसताम्। आमेत्यादि आमे विदग्धतापरिहाराय, विदाहिनि विपाकपरिहाराय, पक्वे नाड़ीव्रणपरिहाराय च स्तनौ निर्दुहीत ॥ २४—२९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्हनविरचिते निबन्धसंग्रहे विसर्प-नाड़ी-स्तनरोगचिकित्सितव्याख्यानाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

अथातो ग्रन्थ्यपच्यर्बुदगलगण्डचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

ग्रन्थिष्वथामेषु भिषग् विदध्याच्छोफक्रियां विस्तरशो * विधिज्ञः ।
रक्षद् बलञ्चापि नरस्य नित्यं तद्रक्षितं व्याधिबलं निहन्ति ॥ २ ॥
तैलं पिबेत् सर्पिरथो द्वयं वा दत्त्वा वसां वा त्रिवृतं विदध्यात् ।
अपेहिवाता-दशमूलसिद्धं वैद्यश्चतुःस्नेहमथो द्वयं वा ॥ ३ ॥
हिंस्राथ रोहिण्यमृताथ भार्गी-श्योनाकबिल्वागुरुकृष्णगन्धाः ।
गोजी च पिष्टा सह तालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥

ग्रन्थिष्वित्यादि। शोफक्रियामपतर्पणादिकां विरेचनान्ताम्। विस्तरशो भूयिष्ठम्। इदानीमामे ग्रन्थौ विस्रावणशोधनयोः स्नेहनाङ्गस्नेहं निर्द्दिशन्नाह—तैलमित्यादि। तैलं पिबेत् सर्पिर्वा पिबेद् अथवा द्वयं तैलसर्पिषी पिबेत्। वसातैलसर्पिषा च साध्यत्वात् त्रिवृतं विदध्यात्। त्रिभिस्तैल-सर्पिर्वसाभिर्वृतो व्यासः स्नेहसंयोगस्त्रिवृतसंज्ञः स्याद्, तं विदध्याद् कुर्य्यात्, वैद्यो ग्रन्थिरोगिणः पानायेति शेषः। अथवा चतुःस्नेहं घृततैलवसामज्जासंयोगजं वा पिबेत्। द्वयमपि तैलसर्पिषी तैलवसे, तैलमज्जानौ, घृतमज्जानौ वसामज्जानौ चेति एवम्प्रकारं द्वयं, चतुःस्नेहं वा एकीभूतं पिबेत्। अपेहिवातादशमूलसिद्धमिति अपेहिवाता प्रसारणी। तत्राद्यं तैलं सर्पिर्द्वयं वा यत् प्रोक्तं तद-संस्कृतमेव, उत्तरार्द्धोक्तञ्च चतुःस्नेहं द्वयं वा प्रसारणीदशमूलकल्ककाथसंस्कृतम्, अन्यथा वाशब्देन पुनरुक्तिदोषः स्यात्। यद्यपि पृथङ्निर्दिष्टरसवीर्य्यविपाकप्रभावाणां तैलसर्पिर्वसामज्जानां संस्कृतानां ग्रन्थिरोगिणः सामान्येनात्र प्रयोगोऽभिहितः, तथापि वातपित्तश्लेष्मसंसृष्टसन्निपातारब्धग्रन्थिषु हेतुप्रकृतिदेशकालसात्म्यानुबन्धानवेक्ष्य यथाबलं पानार्थमुपयोज्या इति ज्ञेयम्। गयी तु अपेहिवातेत्यत्र आमे विदध्यात् दशमूलसिद्धमिति पठति व्याख्यानयति च—तैलं पिबेदित्यादि। तत्र ग्रन्थौ वातभवे आमे तैलं वातहरकाथकल्कसिद्धं, पित्तभवे घृतं पित्तहरकाथकल्कसिद्धं, तैलमेव कफहरकाथसिद्धं कफजे, संसर्गसन्निपाते च द्वित्रिचतुःस्नेहादिसिद्धं विकल्प्यं; तदेव वातहरं निर्द्दिशन्नाह—आमे विदध्याद् दशमूलसिद्धमित्यादि ॥ १—३ ॥

इदानीं वातादिजनितग्रन्थिविशेषेण प्रलेपादीनाह—हिंस्रेत्यादि। रोहिणी कटुका। अमृता गुडूची। कृष्णगन्धा शोभाञ्जनकः, शमीत्यपरे। गोजी गोजिह्विका, शाखोटक इत्यन्ये।

* शोफक्रियायां विहितमिति वा पाठः।

स्वेदोपनाहान् विविधांश्च कुर्य्यात् तथा प्रसिद्धानपरांश्च लेपान्।
विदार्य्य वा पक्कमपोह्य पूयं प्रक्षाल्य विल्वार्कनरेन्द्रतोयैः॥
तिलैः सपञ्चाङ्गुलपत्रमिश्रैः संशोधयेत् सैन्धवसम्प्रयुक्तैः।
शुद्धं व्रणं वाप्युपरोपयेत्तु तैलेन रास्नासरलान्वितेन।
विडङ्गयष्टीमधुकामृताभिः सिद्धेन वा क्षीरसमन्वितेन॥ ४॥
जलौकसः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनञ्च।
काकोलिवर्गस्य च शीतलानि पिबेत् कषायाणि सशर्कराणि॥
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेच्चापि हरीतकीनाम्।
मधूकजम्ब्वर्ज्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत।
सशर्करैर्वा तृणशून्यकन्दैर्दिह्यादभीक्ष्णं मुचुलुन्दजैर्वा॥ ५॥
विदार्य्य वा पक्कमपोह्य पूयं धावेत् कषायेण वनस्पतीनाम्।
तिलैः सयष्टीमधुकैर्विशोध्य सर्पिः प्रयोज्यं मधुरैर्विपक्कम्॥ ६॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु।
स्विन्नस्य विम्लापनमेव कुर्य्यादङ्गुष्ठलोहोपलवेणुदण्डैः॥
विकङ्कतारग्वधकाकनन्ती-काकादनीतापसवृक्षमूलैः।
आलेपयेत् पिण्डफलार्कभार्गी-करञ्जकालामदनैश्च विद्वान्॥ ७॥

तालपत्री सुपली। स्वेदेत्यादि। प्रसिद्धा लेपा मिश्रकोक्ता मातुलुङ्गादयः। नरेन्द्रः किरमालकः। तोयशब्दोऽत्र क्काथे वर्त्तते। पञ्चाङ्गुल एरण्डः। अन्ये चित्रार्कगणादितोयैरिति पठन्ति। तत्र विल्वादिगणः अर्कादिगणश्च, तयोः क्काथैरित्यर्थः। सरला त्रिवृत्, केचित् सरलं शालतरुमाहुः, तयोश्चूर्णान्वितेन तैलेन रोपयेत्; तथा चतुर्गुणगोक्षीरसमन्वितेन तैलेन विडङ्गादिभिः कल्कीकृतैः सिद्धेन वा रोपयेत्॥ ४॥

जलौकस इत्यादि। तृणशून्यकन्दैः केतकीमूलैः। दिह्यात् लिम्पेत्। अभीक्ष्णं सततम्। मुचुलुन्दः कण्टकीमदनः। अन्ये मुचकुन्दमाहुः। वनस्पतीनां वटप्लक्षपिप्पलोडुम्बराणाम्। तिलैरित्यादि। मधुरैः काकोल्यादिभिर्द्रव्यैः॥ ५। ६॥

हृतेष्वित्यादि। यथानुपूर्व्या स्नेहस्वेदादिक्रमेण। वमनविरेचनास्थापनशिरोविरेचनशोणितस्रावणैः कफपित्तवातेषु दोषेषु हृतेषु तथा शोणिते च हृते स्विन्नस्य विम्लापनं कार्य्यमित्याह—अङ्गुष्ठलोहोपलवेणुदण्डैः कोष्णैर्विम्लापनमङ्गुष्ठादिभिर्मर्द्दनेन श्वयथुविम्लापनं वा कुर्य्यात्। विकङ्कत वृक्षः कण्टकारिका। आरग्वधः किरमालकः। काकनन्ती गुञ्जा। काकादनी वायसतिन्दुका, अहिंस्रेत्यन्ये। तापसवृक्ष इङ्गुदः। पिण्डफला तिक्तालाबुः। काला कटुहिंस्रा॥ ७॥

अमर्म्मजातं शममप्रयान्तमपक्कमेवापहरेद् विदार्य्य।
दहेत् स्थिते वासृजि सिद्धकर्म्मा सद्यःक्षतोक्तञ्च विधिं विदध्यात् ॥ ८ ॥
या मांसकन्द्यः कठिना बृहत्यस्तास्वेव योज्यश्च विधिर्विधिज्ञः।
शस्त्रेण वापाट्य सुपक्कमाशु प्रक्षालयेत् पथ्यतमैः कषायैः ॥
संशोधनैस्तैश्च विशोधयेयुः क्षारोत्तरैः क्षौद्रगुडप्रगाढ़ैः।
शुद्धे च तैलन्त्ववचारणीयं विड़ङ्गपाठारजनीविपक्वम् ॥ ९ ॥
मेदःसमुत्थे तिलकल्कदिग्धं दत्त्वोपरिष्टाद् द्विगुणं पटान्तम्।
हुताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमानदहन् हिताय ॥
प्रलिप्य दार्व्वीमथ लाक्षया वा प्रतप्तया स्वेदनमस्य कार्य्यम्।
निपात्य वा शस्त्रमपोह्य मेदो दहेत् सुपक्कन्त्वथवा विदार्य्य ॥
प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः सुवर्च्चिकादैर्यवहरितालमिश्रैः।
ससैन्धवैः क्षौद्रघृतप्रगाढ़ैः क्षारोत्तरैरेनमभिप्रशोध्य।
तैलं विदध्याद् द्विकरञ्जगुञ्जा-वंशावलेखेङ्गुदमूत्रसिद्धम् ॥ १० । ११ ॥
जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृतासु चैव।
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधाप्रवृत्तं तदुदारवीर्य्यम् ॥ १२ ॥

अमर्म्मेत्यादि। श्लेष्मसमुत्थमेव ग्रन्थिममर्म्मस्वुत्पन्नं शममप्रयान्तं पूर्व्वोक्तकर्मैः शान्तिमगच्छन्तमपक्कमेव विदार्य्यापहरेत्। सद्यःक्षतोक्तविधिः मधुघृतादिप्रयोगः। केचित् 'अमर्म्मजं चैवमपच्यमानम्' इति पठन्ति ॥ ८ ॥

या इत्यादि। या मांसकन्द्यो मांसप्ररोहाः तास्वियमेव क्रिया। शस्त्रेणेत्यादि शस्त्रेण पाटनम्। मर्म्मजे तु भेषजैः पथ्यतमैरिति कफोत्थव्रणहरैः। क्षारोत्तरैर्यवक्षारप्रधानैः। क्षौद्रघृतप्रगाढ़ैरिति पाठान्तरम् ॥ ९ ॥

अतो मेदोग्रन्थिचिकित्सितमाह—मेद इत्यादि। दार्व्वी दारुहस्तकः। अपक्कमेदोजे शस्त्रं निपात्य मेदोऽपकृष्य दहेत्, पक्वं वा मेदोग्रन्थिं विदार्य्य गवादिमूत्रैः प्रक्षाल्य तिलैः सुवर्च्चिकायवक्षारसैन्धवहरितालक्षौद्रघृतप्रधानैरभिप्रशोध्य वक्ष्यमाणतैलावचारणम्। द्विकरञ्जादिकल्कसिद्धेन चतुर्गुणगोमूत्रद्रवेण तैलेन रोपयेत्। वंशावलेखः वंशत्वक् ॥ १० । ११ ॥

इदानीमपचीचिकित्साया आरम्भः—जीमूतकैरित्यादि। जीमूतको देवदाली। कोशवती कटुकोशातकी। द्विधाप्रवृत्तमुभयतोभागदोषहरम्। उदारवीर्य्यमुत्कटवीर्य्यम्। जीमूतकोशवत्योः फलकल्कम्, दन्त्यादीनां तिसृणां मूलस्य च, स्नेहं चतुर्गुणं कृत्वा जलं चतुर्गुणं दत्त्वा विपचेत्।

निर्गुण्डिजातीबरिहिष्ठयुक्तं जीमूतकं माक्षिकसैन्धवाढ्यम्।
अभिप्रतप्तं वमनं प्रगाढ़ं दुष्टापचीषूत्तममादिशन्ति ॥ १३ ॥
कैटर्य्यबिम्बीकरवीरसिद्धं तैलं हितं मूर्द्धविरेचनञ्च।
शाखोटकस्य स्वरसेन सिद्धं तैलं हितं नस्यविरेचनेषु ॥ १४ ॥
मधूकसारश्च हितोऽवपीड़े फलानि शिग्रोः खरमञ्जरेर्वा ॥ १५ ॥
ग्रन्थीनमर्म्मप्रभवानपक्वानुद्धत्य चाग्निं विदधीत पश्चात्।
क्षारेण वापि प्रतिसारयेत् तु संलिख्य शस्त्रेण यथोपदेशम् ॥ १६ ॥
पार्ष्णिं प्रति द्वे दश चाङ्गुलानि मित्त्वेन्द्रवस्तिं परिवर्ज्ज्य धीमान्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो निष्कृष्य जालान्यनलं विदध्यात् ॥ १७॥

कल्कक्काथाभ्यामित्यपरे; बर्हिष्ठं वालकम्। जीमूतको देवदाली। निर्गुण्डीजातीबर्हिष्ठाना-मञ्जलिं सलिलाढकेन निःक्वाथ्य पादशेषं विधाय ततः पुरुषापेक्षया जलमुष्णमादाय तत्र जीमूतकाख्यकल्केन प्रत्येकं माक्षिकसैन्धवाढ्यं कृत्वा, युक्तं वमनादिविधिना दुष्टास्वपचीषु उत्तममादिशन्ति वमनद्रव्यमुत्तममादिशन्ति। कैटर्य्यः पर्व्वतनिम्बः। कैटर्य्यादिकल्कचतुर्थांशं जलचतुर्गुणं तलं साध्यम्। अन्ये तु कैटर्य्योत्पन्ननिर्गुण्डीति पठन्ति। निर्गुण्डीस्वरसे चतुर्गुणे बिम्बीकरवीरकल्कं तैलं साध्यम्। शाखोटकवल्कलानां चतुर्गुणस्वरससिद्धं तैलं नस्येषु, अकल्कमित्येके, तत्कल्ककषायमेवेत्यन्ये। अवपीड्य दीयते इत्यवपीड़ः, नस्यमेव इत्यर्थः। मधूकेत्यादि। खरमञ्जरिरपामार्गः। मधूकसारशिग्रुफलापामार्गतण्डुला उष्णोदकपिष्टा अवपीड़ोऽरुक्षलक्षण एव ॥ १२—१५ ॥

ग्रन्थीनित्यादि। उद्धृत्य च शस्त्रेण, परं यदा औषधेनासाध्यत्वम्। स्थानकर्म्माभिधाय स्थानान्तरकर्म्माणि निर्द्दिशन्नाह—पार्ष्णिमित्यादि। पार्ष्णिः गुल्फस्य पश्चाद्भागः। द्वादशाङ्गुलानि मित्वोर्द्ध्वमिन्द्रवस्तिं परित्यज्य, छित्वा मेदोजालानि मत्स्याण्डेन निभानि आकृष्य अग्निमवचारयेत्। जङ्घामध्ये द्व्यङ्गुलमिन्द्रवस्तिः, जेज्जटाचार्य्यस्तु अर्द्धाङ्गुलमाह। अन्ये तु पार्ष्णिं प्रतीत्यत्र प्रतिशब्दं विपरीतार्थकमाहुः, तेन विपरीतायां पार्श्व्यामित्यर्थः; तेन दक्षिणभागगतायामपच्यां वामजङ्घायाम्, वामभागमागतायामपच्यां दक्षिणजङ्घायाम्, उभयोर्भागयोरागतायां उभयतः कर्म्म कर्त्तव्यमिति ज्ञेयम्। भागे च परिप्रती इत्युक्तत्वाद् भागार्थेऽपि प्रतिशब्दो व्याख्यातव्यः, तेन पार्ष्णिभागे जङ्घायाः पाश्चात्यभागे व्यधः कार्य्यः। द्वे दश चाङ्गुलानीति मित्वेत्यत्रापृथग्विभक्तिनिर्द्देशात् पार्ष्णितो दशाङ्गुलानि विहायाङ्गुलद्वयमात्रो व्यधः कार्य्य इति ज्ञेयम्। इन्द्रवस्तिं त्रयोदशेऽङ्गुले स्थितमर्द्धाङ्गुलप्रमाणं परित्यज्य छित्वा, धीमान् बुद्धिमान् ऊहापोहयोग्यो दृष्टकर्म्मा, जालानि मेदोजालानि, अपुनर्भवाय अग्नितप्तया शलाकया दहेदित्यर्थः, एवं हि मूलोच्छेदादपच्युपशम इति वदन्ति ॥ १६ । १७ ॥

आ गुल्फकर्णात् सुमितस्य जन्तोस्तस्याष्टभागं खुलकाद् विभज्य।
घोणज्र्जु वेधः सुरराजवस्तेर्हित्वाक्षिमात्रन्त्वपरे वदन्ति॥ १८॥

अमुमेवार्थं केचिदन्येन पाठेन पठन्ति—आ गुल्फेत्यादि। आ खुड्कात् गुल्फकर्णात् गुल्फौ कर्णाविव यस्य स तथा; खुलको जङ्घापादयोः सन्धिः। सुरराजवस्तेरिन्द्रवस्तेरष्टभागं जङ्घायाश्चरणहीनाया विंशत्यङ्गुलाया अष्टमो भागः सार्द्धमङ्गुलद्वयं हित्वा, यद्यपि द्व्यङ्गुल इन्द्रवस्तिस्तथापि तदुपघातपरिहारार्थं सार्द्धमेवाङ्गुलद्वयं ज्ञेयम्। अन्ये तु अक्षिमात्रमेव द्व्यङ्गुलं नेत्रप्रमाणं हित्वेति वदन्ति। घोणज्र्जु वेध इति गुल्फकर्णस्य खुलकस्य, घोणा नासा इव घोणा, यथोत्तरीयकण्डरा तस्या ऋजुरवक्रो वेधो व्यधः। कुर्य्यादित्यत्रापि पाठ स एवार्थः। अपच्यास्तु जङ्घाकण्डरागतमेदोमूलतायां भोजवचनम्—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम्। जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून्" इत्यादीति गयी, जेज्जटस्याप्ययमभिप्रायः। गूढपदभङ्गटिप्पनेऽन्यथा व्याख्यातम्—आ गुल्फकर्णादिति आङत्राभिविधौ न मर्य्यादायां, गुल्फकर्णावभिव्याप्य सुमितस्य सुनिश्चितं मितस्य तस्य प्रमाणस्य षट्सप्तत्यङ्गुलमितस्याष्टमभागः सार्द्धनवाङ्गुलमात्रम्, खुलकात् पार्ष्णिभागात् द्व्यङ्गुलप्रमाणात्, विभज्य पृथक्कृत्य, घोणा नासा तस्यां ऋजु यथा भवति तथाऽवक्रो वेधः कर्त्तव्यः। स च खुलकस्याङ्गुलत्रितयमष्टमभागस्य च सार्द्धनवाङ्गुलमेवं सार्द्धद्वादशाङ्गुलपरिहारेणेन्द्रवस्तिमर्म्मापि परिहृतं भवत्येवमुक्तमिन्द्रवस्तिं हित्वेति। तथा चोक्तं—"त्रयोदशाङ्गुले पार्ष्णिं प्रति कालान्तरासुहृत्। इन्द्रवस्तिरसृक्स्रावी मांसगोऽर्द्धाङ्गुलो भवेत्" इति। अक्षिमात्रमङ्गुलद्वयप्रमाणमपरे भिषज इति। एवं प्रथमश्लोकेनाधस्ताद् द्वितीयश्लोकेनेन्द्रवस्तेरुपरिष्टात् जङ्घायाः पाश्चात्यभागगतकण्डराया द्व्यङ्गुलमात्रो व्यधः कार्य्य इति स्थितम्। एवमनुपशमे वामपार्श्वजायां दक्षिणजङ्घापृष्ठमध्यादिन्द्रवस्तेरधस्तादूर्द्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्याण्डजालनिभं मेदोऽपनीय अग्निना दहेत्; अनेनेतरपार्श्वजा व्याख्याता, एवमुभयपार्श्वजातायामुभयत इति। भोजोऽप्याह—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम्। जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान् बहून्॥ कुर्व्वन्ति ग्रन्थीन् यस्तेभ्यः पुनः प्रकुपितोऽनिलः। दोषैस्तैरूर्द्ध्वगो वक्षःकक्षामन्यागलाश्रितः॥ नानाप्रकारान् कुरुते ग्रन्थीन् सा त्वपची मता। व्यामिश्रदोषोत्पन्नान्तु कृच्छ्रसाध्यां विनिर्द्दिशेत्॥ तासां वातोत्तरा कृष्णा वातिकी वेदनायुता। क्षिप्रपाकसमुत्थाना दाहयुक्ता च पैत्तिकी॥ मेदोऽधिका श्लैष्मिकी च विशेषात् सा गूढाऽविपाका कठिना कफात् स्निग्धा रुजाकरी॥ गलमालां विजानीयादपचीतुल्यसमाद्वैवा॥ तान्तु मालाकृतिं मन्याकण्ठहृद्वृजुसन्धिषु। लक्षणाम्॥"—इति। तस्माज्जङ्घायामेव कर्म्मणा मूलोच्छेदः कार्य्यं इति गूढपदभङ्गात्। वाग्भटेन चोभयत्रापि व्यधो दर्शितः। यथा—"इत्यशान्तौ गदस्यान्यपार्श्वजङ्घासमाश्रितम्। वस्तेरूर्द्ध्वमधस्ताद् वा मेदो हित्वाग्निना दहेत्"—इति॥ १८॥

मणिबन्धोपरिष्टाद् वा कुर्य्याद्रेखात्रयं भिषक्।
अङ्गुल्यन्तरितं सम्यगपचीनां निवृत्तये ॥ १९ ॥
चूर्णस्य काले प्रचलाककाक-गोधाहिकूर्म्मप्रभवां मसीन्तु।
दद्याच्च तैलेन सहेङ्गुदीनां यद् वक्ष्यते श्लीपदिनाञ्च तैलम्।
विरेचनं धूममथोपाददीत भवेच्च नित्यं यवमुद्गभोजी ॥ २० । २१ ॥
कर्कारुकैर्व्वारुकनारिकेल-प्रियालपञ्चाङ्गुलवीजचूर्णैः।
वाताव्र्बुदं क्षीरघृताम्बुसिद्धैरुष्णैः सतैलैरुपनाहयेत् तु।
कुर्य्याच्च मुख्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेशवारैः ॥ २२ ॥
स्वेदं विदध्यात् कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च।
वातघ्ननिर्य्यूहपयोऽम्लभागैः सिद्धं शताख्यं * त्रिवृतं पिबेद् वा ॥ २३ ॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्व्बुदे कायविरेचनञ्च।
विघृष्य चोडुम्बरशाकगोजी-पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत्।
श्लक्ष्णीकृतैः सर्ज्जरसप्रियङ्गु-पत्तङ्गरोध्राञ्जनयष्टिकाह्वैः ॥ २४ ॥

हन्वस्थिसन्धिमन्यागलस्थितापच्यां जङ्घाकर्म्माभिधाय कक्षाकूर्परसन्धिगतास्वपचीषु बाहुगतमेव कर्म्म विनिर्दिशन्नाह—मणिबन्धेत्यादि। अत्रापि पूर्व्ववत् एतेनेतरसक्थिबाहू च व्याख्यातौ इतिवचनादिन्द्रवस्तेरष्टभागमक्षिमात्रं वा विहायाग्रं रेखात्रयं कुर्य्यात्। तत्रापि विंशत्यङ्गुलजङ्घाया द्वादशाङ्गुलानि एवं षोड़शाङ्गुलकूर्परमणिबन्धमध्ये किञ्चिदधिकानि नवाङ्गुलानि मित्वा रेखात्रयमङ्गुलान्तरमिति ॥ १९ ॥

वमनविरेचनशिरोविरेचनैस्तथा स्थानान्तरगतशस्त्रक्षारानलैरन्तर्वहिःप्रमार्ज्जनाभ्यामन्तर्वहिःशुद्धीर्निर्दिश्य संशमनं निर्दिशन्नाह—चूर्णस्येत्यादि। चूर्णस्य काले रोपणकाले, प्रचलाकादीनां मसीर्दद्यात् क्षारमित्यर्थः। प्रचलाको मयूरः, कृकलासमन्ये प्राहुः। इङ्गुदीनां तैलेन क्षारमेव दद्यात्। यानि च तैलानि श्लीपदे तानि च दद्यात् ॥ २० । २१ ॥

कर्कारुकेत्यादि। कर्कारुकं कुष्माण्डं, एर्व्वारुर्ग्रीष्मकर्कटी, प्रियालश्चारः, पञ्चाङ्गुल एरण्डः, क्षीरघृतसिद्धैं रक्तपित्तानुबन्धे, उपनाहयेद् बध्नीयात्। वातघ्नेत्यादि। वातघ्ना देवदार्व्वादयः। तत्क्वाथक्षीरसौवीरभागैस्त्रिभिः स्नेहचतुर्गुणैरकल्कैस्तैलपाकः, एवमेव शतधा पक्वं शतपाकमेव त्रिवृतं वा मज्जवर्ज्जं घृततैलवसाभिर्वृतं पूर्व्वकल्कवातहरक्वाथपयोऽम्लैः सिद्धम्; एवमेव शतधा अपतानकविधानेन वा सिद्धं त्रिवृतम्। तत्राप्ययमेव साधनविधिः ॥ २२ । २३ ॥

स्वेदोपनाहा इत्यादि। मृदुः स्वेदो द्रवस्वेदः, उपनाहो बन्धः काकोल्यादिस्वद्रव्यकृतः क्षीराम्लपिष्टश्च, कायविरेचनं न शिरोविरेचनमिति व्यवच्छेदविषयः। भृशं विघृष्य उडुम्बरादि-

* श्वेताख्यमिति पाठान्तरम्।

विस्राव्य चारग्वधगोजिसोमाः श्यामा च योज्याः कुशलेन लेपे।
श्यामागिरिह्वाञ्जनकीरसेषु द्राक्षारसे सप्तलिकारसे च।
घृतं पिबेत् क्लीतकसंप्रसिद्धं पित्तार्व्बुदी तज्जठरी च जन्तुः॥ २५।२६॥
शुद्धस्य जन्तोः कफजेऽर्व्बुदे तु रक्तेऽवसिक्ते तु ततोऽर्व्बुदं तत्।
द्रव्याणि यान्यूर्द्ध्वमधश्च दोषान् हरन्ति तैः कल्ककृतैः प्रदिह्यात्॥
कपोतपारावतविड्विमिश्रैः सकांस्यनीलैः शुकलाङ्गलाख्यैः।
मूत्रस्तु काकादनिमूलमिश्रैः क्षारप्रदिग्धैरथवा प्रदिह्यात्॥ २७॥
निष्पावपिण्याककुलत्थकल्कमांसप्रगाढ़ैर्दधिमस्तुयुक्तैः।
लेपं विदध्यात् क्रिमयो यथात्र मूर्च्छन्ति मुञ्चन्त्यथ मक्षिकाश्च।
अल्पावशिष्टे क्रिमिभक्षिते * च लिखेत् ततोऽग्निं विदधीत पश्चात्॥२८॥
यदल्पमूलं त्रपुताम्रसीस-पट्टैः समावेष्ट्य तदायसैर्वा।
क्षाराग्निशस्त्राण्यसकृद् विदध्यात् प्राणानहिंसन् भिषगप्रमत्तः॥ २९॥
आस्फोतजातीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम्।
शुद्धे च तैलं विदधीत भार्गी-विडङ्गपाठात्रिफलाविपक्वम्॥ ३०॥
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद् विधिज्ञः॥ ३१॥

पत्रैः। तत्र शाकः खरमसृणपत्रो महातरुः, गोजी दार्व्वीपत्रिका, शाखोटक इत्यन्ये। विस्राव्येत्यादि। सोमः सोमलता, कङ्कोलमित्यपरे; श्यामा त्रिवृत्, गिरिह्वा श्वेतस्यन्दः, अञ्जनकी नीलाञ्जनिका, क्षारदं फलं श्रीफलिकेति लोके। सप्तलिका यवतिक्ता। यष्टीमधुकल्केन सामान्यस्नेहपरिभाषया सिद्धं घृतं शोधनं पित्तार्व्बुदी पित्तोदरी च पिबेत्॥ २४—२६॥

शुद्धस्येति वमनेन। अलाब्वा रक्तेऽवसिक्ते अपच्या दोषानूर्द्ध्वमधश्च यानि द्रव्याणि जीमूतकी-घोषवतीफलदन्तीद्रवन्तीत्रिवृत्तादीनि हरन्ति तेषां कल्कैर्लिम्पेत्। कांस्यनीलः कांस्यमसी। शुकः ग्रन्थिपर्णः। लाङ्गलिका कलिकारिका। काकादनी वायसतिन्दुका। कपोतादिविड्विमिश्रैः कांस-नीलादिसहितैः वायसतिन्दुकाया मूलयुक्तैर्मूत्रैर्विलिम्पेत्। अथवा क्षारप्रदिग्धैः क्षारसंयुक्तै-र्मूत्रैः प्रलिम्पेत्। क्षारप्रघृष्टैरथवा इत्यन्ये। तत्र क्षारोदकेन प्रघृष्टैर्वा कपोतविड़ादिभिः प्रदिह्यादित्यर्थः॥ २७॥

निष्पावेत्यादि। निष्पावः शिम्बः। विदध्यात् कुर्य्यात्। मूर्च्छन्ति पतन्ति। मुञ्चन्त्यथ मक्षिकाश्चेति क्रमीनिति शेषः। शिखराणाञ्च क्रमिभिर्भक्षितत्वात् अल्पावशिष्टत्वम्। असकृत् अनेकवारम्। अप्रमत्तः सावधानः। आस्फोता सारिवा। शुद्धे च रोपणार्थं भार्ग्यादितैलं तैल-पाककल्पेन। यदृच्छया पुनराकस्मिकोत्पादे अभिघातादिनिमित्तेऽबुद्धिपूर्व्वके वा॥ २८—३१॥

---

* क्रिमिभिः कृते इति पाठान्तरम्।

मेदोऽर्व्वुदं स्विन्नमथो विदार्य्य विशोध्य सीव्येद् गतरक्तमाशु।
ततो हरिद्रागृहधूमरोध्र-पत्तङ्गचूर्णैः समनःशिलालः।
व्रणं प्रतिग्राह्य मधुप्रगाढ़ैः करञ्जतैलं विदधीत शुद्धे॥ ३२॥
सशेषदोषाणि हि योऽर्व्वुदानि करोति तान्याशु पुनर्भवन्ति।
तस्मादशेषाणि समुद्धरेत्तु हन्युः सशेषाणि यथा हि वह्निः॥ ३३॥
संस्वेद्य गण्डं पवनोत्थमादौ नाड्यानिलघ्नौषधपत्रभङ्गैः।
अम्लैः समूत्रैर्विविधैः पयोभिरुष्णैः सतैलैः पिशितैश्च विद्वान्॥ ३४॥
विस्रावयेत् स्विन्नमतन्द्रितश्च शुद्धं व्रणञ्चाप्युपनाहयेत् तु।
शणातसीमूलकशिग्रु किण्व-प्रियालमज्जान्वितैस्तिलस्तु॥
कालामृताशिग्रु पुनर्नवार्कै गजादिनामाकरहाटकुष्ठैः।
एकैषिकावृक्षकतिल्वकैश्च सुराम्लपिष्टैरसकृत् प्रदिह्यात्॥ ३५॥
तैलं पिबेच्चामृतवल्लिनिम्ब-हंसाह्वयावृक्षकपिप्पलीभिः।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगे॥ ३६॥
स्वेदोपनाहैः कफसम्भवन्तु संस्वेद्य विस्रावणमेव कुर्य्यात्।
ततोऽजगन्धातिविषाविशल्या-विषाणिकाकुष्ठशुकाह्वयाभिः।
पलाशभस्मोदकपेषिताभिर्दिह्यात् सगुञ्जाभिरशीतलाभिः॥

मेद इत्यादि। पत्तङ्गो रक्तकाष्ठम्। आलं हरितालम्, करञ्जतैलम्। विद्रध्युक्तम्, तत्फलतैलमेवेत्यन्ये॥ ३२। ३३॥

संस्वेद्येत्यादि। पत्रभङ्गैः पल्लवैः। अनिलघ्नं वातहरं, एरण्डादिपल्लवयुतन्तु शुद्धवाते, अम्लैः काञ्जिकादिभिः पित्तावृते, कफावृते मूत्रक्वथितैः, रक्तावृते पयोभिः क्षीरैः, पिशितैश्चेति पिशितरसैः क्वथितैः, पिशितैर्मांसैर्वा पल्लवैः सह क्वथितैर्धातुक्षये। विस्रावयेज्जलौकादिभिः, ऊरुसन्धिविशिष्टशिराव्यधेन वा। रक्तविहरणशुद्धं गलगण्डं निरन्तरं शणादिवीजैरुपनाहयेत्। शुद्धमिति वचनेन सौश्रुतेऽपि रक्ताहरणस्य शुद्धिसंज्ञा, तेन चतुष्प्रकारा संशुद्धिरिति चरकवचनन्तु प्रायिकं स्मृतम्। किण्वं सुरावीजम्। काला हिंस्रा, गजादिनामा हस्तिपिप्पली। करहाटं मदनफलम्। एकैषिका अम्बष्ठा, त्रिवृदित्येके। वृक्षकः कुटजः। असकृदनेकवारम्। प्रदिह्यात् लिम्पेत्। हंसाह्वया हंसपदी। तैलं पिबेत् सिद्धमिति शेषः॥ ३४—३६॥

पित्तगलगण्डानन्तरं कफजस्य चिकित्सितं दर्शयन्नाह—स्वेदेत्यादि। स्वेदोऽत्र रूक्षः, उपनाहश्च सक्षारमूत्रः। अजगन्धा वनयमानी। विशल्या अग्निशिखावृक्षः। विषाणिका आवर्त्तकी।

दशार्द्धसंख्यैर्लवणैश्च युक्तं तैलं पिबेन्मागधिकादिसिद्धम् ।
प्रच्छर्द्दनं मूर्द्धविरेचनञ्च धूमश्च वैरेचनिको हितस्तु ॥ ३७ ॥
पाकक्रमो वापि सदा विधेयो वैद्येन पाकं गतयोः कथञ्चित् ॥ ३८ ॥
कटुत्रिकक्षौद्रयुताः समूत्रा भक्ष्या यवान्नानि रसाश्च मौद्गाः ।
सश्रृङ्गवेराः सपटोलनिम्बा हिताय देया गलगण्डरोगे ॥ ३९ ॥
मेदःसमुत्थे तु यथोपदिष्टां विध्येच्छिरां स्निग्धतनोर्नरस्य ।
श्यामासुधालोहपुरीषदन्ती रसाञ्जनैश्चापि हितः प्रदेहः ॥
मूत्रेण वालोड्य हिताय सारं प्रातः पिबेच्छालमहीरुहाणाम् ।
शस्त्रेण वापाट्य विदार्य्य चैनं मेदः समुद्धृत्य हिताय सीव्येत् ।
मज्जाज्यमेदोमधुभिर्दहेद् वा दग्धे च सर्पिर्मधु चावचार्य्यम् ॥
कासीसतुत्थे च ततोऽत्र देये चूर्णीकृते रोचनया समेते ।
तैलेन चाभ्यज्य हिताय दद्यात् सारोद्भवं गोमयजञ्च भस्म ।
हितञ्च नित्यं त्रिफलाकषायो गाढ़श्च बन्धो यवभोजनञ्च ॥ ४० ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने ग्रन्थ्यपच्यर्व्वुद गलगण्डचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

शुकाह्वयश्चर्म्मकारवटः । दशेत्यादि । दशार्द्धसंख्यैर्लवणैरिति पञ्चलवणैः । मागधिकादिसिद्धं पिप्पल्यादिकाथकल्काभ्यां सिद्धम् । पाकं गतयोः पाकप्राप्तयोर्वातकफजयोः । सर्व्वगलगण्डविषये योगं निर्द्दिशन्नाह—कटुत्रिकेत्यादि । भक्ष्या धानोल्लुम्बादयः । यवान्नानि गृञ्जनादीनि । एतेषां मूत्रस्विन्नशुष्काणां कटुत्रिकमधुभ्यां योजना भक्ष्यायेति बोद्धव्यम् । रसाश्च मौद्गाः मुद्गयूषाः । सश्रृङ्गवेराः सार्द्रका देयाः ॥ ३७—३९ ॥

मेदःसमुत्थ इत्यादि । यथोपदिष्टामिति ऊरुसन्धिनिर्द्दिष्टाम् । श्यामा त्रिवृत् । सुधा सेहुण्डः । लोहपुरीषं लोहमलम् । अन्ये तु लोहमगरुं वदन्ति, तथा पुरीषं पारावतविट् । मूत्रेणेत्यादि । शालसारादितरूणां सारं कर्षमात्रं गोमूत्रेण पिबेत् । जज्जटस्तु सारोद्भवं भस्म मूत्रेणालोड्य पिबेदिति वदति । शस्त्रेणेत्यादि । दाहे च मधुघृतावचारणं पश्चात्कर्म्म । ततोऽनन्तरं कासीसतुत्थगोरोचनाचूर्णावचरणं व्रणे । सारोद्भवं कालसारोद्भवम् । प्रक्षालने त्रिफलाकषायश्च ॥ ४० ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे ग्रन्थ्यपच्यर्व्वुदगलगण्डचिकित्सितव्याख्यानामाष्टादशोऽध्यायः ॥ १८ ॥

# एकोनविंशोऽध्यायः ।

अथातो वृद्ध्यपदंशश्लीपदानां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अन्त्रवृद्ध्या विना षड़्वा वृद्धयस्तासु वर्ज्जयेत् ।
अश्वादियानं व्यायामं मैथुनं वेगनिग्रहम् ।
अत्यासनं चङ्क्रमणमुपवासं गुरूणि च ॥ २ ॥
तत्रादितो वातवृद्धौ त्रैवृतस्निग्धमातुरम् ।
स्विन्नञ्चैनं यथान्यायं पाययेत विरेचनम् ॥
कोशाम्रतिल्वकैरण्ड-फलतैलानि वा नरम् ।
सक्षीरं वा पिबेन्मासं तैलमेरण्डसम्भवम् ॥
ततः कालेऽनिलघ्नानां क्वाथैः कल्कैश्च बुद्धिमान् ।
निरूहयेन्निरूढ़ञ्च भुक्तवन्तं रसौदनम् ॥
यष्टीमधुकसिद्धेन ततस्तैलेन योजयेत् ।
स्नेहोपनाहौ कुर्य्याच्च प्रदेहांश्चानिलापहान् ॥
विदग्धां पाचयित्वा वा सेवनीं परिवर्ज्जयेत् ।
भिन्द्यात् ततः प्रभिन्नायां यथोक्तं क्रममाचरेत् ॥ ३ ॥
पित्तजायामपक्वायां पित्तग्रन्थिक्रमो हितः ।
पक्वां वा भेदयेद् भिन्नां शोधयेत् क्षौद्रसर्पिषा ।
शुद्धायाञ्च भिषग् दद्यात् तैलं कल्कञ्च रोपणम् ॥ ४ ॥
रक्तजायां जलौकोभिः शोणितं निर्हरेद् भिषक् ।
पिबेद् विरेचनं वापि शर्कराक्षौद्रसंयुतम् ।
पित्तग्रन्थिक्रमं कुर्य्यादामे पक्वे च सर्व्वदा ॥ ५ ॥

अन्त्रवृद्धेरित्यादि । चङ्क्रमणं भ्रमणम् । तत्रेत्यादि । त्रैवृतमपतानकहरं वातव्याध्युक्तं, नरं पाययेतेति सम्बन्धः । काले आवस्थिके । निरूढञ्च यष्टीमधुकसिद्धतैलेन योजयेदनुवासनकल्पविधिना । यथोक्तमिति यथा येन प्रकारेणोक्तो द्विव्रणीयक्रमस्तमाचरेत् ॥ १—३ ॥

पित्तजायामित्यादि । कल्कञ्च रोपणं द्विव्रणीयोक्तकल्कादिसिद्धम् । गयी तु मिश्रकाध्यायोक्तमिति कथयति ॥ ४ । ५ ॥

वृद्धिं कफात्मिकामुष्णमूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेन्मूत्रेण संयुतम्।
विम्लापनादृते वापि श्लेष्मग्रन्थिक्रमो हितः॥
पक्वायाञ्च विभिन्नायां तैलं शोधनमिष्यते।
सुमनारुष्कराङ्कोठ-सप्तपर्णेषु साधितम्॥ ६॥
मेदःसमुत्थां संस्वेद्य लेपयेत् सुरसादिना।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः॥
स्विन्नाञ्चावेष्ट्य पट्टेन समाश्वास्य तु मानवम्।
रक्षन् फले सेवनीञ्च वृद्धिपत्रेण दारयेत्॥
मेदस्ततः समुद्धृत्य दद्यात् कासीससैन्धवे।
बध्नीयाच्च यथोद्दिष्टं शुद्धे तैलञ्च दापयेत्।
मनःशिलालवणैः सिद्धमारुष्करेषु च॥ ७॥
मूत्रजां स्वेदयित्वा तु वस्त्रपट्टेन वेष्टयेत्।
सेवन्याः पार्श्वतोऽधस्ताद् विध्येद् व्रीहिमुखेन च॥
अथात्र द्विमुखां नाड़ीं दत्त्वा विस्रावयेद् भिषक्।
मूत्रं, नाड़ीमथोद्धृत्य स्थगिकाबन्धमाचरेत्।
शुद्धायां रोपणं दद्याद् वर्ज्जयेदन्त्रहेतुकीम्॥ ८॥
अप्राप्तफलकोषायां वातवृद्धिक्रमो हितः॥ ९॥
तत्र या वङ्क्षणस्था तां दहेदर्द्धेन्दुवक्त्रया।
सम्यङ्मार्गावरोधार्थं कोषप्राप्तान्तु वर्ज्जयेत्।
त्वचं भित्त्वा-*-ङ्गुष्ठमध्ये दहेच्चाङ्गविपर्य्ययात्॥ १०॥

वृद्धिमित्यादि। उष्णैरुष्णवीर्य्यैः वचादि-पिप्पल्यादि-मुष्ककादिगणैः। अन्ये तु उष्णवीर्य्यैः अजगन्धादिभिः मिश्रकोक्तैः। पीतेत्यादि। गोमूत्रक्वथितस्यैव दारुहरिद्राकषायस्य वा पानं, पीतदारुस्थाने केचिद् देवदारु पठन्ति। विम्लापनादित्यादि। सुमनारुष्करादिकल्ककषायसिद्धं तैलम्। मेद इत्यादि। सुरसादिना मूत्रपिष्टेन लेपः। शिरोविरेचनद्रव्याणि पिप्पलीविडङ्गापामार्गशिरीषसिद्धार्थकादीनि संशोधनसंशमनीयोक्तानि, तैरपि गोमूत्रपिष्टैः सुखोष्णैर्लेपः; स्विन्नामित्यादि। यथोद्दिष्टञ्च बध्नीयाद् गोफणया स्थगिकाबन्धेन वा॥ ६। ७॥

मूत्रजामित्यादि। वर्ज्जयेदन्त्रहेतुकीं कोशप्राप्तामिति वाक्यशेषः। वातवृद्धिक्रमो हितः स्नेहपानादिरनुवासनान्तः। अर्द्धेन्दुवक्त्रया शलाकया। त्वचं भित्त्वेति त्वङ्मात्रं छित्त्वा।

* छित्त्वेति पाठान्तरम्।

अनेनैव विधानेन वृद्धी वातकफात्मिके ।
प्रदहेत् प्रयतः किन्तु स्नायुच्छेदोऽधिकस्तयोः ॥ ११ ॥
शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम् ।
व्यत्यासाद् वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ १२ ॥
उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः ।
शिरां विध्येन्मेढ्रमध्ये पातयेद् वा जलौकसः ॥ १३ ॥
हरेदुभयतश्चापि दोषानत्यर्थमुच्छ्रितान् ।
सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः ॥
यदि वा दुर्व्बलो जन्तुन वा प्राप्तं विरेचनम् ।
निरूहेण हरेत् तस्य दोषानत्यर्थमुच्छ्रितान् ॥ १४ ॥
प्रपौण्डरीकयष्ट्याह्व-वर्षाभूकुष्ठदारुभिः ।
सरलागुरुरास्नाभिर्वातजं संप्रलेपयेत् ॥
निचुलैरण्डवीजानि यवगोधूमशक्तवः ।
एतैश्च वातजं स्निग्धैः सुखोष्णैः सम्प्रलेपयेत् ।
प्रपौण्डरीकपूर्व्वैश्च द्रव्यैः सेकः प्रशस्यते ॥ १५ ॥
गैरिकाञ्जनयष्ट्याह्व-सारिवोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत् ॥
पद्मोत्पलमृणालैश्च ससर्ज्जार्ज्जुनवेतसैः ।
सर्पिःस्निग्धैः समधुकैः पैत्तिकं सम्प्रलेपयेत् ॥
सेचयेच्च घृतक्षीर-शर्करेक्षुमधूदकैः ।
अथवापि सुशीतेन कषायेण वटादिना ॥ १६ ॥

अङ्गविपर्य्ययादिति वामान्त्रवृद्धौ दक्षिणाङ्गुष्ठमध्ये, दक्षिणान्त्रवृद्धौ वामाङ्गुष्ठमध्ये । उपदंशेष्वित्यादि । तत्र शिरां विध्येत् बहुदोषे, अल्पदोषे तु जलौकापातनम् । पित्तरक्तजयोर्मृदुत्वाज्जलौकसा इत्यन्ये । जेज्जटस्तु अनवगाढे जलौकसा, अवगाढे शिराव्यध इति ॥ ८—१३ ॥

हरेदित्यादि । बलवतो वमनविरेचनाभ्यां दोषहरणम् । यदि वेत्यादि । दुर्व्बलाविरेच्ययोः पुनरत्यर्थोच्छ्रितदोषयोर्दोषहरणानुकूल्येन निरूहेण हरणम् । न वा प्राप्तं न युक्तमित्यर्थः ॥ १४ ॥

प्रपौण्डरीकेत्यादि । सरला त्रिवृत् । निचुलः वेतसः । प्रपौण्डरीकपूर्व्वैः प्रपौण्डरीकादिभिः पूर्व्वोक्तैर्वातोपदंशोक्तैः । सेकः परिषेकः ॥ १५ ॥

गैरिकेत्यादि । अञ्जनं रसाञ्जनम् । मृणालं पद्मनालम् । सेचयेत् परिषेचयेदित्यर्थः ॥ १६ ॥

शालाश्वकर्णाजकर्ण-धवलत्वग्भिः क्वाथितम्।
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत्॥
रजन्यतिविषामुस्ता-सरलासुरदारुभिः।
सपत्रपाठापत्तूरैरथवा सम्प्रलेपयेत्।
सुरसारग्वधाद्योश्च क्वाथाभ्यां परिषेचयेत्॥ १७॥
एवं संशोधनालेप-सेकशोणितमोक्षणैः।
प्रतिकुर्य्यात् क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपि॥
नायाति च यथा पाकं प्रयतेत तथा भिषक्।
विदग्धैस्तु शिरास्नायु-त्वङ्मांसैः क्षीयते ध्वजः॥
शस्त्रेणोपचरेच्चापि पाकमागतमाशु वै।
तदापोह्य तिलैः सर्पिः-क्षौद्रयुक्तैः प्रलेपयेत्॥
करवीरस्य पत्राणि जात्यारग्वधयोस्तथा।
प्रक्षालने प्रयोज्यानि वैजयन्त्यर्कयोस्तथा॥ १८॥
सौराष्ट्रीं गैरिकं तुत्थं पुष्पकासीससैन्धवम्।
रोध्रं रसाञ्जनं दार्व्वीं हरितालं मनःशिलाम्॥
हरेणुकैले च तथा सूक्ष्मचूर्णानि कारयेत्।
तच्चूर्णं क्षौद्रसंयुक्तमुपदंशेषु पूजितम्॥ १९॥
जम्ब्वाम्रसुमनानिम्ब-श्वेतकाम्बोजिपल्लवाः।
शल्लकीवदरीविल्व-पलाशतिनिशत्वचः॥
क्षीरिणाञ्च त्वचो योज्याः क्वाथे त्रिफलया सह।
तेन क्वाथेन नियतं व्रणं प्रक्षालयेद् भिषक्॥

शालः शङ्कुः। अश्वकर्णः पूर्व्वदेशप्रसिद्धः अश्वत्थसदृशः। अजकर्णः पियाशाल इति लोके। पत्तूरः शिरबालिका॥ १७॥

एवं पूर्व्वोक्तप्रकारेण प्रतिकुर्य्यात्, आमोपदंशमिति शेषः। प्राक्स्थानं सूत्रस्थानम्, तत्र मिश्रकोक्तैः, अपिशब्दात् द्विव्रणीयोक्तैः। 'तस्मात् संशोधनालेपसेकशोणितमोक्षणैः। प्रतिकुर्य्यात् क्रियायोगैः प्राक्स्थानोक्तैर्हितैरपीति' केचित् पठन्ति। तदापोह्य पूयमपहृत्य। प्रक्षालने व्रणस्य करवीरपत्राणि, तेषां कषाय इत्यर्थः; तथैवापरयोर्वैजयन्त्यर्कयोः पत्राणि, वैजयन्ती अग्निमन्थवृक्षः॥ १८॥

सौराष्ट्री तुवरमृत्तिका, पुष्पं पुष्पाञ्जनम्। जम्ब्वाम्रेत्यादि। श्वेतः श्वेतस्यन्दः। काम्बोजिका कूविका, गयी तु माषपर्णीमाह। तिनिशः स्यन्दनः। क्षीरिणो वटादयः।

अस्मिन्नेव कषाये तु तैलं धीरो विपाचयेत्।
गोजीविड़ङ्गयष्टीभिः सर्व्वगन्धैश्च संयुतम्।
एतत् सर्व्वोपदंशेषु श्रेष्ठं रोपणमिष्यते ॥
सर्ज्जिका तुत्थकासीसं शैलेयञ्च रसाञ्जनम्।
मनःशिलासमैश्चूर्णं व्रणवीसर्पनाशनम् ॥
गुन्द्रां दग्ध्वा कृतं भस्म हरितालं मनःशिला।
उपदंशविसर्पाणामेतच्छान्तिकरं परम् ॥
मार्कवस्त्रिफला दन्ती ताम्रचूर्णमयोरजः।
उपदंशं निहन्त्येष वृक्षमिन्द्राशनिर्यथा ॥ २० ॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत् क्रियाम्।
तयोरेव च या योग्या वीक्ष्य दोषबलाबलम् ॥ २१ ॥
उपदंशे विशेषेण शृणु भूयस्त्रिदोषजे।
दुष्टव्रणविधिं कुर्य्यात् कुथितं मेहनं त्यजेत् ॥
जम्ब्वोष्ठेनाग्निवर्णेन पश्चाच्छेषं दहेद् भिषक्।
सम्यग्दग्धञ्च विज्ञाय मधुसर्पिः प्रयोजयेत्।
शुद्धे च रोपणं दद्यात् कल्कं तैलं हितञ्च यत् ॥ २२ ॥
स्नेहस्वेदोपपन्ने तु श्लीपदेऽनिलजे भिषक्।
कृत्वा गुल्फोपरि शिरां विध्येत् तु चतुरङ्गुले ॥
समाप्यायितदेहञ्च वस्तिभिः समुपाचरेत्।
मासमेरण्डजं तैलं पिबेन्मूत्रेण संयुतम् ॥

अस्मिन्नित्यादि। गोजी गोजिह्वा। सर्व्वगन्धैरेलादिपरिपठितैः। सामान्यकषायपाककल्पितेन चतुर्गुणेन कषायेण सिद्धं तिलतैलमकल्कं कषायोपादानात्. कल्कमप्यनन्तरोक्तौषधगणात् कर्त्तव्यमित्यन्ये, कषायशब्दस्य कल्केऽपि वृत्तेः। मार्कवो भृङ्गराजः ॥ १९। २० ॥

उपदंशयोर्द्वयोरपि रक्तसन्निपातजयोस्तुल्यकारणत्वात्तुल्यैव चिकित्सा। सन्निपातप्रभवे वातादिचिकित्सितमेकीकृत्य दद्यात् ॥ २१ ॥

उपदंशे इत्यादि। कुथितं मेहनं त्यजेदिति यावन्मात्रं मेहनं कुथितं भवेत् तावन्मात्रं छिन्द्यादित्यर्थः। जम्ब्वौष्ठः जम्बूफलसदृशमुखाग्रः कृष्णपाषाणरचितः ॥ २२ ॥

स्नेहोऽत्र शोधनार्थं एव, श्लीपदानां रूक्षणीयत्वात्। गयी तु स्नेहस्वेदोपनाहाद्यैश्चेति पठति। समाप्यायितदेहमिति रक्तापकर्षेण स्थापनाद् देहस्यानुक्रमादाप्यायितस्य। वस्तिरत्र निरूहोऽभिप्रेतः।

पयसौदनमश्नीयान्नागरक्कथितेन च।
त्रैवृतश्चोपयुञ्जीत शस्तो दाहस्तथाग्निना॥ २३॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीश्च क्रियां कुर्य्यात् पित्तार्व्वुदविसर्पवत्॥ २४॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लैष्मिके भिषक्।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः।
पिबेद् वाप्यभयाकल्कं मूत्रेणान्यतमेन च॥
कटुकाममृतां शुण्ठीं विडङ्गं दारु चित्रकम्।
हितं वा लेपने नित्यं भद्रदारु सचित्रकम्॥
विडङ्गमरिचार्केषु नागरे चित्रकेऽथवा।
भद्रदार्व्वेलुकाख्ये च सर्व्वेषु लवणेषु च।
तैलं पक्वं पिबेद् वापि यवान्नश्च हितं सदा॥ २५॥
पिबेत् सर्षपतैलं वा श्लीपदानां निवृत्तये।
पूतिकरञ्जपत्राणां रसं वापि यथाबलम्॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम्।
प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागवित्॥
केचुकाकन्दनिर्य्यासं लवणन्त्वथ पाकिमम्।
रसं दत्त्वाथ पूर्व्वोक्तं पेयमेतद् भिषग्जितम्॥ २६॥

मासमित्यादि शुण्ठीकर्षपक्वेनाष्टगुणेन पयसा वा भोजनं कुर्य्यात्। त्रैवृतमित्यादि। त्रैवृतमुपपादितं वातव्याधौ, तच्चोपयुञ्जीत स्नेहप्रयोगकाले। पित्तजे श्लीपदे शिरां विध्येत्, गुल्फस्योपरि चतुरङ्गुलम्; अन्ये तु गुल्फस्याध इति शिराव्यध एव संबध्नन्ति॥ २२—२४॥

शिरामित्यादि। शिरां सुविदितामिति क्षिप्रमर्म्मण उपरि चतुरङ्गुलम्। अभीक्ष्णं पुनःपुनरित्यर्थः। अत्र मूत्रेणान्यतमेन चेति अष्टमूत्रेष्वेकेनापि हरीतकीं सेवेत। कटुकामित्यादि। अन्यतमेन मूत्रेण पिबेदित्यत्रापि संबध्यते। एलुकाख्यमेलवालुकम्। कण्टकिकरञ्जपत्रस्वरसं सरलपुत्रञ्जीवकादिरसं यथाबलं बलानतिक्रमेण पलमर्द्धपलं पलद्वयं वा कटुतैलाक्षप्रक्षेपं पिबेत्। पूतीकरञ्जः कण्टकिकरञ्जश्चिरविल्व इत्यन्ये। पुत्रञ्जीवकोऽनेनैव नाम्ना प्रसिद्धः। पाकिमं लवणं विड्लवणम्। भिषग्जितमौषधम्॥ २५। २६॥

काकादनीं काकजङ्घां बृहतीं कण्टकारिकाम्।
कदम्बपुष्पीं मन्दारीं लम्बां शुकनसां तथा॥
दग्ध्वा मूत्रेण तद् भस्म स्रावयेत् क्षारकल्पवित्।
तत्र दद्यात् प्रतीवापं काकोडुम्बरिकारसम्॥
मदनाच्च फलात् क्वाथं शुकाख्यास्वरसं तथा।
एष क्षारस्तु पानीयः श्लीपदं हन्ति सेवितः॥
अपचीं गलगण्डञ्च ग्रहणीदोषमेव च।
भक्तस्यानशनञ्चैव हन्यात् सर्व्वविषाणि च॥
एभ्यश्चैव तैलं संसिद्धं नस्याभ्यङ्गेषु पूजितम्।
एतानेवामयान् हन्ति ये च दुष्टव्रणा नृणाम्॥ २७॥
द्रवन्तीं त्रिवृतां दन्तीं नीलीं श्यामां तथैव च।
सप्तलां शङ्खिनीञ्चैव दग्ध्वा मूत्रेण गालयेत्॥
दद्याच्च त्रिफलाक्वाथमेष क्षारस्तु साधितः।
अधो गच्छति पीतस्तु पूर्व्वैश्चाप्याशिषः समाः॥ २८॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने वृद्ध्युपदंशश्लीपदचिकित्सितं नामैकोनविंशोऽध्यायः॥ १९॥

काकादनीमित्यादि। काकादनी काकहिंस्रेत्यर्थः। काकजङ्घा एतन्नाम्ना प्रसिद्धैव। कदम्बपुष्पी अलम्बुषा मुण्डतिकेति लोके। लम्बा कटुकालाबुः। शुकनसा चर्म्मकारकवटः। क्षारं षड्गुणेन मूत्रेण एकविंशतिवारान् स्रावयेत्। काकोडुम्बरिकारसं मदनफलक्वाथं शुकनसास्वरसञ्च प्रत्येकं गोमूत्रेण समं पादैकमपरेषां प्रक्षिप्य क्षारकल्पक्रमेण विपक्वः सिद्धः। श्लीपदहरद्रवेण शाणादिमात्रया पानार्हः। काकादन्यादीनां क्वाथेन तथा काकोडुम्बरिकारसमदनफलशुकनसास्वरसेषु प्रत्येकं समेषु तैलं साध्यम्॥ २७॥

द्रवन्तीमित्यादि। द्रवन्ती शम्बरी, शतमूलिका वा। त्रिवृता त्रिवृत्। दन्ती दन्तिनी। नीली शारदं फलम्, श्रीफलमिति लोके। श्यामा वृद्धदारकः। शङ्खिनी यवतिक्ताभेदः। पूर्व्वैश्चाशिषः समा पूर्व्वैः पूर्व्वक्षारयोगैः सह समास्तुल्या भवन्ति। आशिषः आशंसनानि अर्थवादाः। इदमुक्तं भवति—ये केचिद् गुणाः पूर्व्वमभिहितास्तेऽत्रापि उक्ता ज्ञेया इत्यर्थः॥ २८॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे वृद्ध्युपदंशश्लीपदचिकित्सितव्याख्यानामैकोनविंशोऽध्यायः॥ १९॥

# विंशोऽध्यायः ।

अथातः क्षुद्ररोगचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

तत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ।
शुक्तिश्रुङ्गीयवक्षार-कल्कैश्चालेपयेद् भिषक् ॥
श्यामालाङ्गलकीपाठा-कल्कैर्वापि विचक्षणः ।
पक्कां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ २ ॥
अन्धालजीं यवप्रख्यां पनसीं कच्छपीं तथा ।
पाषाणगर्द्दभञ्चैव पूर्व्वं स्वेदेन योजयेत् ॥ ३ ॥
मनःशिलातालकुष्ठ दारुकल्कैः प्रलेपयेत् ।
परिपाकगतान् भित्त्वा व्रणवत् समुपाचरेत् ॥ ४ ॥
विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
इरिवेल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा ॥
पित्तजस्य विसर्पस्य क्रियया साधयेद् भिषक् ।
रोपयेत् सर्पिषा पक्कान् सिद्धेन मधुरौषधैः ॥ ५ ॥
चिप्पमुष्णाम्बुना सिक्तमुत्कृत्य स्नावयेद् भिषक् ।
चक्रतैलेन चाभ्यज्य सर्ज्जचूर्णेन चूर्णयेत् ॥
बन्धेनोपचरेच्चैनमशक्यञ्चाग्निना दहेत् ।
मधुरौषधसिद्धेन ततस्तैलेन रोपयेत् ॥ ६ ॥
कुनखे विधिरप्येष कार्य्यो हि भिषजा भवेत् ।
उपाचरेदनुशयीं श्लेष्मविद्रधिवद् भिषक् ॥ ७ ॥

तत्रेत्यादि । शुक्तिः जलशुक्तिः । श्रुङ्गी स्वर्ज्जिका । यवः प्रसिद्धः । क्षारशब्दः प्रत्येकं सम्बध्यते । गयी तु अजगल्लिकामपक्कां यवक्षारशुक्तिसौराष्ट्रीकल्केनालेपयेत्, ततो जलौकोभिः स्नावयेत्, आलेपश्चाद्य उपक्रमः सर्व्वशोफानामित्युक्तेः । मधुरौषधानि काकोल्यादीनि ॥ १—५ ॥

उत्कृत्य दुष्टमांसं पक्वं, चक्रतैलं चक्रोत्पन्नं, हस्तादिपीडितन्युदासार्थं चक्रतैलग्रहणम् । "चिप्पं शोणितसेकेन शोधनैश्चाप्युपाचरेत् । गतोष्माणं तथा चैनमुष्णोदपरिषेचितम् ॥ शस्त्रेण तु यथायोगमुत्कृत्य स्नावयेद् व्रणम् । शिलातेजोवती चैव रोचना च रसाञ्जनम् ॥ कल्कैरेतैश्च संपिष्टैः शोधयित्वा व्रणं ततः । हरिद्रागुरुकालीयकल्कैश्च सरसाञ्जनैः ॥ सिद्धेन तिलतैलेन तेन कुर्व्वीत रोपणम्" इति क्वचित् पाठः । एष विधिः चिप्पक्रमः ॥ ६ । ७ ॥

विदारिकां समभ्यज्य स्विन्नां विम्लाप्य लेपयेत्।
नगवृत्तिकवर्षाभू-विल्वमूलैः सुपेषितैः॥
व्रणभावगतायां वा कृत्वा संशोधनीं क्रियाम्।
रोपणार्थं हितं तैलं कषायमधुरैः शृतम्॥ ८॥
प्रच्छानैर्वा जलौकोभिः स्राव्याऽपक्वा विदारिका।
अजकर्णैः सपालाशमूलकल्कैः प्रलेपयेत्॥
पक्वां विदार्य्य शस्त्रेण पटोलपिचुमर्द्दयोः।
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत्॥
बद्ध्वा च क्षीरवृक्षस्य कषायैः खदिरस्य च।
व्रणं प्रक्षालयेच्छुद्धास्ततस्ता रोपयेत् पुनः॥ ९॥
मेदोऽर्व्वुदविधानेन साधयेच्छर्कराव्र्वुदम्॥ १०॥
कच्छूं विचर्च्चिकां पामां कुष्ठवत् समुपाचरेत्।
लेपश्च शस्यते सिक्थ-शताह्वागौरसर्षपैः॥
वचादार्व्वीसर्षपैर्वा तैलं वा नक्तमालजम्।
सारतैलमथाभ्यङ्गे कुर्व्वीत कटुकैः शृतम्॥ ११॥
पाददार्य्यां शिरां विद्ध्वा स्वेदाभ्यङ्गौ प्रयोजयेत्।
मधूच्छिष्टवसामज्ज-सर्ज्जचूर्णघृतैः कृतः।
यवाह्वगैरिकोन्मिश्रैः पादलेपः प्रशस्यते॥ १२॥
पादौ सिक्त्वारनालेन लेपनं ह्यलसे हितम्।
कल्कीकृतैर्निम्बतिल-कासीसालैः ससैन्धवैः॥

विदारिकामित्यादि। विम्लाप्य लेपयेत् अङ्गुष्ठादिभिः। नगवृत्तिकः जिङ्गिनी। गुड़गनिकेति लोके, वृश्चिकालीत्यन्ये। मधुरैः काकोल्यादिभिः। अजकर्णः सर्ज्जः। पालाशः शठी। पिचुमर्द्दो निम्बः। क्षीरवृक्षाः वटोडुम्बरप्लक्षपिप्पलगर्द्दभाण्डाः॥ ८।९॥

मेदोऽर्व्वुदेत्यादि। नक्तमालजतैलेनापक्वेनैव, कटुकौषधसिद्धेन इत्यन्ये। कटुकौषधानि पिप्पल्यादीनि। सारतैलेन शिंशपागुरुसरलदेवदार्व्वादितैलेन। सारतैलमथाभ्यङ्गे इत्यत्र सारलं तैलमभ्यङ्गे इति केचित् पठन्ति ; तत्र सरलसारस्नेहः सामान्यस्नेहपरिभाषया पक्तव्यः॥ १०।११॥

पादेत्यादि। पूर्व्वमादौ स्वेदादि कृत्वा पश्चाच्छिरां विध्येत्(१)। यवाह्वा यवक्षारः।

लाक्षारसोऽभया वापि कार्य्यं स्याद्रक्तमोक्षणम् ।
सिद्धं रसे कण्टकार्य्यास्तैलं वा सार्षपं हितम् ।
कासीसरोचनशिला-चूर्णैर्वा प्रतिसारणम् ॥ १३ ॥
उत्कृत्य दग्ध्वा स्नेहेन जयेत् कदरसंज्ञकम् ॥ १४ ॥
इन्द्रलुप्ते शिरां मूर्द्धि, स्निग्धस्विन्नस्य मोक्षयेत् ।
कल्कैः समरिचैर्दिह्याच्छिलाकासीसतुत्थकैः ॥
कुटन्नटादारुकल्कैर्लेपनं वा प्रशस्यते ।
प्रच्छयित्वावगाढ़ं वा गुञ्जाकल्कैर्मुहुर्मुहुः ॥
लेपयेदुपशान्त्यर्थं कुर्य्याद् वापि रसायनम् ।
मालतीकरवीराग्नि-नक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥ १५ ॥
अरूंषिकां हृते रक्ते सेचयेन्निम्बवारिणा ।
दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु ॥
हरितालनिशानिम्ब-कल्कैर्वा सपटोलजैः ।
यष्टीनीलोत्पलैरण्ड-मार्कवैर्वा प्रलेपयेत् ॥ १६ ॥
शिरां दारुणके विद्ध्वा स्निग्धस्विन्नस्य मूर्द्धनि ।
अवपीड़ं शिरोवस्तिमभ्यङ्गञ्च प्रयोजयेत् ।
क्षालने कोद्रवतृण-क्षारतोयं प्रशस्यते ॥ १७ ॥
उपरिष्टात् प्रवक्ष्यामि विधिं पलितनाशनम् ॥ १८ ॥

शिला मनःशिला । प्रतिसारणं घर्षणम् । उत्कृत्येत्यादि । कदरन्तु शस्त्रेण उत्कृत्य अग्नितप्तेन तैलेनैव दहेत्, सूक्ष्ममार्गानुसारित्वात् तैलस्य । अन्ये तु वह्निसन्तप्ताः सर्व्वे स्नेहाः सद्यःसूक्ष्म-मार्गानुसारिणो भवन्ति, अतः सर्व्वेऽपि स्नेहा ग्राह्याः इति वदन्ति । इन्द्रलुप्त इत्यादि । कुटन्नटे-त्यादि कुटन्नटस्तगरः । रसायनविधिना लेपं कुर्य्यादिति ज्ञापयति । दुःसाध्योऽयं व्याधिर्न शक्यते रसायनमन्तरेणापनेतुम् । रसायनमष्टादश दिव्यौषधयः, सोमश्च औषधराजः । मालतीत्यादि । स्नेह-पाककल्कपरिभाषया जात्यादिकल्कसिद्धेन कटुतैलेन गोमूत्रचतुर्गुणेन शिरोऽभ्यञ्ज्यात् ॥ १२-१५ ॥

अरूंषिकामित्यादि । निम्बक्काथेन सिक्त्वा अश्वपुरीषरसयुक्तेन सैन्धवचूर्णेन लेपयेत् । हरितालादिभिर्लेपयेत् । मार्कवः भृङ्गराजः । इन्द्रलुप्तोक्तस्य जात्यादितैलस्याभ्यङ्गकरणमरूंषिकायाः शोधनरोपणम् । शिरामित्यादि । अवपीड्य दीयत इत्यवपीड़ः । पलितचिकित्सितमाह—उपरिष्टा-दित्यादि । उपरिष्टात् मिश्रकोक्ते चिकित्सिते ॥ १६—१८ ॥

मसूरिकायां कुष्ठघ्न-लेपनादिक्रिया हिता।
पित्तश्लेष्मविसर्पोक्ता क्रिया वा संप्रशस्यते ॥ १९ ॥
जतुमणिं समुत्कृत्य मषकं तिलकालकम्।
क्षारेण प्रदहेद् युक्त्या वह्निना वा शनैः शनैः ॥ २० ॥
न्यच्छे व्यङ्गे शिरामोक्षो नीलिकायाञ्च शस्यते।
यथान्यायं यथाभ्यासं लालाट्यादिशिराव्यधः ॥
घृष्ट्वा दिह्यात् त्वचं पिष्ट्वा क्षीरिणां क्षीरसंयुताम्।
बलातिबलयष्ट्याह्व-रजनीर्वा प्रलेपनम् ॥
पयस्यागुरुकालीय-लेपनं वा सगैरिकम्।
क्षौद्राज्ययुक्त्या लिम्पेद् दंष्ट्रया शूकरस्य च।
कपित्थराजादनयोः कल्कं वा हितमुच्यते ॥ २१ ॥
यौवने पिड़कास्वेष विशेषाच्छर्दनं हितम्।
लेपनञ्च वचारोध्र-सैन्धवैः सर्षपान्वितैः।
कुस्तुम्बुरुवचालोध्र-कुष्ठैर्वा लेपनं हितम् ॥ २२ ॥
पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा।
तेनैव सिद्धं सक्षौद्रं सर्पिःपानं प्रदापयेत्।
निम्बारग्वधयोः कल्को हित उत्सादने भवेत् ॥ २३ ॥
परिवृत्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत्।
ततोऽभ्यज्य शनैश्चर्म्म चानयेत् पीड़येन्मणिम् ॥
प्रविष्टे च मणौ चर्म्म स्वेदयेदुपनाहनैः।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः शाल्वणादिभिः ॥
दद्याद् वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥ २४ ॥
वपाठिकां जयेदेवं यथादोषं चिकित्सकः ॥ २५ ॥

मसूरिकायामित्यादि। आदिशब्देनोद्वर्त्तनघृतादि। क्षारेण क्षारविषये, अग्निना अक्षारविषये। न्यच्छे इत्यादि। घृष्ट्वा समुद्रफेनादि। क्षीरिणो वटादयो वृक्षाः पञ्च, तेषां त्वचं पिष्ट्वेत्यनुवर्त्तते। पयस्या अर्कपुष्पी, कालीयं कृष्णचन्दनम् ॥ १९—२१ ॥

यौवने इत्यादि। एष अनन्तरोक्तः। पद्मिनीत्यादि। निम्बारग्वधयोः कल्कः कषायः उत्सादने उद्वर्त्तने हितो भवेदित्यर्थः; कल्के कषायशब्दो वर्त्तते, 'पञ्चविधं कषायकल्पनम्' इति वचनात्। परिवृत्तिमित्यादि। उपनाहयेत् बध्नीयात्। अभ्यज्य सर्पिषा। हीनमध्यमोत्तमदोषबलापेक्षया

निरुद्धप्रकशे नाड़ीं लौहीमुभयतोमुखीम्।
दारवीं वा जतुकृतां घृताभ्यक्तां प्रवेशयेत्॥
परिषेके वसामज्ज-शिशुमारवराहयोः।
चक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम्॥
त्र्यहात् त्र्यहात् स्थूलतरां सम्यङ्नाड़ीं प्रवेशयेत्।
स्रोतो विवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत्।
भित्वा वा सेवनीं मुक्त्वा सद्यःक्षतवदाचरेत्॥ २६॥
सन्निरुद्धगुदं रोगं वल्मीकं वह्निरोहिणीम्।
प्रत्याख्याय यथायोगं चिकित्सितमथाचरेत्॥
विसर्पोक्तेन विधिना साधयेदग्निरोहिणीम्।
सन्निरुद्धगुदे योज्या निरुद्धप्रकशक्रिया॥ २७॥
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
विधानेनार्व्वुदोक्तन शोधयित्वा च रोपयेत्॥
वल्मीकन्तु भवेद् यस्य नातिवृद्धममर्म्मजम्।
तत्र संशोधनं कृत्वा शोणितं मोक्षयेद् भिषक्॥
कुलत्थिकाया मूलैश्च गुड़ूच्या लवणेन च।
आरेवतस्य मूलैश्च दन्तीमूलस्तथैव च॥
श्यामामूलैः सपललैः शक्तुमिश्रैः प्रलेपयेत्।
सुस्निग्धैश्च सुखोष्णश्च भिषक् तमुपनाहयेत्॥
पक्वं वा तद् विजानीयाद् गतीः सर्व्वा यथाक्रमम्।
अभिज्ञाय ततश्छित्त्वा प्रदहेन्मतिमान् भिषक्॥
संशोध्य दुष्टमांसानि क्षारेण प्रतिसारयेत्।
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक्॥

एकरात्रत्रिपञ्चरात्रविकल्पः। निरुद्धेत्यादि। दारवीं काष्ठमयीम्। जतुकृतां लाक्षामयीम्। सेवनीं भित्त्वा मुक्त्वा वा शस्त्रेण मूत्रस्रोतःसङ्कोचकारणं चर्म्मावदारयेत्; तथापि द्वारस्याविस्तारे मणिद्वारमथैवं दारयेत्॥ २२—२७॥

असाध्येष्वपि वल्मीकाग्निरोहिणीप्रभृतिषु चिकित्सितं कार्य्यम्। "यावदुच्छ्वसिति प्राणी तावत् कार्य्या प्रतिक्रिया। कदापि दैवयोगेन दृष्टारिष्टोऽपि जीवति" इत्युक्तत्वात्। वल्मीकमित्यादि। तत्र संशोधनं कृत्वा औषधेनेति शेषः। आरेवतः किरमालकः। श्यामा त्रिवृद्विशेषः। पक्वं

सुमना ग्रन्थयश्चैव भल्लातक-मनःशिले ।
कालानुसारी सूक्ष्मैला चन्दनागुरुणी तथा ॥
एतैः सिद्धं निम्बतैलं वल्मीके रोपणं हितम् ।
पाणिपादोपरिष्टात् तु छिद्रैर्बहुभिरावृतम् ।
वल्मीकं यत् सशोफं स्याद् वर्ज्जयेत् तत् तु विजानता ॥ २८ ॥
धात्र्याः स्तन्यं शोधयित्वा बाले साध्याहिपूतना ।
पटोलपत्रत्रिफला-रसाञ्जनविपाचितम् ।
पीतं घृतं नाशयति कृच्छ्रामप्यहिपूतनाम् ॥
त्रिफलाकोलखदिर-कषायं व्रणरोपणम् ।
कासीसरोचनातुत्थ-हरितालरसाञ्जनैः ॥
लेपोऽम्लपिष्टो वदरीत्वग् वा सैन्धवसंयुता ।
कपालतुत्थजं चूर्णं चूर्णकाले प्रयोजयेत् ॥ २९ ॥
चिकित्सेन्मुष्ककच्छूश्चाप्यहिपूतनपामवत् ॥ ३० ॥
गुदभ्रंशे गुदं स्विन्नं स्नेहाभ्यक्तं प्रवेशयेत् ।
कारयेद् गोफणाबन्धं मध्यच्छिद्रेण चर्म्मणा ।
विनिर्गमार्थं वायोश्च स्वेदयेच्च मुहुर्म्मुहुः ॥ ३१ ॥
क्षीरे महत् पञ्चमूलं मूषिकाश्चान्त्रवर्ज्जिताम् ।
पक्त्वा तस्मिन् पचेत् तैलं वातघ्नौषधसंयुतम् ।
गुदभ्रंशमिदं कृच्छ्रं पानाभ्यङ्गात् प्रसाधयेत् ॥ ३२ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने क्षुद्ररोगचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

तिलपिष्टिः, तस्योपनाहः पाचनम् । कालानुसारी कृष्णसारिवा । कासीसादिभिरम्लकाञ्जिकपिष्टैः प्रलेपनम्, वदरीत्वक्सैन्धवैर्वा प्रलेपनम् । कपालं पक्वमृद्भाण्डखण्डः ॥ २८—३० ॥

गुदेत्यादि । मूषिकां निर्गतान्त्रां कृत्वा महत्पञ्चमूलस्य प्रस्थं क्षीरप्रस्थे त्रिगुणितजले विपचेत्। क्षीरप्रस्थेऽवशिष्टे तैलकुडवं दत्त्वा भद्रदार्व्वादिकल्कपाकं कृत्वा, यथाबलं पानाभ्यङ्गाभ्यां गुदभ्रंशं साधयेत् ॥ ३१ । ३२ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे क्षुद्ररोगचिकित्सितव्याख्यानामविंशतितमोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ।

अथातः शूकरोगचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

संलिख्य सर्षपीं सम्यक् कषायैरवचूर्णयेत् ।
कषायेष्वेव तैलञ्च कुर्व्वीत व्रणरोपणम् ॥ २ ॥
अष्ठीलिकां जलौकोभिर्ग्राहयेत् कुशलो भिषक् ।
तथा चानुपशाम्यन्तीं कफग्रन्थिवदुद्धरेत् ॥ ३ ॥
स्वेदयेद् ग्रथितं शश्वन्नाड़ीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ४ ॥
कुम्भीकां पाकमापन्नां भिन्द्याच्छुद्धान्तु रोपयेत् ।
तैलेन त्रिफलारोध्र-तिन्दुकाम्रातकेन तु ॥ ५ ॥
ग्राहयित्वा जलौकोभिरलजीं सेचयेत् ततः ।
कषायैस्तैस्तु सिद्धश्च तैलं रोपणमिष्यते ॥ ६ ॥
बलातैलेन कोष्णेन मृदितं परिषेचयेत् ।
मधुरैः सर्पिषा स्निग्धैः सुखोष्णैरुपनाहयेत् ॥ ७ ॥
संमूढ़पिड़कां क्षिप्रं जलौकोभिरुपाचरेत् ।
भित्त्वा पर्य्यागताञ्चापि लेपयेत् क्षौद्रसर्पिषा ॥ ८ ॥
अवमन्थे गते पाकं भिन्ने तैलं विधीयते ।
धवाश्वकर्णपत्तङ्ग-शल्लकीतिन्दुकीकृतम् ॥ ९ ॥
क्रियां पुष्करिकायान्तु शीतां सर्व्वां प्रयोजयेत् ।
जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेचयेत् ॥ १० ॥

शूकादिचिकित्सितं ज्ञेयम्, आदिशब्दस्य लुप्तत्वात् । तत्रादिशब्देन निदानोक्ताभिघात-
निमित्ता दुर्भगनिमित्ताश्चात्र ज्ञातव्याः । संलिख्येत्यादि । कषायैरिति कषायवृक्षचूर्णैरवचूर्णयेत् ।
कषायवृक्षैर्मिश्रकोक्तशोधनद्रव्यैश्चूर्णीकृतैरवचूर्णयेदित्यर्थः । तेषु रोपणकषायसाधनद्रव्येषु पादि-
केषु जलं चतुर्गुणं दत्त्वा रोपणं तैलं कुर्य्यात् ॥ १ । २ ॥
अष्ठीलिकामित्यादि । ग्रन्थेरिव शस्त्रेणोद्धरणम् । शश्वदिति शश्वत् प्रतिदिनम् । सुस्निग्ध-
रित्युपनाहविशेषणम् ॥ ३—५ ॥
ग्राहयित्वेत्यादि । कषायैः कषायवृक्षकषायैः, कषायवृक्षाः प्लक्षादयः ॥ ६ ॥
अश्वकर्णः पूर्व्वदेशे गन्धसुण्ड
बलेत्यादि । मधुराणि काकोल्यादीनि । पर्य्यागता पक्का ।

स्पर्शहान्यां हरेद्रक्तं प्रदिह्यान्मधुरैरपि।
क्षीरेक्षुरससर्पिर्भिः सेचयेच्च सुशीतलैः ॥ ११ ॥
पिड़कामुत्तमाख्याञ्च वड़िशेनोद्धरेद् भिषक्।
उद्धृत्य मधुसंयुक्तः कषायरवचूर्णयेत ॥ १२ ॥
रसक्रिया विधातव्या लिखिते शतपोनके।
पृथक्पर्ण्यादिसिद्धञ्च देयं तलमनन्तरम् ॥ १३ ॥
क्रियां कुर्याद् भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ॥ १४ ॥
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्व्वुदे।
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम्।
शोधनं रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥
यथास्वं सपिषः पानं पथ्यञ्चापि विरेचनम्।
हितः शोणितमोक्षश्च यच्चापि लघु भोजनम् ॥ १५ ॥
अर्व्वुदं मांसपाकञ्च विद्रधिं तिलकालकम्।
प्रत्याख्याय प्रकुर्व्वीत भिषक् सम्यक् प्रतिक्रियाम् ॥ १६ ॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने शूकरोगचिकित्सितं नामैकविंशोऽध्यायः ॥ २१ ॥

इति ख्यातोऽश्वत्थसदृशः। पत्तङ्गं रक्तचन्दनम्। पिड़कामित्यादि। कषायैश्चूर्णैरित्यर्थः। शोधनकाले तु शोधनद्रव्यैश्चूर्णीकृतैरवचूर्णयेत्, रोपणकाले तु रोपणैरेव। रसक्रिया फाणिताकृतिः, शोधनकाले शोधनद्रव्यकृता, रोपणकाले रोपणद्रव्यकषायकृता। पृथक्पर्ण्यादिसिद्धं तैलं सामान्यस्नेहपरिभाषाकल्पेन, पृथक्पर्ण्यादीनि मिश्रके रोपणघृतपठितानि काकोल्यादिवर्ज्जितानि। विसर्पवत् पित्तविसर्पवत् ॥ ७—१४ ॥

रक्तेत्यादि। वीक्ष्येति द्विव्रणीयोक्तामवस्थां निरूप्येत्यर्थः। अवचारयेत् कषायादीन् इत्यर्थः ॥ १५ । १६ ॥

इति सुश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनाविरचिते निबन्धसंग्रहे
शूकरोगचिकित्सितव्याख्यानामैकविंशतितमोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः ।

अथातो मुखरोगचिकित्सितं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

चतुर्व्विधेन स्नेहेन मधूच्छिष्टयुतेन च ।
वातजेऽभ्यञ्जनं कुर्य्यान्नाडीस्वेदञ्च बुद्धिमान् ॥ २ ॥
विदध्यादोष्ठकोपे तु शाल्वणञ्चोपनाहने ।
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ॥ ३ ॥
श्रीवेष्टकं सर्ज्जरसं सुरदारु सगुग्गुलु ।
यष्टीमधुकचूर्णन्तु विदध्यात् प्रतिसारणम् ॥ ४ ॥
पित्तरक्ताभिघातोत्थं जलौकोभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥ ५ ॥
शिरोविरेचनं धूमः स्वेदः कवल एव च ।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥
त्र्यूषणं सर्ज्जिकाक्षारो यवक्षारो विड़ं तथा ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ६ ॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियङ्गुत्रिफलारोध्रं सक्षौद्रं प्रतिसारणम् ॥ ७ ॥
एतदोष्ठप्रकोपानां साध्यानां कर्म्म कीर्त्तितम् ।
दन्तमूलगतानान्तु रोगाणां कर्म्म वक्ष्यते ॥ ८ ॥

चतुर्व्विधेन चतुःप्रकारेण । स्नेहेन दोषाद्यपेक्षया समस्तव्यस्तेन स्नेहपाकपरिभाषया वातहर-कषायमधूच्छिष्टकल्कशृतेनाभ्यङ्गः । ततः स्निग्धं नाड़ीस्वेदेन यथोक्तेन स्वेदयेत् । मस्तिष्कः शिरोवस्तिप्रकारः, शिरोवस्तिरचनवद् बद्धो मस्तिष्क इति । अन्ये तु पठन्ति 'मस्तिष्क्ये चैव नस्ये च' इत्यादि । अत्र मस्तिष्क्यं मस्तिष्के हितमभ्यङ्गतैलपिचुधारणशिरोवस्त्यादि ॥ १—३ ॥

श्रीवेष्टकः सरलनिर्य्यासः । प्रतिसारणं घर्षणम् ॥ ४ ॥

क्रियां कुर्य्यादशेषत इति संशोधनसंशमनरूपां वाह्यामाभ्यन्तरीञ्च । मेदोजे पुनरस्नेहपूर्व्वं स्वेदिते भित्त्वा मेदसोऽपकर्षणम् । शोधिते चाग्नेरवचारणं पथ्यम् ॥ ५—८ ॥

शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलामुस्तं गण्डूषः सरसाञ्जनः ॥
प्रियङ्गवश्च मुस्तश्च त्रिफला च प्रलेपनम्।
नस्यञ्च त्रिफलासिद्धं मधुकोत्पलपद्मकैः ॥ ९ ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्।
सपञ्चलवणः क्षारः सक्षौद्रः प्रतिसारणम्।
हितः शिरोविरेकश्च नस्यं स्निग्धश्च भोजनम् ॥ १० ॥
विस्राविते दन्तवेष्टे व्रणांस्तु प्रतिसारयेत्।
रोध्रपत्तङ्गयष्ट्याह्व-लाक्षाचूर्णैर्मधूत्तरैः ॥
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः।
काकोल्यादौ दशक्षीर-सिद्धं सर्पिश्च नस्यतः ॥ ११ ॥
शौषिरे हृतरक्ते तु रोध्रमुस्तरसाञ्जनैः।
सक्षौद्रः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥
सारिवोत्पलयष्ट्याह्व-सावराग्रुचन्दनैः।
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ॥ १२ ॥
क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः ॥ १३ ॥
संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा।
काकोदुम्बरिकागोजी-पत्रैर्विस्रावयेदसृक् ॥
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्।
पिप्पलीः सर्षपांश्चैव नागरं नैचुलं फलम् ॥
सुखोदकेन संसृष्टं कवलश्चापि धारयेत्।
घृतं मधुरकैः सिद्धं हितं कवल-नस्ययोः ॥ १४ ॥

नस्यमित्यादि। शोणितावसेकशोधनगण्डूपकुपित-वातानुबन्धे स्नेहनं नस्यम्। तत्र कफानुगते मधुकादिभिः सह त्रिफलासिद्धं तैलं नस्ये प्रयोज्यम्, शोणितानुगमे च त्रिफलादि संसिद्धं घृतमिति। तरुणे तत्कालोत्पन्ने। नस्यमिति शीतादोक्तस्नेहेनेति शेषः; दोषदूष्यस्थानानामैक्यात् ॥ ९।१० ॥

विस्राविते इत्यादि। मधूत्तरैर्मधुप्रधानैः। क्षीरिणः वटादयः। दशक्षीरसिद्धं दशगुणेन क्षीरेण घृतं साधनीयम् ॥ ११—१३ ॥

संशोध्योभयत इति वमनविरेचनाभ्यामूर्द्ध्वमधश्च कायं शोधयित्वा शिरोविरेचनेन शिरश्च शोधयेदित्यर्थः। काकोदुम्बरिका काष्ठोदुम्बरिका। गोजी गोजिह्वा। निचुलः वेतसः। मधुरकैः काकोल्यादिभिः ॥ १४ ॥

शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत् ।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्व्वाश्च शीतलाः ॥ १५ ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
कृमिदन्तकवच्चापि विधिः कार्य्यो विजानता ॥ १६ ॥
छित्त्वाधिमांसं सक्षौद्रैरेभिश्चूर्णैरुपाचरेत् ।
वचातेजोवतीपाठा-सर्ज्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलत्रिफलानिम्ब-कषायश्चात्र धावने ।
हितः शिरोविरेकश्च धूमो वैरेचनश्च यः ॥ १७ ॥
सामान्यं कर्म्म नाड़ीनां विशेषश्चात्र मे शृणु ॥
यं दन्तमभिजायेत नाड़ी तं दन्तमुद्धरेत् ।
छित्त्वा मांसानि शस्त्रेण यदि नोपरिजो भवेत् ।
शोधयित्वा दहेद् वापि क्षारेण ज्वलनेन वा ॥
भिनत्त्युपेक्षिते दन्ते हनुकास्थि गतिध्र वम् ।
समूलं दशनं तस्मादुद्धरेद् भग्नमस्थि च ॥ १८ ॥
उद्धृते तूत्तरे दन्ते समूले स्थिरबन्धने ।
रक्तातियोगात् पूर्व्वोक्ता रोगा घोरा भवन्ति हि ॥
काणः सञ्जायते जन्तुरर्द्दितश्चास्य जायते ।
चलमप्युत्तरं दन्तमतो नापहरेद् भिषक् ॥ १९ ॥
धावने जातिमदन-स्वादुकण्टकखादिरम् ।
कषायं जातिमदन-कटुकस्वादुकण्टकैः ॥

तेजोवती कासमर्द्दनिका । सक्षौद्रश्च सपिप्पलीकः सुखोदके कवलः ॥ १५—१७ ॥ सामान्यमित्यादि । सामान्यं तुल्यम् । वातादिनाड़ीनामेव यत् कर्म्म चोक्तं तदेव दन्तनाड़ीनां सामान्यमेकमित्यर्थः । यं दन्तमभिजायेतेत्यादि यं दन्तमभि समीपे नाड़ी स्यात् तं दन्तमुद्धरेत् । यदि नोपरिजो भवेदिति ऊर्द्ध्वदन्तपङ्क्तिगतश्चेन्न भवति । स्थिरबन्धने दृढतर-दन्तवेष्टने । समूले स्थिरबन्धने इत्यत्र शोणितं संप्रसिच्यते इति पठन्ति । धावने प्रक्षालने ।

यष्ट्याह्वरोध्रमञ्जिष्ठा-खदिरश्चापि यत् कृतम्।
तैलं संशोधनं तद्धि हन्याद् दन्तगतां गतिम्॥ २०॥
कीर्त्तिता दन्तमूले तु क्रिया दन्तेषु वक्ष्यते॥ २१॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य वा।
निर्य्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः॥
स्नैहिकश्च हितो धूमो नस्यं स्निग्धश्च भोजनम्।
रसो रसयवाग्वश्च क्षीरं सन्तानिका घृतम्।
शिरोवस्तिर्हितश्चापि क्रमो यश्चानिलापहः॥ २२॥
अहिंसन् दन्तमूलानि शर्करामुद्धरेद् भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्ताः प्रतिसारयेत्।
दन्तहर्षक्रियां वापि कुर्य्यान्निरवशेषतः॥ २३॥
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता॥ २४॥
जयेद् विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम्।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः।
भद्रदार्व्वादिवर्षाभू-लेपैः स्निग्धैश्च भोजनैः॥ २५॥
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च।
ततो विदारीयष्ट्याह्व-शृङ्गाटककशेरुकैः।
तैलं दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत्॥ २६॥
हनुमोक्षे समुद्दिष्टां कुर्य्याच्चार्द्दितवत् क्रियाम्॥ २७॥
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्ज्जयेत्॥ २८॥

जातिमदनकटुकस्वादुकण्टकखदिरकषायमिति। अन्ये तु कषायमामपूगफलमिति मन्यन्ते। स्वादुकण्टकः गोक्षुरः, कण्टकारिवृक्षमन्ये॥ १८—२१॥

सर्पिषस्त्रैवृतस्य वेति वातव्याधिपठितस्य। निर्य्यूहः क्वाथः। रसो मांसरसः। रसयवाग्वः मांसरसयवाग्वः। क्षीरं दुग्धम्। सन्तानिका सर इति भाषा, क्षीरसान्निध्यात् सन्तानिकाघृते क्षीरोत्थे एव। प्रतिसारयेद् घर्षयेदित्यर्थः। उद्धृतदशनस्य स्थानं दहेच्छुद्ध्यर्थं शोणितस्राव-निषेधार्थञ्च शुषिरस्य वा पूयकृतच्छिद्रस्य स्थानं दहेदिति शेषः॥ २२—२६॥

अर्द्दितवत् समुद्दिष्टामिति समुद्दिष्टग्रहणेनैतज् ज्ञापयति—अर्द्दितोक्तामातिदेशिकीं वातव्याधि-विधिनोपचरेदित्येवंरूपां समुद्दिष्टामुक्तां वैशेषिकीं वातार्द्दितोक्तां मस्तिष्कशिरोवस्तिनस्यधूमोप-

साध्यानां दन्तरोगाणां चिकित्सितमुदीरितम्।
जिह्वागतानां साध्यानां कर्म्म वक्ष्यामि सिद्धये ॥ २९ ॥
ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा भवेत् ॥
पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते।
प्रतिसारणगण्डूषं नस्यञ्च मधुरं हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे ॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकु-क्षारयूषैश्च भोजयेत् ॥ ३० ॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेकगण्डूष-धूमैश्चैनमुपाचरेत् ॥ ३१ ॥
जिह्वागतानां कर्म्मोक्तं ताल्व्यानां प्रवक्ष्यते ॥ ३२ ॥
अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकाम्।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
नोत्कृष्टञ्चैव हीनञ्च त्रिभागं छेदयेद् भिषक्।
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च।
हीनच्छेदाद् भवेच्छोफो लाला निद्रा भ्रमस्तमः ॥
तस्माद् वैद्यः प्रयत्नेन दृष्टकर्म्मा विशारदः।
गलशुण्डीन्तु संच्छिद्य कुर्य्यात् प्राप्तमिमं क्रमम् ॥

नाहादिकां द्विविधामपि क्रियां कुर्य्यादिति। साध्यानां दन्तरोगाणां चिकित्सितमुक्तम्, श्यावदन्त-दालनभञ्जनानामसाध्यत्वान्नोदाहृतम् ॥ २७--२९ ॥

विघृष्टेषु गोजीशेफालिकादिपत्रघृष्टेषु प्रतिसारणं मधुरैः काकोल्यादिभिः गण्डूषोऽपि तैरेव कथितः; नस्यमपि दशगुणक्षीरं तत्कल्कसाधितं हितम्। लिखितेषु मण्डलाग्रादिना। असृजः क्षये असृजोऽवसाने इत्यर्थः। क्षारो यवक्षारः, तत्प्रधानैः क्षारयूषैः ॥ ३० ॥

उपजिह्वामित्यादि। गण्डूषः कफव्रणहरद्रव्येण कफकण्टकहरद्रव्येण वा। धूमैश्च वैरेचनिकधूमैः। अलासः पुनरत्र कफरक्तकृत आशुकारित्वात् प्रत्याख्याय विरेचनशोणितमोक्षणकवल-शिरोविरेचनधूमवमनादिभिरुपचर्य्यः ॥ ३१। ३२ ॥

अङ्गुष्ठेत्यादि। छेदयेन्मण्डलाग्रेणेति भागद्वयरूद्धं वा परित्यज्य भागेनैकेनार्द्धेन वा छेदयेत्।

मरिचातिविषापाठा वचाकुष्ठकुटन्नटैः।
क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।
निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत् ॥
इङ्गुदीकिणिहीदन्ती-सरलासुरदारुभिः।
पञ्चाङ्गीं कारयेत् पिष्टैर्वर्त्तिं गन्धोत्तरां शुभाम् ॥
ततो धूमं पिबेज्जन्तुर्द्विरह्नः कफनाशनम्।
क्षारसिद्धेषु मुद्गेषु यूषश्चाप्यशने हितः ॥ ३३ ॥
तुण्डिकेर्य्यध्रुषे कूर्म्मे सङ्घाते तालुपुप्पुटे।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ॥ ३४ ॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ॥ ३५ ॥
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः।
कीर्त्तितं तालुजानान्तु कण्ठ्यानां कर्म्म वक्ष्यते ॥ ३६ ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम्।
छर्द्दनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत्।
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णशः ॥
पत्तङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत्।
द्राक्षापरूषकक्काथौ हितौ च कवलग्रहे ॥

भ्रमश्चक्रारूढस्येव भ्रमणम्। तमोऽन्धकारदर्शनम्। प्राप्तं युक्तम्। कुटन्नटः श्योनाकः। किणिही कटभी। सरला त्रिवृत्। पञ्चाङ्गीमिति पञ्चभिरङ्गभूतैर्द्रव्यैः कृता पञ्चाङ्गी ताम्। गन्धोत्तरां गन्धप्रधानाम्। द्विरह्नः अह्नि वारद्वयमिति। क्षारसिद्धेषु मुद्गेषु कृतो यूषो यवक्षारेषु लवणीकृतो भोजने हितः पथ्यः ॥ ३३ ॥

तुण्डिकेरीत्यादि। विशेषः शस्त्रकर्म्मणीति शस्त्रकर्म्मणि विशेषो भेदः। तत्र तुण्डीकेरी भेद्या तालुपुप्पुटकोऽपि, अध्रुषः सङ्घातश्च छेद्यः। मांसोच्छ्रायत्वाल्लेख्यः कूर्म्मश्छेद्यो वाऽवस्थायाम् ॥ ३४ ॥

तालुत्यादि। चकारेणात्र तालुशोषे पित्तहरविधिः समुच्चीयते, पित्तेनापि तालुशोषजननात्। कीर्त्तितं तालुजानामिति अत्र रक्तार्व्वुदस्यासाध्यत्वात् कर्म्म नोदाहृतम् ॥ ३५। ३६ ॥

शोणितमोक्षणादि कर्म्मपञ्चकं सामान्यं साध्यानाम्। अभीक्ष्णशः वारंवारम्। पत्तङ्गं रक्त-

आगारधूमकटुकैः श्लैष्मिकीं प्रतिसारयेत् ।
श्वेताविड़ङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥
नस्यकर्म्मणि योक्तव्यं तथा कवलधारणे ।
पित्तवत् साधयेद् वैद्यो रोहिणीं रक्तसम्भवाम् ॥ ३७ ॥
विस्राव्य कण्ठशालूकं साधयेत् तुण्डिकेरिवत् ।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ ३८ ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ॥ ३९ ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ॥ ४० ॥
गिलायुश्चापि * यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥ ४१ ॥
अमर्म्मस्थं सुपक्वञ्च भेदयेद् गलविद्रधिम् ॥ ४२ ॥
वातात् सर्व्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
ततोऽस्मै स्नैहिकं धूममिमं दद्याद् विचक्षणः ।
शालराजादनैरण्ड-सारेङ्गुदिमधूकजाः ॥
मज्जानो गुग्गुलुध्याम मांसीकालानुसारिवाः ।
श्रीसर्ज्जरसशैलेय-मधूच्छिष्टानि वाहरेत् ॥
तत् सर्व्वं सुकृतं चूर्णं स्नेहेनालोड्य युक्तितः ।
टुण्टूकवृन्तं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥
एष सर्व्वसरे धूमः प्रशस्तः स्नैहिको मतः ।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥

चन्दनम् । श्वेता श्वेतस्यन्दा । विस्राव्येत्यादि । साधयेत् तुण्डिकेरिवदिति तुण्डिकेर्य्यामपि गलशुण्डीविध्यतिदेशात् साधयेद् गलशुण्डीवदिति वाच्ये तुण्डिकेरीविध्यतिदेशो निःशेषच्छेदनार्थः । गलशुण्डीवदत्र त्रिभागच्छेदो न कार्य्यं इति बोधयति, अशेषच्छेदो न पुनस्त्रिभागादिच्छेद इति । विस्राव्यो जलौकादिभिः । शिरोविरेचनधूमलेपनक्षारादिभिः शोधनम् ॥ ३७—४२ ॥

मुखावयवगतान् निर्द्दिश्य सकलवदनगतान् निर्द्दिशन्नाह—वातादित्यादि । लवणैश्चूर्णैः पञ्चलवणकृतैः । तैलं वातहरैः सिद्धं हितं कवलनस्ययोरिति वातहरभद्रदार्व्वादिकल्ककषायसिद्धं तैलं कवले नस्ये च हितमित्यर्थः । शालराजादनेत्यादि । शालः शङ्कुः, राजादनः क्षीरिका, सारः सारवृक्षः खदिरादिः, ध्यामं गन्धतृणम्, कालानुसारिवा कालवल्ली । श्रीः लवङ्गम्, सर्ज्जरसः सरलनिर्य्यासः । स्नेहेनालोड्य युक्तित इति यावता स्नेहेन नातिघनत्वं नातितनुत्वं लेपयोग्यं

* शिलायुश्चापीति पाठान्तरम् ।

पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः।
सर्व्वः पित्तहरः कार्य्यो विधिर्मधुरशीतलः।
प्रतिसारणगण्डूष-धूमसंशोधनानि च ॥
कफात्मके सर्व्वसरे विधिं कुर्य्यात् कफापहम्।
पिवेदतिविषां पाठां मुस्तञ्च सुरदारु च ॥
रोहिणीं कटुकाख्याञ्च कुटजस्य फलानि च।
गवां मूत्रेण मनुजो भागैर्धरणसम्मितैः।
एष सर्व्वान् कफकृतान् रोगान् योगोऽपकर्षति ॥ ४३ ॥
क्षीरेक्षुरसगोमूत्र-दधिमस्त्वम्लकाञ्जिकैः।
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ ४४ ॥
रोगाणां मुखजातानां, साध्यानां कर्म्म कीर्त्तितम्।
असाध्या अपि वक्ष्यन्ते रोगा ये यत्र कीर्त्तिताः ॥ ४५ ॥
ओष्ठप्रकोपा वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः।
दन्तमूलेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ ॥ ४६ ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ॥ ४७ ॥
जिह्वागतेष्वलासस्तु तालव्येष्वर्व्वुदं तथा।
स्वरघ्नो वलयो वृन्दो वलासश्च विदारिका।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ ४८ ॥
असाध्याः कीर्त्तिता ह्येते रोगा नव दशैव च।
तेषाञ्चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ४९ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने मुखरोगचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

भवति, तावता स्नेहेनेत्यर्थः। टुण्टुकः श्योनाकः। शुद्धकायस्य वमनादिभिः। अतिविषादि-चूर्णधरणभागं प्रतिदिवसं गोमूत्रेण पेयम्। धरणमानमपि केचित् सौश्रुतीयाः पठन्ति। धरणमत्र चतुर्व्विंशतिरक्तिकाप्रमाणम्। सर्व्वेष्वेव मुखरोगेष्वत्र दोषादिविभागेन कवलान् निर्द्दिशन्नाह— क्षीरेक्षुरसेत्यादि। दोषं रोगकार्य्यं वीक्ष्य ॥ ४३।४४ ॥

ओष्ठजास्त्रयः। दन्तमूलेषु द्वौ। दन्तभवेषु त्रयः। जिह्वायामेकः। तालुन्यप्येक एव। स्वरघ्नादयो नव गले। समुदायसंख्या नव दशैव तु ॥ ४५—४९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे मुखरोगचिकित्सितव्याख्यानाम द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः।

अथातः शोफानां चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

षड्विधोऽवयवसमुत्थः शोफोऽभिहितो लक्षणतः प्रतीकारतश्च। सर्व्वसरस्तु पञ्चविधः। तद्यथा—वातपित्तश्लेष्मसन्निपातविषनिमित्तः॥ २॥

तत्रातितर्पितस्याध्वगमनादतिमात्रमभ्यवहरतो वा पिष्टान्नहरितकशाकलवणानि क्षीणस्य वातिमात्रमम्लमुपसेवमानस्य मृत्पक्वलोष्टकटशर्करानूपौदकमांससेवनादजीर्णिनो वा ग्राम्यधर्म्मसेवनाद् विरुद्धाहारसेवनाद्धस्त्यश्वोष्ट्ररथपदातिसंक्षोभणाद् दोषा धातून् प्रदूष्य श्वयथुमापादयन्त्यखिले शरीरे॥ ३॥

तत्र वातश्वयथुररुणः कृष्णो वा मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषाः॥ ४॥

पित्तश्वयथुः पीतो रक्तो वा शीघ्रानुसारी, ओषचोषादयश्चात्र वेदनाविशेषाः॥ ५॥

श्लेष्मश्वयथुः पाण्डुः शुक्लो वा स्निग्धः कठिनः शीतो मन्दानुसारी, कण्ड्वादयश्चात्र वेदनाविशेषाः॥ ६॥

सन्निपातश्वयथुः सर्व्ववर्णवेदनः॥ ७॥

अवयवे समुत्तिष्ठतीति अवयवसमुत्थः, स्था गतिनिवृत्तौ, स्थिरत्वादित्यर्थः। अत्राभिहित उक्तः। चकारोऽनुक्तहेत्वादिसमुच्चयार्थः। अन्ये तु लक्षणशब्देनैव हेत्वादिं निर्द्दिशन्ति, अपरे तु असाध्यानामप्रतीकारसमुच्चयार्थं वर्णयन्ति। सर्व्वं सरतीति सर्व्वसरः। गतिमद् वातः सर्व्वसरे सरणयोग्यः॥ १। २॥

पञ्चविधस्यैव सर्व्वसरस्याहारविहाराभ्यां सर्व्वाङ्गगतदोषकोपहेतुं निर्द्दिशन्नाह—तत्रेत्यादि। तर्पितस्य लघ्वन्नादिभिः। पिष्टान्नादिमतिमात्रमभ्यवहरतः। पिष्टान्नग्रहणेन सर्व्वविधगुर्व्वाहारावरोधः। क्षीणस्य वेति कृशस्य अत्यर्थमम्लमुपसेवमानस्य। मृदाद्याहाररतस्य, मृत् मृत्तिका, पक्वलोष्टोऽग्निपक्वलोष्टः, कटशर्करा अग्निदग्धशर्कराः, आनूपाः महिषादयः, औदकाः मत्स्यादयः। अजीर्णिनो वेति ग्राम्यधर्म्मो मैथुनं, तस्य सेवनात्। विरुद्धं हिताहितीयाध्याये प्रोक्तम्। संक्षोभणात् यानजन्यादित्यर्थः। अखिले शरीरे सकले काये॥ ३॥

तत्रेत्यादि। अरुण ईषद्रक्तः। ओषादयः ओषचोषपरितापादयः। कण्ड्वादयः कण्डूगुरुत्वमित्यादयः,

विषनिमित्तस्तु गरोपयोगाद् दुष्टतोयसेवनात् प्रकोथोदकावगाहनात् सविष-सत्त्वदिग्धचूर्णेनावचूर्णनाद्वा सविषमूत्रपुरीषशुक्रस्पृष्टानां तृणकाष्ठादीनां संस्पर्शनात्। स तु मृदुः क्षिप्रोत्थानोऽवलम्बी चलो वा दाहपाकप्रायश्च भवति ॥ ८ ॥

भवन्ति चात्र।

दोषाः श्वयथुमूर्द्ध्वं हि कुर्व्वन्त्यामाशयस्थिताः।
पक्वाशयस्था मध्ये च वर्च्चःस्थानगतास्त्वधः।
कृत्स्नं देहमनुप्राप्ताः कुर्य्युः सर्व्वसरं तथा ॥ ९ ॥
श्वयथुर्मध्यदेशे यः स कष्टः सर्व्वगश्च यः।
अर्द्धाङ्गेऽरिष्टभूतश्च यश्चोर्द्ध्वं परिसर्पति ॥ १० ॥
श्वासः पिपासा दौर्ब्बल्यं ज्वरश्छर्दिररोचकः।
हिक्कातीसारकासाश्च शूनं सङ्क्षपयन्ति हि ॥ ११ ॥
सामान्यतो विशेषाच्च तेषां वक्ष्यामि भेषजम् ॥ १२ ॥

शोफिनः सर्व्वे एव परिहरेयुरम्ललवणदधिगुड़वसापयस्तैलघृतपिष्टमय गुरूणि ॥ १३ ॥

तत्र वातश्वयथौ त्रैवृतमेरण्डतैलं वा मासमर्द्धमासं वा पाययेत्, न्यग्रोधादि-कषायसिद्धं सर्पिः पित्तश्वयथौ, आरग्वधादिसिद्धं श्लेष्मश्वयथौ, सन्निपातश्वयथौ

गरोपयोगः वहिरन्तश्च। प्रकोथः पूतिभावः, सविषकीटादिकोथप्रकुपितोदकावगाहनात्, अयं पुन र्बहिरेव। सविषसत्त्वलालास्पर्शनात् तद्दिग्धचूर्णेनावचूर्णनाद् वेति सविषमूत्रादिमिश्रचूर्णैरव-धूलनात्। सविषचूर्णं वृश्चिकालीनामकं क्षुपभेदं केचित् कथयन्ति ॥ ४—९ ॥

तस्य देहदेशजन्मस्वभावेन कृच्छ्रत्वं निर्दिशन्नाह—श्वयथुरित्यादि। मध्यदेशे श्वयथुः सन्नि-पातज्वरवद् विरुद्धोपक्रमत्वात् कष्टः। अर्द्धाङ्ग इति अर्द्धनारीश्वरन्यायेन। अरिष्टभूतोऽरिष्टवत्, भूतशब्द उपमानार्थे। यश्चोर्द्ध्वं परिसर्पति यः शोफः पादाभिप्रवृत्त ऊर्द्ध्वमुपरितनकाये परिसर्पति सोऽरिष्टभूतः पुरुषविषये; चकारो भिन्नक्रमे, तेन यश्चाधः परिसर्पति उत्तमाङ्गात् सोऽप्यरिष्टभूतः स्त्रीविषये। उक्तञ्च—"ऊर्द्ध्वगामी नरं पद्भ्यामधोगामी मुखात् स्त्रियम्"—इति। ऊर्द्ध्वमध्याधःस्थितशोफेऽपि सर्व्वसराभिधानमेकदेशेऽपि दग्धे पटो दग्ध इतिवत्। उपद्रवेणा-साध्यत्वं निर्दिशन्नाह—श्वास इत्यादि। सामान्यत इत्यादि सामान्यं विशेषञ्च ॥ १०—१२ ॥

प्रथमं विशेषचिकित्सितमाह—तत्रेत्यादि। त्रैवृतमिति मज्जवर्ज्जं घृतादिभिस्त्रिभिर्वृतं त्रिवृतं, त्रिवृतमेव त्रैवृतं स्वार्थिकोऽण्। जेजटाचार्य्यस्तु चतुःस्नेहमाह। मासमर्द्धमासं वा पुरुषबला-

स्नुहीक्षीरपात्रं द्वादशभिरम्लपात्रैः प्रतिसंसृष्टं दन्तीप्रतिवापं सर्पिः पाचयित्वा पाययेत्। विषनिमित्ते कल्पेषु प्रतीकारः॥ १४ ॥

अथातः सामान्यचिकित्सितं व्याख्यास्यामः—

तिल्वकघृतचतुर्थानि यान्युक्तान्युदरेषु ततोऽन्यतममुपयुज्यमानं श्वयथुमपहन्ति। मूत्रवर्त्तिक्रियां वा सेवयेत्, नवायसं वाहरहर्मधुना। विडङ्गातिविषा-कुटजफलभद्रदारुनागरमरिचचूर्णं वा धरणमुष्णाम्बुना, त्रिकटुक्षारायश्चूर्णानि वा त्रिफलाकषायेण, मूत्रं वा तुल्यक्षीरं, हरीतकीं वा तुल्यगुडामुपयुञ्जीत। देवदारुशुण्ठीं वा गुग्गुलुं वा मूत्रेण वर्षाभूकषायानुपानं वा तुल्यगुडं शृङ्गवेरं वा, वर्षाभूकषायं मूलकल्कं वा सशृङ्गवेरं पयोऽनुपानमहरहर्मासं व्योषवर्षाभूकषायसिद्धेन वा सर्पिषा मुद्गोल्लुम्बान् भक्षयेत्। पिप्पलीपिप्पली-मूलचव्यचित्रकमयूरवर्षाभूसिद्धं वा क्षीरं पिबेत्। सहौषधसुरङ्गीमूलसिद्धं वा, त्रिकटुकरण्डमूलश्यामामूलसिद्धं वा, वर्षाभूशृङ्गवेरसहादेवदारुसिद्धं वा, तथा-लाबुविभीतकफलकल्कं वा तण्डुलाम्बुना॥ १५ ॥

क्षारपिप्पलीमरिचशृङ्गवेरानुविद्धेन च मुद्गयूषेणालवणेनाल्पस्नेहेन भोजयेद् यवान्नं गोधूमान्नं वा, वृक्षकार्कनक्तमालनिम्बवर्षाभूक्वाथैश्च परिषेकः, सर्षपसुवर्च्चलासैन्धवशार्ङ्गेष्टाभिश्च प्रदेहः कार्य्यः। यथादोषञ्च विरेचना-पेक्षया दोषबलापेक्षया वा। पात्रमाढकम्। अम्लं काञ्जिकम्। दन्तीप्रतिवापमिति दन्तीकल्कः स्नेहचतुर्थांशेन॥ १३। १४॥

अत ऊर्द्ध्वं सामान्यचिकित्सितमुपदेक्ष्यामः। तिल्वकघृतचतुर्थानीति हरीतकीचूर्णप्रस्थेत्यादिना एकम्, गव्ये पयसि महावृक्षक्षीरेत्यादि द्वितीयम्, चव्यचित्रकेत्यादि तृतीयम्, तिल्वकं वात-व्याध्युक्तं चतुर्थम्। वमनविरेचनेत्यादिना उदरोक्ता एव मूत्रवर्त्तिक्रिया। नवायसं प्रमेह-पिड़काचिकित्सिते पठितम्। धरणं कर्षम्। क्षारो यवक्षारः। तुल्यक्षीरमिति गोमूत्रं पलद्वयं, गोक्षीरमपि द्विपलम्। तुल्यगुडामिति शोफहरद्रवानुपानाम्। देवदारुशुण्ठीकल्कं सुखाम्बुना, सामान्यशोफहरद्रवेण सुखोष्णेन वा। सगुडमार्द्रकं वा कर्षमानम्। वर्षाभूः रक्तपुनर्नवा। व्योषादिकल्कसिद्धेन जलचतुर्गुणेन सर्पिषा मुद्गोल्लुम्बान्, स्विन्नाः किञ्चिद्भृष्टा मुद्गा मुद्गोल्लुम्बाः। मयूरकः अपामार्गः। सहा माषपर्णी। सुरङ्गी शोभाञ्जनकः। क्षारो यवक्षारः। अनुविद्धेनानु-गतेन, सिद्धेनेति क्वचित् पाठः। यवान्नं गोधूमान्नं वेति सात्म्यापेक्षो विकल्पः। वृक्षकः कुटजः। नक्तमालः करञ्जः। सुवर्च्चला सूर्य्यावर्त्तः। शार्ङ्गेष्टा काकजङ्घा। प्रदेहः प्रलेपः।

स्थापनानि तीक्ष्णान्यजस्रमुपसेवेत स्नेहस्वेदोपनाहांश्च, शिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ॥ १६ ॥

भवति चात्र

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च।
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्ज्जयेत् तु ॥ १७ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने शोफचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अजस्रं पुनःपुनः, बलवानिति वाक्यशेषः। उपद्रवशोफादित्यत्र सर्व्वाङ्गशोफादिति केचित्। शीतोष्णस्निग्धरूक्षाद्यैरप्रशाम्यति शोफे सिराभिश्चाभीक्ष्णं शोणितमवसेचयेदित्यर्थः। अन्येऽवयवगतं सर्व्वशरीरोष्णस्निग्धरूक्षादिभिरप्रशान्तं शोणितावसेचनेन साधयेदिति विषयभेदेन विधिनिषेधौ चरितार्थौ कुर्व्वन्ति। पिष्टान्नमित्यादि। स्त्रियो गुडमिति क्वचित् पाठः ॥ १५—१७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शोफचिकित्सितव्याख्यानाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्व्विंशोऽध्यायः।

अथातोऽनागताबाधप्रतिषेधनीयं चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता।
धीमता यदनुष्ठेयं तत् सर्व्वं सम्प्रवक्ष्यते ॥ २ ॥
तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम्।
कनिष्ठिकापरीणाहमृज्वग्रन्थितमव्रणम् ॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्।
अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत्।
कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः ॥
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा।
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा ॥ ३ ॥
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च।
चूर्णेन तेजोवत्याश्च दन्तान् नित्यं विशोधयेत् ॥
एकैकं घर्षयेद् दन्तं मृदुना कूर्च्चकेन च।
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥

अनागतः ईषदागतः, नञ् ईषदर्थे, आबाधो दुःखं, तस्य प्रतिषेधश्चिकित्सितम्। उत्थायोत्थायेति वीप्सायां, प्रत्यहमितिकर्त्तव्यताख्यापनायेत्येके; अन्ये तु उत्थायेति अभियोज्यार्थः, अभितो योगमभिसंयोगं कृत्वा, अभियोग उद्यमः, उत्पूर्व्वस्थाधातोरभियोगार्थत्वात्। सततमहरहरित्यर्थः। यदा तु उत्थायोत्थायेत्यस्याहरह इति व्याख्यानं, तदा सततमिति व्यर्थं स्यात्। यदनुष्ठेयमखिलमिति केचित् पठन्ति ॥ १ । २ ॥

शिरस उत्तमाङ्गत्वात् तत् पूर्व्वमेव विवृण्वन्नाह—तत्रेत्यादि। अव्रणं कोटरादिरहितम्। प्रत्यग्रं

स्थापनानि तीक्ष्णान्यजस्रमुपसेवेत स्नेहस्वेदोपनाहांश्च, शिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्रोपद्रवशोफादिति ॥ १६ ॥

भवति चात्र

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च ।
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसुः परिवर्ज्जयेत् तु ॥ १७ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने शोफचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अजस्रं पुनःपुनः, बलवानिति वाक्यशेषः। उपद्रवशोफादित्यत्र सर्व्वाङ्गशोफादिति केचित्। शीतोष्णस्निग्धरुक्षाद्यैरप्रशाम्यति शोफे सिराभिश्चाभीक्ष्णं शोणितमवसेचयेदित्यर्थः। अन्येऽवयवगतं सर्व्वशरीरोष्णस्निग्धरूक्षादिभिरप्रशान्तं शोणितावसेचनेन साधयेदिति विषयभेदेन विधिनिषेधौ चरितार्थौ कुर्व्वन्ति। पिष्टान्नमित्यादि। स्त्रियो गुडमिति क्वचित् पाठः ॥ १५—१७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे शोफचिकित्सितव्याख्यानाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्व्विंशोऽध्यायः ।

अथातोऽनागताबाधप्रतिषेधनीयं चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता ।
धीमता यदनुष्ठेयं तत् सर्व्वं सम्प्रवक्ष्यते ॥ २ ॥
तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम् ।
कनिष्ठिकापरीणाहमृज्वग्रन्थितमव्रणम् ॥
अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम् ।
अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत् ।
कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः ॥
निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ।
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा ॥ ३ ॥
क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च ।
चूर्णेन तेजोवत्याश्च दन्तान् नित्यं विशोधयेत् ॥
एकैकं घर्षयेद् दन्तं मृदुना कूर्च्चकेन च ।
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् ॥

अनागतः ईषदागतः, नञ् ईषदर्थे, आबाधो दुःखं, तस्य प्रतिषेधश्चिकित्सितम् । उत्थायोत्थायेति वीप्सायां, प्रत्यहमितिकर्त्तव्यताख्यापनायेत्येके; अन्ये तु उत्थायेति अभियोज्यार्थः, अभितो योगमभिसंयोगं कृत्वा, अभियोग उद्यमः, उत्पूर्व्वस्थाधातोरभियोगार्थत्वात् । सततमहरहरित्यर्थः । यदा तु उत्थायोत्थायेत्यस्याहरह इति व्याख्यानं, तदा सततमिति व्यर्थं स्यात् । यदनुष्ठेयमखिलमिति केचित् पठन्ति ॥ १ । २ ॥

शिरस उत्तमाङ्गत्वात् तत् पूर्व्वमेव विवृण्वन्नाह—तत्रेत्यादि । अव्रणं कोटरादिरहितम् । प्रत्यग्रं

तद् दौर्गन्ध्योपदेहौ तु श्लेष्माणञ्चापकर्षति।
वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च * ॥ ४ ॥
न खादेद् गलताल्वोष्ठ-जिह्वारोगसमुद्भवे।
अथास्यपाके श्वासे च कासहिक्कावमीषु च ॥
दुर्ब्बलोऽजीर्णभक्तश्च मूर्च्छार्त्तो मदपीड़ितः।
शिरोरुगार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः।
अर्द्दिती कर्णशूली च दन्तरोगी च मानवः ॥ ५ ॥
जिह्वानिलखनं रौप्यं सौवर्णं वार्क्षमेव च।
तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम्।
मुखवरस्यदौर्गन्ध्य-शोफजाड्यहरं सुखम् ॥ ६ ॥
दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम् ॥ ७ ॥
क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः।
भिल्लोदककषायेण तथैवामलकस्य वा।
प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ॥
नीलिकां मुखशोषञ्च पिड़कां व्यङ्गमेव च।
रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत्।
मु(सु)खं लघु निरीक्षेत दृढ़ं पश्यति चक्षुषा ॥ ८ ॥

नवम्। त्रिवर्गोक्तं त्रिसुगन्धिना आक्तं लिप्तं दन्तकाष्ठं, तेनेत्यध्याहारः। दौर्गन्ध्याद्यपकर्षति। वैशद्यं निर्म्मलता, पाटवं वक्तुरित्यध्याहारः। तन्मलापहरमित्यादि। मृदु कोमलम्। श्लक्ष्णम् मसृणम्। जाड्यं जड़ता स्तब्धता इत्यर्थः ॥ ३—७ ॥

क्षीरवृक्षाः न्यग्रोधादयः। क्षीरवृक्षकषायगण्डूषेण रक्तदुष्टिरपि निवर्त्तते। बहिर्मुखप्रक्षालनमाह—भिल्लेत्यादि। भिल्लोदकं पर्व्वते केदारभूमौ प्रसिद्धम्। गयी तु भिल्लोदककषायमन्तर्मुखप्रक्षालनमाह। आमलकस्य कषायेण नेत्रे प्रक्षालयेत्, उभयं शीतोदकेन च।

---

* इतः परमधिका दृश्यन्ते क्वचित् श्लोकाः—
रुचिमन्नेषु वैशद्यं दन्तजिह्वोष्ठतालुषु।
पाटवं सौमनस्यञ्च लाघवञ्चोपपादयेत् ॥
न चास्यगलताल्वोष्ठ-जिह्वारोगसमुद्भवः।
सुगन्धि वदनञ्च स्याल्लालास्तम्भनमेव च ॥
मुखप्रसेकशमनं धर्म्मपुष्टिकरं नृणाम्।
लाघवञ्चेन्द्रियाणां स्यान्नित्यं खादेत् ततो नरः ॥
न खादेद् प्रस्ताल्वोष्ठ-जिह्वारोगसमुद्भवे।
मुखपाकश्वासहिक्काश्वास्यशोषे बलीषु च ॥ इति ॥

मतं स्रोतोऽञ्जनं श्रेष्ठं विशुद्धं सिन्धुसम्भवम् ।
दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहम् ।
अक्ष्णो रूपावहञ्चैव सहते मारुतातपौ ॥ ९ ॥
न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत् ॥ १० ॥
भुक्तवान् शिरसा स्नातः श्रान्तश्छर्द्दनवाहनैः ।
रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ॥ ११ ॥
कर्पूरजातिकक्कोल-लवङ्गकटुकाह्वयैः ।
सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम् ॥
मुखवैशद्यसौगन्ध्य-कान्तिसौष्ठवकारकम् ।
हनुदन्तस्वरमल-जिह्वेन्द्रियविशोधनम् ॥
प्रसेकशमनं हृद्यं गलामयविनाशनम् ।
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ॥
रक्तपित्तक्षतक्षीण-तृष्णामूर्च्छापरीतिनाम् ।
रूक्षदुर्ब्बलमर्त्यानां न हितश्चास्यशोषिणाम् ॥ १२ ॥
शिरोगतांस्तथा रोगान् शिरोऽभ्यङ्गोऽपकर्षति ।
केशानां मार्द्दवं दैर्घ्यं वहुत्वं स्निग्धकृष्णताम् ॥
करोति शिरसस्तृप्तिं सुत्वक्मपि चाननम् ।
सन्तर्पणञ्चेन्द्रियाणां शिरसः प्रतिपूरणम् ॥ १३ ॥
मधुकं क्षीरशुक्ला च सरलं देवदारु च ।
क्षुद्रकं पञ्चनामानं समभागानि संहरेत् ॥

तत्रोऽञ्जनावसरः । सिन्धुरत्र नदोऽभिप्रेतः, तत्सम्भवं स्रोतोऽञ्जनम् । विशुद्धं मलरहितं श्रेष्ठं मतम्, कुतः ? यस्मादेतद् दाहादिनाशकं तथा तेजोरूपकरम्, तस्मादञ्जनेन चक्षुषा मारुतातपौ सहते । छर्द्दनवाहनैरिति बहुवचनेन परिश्रान्तिहेतवो गृह्यन्ते ॥ ८—११ ॥

कर्पूरेत्यादि । जातीशब्देन जातीफलं कथ्यते । शिरोगतांस्तथा रोगान् इत्यत्र केशभूमि-गतान् रोगान् इत्येके वदन्ति । शिरसः प्रतिपूरणमिति शून्यभूतस्य शिरसः पुनः पूरणमित्यर्थः । मस्तकपूरणमप्यपरे ॥ १२ । १३ ॥

शिरोऽभ्यङ्गार्थं तैलमाह— मधुकमित्यादि । क्षीरशुक्ला क्षीरविदारिका । पञ्चनामानमिति

तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत्।
सदैव शीतलं जन्तोर्मूर्द्धि तैलं प्रदापयेत् ॥ १४ ॥
केशप्रसाधनी केश्या रजोजन्तुमलापहा ॥ १५ ॥
हनुमन्याशिरःकर्ण-शूलघ्नं कर्णपूरणम् ॥ १६ ॥
अभ्यङ्गो मार्द्दवकरः कफवातनिरोधनः।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः ॥ १७ ॥
सेकः श्रमघ्नोऽनिलहृद् भग्नसन्धिप्रसाधकः।
क्षताग्निदग्धाभिहत-विघृष्टानां रुजापहः ॥ १८ ॥
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः।
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ॥ १९ ॥
शिरामुखै रोमकूपैर्धमनीभिश्च तर्पयन्।
शरीरबलमाधत्ते युक्तः स्नेहोऽवगाहने ॥ २० ॥
तत्र प्रकृतिसात्म्यर्त्तु-देशदोषविकारवित्।
तैलं घृतं वा मतिमान् युञ्ज्यादभ्यङ्गसेकयोः ॥ २१ ॥

अल्पपञ्चमूलम्। चक्रतैलं यन्त्रपीडिततैलम्। मधुकादिद्रव्यं क्वाथार्थं पलशतमुदकस्य द्वादशाधिकपञ्चशतपलानि, तावद् विपचेद् यावद् दशाधिकं शतं भवति, ततो वस्त्रपूतं ग्राह्यम्। तेन क्वाथेन तथा तद्द्रव्याणामेव कल्कैरष्टभिः पलैश्चक्रतैलस्य द्वात्रिंशत् पलानि विपचेत्, यावत् तैलपाकलक्षणानि भवन्ति। एवमनुपानादि कल्पनीयम् ॥ १४ ॥

केशप्रसाधनी कङ्कतिका, चिरुणी वा काँकुइ इति लोके। रजो धूलिः। जन्तुः यूका। हन्वित्यादि। कर्णपूरणकालस्य संख्यां श्रीवाग्भटः प्राह—"धारयेत् पूरणं कर्णे कर्णमूलं विमर्द्दयन्। रुजः स्यान्मार्द्दवं यावन् मात्राशतमवेदने" इति। अभ्यङ्ग इत्यादि। अभ्यङ्गोऽत्र सकलशरीर-कर्णादिगतः स्नेहस्य शिरामुखादिभिः। शरीरसन्तर्पणकालं केचिदत्र पठन्ति—"रोमान्तेष्वनु देहस्य स्थित्वा मात्राशतत्रयम्। ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति त्वचम् ॥ रक्तं गच्छति मात्राणां शतैः पञ्चभिरेव तु। षड्भिर्मांसं प्रपद्येत मेदः सप्तभिरेव च ॥ शतैरष्टाभिरस्थीनि मज्जानं नवभिर्व्रजेत्। तत्रस्थान् शमयेद्रोगान् वातपित्तकफात्मकान् ॥" सेकः सर्व्वाङ्गपरिषेकः। युक्तः प्रयुक्तः। अवगाहनं मज्जनम्। तेषां योग्यतामाह—तत्रेत्यादि ॥ १५—२१ ॥

केवलं सामदोषेषु न कथञ्चन योजयेत् ।
तरुणज्वर्य्यजीर्णौ च नाभ्यक्तव्यौ कथञ्चन ।
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥ २२ ॥
पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ।
शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयो गदाः ॥ २३ ॥
सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् ॥ २४ ॥
शरीरायासजननं कर्म्म व्यायामसंज्ञितम् ।
तत् कृत्वा तु सुखं देहं विमृद्नीयात् समन्ततः ॥
शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ।
दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा ॥
श्रमक्लमपिपासोष्ण-शीतादीनां सहिष्णुता ।
आरोग्यञ्चापि परमं व्यायामादुपजायते ॥
न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ।
न च व्यायामिनं मर्त्यमर्द्दयन्त्यरयो भयात् * ॥
न चैनं सहसाक्रम्य जरा समधिरोहति ।
स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च ॥
व्यायामस्विन्नगात्रस्य पद्भ्यामुद्वर्त्तितस्य † च ।
व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव ॥

अभ्यङ्गस्य निषेधमाह—केवलमित्यादि । आमज्वरे तत्कृतकम्पादीनामपि सम्भव इत्यर्थः । पूर्व्वयोस्तरुणज्वर्य्यजीर्णिनोः । शेषाणां विरिक्तानां न देयः, दीयमानेऽभ्यङ्गेऽग्निमान्द्यादयो भवन्ति ॥ २२—२४ ॥

शरीरेत्यादि । शरीरस्योपचयः सम्यक्पुष्टिः । गात्राणां सुविभक्ततेति गात्राणां सर्व्वेषामङ्गानाम्, सुविभक्तता सुघटितशरीरतेत्यर्थः । मृजा शुद्धिः । शत्रवो यथा न च व्यायामिनमर्द्दयन्ति, उद्वर्त्तनकारिणं जनं तथा व्याधयो न उपसर्पन्ति नाभिभवन्तीत्यर्थः । स्थिरीभवति मांसञ्चति उपचयलक्षणस्यापि बलस्य हेतुरित्यर्थः । व्यायामस्विन्नगात्रस्येति गात्र स्वेदागमे सति व्यायामादुपरमः कार्य्य इत्यर्थः । अन्ये तु स्विन्नगात्रस्येत्यत्र क्षुण्णगात्रस्येति पठन्ति ।

† उन्मर्द्दितस्य चेत्यपि पाठः ।

* बलादिति पाठान्तरम् ।

वयोरूपगुणहीनमपि कुर्य्यात् सुदर्शनम्।
व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम्।
विदग्धमविदग्धं वा निर्दोषं परिपच्यते॥
व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम्।
स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः॥
सर्व्वेष्वृतुष्वहरहः पुंभिरात्महितैषिभिः।
बलस्यार्द्धेन कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा॥
हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते।
व्यायामं कुर्व्वतो जन्तोस्तद् बलार्द्धस्य लक्षणम्॥
वयोबलशरीराणि देशकालाशनानि च।
समीक्ष्य कुर्य्याद् व्यायाममन्यथा रोगमाप्नुयात्॥ २५॥
क्षयतृष्णारुचिच्छर्द्दि-रक्तपित्तभ्रमक्लमाः।
कासशोषज्वरश्वासा अतिव्यायामसम्भवाः॥ २६॥
रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः।
भुक्तवान् स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्ज्जयेत्॥ २७॥
उद्वर्त्तनं वातहरं कफमेदोविलापनम्।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्॥ २८॥
शिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् *।
उद्घषणोत्सादनाभ्यां जायेयातामसंशयम्॥ २९॥

पद्भ्यामुद्वर्त्तितस्येति पादाभ्यां बहुकृतमर्द्दनस्येत्यर्थः। विरुद्धं हिताहिताध्यायोक्तम्। विदग्धमम्लपाकम्। अविदग्धं विदग्धादन्यत्। तेनामं विदग्धञ्च गृह्यते। परि सर्व्वतः। वसन्ते चेति चकारः पथ्यतमस्य महतः व्यायामस्य वसन्तेऽपकर्षं सूचयति। बलार्द्धलक्षणं केचिदन्यथा पठन्ति—"कक्षाललाटनासासु हस्तपादादिसन्धिषु। प्रस्वेदान्मुखशोषाच्च बलार्द्धं तद्धि निर्द्दिशेत्" इति। वयोबलेत्यादि। वयो यौवनम्, बलं शक्त्युपचयलक्षणम्, शरीरं मध्यं स्थूलञ्च, देशमानूपं साधारणञ्च। कालं नित्यगमावस्थिकञ्च द्विविधमपि, तत्र नित्यगे शीते वसन्ते च, आवस्थिके यौवने बले च सति। अशनानि स्निग्धभोजनानि समीक्ष्य दृष्ट्वा उपचयप्रभृतौ व्यायामं कुर्य्यात्। व्यायामादग्निप्रदीप्तौ सत्यां सर्व्वरोगोपशम इति॥ २५—२७॥

व्यायामे पद्भ्यामुद्वर्त्तितस्येत्युक्तमत उद्वर्त्तनं पुनर्निर्द्दिशन्नाह—उद्वर्त्तनमित्यादि। उद्वर्त्तनञ्चात्र प्रविलापनीयविम्लापनकरम्। शिरेत्यादि। तेजनं त्वग्गतस्याग्नेः, शिरामुखविवर्द्धनम्। उद्घर्षणमस्नेहौषधचूर्णादिभिर्घर्षणम्। अन्ये तु फेनकेष्टकादिघर्षणम्। उद्घर्षणोत्सादनाभ्यां

* दीपनमिति वा पाठः।

उत्सादनाद् भवेत् स्त्रीणां विशेषात् कान्तिमद् वपुः ।
प्रहर्षसौभाग्यमृजा-लाघवादिगुणान्वितम् ।
उद्घर्षणन्तु विज्ञेयं कण्डूकोठानिलापहम् ॥ ३० ॥
ऊर्व्वोः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे ।
कण्डूकोठानिलस्तम्भ-मलरोगापहश्च सः ॥ ३१ ॥
तेजनं त्वग्गतस्याग्नेः शिरामुखविवेचनम् ।
उद्घर्षणन्त्विष्टिकया कण्डूकोठविनाशनम् ।
निद्रादाहश्रमहरं स्वेदक्लेदतृषापहम् ॥ ३२ ॥
हृद्यं मलहरं श्रेष्ठं सर्व्वेन्द्रियविशोधनम् ।
तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनम् ।
रक्तप्रसादनञ्चापि स्नानमग्नेश्च दीपनम् ॥ ३३ ॥
उष्णेन शिरसः स्नानमहितं चक्षुषः सदा ।
शीतेन शिरसः स्नानं चक्षुष्यमिति निर्द्दिशेत् ॥ ३४ ॥
श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ।
काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् ॥ ३५ ॥
अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ।
अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनम् ॥ ३६ । ३७ ॥
तच्चातिसारज्वरित-कर्णशूलानिलार्त्तिषु ।
आध्मानारोचकाजीर्ण-भुक्तवत्सु च गर्हितम् ॥ ३८ ॥
सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनम् ।
स्वेददौर्गन्ध्यवैवर्ण्य-श्रमघ्नमनुलेपनम् ।
स्नानं येषां निषिद्धन्तु तेषामप्यनुलेपनम् ॥ ३९ ॥

जायेयातामिति शिरामुखविविक्तत्वाद् दीपने उद्धर्षणोत्सादनाभ्यामुत्पदेशयाताम् । केचिदत्र यथायथमाहुः—शिरामुखविविक्तत्वमुद्घर्षणेन, त्वक्स्थस्याग्नेस्तेजनमुत्सादनेन, सस्नेहकल्केनोद्धर्षणमुत्सादनम् । मृजा शुद्धप्रभा । ऊर्व्वोरूर्द्ध्वमधश्च फेनकः, ऊरुः जङ्घा इति लोके । कण्डूकोठविनाशनमिति इयमिष्टिकोद्घर्षणगुणोक्तिः । कामं यथेष्टम् । स्नानस्य निषेधमाह—तदित्यादि । येषां स्नानं नेष्यते, तेषामनुलेपनमपि निषिध्यते ॥ २८—३९ ॥

१०७

रक्षोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम्।
सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनम् ॥ ४० ॥
मुखालेपाद् दृढ़ं चक्षुः पीनगण्डं तथाननम्।
अव्यङ्गपिड़कं कान्तं भवत्यम्बुजसन्निभम् ॥ ४१ ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम्।
नेत्रमञ्जनसंयोगाद् भवेच्चामलतारकम् ॥ ४२ ॥
यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनम्।
देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनम् ॥ ४३ ॥
आहारः प्रीणनः सद्यो बलकृद् देहधारकः।
आयुस्तेजःसमुत्साह-स्मृत्योजोऽग्निविवर्द्धनः ॥ ४४ ॥
पादप्रक्षालनं पाद-मलरोगश्रमापहम्।
चक्षुःप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम् ॥ ४५ ॥
निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत्।
पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥ ४६ ॥
पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्द्धनम्।
सुखप्रचारमोजस्यं सदा पादत्रधारणम् ॥ ४७ ॥
अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्।
पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणाम् ॥ ४८ ॥
पापोपशमनं केश-नखरोमापमार्ज्जनम्।
हर्षलाघवसौभाग्य-करमुत्साहवर्द्धनम् ॥ ४९ ॥
वाणवारं मृजावर्ण-तेजोबलविवर्द्धनम् ॥ ५० ॥

रक्षोघ्नमित्यादि। रत्नानि माणिक्यमरकतादीनि। अस्याग्रे आदर्शगुणं गोरोचनाधारणगुणञ्च किञ्चिदभिधीयते, स चाभावान्न लिखितः ॥ ४० ॥

मुखेत्यादि। कान्तं कमनीयं मनोहरमित्यर्थः। सामान्यमञ्जनगुणमाह—पक्ष्मलमित्यादि। अमलोज्ज्वलमण्डलमिति निर्म्मलोज्ज्वलचक्षुर्बहिर्भागम् ॥ ४१—४३ ॥

आहार इत्यादि। तेजो हृदिस्थं निसर्गजं बलम्। चक्षुःप्रसादनं दृष्टिप्रसादनम्, दृष्टिसंयुक्त-पादनिबन्धननाड़ीप्रसादनत्वात्, प्रभावादित्यपरे। वृष्यं शुक्रवृद्धिकरं प्रभावात्। पादाभ्यङ्गः अत्रापि दृष्टिप्रदः पूर्व्ववत्। पादत्रं पादहितं पादुकादि। अनुपानद्भ्यां पादत्राणवर्ज्जिताभ्याम्। वाणवारं वर्म्म। रूपिताङ्ग वा साँजोया इति लोके ॥ ४४—५० ॥

पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम् ॥ ५१ ॥
वर्षानिलरजोघर्म्म-हिमादीनां निवारणम्।
वर्ण्यं चक्षुष्यमौजस्यं शङ्करं छत्रधारणम् ॥ ५२ ॥
शुनः सरीसृपव्याल-विषाणिभ्यो भयापहम्।
श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥
सत्त्वोत्साहबलस्थैर्य्य-धैर्य्यवीर्य्यविवर्द्धनम्।
अवष्टम्भकरश्चापि भयघ्नं दण्डधारणम् ॥ ५३ ॥
आस्या वर्णकफस्थौल्य-सौकुमार्य्यकरी सुखा ॥ ५४ ॥
अध्वा वर्णकफस्थौल्य-सौकुमार्य्यविनाशनः।
अत्यध्वा विपरीतोऽस्माज्जरादौर्व्बल्यकृच्च सः ॥ ५५। ५६ ॥
यत् तु चंक्रमणं नाति-देहपीड़ाकरं भवेत्।
तदायुर्बलमेधाग्नि-प्रदमिन्द्रियबोधनम् ॥ ५७ ॥
श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम्।
सुखं शय्यासनं दुःखं विपरीतगुणं मतम् ॥ ५८ ॥
वालव्यजनमौजस्यं मक्षिकादीनपोहति।
शोषदाहश्रमस्वेद-मूर्च्छाघ्नो व्यजनानिलः ॥ ५९ ॥
प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम्।
संवाहनं मांसरक्त-त्वक्प्रसादकरं सुखम् ॥ ६० ॥

पवित्रमित्यादि। उष्णीषं शिरोवेष्टनम्। शङ्करं सुखकरम्। सरीसृपाः कृष्णसर्पादयः। व्यालाः व्याघ्रादयः। विषाणिभ्यः शृङ्गिभ्यः। सत्त्वं सत्त्वगुणः। उत्साहो बलम्। बलं तेजः, स्थैर्य्यमचलत्वं, धैर्य्यं धीरत्वम्, वीर्य्यं शक्तिः, अवष्टम्भोऽवलम्बनम्। भयघ्नं भयनाशकम्। आस्या स्थितिः ॥ ५१—५४ ॥

अध्वेत्यादि। अत्यध्वा अतिशयेन मार्गगमनम्। चङ्क्रमणं कुटिलगत्या परिभ्रमणम्। सुखं शय्यासनं विस्तृतमास्तीर्णं मृदु गण्डोपधानादियुक्तम्। दुःखं सङ्कोच्यासनं, दुःखं विपरीतगुणम्। वालव्यजनं चामराख्यव्यजनं, व्यजनानिलस्तालवृन्तवायुः। प्रीतीत्यादि। संवाहनं सुखकर-स्पर्शः, मर्द्दनन्तु गाढं पादाभ्यामारभ्य कटिपर्य्यन्तम्। अमितप्रभटीकाकारस्तु हस्ताभ्यां शनैः शनैः आहननमिति वदति ॥ ५५—६० ॥

प्रवातं रौक्ष्यवैवर्ण्य-स्तम्भकृद् दाहपक्तिनुत् ।
स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ॥ ६१ ॥
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ।
निवातं ह्यायुषे सेव्यमारोग्याय च सर्व्वदा ॥ ६२ ॥
आतपः पित्ततृष्णाग्नि-स्वेदमूर्च्छाभ्रमास्रकृत् ।
दाहवैवर्ण्यकारी च च्छाया चतानपोहति ॥ ६३ ॥
अग्निर्वातकफस्तम्भ-शीतवेपथुनाशनः ।
आमाभिष्यन्दजरणो रक्तपित्तप्रदूषणः ॥ ६४ ॥
पुष्टिवर्णबलोत्साहमग्निदीप्तिमतन्द्रिताम् ।
करोति धातुसाम्यञ्च निद्रा काले निषेविता ॥ ६५ ॥

तत्रादित एव नीचनखरोम्णा शुचिना शुक्लवाससा लघूष्णीषच्छत्रोपानत्केन दण्डपाणिना काले हितमितमधुरपूर्व्वाभिभाषिणा बन्धुभूतेन भूतानान्तु गुरुवृद्धानुमतेन सुसहायेनानन्यमनसा खल्पचरितव्यम्, तदपि न रात्रौ, न केशास्थि-कण्टकाश्मतुषभस्मोत्कर-कपालाङ्गारामेध्यस्नानबलिभूमिषु, न विषमेन्द्रकीलचतुष्पथश्वभ्राणामुपरिष्टात् ॥ ६६ ॥

न राजद्विष्टपरुषपैशुन्यानृतानि वदेत्, न देवब्राह्मणपितृपरिवादांश्च ; न नरेन्द्रद्विष्टोन्मत्तपतितक्षुद्रनीचाचारानुपासीत ॥ ६७ ॥

सुखमित्यादि । "सुखं प्रवातं सेवेत ग्रीष्मे शरदि वान्तरा" इत्यन्ये पठन्ति, व्याख्यानयन्ति च—ग्रीष्मशरदौ वातसेवनकालः, परं तयोरपि वातप्रसेवनं सान्तरम् । ज्योत्स्नातमसोर्गुणाः पुनः प्रच्छायानिवातगुणैः सदृशा इतीह नोक्ताः । अद्रव्यत्वेऽपि आतपादीनां प्रभावजं कर्म्म ; अन्ये पुनरातपं तेजःपरमाणुपुञ्जं, छायामपि तमःपरमाणुजामाहुः ॥ ६१—६५ ॥

प्रातरुत्थितस्य दन्तकाष्ठखादनादीन्द्रियशरीरमनसामुपकारकमन्तरङ्गमभिधाय वहिरङ्गोपचरणे सद्वृत्तमुद्दिशन्नाह— तत्रेत्यादि । लघूष्णीषमल्पतनुकृतं शिरोवेष्टनं, केचिल्लघुपदं छत्रेणोपानहाऽपि सम्बन्धयन्ति । उपचरितव्यं गन्तव्यम् । उत्करस्तृणादिसमूहः, आच्छादितखनितमृत्तिकादिरित्यपरे । यागार्थनिखातयूपोपलक्षितः प्रदेश इन्द्रकीलः, इन्द्रार्थं कीला न्यसन्ते यस्मिन् देशे स प्रदेशः इन्द्रकीलः । चतुष्पथः मार्गचतुष्टयसंयोगः । श्वभ्रं गर्त्तः ॥ ६६ ॥

पैशुन्यं सूचकता दौर्ज्जन्यमिति यावत् । परिवादो दोषकथनम् । उन्मत्तो वातुलः । पतितः स्वकीयधर्म्माद् भ्रष्टः । क्षुद्रो लघुः । नीचा म्लेच्छादयः । नोपासीत नोपसेवेत ॥ ६७ ॥

वृक्षपर्व्वतप्रपातविषमवल्मीकदुष्टवाजिकुञ्जराद्यधिरोहणानि परिहरेत्, पूर्णनदीसमुद्राविदितपल्वलश्वभ्रकूपावतरणानि, भिन्नशून्यागारश्मशानविजनारण्यवासाग्निसम्भ्रमव्यालभुजङ्गकीटसेवाश्च, ग्रामाघातकलहशस्त्रसन्निपातव्यालसरीसृपशृङ्गिसन्निकर्षांश्च ॥ ६८ ॥

नाग्निगोगुरुब्राह्मणप्रेङ्खादम्पत्यन्तरेणाभियायात् । न शवमनुयायात् । देवगोब्राह्मणचैत्यध्वजरोगिपतितपापकारिणाञ्च छायां नाक्रमेत । नास्तं गच्छन्तमुद्यन्तं वादित्यं वीक्षेत । गां धापयन्तीं धयन्तीं परशस्यं वा चरन्तीं (परस्मै) न कस्मैचिदाचक्षीत, न चोल्कापातेन्द्रधनूंषि । नाग्निं मुखेनोपधमेत् । नापो भूमिं वा पाणिपादेनाभिहन्यात् ॥ ६९ ॥

न वेगान् धारयेत् । न वहिर्वेगान् ग्रामनगरदेवतायतनश्मशानचतुष्पथसलिलाशयपथिसन्निकृष्टानुत्सृजेत्, न प्रकाशं, न वाय्वग्निसलिलसोमार्कगोगुरुप्रतिमुखम् ॥ ७० ॥

प्रपातो निर्झरपतनम् । कूपान्तावतरणानि परिहरेदिति सम्बन्धः । अविदितः अज्ञातस्वरूपः । पल्वलं खातगर्त्तः । अवतरणं प्रवेशः । कीटसेवाश्च, अत्रापि परिहरेदिति सम्बन्धः । भिन्नशून्यागारं पतितगृहं जनरहितगृहञ्च । विजनं निर्जनमरण्यमटवी । अग्निसम्भ्रमः उत्पातप्रदीप्तिः । व्याला व्याघ्रादयः । कीटाः वृश्चिकादयः । ग्रामाघातो मारीभयजन्यग्रामहननम् । सन्निकर्षं नैकट्यं परिहरेदिति सम्बन्धः । सरीसृपः कृष्णसर्पः । पूर्व्वमस्नेहैर्मन्दादावतिशैत्यादभिप्रेतस्यापि सेवा अत्यन्तोपासनं निषिद्धम्, अत्र तु ग्रीष्मादौ तस्य सान्निध्यमपि निषिद्धमिति बुध्यते । तथा पूर्व्वं व्यालभुजङ्गयोरपि सेवा पुनःपुनर्निकटोपासनं निषिद्धम् । अत्र तु विश्वस्तयोः सान्निध्यमपि निषिध्यत इति न पौनरुक्त्यम् ॥ ६८ ॥

अग्न्योर्गुर्व्वोर्ब्राह्मणयोः प्रेङ्खयोर्दम्पत्योश्चान्तरेण न गच्छेत् । प्रेङ्खा दोला । दम्पती जायापती । शवं मृतप्राणिशरीरम् । अनुगमनं पश्चाद्गमनम्, स्कन्धदानाद्यधिकारं विनेति शेषः । चैत्यः श्मशानवृक्षः । नाक्रमेत न लङ्घयेत् । गां सुरभीम्, धापयन्तीं पाययन्तीं, वत्समिति गम्यते । धेट् पाने । धयन्तीं स्वयं पिबन्तीं कुण्डादिक्षिप्तपानीयप्रभृतीनीति गम्यते । परशस्यं परक्षेत्रम् । नाचक्षीत न कथयेत् । उल्कापात आकाशात् ज्वलदग्निपातः । उल्कापात इत्यत्र उत्पात इति पाठान्तरे उत्पाता दिव्यभौमान्तरीक्षास्त्रयः । तत्र दिव्याः प्रतिमारोदनगन्धर्व्वनगरदर्शनादिकाः, भौमा भूकम्पप्रभृतयः, आन्तरीक्षास्तारापतनरविपरिवेशादयः ; एतानि कस्मैचिद् नाचक्षीतेत्यर्थः । उपधमेत् ज्वालयेदित्यर्थः ॥ ६९ ॥

वहिर्वेगाः वातमूत्रपुरीषादीनां, न प्रकाशमिति प्रकाशो यथा भवति एवं नोत्सृजेत् ॥ ७० ॥

न भूमिं विलिखेत्। नासंवृतमुखः सदसि जृम्भोद्गारश्वासक्षवथूनुत्सृजेत्। न पर्य्यङ्किकावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्य्यात्॥ ७१॥

न बालकर्णनासास्रोतोदशनविवराण्यभिकुष्णीयात् *। न वीजयेत् केशमुखनखरवस्त्रगात्राणि। न गात्रनखवक्त्रवादित्रं कुर्य्यात्। न काष्ठलोष्ट्रतृणादीनभिहन्याद् भिन्द्याद् वा॥ ७२॥

न प्रतिवातातपं सेवेत। न भुक्तमात्रोऽग्निमुपासीत। नोत्कटकाल्पकाष्ठासनमध्यासीत। न ग्रीवां विषमं धारयेत्। न विषमकायः क्रियां भजेत भुञ्जीत वा। न प्रततमीक्षेत विशेषाज्ज्योतिर्भास्करसूक्ष्माचलभ्रान्तानि। न भारं शिरसा वहेत्। न स्वप्नजागरणशयनासनस्थानचंक्रमणयानवाहनप्रधावनलङ्घनप्लवनप्रतरणहास्यभाष्यव्यवायव्यायामादीनुचितानप्यतिसेवेत॥ ७३॥

उचितादप्यहितात् क्रमशो विरमेत्, हितमनुचितमप्यासेवेत क्रमशो न चैकान्ततः पादहीनात्॥ ७४॥

विलिखेत् नखादिभिः। न सभायामसंवृतमुखो जृम्भादीन् [illegible]। क्षवथुश्छिक्का। पर्य्यङ्किका पर्य्यस्तिका। अवष्टम्भः अग्रपृष्ठपार्श्वस्थितस्तम्भादिष्ववलम्बनम्; परमार्थतस्तु अवष्टम्भोऽवलम्बो न पर्य्यायशब्दः॥ ७१॥

स्रोतांसि मूत्रपुरीषादीनाम्, एतेषां विवराणि छिद्राणि; नाभिकुष्णीयात् नाभिकर्षेत्, न मलं स्पृशेदित्यर्थः। न वीजयेत् न कम्पयेत्। न गात्रवादित्रं न गात्रं वाद्यभाण्डं कुर्य्यात्॥ ७२॥

न प्रतिवातातपमिति अभिमुखं वातमातपं वा न सेवेत। नाध्यासीत नोपविशेदित्यर्थः। आसनशब्द उत्कटकादिभिस्त्रिभिरभिसम्बध्यते। प्रततं विस्फारिताक्षं नेक्षेत, ज्योतिरग्निशिखा, तारकेत्यन्ये। स्वप्नजागरणादीनि स्वभ्यस्तान्यप्येतानि न हितानि। स्थानमूर्द्ध्वस्थितिं, चंक्रमणं गतागतं, यानं रथादि, वाहनं हस्त्यश्वादि, लङ्घनं गर्त्ताद्युत्क्रमणं, प्लवनमुत्प्लुत्य गमनं, प्रतरणं नद्यादीनां बाहुभ्यां तरणम्॥ ७३॥

स्वभ्यस्तादपि यवकादेः क्रमेणैव निवर्त्तयेदित्यर्थः; सहसा परिवर्त्तने रोगो मरणं वा। क्रमशो हितं रक्तशाल्यादि, अनुचितमनभ्यस्तं, तत्र अभ्यस्तादहिताद् यथाक्रमं पादस्यापचयः, तथा तस्याभ्यसनीयस्य यथाक्रममभ्यासे पादस्यैव प्रक्षेपः। एवं हिताहितयोश्चतुर्थांशस्य षोड़शांशस्य वा आवापोद्धाराभ्यां षोड़शाहोभिरहितस्य सर्व्वस्य त्यागो हितस्य सर्व्वस्य प्राप्तिरिति॥ ७४॥

---

* स्रोतांस्यभिकुष्णीयादिति पाठान्तरम्।

नावाक्शिराः शयीत। न भिन्नपात्रे भुञ्जीत, न विना पात्रेण। नाञ्जलिपुटेनापः पिबेत्। काले हितमितस्निग्धमधुरमायमाहारं वैद्यप्रत्यवेक्षितमश्नीयात्। ग्रामगणगणिकापणिकशत्रुसत्रशठपतितभोजनानि परिहरेत्; शेषाण्यपि च। निष्टरूपरसगन्धस्पर्शशब्दमानसानि, अन्यान्येवंगुणान्यपि वा सम्भूय दत्तानि, तान्यपि मक्षिकाद्या(वा)लोपहतानि, नाप्रक्षालितपाणिपादो भुञ्जीत न मूत्रोच्चारपीड़ितः न सन्ध्ययोः नानुपाश्रितः नातीतकालं * हीनमतिमात्रञ्चेति॥ ७५॥

न भुञ्जीतोद्धतस्नेहं नष्टं पर्य्युषितं पयः।
नोदके पश्येदात्मानं न नग्नः प्रविशेज्जलम्॥
न नक्तं दधि भुञ्जीत न वाप्यघृतशर्करम्।
नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना॥ ७६॥
अन्यथा न जयेत् कुष्ठविसर्पादीन् गदान् बहून्॥ ७७॥

दूत्रतमद्यातिसेवाप्रतिभूसाक्षित्वसमाह्वानगोष्ठीवादित्राणि न सेवेत। स्रजं छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत्। ब्राह्मणमग्निं गाश्च नोच्छिष्टः स्पृशेत्॥ ७८॥

भवन्ति चात्र

यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम्।
तेषु तेषु प्रदातव्या रसास्ते ते विजानता॥ ७९।८०॥

अवाक्शिरा अधःशिरा इत्यर्थः। भिन्नपात्रे विदीर्णपात्रे। प्रत्यवेक्षितं विलोकितम्। ग्रामस्थाः सर्व्वे मिलित्वा क्वचित् किञ्चिद् यद् भोजनं सम्पादयन्ति तद् ग्रामभोजनम्। गणाः रथकारचारणादयः। गणिका वेश्या। पणिक इतरवणिक्। शत्रुः विपक्षः। सत्रं यज्ञः। पतितः स्वकीयाचारभ्रष्टः। अनिष्टशब्दः रूपादिभिः सह प्रत्येकं सम्बध्यते; अनिष्टशब्दः कुत्सितध्वनिः, अनिष्टमानसमसम्मतमनभिप्रेतम्। अन्यानीति अनिष्टरूपरसादिभ्योऽन्यानि इष्टरूपादीनि। एवंगुणान्यपीति ग्रामादिभ्यः शेषाण्यपीत्यर्थः। सम्भूय दत्तानि मिलित्वा दत्तानि भोजनानि परिहरेदिति शेषः। (सर्व्वाणि च त्वरया दत्तानि परिहरेत्।) उच्चारो विष्ठा। नानुपाश्रित आसनरहितो न भुञ्जीत। नातीतकालं व्यतिक्रान्तकालमित्यर्थः। उद्धृतस्नेहञ्च सुमन्थनेनैव स्नेहाद् भिन्नं, अत्र स्नेहो घृतम्। दधीत्यादि नवाप्यलवणं नवापि उदकवर्ज्जितं दधि भुञ्जीत। प्रतिभूः लग्नकः, निष्कारणमाहूय स्वेच्छालापकथनं समाह्वानम्, गोष्ठीवादित्राणि मृदङ्गादीनि। अतीतवासांसि जीर्णवस्त्राणि, अन्यैर्विधृतानि प्रक्षाल्य धारयेत्॥ ७५—८०॥

---

* नातिकालमिति वा पाठः।

वर्षासु न पिबेत् तोयं पिबेच्छरदि मात्रया।
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥
उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम्।
हेमन्ते च वसन्ते च सीध्वरिष्टौ पिबेन्नरः ॥
शृतशीतं पिबेद् ग्रीष्मे प्रावृट्काले रसं पिबेत्।
यूषं वर्षति तस्यान्ते प्रपिबेच्छीतलं जलम् ॥ ८१ ॥
स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः ॥ ८२ ॥
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम्।
पिबेदग्निविवृद्ध्यर्थं न च वेगान् विधारयेत् ॥ ८३ ॥
अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति।
प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत् ॥ ८४ ॥
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे।
शस्यते त्रिष्वपि सदा व्यायामो दोषनाशनः ॥ ८५ ॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रकुप्यति ॥ ८६ ॥
उत्सर्गमैथुनाहार-शोधने स्यात् तु तन्मनाः ॥ ८७ ॥
नेच्छेद्रोगभयात् * प्राज्ञः पीड़ां वा कायमानसीम् ॥ ८८ ॥
अतिस्त्रीसंप्रयोगाच्च रक्षेदात्मानमात्मवान्।
शूलकासज्वरश्वास-कार्श्यपाण्ड्वामयक्षयाः।
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः ॥

अन्नं नियम्य कालेन वर्षादिऋतुलक्षणेनापि पाननियममाह—न पिबेत् ईषत् पिबेदित्यर्थः। पिबेत् शरदि मात्रयेति मात्राशब्दोऽल्पवचनः। एतेनैतदुक्तं भवति—काममभिलाषपूर्णं, न तु अतिशयेन। सीध्वरिष्टौ मद्यारिष्टयोरुदकं पिबेदित्यर्थः। तस्यान्ते वर्षान्ते। अतोऽन्य इति अस्वस्थः। दोषाहारमतानुगो भवेत् दोषा वातादयः, तत्र वाते स्निग्धमुष्णम्, पित्ते शीतम्, कफे रूक्षोष्णम्, आहारमतानुग इति 'उष्णोदकानुपानन्तु स्नेहानामथ शस्यते' इत्यादि। स्वस्थातुरयोरुभयोरपि वक्ष्यमाणं शोधनं निर्दिशन्नाह—कफ इत्यादि। ईरणे वाते। अपिशब्दो व्यायामक्रियाफलानां प्रागुक्तानामपीहानुवर्त्तनं समुच्चिनोति। न प्रकुप्यति न दोषचयं प्राप्नोति ॥ ८१—८६ ॥

शोधने वमनविरेचने। तन्मना उत्सर्गादिमना नान्यचित्त इत्यर्थः। दोषचयादिशङ्कामप्राप्तः प्राज्ञः शोधनादिना कायमानसीं पीड़ां नेच्छेदित्यर्थः। अत्र आत्मानं शरीरम्, आत्मवान् बुद्धिमान्।

* रोगभयादित्यत्र दोषभयादिति वा पाठः।

आयुष्मन्तो मन्दजरा वपुवर्णवलान्विताः ।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥
त्रिभिस्त्रिभिरहोभिर्वा समीयात् प्रमदां नरः ।
सर्व्वेष्वृतुषु घर्म्मेषु पक्षात् पक्षाद् व्रजेद् बुधः ॥
रजस्वलामकामाञ्च मलिनामप्रियां तथा ।
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्विताम् ।
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ।
सन्ध्यापर्व्वस्वगम्याश्च नोपेयात् प्रमदां नरः ॥
गोसर्गे चार्द्धरात्रे च तथा मध्यन्दिनेषु च ।
लज्जासमावहे देशे विवृतेऽशुद्ध एव च ॥
क्षुधितो व्याधितश्चैव क्षुब्धचित्तश्च मानवः ।
वातविण्मूत्रवेगी च पिपासुरतिदुर्व्वलः ॥
तिर्य्यग्योनावयोनौ च प्राप्तशुक्रविधारणम् ।
दुष्टयोनौ विसर्गन्तु वलवानपि वर्ज्जयेत् ॥
रेतसश्चातिमात्रन्तु मूर्द्धावरणमेव च ।
स्थितावुत्तानशयने विशेषेणैव गर्हितम् ।
क्रीड़ायामपि मेधावी हितार्थी परिवर्ज्जयेत् ॥

स्थिरोपचितमांसा इति कठिनस्थिरमांसा इत्यर्थः । समीयाद् गच्छेत् । अकामां मैथुनानभिलाषिणीम् । वर्णवृद्धां वर्णश्रेष्ठामित्यर्थः ; यथा शूद्रो न वैश्याम्, वैश्यो न क्षत्रियाम्, क्षत्रियो न ब्राह्मणीमिति । द्वेष्यां शत्रुभूताम् । प्रव्रजितां गृहीतव्रताम् । सन्ध्यापर्व्वसु पक्षान्तरे नान्वष्टकादिषु । अगम्या स्वसृदुहितृप्रभृतयः । नोपेयात् न गच्छेत् । गोसर्गे प्रभाते । विवृते अनाच्छादिते देशे इत्यर्थः । अशुद्धे मनसोऽप्रिये कलुषितदेशे इत्यर्थः । क्षुब्धचित्तो भीतचित्तः । तिर्य्यग्योनिरजादिः । अयोनि मुखमैथुनं, यथा दाक्षिणात्याः स्त्रियो मुखे मैथुनं कारयन्ति । प्राप्तशुक्रविधारणमिति एषु शुक्रपातो न कार्य्य इत्यर्थः । चलितशुक्रविधारणं न कार्य्यमिति वार्यः । दुष्टयोनौ स्वभावदुष्टयोनौ । रेतसश्चातिमात्रन्तु विसर्गं विवर्ज्जयेदिति सम्बन्धः । मूर्द्धावरणं लिङ्गमणेरावरणं, यथा दाक्षिणात्याः कृत्रिममणिं कारयन्तीति जेज्जटः । क्वचित् पुस्तके मूर्द्धाहननमेव चेति पाठः । तत्र रहसि हर्षेण शिरस्ताड़नं परित्यजेत् । यथाह वृद्धवाग्भटः "मूर्द्धाभिघातं परिहरेत्" । लघुवाग्भटोऽपि—"पर्व्वाण्यनङ्गं दिवसं शिरोहृदयताड़नम्" इति । स्थिताविति स्थानं स्थितिरूर्द्ध्वीभावः, तत्र रेतसो विसर्गं वर्ज्जयेत् । उत्तानशयनेऽपि रेतसो विसर्गं

रजस्वलां प्राप्तवतो नरस्यानियतात्मनः।
दृष्टग्रायुस्तेजसां हानिरधर्म्मश्च ततो भवेत् ॥
लिङ्गिनीं गुरुपत्नीञ्च सगोत्रामथ पर्व्वसु।
वृद्धाञ्च सन्ध्ययोश्चापि गच्छतो जीवितक्षयः।
गर्भिण्यां गर्भपीड़ा स्याद् व्याधितायां बलक्षयः ॥
हीनाङ्गीं मलिनां द्वेष्यां कामं वन्ध्यामसंवृते।
देहेऽशुद्धे च शुक्रस्य मनसश्च क्षयो भवेत् ॥
क्षुधितः क्षुब्धचित्तश्च मध्याह्ने तृषितोऽबलः।
स्थितश्च हानिं शुक्रस्य वायोः कोपञ्च विन्दति ॥
अतिप्रसङ्गाद् भवति शोषः शुक्रक्षयावहः।
व्याधितस्य रुजा प्लीह्नि मृत्युर्मूर्च्छा च जायते ॥
प्रत्यूषस्यर्द्धरात्रे च वातपित्ते प्रकुप्यतः।
तिर्य्यग्योनावयोनौ च दुष्टयोनौ तथैव च।
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः ॥
उच्चारिते मूत्रिते च रेतसश्च विधारणे।
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्यास्तु सम्भवः ॥
सर्व्वं परिहरेत् तस्मादेतल्लोकद्वयेऽहितम्।
शुक्रञ्चोपस्थितं मोहान्न सन्धार्य्यं कथञ्चन ॥
वयोरूपगुणोपेतां तुल्यशीलां गुणान्विताम्।
अभिकामोऽभिकामान्तु हृष्टो हृष्टामलङ्कृताम्।
सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥

परिवर्ज्जयेत्। एतयोः क्रीड़ायामपि रेतोविसर्गं परिवर्ज्जयेत्; अनियतात्मनः अजितेन्द्रियस्य। वृद्धां वर्णवयोभ्यां वृद्धाम्। असंवृतदेशे अनाच्छादितदेशे इत्यर्थः। अशुद्धे कलुषे इत्यर्थः। मनसः क्षयोऽप्रकर्पता, वन्ध्यामिति यद्यपि उद्देशशास्त्रे वन्ध्यापदं नास्ति तथापि योनिदोषः समन्वितामित्यनेन पदेनोपगृहीतम्। उच्चारिते पुरीषवेगवति। मूत्रिते मूत्रवेगयुक्ते। यद्यप्य-प्रियाऽगम्यामूर्द्धाघातसेवने दूषणं नाभिहितं, तथापि अप्रियायां द्वेष्यायामिव शुक्रस्य मनसश्च क्षयो भवति। अगम्यासु वर्णवृद्धायामिव जीवितक्षयः, मूर्द्धाभिघाते च तन्त्रान्तराद् दूषणं ज्ञेयं, तथा च वृद्धवाग्भटः—"तिमिरादिगदोत्पत्तिर्मूर्द्धाभिहननाद् ध्रुवम्" इति।

गुणो दाक्षिण्यादिः। तुल्यशीलां समानस्वभावाम्। अभिकामः साभिलाषः। अभिकामां

भक्ष्याः सशर्कराः क्षीरं ससितं रस एव च ।
स्नानं सव्यजनं स्वप्नो व्यवायान्ते हितानि तु * ॥
सुखमात्रं समासेन सद्वृत्तस्यतदीरितम् ।
आरोग्यमायुरर्थो वा नासद्भिः प्राप्यते नृभिः ॥ ८९ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थानेऽनागताबाधप्रतिषेधनीयं
चिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

वृषस्यन्तीं सकामामित्यर्थः । रसो मांसरसः । व्यजनं व्यजनानिलः । ननु चास्य विधेरसम्भव एव, तथाहि—रात्रावेवाभिगमनमुक्तम् । रात्रौ च स्नानभोजनादिभिरजीर्णदोषः स्यात्, तत् कथं मैथुनान्ते स्नानविधिः ? सत्यम्, अधिकशुक्राणां नराणां दिवामैथुनगामिनामयं स्नानविधिः व्यवस्थापित इति भावः । अथवा ग्रीष्मे सायं स्नानं भोजनञ्च सम्भाव्यते एवेति न दोषः । इदानी-मतिविस्तृतत्वात् प्रधानमात्रमेतदुदीरितं न पुनरत्राप्रधानमपीत्याह—सुखमात्रमित्यादि । सुखमात्रं प्रधानमात्रम् । समासेन संक्षपेण । नासद्भिरनाचारैः नृभिः पुरुषः ॥ ८७—८९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अनागता-
बाधप्रतिषेधनीय-चिकित्सितव्याख्यानामचतुर्विंशतितमोऽध्यायः ॥ २४ ॥

---

* स्नानं सशर्करं क्षीरं रसा भक्ष्याश्च गौड़िकाः ।
व्यजनं स्वप्नसेवा च व्यवायान्ते हितानि तु ॥ इति पाठान्तरम् ।

# पञ्चविंशोऽध्यायः ।

अथातो मिश्रकचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पाल्यामयास्तु विज्ञाव्या इत्युक्तं प्राङ्निबोध तान्।
परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः ।
पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः॥ २ । ३॥
सौकुमार्य्याच्चिरोत्सृष्टे सहसाभिप्रवर्द्धिते ।
कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवान् ।
कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः ॥ ४ ॥
गुर्व्वाभरणसंयोगात् ताड़नाद् घर्षणादपि ।
शोफः पाल्यां भवेच्छ्रावो दाहपाकरुगन्वितः ।
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः॥ ५ ॥
बलाद् वर्द्धयतः कर्णं पाल्यां वायुः प्रकुप्यति ।
गृहीत्वा सकफं कुर्य्याच्छोफं तद्वर्णवेदनम् * ।
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ ६ ॥
वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वितः ।
शोफो भवति पाकश्च त्वक्स्थोऽसौ दुःखवर्द्धनः † ॥ ७ ॥
कफासृक्क्रिमयः कुर्य्युः सर्षपाभा विकारिणीः ।
स्राविणीः पिड़काः पाल्यां कण्डूदाहरुगन्विताः ॥
कफासृक्क्रिमिसम्भूतः स विसर्पन्नितस्ततः ‡ ।
लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥ ८ ॥

चिरोत्सृष्टः बहुकालं यावत् परित्यक्तः, सौकुमार्य्यहेतुत्वात् ॥ १—४ ॥

शष्कुली बाह्यपाल्यधिष्ठिता ॥ ५—८ ॥

---

* स्तब्धमवेदनमिति पाठान्तरम् ।

† संवर्द्धयमाने दुर्व्विद्धे कण्डूदाहरुजान्वितः ।
शोथो भवति पाकश्च त्रिदोषो दुःखवर्द्धनः ॥ इति वा पाठः ।

‡ विसर्पोन्वितस्तत इति क्वचित् पाठः ।

पाल्यामया ह्यमी घोरा नरस्याप्रतिकारिणः ।
मिथ्याहारविहारस्य पालीं हिंस्युरुपेक्षिताः ॥
तस्मादाशु भिषक् तेषु स्नेहादिक्रममाचरेत् ।
तथाभ्यङ्गपरीषेक-प्रदेहासृग्विमोक्षणम् ॥ ९ ॥
सामान्यतो विशेषाच्च वक्ष्याम्यभ्यञ्जनं प्रति ॥ १० ॥
खरमञ्जरियष्ट्याह्व-सैन्धवामरदारुभिः ।
सुपिष्टैः साश्वगन्धैश्च मूलकावल्गुजैः फलैः ॥
सर्पिस्तैलवसामज्ज-मधूच्छिष्टानि पाचयेत् ।
सक्षीराण्यथ तैः पालीं प्रदिह्यात् परिपोटके ॥ ११ ॥
मञ्जिष्ठातिलयष्ट्याह्व-सारिवोत्पलपद्मकैः ।
सरोध्रैः सकदम्बैश्च वलाजम्ब्वाम्रपल्लवैः ।
सिद्धं धान्याम्लसंयुक्तं तैलमुत्पातनाशनम् ॥ १२ ॥
तालपत्र्यश्वगन्धार्क-वाकुचीफलसैन्धवैः ।
तैलं कुलीरगोधाभ्यां वसया सह पाचितम् ॥
सरलालाङ्गलीभ्याश्च हितमुन्मन्थनाशनम् ।
तथाश्मन्तकजम्ब्वाम्र-पत्रक्काथेन सेचनम् ॥ १३ ॥
प्रपौण्डरीकमधुक-मञ्जिष्ठारजनीद्वयः ।
चूर्णैरुद्वर्तनैः पालीं तैलाक्तामवचूर्णयेत् ॥
लाक्षाविडङ्गकल्केन तैलं पक्त्वावचारयेत् ।
स्विन्नां गोमयपिण्डेन प्रदिह्यात् परिलेहिके ॥
पिष्टैर्विडङ्गैरथवा त्रिवृच्छ्यामार्कसंयुतैः ।
करञ्जेङ्गुदिबीजैर्वा कुटजारग्वधायुतैः ॥ १४ ॥

तस्मादित्यादि । सामान्यतः—स्नेह आदिर्यस्य वमनादेः स तथा । तत्र वातिकेऽभ्यङ्गानुवासन-प्रदेहादि, पैत्तिके विरेचनम्, श्लैष्मिके वमनम्, रक्तपैत्तिके रक्तापकर्षणविरेकपरिषेकादिका क्रिया, क्रिमिजे कृमिघ्नश्च विधिरिति । खरमञ्जरिरपामार्गः । अवल्गुजा वाकुचिका । परिपोटके पालिं चतुःस्नेहेन सक्थिष्टेनैव प्रदिह्यात् । तालपत्री मूषिकपर्णी । कुलीरगोधाभ्यामिति कुलीरः कर्कटः, गोधा गोसाप इति भाषा । सरला धूपकाष्ठः । अश्मन्तकादिपत्रक्काथपरिषिक्तां लाक्षाविडङ्गादि-कल्कसिद्धेन तैलेनाभ्यक्तां प्रपौण्डरीकादिचूर्णेनावचूर्णयेत् । त्रिवृदादिसंयुतैर्विडङ्गैर्गोमूत्रपिष्टैः प्रदिह्यात् । गयी तु परिलेहिके पिप्पलीकृमिघ्नवचाकल्केन गोमूत्रपिष्टेन च प्रदिह्यादिति व्याख्या-नयति, एतच्च तदनुगपाठेन लभ्यते ॥ ९—१४ ॥

सर्व्वैर्वा सार्षपं तैलं सिद्धं मरिचसंयुतम्।
सनिम्बपत्रैरभ्यङ्गे मधूच्छिष्टान्वितं हितम्॥ १५॥
पालीषु व्याधियुक्तासु तन्वीषु कठिनासु च।
पुष्ट्यर्थं मार्दवार्थञ्च कुर्य्यादभ्यञ्जनं हितम्॥ १६॥
लोपाकानूपमज्जानं वसां तैलं नवं घृतम्।
पचेद् दशगुणं क्षीरमावाप्य मधुरं गणम्॥
अपामार्गाश्वगन्धे च तथा लाक्षारसं शुभम्।
तत् सिद्धं परिपूतञ्च स्वनुगुप्तं निधापयेत्॥
तेनाभ्यङ्गात् सदा पालीं सुस्विन्नामतिमर्दिताम्।
एतेन पाल्यो वर्द्धन्ते निरुजो निरुपद्रवाः।
मृद्व्यः पुष्टाः समाः स्निग्धा जायन्ते भूषणक्षमाः॥ १७॥
नीलीदलं भृङ्गरजोऽर्ज्जुनत्वक् पिण्डीतकं कृष्णमयोरजश्च।
वीजोद्भवं साहचरञ्च पुष्पं पथ्याक्षधात्रीसहितं विचूर्ण्य॥
एकीकृतं सर्व्वमिदं प्रमाय पङ्केन तुल्यं नलिनीभवेन।
संयोज्य पक्षं कलसे निधाय लौहे घटे सद्मनि सापिधाने॥

सर्व्वैरनन्तरोक्तैः, गोमूत्रं चतुर्गुणम्। अन्ये त्वेवं पठन्ति—"निम्बपत्रमूत्रसिक्त ह्यङ्गे चाभ्यञ्जनं हितम्" इति। लोपाकः शृगालः। आनूपाः महिषादयः। मधुरगणः काकोल्यादिः॥ १५—१७॥

पलिते नीलीतैलमाह—नीलीदलमित्यादि। नीली नीललतिका शारदफला, श्रीफलीति लोके। भृङ्गराजो मार्कवः। पिण्डीतकं कृष्णम्, कृष्णपुष्पो मदनः। वीजोद्भवं साहचरञ्च पुष्पं वीजकसहचरयोः पुष्पम्; अन्ये त्वस्मिन् योगे साहचरं श्यामापुष्पं वदन्ति। एकीकृतं सर्व्वमिदं प्रमायेति प्रमाय तोलयित्वा, नलिनीभवेन पङ्केन तुल्यं पद्मतलकर्द्दमेन सहेत्यर्थः। संयोज्य मेलयित्वा। सद्मनि गृहे। सापिधाने सुष्ठु आवृते इति कुम्भपने कलस इति ज्ञेयम्।

अनेन तैलं विपचेद् विमिश्रं रसेन भृङ्गत्रिफलाभवेन।
आसन्नपाके च परीक्षणार्थं पत्रं बलाकाभवमाक्षिपेच्च ॥
भवेद् यदा तद् भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रे।
कृष्णायसे मासमवस्थितं तदभ्यङ्गयोगात् पलितानि हन्यात् ॥ १८ ॥
सैरीयजम्ब्वर्ज्जुनकाश्मरीजं पुष्पं तिलान् मार्कवचूतवीजे।
पुनर्नवे कर्द्दमकण्टकार्य्यौ कासीसपिण्डीतकवीजसारम् ॥
फलत्रयं लोहरजोऽञ्जनञ्च यष्ट्याह्वयं नीरजसारिवे च।
पिष्ट्वाथ सर्व्वं सह मोदयन्त्या साराम्भसा वीजकसम्भवेन ॥
साराम्भसः सप्तभिरेव पश्चात् प्रस्थैः समालोड्य दशाहगुप्तम्।
लौहे सुपात्रे विनिधाय तैलमक्षोद्भवं तच्च पचेत् प्रयत्नात् ॥
पक्वञ्च लौहेऽभिनवे निधाय नस्यं विदध्यात् परिशुद्धकायः।
अभ्यङ्गयोगैश्च नियुज्यमानं भुञ्जीत माषान् कृशरामथो वा ॥
मासोपरिष्टाद् घनकुञ्चिताग्राः केशा भवन्ति भ्रमराञ्जनाभाः।
केशास्तथान्ये खलतौ भवेयुर्जरा न चैनं सहसाभ्युपैति ॥
बलं परं सम्भवतीन्द्रियाणां भवेच्च वक्त्रं वलिभिर्विमुक्तम्।
नाकामिनेऽनर्थिनि नाकृताय नैवारये तैलमिदं प्रदेयम् ॥ १९ ॥

अनेनेत्यादि। पक्षाद्युद्धृत्यानेन तैलं विपचेत्। तैलचतुर्थांशो भेषजकल्कः, स्नेहाच्चतुर्गुणो द्रव इति न्यायः स्वयमेवोह्यः। आसन्नपाके चेत्यादि। तावत् कालं पाचयेद् यावदेव बलाकापक्षं नीलं न भवतीति ; एतेन पुनःपुनर्द्रवं निक्षिप्य पचेदित्युक्तं भवति ॥ १८ ॥

सैरीयकादीनां पुष्पाणि। मार्कवो भृङ्गराजः। चूतः आम्रः। पुनर्नवा शुक्ललोहिता। कर्द्दमः पद्मिनीमूलपङ्कः। पिण्डीतको मदनकः, तस्य यत् फलं पाण्डुरवर्णं भवति तदिह ग्राह्यम्। वीजसारमसनसारम्। अञ्जनं रसाञ्जनम्, अन्ये तु स्रोतोऽञ्जनमाहुः। नीरजं नीलोत्पलम्। पिष्ट्वा कर्षप्रमाणमित्यर्थः। मोदयन्ती मल्लिकेति लोके ख्याता। साराम्भसा वीजकसारोदकेन। तैलमक्षोद्भवं विभीतकतैलम्, तदाढकप्रमाणं पचेदिति। लौहपात्रे निधाय स्थापयेत्, मासमात्रमिति शेषः। एष पलिते खलतौ च योगः ॥ १९ ॥

लाक्षा * रोध्रं द्वे हरिद्रे शिलाले कुष्ठं नागं गैरिका वर्णकाश्च ।
मञ्जिष्ठोग्रा स्यात् सुराष्ट्रोद्भवा च पत्तङ्गं वै रोचना चाञ्जनञ्च ॥
हेमाङ्गत्वक् पाण्डुपत्रं वटस्य कालीयं स्यात् पद्मकं पद्ममध्यम् ।
रक्तं श्वेतं चन्दनं पारदश्च काकोल्यादिः क्षीरपिष्टश्च वर्गः ॥
मेदो मज्जा सिक्थकं गोघृतञ्च दुग्धं क्काथः क्षीरिणाञ्च द्रुमाणाम् ।
एतत् सर्व्वं पक्कमैकध्यतस्तु वक्त्राभ्यङ्ग सर्पिरुक्तं प्रधानम् ॥
हन्याद् व्यङ्गं नीलिकाञ्चातिवृद्धां वक्त्रे जाताः स्फोटिकाश्चापि काश्चित् ।
पद्माकारं निर्व्वलीकञ्च वक्त्रं कुर्य्यादेतत् पीनगण्डं मनोज्ञम् ॥
राज्ञामेतद् योषिताञ्चापि नित्यं कुर्य्याद् वैद्यस्तत्समानां नृणाञ्च ।
कुष्ठघ्नं वै सर्पिरेतत् प्रधानं येषां पादे सन्ति वैपादिकाश्च ॥ २० ॥

लाक्षामित्यादि । वलिस्त्वक्सङ्कोचः । शिला मनःशिला । केचिदमुं पाठमन्यथा पठन्ति । स च प्रयोजनाभावान्न लिखितः ॥ २० ॥

---

* जेज्जटसम्मतं पाठान्तरं लिख्यते—
लाक्षामनोह्वागजरोध्रतालं पत्तङ्गरक्ताकनकाभिधानाः ।
सौराष्ट्रिका पाण्डु वटस्य पत्रं कालीयकं पद्मकपद्ममध्यम् ॥
गोरोचनाकुङ्कुमगैरिकाणि निशाद्वयं पारदचन्दने च ।
क्षौद्रोत्थमज्जाज्यवसापयांसि स्वाद्वर्गामयवर्णकानि ॥
क्षीरद्रुमाणां क्कथनेन पिष्ट्वा संपाचितं ताम्रमये कटाहे ।
अभ्यङ्गयोगेन निषेव्यमाणं व्यङ्गं समस्तान् पिड़कांश्च सर्पिः ॥
वक्त्रे प्रवृद्धामति नीलिकाञ्च तूर्णं निहन्यात् तिलकालकांश्च ।
वलीविमुक्तं दृढ़पीनगण्डं कुर्य्याच्च वक्त्रं कमलानुकारि ॥

तालं हरितालम्, पत्तङ्गं रक्तचन्दनभेदः, रक्ता मञ्जिष्ठा, कनकाभिधाना सुवर्णक्षीरिकेति प्रसिद्धा, सौराष्ट्रिका तुवरमृत्तिका, कालीयकं पीतचन्दनम्, पद्मकं पद्मकाष्ठम्, पद्ममध्यं पद्मवराटकम्, पारदः रसमुरेसः, चन्दने च एकं सितमपरं रक्तम्, क्षौद्रोत्थं मधूच्छिष्टम्, वसामज्जासपिष्कानि कल्कभागेनैव, पयो दुग्धं तच्च घृतसमं देयम्, स्वादुवर्गः काकोल्यादिः, आमयः कुष्ठम्, वर्णकः कम्पिल्लकः, कुङ्कुष्ठकमपरे, अन्ये सुवर्णमाहुः, आरग्वधकल्कमपरे ; क्षीरद्रुमाणां क्कथनेनेति वटादीनां त्रिगुणेन क्कथेन अथवा चतुर्गुणेनेत्यर्थः ।

हरीतकीचूर्णमरिष्टपत्रं चूतत्वचं दाड़िमपुष्पवृन्तम् ।
पत्रञ्च दद्यान्मदयन्तिकाया लेपोऽङ्गरागो नरदेवयोग्यः ॥ २१ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने मिश्रकचिकित्सितं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

हरीतकीत्यादि । अरिष्टपत्रं निम्बपत्रम्, फेनिलवृक्षपत्रं वा । चूतत्वक् आम्रत्वक् । मदयन्तिका मेहदीति लोके, यस्याः पिष्टैः पत्रैर्नखानां रागं स्त्रिय उत्पादयन्ति ॥ २१ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे मिश्रकचिकित्सितव्याख्यानाम पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

---

# षड्विंशोऽध्यायः।

अथातः क्षीणबलीयं वाजीकरणचिकित्सितं व्याख्यास्यामः;
यथोवाच भगवान् धन्वन्तरिः॥ १॥

कल्यस्योदग्रवयसो वाजीकरणसेविनः।
सर्व्वेष्वृतुष्वहरहर्व्यवायो न निवारितः॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम्।
योषित्प्रसङ्गात् क्षीणानां क्लीवानामल्परेतसाम्॥
विलासिनामर्थवतां रूपयौवनशालिनाम्।
नृणाञ्च बहुभार्य्याणां योगा वाजीकरा हिताः॥ २॥
सेवमानो यदौचित्याद् वाजीवात्यर्थवेगवान्।
नारीस्तर्पयते तेन वाजीकरणमुच्यते॥
भोजनानि विचित्राणि पानानि विविधानि च।
वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा॥
यामिनी सेन्दुतिलका कामिनी नवयौवना।
गीतं श्रोत्रमनोहारि ताम्बूलं मदिराः स्रजः।
मनसश्चाप्रतीघातो वाजीकुर्व्वन्ति मानवम्॥

क्षीणता हीनशक्तित्वम्। कल्यस्य रोगरहितस्य। उदग्रवयसस्तरुणस्य॥ १। २॥

अथ किं तद् वाजीकरणमित्युच्यते इत्याह—सेवमान इत्यादि। तथान्यत्रापि "वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः" इत्यादि। तत् त्रिविधम्—जनकं, प्रवर्त्तकं, जनकप्रवर्त्तकञ्चेति। तत्र जनकं मांसघृतादिकम्, यतस्तद् रसादिधातुक्रमेण परिणतं सप्तधातुपुष्टिं करोति; प्रवर्त्तकमुच्चटाचूर्णादिकं शुक्रविरेचनं, तस्य च वैरेचनिकत्वे सत्याशुक्षयकारित्वं स्यात्, अतो विरेचनं शुक्रस्य पतनायाभिमुखीभावमात्रकरणम्; जनकप्रवर्त्तकन्तु गव्यघृतगोधूममाषाण्डफलादिकम्। केवलं देहबलकरं जनकं गोधूमादिकं, केवलमनोबलकरं सङ्कल्पादि तु प्रवर्त्तकं, घृतक्षीरादि देहमनोबलकरं सद्भयकरमिति। वृष्यादिद्रव्याणां सद्यः शुक्रादिकरणे प्रभावोऽयम्। तथा च श्रीवाग्भटः—"केचिदाहुरहोरात्राद् दशाहादपरे परे। मासात् प्रयाति शुक्रत्वमन्नं पाकक्रमादिति॥ वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्व्वते। प्रायः करोत्यहोरात्रात् कर्म्माद्यन्यच्च भेषजम्" इति।

तैस्तैर्भावैरहृद्यै स्तु रिरंसोर्मनसि क्षते।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम्॥
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः।
सौम्यधातुक्षयो दृष्टः क्लैब्यं तदपरं स्मृतम्॥
अतिव्यवायशीलो यो न च वाजीक्रियारतः।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम्॥
महता मेढ्ररोगेण मर्म्मच्छेदेन वा पुनः।
क्लैब्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम्॥
जन्मप्रभृति यः क्लीवः क्लैब्यं तत् सहजं स्मृतम्॥
बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्य्यतः।
षष्ठं क्लैब्यं मतं तत् तु स्थिरशुक्रनिमित्तजम्॥
असाध्यं सहजं क्लैब्यं मर्म्मच्छेदाच्च यद् भवेत्।
साध्यानामितरेषान्तु कार्य्यो हेतुविपर्य्ययः।
विधिर्वाजीकरो यस्तु तं प्रवक्ष्याम्यतः परम्॥ ३॥
तिलमाषविदारीणां शालीनां चूर्णमेव वा।
पौण्ड्रकेक्षुरसैरार्द्रं मर्द्दितं सैन्धवान्वितम्॥
वराहमेदसा युक्तां घृतेनोत्कारिकां पचेत्।
तां भक्षयित्वा पुरुषो गच्छेत् तु प्रमदाशतम्॥ ४॥
वस्ताण्डसिद्धे पयसि भावितानसकृत् तिलान्।
शिशुमारवसापक्काः शष्कुल्यस्तैस्तिलैः कृताः।
यः खादेत् स पुमान् गच्छेत् स्त्रीणां शतमपूर्ववत्॥

रिरंसुः रन्तुमिच्छुः। प्रवर्त्तनादिकारणान्युद्दिशन्नाह- भोजनानीत्यादि। प्रवर्त्तनाकारणान्युद्दिश-
रिरंसुः रन्तुमिच्छुः। प्रवर्त्तनादिकारणान्युद्दिशन्नाह- भोजनानीत्यादि। प्रवर्त्तनाकारणान्युद्दिश-
न्नाह—तैस्तैरित्यादि। तैस्तैर्भावैरिति भयाविश्रम्भस्त्रीदोषदर्शनादिभिः। रिरंसुः रन्तुमिच्छुः।
धातुक्षयजन्यं क्लैब्यमाह—अतिव्यवायेत्यादि। मर्म्मच्छेदेनेति शुक्रवहनाडीनां छेदनात्। स्थिरं
कठिनम्, अन्ये परुषमाहुः। रसैर्मांसरसैरिक्षुरसैश्च, उत्कारिकां लप्सिकाम्॥ ३।४॥
सामान्यपरिभाषाकल्पेन सिद्धे पयसि सप्ताहं भावितान् तिलान् खादेत्, तत्रानुपानं क्षीर-
मेवेत्येको योगः। परिभाषामाह—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशिष्टं कर्त्तव्यं
क्षीरपाके त्वयं विधिः" इति। वस्ताण्डसिद्धे पयसि भावितैस्तिलैः कृताः शष्कुल्यः शिशुमारवसया
भृष्टा भक्षिता यथोक्तफलदाः। तत्राप्यनुपाने क्षीरमित्येको योगः। एतेन योगद्वयमुक्तम्। अपूर्ववत्

पिप्पलीलवणोपेते वस्ताण्डे क्षीरसर्पिषा।
साधिते भक्षयेद् यस्तु स गच्छेत् प्रमदाशतम्॥ ५॥
पिप्पलीमाषशालीनां यवगोधूमयोस्तथा।
चूर्णभागैः समस्तैस्तु घृते पूपलिकां पचेत्॥
तां भक्षयित्वा पीत्वा तु शर्करामधुरं पयः।
नरश्चटकवद् गच्छेद् दश वारान् निरन्तरम्॥ ६॥
विदार्य्याः सुकृतं चूर्णं * स्वरसेनैव भावितम्।
सर्पिर्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छति॥ ७॥
एवमामलकं चूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति॥ ८॥
पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते।
शिशुमारस्य वा खादेत् ते तु वाजीकरे भृशम्॥
कुलीरकूर्म्मनक्राणामण्डान्येवन्तु भक्षयेत्।
महिषर्षभवस्तानां पिबेच्छुक्राणि वा नरः॥ ९॥
अश्वत्थफलमूलत्वक्-शुङ्गासिद्धं पयो नरः।
पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति॥ १०॥

प्रथमसुरतवत्। पिप्पलीत्यादि। वस्ताण्डे क्षीरसर्पिषा क्षीरोत्थितनवनीतसर्पिषा पक्वे पिप्पल्या किञ्चित् कटुके सैन्धवेन किञ्चिल्लवणे भक्षिते यथोक्तफलदे ; अनुपानं शीतलजलम्॥ ५॥

पिप्पलीत्यादि। शृतं शर्करामधुरं क्षीरमनुपानम्॥ ६॥

स्वरसेनैव विदार्य्या एव, शर्करासर्पिःक्षौद्रयुतं लीढ्वानन्तरमनुपानं पयः पिबेत्॥ ७। ८॥

पिप्पलीत्यादि। वस्ताण्डे अजमुष्कौ। शिशुमारस्य अण्डे इति शेषः। कुलीरः कर्कटः, गृहचटक इत्यन्ये, कुलीरो मत्स्यविशेष इत्यपरे। कूर्म्मः कच्छपः। नक्रो मत्स्यभेदः, घड़ियाल इति लोके। अण्डमत्र प्राणाधारो वर्त्तुलः; नतु मुष्कः। ऋषभो वृषभः। वस्तश्छागः। तेषां शुक्राणि, गुरूपदेशात् तदाधारभूतान्येवाण्डानि। अश्वत्थेत्यादि। शुङ्गाः अग्रपल्लवाः। हृष्यति

* चूर्णं विदार्य्याः सुकृतमिति वा पाठः।

विदारिमूलकल्कन्तु घृतेन पयसा नरः ।
उडम्बरसमं पीत्वा वृद्धोऽपि तरुणायते ॥ ११ ॥
माषाणां पलमेकन्तु संयुक्तं क्षौद्रसर्पिषा ।
अवलिह्य पयः पीत्वा तेन वाजीभवेन्नरः ॥ १२ ॥
क्षीरपक्वांस्तु गोधूमानात्मगुप्ताफलैः सह ।
शीतान् घृतयुतान् खादेत् ततः पश्चात् पयः पिवेत् ॥ १३ ॥
नक्रमूषिकमण्डूक-चटकाण्डकृतं घृतम् ।
पादाभ्यङ्गेन कुरुते वलं भूमिन्तु न स्पृशेत् ॥
यावत् स्पृशति नो भूमिं तावद् गच्छेन्निरन्तरम् ॥ १४ ॥
स्वयंगुप्तेक्षुरकयोः फलचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥ १५ ॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममिष्यते ॥ १६ ॥
शतावर्य्युच्चटामूलं पेयमेवं वलार्थिना ।
स्वयंगुप्ताफलैर्युक्तं माषसूपं पिवेन्नरः ॥ १७ ॥
गुप्ताफलं गोक्षुरकाच्च वीजं तथोच्चटां गोपयसा विपाच्य ।
खजाहतं शर्करया च युक्तं पीत्वा नरो हृष्यति सर्व्वरात्रम् ॥ १८ ॥
माषान् विदारीमपि सोच्चटाश्च क्षीरे गवां क्षौद्रघृतोपपन्नाम् ।
पीत्वा नरः शर्करया सुयुक्तां कुलिङ्गवद्धृष्यति सर्व्वरात्रम् ॥ १९ ॥
गृष्टीनां वृद्धवत्सानां माषपर्णभृतां गवाम् ।
यत् क्षीरं तत् प्रशंसन्ति वलकामेषु जन्तुषु ॥

सकामो भवति । उडुम्बरसममुदुम्बरफलप्रमाणम् । स्वयंगुप्ता कपिकच्छूः । इक्षुरकः कोकिलाक्षः तालमाखना इति लोके । उच्चटा श्वेतदुर्व्वारिका स्वल्पविटपः प्रायशो हिमवति सरयूनदीतीरे दृश्यते । एवमिति सशर्करधारोष्णक्षीरेण, खजाहतं मन्थानहतम् ॥ ९—१९ ॥

गृष्टीनां प्रथमप्रसूतानाम्, वृद्धवत्सानामेकवर्षवत्सानामित्यर्थः । माषपर्णभृतां माषपर्णेन पोषितानां, माषपर्णग्रहणं फलाद्युदाहरणार्थम्, ते च माषपर्णा हरिता अभिप्रेता न शुष्काः ।

क्षीरमांसगणाः सर्व्वे काकोल्यादिश्च पूजितः।
वाजीकरणहेतोर्हि तस्मात् तत् तु प्रयोजयेत् ॥
एते वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः *।
सेव्या विशुद्धोपचित-देहैः कालाद्यपेक्षया ॥ २०। २१ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने क्षीणबलीय-वाजीकरणचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

प्रीतिः मनःसुखम्। अपत्यं सन्ततिः, बलं देहस्योपचयलक्षणं शक्तिलक्षणं वा। विशिष्टशोधन-विशुद्धशरीराणां कृतसंसर्ज्जानामेव यथोक्तं फलं भवति, नान्यथेति दर्शयन्नाह—सेव्या विशुद्धोपचितदेहैरिति पूर्व्वं विशुद्धाः कृतसंसर्ज्जनत्वात् पश्चादुपचिताः ॥ २० । २१ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे क्षीणबलीयवाजीकरणचिकित्सितव्याख्यानाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

* फलप्रदा इत्यपि क्वचित् पाठः।

## सप्तविंशोऽध्यायः ।

अथातः सर्व्वोपघातशमनीयं रसायनं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

पूर्व्व वयसि मध्ये वा मनुष्यस्य रसायनम् ।
प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लि(म्लि)ष्टे रङ्गयोग इवाहितः ॥ २ ॥
शरीरस्योपघाता ये दोषजा मानसास्तथा ।
उपदिष्टाः प्रदेशेषु तेषां वक्ष्यामि वारणम् ॥ ३ ॥
शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः ।
त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद् वयः ॥ ४ ॥

रसादिधातूनामयनमाप्यायनम्, अथवा भेषजाश्रितानां रसवीर्य्यविपाकप्रभावपरमायुर्बल-वीर्य्याणां वयःस्थैर्य्यकराणामयनं लाभोपायो रसायनम्; वर्द्धकं स्थापकमप्राप्तप्रापकं वेत्यर्थः। द्विविधं रसायनम्—कुटिप्रावेशिकं वातातपिकञ्च। पुनश्च त्रिविधं—काम्यं, नैमित्तिकम्, आजस्रिकञ्च; प्राणमेधाकामः श्रीकाम इत्यादिकं काम्यम्, नैमित्तिकं व्याधिनिमित्तं शिलाजतुभल्लातकतुवरकाद्यम्, आजस्रिकं क्षीरघृताभ्यासादिकम्; पुनश्च द्विविधम्—संशोधनसंशमनभेदेन। दोषस्य संशोधनादि संशोधनम्, संशमनं नागबलाप्रयोगादिकमिति। न भाति न दीप्यते। आहितः प्रयुक्तः। शरीरदोषा वातादयः, मानसौ तु रजस्तमसी ॥ १—३ ॥

शरीरस्य प्रकृतिभेदेन चतुर्व्विधं वयःस्थापनमुपदिशन्नाह—शीतोदकमित्यादि। शीतोदकपयः-क्षौद्रसर्पिषामेकशश्चत्वारः प्रयोगाः। द्विशः षट्, त्रिशश्चत्वारः, चतुर्भिरेकः, एवं पञ्चदश प्रयोगाः। उदकं पयः क्षौद्रं सर्पिरित्येकशश्चत्वारः; उदकपयसी, उदकक्षौद्रे, उदकसर्पिषी, पयःक्षौद्रे, पयः सर्पिषी, क्षौद्रसर्पिषीत्येवं द्विशः षट्; उदकपयःसर्पींषि, उदकक्षौद्रसर्पींषि, पयःक्षौद्रसर्पींषि, उदकपयःक्षौद्राणीत्येवं चत्वारः; उदकपयःक्षौद्रसर्पिर्भिरेक एव च प्रयोगः। मानाविरुद्धानामेषां विषमाणामुपयोगः कार्य्यं इति ज्ञेयम्। शीतोदकं समवातपित्तकफप्रकृतौ, पयः पुनरधिकपित्त-प्रकृतावेव, क्षौद्रं कफप्रकृतौ, सर्पिः पुनरधिकवातप्रकृतौ; अस्यैवैकद्वित्रिचतुर्द्रव्यसंयोगो हिताहित-वातादिदोषभेदप्रकृतिषु स्वबुद्ध्या विभजनीयः ॥ ४ ॥

तत्र विड़ङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुकमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत, शीततोयश्चानु पिबेत्, एवमहरहर्मासम्, तदेव मधुयुक्तं भल्लातकक्काथेन वा, मधुद्राक्षाक्काथयुक्तं वा, मध्वामलकरसाभ्यां वा, गुड़ूचीक्काथेन वा, एवमेते पञ्च प्रयोगा भवन्ति। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तम् ओदनमश्नीयात्। एते खल्वर्शांसि क्षपयन्ति क्रिमीनुपघ्नन्ति ग्रहणधारणशक्तिं जनयन्ति, मासे मासे च प्रयोगे वर्षशतं वर्षशतमायुषोऽभिवृद्धिर्भवति ॥ ५ ॥

विड़ङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं स्विन्नमवताय्र्य दृषदि पिष्टमायसे दृढ़े कुम्भे मधूदकोत्तरं प्रावृषि भस्मराशावन्तर्गृहे चतुरो मासान् निदध्यात्, वर्षाविगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसम्पाताभिहुतं कृत्वा प्रातःप्रातर्यथाबलमुपयुञ्जीत। जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात्, पांशुशय्यायां शयीत, तस्य मासादूर्द्ध्वं सर्व्वाङ्गेभ्यः क्रिमयो निष्क्रामन्ति, तानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत्। द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत्। चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते। पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते—अमानुषश्चादित्यप्रकाशं वपुरधिगच्छति

अतश्चोर्द्ध्वमायुर्वर्द्धनमुपदिशन्नाह—तत्रेत्यादि। यष्टीमधु मधु च विड़ङ्गतण्डुलमानेन ग्राह्यम्। एतत् पित्तरक्तार्शःसु तत्प्रकृतौ वा। तदेव विड़ङ्गतण्डुलचूर्णं मधुप्रक्षेपं भल्लातकक्काथेन पेयम्, यथाबलमत्रापि सम्बध्यते; एतद् वातजेषु शुष्कार्शःसु तत्प्रकृतावपि। मधुद्राक्षाक्काथयुक्तं वा विड़ङ्गतण्डुलचूर्णमिति शेषः। मध्वित्यादि अत्रापि विड़ङ्गतण्डुलचूर्णम्। गुड़ूचीत्यादि अत्रापि विड़ङ्गतण्डुलचूर्णम्। घृतवन्तं बहुघृतमित्यर्थः। तेषां फलमाह—एते इत्यादि। तत्र भल्लातकविधानवदाहारः परिहारश्च ॥ ५ ॥

पिष्टपचने तृणादिकृतास्तारे कटाहे। दृषदि शिलायाम्। मधूदकोत्तरं मधूदकप्रधानम्; उदकमत्र विड़ङ्गकषाय एव, शीतोदकमित्यन्ये। निदध्यात् स्थापयेत्। उपसंस्कृतशरीरो विशुद्धदेहः। सहस्रसम्पाताभिहुतं कृत्वा सहस्रसम्पाताध्यायो ऋग्वेदे पठ्यते, तैर्मन्त्रैः सहस्रं हुत्वा उपयुञ्जीत। जेज्जटस्तु सम्पातशब्देन याज्ञिकानां स्रवणं, तथा ह्याहार्य्य संस्कृत्य द्रव्याणि हूयन्ते, हुत्वा हुत्वा च पानीयादिपूर्णपात्रे संस्राव्यन्ते। एतदुक्तं भवति—सहस्रसंपतनं यस्मिन्नभिहुते तत् तथा, तत् कृत्वोपयुञ्जीतेत्यर्थः। गयी तु अथर्व्वविद्भिः सम्पातकर्मणौषधाधिकारिणा मन्त्रेण त्रिपदा गायत्र्या वा प्राक्तनकर्म्मक्षयार्थं विघ्नशान्त्यर्थमभिमताशीःप्राप्त्यर्थं वा सहस्राभिहुतं कृत्वा प्रयुज्यन्ते। पांशुः धूलिः। वंशविदलेन वंशकन्दलिकया। द्वितीये इति मासे। अवशीर्य्यन्ते पतन्तीत्यर्थः। चतुर्थेऽतीते इत्यर्थः। अमानुषमित्यादि अपूर्व्वश्रीयुक्तं वपुः करोतीत्यर्थः।

दूराच्छ्रवणानि दर्शनानि चास्य भवन्ति, रजस्तमसी चापोह्य सत्त्वमधितिष्ठति। श्रतनिगाद्यपूर्व्वोत्पादी गजवलोऽश्वजवः पुनर्युवाष्टौ वर्षशतान्यायुरवाप्नोति। तस्याणुतैलमभ्यङ्गार्थे, अजकर्णकषायमुत्सादनार्थे, सोशीरं कूपोदकं स्नानार्थे, चन्दनमुपलेपनार्थे ; भल्लातकविधानवदाहारः परिहारश्च॥ ६॥

काश्मर्य्याणां निष्कुलीकृतानामेष एव कल्पः पांशुशय्याभोजनवर्ज्जम्। अत्र हि पयसा शृतेन भोक्तव्यम्, समानमन्यत्, आशिषश्च पूर्व्वेण समानाः। शोणितपित्तनिमित्तेषु विकारेष्वेतेषामुपयोगः॥ ७॥

यथोक्तमागारं प्रविश्य वलामूलार्द्धपलं पलं वा पयसालोड्य पिवेत्। जीर्णे पयः सर्पिरोदन इत्याहारः, एवं द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति। एवं दिवसशतमुपयुज्य वर्षशतं वयस्तिष्ठति। एवमेवातिवलानागवलाविदारी-शतावरीणामुपयोगः। विशेषतस्त्वतिवलामुदकेन, नागवलाचूर्णं मधुना, विदारी-चूर्णं वा क्षीरेण, शतावरीमप्येवम्। पूर्व्वेणान्यत् समानमाशिषश्च समाः। एता-स्त्वौषधयो वलकामानां * शोणितं छर्द्दयतां विरिच्यमानानाञ्चोपदिश्यन्ते॥८॥

वाराहीमूलतुलाचूर्णं कृत्वा ततो मात्रां मधुयुक्तां पयसालोड्य पिवेत्। जीर्णे पयः सर्पिरोदन इत्याहारः। प्रतिषेधोऽत्र पूर्व्ववत्। प्रयोगमिममुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम्। एतेनैव चूर्णेन पयोऽवचूर्ण्य शृतशीत-मभिमथ्याज्यमुत्पाद्य मधुयुतमुपयुञ्जीत सायंप्रातरेककालं वा। जीर्णे पयः सर्पिरोदन इत्याहारः। एवं मासमुपयुज्य वर्षशतायुर्भवति॥ ९॥

अपूर्व्वोत्पादीति अपूर्व्वश्लोकादिकं करोतीत्यर्थः। अजकर्णो महासर्ज्जः, गन्धमुण्ड इति लोके। कषायोऽत्र कल्कः। सस्नेहकल्केनोद्घर्षणमुत्सादनम्। चन्दनं रक्तचन्दनम्, श्वेतचन्दन-मित्यपरे। भल्लातकविधानवदिति विवृतागारप्रवेशादिभिरित्यर्थः। समानमन्यत्। आशिष इति गुणा इत्यर्थः॥ ६—८॥

वाराहीत्यादि। प्रतिषेधो निवृत्तिः। एतेनैव चूर्णेन वाराहीचूर्णेन क्षीरपाकविधिना शृतं क्षीरमवचूर्ण्य तच्च शीतमभिमथ्य आज्यमुत्पादयेत्, वाराहीशतपाकं वा सर्पिर्द्रोणमुपयुज्य वर्ष-शतायुर्भवति। जीर्णे पयः सर्पिरोदन इत्याहारः। कल्पनामाह—वाराहीकन्दकल्कं क्षीरचतुर्गुणं घृतद्रोणं पचेत्। अनेन क्रमेण शतपाकं घृतं द्रोणमुपयुज्य वर्षशतायुर्भवति। अन्ये पुनरनुक्तं जलमेव चतुर्गुणमाहुः। यद्यपि स्नेहपानानन्तरं स्नेहभोजनं निषिद्धम्, तथाप्यत्र वाराह्या शत-पाकसंस्कृतस्य स्वभावशमनीयरूपस्य सर्पिषः पानानन्तरं रसायनविधिना सर्पिषा भोजनं युज्यते इति न दोषः॥ ९॥

* इतःपरम्—शोषिणां रक्तपित्तोपसृष्टानामित्यधिकः पाठः क्वचित्।

चक्षुःकामः प्राणकामो वा वीजकसाराग्निमन्थमूलं निःक्वाथ्य माषप्रस्थं साधयेत्, तस्मिन् सिध्यति चित्रकमूलानामक्षमात्रं कल्कं दद्यादामलकरसचतुर्थभागम्। ततः स्विन्नमवताय्यं सहस्रसम्पाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिर्भ्यां संसृज्योपयुञ्जीत यथाबलम्। यथासात्म्यञ्च लवणं परिहरन् भक्षयेत्। जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नीयात् पयसा वा मासत्रयमेवमाभ्यां प्रयोगाभ्यां चक्षुः सौपर्ण्यवद् भवति, अनल्पबलो स्त्रीषु चाक्षयो वर्षशतायुर्भवतीति॥ १०॥

भवति चात्र

पयसा सह सिद्धानि नरः शणफलानि यः।
भक्षयेत् पयसा सार्द्धं वयस्तस्य न शीय्यते॥ ११।

इति सुश्रुत-संहितायां चिकित्सितस्थाने सर्व्वौपघातशमनीयं रसायनं नाम सप्तविंशोऽध्यायः॥ २७॥

वीजकसाराग्निमन्थमूलं पलं सलिलाढ़के निःक्वाथ्य अर्द्धावशिष्टे तत्र पूते षोड़शपलानि माषाणि साध्यानि, तस्मिंश्च सिध्यति चित्रमूलकल्काक्षं प्रक्षिपेत्, आमलकरसस्य माषप्रस्थापेक्षया चतुर्थभागं कुड़वमष्टौ पलानि। पयसा वेति योगद्वयमेतत् योजनाविशेषत्वात्। सौपर्णवत् गरुड़चक्षुषा तुल्यं चक्षुर्भवति। गयी तु सहस्रसम्पाताभिहुतं कृत्वा इति न पठति। अन्ये तु सुश्रुताध्यायिनोऽत्र वक्ष्यमाणं योगं पठन्ति ; यथा पयसा सह सिद्धानीत्यादि। अयं योगोऽनार्षः, जेज्जटेनाप्यनुक्तत्वात्, तस्मात् न पठनीयः १०। ११॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे सर्व्वौपघातशमनीयरसायनव्याख्यानाम सप्तविंशोऽध्यायः॥ २७॥

---

# अष्टाविंशोऽध्यायः।

अथातो मेधायुष्कामीयं रसायनचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः॥ १॥

मेधायुष्कामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुड़ेन सह समालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात्। सप्तरात्रादुद्धृत्य हृतदोषस्य यथाबलं पिण्डं प्रयच्छेदनुदिते सूर्य्ये, उष्णोदकञ्चानुपिबेत्। भल्लातकविधानवच्चागारप्रवेशः। जीर्णौषधश्चापराह्णे हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानाञ्च पयसा शर्करामधुरेणौदनमश्नीयात्। एवं षण्मासानुपयुज्य विमतपाप्मा बलवर्णोपेतः श्रुतनिगादी स्मृतिमानरोगी वर्षशतायुर्भवति। कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोमूत्रेणालोड्यार्द्धपलिकं पिण्डं विगतलौहित्ये सवितरि * पाययेत्, पराह्णे चालवणेनामलकयूषेण सर्पिष्मन्तमोदनमश्नीयात्, एवं मासमुपयुज्य स्मृतिमानरोगी वर्षशतायुर्भवति। एष एवोपयोगश्चित्रकमूलानां रजन्याश्च, चित्रकमूले विशेषो द्विपलिकं पिण्डं परं प्रमाणम्। शेषं पूर्व्ववत्॥ २। ३॥

हृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसालोड्य पिबेत् पयोऽनुपानं वा। तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत, तिलैर्वा सह भक्षयेत् त्रीन् मासान् पयोऽनुपानम्; जीर्णे पयः सर्पिरोदन इत्याहारः। एवमुपयुञ्जानो ब्रह्मवर्च्चसी श्रुतनिगादी भवति, वर्षशतमायुरवाप्नोति। त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्षयेत्। त्रिरात्रादूर्द्ध्वं पयः सर्पिरिति चोपयुञ्जीत। विल्वमात्रं पिण्डं वा पयसालोड्य पिबेत्। एवं दशरात्रमुपयुज्य मेधावी वर्षशतायुर्भवति॥ ४॥

मेधा सर्व्वतोऽव्याहता सूक्ष्मतमा प्रगाढ़ा बुद्धिः श्रुतधारिणी; अवल्गुजा वाकुची, सापि श्वेता गृह्यते। कृष्णाया वाकुच्याः, तेन कृष्णावल्गुजानां चूर्णं गोमूत्रेण पाययेत्। कृष्णायाः पिप्पल्या इति जेज्जटः, तन्नेच्छति गयी। चित्रकस्य द्विपलप्रयोगः परं प्रमाणम्, चित्रकस्य द्विपलप्रयोग इति रजन्या मानस्यानुक्तत्वाद् पूर्व्ववत् पलिकं पिण्डं पाययेदिति गम्यते। चित्रकोऽत्र कृष्णपुष्पो ग्राह्यः। मण्डूकपर्ण्याः समूलपुष्पायास्तिलैः सह भक्षणम्, भक्षणकाल एव पयोऽनुपानमुपयुञ्जीतेति सम्बन्धः। ब्रह्मवर्चसी तेजस्वीत्यर्थः। एनां मण्डूकपर्णीम्। विल्वमात्रं पिण्डमिति तत्कल्कपिण्डो वा पयसा पेयः॥ १—४॥

---

* अनुदिते सूर्य्ये इति वा पाठः।

हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत। जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत्, क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्च्चसी मेधावी भवति। द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति, नष्टञ्चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति। एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति, मूर्त्तिमती चैनं वाग्देव्यनुप्रविशति, सर्व्वाश्चैनं श्रुतय उपतिष्ठन्ति, श्रुतधरः पञ्चवर्षशतायुर्भवति ॥ ५ ॥

ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुड़वं द्वे द्वे पले वचात्रिवृतयोर्द्वादश हरीतक्यामलकविभीतकानि श्लक्ष्णपिष्टान्यावाप्यैकध्यं साधयित्वा स्वनुगुप्तं निदध्यात्। ततः पूर्व्वविधानेन मात्रां यथाबलमुपयुञ्जीत, जीर्णे पयः सर्पिरोदन इत्याहारः। एतेनोर्द्ध्वमधस्तिर्य्यक्‌क्रिमयो निष्क्रामन्ति, अलक्ष्मीरपक्रामति, पुष्करवर्णः स्थिरवयाः श्रुतनिगादी त्रिवर्षशतायुर्भवति। एतदेव कुष्ठविषमज्वरापस्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु संशोधनमादिशन्ति ॥ ६ ॥

हृतदोष एवागारं प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं पयसालोड्य पिबेत्। जीर्णे पयः सर्पिरोदन इत्याहारः। एवं द्वादशरात्रमुपयुञ्जीत। ततोऽस्य श्रोत्रं विव्रियते। द्विरभ्यासात् स्मृतिमान् भवति। त्रिरभ्यासाच्छ्रुतमादत्ते। चतुर्द्वादशरात्रमुपयुज्य सर्व्वं तरति किल्विषं, तार्क्ष्यदर्शनमुत्पद्यते, शतायुश्च भवति। द्वे द्वे पले इतरस्या वचाया निःक्वाथ्य पिबेत् पयसा। समानं भोजनं, समाः पूर्व्वेणाशिषश्च ॥ ७ ॥

वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति, गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति ॥ ८ ॥

पूर्व्वविधानेनेति तेन स्नेहस्वेदादिः सर्व्वरसायनाङ्गो विधिरतिदिष्टः, पूर्व्ववच्च परिहार इति सामान्यरसायनोक्तोऽपि, ब्राह्मीरसायने वर्ज्ज्यस्यानुक्तत्वात्। पुष्करवर्ण इति पुष्करं पद्मवराटकम्। श्रुतनिगादी श्रुतग्रहणशक्तिमान् भवतीत्यर्थः ॥ ५। ६ ॥

हैमवत्या वचायाः श्वेतवचाया इत्यर्थः। अभिहुतमित्यत्र कृत्वेत्यध्याहारात् होमं कृत्वेत्यर्थः। गयी तु पयसालोड्य पिबेदित्यत्र सर्पिषालोड्य पिबेदिति पठति। तच्च सर्पिर्ब्राह्मीस्वरससाधितं पूर्व्वोक्तमेवेति व्याख्याति। इतरस्या वचाया इति अरुणाया इत्यर्थः। पयसा निःक्वाथ्येति क्षीरपाकविधिना ॥ ७। ८ ॥

अत ऊर्द्ध्वं प्रवक्ष्यामि आयुष्कामरसायनम्।
मन्त्रौषधसमायुक्तं संवत्सरफलप्रदम् ॥
विल्वस्य चूर्णं पुष्ये तु हुतं वारान् सहस्रशः।
श्रीसूक्तेन नरः कल्ये ससुवर्णं दिने दिने।
सर्पिर्मधुयुतं लिह्यादलक्ष्मीनाशनं परम् ॥ ९।१० ॥
त्वचं विहाय विल्वस्य मूलक्काथं दिने दिने।
प्राश्नीयात् पयसा सार्द्धं स्नात्वा हुत्वा समाहितः।
दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत् ॥ ११ ॥
हुत्वा विसानां क्काथन्तु मधुलाजैश्च संयुतम्।
अमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतम् ॥ १२ ॥
सुवर्णं पद्मवीजानि मधु लाजाः प्रियङ्गवः।
गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत् ॥ १३ ॥
नीलोत्पलदलक्काथो गव्येन पयसा शृतः।
ससुवर्णतिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः ॥ १४ ॥
गव्यं पयः सुवर्णश्च मधूच्छिष्टश्च माक्षिकम्।
पीतं शतसहस्राभि-हुतं युक्तरथं स्मृतम् ॥ १५ ॥
वचाघृतसुवर्णश्च विल्वचूर्णमिति त्रयम्।
मेध्यमायुष्यमारोग्य-पुष्टिसौभाग्यवर्द्धनम् ॥ १६ ॥
वासामूलतुलाक्काथे तैलमावाप्य साधितम्।
हुत्वा सहस्रमश्नीयात् मेध्यमायुष्यमुच्यते ॥ १७ ॥
यावकांस्तावकान् भक्षेदभिभूय यवांस्तथा।
पिप्पलीमधुसंयुक्तान् शिक्षाचरणवद् भवेत् ॥ १८ ॥

श्रीसूक्तमथर्व्ववेदोक्तं "हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्" इत्यादिकम्। कल्ये प्रभाते। दशसहस्राणि हूयन्ते यत्र तद् दशसाहस्रम्। आयुष्यमायुर्वृद्धिकरम्। युक्तरथं रसायनसमर्थं भवेत्। विसक्काथन्तु मध्वादिर्द्वितीयं रसायनं स्मृतम् ॥ ९—१२ ॥

मधूच्छिष्टञ्च माक्षिकमिति माक्षिकं मधु भ्रामरम्। वचादित्रयचूर्णं घृतेन सदा अवलिह्यात्। तुला पलशतम्। यवानामेते यावकाः यवान् तावकान् अभिभूय कुट्टयित्वा तत्कृतान् यावकान् भक्ष्यान् मधुपिप्पलीसंयुक्तान् खादेत्। शिक्षाचरणवद् भवेदिति शिक्षा उपदेशापेक्षा शास्त्राभ्यासः सुखेनैव भवति। यथा किल बाल्यानन्तरं पादगमनं शिक्षां विनैव भवति, तथैवैतेन योगेनाप्यव-हतेन मेधावृद्धेः शास्त्राभ्यासः सुखेनैव भवतीति तात्पर्य्यार्थः ॥ १३—१८ ॥

मध्वामलकचूर्णानि सुवर्णमिति च त्रयम्।
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात्॥ १९॥
शतावरीघृतं सम्यगुपयुक्तं दिने दिने।
सक्षौद्रं ससुवर्णञ्च नरेन्द्रं स्थापयेद् वशे॥ २०॥
गोचन्दना मोहनिका मधुकं माक्षिकं मधु।
सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता॥ २१॥
पद्मनीलोत्पलक्काथे यष्टीमधुकसंयुते।
सर्पिरासादितं गव्यं ससुवर्णं सदा पिबेत्॥
पयश्चानुपिबेत् सिद्धं तेषामेव समुद्भवे।
अलक्ष्मीघ्नं सदायुष्यं राज्याय सुभगाय च॥
यत्र नोदीरितो मन्त्रो योगेष्वेतेषु साधने।
शब्दिता तत्र सर्व्वत्र गायत्री त्रिपदा भवेत्॥
पाप्मानं नाशयन्त्येता दद्युश्चौषधयः श्रियम्।
कुर्य्युर्नागबलञ्चापि मनुष्यममरोपमम्॥
सतताध्ययनं वादः परतन्त्रावलोकनम्।
तद्विद्या चार्य्यसेवा च बुद्धिमेधाकरो गणः॥
आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणम्।
ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्ज्जनम्॥ २२॥

इति सुश्रुत संहितायां चिकित्सितस्थाने मेधायुष्कामीयं रसायनचिकित्सितं नामाष्टाविंशोऽध्यायः॥ २८॥

अरिष्टं मरणलक्षणम्। नरेन्द्रं स्थापयेद् वश इति यो हि इदं घृतं सेवेत तस्य वशगो भवेत् नरेन्द्रः। गोचन्दना प्रियङ्गुः। मोहनिका पुत्रञ्जीवकः, अन्याक्पुष्पी इति अपरे। आसादितं साधितम्। तेषामेव पद्मनीलोत्पलानामेव समुद्भवे क्वाथे। सर्व्वेषामिदानीं फलश्रुतिमाह—पाप्मानमित्यादि। न केवलं रसायनयोगा एव श्रीकरास्तथायुष्करा भवन्ति, किं तर्हि सतताध्ययनादपि बुद्धिमेधाकरो गुणो भवति। स्वपक्षसाधनं परपक्षबाधनं वादः। परतन्त्राणि न्यायवैशेषिकव्याकरणादीनि। तथैवेतराण्यायुष्याणि। ब्रह्मचर्य्यमिन्द्रियसंयमो वेदाध्ययनं वा। साहसमयथाबलमारम्भः॥ १९—२२॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्हनविरचिते निबन्धसंग्रहे मेधायुष्कामीयरसायनचिकित्सितव्याख्यानाम अष्टाविंशोऽध्यायः॥ २८॥

## एकोनत्रिंशोऽध्यायः ।

अथातः स्वभावव्याधिप्रतिषेधनीयं रसायनं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

ब्रह्मादयोऽसृजन् पूर्व्वममृतं सोमसंज्ञितम् ।
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥ २ ॥

एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्य्यविशेषैश्चतुर्व्विंशतिधा भिद्यते ॥ ३ ॥

तद्यथा—

अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दूर्व्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥
प्रतानवांस्तालवृन्तः करवीरोऽंशवानपि ।
स्वयम्प्रभो महासोमो यश्चापि गरुडाहृतः ॥
गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाक्करस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥
गायत्र्या त्रिपदा युक्तो यश्चोडुपतिरुच्यते ।
एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥
सर्व्वेषामेव चैतेषामेको विधिरुपासने ।
सर्व्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते ॥ ४ ॥

स्वभावप्रवृत्तानां क्षुत्पिपासाजरामृत्युनिद्राप्रभृतीनां व्याधीनां प्रतिषेधनं स्वभावव्याधिप्रतिषेधनम्, तदधिकृत्य कृतं रसायनं स्वभावव्याधिप्रतिषेधनीयम् । यद्यपि स्वभावो निष्प्रत्यनीकः तथापि रसायनप्रभावात् ज्ञानादियुक्तैर्महर्षिभिरनियतायुषां स्वभावव्याध्यादि प्रतिषिध्यते । नियतायुषः पुनः कलिकलुषैरक्षीणा रसायनायोग्या एव ॥ १ ॥

गायत्र्या त्रिपदा युक्त इति सर्व्वेषामेव सोमानां विशेषणम् । तत्र गायत्र्या वर्णस्वरात्मिकया सोमस्य साक्षात् योगो नास्तीति गायत्रीप्रतिपादितलोकवेदत्रययुक्त इत्यर्थः, तेन पीतसोमप्रभावेण लोकवेदत्रयमस्य वशीभवति । एतानि च नामानि सामान्यलोकाप्रसिद्धान्यपि प्रमाणानीति दर्शयन्नाह—एते सोमा इत्यादि । तुल्यगुणास्तुल्यफला इत्यर्थः ॥ २—४ ॥

अतोऽन्यतमं सोममुपयुयुक्षुः सर्व्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृतमागारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिषुतमभिहुतं चान्तरागारे कृतमङ्गलस्वस्तिवाचनः सोमकन्दं सुवर्णसूच्या विदार्य्य पयो गृह्णीयात् सौवर्णे पात्रेऽञ्जलिमात्रम्। ततः सकृदेवोपयुञ्जीत नास्वादयन्। तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्यामात्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत्॥ ५॥

रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः।
आसीत तिष्ठेत् क्रामेच्च न कथञ्चन संविशेत्॥ ६॥

सायं वा भुक्तवान् श्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत, तृषितो वा शीतोदकमात्रां पिबेत्। ततः प्रातरुत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तथैवासीत। तस्य जीर्णे सोमे छर्द्दिरुत्पद्यते, ततः शोणिताक्तं क्रिमिव्यामिश्रं छर्दितवते सायं शृतशीतं क्षीरं वितरेत्। ततस्तृतीयेऽहनि क्रिमिव्यामिश्रमतिसार्य्यते, स तेनानिष्टभोजन(प्रतिग्रह)-प्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति, ततः सायं स्नाताय पूर्व्ववदेव क्षीरं वितरेत्, क्षौमवस्त्रास्तृतायाञ्चैनं शय्यायां शाययेत्। ततश्चतुर्थेऽहनि तस्य श्वयथुः

अत इत्यादि। अन्यतममेकतमम्। उपयुयुक्षुः उपयोगं कर्त्तुमिच्छुः। उपकरणानि घृतादीनि। परिचारकः सर्व्वकर्म्मणां कर्त्ता। प्रशस्तदेशे वास्तुशास्त्रविद्भिः परीक्षिते प्रागुदक्प्रवणे, त्रिवृतमागारं त्रिःपरिवृतां गर्भकुटीं कारयित्वा। हृतदोषः हृतः स्नेहस्वेदवमनादिभिर्दोषो येन सः। प्रतिसंसृष्टं पेयादिक्रमेण स्यक्तं भक्तं येन सः। प्रशस्तास्तिथयो नन्दादयो रिक्तावर्ज्याः, करणानि ववादीनि, मुहूर्त्ताः शिवादयः, नक्षत्राणि पुष्यहस्ताश्विनीश्रवणादीनि। अध्वरकल्पस्य विधानेन आहृतमग्निष्टोमविधानेनानीतम्। अभिषुतं ऋत्विग्भिः पीड़ितम्। अभिहुतं वह्नौ प्रक्षिप्तं ऋत्विग्भिरिति शेषः। अन्तरागारे अन्तर्गृहे। अञ्जलिमात्रं कुड़वप्रमाणम्। अनास्वादयन् सोमरसमनुत्स्वादयन्। उपस्पृश्य आचमनं कृत्वेत्यर्थः। शेषं गृहीतक्षीरमंशुमतः कन्दं उदकेषु नद्यादिगतेषु निक्षिप्येत्यर्थः। मनःसङ्कल्पादिनिरोधो नियमः, पुनरिन्द्रियदेहयोः निरोधो यमः। आत्मानं चेतः। वाक्संयमनमाह—वाग्यतः मौनं कृत्वेत्यर्थः। विहरेदिति विहारं कुर्य्यादित्यर्थः, तत्र कायविहारश्चतुर्व्विधः गमनचङ्क्रमणस्थानासनभेदेन। तन्मना इति तत्रैव सोमे मनो यस्य स तथा। न कथञ्चन संविशेत् न स्वप्यात्। श्रुतशान्तिः आकर्णित मङ्गलपाठः। सायं शयीतेति तेन दिवा स्वापनिषेधः। अभोजनं पुनरत्र प्रथम एव दिने यत्र सोमपानम्। शीतोदकमात्रामिति मात्राशब्दोऽयमल्पार्थः, शीतमल्पमुदकं जलं पिबेत्। गां स्पृष्ट्वेति धातूनामनेकार्थत्वाद् गां दत्त्वेति जज्जटः। अनिष्टभोजनं श्राद्धादिभोजनं, प्रभृति-

उत्पद्यते, ततः सर्व्वाङ्गेभ्यः क्रिमयो निष्क्रामन्ति, तदहश्च शय्यायां पांशुभिरव-कीर्य्यमाणः शयीत। ततः सायं पूर्व्ववदेव क्षीरं वितरेत्। एवं पञ्चमषष्ठयो-र्दिवसयोर्वर्त्तत, केवलमुभयकालमस्म क्षीरं वितरेत्। ततः सप्तमेऽहनि निर्म्मांस-स्त्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति। तदहश्च क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयः पाययेत्। ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दनप्रदिग्धगात्रं पयः पाययित्वा पांशुशय्यां समुत्सृज्य क्षौमा-स्तृतायां शाययेत्; ततो मांसमाप्यायते, त्वक् चावदलति, दन्तनखरोमाणि चास्य पतन्ति। तस्य नवमदिवसात् प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषाय-परिषेकः। ततो दशमेऽहन्येतदेव वितरेत्, ततोऽस्य त्वक् स्थिरतामुपैति। एव-मेकादशद्वादशयोर्वर्त्तेत। ततस्त्रयोदशात् प्रभृति सोमवल्ककषायपरिषेकः। एवमा षोड़शाद् वर्त्तेत। ततः सप्तदशाष्टादशयोर्दिवसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः। तदाप्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत् पञ्चविंशतिरिति। ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा, ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपक-तरुणादित्यप्रकाशाः, स्थिराः स्निग्धा लक्षणसम्पन्नाः केशाश्च जायन्ते, त्वक् च नीलोत्पलातसीपुष्पवैदूर्य्यप्रकाशा। ऊर्द्ध्वञ्च मासात् केशान् वापयेत्, वाप-यित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात्, पयसा वा स्नापयेत्। ततोऽस्यानन्तरं सप्तरात्रात् केशा जायन्ते भ्रमराञ्जननिभाः कुञ्चिताः स्निग्धाः। ततस्त्रिरात्रात् प्रथमावसथपरिसरान्निष्क्रम्य मुहूर्त्तं स्थित्वा पुनरेवान्तः प्रविशेत्। ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य्यं, यवपिष्टमुद्वर्त्तनार्थे, सुखोष्णञ्च पयः परि-षेकार्थे, अजकर्णकषायमुत्सादनार्थे, सोशीरं कूपोदकं स्नानार्थे, चन्दनमनु-लेपनार्थ, आमलकरसविमिश्राश्चास्य यूषसूपविकल्पाः, क्षीरमधुकसिद्धञ्च कृष्ण-तिलमवचारणार्थे। एवं दशरात्रम्। ततोऽन्यद् दशरात्रं द्वितीये परिसरे वर्त्तेत। ततस्तृतीये परिसरे स्थिरीकुर्व्वन्नात्मानमन्यद् दशरात्रमासीत, किञ्चिदातपप्रवनान् वा सेवेत, पुनश्चान्तः प्रविशेत्। न चात्मानमादर्शेऽप्सु वा निरीक्षेत रूपशालित्वात्,

ग्रहणादन्येऽपि अनिष्टप्रतिग्रहाद्योऽभिप्रेताः। वितरेत् दद्यादित्यर्थः। पांशुर्धूलिः। परिषेकः स्नानम्। अजकर्णकषायमिति कल्कमित्यर्थः, कल्केऽपि कषायशब्दो वर्त्तते, 'पञ्चविधं कषाय-कल्पनम्' इति वचनात्। सस्नेहकल्केन घर्षणमुत्सादनम्। क्षीरमधुकसिद्धञ्चेत्यादि। गव्य-

ततोऽन्यद् दशरात्रं क्रोधादीन् परिहरेत्। एवं सर्व्वषामुपयोगविकल्पः। विशेषतस्तु वल्लीमतानक्षुपादयः सोमा ब्राह्मणक्षत्रियवैश्यैर्भक्षयितव्याः। तेषान्तु प्रमाणमर्द्धचतुर्थमुष्टयः॥ ७॥

अंशुमन्तं सौवर्णे पात्रेऽभिषुणुयात्, चन्द्रमसं राजते चोपयुज्याष्टगुणमैश्वर्य्यमवाप्येशानं देवमनुप्रविशति, शेषांस्तु ताम्रमये मृन्मये वा रोहिते वा चर्म्मणि वितते। शूद्रवर्ज्जं त्रिभिर्वर्णैः सोमा उपयोक्तव्याः। ततश्चतुर्थे मासे पौर्णमास्यां शुचौ देशे ब्राह्मणानर्च्चयित्वा कृतमङ्गलो निष्क्रम्य यथोक्तं व्रजेदिति॥ ८॥

ओषधीनां पतिं सोममुपयुज्य विचक्षणः।
दश वर्षसहस्राणि नवां धारयते तनुम्॥
नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च।
तस्यालमायुःक्षपणे समर्थाश्च भवन्ति हि॥
भद्राणां षष्टिवर्षाणां प्रस्रुतानामनेकधा।
कुञ्जराणां सहस्रस्य बलं समधिगच्छति॥
क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः॥

क्षीरचतुर्गुणं मधुककल्कसिद्धं कृष्णतिलानां तैलं व्यञ्जनादिष्ववचार्य्यम्। उपयोगविकल्प इति उपयुज्यते इत्युपयोगो गव्यक्षीरादिराहारो विहारश्च, उपयोगविकल्प उपयोगभेदः कर्त्तव्यः इत्यर्थः। तत्रैव क्वचिद् वर्णभेदेन भेदं दर्शयन्नाह—विशेषतस्तु वल्लीत्यादि। वल्लीनां लतानां दूर्व्वाशैवलमूलानां प्रतानमतिविस्तारः, क्षुपको विटपः, आदिग्रहणात् कन्दादीनामपि ग्रहणम्। तेषान्तु प्रमाणमित्यादि। अर्द्धं चतुर्थं येषां ते तथा, मुष्टिः पलम्॥ ५—७॥

तेषान्तु पात्रेष्वपि भेदं दर्शयन्नाह—अंशुमन्तमित्यादि। अभिषुणुयात् पीड़येत्। उपयुज्येति एतयोरुपयोगं कृत्वेत्यर्थः। अष्टविधैश्वर्य्यं यथा—"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" इति। एतदष्टगुणमैश्वर्य्यं योगलभ्यमपि सोमरसायनाल्लभ्यते। चरके पुनरन्यथोक्तम्—"आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया। दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम्॥ इत्यष्टगुणमाख्यातं योगिनां बलमैश्वरम्। शुद्धसत्त्वसमाधानात् तत् सर्व्वमुपवर्त्तते" इति। ईशानं महेश्वरम्। रोहितः लोहितो मृगविशेषः। वितते विस्तृते। नवामित्यत्र अक्षतमिति पाठान्तरम्। अक्षतं यथा भवति तथा तनुं शरीरं धारयते। अक्षतमिति पाठात्तु व्याधेर्निषेधः। अस्त्रं मन्त्रवच्छस्त्रम्। तस्यालमित्यादि अलमत्राजस्रं, अलमत्यर्थमायुःक्षपणे न समर्था भवन्तीत्यर्थः। भद्राणां भद्रजातीनाम्, षष्टिवर्षाणां षष्टिवर्षप्रमाणानाम्, प्रस्रुतानां गलितमदानां, अनेकधा बहून् वारान्, द्विपानां बलमित्युक्त्या

कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः
प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥
साङ्गोपाङ्गांश्च निखिलान् वेदान् विन्दति तत्त्वतः ।
चरत्यमोघसङ्कल्पो देववच्चाखिलं जगत् ॥ ९ ॥
सर्व्वेषामेव सोमानां पत्राणि दश पञ्च च ।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥
एकैकं जायते पत्रं सोमस्याहरहस्तदा ।
शुक्लस्य पौर्णमास्यान्तु भवेत् पञ्चदशच्छदः ॥
शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः ।
कृष्णपक्षक्षये चापि लता भवति केवला ॥ १० ॥
अंशुमानाज्यगन्धस्तु कन्दवान् रजतप्रभः ।
कदल्याकारकन्दस्तु मुञ्जवान् लशुनच्छदः ॥
चन्द्रमाः कनकाभासो जले चरति सर्व्वदा ।
गरुड़ाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ।
सर्पनिर्म्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ ॥ ११ ॥
तथान्यर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ।
सर्व्वे एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः ।
क्षीरकन्दलतावन्तः पत्रैर्नानाविधः स्मृताः ॥ १२ ॥
हिमवत्यर्व्बुदे सह्ये महेन्द्रे मलये तथा ।
श्रीपर्व्वते देवगिरौ गिरौ देवसहे तथा ।
पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ॥

अनिवार्य्यमित्यर्थः । क्षीरोदः क्षीरसमुद्रः, शक्रसदनमिन्द्रगृहम्, उत्तरकुरवो देशविशेषः । कन्दर्पः
कामदेवः । कान्त्येति कान्त्या तस्य च ज्ञायते अपरोऽयं चन्द्रग्रह इव । अमोघसङ्कल्पः
अनिवार्य्यसङ्कल्पः ॥ ९ ॥

अपरमपि ग्रहणाय लक्षणं दर्शयन्नाह—सर्व्वेषामित्यादि । एतेषामन्वेषणस्थानमाह—हिमवती-
त्यादि । स्थानेषु क्रियापदस्याविद्यमानत्वात् सन्तीत्येवं सामान्यक्रियां वितरेत् । चन्द्रमसः सोमस्य

उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः।
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः॥
हठवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः।
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्।
गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा।
अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः॥
न तान् पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः।
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा॥ १३॥

इति सुश्रुत संहितायां चिकित्सितस्थाने स्वभावव्याधिप्रतिषेधनीयं रसायनं नामैकोनत्रिंशोऽध्यायः॥ २९॥

स्थानविशेषमुद्दिशन्नाह—उत्तरेणेत्यादि। सिन्धुर्नाम महानदः। हठो जलकुम्भिका। प्लवते तरति। चन्द्रमाः सोमविशेषः। नेत्यादि। भेषजद्वेषिण इत्यत्र भिषजद्वेषिण इति पाठान्तरम्। यैर्मन्दभाग्यैर्भिषजो वैद्या अवमानितास्ते पुरुषाः सोमं न पश्यन्ति॥ १०—१३॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे स्वभावव्याधिप्रतिषेधनीयरसायनव्याख्यानाम एकोनत्रिंशोऽध्यायः॥ २९॥

# त्रिंशोऽध्यायः ।

अथातो निवृत्तसन्तापीयं रसायनचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान धन्वन्तरिः ॥ १ ॥

यथा निवृत्तसन्तापा मोदन्ते दिवि देवताः ।
तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः ॥ २ ॥

अथ खलु सप्त पुरुषा रसायनं नोपयुञ्जीरन् । तद्यथा—अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद् भेषजावमानी चेति । सप्तभिरेव कारणैर्न सम्पद्यते—अज्ञानादनारम्भादस्थिरचित्तत्वाद् दारिद्र्यादनायत्तत्वादधर्म्मा-दौषधालाभाच्चेति ॥ ३ ॥

अथौषधीर्व्याख्यास्यामः—श्वेतकापोती, कृष्णकापोती, गोनसी, अजगरी, वाराही, कन्या, छत्रा, अतिच्छत्रा, करेणुः, अजा, चक्रका, आदित्यपर्णिनी, ब्रह्मसुवर्च्चला, महाश्रावणी, श्रावणी, गोलोमी, चाजलोमी, महावेगवती, चेत्यष्टादश सोमसमवीर्य्या महौषधयो व्याख्याताः । तासां सोमवत् क्रियाशीः-स्तुतयः शास्त्रेऽभिहिताः । तासामागारेऽभिहुतानां याः क्षीरवत्यस्तासां क्षीर-कुडवं सकृदेवोपयुञ्जीत ॥ ४ ॥

निवृत्तसन्तापशब्दमधिकृत्य कृतं रसायनं निवृत्तसन्तापीयम्, तदधिकृत्य कृतो ग्रन्थ इतीयप्रत्ययः । महौषधिरसायनमुत्पाद्य अथासामान्यफलैरौषधिप्रशंसामुद्दिशन्नाह—यथा निवृत्त सन्तापा इत्यादि । निवृत्तव्याधित्वेन शारीरमानसिकदुःखरहिताः, मोदन्ते हृष्यन्ति । एतेन मनः-सुखं दर्शयन्ति । दिवि स्वर्गे ॥ १ । २ ॥

अनात्मवान् अप्रशस्तात्मा मिथ्याचारप्रवृत्तो मूढबुद्धिः । प्रमादी प्रमादशीलोऽनवहित इत्यर्थः । व्यसनानि दूतमद्यवेश्यादीनि । सप्त कारणानि च सन्ति अनात्मवदादीनां सप्तानां पुंसामज्ञानादिकारणैः सप्तभिरेव यथायथं रसायनं न प्रयुञ्ज्यात् । तत्रानात्मनोऽज्ञानात्, दरिद्र-स्यालसस्यानारम्भानवस्थितचित्तत्वात् न प्रवृत्तिः, एवं प्रमाद्यादीनामपि अप्रवृत्तिरनुमेयेति ॥ ३ ॥

सोमवदिति अध्वरविधिवर्ज्जमन्यत् सर्व्वं सोमवत् क्रियाविधानम् । आशीर्मङ्गलपाठादिः । स्तुतिः फलवादः, गयी तु क्रिया करणं विधानम्, आशीः फलं, स्तुतयः सोमस्यैव । शास्त्रे आगमे अभिहिताः । एतेन तन्मते सोमस्येव अध्वरविधिरपि प्राप्यते । अभिहुतानां कृतहोमानाम् । क्षीरकुडवमष्टौ पलानि, महती मात्रा ॥ ४ ॥

यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे। श्वेतकापोती समूलपत्रा भक्षयितव्या। गोनसयजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्राावितमभिघारितमभिहुतश्च सकृदेवोपयुञ्जीत। चक्रकायाः पयः सकृदेव। ब्रह्मसुवर्च्चला सप्तरात्रमुपयोक्तव्या भक्ष्यकल्पेन। शेषाणां पञ्च पलानि क्षीराढककथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गाथ, शेषं सोमवदा निर्गमादिति ॥ ५। ६ ॥

भवन्ति चात्र

युवानं सिंहविक्रान्तं कान्तं श्रतनिगादिनम्।
कुर्य्यु रेताः क्रमेणैव द्विसहस्रायुषं नरम् ॥
अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः।
चरत्यमोघसङ्कल्पो नभस्यम्बुदहुर्गमे ॥
व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदाः।
गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा ॥ ७ ॥

प्रदेशिनीप्रमाणानि आयामविस्ताराभ्याम्। ( एतेन समूलपत्रं तैश्च सकलैर्वा। ) क्षीरेण विपाच्येति "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥" अनेन विधिना। अभिघारितमभिहुतमिति पूर्व्वमभिघारितं पश्चादभिहुतम्। अभिघारितम् ईषद्घृताक्तम्। तत्र चक्रकायाः पयः सकृदेव। गयी तु तत्र कन्यकायाः पायसमिति पठति, व्याख्यानयति च—तत्र कन्यकायाः फलकल्कं द्विगुणिततण्डुलं क्षीरेण साध्यं, सकृदेवोपयुञ्जीत। भक्ष्यकल्पेनेति अपूपादिविधानेन। आ निर्गमादिति गूढागारं कृत्वा तत्र आवासपर्य्यन्तमित्यर्थः ॥ ५। ६ ॥

अतःपरं फलश्रुतिमाह—युवानमित्यादि। विक्रान्तं विक्रमयुक्तं। कान्तं मनोज्ञम्। क्रमेणैवेति शास्त्रविहितसकलक्रमेण। कुण्डली कुण्डलयुक्तः, मौली मुकुटधारी, स्रक् माला, अम्बरं वस्त्रम्, अमोघसङ्कल्पः सफलकामितः। नभसि आकाशे। अम्बुददुर्गमे मेघदुर्गमे मेघदुःखसञ्चारे। सोमसिद्धगतिः परेति सोमसिद्धस्य पुनरेवमुत्कृष्टं गमनं भवतीत्यर्थः ॥ ७ ॥

अथ वक्ष्यामि विज्ञानमौषधीनां पृथक् पृथक् ।
मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी ।
पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधैः ॥
निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता ।
सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥
द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम् ।
द्व्यरत्निमात्रां जानीयात् गोनसीं गोनसाकृतिम् ॥
सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम् ।
एवंरूपरसाञ्चापि कृष्णकापोतिमादिशेत् ॥
कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा ।
एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥ ८ ॥
छत्रातिच्छत्रके विद्याद्रक्षोघ्ने कन्दसम्भवे ।
जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते ॥
कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः ।
कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ॥
करेणुः सुबहुक्षीरा कन्देन गजरूपिणी ।
हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥
अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी ।
अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥
श्वेतां विचित्रकुसुमां काकादन्या समां क्षुपाम् ।
चक्रकामोषधीं विद्याज्जरामृत्युनिवारिणीम् ॥
मूलिनी पञ्चभिः पत्रैः सुरक्तांशुककोमलैः ।
आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी ॥
कनकाभा जलान्तेषु सर्व्वतः परिसर्पति ।
सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्च्चला ॥
अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः ।
पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः ।
श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥

विस्तृतकनिष्ठाङ्गुलिमुष्टिकहस्तोऽरत्निः । श्वेतकापोतिसंस्थिते इति श्वेतकापोतिकाकृतीत्यर्थः ।

श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा ॥
गोलोमी चाजलोमी च रोमशे कन्दसम्भवे।
हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः।
अथवा शङ्खपुष्प्या च समाना सर्व्वरूपतः॥
वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा।
एषा वेगवती नाम जायते साम्बुदक्षये ॥ ९ ॥
सप्तादौ सर्व्वरूपिण्यो या ह्योषध्यः प्रकीर्त्तिताः।
तासामुद्धरणं कार्य्यं मन्त्रेणानेन सर्व्वदा ॥
'महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि।
तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै।'
मन्त्रेणानेन मतिमान् सर्व्वा एवाभिमन्त्रयेत् ॥
अश्रद्दधानैरलसैः कृतघ्नैः पापकर्म्मभिः।
नैवासादयितुं शक्याः सोमाः सोमसमास्तथा ॥
पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः।
निहितं सोमवीर्य्यासु सोमे चाप्योषधीपतौ ॥
देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे।
दृश्यते च जलान्तेषु मेध्या ब्रह्मसुवर्च्चला ॥
आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये।
दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्।
करेणुस्तत्र कन्या च छत्रातिच्छत्रके तथा ॥
गोलोमी चाजलोमी च महती श्रावणी तथा।
वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥

रक्षोघ्ने इति रक्षसां प्रध्वंसकरे। काञ्चनवर्णं क्षीरं यस्याः सा काञ्चनक्षीरी। बद्धमुष्टिकरोऽरत्निः। निवातेऽपि स्वभाववेगेनाविष्टा सा, अम्बुदक्षये शरदि ॥ ८। ९॥

अनेन मन्त्रेणोद्धरणमुत्पाटनमौषधपरीक्षार्थमभिमतफलप्राप्त्यर्थञ्च। मन्त्रमाह—महेन्द्रेत्यादि। प्रशाम्यध्वमुपशमं कुरुत; किमर्थम्? शिवाय कल्याणाय। वै निश्चितम्। नैवासादयितुं नैव प्राप्तुम्। पौराणिकीं श्रुतिं दर्शयन्नाह—पीतेत्यादि। निहितं धृतम्। सोमवीर्य्यास्वोषधिषु सोमे, चन्द्रमसि। देशमाह—देवसुन्दे इत्यादि। ह्रदे जलाशयविशेषे। महानद इति लोके प्रसिद्धः।

कौशिकीं सरितं तीर्त्वा सञ्चयन्त्यास्तु पूर्व्वतः ।
क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम् ॥
विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु ।
मलये नलसेतौ च वेगवत्यौषधी ध्रुवा ॥
कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत् तामुपोषितः ।
सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम् ॥
सर्व्वा विचेयास्त्वोषध्यः सोमाश्चाप्यर्व्वुदे गिरौ ।
स शृङ्गैर्देवचरितैरम्बुदानीकभेदिभिः ।
व्याप्तस्तीर्थैश्च विख्यातैः सिद्धर्षिसुरसेवितैः ॥
गुहाभिर्भीमरूपाभिः सिंहोन्नादितकुक्षिभिः ।
गजालोड़िततोयाभिरापगाभिः समन्ततः ।
विविधैर्धातुभिश्चित्रैः सर्व्वत्रैवोपशोभितः ॥ १० ॥
नदीषु शैलेषु सरःसु चापि पुण्येष्वरण्येषु तथाश्रमेषु ।
सर्व्वत्र सर्व्वाः परिमार्गितव्याः सर्व्वत्र भूमिर्हि वसूनि धत्ते ॥ ११ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने निवृत्तसन्तापीयं रसायनचिकित्सितं नाम त्रिंशोऽध्यायः ॥ ३० ॥

हिमसंक्षये वसन्ते । अम्बुदागमे वर्षासु । कृष्णसर्पाख्या वाराही । विज्ञेया अनुसरणीयाः । कुतः पुनरत्र गिरौ सर्व्वा एवानुसरणीया इत्याह—स इत्यादि । यतो गिरिरुक्तविशेषणः । अम्बुदानीकं मेघघटा, धातुभिर्गैरिकादिभिः । पुनः किंविशिष्टो गिरिः ? गुहाभिरुक्तविशेषणाभिर्व्याप्तः, सिंहोन्नादितकुक्षिभिः सिंहैरुन्नादिताः कुक्षयो यासां ताभिः, पुनरापगाभिर्नदीभिरुक्तविशेषणाभिरुपलक्षितः । हि यस्मादर्थे । सर्व्वत्र सर्व्वदेशेषु ॥ १० । ११ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्लनविरचिते निबन्धसंग्रहे निवृत्तसन्तापीयरसायनचिकित्सितव्याख्यानाम त्रिंशोऽध्यायः ॥ ३० ॥

# एकत्रिंशोऽध्यायः ।

अथातः स्नेहोपयौगिकं चिकित्सितं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

स्नेहसारोऽयं पुरुषः, प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति । स्नेहो हि पानानुवासनमस्तिष्कशिरोवस्त्युत्तरवस्तिनस्य-कर्णपूरणगात्राभ्यङ्गभोजने-ष्वुपयोज्यः ॥ २ ॥

तत्र द्वियोनिश्चतुर्विकल्पोऽभिहितः स्नेहः स्नेहगुणाश्च । तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानं, स्थावरेभ्यस्तिलतैलं प्रधानमिति ॥ ३ ॥

अत ऊर्द्ध्वं यथाप्रयोजनं यथाप्रधानञ्च * स्थावरस्नेहानुपदेक्ष्यामः ॥ ४ ॥

तत्र तिल्वकरण्डकोशाम्रदन्तीद्रवन्तीसप्तलाशङ्खिनीपलाशविषाणिकागवाक्षी-कम्पिल्लकसम्पाकनीलिनीस्नेहा विरेचयन्ति । जीमूतककुटजकृतवेधनेक्ष्वाकु-

सर्व्वोपघातशमनीये रसायने नाविशुद्धशरीरस्य युक्तो रासायनो विधिरित्युक्तत्वात् शोधनं प्रतिपादयितुकामः तत्प्राक्कर्म्मणी स्नेहस्वेदौ निर्द्दिशति ; तत्रापि स्नेहपूर्व्वकत्वात् स्वेदस्य प्रथमं स्नेहोपयौगिकं चिकित्सितमाह—अथात इत्यादि । उपयोजनमुपयोगो बाह्य आऽभ्यन्तरश्च; तत्र बाह्योऽभ्यङ्गादिः, आभ्यन्तरः पानादिः ॥ १ । २ ॥

द्वियोनिर्द्विप्रकारकः, स्थावरो जङ्गमश्च । तत्र तैलं स्थावरयोनि, घृतवसामज्जानस्तु जङ्गम योनयः । तत्र तैलं तिलादिफलोद्भवत्वात् फलस्थं, देवदारुशिंशपागुर्व्वादिसारोत्थञ्च ; घृतमपि द्विविधं क्षीरोत्थं दध्युत्थञ्च ; शुद्धमांसस्नेहो वसा, अस्थ्याश्रया मज्जा । चत्वारो विकल्पाः सर्पिस्तैलवसामज्जानो यस्य स्नेहस्येति चतुर्विकल्पः । तत्र जङ्गमेभ्यो गव्यं घृतं प्रधानम्, स्थावरेभ्य-स्तिलतैलमिति ॥ ३ ॥

प्रयोजनस्यानतिक्रमेणेति यथाप्रयोजनम्, प्रयोजनं प्रयोजनं वीक्ष्येति वा । प्रधानं प्रधानं वीक्ष्य यथाप्रधानम् । तत्र स्थावरस्य प्रायेण पार्थिवद्रव्यारब्धत्वात् तस्य च स्वभावेनाधोगामित्वाद् विरेचनस्नेहानेव प्रथममाह—तत्रेत्यादि । तिल्वको रोध्राकारो बृहत्पत्रः रक्तत्वग् वैरेचनिकः । सप्तला यवतिक्ताभेदः, शङ्खिन्यपि तद्भेदः । विषाणिका मेषशृङ्गी । गवाक्षी द्रवकर्णी । कम्पिल्लकः रेचनिका स्वनामख्यातः । शम्पाकः किरमालकः । नीलिनी नीलाञ्जनिका शारदं फलं वा ।

* यथाविधानमिति पाठान्तरम् ।

धामार्गवमदनस्नेहा वामयन्ति। विड़ङ्गखरमञ्जरीमधुशिग्रु सूर्य्य-यवल्लीपीलु सिद्धार्थकज्योतिष्मतीस्नेहाः शिरो विरेचयन्ति॥ ५॥

करञ्जपूतिकक्कृतमालमातुलुङ्गेङ्गुदीकिराततिक्तकस्नेहा दुष्टव्रणेषूपयुज्यन्ते। तुवरककपित्थकम्पिल्लकभल्लातकपटोलस्नेहा महाव्याधिषु, त्रपुसैर्व्वारुककर्कारुकतुम्बीकुष्माण्डस्नेहा मूत्रसङ्गेषु, कपोतवङ्कावल्गुजहरीतकीस्नेहाः शर्कराश्मरीषु, कुसुम्भसर्षपातसी-पिचुमर्दातिमुक्तक-भाण्डीकटुतुम्बीकटभीस्नेहाः प्रमेहेषु, तालनारिकेलपनसमोचपियालविल्वमधुकश्लेष्मातकाम्रातकफलस्नेहाः पित्तसंसृष्टे वायौ, विभीतकभल्लातकपिण्डीतकस्नेहाः कृष्णीकरणे, श्रवणकङ्गुकटुण्टुकस्नेहाः पाण्डूकरणे, शिंशपागुरुसारस्नेहा दद्रुकुष्ठकिटिमेषु। सर्व्व एव स्नेहा वातमुपघ्नन्ति। तल्गुणाश्च समासेन व्याख्याताः॥ ६—८॥

अत ऊर्द्ध्वं कषायस्नेहपाकक्रममुपदेक्ष्यामः। तत्र केचिदाहुस्त्वक्पत्रमूलादीनां

जीमूतो देवदाली। कृतवेधनः कोशातकी। इक्ष्वाकुः कटुतुम्बी। धामार्गवो महाकोशातकी। तत्र तिल्वकादिस्नेहा विरेचयन्ति, जीमूतकादिस्नेहा वामयन्ति। पित्तकफहरं कर्म्मद्वयं प्रतिपाद्य स्थानाश्रयं कफस्यैव कर्म्म दर्शयन्नाह—विड़ङ्गेत्यादि। खरमञ्जरी अपामार्गः, मधुशिग्रुः शोभाञ्जनकः, सूर्य्यवल्ली पटोलसदृशा वल्ली, ज्योतिष्मती काकमर्द्दनिका, शिरो विरेचयन्ति नस्यप्रयोगेण शिरसः श्लेष्माणं विरेचयन्ति स्रावयन्तीत्यर्थः। इदानीं शल्यतन्त्रत्वाद् व्रणयोगिनः स्नेहान् निर्द्दिशन्नाह—करञ्जेत्यादि। पूतिकश्चिरविल्वः। कृतमालः किरमालः। तुवरकः पश्चिमसमुद्रभूमिषु पलाशानुकारी वृक्षः। महाव्याधिषु महाकुष्ठमेहादिषु, अष्टासु वातामयादिष्वित्यन्ये। उपयुज्यन्त इति पूर्व्वश्लोकात् सम्बन्धनीयम्, एवमुत्तरत्र। त्रपुसः सुधातकः खुसगडीति लोके। एर्व्वारुर्लोमशा कर्कटी। कर्कारुः वाड़वं त्रपुसं खेरसा इति लोके। मूत्रसङ्गेषु मूत्रकृच्छ्राध्मानाश्मरीष्वित्यर्थः। कपोतवङ्का ब्रह्मसुवर्च्चला, अवल्गुजो वाकुची, गयदासस्तु कपोतवङ्कावल्गुजहरीतकीस्नेहा वाताश्मरीष्विति पठित्वा व्याख्याति—कपोतवङ्कादिस्नेहा वातभिन्नमूर्त्तिष्वश्मरीष्विति। पिचुमर्दो निम्बः, अतिमुक्तकस्तिन्दुकः, भाण्डी भाण्डनीति लोके प्रसिद्धो विटपो भाण्डधावनार्थमासुतीवलाः समाहरन्ति। पियालश्चारः। पिण्डीतको मदनः। श्रवणस्तापसवृक्षः इङ्गुदीति लोके, कङ्गुकं प्रियङ्गुः, टुण्टुकः श्योनाकः। पीतदारु देवदारु। विशेषेण दद्रुकिटिभौ घ्नन्तीति नियमार्थं पुनः कुष्ठत्वाविशेषेऽपि तयोर्ग्रहणम्। सर्व्वस्नेहसामान्यकर्म्म निर्द्दिशन्नाह—सर्व्व एवेत्यादि। स्थावरतैलप्राधान्येन तिलतैलगुणा द्रवद्रव्यविधावुक्ताः। समासेनेति वर्गेणैव गुणोपदेशात् सङ्क्षेपेणेत्यर्थः॥ ४—८॥

स च स्नेहः प्रायशः संस्कृत उपयुज्यते, तत्र संस्कारमाह—अत ऊर्द्ध्वमित्यादि। आदिशब्दात् कन्दादयो गृह्यन्ते। भाग इति एकवचनान्तत्वादेकक एवाकृतपलादिमानविशेषः। तस्मात्

भागस्तच्चतुर्गुणजलमावाप्य चतुर्भागावशेषं निःक्वाथ्यापहरेदित्येष कषाय-पाककल्पः। स्नेहप्रसृतेषु षट्सु चतुर्गुणं द्रवमावाप्य चतुरश्चाक्षसमान् भेषज-पिण्डानित्येष स्नेहपाककल्पः। एतत् तु न सम्यक्, कस्मात्? आगमा-सिद्धत्वात्॥ ९। १०॥

पलकुडवादीनामतो मानन्तु व्याख्यास्यामः। तत्र द्वादश धान्यमाषा मध्यमाः सुवर्णमाषकः, ते षोड़श सुवर्णम्। अथ वा मध्यमनिष्पावा एकोन-विंशतिर्धरणम्। तान्यर्द्धतृतीयानि कर्षः। ततश्चोर्द्ध्वं चतुर्गुणमभिवर्द्धयन्तः पलकुड़वप्रस्थाढ़कद्रोणा इत्यभिनिष्पद्यन्ते। तुला पलशतं, ताः पुनर्विंशतिर्भारः। शुष्काणामिदं मानमार्द्रद्रवाणाञ्च द्विगुणमिति॥ ११॥

त्वगादिभागाच्चतुर्गुणमुदकम्। तदुक्तम्—"चतुर्थभागावशिष्टं क्वाथमुपहरेत्" इति। कषायस्नेह-कल्कमानं दर्शयन्नाह—स्नेहप्रसृतेष्वित्यादि। प्रसृतोऽत्र संयुक्तपञ्चाङ्गुलिरीषद्विस्तृतपाणिरेव, न पुनः पलद्वयम्। चतुरश्चाक्षसमान् भेषजकल्कपिण्डान् विभीतकफलमानान् पिष्टभेषजकल्कान् इत्येष स्नेहपाककल्प इति केचिदाहुः॥ ९। १०॥

स्नेहपाककल्पमुपदिदिक्षुः पूर्व्वं पलादिपरिमाणमेवाह—पलेत्यादि। कुतः? तत्पूर्व्वकत्वात् तत्परिमेयार्थप्रविभागसिद्धेः। परिमाणसिद्धौ परिमेयकषाय-स्नेहपाकादिसम्भारद्रव्यप्रविभाग-प्रसिद्धिः। अतस्तदुपयोगिमानमभिधीयते। पलादीनां पङ्क्तौ पृथक् कुड़वग्रहणात् पल-कुड़वयोरद्वैगुण्यं प्रतिपादयति। तदाह—तत्र कुड़वादौ द्रवस्यार्द्रस्य च द्वैगुण्यमेव, पलमानेषु तु पुनरद्वैगुण्यमेव। मध्यमा मध्यमप्रमाणाः, तेन नातिस्थूला नातितनवश्च ग्राह्याः। ते सुवर्ण-माषकाः। सुवर्णं कर्षं इत्यर्थः। अथवा मध्यमनिष्पावा इत्यादि। अर्द्धं तृतीयं येषां तान्यर्द्ध-तृतीयानि सार्द्धद्वयमित्यर्थः। उभयञ्चैतत् प्रसिद्धम्। ततः कर्षाच्चतुर्गुणवर्द्धमानात् पलम्, एवं पलात् कुड़वः, कुड़वात् प्रस्थः, प्रस्थादाढ़कम्, आढ़कात् द्रोणस्तुला पुनः पलशतमेव, ताः पुनरिति तुला इत्यर्थः। प्रसङ्गेनारोप्याभिहितो न पुनरत्रानेन व्यवहारो दृश्यते। शुष्काणामिदं प्रमाणं, सार्द्राणां सलिलक्षीरादीनां कुड़वादौ द्वैगुण्यम्; तेन शुष्काणां चतुर्भिः पलैः कुड़वः, आर्द्राणां चाष्टाभिरिति। जेज्जटस्त्वार्द्राणां द्रवाणाञ्च चतुःपलं कुड़वमाह। वृद्धवैद्यव्यवहारात् कानिचिद् द्रव्याण्यार्द्राण्यपि न द्विगुणानि ग्राह्याणि। तान्येवाह—"वासाकुटजकुष्माण्डशतमूली-सहामृताः। प्रसारण्यश्वगन्धा च शतपुष्पा सहाचराः। निम्बश्चार्द्रा प्रयोक्तव्या न तासां द्विगुणं भवेत्" इति। केचित् प्रस्थविषये प्रवदन्ति—"द्वात्रिंशतात्र विंशत्या पलैः षोड़शभिः क्रमात्। तोयस्नेहविशुष्काणां द्रवाणां प्रस्थमादिशेत्" इति। तत्र द्वादशधान्यमाषा मध्यमा सुवर्णमाषक इति मागधं सुश्रुताचार्य्यसम्मतं मानम्। उक्तञ्च—"मानन्तु द्विविधं प्रोक्तं कालिङ्गं मागधं तथा। कालिङ्गान्मागधं श्रेष्ठं इति मानविदो विदुः। कालिङ्गमपि मानञ्च चरकाचार्य्यसम्मतम्" इति। सुश्रुताचार्य्यः प्राह— अथवा मध्यमनिष्पावा एकोनविंशतिरित्यादिकम्॥ ११॥

तत्रान्यतमपरिमाणसम्मितानां यथायोगं त्वक्पत्रफलमूलादीनामातपपरिशोषितानां छेद्यानि खण्डशश्छेदयित्वा भेद्यान्यणुशो भेदयित्वावकुट्याष्टगुणेन षोड़शगुणेन वाम्भसाभिषिच्य स्थाल्यां चतुर्भागावशिष्टं क्राथयित्वापहरेदित्येष कषायपाककल्पः । स्नेहाच्चतुर्गुणो द्रवः स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्कः ॥ १२ । १३ ॥

अथवा तत्रोदकद्रोणे त्वक्पत्रफलमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्राथ्यापहरेदित्येष कषायपाककल्पः । स्नेहकुड़वे भेषजपलं पिष्टं कल्कं चतुर्गुणं द्रवमावाप्य विपचेदित्येष स्नेहपाककल्पः ॥ १४ ॥

भवतश्चात्र ।

स्नेहभेषजतोयानां प्रमाणं यत्र नेरितम् ।<br>
तत्रायं विधिरास्थेयो निर्द्दिष्टे तत्तदेव तु ॥<br>
अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम् ।<br>
कल्कक्राथावनिर्द्देशे गणात् तस्मात् प्रयोजयेत् ॥ १५ ॥

पलादिमानमभिधाय क्राथपरिभाषामाह—तत्रेत्यादि । तत्रेति तयोर्मध्ये । अन्यतमेन एकतमेन, परिमीयते अनेनेति परिमाणं पलादिकं, तेन सम्यङ्मितानाम् । अष्टगुणेन षोड़शगुणेन वेति वाशब्दः समुच्चये चतुर्व्विंशतिगुणेनेत्यर्थः (?) । उदकद्रोणविषये तुलाद्रव्यस्यावापेनैतज्ज्ञापयति—निःक्राथ्यं द्रव्यं जले पञ्चगुणे निःक्राथयेत् । स्नेहपाकपरिभाषामाह— स्नेहेत्यादि । स्नेहकुड़वे प्रस्थं द्रवं भेषजपलञ्च दत्त्वा पक्तव्यमित्यर्थः । अन्ये सुश्रुताध्यायिनः क्राथस्नेहपाककल्पनमन्यथा पठन्ति । त्रयाणामपि कषायपाकविषयमाह—"कर्षादौ तु पलं यावद् दद्यात् षोड़शिकं जलम् । ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत् ॥ चतुर्गुणमतश्चोर्द्ध्वं यावत् प्रस्थाधिकं भवेत्" इति । प्रकारान्तरेण विषयमाह—"मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् । कठिनात् कठिने देयं जलं षोड़शिकं मतम्" इति । बाहुल्येन षोड़शगुणेन जलेन क्राथकल्पना पानविषये, स्नेहपाके तु पूर्व्ववं । वृद्धसुश्रुताध्यायिमते स्नेहपाकवल्पनं स्नेहात् चतुर्गुणो द्रवः, स्नेहचतुर्थांशो भेषजकल्कः, तदैकध्यं संसृज्य विपचेदित्येष स्नेहपाककल्पः । स्नेहाच्चतुर्गुणो द्रव इति वचनात् सर्व्वेऽप्युदकक्षीरादयो गृह्यन्ते । केचिदेवं पठन्ति "यत्रैकद्वित्रिचतुर्गुणद्रवद्रव्याणि तत्र सर्व्वाणि स्नेहाच्चतुर्गुणानि, पञ्चप्रभृतीनि स्नेहसमानानि" इति । तथाचोक्तम्—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुरन्यत्र स्याच्चतुर्गुणम्" इति ॥ १२—१४ ॥

कषायस्नेहपाकपरिभाषेयं, परिभाषा चानियमे नियमकारिणीति, तदेव दर्शयन्नाह—स्नेहभेषजतोयानामित्यादि । अनुक्ते द्रवादौ पुनः परिभाषेत्यर्थः । यस्मादेव गणात् स्नेहपाकोऽभिप्रेतस्तस्मादेव गणात् क्राथकल्कप्रकाराभ्यां समाचरणीयः ॥ १५ ॥

अत ऊर्द्ध्वं स्नेहपाकक्रममुपदेक्ष्यामः। स तु त्रिविधः। तद्यथा—मृदुर्मध्यमः खर इति। तत्र स्नेहौषधिविवेकमात्रं यत्र भेषजं, स मृदुरिति। मधूच्छिष्टमिव विशदमविलेपि यत्र भेषजं, स मध्यमः। कृष्णमवसन्नमीषद्विशदं चिक्कणञ्च यत्र भेषजं, स खर इति। अत ऊर्द्ध्वं दग्धस्नेहो भवति, तं पुनः साधु साधयेत्। तत्र पानाभ्यवहारयोर्मृदुः, नस्याभ्यङ्गयोर्मध्यमः, वस्तिकर्णपूरणयोस्तु खर इति॥ १६॥

भवतश्चात्र।

शब्दस्योपशमे प्राप्ते फेनस्योपरमे तथा।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्॥
घृतस्यैवं विपक्वस्य जानीयात् कुशलो भिषक्।
फेनोऽतिमात्रं तैलस्य शेषं घृतवदादिशेत्॥ १७॥

अत ऊर्द्ध्वं स्नेहपानक्रममुपदेक्ष्यामः। अथ खलु लघुकोष्ठायातुराय कृतमङ्गलस्वस्तिवाचनायोदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि

स्नेहौषधयोर्विवेकमात्रं पृथग्भावमात्रं यस्मिन् भेषजे तत् तादृशं भेषजं यत्र स्नेहे स मृदुः; पृथक्त्वमुभयगतमपि भेषजेऽभिहितं भेषजस्याग्रेऽपि लक्षणेन निर्द्देशात्। मधूच्छिष्टमिव विशदमपिच्छिलमेव, अविलेपि अङ्गुल्यादौ, एवंविधं भेषजं कल्करूपं यत्र स मध्यमः। अवसन्नमीषदिति भर्ज्जनात् किञ्चिद्भ्रष्टप्रायम्। अत ऊर्द्ध्वं कृष्णमत्यवसन्नमविशदञ्च यत्र भेषजं स दग्धः। तस्य साधनोपदेशादौषधगुणा एव भ्रष्टा न स्नेहगुणा इति गम्यते। चरके पुनरन्यथोक्तम्—"खरोऽभ्यङ्गे मृदुर्नस्ये पाने वस्तौ च मध्यमः" इति। तदत्र द्वयमपि प्रमाणम्, "श्रुतिद्वैधन्तु यत्र स्यात् तत्र धर्म्मावुभौ स्मृतौ" इति मनुः। अन्यत्रापि—"उदितानुदिते चापि समयाध्युषिते तथा। सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः" इति॥ १६॥

तत्र भेषजस्पर्शेन मृदुविशदादिना प्राधान्येन पाकलक्षणं निश्चित्य शेषेन्द्रियार्थैरुपदिशन्नाह—भवतश्चात्रेत्यादि। (द्रवानुगतत्वाननुगतत्वाच्च तत्र) शब्दस्योपरमे प्राप्ते इत्यत्र प्रशब्दस्य युक्तार्थत्वाद् द्रवानुगतशब्दस्योपरमो न कृत्स्नशब्दस्योपरम इति ज्ञेयम्। सम्पत्तौ समृद्धौ॥ १७॥

अत ऊर्द्ध्वं स्नेहपानक्रममिति स्नेहपानपरिपाटीमित्यर्थः। अथशब्दोऽयं पञ्चकर्म्मादौ मङ्गलार्थः। खलुशब्दो वाक्यशोभार्थः। लघुकोष्ठत्वं जीर्णाहारप्रदर्शनार्थम्; गयी तु लघुकोष्ठाय यथाक्रममामाशयपक्वाशयहृदयेषु पक्वतापगतान्नमलरसामतागौरवायेति व्याख्यानयति। अतोऽग्रे पाकोचितदोषायेति पठित्वा पूर्व्वं पठितं गौरवागतमदोषायेति व्याख्यानयति। कृतं मङ्गलं पूर्णोदककुम्भादि सर्व्वलोकप्रसिद्धं स्वस्तिवाचनञ्च यस्य स तथा, तस्मै। अत्रोदयगिरिसंस्थितसवितुर्मुहूर्त्तं प्रातःकाल ज्ञापनाय। प्रातर्हि संशोधनार्थं स्नेहपानं [illegible]ऽप्युक्तम्—"शुद्ध्यर्थं

यथाबलं तैलस्य घृतस्य वा मात्रां पातुं प्रयच्छेत्। पीतमात्रे चोष्णोदकेनोपस्पृश्य सोपानत्को यथासुखं विहरेत्॥ १८॥

रुक्षक्षतविषार्त्तानां वातपित्तविकारिणाम्।
हीनमेधास्मृतीनाञ्च सर्पिःपानं प्रशस्यते॥
क्रिमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः।
पिबेयुस्तैलसात्म्याश्च तैलं दार्ढ्यार्थिनश्च ये॥
व्यायामकर्शिताः शुष्करेतोरक्ता महारुजः।
महाग्निमारुतप्राणा वसायोग्या नराः स्मृताः॥
क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः।
मज्जानमाप्नुयुः सर्व्वे सर्पिर्वा स्वौषधान्वितम्॥
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
दोषाणामल्पभूयस्त्वं संसर्गं समवेक्ष्य च।
युञ्ज्यात् त्रिषष्टिधाभिन्नैः समासव्यासतो रसैः॥
स्नेहसात्म्यः क्लेशसहः काले नात्युष्णशीतले।
अच्छमेव पिबेत् स्नेहमच्छपानं हि पूजितम्॥

पुनराहारे नैशे जीर्णे पिबेन्नरः। पिबेत् संशमनार्थाय ह्यन्नकाले प्रकाङ्क्षितः" इति। यथाबलमिति दोषपुरुषामयानां हीनमध्योत्तमबलमाश्रित्य यामद्वयचतुर्यामसकलाहःपरिणामसाक्षिणीं मात्राम्। सद्यःस्नेहनेषु प्रधानतया घृततैले प्राह—घृतस्य तैलस्य वेति। उपस्पृश्य आचमनं कृत्वेत्यर्थः॥ १८॥

सर्व्वे रुक्षक्षतविषार्त्तादयः। स्वौषधान्वितमिति यद्यदात्मीयमौषधं तेन युक्तम्। इदानीं तस्यैव घृतस्य प्रतिदोषं केवलस्य संयुक्तस्य वा प्रयोगमाह—केवलमित्यादि। केवलमसहायमन्यद्रव्यैरसंयुक्तमित्यर्थः, तच्च संस्कृतमसंस्कृतं वा; सत्यप्यन्यद्रव्यसंयोगे संस्कृतत्वं लभ्यत एव, संयोगसंस्कारयोर्गुणयोर्भिन्नत्वात्। एतेन संस्कृतमसंस्कृतं वा केवलं क्वाथचूर्णादिप्रक्षेपरहितं सर्पिः पातव्यमिति ज्ञेयम्। गयी तु पित्तहरद्रव्यसाधितमेव केवलमित्याह। न केवलमुक्तैर्लवणादिभिरेव संयुक्तं सर्पिर्योज्यं, किन्तर्हि त्रिषष्टिभेदभिन्नै रसैरपीत्याह—दोषाणामित्यादि।

अच्छपानविषयमुद्दिशन्नाह—स्नेहसात्म्य इत्यादि। क्लेशसहः शक्तिलक्षणबलयुक्तः, अतो विपरीतं भक्तेन सह पाययेत्। अच्छः केवलस्नेहः। केचित् काले नात्युष्णशीतले इत्यस्य स्थाने दृढं काले च शीतले इति पठन्ति व्याख्यानयन्ति च—दृढमित्युपचयलक्षणबलयुक्तं, काले च शीतले इति चकारो वातकफयोः शैत्याद् दोषे च शीतल इति गमयति।

शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि।
वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा॥
वातपित्ताधिकस्योष्णे तृण्मूर्च्छोन्मादकारकः।
शीते वातकफात्तस्य गौरवारुचिशूलकृत्॥
स्नेहपीतस्य चेत् तृष्णा पिबेदुष्णोदकं नरः।
एवञ्चानुपशाम्यन्त्यां स्नेहमुष्णाम्बुना वमेत्।
दिह्याच्छीतैः शिरः शीतं तोयञ्चाप्यवगाहयेत्॥
या मात्रा परिजीर्य्येत चतुर्भागगतेऽहनि।
सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता॥
या मात्रा परिजीर्य्येत तथार्द्धे दिवसे गते।
सा वृष्या बृंहणी चैव मध्यदोषे च पूजिता॥
या मात्रा परिजीर्य्येत चतुर्भागावशेषते।
स्नेहनीया च सा मात्रा बहुदोषे च पूजिता॥
या मात्रा परिजीर्य्येत् तु तथा परिणतेऽहनि।
ग्लानिमूर्च्छामदान् हित्वा सा मात्रा पूजिता भवेत्॥
अहोरात्रादसन्दुष्टा या मात्रा परिजीर्य्यति।
सा तु कुष्ठविषोन्माद-ग्रहापस्मारनाशिनी॥

उक्तमेवाच्छपानं दोषकालभेदेन विवृण्वन्नाह—शीतकाल इत्यादि। निशीति संशमनमेव, उष्णकाले च सह भक्तेन पाययेत् इति वचनात्। वातपित्ताधिक इति वातपित्त अधिके यस्य स वातपित्ताधिकः। वातपित्तयोर्व्यस्तसमस्तयोर्ग्रहणाद् वाताधिकः पित्ताधिको वातपित्ताधिकश्च रात्रौ संशमनं स्नेहं पिबेत्। तत्रापि वातपित्ताख्यसंसर्गस्यापरसंसर्गोपलक्षणत्वात् पित्तश्लेष्माधिकोऽपि रात्रौ पिबेदिति गम्यते। वातश्लेष्माधिक इति वातश्लेष्मा च श्लेष्मा च वातश्लेष्माणौ, समासे अन्तपदलोपः, तावधिकौ यस्य स वातश्लेष्माधिकः। एतेन वातकफाधिकः कफाधिकश्च दिवा स्नेहं पिबेदिति गम्यते। अत्रार्थे च वृद्धवाग्भटः—"सर्व्वं सर्व्वस्य च स्नेहं युञ्ज्याद् भास्वति निर्म्मले। ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे। दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यति" इति। यदा च ग्रीष्मे वातकफोत्थो रोगः स्नेहसाध्यस्तदा कालमाश्रित्य तदनुविहितस्नेहो निशि प्रयोज्यो दोषादीन् वीक्ष्य च, तथा च वृद्धवाग्भटः—"त्वरमाणस्तु शीतेऽपि दिवा तैलं प्रयोजयेत्। उष्णेऽपि रात्रौ सर्पिस्तु दोषादीन् वीक्ष्य चान्यथा" इति।

उक्तादन्यथाकरणे उभयत्रापि दोषं दर्शयन्नाह—वातपित्ताधिकस्येत्यादि। तत्र तृष्णाप्रतीकारमुद्दिशन्नाह—स्नेहपीतस्येत्यादि। दिह्यात् लिम्पेत्। [illegible] हित्वा या परिजीर्य्येदिति

यथाग्नि प्रथमां मात्रां पाययेत विचक्षणः।
पीतो ह्यतिबहुस्नेहो जनयेत् प्राणसंशयम्॥
मिथ्याचाराद् बहुत्वाद् वा यस्य स्नेहो न जीर्य्यति।
विष्टभ्य चापि जीर्य्येत् तं वारिणोष्णेन वामयेत्॥
जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत्।
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा॥
स्युः पच्यमाने तृड्दाह-भ्रमसादारतिक्लमाः।
परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम्।
यवागूं पाययेच्चोष्णां कामं क्लिन्नाल्पतण्डुलाम्॥
देयौ यूषरसौ वापि सुगन्धी स्नेहवर्ज्जितौ।
कृतौ वात्यल्पसर्पिष्कौ यवागूर्वा विधीयते॥
पिबेत् त्र्यहं चतुरहं पञ्चाहं षड़हं तथा।
सप्तरात्रात् परं स्नेहः सात्म्योभवति सेवितः॥

वचनात् स्नेहबाहुल्येन परिपाककाले ग्लान्यादयो भवन्तीत्यवगम्यते। पूजिता भवेदितिवचनात् स्नेहने इत्याहरणीयम्। अल्पामेव मात्रामदोषत्वेन निर्द्दिशति—यथाग्नीत्यादि। अग्न्यनतिक्रमेण एकयामपरिणामां मात्रां पातुं प्रयोजयेत् पलमित्यर्थः। कुतः पुनर्नेतरा इति? आह—पीतो ह्यतिबह्वित्यादि। जीर्णाजीर्णविशङ्कायां परिणतापरिणतशङ्कायाम्। अस्याग्रे पच्यमानलक्षणं केचित् पठन्ति—स्युरित्यादि। स्युः भवेयुः। एतच्चानार्षश्लोकार्द्धमिति जेज्जटाचार्य्योक्तत्वात् न पठनीयम्। स्नेहवर्ज्जितावित्यनेनाकृताविति गम्यते, कृतौ स्नेहादिसंस्कृतौ। यूषरसाविति अत्र यूषः कफे तैलपाने च देयः, रसो वाते घृतपाने च, विलेपी च पुनर्विलेपीसात्म्याय मध्यमाग्नये देया।

स्नेहपानस्य कोष्ठापेक्षया कालनियमं दर्शयन्नाह—पिबेदित्यादि। तत्र त्र्यहं मृदुकोष्ठापेक्षया, मध्यमकोष्ठापेक्षया तु चतुःपञ्चषड़हानि, क्रूरकोष्ठापेक्षया तु सप्तरात्रम्। अन्ये तु मृदुतममृदुतर-मृदुकोष्ठापेक्षया सप्ताष्टनवापि दिवसानीति। सात्म्यीभवतीति आत्मना सह वर्त्तते इति सात्म्यम्, असात्म्यं सात्म्यं भवतीति सात्म्यीभवति; आत्मशब्दोऽत्र देहपर्य्यायः, अयमर्थः—आत्मनि कार्य्यं यद् वर्त्तते यदुपशेते न विकाराय भवति सुखञ्च करोतीत्यर्थः, तत् सात्म्यीभवतीत्युच्यते; एतेन स्नेहकार्य्यमुत्क्लेशनादिकं न करोति आहारवच्च सात्म्यीभवति, अतएव सेवित इत्युक्तम्; विषमपि स्वल्पं प्रतिदिनमुपयुज्यमानं न मारणात्मकं भवति। तच्च सात्म्यीभवनं वातप्रकृतौ

सुकुमारं कृशं वृद्धं शिशुं स्नेहद्विषं तथा।
तृष्णार्त्तमुष्णकाले च सह भक्तेन पाययेत् ॥
पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तुकः।
पीतमकध्यमेतद्धि सद्यःस्नेहनमुच्यते ॥
भृष्टमांसरसे स्निग्धा यवागूः सूपकल्पिता।
सक्षुद्रा पीयमाना तु सद्यःस्नेहनमुच्यते ॥
सपिष्मती पयःसिद्धा यवागूः स्वल्पतण्डुला।
सुखोष्णा सेव्यमाना तु सद्यःस्नेहनमुच्यते ॥
शर्कराचूर्णसंसृष्टे दोहनस्थे घृते तु गाम्।
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यःस्नेहनमुच्यते ॥
यवकोलकुलत्थानां क्वाथो मागधिकान्वितः।
पयो दधि सुरा चेति घृतमप्यष्टमं भवेत् ॥
सिद्धमेतैर्घृतं पीतं सद्यःस्नेहनमुत्तमम्।
राज्ञे राजसमेभ्यो वा देयमेतद् घृतोत्तमम् ॥
बलहीनेषु वृद्धेषु मृद्वग्निस्त्रीमहात्मसु।
अल्पदोषेषु योज्याः स्युरयं योगाः सम्यगीरिताः ॥
विवर्ज्जयेत् स्नेहपानमजीर्णी तरुणज्वरी।
दुर्ब्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीड़ितः ॥

ऊर्द्ध्वाङ्गमारुते बोद्धव्यम्, वातकफप्रकृतौ पुनरनुत्क्लेश एव। इदानीमवचारणमावस्थिके नित्यगे च काले निर्द्दिशन्नाह – सुकुमारमित्यादि। भक्तशब्देन सर्व्वे विलेप्यादयोऽभिप्रेताः। तच्च पानं द्विविधम्—अशनात् पृथक्, अशनव्यामिश्रं वा, तत्र यत् पृथक् तदच्छपानमेव।

तत्रावचारणां प्रयोगेण दर्शयन्नाह—पिप्पल्य इत्यादि। लवणमत्र प्रधानकल्पतया सैन्धवम्, स्नेहाश्चत्वारः सर्पिस्तैलवसामज्जानः। दधिमस्तुको दधिसरः। पिप्पलीलवणयोर्यावत्या मात्रया नातिकटुत्वं नातिलवणत्वञ्च तावती मात्रा। सक्षुद्रा क्षुद्रावगाढ़ा, क्षुद्रं फाणितं काकवी इति लोके। घृते त्विति तुशब्दः पुनरर्थे। मागधिकाया अयं मागधिकः कल्कः, द्रवाः षट्, स्नेहसमा पिप्पली सप्तमी, घृतमष्टमम्। एतत् सिद्धं नृपादिभिः सुखोचितैरन्नात् प्राक् मध्ये अन्ते वा पेयम्। सद्यःस्नेहनमिति तदहरेव।

एषां योगानां विषयं दर्शयन्नाह—बलहीनेष्वित्यादि। ये योगाः पूर्व्वं कथिताः। विवर्ज्जयेदित्यादि। अजीर्णे अजीर्णमेव च पचन्नग्निः स्तोकं स्नेहं पक्ष्यति, तरुणज्वरेऽप्येवं स्रोतोरोधश्च। दुर्ब्बले अङ्गग्लान्यादयः, अरोचकेऽरोचकाभिवृद्धिः। स्थूलस्यातिस्थौल्यं स्रोतोरोधश्च। मूर्च्छार्त्तानां

छर्द्यर्दितः पिपासार्त्तः श्रान्तः पानक्लमान्वितः।
दत्तवस्तिर्विरिक्तश्च वान्तो यश्चापि मानवः॥
अकाले दुर्द्दिने चैव न च स्नेहं पिबेन्नरः।
अकाले च प्रसूता स्त्री स्नेहपानं विवर्ज्जयेत्॥
स्नेहपानाद् भवन्त्येषां नृणां नानाविधा गदाः।
गदा वा कृच्छ्रतां यान्ति न सिध्यन्त्यथवा पुनः॥
गर्भाशयेऽवशेषाः स्यू रक्तक्लेदमलास्ततः।
स्नेहं जह्यान्निषेवेत पाचनं रूक्षमेव च।
दशरात्रात् ततः स्नेहं यथावदवचारयेत्॥ १९॥
पुरीषं ग्रथितं रूक्षं कृच्छ्रादन्नं विपच्यते।
उरो विदहते वायुः कोष्ठादुपरि धावति।
दुर्व्वर्णो दुर्व्बलश्चैव रूक्षो भवति मानवः॥ २०॥
सुस्निग्धा त्वग् विट्शैथिल्यं दीप्तोऽग्निर्मृदुगात्रता।
ग्लानिर्लाघवमङ्गानामधस्तात् स्नेहदर्शनम्।
सम्यक्स्निग्धस्य लिङ्गानि स्नेहद्वेषस्तथैव च॥ २१॥
भक्तद्वेषो मुखस्रावो गुददाहः प्रवाहिका।
पुरीषातिप्रवृत्तिश्च भृशस्निग्धस्य लक्षणम्॥ २२॥
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्।
श्यामाककोरदूषान्न-तक्रपिण्याकशक्तुभिः॥ २३॥

मूर्च्छाभिवृद्धिः। दत्तवस्तिविरिक्तवान्तानां सद्यःशुद्धत्वेनाग्निमान्द्यतृष्णाक्लमाद्यतियोगाश्च। अकाले प्रसूताया गर्भाशये अवशेषा रक्तक्लेदमलाः स्नेहकोपिता असाध्यं रोगं कुर्य्युः। अन्ये तरुणज्वरीत्यत्र चोदरी ज्वरीति पठित्वा व्याख्यानयन्ति—उदरिणां स्नेहनं प्रागवस्थायामुदरचिकित्सिते प्रोक्तम्। छिद्रोदकोदरिणः पुनरत्र निषेधः। अमुमेव निषेधं दर्शयन्नाह—स्नेहपानादित्यादि॥ १९॥

स्नेहस्य विहितस्य दानाय रूक्षलक्षणमाह—पुरीषमित्यादि। उपरि धावति ऊर्द्ध्वं गच्छतीत्यर्थः। इदं कृतपाचनस्य रूक्षस्य लक्षणमुक्तमिति वृद्धवैद्याः। सुस्निग्धस्य लक्षणमाह—सुस्निग्धेत्यादि। स्नेहद्वेष इति स्नेहारुचिः उदकादितृप्तस्येवोदकाद्यरुचिः। अन्ये तु 'ग्लानिः सदनमङ्गानां स्नेहद्वेषस्तथैव च' इति पठन्ति। प्रवाहिका अतिसारभेदः। केचित् स्निग्धातिस्निग्धलक्षणयोर्मध्ये जीर्णस्नेहलक्षणमधीयते—"ग्लानिः सदनमङ्गानामधस्तात् स्नेहदर्शनम्। स्नेहे जीर्य्यति लिङ्गानि जीर्णैस्तैः शान्तिमागतैः" इति। शान्तिमागतैः स्नेहो जीर्ण इति ज्ञायते इति। तत्रास्निग्धातिस्निग्धयोः प्रतीकारं दर्शयन्नाह—रूक्षस्येत्यादि॥ २०—२३॥

दीप्तान्तरग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्ब्बलवर्णयुक्तः ।
दृढ़ेन्द्रियो मन्दजरः शतायुः स्नेहोपयोगी पुरुषो भवेत् तु ॥ २४ ॥
स्नेहो हितो दुर्ब्बलवह्निदेह-सन्धुक्षणे व्याधिनिपीड़ितस्य ।
बलान्वितौ भोजनदोषजातैः प्रमर्द्दितुं तौ सहसा न साध्यौ ॥ २५ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने स्नेहौपयौगिकचिकित्सितं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

इदानीं स्वस्थविषयकर्म्मफलं दर्शयन्नाह—दीप्तेत्यादि। अन्तरग्निर्जठराग्निः, परिशुद्धकोष्ठः निर्द्दोषोदरः, प्रत्यग्रा नवाः, दृढानि स्वकार्य्यकरणक्षमाणि इन्द्रियाणि यस्य सः, स्नेहोपसेवी यो नर आभीक्ष्ण्येन स्नेहं सेवते स इत्यर्थः। व्याधिपरिमोक्षणमपि स्नेहफलं दर्शयन्नाह—स्नेह इत्यादि। स्नेहो हितो भवति, कस्य ? व्याधिनिपीड़ितस्य पुरुषस्य, कस्मिन् विषये ? दुर्व्बलदेहवह्निसन्धुक्षणे। स्नेहकृतयोस्तयोर्वह्निदेहबलयोः फलं दर्शयन्नाह—बलान्वितावित्यादि। तौ वह्निदेहौ। किंविशिष्टौ ? स्नेहपानबलान्वितौ। न साध्यौ न शक्यौ। किं कर्त्तुम् ? प्रमर्द्दयितुं, कैः स्फोटयितुं न शक्यावित्याह—भोजनदोषजातैः, दुर्भक्तस्वभावगुणभूतदोषसमूहैरित्यर्थः। दुर्व्बलस्य देहसन्धुक्षणे वह्निसन्धुक्षणे च ; देहसन्धुक्षणं शक्त्युपचयलक्षण बलसन्दीपनं पुष्ट्यादिवहमित्यर्थः, अग्निपक्षे सन्धुक्षणं सुबोधम् ॥ २४ । २५ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे स्नेहौपयौगिकचिकित्सितव्याख्यानामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# द्वात्रिंशोऽध्यायः ।

अथातः स्वेदावचारणीयं चिकित्सितं व्याख्यास्यामः,

यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

चतुर्व्विधः स्वेदः ; तद्यथा—तापस्वेद उष्मस्वेद उपनाहस्वेदो द्रवस्वेद इति। अत्र सर्व्वस्वेदविकल्पावरोधः ॥ २ ॥

तत्र तापस्वेदः पाणिकांस्यकन्दुककपालबालुकावस्त्रैः प्रयुज्यते, शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैरिति ॥ ३ ॥

उष्मस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिञ्चेदम्लद्रव्यैर्वा, तैरार्द्रालक्तकपरिवेष्टितैरङ्गप्रदेशं स्वेदयेत् । मांसरसपयोदधिस्नेहधान्याम्ल-वातहरपत्रभङ्गक्वाथपूर्णां वा कुम्भीमनुतप्तां प्रावृत्योष्माणं गृह्णीयात्। पार्श्व-च्छिद्रेण वा कुम्भेनाधोमुखेन तस्या मुखमभिसन्धाय तस्मिंश्छिद्रे हस्तिशुण्डा-कारां नाड़ीं प्रणिधाय तं स्वेदयेत् ॥ ४ ॥

स्वेदावचारणं स्वेदयोजनम्, तदधिकृत्य कृतमिति पूर्व्ववत्। तापनं तापः, उष्मा वाष्पः, उपनाह्यते इत्युपनाहो बन्धनमित्यर्थः। द्रवतीति द्रवः। तत्र तापस्वेदे कन्दुकग्रहणादेव जेन्ताक-कर्पूकुटीकूपहोलकस्वेदाः पञ्चैव अन्तर्भवन्ति। उष्मस्वेदे सङ्करप्रस्तराश्मघननाड़ीकुम्भीभूस्वेदाः षड़प्यन्तर्भवन्ति । द्रवस्वेदे परिषेकावगाहावन्तर्भवतः। तेषां प्रयोगे द्रव्याण्युपदिशन्नाह—तत्रे-त्यादि । कन्दुकमपूपपचनभाण्डम्। कपालं ज्वालातप्तकर्परम्। उष्मस्वेदप्रयोगे द्रव्यमुपदिश-न्नाह—उष्मेत्यादि। तैः कपालादिभिरग्निवर्णैर्जलाद्यवसिक्तैरार्द्रवस्त्रच्छन्नैः स्वेदयेदङ्गप्रदेशम्। जेज्जटाचार्य्यस्तु आर्द्रालक्तकपरिवेष्टितमिति पठित्वाङ्गप्रदेशविशेषणं व्याख्यानयति। मांसरसादि-पूर्णां स्थालीं चोष्मणो मन्दीकरणार्थं कम्बलादिना प्रावृत्य पिधाय उष्माणं गृह्णीयात्। वातहरा एरण्डादयः, पत्रभङ्गः पल्लवः। तथैव कुम्भीं वापि प्रावृत्य स्वेदान्तरमुत्पादयन्नाह—पार्श्वेत्यादि। तस्याः कुम्भ्याः। तस्मिन् छिद्रे इति उपरिस्थितकुम्भस्य पार्श्वच्छिद्रे किलिञ्जसाधनतृणकाष्ठादि-द्रव्यविरचितामन्तःसुषिरत्वेन गोपुच्छाकृतित्वेन दैर्घ्येण हस्तिहस्तसमाकारां नाड़ीं, छिद्रेण निर्गच्छतो वाष्पवेगस्य वेगविघातार्थं त्रिषु स्थानेषु वक्रामुपनिधापयेत् ॥ १—४ ॥

सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्।
हस्तिशुण्डिकया नाड्या स्वेदयेद् वातरोगिणम्॥
सुखा सर्व्वाङ्गगा ह्येषा न च क्लिश्नाति मानवम्।
व्यामार्द्धमात्रा त्रिवक्रा हस्तिहस्तसमाकृतिः।
स्वेदनार्थे हिता नाड़ी कलिङ्गी हस्तिशुण्डिका॥ ५॥
पुरुषायाममात्राश्च भूमिमुत्कीर्य्य खादिरः।
काष्ठैर्दग्ध्वा तथाभ्युक्ष्य क्षीरधान्याम्लवारिभिः॥
पत्रभङ्गैरवच्छाद्य शयानं स्वेदयेत् ततः।
पूर्व्ववत् स्वेदयेद् दग्ध्वा भस्मापोह्यापि वा शिलाम्॥ ६॥

पूर्व्ववत् कुटीं वा चतुर्द्वारां कृत्वा तस्यामुपविष्टस्यान्तश्चतुर्द्वारेऽङ्गारानुपसन्धाय तं स्वेदयेत्। कोशधान्यानि वा सम्यगुपस्वेद्यास्तीर्य्य किलिञ्जेऽन्यस्मिन् वा तत्प्रतिरूपके शयानं प्रावृत्य स्वेदयेत्। एवं पांशुगोशकृत्तुषवुषपलालोष्मादिभिः स्वेदयेत्॥ ७॥

उपनाहस्वेदस्तु वातहरमूलकल्कैरम्लपिष्टैर्लवणप्रगाढ़ैः सुस्निग्धैः सुखोष्णैः प्रदिह्य स्वेदयेत्। एवं काकोल्यादिभिरेलादिभिः सुरसादिभिस्तिलातसीसर्षपकल्कैः कृशरापायसोत्कारिकाभिर्वेशवारैः शाल्वणैर्वा तनुवस्त्रावनद्धैः स्वेदयेत्॥८

स्वभ्यक्तमिति सुष्ठु अभ्यक्तम्। गुरुप्रावरणावृतमिति गुरुप्रावरणेन कम्बलादिना पिहितम्। एतदेव सुखपाठार्थं श्लोकेन दर्शयन्नाह—हस्तिशुण्डिकयेत्यादि। व्यामार्द्धमात्रेत्यत्र व्याममात्रा व्यामार्द्धमात्रा चेति व्याख्यातव्यम्। व्यामः बाह्वोः सम्प्रसारितयोरन्तरम्। किलिञ्जसाधनानां कुशकाशादिद्रव्याणामियं कैलिञ्जी। नाड़ीस्वेदं वाष्पस्वेदे एवाभिधाय भूस्वेदमपि वाष्पस्वेदे दर्शयन्नाह—पुरुषेत्यादि। आयामो दैर्घ्यम्। उत्कीर्य्य खनित्वा। अभ्युक्ष्य सिक्त्वा। पत्रभङ्गैरिति वातघ्नैरेरण्डादिपल्लवैः। वाष्पस्वेदे एवाश्मस्वेदं दर्शयन्नाह—पूर्व्ववदित्यादि। शिलातलं वा दग्ध्वा भस्मापोह्य स्फोटयित्वा॥ ५। ६॥

वाष्पस्वेदे एव कुटीस्वेदं दर्शयन्नाह—पूर्व्ववदित्यादि। शिलातलवाष्पस्वेदो कुटीस्वेदेऽपि सम्बध्यते। अङ्गारानुपसन्धाय अङ्गारान् आरोप्य। पूर्व्ववदित्यनेन दग्ध्वा भस्मापोह्य अभ्युक्ष्य द्वारमुखैर्वाष्पमुद्धमयन्त्यां तस्यामन्तर्मध्ये स्थितं स्वेदयेत्। प्रस्तरस्वेदमपि वाष्पस्वेदे दर्शयन्नाह—कोशधान्यानीत्यादि। कोशधान्यानि शमीधान्यानि माषादीनि॥ ७॥

तृतीयमुपनाहस्वेदं दर्शयन्नाह—उपनाहेत्यादि। अम्लं काञ्जिकम्। सङ्करस्वेदमप्युपनाहस्वेद एव दर्शयन्नाह—एवमित्यादि। एभिरेव पोटलिकां बद्ध्वा स्वेदयेत्। काकोल्यादिः काकोलीक्षीरकाकोलीत्यादिकः। एलादिरेलातगरमांसीत्यादिः। सुरसादिः सुरसा श्वेतसुरसेत्यादिः।

द्रवस्वेदस्तु वातहरद्रव्यक्काथपूर्णे कोष्णकटाहे द्रोण्यां वावगाह्य स्वेदयेत्। एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत। सुखोष्णैः कषायैश्च परिषिञ्चेदिति ॥ ९ ॥

तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ। उपनाहस्वेदो वातघ्नः। अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति। कफमेदोऽन्विते वायौ निवातातपगुरुप्रावरण-नियुद्धाध्वव्यायामभारहरणामर्षैः स्वेदमुत्पादयेदिति ॥ १० ॥

भवन्ति चात्र

चतुर्व्विधो योऽभिहितो द्विधा स्वेदः प्रयुज्यते।
सर्व्वस्मिन्नेव देहे तु देहस्यावयवे तथा ॥
येषां नस्यं विधातव्यं वस्तिश्चैव हि देहिनाम्।
शोधनीयाश्च ये केचित् पूर्व्वं स्वेद्यास्तु ते मताः ॥
पश्चात् स्वेद्या हृते शल्ये मूढ़गर्भाऽनुपद्रवा।
सम्यक् प्रजाता काले या पश्चात् स्वेद्या विजानता ॥
स्वेद्यः पूर्व्वञ्च पश्चाच्च भगन्दर्य्यर्शसस्तथा।
अश्मर्य्या चातुरो जन्तुः शेषान् शास्त्रे प्रचक्ष्महे ॥ ११ ॥

कृशरा तिलतण्डुलमाषैः कृता यवागूः। क्षीरसिद्धास्तण्डुलाः पायसः। उत्कारिका लप्सिका। वेशवारः वाट्ना इति भाषा। शाल्वणो वातव्याध्युक्तः। तनुवस्त्रावनद्धैः सूक्ष्मवस्त्रानुबद्धैः। अत्र काकोल्यादिभिः पित्तानुगते वाते एलादिभिश्च, कफानुगते वाते तिलातसीप्रभृतिभिः, वेशवारैः शाल्वणैश्च केवले वाते। उपनाहशव्दस्त्विह 'णह' बन्धने इत्यस्येति उपनाहो बन्धनम् ॥ ८ ॥

चतुर्थमिमं द्रवस्वेदं दर्शयन्नाह—द्रवस्वेद इत्यादि। परिषिञ्चेत् परिषेकं कुर्य्यादित्यर्थः। कषायैश्चेति चकारात् पूर्व्वोक्तैः पयोमांसरसादिभिश्च ॥ ९ ॥

तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ। अन्यतरस्मिन् श्लेष्मणि वाते वा पित्तसंसृष्टे द्रवस्वेद इति। अथ निरग्निकस्वेदमाह—कफेत्यादि। अत्र सर्व्वाङ्गस्वेदे प्रोक्ते तन्त्रान्तर-विरोधः स्यात्। "वृषणौ हृदयं दृष्टी स्वेदयेत् मृदु नैव वा" इति। तस्मात् सर्व्वशब्दोऽत्र सङ्कुचित-वृत्त्या तत्परिहारेण व्याख्यातव्यः। तत्र स्वेदस्य रोगविशेषाद् यत्र यत्र अवचारणं तत्त्रैविध्यं दर्शयन्नाह—येषामित्यादि। अनार्षग्रन्थ इति केचिदाचार्य्या न पठन्ति। परं गयदासस्य सम्मत-त्वान् ममापि सम्मतः ॥ १० । ११ ॥

नानभ्यक्ते नापि चास्निग्धदेहे स्वेदो योज्यः स्वेदविद्भिः कथञ्चित्।
दृष्टं लोके काष्ठमस्निग्धमाशु गच्छेद् भङ्गं स्वेदयोगैर्गृहीतम्॥
स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः स्वस्थानस्था ये च मार्गेषु लीनाः।
सम्यक् स्वेदैर्योजितैस्ते द्रवत्वं प्राप्ताः कोष्ठं यान्ति देहादशेषात्॥
अग्नेर्दीप्तिं मार्द्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्म्मलत्वम्।
कुर्य्यात् स्वेदो हन्ति निद्रां सतन्द्रां सन्धीन् स्तब्धांश्चेष्टयेदाशु युक्तः॥
स्वेदास्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वं मार्द्दवञ्चातुरस्य।
सम्यक्स्विन्ने लक्षणं प्राहुरेतन्मिथ्यास्विन्ने व्यत्ययेनैतदेव॥
स्विन्नेऽत्यर्थं सन्धिपीड़ा विदाहः स्फोटोत्पत्तिः पित्तरक्तप्रकोपः।
मूर्च्छाभ्रान्तिर्दाहतृष्णे क्लमश्च कुर्य्यात् तूर्णं तत्र शीतं विधानम्॥ १२॥
पाण्डुर्मेही पित्तरक्ती क्षयार्त्तः क्षामोऽजीर्णी चोदरार्त्तो विषार्त्तः।
तृट्छर्द्यार्त्तो गर्भिणी पीतमद्यो नैते स्वेद्या यश्च मर्त्योऽतिसारी॥
स्वेदादेषां यान्ति देहा विनाशञ्चासाध्यत्वं यान्ति चैषां विकाराः।
स्वेदैः साध्यो दुर्ब्बलोऽजीर्णभक्तः, स्यातां चेद् द्वौ स्वेदनीयौ ततस्तौ॥ १३॥

एतेषां स्वेदसाध्या ये व्याधयस्तेषु बुद्धिमान्।
मृदून् स्वेदान् प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु॥ १४॥

इदानीं स्वेदस्य पूर्व्वकर्म्म नियमयन्नाह—नेत्यादि। अभ्यङ्गेन बाह्यस्नेहक्रियापूर्व्वकत्वं, नापि चास्निग्धदेह इत्यन्तःस्नेहपूर्व्वकत्वं स्वेदस्य। अस्निग्धस्वेददोषमुपमानेन दर्शयितुमाह—दृष्टमित्यादि। यथाहि काष्ठमस्निग्धं स्विद्यमानं विशीर्य्यते, एवं शरीरमस्निग्धं स्विद्यमानं विनंक्ष्यति। स्नेहपूर्व्वकमेव दोषाणां कोष्ठशाखाश्रयाणां शोधनं न पुनरन्यथेत्याह—स्नेहक्लिन्ना इत्यादि। स्वेदैर्द्रवत्वं प्राप्य द्रवत्वात् कोष्ठं प्राप्ताः शोधनैर्निःशेषं यान्ति वहिर्निःसरन्तीत्यर्थः। इदानीं स्वेदगुणानाह—अग्नेर्दीप्तिमित्यादि। द्विविधः स्वेदः संशमनीयः संशोधनाङ्गभूतश्च। तत्र संशमनीयः सामेषु व्याधिषु रूक्ष एव योज्यः; तद्गुणाः पुनरग्नेर्दीप्तिमित्यादिश्लोकोक्ता ज्ञातव्याः। संशोधनाङ्गभूतस्तु स्नेहपूर्व्वो योज्यः, तस्य गुणास्तु स्नेहक्लिन्ना इत्यादिश्लोकेन प्रोक्ता इति ज्ञेयम्।

तस्य सम्यग्युक्तस्यायोगयुक्तस्यातियोगयुक्तस्य च लक्षणं सचिकित्सितं दर्शयन्नाह—स्वेदेत्यादि। मिथ्यास्विन्नेऽयोगस्वेदे स्वेदाभावः, व्याधिवृद्धिः, देहस्य गुरुत्वम्, उष्णाभिलाषः, देहस्य काठिन्यञ्च। अत्यर्थंस्विन्ने सन्धिपीड़ा विदाहश्च भवति॥ १२॥

स्वेदासाध्यानाह—पाण्डुरित्यादि। तत्र मेहिनः प्रागेव स्वेदे निषिद्धे पुनरत्र निषेधो नियमार्थः। स्वेदसाध्ये व्याधौ दुर्ब्बलेऽजीर्णभक्ते च प्रतिप्रसवमाह—स्वेदैरित्यादि। स्यातां भवेताम्॥ १३॥

एषां स्वेदसाध्येषु विकारेष्वसाध्येषु [illegible] व्याधौ प्रतिप्रसवमाह—एतेषामित्यादि। न भुक्तमात्रः

सर्व्वान् स्वेदान् निवाते च जीर्णान्नस्यावचारयेत् ।
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ।
स्विद्यमानस्य च मुहुर्हृदयं शीतलैः स्पृशेत् ॥ १५ ॥
सम्यक्स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः ।
स्वभ्यक्तं प्रावृताङ्गञ्च निवातशरणस्थितम् ।
भोजयेदनभिष्यन्दि सर्व्वं वाचारमादिशेत् ॥ १६ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने स्वेदावचारणीयं
चिकित्सितं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अग्निमुपासीतेत्यनेनैव जीर्णान्नस्य स्वेदो लब्धः किमर्थं पुनरुच्यते ? उच्यते—स हि स्वस्थविषयोऽयमातुरविषय इति न दोषः। सम्यक्स्विन्नमित्यादि। सद्यो व्याधिकरणीयामवस्थां स्यन्दयति आपादयति यद् द्रव्यं तदभिष्यन्दि, स्रोतसामुपलेपकारि वा; तद्विपरीतमनभिष्यन्दि ॥ १४—१६ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
स्वेदावचारणीयचिकित्सितव्याख्यानाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

# त्रयस्त्रिंशोऽध्यायः ।

**अथातो वमनविरेचनसाध्योपद्रवचिकित्सितं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

**दोषाः क्षीणा बृंहयितव्याः, कुपिताः प्रशमयितव्याः, वृद्धा निर्हर्त्तव्याः, समाः परिपाल्या इति सिद्धान्तः। प्राधान्येन वमनविरेचने वर्त्तेते निर्हरणे दोषाणाम्। तस्मात् तयोर्विधानमुच्यमानमुपधारय ॥ २ ॥**

**अथातुरं स्निग्धं स्विन्नमभिष्यन्दिभिराहारैरनवबद्धदोषमवलोक्य श्वो वमनं पाययितास्मीति सम्भोजयेत् तीक्ष्णाग्निं बलवन्तं बहुदोषं महाव्याधिपरीतं वमनसात्म्यञ्च ॥ ३ ॥**

उपद्रवो रोगः। चिकित्सितञ्चात्र वमनविरेचनरूपमेव, वमनविरेचनसाध्यत्वादुपद्रवाणाम्। न खलु दोषाणां सर्व्वावस्थासु वमनविरेचने, किं तर्हि कस्याञ्चिदेवेति प्रतिपादयन्नाह—दोषा इत्यादि। क्षीणाः क्षयलक्षणैर्ज्ञाताः। कुपिता अल्पतया कोपमापन्नाः संशमनविधानेनैव प्रशमयितव्याः। प्रकर्षेण वृद्धाः स्वस्थानाच्चलिताः संशोधनविधिना निर्हर्त्तव्याः। जेज्जटाचार्य्यस्तु प्रवृद्धा इति पठति। वृद्धिर्हि द्विविधा चयलक्षणा प्रकोपलक्षणा च। तत्र संहतिरूपा वृद्धिश्चयः। विलयनरूपा वृद्धिः प्रकोपः, तयोर्विलयनरूपवृद्ध्या वृद्धा दोषाः संशोधनेन निर्हर्त्तव्याः। कुपिता इति कोपोऽत्र द्विविधः, चयपूर्व्वकोऽचयपूर्व्वकश्च। तत्र चयपूर्व्वकं कोपमागताः संशोधनविधानेन शमयितव्याः। स्वस्थानस्था रक्ष्या इति सिद्धान्तः। समाः स्वास्थ्यकराः स्वस्थवृत्तिविधानेनैव परिपाल्या इति। क्षीणवृद्धकुपितसंशमनं समपरिपालनञ्च प्रसङ्गतन्त्रयुक्तिवशादत्र चोक्तम्। पक्वाशयगतानेव वातपित्तकफानेकद्वित्रिर्दत्तो वस्तिरपकर्षति, धूमनस्यकवलग्रहादयः पुनरल्पतया, न तु वमनविरेचनवत् सकृन्नापि बाहुल्येन, तस्मादुक्तं प्राधान्येन वमनविरेचने इति। ननु वमनविरेचने कफपित्तयोर्दोषयोर्निर्हरणे वर्त्तेते, तत् कथं दोषाणामिति ? उच्यते—वायोरपि स्वाशयक्षोभलक्षणतया विलीनस्य विमार्गनिर्हरणमूर्द्धाधोमार्गेणानुलोमनं वमनविरेचने कुर्व्वतः, तस्माद् दोषाणामत्र बाहुल्यमुपपन्नम्, अन्ये तु न्यायभीरुतया दोषयोरिति पठन्ति। शिष्यबहुत्वेऽपि सुश्रुतस्यैव प्रश्ने अधिकृतत्वादुपधारयेत्येकवचननिर्देशः ॥ १।२ ॥

तत्र वमनस्य करणमाह—अथेत्यादि। सम्भोजयेत् सम्यक् भोजनं कारयेत्। कम् ? आतुरम्। किं कृत्वा ? अवलोक्य दृष्ट्वा। किं विशिष्टम् ? अनवबद्धदोषम्। कैर्भोजयेत् ? आहारैः। किंविशिष्टैः? अभिष्यन्दिभिः। कुतः कारणादित्याह—श्वो वमनं पाययितास्मीति, इति हेतोः, यतः आगामिनि अहनि अस्मि अहं पाययिता पाययिष्यामि। किं तत् ? वमनम्। क्व ? श्वः अपरेद्युः, अन्यस्मिन्नहनि इति सम्बन्धः। आतुरं रोगिणम्। अभिष्यन्दिभिराहारैः ग्राम्यानूपौदकमांसपयोमाषादिभिः। अनवबद्धदोषं मुक्तस्रोतोबन्धनत्वात् प्रचलितदोषम्। भोजनविधिः कफोत्क्लेशनार्थः। सम्भोजयेत्

भवति चात्र

पेशलैर्विविधैरन्नैर्दोषानुत्क्लेश्य देहिनः ।
स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते ॥ ४ ॥

अथापरेद्युः पूर्व्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य मात्रां पाययित्वा वामयेद् यथायोगं कोष्ठविशेषमवेक्ष्य अतिवीभत्सदुर्गन्धदुर्द्दर्शनानि च वमनानि विदध्यात् । अतो विपरीतानि विरेचनानि ॥ ५॥

तत्र सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनसाध्येषु विकारेषु क्षीरदधि-

समशनं कारयेत् 'पथ्यापथ्यमिहैकत्र भुक्तं समशनं स्मृतम्' इत्युक्तत्वात् । किंविशिष्टमातुरं सम्भोजयेदित्याह—तीक्ष्णाग्निं दीप्ताग्निम् । बलवन्तमिति प्रशस्तबलयुक्तोऽपि सम्भोजनार्हः, यतः—"जग्धाः षड्धिगच्छन्ति बलिनो वशतां रसाः" इति वचनात् । बहुदोषः सम्भोजनार्ह इति बहुदोषे भोजनोत्क्लिष्टो दोषः सम्यग्योगेन प्रवर्त्तते । अन्यथा पुनरयोगेनैव ( यावद् दोषः कार्य्यमर्हति ) । एवं महाव्याधिपरिगृहीतेऽपि वाच्यम् । वमनसात्म्यस्य तु अभिष्यन्दिभिराहारैर्दोषोत्क्लेशनम् । तमेवार्थं सुखपाठार्थं श्लोकेनापि दर्शयन्नाह—पेशलैरित्यादि । पेशलैः कोमलैरकठिनैः । अभिष्यन्दिभिराहारैरिति यावत् ॥ ३ । ४ ॥

अथेति मङ्गलार्थे । अन्ये त्वन्यस्मिन्नहनीत्यर्थः । अपरेद्युरिति पूर्व्वेद्युः सम्भोजितमपरेद्युरन्यस्मिन्नहनि ; ततश्चायं वाक्यार्थः—पूर्व्वेद्युः सम्भोजितमपि वामयेत, तच्च वमनमेकमहो विश्राम्य । स्नेहात् स्निग्धो ग्राम्यौदकमांसरसौदनेन भुक्तोऽपरस्मिन् प्रभाते वमनं कुर्य्यात् । तथा च भोजः—एकाहोपरतः स्नेहात् स्विन्नो प्रच्छर्द्दनं पिबेत् । भुक्त्वा ग्राम्यौदकैर्मांसैरानूपैश्च सुसंस्कृतैः इति पूर्व्वाह्णे अह्नः पूर्व्वभागे । साधारणे काले नातिशीतोष्णयुक्ते, अन्ये तु प्रावृट्शरद्वसन्ताख्ये इति विभज्य व्याख्यानयन्ति । स्नेहोऽत्र वमनद्रव्यपक्वः । वमनद्रव्यकषायमात्राः प्रधानमध्यमाधमभेदात् तन्त्रान्तरोक्ताः कथ्यन्ते । यदाह चक्षुष्यः—"क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता । मध्यमा षण्मिता प्रोक्ता त्रिपस्था च कनीयसी" इति । वमनविषये च सार्द्धत्रयोदशपलप्रमाणं प्रस्थमामनन्ति वृद्धाः । कल्कादिमानन्तु "कल्कमोदकचूर्णानां कर्षमध्वाच्च लेहतः । कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया" इति । वीभत्सो विकृताकृतिः । अतो विपरीतानि विरेचनानि सात्म्यावीभत्साद्दर्शनसुगन्धीनीति गम्यते । कृशसुकुमारवृद्धबालभीरवो वमनसाध्यात्मकाः कथं वामयितव्या इत्याह—तत्र सुकुमारमित्यादि । क्षीरादयो वमनद्रव्यसंस्कृता ज्ञेयाः ; अथवा क्षीरादीन् पूर्व्वं पाययेत्, अनन्तरं मात्रया वमनद्रव्यमिति । तथा च वृद्धवाग्भटः—"वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः । आकण्ठं पाययेन्मद्यं क्षीरमिक्षुरसं रसम् ॥ यथाविकारविहितां मधुसैन्धवसंयुताम् । कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ प्राङ्मुखं पाययेत्" इति ।

तक्रयवागूनामन्यतममाकण्ठं पाययेत्। पीतौषधश्च पाणिभिरग्नितप्तः प्रतप्यमानं मुहूर्त्तमुपेक्षेत। तस्य च स्वेदप्रादुर्भावेण शिथिलतामापन्नं स्वेभ्यः स्थानेभ्यः प्रचलितं कुक्षिमनुसृतं जानीयात्, ततः प्रवृत्तहृल्लासं ज्ञात्वा जानुमात्रासनोपविष्टमाप्तैललाटे पृष्ठे पार्श्वयोः कण्ठे च पाणिभिः सुपरिगृहीतमङ्गुलीगन्धर्व्वहस्तोत्पलनालानामन्यतमेन कण्ठमभिस्पृशन्तं वामयेत् तावत् यावद् सम्यग्वान्तलिङ्गानीति ॥ ६ ॥

भवतश्चात्र

कफप्रसेकं हृदयाविशुद्धिं कण्डूञ्च दुश्छर्दितलिङ्गमाहुः।
पित्तातियोगञ्च विसंज्ञताञ्च हृत्कण्ठपीड़ामपि चातिवान्ते ॥
पित्ते कफस्यानु सुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंस्रवे च स्थिते सुवान्तं पुरुषं व्यवस्येत् ॥ ७ ॥

सम्यग् वान्तञ्चैनमभिसमीक्ष्य स्नेहनविरेचनशमनानां धूमानामन्यतमं सामर्थ्यतः पाययित्वाचारिकमादिशेत् ॥ ८ ॥

पीतौषधस्य सम्यग्वमनहेतुं विधातुमुपदिशन्नाह—पीतेत्यादि। मुहूर्त्तं घटिकाद्वयं, प्रचलितमामदोषमिति शेषः। लोमहर्षेण तु स्वस्थानाद् दोषप्रच्यवनमिति निश्चयः। कुक्षौ समाध्मापनात् कुक्षिदेशानुगतं विद्यात्। हृल्लासः थूत्करणम्, छर्द्दिरित्यपरे ॥ ५। ६ ॥

तत्र अयोगातियोगयोरेव व्यापत्सम्भावनायां प्राक् लिङ्गं दर्शयन्नाह—कफप्रसेकमित्यादि। पित्तातियोगं पित्तातिप्रवृत्तिम्। सुवान्तलक्षणमाह—पित्ते कफस्येत्यादि। अनु पश्चात्। शुद्धेषु अगौरवयुक्तेषु। व्यवस्येत् जानीयात्। सम्यग्वान्तलक्षणं कार्य्यत्वेन, दुर्व्वान्तातिवान्तलक्षणं परिहार्य्यत्वेन व्यापत्प्रतीकारार्थमुक्तम्। तत्र कैश्चित् त्रिधा शुद्धिरभिहिता; यथा—लैङ्गिकी, वैगिकी, मानिकी चेति। तत्र लिङ्गैर्वान्तविरिक्तसम्यक्चिह्नैर्ज्ञायत इति लैङ्गिकी, हीनमध्योत्तमैर्वमनवेगैश्चतुःषड़ष्टभिर्दशविंशतित्रिंशद्भिर्विरेचनवेगैश्च ज्ञायते इति वैगिकी, मानेन श्लेष्मपित्तयोः प्रस्थार्द्धादिकाढ़कमानेन हीनमध्योमत्तमेन ज्ञायते इति मानिकी चेति। तत्र न तावत् मानिकी शुद्धिः, दीर्घह्रस्वस्थूलकृशदेहसंहतिप्रकृतिसारादिभिर्विविधलक्षणशरीराणां प्राणिनां दोषधातुमलानां परिमाणाभावात्। नापि वैगिकी, यतो बहुभिर्वेगैः कदाचित् कस्यचित् न शुद्धिः, प्रकृतिवयोबलशरीरदोषव्यपेक्षया कस्यचित् कतिपयैरपि वेगैः शुद्धिरिति। अतस्तृतीयां पित्ते कफस्यैस्यादिभिर्लिङ्गैर्लैङ्गिकीं शुद्धिमत्रोक्तवान् सुश्रुताचार्य्यः ॥ ७ ॥

सम्यग् वान्तस्य कर्म्म निर्दिशन्नाह—सम्यग् वान्तमित्यादि। वमनानन्तरं स्रोतोविलग्नकफहरणार्थं धूमपानमत्रोक्तम्। वातप्रकृतौ स्नैहिकं, कफपित्तप्रकृतावुत्क्लिष्टदोषे च वैरेचनिकं, समदोषप्रकृतावुपशमनीयं प्रायोगिकं स्वस्थवृत्तिकमित्यर्थः। आचारिकमादिशेदिति चरतेर्गतिभक्षणार्थक

भवन्ति चात्र

ततोऽपराह्णे शुचिशुद्धदेहमुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलत्थमुद्गाढ़किजाङ्गलानां यूषै रसैर्वाप्युपभोजयेत् तु ॥ ९ ॥
कासोपलेपस्वरभेदनिद्रा-तन्द्रास्यदौर्गन्ध्यविषोपसर्गाः।
कफप्रसेकग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥
छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजन्ति।
तथा हृते श्लेष्मणि शोधनेन तज्जा विकाराः प्रशमं प्रयान्ति ॥ १० ॥
न वामयेत् तैमिरिकोर्द्ध्ववात-गुल्मोदरप्लीहक्रिमिश्रमार्त्तान्।
स्थूलक्षतक्षीणकृशातिवृद्ध-मूत्रातुरान् केवलवातरोगान् ॥
स्वरोपघाताध्ययनप्रसक्त दुश्छर्द्दिदुःकोष्ठतृड़ार्त्तबालान्।
ऊर्द्ध्वास्रपित्तिक्षुधितातिरुक्ष-गर्भिण्युदावर्त्तिनिरूहितांश्च ॥
अवम्यवमनाद् रोगाः कृच्छ्रतां यान्ति देहिनाम्।
असाध्यतां वा गच्छन्ति नैते वाम्यास्ततः स्मृताः ॥ ११ ॥

त्वात् आहारो विहारश्चाचारः। तत्र विहारो बहुविधोऽपि त्रिविध एव कायवाङ्मनोभेदात्, स त्रिविधोऽप्ययुक्तोऽपवर्ज्यश्चातुरोपद्रवीये वक्ष्यते ॥ ८ ॥

आहारं सर्व्वमभिहितं दर्शयन्नाह—तत इत्यादि। वान्तस्य हि मन्दाग्नेः पेयादिक्रमयोग्यस्य कथं कुलत्थयूषमांसरसोपदेशः? अत्रोच्यते—अपिशब्दात् पेयादिक्रमोऽत्राप्युक्त एव। तत्रात्यन्त-क्षीणकफानां पेयादि, तेषामपि वातभूयिष्ठानां दीप्ताग्नीनां सात्म्यापेक्षया मांसरसोपयोगः, दोषत्तु-प्रकृत्यपेक्षया किञ्चित्कफयुक्तानां यूषोपदेशः, न तु विलेपीयवागूनाम्। उक्तञ्च—पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम्। तथा श्लेष्मणि संदुष्टे यवागूः श्लेष्मवर्द्धिनी" इति ॥ ९ ॥

अतः परं वमनफलाभिधानम्—कासेत्यादि। उपलेपः स्रोतःसु मलवृद्धिः। उपसर्गाः शीतलिकादयः। केचित् "कफप्रसेकस्वरभेदतन्द्रानिद्रास्यदौर्गन्ध्यकफोपसर्गाः। गुरुत्वकण्डूग्रहणी-प्रदोषा न सन्ति जन्तोर्वमतः कदाचित्" इति पठन्ति। अस्यैवार्थस्य दार्ढ्यार्थं दृष्टान्तमाह—छिन्ने इत्यादि ॥ १० ॥

अतःपरमवम्यानाह—नेत्यादि। तैमिरिकं तिमिररोगार्त्तम्। अत्र केचित् "न वामयेत् तमिरिकञ्च गुल्मिनं न चापि पाण्डूदररोगपीड़ितम्। स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्द्दिताक्षेपक-पीड़ितांश्च" इति पठन्ति। ऊर्द्ध्वं वातं केचिच्छ्वासं मन्यन्ते, तन्न; श्वासिनो वमनार्हत्वात्, ऊर्द्ध्वं वात-स्तन्त्रान्तरे प्रोक्त एव—"अधःप्रतिहतो वायुः श्लेष्मणा कुपितेन च। करोत्यनिशमुद्गारमूर्द्ध्वं वातः स इष्यते" इति। अवमनार्हस्य वमने व्याधेः परिवृद्धिमसाध्यताञ्च दर्शयन्नाह—अवम्येत्यादि।

एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः।
अतीव चोल्वणकफास्ते च स्युर्मधुकाम्बुना ॥ १२ ॥

वाम्यास्तु विषशोषस्तन्यदोषविषममन्दाग्न्युन्मादापस्मारश्लीपदार्बुदविदारिकामेदोमेह-गरज्वरारुच्यपच्यामातीसार-हृद्रोगचित्तविभ्रमविसर्पविद्रध्यजीर्णमुखप्रसेकहृल्लासश्वासकासपीनसपूतिनासकण्ठौष्ठवक्त्रपाक-कर्णस्रावाधिजिह्वोपजिह्विकागलशुण्डिकाऽधःशोणितपित्तिनः कफस्थानजेषु विकारेष्वन्ये च कफव्याधिपरीता इति ॥ १३ ॥

विरेचनमपि स्निग्धस्विन्नाय वान्ताय च देयम्। अवान्तस्य हि सम्यग् विरिक्तस्यापि सतोऽधःस्रस्तः श्लेष्मा ग्रहणीं छादयति गौरवमापादयति प्रवाहिकां वा जनयति। अथातुरं श्वो विरेचनं पाययितास्मीति पूर्व्वाह्णे लघु

एतेऽप्यजीर्णव्यथिता इत्यादि। एषामजीर्णपीडायां स्थावरजङ्गमकृत्रिमविषबाधायाञ्चात्यर्थोच्छ्रितकफाश्चैते वाम्याः वमनार्हाः। तत्रैषामवमने चिराद् बाधाऽजीर्णे, विषैश्च सद्य एव, उल्वणकफानाञ्च गलामयादिषु सद्य एव विनाशः। ( केचिदजीर्णेत्यादिपाठं त्यक्त्वा 'सर्व्वेऽप्यन्ये विरुद्धाश्नद् विषमार्गगरातुराः। कफप्रवृद्धेऽजीर्णे च वामयेत्' इति पठन्ति। ) अत्रापि द्रव्यविशेषमुपदिशन्नाह—मधुकाम्बुनेति। यष्टिमधुकषायेण वमनाङ्गप्रधानेन वामयेत्। जेज्जटः पुनराह—मधु एव मधुकं स्वार्थे कः, तेन मधुकाम्बुना। एतेन प्रतिप्रसवो ह्यवाम्यानामप्युक्तः। "न वामनीयस्तिमिरी दकोदरी न गुल्मवान् पाण्डुगदेन पीड़ितः। स्थूलक्षतक्षीणकृशातिवृद्धा नार्शोऽर्द्दिताक्षेपकपीड़ितश्च ॥ रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे। दुष्टे च कोष्ठे कृमिभिर्मनुष्यं न वामयेद् वर्च्चसि संप्रवृद्धे" इति केचित् पठन्ति। शेषं सुगमम् ॥ ११। १२ ॥

वाम्या इत्यादि। ज्वरोऽत्र नवज्वरो विषमज्वरश्च, क्वचित् पूतिनासाग्र कुष्ठगलगण्डप्रमेहशोफाः पठिताः। केचित् सुश्रुताध्यायिनो न पठन्त्यमुं पाठम्, तेषामयमभिप्रायः—यथास्वं तत्प्रत्यनीकव्याधिषु वमननिर्द्देशात् नार्थोऽनेनेति ॥ १३ ॥

विरेचनविधानमाह—विरेचनमपीत्यादि। वान्तायापि पुनः स्निग्धस्विन्नाय देयम्; तच्च पक्षादूर्द्ध्वं, पक्षाद् विरेको वान्तस्येत्युक्तत्वात्। तत्रान्नसंसर्गेण दिनानि षट्, स्नेहेनापि, ततः स्विन्नं त्र्यहमेव लघूष्णभोजिनं रेचयेत्। "वान्तं षडहसंसृष्टं पुनः संस्नेहितं क्रमात्। उष्णं लघु त्र्यहं भुक्तं षोड़शेऽह्नि विरेचयेत्" इति तत्र वमने स्नेहादेकाहमेवोपरमः, विरेके त्र्यहम्। तथाहि चरकः—एकाहोपरतः स्नेहात् भुक्त्वा प्रच्छर्द्दनं पिबेत्। त्रिरात्रोपरतस्तद्वद् स्नेहात् प्रस्कन्दनं पिबेत्" इति। अवान्तस्य हि विरेकदाने को दोष इत्याह—अवान्तस्येत्यादि। तस्मात् स्निग्धस्विन्नाय वान्ताय देयमिति। विरेचनस्य कर्म्म निर्द्दिशन्नाह—अथेत्यादि। पूर्व्वाह्णग्रहणं

भोजयेत्, फलाम्लमुष्णोदकञ्चनमनुपाययेत् । अथापरेऽहनि विगतश्लेष्मधातुमातुरोपक्रमणीयादवेक्ष्यातुरमथास्मै औषधमात्रां पातुं प्रयच्छेत् ॥ १४ ॥

तत्र मृदुः क्रूरो मध्यम इति त्रिविधः कोष्ठो भवति। तत्र बहुपित्तो मृदुः, स दुग्धेनापि विरिच्यते। बहुवातश्लेष्मा क्रूरः, स दुर्व्विरेच्यः। समदोषो मध्यमः, स साधारण इति। तत्र मृदौ मात्रा मृद्वी, तीक्ष्णा क्रूरे, मध्ये मध्या कर्त्तव्येति। पीतौषधश्च तन्मनाः शय्याभ्यासे विरिच्यते ॥ १५ ॥

विरेचनं पीतवांस्तु न वेगान् धारयेद् बुधः ।
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत् ॥ १६ ॥

यथा च वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति, एवं विरेचने मूत्रपुरीषपित्तौषधकफा इति ॥ १७ ॥

भवन्ति चात्र

हृत्कुक्ष्यशुद्धिः परिदाहकण्डू-विण्मूत्रसङ्गाश्च न सद्विरिक्ते ।
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥

सायम्भोजननिषेधार्थम् । फलाम्लं वीजपूरादि । फलाम्लोष्णोदकानुपानं पित्तवर्द्धनार्थं, अन्ये च कफावजयार्थमाहुः । विगतश्लेष्माणमिति कर्त्तव्ये धातुग्रहणं श्लेष्मसहचरितरसधातुपलक्षणम् । रसावशेषेऽपि सप्रसेकत्वात् पुरुषस्य विरेचनं न देयमिति आतुरोपक्रमणीयाध्याये उक्तम् । श्लेष्मान्तत्वात् विरेकस्योत्पादनानन्तरमातुरमवेक्ष्य ज्ञात्वा मात्रां पातुं प्रयच्छेत् । मात्रा पुरुषस्य बलापेक्षया प्रधानमध्यादिभेदेन तन्त्रान्तरोक्ता कथ्यन्ते । "द्वे पले ज्येष्ठमाख्यातं मध्यमन्तु पलं भवेत् । पलार्द्धमुपयुञ्जीत कनीयस्तु विरेचनम्" इति ॥ १४ ॥

दुग्धं चात्रोपलक्षणम्, तेनेक्षुरसाम्लतक्रमस्तुगुडकृशरासर्पिर्नवमद्योष्णोदकपीलुद्राक्षारसादिभिरपि विरिच्यते। दुर्व्विरेच्यस्त्रिवृत्त्रिफलातिक्तानीलिनीफलादिभिरपि दुःखेन विरेच्यते। मृद्वी मृदुगुणोपेता वैरेचनिकद्रव्यगुणानां तीक्ष्णत्वादीनामपकर्षेण । तीक्ष्णा तीक्ष्णगुणोपेता, वैरेचनिकद्रव्यगुणानां तीक्ष्णत्वादीनां प्रकर्षेण । तन्मनाः विरेकमनाः। अभ्यासे समीपे ॥ १५ । १६ ॥

प्रसेको लालास्रवणम्, औषधं पीतम्, कफः पुनरामाशयस्थः, तस्मिन् वमनेन हृते तत्रैव पित्तं वमनावधिसूचकं निःसरति, वातेन उद्गाररूपेण अनिलसंशुद्धिः। विरेचने मूत्रपुरीषपित्तौषधकफा इति वातगमनं पुनः 'गतेऽनिले चाप्यनुलोमभावम्' इत्यनेन वक्ष्यति। कफोऽत्र पक्वाशये विरेकावधिसूचकः स्फटिकसमद्युतिः ॥ १७ ॥

पित्तान्तकं सम्यग्वमनज्ञानं कफान्तञ्च सम्यग् विरेचनज्ञानमुद्दिश्य विरेकस्यैव लिङ्गज्ञानेनायोगातियोगौ निर्द्दिशन्नाह—भवन्ति चात्रेत्यादि। हृत्कुक्ष्यशुद्धिरित्यत्र "स्याद् दुर्व्विरिक्ते कफपित्तकोपो दाहोऽरुचिर्गौरवमवसादः" इति केचित् पठन्ति ।

गतेषु दोषेषु कफान्वितेषु नाभ्या लघुत्वे मनसश्च तुष्टौ।
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तं मनुजं व्यवस्येत्॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेताहनि तत्र पेयाम्।
क्षीणं तृड़ार्त्तं सुविरेचितश्च तन्वीमशीतां लघु पाययेच्च॥
बुद्धेः प्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं बलमग्निदीप्तिम्।
चिराच्च पाकं वयसः करोति विरेचनं सम्यगुपास्यमानम्॥
यथौदकानामुदकेऽपनीते चरस्थिराणां भवति प्रणाशः।
पित्ते हृते त्वेवमुपद्रवाणां पित्तात्मकानां भवति प्रणाशः॥ १८॥
मन्दाग्नतिस्नेहितबालवृद्ध-स्थूलाः क्षतक्षीणभयोपतप्ताः।
श्रान्तस्तृड़ार्त्तोऽपरिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक्॥
नवप्रतिश्यायमदात्ययी च नवज्वरी या च नवप्रसूता।
शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्ये त्वनुपस्कृताश्च॥
अत्यर्थपित्ताभिपरीतदेहान् विरेचयेत् तानपि मन्दमन्दम्।
विरेचनैर्यान्ति नरा विनाशमज्ञप्रयुक्तैरविरेचनीयाः॥ १९॥

गतेष्वित्यादि। दोषोऽत्र पित्तस्थानगतं दोषोपलक्षितं पुरीषं कफपित्तञ्च। अत्रैव पश्चात्कर्म्मणि अवस्थाविशेषेण विशेषमुद्दिशन्नाह—मन्दाग्निमक्षीणमित्यादि। लघ्विति मात्रालघु। इदानीं विरेकस्य गुणमाह—बुद्धेरित्यादि। कायमनसोरन्योऽन्यानुविधानात् कायमपि मनोऽनुविधत्ते मनश्च काय इति। शरीरशुद्धिकारणं हि विरेचनम्, तच्छुद्धौ मनसो विशुद्धिः, मनःशुद्धौ बुद्धिप्रसाद उपपन्न एव इत्यतो बुद्धिप्रसादं करोतीत्युक्तम्। धातुस्थिरत्वमुपचयलक्षणबलेन। बलशब्देनोत्साहलक्षणबलम्। केचित् 'विरेचनं सम्यगुपास्यमेव' इति पठन्ति। केचिद् बुद्धिप्रसादादयस्तावत्कालिका विरेचनस्य गुणाः, अग्निदीप्तिप्रभृतयस्तु केचित् संसर्ज्जनक्रमानन्तरभाविन इति कथयन्ति। उपस्तम्भकारिणो मलस्य क्षयकार्य्यपि विरेकः स्रोतःशुद्ध्या बलमादधाति तक्रपानवत्। उक्तञ्च—"स्रोतःसु तक्रशुद्धेषु रसो धातूनुपैति यः। तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते" इति। दृष्टान्तमाह—यथेत्यादि। यथा औदकानां चरस्थिराणां स्थावरजङ्गमानां पद्मादीनां मत्स्यादीनाञ्च। उपद्रवाणां व्याधीनां पित्तात्मकानां पित्तकारणानाम्॥ १८॥

विरेचनस्याप्रवृत्तिविषयमुद्दिशन्नाह—मन्देत्यादि। मन्दमन्दमित्यत्र केचित् मन्दवीर्य्यैरित्येवं पठन्ति, तत्र द्रव्यैरिति शेषः। अविरेच्यानामविरेकज्ञैः कृतं दोषं दर्शयन्नाह—विरेचनैरित्यादि॥ १९॥

विरेच्यास्तु ज्वरगरारुच्यर्शोऽर्बुदोदरग्रन्थिविद्रधिपाण्डुरोगापस्मारहृद्रोग-वातरक्त-भगन्दरच्छर्दियोनिरोग विसर्पगुल्म-पक्वाशयरुग्विबन्धविसूचिकालसक-मूत्राघातकुष्ठविस्फोटकप्रमेहानाहप्लीहशोफवृद्धिशस्त्रक्षतक्षाराग्निदग्ध-दुष्टव्रणाक्षि-पाककाचतिमिराभिष्यन्द-शिरःकर्णाक्षिनासास्यगुदमेढ्रदाहोर्द्ध्व-रक्तपित्त-क्रिमि-कोष्ठिनः पित्तस्थानजेष्वन्येषु च विकारेष्वन्ये च पैत्तिकव्याधिपरीता इति ॥२०॥

सरत्वसौक्ष्म्यतैक्ष्ण्यौष्ण्य-विकाशित्वैर्विरेचनम् ।
वमनन्तु हरेद् दोषं प्रकृत्या गतमन्यथा ॥ २१ ॥
यात्यधो दोषमादाय पच्यमानं विरेचनम् ।
गुणोत्कर्षाद् व्रजत्यूर्द्ध्वमपक्वं वमनं पुनः ॥ २२ ॥

विरेच्यानाह—विरेच्यास्त्वित्यादि ॥ २० ॥

विरेचनद्रव्येण सह गुणसाम्ये सति कथं वमनद्रव्यस्योर्द्ध्वगत्वमित्याह—सरत्वेत्यादि । सरस्य भावः सरत्वमानुलोम्यम् । गयी तु विसरणस्वभावत्वं सरत्वमाह । सूक्ष्मस्य भावः सौक्ष्म्यम्, सूक्ष्म-स्रोतोऽनुसारित्वम् । तीक्ष्णस्य भावस्तैक्ष्ण्यम् शीघ्रतरदोषस्रावणकरत्वम् । उष्णस्य भाव औष्ण्यम् सौम्यद्रव्योपमर्द्दनकरणसामर्थ्यम्, विकाशिनो भावः विकाशित्वं धातोः शैथिल्यकरणसामर्थ्यम् । अत्र प्रकृतिः स्वभावः शक्तिविशेषः प्रभावो वीर्य्यमित्यनर्थान्तरम् । तेन प्रकृत्या वीर्य्येणान्यथा गतमूर्द्ध्वगतम् । सत्यपि सरत्वादिविरेचनगुणसाम्ये वमनस्योर्द्ध्वगामित्वं प्रभावप्रभावितं, कुतः ? यत उच्यते, "कटुकः कटुकः पाके चित्रको वह्निदीपनः । तद्वद् दन्ती प्रभावात्तु विरेचयति सा नरम्" । तथाच—"विषं विषघ्नमुद्दिष्टं प्रभावस्तत्र कारणम्" इति, तथा—"ऊर्द्ध्वानुलोमिकं यच्च तत्-प्रभावप्रभावितम्" इति । एतेनैतदुक्तं भवति, सरत्वादिभिर्गुणैर्विरेचनमधो दोषानपहरेत् । वमनस्य तुल्यगुणत्वेऽपि वीर्य्येणोर्द्ध्वगामित्वम् । पञ्जिकाकारेण प्रकृत्यागतमन्यथेत्यत्र 'सम्यग् युक्त्या-ऽतथाऽन्यथा' इति पठित्वैवं व्याख्यातः—सम्यग्युक्त्या सरत्वादिगुणैः विरेचनमधोभागेन, वमन-मूर्द्ध्वभागेन दोषानपहरेत् । अतथाऽन्यथा, अतथाऽसम्यग्युक्त्या विरेचनञ्च वमनञ्चान्यथा दोषविपरीतान् गुणान् हरेदिति । केचित्तु वमनन्तु हरेद्दोषान् सम्यग्युक्तं वृथान्यथा' इति पठन्ति । अयमर्थो युक्तः किल । सरत्वादयो गुणाः सुयुक्ता आशुतरदोषहराः, तथैव चान्यायोपयुक्ता एव जीवशोणितधातुरसेन्द्रियमनओजःप्रभृतीनाकृष्य मारयन्तीति । कीदृशं सत् पुनर्विरेचनं वमनद्रव्यञ्च दोषानादाय अध ऊर्द्ध्वञ्च यातीत्याह—यात्यधो दोषमित्यादि । द्रव्याणि विरेचनानि स्थिरगुर्व्वोः पृथिव्यम्भसोर्गुणभूयिष्ठानि, अतएव स्थिरत्वात् पच्यमानानि गुरुत्वादधो यान्ति, वमनद्रव्याणि तु वाय्वग्न्योः शीघ्रगयोर्गुणभूयिष्ठानि, अतः शीघ्रगत्वादपक्वान्येव लघुत्वादूर्द्ध्वमुत्तिष्ठन्ति । द्रव्याणि हि द्रव्यस्वभावात् गुणस्वभावाच्च कार्म्मुकाणि भवन्ति ॥ २१ । २२ ॥

मृदुकोष्ठस्य दीप्ताग्नेरतितीक्ष्णं विरेचनम्।
न सम्यङ् निर्हरेद् दोषानतिवेगप्रधावितम्(तान्)॥ २३॥
पीतं यदौषधं प्रातर्भुक्तपाकसमे क्षणे।
पक्तिं गच्छति दोषांश्च निर्हरेत् तत् प्रशस्यते॥ २४॥
दुर्ब्बलस्य चलान् दोषानल्पानल्पान् पुनःपुनः।
हरेत् प्रभूतानल्पांस्तु शमयेत् प्रच्युतानपि॥ २५॥
हरेद् दोषांश्चलान् पक्कान् बलिनो दुर्ब्बलस्य च।
चला ह्युपेक्षिता दोषाः क्लेशयेयुश्चिरं नरम्॥ २६॥
मन्दाग्निं क्रूरकोष्ठञ्च सक्षारलवणैर्घृतैः।
सन्धुक्षिताग्निं स्निग्धञ्च स्विन्नञ्चैव विरेचयेत्॥
स्निग्धस्विन्नस्य भैषज्यैर्दोषस्तूत्क्लेशितो बलात्।
विलीयते न मार्गेषु स्निग्धे भाण्ड इवोदकम्॥ २७॥

कथं पुनरस्यासम्यक्प्रवृत्तिः? अत्रोच्यते—मृदुकोष्ठस्येत्यादि। अतिवेगप्रधावितमतिवेगप्रवर्त्तितम्। न सम्यङ् निर्हरेद्दोषानिति कुतः? कोष्ठमार्द्दवादग्निदीप्तेरतितैक्ष्ण्याच्च। अयमभिप्रायः—मृदुकोष्ठस्य कोष्ठमार्द्दवेन शीघ्रप्रवृत्तिः, दीप्ताग्नेश्चाग्निदीप्त्या आशुपाकित्वादचिरस्थायिनी पच्यमानावस्था, अतस्तद्धेतुकातिप्रवृत्तिरिति। अतिपित्तभूतयैव तथा विरेचनस्य तीक्ष्णतयापि शीघ्रप्रवृत्तिरिति हेतुत्रयेण शीघ्रं प्रवृत्तिरिति सामान्येनाशेषेण दोषानिर्हरणम्। तस्मात् मृद्वेव विरेचनं स्वल्पमात्रं देयमिति॥ २३॥

इदानीं सम्यग्युक्तिमाह—पीतमित्यादि। भुक्तपाकसमे क्षणे इति त्रिभिर्यामैर्मध्यमाग्नेः भोज्यभैषज्ययोः पाकः। अन्ये त्वेवं पठन्ति "यावता जीर्य्यते भक्तं भुक्तं सद् याति पक्वताम्। सुखेन दोषान् निर्हृत्य भेषजं तत् प्रशस्यते" इति॥ २४॥

कुपिताः शमयितव्या इत्यस्यापवादमाह—दुर्ब्बलस्येत्यादि। दुर्ब्बलस्य पुरुषस्य प्रभूतान् कुपितान् दोषान् शनैःशनैरल्पानल्पान् हरेत् अतीक्ष्णैः संशोधनीयैरित्यर्थः; सरैर्भोज्यैर्न तीक्ष्णैः संशोधनीयैरित्यध्याहरणीयम्। तच्च दोषहरणं दोषाणामपक्वानामेव। अल्पांस्तर्हि किं कुर्य्यादित्याह—अल्पांस्तु शमयेत्। प्रच्युतानपि चलितानपीत्यर्थः। भोजेनाप्युक्तम्—"दोषमल्पञ्च शमयेच्चलितमपि दुर्ब्बले। बहुदोषन्तु चलितं सर्व्वैर्भोज्यैः प्रवाहयेत्" इति॥ २५॥

ते दोषा बलिनो दुर्ब्बलस्यापि पाकप्रवणा निर्हर्त्तव्या एवेत्याह—हरेदित्यादि। मन्दाग्नेः क्रूरकोष्ठस्य संशोधनविधिमाह—मन्दाग्निमित्यादि। कुतः पुनः स्नेहस्वेदपूर्व्वं शोधनमित्याह—स्निग्धेत्यादि। स्निग्धस्विन्नस्य पुरुषस्य भैषज्यैर्भोजनौषधरूपैः, यतो भैषज्यग्रहणेन भोजनमपि गृह्यते। बलात् पुरुषबलादिकमभिसमीक्ष्य दोष उत्क्लेशितः। न मार्गेषु विलीयते न श्लिष्यति, असंयुज्यते न लग्नो भवतीत्यर्थः॥ २६। २७॥

न चातिस्नेहपीतस्तु पिबेत् स्नेहविरेचनम् ।
दोषाः प्रचलिताः स्थानाद् भूयः श्लिष्यन्ति वर्त्मसु ॥ २८ ॥
विषाभिघातपिड़का-शोफपाण्डुविसर्पिणः ।
नातिस्निग्धा विशोध्याः स्युस्तथा कुष्ठिप्रमेहिणः ॥ २९ ॥
विरूक्ष्य स्नेहसात्म्यन्तु भूयः संस्नेह्य शोधयेत् ।
तेन दोषा हृतास्तस्य भवन्ति वलवर्द्धनाः ॥ ३० ॥
प्रागपीतं नरं शोध्यं पाययेतौषधं मृदु ।
ततो विज्ञातकोष्ठस्य कार्य्यं संशोधनं पुनः ॥ ३१ ॥
सुखं दृष्टफलं हृद्यमल्पमात्रं महागुणम् ।
व्यापत्स्वल्पात्ययञ्चापि पिवेन्नृपतिरौषधम् ॥ ३२ ॥
स्नेहस्वेदावनभ्यस्य यस्तु संशोधनं पिवेत् ।
दारु शुष्कमिवानामे देहस्तस्य विशीर्य्यते ॥
स्नेहस्वेदप्रचलिता रसैः स्निग्धैरुदीरिताः ।
दोषाः कोष्ठगता जन्तोः सुखा हर्त्तुं विशोधनैः ॥ ३३ ॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने वमनविरेचनसाध्योपद्रवचिकित्सितं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

विरेचनस्य स्निग्धरूक्षपुरुषविशेषावचारणमुद्दिशन्नाह—न चातिस्निग्धेत्यादि । भूय इत्यादि पुनर्निलीयन्ते मार्गेष्वित्यर्थः । न चातिस्निग्धकायस्त्विति केचित् पठन्ति ॥ २८ ॥

केषाञ्चिदतिस्निग्धानां विशोधनप्रतिषेधनमाह—विषाभिघातेत्यादि । नातिस्निग्धा इति ईषत् स्निग्धा विशोध्या इत्यर्थः ॥ २९ ॥

स्वभावतः स्निग्धता न शोधनहेतुरित्याह—विरूक्ष्येत्यादि । बलवर्द्धनाः इत्यत्र स्नेहबन्धना इति केचित् पठन्ति । स्नेहबन्धनाः स्नेहोपलिप्तस्रोतोवन्धना इत्यर्थः । अविज्ञातकोष्ठस्य मृदु विरेचनं देयमित्याह—प्रागित्यादि । प्राक् पूर्वं न पीतं विरेचनं येन सः तम् ॥ ३० । ३१ ॥

सुकुमारतरपुरुषविशेषेण विरेचनविशेषमाह—सुखमित्यादि । व्यापत्स्वल्पात्ययमिति व्यापत-स्वल्पात्ययोऽल्पविनाशो यस्मिन्नौषधे तत् तथा । रूक्षस्याकृतस्नेहस्वेदस्य शोधने वमने विरेचने च दोषान् दर्शयन्नाह—स्नेहस्वेदावित्यादि । शाखागतस्यापि दोषस्य कोष्ठानयनहेतुः स्नेहः, स्वेदः कोष्ठमागतस्य सुखेन प्रवृत्तिकरश्चेति दर्शयन्नाह—स्नेहस्वेदप्रचलिता इत्यादि । विशोधनैरिति शक्यन्ते इत्यध्याहारः ॥ ३२ । ३३ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय श्रीडल्हनविरचिते निबन्धसंग्रहे वमनविरेचनसाध्योपद्रवचिकित्सितव्याख्यानाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# चतुस्त्रिंशोऽध्यायः ।

अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

वैद्यातुरनिमित्तं वमनं विरेचनञ्च पञ्चदशधा व्यापद्यते। तत्र वमनस्याधोगतिरूर्द्ध्वं विरेचनस्येति पृथक्। सामान्यमुभयोः सावशेषौषधत्वं, जीर्णौषधत्वं, हीनदोषापहृतत्वं, वातशूलम्, अयोगः, अतियोगः, जीवादानम्, आध्मानं, परिकर्त्तिका, परिस्रावः, प्रवाहिका, हृदयोपसरणं, विबन्ध इति ॥ २ ॥

तत्र बुभुक्षापीड़ितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चावतिष्ठमानं दुर्ब्बलस्य वा गुणसामान्यभावाद् वमनमधो गच्छति। तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च। तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्वामयेत् ॥ ३ ॥

अपरिशुद्धामाशयस्योत्कृष्टश्लेष्मणः सशेषान्नस्य वाऽहृद्यमतिप्रभूतं वा विरेचनं पीतमूर्द्ध्वं गच्छति। तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च। तत्राशुद्धामाशयमुल्वणश्लेष्माणमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत्। आमान्वये दोषे सामवत् संविधानम्। अहृद्येऽतिप्रभूते च हृद्यं प्रमाणयुक्तञ्च, अत ऊर्द्ध्वमुत्तिष्ठत्यौषधे न तृतीयं पाययेत्। ततस्त्वेनं मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् ॥ ४ ॥

वैद्यातुरग्रहणेनैव भेषजपरिचारकयोर्ग्रहणमतस्तयोरपि व्यापन्निमित्तता स्यात्। तत्रेत्यादि। तत्र वमनस्याधोगतिर्व्यापदिति शेषः। ऊर्द्ध्वगतिर्विरेचनस्येत्यत्रापि व्यापदिति शेषः। उभयोस्तु वमनविरेचनयोः सावशेषौषधादिकं त्रयोदशसंख्योपेतं व्यापत्त्वेन सामान्यं, तस्य संख्येयनिर्द्देशेऽपि पञ्चदशधेति संख्याकरणं तन्त्रान्तरोद्धृतसंख्यानिषेधार्थम् ॥ १।२ ॥

वमनस्याधोगव्यापदं दर्शयन्नाह— तत्रेत्यादि। प्रथमं क्षुत्पीड़ितस्य पीतमात्रमेवाधो याति। तीक्ष्णाग्नेरग्निबलात् पाकं याति। मृदुकोष्ठस्यापि कोष्ठमार्द्दवादधो याति। दुर्ब्बलस्य चावतिष्ठमानं पाकं गच्छत् सरत्वादिगुणसाम्यादधो याति। दोषोत्क्लेशश्चेति दोषस्य सामान्यवाचित्वेऽपि कफो गृह्यते, तस्य वमनार्हत्वात्। स्नेहयित्वेत्यत्र स्नेहेनैव स्वेद आक्षिप्तो बोद्धव्यः। विरेचनस्योर्द्ध्वगतिव्यापदं दर्शयन्नाह— अपरिशुद्धेत्यादि। दोषोऽत्र पित्तं, आमवत् संविधानं लङ्घनपाचनादि। प्रभूतं प्रमाणं युक्तमित्यर्थः। न तृतीयं पाययेत् विरेचनमौषधमिति शेषः। अथ केन विरेचयेत् तत्राह— ततस्त्वेनमित्यादि ॥ ३।४ ॥

दोषविग्रथितमल्पमौषधमवस्थितमूर्द्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान्। तत्र तृष्णा पार्श्वशूलं छर्द्दिर्मूर्च्छा पर्व्वभेदो हृल्लासोऽरतिरुद्गाराविशुद्धिश्च भवति। तमुष्णाभिरद्भिराशु वामयेदूर्द्ध्वभागिके, अधोभागिकेऽपि च सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तमप्येवं वामयेत् ॥ ५ ॥

क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत् पाकमुपैति; तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा व्याधिविभ्रमं बलविभ्रंशञ्चापादयन्ति। तमनल्पममन्दमौषधञ्च पाययेत् ॥ ६ ॥

अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान् दोषान् हन्ति। तत्र वमने दोषशेषो गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिञ्च करोति। तत्र तं यथायोगं पाययित्वा वामयेद् दृढतरम्। विरेचने तु गुदपरिकर्त्तनमाध्मानं शिरोगौरवमनिःसरणं वा वायोर्व्याधिवृद्धिञ्च करोति। तमुपपाद्य भूयः स्नेहस्वेदाभ्यां विरेचयेद् दृढतरम्। दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणञ्चेति ॥ ७ ॥

सावशेषौषधव्यापदं सामान्येनोभयोः शुद्ध्योः दर्शयन्नाह—दोषेत्यादि। दोषविग्रथितं दोषमिश्रितम्। न स्रंसयति न च्यावयति। पर्व्वभेदो ग्रन्थिस्फुटनम्। हृल्लासः थूत्करणम्। थुकथुकिति लोके। अरतिर्न कुत्रचिदवस्थितिश्चित्तस्य, तमवस्थितात्पौषधं तृष्णाद्यन्वितमूर्द्ध्वभागिके वमनद्रव्यविषये वामयेत्। अधोभागिकेऽप्यवस्थाविशेषे वमनमुद्दिशन्नाह - अधोभागिकेऽपि चेत्यादि। अधोभागिके विरेचनद्रव्यविषये यः सावशेषौषधोऽतिप्रधावितदोषस्तमसम्यग्विरिक्तं वामयेत् परमतिबलं पुरुषम् ॥ ५ ॥

जीर्णौषधव्यापदं दर्शयन्नाह—क्रूरेत्यादि। समुदीर्णाः प्रकुपिताः, व्याधिविभ्रमं कोष्ठादिक्षोभलक्षणं, बलविभ्रंशं सन्धिविश्लेषादिलक्षणं दोषादिविज्ञानीयोक्तम्। तमनल्पमित्यादि प्रभूतं तीक्ष्णञ्च पातुं प्रयच्छेत् ॥ ६ ॥

अल्पदोषहृतिव्यापदं दर्शयन्नाह-- अस्निग्धस्विन्नेत्यादि। अल्पोऽतिसूक्ष्मो गुणो यस्य तद् तथा। तं दोषशेषम्। यथायोगं योगानतिक्रमेण स्नेहादिपूर्व्वमित्यर्थः। पाययित्वा आतुरं वमनद्रव्यमिति शेषः। दृढतरमिति दृढतरं यथा भवति तथा। विरेचने त्विति अत्रापि दोषशेष इति संबध्यते। गुदपरिकर्त्तनं गुदस्य सर्व्वतः कर्त्तनमिव वेदनाविशेषः। दृढदेहं बहुदोषं प्रचलितदोषञ्च पूर्व्वं स्नेहेन स्निग्धं स्वेदेन स्विन्नं तृतीयेऽह्नि। अन्ये तु वमनदिवसाद् विरेचनदिवसाद् वा तृतीयदिवसे वामयेत् विरेचयेद् वेति ॥ ७ ॥

अस्निग्धस्विन्नेन रुक्षमौषधमुपयुक्तमब्रह्मचारिणा वा वायुं कोपयति। तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणिमन्यामर्म्मशूलं मूर्च्छां भ्रमं संज्ञानाशञ्च करोति, तं वातशूलमित्याचक्षते, तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत्। स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्द्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लेश्य तैः सह बलक्षयमापादयति। तत्राध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति। तमयोगमित्याचक्षते। तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत् तीक्ष्णतरैः कषायैश्च। दुर्व्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिड़काज्वराङ्गमर्दनिस्तोदनानि कुर्व्वन्ति। ततस्तानवशेषान् महौषधेनापहरेत्। अस्निग्धस्विन्नस्य मृदुविरिक्तस्याधो नाभेः स्तब्धपूर्णोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो भवति; तमास्थाप्य पुनः संस्नेह्य विरेचयेत् तीक्ष्णेन। नातिप्रवर्त्तमाने तिष्ठति वा दुष्टसंशोधने तत्सन्तेजनार्थमुष्णोदकं पाययेत्, पाणितापैश्च पार्श्वोदरमुपस्वेदयेत्। ततः प्रवर्त्तन्ते दोषाः। अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलञ्चावेक्ष्य भूयो मात्रां विदध्यात्। अप्रवृत्तदोषं दशरात्रादूर्द्ध्वमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत्॥ ८॥

वातशूलव्यापदं दर्शयन्नाह—अस्निग्धेत्यादि। श्रोणिः कटिः। मर्म्मात्र हृदयम्। भ्रमश्चक्रारूढस्येव भ्रमणम्; अथवा पूगफलादनेनेव मत्तता। धान्यस्वेदेन माषादिशमीधान्यस्वेदेन। मूर्च्छाभ्रमयोरनुवासनप्रतिषेधव्यवस्थापेक्षया शीतलेन यष्टिमधुकतैलेनानुवासनं वेदितव्यमिति।

अयोगव्यापदं दर्शयन्नाह—स्नेहेत्यादि। बहुव्यापत्त्वादेतान् सुस्निग्धस्विन्नान् स्वैरं रेचयेत्। स्नेहस्वेदाभ्यामविभावितशरीरेण सर्व्वथैवास्निग्धस्विन्नेनेत्यर्थः। नाभ्येति न गच्छति। दोषांश्चोत्क्लेश्य तैर्दोषैः सह बलक्षयमापादयति, तत्राध्मानादिकं करोति। तमयोगमित्याचक्षते इति अनेन पारिभाषिकत्वमयोगस्य दर्शयति। मदनादिभिर्वामयेत् वमनायोगे; तीक्ष्णतरकषायैर्विरेचयेद् विरेचनायोगे। तत्र बलक्षयाध्मानादिकं सर्व्वथाऽप्रवृत्तयोर्वमनविरेचनयोः सामान्यकार्य्यलिङ्गम्। चिकित्सितमभिधाय तेन चिकित्सितेनोत्पन्नैर्हृल्लासप्रसेकाल्पविट्प्रवृत्तिनाभ्यधोगौरवादिभिरनुमितयोर्वमनविरेचनायोगयोः पृथक् लिङ्गं चिकित्सितञ्चाह—दुर्व्वान्तस्येत्यादि। कण्ड्वादिदुर्व्वान्तलिङ्गिनं वातपूर्णोदरादिदुर्व्विरिक्तलिङ्गिनञ्चास्थाप्य निरूह्य संस्नेह्य स्नेहवस्तिना, ततस्तीक्ष्णेन निरूहणेन विरेचनेन च विरेचयेत्। अत्रायोगप्रसङ्गेनाल्पदोषप्रहृतत्वेन च प्रवर्त्तनोपायं दर्शयन्नाह—नेत्यादि। तथाल्पप्रवृत्तौ द्वितीयं करणीयं दर्शयन्नाह—अनुप्रवृत्तेत्यादि। जीर्णौषधं प्रभूतदोषं पुरुषं तथा देहस्य बलञ्च वीक्ष्य द्वितीयौषधं विदध्यात्। अल्पदोषप्रवृत्तौ तदहरेव भेषजमभिधाय सर्व्वथा दोषाप्रवृत्तौ विधिमाह—अप्रवृत्तदोषमित्यादि। पथ्याहारस्नेहादिना दशरात्रादूर्द्ध्वं वमनविरेचनाभ्यां शोधयेत्॥ ८॥

दुर्व्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत्। ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति, तस्मादेते दुर्व्विरेच्या बहुवातत्वात्। अतएव तानतिस्निग्धान् स्वेदोपपन्नान् शोधयेत्॥ ९॥

स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वातितीक्ष्णमधिकं वा दत्तमौषधमतियोगं कुर्य्यात्। तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविस्रंसो वातकोपश्च बलवान् भवति। तं घृतेनाभ्यज्यावगाह्य शीतास्वप्सु * शर्करामधुमिश्रैर्लेहैरुपचरेत यथास्वम्। विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालञ्च सरक्तस्य; तत्रापि बलविस्रंसो वातकोपश्च बलवान् भवति। तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्दयेत्, पिच्छावस्तिश्चास्मै दद्यात्, क्षीरसर्पिषा चैनमनुवासयेत्, प्रियङ्ग्वादिश्चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत्, क्षीररसयोश्चान्यतरेण भोजयेत्॥ १०॥

तस्मिन्नेव वमनातियोगे प्रवृद्धे शोणितं ष्ठीवति छर्दयति वा; तत्र जिह्वानिःसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञ्यमित्युपद्रवा भवन्ति। तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पाययेत्।

सुखविरेच्यस्य क्रियामभिधाय दुर्व्विरेच्यस्याह—दुर्व्विरेच्यमित्यादि। स्वभावाद् दुर्व्विरेच्यान् निर्दिश्य हेतुविशेषं दुर्व्विरेचने निर्दिशन्नाह—ह्रीभयेत्यादि। तत्र ह्रिया लज्जया वेगाघातशीलाः स्त्रियः, भयेन राजसमीपस्थाः, लोभेन वणिजः श्रोत्रियाश्च, तस्मात् तानतिस्निग्धान् शोधयेत्॥ ९॥

इदानीमतियोगव्यापदं दर्शयन्नाह—स्निग्धेत्यादि। बलविस्रंसः शक्तिविस्रंसः। यथास्वमिति यस्य यदात्मीयं तद् यथास्वम्; तेन लाजशक्तूपकल्पितैः क्वचिच्छर्करामिश्रैः क्वचिन्मधुमिश्रैरित्यर्थः। पिच्छावस्तिर्वक्ष्यमाणः। क्षीरसर्पिषा क्षीराक्तेन घृतेन। तण्डुलाम्बुमधुच्छर्दनमधः प्रवृत्तस्य श्लेष्मणः प्रतिबन्धार्थं, पिच्छावस्तिप्रयोगो रक्तपित्तातिप्रवृत्तिपरिहाराय, क्षीरसर्पिषा अनुवासनं वातप्रतिबन्धाय, तण्डुलाम्बुना सह प्रियङ्ग्वादिप्रयोगः कर्षप्रमाणः संग्रहणाय, क्षीररसैश्च भोजनं बलप्रतिलम्भाय। गयी तु पिच्छावस्तिश्चास्मै दद्यादित्यनन्तरं पिच्छावस्त्यङ्गत्वेन क्षीररसाभ्यां चैनमिति पाठं पठति॥ १०॥

इदानीं तयोर्वमनविरेकातियोगयोरुत्तमावस्थाजीवादानव्यापदं कष्टचिकित्सितार्थमाह—तस्मिन्नेवेत्यादि। जिह्वाया निःसरणमपसर्पणं जिह्वानिःसरणं, अथवा जिह्वाया बहिर्निर्गमनं बहिर्गतिरन्तरप्रवेश इत्यर्थः। अक्ष्णोर्व्यावृत्तिश्चक्षुषोरुद्वृत्तिः। हनुसंहननं हनुसंहतिः सरणाभाव इत्यर्थः। तमित्यादि। तं वमनातियोगप्रवृत्तशोणितं छागरुधिरादिभिः प्लुतं मन्थं पाययेत्।

* तमभ्यज्य शीताम्बुभिः इति क्वचित् पाठः।

फलरसैर्वा सघृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां वर्चोग्राहिभिर्वा पयसा जाङ्गलरसेन वा भोजयेत्, अतिस्रुतशोणितविधानेनोपचरेत्। जिह्वामतिसर्पितां त्रिकटुलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वान्तः पीड़येत्। प्रविष्टायामम्लमन्ये तस्य पुरस्तात् खादयेयुः। व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीड़येत्। हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात्। तृष्णादिषु च यथास्वं प्रतिकुर्व्वीत। विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत्॥ ११। १२॥

विरेचनातियोगे च सचन्द्रकं सलिलमधः स्रवति। ततो मांसधावनप्रकाशमुत्तरकालं जीवशोणितञ्च। ततो गुदनिःसरणं वेपथुर्वमनातियोगोपद्रवाश्चास्य भवन्ति। तत्रापि निःस्रुतशोणितविधानेनोपचरेत्। निःसर्पितगुदस्य गुदमभ्यज्य परिस्वेद्यान्तः पीड़येत्, क्षुद्ररोगचिकित्सितं वा वीक्षेत। वेपथौ वातव्याधिविधानं कुर्व्वीत। जिह्वानिःसरणादिषूक्तः प्रतीकारः। अतिप्रवृत्ते वा जीवशोणिते काश्मरीफलबदरीदूर्व्वोशीरैः शृतेन पयसा घृतमण्डाञ्जनयुक्तेन सुशीतेनास्थापयेत्। न्यग्रोधादिकषायक्षीरेक्षुरसघृतशोणितसंसृष्टैश्चैनं वस्तिभिरुपाचरेत्। शोणितष्ठीवने रक्तपित्तरक्तातीसारक्रियाश्चास्य विदध्यात्। न्यग्रोधादिश्चास्य विदध्यात् पानभोजनेषु॥ १३॥

फलरसैर्वेति दाड़िमीफलरसैः। जाङ्गलरसेनेति वातप्रकृतिमिति शेषः। अन्तःप्रविष्टायां जिह्वायामम्लफलमन्ये तस्य पुरस्तात् खादयेयुरिति एतद्दर्शनात् मुखप्रसेकेन मृदुभूता जिह्वा यथास्थानमागच्छति॥ ११। १२॥

विरेचनातियोगे चेत्यादि। चन्द्रकं मयूरपिच्छचन्द्रकाकारम्। जीवशोणितं शरीरेन्द्रियसत्त्वात्मसंयोगाश्रयं रक्तम्। शोणितप्रवृत्तिर्वमनविरेचनातियोगे सामान्यम्; भेदस्तु जिह्वानिःसरणस्थानेऽत्र गुदनिःसरणम्, तथा अक्ष्णोर्व्यावृत्तिर्मनागपि नास्ति किन्त्वन्तःप्रवेश एव भवति, नास्ति चाप्रत्यासत्त्या हनुसंहननं हिक्कोद्गारौ चेति गयदासाचार्य्यः; जेज्जटाचार्य्यस्तु जिह्वानिःसर्पणं परित्यज्यान्ये प्रवृद्धवमनातियोगोक्ता उपद्रवा भवन्तीति व्याख्यानयति। वेपथुः कम्पः। वमनातियोगोपद्रवा इत्यादि। सर्व्वाङ्गप्रवृत्तद्रव(रस)धातुक्षयेण वातकृता वमनातियोगोपद्रवा जिह्वानिःसर्पणाक्षिव्यावृत्तिबलविभ्रंशवातकोपतृष्णादयः। जिह्वानिःसरणादिष्विति। जिह्वानिःसरणमत्रोपलक्षणम्, तेन जिह्वानिःसरणादिविरेचनातियोगोत्पन्नेषु वमनातियोगोक्तः प्रतीकार इति जेज्जटाचार्य्यः। गयी तु जिह्वानिःसर्पणादयो वमनातियोगे एव भवन्तीति प्रतिपादयितुकामस्तेषु चिकित्सितमभिहितमेवेति प्रतिपादयति—जिह्वानिःसर्पणादिष्वित्यादिना। उक्तः प्रतीकार इति वमनातियोगे इत्यर्थः। फलं मदनफलम्, घृतमण्डो घृतस्य स्त्यानस्योपर्य्यच्छो भागः। अञ्जनं स्रोतोऽञ्जनम्। वस्तिकल्पना चात्र सामान्यनिरूहकल्पेन। विरेचनातियोगे जीवशोणितातिप्र-

जीवशोणितरक्तपित्तयोश्च जिज्ञासार्थं तस्मिन् पिचुं प्लोतं वा क्षिपेत् । यदुष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति तज्जीवशोणितमवगन्तव्यम् । सभक्तञ्च शुने दद्यात् सक्तुसंमिश्रं वा, स यदुपभुञ्जीत तज्जीवशोणितमवगन्तव्यम्, अन्यथा रक्तपित्तमिति ॥ १४ ॥

सशेषान्नेन वहुदोषेण रूक्षेणानिलप्रायकोष्ठेनानुष्णमस्निग्धं वा पीतमौषधमाध्मापयति । तत्रानिलमूत्रपुरीषसङ्गः समुन्नद्धोदरता पार्श्वभङ्गो गुदवस्तिनिस्तोदनं भक्तारुचिश्च भवति, तच्चाध्मानमित्याचक्षते ; तमुपस्वेदानाहवर्त्तिदीपनवस्तिक्रियाभिरुपचरेत् ॥ १५ ॥

क्षामेणातिमृदुकोष्ठेन मन्दाग्निना रूक्षेण वाऽतितीक्ष्णोष्णातिलवणमतिरूक्षं वा पीतमौषधं पित्तानिलौ प्रदूष्य परिकर्त्तिकामापादयति । तत्र गुदनाभिमेढ्रवस्तिशिरःसु सदाहं परिकर्त्तनमनिलसङ्गो वायुविष्टम्भो भक्तारुचिश्च भवति । तत्र पिच्छावस्तिर्यष्टिमधुककृष्णतिलकल्कमधुघृतयुक्तः । शीताम्बुपरिषिक्तञ्चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टिमधुकसिद्धेन तैलेन वानुवासयेत् ॥ १६ ॥

प्रवृत्तौ चिकित्सितमुपदिश्य वमनातियोगेऽपि शोणितनिष्ठीवनादौ तु रक्तातिसाररक्तपित्तक्रियामाह—शोणितेत्यादि । पानभोजनसंस्कारे चास्य न्यग्रोधादिं पड्ङ्गोदककल्पेन ॥ १३ ॥

तस्मिन् तेजःप्रवृत्ते धातुद्रवे पिचुमर्कतूलकं, प्लोतं वस्त्रं शुक्लं क्षिपेत्, तद् यदि शुक्लमुष्णोदकप्रक्षालितं रागरहितं भवेत् तदा जीवशोणितं विवर्णं च रक्तपित्तमिति । वमनविरेचनजीवादानयोः पुनः क्रियां निर्द्दिशन्नाह—'तयोश्च पित्तक्रियां कुर्व्वीत, वमनजीवादाने तु स्नुतशोणितविधावनादिशोणिततुल्यं तथेदानीं रक्तातिसारक्रियाभिर्वा' इति । अयं पाठोऽभावान्न लिखितः ॥ १४ ॥

जीवादानव्यापदमभिधाय द्वयोरपि शुद्ध्योराध्मानाख्यामुपदिशन्नाह—सशेषान्नेनेत्यादि । समुन्नद्धोदरतेति वमनकृतं समुन्नद्धोदरत्वमामाशये, तथा विरेचनकृतं पक्वाशये गुदवस्तिमात्रपरितोदनम्, तत्र स्वेदनमूत्राद्यनुलोमनलङ्घनदीपनक्रियाश्चेति चिकित्सितम् ॥ १५ ॥

परिकर्त्तिकाव्यापदं दर्शयन्नाह—क्षामेणेत्यादि । क्षामः क्षीणबलकायः । परि सर्व्वतोभावेन कृन्ततीव छिनत्तीव वस्त्यादीनीति परिकर्त्तिका । तत्र पित्तोल्वणपरिकर्त्तिकायां घृतमण्डेनानुवासनम्, वातोल्वणायान्तु तैलेनेति । वमने पुनः कण्ठोरसि सदाहपरिकर्त्तनम् ; तत्र घृतमधुमधुरैः सशीतैश्चोपचारः पयःसिताभोजनम् ॥ १६ ॥

क्रूरकोष्ठस्यातिप्रभूतदोषस्य मृद्वौषधमवचारितं समुत्क्लिश्य दोषान् न निःशेषानपहरति, ततस्ते दोषाः परिस्रावमापादयन्ति। तत्र दौर्ब्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति। सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतः, तं परिस्रावमित्याचक्षते, तमजकर्णधवतिनिशपलाशबलाकषायैर्मधुसंयुक्तैरास्थापयेत्। उपशान्तदोषं स्निग्धञ्च भूयः संशोधयेत्॥ १७॥

अतिरूक्षेऽतिस्निग्धे वा भेषजमवचारितमप्राप्तं वा वातवर्च्च उदीरयति वेगाघातेन वा, तदा प्रवाहिका भवति। तत्र सवातं सदाहं सशूलं गुरु पिच्छिलं श्वेतं कृष्णं सरक्तं वा भृशं प्रवाहमाणः कफमुपविशति, तां परिस्रावविधानेनोपचरेत्॥ १८॥

यस्तूर्द्धमधो वा भेषजवेगं प्रवृत्तमज्ञानाद् विनिहन्ति, तस्योपसरणं हृदि कुर्व्वन्ति दोषाः। तत्र प्रधानमर्म्मसन्तापाद् वेदनाभिरत्यर्थं पीड्यमानो दन्तान् किट्किटायते, उद्गताक्षो जिह्वां खादति, प्रताम्यत्यचेताश्च भवति, तं परिवर्ज्जयन्ति मूर्खाः; तमभ्यज्य धान्यस्वेदेन स्वेदयेत्, यष्टिमधुकसिद्धेन च तैलेनानुवासयेत्। शिरोविरेचनञ्चास्मै तीक्ष्णं विदध्यात्। ततो यष्टिमधुकमिश्रेण तण्डुलाम्बुना च्छर्द्दयेत्, यथादोषोच्छ्रायेण चैनं वस्तिभिरुपाचरेत्॥ १९॥

परिस्रावाख्यां व्यापदं दर्शयन्नाह—क्रूरेत्यादि। अजकर्णः अश्वकर्णः प्रसिद्ध एव पूर्व्वदेशे, धवः इन्द्रवृक्षः। तिनिशः स्यन्दनः। उपशान्तदोषमिति उपशान्तपरिस्रावम्। भूयः पुनरपि स्निग्धं तीक्ष्णैः संशोधनैः संशोधयेत्। वमने पुनरूर्द्ध्वं कफप्रसेकः। तस्माध्याहारेणोपशान्तदोषं सुस्निग्धस्विन्नं मृदुना अल्पेन वमनेन यथायोगं वामयेत्। गयी तु उपशान्तदोषमिति रूक्षस्निग्धकोष्ठं संशमनपाचनाभ्यां शमितोत्क्लिष्टदोषमास्थापयेत् शोधयेद् वेति व्याख्याति॥ १७॥

प्रवाहिकाख्यां त्रयोदशीं व्यापदं दर्शयन्नाह—अतिरूक्ष इत्यादि। अतिरूक्षे पुरुषे भेषजमवचारितमप्राप्तवेगमेव वातवर्च्चं उदीरयति प्रवर्त्तयति यदा तदा प्रवाहिका; अतिस्निग्धे पुरुषे भेषजमवचारितं यदा तदा वेगाघातेन प्रवाहिका भवतीत्यर्थः। उपविशति अतिसारयति। परिस्रावविधानेनेत्यादि तत्रातिरूक्षजां क्रूरकोष्ठविधानेन, अतिस्निग्धजां मृदुकोष्ठप्रचुरदोषपरिस्रावोक्तपाचनादिविधानेन॥ १८॥

हृदयोपसरणाख्यां चतुर्द्दशीं व्यापदं दर्शयन्नाह—य इत्यादि। वान्तविरिक्तस्य वा पुनर्व्वेगनिग्रहाद् वा वायुः रुद्धः श्लेष्मणा वा, विशुद्धदेहस्याङ्गप्रग्रहमापादयति। तस्य स्तम्भवेपथुनिस्तोदावसादाक्षविद्वेषाधिमन्थपरीतस्य स्वेदाद्यनिलहरं कर्म्म कुर्व्वीत। प्रधानमर्म्मसन्तपाद् हृदयसन्तापात्। प्रताम्यति मुह्यति। अचेताः नष्टसंज्ञः। परिवर्ज्जयन्ति मूर्खाः कुवैद्याः मुमूर्षतीति हेतोः। यष्टिमधुकमिश्रेण तण्डुलाम्बुना पित्तमूर्च्छार्त्तं छर्द्दयेत्। कफमूर्च्छायान्तु कटुकद्रव्याणां क्वाथेन वामयेत्। वस्तिभिरिति नैरूहिकैः स्नैहिकैश्च॥ १९॥

यस्तूर्द्ध्वमधो वा प्रवृत्तदोषः शीतागारमुदकमनिलमन्यद् वा सेवेत, तस्य दोषाः स्रोतःस्ववलीयमाना घनीभावमापन्ना वातमूत्रशकृद्ग्रहमापाद्य विबध्यन्ते। तस्याटोपो दाहो ज्वरो वेदनाश्च तीव्रा भवन्ति ; तमाशु वामयित्वा प्राप्तकालां क्रियां कुर्व्वीत। अधोभागे त्वधोभागहरद्रव्यसैन्धवाम्लमूत्रसंसृष्टं विरेचनं पाययेत्, आस्थापनमनुवासनञ्च यथादोषं विदध्यात, यथादोषमाहारक्रमञ्च। उभयतोभागे तूपद्रवविशेषान् यथास्वं प्रतिकुर्व्वीत॥ २०॥

या तु विरेचने गुदपरिकर्त्तिका तद् वमने कण्ठक्षणनम्, यदधः परिस्रवणं स ऊर्द्ध्वभागे श्लेष्मप्रसेकः। या त्वधः प्रवाहिका सा तूर्द्ध्वं शुष्कोद्गारा इति॥ २१॥

भवति चात्र

यास्त्वेता व्यापदः प्रोक्ता दश पञ्च च तत्त्वतः।
एता विरेकातियोग-दुर्य्योगायोगजाः स्मृताः॥ २२॥

इति सुश्रुतसंहितायां चिकित्सितस्थाने वमनविरेचनव्यापच्चिकित्सितं नाम चतुस्त्रिंशोऽध्यायः॥३४॥

विबन्धाख्यव्यापदं पञ्चदशीं दर्शयन्नाह—य इत्यादि। विबध्यन्ते वमनविरेचनयोः प्रवृत्तिं निवारयन्तीत्यर्थः। प्राप्तकालां प्राप्तावस्थां क्रियां कुर्व्वीत। अधोभागे इत्यादि। विरेचने तु विबन्धे अधोभागहरद्रव्यं त्रिवृदादि सैन्धवादिसंसृष्टं विरेकार्थं पाययेत्। यथादोषमेव यूषक्षीररसाद्या-हारक्रमश्च। किं बहुना उभयतो भागे तु उपद्रवविशेषान् यथास्वं प्रतिकुर्व्वीत। गयी तु अप्रवृत्तदोषः अप्रच्युतदोष इति कृत्वा व्याख्याति॥ २०॥

तास्वपि कासुचिदेवान्तरमिति तदुपदर्शयन्नाह—या त्वित्यादि॥ २१॥

इदानीं श्लोकसंग्रहमाह—भवति चात्र यास्त्वेता इत्यादि। तत्त्वतः परमार्थतः। विरेकोऽत्र दोषमलविरेचनाद् विरेचनं वमनञ्च। जेज्जटाचार्य्यस्तु विपाकातियोगेत्यादि पठित्वा व्याख्यानयति —विषमः पाकः अनिष्टं फलं येषां ते विपाकाः, विपाकाश्च ते अतियोगदुर्य्योगायोगाश्च तेभ्यो जायन्ते ते तथा। तत्रातियोजनमतियोग अतिप्रयोग इति यावत् ; तज्जाते द्वे व्यापदौ जीवादानमति-योगश्चेति। दुर्योजनं दुर्योगः दुष्प्रयोगो मिथ्याप्रयोग इति यावत्; तत्र वैद्यदुर्योगनिमित्ताश्चत्वारः—वमनमिथ्याप्रयोगो विरेचनमिथ्याप्रयोग आध्मानं परिकर्त्तिका चेति। आतुरदुर्योगनिमित्ते द्वे—हृदयोपसरणविबन्धाविति। उभयदुर्योगजेऽपि द्वे—प्रवाहिका वातशूलञ्चेति। अयोजनमयोगः हीनप्रयोगः, नञ ईषदर्थत्वात्। तत्रायोगजाः पञ्च— सावशेषौषधत्वं, जीर्णौषधता, हीनदोषहृतत्वम्, अयोगः, परिस्रावश्चेति। ता एता वैद्यातुरनिमित्ताः, आतुरनिमित्ताः, वैद्यनिमित्ताश्चेति त्रिविधाः। अन्ये तु तन्त्रान्तरदर्शनादयोगातियोगजाः सर्व्वा अपि व्यापदो यथासंख्यं मन्यन्ते, तत्रायोगजा दश, तद्यथा—सावशेषौषधत्वम्, जीर्णौषधत्वम्, अल्पदोषहृतत्वम्, विबन्धः, वातशूलम्, आध्मानम्, परिस्रावः, प्रवाहिका, हृदयोपसरणम्, अयोगश्चेति ; अतियोगजाश्च तिस्रः—जीवादानं, परिकर्त्तिका, अतियोगश्चेति ; अयोगातियोगौ च हेतुत्वेनोक्तावित्येवं पञ्चदश॥ २२॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
वमनविरेचनव्यापच्चिकित्सितव्याख्यानाम चतुस्त्रिंशोऽध्यायः॥ ३४॥

---

# पञ्चत्रिंशोऽध्यायः ।

अथातो नेत्रवस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

तत्र स्नेहादीनां कर्म्मणां वस्तिकर्म्म प्रधानतममाहुराचार्य्याः। कस्मात्? अनेककर्म्मकरत्वाद् वस्तेः। इह खलु वस्तिर्नानाविधद्रव्यसंयोगाद् दोषाणां संशोधनसंशमनसंग्रहणानि करोति, क्षीणशुक्रं वाजीकरोति, कृशं बृंहयति, स्थूलं कर्शयति, चक्षुः प्रीणयति, वलीपलितमपहन्ति, वयः स्थापयति।

शरीरोपचयं वर्णं बलमारोग्यमायुषः।
करोति परिवृद्धिश्च वस्तिः सम्यगुपासितः ॥

तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्दिताक्षेपकपक्षाघातैकाङ्ग-सर्व्वाङ्गरोगाध्मानोदर-योनिशूल-शर्कराशूलवृद्ध्युपदंशानाह-मूत्रकृच्छ्रगुल्मवात-शोणित-वातमूत्रपुरीषोदावर्त्त-शुक्रार्त्तवस्तन्यनाश-हृद्ग्रहमन्याग्रहार्शोऽश्मरीमूढ़-गर्भप्रभृतिषु चात्यर्थमुपयुज्यते ॥ २ ॥

भवति चात्र

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते।
संसर्गे सन्निपाते च वस्तिरेव हितः सदा ॥ ३ ॥

नेत्रं यन्त्रम्, वस्तिरेणादीनां मूत्राधारः, तदाधेयं द्रव्यमपि; तयोः प्रमाणं प्रविभागश्च स एव चिकित्सितं व्याधेः प्रतीकारो यस्मिन् तत्। वस्तिकर्म्म तु मूत्राधारपुटकेन साध्यं कर्म्म। वस्तिशब्दो हि सामान्यो निरूहे स्नेहवस्तौ च। वमनविरेचने तु प्रधानतरे, वस्तिकर्म्म तु प्रधानतमम्। संग्रहणानीति दोषाणामेवातिप्रवर्त्तमानानामित्यर्थः। क्षीणशुक्रं वाजीकरोति। अनेन अश्व इव बलकारिणी हर्षजा शक्तिरुक्ता, कृशं बृंहयति इत्युपचयलक्षणा शक्तिरुक्ता; वयः स्थापयतीत्यनेन आयुर्वृद्धिकरत्वं सूचयति। एतदेव प्रधानतमत्वसाधनं श्लोकेनापि दर्शयन्नाह— शरीरोपचयमित्यादि। अनेकव्याधिनिर्घातकत्वं दर्शयन्नाह— तथा ज्वरातीसारेत्यादि। ज्वरादिषु चावस्थाविशेषो वस्तेर्विषयः, स च शास्त्रादेव ज्ञेयः। दोषकार्य्ये ज्वरादौ वस्तिप्रयोगमभिधाय ज्वरादिकारणे दोषेऽपि वस्तेर्हितत्वं दर्शयन्नाह—भवति चात्रेत्यादि। संसर्गो दोषद्वयप्रकोपः, प्रकृति-समसमवेतज्वराद्यारम्भकदोषत्रयप्रकोपः सन्निपातोऽत्राभिप्रेतः ॥ १—३ ॥

तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहानि अग्रेऽध्यर्द्धाङ्गुलद्व्यङ्गुलार्द्धतृतीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनबर्हिणपक्षनाड़ीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यात् नेत्राणि। तेषु त्वास्थापनद्रव्यप्रमाणमातुरहस्तसम्मितेन प्रसृतेन सम्मितौ प्रसृतौ द्वौ चत्वारोऽष्टौ च विधेयाः ॥ ४ ॥

भवति चात्र

वर्षान्तरेषु नेत्राणां वस्तिमानस्य चैव हि ।
वयोबलशरीराणि समीक्ष्य वर्द्धयेद् विधिम् ॥ ५ ॥

पञ्चविंशतेरूर्द्ध्वं द्वादशाङ्गुलम् मूलेऽङ्गुष्ठोदरपरीणाहम् अग्रे कनिष्ठिकोदरपरीणाहम् अग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं गृध्रपक्षनाड़ीतुल्यप्रवेशं कोलास्थिमात्रच्छिद्रं क्लिन्नकलायमात्रच्छिद्रमित्येके। सर्व्वाणि मूले वस्तिनिबन्धनार्थं द्विकर्णिकानि, आस्थापनद्रव्यप्रमाणन्तु विहिता द्वादश प्रसृताः। सप्ततेस्तूर्द्ध्वं नेत्रप्रमाणमेतदेव, द्रव्यप्रमाणन्तु द्विरष्टवर्षवत् ॥

नेत्रप्रमाणमास्थापनद्रव्यप्रमाणञ्च वयोभेदेन प्रदर्शयितुमाह—तत्र सांवत्सरिकेत्यादि। तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणामित्यत्र यथासंख्यव्याख्यानेन सांवत्सरिकबालस्य निरूहयन्त्रं षड़ङ्गुलप्रमाणम्, तत्कनिष्ठिकापरिणाहं, अग्रेऽध्यर्द्धाङ्गुलसन्निविष्टकर्णिकं, कङ्कपक्षनाड़ीतुल्यप्रवेशं मूले, मुद्गवाहिस्रोतश्चाग्रे विदध्यात्। छत्ताकारा गुदेऽधिकान्तःप्रवेशरोधिनी कर्णिका कथ्यते। कङ्कः वक्रचञ्चुः कृष्णवर्णः प्रसिद्ध एव। अष्टवर्षस्य पुनरष्टाङ्गुलप्रमाणं, तदनामिकापरिणाहम्, अग्रे द्व्यङ्गुलसन्निविष्टकर्णिकं, श्येनपक्षनाड़ीतुल्यप्रवेशं मूले, माषवाहिस्रोतश्चाग्रे विदध्यात्। द्विरष्टवर्षस्य षोड़शवर्षस्येत्यर्थः। किम्भूतं यन्त्रम्? दशाङ्गुलप्रमाणं, तन्मध्याङ्गुलिपरिणाहं, अर्द्धतृतीयाङ्गुलसन्निविष्टकर्णिकम्। बर्हिणो मयूरः, तत्पक्षनाड़ीप्रवेशं मूले, कलायवाहिस्रोतश्चाग्रे विदध्यात्। तेष्विति सांवत्सरिकाष्टद्विरष्टवर्षेषु बालेषु यथासंख्यमातुरहस्तेन द्वौ चत्वारोऽष्टौ च प्रसृता विधेयाः। प्रसृतोऽत्र कुञ्चिताङ्गुलिः पाणिः, न तु पलद्वयमिति गयदासाचार्य्यः। जेज्जटाचार्य्यस्तु आतुरहस्तग्रहणं मध्यमपुरुषहस्तोपलक्षणम्, तेन तत्प्रसृतेन पलद्वयप्रमितेनेति व्याख्यानयति। अत्र मध्यवर्त्तिवर्षाणां नेत्रद्रव्यमानं निर्द्दिशन्नाह—वर्षान्तरेष्वित्यादि। पञ्चविंशतिं यावत्, समीक्ष्य यथायथमभ्यूह्य नेत्रप्रमाणं वस्तिद्रव्यप्रमाणञ्चोत्कर्षयेत् ॥ ४। ५ ॥

पञ्चविंशतेरूर्द्ध्वमित्यादि। गृध्रपक्षनाड़ीतुल्यप्रवेशं मूले, क्लिन्नकलायमात्रच्छिद्रमग्रे, सर्व्वाणि तु मूले वस्तिनिबन्धनार्थं द्विकर्णिकानि द्व्यङ्गुलान्तराणि कुर्य्यात् द्व्यङ्गुलमध्यानीत्यर्थः।

मृदुर्वस्तिः प्रयोक्तव्यो विशेषाद् बालवृद्धयोः।
तयोस्तीक्ष्णः प्रयुक्तस्तु वस्तिर्हिंस्याद् बलायुषी ॥

व्रणनेत्रमष्टाङ्गुलं मुद्गवाहिस्रोतः, व्रणमवेक्ष्य यथास्वं स्नेहकषाय विदधीत ॥ ६ ॥

तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि। वस्तयश्चावन्ध्या * मृदवो नातिबहला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ॥ ७ ॥

नेत्रालाभे हिता नाड़ी नलवंशास्थिसम्भवा।
वस्त्यलाभे हितं चर्म्म सूक्ष्मं वा तान्तवं घनम् ॥ ८ ॥
वस्तिं निरुपदिग्धन्तु शुद्धं सुपरिमार्ज्जितम्।
मृद्वनुद्धतहीनञ्च मुहुः स्नेहविमर्दितम् ॥
नेत्रमूले प्रतिष्ठाप्य न्युब्जन्तु विवृताननम्।
बद्ध्वा लोहेन तप्तेन चर्म्मस्रोतसि निर्दहेत् ॥
परिवर्त्त्य ततो वस्तिं बद्ध्वा गुप्तं निधापयेत्।
आस्थापनञ्च तलञ्च यथावत् तेन दापयेत् ॥ ९ ॥

बालवृद्धयोर्हीनोपचयशक्तिलक्षणबलत्वेनास्थापनस्य मात्राकृतं हीनत्वं प्रदर्श्य तीक्ष्णादिगुणहीनत्वं दर्शयन्नाह—मृदुर्वस्तिः प्रयोक्तव्य इत्यादि। तत्र मृदुद्रव्यकृतो वस्तिर्मृदुः, तीक्ष्णश्च तद्विपर्य्ययः। शल्यतन्त्रत्वादस्य व्रणनेत्रप्रमाणमाह—व्रणनेत्रमष्टाङ्गुलमित्यादि ॥ ६ ॥

तानि च नेत्राणि किम्मयानि किमाकृतीनि वा तदाह—तत्र नेत्राणीत्यादि। रीतिः पित्तलम्। मणिः स्फटिकादिः। श्लक्ष्णानि अकर्कशानि। दृढाणि अजर्ज्जराणि। गुटिकामुखानि अतीक्ष्णाग्राणि। कीदृशा वस्तयश्चावन्ध्या इत्याह—वस्तयश्चाबन्ध्या इत्यादि। नातिबहला नात्युपचिताः, नातिदीर्घा इत्यन्ये। तान्तवं वस्त्रम् ॥ ७। ८ ॥

ग्रहणयोग्यवस्तेः परिकर्म्म बन्धविधिञ्च दर्शयन्नाह—वस्तिं निरुपदिग्धमित्यादि। निरुपदिग्धं मांसासृगुपलेपवर्ज्जितम्। शुद्धं कषायरञ्जितम्। सुपरिमार्ज्जितं सुष्ठु मार्ज्जितम्। अनुद्धतहीनं नाधिकं न हीनम्; एतेनाधेयद्रव्यमानं समीक्ष्याधारभूतस्य वस्तेः प्रमाणं विधेयमित्यर्थः। प्रतिष्ठाप्य संयोज्य। न्युब्जमधोमुखम्। गोमहिषादिवस्तयो निरूहयन्त्रे यथालाभं संयोज्याः, उत्तरवस्तियन्त्रे पुनरजोरभ्रवस्ती एव योजनीयाविति ॥ ९ ॥

* अबन्ध्या इत्यत्र अव्रणानामिति वा पाठः।

तत्र द्विविधो वस्तिः—नैरूहिकः, स्नैहिकश्च। आस्थापनं निरूह इत्यनर्थान्तरम्, तस्य विकल्पो माधुतैलिकः; तस्य पर्य्यायशब्दो यापनो युक्तरथः सिद्धवस्तिरिति। स दोषनिर्हरणाच्छरीररोगहरणाद् वा निरूहः, वयःस्थापनादायुःस्थापनाद् वा आस्थापनम्। माधुतैलिकविधानञ्च निरूहक्रमचिकित्सिते वक्ष्यामः। तत्र यथाप्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवासनः पादाव(प)कृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धार्द्धमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति ॥ १० । ११ ॥

निरूहः शोधनो लेखी स्नैहिको बृंहणो मतः।
निरूहशोधितान् मार्गान् सम्यक् स्नेहोऽनुगच्छति ॥
अपेतसर्व्वदोषासु नाड़ीष्विव वहज्जलम्।
सर्व्वदोषहरश्चासौ शरीरस्य च जीवनः।
तस्माद् विशुद्धदेहस्य स्नेहवस्तिर्विधीयते ॥ १२ ॥

तत्रोन्मादभयशोक पिपासारोचकाजीर्णार्शःपाण्डुरोग-भ्रममदमूर्च्छाच्छर्द्दि-

अनर्थान्तरमिति एकार्थमित्यर्थः। वस्तेर्नैरूहिकस्नैहिकभेदाभ्यां यौ द्वौ विकल्पौ तौ निरूहस्नेहवस्त्याख्यौ, तयोर्नैरूहिकमभिधाय स्नैहिकं वस्तिविकल्पमभिधत्ते—यथेत्यादि। यस्य यत् प्रमाणं यो यो गुणस्ताभ्यां विहितः स्नेहवस्त्याख्योऽनुवासनसंज्ञ इत्यर्थः। यथावयोनिरूहाणामित्यादिना विधास्यमानोऽपि स्नेहवस्तिविकल्पोऽनागतावेक्षणतन्त्रयुक्त्या विहित इति प्रदिष्ट। यथाप्रमाणमित्यनेन सूचितं प्रमाणं प्रकटयन्नाह—पादाव(प)कृष्ट इति। यथावय इत्यादिवक्ष्यमाणवाक्य दर्शनात् आस्थापनस्य पादैस्त्रिभिरवकृष्टो हीनः पादावकृष्टः। अयमर्थः—सांवत्सरिकादि कालापेक्षं यत् प्रकुञ्चादि चतुर्व्विंशतिपलावसानं निरूहप्रमाणं तच्चतुर्थांशेन कर्षमारभ्य षट् पलानि यावदनुवासनस्य प्रमाणमिति। तन्त्रान्तरे च मध्यवयस्कमाश्रित्यानुवासनस्योत्तमादिमात्राभेदेन त्रैविध्यमुक्तम्, यथा—"षट्पली तु भवेच्छ्रेष्ठा मध्यमा त्रिपली भवेत्। कनीयस्यर्द्धपला त्रिधा मात्रानुवासने" इति। तस्यापि विकल्प इत्यादि तस्याप्यनुवासनस्य षट्पलप्रमाणस्यार्द्धार्द्धमात्रावकृष्टः पादावशिष्टोऽध्यर्द्धपलमात्र इत्यर्थः। अपरिहार्य्यः अविद्यमानपरिहरणार्हः। गयी तु यथाप्रमाणविहिताच्च वस्तेः पादांशः स्नेहवस्तिः स्नेहविकल्पोऽर्द्धमात्रापकृष्टोऽनुवासनम्, तस्यापि विकल्पोऽर्द्धमात्रापकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति। एतेन तन्मते षट्पलप्रमाणः स्नेहवस्तिः, तदर्द्धेन पलत्रयप्रमाणमनुवासनं, तस्यार्द्धेन सार्द्धपलप्रमाणो मात्रावस्तिरिति ॥ १० । ११ ॥

फलेनापि तयोर्भेदं दर्शयन्नाह—निरूह इत्यादि। शोधनद्रव्यसंयुक्तः शोधनो निरूहः। सर्व्वनिरूहानुवासनधर्म्मोऽयम्। द्रव्यविशेषसंयोगात् तु क्वचिच्छोधनादीनामुत्कर्षापकर्षौ। जेजटाचार्य्यस्तु स्नेहनो बृंहणो मत इति पठित्वा शोधनादिचतुष्कं निरूहस्य कर्म्मेति वर्णयति। निरूहशोधितमार्गेषु सम्यक् स्नेहवीर्य्यानुसरणं दर्शयन्नाह—निरूहेत्यादि ॥ १२ ॥

कुष्ठमेहोदरस्थौल्य-श्वासकासकण्ठशोष-शोफोपसृष्ट-क्षतक्षीणचतुस्त्रिमासगर्भिणी-दुर्ब्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः ॥ १३ ॥

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः।
अवश्यं स्थापनीयास्ते नानुवास्याः कथञ्चन ॥
असाध्यता विकाराणां स्यादेषामनुवासनात्।
असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत् ॥ १४ ॥
पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्व्वतः।
सम्यक् प्रणिहितो वस्तिः स्थानेष्वेतेषु तिष्ठति ॥
पक्वाशयाद् वस्तिवीर्य्यं खैर्देहमुपसर्पति।
वृक्षमूले निषिक्तानामपां वीर्य्यमिव द्रुमम् ॥

तत्रेत्यादि। भ्रमश्चक्रारूढस्येव भ्रमणम्। मदः पूगफलेनेव मत्तता। मूर्च्छा चेतनाच्युतिः। उपसृष्टशब्दः उन्मादादिभिः शोफान्तैः सह सम्बन्धनीयः। क्षतः क्षतोरस्कः, क्षीणः कृशः। चतुस्त्रिमासगर्भिणीति सप्तमासान् यावद् गर्भिणी। तथाच वाग्भटः—"मासान् सप्त च गर्भिणी"। वातरोगादृते क्षीणा इति क्षीणशब्दस्य पुनरुपादानादतिकृशा वातरोगं विना क्षीणा नानुवास्या इति। उन्मादादिषु सामान्येन वस्तिनिषेधोऽत्राभिहितः; केचित् तु केषाञ्चित् प्रतिप्रसवमपवादरूपेणाहुः। तत्रोन्मादापस्मारभ्रममदमूर्च्छासु संज्ञानाशापगमे शुद्धस्यातुरस्यानुबन्धोपचरणाय वस्तिर्देयः, कुष्ठिनामर्शसाञ्च मृदुवातानां प्रयोज्यः। वाताद्युदरिषु त्रिषु निषिद्धोऽपि शेषेषु पञ्चसु वस्तिः प्रयोक्तव्यः। शोथक्षतोरस्कयोरनुवासननिषेधो न निरूहस्य, वर्षादर्व्वाग् बालस्य, नवत्यूर्द्ध्वं वृद्धस्य मृदुरपि वस्तिर्निषिद्धः। अतोऽन्यथा तीक्ष्ण एव; एतेनावस्थावशात् निषिद्धमपि कार्य्यं स्यात् "उत्पद्यते हि साऽवस्था देशकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म्म कार्य्यञ्च गर्हितम्" इति ॥ १३ ॥

क्वचिदेवास्थापनस्यावस्थायां प्रतिप्रसवमुद्दिशन्नाह—उदरी चेत्यादि। सा चावस्था तन्त्रान्तरादनुसर्त्तव्या। तत्रोदरे वाग्भटः—"सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम्। सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत्" इति। एवं प्रमेहादिषु चिकित्सितमालोक्यास्थापनावस्था ज्ञातव्या। निषिद्धाचरणदोषमुद्दिशन्नाह—असाध्यतेत्यादि। एषां विकाराणामुदरादीनाम्। गात्रसदनमङ्गग्लानिः ॥ १४ ॥

सम्यक् प्रवृत्तो वस्तिर्येषु स्थानेष्ववतिष्ठते तानाह—पक्वाशये इत्यादि। कथं तर्हि पक्वाशयादिमात्रगतो वस्तिः क्वचित् सर्व्वेषामवयवानामवसादं, क्वचित् सर्व्वाङ्गगतानां दोषाणां हरणं शमनञ्च जनयतीत्याह—पक्वाशय इत्यादि। पक्वाशयाद् वस्तिवीर्य्यं खैः स्रोतोभिरनुसर्पति कृत्स्न-

स चापि सहसा वस्तिः केवलः समलोऽपि वा।
प्रत्येति त्वनिलर्वीर्य्यमपानाद्यैर्विनीयते॥
वीर्य्येण वस्तिरादत्ते दोषानापादमस्तकात्।
पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव॥
स कटीपृष्ठकोष्ठस्थान् वीर्य्येणालोड्य सञ्चयान्।
उत्खातमूलान् हरति दोषाणां साधुयोजितः॥
दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः।
तस्मात् तस्यातिवृद्धस्य शरीरमभिनिघ्नतः॥
वायोर्विषहते वेगं नान्या वस्तेर्ऋते क्रिया।
पवनाविद्धतोयस्य वेला वेगमिवोदधेः॥
शरीरोपचयं वर्णं वलमारोग्यमायुषः।
कुरुते परिवृद्धिश्च वस्तिः सम्यगुपासितः॥ १५॥

अत ऊर्द्ध्वं व्यापदो वक्ष्यामः। तत्र नेत्रं विचलितं विवर्त्तितं पार्श्वावपीड़ितम् अत्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तमिति षट् प्रणिधानदोषाः। अतिस्थूलं कर्कशम् अवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्रस्वम् अस्रिमदित्येकादश नेत्रदोषाः। वहलताल्पता सच्छिद्रता प्रस्तीर्णता दुर्व्वद्धतेति पञ्च वस्तिदोषाः। अतिपीड़िततता शिथिलपीड़िततता भूयोभूयोऽवपीड़नं कालातिक्रम इति चत्वारः पीड़नदोषाः। आमता हीनतातिमात्रतातिशीततात्युष्णताति-

देहे, वीर्य्यं, शक्तिः, प्रभाव इत्यनर्थान्तरम्। तिष्ठंस्तावद् वस्तिर्गुणकारी भवतु कथं निर्गतोऽपि तादृशः स्यादित्याह—स चापीत्यादि। प्रत्येति प्रत्यागच्छति। वीर्य्यं स्नेहादिगुणः। अपानाद्यैरिति आद्यपदेन उदानादयो बोद्धव्याः। अपानेनाधः, उदानेनोर्द्ध्वम्, व्यानेन सर्व्वत्र, विनीयते विशेषेण सर्व्वशरीरावयवेषु नीयते। सकलावयवगतदोषहरणं वस्तेरेकस्थानस्थितस्योपमानेन दर्शयन्नाह—वीर्य्येणेत्यादि। अन्ये तत्रामुं श्लोकं न पठन्ति। दोषत्रयस्येत्यादि। यथा उदधेः समुद्रस्य पवनाविद्धतोयस्य अनिलेनाभुग्नसलिलस्य, वेला कूलमर्य्यादा वेगं विषहते विशेषेण सहते॥ १५॥

विचलितं विशेषेण कम्पितम्। विवर्त्तितं प्रविष्टमेव मोटितम्। पार्श्वावपीड़ितं पार्श्वयोर्वामदक्षिणयोरवपीड़नम्। अत्युत्क्षिप्तमतिशयेनोर्द्ध्वं प्रेरितम्। अवसन्नमधोभागगतिकम्। प्रणिधानदोषा दानदोषाः। सूक्ष्मातिच्छिद्रं सूक्ष्ममुखं, वृहन्मुखञ्चेत्यर्थः। अस्रिमदिति अस्रिः कोटिः पालिरित्यर्थः, धारायुक्तमित्यन्ये। बहलता मांसोपचितत्वम्, अन्ये विपुलतामाहुः। प्रस्तीर्णता स्नायुजालत्वम्। कालातिक्रम इति कालस्यातिद्रुतविलम्बितस्यातिक्रमो विलम्बितदानेनोल्लङ्घनम्। तत्रातिशिथिलपीड़ने सम्यक् पीड़नकालस्येषदतिक्रमः। कालातिक्रमे च सम्यक्पीड़नकालस्य

तीक्ष्णतातिमृदुतातिस्निग्धतातिरुक्षतातिसान्द्रतातिद्रवता इत्येकादश द्रव्यदोषाः, अवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थितदक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषाः। एवमेताश्चतुश्चत्वारिंशद् व्यापदो वैद्यनिमित्ताः। आतुरनिमित्ताः पञ्चदश आतुरोपद्रवचिकित्सिते वक्ष्यन्ते॥ १६॥

स्नेहस्त्वष्टाभिः कारणैः प्रतिहतो न प्रत्यागच्छति—त्रिभिर्दोषैः अशनाभिभूतो मलव्यामिश्रो दूरानुप्रविष्टोऽस्विन्नस्यानुष्णोऽल्पोऽभुक्तवतोऽल्पाशनस्य चेति वैद्यातुरनिमित्ता भवन्ति। अयोगस्तूभयोराध्मानं परिकर्त्तिका परिस्रावः प्रवाहिका हृदयोपसरणमङ्गग्रहोऽतियोगो जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति॥ १७॥

भवति चात्र

षट्सप्ततिः समासेन व्यापदः परिकीर्त्तिताः।
तासां वक्ष्यामि विज्ञानं सिद्धिञ्च तदनन्तरम्॥ १८॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने नेत्रवस्तिप्रमाणप्रविभागचिकित्सितं नाम पञ्चत्रिंशोऽध्यायः॥ ३५॥

महानतिक्रम इति भेदः। आमतेत्यादि। आमः अपक्वस्नेहः। एकादश द्रव्यदोषा यथासम्भवं स्नेहवस्तिनिरूहोभयाश्रिता ज्ञातव्याः। अवाक्शीर्षेत्यादि। अवाक्शीर्षं अधोमस्तकः। उच्छीर्षकः ऊर्द्ध्वमस्तकः। न्युब्जः अधोमुखः। स्थित उपविष्टः। अवाक्शीर्षादयः सप्त शय्यास्थितपुरुषस्य दोषाः, उपचारेण शय्यायाः प्रतिपाद्यन्ते॥ १६॥

स्नेह इत्यादि। उभयोरिति निरूहानुवासनयोः। एतदुक्तं भवति—अयोगादिव्यापत्सु काश्चिद् निरूहाश्रिताः काश्चिद् व्यापदोऽनुवासनाश्रयाः, काश्चिदुभयाश्रिता इति॥ १७॥

विज्ञानम् लक्षणम्। सिद्धिं चिकित्सितम्॥ १८॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे नेत्रवस्तिप्रमाणप्रविभागचिकित्सितव्याख्यानाम पञ्चत्रिंशोऽध्यायः॥ ३५॥

---

# षट्त्रिंशोऽध्यायः ।

अथातो नेत्रवस्तिव्यापच्चिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

अथ नेत्रे विचलिते तथा चैव विवर्त्तिते ।
गुदे क्षतं रुजा वा स्यात् तत्र सद्यःक्षतक्रियाः ॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा ।
विधिरत्रापि पित्तघ्नः कार्य्यः स्नेहैश्च सेचनम् ॥
तिर्य्यक्प्रणिहिते नेत्रे तथा पार्श्वावपीड़िते ।
मुखस्यावरणाद् वस्तिर्न सम्यक् प्रतिपद्यते ।
ऋजु नेत्रं विधेयं स्यात् तत्र सम्यग्विजानता ॥
अतिस्थूले कर्कशे च नेत्रे चावनते तथा ।
गुदे भवेत् क्षतं रुक् च साधनं पूर्व्ववत् स्मृतम् ॥
आसन्नकर्णिके * नेत्रे भिन्नेऽणौ वाप्यपार्थकः ।
अवसेको भवेद् वस्तेस्तस्माद् दोषान् विवर्ज्जयेत् ॥
प्रकृष्टकर्णिके रक्तं गुदमर्म्मप्रपीड़नात् ।
क्षरत्यत्रापि पित्तघ्नो विधिर्वस्तिश्च पिच्छिलः ॥

नेत्रानन्तरमादिशब्दो लुप्तनिर्द्दिष्टो द्रष्टव्यः ; तेन प्रणिधानद्रव्यशय्याव्यापदोऽपि गृह्यन्ते ॥ १ ॥ नेत्रानन्तरमादिशब्दो लुप्तनिर्द्दिष्टो द्रष्टव्यः ; ... अत्रात्युत्क्षिप्तेऽवसन्ने च नेत्रे अभिघातेन क्षतक्रिया मधुघृताभ्यङ्गाद्याः । अत्युत्क्षिप्त इत्यादि । अत्रात्युत्क्षिप्तेऽवसन्ने च नेत्रे अभिघातेन वातपैत्तिकपायुवेदनायाम् । पित्तघ्न इति मधुरशीतादिः । स्नेहैश्च सेचनमिति घृतादिस्नेहावसेचनम्, तच्च अनिलापहम् । प्रणिधानमभिधाय नेत्रदोषाभिधानमाह—अतिस्थूल इत्यादि । पूर्व्ववत् स्मृतमिति पूर्व्ववच्छब्देन सद्यःक्षतक्रियेत्यर्थः । आसन्नकर्णिके वस्तिरपार्थकः व्यर्थः । भिन्नेऽणौ अणुभिन्ने नेत्रे । अवसेकः क्षरणम् । प्रकृष्टकर्णिकं त्र्यङ्गुलादूर्द्धं चतुरङ्गुले सन्निविष्टकर्णिकम् । तत्सार्शोयन्त्रेण चतुरङ्गुलेन(पञ्चाङ्गुलेन) अन्तःप्रविष्टेन स्थूलाग्रत्वाद् गुदक्षणनं न स्यात्, वस्तियन्त्रेण

* निकृष्टकर्णिके इत्यपि पाठः ।

ह्रस्वे त्वणुस्रोतसि च क्लेशो वस्तिश्च पूर्व्ववत्।
प्रत्यागच्छंस्ततः कुर्य्याद्रोगान् वस्तिविघातजान्।
दीर्घ महास्रोतसि च ज्ञेयमत्यवपीड़वत् ॥ २ ॥
प्रस्तीर्णे बहले चापि वस्तौ दुर्ब्बद्धदोषवत्।
वस्तावल्पेऽल्पता वापि द्रव्यस्याल्पगुणा मताः।
दुर्ब्बद्धे चाणुभिन्ने च विज्ञेयं भिन्ननेत्रवत् ॥ ३ ॥
अतिप्रपीड़ितो वस्तिः प्रयात्यामाशयं ततः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते * ॥
तत्र तूर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम्।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥
शनैः प्रपीड़ितो वस्तिः पक्वाधानं न गच्छति।
न च सम्पादयत्यर्थांस्तस्माद् युक्तं प्रपीड़येत् ॥
भूयोभूयोऽवपीड़ेन वायुरन्तः प्रपीड्यते।
तेनाध्मानं रुजोश्चोग्रा यथास्वं तत्र वस्तयः ॥

पुनस्तीक्ष्णाग्रेण चतुरङ्गुलेन सद्यःप्राणहरगुदमर्म्मं सम्पीड्यते, अतस्तच्चिकित्सितं युक्तम्। ह्रस्वे-प्रमाणहीने। अणुस्रोतसि सूक्ष्मच्छिद्रे। क्लेश इति अणुस्रोतःप्रवाहणोत्पन्नकालातिक्रमेण। वस्तिश्च पूर्व्ववदिति निकृष्टकर्णिके यथाऽपार्थको वस्तिस्तद्वदिति। ह्रस्वत्वाद्धेतोरत्रापि तथा, अतएव हेतोः प्रत्यागच्छन् व्याघुटन् वस्तिविघातजान् रोगान् मूत्राघातमूत्रकृच्छ्रादीन् कुर्य्यात्। चिकित्सितं चानुक्तमपि रोगापेक्षया मूत्राघातादिचिकित्सितम्। जेज्जटाचार्य्यस्तु ईदृशं व्याख्यानयति—पूर्व्ववद् वस्तिः पिच्छावस्तिरित्यर्थः। दीर्घे महास्रोतसि च यन्त्रेऽत्यवपीड़वत् नासामुखान्निर्गमनं, गलपीड़ादि चिकित्सितञ्च ज्ञेयम् ॥ २ ॥

नेत्रदोषं तत्साधनञ्चाभिधाय वस्तिदोषं तच्चिकित्सितञ्चाभिधातुमाह—प्रस्तीर्णे इत्यादि। अल्पे यथोचितप्रमाणहीने। वस्तेरल्पतया च द्रव्यस्याप्यल्पता, अतएव अल्पा गुणाः। भिन्ननेत्रवदिति भिन्ननेत्रेण तुल्यम्, यथा भिन्ने नेत्रे वस्तेरवसेकस्तद्वद् दुर्ब्बद्धे भिन्ने च वस्तावित्यर्थः ॥ ३ ॥

वस्तिदोषानभिधाय पीड़नदोषानभिधातुमाह— अतिप्रपीड़ित इत्यादि। प्रपद्यते निर्गच्छतीत्यर्थः। अवधूननं केशादिषु उत्क्षिप्य चालनम्। सेकांश्च शीतलान् क्षीरेक्षुरसयष्टिमधुककषायधान्याम्लचुक्रादिशीतद्रव्यपरिषेकान्। शनैः पीड़ितः मन्दपीड़ितः। अर्थान् न सम्पादयति कार्य्यं न करोति। अन्तः उदरस्य इति शेषः। तेनेति उदरान्तर्गतेन वायुना। तत्राध्मानं

* छर्द्दिं हृल्लासमूर्च्छादीन् स कुर्य्याद् दाहमेव च इत्यधिकः पाठः क्वचित्।

कालातिक्रमणात् क्लेशो व्याधिश्चाभिप्रवर्द्धते ।
तत्र व्याधिवलघ्नन्तु भूयो वस्तिं निधापयेत् ॥ ४ ॥
गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि ।
तत्र संशोधनो वस्तिर्हितश्चापि विरेचनम् ॥
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ मतौ ।
अतिमात्रौ तथानाह-क्लमातीसारकारकौ ॥
मूर्च्छां दाहमतीसारं पित्तञ्चात्युष्णतीक्ष्णकौ ।
मृदुशीतावुभौ वात-विवन्धाध्मानकारकौ ॥
तत्र हीनादिषु हितः प्रत्यनीकः क्रियाविधिः । *
तत्र सान्द्रे तनुं वस्तिं तनौ सान्द्रञ्च दापयेत् ॥
स्निग्धोऽतिजाड्यकृद्रुक्षः स्तम्भाध्मानकृदुच्यते ।
वस्तिं रुक्षमतिस्निग्धे स्निग्धं रुक्षे च दापयेत् ॥ ५ ॥
अतिपीड़ितवद्दोषान् विद्धि चाप्यवशीर्षके ।
उच्छीर्षके समुन्नाहं वस्तिः कुर्य्याच्च मेहनम् ।
तत्रोत्तरो हितो वस्तिः सुस्विन्नस्य सुखावहः ॥

रुजश्च । यथास्वं वस्तय इति ये यस्यात्मीया वस्तयः प्रतीकारहेतुत्वेन । कालातिक्रमणादित्यादि । व्याधिरभिप्रवर्द्धते इति चिरकालनेत्रावस्थानहेतुकगुदमार्गावरोधत्वेन प्रवृत्त्यभिमुखीभूतवातविघाते· नानुलोमसाध्यो व्याधिः प्रवर्द्धत इत्यर्थः ॥ ४ ॥

पीड़नदोषानभिधाय द्रव्यदोषान् निर्द्दिशन्नाह—गुदोपदेह इत्यादि । उपदेहः उपलेपः । हितश्चापि विरेचनमित्यत्र रूक्षश्चापि विरेचनमिति गयदासः । हीनमात्रावित्यादि । उभौ वस्ती स्नेहवस्तिनिरूहवस्ती । प्रत्यनीक इति हीनमात्रेऽधिकमात्रः, अतिमात्रे हीनमात्रः, तीक्ष्णे मृदुः, मृदौ तीक्ष्णः, उष्णे शीतः, शीते पुनरुष्णः । अतिजाड्यकृदतिशयेन क्लेदकारी ॥ ५ ॥

द्रव्यदोषानभिधाय शय्यादिदोषानभिधातुमाह—अतिपीड़ितवदित्यादि । विद्धि जानीहि । अतिप्रपीड़ितो वस्तिः प्रयात्यामाशयमित्यादिवदित्यर्थः । उच्छीर्षके उच्छ्रितशिरस्के पुरुषे वस्तिर्दत्तः मेहनं मेढ्रं समुन्नाहं सम्यगुन्नाहो यत्र तद् तादृशमाध्मातं कुर्य्यादित्यर्थः । तस्यामापदि सुस्निग्धस्य पुरुषस्योत्तरो वस्तिः हितः सुखावह इति गयी । जेज्जटाचार्य्यस्तु "उच्छीर्षके समुन्नाहं कुर्य्यात् सस्नेहमेहनम् । तत्रोत्तरो हितो वस्तिः सुस्निग्धश्च सुखावहः" इति पठित्वा व्याख्यानयति— सस्नेहमेहनं स्नेहसंसृष्टमूत्रप्रवर्त्तनं ; तत्र प्रतीकार उत्तरो वस्तिरिति सुस्निग्धस्य शोधनो निरूह

* इतःपरम्—गुदवस्त्युपदेहन्तु कुर्य्यात् सान्द्रो निरूहणः ।
प्रवाहिकां वा जनयेत् तनुरल्पगुणावहः ॥ इत्यधिकः पाठः क्वचिद् दृश्यते ।

न्युब्जस्य वस्तिर्नाप्नोति पक्वाधानं विमार्गगः।
हृद्गुदं बाधते चात्र वायुः कोष्ठमथापि च॥
उत्तानस्यावृते मार्गे वस्तिर्नान्तः प्रपद्यते।
नेत्रसंवेजनभ्रान्तो वायुश्चान्तः प्रकुप्यति॥
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा।
न सम्यगनिलाविष्टो वस्तिः प्रत्येति देहिनः॥
स्थितस्य वस्तिर्दत्तस्तु क्षिप्रमायात्यवाङ्मुखः।
न चाशयं तर्पयति तस्मान्नार्थकरो हि सः॥
नाप्नोति वस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुनः।
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो हि सः॥
न्युब्जादीनां प्रदानञ्च वस्तेर्नैव प्रशस्यते।
पश्चादनिलकोपोऽत्र यथास्वं तत्र कारयेत्॥ ६॥
व्यापदः स्नेहवस्तेस्तु वक्ष्यन्तेऽत्र चिकित्सिते।
अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिताः॥ ७॥
अनुष्णोऽल्पौषधो हीनो वस्तिर्नैति प्रयोजितः।
विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते।
तत्र तीक्ष्णो हितो वस्तिस्तीक्ष्णश्चापि विरेचनम्॥ ८॥

इति, न पुनरुत्तरवस्तिरिति। वृद्धसुश्रुते चायं पाठोऽन्यथा, तथाच—"उच्छीर्षके समुन्नाहो वस्तेः कृच्छ्राच्च मेहनम्" इति। न्युब्जस्य पुरुषस्य विमार्गगो वस्तिः पक्वाधानं पक्वाशयं नाप्नोति। हृद्गुदं बाधते वायुः कोष्ठञ्च बाधते इत्यर्थः। उत्तानस्येत्यादि। नेत्रसंवेजनं नेत्रकम्पनम्, तेन भ्रान्तो वायुरित्यर्थः। सक्थ्नोरूर्व्वोर्न प्रत्येति न प्रत्यागच्छति न निष्कासयतीत्यर्थः। अवाङ्मुखः अधोमुखः। दक्षिणाश्रितपार्श्वस्य पुरुषस्य वस्तिर्दत्तः सन् कृत्स्नं पक्वाशयं न प्राप्नोति। कुत इत्याह—यतः पक्वाशयो वामपार्श्वानुगो वामपार्श्वमनुगच्छति। उपसंहारव्याजेन निदानवर्ज्जं चिकित्सितमाह—न्युब्जादीनामित्यादि। अत्रैव दोषसाधनं निर्द्दिशन्नाह - पश्चादनिलकोप इत्यादि। हृदयपृष्ठगुदादिबाधासु तत्तद्व्याध्युपशमनभेषजेनैव साधितेन वस्तिना साध्य इत्यर्थः॥६॥

एवं प्रणिधाननेत्रद्रव्यपीडनशय्यादोपजा वैद्यनिमित्ता एव व्यापदश्चतुश्चत्वारिंशतमभिधाय वैद्यातुरनिमित्ताः स्नेहवस्तिभवाः वक्तुकामः प्राह—व्यापदः स्नेहवस्तेरित्यादि। अयोगादिव्यापदः सचिकित्सिता आह—अयोगेत्यादि॥ ७॥

अल्पौषध इति अल्पानि औषधानि यत्र, एतेनाल्पौषधत्वात्तैक्ष्ण्येन हीनवीर्यत्वमुक्तम्, हीन

सशेषान्ने तथा भुक्ते बहुदोषे च योजितः ।
अत्यशितस्यातिबहुर्वस्तिर्मन्दोष्ण एव च ॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ।
तथा बहुपुरीषश्च क्षिप्रमाध्मापयेन्नरम् ॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ।
तत्र तीक्ष्णतरो वस्तिर्हितश्चाप्यनुवासनम् ॥ ९ ॥
अतितीक्ष्णोष्णलवणो रूक्षो वस्तिः प्रयोजितः ।
सपित्तं कोपयेद् वायुं कुर्य्याच्च परिकर्त्तिकाम् ॥
नाभिवस्तिगुदं तत्र छिनत्तीवाति देहिनः ।
पिच्छावस्तिर्हितस्तत्र स्नेहश्च मधुरैः भृतः ॥ १० ॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते ।
दौर्ब्बल्यमङ्गसादश्च जायते तत्र देहिनः ॥
परिस्रवेत् ततः पित्तं दाहं सञ्जनयेद् गुदे ।
पिच्छावस्तिर्हितस्तत्र वस्तिः क्षीरघृतेन च ॥ ११ ॥
प्रवाहिका भवेत् तीक्ष्णान्निरूहात् सानुवासनात् ।
सदाहशूलं कृच्छ्रेण वासृक् तत्रोपवेश्यते ॥
पिच्छावस्तिर्हितस्तत्र पयसा चैव भोजनम् ।
सर्पिर्मधुरकैः सिद्धं तैलञ्चाप्यनुवासनम् ॥ १२ ॥

इति समुदायस्याल्पमात्रत्वेन । नैति नागच्छति, वस्तिर्विष्टम्भादिभिरुपलक्षितः । तीक्ष्णो हितो वस्तिरित्युपलक्षणम्, तेन पूर्व्वोक्तगुणत्रयविपरीत उष्णो बहुलभेषजो यथोचितप्रमाणो हितः पूजित इत्यर्थः ॥ ८ ॥

सशेषान्ने इत्यादि । सशेषान्नेऽन्नाजीर्णशेषे भुक्त च निरूहवस्तिः, तथा बहुदोषेऽनुष्णलवण-स्नेहो निरूहवस्तिर्योजितो नरमाध्मापयेत्, नत्वनुवासनः, तस्य साम्र एव हितत्वात् । अत्यशितस्य स्नेहवस्तिस्तथा मात्राशितस्यातिबहुर्मन्दोष्णतायुक्तः स्नेहवस्तिराध्मानं जनयेत् । परिस्रावाय कल्पते इति परिस्रावोऽयं केवलपित्तजो न तु वमनविरेचनपरिस्रावबत् कफपित्तसम्भवः । तत्र क्षीरेण भोजनं वातपित्तकफ-पित्तरक्तभूयिष्ठायां सर्पिषा, वातरक्तभूयिष्ठायां तैलेनानुवासनम् । तन्त्रान्तरदर्शनात् । प्रत्यनीकम् । कफसंसर्गे तु कफहरद्रव्यसंस्कृतक्षीरभोजनमिति ज्ञेयम्,

अतितीक्ष्णो निरूहो वा सवाते चानुवासनः।
हृदयस्योपसरणं कुरुते चाङ्गपीड़नम् ॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाङ्गगौरवम्।
सर्व्वदोषहरं वस्तिं शोधनं तत्र दापयेत् ॥ १३ ॥
रुक्षस्य बहुवातस्य तथा दुःशयितस्य च।
वस्तिरङ्गग्रहं कुर्य्याद्रुक्षो मृद्वल्पभेषजः ॥
तत्राङ्गसादः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः।
पर्व्वभेदश्च तत्रेष्टाः स्वेदाभ्यञ्जनवस्तयः ॥ १४ ॥
अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्वेदितस्य च।
अल्पदोषस्य वा वस्तिरतियोगाय कल्पते ॥
विरेचनातियोगेन समानं तच्चिकित्सितम्।
पिच्छावस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥ १५ ॥
अतियोगात् परं यत्र जीवादानं विरिक्तवत्।
देयस्तत्र हितश्चापि पिच्छावस्तिः सशोणितः ॥ १६ ॥
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः।
स्नेहवस्तिष्वपि हि ता विज्ञेया कुशलैरिह ॥ १७ ॥
इत्युक्ता व्यापदः सर्व्वाः सलक्षणचिकित्सिताः।
भिषजा च तथा कार्य्यं यथैता न भवन्ति हि ॥ १८ ॥

रुजस्तास्ताः तोदादयः, ओषचोषादयः कण्ड्वादयश्च। सर्व्वदोषहरमिति सर्व्वदोषहरद्रव्यक्वाथं, गोमूत्रत्रिवृदादिकल्कं शोधनं वस्तिः, शोधनत्वेनोर्द्ध्वगतदोषमधो नयति। सर्व्वदोषहरत्वेन सद्य एव दोषान् दुष्टान् शमयति। रूक्षोऽत्र वातप्रकृतिः। शीतः शीतोपचारश्च सुखावह इत्यर्थः। विरिक्तशब्देनात्र विरेकातियोगोत्पन्नं जीवादानमतो विरेकातियोगोत्पन्नजीवादानवल्लिङ्गचिकित्सिताभ्यामेतद्वस्त्यतियोगोत्पन्नं जीवादानं ज्ञेयम्। तत्र विशेषचिकित्सितमाह—देय इत्यादि। सशोणित इति हेतुगर्भं विशेषणम्, यतः पिच्छावस्तिः सशोणितोऽतः शोणितापगमरूपजीवादाने देय इत्यर्थः ॥ ९—१८ ॥

पश्चाद् विरेको वान्तस्य ततश्चापि निरूहणम् ।
सद्यो निरूढोऽनुवास्यः सप्तरात्राद् विरेचितः ॥ १९ ॥

इति सुश्रुत संहितायां चिकित्सितस्थाने नेत्रवस्तिव्यापच्चिकित्सितं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

इदानीं पञ्चानां कर्म्मणां क्रमेण क्रियमाणानां यतो यतो यद् यद् यावता कालेन करणीयं तत्तदुपदिशन्नाह—पश्चादित्यादि । सम्यग्योगेन वान्तस्य पुरुषस्य विरेचनं पश्चान्नार्व्वाक् नापि परतः; ततोऽर्व्वाक् क्रियमाणं पुरुपानलवलयोरबलत्वाद् व्यापदमावहति, अतिपरतः पुनः स्नेहस्वेदादिगुणोऽन्तरितः स्यात्, तस्मात् पश्चादेव वान्तो विरेचनीयः । तत्र प्रधानशुद्धिमपेक्ष्यान्न-संसर्गेण दिनानि षडतिक्रम्य मधुरादिसंसर्गमाचरेत् । स्नेहपानेनापि दिनानि षड़तिक्रमेत् । ततः स्वेदं समाचरन् लघूष्णं भुज्यमानस्त्र्यहं स्थितश्चतुर्थेऽहनि विरेकं कुर्य्यात् । ततस्तस्माद् विरेकादन्नसंसर्गेण दिनानि षड़तिक्रम्यानन्तरं मधुरादिरससंसर्गं समाचरन् सप्तरात्राद् विरेचित इति वाक्यादष्टमादिदिवसेष्वनुवासनानि यथादोषं विदध्यात् । ततः षोड़शेऽह्नि स्नेहाभ्यक्तः स्वेदितश्चास्थापनं सेवेत । गयदासस्तु चरकाचार्य्याभिप्रायेण विरेचनादूर्द्ध्वं षड़हं कृतान्न-संसर्गस्यावस्थाविशेषेण स्नेहपानमनुवासनञ्च द्वयमपि मन्यते । तथा च चरकाचार्य्यवचनम्— "संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद् वा"—इति । तत्र विरेचनादूर्द्ध्वमन्नसंसर्गेण दिनानि षट्, ततो मधुरादिरससंसर्गमाचरेत्, स्नेहपानेनापि दिनानि षड़तिक्रमेत्, ततो दिनत्रयं लघूष्णं भुञ्जानश्चतुर्थेऽहनि स्नेहाभ्यक्तः स्वेदितश्चास्थापनं सेवेत । स्नेहपानपूर्व्वकस्यानुवासन-पूर्व्वकस्य चास्थापनस्यावस्था गयदासेन दर्शिता; यथा—हीनविरिक्तस्यावशिष्टपरिपक्वामसञ्चया-वृते वायौ स्नेहपानपूर्व्वकमास्थापनं क्वचिद् व्याध्यवस्थावशात् प्राक् स्नेहनविरेचितस्यास्थापन-मिति । निरूढः पुरुषः सद्य एव तद्दिवसे एवानुवास्यः । एतेन दत्तनिरूहो यथोक्तं भोजयित्वार्द्र-पाणिरेवानुवास्यः । विरेचितस्तु सप्तरात्रात् परतोऽनुवास्यो नार्व्वाक् । उक्तं हि—"विरेचनात् सप्तरात्रे गते जातबलाय वै । कृतान्नायानुवास्याय सम्यग् देयोऽनुवासनः"—इति । केचिदन्यादृशं व्याख्यानं कुर्व्वन्ति, तच्च गयदासाचार्य्येण बहुधा दूषितत्वादस्माभिरप्युपेक्षितम् ॥ १९ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे नेत्रवस्तिव्यापच्चिकित्सितव्याख्यानाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

———

# सप्तत्रिंशोऽध्यायः ।

अथातोऽनुवासनोत्तरवस्तिचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

विरेचनात् सप्तरात्रे गते जातबलाय च ।
कृतान्नायानुवास्याय सम्यग् देयोऽनुवासनः ॥
यथावयो निरूहाणां या मात्राः परिकीर्त्तिताः ।
पादावकृष्टास्ताः कार्य्याः स्नेहवस्तिषु देहिनाम् ॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं विधापयेत् ।
एतैर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ।
स्नेहवीर्य्यं तथा दत्ते देहश्चानुविसर्पति ॥ २ ॥

अनुवास्यः सप्तरात्राद् विरेचित इति यदुक्तं तद् बललाभे एव नान्यथेति दर्शयन्नाह—विरेचनादित्यादि । जातबलायेति जातबलस्यैवानुवासनं देयं, यत उत्पन्नबलस्यैवाग्निर्बलवाननुवासनहेतुः । तथाचोक्तम्—"पश्चादग्निबलं ज्ञात्वा सम्यग् देयोऽनुवासनः" । कृताहाराय सायाह्ने इति केचित् पठन्ति, कृताहाराय सततमित्यन्ये । तत्र न कदाचिदप्यकृताहारायेति सततग्रहणार्थः । वयोविशेषानुरूपमात्रामुपदिशन्नाह—यथावयो निरूहाणामित्यादि । वय इह साम्वत्सरिकादीनां शरीरावस्थाविशेषः । पादावकृष्टाः चतुर्भागावशिष्टाः । चरकेऽप्युक्तम्—"निरूहपादांशसमेन तैलेनाम्लानिलघ्नौषधसाधितेन" इति । तन्त्रान्तरेऽपि—"षट्पली तु भवेच्छ्रेष्ठा त्रिपली मध्यमा भवेत् । कनीयस्यर्द्धपलिका त्रिधा मात्रानुवासने" इति । अर्द्धार्द्धकृष्टास्ताः कार्य्याः इति अन्ये पठन्ति, तत्रापि अर्द्धस्यार्द्धश्चतुर्थो भाग एवेति स एवार्थः । वस्तेः पूर्व्वकर्म्म निर्दिशन्नाह—उत्सृष्टेत्यादि । यस्मादेतैः कारणैः अनुत्सृष्टैरनिलविण्मूत्रैर्नलद्वारावरकैरन्तर्विहतोऽवरुद्धः दत्तः स्नेहो नैवान्तः प्रतिपद्यते नैवान्तः प्रविशतीत्यर्थः । एतैर्हि विहत इत्यत्र अन्यथा विहत इति केचित् पठन्ति, तत्र अन्यथा अन्येन प्रकारेण, अनुत्सृष्टानिलविण्मूत्रे इत्यर्थः । अतो विण्मूत्रनिर्हरणे कृते स्नेहवस्तिर्विधीयते इति दर्शयन्नाह—स्नेहेत्यादि । तथा तेन प्रकारेण शुद्धे शरीरे स्नेहवस्तिः स्नेहवीर्य्यं दत्ते [illegible]त्यर्थः । स्नेहो दोषैरपिहितः स्रोतसा न विसर्पतीति केचित् पठन्ति । अपिहित आच्छादित इत्यर्थः ॥ १ । २ ॥

अत ऊर्द्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ।
पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥
शटीपौष्करकृष्णाह्वा-मदनामरदारुभिः ।
शताह्वाकुष्ठयष्ट्याह्व-वचाविल्वहुताशनैः ॥
सुपिष्टैर्द्विगुणक्षीरं तैलं तोयचतुर्गुणम् ।
पक्त्वा वस्तौ विधातव्यं मूढ़वातानुलोमनम् ॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ।
कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥ ३ ॥
वचापुष्करकुष्ठैला-मदनामरसिन्धुजः ।
काकोलीद्वययष्ट्याह्व-मेदायुग्मनराधिपैः ॥
पाठाजीवकजीवन्ती-भार्गीचन्दनकट्फलैः ।
सरलागुरुविल्वाम्बु-वाजिगन्धाग्निवृद्धिभिः ॥
विडङ्गारग्वधश्यामा-त्रिवृन्मागधिकर्द्धिभिः ।
पिष्टस्तैलं पचेत् क्षीर-पञ्चमूलरसान्वितम् ॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम् ।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥ ४ ॥
चित्रकातिविषापाठा दन्तीविल्ववचामिषैः ।
सरलांशुमतीरास्ना-नीलिनीचतुरङ्गुलैः ॥
चव्याजमोदकाकोली-मेदायुग्मसुरद्रुमैः ।
जीवकर्षभवर्षाभू वस्तगन्धाशताह्वयः ॥
रेण्वश्वगन्धामञ्जिष्ठा-शटीपुष्करतस्करैः ।
सक्षीरं विपचेत् तैलं मारुतामयनाशनम् ॥

केचिदत्र प्रवृद्धसुश्रुताध्यायिनः आमस्नेहस्य गुदोपदेहेनापि व्यापत्करत्वमालोच्य पक्वतैलानि प्रतिपादयितुकामाः प्रतिज्ञां कुर्वन्ति – अत ऊर्द्ध्वमित्यादि। यथाक्रममिति वातादिदोषक्रमेणेत्यर्थः। तत्र शट्यादौ पौष्करं कुष्ठञ्च यत् पठ्यते तत्र पौष्करं मूलं, तद्विटपशाखाश्च कुष्ठमिति ज्ञेयम्। अमरदारुर्देवदारुः। सिन्धुजं सैन्धवम्। नराधिपः कृतमालः। सरतीति सरला त्रिवृत्, विरेचनीयत्वात्। श्यामा वृद्धदारकः। पञ्चमूलं विल्वादि, तस्य रसः क्वाथः। अत्र तैले नराधिपारग्वधपाठात् सरलात्रिवृत्पाठाच्च एतयोर्द्विगुणा मात्रा देया। उक्तञ्च—"घृते तैले च योगे च यद् द्रव्यं पुनरुच्यते। तद् दातव्यमिहाचार्य्यैर्भागतो द्विगुणं मतम्" इति ॥ ३। ४ ॥



आमिषं गुग्गुलुः। सुरद्रुमः देवदारुः। तस्करश्चोरकः।

# सप्तत्रिंशोऽध्यायः ।

अथातोऽनुवासनोत्तरवस्तिचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

विरेचनात् सप्तरात्रे गते जातबलाय च ।
कृतान्नायानुवास्याय सम्यग् देयोऽनुवासनः ॥
यथावयो निरूहाणां या मात्राः परिकीर्त्तिताः ।
पादावकृष्टास्ताः कार्य्याः स्नेहवस्तिषु देहिनाम् ॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं विधापयेत् ।
एतैर्हि विहतः स्नेहो नैवान्तः प्रतिपद्यते ॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ।
स्नेहवीर्य्यं तथा दत्ते देहश्चानुविसर्पति ॥ २ ॥

अनुवास्यः सप्तरात्राद् विरेचित इति यदुक्तं तद् बललाभे एव नान्यथेति दर्शयन्नाह—विरेचनादित्यादि । जातबलायेति जातबलस्यैवानुवासनं देयं, यत उत्पन्नबलस्यैवाग्निर्बलवाननुवासनहेतुः । तथाचोक्तम्—"पश्चादग्निबलं ज्ञात्वा सम्यग् देयोऽनुवासनः" । कृताहाराय सायाह्ने इति केचित् पठन्ति, कृताहाराय सततमित्यन्ये । तत्र न कदाचिदप्यकृताहारायेति सततग्रहणार्थः । वयोविशेषानुरूपमात्रामुपदिशन्नाह—यथावयो निरूहाणामित्यादि । वय इह साम्वत्सरिकादीनां शरीरावस्थाविशेषः । पादावकृष्टाः चतुर्भागावशिष्टाः । चरकेऽप्युक्तम्—"निरूहपादांशसमेन तैले नाम्लानिलघ्नौषधसाधितेन" इति । तन्त्रान्तरेऽपि—"षट्पली तु भवेच्छ्रेष्ठा त्रिपली मध्यमा भवेत् । कनीयस्यर्द्धपलिका त्रिधा मात्रानुवासने" इति । अर्द्धार्द्धकृष्टास्ताः कार्य्याः इति अन्ये पठन्ति, तत्रापि अर्द्धस्यार्द्धश्चतुर्थो भाग एवेति स एवार्थः । वस्तेः पूर्व्वकर्म्म निर्दिशन्नाह—उत्सृष्टेत्यादि । यस्मादेतैः कारणैः अनुत्सृष्टैरनिलविण्मूत्रैर्नलद्वारावरकैरन्तर्विहतोऽवरुद्धः दत्तः स्नेहो नैवान्तः प्रतिपद्यते नैवान्तः प्रविशतीत्यर्थः । एतैर्हि विहत इत्यत्र अन्यथा विहत इति केचित् पठन्ति, तत्र अन्यथा अन्येन प्रकारेण, अनुत्सृष्टानिलविण्मूत्रे इत्यर्थः । अतो विण्मूत्रनिर्हरणे कृते स्नेहवस्तिर्विधीयते इति दर्शयन्नाह—स्नेहेत्यादि । तथा तेन प्रकारेण शुद्धे शरीरे स्नेहवस्तिः स्नेहवीर्य्यं दत्ते ददातीत्यर्थः । स्नेहो दोषैरपिहितः स्रोतसा न विसर्पतीति केचित् पठन्ति । अपिहित आच्छादित इत्यर्थः ॥ १ । २ ॥

अत ऊर्द्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम् ।
पानान्वासननस्येषु यानि हन्युर्गदान् बहून् ॥
शटीपौष्करकृष्णाह्वा-मदनामरदारुभिः ।
शताह्वाकुष्ठयष्ट्याह्व-वचाविल्वहुताशनैः ॥
सुपिष्टैर्द्विगुणक्षीरं तैलं तोयचतुर्गुणम् ।
पक्त्वा वस्तौ विधातव्यं मूढ़वातानुलोमनम् ॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम् ।
कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत् ॥ ३ ॥
वचापुष्करकुष्ठैला-मदनामरसिन्धुजः ।
काकोलीद्वययष्ट्याह्व-मेदायुग्मनराधिपैः ॥
पाठाजीवकजीवन्ती-भार्गीचन्दनकट्फलैः ।
सरलागुरुविल्वाम्बु-वाजिगन्धाग्निवृद्धिभिः ॥
विडङ्गारग्वधश्यामा-त्रिवृन्मागधिकर्द्धिभिः ।
पिष्टैस्तैलं पचेत् क्षीरं पञ्चमूलरसान्वितम् ॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम् ।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम् ॥ ४ ॥
चित्रकातिविषापाठा दन्तीविल्ववचामिषैः ।
सरलांशुमतीरास्ना-नीलिनीचतुरङ्गुलैः ॥
चव्याजमोदकाकोली-मेदायुग्मसुरद्रुमैः ।
जीवकर्षभवर्षाभू र्वस्तगन्धाशताह्वयः ॥
रेण्वश्वगन्धामञ्जिष्ठा-शटीपुष्करतस्करैः ।
सक्षीरं विपचेत् तैलं मारुतामयनाशनम् ।।

केचिदत्र प्रवृद्धसुश्रुताध्यायिनः आमस्नेहस्य गुदोपदेहेनापि व्यापत्करत्वमालोच्य पक्वतैलानि प्रतिपादयितुकामाः प्रतिज्ञां कुर्व्वन्ति – अत ऊर्द्ध्वमित्यादि। यथाक्रममिति वातादिदोषक्रमेणेत्यर्थः। तत्र शट्यादौ पौष्करं कुष्ठञ्च यत् पठ्यते तत्र पौष्करं मूलं, तद्विटपशाखाश्च कुष्ठमिति ज्ञेयम्। अमरदारुर्देवदारुः। सिन्धुजं सैन्धवम्। नराधिपः कृतमालः। सरतीति सरला त्रिवृत्, विरेचनीयत्वात्। श्यामा वृद्धदारकः। पञ्चमूलं विल्वादि, तस्य रसः क्वाथः। अत्र तैले नराधिपारग्वधपाठात् सरलात्रिवृत्पाठाच्च एतयोर्द्विगुणा मात्रा देया। उक्तञ्च—"घृते तैले च योगे च यद् द्रव्यं पुनरुच्यते। तद् दातव्यमिहाचार्य्यैर्भागतो द्विगुणं मतम्" इति॥ ३।४॥

आमिषं गुग्गुलुः। सुरद्रुमः देवदारुः। तस्करश्चोरकः।

गृध्रसीखञ्जकुब्जाढ्य-मूत्रोदावर्त्तरोगिणाम् ।
शस्यतेऽल्पबलाग्नीनां वस्तावाशु नियोजितम् ॥ ५ ॥
भूतिकैरण्डवर्षाभू-रास्नावृषकरोहिषैः ।
दशमूलसहाभार्गी-षड्ग्रन्थामरदारुभिः ॥
बलानागबलामूर्व्वा-वाजिगन्धामृताद्वयैः ।
सहाचरवरीविश्वा-काकनासाविदारिभिः ॥
यवमाषातसीकोल-कुलत्थैः क्वथितैः शृतम् ।
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम् ॥
जङ्घोरुत्रिकपार्श्वांस-वाहुमन्याशिरःस्थितान् ।
हन्याद् वातविकारांस्तु वस्तियोगैर्निषेवितम् ॥ ६ ॥
जीवन्त्यतिबलामेदा-काकोलीद्वयजीवकैः ।
ऋषभातिविषाकृष्णा-काकनासावचामरैः ॥
रास्नामदनयष्ट्याह्व-सरलाभीरुचन्दनैः ।
स्वयंगुप्ताशटीभृङ्गी-कलसीसारिवाद्वयैः ॥
पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु ।
तच्चानुवासने देयं शुक्राग्निबलवर्द्धनम् ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ।
नस्ये पाने च संयुक्तमूर्द्ध्वजत्रुगदापहम् ॥ ७ ॥
मधुकोशीरकाश्मर्य्य-कटुकोत्पलचन्दनैः ।
श्यामापद्मकजीमूत-शक्राह्वातिविषाम्बुभिः ॥
तैलपादं पचेत् सर्पिः पयसाष्टगुणेन च ।
न्यग्रोधादिगणक्वाथ-युक्तं वस्तिषु योजितम् ॥
दाहासृग्दरवीसर्प-वातशोणितविद्रधीन् ।
पित्तरक्तज्वराद्यांश्च हन्यात् पित्तकृतान् गदान् ॥ ८ ॥

भूतिकं कत्तृणापरपर्य्यायम् । गुडूची हरीतकी चेत्यमृताद्वयम् । सहाचरः सैरीयः, वरी शतावरी, विश्वा शुण्ठी, काकनासा वायसफला ॥ ५—७ ॥

श्यामा प्रियङ्गुः, जीमूतः मुस्तकः । तैलस्य पादश्चतुर्थांशो यस्मिन् सर्पिषि तत् तैलपादम् ॥८॥

मृणालोत्पलशालूक-सारिवाद्वयकेशरैः।
चन्दनद्वयभूनिम्ब-पद्मवीजकसेरुकैः॥
पटोलकटुकारक्ता-गुन्द्रापर्पटवासकैः।
पिष्टैस्तैलमिदं पक्वं तृणमूलरसेन च॥
क्षीरद्विगुणसंयुक्तं वस्तिकर्म्मणि योजितम्।
नस्येऽभ्यञ्जनपाने वा हन्यात् पित्तगदान् बहून्॥९॥
त्रिफलातिविषामूर्व्वा-त्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्था-सप्तपर्णनिशाद्वयैः॥
गुडूचीन्द्रसुराकृष्णा-कुष्ठसर्षपनागरैः।
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम्॥
पानाभ्यञ्जनगण्डूष-नस्यवस्तिषु योजितम्।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान्॥१०॥
पाठाजमोदाशार्ङ्गेष्टा-पिप्पलीद्वयनागरैः।
* सरलागुरुकालीय-भार्गीचव्यामरद्रुमैः॥
मरिचैलाभयाकट्वी-शटीग्रन्थिककट्फलैः।
तैलमेरण्डतैलं वा पक्वमेभिः समायुतम्॥
वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च।
हन्यादन्वासनेदत्तं सर्व्वान् कफकृतान् गदान्॥११॥
विडङ्गोदीच्यसिन्धूत्थ-शटीपुष्करचित्रकैः।
कट्फलातिविषाभार्गी-वचाकुष्ठसुराह्वयैः॥
मेदामदनयष्ट्याह्व-श्यामानिचुलनागरैः।
शताह्वानीलिनीरास्ना-कलसीवृषरेणुभिः॥
विल्वाजमोदकृष्णाह्वा-दन्तीचव्यनराधिपैः।
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम्॥

तृणमूलं कुशादितृणपञ्चमूलम्॥९॥

रक्ता मञ्जिष्ठा, गुन्द्रा पट्टेरकभेदः, तृणमूलं कुशादितृणपञ्चमूलम्॥९॥ रक्ता मञ्जिष्ठा, गुन्द्रा पट्टेरकभेदः, कट्वी कटुका। इन्द्रसुरा इन्द्रवारुणी। शार्ङ्गेष्टा गुम्भुरुष्टाको वेष्टितफलः काकमाच्यनुकारः। श्यामा वृद्धदारकः। विदार्य्यादिकं पञ्चमूलं वल्लीसंज्ञकम्। करमर्द्दादिकन्तु कण्टकसंज्ञं पञ्चमूलम्। निचुलो जलवेतसः। रेणुः पर्पटकः। मुष्ककादिरसेन मुष्ककपलाशधवेत्यादिगणस्य रसेन क्वाथेन चतुर्गुणेन प्लुतं मिश्रितं तैलमेरण्डतैलं वेति तैलद्वयं कल्प्यते। तत्र शट्यादिवचादिचित्रकादि-

* सप्तलेति वा पाठः।

प्लीहोदावर्त्तवातासृग्गुल्मानाहकफामयान्।
प्रमेहशर्कराशांसि हन्यादाश्वनुवासनात् ॥ १२॥
अशुद्धमपि वातेन केवलेनातिपीड़ितम्।
अहोरात्रस्य कालेषु सर्व्वेष्वेवानुवासयेत् ॥
रुक्षस्य बहुवातस्य द्वौ त्रीनप्यनुवासनम्।
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥
अस्निग्धमपि वातेन केवलेनातिपीड़ितम्।
स्नेहप्रगाढ़ैर्मतिमान् निरूहैः समुपाचरेत् ॥
अथ सम्यङ्निरूढ़न्तु वातादिष्वनुवासयेत्।
विल्वयष्ट्याह्वमदन-फलतैलैर्यथाक्रमम् ॥ १३ ॥

भूतिकादितैलानि प्रायशो वातरोगेषु, जीवन्त्यादिमधुकादिमृणालादितैलानि पित्तरक्तरोगार्द्दितेषु, त्रिफलादिपाठादितैलद्वयं कफग्रस्तेषु, विड़ङ्गादितैलं वाते कफभूयिष्ठे, संसर्गसन्निपातेषु पुनरेतान्येव यथायथमभ्यूह्य योज्यानीति ज्ञेयम्। एतानि तैलानि सामान्यस्नेहपरिभाषया साधनीयानीत्यर्थः ॥ १०—१२ ॥

पूर्व्वं विशुद्धदेहस्य स्नेहवस्तिं प्रदर्श्य क्वचिदशुद्धस्यापि दर्शयन्नाह—अशुद्धमित्यादि। केवलेन धातुक्षयहेतुना। रिक्ते हि शरीरे प्रायेण विवृतस्रोतोमुखमेव शरीरं, तत्र शुद्ध्या पुनरति धातुक्षयेणातितरामेव वातरोगः स्यात्। तेनाशुद्धेऽपि तत्र स्नेहवस्तिरिति। अहोरात्रस्य कालेषु पूर्व्वाह्लादिषु, जीर्णान्नं भोजयित्वाऽनुवासयेदिति वक्ष्यमाणेन पूरणीयम्। रूक्षस्य वाताधिकस्य वातवेगविधारणाय प्रागेव स्नेहवस्तिं दत्त्वा पश्चाच्छोधनवस्तिर्देय इति दर्शयन्नाह—रूक्षस्येत्यादि। रूक्षस्य बहुवातस्य द्वौ त्रीन् वारानुनुवासनं दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत्। किञ्चिदस्निग्धोऽपि यथास्थापनविशेषेणास्थापनीय इति दर्शयन्नाह—अस्निग्धमपीत्यादि। अस्निग्धमीषत्स्निग्धं, नञ् ईषदर्थे, अनुदरा कन्येति यथा। स्नेहप्रगाढ़ैः स्नेहबहुलैः। एतेन प्राक् स्नेहविधिविरहिते स्निग्धमास्थापनमवगम्यते।

निरूहस्य पश्चात् कर्म्म निर्द्दिशन्नाह—अथेत्यादि। विल्वमूलमधुयष्टीमदनफलक्वाथसिद्धैस्तैलैः, केचित् तु विल्वमूलादीनां कल्कैरिति वदन्ति, अन्ये तु विल्वतैलं—"शताह्वाफलविल्वाख्यैस्तैलं सिद्धं समीरणे" इति तन्त्रान्तरोक्तं विल्वादिपञ्चमूलेन वा सिद्धं तैलं विल्वतैलम्। यष्ट्याह्वतैलं जीवनीयं, तच्च तन्त्रान्तरे दशमूलीबलारास्नेत्यादिपाठेनोक्तम्, अत्रापि तदेव भूतिकादिद्रव्यजीवनीययुक्तमभिहितम्, फलविल्वत्रिवृत्कृष्णारास्नाभूनिम्वदारुभिः सिद्धं तैलं फलतैलम्। केचित् तु मदनफलैरण्डतैलं फलतैलमित्याहुः ॥ १३ ॥

रात्रौ वस्तिं न दद्यात् तु दोषोत्क्लेशो हि रात्रिजः ।
स्नेहवीर्य्ययुतः कुर्य्यादाध्मानं गौरवं ज्वरम् ॥
अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ।
स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति ॥
पित्तेऽधिके कफे क्षीणे रुक्षे वातरुगर्द्दिते ।
नरे रात्रौ च दातव्यं काले चोष्णेऽनुवासनम् ॥
उष्णे पित्ताधिके वापि दिवा दाहादयो गदाः ।
सम्भवन्ति यतस्तस्मात् प्रदोषे योजयेद् भिषक् ॥ १४ ॥
शीते वसन्ते च दिवा ग्रीष्मप्रावृड्घनात्यये ।
स्नेह्यो दिनान्ते पानोक्तान् दोषान् परिजिहीर्षता ।
अहोरात्रस्य कालेषु सर्व्वेष्वेवानिलाधिकम् ॥ १५ ॥
तीव्रायां रुजि जीर्णान्नं भोजयित्वानुवासयेत् ।
न चाभुक्तवतः स्नेहः प्रणिधेयः कथञ्चन ।
शुद्धत्वाच्छून्यकोष्ठस्य स्नेह ऊर्द्ध्वं समुत्पतेत् ॥

रात्रौ वस्तिदाननिषेधमाह—रात्रावित्यादि । दोषोत्क्लेश इति यस्माद् रात्रावाहारविदाहेन कालशैत्यात् स्रोतोमुखसंवृतत्वेन च दोषधातुमलेषु विक्लेदनलक्षण उत्क्लेशो भवति । अन्यत्राप्युक्तम्—"अविशुद्धे तु हृदये निशि क्लिन्नेषु धातुषु । विदग्धेऽन्नरसे स्रोतःसूपलिप्तेषु देहिनाम् । व्यापारेभ्यो निवृत्तानां दोषोत्क्लेशो भवेदिति ॥" दिवा वस्तिप्रदानगुणं सकारणं निर्दिशन्नाह—अह्नीत्यादि । अह्नि दिवा । विवृतस्रोतोमुखे शरीरे, तथा स्थानस्थितेषु दोषेषु, तथा निःशेषपरिपक्वस्यान्नस्य रसेन वीर्य्येणाग्निसम्बर्द्धितेनोपचिते पक्तुं समर्थे च वह्नौ, स्नेहौजः स्नेहवीर्य्यं, शरीरं परिसर्पति अनुक्रामति ।

रात्रावपि प्रतिप्रसवमुद्दिशन्नाह—पित्ते इत्यादि । रात्रिशब्दोऽत्र प्रथमप्रहरवाचकः, प्रदोषे योजयेद् भिषगिति वक्ष्यमाणवचनात् । कुतः पुनरुष्णकाले पित्तेऽधिके वा दिवा न देयमित्याह—उष्ण इत्यादि । प्रदोषशब्दात् सन्ध्यापरनिशानिवृत्तिः ॥ १४ ॥

इदानीमह्नि स्थानस्थिते दोष इत्यादिवाक्यैर्युक्तिप्राप्तं कालनियमं प्रकटयन्नाह शीत इत्यादि । परिजिहीर्षता परिहर्त्तुमिच्छता । विशिष्टावस्थायामस्यापवादमाह - अहोरात्रेष्वित्यादि । कालेषु सर्व्वेष्विति 'तत्तत्कालविरुद्धकृत्रिमगुणोपधानं कृत्वैव' इति शेषः ॥ १५ ॥

इह तु प्रागशुद्धस्य केवलवातपीडितस्य सर्व्वेष्वपि अहोरात्रावयवेषु अनुवासनमभिहितम् । स्नेह ऊर्द्ध्वं समुत्पतेत् शुद्धस्येति न पौनरुक्त्यम् । अभुक्तवतः प्रतिषेधमाह—न चेत्यादि । स्नेह ऊर्द्ध्वं समुत्पतेत् सम्यगूर्द्ध्वं गच्छेत् । ततश्चातिपीडितवद् व्यापत् स्यात् । शुद्धत्वादित्यत्र सूक्ष्मत्वादिति पठित्वा

सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम्।
ज्वरं विदग्धभुक्तस्य कुर्य्यात् स्नेहः प्रयोजितः॥
न चातिस्निग्धमशनं भोजयित्वानुवासयेत्।
मदं मूर्च्छाञ्च जनयेद् द्विधा स्नेहः प्रयोजितः॥
रूक्षं भुक्तवतो ह्यन्नं बलं वर्णञ्च हापयेत्।
युक्तस्नेहमतो जन्तुं भोजयित्वानुवासयेत्॥
यूषक्षीररसैस्तस्माद् यथाव्याधि समीक्ष्य वा।
यथोचितात् पादहीनं भोजयित्वानुवासयेत्॥ १६॥
अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः।
भोजयित्वा यथाशास्त्रं कृतचंक्रमणं ततः॥
विसर्ज्य्य च शकृन्मूत्रं योजयेत् स्नेहवस्तिना।
प्रणिधानविधानन्तु निरूहे च प्रवक्ष्यते॥ १७॥
ततः प्रणिहितस्नेह उत्तानो वाक्छतं भवेत्।
प्रसारितैः सर्व्वगात्रैस्तथा वीर्य्यं विसर्पति॥
ताड़येत् तलयोरेनं त्रींस्त्रीन् वारान् शनैःशनैः।
स्फिचोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत् ततः॥ १८॥

गयदासः सूक्ष्ममार्गानुसरणशीलत्वात्तस्यैति व्याख्यानयति। भोजनोत्तरकालमेवानुवासन-मविलम्बितमाह—सदेत्यादि। भोजनाद् विलम्बितदाने दोषं दर्शयन्नाह—ज्वरमित्यादि। कीदृश-मन्नं भुक्तवन्तमनुवासयेत् तदाह—न चेत्यादि। हापयेदित्यत्र स्नेहप्रयोजित इति सम्बध्यते। युक्त-स्नेहमल्पस्नेहम्। यथाव्याधीति रोगानतिक्रमेण, रोगानुरूपमिति यावत्। अत्रैवानुक्तमप्यवेक्षमाण आह—समीक्ष्य वेति। सम्यगीक्षित्वा सात्म्यं दोषञ्चेति शेषः। अत्र यूषो मुद्गयूषः। स च रूक्षो ग्राह्यः। क्षीरं गव्यम्। रसो मांसरसः। तैर्यथासंख्यं कफपित्तवातप्रत्यनीकैर्भोजयित्वा, यथोचितात् पादहीनमिति प्राक् संशुद्धस्य कृतसंसर्ज्जनस्योचिताद् भक्तात् पादहीनमुत्तममध्यमन्दाग्निविशेषेण पादेन पादाभ्यां पादैर्वा हीनमिति ज्ञेयम्। "अर्द्धहीनं त्रिभागं वा भोजयित्वानुवासयेत्" इति मुनिना प्रोक्तत्वात्॥ १६॥

अनुवासनविधिं दर्शयन्नाह—अथानुवास्यमित्यादि॥ १७॥

प्रणिहितस्नेहस्य पश्चात् कर्म्म निर्द्दिशन्नाह—तत इत्यादि। आतुरस्य करणीयमभिधाय वैद्यस्य करणीयं निर्द्दिशन्नाह—ताड़येदित्यादि। तलयोः हस्तपदतलयोः शनैःशनैस्त्रीन् त्रीन् वारान् एनं हन्यात् स्नेहस्योर्ध्वागमननिषेधार्थम्, स्फिचोश्चैनमिति ताड़येदिति सम्बन्धः। स्फिचोश्चेति

एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक्।
स्वास्तीर्ण शयने काममासीताचारिके रतः॥ १९॥
स तु सैन्धवचूर्णेन शताह्वेन च योजितः।
देयः सुखोष्णश्च तथा निरेति सहसा सुखम्॥ २०॥
यस्यानुवासनो दत्तः सकृदन्वक्षमाव्रजेत्।
अत्यौष्ण्यादतितैक्ष्ण्याद् वा वायुना वा प्रपीड़ितः॥
सवातोऽधिकमात्रो वा गुरुत्वाद् वा सभेषजः।
तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति॥ २१॥
विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः *।
दाहक्लमप्रवाहार्त्ति-करश्चात्यनुवासनः॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु।
ओषचोषौ विना शीघ्रं स सम्यगनुवासितः॥ २२॥

चकारो भिन्नक्रमे, तेन ताड़येदित्यत्र द्रष्टव्यः। अनस्तलयोर्गृहीतत्वात् कूर्परे जानुनी चोत्क्षिपे-
दित्यनुक्तो वृद्धवैद्यव्यवहारः सिद्धो भवति। शय्यामुत्क्षिपेदिति काष्ठफलकादिकृतां सहातुरेणोद्ध-
न्येदित्यर्थः। शय्यास्थमातुरं स्फिग्देशे इत्यन्ये। आसीताचारिके रत इति क्रोधादीन्
वर्ज्जयेदिति शेषः॥ १८। १९॥

सर्व्वस्नेहवस्तिद्रव्यपूर्व्वकर्म्म निर्द्दिशन्नाह—स इत्यादि। स स्नेहः, तु पुनः, पक्वोऽपि सैन्धव-
शतपुष्पासमन्वितो देयः। मध्यमवयस्कमाश्रित्य चूर्णस्य मात्रामाह—"चूर्णमाषः पले स्नेहे सिन्धु-
जन्म-शताह्वयोः" इति; तस्यानुवासनस्नेहस्य प्रणिधानमात्रप्रत्यावृत्त्या अस्य निदानपरिहारार्थं
हेतुं प्रतिकरणीयञ्च दर्शयन्नाह—यस्येत्यादि। सकृदेकवारम्। अक्षस्य यन्त्रस्यानु पश्चादन्वक्षम्।
आव्रजेदागच्छेत्। कुतः? अत्यौष्ण्यात् उष्णगुणातिरेकात्। अतितैक्ष्ण्यात् अतितीक्ष्णैः संस्कारक-
द्रव्यैराहितात्। अनुच्छ्वास्य बन्धनात् वायुना प्रपीड़ितः सवातो वस्तिः स्यात्। अतिमात्रोऽति-
भेषजश्च गुरुत्वात्। तस्यान्योऽल्पतर इति अन्योऽत्यौष्ण्यादिगुणविपरीतः, अल्पतरः प्राचीनमात्रातः,
प्रथमस्नेहेनैव किञ्चित् स्निग्धत्वात्। कुतः पुनरपि देय इत्याह—न हि स्निह्यत्यतिष्ठतीति, हि यतो
अतिष्ठति स्नेहे न स्निह्यति नरः स्नेहहीनेऽनुवासने (इति) भवतीति शेषः। हीन इति हीनगुणमाने
इत्यर्थः। दाहक्लमप्रवाहार्त्तिकरश्चेति चकाराद्धीनानुवासितविष्टब्धानिलविण्मूत्रलिङ्गविपरीतावि
सृष्टानिलविण्मूत्रार्त्तिकरश्चेति समुच्चिनोति। प्रवाहस्थाने पिपासेति केचित् पठन्ति। यादृशः स्नेहः
सम्यगनुवासितस्तमाह—सानिल इत्यादि। सपुरीषश्चेति चकारेण समूत्रश्चेत्यनुक्तं समुच्चिनोति।
प्रत्येति प्रत्यागच्छति। ओष ईषद्दाहः। चोष आकृष्यमाणस्येव दाहप्रकारः। गयी तु ओषचोषौ
विनेति दाहपिपासे विनेत्यर्थ इत्याह। शीघ्रमिति त्रिचतुरादियामात्॥ २०—२२॥

* स्नेहहीनेऽनुवासने इत्यन्यः पाठः।

जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः।
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि॥
प्रातरुष्णोदकं देयं धान्यनागरसाधितम्।
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते॥ २३॥
स्नेहवस्तिक्रमेष्वेवं विधिमाहुर्मनीषिणः।
अनेन विधिना षड्वा सप्त वाष्टौ नवैव वा।
विधेया वस्तयस्तेषामन्तरा तु निरूहणम्॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद् वस्तिवङ्क्षणौ।
सम्यग् दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत्॥
जनयेद् बलवर्णौ च तृतीयस्तु प्रयोजितः।
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेत् तथा॥
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च।
अष्टमो नवमश्चास्थि मज्जानञ्च यथाक्रमम्।
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत्॥ २४॥

अपरेद्युराहारं नियमयन्नाह—जीर्णान्नमित्यादि। जीर्णान्नं परिणताहारं, सायाह्नग्रहणं पूर्व्वाह्णभोजननिषेधार्थम्। लघ्वन्नमिति मात्रालघु द्रव्यलघुञ्च, कामं दीप्ताग्निश्चेन्नरो भवति तदा कामं यथेष्टं लघ्वेव भोजयेत्॥ २३॥

इदानीं शल्यतन्त्रस्य कर्त्ता सुश्रुताचार्य्यः कायचिकित्सितप्रधानस्य वस्तेरुक्तविधकायचिकित्सितमनुमतमिति दर्शयन्नाह—स्नेहेत्यादि। मनीषिणः स्नेहवस्तिक्रमविदः कायचिकित्सका इत्यर्थः। तमेव क्रमं दीयमानाशेषवस्तिपूपदिशन्नाह—अनेनेत्यादि। षड्वेत्यादिसंख्याविकल्पा वक्ष्यमाणस्नेहादिधात्वन्तरगतदोषापेक्षया। तत्र दीयमानेषु स्नेहवस्तिषु तृतीये चतुर्थे पञ्चमे वा स्नेहेऽन्याद्यपेक्षया स्नेहस्योपरतिं कृत्वा (स्नेहस्वेदावधिकृत्य) संसर्ज्जनविधानेनोपवृंहितबलाय अन्तरा निरूहणं दद्याद् दोषसञ्चयसंशोधनाय। तथाच चरकः—"त्रीन् पञ्च वारान् चतुरोऽपि षड्वा वाताधिकानामनुवासनीयान्। वस्तीन् प्रदत्त्वाशु भिषग् विदध्यात् स्रोतोविशुद्ध्यर्थमतो निरूहान्" इति।

इदानीं स्नेहवस्तेः प्रथमादिदानेन कार्य्यं निर्द्दिशन्नाह—दत्त इत्यादि। वस्तिवङ्क्षणावित्युपलक्षणमधःकायस्य। मूर्द्धस्थमनिलं जयेदिति मूर्द्धस्थमूर्द्ध्वकायस्थं, जेज्जटाचार्य्यस्तु आदिपदलोपात् वस्तिमूर्द्धस्थमनिलं जयेदिति व्याख्यानयति। एवमनेन क्रमेण। शुक्रगतान् दोषान् व्याधिसमुद्देशीयोक्तान् क्लैब्याप्रहर्षजनकान्। द्विगुणः स्नेहवस्तिरष्टादशसंख्यः। साधु सम्यग् दृष्टः साधयेदिति। वस्त्यादिदेशरसादिधातुस्नेहनमाश्रित्य दत्तस्नेहवस्तेः प्रथमादिदानमभिहितम्।

अष्टादशाष्टादशकान् वस्तीनां यो निषेवते ।
यथोक्तेन विधानेन परिहारक्रमेण तु ॥
स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभः ।
वीतपाप्मा श्रुतधरः सहस्रायुर्नरो भवेत् ॥ २५ ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
स्नेहादग्निवधोत्क्लेशौ निरूहात् पवनाद् भयम् ॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद् भयम् ॥

दोषसमाश्रितस्नेहदानं तन्त्रान्तराद् ज्ञेयम्—"एकं त्रीन् वा बलासे तु स्नेहवस्तीन् प्रकल्पयेत् । पञ्च वा सप्त वा पित्ते नवैकादश वानिले" इति ॥ २४ ॥

एवमेतैरष्टादशभिः स्नेहवस्तिभिर्धातुगतदोषहरणमभिधाय पुनःपुनः अभ्यस्तैरेतैरेव विशिष्टं रसायनफलं दर्शयन्नाह—अष्टादशेत्यादि । यथोक्तेनेति इह चानन्तरातिक्रान्तेन । परिहारक्रमेणेति आतुरोपद्रवीये वक्ष्यमाणेन । कुञ्जरबल इति उपचयशक्तिलक्षणबलयुक्तः । अश्वस्य जवैस्तुल्य इति गज इवोपचितधातुरपि क्रियाविशेषप्रभावात् तुरङ्गवत् तरस्वी । अमरवत् प्रकर्षेण भातीत्यमर-प्रभोऽत्यद्भुतवर्णाद्युपेत इत्यर्थः । वीतपाप्मा क्रियाविशेषप्रभावादेव गतप्राक्तनजन्मकृतसकल-कल्मषः । श्रुतधर इति चित्तस्य शक्त्युत्कर्षयुक्तः । सहस्रायुरिति शरीरेन्द्रियसत्त्वात्मसंयोगोत्-कर्षः । यद्यप्यत्र स्नेहवस्तीनामष्टादशकं, अन्तरा तु निरूहणमिति पूर्ववाक्यादनियतनिरूहा-न्वितोऽभिहितस्तथापि तन्त्रान्तरदर्शनान्नियतद्वादशयापनाख्यनिरूहोपेतो ज्ञेयः । तादृशस्य च तन्त्रान्तरे कर्म्म इति संज्ञा । तथाहि—"त्रिंशन्मता कर्म्मसु वस्तयो हि कालस्ततोऽर्द्धेन ततश्च योगः । सान्वासना द्वादश वै निरूहाः प्राक् स्नेह एकः परतस्तु पञ्च" इति । ततश्च अष्टा-दशाष्टादशकान् वस्तीनां यो निषेवते इत्यनेन कर्म्मवस्तीन् अष्टादशवारान् यो निषेवते इत्यर्थो गम्यते । तथा श्रीवाग्भटेनापि कर्म्मकालयोगवस्तयोऽभिहिताः । तथा च—"प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च । सान्वासनानि कर्म्मैवं वस्तयस्त्रिंशदीरिताः ॥ कालः पञ्च-दशैकोऽत्र प्राक्स्नेहोऽन्ते त्रयस्तथा । षट् पञ्च वस्त्यन्तरिता योगोऽष्टौ वस्तयोऽत्र तु ॥ त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ" इति । यापनवस्तिविषयोऽयं अन्थः, निरूहा एव यापनवस्तयः, अतएवैकान्तरिताः स्नेहाः, यापनवस्तयो हि नातिस्निग्धरूक्षा नपुंसकवस्तय इत्युच्यन्ते । कर्म्म-काल्योगसंज्ञया यथासंख्यं वातपित्तकफहरो वस्तिप्रयोगो ज्ञेयः ।

गयदासस्तु बलवद्विग्रहादिजनितोपचयपूर्व्वकवातादिदोषप्रकोपे बलीयसि त्रिंशद्वस्तयः । स्वस्थे पुनः कालैकप्रभावजनितवातादिप्रकोपे मध्यबले पञ्चदश; कालेनाप्यकृतदोषकोपस्य स्वस्थस्या-पूर्व्ववृष्यत्वादिलाभार्थमष्टौ ॥ २५ ॥

द्वयोरेकस्यातिशीलननिषेधाय दोषं दर्शयन्नाह— स्नेहवस्तिमित्यादि । अन्ये त्वेवं पठन्ति—

रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने ।
दद्याद् वैद्यस्ततोऽन्येषामग्न्यावाधभयात् त्र्यहात् ॥
स्नेहोऽल्पमात्रो रूक्षाणां सर्व्वकालमनत्ययः ।
तथा निरूहः स्निग्धानां स्वल्पमात्रः प्रशस्यते ॥ २६ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि व्यापदः स्नेहवस्तिजाः ॥
वलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ।
अल्पवीर्य्यं तदा स्नेहमभिभूय पृथग्विधान् ।
कुर्व्वन्त्युपद्रवान् स्नेहः स चापि न निवर्त्तते ॥ २७ ॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता ।
जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥
पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत् ।
दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता ।
गौरवं छर्दिरुच्छ्वासः कृच्छ्राच्छीतज्वरोऽरुचिः ॥ २८ ॥
तत्र दोषाभिभूते तु स्नेहे वस्तिं निधापयेत् ।
यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥ २९ ॥

"स्यातामग्निवधोत्क्लेशावत्यभ्यस्तेऽनुवासने । निरूहसेवनाच्चापि भवेयुर्वातजा गदाः" इति । स्नेहवस्तेरवस्थाविशेषेण प्रतिदिनं विधानमुद्दिशन्नाह—रूक्षायेत्यादि । अभ्यासेऽपि स्नेहवस्तिर्यथानिरापदस्तथोपदिशन्नाह—स्नेहोऽल्पमात्र इत्यादि । अर्द्धहीनता चतुर्भागावशिष्टता वाल्पशब्दार्थः, तेन षट्पलप्रमाणस्त्रिपलप्रमाणो वा स्नेहवस्तिर्दीर्घकालमभ्यस्तो रूक्षाणां निरत्ययो निर्गतव्यापत् । तथापि निरूहो दीर्घकालं स्निग्धानामल्पमात्र एव पादहीनोऽर्द्धभागहीनो वा शस्यते, अनत्ययत्वादित्यर्थः ॥ २६ ॥

स्नेहवस्तिव्यापल्लक्षणं सचिकित्सितं प्रतिपादयितुकामः स्नेहवस्तिव्यापद्व्याख्यानप्रतिज्ञामाह—अत ऊर्द्ध्वमित्यादि । दोषाभिभूतस्नेहव्यापदां सामान्यां सम्प्राप्तिमुद्दिशन्नाह—बलवन्त इत्यादि । स स्नेहः न निवर्त्तते न निर्गच्छतीत्यर्थः ॥ २७ । २८ ॥

तत्र प्रतीकारमाह—तत्र दोषाभिभूते इत्यादि । वस्तिमिति मारुतादिहरकषायं तथा संशोधनद्रव्यावापञ्च निरूहं स्नेहस्यापकर्षणं दद्यात् । यानि च दोषशमनानि तानि च यथायथमुपयोज्यानि । एतद् यथास्वं वस्तिदानमजीर्णज्वरादिकामामाशयस्थदोषजां व्यापदं परित्यज्य ज्ञेयम् । तत्सामान्ये लङ्घनादिकमेव ॥ २९ ॥

अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा तदा ।
गुरुरामाशयः शूलं वायोश्चाप्रतिसञ्चरः ॥
हृत्पीड़ा मुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः ।
तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥ ३० ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ।
तदाङ्गसदनाध्माने श्वासः शूलञ्च जायते ॥
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम् ।
अतितीक्ष्णौषधैरेव सिद्धश्चाप्यनुवासनम् ॥ ३१ ॥
शुद्धस्य दूरानुसृते स्नेहे स्नेहस्य दर्शनम् ।
गात्रेषु सर्व्वेन्द्रियाणामुपलेपोऽवसादनम् ॥
स्नेहगन्धि मुखश्चापि कासश्वासावरोचकः ।
अतिपीड़ितवत् तत्र विधिरास्थापनं तथा ॥ ३२ ॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः सम्प्रयोजितः ।
शीतो मृदुश्च नाभ्येति ततो मन्दं प्रवाहते ॥
विबन्धगौरवाध्मान-शूलाः पक्वाशयं प्रति ।
तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम् ॥ ३३ ॥
अल्पं भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा ।
दत्तो नैति क्रमोत्क्लेशौ भृशं वाऽरतिमावहेत् ॥
तत्रैवास्थापनं कार्य्यं शोधनीयेन वस्तिना ।
अन्वासनञ्च स्नेहेन शोधनीयेन शस्यते ॥ ३४ ॥

अत्याशित इत्यादि । अशुद्धस्येत्यकृतविरेचननिरूहस्य । शुद्धस्य दूरानुसृते उदरानुसृते स्नेहे स्नेहप्रदर्शनम् । उपलेपो मलवृद्धिः । अवसादनं ग्लानिः । अतिपीड़ितवत्तत्र सिद्धिः साधनं चिकित्सितमित्यर्थः । तत् पुनर्गलावपीड़ादिशीतसेकान्तं, तथास्थापनमवस्थायां स्नेहापकर्षक-शोधनद्रव्यकषायगोमूत्रावापम् ॥ ३०—३२ ॥

अस्विन्नस्येत्यादि । मन्दं प्रवाहते मन्दवेगं प्रवर्त्तते, तत्र यथादोषप्रत्यनीकमास्थापनमनुवासनञ्च तीक्ष्णं शीघ्रं प्रयोक्तव्यम् । अल्पमित्यादि । नैति न प्रत्यागच्छति । तत्रैवास्थापनं कार्य्यमिति । स्नेहस्त्वष्टाभिः कारणैर्न निवर्त्तत इति अनिवृत्तिर्व्यापदुक्ता, तद् कियतः कालादित्याह—

अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति ।
कुर्य्याद् वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ३५ ॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ।
सर्व्वोऽल्पो वाऽऽवृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ ३६ ॥
अनायान्तन्त्वहोरात्रात् स्नेहं संशोधनर्जयेत् ।
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते ।
इत्युक्ता व्यापदः सर्व्वाः सलक्षणचिकित्सिताः ॥ ३७ ॥
वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतः परम् ।
चतुर्द्दशाङ्गुलं नेत्रमातुराङ्गुलसम्मितम् ।
मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम् ॥
स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र कीर्त्तितः ।
पञ्चविंशादधो मात्रां विदध्याद् बुद्धिकल्पिताम् ॥

अहोरात्रादित्यादि । अपिशब्दात् त्रिचतुरादियामनिवृत्तिस्तावन्न दुष्यत्येवाहोरात्रादपीत्यपिशब्दार्थः । न दुष्यति न दोषं करोति न व्यापद्यत इत्यर्थः ॥ ३३ - ३५ ॥

सर्व्वथाऽनिवृत्तोऽप्यवयवेन वा निरुपद्रवो न व्यापद्यत इति बोधयन्नाह — यस्येत्यादि । आवृतो रौक्ष्यादिति आस्यां वाशब्दः प्रत्येकं सम्बन्धनीयः । तेनावृतो वा रौक्ष्याद् वा स्नेहवस्तिरनिःसृत इति सम्बन्धनीयम् । तत्रावृतो दोषक्षयेण अत्यशनेन मलसञ्चयेन वेत्यर्थः । रौक्ष्यादित्यनेन अस्विन्नस्याल्पं भुक्तवतोऽल्पशश्चेति त्रितयमपि गृहीतम्, एषु त्रिष्वपि अतिरौक्ष्येण वायुरेव विधारयतीत्येवमष्टौ व्यापदो गृहीताः । उपेक्ष्यः उपेक्षणीयः, तदाकृष्टयां यत्नं न कुर्य्यादित्यर्थः । अनायान्तमित्यादि । सोपद्रवन्तु स्नेहमहोरात्रादनागच्छन्तं हरेत् निर्हरेत् शोधनैरेव वस्तिभिः । स्नेहवस्तावनायाते इत्यादि । अनायाते सोपद्रवस्नेहे निरूहवस्तिरेव शोधनार्थं दीयते नेतर इत्यर्थः । उक्तं हि नियमयन्नाह—इत्युक्ता व्यापद इत्यादि । सर्व्वा व्यापदः सलक्षणचिकित्सिताः स्नेहवस्तेश्च वक्ष्यन्ते तत् चिकित्सिते इत्यनेन याः प्रागुपदिष्टास्ता अशेषा इत्यर्थः ॥ ३६ । ३७ ॥

उत्तरवस्तेरिदानीमवसरः—वस्तेरुत्तरसंज्ञस्येत्यादि । तत्र नेत्रस्य प्राक् प्रमाणमाह—चतुर्द्दशे-त्यादि ; तच्च नेत्रं चतुर्द्दशाङ्गुलं पुंसां जातीपुष्पवृन्तसदृशाग्रं सर्षपच्छिद्रञ्च मध्यसन्निविष्टकर्णिकं सुवर्णादिमयं मूले द्विकर्णिकञ्च । उक्तञ्च तन्त्रान्तरे—"तत् सौवर्णं राजतं वा श्लक्ष्णं गोपुच्छ वत् समम् । अश्मघ्नकुन्दसुमनःपुष्पवृन्ताग्रमण्डलम् ॥ सिद्धार्थकप्रवेशाग्रं मूले मध्ये सुकर्णिकम् । चतुर्द्दशाङ्गुलं नेत्रं तत्र कार्य्यं विजानता" इति । सप्ताङ्गुलञ्च परमं प्रणिधानम्, तथाच क्षारपाणिः— "अङ्गुलान्यथ चत्वारि पञ्च षट् सप्त वा तथा । सप्ताङ्गुलं परं नेत्रं प्रणिधेयं भिषग्विदा । हिंस्याद् वस्तिं नरस्चेह प्रमाणादधिकं ततः" इति ।

नेत्रमानमभिधाय स्नैहिकनैरूहिकभेदाभ्यां द्विविधे उत्तरवस्तौ वक्तव्ये स्नैहिकस्य प्राक् प्रयोज्य-

निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले ।
मूत्रस्रोतःपरीणाहं मुद्गवाहि दशाङ्गुलम् ।
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥ ३८ ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानान्त्वेकमङ्गुलम् ॥
विधेयश्चाङ्गुलं तासां विधिवद् वक्ष्यते यथा ।
स्नेहस्य प्रसृतश्चात्र स्वाङ्गुलीमूलसम्मितम् ।
देयं प्रमाणं परममर्व्वाग् बुद्धिविकल्पितम् ॥ ३९ ॥
औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः ।
तदलाभे प्रयुञ्जीत गलचर्म्म तु पक्षिणाम् ।
तस्यालाभे दृतेः पादो मृदुचर्म्म ततोऽपि वा ॥ ४० ॥

त्वात् स्नेहमानमाह—स्नेहप्रमाणमित्यादि । अत्रेति सुश्रुतमते । प्रकुञ्चः पलम् । पञ्चविंशादध इत्यादि वक्ष्यमाणवाक्यात् पञ्चविंशवर्षमारभ्य स्नेहप्रमाणं परमं प्रकीर्त्तितम् । चरकाचार्य्यः पुनरर्द्धपलम् । पञ्चविंशादित्यादि । अधः अर्व्वाक् । मात्रां बुद्धिकल्पितामिति अयमर्थः—सांवत्सरिकवालके स्नेहपलस्य पञ्चविंशतितममंशमारभ्य द्विवत्सरिकादौ प्रतिवत्सरं पञ्चविंशतितमस्यांशस्य वृद्धिं विदध्यात् यावत् पञ्चविंशतिवार्षिकस्य पलमिति । पुरुषाणां नेत्रादिमानमुक्त्वा इदानीं पुरुषनेत्रेऽनुक्तं कर्णिकानिवेशस्थानं तथा स्त्रीणां नेत्रकर्णिकास्थानपरिणाहायामैर्दर्शयन्नाह—निविष्टकर्णिकं मध्ये इति पुरुषस्य नेत्रमिति वाक्यशेषः । नारीणां चतुरङ्गुले इति निविष्टकर्णिकमित्यत्रापि सम्बन्धनीयम् । स्थौल्यमाह – मूत्रस्रोतःपरीणाहं मूत्रस्रोतःस्थौल्यं, मुद्गवाहीति अन्तश्छिद्रमानम् । दशाङ्गुलमिति दैर्घ्येण । एकीयमतेन प्रणिधानमाह—मेढ्रेत्यादि । मेढ्रायामसममिति अपत्यमार्गे पुरुषेन्द्रियस्थूलनेत्रं किञ्चिदधिकछिद्रञ्च ॥ ३८ ॥

नेत्रमानमभिधाय मार्गभेदेन प्रणिधानविधानमाह—तासामित्यादि । तासां प्रसूतानामप्रसूतानाञ्च प्राप्तगर्भग्रहणकालानां गर्भाशयशोधनार्थमपत्यमार्गे चतुरङ्गुलं निदध्यात् । मूत्रकृच्छ्रादिविकारेषु च तासामुभयरूपाणामपि मूत्रवर्त्मनि द्व्यङ्गुलं निदध्यात् । कन्यानामप्राप्तद्वादशवर्षाणां मूत्रकृच्छ्रादौ मूत्रवर्त्मनि एकमङ्गुलं निदध्यात् । स्त्रीणामुत्तरवस्तौ स्नेहमानमाह—स्नेहस्येत्यादि । अत्र स्त्रीविषये । स्वाङ्गुलीमूलसम्मितः प्रसृतो देयः, तच्च परममुत्तमं प्रमाणं सर्व्ववयोऽवस्थासु बलीयसि रोगे, मध्यहीनबलरोगे तु सर्व्वास्वपि वयोऽवस्थासूत्तमप्रमाणादर्व्वाक् मध्यं हीनञ्च बुद्ध्या विकल्पितं मानं ज्ञेयम् । गर्भाशयशोधनार्थञ्च स्नेहमात्राद्वैगुण्यमग्रे वक्ष्यति ॥ ३९ ॥

औरभ्रः मेषस्य शौकरो वन्यशूकरस्य आजश्छागस्य वस्तिः पूजितः ॥ ४० ॥

अथातुरमुपस्निग्धं स्विन्नं प्रशिथिलाशयम्।
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम्॥
निषण्णमाजानुसमे पीठे सोपाश्रये समम्।
स्वभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन मानवम्॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितम्।
पूर्व्वं शलाकयान्विष्य ततो नेत्रमनन्तरम्।
शनैः शनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट्॥
ततोऽवपीडयेद् वस्तिं शनैर्नेत्रञ्च निर्हरेत्।
ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः॥
भोजयेत् पयसा मात्रां यूषेणाथ रसेन वा।
अनेन विधिना दद्याद् वस्तींस्त्रींश्चतुरोऽपि वा॥ ४१॥
ऊर्द्ध्वजान्वै स्त्रियै दद्यादुत्तानायै विचक्षणः।
कन्येतरस्यै कन्यायै दद्यात् सुमृदुपीड़ितम्॥ ४२॥
त्रिकर्णिकेन नेत्रेण दद्याद् योनिमुखं प्रति।
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु॥ ४३॥

परं प्रणिधानमाह—अथातुरमित्यादि। स्नैहिकस्योत्तरवस्तेः सघृतक्षीरयवागूभोजनं पूर्व्वकर्म्म, पयोयूषरसैरपराह्णभोजनं पश्चात् कर्म्म, तेन पूर्व्वाह्णे चोत्तरवस्तिप्रणिधानम्। प्रशिथिलाशयमिति वातमूत्रपुरीषनिर्गमेण। सोपाश्रये सावष्टम्भके, समं यथा स्यादेवं निषण्णम्।

स्वभ्यक्तेत्यादि स्वभ्यक्तो वस्तेर्मूत्राधारस्य मूर्द्धा उपरितनभागो यस्य तं तथा। समम् ऋजुम्। नालं मेहनम्। प्रहर्षितं स्तब्धम्। अङ्गुलानि षड़िति मध्यमप्रमाणमेढ्रस्य मध्यमं प्रणिधानमानमवेक्ष्य। निविष्टकर्णिकं मध्य इति सूत्रमुत्तमं प्रणिधानमानमवेक्ष्य। तथा च प्रागुक्तम्—सप्ताङ्गुलं परं नेत्रमित्यादि। पयोयूषरसैर्भोजनं कफपित्तवातापेक्षया। अनेन विधिनेति अनन्तरोक्तेन। वस्तींस्त्रींश्चतुरोऽपि वेति अयमर्थः—प्राग्दत्तस्नेहप्रत्यागमने कालान्तरितस्त्र्यहश्चतुर्वा मात्रां वर्द्धयित्वा स्नेहो देयः; एवं त्रीणि दिनानि स्नैहिकमुत्तरवस्तिं दत्त्वा त्र्यहमेव विश्रम्य पुनस्त्र्यहं दद्यात् आ व्याधिनिवृत्तेः। तथाच वाग्भटः—"वस्तींस्त्रिरात्रमेवञ्च स्नेहमात्रां विवर्द्धयेत्। त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम्" इति॥ ४१॥

स्त्रीणामुत्तरवस्तिप्रणिधानविशेषमाह—ऊर्द्ध्वेत्यादि। विचक्षण इत्यत्र केचित् समाहित इति पठन्ति; कामसङ्कल्परहितेनाचलितचित्तप्रकृतिरित्यर्थः। वस्तिं दद्यादिति शेषः। त्रिकर्णिकेन नेत्रेणेत्यनेनात्रापि वस्तिनिबन्धनं कर्णिकाद्वयमिति सूचयति। कार्य्यविशेषे द्विगुणस्नेहेन स्नेहप्रकारमाह—गर्भाशयेत्यादि। स्नेहेन द्विगुणेन तु पूर्व्वोक्तवदत्राङ्गुलीमूलसम्मितप्रसृत्यपेक्षया द्विगुणेनेति ज्ञेयम्॥ ४२। ४३॥

काथप्रमाणं प्रसृतं स्त्रिया द्विप्रसृतं भवेत् ।
कन्येतरस्याः, कन्यायास्तद्वद्वस्तिप्रमाणकम् ॥
अप्रत्यागच्छति भिषग् वस्तावुत्तरसंज्ञिते ।
भूयो वस्तिं विदध्यात् तु संयुक्तं शोधनगणैः ॥
गुदे वर्त्तिं निदध्याद् वा शोधनद्रव्यसंभृताम् ।
प्रवेशयेद् वा मतिमान् वस्तिद्वारमथैषणीम् ।
पीड़येद् वाप्यधो नाभेर्बलेनोत्तरमुष्टिना ॥
आरग्वधस्य पत्रेषु निगुण्ड्याः स्वरसेषु च ।
कुर्य्याद् गोमूत्रपिष्टेषु वर्त्तीर्वापि ससैन्धवाः ॥
मुद्गैलासर्षपसमाः प्रविभज्य वयांसि तु ।
वस्तेरागमनार्थाय ता निदध्याच्छलाकया ॥

स्नैहिकोत्तरवस्तेः प्रमाणं निर्द्दिश्यावसरप्राप्तं निरूहोत्तरवस्तिप्रमाणमाह—काथप्रमाणमित्यादि। काथप्रमाणं प्रसृतमिति पुरुषस्येति शेषः। तेनातुरपुरुषस्य यथावयः स्वहस्तसम्मितं प्रसृतं मात्राप्रमाणम्। स्त्रिया इत्यादि प्रसूतायाः प्रसूतिरहिताया वा गर्भग्रहणयोग्याया गर्भाशयशोधनार्थम्। प्रसूतानामप्रसूतानाञ्च वस्तिशोधनार्थमाह—कन्येतरस्या इत्यादि। कन्येतरस्या अप्रसूतायाः प्रसूताया वा गर्भग्रहणायोग्यायाः। कन्यायाः अप्राप्तद्वादशवर्षायाः। तद्वदिति पुरुषवत् यथावयः स्वहस्तसम्मितं प्रसृतं प्रमाणं वस्तिशोधनार्थं, न तु द्विप्रसृतं, तस्य गर्भाशयशोधनार्थं विहितत्वादिति। अनागच्छति स्नेहे प्रत्यागमनोपायमाह—अप्रत्यागच्छतीत्यादि। अत्र गयदासः स्नैहिकस्योत्तरवस्तेर्भालुकिदर्शनात् मात्राशतादूर्द्धं प्रत्यागमनकालं वर्णयति। तथाहि भालुकिः—"वस्तिर्मात्राशतादूर्द्धं मुस्तादैरनं घटेत्तथा। अनागच्छति वर्त्तिञ्च पायौ नाले प्रदापयेत्" इति। हृद्बलस्तु प्रत्यागमनकालमनुवासनोत्तरवस्तेरिति मन्यते। तथाच तद्वाक्यम्—"प्रत्यागते द्वितीये च तृतीयञ्चैव दापयेत्। अनागच्छन्नुपेक्ष्यस्तु रजनीम्" इत्यादि। तत्रोपद्रवकारी मात्राशतादूर्द्धं स्नेहो यत्नेनानयितव्यः, न त्वनुवासनवत् त्रियामात् परत इति। अनागच्छन् निरुपद्रवश्चाहोरात्रमुपेक्षणीय इति मतद्वयमप्यवस्थावशेन प्रमाणयितव्यम्। एवंविधप्रत्यागमनकाले अनागच्छति स्नैहिके निरूहोत्तरवस्तिसंशोधनैस्त्रिवृदादिभिर्वस्तिशोधनैश्च तृणपञ्चमूलादिगणद्रव्यैः काथरूपैर्युक्तं वस्तिं प्रसृतिमात्रं मूत्रमार्गेण, स्त्रियाः द्विप्रसृतिमात्रमपत्यमार्गेण स्नेहापकर्षणं दद्यात्। शोधनद्रव्यसम्भृतामिति विरेचनद्रव्यनिर्म्मितताम्। एषणीं शलाकाम्। यच्चावशेषं तद् बलेन सामर्थ्येन, उत्तरमुष्टिना मुष्टेरग्रभागेन। गुदवर्त्तिमभिधाय मूत्रमार्गे वयोभेदेन दर्शयन्नाह— आरग्वधेत्यादि। ता वर्त्तीस्तन्त्रान्तरदर्शनात् छायाशुष्काः घृताक्ताः मूत्रमार्गे शलाकया विदध्यात् प्रवेशयेत् स्नेहापकर्षणार्थमपत्यमार्गे स्थूला वर्त्तिश्चतुरङ्गुला प्रणिधेया।

आगारधूमबृहती-पिप्पलीफलसैन्धवैः।
कृता वा शुक्तगोमूत्र-सुरापिष्टैः सनागरैः॥
अनुवासनसिद्धिश्च वीक्ष्य कर्म्म प्रयोजयेत्॥
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना।
दह्यमाने तदा वस्तौ दद्याद् वस्तिं विचक्षणः।
क्षीरवृक्षकषायेण पयसा शीतलेन च॥ ४४॥
शुक्रं दुष्टं शोणितश्चाङ्गनानां पुष्पोद्रेकं तस्य नाशञ्च कष्टम्।
मूत्राघातान् मूत्रदोषान् प्रवृद्धान् योनिव्याधिं संस्थितिञ्चापरायाः॥
शुक्रोत्सेकं शर्करामश्मरीञ्च शूलं वस्तौ वङ्क्षणे मेहने च।
घोरानन्यान् वस्तिजांश्चापि रोगान् हित्वा मेहानुत्तरो हन्ति वस्तिः॥ ४५॥
सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना॥ ४६॥

इति सुश्रुत-संहितायां चिकित्सितस्थानेऽनुवासनोत्तरवस्तिचिकित्सितं नाम सप्तत्रिंशोऽध्यायः॥ ३७॥

प्रकारान्तरेण वर्त्तिमाह—आगारेत्यादि। फलं मदनफलम्। कृता वर्त्तीमुं द्वादिप्रमाणाः। शुक्तं चुक्रम्। किञ्चिदनुवासनमाह—अनुवासनसिद्धिमित्यादि। स्नैहिकोत्तरवस्तिदानानन्तरं यदनुक्तं स्फिक्ताड़नादिकं कर्म्म तदनुवासनचिकित्सितं वीक्ष्य प्रयोजयेत्। तथा च वाग्भटः—"पीड़ितेऽन्तर्गते स्नेहे स्नेहवस्तिक्रमो हितः" इति। तत्र स्नेहप्रदानकुपितपित्तेनानिर्गच्छतः स्नेहस्य निर्गमनार्थं दत्ततीक्ष्णोष्णनिरूहकुपितपित्तेन वा दह्यमाने वस्तौ वस्तिविशेषमुपदिशन्नाह—शर्करेत्यादि। शर्करामधुमिश्रेणेति त्रिष्वपि योगेषु योजनीयमिति॥ ४४॥

इदानीमुत्तरवस्तेर्विषयं दर्शयन्नाह– शुक्रमित्यादि। पुष्पं ऋतुस्तस्योद्रेकः अकालप्रवृत्तिः, कष्टं कष्टसाध्यम्। मूत्राघातान् मूत्रावरोधान्। मूत्रदोषान् मूत्रकृच्छ्रान्। संस्थितिं निर्गमरोधमित्यर्थः। अपरा गर्भावरणविशेषः, यस्य उल्व (फुल) इति लोके प्रसिद्धिः। अशेषवस्तिरोगपरिहारार्थमाह—वस्तिजांश्चापि रोगानिति। क्रमः चिकित्सितमित्यर्थः॥ ४५। ४६॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे अनुवासनोत्तरवस्तिचिकित्सितव्याख्यानाम सप्तत्रिंशोऽध्यायः॥ ३७॥

---

# अष्टत्रिंशोऽध्यायः ।

**अथातो निरूहक्रमचिकित्सितं व्याख्यास्यामः,**
**यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥**

अथानुवासितमास्थापयेत् । स्वभ्यक्तस्विन्नशरीरमुत्सृष्टवहिवेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामधःसुपरिग्रहायां श्रोणिप्रदेशव्यूढाया-मनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थमितरप्रसारितसक्थं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुष्ठाङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिका-नामिकाभ्यां वस्तेमुखाद्र्ध्वंसङ्कोच्य मध्यमाप्रदेशिन्यङ्गुष्ठैरूर्ध्वन्तु विवृतास्यं कृत्वा वस्तावौषधं प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्याश्चानुत्सिक्तमनायतमबुद्बुद-मसङ्कुचितमवातमौषधासन्नमुपसंगृह्य पुनरितरेण गृहीत्वा दक्षिणेनावसिञ्चेत्, ततः सूत्रेणैवौषधान्ते द्विस्त्रिर्वावेष्ट्य बध्नीयात् । अथ दक्षिणेनोत्तानेन पाणिना वस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय घृताभ्यक्ताग्रनेत्रं घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंशं सममुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात् ॥ २ ॥

निरूहस्य क्रमः निरूहक्रमः अनुक्रमविधानं, स एव चिकित्सितं व्याधिप्रतीकारः । निरूहोप-क्रमचिकित्सितमिति केचित् पठन्ति, तन्मतेऽपि निरूहोपक्रमो निरूहारम्भः, स एव चिकित्सितमिति व्याख्यानम् । अनुक्रमप्रणयनसम्बन्धं दर्शयन्नाह—अथानुवासितमित्यादि । अनुवासितं दत्तानुवासनं स्निग्धस्रोतोमार्गतया सुखमेव दोषनिर्हरणार्थमास्थापयेत् । निरूहस्य प्रणिधानविधान-माह—स्वभ्यक्तमित्यादि । उत्सृष्टवहिर्वेगं त्यक्तविण्मूत्रादिकम् । प्रततायां शय्यायां स्वब्धायां, विस्तीर्णायामिति केचित् । केचिदत्र अधःसुपरिगृहीतायां पादतलयोः शोभनप्रतिवाहकायाम् । श्रोणिप्रदेशव्यूढायां कटिप्रदेशविशालायां, व्यूढायां शोभनोन्नतायामिति केचिद् व्याख्यानयन्ति । अनुपधानायां अनुपशीर्षकायाम् । सुनिषण्णदेहं अंसोन्नतं यथा स्यात्तथा विश्रान्तशरीरम् । सव्यपाणिर्वामकरः । औषधं प्रक्षिप्य उपसंग्रहणेन क्रियाविशेषेण । अनुत्सिक्तमूर्ध्वं क्षरणरहितं यथा भवति तथा सिक्तम् । अनायतमनतिदीर्घम् (अचिरात् प्रवृत्तम्) । अबुद्बुदं बुद्बुदरहितम् । असङ्कुचितं वस्तुसञ्चरणक्षमम् । अवातमौषधदानेन निःसारितवातम् । एवं दक्षिणहस्ताङ्गुष्ठेन प्रदेशिनीमध्यमाभ्याञ्चौषधान्तमुपसंगृह्य पुनर्दक्षिणहस्तोपगृहीतोपरि तदितरेण वामकरेण गृहीत्वा, दक्षिणकरेणैवौषधान्ते सूत्रेण द्विस्त्रिर्वावेष्ट्य बध्नीयात् । आकर्णिकं कर्णिकां मर्यादीकृत्य । नेत्रं प्रणिधत्स्व प्रवेशयेति आतुरं प्रति भिषग् ब्रूयादिति सम्बन्धः ॥ १ । २ ॥

वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्।
एकेनवावपीड़ेन न द्रुतं न विलम्बितम्॥ ३॥

ततो नेत्रमपनीय त्रिंशन्मात्राः पीड़नकालादुपेक्ष्योत्तिष्ठेरयातुरं ब्रूयात्। अथातुरमुपवेशयेदुत्कटुकं वस्त्यागमनार्थम्। निरूहप्रत्यागमनकालस्तु मुहूर्त्तो भवति॥ ४॥

अनेन विधिना वस्तिं दद्याद् वस्तिविशारदः।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथाथतः॥
सम्यङ्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत्।
विशेषात् सुकुमाराणां हीन एव क्रमो हितः।
अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम्॥ ५॥
यस्य स्याद् वस्तिरल्पोऽल्प-वेगो हीनमलानिलः।
दुर्निरूढ़ः स विज्ञेयो मूत्रार्त्त्यरुचिजाड्यवान्॥

नेत्रप्रणिधानमभिधाय वस्तिपीड़नविधिमाह—वस्तिमित्यादि। त्रिंशन्मात्रा इति मात्रामान हि अग्निवेशेन व्याख्यातम्—"यावत् पर्य्येति हस्ताग्रं दक्षिणं जानुमण्डलम्। निमेषोन्मेषकालो वा सा मात्रा परिकीर्त्तिता" इति। पराशरस्तु वस्तिकर्म्मणि मात्रासंख्यामाह—"जानुमण्डलमावेष्ट्य दत्ते दक्षिणपाणिना। कृष्टनेत्रश्छटाशब्दशतं तिष्ठेदवेगवान्" इति। तत्र पराशरेण क्रूरकोष्ठपुरुषमङ्गीकृत्य मात्राशतमभिहितम्, शेषयोर्मध्यमृदुकोष्ठयोः सप्ततिस्त्रिंशदित्यनुक्तमप्यूहनीयः स्यादित्येके मन्यन्ते, यतः सुश्रुताचार्य्येणापि मृदुकोष्ठपुरुषापेक्षया प्रोक्तः त्रिंशन्मात्रापीड़नकालः। अथवा त्रिंशन्मात्रानन्तरं वैद्येनोत्तिष्ठेत्युक्ते सति आतुरस्योत्थानासनोत्कटुकभवनादिकालविलम्बेनैव मात्राशतं पूर्णं स्यादिति शास्त्रयोरविरोधः। मुहूर्त्तः घटिकाद्वयम्। मुहूर्त्तादप्रवृत्तमानं शोधननिरूहैरेव व्यक्तक्षाराम्ललवणैर्हरेत्। एकत्र विहितं प्रणिधानं संक्षेपार्थमन्यत्रापि निर्द्दिशन्नाह—अनेनैवेत्यादि। चतुर्थं वा यथार्थत इति अर्थस्य प्रयोजनस्यानतिक्रमतो यथार्थतः। एतदुक्तं भवति—यदा सुनिरूढलिङ्गप्राप्तो भवति तदा तत्र निर्हरणीयाभावान्निरूहणमप्रयोजनमिति न देयम्, असम्यग्दानेन क्रूरकोष्ठतया प्रभूतदेयत्वेन वा सुनिरूढमप्राप्तस्य निर्हरणीयो दोषोऽस्तीति चतुर्थमपि निरूहं सुनिरूढलिङ्गार्थं प्रयोजयेत्। चतुर्थं वा यथार्हतः इति पाठे निरूहसाध्यप्रयोजनानुरोधाच्चतुर्थमपि पुटकं प्रयोजयेदित्यर्थः। अमुमेवार्थं प्रकटयन्नाह—सम्यगित्यादि। केचिद्रक्तमप्यत्र चतुर्थं शमनीयमस्तीति चतुर्थं वस्तिदानमाहुः, अपरे तु पश्चाद्दाहनिवारणार्थं मधुरशीतैश्चतुर्थोऽपि वस्तिर्देय इति वदन्ति। योगजातियोगजयोर्व्यापदोर्मध्ये अतियोगजा व्यापत् महात्ययं करोतीति ततो बिभ्यदाह—अपि हीनक्रममित्यादि॥ ३—५॥

दुर्निरूढलक्षणमाह—यस्येत्यादि। अल्पो अल्पगुणमात्रः। अल्पवेगः स्तोकवेगः। मूत्रार्त्तिः मूत्रपीड़ा। अल्पगुणमात्रवस्त्युपयोगोत्क्लेशितमलावरोधन जाड्यमपटुता। अतिनिरूढलिङ्गमाह—

यान्येव प्राक् प्रयुक्तानि लिङ्गान्यतिविरेचिते ।
तान्येवातिनिरूढ़ेऽपि विज्ञेयानि विपश्चिता ॥
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ।
लाघवञ्चोपजायेत सुनिरूढ़ं तमादिशेत् ॥
सुनिरूढ़ं ततो जन्तुं स्नातवन्तन्तु भोजयेत् ।
पित्तश्लेष्मानिलाविष्टं क्षीरयूषरसैः क्रमात् ॥
सर्व्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः ।
त्रिभागहीनमर्द्धं वा हीनमात्रमथापि वा ॥
यथाग्निदोषं मात्रवं भोजनस्य विधीयते ।
अनन्तरं ततो युञ्ज्याद् यथास्वं स्नेहवस्तिना ॥
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः ।
आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्षणम् ॥

यानीत्यादि । यान्येव प्राक् प्रयुक्तानि शूलगुदभ्रंशकफातियोगादीनि । सम्यङ् निरूढ़-लिङ्गमाह—यस्येत्यादि । विट् मलः । सुनिरूढ़स्य पश्चात् कर्म्म निर्द्दिशन्नाह—सुनिरूढ़-मित्यादि । केचिदत्र निरूढ़लिङ्गोत्पादपुटप्रत्यागमानन्तरं पीतनागरकर्षतो यस्योद्वर्त्तनस्नानादिकं मन्यन्ते । तदुक्तम्—"ततः प्रत्यागते वस्तौ वार्य्युष्णं नागरैः शृतम् । पाययेत् कृतशौचञ्च स्नापयेदुष्णवारिणा" इति ।

कियद्भोजनं तदाह—त्रिभागेत्यादि । हीनमात्रमथापि वेत्यत्र मात्रशब्दोऽल्पार्थः । तेन हीनमात्रमल्पहीनम् । ततो मात्रावद्भोजनानन्तरं यथास्वं यो य आत्मीयदोषापेक्षया स्नेहवस्ति-स्तेन स्नेहवस्तिना युञ्ज्यात् । परं सुनिरूढ़मेव पुरुषं न तु दुर्निरूढ़ं, तत्र सदोषतया यथादोषं निरूहणमेव कार्य्यम् । न चातिरूढ़ं, तत्रातिविरिक्तवद् भेषजं शीतपरिषेकपिच्छावस्त्यादिकं, न तु स्नेहवस्तिः । तथा च विदेहः—"अतितीक्ष्णैर्निरूढ़स्य हृतदोषस्य सर्व्वतः । कश्चिदेवा-नभिप्रेतं मार्गं स्नेहोऽनुगच्छति" इति । गयदासस्तु परिभाषितं षट्पलप्रमाणं स्नेहवस्तिमत्र देयं न मन्यते, किन्त्वानुवासनाख्यपलत्रयप्रमाणं स्नेहवस्तिं देयमत्र मन्यते । यत्र तु स्नेहवस्तिः स्वतन्त्रः, तत्रैव षट्पलप्रमाणः । इदानीं सान्वासनास्थापनस्य सम्यग्दत्तस्य लक्षणमाह - विविक्त-तेत्यादि । विविक्तता सम्यक् पृथगवधारणं, मनस एवेन्द्रियार्थेषु सम्यगवधारणसामर्थ्यं, रसादिधातुवहस्रोतसामनावृतत्वं वा विविक्तता ।

तदहस्तस्य पवनाद् भयं बलवदिष्यते।
रसौदनस्तेन शस्तस्तदहश्चानुवासनम्॥
पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम्।
अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते॥ ६॥
अनायान्तं मुहूर्त्तात् तु निरूहं शोधनैर्हरेत्।
तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसंयुतैः॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वरानाहं मरणं वा प्रवर्त्तयेत्॥ ७॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः।
विसूचिकां वा जनयेच्छर्दिं वापि सुदारुणम्।
कोपयेत् सर्व्वदोषान् वा तस्माद् दद्यादभोजिने॥
जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः।
निःशेषाः सुखमायान्ति भोजनेनाप्रपीड़िताः॥

कुतः पुनर्निरूहशुद्धस्य मन्दाग्नेस्तदहरेव मांसरसभोजनमनुवासनयोजनञ्चेत्याह—तदहरित्यादि। निरूहणाद् विड्वातादिप्रवृत्तिलक्षणेन धातुक्षयेण कुपितानिलस्य बलवदेव भयमिति तदहरेव रसौदनभोजनं, तच्च निरूहणमन्दीकृतानलवधभयात् मात्रावत्, तथा पवनभयात् तदहरेव द्वादशप्रसृतनिरूहचतुर्थांशेन स्नेहेनानुवासनम्। गयदासस्तु सुनिरूढस्य तदहः पलत्रयमेवानुवासनम्, तथा तदहश्चेति चकारो भिन्नक्रमे, तेनानुवासनञ्चेत्यत्र सम्बन्धादनुक्तोऽपि मात्रावस्तिश्चात्र समुच्चीयत इति मन्यते, न षट्पलप्रमाणं स्नेहवस्तिं, भोजदर्शनादिति॥ ६॥

निरूहणादनन्तरं तृतीयचतुर्थादावपि दिने वस्तिदानमाह—पश्चादित्यादि। पश्चात् सान्वासनान्निरूहणात्। अग्निबलं दीप्तं बलं वयःशक्त्यनुरूपमुपलभ्य, पवनस्य च चेष्टितं मत्वेति सञ्चलनशब्दकरणस्फुरणादिकमवधार्य्यं, अन्नपानेनावष्टब्धे कोष्ठे स्नेहवस्तिरुत्तममात्रारूपः षट्पलः क्रियते। ततः परं घटिकाद्वयादनागच्छतो निरूहस्य निर्हरणोपायं दर्शयति—अनायान्तमित्यादि। निरूहैर्मतिमान् हरेदिति सम्बन्धः। कथम्भूतैर्निरूहैरित्याह—शोधनैस्तीक्ष्णैः। क्षारमूत्राम्लसंयुतैः क्षारो यवक्षारः, मूत्रं गोमूत्रम्, अम्लं काञ्जिकम्। विगुणो विपरीतः। अरतिर्न कुत्रचित् अवस्थितिश्चेतसः॥ ७॥

भुक्तवतः कस्मादास्थापनं निषिध्यते तदाह—न त्वित्यादि। न तु भुक्तवत इत्यादिना य आस्थापननिषेधोऽभिहितस्तस्य दृढीकरणार्थं भुक्तवतो विसूचिकादिदोषोद्भावनया अभोजिने दानमाह विसूचिकां वेत्यादि। विसूचिकेत्यादिदूषणोद्भावनद्वारेण अभोजिने दानमभिधाय जीर्णान्नस्येत्याद्युपक्षुणद्वारेणाऽप्यभोजिन एव दानमाह—जीर्णान्नस्येत्यादि। प्रव्यक्तिं स्पष्टतां

न वास्थापनविक्षिप्तमन्नमग्निः प्रधावति ।
तस्मादास्थापनं देयं निराहाराय जानता ॥
आवस्थिकं क्रमश्चापि मत्वा कार्य्यं निरूहणम् ।
मलेऽपकृष्टे दोषाणां वलवत्त्वं न विद्यते ॥ ८ ॥
क्षीराण्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ।
लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा ॥
एला त्रिकटुकं रास्ना सरलो देवदारु च ।
रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च ॥
कटुका शर्करा मुस्तमुशीरं चन्दनं शटी ।
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥
विल्वमध्यं यमानी च फलिनी शक्रजा यवाः ।
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ॥
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका ।
निरूहेषु यथालाभमेष वर्गो विधीयते ॥ ९ ॥
स्वस्थे क्वाथस्य चत्वारो भागाः स्नेहस्य पञ्चमः ।
क्रुद्धेऽनिले चतुर्थस्तु षष्ठः पित्ते कफेऽष्टमः ॥

निरावरणतामित्यर्थः । तीव्रशूलाध्मानादिरोगावस्थस्योपक्रमेणापि नोर्द्ध्वं शुध्यतः फलवर्त्त्यादि-प्रणिधानपूर्व्वकं भुक्तवतोऽपि निरूहदानं कर्त्तव्यं स्यादत आह—आवस्थिकमित्यादि ॥ ८ ॥

इदानीं वस्तियौगिकानि द्रव्याण्युपदिशन्नाह—क्षीराणीत्यादि । फलं त्रिफला । सरलो वृक्ष-विशेषः । संशोधनानि त्रिवृदादीनि । मदनं मदनफलम् । शक्रजा यवा इन्द्रयवाः । मधूलिका तृणविशेषः, मर्कटिकेति लोके ॥ ९ ॥

सम्प्रति निरूहणेषु क्वाथादिषु प्रतिदोषं कियती कस्य मात्रेत्याह—स्वस्थ इत्यादि । स्वस्थे समवातपित्तकफे पुरुषे । द्वादशप्रसृतस्य निरूहस्य क्वाथस्य चत्वारो भागाश्चत्वारः प्रसृताः अष्टौ पलानि । स्नेहस्य भागः पञ्चम इति चतुर्व्विंशतिपलनिरूहापेक्षया पादोनपञ्चपलानि । क्रुद्धेऽनिले चतुर्थ इति चतुर्थो भागः षटपलानीत्यर्थः । षष्ठः पित्ते इति क्रुद्धे पित्ते स्नेहस्य षष्ठो भागः

सर्व्वेषु चाष्टमो भागः कल्कानां लवणं पुनः।
क्षौद्रं मूत्रं फलं क्षीरमम्लं मांसरसं तथा।
युक्त्या प्रकल्पयेद् धीमान् निरूहे कल्पना त्वियम्॥
कल्कस्नेहकषायाणामविवेकाद् भिषग्वरैः।
वस्तेः सुकल्पना प्रोक्ता तस्य दानं यथार्थकृत् * ॥
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्।
पात्रे तलेन मथ्नीयादनु स्नेहं शनैः शनैः॥

चत्वारि पलानीत्यर्थः। कफेऽष्टम इति क्रुद्धे कफ स्नेहस्याष्टमो भागस्त्रीणि पलानीत्यर्थः। सर्व्वत्र वातपित्तश्लेष्मसु कल्कस्य अष्टमो भागस्त्रीणि पलानीत्यर्थः। सर्व्वेषु स्वस्थास्वस्थेषु इति गयी। लवणं पुनरित्यादि लवणादीनि विशेषप्रमाणेनानुक्तान्यपि युक्त्या दापयेत्, युक्त्या योगेनेत्यर्थः। ननु कषायादिवल्लवणादिषु कुतो मात्रा नोक्ता ? सत्यं, लवणादीनां दोषभेषजयोः सामान्यविशेषेण गुणमवलोक्य सम्यक् योगसाधनमेव मानम्। तद् यथा · वाते क्षौद्रं मितं, पित्ते नातिबहु, बहु पुनः कफे इति। एवमन्येष्वपि द्रव्येषु ज्ञेयम्। नियते पुनर्माने क्वचिद् योगः क्वचिदयोग इति स्यात्। एतदुक्तं भवति—कषायादिना नियतमानेन सहानियतमानैर्लवणादिभिर्युक्त्या द्वादश प्रसृताः पूरणीया इति। ततो लवणादीनां मात्रां दोषभेषजयोः सामान्यविशेषन्यायेन गुणमवलोक्य सम्यक् प्रकल्पयेत्। क्वचिद् वातादिविषयसात्म्यमन्यथा पठ्यते। तथाहि—"मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षट् द्वादश त्रीणि पलान्यनिलरोगिणाम्। पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्। षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्" इति पूर्व्वाचार्य्यभणितत्वाद् द्वयमपि प्रमाणम्।

निरूहावयवयोगिषु सम्यग् योगहेतुकमात्रां नियम्य समुदायकल्पनामुद्दिशन्नाह—कल्पना त्वियमिति। का पुनरियमित्याह—कल्कस्नेहकषायाणामित्यादि। अविवेकादिति ल्यब्लोपे पञ्चमी। तेन कल्कादीनाञ्च विवेकाभावमपृथग्भावं वीक्ष्य सुकल्पना तु भिषग्वरैः प्रोक्ता। एतेन हस्तप्रधावनसीमन्तादिकन्नमिथ्यायुक्तः। तथाचोक्तम्—"न धावत्यौषधं पाणिं न तिष्ठत्यनुलिप्य च। न करोति च सीमन्तं निरूहः सम्प्रयोजितः।" तस्य दानं यथार्थकृदिति वातपित्तकफशोणितहरणशोधनसंग्रहणलेखनबृंहणवाजीकरणरसायनादियोगकृत्।

वस्तिद्रव्याणि केन क्रमेण योज्यन्ते तमाह—दत्त्वेत्यादि। मधुनः प्रसृतद्वयं चत्वारि पलानि। तलेन हस्ततलेन। अक्षं कर्षं, तद्वत् स्नेहं मधुप्रमाणम्, शनः शनैरल्पमल्पं स्नेहं दत्त्वेत्यर्थः।

* वस्तिस्तु कल्पितः सम्यक् तस्यादानं यथार्थकृदिति पाठान्तरम्।

सम्यक् सुमथिते दद्यात् फलकल्कमतःपरम् ।
ततो यथोचितान् कल्कान् भागैः स्वैः श्लक्ष्णपेषितान् ॥
गम्भीरे भाजनेऽन्यस्मिन् मथ्नीयात् तं खजेन च ।
यथा च साधु मन्येत न सान्द्रो न तनुः समः ॥
कषायप्रसृतान् पञ्च सुपूतांस्तत्र दापयेत् ।
रसक्षीराम्लमूत्राणां दोषावस्थामवेक्ष्य तु ॥ १० ॥

अत ऊर्द्ध्वं द्वादश प्रसृतान् वक्ष्यामः—

दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम् ।
विनिर्म्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत् ।
संमूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम् ॥
वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् ।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ॥
ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम् ।
अपह्रासे भिषक् कुर्य्यात् तद्वत् प्रसृतिह्रापनम् ॥
यथावयो निरूहाणां कल्पनेयमुदाहृता ।
सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥ ११ ॥

शनैःशनैरित्युत्तरत्रापि सम्बध्यते । फलकल्कमतःपरम् अतःपरमस्मिन् सुमथिते फलकल्कं मदनफलकल्कम् । तत इत्यादि । ततः फलकल्कादिदानोत्तरम् । कल्कादीन् यथोचितान् वातादिपूचितानतिक्रमेण । भागैः स्वैरिति अंशैरात्मीयैः, यथा मदनफलेन सह सर्व्वकल्कद्रव्याणां पलत्रयं भवति, एवं कल्पितैः । श्लक्ष्णं पेषितान् सूक्ष्ममर्द्दितान् कल्कान् दद्यादिति सम्बन्धः । गम्भीरे इत्यादि । पूर्व्वपात्रादन्यस्मिन् गम्भीरभाजने खजेन मथ्नीयात् । खजोऽत्र पञ्चाङ्गुलो हस्तो मन्थानश्च । यथेत्यादि । मथ्नीयादित्यत्रापि सम्बन्धनीयम् । एतेन करेणापि मथ्नीयादित्यर्थः । रसेत्यादि । रसादीनां दोषावस्थामवेक्ष्य मात्रामर्पयेदिति शेषः । तन्त्रान्तरे निरूहयोजना प्रोक्ता—"क्षीरञ्च (माक्षिकं) लवणं स्नेहं कल्कं क्वाथमिति क्रमात् । आवाप्यावाप्य पात्रे तत् मथ्नीयादन्तरान्तरा । सम्यक् पाणितलेनैव निरूहे योजनाविधिः" इति ॥ १० ॥

द्वादशप्रसृतप्रमाणसाधनं निर्द्दिशन्नाह—अत इत्यादि । सम्मूर्च्छिते मिलिते । वितरेत् दद्यात् । आवापः पश्चान्निक्षेप्यं क्षीरकाञ्जिकादि । द्विप्रसृतिम्मितं चतुःपलप्रमाणम् । सैन्धवकर्षस्त्विति स्तोकात्स्तोकाच्चतुर्व्विंशतिपलेष्वेवान्तर्भवतीत्यतिरिक्तदोषो न वाच्यः । अपह्रासे अपह्रासविषये स्तोककरणाभिलाषे प्रसृतस्थापनं पलद्वयादित्यागं भिषक् कुर्य्यात् ॥ ११ ॥

अत ऊर्द्ध्वं प्रवक्ष्यन्ते वस्तयोऽत्र विभागशः।
यथादोषं प्रयुक्ता ये हन्युर्नानाविधान् गदान्॥ १२॥
शम्पाकोरुबुवर्षाभू-वाजिगन्धानिशाच्छदैः।
पञ्चमूलीबलारास्ना-गुड़ूचीसुरदारुभिः॥
क्वथितैः पालिकैरेभिर्मदनाष्टकसंयुतैः।
कल्कैर्मागधिकाम्भोद-हवुषामिसिसैन्धवैः॥
वत्साह्वयप्रियङ्ग्वग्रा-यष्ट्याह्वयरसाञ्जनैः।
दद्यादास्थापनं कोष्णं क्षौद्राद्यैरभिसंस्कृतम्॥
पृष्ठोरुत्रिकशूलाश्म-विण्मूत्रानिलसङ्गिनाम्।
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम्॥ १३॥
गुड़ूचीत्रिफलारास्ना-दशमूलबलापलैः।
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्ग्वञ्जनसैन्धवैः॥

विभागशः विभागेनेत्यर्थः। यथादोषप्रयुक्ता इत्यत्र दोषशब्दो वातादिषु व्याधिषु च वर्त्तते। इदानीं कुपितानिलमधिकृत्य वस्तिदानमाह, तथा सर्व्ववस्तिद्रव्यनिक्षेपक्रमञ्च। शम्पाकः किरमालकः। निशाच्छदः शठी। पञ्चमूली अत्र ह्रस्वा। अम्भोदः मुस्ता। तत्र शम्पाकादीनि सुरदारुपर्य्यन्तानि चतुर्द्दशपलप्रमितानि मदनाष्टकसंयुतानि चतुर्भिर्मदनफलैः पलं भवति, एवं षोड़शपलानि द्रव्याणि जर्ज्जरीकृत्याष्टगुणमष्टाविंशत्यधिकपलशतप्रमाणं जलं दत्त्वा क्वाथयेत्, यावद् द्वात्रिंशत् पलानि भवन्ति। ततो वस्त्रपूतं कृत्वाष्टपलं क्वाथं गृह्णीयात्। चतुर्व्वारप्रयोजनोऽयं क्वाथः, द्वितीयं वा तृतीयं वेत्यादिनोक्तत्वात्। ततश्च गम्भीरं ताम्रभाजनमानीय टङ्कत्रयपरिमितं सैन्धवं निक्षिप्य, क्षौद्रमित्युक्तत्वात् पलत्रयपरिमितं मधु च करतलेन मर्द्दयेत्। ततः सैन्धवमधुनी एकीकृत्य क्षौद्राद्यैरभिसंस्कृतमित्यत्राद्यशब्देन स्नेहक्षीरकाञ्जिकमूत्रमांसरसानां संगृहीतत्वात् षट्पलप्रमाणं पक्वं तैलं प्रक्षिप्य संमथ्नीयात्। तदनु चैकीभूते स्नेहे मागधिकादिरसाञ्जनपर्य्यन्त नवद्रव्यचूर्णं सैन्धवटङ्कत्रयेण पलत्रयप्रमितं निक्षिप्य मथ्नीयात्। सैन्धवटङ्कत्रयप्रमाणस्यादावेव च निक्षिप्तत्वात् कल्कः पलत्रयपरिमितो निक्षिप्तो भवति। ततश्च द्वात्रिंशत्पलप्रमाणक्वाथमध्यादष्टौ पलानि उद्धृत्य तत्र निक्षिपेत्। तदनु च मांसरसस्य सार्द्धपलं, क्षीरस्यापि सार्द्धं पलं, काञ्जिकस्यार्द्धं पलं तथा गोमूत्रस्यापि तत्र निक्षिप्यते, एवं चतुर्व्विंशतिपलानि भवन्ति। एवं द्वितीयं तृतीयं चतुर्थं वा पुटकं दद्यात्। अयं वस्तिर्वाते वातरोगे च प्रयोज्यः॥ १२। १३॥

गुड़ूचीत्यादि। पलं मांसम्। शेषं प्रसिद्धम्। गुड़ूच्यादीनि बलान्तानि षोड़शद्रव्याणि प्रत्येकं पलमितानि, तथा मांसस्यापि षोड़शपलानि, एवं सप्तदशद्रव्याणि द्वात्रिंशत्पल-परिमितानि, मांसस्य बहुलत्वाच्चतुर्गुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्। ततश्चतुर्थांशावशिष्टानि द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे पलाष्टकं ग्राह्यम्।

शतपुष्पावचाकृष्णा-यमानीकुष्ठबिल्वजः।
सगुड़ैरक्षमात्रैस्तु मदनार्द्धपलान्वितः॥
क्षौद्रतैलघृतक्षीर-शुक्तकाञ्जिकमस्तुभिः।
समालोड्य च मूत्रैस्तु दद्यादास्थापनं परम्॥
तेजोवर्णबलोत्साह वीर्य्याग्निप्राणवर्द्धनम्।
सर्व्वमारुतरोगघ्नं वयःस्थापनमुत्तमम्॥ १४॥
कुशादिपञ्चमूलाब्द-त्रिफलोत्पलवासकः।
सारिवोशीरमञ्जिष्ठा-रास्नारेणुपरूषकः॥
पालिकैः क्वथितः सम्यग् द्रवैरेभिश्च पेषितैः।
शृङ्गाटकात्मगुप्तेभ-केशरागुरुचन्दनैः॥
विदारीमिसिमञ्जिष्ठा-श्यामेन्द्रयवसिन्धुजः।
फलपञ्चकयष्ट्याह्वैः क्षौद्रक्षीरघृताप्लुतैः॥
आस्थापनं शीतमम्लहीनैस्तथा द्रवैः।
दाहासृग्दरपित्तासृक्पित्तगुल्मज्वरान् जयेत्॥ १५॥

प्रियङ्ग्वादिद्रव्य कल्को यथोक्तप्रमाणेन। बिल्वजं बिल्वफलम्। मधु पूर्व्ववत्, तैलघृते पूर्व्ववत्, क्षीरस्य द्विपलं, शुक्तकाञ्जिकमस्तुगोमूत्राणां प्रत्येकमर्द्धपलमित्येवं चतुर्विंशतिपलानि भवन्ति। द्रव्यनिक्षेपक्रमः पूर्व्ववत्। तेजोवर्णेत्यादि। तेजस्त्वग्गतं भ्राजकाग्निसंज्ञं पित्तम्। वर्णो गौरादिः। बलं मांसोपचयः। उत्साहश्चैतसिको धर्म्मः। वीर्य्यं शक्तिः। प्राणा अग्नीषोमादयः। अयमपि वाते वातरोगे च योज्यः॥ १४॥

इदानीं कुपितपित्तमधिकृत्य वस्तिदानमाह—कुशादीत्यादि। कुशकाशनलदर्भकाण्डेक्षव इति कुशादिपञ्चमूलम्। अब्दो मुस्ता, उत्पलं नीलोत्पलम्। रेणुः पर्पटकः। आत्मगुप्ता कपिकच्छुकः। श्यामा प्रियङ्गुः, फलं मदनफलम्। पेषितैः पिष्टैः। कुशादिसप्तदशद्रव्याणि पलप्रमितानि अष्टगुणं षट्त्रिंशदधिकपलशतप्रमाणं जलं दत्त्वा क्वाथयेत्। ततश्चतुर्थांशावशिष्टानि चतुस्त्रिंशत्पलानि ग्राह्याणि। अत एकपुटकस्यार्थे क्वाथपलाष्टकं ग्राह्यम्। शृङ्गाटकादियष्टी-मधुकान्तानां पञ्चदशद्रव्याणां कल्कं पलत्रयप्रमाणं, पित्ते नातिबहुक्षौद्रमित्युक्तत्वात् मधुनश्चत्वारि पलानि, क्रुद्धे पित्तेऽष्टमो भागः स्नेहस्य इत्युक्तत्वाद् घृतस्य चत्वारि पलानि, क्षीरस्य पलद्वयम्, अम्लहीनैस्तथा द्रव्यैरित्युक्तत्वात् मांसरसस्यैकं पलम्, इक्षुरसस्य पलद्वयम्, एवं चतुर्विंशति-पलानि भवन्ति। द्रव्याणां निक्षेपक्रमः पूर्व्ववत्। अयं वस्तिः पित्ते पित्तरोगे च प्रयोज्यः। विदारीमिसिमञ्जिष्ठा इत्यत्र मिसिस्थाने विषेति केचित् पठन्ति, तत्र विषमतिविषा, विषं वा बालकं तोयनामत्वात्॥ १५॥

रोध्रचन्दनमञ्जिष्ठा-रास्नानन्ताबलर्द्धिभिः।
सारिवावृषकाश्मर्य्य-मेदामधुकपद्मकैः॥
स्थिरादितृणमूलश्च क्वाथः कर्षत्रयोन्मितः।
पिष्टैर्जीवककाकोली-युगर्द्धिमधुकोत्पलैः॥
प्रपौण्डरीकजीवन्ती-मेदारेणुपरूषकैः।
अभीरुमिसिसिन्धूत्थ-वत्सकोशीरपद्मकैः॥
कशेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतः।
द्रवैस्तीक्ष्णाम्लवर्ज्यैश्च दत्तो वस्तिः सुशीतलः॥
गुल्मासृग्दरहृत्पाण्डु-रोगान् सविषमज्वरान्।
असृक्पित्तातिसारौ च हन्यात् पित्तकृतान् गदान्॥ १६॥
भद्रानिम्बकुलत्थार्क-कोशातक्यमृतामरैः।
सारिवाबृहतीपाठा-मूर्व्वारग्वधवत्सकैः॥
क्वाथः कल्कस्तु क॰॰व्यो बलामदनसर्षपैः।
सैन्धवामरकुष्ठैला-पिप्पलीविल्वनागरैः॥
कटुतैलमधुक्षार-मूत्रतैलाम्बुसंयुतैः।
कार्य्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम्॥
मेदस्विनामनग्नीनां कफरोगाशनद्विषाम्।
गलगण्डगरग्लानि-श्लीपदोदररोगिणाम्॥ १७॥

रोध्रेत्यादि। अनन्ता उत्पलसारिवा। स्थिरादि लघुपञ्चमूली, तृणमूलं कुशादिपञ्चमूलम्। अभीरुः शतावरी। रोध्रादितृणमूलान्तानां त्रयोविंशतिद्रव्याणां कर्षत्रयप्रमितत्वेन सप्तदशपलानि कर्षाधिकानि, अष्टगुणमष्टत्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत। अतः सार्द्धचतुस्त्रिंशत-पलानि ग्राह्याणि। अतः एकपुटकार्थे क्वाथपलाष्टकं ग्राह्यम्। जीवकादिशर्करान्तैकोनविंशति-द्रव्याणां कल्कं पलत्रयप्रमाणं, मधुघृते पूर्व्ववत्। द्रव्यैस्तीक्ष्णाम्लवर्ज्यैरित्युक्तत्वात् क्षीरमांसरसे-क्षुरसाः पूर्व्ववत्, इत्येवं चतुर्व्विंशतिपलानि भवन्ति। द्रव्यनिःक्षेपक्रमः पूर्व्ववत्। अयमपि वस्तिः पित्ते पित्तरोगे च प्रयोज्यः॥ १६॥

कुपितकफस्य वस्तिदानमाह—भद्रेत्यादि। भद्रादिवत्सकान्तानां त्रयोदशद्रव्याणां षोडश-पलानि अष्टगुणमष्टाविंशत्यधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, वचादिनागरान्तानां दशद्रव्याणां कल्कस्य पलत्रयं, कटुतैलतिलतैलयोस्त्रीणि पलानि कफे अष्टम इत्युक्तत्वात्, मधुनः पुनः षट्पलानि, यवक्षारस्यैकं पलं, मूत्रस्य सार्द्धपलं तथा काञ्जिकस्य, एवं चतुर्व्विंशतिपलानि। द्रव्यनिक्षेपक्रमः पूर्व्ववत्। अयं वस्तिः कफे कफरोगे च योज्यः॥ १७॥

दशमूलीनिशाविल्व-पटोलत्रिफलामरः।
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः॥
पाठामागधिकेन्द्राह्वै स्तैलक्षारमधुप्लुतैः।
कुर्य्यादास्थापनं सम्यङ् मूत्राम्लफलयोजितैः॥
कफपाण्डुगदालस्य मूत्रमारुतसङ्गिनाम्।
आमाटोपापचीश्लेष्म-गुल्मक्रिमिविकारिणाम्॥ १८॥
वृषाश्मभेदवर्षाभू धान्यगन्धर्व्वहस्तकैः।
दशमूलवलामूर्व्वा-यवकोलनिशाच्छदैः॥
कुलत्थविल्वभूनिम्बैः क्वथितैः पलसम्मितैः।
कल्कैर्मदनयष्ट्याह्व-षड्ग्रन्थामरसर्षपैः॥
पिप्पलीमूलसिन्धूत्थ-यमानीमिसिवत्सकैः।
क्षौद्रेक्षुक्षीरगोमूत्र-सर्पिस्तैलरसप्लुतैः॥
तूर्णमास्थापनं कार्य्यं संसृष्टबहुरोगिणाम्।
गृध्रसीशर्कराष्ठीला-तूणीगुल्मगदापहम्॥ १९॥

दशमूलीत्यादि। इन्द्राह्वः कुटजः। दशमूल्याद्यमरान्तसप्तदशद्रव्याणि अष्टगुणं षट्त्रिंशदधिकशतपलप्रमाणं जलं दत्त्वा क्वाथयेत्, अतश्चतुस्त्रिंशत्पलानि ग्राह्याणि। अत्र एकपुटकार्थें क्वाथपलाष्टकं ग्राह्यम्, मुस्तादीन्द्राह्वान्तषड्द्रव्याणां कल्कं पूर्व्ववत्, तथा तैलमधुनोः प्रत्येकं चत्वारि पलानि, क्षारस्यार्द्धपलं, मूत्रस्य सार्द्धपलं, तथा काञ्जिकस्य सार्द्धपलं, मदनफलस्य सार्द्धपलमित्येवं चतुर्व्विंशतिपलानि भवन्ति। द्रव्यनिक्षेपक्रमः पूर्व्ववत्। अयमपि कफे कफरोगे च प्रयोज्यः॥ १८॥

वृषाश्मभेदेत्यादि। निशाच्छदः शटी, षड्ग्रन्था वचा। वृषादिभूनिम्बान्तानि त्रयोविंशति द्रव्याणि षोड़शपलप्रमितानि अष्टाविंशत्यधिकशतपलमितं जलं दत्त्वा क्वाथयेत्। अतो द्वात्रिंशत् पलानि ग्राह्याणि, अत्र एकपुटकस्यार्थे क्वाथस्याष्टौ पलानि, मदनादिवत्सकान्तदशद्रव्याणां कल्कस्य त्रीणि पलानि, क्षौद्रस्य त्रीणि पलानि, इक्षुक्षीरगोमूत्राणां प्रत्येकं सार्द्धपलं, घृतस्य द्वे पले, तैलस्य द्वे, मांसस्यार्द्धपलम्। संसृष्टबहुरोगिणामित्यनेन सन्निपातरोगप्रशमनत्वमुक्तं स्यात्। तत्र संसर्गो दोषद्वयसमुदायः, सन्निपातस्तु दोषत्रयसमुदायः। तत्र संसर्गे द्वयोरेकस्य प्रकर्षं प्रकल्प्य तदपेक्षया क्षौद्रस्नेहाद्यावापद्रव्याणि पूर्व्वोक्तन्यायेन स्वबुद्ध्या परिकल्प्य प्रयोज्यानीति। यदा तु संसर्गस्तुल्यप्रकर्षो भवति, तदा क्षौद्रादीनां गुणदोषान् निपुणबुद्ध्या विचार्य्योत्कर्षापकर्षतया मिश्रमानेन निःक्षिप्य चतुर्व्विंशतिपलानि ग्राह्याणि। एवं दोषत्रयसंयोगेऽपि क्षौद्रादिद्रव्याणामुत्कर्षापकर्षः परिकल्पनीयः॥ १९॥

रास्नारग्वधवर्षाभू-कटुकोशीरवारिदैः।
त्रायमाणामृतारक्ता-पञ्चमूलविभीतकैः॥
सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः।
यष्ट्याह्वमिसिसिन्धूत्थ-फलिनीन्द्रयवाह्वयैः॥
रसाञ्जनरसक्षौद्र-द्राक्षासौवीरसंयुतः।
युक्तो वस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम्॥
आयुषोऽग्नेश्च संस्कर्त्ता हन्ति चाशु गदानिमान्।
गुल्मासृग्दरवीस -मूत्रकृच्छ्रक्षतक्षयान्॥
विषमज्वरमर्शांसि ग्रहण वातकुण्डलीम्।
जानुजङ्घाशिरोवस्ति-ग्रहोदावर्त्तमारुतान्॥
वातासृक्शर्कराष्ठीला-कुक्षिशूलोदरारुचीः।
रक्तपित्तकफोन्माद-प्रमेहाध्मानहृद्ग्रहान्॥ २०॥
वातघ्नौषधनिःक्वाथाः न्धवत्रिवृतायुताः।
साम्लाः सुखोष्णा योज्याः स्युर्वस्तयः कुपितेऽनिले॥ २१॥

रास्नारग्वधेत्यादि। रास्ना मञ्जिष्ठा। सबलैः बलासहितैः। रसो मांसरसः। रास्नादिबलान्त-षोड़शद्रव्याणि पलप्रमितानि अष्टगुणं जलं दत्त्वा क्वाथयेत्। ततो द्वात्रिंशत्पलानि ग्राह्याणि, अत एकपुटकस्यार्थे क्वाथस्य पलाष्टकं, मदनादीन्द्रयवान्तानां षण्णां द्रव्याणां कल्कस्य त्रीणि पलानि, स्नेहस्य निरूहणाङ्गत्वात् अनुक्तोऽप्यत्र षट्पलप्रमाणो निक्षेपणीयः। तथा च हारीतः— "स्नेहो गुड़ो मांसरसः पयांसि साम्लानि मूलं मधु सैन्धवञ्च। एते निरूहे विदुषा प्रयोज्याः क्वाथश्च कल्को मदनात् फलञ्च" इति। मधुनस्त्रीणि पलानि, रसाञ्जनमांसरसक्षीरसौवीराणां प्रत्येकमेक-पलमित्येवं चतुर्व्विंशतिपलानि भवन्ति। एष वस्तिः स्वस्थातुरविषयः सर्व्वरोगहरश्च॥ २०॥

तत्र वस्तिदानमातुरविषयमाश्रित्य कथितमेव, स्वस्थं प्रति पुनः सङ्क्षेपतो वातादिविषयान् वस्तीन् निर्द्दिशन्नाह— वातघ्नौषधेत्यादि। एतच्च वस्तय इत्यस्य विशेषणमत एव बहुवचनम्। तत्र वातघ्नौषधानां भद्रदार्व्वादीनां षोड़शपलप्रमितानामष्टगुणजले क्वथितानां चतुर्भागावशेषेण क्वाथस्य द्वात्रिंश पलानि, अत एकपुटकस्यार्थे क्वाथपलाष्टकं, सैन्धवस्य टङ्कत्रयं, वातव्याधावुक्तस्य त्रैवृतस्य स्नेहस्य षट्पलानि, क्षीराण्यम्लानि मूलाणीत्यादिवर्गमध्ये यानि वातहरद्रव्याणि तेषां गुड़सहितस्य कल्कस्य पलत्रयं, निरूहाङ्गत्वान्मधुनः पलत्रयं, अनुक्तान्यप्यावापद्रव्याणि वात-हराणि टङ्कप्रयोज्यानि, अतो मांसरसस्यैकं पलं, तथा क्षीरस्य काञ्जिकस्य सटङ्काधिकं पलमेवं चतुर्व्विंशतिपलानि भवन्ति। वस्तय इति त्रिपुटचतुःपुटापेक्षया बहुवचनम्। एवं वक्ष्यमाण-योगेष्वपि वाच्यम्॥ २१॥

न्यग्रोधादिगणक्काथाः काकोल्यादिसमायुताः ।
विधेया वस्तयः पित्ते ससर्पिष्काः सशर्कराः ॥ २२ ॥
आरग्वधादिनिःक्काथाः पिप्पल्यादिसमायुताः ।
सक्षौद्रमूत्रा देयाः स्युर्वस्तयः कुपिते कफे ॥ २३ ॥
शर्करेक्षुरसक्षीरघृत-युक्ताः सुशीतलाः ।
क्षीरवृक्षकषायाढ्या वस्तयः शोणिते हिताः ॥ २४ ॥
शोधनद्रव्यनिःक्काथास्तत्कल्कस्नेहसैन्धवैः ।
युक्ताः खजेन मथिता वस्तयः शोधनाः स्मृताः ॥ २५ ॥

न्यग्रोधादिगणक्काथा इत्यादि । न्यग्रोधादीनां षोड़शपलप्रमितानां क्काथः पूर्ववत् । अतः एकपुटकस्यार्थे क्काथपलाष्टकं, काकोल्यादेः कल्कीकृतस्य पलद्वयं, घृतस्य चत्वारि पलानि, शर्करायाः पलम्, एतेन काकोल्यादिपलद्वयेन शर्करायाः पलसहितेन कल्कपलत्रयं, निरूहाङ्गत्वादनुक्तस्यापि सैन्धवस्याक्षं, तथा मधुनोऽपि चत्वारि पलानि, 'क्षीराण्यम्लानि मूत्राणि' इत्यादिवर्गमध्ये यानि पित्तहरद्रव्याणि तान्येव प्रक्षेपणीयानि, तेनेक्षुरसस्य पलं, क्षीरस्य पादोनं पलचतुष्टयमित्येवं चतुर्विंशतिपलानि भवन्ति ॥ २२ ॥

आरग्वधेत्यादि । आरग्वधादीनां षोड़शपलप्रमितानां क्काथः पूर्ववत्, अत एकपुटकस्यार्थे क्काथपलाष्टकं, पिप्पल्यादिकल्कस्य पलत्रयं, मधुनः षट्पलानि, अनुक्तस्यापि सैन्धवस्य टङ्कत्रयम्, तथा कटुतैलस्य त्रीणि पलानि; मूत्रस्य सप्तटङ्काधिकानि त्रीणि पलानि, इत्येवं चतुर्विंशतिपलानि भवन्ति ॥ २३ ॥

शर्करेक्षुरसक्षीरेत्यादि । क्षीरवृक्षकषायेणाढ्याः स्फीताः प्रधाना इत्यर्थः । क्षीरवृक्षाणां न्यग्रोधादीनां षोड़शपलप्रमितानां क्काथः पूर्ववत् । अनुक्तमपि सैन्धवं पूर्ववत्, क्षीरादिवर्गमध्ये कथितशोणितहरद्रव्याणां कल्कस्य पलद्वयम् । अनुक्तस्यापि मधुनश्चत्वारि पलानि तथा च घृतस्य, शर्करायाः पलं तथेक्षुरसस्य, क्षीरस्य टङ्कसप्ताधिकं पलत्रितयमानमित्येवं चतुर्विंशतिपलानि भवन्ति । तदेव पित्तं तदेव रक्तमिति मनसि पर्य्यालोच्य पित्तमानेनायमपि वस्तिः कल्पितः ॥ २४ ॥

शोधनद्रव्येत्यादि । शोधनद्रव्याणां वमनविरेचनपठितानां क्काथः पूर्ववत् सैन्धवञ्च, तेषामेव शोधनद्रव्याणां कल्कस्य पलद्वयं स्नेहस्य षट्पलानि । अनुक्तस्यापि मधुनश्चत्वारि पलानि, क्षीरस्यैकं पलं, मूत्रस्य सार्द्धपलं तथा काञ्जिकस्यापि, इत्येवं चतुर्विंशतिपलानि भवन्ति । वस्तयः शोधनाः स्मृता इति सामान्यवाक्यत्वात् सामान्यवस्तिपरिभाषामानेनायं वस्तिः परिकल्पितः, तथा वक्ष्यमाणा अपि कल्पनीयाः, वातादिविशेषञ्च वीक्ष्य विशेषमानेन च प्रयोज्याः ॥ २५ ॥

त्रिफलाक्वाथगोमूत्र-क्षौद्रक्षारसमायुताः।
ऊषकादिप्रतीवापा वस्तयो लेखनाः स्मृताः ॥ २६ ॥
बृंहणद्रव्यनिःक्वाथाः कल्कैर्मधुरकैर्युताः।
सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः ॥ २७ ॥
चटकाण्डोच्चटाक्वाथाः सक्षीरघृतशर्कराः।
आत्मगुप्ताफलावापाः स्मृता वाजीकरा नृणाम् ॥ २८ ॥
* वदर्य्यैरावतीशेलु-शाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः क्षौद्रयुताः सास्राः पिच्छिलसंज्ञिताः ॥ २९ ॥
वाराहमाहिषौरभ्र-वैड़ालैणेयकौक्कुटम्।
† सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु ॥ ३० ॥

त्रिफलाक्वाथेत्यादि। त्रिफलाक्वाथः पूर्ववत्, गोमूत्रस्य च पलत्रयं, निरूहणाङ्गत्वादनुक्तस्यापि सैन्धवस्याक्षं, क्षौद्रस्य चत्वारि पलानि, यवक्षारस्य कर्षत्रयं, तथा निरूहणाङ्गत्वात् स्नेहः प्राप्तस्ततो लेखनीयस्य कटुतैलस्य षट् पलानि, ऊषकादिद्रव्याणां पलद्वयमित्येवं चतुर्व्विंशतिः ॥ २६ ॥

बृंहणेत्यादि। बृंहणद्रव्याणां विदारीगन्धादीनां क्वाथः पूर्ववत्, कल्कैरित्यादिना काकोल्या-दीनां कल्कपलद्वयं, मधुनः पूर्ववत्, घृतस्य षट्पलानि, सैन्धवं पूर्ववत्, मांसरसस्य सप्तटङ्काधिकं पलत्रयमित्येवं चतुर्व्विंशतिपलानि। चटकेत्यादि। चटका ग्राम्यचटकास्तेषामण्डानि, उच्चटा घुंघुराख्यः शणघण्टाकारफलोऽल्पो विटपः सरयूपकण्ठे हिमवति वारेन्द्रयाञ्च प्रायश उपलभ्यते, चटकाण्डोच्चटानां षोड़शपलप्रमितानां क्वाथः पूर्ववत्। अत एकपुटकस्यार्थे क्वाथपलाष्टकं, क्षीरस्य पलचतुष्टयम्, मधुघृते पूर्ववत्, शर्करायाः एकं पलं तथा कपिकच्छुफलानां, मध्ये सैन्धवं चाल्पतरं प्रयोज्यं नैव वा शुक्रार्थेषु न तैलगुड़सैन्धवमिति वचनात्; इत्येवं चतुर्व्विंशतिः। गयी तु चटकाण्डद्रव्यं स्वरूपेणैव गृह्णाति, उच्चटायाः क्वाथ इति व्याख्याति ॥ २७ । २८ ॥

वदर्य्यैरावतीत्यादि। ऐरावती नागबला, शेलुः श्लेष्मातकः, धन्वनो धनुर्वृक्षः यस्य धामन इति लोके प्रसिद्धिः; अङ्कुरा अग्रपल्लवाः, सास्राः सरुधिराः, वदर्य्याद्यङ्कुरान् समुदायेन पलत्रयप्रमितान् चतुर्व्विंशतिपलप्रमितं दुग्धं दत्त्वा, चतुर्गुणं जलं निक्षिप्य क्वाथयेत्, ततः क्षीर शेषं चतुर्व्विंशतिपलानि ग्राह्याणि, तत्र सामान्यपरिभाषोक्तत्वात् मधुनश्चत्वारि पलान्यावाप्य द्रवत्वाद् रुधिरस्य चत्वारि पलानीति; एवं पिच्छावस्तेर्द्वात्रिंशत्पलानि भवन्ति। तथाचोक्तम्— "पिच्छावस्तेर्भवेत् प्रस्थः पादोनः कीर्त्तितोऽपरः। चतुर्व्विंशतिमुष्टिश्च निरूहः समुदाहृतः" इति। एवमपरेष्वपि पुटकेषु पिच्छावस्तिमानं कल्पनीयम्। सास्रा इति यदुक्तं तत् कस्यास्र-मित्याह—वाराहेत्यादि। औरभ्रं उरभ्रो मेषः तस्येदं, एणस्येदमैणेयम्, कृष्णसार इति जेज्जटा-चार्य्यः; ब्रह्मदेवस्तु एण्या इदमैणेयम्, न पुनरेणस्येदमैणेयम्। सद्योजातं सद्यस्कं, तत्-कालीनं जीववतामेव ग्राह्यं, जीवानुसन्धानार्थम् ॥ २९ । ३० ॥

* बदरीत्यत्र विदारीति पाठः क्वचित्। † सद्यस्कमसृगण्डं वेति पाठान्तरम्।

प्रियङ्ग्वादिगणक्वाथा अम्बष्ठादेरन संयुताः ।
सक्षौद्राः सघृताश्चैव ग्राहिणो वस्तयः स्मृताः ॥ ३१ ॥
एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक् पृथक् ।
समस्तेष्वथ वा सम्यग् विधेयाः स्नेहवस्तयः ॥ ३२ ॥
वन्ध्यानां शतपाकेन शोधितानां यथाक्रमम् ।
बलातैलेन देयाः स्युर्वस्तयस्त्रैवृतेन च ॥ ३३ ॥
नरस्योत्तमसत्त्वस्य तीक्ष्णं वस्तिं निधापयेत् ।
मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम् ॥
एवं कालं वलं दोषं विकारञ्च विकारवित् ।
वस्तिद्रव्यवलञ्चैव वीक्ष्य वस्तीन् प्रयोजयेत् ॥ ३४ ॥

प्रियङ्ग्वादिगणक्वाथा इत्यादि । प्रियङ्ग्वादिगणस्य षोड़शपलप्रमितानि द्रव्याणि अष्टगुणं जलं दत्त्वा क्वाथयेत् । अतो द्वात्रिंशत्पलानि ग्राह्याणि । अत एकपुटकस्यार्थे क्वाथस्याष्टौ पलानि, अम्बष्ठादेरनेति अम्बष्ठाद्योऽत्र कल्करूपः प्रयोगः । तथा च वृद्धवाग्भटः –"ग्राहिप्रियङ्ग्वम्बष्ठादि-क्वाथकल्कैः क्रमेण" इति । अतोऽम्बष्ठादिसंग्राहकद्रव्याणां कल्कस्य त्रीणि पलानि, मधुनश्चत्वारि, संग्राहकद्रव्यसिद्धघृतस्य षट्पलानि, अनुक्तो यद्यपीहावापस्तथापि संग्राहकत्वात् तक्रस्य त्रीणि पलान्येवं चतुर्विंशतिः ॥ ३१ ॥

ननु ये एते निरूहयोगास्तेषु स्नेहाः केनौषधेन सिद्धा विधेया इत्याह—एतेष्वेव योगेष्वित्यादि । एतेषु पूर्व्वोक्तगणेषु, स्नेहाः सर्पिरादयः, अथवा रोगापेक्षया । यथाक्रमशोधितानां यैः स्नेहैः स्नेहवस्तयो देयास्तानाह—बन्ध्यानां शतपाकेनेत्यादि । यथाक्रमं स्नेहस्वेदवमनविरेचना-स्थापनशिरोविरेचनैः शोधितानां बन्ध्यानां नारीणां वलातैलेन शतपाकेन त्रैवृतेन वा वस्तयो देयाः स्युः भवेयुः । तदेषु शतपाकमुत्पादितं वातव्याधौ, बलातैलं मूढगर्भचिकित्सिते, त्रैवृतं महावातव्याधौ । तत्र त्रिभिः स्नेहैर्घृततैलवसाख्यैः वृतं निर्म्मितं त्रिवृतं, त्रिवृतमेव त्रैवृतं, स्वार्थिकोऽण् । तच्च वरणं घृतादीनामन्योऽन्यस्येत्यर्थाद् गम्यते । जेज्जटादयस्तु त्रिभि स्तैलवमामज्जभिर्वृतं त्रिवृतं महास्नेहाख्यमिति प्रतिपादयन्ति । सत्त्वभेदेन वस्तिवैविध्यं प्रतिपादयन्नाह – नरस्येत्यादि । विपरीतस्य हीनसत्त्वस्येत्यर्थः । एवं कालमित्यादि । काले शीतेषु तीक्ष्ण उष्णेषु मृदुः, वसन्तशरदोः साधारणः, शीतोष्णयोर्मध्यः, एवं बले शक्त्युपचयलक्षणे श्रेष्ठे तीक्ष्णः, मध्ये मध्यः, कनिष्ठे मृदुः, कफवाते दोषे तीक्ष्णः, पित्तरक्ते मृदुः, कफपित्ते मध्यः, एवं विकारेऽपि, विकारस्यानुक्तसमुच्चयार्थत्वात् क्रूरमध्यमृदुकोष्ठेष्वपि बोद्धव्यम् ॥ ३२—३४ ॥

दद्यादुत्क्लेशनं पूर्व्वं मध्ये दोषहरं पुनः।
पश्चात् संशमनीयञ्च दद्याद् वस्तिं विचक्षणः॥ ३५॥
एरण्डवीजमधुकं पिप्पली सैन्धवं वचा।
हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः॥ ३६॥
शताह्वा मधुकं वीजं कौटजं फलमेव च।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः॥ ३७॥
प्रियङ्गुमधुकं मुस्ता तथैव च रसाञ्जनम्।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः परः॥ ३८॥
नृपाणां तत्समानानां तथा सुमहतामपि।
नारीणां सुकुमाराणां शिशुस्थविरयोरपि॥
दोषनिर्हरणार्थाय बलवर्णोदयाय च।
समासेनोपदेक्ष्यामि विधानं माधुतैलिकम्॥

इदानीमुत्क्लेशनादिना वस्तिस्त्रिधा भिद्यते, तेषां भेदानां कालविशेषे प्रदानमाह—दद्यादुत्क्लेशनमित्यादि। तत्रानुत्क्लिष्टदोषस्य पूर्व्वमुत्क्लेशनं, मध्ये दोषहरं, ततः पश्चात् दोषाणां दोषस्य संशमनाय संशमनमिति। उत्क्लिष्टदोषस्य दोषहरणसंशमने च कर्त्तव्ये। दोषहरस्य वस्तेः प्रथमपुटकदानेन सम्यग्दोषानिर्हरणे द्वितीयं तृतीयं वा पुटकं दद्यात। एवमुत्क्लेशनसंशमनयोरपि वेद्यम्। उत्क्लिष्टादिज्ञानन्तु दोषाणां प्रकोपादिलक्षणेन॥ ३५॥

अन्ये तु वृद्धसुश्रुताध्यायिनः उत्क्लेशनाद्यर्थमौषधान्यत्र पठन्ति—एरण्डवीजमित्यादि। एतानि एरण्डवीजेत्यादिश्लोकत्रयेण पठितानि औषधानि उत्क्लेशनाद्यर्थं कल्कावापरूपतया, ततो वातादिवस्त्युक्तकल्कावापेषु कुशाग्रबुद्धिना दोषं मानञ्च विमृश्य अनुचितपरित्यागोचितस्वीकारेण समवेतानि कार्य्याणि यथा मात्राधिको मिथ्यामात्रायुक्तश्च वस्तिर्न भवतीति जेज्जटाचार्य्यः। गयी तु दद्यादित्यादिकं यापनवस्तिविषयं मन्यते। तेषान्तु द्विविधं प्रयोजनम्— स्वस्थस्य वाजीकरत्वं रसायनहेतुत्वञ्च इत्येकम्, अपरञ्च धातुगतदोषहरणं, तत्र धातुगतदोषाणामुत्क्लेशनाभावात् तदुत्क्लेशनाद्यर्थमिदमुक्तमित्यर्थः। एते चोत्क्लेशनाद्यर्थमेरण्डवीजेत्यादिश्लोकत्रयेण कल्कावापा यथाक्रममुक्ताः। अन्ये तु हीनसत्त्वबलकालद्रव्यविकारेषु कोष्ठविशेषे च मृदवो वस्तयो देयाः। तैश्चाप्युत्क्लेशने दोषाणां हरणम्, शेषस्य तु दोषस्य शमनमित्याहुः॥ ३६—३८॥

अथ के ते मृदवो वस्तय इति पृष्टो विषयनिर्द्देशपूर्व्वं तानेव निर्द्दिशन्नाह— नृपाणामित्यादि। तत्समानानां राजतुल्यपुरुषाणां वाणिज्यव्यवहारिणां वार्द्धुषिकाणाम्। शिशुस्थविरयोर्बालवृद्धयोः। दोषनिर्हरणार्थाय स्वस्थेऽपि कालकृतदोषनिर्हरणार्थाय, बलवर्णोदयाय च अपेतसकलदोषस्य

यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते ।
फलञ्च विपुलं दृष्टं व्यापदाञ्चाप्यसम्भवः ॥
योज्यस्ततः सुखेनव निरूहक्रममिच्छता ।
यदेच्छति तदवष प्रयोक्तव्यो विपश्चिता ॥
मधुतले समे स्यातां क्राथश्चरण्डमूलजः ।
पलार्द्धं शतपुष्पायास्ततोऽर्द्धं सैन्धवस्य च ॥
फलेनकेन संयुक्तः खजेन च विलोड़ितः ।
देयः सुखोष्णो भिषजा माधुतैलिकसंज्ञितः ॥ ३९ ॥
वचामधुकतलञ्च क्राथः सरससैन्धवः ।
पिप्पलीफलसंयुक्तो वस्तियु क्तरथः स्मृतः ॥ ४० ॥
सुरदारु वरा रास्ना शतपुष्पा वचा मधु ।
हिङ्गुसन्धवसंयुक्तो वस्तिर्दोषहरः स्मृतः ॥ ४१ ॥
पञ्चमूलीकषायञ्च तलं मागधिका मधु ।
वस्तिरेष विधातव्यः सशताह्वः ससैन्धवः ॥ ४२ ॥

इत्यर्थः । नियमो निषेधः, अत्र माधुतैलिकविधाने । यदेच्छतीति यदा यस्मिन् काले आतुरः इच्छति तदा तस्मिन् काले विपश्चिता वैद्येन एव वस्तिः प्रयोक्तव्यः । एतेन सार्व्वकालिकत्वमुक्तं भवति । मधुतैले समे स्यातामित्यादि । पादहीनाः सर्व्वे एव माधुतैलिकाः, ततश्च तथा कल्पनीयाः यथा नव प्रसृता भवन्ति । मधुतैलयोः प्रसृताश्चत्वारो द्विकर्षाधिकाः, एरण्डमूलकषायस्य तावन्त एव, शतपुष्पार्द्धपलं, सैन्धवस्य कर्षं, मदनफलञ्चैकमित्येवं नव प्रसृता भवन्ति । अनया कल्पनया सर्व्वं एव माधुतैलिकाः कल्पनीया इति जेज्जटाचार्य्यः । गयी तु पलेनैकेन संयुक्त इति पठित्वा तत्र मृदुनाऽनुक्तेन मांसरसकाञ्जिकादिना पूरणं करोति । एवमपरेषु चतुर्षु नव प्रसृताः पूरणीया इत्याह ॥ ३९ ॥

वचामधुकेत्यादि । वचासैन्धवपिप्पलीमदनफलानां प्रत्येकं कार्षिका भागाः, मधुतैलयोश्चत्वारः प्रसृताः कर्षद्वयाधिकाः, एरण्डमूलक्वाथस्तावन्मात्र एव, इति युक्तरथाभिधानो माधुतैलिकः ॥ ४० ॥

सुरदार्व्वित्यादि । सुरदारुवरारास्नाशतपुष्पावचाहिङ्गुसैन्धवानां तुल्यमानेनैकं पलं, मधुतैलयोः कर्षद्वयाधिकान्यष्टौ पलानि, एरण्डमूलक्वाथस्तावन्मात्र एव ; एवं दोषहराभिधानो माधुतैलिकः । केचिदत्र हिङ्गुस्थाने विडं पठन्ति । पञ्चमूलीकषायञ्चेत्यादि । पञ्चमूलीकषायस्य कर्षद्वयाधिकानि अष्टौ पलानि, मधुतैले अपि तावन्मात्रे, एवं मागधिकाशताह्वासैन्धवानामेकपलम्,

यवकोलकुलत्थानां क्वाथो मागधिका मधु।
ससैन्धवः सयष्ट्याह्वः सिद्धवस्तिरिति स्मृतः ॥ ४३ ॥
मुस्तापाठामृतातिक्ता-बलारास्नापुनर्नवाः।
मञ्जिष्ठारग्वधोशीर-त्रायमाणाख्यगोक्षुरान् ॥
पालिकान् पञ्चमूलाल्प-सहितान् मदनाष्टकम्।
जलाढ़के पचेत् क्वाथं पादशेषं पुनः पचेत् ॥
क्षीरद्व्याढ़क(प्रस्थेन) संयुक्तं क्षीरशेषं परिस्रुतम्।
पादेन जाङ्गलरसस्तथा मधु घृतं समम् ॥
शताह्वाफलिनीयष्टी-वत्सकैः सरसाञ्जनैः।
कार्षिकैः सैन्धवयुतैः कल्कैर्वस्तिः प्रयोजितः ॥
वातासृङ्मेहशोफार्शोगुल्ममूत्रविबन्धनुत्।
विसर्पज्वरविड्भङ्ग-रक्तपित्तविनाशनः ॥
बल्यः सञ्जीवनो वृष्यश्चक्षुष्यः शूलनाशनः।
स्थापनानामयं राजा वस्तिर्मुस्तादिको मतः ॥ ४४ ॥

अयं च पाञ्चमूलिको माधुतैलिकः। यवकोलकुलत्थानां पूर्व्ववत् क्वाथः, मधुतैलेऽपि पूर्व्ववत्, मागधिकासैन्धवयष्ट्याह्वानामेकं पलम्। सिद्धवस्त्यभिधानोऽयं माधुतैलिकः। पञ्चाप्येते माधुतैलिका उक्ताः ॥ ४०—४३ ॥

माधुतैलिकस्याग्रतो गयदासाचार्य्यमते मुस्तादिस्थापनवस्तिर्नास्ति, जेज्जटाचार्य्यस्तु मुस्तादि स्थापनवस्तिं पठति व्याख्यानयति च। तद्व्याख्यानाभिप्रायेण यथाप्यसौ व्याख्यायते मुस्ता पाठेत्यादि। मुस्तादीनि पञ्चमूलाल्पसहितान्यष्टादशपलानि, ततो मदनस्याष्टाभिः फलैर्द्विपलमित्येवं विंशतिपलप्रमितानि जलाढ़केऽष्टाविंशत्यधिकशतपलप्रमिते पचेत्, ततो द्वात्रिंशत्पलप्रमितः क्वाथोऽवशिष्टो भवति, ततस्तं क्वाथं पादशेषं क्षीराद्ध्वाढ़कसंयुक्तं दुग्धस्य चतुःषष्टिपलोपेतं पुनः पचेत् तावद् यावत् क्षीरावशेषं प्रस्थद्वयं चतुःषष्टिपलानि भवति, पादेन प्रस्थस्याष्टौ पलानि मांसरसस्य, एवं द्वासप्ततिपलानि भवन्ति। अतो मध्यादेकस्य पुटकस्यार्थे चतुर्व्विंशति पलानि ग्राह्याणि, तत्र मधुनः प्रसृतः सार्द्धः, घृतस्य तावदित्येवं षट्पलानि भवन्ति, शताह्वादीनां षड्द्रव्याणां कर्षप्रमितानां कल्कस्य सार्द्धं पलं, निरूहाङ्गत्वात् मदनफलस्यार्द्धपलमेवं कल्कस्य प्रसृतो भवतीत्येकस्मिन् पुटके द्वात्रिंशत्पलप्रमितः प्रस्थो भवति। एवमपरमपि पुटकद्वयं करणीयम्। एवं पुटकत्रयस्यार्थे षण्णवतिपलानि भवन्ति। अयं मुस्तादिस्थापनवस्तिर्जेज्जटाचार्य्येण तन्त्रान्तरोक्तमध्यमानेन कल्पितः। तथा च पराशरः—"निरूहस्य प्रमाणन्तु प्रस्थं पादोत्तरं स्मृतम्। मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुडवास्त्रयः" इति। गूढ़पदभङ्गटीप्पणकारेण पुनरन्यथा व्याख्यातम्। तथाहि—"मुस्तादिद्रव्याणां पालिकान् भागान् द्रवत्वाद् द्विगुणया कल्पनया जलस्याढ़केऽष्टाविंशत्यधिके

अवेक्ष्य भेषजं बुद्ध्या विकारश्च विकारवित् ।
वीजेनानेन मतिमान् कुर्य्याद् वस्तिशतान्यपि ॥ ४५ ॥
अजीर्णे न प्रयुञ्जीत दिवास्वप्नञ्च वर्ज्जयेत् ।
आहाराचारिकं शेषमन्यद् युक्तं समाचरेत् ॥ ४६ ॥
यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते ।
माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥
रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कल्पिते ।
यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः ॥
वलोपचयवर्णानां यस्माद् व्याधिशतस्य च ।
भवत्येतेन सिद्धिस्तु सिद्धवस्तिरतो मतः ॥
सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नराः ।
मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिकाः ॥
मृदुत्वात् पादहीनत्वादकृत्स्नविधिसेवनात् ।
एकवस्तिप्रदानाच्च सिद्धवस्तिष्वयन्त्रणा ॥ ४७ ॥

इति सुश्रुत संहितायां चिकित्सितस्थाने निरूहक्रमचिकित्सितं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

पलशते पक्त्वा पादशेषं द्वात्रिंशत्पलप्रमाणं क्षीरार्द्धोदकसंयुक्तं पुनः पचेद् यावत् क्षीरशेष चतुःषष्टिपलानि भवन्ति । ततश्च सपादप्रस्थं जाङ्गलरसस्य पञ्च पलानि, मधुघृतं पृथक् सार्द्धद्विपलसम्मितं, शताह्वादिकल्कस्य मदनफलाष्टकेन युक्तं पलद्वयं प्रक्षिप्यैकध्यं षट्सप्तत्या पलैः पुटकत्रयं देयम् । अवेक्ष्य भेषजमित्यादि । तत्र भेषजं व्रणज्वरादिहरं, विकारश्च व्रणज्वरादिकं वातपित्तकफसंसर्गसन्निपातजं शोणितजञ्च । चकारेणानुक्तं कालबलादि समुच्चीयते । वातघ्नौषधनिःक्वाथा इत्यादिषु वस्तिषूक्तेन वीजेनेत्यर्थः । अजीर्णे नेत्यादि । अन्यच्छेषमाहाराचाराश्रितं कर्म्म कामं यथेष्टं समाचरेत् ॥ ४४—४६ ॥

विशेषसंज्ञया माधुतैलिकानाह– यस्मान्मधु च तैलमित्यादि । कस्मादेतेऽनियन्त्रणास्तदाह— मृदुत्वादित्यादि । मृदुवीर्य्यैरौषधैः कल्पितो मृदुः । पादहीनत्वादिति पादेन हीनः पादाभ्यां वा हीनः, ततश्च पादहीना नव प्रसृता भवन्ति, पादाभ्यां हीनाः षट्प्रसृता भवन्ति । अकृत्स्नविधिसेवनादिति वमनादिसंस्कारवर्ज्जनात् । एकवस्तिप्रदानाच्चेति एकपुटकप्रदानात् । एकाहं प्रणिधानाच्चेति केचित् पठन्ति, एकाहमेव प्रणिधानं वस्तिदानमित्यर्थः । परं कालैककृते दोषकोपे कदाचित् सम्यङ्निरूढलक्षणमनवेक्ष्य द्वित्र्यादिवस्तिदानमपीति पाठविशेषाद् विशिष्टोऽर्थः । अतो नैकाहप्रणिधानादित्यपरे पठन्ति । तत्र शोधननिरूहवदेकाहमेव प्रणिधानं नास्त्येव, किं तर्हि साधारणत्वात् समधातुषु वाजीकरणादावसकृद्दानमपीति ॥ ४७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे निरूहक्रमचिकित्सितव्याख्यानामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ।

अथात आतुरोपद्रवचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

स्नेहपीतस्य वान्तस्य विरिक्तस्य स्रुतासृजः ।
निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥
सोऽन्नैरत्यर्थगुरुभिरुपयुक्तः प्रशाम्यति ।
अल्पो महद्भिर्बहुभिश्छादितोऽग्निरिवेन्धनः ॥
स चाल्पैर्लघुभिश्चान्नरुपयुक्तैर्विवर्द्धते ।
काष्ठरणुभिरल्पैश्च सन्धुक्षित इवानलः ॥ २ ॥
हृतदोषप्रमाणेन सदाहारविधिः स्मृतः ।
त्रीणि चात्र प्रमाणानि प्रस्थोऽर्द्धाढ़कमाढ़कम् ॥
तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे ॥ ३ ॥
प्रस्थे परिस्रुते देया यवागूः स्वल्पतण्डुला ।
द्वे चैवार्द्धाढ़के देये तिस्रश्चाप्याढ़के गते ॥ ४ ॥

अथात इत्यादि । उपद्रवन्तीत्युपद्रवा रोगाः, आतुरस्योपद्रवा आतुरोपद्रवाः, ते चात्र प्रायेण पञ्चकर्म्मनिमित्ताः व्यापदः, तेषां चिकित्सितं कारणगुणप्रत्यनीकं विधानम् । आतुरोपक्रम-चिकित्सितमिति केचित् पठन्ति । स्नेहादीनां निरूहान्तानामुपक्रमाणामन्तेऽग्निमान्द्यमेवा-वश्यम्भावि, तत्सन्धुक्षणार्थं पेयादिसंसर्ज्जनोपदेशाय वर्ज्ज्यानाञ्च क्रोधादीनां प्रज्ञापराधात् करणे तज्जव्याधिप्रशमनाय चातुरोपद्रवचिकित्सिताभिधानम् ॥ १ ॥

इदानीं स्नेहपानपूर्व्वकपञ्चकर्म्मणां सोपपत्तिककर्म्मकरणाद् व्यापदां निवारणमुपदिशन्नाह— स्नेहपीतस्येत्यादि । निरूढस्य चेति चकारेणानुवासितमनुक्तं समुच्चिनोति । ननु स्नेहपानादयो-ऽनलप्रबोधहेतव इत्युक्तत्वात् कथं तैर्मन्दोऽग्निर्भवति देहिनः ? उच्यते, तत्काल एव मन्दः, क्रमेण तु तेन दीप्तो भवतीति न दोषप्रसङ्गः । तस्य क्रमेण यथा प्राकृतावस्थापन्नत्वं भवति तथा निर्दिशन्नाह—सोऽन्नैरित्यादि । तत्रानुक्रमप्रमाणकारणमुद्दिशन्नाह— हृतदोषेत्यादि । तदेव कतिविधं कियत्प्रमाणमित्याह— त्रीणि चात्रेत्यादि । तेषु च त्रिषु दोषनिर्हरणप्रमाणेषु त्रीनेवानु-क्रमान् क्रमेणाह—प्रस्थे परिस्रुते इत्यादि । प्रस्थश्चात्र सार्द्धत्रयोदशपलः । यवागूशब्देन पेया विवक्षिता, स्वल्पतण्डुला अष्टांशतण्डुलकृता ; तदुक्तं—"पेयां पिबेदुचितभक्तकृताष्टभागां

विलेपीमुचिताद् भक्ताच्चतुर्थांशकृतां ततः।
दद्यादुक्तेन विधिना क्लिन्नसिक्थामपिच्छिलाम्॥
* अस्निग्धलवणां स्वच्छ-मुद्गयूषयुतां ततः॥ ५॥
अंशद्वयप्रमाणेन दद्यात् सुस्निग्धमोदनम्।
† ततस्तु कृतसंज्ञेन हृद्येनेन्द्रियबोधिना॥ ६॥
त्रीनंशान् वितरेद् भोक्तुमातुरायौदनं मृदुम्।
ततो यथोचितं भक्तं भोक्तुमस्मै विचक्षणः।
लावैणहरिणादीनां रसैर्दद्यात् सुसंस्कृतैः॥ ७॥

त्रिर्द्विःसकृत्प्रवरमध्यजघन्यशुद्धः" इति। यवागूरित्येकवचननिर्देशादेकवारमिति बोद्धव्यम्। प्रस्थे परिस्रुते देया इत्यत्र प्रस्थत्वैकाङ्क्षते देये द्वे चैवार्द्धादके इत्यत्र द्वे पेये द्वौ वारौ इति बोद्धव्यम्। तिस्रश्चाप्यादके गते इत्यत्र तिस्रः पेया इति बोद्धव्यम्। विलेपीत्यादि। उचितादन्यस्मात् तण्डुलाच्चतुर्थभागेन कृताम्। उक्तेन विधिनेति एकद्वित्रिक्रमेण। क्लिन्नसिक्थामतिपक्वतण्डुलाम्। अपिच्छिलां तण्डुलरहितां दद्यात्, भिषक् इत्यध्याहारः। अस्निग्धलवणामित्यादि॥ २—५॥

अंशद्वयप्रमाणेनेत्यादि। उचितादर्द्धभागतण्डुलात् कृतं भक्तमित्यर्थः। त्रीनंशानिति त्रिभागकल्पितं सम्यक्पक्वं घृतमण्डेन समन्वितम्। तत इत्यादि। ततोऽनन्तरं कृतसंज्ञेन यूषेण सह आतुराय रोगिणे ओदनं भक्तमुचितं तण्डुलांशत्रयकृतं भोक्तुं वितरेद् दद्यादिति सम्बन्धः। अस्य श्लोकस्यादौ "त्रिभागकल्पितं सम्यक्कृतेनाथ समन्वितम्" इति प्रतिपुस्तकेषु पाठो दृश्यते स च न पठनीयः, जेज्जटादिनिबन्धकारैः सर्व्वैरपि परिहृतत्वात्। ततो यथोचितमित्यादि। यथोचितमिति अंशचतुष्टयप्रमाणं परिपूर्णमित्यर्थः। हृतदोषप्रमाणेनेत्यादि दद्यात् सुसंस्कृतैरित्यन्तग्रन्थेनैतदुक्तं भवति हीनशुद्धिशुद्धस्य पुरुषस्य तावत् प्रथमेऽन्नकाले उचितभक्तकृताष्टभागां पेयां दद्यात्। तस्मिन्नेव दिने द्वितीयेऽन्नकाले प्रकृतिस्थाजरणकाङ्क्षोचिताद् भक्तात् चतुर्थांशेन कृतामतिपक्वतण्डुलावयवां मण्डरहितां विलेपीं दद्यात्। द्वितीयेऽह्नि तृतीयेऽन्नकालेऽस्निग्धालवणस्वच्छेनाकृतमुद्गयूषेणोचितादर्द्धभागतण्डुलकृतं सुस्विन्नमोदनं दद्यात्, तस्मिन्नेव दिने चतुर्थेऽन्नकाले हृद्येनेन्द्रियबोधिना कृतसंज्ञेन यूषेणोचिततण्डुलांशत्रयकृतमोदनं भोक्तुं दद्यात्। ततस्तृतीयेऽह्नि पञ्चमेऽन्नकाले लावैणहरिणादीनां सुसंस्कृतरसैरंशचतुष्टयप्रमाणं भक्तं भोक्तुं दद्यात्। तृतीयेऽह्नि षष्ठेऽन्नकाले प्रकृतिभोजनमागच्छेत्। मध्यशुद्धिशुद्धस्य च तावदादौ द्वयोरन्नकालयोः पेयां दद्यात्, द्वितीयेऽह्नि द्वयोरप्यन्नकालयोर्विलेपिकां, तृतीयेऽह्नि काल

* अस्निग्धलवणं स्वच्छमुद्गयूषयुतं ततः। इति पाठान्तरम्।

† ततः सघृतमण्डेनेति क्वचित् पाठः।

हीनमध्योत्तमेष्वेव विरेकेषु विधिः स्मृतः।
एकद्वित्रिगुणः सम्यगाहारस्य क्रमो हितः ॥ ८॥
कफपित्ताधिकान् मद्य-नित्यान् हीनविशोधितान्।
पेयाभिष्यन्दयेत् तेषां तर्पणादिक्रमो हितः ॥ ९॥

द्वयेऽप्यकृतयूषं, चतुर्थेऽह्नि कालद्वयेऽपि कृतयूषं, पञ्चमेऽह्नि कालद्वयेऽपि मांसरसमित्यतः षष्ठेऽह्नि प्रकृतिभोजनमागच्छेत्। उत्तमशुद्धिशुद्धस्य च तावत् प्रथमेऽह्नि द्वयोरप्यन्नकालयोः पेयां दद्यात्, द्वितीयेऽह्नि प्रथमेऽन्नकाले पेयां, द्वितीये विलेपिकां, तृतीयेऽह्नि द्वयोरप्यन्नकालयोर्विलेपिकां, चतुर्थेऽह्नि द्वयोरप्यन्नकालयोरकृतयूषं, पञ्चमेऽह्नि प्रथमेऽन्नकालेऽकृतयूषं, द्वितीयेऽन्नकाले कृतयूषं, षष्ठेऽह्नि द्वयोरप्यन्नकालयोः कृतयूषं, सप्तमेऽह्नि द्वयोरप्यन्नकालयोर्मांसरसं, अष्टमेऽह्नि प्रथमेऽन्नकाले मांसरसम्, अतोऽष्टमदिवसस्य द्वितीयेऽन्नकाले प्रकृतिभोजनमाचरेत्। गयी तु हीनशुद्धौ प्रथमेऽन्नकाले उचिततण्डुलाष्टभागकृता पेया, द्वितीयेऽन्नकाले तूचिततण्डुलचतुर्थभागकृता विलेपी, तृतीयेऽन्नकाले तूचिततण्डुलार्द्धभागकृतेन भक्तेन सह दकलावणिको यूषो रसो वा यथादोषं, चतुर्थेऽन्नकाले तूचिततण्डुलभागत्रयकृतेन भक्तेन सह कृतसंज्ञो यूषः पिप्पलीशृङ्गवेरसिद्धः कृतो रसो वा यथादोषं, ततो यथोचितं परिपूर्णभक्तं सुसंस्कृतेन रसेन यूषेण वा देयमिति तृतीयदिने प्रकृतिभोजनम्। एवं मध्यमोत्तमशुद्धौ पेयादीनां द्वित्रिकालदानेन यथाक्रमं पञ्चमे सप्तमे च दिने प्रकृतिभोजनम्। उक्तञ्च—"पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रीनुभयं तथैकम्। क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः" इति ॥ ६।७॥

उक्तमेवानुक्रमं नियमयन्नाह - हीनेत्यादि। प्रस्थे परिस्रुते हीनो विरेकः, तस्मिन् पेयादिक्रम एकैकमन्नकालं देयः, अर्द्धाढ़के परिस्रुते मध्यो विरेकः, तस्मिन् पेयादिः प्रत्येकं द्वौ द्वावन्नकालौ देयः, आढ़के परिस्रुते उत्तमो विरेकः, तस्मिन् पेयादिः प्रत्येकं त्रींस्त्रीनन्नकालान् देयः। एषु पूर्व्वोक्तेषु हीनादिविरेकेषु हृतदोषमानापेक्षया एकद्वित्रिगुणोऽयमाहारक्रमः सम्यक् प्रकीर्त्तितः, ततो मिथ्याहीनातियोगेनासम्यगित्यर्थः। एतदुक्तं भवति - हीने विरेके चतुर्भिरन्नकालैः सायं प्रातिकभोजनाभ्यां द्व्यहं, मध्ये तद्द्विगुणेन च त्र्यहं, उत्तमे तत्त्रिगुणेन षड़हमिति ॥ ८॥

इदानीं क्वचिद्विषये पेयादिक्रमनिषेधमाह—कफेत्यादि। ये कफपित्ताधिकास्तथा मद्यनित्यास्तान् हीनविशोधितान् पेयाभिष्यन्दयेत् अभिष्यण्णस्रोतस्कान् कुर्य्यात्, अतस्तेषां हीनशोधितानां तर्पणादिक्रमो हितः। तत्र प्रथमेऽन्नकाले तर्पणं लाजसक्तुभिः कार्य्यं, ततो यूषभक्तादिकमिति। तन्त्रान्तरे चोक्तम्—"स्रुतास्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम्। पेयां न पाययेत्" इत्यादि। ननु तर्पणादिक्रमस्वीकारे हीनविरेके प्राक्प्रतिपादितस्य पेयादिक्रमस्य नैरर्थक्यम्? उच्यते—कफपित्ताधिकमद्यनित्यौ परित्यज्यान्यत्र हीनविरेके पेयादिक्रम इति ॥ ९॥

वेदनालाभनियम शोकवचित्त्यहेतुभिः ।
नरानुपोषितांश्चापि विरिक्तवदुपाचरेत् ॥ १० ॥
आढ़काद्धाढ़कप्रस्थ-सङ्ख्या ह्येषा विरेचने ।
श्लेष्मान्तत्वाद् विरेकस्य न तामिच्छन्ति तद्विदः ।
एको विरेकः श्लेष्मान्तो न द्वितीयोऽस्ति कश्चन ॥
बलं यत् त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ।
तत्रानुक्रममेकन्तु बलस्थः सकृदाचरेत् ॥
द्विराचरेन्मध्यबलस्त्रीन् वारान् दुर्ब्बलस्तथा ।
केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु ॥ ११ ॥

इदानीमशुद्धेऽपि कचिदग्निमान्द्यहेतौ सङ्क्षेपार्थं संशोधनोक्तं संसर्ज्जनानुक्रममतिदेशेन निर्द्दिश-न्नाह—वेदनालाभनियम इत्यादि । वेदनाया लाभो वेदनालाभः, अलाभ इष्टस्येति केचिदाचक्षते । लाभोऽनिष्टस्येत्यन्ये । नियम उपवासादिः, वैचित्यमुन्मादादि, एतैर्हेतुभिरुपोषितान् नरान् विरिक्त-वदुपाचरेत् । तत्रापि लङ्घनमानेन हीनमध्योत्तमाभिहितेन द्व्यहं चतुरहं षडहमेवान्नसंसर्ज्जनम् ।

प्राक् प्रतिपादितप्रस्थार्द्धाढ़कादिसंख्याया विरेकैकविषयत्वं प्रतिपाद्य कारणमुखेन निराकुर्व-न्नाह—आढ़काद्धाढ़केत्यादि । अन्यधिष्ठानसंप्लुतत्वादत्यर्थमग्निमान्द्यहेतौ विरेचन एवाढ़कादिसंख्या, वमनास्थापनयोस्त्वग्न्यधिष्ठानानभिभवेन तादृशाग्निमान्द्याभावान्मानियमो नास्ति; अतएव तदहरेव वमने कुलत्थमुद्गयूषभोजनम्, आस्थापने मांसरसभोजनमनुवासनञ्च । एतन्मतं निरस्य-न्नाह - श्लेष्मान्तत्वादित्यादि । अयमभिप्रायः -विरेचनं निःशेषपित्तनिर्हरणाय प्रयुज्यते, निःशेष-पित्तनिर्हरणञ्च तदैवानुमीयते यदा पित्तप्रवर्त्तनानन्तरं तत्परदेशस्थ आमरूपः कफः प्रवर्त्तते । तस्मात् कफान्तिकत्वाद् विरेकस्य तां प्रस्थादिकां संख्यां विरेचनविदो नेच्छन्ति । एतेन वैगिकोऽपि निराकृतः, लैङ्गिकः पुनरेकान्तेन विशुद्ध एव । यतो लैङ्गिकेऽपि कफान्तिकत्वमस्ति । तथा च -"वमने प्रसेकौषधकफपित्तानिलाः क्रमेण गच्छन्ति, एवमेव विरेचने पुरीषपित्तौषधकफाः" इति । अतो वैगिकमानिकौ विरेकौ गुणतया प्रतिपादितौ क्वचिद् बालवृद्धाद्यवस्थावशात् प्रयुक्तौ कर्त्तव्यौ । मुख्यः पुनरेकः कफान्तिक एवेत्याह एको विरेक इत्यादि । न द्वितीयोऽस्तीति तृतीयस्य पुनः का कथा, एवं वमनमप्येकमेव । तथा च भोजः—"तस्मात्मतिमता नित्यमात्मानं परिरक्षता । पित्तान्तं वमनं स्थाप्यं कफान्तञ्च विरेचनम्" इति । एवं तर्हि तदाश्रयान्नसंसर्ज्जन-त्रित्वमपि तत्र नास्तीति प्रकारान्तरेणैवान्नसंसर्ज्जनत्रित्वं तदाश्रयं दर्शयन्नाह—बलं यत् त्रिविध-मित्यादि । बलमवोपचयलक्षणमेव । यस्मात् प्रागेक एव विरेक उपवर्णितः, अतस्त्रिविध आहारक्रमो बलं यत् त्रिविधं प्रोक्तं तत्र ज्ञेयः । तत्र त्रिविधेऽपि बले सर्व्वत्र त्रिविधमप्यन्नसंसर्ज्जनं प्राप्नोति, क्वचित् कश्चिद् निर्द्दिशन्नाह— तत्रानुक्रममित्यादि । तत्रैव मतान्तरं दर्शयन्नाह— केचिदेवमित्यादि ॥ १० । ११ ॥

संसर्गेण विवृद्धेऽग्नौ दोषकोपभयाद् भजेत्।
प्राक् स्वादुतिक्तौ स्निग्धाम्ल-लवणान् कटुकं ततः॥
स्वाद्वम्ललवणान् भूयः स्वादुतिक्तावतः परम्।
स्निग्धरूक्षान् रसांश्चैव व्यत्यासात् स्वस्थवत् ततः॥ १२॥
केवलं स्नेहपीतो वा वान्तो यश्चापि केवलम्।
स सप्तरात्रं मनुजो भुञ्जीत लघु भोजनम्॥
कृतः शिराव्यधो यस्य कृतं यस्य च शोधनम्।
स ना परिहरेन्मासं यावद् वा बलवान् भवेत्॥

अतःपरं क्रमेणैव कृतसंसर्गस्य रसावचारणक्रममाह—संसर्गेणेत्यादि। अन्नसंसर्ज्जनक्रमविवृद्धेऽग्नौ दोषकोपभयात् स्निग्धान् मधुराम्ललवणान् रूक्षान् कटुतिक्तकषायान् रसान् व्यत्यासात् विपर्य्ययात् एवमत्र उक्तपरिपाट्या भजेत्। तत्र प्रवृद्धाग्निहेतुवातपित्तस्यावजयार्थमग्नेः समीकरणार्थञ्च पूर्व्वं स्वादुतिक्तकौ, ततो वातकफजयार्थमग्नेः सन्धुक्षणार्थञ्च व्यत्यासाद्विति प्रागुक्तरसप्रत्यनीकान् स्निग्धाम्ललवणकटुकान्। ततश्चाम्ललवणकटुकजनितपित्तवातावजयार्थं स्वादुतिक्तौ। ततो भूयः कषायकटुकौ, ततोऽन्योन्यप्रत्यनीकरसानां स्निग्धरूक्षयोः व्यत्यासादुपयोगेन प्रकृतिगो भवेत्। वृद्धवाग्भटस्त्वाह—"दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ। स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः॥ अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः। व्यत्यासादुपयोगेन क्रमात् तं प्रकृतिं नयेत्" ॥ १२॥

पञ्चकर्म्माङ्गयोरेव स्नेहवमनयोर्यथोक्तमन्नसंसर्ज्जननियमो नान्यत्रेति निर्द्दिशन्नाह-केवलमित्यादि। दोषरोगसंशमननिमित्तं पीतस्नेहः केवलं स्नेहपीतः, तथा वान्तश्च अजीर्णभुक्तादिनिमित्तं कृतवमनः। लघुभोजनं मात्राद्रव्याभ्याम्। ततः अनन्तरोक्तेनेव विधानेन स्वाद्वादीनश्नीयात्। स्नेहपीतस्येत्यादेरेकवाक्यप्रोक्तानां पञ्चानां स्नेहपीतादीनां मध्ये द्वयोः कृतशिराव्यधविरिक्तयोः परिहारकालं गौरवान्निर्द्दिशन्नाह—कृतः शिराव्यधो यस्येत्यादि। यस्य च शिराव्यधः कृतः, यस्य च शोधनं विरेचनाख्यं कृतं, तस्योभयस्यापि शोधनानन्तरं सप्तरात्रकृतसंसर्गस्य सप्ताहादूर्द्ध्वं परिपूर्णाहारत्वेन स्वाद्वादिरसानां क्रमविपर्य्ययाभ्यामुपसेवया रसस्य शनैः शनैः धात्वन्तरानुक्रमतो मासेन शुक्रत्वाच्छनैर्बलावाप्तिरुत्पद्यते। अत उक्तम्—स ना परिहरेन्मासमिति। ना पुरुषो वक्ष्यमाणं क्रोधादिकं परिहरेत्। तत्र कस्यचिदत्यन्ततीक्ष्णाग्नेर्जलसन्तानवद्रसप्रसरणेन मासानन्तरमपि बललाभः, कस्यचिद्दीप्ताग्नेः शब्दसन्तानवद्रसप्रसरणेन मासादर्वागपि बललाभः स्यादत उक्तम्—यावद् वा बलवान् भवेदिति।

* त्र्यहं त्र्यहं परिहरेदेकैकं वस्तिमातुरः ।
तृतीये तु परीहारे यथायोगं समाचरेत् ॥ १३ ॥
तैलपूर्णाममृद्भाण्ड-सधर्म्माणो व्रणातुराः ।
स्निग्धशुद्धाक्षिरोगार्त्ता ज्वरातीसारिणश्च ये ॥ १४ ॥
क्रुध्यतः कुपितं पित्तं कुर्य्यात् तांस्तानुपद्रवान् ।
आयास्यतः शोचतो वा चित्तं विभ्रममृच्छति ॥
मैथुनोपगमाद् घोरान् व्याधीनाप्नोति दुर्म्मतिः ।
आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च ॥
गुह्यप्रदेशे श्वयथुं कासश्वासौ च दारुणौ ।
शुक्रवर्चापि रुधिरं सरजस्कं प्रवर्त्तते ॥
लभते च दिवास्वप्नात् तांस्तान् व्याधीन् कफात्मकान् ।
प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम् ॥
मोहं सदनमङ्गानामविपाकं तथाऽरुचिम् ।
तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति ॥
उच्चैः सम्भाषणाद् वायुः शिरस्यापादयेद्रुजम् ।
आन्ध्यं जाड्यमजिघ्रत्वं वाधिर्य्यं मूकतां तथा ॥

चतुर्षु स्नेहपीतादिषु पूर्व्वोक्तोऽन्नसंसर्गकालनियमः, वस्तौ तु तादृशो नियमो नास्ति, कथं ? दोषव्याधिबलापेक्षया वस्तेः पुनःपुनः शीलनात्, तदुक्तं—अष्टादशाष्टदशकानित्यादि । अत एकैकं वस्तिमुद्दिश्य विशिष्टं नियमं दर्शयन्नाह—त्र्यहं त्र्यहमित्यादि । एकैकं वस्तिं सेवित्वा त्र्यहं त्र्यहं वक्ष्यमाणं परिहार्य्यं परिहरेत् । तृतीये तु परिहार इत्यादि । विशेषेण परीहारे कृते सति अनन्तरं चतुर्थपञ्चमदिवसादौ, यथायोगं योगानतिक्रमेण सम्यङ्निरूढानुवासितयोगलक्षणा· नतिक्रमेण समाचरेद् यथासात्म्यमुपसेवेतेत्यर्थः । अन्ये तु व्याख्यानयन्ति – एकैकं वस्तिमनुवासनं दत्त्वा त्रीणि त्रीणि अहानि परिहरेत् । तृतीये तु वस्तौ गते तृतीयादनुवासनादूर्द्ध्वं, यथायोगं यथावस्थमग्न्यादीनवेक्ष्य चतुःपञ्चदिवसानन्तरीकृत्य अनुवासनं योजनीयम् ॥ १३ ॥

शुद्धसमानधर्म्मिणोऽन्यानपि दृष्टान्तेनाह – तैलपूर्णमित्यादि । यथा तैलपूर्णमपक्वमृद्भाजन- मयत्नेन चाल्यमानं विशीर्य्यते, तद्वदयत्नेनोपचर्य्यमाणा व्रणातुरादयोऽवस्थान्तरं प्राप्यन्ते ; तस्मादेतेऽपि संशुद्धवदुपक्रम्या इति तात्पर्य्यार्थः ॥ १४ ॥

पूर्व्वोक्तेषु स्नेहपीतादिषु पञ्चसु परिहार्य्याणामपरिहारेण किं भवतीत्याह—क्रुध्यतः कुपित· मित्यादि । तांस्तान् उपद्रवान् दाहपिपासाप्रभृतीन् । आयास्यत इत्यादि । विभ्रमं विविधं भ्रमं सम्मोहमदापस्मारोन्मादादिकं मानसं विकारम् । मैथुनोपगमादित्यादि । तानेव घोरान् व्याधीन् विवृण्वन्नाह—आक्षेपकमित्यादि । लभते च दिवास्वप्नात्तानित्यादि । अजिघ्रत्वं

* एकैकस्मिन् परिहरेद् वस्तौ वस्तौ त्र्यहं त्र्यहमिति पाठभेदः ।

हनुमोक्षमधीमन्थमर्द्दितञ्च सुदारुणम्।
नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम्।
लभते दन्तचालञ्च तांस्तांश्चान्यानुपद्रवान्॥
यानयानेन लभते छर्द्दिमूर्च्छाभ्रमक्लमान्।
तथैवाङ्गग्रहं घोरमिन्द्रियाणाञ्च विभ्रमम्॥
चिरासनात् तथा स्थानाच्छ्रोण्यां भवति वेदना।
अतिचंक्रमणाद् वायुर्जङ्घयोः कुरुते रुजः।
सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा॥
शीतसम्भोगतोयानां सेवा मारुतवृद्धये।
ततोऽङ्गमर्द्दविष्टम्भ-शूलाध्मानप्रवेपकाः॥
वातातपाभ्यां वैवर्ण्यं ज्वरञ्चापि समाप्नुयात्।
विरुद्धाध्यशनान्मृत्युं व्याधिं वा घोरमृच्छति।
असात्म्यभोजनं हन्याद् बलवर्णमसंशयम्॥
अनात्मवन्तः पशुवद् भुञ्जते येऽप्रमाणतः।
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि॥ १५॥

गन्धाज्ञता। मूकतामवाक्त्वम्। अधिमन्थो दृष्टिरोगः। यानयानेन लभते इत्यादि। यानयानेनाश्वादिगमनेन रथाद्य। चिरासनादित्यादि। आसनं स्थितिभवनम्। स्थानमूर्द्धीभवनम्। अतिचङ्क्रमणादित्यादि। चंक्रमणं परिभ्रमणम्। शोफं वेत्यत्र स्वापं वेति पाठान्तरम्। शीतसम्भोग तोयानामित्यादि। सम्भोगः स्रक्चन्दनादीनामुपभोगः। गयी तु शीतसम्भोगतोयानामित्यत्र शीतभोजनतोयानामिति पठति। वातातपाभ्यामित्यादि। यथाक्रमं वाताद् वैवर्ण्यम्, आतपप्रकुपितात् पित्ताज्ज्वरः। विरुद्धाध्यशनान्मृत्युमित्यादि। पयोमत्स्यादिभोजनं विरुद्धाशनम्, अजीर्णे भोजनमध्यशनम्, ताभ्यां मरणं भयावहो रोगो वा। असात्म्यभोजनमित्यादि। ये अनात्मवन्तः पुरुषा अप्रमाणतः पशुवद् भुञ्जते ते अजीर्णं प्राप्नुवन्ति, अजीर्णं त्रिविधम् – आमविदग्धविष्टब्धभेदेन वातादिभिः, चतुर्थं रसाजीर्णं परिगृह्यते; किं विशिष्टम्? रोगानीकस्य रोगसमूहस्य मूलम्। क्रोधादिषु व्यापत्सु आयासशोकाभ्यामेकैका, चिरासनस्थानाभ्यामप्यन्ये। शीतसम्भोगतोयानां सेवया पुनरेकैका, वातातपाभ्यां द्वे, तथा विरुद्धाध्यशनाभ्यां द्वे, अन्याः सुबोध्याः, इत्येवं पञ्चदश॥ १५॥

व्यापदां कारणं वीक्ष्य व्यापत्स्वेतासु बुद्धिमान्।
प्रयतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥ १६ ॥
विरिक्तवान्तैर्हरिणणलावकाः शशश्च सेव्यः समयूरतित्तिरिः।
सषष्टिकाश्चैव पुराणशालयस्तथैव मुद्गा लघु यच्च कीर्त्तितम् ॥ १७ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने आतुरोपद्रवचिकित्सितं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

तासु सर्व्वासु सङ्क्षेपेण चिकित्सितं निर्द्दिशन्नाह—व्यापदामित्यादि। व्यापदामुपद्रवाणाम्, कारणं विप्रकृष्टं क्रोधादिकं सन्निकृष्टं पित्तादिकं वीक्ष्य उपलभ्य प्रत्यनीकेन हेतुना विप्रकृष्टकारणप्रत्यनीकेन उपद्रवप्रत्यनीकेन वातादिप्रत्यनीकेन वा; अतएव बुद्धिग्रहणम्। बुद्धिमान् भिषक् आतुररोगविषये प्रयत्नं कुर्व्वीत। असात्म्यभोजनं बलवर्णहरं समुद्दिष्टम्, तत् किमत्र सात्म्यं यदपेक्षयान्यदसात्म्यमिति तदेवाह विरिक्तवान्तैरित्यादि। इह निर्द्दिष्टादन्यदनुपदिष्टमाह—लघु यच्च कीर्त्तितमिति। विष्किरजाङ्गलेषु शालिषष्टिकेषु मुद्गादिषु चोक्तादन्यदपि यच्च लघु प्रोक्तं तच्च सेव्यमित्यर्थः। जेज्जटाचार्य्यस्त्वन्यथा व्याख्यानयति। यथा—विरिक्तवान्तैरित्याद्यारम्भप्रयोजनं विरिक्तकथितविधिनियमार्थं वमनानुक्तविधिप्रापणार्थञ्च। यतो विरिक्तस्य प्रमाणापेक्षया यवाग्वादिक्रम एकशो द्विशस्त्रिशश्च विहितो न वान्तस्य ॥ १६ । १७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे आतुरोपद्रवचिकित्सितव्याख्यानाम एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# चत्वारिंशोऽध्यायः ।

अथातो धूमनस्यकवलग्रहचिकित्सितं व्याख्यास्यामः,
यथोवाच भगवान् धन्वन्तरिः ॥ १ ॥

धूमः पञ्चविधो भवति ; तद्यथा—प्रायोगिकः स्नैहिको वैरेचनिकः कासघ्नो वामनीयश्चेति ॥ २ ॥

तत्रैलादिना कुष्ठतगरवर्ज्येन श्लक्ष्णपिष्टेन द्वादशाङ्गुलं शरकाण्डमङ्गुलिपरिणाहं क्षौमेणाष्टाङ्गुलं वेष्टयित्वा लेपयेत्, एषा वर्त्तिः प्रायोगिके। स्नेहफलसारमधूच्छिष्टसर्ज्जरसगुग्गुलुप्रभृतिभिः स्नेहमिश्रैः स्नैहिके। शिरोविरेचनद्रव्यैर्वैरेचने।

अथातो धूमनस्येत्यादि। कवलशब्देनात्र चिकित्सितसाहचर्याद् गण्डूषप्रतिसारणे उपलक्ष्येते। तेष्वाद्यस्य धूमस्य विषयभेदप्रतिपादनाय पाञ्चविध्यमाह—धूम इत्यादि। कासघ्नवामनीययोर्वैवान्तर्भावात् त्रिविध इत्यन्ये। तत्र नित्यप्रयोगे साधुः प्रायोगिकः; स च श्लेष्माणमुत्क्लेशयति, उत्क्लिष्टञ्चापकर्षति, शमयति वातं, स्नेहनविरेचनाभ्यां तुल्यत्वात्। कासहरत्वात् कासघ्नः, स पुनरुरःकण्ठरोगहरोऽप्यावस्थिक एव। अभिष्यण्णशिरसि शिरोविरेचयतीति विरेचनः, विरेचन एव वैरेचनः ; वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षयति रौक्ष्यात् तैक्ष्ण्यादौष्ण्याद् वैशद्याच्च। रूक्षस्य स्नेहाय प्रभवतीति स्नैहिकः, स च वातं शमयति, स्नेहनात् उपलेपनाच्च। वामयतीति वामनीयः, स पुनरुत्क्लिष्टकफाभिपन्नकण्ठोरसः ॥ १ । २ ॥

तस्य पञ्चविधस्यापि दहनवाह्याश्रयधूमवर्त्तिसाधनद्रव्याणि निर्द्दिशन्नाह— तत्रैलादिनेत्यादि। एलादिवर्गे कुष्ठतगरौ वर्ज्ज्यौ। तथा च निमिः—"धूमो हि वक्त्रकुष्ठास्थं विलालयति शक्तितः। मस्तिष्कं तद्धि विप्यण्णं नाशाय प्रतिपद्यते" इति। तस्मात् कुष्ठतगरवर्ज्जितेनैलादिना लेपयेत्। शरकाण्डः शरेषिका। अङ्गुलिपरिणाहं कनिष्ठिकाङ्गुलिसमस्थौल्यं ; अन्तयोर्द्व्यङ्गुलं विहाय वर्त्तिः। शरकाण्डस्य सुखापकर्षणार्थं क्षौमेणाष्टाङ्गुलवेष्टनम्। यदेतदष्टाङ्गुलं वर्त्तिप्रमाणमुक्तं प्रायोगिके तदष्टचत्वारिंशदङ्गुले नेत्रे ज्ञातव्यम्, सर्व्वधूमनेत्रेभ्यः षड्भागप्रमाणा वर्त्तिः कार्य्येति तन्त्रान्तरप्रतिपादनात्। तथा च विदेहः—"अङ्गुष्ठपरिणाहेन मध्ये स्थूलान्तयोस्तनुः। धूमनेत्रस्य षड्भागं वर्त्तिमानं प्रचक्षते" इति। शरकाण्डस्य मानं बोद्धव्यम्।

स्नेहफलसारमधूच्छिष्टेत्यादि। स्नेहफलानां तिलादिशिग्रुविभीतकादिफलानां सारस्तदन्तर्गतो मज्जा। तथा नेत्रचतुर्भागेन शरेषिका ग्राह्या, एवं स्नैहिकादिषु चतुर्ष्वपि धूमेषु यथास्वं नेत्रमानात् षष्ठभागेन वर्त्तिप्रमाणमुक्तं भवति। प्रभृतिग्रहणेन द्राक्षासल्लकीखपुरादिकम्। शिरोविरेचनद्रव्याणि [illegible] कटुकरसाऽऽक. भृतीनि।

बृहतीकण्टकारिकात्रिकटुककासमर्दहिङ्गुदीतङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गी-प्रभृतिभिः कासहरश्च कासघ्ने स्नायुचर्म्मखुरशृङ्गकर्कटकास्थिशुष्कमत्स्य-वल्लूरक्रिमिप्रभृतिभिर्वामनीयैश्च वामनीये ॥ ३ ॥

तत्र वस्तिनेत्रद्रव्यैर्धूमनेत्रद्रव्याणि व्याख्यातानि भवन्ति। धूमनेत्रन्तु कनिष्ठिकापरिणाहमग्रे कलायमात्रस्रोतः, मूलेऽङ्गुष्ठपरिणाहं, धूमवर्त्तिप्रवेशस्रोतो ऽङ्गुलान्यष्टचत्वारिंशत् प्रायोगिकं, द्वात्रिंशत् स्नेहने, चतुर्व्विंशतिर्वैरेचने, षोड़शाङ्गुलं कासघ्ने वामनीये च। एतेऽपि कोलास्थिमात्रच्छिद्रे भवतः। व्रणनेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थवाहिस्रोत इति ॥ ४ ॥

अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तदीप्ताग्रां वर्त्तिं नेत्र-स्रोतसि प्रणिधाय धूमं पिवेत् ॥ ५ ॥

मुखेन तं पिवेत् पूर्व्वं नासिकाभ्यां ततः पिवेत्।
मुखपीतं मुखेनैव वमेत् पीतञ्च नासया ॥

कासहरैश्चेति कासहराणि गुणोपवर्णने शास्त्र तत्प्रतिषेधे च प्रोक्तानि। स्नायुचर्म्मेत्यादि। वामनीयद्रव्याणि मदनफलादीनि संशोधनसंशमनीयोक्तानि ॥ ३ ॥

अत्रैव धूमनेत्रद्रव्याणि सङ्क्षेपार्थमतिदेशेनातिदिशन्नाह- तत्र वस्तिनेत्रद्रव्यैरित्यादि। वस्ति-नेत्रद्रव्यैः सुवर्णरूप्यत्रपुसीसताम्रकांस्यादिभिः। अत ऊर्द्ध्वं नेत्रस्य दीर्घत्वच्छिद्राणां प्रमाणमाह— धूमनेत्रमित्यादि। कनिष्ठिकापरिणाहमिति कनिष्ठिकासमस्थूलम्। अग्रे मुखनासिकाप्रणयन-स्थाने, मूले वर्त्तिसंवरणस्थाने, अङ्गुष्ठपरिणाहमङ्गुष्ठसमस्थूलम्। धूमवर्त्तिप्रवेशस्रोत इति यावता स्रोतसा धूमवर्त्तिप्रवेशो भवति तावन्मात्रस्रोतस्कम्। मूलच्छिद्रमानं चतुर्ष्वपि प्रतिपाद्य पृथग दैर्घ्यमानमाह- अङ्गुलान्यष्टचत्वारिंशदित्यादि। दशाङ्गुलं वा वामनीयमिति केचित् पठन्ति। तच्च गयदासेन विदेहमतानुसारिणाऽसम्यगिति प्रतिपादितम्। ऋजुलिकोषाफलितपर्व्वत्रय-विरेचितत्वं नेत्रस्य तन्त्रान्तरादवगन्तव्यम्। व्रणनेत्रमष्टाङ्गुलमित्यादि। कलायपरिमण्डलं गुटिकामुखम् ॥ ४ ॥

अनन्तरं धूमपानविधानमाह - अथ सुखोपविष्ट इत्यादि। सुखोपविष्ट ऋज्वधोदृष्टिरिति कायनियमः, सुमना इति क्रोधाद्यपगमान्मनोनियमः। अतन्द्रितोऽनलसः। स्नेहाक्तदीप्ताग्रामिति पूर्व्वं स्नेहाक्तां पश्चाद् दीप्ताग्राम्। मुखेनेत्यादि उभयमार्गपानाहः मुखेन पूर्व्वं पिवेत् पश्चा-न्नासिकयेति। तदुभयपीतं पञ्चप्रकारमप्युरःप्राप्तं मुखेन वमनीयं न कथमपि नासिकयेति दर्शयन्नाह - मुखपीतमित्यादि। मुखेन पीतं मुखेनैव वमेत्, नासिकयापि पीतं मुखेनैव वमेत्।

मुखेन धूममादाय नासिकाभ्यां न निर्हरेत्।
तेन हि प्रतिलोमेन दृष्टिस्तत्र निहन्यते ॥ ६ ॥

विशेषतस्तु प्रायोगिकं घ्राणेनाददीत, स्नैहिकं मुखनासाभ्यां, नासिकया वैरेचनिकं, मुखेनैवेतरौ ॥ ७ ॥

तत्र प्रायोगिके वर्त्तिं व्यपगतशरकाण्डां निवातातपशुष्कामङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात्। एवं स्नेहनं वैरेचनिकञ्च कुर्य्यादिति। इतरयोर्व्यपेतधूमोद्गारे स्थिरे समाहिते शरावे प्रक्षिप्य वर्त्तिं मूलच्छिद्रेणान्येन शरावेण पिधाय तस्मिंश्छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदा दोषविशुद्धेः। एष धूमपानोपायविधिः ॥ ८ ॥

तत्र शोकश्रमभयामर्षौष्ण्यविषरक्तपित्तमदमूर्च्छादाहपिपासापाण्डुरोगतालुशोषच्छर्दिशिरोऽभिघातोद्गारापतर्पणतिमिरप्रमेहोदराध्मानोर्द्ध्ववातार्त्ता बालवृद्धदुर्ब्बलविरिक्तास्थापितजागरितगर्भिणीरूक्षक्षीणक्षतोरस्कमधुघृतदधिदुग्धमत्स्यमद्ययवागूपीताल्पकफाश्च न धूममासेवेरन् ॥ ९ ॥

प्रतिलोमेन व्यापदमाह—प्रतिलोमेन इत्यादि। तथाच चक्षुष्येणः—निर्व्वमेत् तु मुखेनैव नासया न कथञ्चन। विलोमतो गतो धूमः कुर्य्याद् दर्शनविभ्रमम्" इति ॥ ५।६ ॥

विशेषतस्तु प्रायोगिकमित्यादि। शिरोरोगसम्भवानां लक्षणविशेषमाश्रित्य प्रायोगिकं घ्राणेनाददीत। सामान्यतः पुनरुरःशिरोरोगसम्भवानामुभयमार्गेणापि, तन्त्रान्तरदर्शनात्; तथाच विदेहः—"प्रयोगपाने पूर्व्वं वा नासया धूममाचरेत्" इति। पूर्व्वं वा नासया धूममाचरेदित्यनेन क्वचिन्मुखेनापि प्राक् पेय इत्यवगम्यते। उभयमार्गपानहेतुश्चक्षुष्येण दर्शितो यथा—"उरःकण्ठादिरोगेषु मुखेनैव पिबेन्नरः। शिरःकर्णाक्षिनासास्थे नासातो धूममाचरेत्" इति। स्नैहिकं मुखनासाभ्यामिति कण्ठोरःसमाश्रिते वाते मुखेन, शिरःसमाश्रिते वाते नासया, उभयमार्गेण पानार्हः मुखेन पूर्व्वं पिबेत् पश्चान्नासिकयेति। वैरेचनिकमिति उत्क्लिष्टकफाभिव्याप्तकण्ठोरसो नासया, अनुत्क्लिष्टकफः पुनर्वैरेचनिकमपि प्राग्वक्त्रेण; तथाच वाग्भटः—"प्राक् पिबेत् नासयोत्क्लिष्टे दोषे घ्राणशिरोगते। उत्क्लेशनार्थं वक्त्रेण विपरीतन्तु कण्ठगे ॥" मुखेनैवेति इतरौ कासघ्नवामनीयौ मुखेनैव पेयौ, कासस्य वामनीयस्य च रोगस्योरःकण्ठगतत्वात् ॥ ७ ॥

तत्र प्रायोगिके वर्त्तिमित्यादि। स्थिरे अचले। समाहिते शोभनकारितया स्थापिते। मूलच्छिद्रेणेति मूले छिद्रं यस्य तेन मूलच्छिद्रेणान्येन शरावेण कर्त्ता वर्त्तिं धूमवर्त्तिं चूर्णं वा ॥ ८ ॥

इदानीं धूमानर्होपदेशः। तत्र शोकश्रमभयेत्यादि। तत्र शोकादिभिरूर्द्ध्ववातान्तैः सहार्त्तशब्दः प्रत्येकमभिसम्बध्यते ॥ ९ ॥

अकालपीतः कुरुते भ्रममूर्च्छाशिरोरुजः।
घ्राणश्रोत्राक्षिजिह्वानामुपघातश्च दारुणम्॥ १०॥

आद्यास्तु त्रयो धूमा द्वादशसु कालेषूपादेयाः। तद्यथा—क्षुतदन्तप्रक्षालन-नस्यस्नानभोजनदिवास्वप्नमैथुनच्छर्दिमूत्रोच्चार-हसितरुषितशस्त्रकर्म्मान्तेष्विति। तत्र विभागो मूत्रोच्चारक्षवथुहसितरुषितमैथुनान्तेषु स्नैहिकः, स्नानच्छर्दन-दिवास्वप्नान्तेषु वैरेचनिकः, दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्म्मान्तेषु प्रायोगिक इति॥ ११॥

तत्र स्नैहिको वातं शमयति, स्नेहादुपलेपाच्च। वैरेचनः श्लेष्माणमुत्क्लेश्याप-कर्षति, रौक्ष्यात् तैक्ष्ण्यादौष्ण्याद् वैशद्याच्च। प्रायोगिकः श्लेष्माणमुत्क्लेशयति, उत्क्लिष्टञ्चापकर्षति शमयति वातं साधारणत्वात् पूर्व्वाभ्यामिति॥ १२॥

भवति चात्र

नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः।
दृढ़केशद्विजश्मश्रुः सुगन्धिविशदाननः *॥ १३॥

तथा कासश्वासारोचकास्योपलेप-स्वरभेदमुखास्राववमथुक्षवथुक्रथतन्द्रा-निद्राहनुमन्यास्तम्भाः पीनसशिरोरोग-कर्णाक्षिशूला-वातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति॥ १४॥

तस्य योगायोगातियोगा विज्ञातव्याः। तत्र योगो रोगप्रशमनः, अयोगो रोगाप्रशमनः। तालुगलशोषपरिदाहपिपासामूर्च्छाभ्रममदकर्णक्ष्वेड़दृष्टिनासा-रोगदौर्ब्बल्यान्यतियोगो जनयति॥ १५॥

अकालपीतस्य व्यापदुद्भवं दर्शयन्नाह— अकालपीत इत्यादि॥ १०॥

कः पुनर्धूमस्य पानकाल इत्याह—आद्यास्तु त्रयो धूमा इत्यादि। रुषितं क्रोधः॥ ११॥

तेषां प्रत्येकं कार्य्यमाह—तत्र स्नैहिको वातमित्यादि। कुतः पुनरयं कफोत्क्लेशापकर्षण-वातशमनानि करोतीत्याह—साधारणत्वादिति। साधारणत्वात् पूर्व्वाभ्यां स्नेहविरेचनाभ्यां तुल्यत्वादित्यर्थः॥ १२॥

धूमोपयोगफलमाह—भवति चात्रेत्यादि। क्रथोऽकस्मादुच्छ्वासावरोधः॥ १३। १४॥

तस्येत्यादि। दृष्टिनासयो रोगदौर्ब्बल्याभ्यां सम्बन्धः। अतियोगो जनयतीत्यस्याग्रे 'तत्र सर्पिः पाननावनाञ्जनतर्पणानि विदध्यात्' इति केचित् पठन्ति॥ १५॥

* विशदानन इत्यत्र वदनो भवेदिति वा पाठः।

प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति, स्नैहिकं यावदश्रुप्रवृत्तिः, वैरेचनिकमा दोषदर्शनात्, तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः, ग्रासान्तरेषु कासघ्न इति।

व्रणधूमं शरावसम्पुटोपनीतेन नेत्रेण व्रणमानयेत्, धूपनाद् वेदनोपशमो व्रणवैशद्यमास्रावोपशमश्च भवति ॥ १६ ॥

विधिरेष समासेन धूमस्याभिहितो मया।
नस्यस्यातः प्रवक्ष्यामि विधिं निरवशेषतः ॥ १७ ॥

औषधमौषधसिद्धो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्। तद् द्विविधम्—शिरोविरेचनं स्नेहनञ्च। तद् द्विविधमपि पञ्चधा। तद्यथा—नस्यं,

प्रायोगिकादीनां पानमर्य्यादामाह—प्रायोगिकमित्यादि। मुखनासिकाभ्यामिति दोषस्थानमवेक्ष्योचितमार्गेणाददीत। त्रींस्त्रीनुच्छ्वासान् कति संख्यकानाददीत इत्याह—पर्य्यायांस्त्रींश्चतुरो वेति। पर्य्यायः परिपाटी, उच्छ्वासत्रयेणैकः पर्य्यायः, तान् पर्य्यायान् त्रींश्चतुरो वा दोषपुरुषबलमपेक्ष्य। एतदुक्तं भवति—त्रिभिरादानविसर्गैस्त्रीन् वारांश्चतुरो वा धूमः पातव्यः। वाशब्दोऽत्र व्यवस्थायां, तेन तन्त्रान्तरव्यवस्थितोऽर्थोऽत्र ज्ञातव्यः। तथाच धूमपानमात्राविधाने निमिः—"धूमपाने तु विज्ञेय उच्छ्वासस्त्रिगुणः कला। तिस्रः कलाश्चात्र मात्राः प्रमाणं स्यात् त्रिमात्रिकम् ॥ पिबेत् स्वस्थविधौ मात्रां दुर्ब्बलस्तु कलां पिबेत्। अभिष्यन्ने प्रमाणं स्यात् प्रमाणञ्च पिबेद् रुजि" इति। स्नैहिकमित्यादि। यावदश्रुप्रवृत्तिरिति बलवति पुरुषे, दुर्ब्बले च प्रायोगिकवत्। तथाच भोजः—"प्रमाणं स्नैहिके धूमे कृशो मात्रां पिबेन्नरः। सबलस्तु पिबेत् तावद् यावदश्रुः न गच्छति" इति। वैरेचनिकमा दोषदर्शनादिति दोषस्य कफाख्यस्य विकृतस्य दर्शनं यावत्। अतएव तन्त्रान्तरे शोधनस्यैकस्मिन् दिने त्रिश्चतुर्वा पानं प्रतिपादितम्। तथाच तन्त्रान्तरं—सकृत् पिबेत् स्नेहनीयं प्रयोगे सकृदेव च। द्विर्वा विरेचनीयन्तु त्रिश्चतुर्वा पिबेन्नरः" इति। विशिष्टधूमपाने पूर्व्वं करणीयमाह—तिलतण्डुलेत्यादि। वमनकाल एवाकण्ठं तिलादियवागूपीतेन वामनीयो धूमः पातव्यो यावत् पित्ते कफस्यानु सुखं प्रवृत्ते इत्यादिवाक्योक्तं सम्यग्वान्तलक्षणमिति। ग्रासान्तरेष्विति कवलयोः कवलानां वाऽन्तरे, अन्तरं मध्यमित्यर्थः। ग्रासान्ते इत्यन्ये पठन्ति, तथा भोजनस्योत्तर इत्यपरे पठन्ति। कासघ्नश्च वैरेचनिकवत् त्रिश्चतुर्वा यावद् विकृतकफहरणम्। तथा च चरकः—"मुखेन वैरेचनवत् कासवान् धूममापिबेत्।"

अतो व्रणधूपनविधानम्—व्रणधूममित्यादि। समासेन संक्षेपेणेत्यर्थः ॥ १६ । १७ ॥

नासिकाभ्यामिति द्विवचनं पुटयुग्मापेक्षया। तद् द्विविधमित्यादि। नस्यमत्र 'तत्र यः स्नेह

शिरोविरेचनं, प्रतिमर्शः, अवपीड़ः, प्रधमनञ्च। तेषु नस्यं प्रधानं शिरोविरेचनञ्च, नस्यविकल्पः प्रतिमर्शः, शिरोविरेचनविकल्पोऽवपीड़ः प्रधमनञ्च।? ततो नस्यशब्दः पञ्चधा नियमितः। तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसाञ्च बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्दः। तत् तु देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपात-दारुणकर्णशूलकर्णक्ष्वेड़तिमिरस्वरोपघातनासारोगास्यशोषावबाहुकाकालजवलि-पलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहर-द्रव्यसिद्धेन स्नेहेनेति ॥ १८ ॥

शिरोविरेचनं श्लेष्मणाभिष्यन्नतालुकण्ठशिरसामरोचकशिरोगौरवशूल-पीनसार्द्धावभेदककृमिप्रतिश्यायापस्मारगन्धाज्ञानेष्वन्येषु चोर्द्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति ॥ १९ ।

तत्रैतद् द्विविधमप्यभुक्तवतोऽन्नकाले, पूर्व्वाह्णे श्लेष्मरोगिणाम्, मध्याह्ने पित्तरोगिणाम्, अपराह्णे वातरोगिणाम् ॥ २० ॥

नार्थं शून्यशिरसाम्' इत्यादिवक्ष्यमाणवाक्यप्रतिपादितं ज्ञेयम्। शिरोविरेचनद्रव्यैर्यो दीयते स शिरोविरेचनः। प्रतिमर्शस्त्विहैवाग्रे वक्ष्यते। श्वतशीतस्वरसादीनां पिचुनावपीड़नादवपीड़ः। चूर्णस्य मुखेन नाड्या वा प्रध्मापनात् प्रधमनम्। चकारः पुनरत्र शिरोविरेचनस्यापि विकल्पः प्रतिमर्श इत्यनुक्तं समुच्चिनोति, तथा च दृढ़बलः—"प्रतिमर्शो भवेत् स्नेहो निर्द्दोष उभयार्थकृद्" इति। ततो नस्येत्यादि। ततस्तेभ्यो विरेचनभेदेभ्यः नस्यशब्दः नस्यमित्यभिधानं पञ्चधा पञ्चप्रकारं नियमितो नियमेन प्रतिपादितः प्राप्त इत्यर्थः। तत्र नस्यविधौ। स्नेहः सर्पिस्तैलवसा-मज्जाख्यः, स च यथास्वगुणवातपित्तकफहरद्रव्यैः सिद्धः; तत्र तैलं नस्ये वातकफहरं, पित्तरक्त-हरन्तु क्षीरसर्पिरिति ज्ञेयम्। तत्तु देयमित्यादि। तत् स्नैहिकं नस्यं वातपित्तहरद्रव्यैः सिद्धेन स्नेहेन देयम्। तस्य कालावधिस्तन्त्रान्तराज् ज्ञेयः। तथा च भोजः—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद् विचक्षणः। सप्ताहात् परतो देयं विश्रान्तस्य पुनःपुनः। पक्षं विंशतिरात्रं वा यावद् वा साधु मन्यते' इति। अपरस्त्वाह—"त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः। परं नवाहमूर्द्ध्वन्तु नवाहात् सात्म्यतां व्रजेत् ॥ न तन्नस्यगुणं कुर्य्यात् सात्म्यत्वाद् दोषकृन्न च। तस्मान्नस्यप्रयोगस्तु स्नैहिको न हितः सदा" ॥ १८ ॥

अथ शिरोविरेचनविषयावसरः—शिरोविरेचनमित्यादि। शिरोविरेचनानि पिप्पलीविड़ङ्गशिग्रु-सिद्धार्थकापामार्गक्षवकफणिज्झकप्रभृतीनि। तत्र शिरोविरेचनद्रव्यैः कृतञ्च नस्यमवपीड़ाभिधानम्, तत्सिद्धस्नेहेन कृतं शिरोविरेकं, गयी तु शिरोविरेचनद्रव्यसिद्धेन स्नेहेनैवं पठति ॥ १९ ॥

तयोर्द्वयोः स्नैहिकवैरेचनिकयोः कालावधारणमुद्दिशन्नाह—तत्रैतद् द्विविधमित्यादि। तद् द्विविधमपि नस्यं पूर्व्वाह्णमध्याह्नापराह्णेषु कफपित्तवातरोगिणां देयमिति। स्वास्थ्यवृत्तिकनस्य-

अथ पुरुषाय शिरोविरेचनीयाय त्यक्तमूत्रपुरीषाय भुक्तवते ऽव्यभ्रे काले दन्तकाष्ठधूमपानाभ्यां विशुद्धवक्त्रस्रोतसे पाणितापपरिस्विन्नमृदितगलकपोल-ललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित् प्रविलम्बितशिरसे वस्त्राच्छादितनेत्राय वामहस्तप्रदेशिन्यग्रोन्नमितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बुप्रतप्तं रजतसुवर्णताम्रमृत्पात्रशुक्तीना-मन्यतमस्थं शुक्त्या पिचुना वा सुखोष्णं स्नेहमद्रुतमासिञ्चेदव्यवच्छिन्नधारं यथा नेत्रे न प्राप्नोति ॥ २१ ॥

स्नेहेऽवसिच्यमाने तु शिरो नैव प्रकम्पयेत् ।
न कुप्येन्न प्रभाषेच्च न क्षुयान्न हसेत् तथा ॥
एतर्हि विहतः स्नेहो न सम्यक् प्रतिपद्यते ।
ततः कासप्रतिश्याय-शिरोऽक्षिगदसम्भवः ॥ २२ ॥

तस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्व्वद्वयनिःसृताः प्रथमा मात्रा, द्वितीया शुक्तिः, तृतीया पाणिशुक्तिः, इत्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः ॥ २३ ॥

कालावधारणं तन्त्रान्तराज् ज्ञेयम् । तथाच वृद्धवाग्भटः—"स्वस्थवृत्ते तु शीते मध्याह्ने, शरद्-वसन्तयोः पूर्व्वाह्ने, ग्रीष्मेऽपराह्ने, वर्षास्वादित्यदर्शने, पञ्चकर्म्माण्याचरतो वस्तिकर्म्मोत्तरकालमेव" इति ॥ २० ॥

अनन्तरं तद्दानविधानम्—अथ पुरुषायेत्यादि । स्नेहमिति स्नेहस्योपलक्षणत्वात् कल्क क्राथादिकमप्यनेनैव प्रकारेण देयम् । दत्तमात्रे च यत् कर्त्तव्यन्तत्तन्त्रान्तराज् ज्ञेयं, तथा च वृद्ध-वाग्भटः—"दत्तमात्रे नस्ये कर्णललाटकेशभूमिगण्डमन्यास्कन्धपाणिपादतलान्यनुसुखं मर्द्दयेत्, शनैः शनैश्चोच्छिङ्घयात् इति ॥ २१ । २२ ॥

स्नेहस्य चाल्पमध्यमोत्तमप्रमाणमाह—तस्येत्यादि । तस्येति स्नेहस्य । अष्टाविति प्रत्येकं नासापुटयोः, एवं षोड़श बिन्दवः । अङ्गुष्ठसमीपवर्त्तिन्यङ्गुली प्रदेशिनी, तत्पर्व्वद्वयच्युता बिन्दवः । स्नेहनार्थे तद्द्विगुणा शुक्तिप्रमाणा इति प्रतिपादयति । प्रथमा मात्रा हीनेत्यर्थः । मध्यमा मात्रा शुक्तिर्द्वात्रिंशद् बिन्दवः । उत्तमा पाणिशुक्तिश्चतुःषष्टिबिन्दवः । गयी तु भोजदर्शनात् स्वस्थस्यैव प्रायोगिके नस्ये प्रत्येकं नासापुटयोरष्टौ बिन्दवः, स्नेहार्थे तद्द्विगुणाः शुक्तिप्रमाणा इति प्रति-पादयति । तथा च भोजः "प्रायोगिकं स्नैहिकञ्च द्विविधं नस्यमुच्यते । प्रायोगिके बिन्दवोऽष्टौ स्नैहिके शुक्तिरिष्यते । दोषोच्छ्रायं समासाद्य दद्याद् द्वित्रिचतुर्गुणम्" इति ॥ २३ ॥

स्नेहनस्यं नोपगिलेत् कथञ्चिदपि बुद्धिमान् ।
शृङ्गाटकमभिप्लाव्य निरेति वदनाद् यथा ।
कफोत्क्लेशभयाच्चैनं निष्ठीवेदविधारयन् ॥ २४ ॥

दत्ते च पुनरपि संस्वेद्य गलकपोलादीन् धूममासेवेत। भोजयेच्चैनमभिष्यन्दि, ततोऽस्याचारिकमादिशेत् । रजोधूमस्नेहातपमद्यद्रवपानशिरःस्नानातियानक्रोधादीनि च परिहरेत् ॥ २५ ॥

तस्य योगातियोगायोगानामिदं विज्ञानं भवति ।
लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम् ।
विकारोपशमः शुद्धिरिन्द्रियाणां मनःसुखम् ॥
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ।
लक्षणं मूर्द्ध्न्यतिस्निग्धे रुक्षं तत्रावचारयेत् ॥
अयोगे * वातवैगुण्यमिन्द्रियाणाञ्च रुक्षता ।
रोगाशान्तिश्च तत्रेष्टं भूयो नस्यं प्रयोजयेत् ॥ २६ ॥

नोपगिलेन्न पिबेत्। तथा हि विदेहः—"निष्ठीवेन्न पिबेन्नस्यं व्यापदः पिबतस्त्विमाः । भवन्ति कासश्छर्दिश्च क्रुत्साऽन्ने वमथुस्तथा" इति । क्वचिन्नस्यपानमप्युक्तं विदेहेनव—"क्षीणं मांसं बलं यस्य वातार्त्तिश्चोर्द्ध्वजत्रुजाः। सुदीप्ताग्निः स्नेहसात्म्यः स नस्यं नासया पिबेत्। धातूंश्च तर्पयेद् देहे पीतं नस्यन्तु नस्ततः" इति । शृङ्गाटकमित्यादि । नासाकर्णस्रोतोऽक्षिजिह्वातर्पणीनां शिराणां सन्निपातः शृङ्गाटकः। निष्ठीवेदिति वदनप्राप्तं मुञ्चेत्, वामदक्षिणयोरिति वाक्यशेषः। तथा च वृद्धवाग्भटः अनभ्यवहरंश्च वामदक्षिणपार्श्वयोर्निष्ठीवेत्, एकपार्श्वष्ठीवने न सर्व्वाः शिराः भेषजेन सम्यग् व्याप्यन्ते इति ॥ २४ ॥

पश्चात्कर्म्माह दत्ते च पुनरपि संस्वेद्येत्यादि। धूममासेवेतेति वाक्शतानन्तरं, तथा च भोजः—'वाक्शतादूर्द्ध्वमुत्थाय धूमं प्रायोगिकं पिबेत्' इति। अभिष्यन्दि उपलेपकारि। आचारिकमिति आचारप्राप्तं युक्तमित्यर्थः। दिवास्वप्नादिकमयुक्तांश्च रजोधूमादीन् परिहरेत ॥ २५ ॥

गयी त्वयोगलक्षणं न पठति, प्रतिपादितस्य प्रायोगिकनस्यस्य स्वस्थविषयस्यायोगे वातवैगुण्यं न सम्भवति, यच्चायोगे वातवैगुण्यं तदवस्थाविषये ॥ २६ ॥

---

* चैव वैगुण्यमिति पाठान्तरम् ।

चत्वारो बिन्दवः षड् वा तथाष्टौ वा यथाबलम्।
शिरोविरेकस्नेहस्य प्रमाणमभिनिर्द्दिशेत्॥ २७॥
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः।
शुद्धहीनातिसंज्ञानि विशेषाच्छास्त्रचिन्तकैः॥
लाघवं शिरसः शुद्धिः स्रोतसां व्याधिनिर्ज्जयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम्॥
कण्डूपदेहौ गुरुता स्रोतसां कफसंस्रवः।
मूर्द्धि हीनविशुद्धे तु लक्षणं परिकीर्त्तितम्॥
मस्तुलुङ्गागमो वात-वृद्धिरिन्द्रियविभ्रमः।
शून्यता शिरसश्चापि मूर्द्धि गाढ़विरेचिते॥ २८॥
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्।
सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत्॥
एकान्तरं द्व्यन्तरं वा सप्ताहं वा पुनःपुनः।
एकविंशतिरात्रं वा यावद् वा साधु मन्यते॥
मारुतेनाभिभूतस्य वात्यन्तं यस्य देहिनः।
द्विकालश्चापि दातव्यं नस्यं तस्य विजानता॥ २९॥

अवपीड़स्तु शिरोविरेचनवदभिष्यन्नसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपीड्यावपिष्य च शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणानां शोणितपित्ते च विदध्यात्।

स्नेहननस्यविशेषमुद्दिशन् शिरोविरेचननस्यस्य मात्रामुपदिशन्नाह—चत्वारो बिन्दव इत्यादि। प्रत्येकमेव नासापुटयोर्हीनमध्योत्तमेष्वेषु दोषपुरुषबलेषु चतुःषडष्टबिन्दवः स्नैहिकस्य शिरोविरेचनस्य। तथा च विदेहः—चतुरश्चतुरो बिन्दूनेकैकस्मिन् समाचरेत्। एषा लघ्वी मता मात्रा तथा शीघ्रं विरेचयेत्॥ अध्यर्द्धां द्विगुणां वापि त्रिगुणां वा चतुर्गुणाम्। यथाव्याधि विदित्वा तु मात्रां समवचारयेत्" इति॥ २७॥

नस्ये इत्यादि। शास्त्रचिन्तकैर्विदेहादिभिः। मस्तुलुङ्गः शिरोऽन्तर्घृताकारः। सर्पिर्नस्यं निषेचयेदिति पित्तप्रकृतौ, वातप्रकृतौ तु पक्वतैलमेव॥ २८। २९॥

यद्यप्यवपीड़ादौ प्रतिमर्शः पूर्व्वमुद्देशसूत्रे प्रतिपादितः, तथापि सर्व्वदोषोपयोज्यतया परिहार्य्यरहितत्वेन पश्चात् निर्देशं करिष्यतीति 'असर्व्वदोषोपयोज्यं सपरिहारं चावपीड़माह—अवपीड़ इत्यादि। अभिष्यन्नो मेदःकफाभिव्याप्तशिरः। पिप्पलीविडङ्गादिशिरोविरेचनद्रव्याणामेकतमं

कृशदुर्ब्बलभीरूणां सुकुमारस्य योषिताम्।
शृताः स्नेहाः शिरःशुद्धैर कल्कस्तेभ्यो यथा हितः॥ ३०॥
चेतोविकारक्रिमिविषाभिपन्नानां चूर्णं प्रधमेत्॥ ३१॥

नस्येन परिहर्त्तव्यो भुक्तवानपतर्पितोऽत्यर्थंतरुणप्रतिश्यायो गर्भिणी पीतस्नेहोदकमद्यद्रवोऽजीर्णी दत्तवस्तिः क्रुद्धो गरार्त्तस्तृषितः शोकाभिभूतः श्रान्तो बालो वृद्धो वेगावरोधितः शिरःस्नातुकामश्चेति। अनार्त्तवे चाभ्रे नस्यधूमौ परिहरेत्। तत्र हीनातिमात्रातिशीतोष्णसहसाप्रदानादतिप्रविलम्बितशिरस उत्सिङ्गतो विचलतोऽभ्यवहरतो वा प्रतिषिद्धप्रदानाच्च व्यापदो भवन्ति तृष्णोद्गारादयो दोषनिमित्ताः क्षयजाश्च॥ ३२॥

भवतश्चात्र

नस्ये शिरोविरेके च व्यापदो द्विविधाः स्मृताः।
दोषोत्क्लेशात् क्षयाच्चैव विज्ञेयास्ता यथाक्रमम्॥
दोषोत्क्लेशनिमित्तास्तु जयेच्छमनशोधनैः।
अथ क्षयनिमित्तास्तु यथास्वं बृंहणं हितम्॥ ३३॥

प्राप्य पिष्ट्वा कल्कं चकारादेतेषां क्वाथेनाक्तं पिचुनक्रकमवपीड्य शिरोविरेचनवद् यथाक्रमं चतुःषड्ष्टबिन्दुप्रमाणं हीनादिमात्रास्ववपीडं दद्यात्। तस्य च तन्त्रान्तरे—विषार्त्तादीनां संज्ञाप्रबोधनत्वेन रक्तपित्तादीनां स्तम्भनत्वेन द्वैविध्यम्। तथा च विदेहः—"विषाभिघातसन्न्यासमूर्च्छामोहापतन्त्रके। मदापस्मारकामार्त्तिचित्तक्रोधभयादिषु॥ मानसेषु च रोगेषु मूढव्याकुलचेतसाम्। संज्ञाप्रबोधहेत्वर्थमवपीडं प्रयोजयेत्॥ शिरोविरेचनस्नेहमुष्काख्यं तद् विरेचनम्। क्षौद्रादिकल्कपिष्टञ्च स्तम्भनं त्ववपीडनम्" इति॥ ३०॥

प्रधमनप्रयोगविषयावधारणं चेतोविकारक्रिमिविषाभिपन्नानामित्यादि। अत्राह विदेहः—"नाडी षडङ्गुलायामा द्विमुखी च तथा धमेत्। त्रिश्चूर्णं मुच्चूटीमात्रमेष प्रधमने विधिः। शुक्तिप्रमाणं जिघ्रेद् वा बद्धं सूक्ष्मेण वाससा" इति। तर्ज्जन्यङ्गुष्ठमात्रग्राह्यं चूर्णं मुच्चुटीमात्रम्। गयी तु प्रतिमर्शानन्तरमवपीड़प्रधमने प्राह॥ ३१॥

अतःपरं नस्यानर्होपदेशः—नस्येनेत्यादि। अनार्त्तवे चेत्यादि चकारादार्त्तवेऽप्यभ्रे। इदानीं नस्यव्यापदः कारणसहिताः प्रतिपादयति—तत्र हीनातिमात्रातिशीतोष्णेत्यादि। दोषनिमित्ता इति दोषोत्क्लेशनिमित्ताः, क्षयजाश्चेति दोषक्षयजाः॥ ३२॥

उक्तमेवार्थं पद्येन स्पष्टीकुर्व्वन्नाह—भवतश्चात्रेत्यादि। यथाक्रममिति स्नैहिकनस्ये दोषोत्क्लेशजाः, शिरोविरेचने क्षयजा व्यापदो भवन्तीति। दोषोत्क्लेशनिमित्ता इत्यादि। शमनशोधनैरिति तत्राल्पे शमनं, प्रभूते शोधनम्॥ ३३॥

प्रतिमर्शश्चतुर्दशसु कालेषूपादेयः। तद्यथा—तल्पोत्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्द्दितवता दिवास्वप्नोत्थितेन सायञ्चेति ॥ ३४ ॥

तत्र तल्पोत्थितेनासेवितः प्रतिमर्शो रात्रावुपचितं नासास्रोतोगतं मलमुपहन्ति मनःप्रसादञ्च करोति। प्रक्षालितदन्तेनासेवितो दन्तानां दृढ़तां वदनसौगन्ध्यञ्चापादयति। गृहान्निर्गच्छता सेवितो नासास्रोतसः क्लिन्नतया रजो धूमो वा न बाधते। व्यायाममैथुनाध्वपरिश्रान्तेनासेवितः श्रममुपहन्ति। मूत्रोच्चारान्ते वा सेवितो दृष्टेर्गुरुत्वमपनयति। कवलाञ्जनान्ते सेवितो दृष्टिं प्रसादयति। भुक्तवतासेवितः स्रोतसां विशुद्धिं लघुताञ्चापादयति। वान्तेनासेवितः स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति। दिवास्वप्नोत्थितेनासेवितो निद्राशेषं गुरुत्वं मलञ्चापोह्य चित्तैकाग्र्यं जनयति। सायञ्चासेवितः सुखनिद्राप्रबोधञ्चेति ॥ ३५ ॥

ईषदुत्सिङ्घतः स्नेहो यावद् वक्त्रं प्रपद्यते।
नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः ॥ ३६ ॥
नस्येन रोगाः शाम्यन्ति नराणामूर्द्ध्वजत्रुजाः।
इन्द्रियाणाञ्च वमल्यं कुर्य्यादास्यं सुगन्धि च ॥
हनुदन्तशिरोग्रीवा-त्रिकबाहूरसां बलम्।
वलीपलितखालित्य-व्यङ्गानाञ्चाप्यसम्भवम् ॥ ३७ ॥

प्रतिमर्शं इत्यादि। प्रतिमर्शप्रमाणमाह—ईषदित्यादि। वृद्धवाग्भट चान्यथा प्रतिमर्शप्रमाणम्। तथा च—"प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते। बिन्दुर्वा येन चोत्क्लेशो नास्य क्लिष्टस्य जायते ॥ निहितो यत्र वा स्नेहो न साक्षादुपलभ्यते" इति। शिरोविरेचनस्नेहवत् प्रतिमर्शस्नेहोऽपि नाभ्यवहरणीयः। तथाहि विदेहः—'उच्छिङ्घेन्न पिबेत् स्नेहं निष्ठीवेन्मुखमागतम्'इति। नस्यादिषु नरावस्थिककालस्तन्त्रान्तरादनुसर्त्तव्यः, तथा च कृष्णात्रेयः—"सप्तवर्षमुपादाय नस्यकर्म्म चतुर्व्विधम्। प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते। धूमोऽथ द्वादशे वर्षे कवलः पञ्चमे मतः। दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत्" इति। इदानीं सामान्येन नस्यफलमाह—नस्येन रोगा इत्यादि ॥ ३४—३७ ॥

तैलं कफे सवाते स्यात् केवलं * पवने वसाम्।
दद्यात् सर्पिः सदा पित्ते मज्जानञ्च समारुते॥
चतुर्व्विधस्य स्नेहस्य विधिरेवं प्रकीर्त्तितः।
श्लेष्मस्थानाविरोधित्वात् तेषु तैलं विधीयते॥ ३८॥
अतः परं प्रवक्ष्यामि कवलग्रहणे विधिम्।
चतुर्द्धा कवलः स्नेही प्रसादी शोधिरोपणौ॥ ३९॥
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रुक्षोष्णैः शोधनः कफे॥
कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे।
चतुर्व्विधस्य चैवास्य विशेषोऽयं प्रकीर्त्तितः॥ ४०॥

तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलशुक्तसुरामूत्र-क्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुपस्विन्नमृदितगलकपोलललाटप्रदेशो धारयेत्॥४१॥

मुखं सञ्चार्य्यते या तु मात्रा सा कवले स्मृता।
असञ्चार्य्या तु या मात्रा गण्डूषः स प्रकीर्त्तितः॥ ४२॥

तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतोनयनपरिप्लावश्च भवति तदा विमोक्तव्यः, पुनश्चान्यो ग्रहीतव्य इति॥४३॥

अतः स्नेहान् दोषप्रत्यनीकत्वेन विभजति—तैलमित्यादि॥ ३८॥

ततो नस्यमभिधाय शिरोरोगमुखरोगापजयकारणं कवलग्रहमुद्दिशन्नाह अतः परमित्यादि। दोषभेदेन त्रिषु स्नैहिकादीनभिधाय रोपणो व्रण इत्यनेन शोणितं चतुर्थमभिहितम्॥ ३९। ४०॥

मुखस्यात्र कफस्थानत्वात् कफहरं संशोधनमेव कवलं त्रिकटुकादिद्रव्यैर्दर्शयन्नाह—तत्रेत्यादि॥ ४१॥

अथ कवलगण्डूषयोः प्रतिस्वं भेदमाह—मुखमित्यादि॥ ४२॥

कियन्तं कालं व्याप्य धारणीयस्तदाह—तावच्च धारयितव्य इत्यादि। दोषोऽत्र कफः। नासास्रोतो नासारन्ध्रम्॥ ४३॥

* केवले इति पाठान्तरम्।

एवं स्नेहपयःक्षौद्र-रसमूत्राम्लसंभृताः।
कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः॥ ४४॥
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च।
अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः।
शोधनीये विशेषेण भवन्त्येव न संशयः॥ ४५॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः।
कवलस्य विधिर्ह्येष समासेन प्रकीर्त्तितः॥ ४६॥
विभज्य भेषजं बुद्ध्या कुर्व्वीत प्रतिसारणम्।
कल्को रसक्रिया क्षौद्रं चूर्णञ्चेति चतुर्व्विधम्।
शल्यग्रप्रणीतन्तु यथास्वं मुखरोगिणाम्॥

शोधनकवलस्य विधानं स्नेहादिष्वपि निर्दिशन्नाह—एवमित्यादि। सम्भृताः सम्यक् कृताः। दोषत इति दोषव्याधिप्रत्यनीकभावेन। दोषग्रहणेन व्याधिः परिगृह्यते, कार्य्ये कारणोपचारात्॥ ४४॥

इदानीं योगादिलक्षणमुद्दिशन्नाह—व्याधेरित्यादि। अत्र स्थानित्वेन शोधनीय एव प्रधानः, तेन व्याधेरपचय इत्यादिकं शुद्धिलक्षणं विशेषेण शोधनीयस्य, सामान्येन पुनः स्नैहिकादीनामपि; मुखपाकादि तु शोधनीयस्यैव, शेषाणान्तु द्रव्यगुणादूह्यम्॥ ४५॥

आगन्तुकस्य क्षारादिदाहस्य कवलमुद्दिशन्नाह—तिला नीलोत्पलमित्यादि। एतैर्व्यस्तैः समस्तैश्च क्षारादिदाहे कवलः॥ ४६॥

लुप्तादिग्रहणगृहीतस्य प्रतिसारणस्य समासेन विधानमुद्दिशन्नाह—विभज्येत्यादि। रसक्रिया फाणिताकृतिः। भेषजं रसवीर्य्यगुणविपाकैर्वातादिदोषान् तदारब्धरोगांश्च प्रविभज्य, यथास्वं यद् यत्र प्रतिसारणं हितं तत् कृत्वैव मुखरोगिणां कुर्व्वीत कल्कादिभेदेन चतुर्व्विधं प्रतिसारणम्। शल्यग्रप्रणीतत्वेन कोलास्थिमात्रत्वं प्रतिसारणस्य सूचयति। तथा च शालाक्ये—"कोलास्थि-

तस्मिन् योगमयोगञ्च कवलोक्तं विभावयेत् ।
तानेव शमयेद् व्याधीन् कवलो यानपोहति ।
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ ४७ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने धूमनस्यकवलग्रहचिकित्सितं
नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

मात्रेण पिण्डेन यथादोषं यथाव्याधि पञ्च सप्त वा वारान् हीनमध्यमोत्तमेषु व्याधिषु च प्रतिसारणं कुर्व्वीत । न चैनमतिघर्षयेत् । अतिघर्षणाद्दोषचोषदाहक्लेशश्वयथुतृष्णाभक्तच्छन्द-वाक्सङ्गा भवन्ति, असम्यक्प्रतिसारणात् पैच्छिल्यगुरुत्वानन्नाभिलाषप्रमोहविकारानुपशयाः, सम्यक् प्रतिसारणाद् वैशद्यं लाघवं क्षवथुरप्रसेकोऽन्नाभिलाषश्च" इति । तस्मिन् योगमित्यादि । योगादन्योऽयोगः स पुनरिह हीनयोगोऽतियोगश्च । अयोगञ्चेति चकारेण योगायोगातियोगचिकित्सितं समुच्चीयते । दोषघ्नमिति येन दोषेण वातादिना मुखरोगारम्भः ( अत्र च कृष्णात्रेयः— "सप्तवर्षमुपादाय नस्यकर्म्म चतुर्व्विधम् । प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते । धूमो द्वादश-वर्षस्य कवलः पञ्चमे ततः । दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत्" इति ) ॥ ४७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडल्लनविरचिते निबन्धसंग्रहे
धूमनस्यकवलग्रहचिकित्सितव्याख्यानाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

समाप्तमिदं चिकित्सितस्थानम् ॥

---

एवं स्नेहपयःक्षौद्र-रसमूत्राम्लसंभृताः।
कषायोष्णोदकाभ्याश्च कवला दोषतो हिताः॥ ४४॥
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च।
अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः।
शोधनीये विशेषेण भवन्त्येव न संशयः॥ ४५॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः।
कवलस्य विधिर्ह्येष समासेन प्रकीर्त्तितः॥ ४६॥
विभज्य भेषजं बुद्ध्या कुर्व्वीत प्रतिसारणम्।
कल्को रसक्रिया क्षौद्रं चूर्णञ्चेति चतुर्व्विधम्।
अङ्गुल्यग्रप्रणीतन्तु यथास्वं मुखरोगिणाम्॥

शोधनकवलस्य विधानं स्नेहादिष्वपि निर्दिशन्नाह—एवमित्यादि। सम्भृताः सम्यक्-कृताः। दोषत इति दोषव्याधिप्रत्यनीकभावेन। दोषग्रहणेन व्याधिः परिगृह्यते, कार्य्ये कारणोपचारात्॥ ४४॥

इदानीं योगादिलक्षणमुद्दिशन्नाह—व्याधेरित्यादि। अत्र स्थानित्वेन शोधनीय एव प्रधानः, तेन व्याधेरपचय इत्यादिकं शुद्धिलक्षणं विशेषेण शोधनीयस्य, सामान्येन पुनः स्नैहिकादीनामपि; मुखपाकादि तु शोधनीयस्यैव, शेषाणान्तु द्रव्यगुणादूह्यम्॥ ४५॥

आगन्तुकस्य क्षारादिदाहस्य कवलमुद्दिशन्नाह—तिला नीलोत्पलमित्यादि। एतैर्व्यस्तैः समस्तैश्च क्षारादिदाहे कवलः॥ ४६॥

लुप्तादिग्रहणगृहीतस्य प्रतिसारणस्य समासेन विधानमुद्दिशन्नाह—विभज्येत्यादि। रसक्रिया फाणिताकृतिः। भेषजं रसवीर्य्यगुणविपाकैर्वातादिदोषान् तदारब्धरोगांश्च प्रविभज्य, यथास्वं यद् यत्र प्रतिसारणं हितं तत् कृत्वैव मुखरोगिणां कुर्व्वीत कल्कादिभेदेन चतुर्व्विधं प्रतिसारणम्। अङ्गुल्यग्रप्रणीतत्वेन कोलास्थिमात्रत्वं प्रतिसारणस्य सूचयति। तथा च शालाक्ये—"कोलास्थि-

तस्मिन् योगमयोगञ्च कवलोक्तं विभावयेत् ।
तानेव शमयेद् व्याधीन् कवलो यानपोहति ।
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ ४७ ॥

इति सुश्रुत-संहितायां चिकित्सितस्थाने धूमनस्यकवलग्रहचिकित्सितं
नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

मालेण पिण्डेन यथादोषं यथाव्याधि पञ्च सप्त वा वारान् हीनमध्यमोत्तमेषु व्याधिषु च प्रतिसारणं कुर्व्वीत । न चैनमतिघर्षयेत् । अतिघर्षणाद्दोषचोषदाहक्लेशश्वयथुतृष्णाभक्तच्छन्द-वाक्सङ्गा भवन्ति, असम्यक्प्रतिसारणात् पैच्छिल्यगुरुत्वानन्नाभिलाषप्रमोहविकारानुपशयाः, सम्यक् प्रतिसारणाद् वैशद्यं लाघवं क्षवथुरप्रसेकोऽन्नाभिलाषश्च" इति । तस्मिन् योगमित्यादि । योगादन्योऽयोगः स पुनरिह हीनयोगोऽतियोगश्च । अयोगञ्चेति चकारेण योगायोगातियोगचिकित्-सितं समुच्चीयते । दोषघ्नमिति येन दोषेण वातादिना मुखरोगारम्भः ( अत्र च कृष्णात्रेयः— "सप्तवर्षमुपादाय नस्यकर्म्म चतुर्व्विधम् । प्रतिमर्शोऽथ वमनं जन्मप्रभृति शस्यते । धूमो द्वादश-वर्षस्य कवलः पञ्चमे ततः । दोषव्याधिबलावस्थां वीक्ष्य चैतान् प्रयोजयेत्" इति ) ॥ ४७ ॥

इति सौश्रुते चिकित्सितस्थाने महामहोपाध्याय-श्रीडह्लनविरचिते निबन्धसंग्रहे
धूमनस्यकवलग्रहचिकित्सितव्याख्यानाम चत्वारिंशोऽध्यायः ॥ ४० ॥

———

समाप्तमिदं चिकित्सितस्थानम् ॥

———

